# शिवपुराणम्/संहिता १ (विद्येश्वरसंहिता)/अध्यायः ०१




श्रीशिवमहापुराणम्

अथ श्रीशिवमहापुराणं विद्येश्वरसंहिता प्रारभ्यते

श्रीगणेशाय नमः

श्रीगुरुभ्यो नमः

श्रिसरस्वत्यै नमः

अथ शिवपुराणे प्रथमा विद्येश्वरसंहिताप्रारभ्यते

आद्यन्तमंगलमजातसमानभावमार्यं तमीशमजरामरमात्मदेवम्

पंचाननं प्रबलपंचविनोदशीलं संभावये मनसिशंकरमम्बिकेशम् १

व्यास उवाच

धर्मक्षेत्रे महाक्षेत्रे गंगाकालिन्दिसंगमे

प्रयागे परमे पुण्ये ब्रह्मलोकस्य वर्त्मनि १

मुनयः शंसितात्मानस्सत्यव्रतपरायणाः

महौजसो महाभागा महासत्रं वितेनिरे २

तत्र सत्रं समाकर्ण्य व्यासशिष्यो महामुनिः

आजगाम मुनीन्द्र ष्टुं सूतः पौराणिकोत्तमः ३

तं दृष्ट्वा सूतमायांतं हर्षिता मुनयस्तदा

चेतसा सुप्रसन्नेन पूजां चक्रुर्यथाविधि ४

ततो विनयसंयुक्ता प्रोचुः सांजलयश्च ते

सुप्रसन्ना महात्मानः स्तुतिं कृत्वायथाविधि ५

रोमहर्षण सर्वज्ञ भवान्वै भाग्यगौरवात्

पुराणविद्यामखिलां व्यासात्प्रत्यर्थमीयिवान् ६

तस्मादाश्चर्य्यभूतानां कथानां त्वं हि भाजनम्

रत्नानामुरुसाराणां रत्नाकर इवार्णवः ७

यच्च भूतं च भव्यं च यच्चान्यद्वस्तु वर्तते

न त्वयाऽविदितं किंचित्त्रिषु लोकेषु विद्यते ८

त्वं मद्दिष्टवशादस्य दर्शनार्थमिहागतः
कुर्वन्किमपि नः श्रेयो न वृथा गंतुमर्हसि ९
तत्त्वं श्रुतं स्म नः सर्वं पूर्वमेव शुभाशुभम्
न तृप्तिमधिगच्छामः श्रवणेच्छा मुहुर्मुहुः 1.1.१०
इदानीमेकमेवास्ति श्रोतव्यं सूत सन्मते
तद्र हस्यमपि ब्रूहि यदि तेऽनुग्रहो भवेत् ११
प्राप्ते कलियुगे घोरे नराः पुण्यविवर्जिताः
दुराचाररताः सर्वे सत्यवार्तापराङ्मुखाः १२
परापवादनिरताः परद्र व्याभिलाषिणः
परस्त्रीसक्तमनसः परहिंसापरायणाः १३
देहात्मदृष्टया मूढा नास्तिकाः पशुबुद्धयः
मातृपितृकृतद्वेषाः स्त्रीदेवाः कामकिंकराः १४
विप्रा लोभग्रहग्रस्ता वेदविक्रयजीविनः
धनार्जनार्थमभ्यस्तविद्या मदविमोहिताः १५
त्यक्तस्वजातिकर्माणः प्रायशःपरवंचकाः
त्रिकालसंध्यया हीना ब्रह्मबोधविवर्जिताः १६
अदयाः पंडितं मन्यास्स्वाचारव्रतलोपकाः
कृष्युद्यमरताः क्रूरस्वभावा मलिनाशयाः १७
क्षत्रियाश्च तथा सर्वे स्वधर्मत्यागशीलिनः
असत्संगाः पापरता व्यभिचारपरायणाः १८
अशूरा अरणप्रीताः पलायनपरायणाः
कुचौरवृत्तयः शूद्रा ः! कामकिंकरचेतसः १९
शस्त्रास्त्रविद्यया हीना धेनुविप्रावनोज्झिताः
शरण्यावनहीनाश्च कामिन्यूतिमृगास्सदा 1.1.२०
प्रजापालनसद्धर्मविहीना भोगतत्पराः
प्रजासंहारका दुष्टा जीवहिंसाकरा मुदा २१
वैश्याः संस्कारहीनास्ते स्वधर्मत्यागशीलिनः
कुपथाः स्वार्जनरतास्तुलाकर्मकुवृत्तयः २२

गुरुदेवद्विजातीनां भक्तिहीनाः कुबुद्धयः
अभोजितद्विजाः प्रायः कृपणा बद्धमुष्टयः २३
कामिनीजारभावेषु सुरता मलिनाशयाः
लोभमोहविचेतस्काः पूर्तादिसुवृषोज्झिताः २४
तद्वच्छूद्रा श्च ये केचिद्ब्राह्मणाचारतत्पराः
उज्ज्वलाकृतयो मूढाः स्वधर्मत्यागशीलिनः २५
कर्तारस्तपसां भूयो द्विजतेजोपहारकाः
शिश्वल्पमृत्युकाराश्च मंत्रोच्चारपरायणाः २६
शालिग्रामशिलादीनां पूजकाहोमतत्पराः
प्रतिकूलविचाराश्च कुटिला द्विजदूषकाः २७
धनवंतः कुकर्म्माणो विद्यावन्तो विवादिनः
आख्यायोपासना धर्मवक्तारो धर्मलोपकाः २८
सुभूपाकृतयो दंभाः सुदातारो महामदाः
विप्रादीन्सेवकान्मत्वा मन्यमाना निजं प्रभुम् २९
स्वधर्मरहिता मूढाः संकराः क्रूरबुद्धयः
महाभिमानिनो नित्यं चतुर्वर्णविलोपकाः 1.1.३०
सुकुलीनान्निजान्मत्वा चतुर्वर्णैर्विवर्तनाः
सर्ववर्णभ्रष्टकरा मूढास्सत्कर्मकारिणः ३१
स्त्रियश्च प्रायशो भ्रष्टा भर्त्रवज्ञानकारिकाः
श्वशुरद्रो हकारिण्यो निर्भया मलिनाशनाः ३२
कुहावभावनिरताः कुशीलास्स्मरविह्वलाः
जारसंगरता नित्यं स्वस्वामिविमुखास्तथा ३३
तनया मातृपित्रोश्च भक्तिहीना दुराशयाः
अविद्यापाठका नित्यं रोगग्रसितदेहकाः ३४
एतेषां नष्टबुद्धीनां स्वधर्मत्यागशीलिनाम्
परलोकेपीह लोके कथं सूत गतिर्भवेत् ३५
इति चिंताकुलं चित्तं जायते सततं हि नः
परोपकारसदृशो नास्ति धर्मो परः खलु ३६

लघूपायेन येनैषां भवेत्सद्योघनाशनम्
सर्व्वसिद्धान्तवित्त्वं हि कृपया तद्वदाधुना ३७
व्यास उवाच
इत्याकर्ण्य वचस्तेषां मुनीनां भावितात्मनाम्
मनसा शंकरं स्मृत्वा सूतः प्रोवाच तान्मुनीन् ३८
इति श्रीशैवेमहापुराणे विद्येश्वरसंहितायां मुनिप्रश्नवर्णनो नाम प्रथमोऽध्यायः १

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः ०२

https://sa.wikisource.org/s/sq5
< शिवपुराणम् | संहिता १ (विश्वेश्वरसंहिता)

सूत उवाच

साधुपृष्टं साधवो वस्त्रैलोक्यहितकारकम्

गुरुं स्मृत्वा भवत्स्नेहाद्वक्ष्ये तच्छृणुतादरात् १

वेदांतसारसर्वस्वं पुराणं शैवमुत्तमम्

सर्वाघौघोद्धारकरं परत्र परमार्थदम् २

कलिकल्मषविध्वंसि यस्मिञ्छिवयशः परम्

विजृम्भते सदा विप्राश्चतुर्वर्गफलप्रदम् ३

तस्याध्ययनमात्रेण पुराणस्य द्विजोत्तमाः

सर्वोत्तमस्य शैवस्य ते यास्यंति सुसद्गतिम् ४

तावद्विजृंभते पापं ब्रह्महत्यापुरस्सरम्

यावच्छिवपुराणं हि नोदेष्यति जगत्यहो ५

तावत्कलिमहोत्पाताः संचरिष्यंति निर्भयाः

यावच्छिवपुराणं हि नोदेष्यति जगत्यहो ६

तावत्सर्वाणि शास्त्राणि विवदंति परस्परम्

यावच्छिवपुराणं हि नोदेष्यति जगत्यहो ७

तावत्स्वरूपं दुर्बोधं शिवस्य महतामपि

यावच्छिवपुराणं हि नो देष्यति जगत्यहो ८

तावद्यमभटाः क्रूराः संचरिष्यंति निर्भयाः

यावच्छिवपुराणं हि नोदेष्यति जगत्यहो ९

तावत्सर्वपुराणानि प्रगर्जंति महीतले

यावच्छिवपुराणं हि नोदेष्यति जगत्यहो 1.2.१०

तावत्सर्वाणि तीर्थानि विवदंति महीतले

यावच्छिवपुराणं हि नोदेष्यति जगत्यहो ११

तावत्सर्वाणि मंत्राणि विवदंति महीतले

यावच्छिवपुराणं हि नोदेष्यति महीतले १२

तावत्सर्वाणि क्षेत्राणि विवदंति महीतले
यावच्छिवपुराणं हि नोदेष्यति महीतले १३
तावत्सर्वाणि पीठानि विवदंति महीतले
यावच्छिवपुराणं हि नोदेष्यति महीतले १४
तावत्सर्वाणि दानानि विवदंति महीतले
यावच्छिवपुराणं हि नोदेष्यति महीतले १५
तावत्सर्वे च ते देवा विवदंति महीतले
यावच्छिवपुराणं हि नोदेष्यति महीतले १६
तावत्सर्वे च सिद्धान्ता विवदंति महीतले
यावच्छिवपुराणं हि नोदेष्यति महीतले १७
अस्य शैवपुराणस्य कीर्तनश्रवणाद्द्विजाः
फलं वक्तुं न शक्नोमि कात्स्न्र्येन मुनिसत्तमाः १८
तथापि तस्य माहात्म्यं वक्ष्ये किंचित्तु वोनघाः
चित्तमाधाय शृणुत व्यासेनोक्तं पुरा मम १९
एतच्छिवपुराणं हि श्लोकं श्लोकार्द्धमेव च
यः पठेद्भक्तिसंयुक्तस्स पापान्मुच्यते क्षणात् 1.2.२०
एतच्छिवपुराणं हि यः प्रत्यहमतंद्रि तः
यथाशक्ति पठेद्भक्त्या स जीवन्मुक्त उच्यते २१
एतच्छिवपुराणं हि यो भक्त्यार्चयते सदा
दिने दिनेऽश्वमेधस्य फलं प्राप्नोत्यसंशयम् २२
एतच्छिवपुराणं यस्साधारणपदेच्छया
अन्यतः शृणुयात्सोऽपि मत्तो मुच्येत पातकात् २३
एतच्छिवपुराणं यो नमस्कुर्याददूरतः
सर्वदेवार्चनफलं स प्राप्नोति न संशयः २४
एतच्छिवपुराणं वै लिखित्वा पुस्तकं स्वयम्
यो दद्याच्छिवभक्तेभ्यस्तस्य पुण्यफलं शृणु २५
अधीतेषु च शास्त्रेषु वेदेषु व्याकृतेषु च
यत्फलं दुर्लभं लोके तत्फलं तस्य संभवेत् २६

एतच्छिवपुराणं हि चतुर्दश्यामुपोषितः
शिवभक्तसभायां यो व्याकरोति स उत्तमः २७
प्रत्यक्षरं तु गायत्रीपुरश्चर्य्याफलं लभेत्
इह भुक्त्वाखिलान्कामानं ते निर्वाणतां व्रजेत् २८
उपोषितश्चतुर्दश्यां रात्रौ जागरणान्वितः
यः पठेच्छृणुयाद्वापि तस्य पुण्यं वदाम्यहम् २९
कुरुक्षेत्रादिनिखिलपुण्यतीर्थेष्वनेकशः
आत्मतुल्यधनं सूर्य्यग्रहणे सर्वतोमुखे 1.2.३०
विप्रेभ्यो व्यासमुख्येभ्यो दत्त्वायत्फलमश्नुते
तत्फलं संभवेत्तस्य सत्यं सत्यं न संशयः ३१
एतच्छिवपुराणं हि गायते योप्यहर्निशम्
आज्ञां तस्य प्रतीक्षेरन्देवा इन्द्र पुरो गमाः ३२
एतच्छिवपुराणं यः पठञ्छृण्वन्हि नित्यशः
यद्यत्करोति सत्कर्म तत्कोटिगुणितं भवेत् ३३
समाहितः पठेद्यस्तु तत्र श्रीरुद्र संहिताम्
स ब्रह्मघ्नोऽपि पूतात्मा त्रिभिरेवादिनैर्भवेत् ३४
तां रुद्र संहितां यस्तु भैरवप्रतिमांतिके
त्रिः पठेत्प्रत्यहं मौनी स कामानखिलाँ ल्लभेत् ३५
तां रुद्र संहितां यस्तु सपठेद्वटबिल्वयोः
प्रदक्षिणां प्रकुर्वाणो ब्रह्महत्या निवर्तते ३६
कैलाससंहिता तत्र ततोऽपि परमस्मृता
ब्रह्मस्वरूपिणी साक्षात्प्रणवार्थप्रकाशिका ३७
कैलाससंहितायास्तु माहात्म्यं वेत्ति शंकरः
कृत्स्नं तदर्द्धं व्यासश्च तदर्द्धं वेद्म्यहं द्विजाः ३८
तत्र किंचित्प्रवक्ष्यामि कृत्स्नं वक्तुं न शक्यते
यज्ज्ञात्वा तत्क्षणाल्लोकश्चित्तशुद्धिमवाप्नुयात् ३९
न नाशयति यत्पापं सा रौद्री संहिता द्विजाः
तन्न पश्याम्यहं लोके मार्गमाणोऽपि सर्वदा 1.2.४०

शिवेनोपनिषत्सिंधुमन्थनोत्पादितां मुदा
कुमारायार्पितां तां वै सुधां पीत्वाऽमरो भवेत् ४१
ब्रह्महत्यादिपापानां निष्कृतिं कर्तुमुद्यतः
मासमात्रं संहितां तां पठित्वा मुच्यते ततः ४२
दुष्प्रतिग्रहदुर्भोज्यदुरालापादिसंभवम्
पापं सकृत्कीर्तनेन संहिता सा विनाशयेत् ४३
शिवालये बिल्ववने संहितां तां पठेत्तु यः
स तत्फलमवाप्नोति यद्वाचोऽपि न गोचरे ४४
संहितां तां पठन्भक्त्या यः श्राद्धे भोजयेद्द्विजान्
तस्य ये पितरः सर्वे यांति शंभोः परं पदम् ४५
चतुर्दश्यां निराहारो यः पठेत्संहितां च ताम्
बिल्वमूले शिवः साक्षात्स देवैश्च प्रपूज्यते ४६
अन्यापि संहिता तत्र सर्वकामफलप्रदा
उभे विशिष्टे विज्ञेये लीलाविज्ञानपूरिते ४७
तदिदं शैवमाख्यातं पुराणं वेदसंमितम्
निर्मितं तच्छिवेनैव प्रथमं ब्रह्मसंमितम् ४८
विद्येशंच तथारौद्रं वैनायकमथौमिकम्
मात्रं रुद्रै कादशकं कैलासं शतरुद्र कम् ४९
कोटिरुद्र सहस्राद्यं कोटिरुद्रं तथैव च
वायवीयं धर्मसंज्ञं पुराणमिति भेदतः 1.2.५०
संहिता द्वादशमिता महापुण्यतरा मता
तासां संख्यां ब्रुवे विप्राः शृणुतादरतोखिलम् ५१
विद्येशं दशसाहस्रं रुद्रं वैनायकं तथा
औमं मातृपुराणाख्यं प्रत्येकाष्टसहस्रकम् ५२
त्रयोदशसहस्रं हि रुद्रै कादशकं द्विजाः
षट्सहस्रं च कैलासं शतरुद्रं तदर्द्धकम् ५३
कोटिरुद्रं त्रिगुणितमेकादशसहस्रकम्
सहस्रकोटिरुद्रा ख्यमुदितं ग्रंथसंख्यया ५४

वायवीयं खाब्धिशतं घर्मं रविसहस्रकम्
तदेवं लक्षसंख्याकं शैवसंख्याविभेदतः ५५
व्यासेन तत्तु संक्षिप्तं चतुर्विंशत्सहस्रकम्
शैवं तत्र चतुर्थं वै पुराणं सप्तसंहितम् ५६
शिवे संकल्पितं पूर्वं पुराणं ग्रन्थसंख्यया
शतकोटिप्रमाणं हि पुरा सृष्टौ सुविस्मृतम् ५७
व्यस्तेष्टादशधा चैव पुराणे द्वापरादिषु
चतुर्लक्षेण संक्षिप्ते कृते द्वैपायनादिभिः ५८
प्रोक्तं शिवपुराणं हि चतुर्विंशत्सहस्रकम्
श्लोकानां संख्यया सप्तसंहितं ब्रह्मसंमितम् ५९
विद्येश्वराख्या तत्राद्या रौद्री ज्ञेया द्वितीयिका
तृतीया शतरुद्रा ख्या कोटिरुद्रा चतुर्थिका 1.2.६०
पंचमी चैव मौमाख्या षष्ठी कैलाससंज्ञिका
सप्तमी वायवीयाख्या सप्तैवं संहितामताः ६१
ससप्तसंहितं दिव्यं पुराणं शिवसंज्ञकम्
वरीवर्ति ब्रह्मतुल्यं सर्वोपरि गतिप्रदम् ६२
एतच्छिवपुराणं हि सप्तसंहितमादरात्
परिपूर्णं पठेद्यस्तु स जीवन्मुक्त उच्यते ६३
श्रुतिस्मृतिपुराणेतिहासागमशतानि च
एतच्छिवपुराणस्य नार्हंत्यल्पां कलामपि ६४
शैवं पुराणममलं शिवकीर्तितं तद्व्यासेन शैवप्रवणेन न
संगृहीतम्
संक्षेपतः सकलजीवगुणोपकारे तापत्रयघ्नमतुलं शिवदं सतां
हि ६५
विकैतवो धर्म इह प्रगीतो वेदांतविज्ञानमयः प्रधानः
अमत्सरांतर्बुधवेद्यवस्तु सत्क्लृप्तमत्रैव त्रिवर्गयुक्तम् ६६
शैवं पुराणतिलकं खलु सत्पुराणं
वेदांतवेदविलसत्परवस्तुगीतम्

यो वै पठेच्च शृणुयात्परमादरेण शंभुप्रियः स हि लभेत्परमां गतिं वै ६७

इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां द्वितीयोऽध्यायः २

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः ०३



व्यास उवाच

इत्याकर्ण्य वचः सौतं प्रोचुस्ते परमर्षयः

वेदांतसारसर्वस्वं पुराणं श्रावयाद्भुतम् १

इति श्रुत्वा मुनीनां स वचनं सुप्रहर्षितः

संस्मरञ्छंकरं सूतः प्रोवाच मुनिसत्तमान् २

सूत उवाच

शृण्वंतु ऋषयः सर्वे स्मृत्वा शिवमनामयम्

पुराणप्रवणं शैवं पुराणं वेदसारजम् ३

यत्र गीतं त्रिकं प्रीत्या भक्तिज्ञानविरागकम् ४

वेदांतवेद्यं सद्वस्तु विशेषेण प्रवर्णितम् ५

सूत उवाच

शृण्वंतु ऋषयः सर्वे पुराणं वेदसारजम्

पुरा कालेन महता कल्पेऽतीते पुनःपुनः ६

अस्मिन्नुपस्थिते कल्पे प्रवृत्ते सृष्टिकर्मणि

मुनीनां षट्कुलीनानां ब्रुवतामितरेतरम् ७

इदं परमिदं नेति विवादः सुमहानभूत्

तेऽभिजग्मुर्विधातारं ब्रह्माणं प्रष्टुमव्ययम् ८

वाग्भिर्विनयगर्भाभिः सर्वे प्रांजलयोऽब्रुवन्

त्वं हि सर्वजगद्धाता सर्वकारणकारणम् ९

कः पुमान्सर्वतत्त्वेभ्यः पुराणः परतः परः

ब्रह्मोवाच

यतो वाचो निवर्तंते अप्राप्य मनसा सह 1.3.१०

यस्मात्सर्वमिदं ब्रह्मविष्णुरुद्रे द्रं! पूर्वकम्

सहभूतेंद्रि यैः सर्वैः प्रथमं संप्रसूयते ११

एष देवो महादेवः सर्वज्ञो जगदीश्वरः

अयं तु परया भक्त्या दृश्यते नाऽन्यथा क्वचित् १२
रुद्रो हरिर्हरश्चैव तथान्ये च सुरेश्वराः
भक्त्या परमया तस्य नित्यं दर्शनकांक्षिणः १३
बहुनात्र किमुक्तेन शिवे भक्त्या विमुच्यते
प्रसादाद्देवताभक्तिः प्रसादो भक्तिसंभवः
यथेहांकुरतो बीजं बीजतो वा यथांकुरः १४
तस्मादीशप्रसादार्थं यूयं गत्वा भुवं द्विजाः
दीर्घसत्रं समाकृध्वं यूयं वर्षसहस्रकम् १५
अमुष्यैवाध्वरेशस्य शिवस्यैव प्रसादतः
वेदोक्तविद्यासारं तु ज्ञायते साध्यसाधनं १६
मुनय ऊचुः
अथ किं परमं साध्यं किंवा तत्साधनं परम्
साधकः कीदृशस्तत्र तदिदं ब्रूहि तत्त्वतः १७
ब्रह्मोवाच
साध्यं शिवपदप्राप्तिः साधनं तस्य सेवनम्
साधकस्तत्प्रसादाद्योऽनित्यादिफलनिःस्पृहः १८
कर्म कृत्वा तु वेदोक्तं तदर्पितमहाफलम्
परमेशपदप्राप्तः सालोक्यादिक्रमात्ततः १९
तत्तद्भक्त्यनुसारेण सर्वेषां परमं फलम्
तत्साधनं बहुविधं साक्षादीशेन बोधितम् 1.3.२०
संक्षिप्य तत्र वः सारं साधनं प्रब्रवीम्यहम्
श्रोत्रेण श्रवणं तस्य वचसा कीर्तनं तथा २१
मनसा मननं तस्य महासाधनमुच्यते
श्रोतव्यः कीर्तितव्यश्च मन्तव्यश्च महेश्वरः २२
इति श्रुतिप्रमाणं नः साधनेनाऽमुना परम्
साध्यं व्रजत सर्वार्थसाधनैकपरायणाः २३
प्रत्यक्षं चक्षुषा दृष्ट्वा तत्र लोकः प्रवर्तते
अप्रत्यक्षं हि सर्वत्र ज्ञात्वा श्रोत्रेण चेष्टते २४

तस्माच्छ्रवणमेवादौ श्रुत्वा गुरुमुखाद्बुधः

ततः संसाधयेदन्यत्कीर्तनं मननं सुधीः २५

क्रमान्मननपर्यंते साधनेऽस्मिन्सुसाधिते

शिवयोगो भवेत्तेन सालोक्यादिक्रमाच्छनैः २६

सर्वांगव्याधयः पश्चात्सर्वानंदश्च लीयते

अभ्यासात्क्लेशमेतद्वै पश्चादाद्यंतमंगलम् २७

इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां साध्यसाधनखण्डे

तृतीयोऽध्यायः ३

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः ०४



मुनय ऊचुः

मननं कीदृशं ब्रह्मञ्छ्रवणं चापि कीदृशम्

कीर्तनं वा कथं तस्य कीर्तयैतद्यथायथम् १

ब्रह्मोवच

पूजाजपेशगुणरूपविलासनाम्नां युक्तिप्रियेण मनसा परिशोधनं यत्

तत्संततं मननमीश्वरदृष्टिलभ्यं सर्वेषु साधनवरेष्वपि मुख्यमुख्यम् २

गीतात्मना श्रुतिपदेन च भाषया वा शंभुप्रतापगुणरूपविलासनाम्नाम्

वाचा स्फुटं तु रसवत्स्तवनं यदस्य तत्कीर्तनं भवति साधनमत्र मध्यम् ३

येनापि केन करणेन च शब्दपुंजं यत्र क्वचिच्छिवपरं श्रवणेंद्रि येण

स्त्रीकेलिवद्दृढतरं प्रणिधीयते यत्तद्वै बुधाः श्रवणमत्र जगत्प्रसिद्धम् ४

सत्संगमेन भवति श्रवणं पुरस्तात्संकीर्तनं पशुपतेरथ तद्दृढं स्यात्

सर्वोत्तमं भवति तन्मननं तदंते सर्वं हि संभवति शंकरदृष्टिपाते ५

सूत उवाच

अस्मिन्साधनमाहत्म्ये पुरा वृत्तं मुनीश्वराः

युष्मदर्थं प्रवक्ष्यामि शृणुध्वमवधानतः ६

पुरा मम गुरुर्व्यासः पराशरमुनेः सुतः

तपश्चचार संभ्रांतः सरस्वत्यास्तटे शुभे ७

गच्छन्यदृच्छया तत्र विमानेनार्करोचिषा

सनत्कुमारो भगवान्ददर्श मम देशिकम् ८

ध्यानारूढः प्रबुद्धोऽसौ ददर्श तमजात्मजम्

प्रणिपत्याह संभ्रांतः परं कौतूहलं मुनिः ९

दत्त्वार्घ्यमस्मै प्रददौ देवयोग्यं च विष्टिरम् १०ब्

प्रसन्नः प्राह तं प्रह्वं प्रभुर्गंभीरया गिरा 1.4.१०

सनत्कुमार उवाच

सत्यं वस्तु मुने दध्याः साक्षात्करणगोचरः

स शिवोथासहायोत्र तपश्चरसि किं कृते ११
एवमुक्तः कुमारेण प्रोवाच स्वाशयं मुनिः
धर्मार्थकाममोक्षाश्च वेदमार्गे कृतादराः १२
बहुधा स्थापिता लोके मया त्वत्कृपया तथा
एवं भुतस्य मेप्येवं गुरुभूतस्य सर्वतः १३
मुक्तिसाधनकं ज्ञानं नोदेति परमाद्भुतम्
तपश्चरामि मुक्त्यर्थं न जाने तत्र कारणम् १४
इत्थं कुमारो भगवान्व्यासेन मुनिनार्थितः
समर्थः प्राह विप्रेंद्रा निश्चयं मुक्तिकारणम् १५
श्रवणं कीर्तनं शंभोर्मननं च महत्तरम्
त्रयं साधनमुक्तं च विद्यते वेदसंमतम् १६
पुराहमथ संभ्रांतो ह्यन्यसाधनसंभ्रमः
अचले मंदरे शैले तपश्चरणमाचरम् १७
शिवाज्ञया ततः प्राप्तो भगवान्नंदिकेश्वरः
स मे दयालुर्भगवान्सर्वसाक्षी गणेश्वरः १८
उवाच मह्यं सस्नेहं मुक्तिसाधनमुत्तमम्
श्रवणं कीर्तनं शंभोर्मननं वेदसंमतम् १९
त्रिकं च साधनं मुक्तौ शिवेन मम भाषितम्
श्रवणादिं त्रिकं ब्रह्मन्कुरुष्वेति मुहुर्मुहुः 1.4.२०
एवमुक्त्वा ततो व्यासं सानुगो विधिनंदनः
जगाम स्वविमानेन पदं परमशोभनम् २१
एवमुक्तं समासेन पूर्ववृत्तांतमुत्तमम्
ऋषय ऊचुः
श्रवणादित्रयं सूत मुक्त्योपायस्त्वयेरितः २२
श्रवणादित्रिकेऽशक्तः किं कृत्वा मुच्यते जनः
अयत्नेनैव मुक्तिः स्यात्कर्मणा केन हेतुना २३
इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायं साध्यसाधनखण्डे चतुर्थोऽध्यायः ४

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः ०५

https://sa.wikisource.org/s/sq8

< शिवपुराणम् | संहिता १ (विश्वेश्वरसंहिता)

सूत उवाच

श्रवणादित्रिकेऽशक्तो लिंगं बेरं च शांकरम्

संस्थाप्य नित्यमभ्यर्च्य तरेत्संसारसागरम् १

अपि द्र व्यं वहेदेव यथाबलमवंचयन्

अर्पयेल्लिंगबेरार्थमर्चयेदपि संततम् २

मंडपं गोपुरं तीर्थं मठं क्षेत्रं तथोत्सवम्

वस्त्रं गंधं च माल्यं च धूपं दीपं च भक्तितः ३

विविधान्नं च नैवेद्यमपूपव्यंजनैर्युतम्

छत्रं ध्वजं च व्यजनं चामरं चापि सांगकम् ४

राजोपचारवत्सर्वं धारयेल्लिंगबेरयोः

प्रदक्षिणां नमस्कारं यथाशक्ति जपं तथा ५

आवाहनादिसर्गांतं नित्यं कुर्यात्सुभक्तितः

इत्थमभ्यर्च्य यन्देवं लिंगेबेरे च शांकरे ६

सिद्धिमेति शिवप्रीत्या हित्वापि श्रवणादिकम्

लिंगबेरार्चनामात्रान्मुक्ताः पुर्वे महाजनाः ७

मनुय ऊचुः

बेरमात्रे तु सर्वत्र पूज्यंते देवतागणाः

लिंगेबेरे च सर्वत्र कथं संपूज्यते शिवः ८

सूत उवाच

अहो मुनीश्वराः पुण्यं प्रश्नमेतन्महाद्भुतम्

अत्र वक्ता महादेवो नान्योऽस्ति पुरुषः क्वचित् ९

शिवेनोक्तं प्रवक्ष्यामि क्रमाद्गुरुमुखाच्छ्रुतम्

शिवैको ब्रह्मरूपत्वान्निष्कलः परिकीर्तितः 1.5.१०

रूपित्वात्सकलस्तद्वत्तस्मात्सकलनिष्कलः

निष्कलत्वान्निराकारं लिंगं तस्य समागतम् ११

सकलत्वात्तथा बेरं साकारं तस्य संगतम्
सकलाकलरूपत्वाद्ब्रह्मशब्दाभिधः परः १२
अपि लिंगे च बेरे च नित्यमभ्यर्च्यते जनैः
अब्रह्मत्वात्तदन्येषां निष्कलत्वं न हि क्वचित् १३
तस्मात्ते निष्कले लिंगे नाराध्यंते सुरेश्वराः
अब्रह्मत्वाच्च जीवत्वात्तथान्ये देवतागणाः १४
तूष्णीं सकलमात्रत्वादर्च्यंते बेरमात्रके
जीवत्वं शंकरान्येषां ब्रह्मत्वं शंकरस्य च १५
वेदांतसारसंसिद्धं प्रणवार्थे प्रकाशनात्
एवमेव पुरा पृष्टो मंदरे नंदिकेश्वरः १६
सनत्कुमारमुनिना ब्रह्मपुत्रेण धीमता १७ब्
सनत्कुमार उवाच
शिवान्यदेववश्यानां सर्वेषामपि सर्वतः १७
बेरमात्रं च पूजार्थं श्रुतं दृष्टं च भूरिशः
शिवमात्रस्य पूजायां लिंगं बेरं च दृश्यते १८
अतस्तद्ब्रूहि कल्याण तत्त्वं मे साधुबोधनम्
नंदिकेश्वर उवाच
अनुत्तरमिमं प्रश्नं रहस्यं ब्रह्मलक्षणम् १९
कथयामि शिवेनोक्तं भक्तियुक्तस्य तेऽनघ
शिवस्य ब्रह्मरूपत्वान्निष्कलत्वाच्च निष्कलम् 1.5.२०
लिंगं तस्यैव पूजायां सर्ववेदेषु संमतम्
तस्यैव सकलत्वाच्च तथा सकलनिष्कलम् २१
सकलं च तथा बेरं पूजायां लोकसंमतम्
शिवान्येषां च जीवत्वात्सकलत्वाच्च सर्वतः २२
बेरमात्रं च पूजायां संमतं वेदनिर्णये
स्वाविर्भावे च देवानां सकलं रूपमेव हि २३
शिवस्य लिंगं बेरं च दर्शने दृश्यते खलु
सनत्कुमार उवाच

उक्तं त्वया महाभाग लिंगबेरप्रचारणम् २४
शिवस्य च तदन्येषां विभज्य परमार्थतः
तस्मात्तदेव परमं लिंगबेरादिसंभवम् २५
श्रोतुमिच्छामि योगींद्र लिंगाविर्भावलक्षणम्
नंदिकेश्वर उवाच
शृणु वत्स भवत्प्रीत्या वक्ष्यामि परमार्थतः २६
पुरा कल्पे महाकाले प्रपन्ने लोकविश्रुते
आयुध्येतां महात्मानौ ब्रह्मविष्णू परस्परम् २७
तयोर्मानं निराकर्तुं तन्मध्ये परमेश्वरः
निष्कलस्तंभरूपेण स्वरूपं समदर्शयत् २८
ततः स्वलिंगचिह्नत्वात्स्तंभतो निष्कलं शिवः
स्वलिंगं दर्शयामास जगतां हितकाम्यया २९
तदाप्रभृति लोकेषु निष्कलं लिंगमैश्वरम्
सकलं च तथा बेरं शिवस्यैव प्रकल्पितम् 1.5.३०
शिवान्येषः तु देवानां बेरमात्रं प्रकल्पितम्
तत्तद्बेरं तु देवानां तत्तद्भोगप्रदं शुभम्
शिवस्य लिंगबेरत्वं भोगमोक्षप्रदं शुभम् ३१
इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां पंचमोऽध्यायः ५

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः ०६



नंदिकेश्वर उवाच

पुरा कदाचिद्योगींद्र विष्णुर्विषधरासनः

सुष्वाप परया भूत्या स्वानुगैरपि संवृतः १

यदृच्छया गतस्तत्र ब्रह्मा ब्रह्मविदांवरः

अपृच्छत्पुंडरीकाक्षं शयनं सर्वसुन्दरम् २

कस्त्वं पुरुषवच्छेषे दृष्ट्वा मामपि दृप्तवत्

उत्तिष्ठ वत्स मां पश्य तव नाथमिहागतम् ३

आगतं गुरुमाराध्यं दृष्ट्वा यो दृप्तवच्चरेत्

द्रो हिणस्तस्य मूढस्य प्रायश्चित्तं विधीयते ४

इति श्रुत्वा वचः क्रुद्धो बहिः शांतवदाचरत्

स्वस्ति ते स्वागतं वत्स तिष्ठ पीठमितो विश ५

किमु ते व्याग्रवद्वक्त्रं विभाति विषमेक्षणम्

ब्रह्मोवाच

वत्स विष्णो महामानमागतं कालवेगतः ६

पितामहश्च जगतः पाता च तव वत्सक

विष्णुरुवाच

मत्स्थं जगदिदं वत्स मनुषे त्वं हि चोरवत् ७

मन्नाभिकमलाज्जातः पुत्रस्त्वं भाषसे वृथा

नंदिकेश्वर उवाच

एवं हि वदतोस्तत्र मुग्धयोरजयोस्तदा ८

अहमेव बरो न त्वमहं प्रभुरहं प्रभुः

परस्परं हंतुकामौ चक्रतुः समरोद्यमम् ९

युयुधातेऽमरौ वीरौ हंसपक्षींद्र वाहनौ

वैरंच्या वैष्णवाश्चैवं मिथो युयुधिरे तदा 1.6.१०

तावद्विमानगतयः सर्वा वै देवजातयः

दिदृक्षवः समाजग्मुः समरं तं महाद्भुतम् ११
क्षिपंतः पुष्पवर्षाणि पश्यंतः स्वैरमंबरे
सुपर्णवाहनस्तत्र क्रुद्धो वै ब्रह्मवक्षसि १२
मुमोच बाणानसहानस्त्रांश्च विविधान्बहून्
मुमोचाऽथ विधिः क्रुद्धो विष्णोरुरसि दुःसहान् १३
बाणाननलसंकाशानस्त्रांश्च बहुशस्तदा
तदाश्चर्यमिति स्पष्टं तयोः समरगोचरम् १४
समीक्ष्य दैवतगणाः शशंसुर्भृशमाकुलाः
ततो विष्णुः सुसंक्रुद्धः श्वसन्व्यसनकर्शितः १५
माहेश्वरास्त्रं मतिमान् संदधे ब्रह्मणोपरि
ततो ब्रह्मा भृशं क्रुद्धः कंपयन्विश्वमेव हि १६
अस्त्रं पाशुपतं घोरं संदधे विष्णुवक्षसि
ततस्तदुत्थितं व्योम्नि तपनायुतसन्निभम् १७
सहस्रमुखमत्युग्रं चंडवातभयंकरम्
अस्त्रद्वयमिदं तत्र ब्रह्मविष्ण्वोर्भयंकरम् १८
इत्थं बभूव समरो ब्रह्मविष्ण्वोः परस्परम्
ततो देवगणाः सर्वे विषण्णा भृशमाकुलाः
ऊचुः परस्परं तात राजक्षोभे यथा द्विजाः १९
सृष्टिः स्थितिश्च संहारस्तिरो भावोप्यनुग्रहः
यस्मात्प्रवर्तते तस्मै ब्रह्मणे च त्रिशूलिने 1.6.२०
अशक्यमन्यैर्यदनुग्रहं विना तृणक्षयोप्यत्र यदृच्छया क्वचित्
इति देवाभयं कृत्वा विचिन्वंतः शिवक्षयम्
जग्मुः कैलासशिखरं यत्रास्ते चंद्र शेखरः २२
दृष्ट्वैवममरा हृष्टाः पदंतत्पारमेश्वरम्
प्रणेमुः प्रणवाकारं प्रविष्टास्तत्र सद्मनि २३
तेपि तत्र सभामध्ये मंडपे मणिविष्टरे
विराजमानमुमया ददृशुर्देवपुंगवम् २४
सव्योत्तरेतरपदं तदर्हितकरां बुजम्

स्वगणैः सर्वतो जुष्टं सर्वलक्षणलक्षितम् २५

वीज्यमानं विशेषज्ञैः स्त्रीजनैस्तीव्रभावनैः

शस्यमानं सदावेदैरनुगृह्णंतमीश्वरम् २६

दृष्ट्वैवमीशममराः संतोषसलिलेक्षणाः

दंडवद्दूरतो वत्स नमश्चक्रुर्महागणाः २७

तानवेक्ष्य पतिर्देवान्समीपे चाह्वयद्गणैः

अथ संह्लादयन्देवान्देवो देवशिखामणिः

अवोचदर्थगंभीरं वचनं मधुमंगलम् २८!

इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां षष्ठोऽध्यायः ६

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः ०७



ईश्वर उवाच

वत्सकाः स्वस्तिवः कच्चिद्वर्तते मम शासनात्

जगच्च देवतावंशः स्वस्वकर्मणि किं नवा १

प्रागेव विदितं युद्धं ब्रह्मविष्णवोर्मयासुराः

भवतामभितापेन पौनरुक्त्येन भाषितम् २

इति सस्मितया माध्व्या कुमारपरिभाषया

समतोषयदंबायाः स पतिस्तत्सुरव्रजम् ३

अथ युद्धांगणं गंतुं हरिधात्रोरधीश्वरः

आज्ञापयद्गणेशानां शतं तत्रैव संसदि ४

ततो वाद्यं बहुविधं प्रयाणाय परेशितुः

गणेश्वराश्च संनद्धा नानावाहनभूषणाः ५

प्रणवाकारमाद्यंतं पंचमंडलमंडितम्

आरुरोह रथं भद्र मंबिकापतिरीश्वरः

ससूनुगणमिंद्रा द्याः सर्वेप्यनुययुः सुराः ६

चित्रध्वजव्यजनचामरपुष्पवर्षसंगतिनृत्यनिवहैरपि वाद्यवर्गैः

संमानितः पशुपतिः परया च देव्या साकं तयोः समरभूमिमगात्ससैन्यः ७

समीक्ष्यं तु तयोर्युद्धं निगूढोऽभ्रं समास्थितः

समाप्तवाद्यनिर्घोषः शांतोरुगणनिःस्वनः ८

अथ ब्रह्माच्युतौ वीरौ हंतुकामौ परस्परम्

माहेश्वरेण चाऽस्त्रेण तथा पाशुपतेन च ९

अस्त्रज्वालैरथो दग्धं ब्रह्मविष्णवोर्जगत्त्रयम्

ईशोपि तं निरीक्ष्याथ ह्यकालप्रलयं भृशम् 1.7.१०

महानलस्तंभविभीषणाकृतिर्बभूव तन्मध्यतले स निष्कलः

ते अस्त्रे चापि सज्वाले लोकसंहरणक्षमे

निपतेतुः क्षणे नैव ह्याविर्भूते महानले १२

दृष्ट्वा तदद्भुतं चित्रमस्त्रशांतिकरं शुभम्
किमेतदद्भुताकारमित्यूचुश्च परस्परम् १३
अतींद्रि यमिदं स्तंभमग्निरूपं किमुत्थितम्
अस्योर्ध्वमपि चाधश्च आवयोर्लक्ष्यमेव हि १४
इति व्यवसितौ वीरौ मिलितौ वीरमानिनौ
तत्परौ तत्परीक्षार्थं प्रतस्थातेऽथ सत्वरम् १५
आवयोर्मिश्रयोस्तत्र कार्यमेकं न संभवेत्
इत्युक्त्वा सूकरतनुर्विष्णुस्तस्यादिमीयिवान् १६
तथा ब्रह्माहं सतनुस्तदंतं वीक्षितुं ययौ
भित्त्वा पातालनिलयं गत्वा दूरतरं हरिः १७
नाऽप्श्यात्तस्य संस्थानं स्तंभस्यानलवर्चसः
श्रांतः स सूकरहरिः प्राप पूर्वं रणांगणम् १८
अथ गच्छंस्तु व्योम्ना च विधिस्तात पिता तव
ददर्श केतकी पुष्पं किंचिद्विच्युतमद्भुतम् १९
अतिसौरभ्यमम्लानं बहुवर्षच्युतं तथा
अन्वीक्ष्य च तयोः कृत्यं भगवान्परमेश्वरः 1.7.२०
परिहासं तु कृतवान्कंपनाच्चलितं शिरः
तस्मात्तावनुगृह्णातुं च्युतं केतकमुत्तमम् २१
किं त्वं पतसि पुष्पेश पुष्पराट् केन वा धृतम्
आदिमस्याप्रमेयस्य स्तंभमध्याच्च्युतश्चिरम् २२
न संपश्यामि तस्मात्त्वं जह्याशामंतदर्शने
अस्यां तस्य च सेवार्थं हंसमूर्तिरिहागतः २३
इतः परं सखे मेऽद्य त्वया कर्तव्यमीप्सितम्
मया सह त्वया वाच्यमेतद्विष्णोश्च सन्निधौ २४
स्तंभांतो वीक्षितो धात्रा तत्र साक्ष्यहमच्युत
इत्युक्त्वा केतकं तत्र प्रणनाम पुनः नः
असत्यमपि शस्तं स्यादापदीत्यनुशासनम् २५।
समीक्ष्य तत्राऽच्युतमायतश्रमं प्रनष्टहर्षं तु ननर्त हर्षात्

उवाच चैनं परमार्थमच्युतं षंढात्तवादः स विधिस्ततोऽच्युतम् २६
स्तंभाग्रमेतत्समुदीक्षितं हरे तत्रैव साक्षी ननु केतकं त्विदम्
ततोऽवदत्तत्र हि केतकं मृषा तथेति तद्धातृवचस्तदंतिके २७
हरिश्च तत्सत्यमितीव चिंतयंश्चकार तस्मै विधये नमः स्वयम्
षोडशैरुपचारैश्च पूजयामास तं विधिम् २८
विधिं प्रहर्तुं शठमग्निलिंगतः स ईश्वरस्तत्र बभूव साकृतिः
समुत्थितः स्वामि विलोकनात्पुनः प्रकंपपाणिः परिगृह्य तत्पदम् २९
आद्यंतहीनवपुषि त्वयि मोहबुद्ध्या भूयाद्विमर्श इह नावति कामनोत्थः
स त्वं प्रसीद करुणाकर कश्मलं नौ मृष्टं क्षमस्व विहितं भवतैव केल्या 1.7.३०
ईश्वर उवाच
वत्सप्रसन्नोऽस्मि हरे यतस्त्वमीशत्वमिच्छन्नपि सत्यवाक्यम्
ब्रूयास्ततस्ते भविता जनेषु साम्यं मया सत्कृतिरप्यलप्थाः ३१
इतः परं ते पृथगात्मनश्च क्षेत्रप्रतिष्ठोत्सवपूजनं च ३२
इति देवः पुरा प्रीतः सत्येन हरये परम्
ददौ स्वसाम्यमत्यर्थं देवसंघे च पश्यति ३३
इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां सप्तमोऽध्यायः ७

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः ०८

https://sa.wikisource.org/s/sqb

< शिवपुराणम् | संहिता १ (विश्वेश्वरसंहिता)

नंदिकेश्वर उवाच

ससर्जाथ महादेवः पुरुषं कंचिदद्भुतम्

भैरवाख्यं भ्रुवोर्मध्याद्ब्रह्मदर्पजिघांसया १

स वै तदा तत्र पतिं प्रणम्य शिवमंगणे

किं कार्यं करवाण्यत्र शीघ्रमाज्ञापय प्रभो २

वत्सयोऽयं विधिः साक्षाज्जगतामाद्यदैवतम्

नूनमर्चय खड्गेन तिग्मेन जवसा परम् ३

स वै गृहीत्वैककरेण केशं तत्पंचमं दृप्तमसत्यभाषणम्

छित्त्वा शिरांस्यस्य निहंतुमुद्यतः प्रकंपयन्खड्गमतिस्फुटं करैः ४

पिता तवोत्सृष्टविभूषणांबरस्रगुत्तरीयामलकेशसंहतिः

प्रवातरंभेव लतेव चंचलः पपात वै भैरवपादपंकजे ५

तावद्विधिं तात दिदृक्षुरच्युतः कृपालुरस्मत्पतिपादपल्लवम्

निषिच्य बाष्पैरवदत्कृतांजलिर्यथा शिशुः स्वं पितरं कलाक्षरम् ६

अच्युत उवाच

त्वया प्रयत्नेन पुरा हि दत्तं यदस्य पंचाननमीशचिह्नम्

तस्मात्क्षमस्वाद्यमनुग्रहार्हं कुरु प्रसादं विधये ह्यमुष्मै ७

इत्यर्थितोऽच्युतेनेशस्तुष्टः सुरगणांगणे

निवर्तयामास तदा भैरवं ब्रह्मदंडतः ८

अथाह देवः कितवं विधिं विगतकंधरम्

ब्रह्मंस्त्वमर्हणाकांक्षी शठमीशत्वमास्थितः ९

नातस्ते सत्कृतिर्लोके भूयात्स्थानोत्सवादिकम्

ब्रह्मोवच

स्वामिन्प्रसीदाद्य महाविभूते मन्ये वरं वरद मे शिरसः प्रमोक्षम् 1.8.१०

नमस्तुभ्यं भगवते बंधवे विश्वयोनये

सहिष्णवे सर्वदोषाणां शंभवे शैलधन्वने ११

ईश्वर उवाच

अराजभयमेतद्वै जगत्सर्वं न शिष्यति

ततस्त्वं जहि दंडार्हं वह लोकधुरं शिशो १२

वरं ददामि ते तत्र गृहाण दुर्लभं परम्

वैतानिकेषु गृह्येषु यज्ञे च भवान् गुरुः १३

निष्फलस्त्वदृते यज्ञः सांगश्च सहदक्षिणः

अथाह देवः कितवं केतकं कूटसाक्षिणम् १४

रे रे केतक दुष्टस्त्वं शठ दूरमितो व्रज

ममापि प्रेम ते पुष्पे मा भूत्पूजास्वितः परम् १५

इत्युक्ते तत्र देवेन केतकं देवजातयः

सर्वानि वारयामासुस्तत्पार्श्वादन्यतस्तदा १६

केतक उवाच

नमस्ते नाथ मे जन्मनिष्फलं भवदाज्ञया

सफलं क्रियतां तात क्षम्यतां मम किल्बिषम् १७

ज्ञानाज्ञानकृतं पापं नाशयत्येव ते स्मृतिः

तादृशे त्वयि दृष्टे मे मिथ्यादोषः कुतो भवेत् १८

तथा स्तुतस्तु भगवान्केतकेन सभातले

न मे त्वद्धारणं योग्यं सत्यवागहमीश्वरः १९

मदीयास्त्वां धरिष्यंति जन्म ते सफलं ततः

त्वं वै वितानव्याजेन ममोपरि भविष्यसि 1.8.२०

इत्यनुगृह्य भगवान्केतकं विधिमाधवौ

विरराज सभामध्ये सर्वदेवैरभिष्टुतः २१

इति श्रीशिवमहापुराणे विद्येश्वरसंहितायामष्टमोऽध्यायः ८

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः ०९




नंदिकेश्वर उवाच

तत्रांतरे तौ च नाथं प्रणम्य विधिमाधवौ

बद्धांजलिपुटौ तूष्णीं तस्थतुर्दक्षवामगौ १

तत्र संस्थाप्य तौ देवं सकुटुंबं वरासने

पूजयामासतुः पूज्यं पुण्यैः पुरुषवस्तुभिः २

पौरुषं प्राकृतं वस्तुज्ञेयं दीर्घाल्पकालिकम्

हारनूपुरकेयूरकिरीटमणिकुंडलैः ३

यज्ञसूत्रोत्तरीयस्रक्क्षौममाल्यांगुलीयकैः

पुष्पतांबूलकर्पूरचंदनागुरुलेपनैः ४

धूपदीपसितच्छत्रव्यजनध्वजचामरैः

अन्यैर्दिव्योपहारैश्च वाण्मनोतीतवैभवैः ५

पतियोग्यैः पश्वलभ्यैस्तौ समर्चयतां पतिम्

यद्यच्छ्रेष्ठतमं वस्तु पतियोग्यं हितद्ध्वजे ६

तद्वस्त्वखिलमीशोपि पारं पर्यचिकीर्षया

सभ्यानां प्रददौ हृष्टः पृथक्तत्र यथाक्रमम् ७

कोलाहलो महानासीत्तत्र तद्वस्तु गृह्णताम्

तत्रैव ब्रह्मविष्णुभ्यां चार्चितः शंकरः पुरा ८

प्रसन्नः प्राह तौ नम्रौ सस्मितं भक्तिवर्धनः

ईश्वर उवाच

तुष्टोऽहमद्य वां वत्सौ पूजयाऽस्मिन्महादिने ९

दिनमेतत्ततः पुण्यं भविष्यति महत्तरम्

शिवरात्रिरिति ख्याता तिथिरेषा मम प्रिया 1.9.१०

एतत्काले तु यः कुर्यात्पूजां मल्लिंगबेरयोः

कुर्यातु जगतः कृत्यं स्थितिसर्गादिकं पुमान् ११

शिवरात्रावहोरात्रं निराहारो जितेंद्रि यः १२ब्

अर्चयेद्वा यथान्यायं यथाबलमवंचकः १२
यत्फलं मम पूजायां वर्षमेकं निरंतरम्
तत्फलं लभते सद्यः शिवरात्रौ मदर्चनात् १३
मद्धर्मवृद्धिकालोऽयं चंद्र काल इवांबुधेः
प्रतिष्ठाद्युत्सवो यत्र मामको मंगलायनः १४
यत्पुनः स्तंभरूपेण स्वाविरासमहं पुरा
स कालो मार्गशीर्षे तु स्यादाद्रा र्! ऋक्षमर्भकौ १५
आद्रा र्यां! मार्गशीर्षे तु यः पश्येन्मामुमासखम्
मद्वेरमपि वा लिंगं स गुहादपि मे प्रियः १६
अलं दर्शनमात्रेण फलं तस्मिन्दिने शुभे
अभ्यर्चनं चेदधिकं फलं वाचामगोचरम् १७
रणरंगतलेऽमुष्मिन्यदहं लिंगवर्ष्मणा
जृंभितो लिंगवत्तस्माल्लिंगस्थानमिदं भवेत् १८
अनाद्यंतमिदं स्तंभमणुमात्रं भविष्यति
दर्शनार्थं हि जगतां पूजनार्थं हि पुत्रको १९
भोगावहमिदं लिंगं भुक्तिं मुक्त्येकसाधनम्
दर्शनस्पर्शनध्यानाज्जंतूनां जन्ममोचनम् 1.9.२०
अनलाचलसंकाशं यदिदं लिंगमुत्थितम्
अरुणाचलमित्येव तदिदं ख्यातिमेष्यति २१
अत्र तीर्थं च बहुधा भविष्यति महत्तरम्
मुक्तिरप्यत्र जंतूनां वासेन मरणेन च २२
रथोत्सवादिकल्याणं जनावासं तु सर्वतः
अत्र दत्तं हुतं जप्तं सर्वं कोटिगुणं भवेत् २३
मत्क्षेत्रादपि सर्वस्मात्क्षेत्रमेतन्महत्तरम्
अत्र संस्मृतिमात्रेण मुक्तिर्भवति देहिनाम् २४
तस्मान्महत्तरमिदं क्षेत्रमत्यंतशोभनम्
सर्वकल्याणसंपूर्णं सर्वमुक्तिकरं शुभम् २५
अर्चयित्वाऽत्र मामेव लिंगे लिंगिनमीश्वरम्

सालोक्यं चैव सामीप्यं सारूप्यं सार्ष्टिरेव च २६
सायुज्यमिति पंचैते क्रियादीनां फलं मतम्
सर्वेपि यूयं सकलं प्राप्स्यथाशु मनोरथम् २७
नंदिकेश्वर उवाच
इत्यनुगृह्य भगवान्विनीतौ विधिमाधवौ
यत्पूर्वं प्रहतं युद्धे तयोः सैन्यं परस्परम् २८
तदुत्थापयदत्यर्थं स्वशक्त्याऽमृतधारया
तयोर्मौढ्यं च वैरं च व्यपनेतुमुवाच तौ २९
सकलं निष्कलं चेति स्वरूपद्वयमस्ति मे
नान्यस्य कस्यचित्तस्मादन्यः सर्वोप्यनीश्वरः 1.9.३०
पुरस्तात्स्तंभरूपेण पश्चाद्रूपेण चार्भकौ
ब्रह्मत्वं निष्कलं प्रोक्तमीशत्वं सकलं तथा ३१
द्वयं ममैव संसिद्धं न मदन्यस्य कस्यचित्
तस्मादीशत्वमन्येषां युवयोरपि न क्वचित् ३२
तदज्ञानेन वां वृत्तमीशमानं महाद्भुतम्
तन्निराकर्तुमत्रैवमुत्थितोऽहं रणक्षितौ ३३
त्यजतं मानमात्मीयं मयीशे कुरुतं मतिम्
मत्प्रसादेन लोकेषु सर्वोप्यर्थः प्रकाशते ३४
गुरूक्तिर्व्यंजकं तत्र प्रमाणं वा पुनः पुनः
ब्रह्मतत्त्वमिदं गूढं भवत्प्रीत्या भणाम्यहम् ३५
अहमेव परं ब्रह्म मत्स्वरूपं कलाकलम्
ब्रह्मत्वादीश्वरश्चाहं कृत्यं मेनुग्रहादिकम् ३६
बृहत्त्वाद्बृंहणत्वाच्च ब्रह्माहं ब्रह्मकेशवौ
समत्वाद्व्यापकत्वाच्च तथैवात्माहमर्भकौ ३७
अनात्मानः परे सर्वे जीवा एव न संशयः
अनुग्रहाद्यं सर्गांतं जगत्कृत्यं च पंकजम् ३८
ईशत्वादेव मे नित्यं न मदन्यस्य कस्यचित्
आदौ ब्रह्मत्वबुद्ध्यर्थं निष्कलं लिंगमुत्थितम् ३९

तस्मादज्ञातमीशत्वं व्यक्तं द्योतयितुं हि वाम्
सकलोहमतो जातः साक्षादीशस्तु तत्क्षणात् 1.9.४०
सकलत्वमतो ज्ञेयमीशत्वं मयि सत्वरम्
यदिदं निष्कलं स्तंभं मम ब्रह्मत्वबोधकम् ४१
लिंगलक्षणयुक्तत्वान्मम लिंगं भवेदिदम्
तदिदं नित्यमभ्यर्च्यं युवाभ्यामत्र पुत्रकौ ४२
मदात्मकमिदं नित्यं मम सान्निध्यकारणम्
महत्पूज्यमिदं नित्यमभेदाल्लिंगसिंगिनोः ४३
यत्रप्रतिष्ठितं येन मदीयं लिंगमीदृशम्
तत्र प्रतिष्ठितः सोहमप्रतिष्ठोपि वत्सकौ ४४
मत्साम्यमेकलिंगस्य स्थापने फलमीरितम्
द्वितीये स्थापिते लिंगे मदैक्यं फलमेव हि ४५
लिंगं प्राधान्यतः स्थाप्यं तथाबेरं तु गौणकम्
लिंगाभावेन तत्क्षेत्रं सबेरमपि सर्वतः ४६
इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां नवमोऽध्यायः ९

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः १०

https://sa.wikisource.org/s/sqd
< शिवपुराणम् | संहिता १ (विश्वेश्वरसंहिता)

ब्रह्मविष्णू ऊचतुः

सर्गादिपंचकृत्यस्य लक्षणं ब्रूहि नौ प्रभो

शिव उवाच

मत्कृत्यबोधनं गुह्यं कृपया प्रब्रवीमि वाम् १

सृष्टिः स्थितिश्च संहारस्तिरोभावोऽप्यनुग्रहः

पंचैव मे जगत्कृत्यं नित्यसिद्धमजाच्युतौ २

सर्गः संसारसंरंभस्तत्प्रतिष्ठा स्थितिर्मता

संहारो मर्दनं तस्य तिरोभावस्तदुत्क्रमः ३

तन्मोक्षोऽनुग्रहस्तन्मे कृत्यमेवं हि पंचकम्

कृत्यमेतद्वहत्यन्यस्तूष्णीं गोपुरबिंबवत् ४

सर्गादि यच्चतुष्कृत्यं संसारपरिजृंभणम्

पंचमं मुक्तिहेतुर्वै नित्यं मयि च सुस्थिरम् ५

तदिदं पंचभूतेषु दृश्यते मामकैर्जनैः

सृष्टिर्भूमौ स्थितिस्तोये संहारः पावके तथा ६

तिरोभावोऽनिले तद्वदनुग्रह इहाम्बरे

सृज्यते धरया सर्वमद्भिः सर्वं प्रवर्द्धते ७

अर्द्यते तेजसा सर्वं वायुना चापनीयते

व्योम्नानुगृह्यते सर्वं ज्ञेयमेवं हि सूरिभिः ८

पंचकृत्यमिदं वोढुं ममास्ति मुखपंचकम्

चतुर्दिक्षु चतुर्वक्त्रं तन्मध्ये पंचमं मुखम् ९

युवाभ्यां तपसा लब्धमेतत्कृत्यद्वयं सुतौ

सृष्टिस्थित्यभिधं भाग्यं मत्तः प्रीतादतिप्रियम् 1.10.१०

तथा रुद्र महेशाभ्यामन्यत्कृत्यद्वयं परम्

अनुग्रहाख्यं केनापि लब्धुं नैव हि शक्यते ११

तत्सर्वं पौर्विकं कर्म युवाभ्यां कालविस्मृतम्


महाभूत mahabhuta

न तद्रुद्र महेशाभ्यां विस्मृतं कर्म तादृशम् १२
रूपे वेशे च कृत्ये च वाहने चासने तथा
आयुधादौ च मत्साम्यमस्माभिस्तत्कृते कृतम् १३
मद्ध्यानविरहाद्वत्सौ मौढ्यं वामेवमागतम्
मज्ज्ञाने सति नैवं स्यान्मानं रूपे महेशवत् १४
तस्मान्मज्ज्ञानसिद्ध्यर्थं मंत्रमॐकारनामकम्
इतः परं प्रजपतं मामकं मानभंजनम् १५
उपादिशं निजं मंत्रमॐकारमुरुमंगलम्
ॐकारो मन्मुखाज्जज्ञे प्रथमं मत्प्रबोधकः १६
वाचकोऽयमहं वाच्यो मंत्रोऽयं हि मदात्मकः
तदनुस्मरणं नित्यं ममानुस्मरणं भवेत् १७
अकार उत्तरात्पूर्वमुकारः पश्चिमाननात्
मकारो दक्षिणमुखाद्बिंदुः प्राण्मुखतस्तथा १८
नादो मध्यमुखादेवं पंचधाऽसौ विजृंभितः
एकीभूतः पुनस्तद्वदोमित्येकाक्षरो भवेत् १९
नामरूपात्मकं सर्वं वेदभूतकुलद्वयम्
व्याप्तमेतेन मंत्रेण शिवशक्त्योश्च बोधकः 1.10.२०
अस्मात्पंचाक्षरं जज्ञे बोधकं सकलस्यतत्
आकारादिक्रमेणैव नकारादियथाक्रमम् २१
अस्मात्पंचाक्षराज्जाता मातृकाः पंचभेदतः
तस्माच्छिरश्चतुर्वक्त्रात्त्रिपाद्गाय त्रिरेव हि २२
वेदः सर्वस्ततो जज्ञे ततो वै मंत्रकोटयः
तत्तन्मंत्रेण तत्सिद्धिः सर्वसिद्धिरितो भवेत् २३
अनेन मंत्रकंदेन भोगो मोक्षश्च सिद्ध्यति
सकला मंत्रराजानः साक्षाद्भोगप्रदाः शुभाः २४
नंदिकेश्वर उवाच
पुनस्तयोस्तत्र तिरः पटं गुरुः प्रकल्प्य मंत्रं च समादिशत्परम्
निधाय तच्छीर्ष्णि करांबुजं शनैरुदण्मुखं संस्थितयोः सहांबिकः २५

त्रिरुच्चार्याग्रहीन्मंत्रं यंत्रतंत्रोक्तिपूर्वकम्

शिष्यौ च तौ दक्षिणायामात्मानं च समर्पयत् २६

प्रबद्धहस्तौ किल तौ तदंतिके तमेव देवं जगतुर्जगद्गुरुम् २७

ब्रह्माच्युतावूचतुः

नमो निष्कलरूपाय नमो निष्कलतेजसे

नमः सकलनाथाय नमस्ते सकलात्मने २८

नमः प्रणववाच्याय नमः प्रणवलिंगिने

नमः सृष्ट्यादिकर्त्रे च नमः पंचमुखायते २९

पंचब्रह्मस्वरूपाय पंच कृत्यायते नमः

आत्मने ब्रह्मणे तुभ्यमनंतगुणशक्तये 1.10.३०

सकलाकलरूपाय शंभवे गुरवे नमः

इति स्तुत्वा गुरुं पद्यैर्ब्रह्मा विष्णुश्च नेमतुः ३१

ईश्वर उवाच

वत्सकौ सर्वतत्त्वं च कथितं दर्शितं च वाम्

जपतं प्रणवं मंत्रं देवीदिष्टं मदात्मकम् ३२

ज्ञानं च सुस्थिरं भाग्यं सर्वं भवति शाश्वतम्

आद्रा र्यां! च चतुर्दश्यां तज्जाप्यं त्वक्षयं भवेत् ३३

सूर्यगत्या महाद्रा र्या!मेकं कोटिगुणं भवेत्

मृगशीर्षांतिमो भागः पुनर्वस्वादिमस्तथा ३४

आद्रा र्स!मः सदा ज्ञेयः पूजाहोमादितर्पणे

दर्शनं तु प्रभाते च प्रातःसंगवकालयोः ३५

चतुर्दशी तथा ग्राह्या निशीथव्यापिनी भवेत्

प्रदोषव्यापिनी चैव परयुक्ता प्रशस्यते ३६

लिंगं बेरं च मेतुल्यं यजतां लिंगमुत्तमम्

तस्माल्लिंगं परं पूज्यं बेरादपि मुमुक्षुभिः ३७

लिंगमॐकारमंत्रेण बेरं पंचाक्षरेण तु

स्वयमेव हि सद्द्रव्यैः प्रतिष्ठाप्यं परैरपि ३८

पूजयेदुपचारैश्च मत्पदं सुलभं भवेत्
इति शास्य तथा शिष्यौ तत्रैवांऽतर्हितः शिवः ३९
इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां दशमोऽध्यायः १०

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः ११

https://sa.wikisource.org/s/sqe
< शिवपुराणम् | संहिता १ (विश्वेश्वरसंहिता)

ऋषय ऊचुः

कथं लिंगं प्रतिष्ठाप्यं कथं वातस्य लक्षणम्

कथं वा तत्समभ्यच्र्यं देशे काले च केन हि १

सूत उवाच

युष्मदर्थं प्रवक्ष्यामि बुद्ध्यतामवधानतः

अनुकूले शुभे काले पुण्ये तीर्थे तटे तथा २

यथेष्टं लिंगमारोप्यं यत्र स्यान्नित्यमर्चनम्

पार्थिवेन तथाप्येनं तैजसेन यथारुचि ३

कल्पलक्षणसंयुक्तं लिंगं पूजाफलं लभेत्

सर्वलक्षणसंयुक्तं सद्यः पूजाफलप्रदम् ४

चरे विशिष्यते सूक्ष्मं स्थावरे स्थूलमेव हि

सलक्षणं सपीठं च स्थापयेच्छिवनिर्मितम् ५

मंडलं चतुरस्रं वा त्रिकोणमथवा तथा

खट्वांगवन्मध्यसूक्ष्मं लिंगपीठं महाफलं ६

प्रथमं मृच्छिलादिभ्यो लिगं लोहादिभिः कृतम्

येन लिंगं तेन पीठं स्थावरे हि विशिष्यते ७

लिंगं पीठं चरे त्वेकं लिंगं बाणकृतं विना

लिंगप्रमाणं कर्तृ-णां द्वादशांगुलमुत्तमम् ८

न्यूनं चेत्फलमल्पं स्यादधिकं नैव दूष्यते

कर्तुरेकांगुलन्यूनं चरेपि च तथैव हि ९

आदौ विमानं शिल्पेन कार्यं देवगणैर्युतम्

तत्र गर्भगृहे रम्ये दृढे दर्पणसंनिभे 1.11.१०

भूषिते नवरत्नैश्च दिग्द्वारे च प्रधानकैः

नीलं रक्तं च वै दूर्यं श्यामं मारकतं तथा ११

मुक्ताप्रवालगोमेदवज्राणि नवरत्नकम् १२ब्

मध्ये लिंगं महदद्रव्यं निक्षिपेत्सहवैदिके १२
संपूज्य लिंगं सद्याद्यैः पंचस्थाने यथाक्रमम्
अग्नौ च हुत्वा बहुधा हविषास कलं च माम् १३
अभ्यर्च्य गुरुमाचार्यमर्थैः कामैश्च बांधवम्
दद्यादैश्वर्यमर्थिभ्यो जडमप्यजडं तथा १४
स्थावरं जंगमं जीवं सर्वं संतोष्य यत्नतः
सुवर्णपूरिते श्वभ्रे नवरत्नैश्च पूरिते १५
सद्यादि ब्रह्म चोच्चार्य ध्यात्वा देवं परं शुभम्
उदीर्य च महामंत्रमॐकारं नादघोषितम् १६
लिंगं तत्र प्रतिष्ठाप्य लिगं पीठेन योजयेत्
लिंगं सपीठं निक्षिप्य नित्यलेपेन बंधयेत् १७
एवं बेरं च संस्थाप्यं तत्रैव परमं शुभम्
पंचाक्षरेण बेरं तु उत्सवार्थं वहिस्तथा १८
बेरं गुरुभ्यो गृह्णीयात्साधुभिः पूजितं तु वा
एवं लिंगे च बेरे च पूजा शिवपदप्रदा १९
पुनश्च द्विविधं प्रोक्तं स्थावरं जंगमं तथा
स्थावरं लिंगमित्याहुस्तरुगुल्मादिकं तथा 1.11.२०
जंगमं लिंगमित्याहुः कृमिकीटादिकं तथा
स्थावरस्य च शुश्रूषा जंगमस्य च तर्पणम् २१
तत्तत्सुखानुरागेण शिवपूजां विदुर्बुधाः
पीठमंबामयं सर्वं शिवलिंगं च चिन्मयम् २२
यथा देवीमुमामंके धृत्वा तिष्ठति शंकरः
तथा लिंगमिदं पीठं धृत्वा तिष्ठति संततम् २३
एवं स्थाप्य महालिंगं पूजयेदुपचारकैः
नित्यपूजा यथा शक्तिध्वजादिकरणं तथा २४
इति संस्थापयेल्लिंगं साक्षाच्छिवपदप्रदम्
अथवा चरलिंगं तु षोडशैरुपचारकैः २५
पूजयेच्च यथान्यायं क्रमाच्छिवपदप्रदम्

आवाहनं चासनं च अर्घ्यं पाद्यं तथैव च २६
तदंगाचमनं चैव स्नानमभ्यंगपूर्वकम्
वस्त्रं गंधं तथा पुष्पं धूपं दीपं निवेदनम् २७
नीराजनं च तांबूलं नमस्कारो विसर्जनम्
अथवाऽर्घ्यादिकं कृत्वा नैवेद्यां तं यथाविधि २८
अथाभिषेकं नैवेद्यं नमस्कारं च तर्पणम्
यथाशक्ति सदाकुर्यात्क्रमाच्छिवपदप्रदम् २९
अथवा मानुषे लिंगेप्यार्षे दैवे स्वयंभुवि
स्थापितेऽपूर्वके लिंगे सोपचारं यथा तथा 1.11.३०
पूजोपकरणे दत्ते यत्किंचित्फलमश्नुते
प्रदक्षिणानमस्कारैः क्रमाच्छिवपदप्रदम् ३१
लिंगं दर्शनमात्रं वा नियमेन शिवप्रदम्
मृत्पिष्टगोशकृत्पुष्पैः करवीरेण वा फलैः ३२
गुडेन नवनीतेन भस्मनान्नैर्यथारुचि
लिंगं यत्नेन कृत्वांते यजेत्तदनुसारतः ३३
अंगुष्ठादावपि तथा पूजामिच्छंति केचन
लिंगकर्मणि सर्वत्र निषेधोस्ति न कर्हिचित् ३४
सर्वत्र फलदाता हि प्रयासानुगुणं शिवः
अथवा लिंगदानं वा लिंगमौल्यमथापि वा ३५
श्रद्धया शिवभक्ताय दत्तं शिवपदप्रदम्
अथवा प्रणवं नित्यं जपेद्दशसहस्रकम् ३६
संध्ययोश्च सहस्रं वा ज्ञेयं शिवपदप्रदम्
जपकाले मकारांतं मनःशुद्धिकरं भजेत् ३७
समाधौ मानसं प्रोक्तमुपांशु सार्वकालिकम्
समानप्रणवं चेमं बिंदुनादयुतं विदुः ३८
अथ पंचाक्षरं नित्यं जपेदयुतमादरात्
संध्ययोश्च सहस्रं वा ज्ञेयं शिवपदप्रदम् ३९
प्रणवेनादिसंयुक्तं ब्राह्मणानां विशिष्यते

दीक्षायुक्तं गुरोर्ग्राह्यं मंत्रं ह्यथ फलाप्तये 1.11.४०
कुंभस्नानं मंत्रदीक्षां मातृकान्यासमेव च
ब्राह्मणः सत्यपूतात्मा गुरुर्ज्ञानी विशिष्यते ४१
द्विजानां च नमःपूर्वमन्येषां च नमोन्तकम् ४२ब्
स्त्रीणां च क्वचिदिच्छंति नमो तं च यथाविधि ४२
विप्रस्त्रीणां नमः पूर्वमिदमिच्छंति केचन
पंचकोटिजपं कृत्वा सदा शिवसमो भवेत् ४३
एकद्वित्रिचतुःकोट्याब्रह्मादीनां पदं व्रजेत्
जपेदक्षरलक्षंवा अक्षराणां पृथक्पृथक् ४४
अथवाक्षरलक्षं वा ज्ञेयं शिवपदप्रदम्
सहस्रं तु सहस्राणां सहस्रेण दिनेन हि ४५
जपेन्मंत्रादिष्टसिद्धिर्नित्यं ब्राह्मणभोजनात्
अष्टोत्तरसहस्रं वै गायत्रीं प्रातरेव हि ४६
ब्राह्मणस्तु जपेन्नित्यं क्रमाच्छिवपदप्रदान्
वेदमंत्रांस्तु सूक्तानि जपेन्नियममास्थितः ४७
एकं दशार्णं मंत्रं च शतोनं च तदूर्ध्वकम्
अयुतं च सहस्रं च शतमेकं विना भवेत् ४८
वेदपारायणं चैव ज्ञेयं शिवपदप्रदम्
अन्यान्बहुतरान्मंत्राञ्जपेदक्षरलक्षतः ४९
एकाक्षरांस्तथा मंत्राञ्जपेदक्षरकोटितः
ततः परं जपेच्चैव सहस्रं भक्तिपूर्वकम् 1.11.५०
एवं कुर्याद्यथाशक्ति क्रमाच्छिव पदं लभेत्
नित्यं रुचिकरं त्वेकं मंत्रमामरणांतिकम् ५१
जपेत्सहस्रमोमिति सर्वाभीष्टं शिवाज्ञया
पुष्पारामादिकं वापि तथा संमार्जनादिकम् ५२
शिवाय शिवकार्यार्थे कृत्वा शिवपदं लभेत्
शिवक्षेत्रे तथा वासं नित्यं कुर्याच्च भक्तितः ५३
जडानामजडानां च सर्वेषां भुक्तिमुक्तिदम्

तस्माद्वासं शिवक्षेत्रे कुर्यदामरणं बुधः ५४
लिंगाद्धस्तशतं पुण्यं क्षेत्रे मानुषके विदुः
सहस्रारत्निमात्रं तु पुण्यक्षेत्रे तथार्षके ५५
दैवलिंगे तथा ज्ञेयं सहस्रारत्निमानतः
धनुष्प्रमाणसाहस्रं पुण्यं क्षेत्रे स्वयं भुवि ५६
पुण्यक्षेत्रे स्थिता वापी कूपाद्यं पुष्कराणि च
शिवगंगेति विज्ञेयं शिवस्य वचनं यथा ५७
तत्र स्नात्वा तथा दत्त्वा जपित्वा हि शिवं व्रजेत्
शिवक्षेत्रं समाश्रित्य वसेदामरणं तथा ५८
दाहं दशाहं मास्यं वा सपिंडीकरणं तु वा
आब्दिकं वा शिवक्षेत्रे क्षेत्रे पिंडमथापि वा ५९
सर्वपाप विनिर्मुक्तः सद्यः शिवपदं लभेत्
अथवा सप्तरात्रं वा वसेद्वा पंचरात्रकम् 1.11.६०
त्रिरात्रमेकरात्रं वा क्रमाच्छिवपदं लभेत्
स्ववर्णानुगुणं लोके स्वाचारात्प्राप्नुते नरः ६१
वर्णोद्धारेण भक्त्या च तत्फलातिशयं नरः
सर्वं कृतं कामनया सद्यः फलमवाप्नुयात् ६२
सर्वं कृतमकामेन साक्षाच्छिवपदप्रदम्
प्रातर्मध्याह्नसायाह्नमहस्त्रिष्वेकतः क्रमात् ६३
प्रातर्विधिकरं ज्ञेयं मध्याह्नं कामिकं तथा
सायाह्नं शांतिकं ज्ञेयं रात्रावपि तथैव हि ६४
कालो निशीथो वै प्रोक्तोमध्ययामद्वयं निशि
शिवपूजा विशेषेण तत्कालेऽभीष्टसिद्धिदा ६५
एवं ज्ञात्वा नरः कुर्वन्यथोक्तफलभाग्भवेत्
कलौ युगे विशेषेण फलसिद्धिस्तु कर्मणा ६६
उक्तेन केनचिद्वापि अधिकारविभेदतः
सद्वृत्तिः पापभीरुश्चेत्तत्फलमवाप्नुयात् ६७
ऋषय ऊचुः

अथ क्षेत्राणि पुण्यानि समासात्कथयस्व नः

सर्वाः स्त्रियश्च पुरुषा यान्याश्रित्य पदं लभेत् ६८

सूत योगिवरश्रेष्ठ शिवक्षेत्रागमांस्तथा

सूत उवाच

शृणुत श्रद्धया सर्वक्षेत्राणि च तदागमान् ६९

इति श्रीशिवमहापुराणे विद्येश्वरसंहितायांएकदशोऽध्यायः ११

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः १२

https://sa.wikisource.org/s/i2k

< शिवपुराणम् | संहिता १ (विश्वेश्वरसंहिता)

सूत उवाच

शृणुध्वमृषयः प्राज्ञाः शिवक्षेत्रं विमुक्तिदम्

तदागमांस्ततो वक्ष्ये लोकरक्षार्थमेव हि १

पंचाशत्कोटिविस्तीर्णा सशैलवनकानना

शिवाज्ञया हि पृथिवी लोकं धृत्वा च तिष्ठति २

तत्र तत्र शिवक्षेत्रं तत्र तत्र निवासिनाम्

मो-क्षार्थं कृपया देवः क्षेत्रं कल्पितवान्प्रभुः ३

परिग्रहादृषीणां च देवानां परिग्रहात्

स्वयंभूतान्यथान्यानि लोकरक्षार्थमेव हि ४

तीर्थे क्षेत्रे सदाकार्यं स्नानदानजपादिकम्

अन्यथा रोगदारिद्र य्मूकत्वाद्याप्नुयान्नरः ५

अथास्मिन्भारते वर्षे प्राप्नोति मरणं नरः

स्वयंभूस्थानवासेन पुनर्मानुष्यमाप्नुयात् ६

क्षेत्रे पापस्य करणं दृढं भवति भूसुराः

पुण्यक्षेत्रे निवासे हि पापमण्वपि नाचरेत् ७

येन केनाप्युपायेन पुण्यक्षेत्रे वसेन्नरः

सिंधोः शतनदीतीरे संति क्षेत्राण्यनेकशः ८

सरस्वती नदी पुण्या प्रोक्ता षष्टिमुखा तथा

तत्तत्तीरे वसेत्प्राज्ञः क्रमाद्ब्रह्मपदं लभेत् ९

हिमवद्गिरिजा गंगा पुण्या शतमुखा नदी

तत्तीरे चैव काश्यादिपुण्यक्षेत्राण्यनेकशः 1.12.१०

तत्र तीरं प्रशस्तं हि मृगे मृगबृहस्पतौ

शोणभद्रो दशमुखः पुण्योभीष्टफलप्रदः ११

तत्र स्नानोपवासेन पदं वैनायकं लभेत्

चतुर्वीशमुखा पुण्या नर्मदा च महानदी १२

तस्यां स्नानेन वासेन पदं वैष्णवमाप्नुयात्
तमसा द्वादशमुखा रेवा दशमुखा नदी १३
गोदावरी महापुण्या ब्रह्मगोवधनाशिनी
एकविंशमुखा प्रोक्ता रुद्र लोकप्रदायिनी १४
कृष्णवेणी पुण्यनदी सर्वपापक्षयावहा
साष्टादशमुखाप्रोक्ता विष्णुलोकप्रदायिनी १५
तुंगभद्रा दशमुखा ब्रह्मलोकप्रदायिनी
सुवर्णमुखरी पुण्या प्रोक्ता नवमुखा तथा १६
तत्रैव सुप्रजायंते ब्रह्मलोकच्युतास्तथा
सरस्वती च पंपा च कन्याश्वेतनदी शुभा १७
एतासां तीरवासेन इंद्र लोकमवाप्नुयात्
सह्याद्रि जा महापुण्या कावेरीति महानदी १८
सप्तविंशमुखा प्रोक्ता सर्वाभीष्टं प्रदायिनी
तत्तीराः स्वर्गदाश्चैव ब्रह्मविष्णुपदप्रदाः १९
शिवलोकप्रदा शैवास्तथाऽभीष्टफलप्रदाः
नैमिषे बदरे स्नायान्मेषगे च गुरौ रवौ 1.12.२०
ब्रह्मलोकप्रदं विद्यात्ततः पूजादिकं तथा
सिंधुनद्यां तथा स्नानं सिंहे कर्कटगे रवौ २१
केदारोदकपानं च स्नानं च ज्ञानदं विदुः
गोदावर्यां सिंहमासे स्नायात्सिंहबृहस्पतौ २२
शिवलोकप्रदमिति शिवेनोक्तं तथा पुरा
यमुनाशोणयोः स्नायाद्गुरौ कन्यागते रवौ २३
धर्मलोके दंतिलोके महाभोगप्रदं विदुः
कावेर्यां च तथास्नायात्तुलागे तु रवौ गुरौ २४
विष्णोर्वचनमाहात्म्यात्सर्वाभीष्टप्रदं विदुः
वृश्चिके मासि संप्राप्ते तथार्के गुरुवृश्चिके २५
नर्मदायां नदीस्नानाद्विष्णुलोकमवाप्नुयात्
सुवर्णमुखरीस्नानं चापगे च गुरौ रवौ २६

शिवलोकप्रदमिति ब्राह्मणो वचनं यथा
मृगमासि तथा स्नायाज्जाह्नव्यां मृगगे गुरौ २७
शिवलोकप्रदमिति ब्रह्मणो वचनं यथा
ब्रह्मविष्ण्वोः पदे भुक्त्वा तदंते ज्ञानमाप्नुयात् २८
गंगायां माघमासे तु तथाकुंभगते रवौ
श्राद्धं वा पिंडदानं वा तिलोदकमथापिवा २९
वंशद्वयपितृ-णां च कुलकोट्युद्धरं विदुः
कृष्णवेण्यां प्रशंसंति मीनगे च गुरौ रवौ 1.12.३०
तत्तत्तीर्थे च तन्मासि स्नानमिंद्र पदप्रदम्
गंगां वा सह्यजां वापि समाश्रित्य वसेद्बुधः ३१
तत्कालकृतपापस्य क्षयो भवति निश्चितम्
रुद्र लोकप्रदान्येव संति क्षेत्राण्यनेकशः ३२
ताम्रपर्णी वेगवती ब्रह्मलोकफलप्रदे
तयोस्तीरे हि संत्येव क्षेत्राणि स्वर्गदानि च ३३
संति क्षेत्राणि तन्मध्ये पुण्यदानि च भूरिशः
तत्र तत्र वसन्प्राज्ञस्तादृशं च फलं लभेत् ३४
सदाचारेण सद्वृत्त्या सदा भावनयापि च
वसेद्दयालुः प्राज्ञो वै नान्यथा तत्फलं लभेत् ३५
पुण्यक्षेत्रे कृतं पुण्यं बहुधा ऋद्धिमृच्छति
पुण्यक्षेत्रे कृतं पापं महदण्वपि जायते ३६
तत्कालं जीवनार्थश्चेत्पुण्येन क्षयमेष्यति
पुण्यमैश्वर्यदं प्राहुः कायिकं वाचिकं तथा ३७
मानसं च तथा पापं तादृशं नाशयेद्द्विजाः
मानसं वज्रलेपं तु कल्पकल्पानुगं तथा ३८
ध्यानादेव हि तन्नश्येन्नान्यथा नाशमृच्छति
वाचिकं जपजालेन कायिकं कायशोषणात् ३९
दानाद्धनकृतं नश्येन्नाऽन्यथाकल्पकोटिभिः
क्वचित्पापेन पुण्यं च वृद्धिपूर्वेण नश्यति 1.12.४०

बीजांशश्चैव वृद्ध्यंशो भोगांशः पुण्यपापयोः

ज्ञाननाश्यो हि बीजांशो वृद्धिरुक्तप्रकारतः ४१

भोगांशो भोगनाश्यस्तु नान्यथा पुण्यकोटिभिः

बीजप्ररोहे नष्टे तु शेषो भोगाय कल्पते ४२

देवानां पूजया चैव ब्रह्मणानां च दानतः

तपोधिक्याच्च कालेन भोगः सह्यो भवेन्नृणाम्

तस्मात्पापमकृत्वैव वस्तव्यं सुखमिच्छता ४३

इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां द्वादशोऽध्यायः १२

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः १३

https://sa.wikisource.org/s/sqg



ऋषय ऊचुः

सदाचारं श्रावयाशु येन लोकाञ्जयेद्बुधः

धर्माधर्ममयान्ब्रूहि स्वर्गनारकदांस्तथा १

सूत उवाच

सदाचारयुतो विद्वान्ब्राह्मणो नाम नामतः

वेदाचारयुतो विप्रो ह्येतैरेकैकवान्द्विजः २

अल्पाचारोल्पवेदश्च क्षत्रियो राजसेवकः

किंचिदाचारवान्वैश्यः कृषिवाणिज्यकृत्तया ३

शूद्र ब्राह्मण इत्युक्तः स्वयमेव हि कर्षकः

असूयालुः परद्रो ही चंडालद्विज उच्यते ४

पृथिवीपालको राजा इतरेक्षत्रिया मताः

धान्यादिक्रयवान्वैश्य इतरो वणिगुच्यते ५

ब्रह्मक्षत्रियवैश्यानां शुश्रूषुः शूद्र उच्यते

कर्षको वृषलो ज्ञेय इतरे चैव दस्यवः ६

सर्वो ह्युषःप्राचीमुखश्चिन्तयेद्देवपूर्वकान्

धर्मानर्थांश्च तत्क्लेशानायं च व्ययमेव च ७

आयुर्द्वेषश्च मरणं पापं भाग्यं तथैव च

व्याधिः पुष्टिस्तथा शक्तिः प्रातरुत्थानदिक्फलम् ८

निशांत्यायामोषा ज्ञेया यामार्धं संधिरुच्यते

तत्काले तु समुत्थाय विण्मूत्रे विसृजेद्द्विजः ९

गृहाद्दूरं ततो गत्वा बाह्यतः प्रवृतस्तथा

उदण्मुखः समाविश्य प्रतिबंधेऽन्यदिण्मुखः 1.13.१०

जलाग्निब्राह्मणादीनां देवानां नाभिमुख्यतः

लिंगं पिधाय वामेन मुखमन्येन पाणिना ११

मलमुत्सृज्य चोत्थाय न पश्येच्चैव तन्मलम्

उद्धृतेन जलेनैव शौचं कुर्याज्जलाद्बहिः १२
अथवा देवपित्रार्षतीर्थावतरणं विना
सप्त वा पंच वा त्रीन्वा गुदं संशोधयेन्मृदा १३
लिंगे कर्कोटमात्रं तु गुदे प्रसृतिरिष्यते
तत उत्थाय पद्धस्तशौचं गण्डूषमष्टकम् १४
येन केन च पत्रेण काष्ठेन च जलाद्बहिः
कार्यं संत्यज्य तर्ज्जनीं दंतधावनमीरितम् १५
जलदेवान्नमस्कृत्य मंत्रेण स्नानमाचरेत्
अशक्तः कंठदघ्नं वा कटिदघ्नमथापि वा १६
आजानु जलमाविश्य मंत्रस्नानं समाचरेत्
देवादींस्तर्पयेद्विद्वांस्तत्र तीर्थजलेन च १७
धौतवस्त्रं समादाय पंचकच्छेन धारयेत्
उत्तरीयं च किं चैव धार्यं सर्वेषु कर्मसु १८
नद्यादितीर्थस्नाने तु स्नानवस्त्रं न शोधयेत्
वापीकूपगृहादौ तु स्नानादूर्ध्वं नयेद्बुधः १९
शिलादार्वादिके वापि जले वापि स्थलेपि वा
संशोध्य पीडयेद्वस्त्रं पितृ-णां तृप्तये द्विजाः 1.13.२०
जाबालकोक्तमंत्रेण भस्मना च त्रिपुंड्रकम्
अन्यथा चेज्जले पात इतस्तन्नरकमृच्छति २१
आपोहिष्ठेति शिरसि प्रोक्षयेत्पापशांतये
यस्येति मंत्रं पादे तु संधिप्रोक्षणमुच्यते २२
पादे मूर्ध्नि हृदि चैव मूर्ध्नि हृत्पाद एव च
हृत्पादमूर्ध्नि संप्रोक्ष्य मंत्रस्नानं विदुर्बुधाः २३
ईषत्स्पर्शे च दौः स्वास्थ्ये राजराष्ट्रभयेऽपि च
अत्यागतिकाले च मंत्रस्नानं समाचरेत् २४
प्रातः सूर्यानुवाकेन सायमग्न्यनुवाकतः
अपः पीत्वा तथामध्ये पुनः प्रोक्षणमाचरेत् २५
गायत्र! या जपमंत्रांते त्रिरूर्ध्वं प्राग्विनिक्षिपेत्

मंत्रेण सह चैकं वै मध्येऽर्घ्यं तु रवेर्द्विजा २६
अथ जाते च सायाह्ने भुवि पश्चिमदिण्मुखः
उद्धृत्य दद्यात्प्रातस्तु मध्याह्नेंगुलिभिस्तथा २७
अंगुलीनां च रंध्रेण लंबं पश्येद्दिवाकरम्
आत्मप्रदक्षिणं कृत्वा शुद्धाचमनमाचरेत् २८
सायं मुहूर्तादर्वाक्तु कृता संध्या वृथा भवेत्
अकालात्काल इत्युक्तो दिनेऽतीते यथाक्रमम् २९
दिवाऽतीते च गायत्रीं शतं नित्ये क्रमाज्जपेत्
आदर्शाहात्पराऽतीते गायत्रीं लक्षमभ्यसेत् 1.13.३०
मासातीते तु नित्ये हि पुनश्चोपनयं चरेत्
ईशो गौरीगुहो विष्णुर्ब्रह्मा चेंद्र श्च वै यमः ३१
एवं रूपांश्च वै देवांस्तर्पयेदर्थसिद्धये
ब्रह्मार्पणं ततः कृत्वा शुद्धाचमनमाचरेत् ३२
तीर्थदक्षिणतः शस्ते मठे मंत्रालये बुधः
तत्र देवालये वापि गृहे वा नियतस्थले ३३
सर्वान्देवान्नमस्कृत्य स्थिरबुद्धिः स्थिरासनः
प्रणवं पूर्वमभ्यस्य गायत्रीमभ्यसेत्ततः ३४
जीवब्रह्मैक्यविषयं बुद्ध्वा प्रणवमभ्यसेत्
त्रैलोक्यसृष्टिकर्त्तारं स्थितिकर्तारमच्युतम् ३५
संहर्तारं तथा रुद्रं स्वप्रकाशमुपास्महे
ज्ञानकर्मेद्रि याणां च मनोवृत्तीर्धियस्तथा ३६
भोगमोक्षप्रदे धर्मे ज्ञाने च प्रेरयेत्सदा
इत्थमर्थं धियाध्यायन्ब्रह्मप्राप्नोति निश्चयः ३७
केवलं वा जपेन्नित्यं ब्राह्मण्यस्य च पूर्तये
सहस्रमभ्यसेन्नित्यं प्रातर्ब्राह्मणपुंगवः ३८
अन्येषां च यथा शक्तिमध्याह्ने च शतं जपेत्
सायं द्विदशकं ज्ञेयं शिखाष्टकसमन्वितम् ३९
मूलाधारं समारभ्य द्वादशांतस्थितांस्तथा

विद्येशब्रह्मविष्ण्वीशजीवात्मपरमेश्वरान् 1.13.४०

ब्रह्मबुद्ध्या तदैक्यं च सोहं भावनया जपेत्

तानेव ब्रह्मरंध्रादौ कायाद्बाह्ये च भावयेत् ४१

महत्तत्त्वं समारभ्य शरीरं तु सहस्रकम्

एकैकस्माज्जपादेकमतिक्रम्य शनैः शनैः ४२

परस्मिन्योजयेज्जीवं जपतत्त्वमुदाहृतम्

शतद्विदशकं देहं शिखाष्टकसमन्वितम् ४३

मंत्राणां जप एवं हि जपमादिक्रमाद्विदुः

सहस्रं ब्राह्मदं विद्याच्छतमैंद्र प्रदं विदुः ४४

इतरत्त्वात्मरक्षार्थं ब्रह्मयोनिषु जायते

दिवाकरमुपस्थाय नित्यमित्थं समाचरेत् ४५

लक्षद्वादशयुक्तस्तु पूर्णब्राह्मण ईरितः

गायत्र! या लक्षहीनं तु वेदकार्येन योजयेत् ४६

आसप्ततेस्तु नियमं पश्चात्प्रव्राजनं चरेत्

प्रातर्द्वादशसाहस्रं प्रव्राजीप्रणवं जपेत् ४७

दिने दिने त्वतिक्रांते नित्यमेवं क्रमाज्जपेत्

मासादौ क्रमशोऽतीते सार्धलक्षजपेन हि ४८

अत ऊर्ध्वमतिक्रांते पुनः प्रैषं समाचरेत्

एवं कृत्वा दोषशांतिरन्यथा रौरवं व्रजेत् ४९

धर्मार्थयोस्ततो यत्नं कुर्यात्कामी न चेतरः

ब्राह्मणो मुक्तिकामः स्याद्ब्रह्मज्ञानं सदाभ्यसेत् 1.13.५०

धर्मादर्थोऽर्थतो भोगो भोगाद्वैराग्यसंभवः

धर्मार्जितार्थभोगेन वैराग्यमुपजायते ५१

विपरीतार्थभोगेन राग एव प्रजायते

धर्मश्च द्विविधः प्रोक्तो द्र व्यदेहद्वयेन च ५२

द्र व्यमिज्यादिरूपं स्यात्तीर्थस्नानादि दैहिकम्

धनेन धनमाप्नोति तपसा दिव्यरूपताम् ५३

निष्कामः शुद्धिमाप्नोति शुद्ध्या ज्ञानं न संशयः

कृतादौ हि तपःश्लोघ्यं द्र व्यधर्मः कलौ युगे ५४
कृतेध्यानाज्ज्ञानसिद्धिस्त्रेतायां तपसा तथा
द्वापरे यजनाज्ज्ञानं प्रतिमापूजया कलौ ५५
यादृशं पुण्यं पापं वा तादृशं फलमेव हि
द्र व्यदेहांगभेदेन न्यूनवृद्धिक्षयादिकम् ५६
अधर्मो हिंसिकारूपो धर्मस्तु सुखरूपकः
अधर्माद्दुःखमाप्नोति धर्माद्वै सुखमेधते ५७
विद्यादुर्वृत्तितो दुःखं सुखं विद्यात्सुवृत्तितः
धर्मार्जनमतः कुर्याद्भोगमोक्षप्रसिद्धये ५८
सकुटुंबस्य विप्रस्य चतुर्जनयुतस्य च
शतवर्षस्य वृत्तिं तु दद्यात्तद्ब्रह्मलोकदम् ५९
चांद्रा यणसहस्रं तु ब्रह्मलोकप्रदं विदुः
सहस्रस्य कुटुंबस्य प्रतिष्ठां क्षत्रियश्चरेत् 1.13.६०
इंद्र लोकप्रदं विद्यादयुतं ब्रह्मलोकदम्
यां देवतां पुरस्कृत्य दानमाचरते नरः ६१
तत्तल्लोकमवाप्नोति इति वेदविदो विदुः
अर्थहीनः सदा कुर्यात्तपसा मार्जनं तथा ६२
तीर्थाच्च तपसा प्राप्यं सुखमक्षय्यमश्नुते
अर्थार्जनमथो वक्ष्ये न्यायतः सुसमाहितः ६३
कृतात्प्रतिग्रहाच्चैव याजनाच्च विशुद्धितः
अदैन्यादनतिक्लेशाद्ब्राह्मणो धनमर्जयेत् ६४
क्षत्रियो बाहुवीर्येण कृषिगोरक्षणाद्विशः
न्यायार्जितस्य वित्तस्य दानात्सिद्धिं समश्नुते ६५
ज्ञानसिद्ध्या मोक्षसिद्धिः सर्वेषां गुर्वनुग्रहात्
मोक्षात्स्वरूपसिद्धिः स्यात्परानन्दं समश्नुते ६६
सत्संगात्सर्वमेतद्वै नराणां जायते द्विजाः
धनधान्यादिकं सर्वं देयं वै गृहमेधिना ६७
यद्यत्काले वस्तुजातं फलं वा धान्यमेव च

तत्तत्सर्वं ब्राह्मणेभ्यो देयं वै हितमिच्छता ६८
जलं चैव सदा देयमन्नं क्षुद्व्याधिशांतये
क्षेत्रं धान्यं तथाऽऽमान्नमन्नमेवं चतुर्विधम् ६९
यावत्कालं यदन्नं वै भुक्त्वा श्रवणमेधते
तावत्कृतस्य पुण्यस्य त्वर्धं दातुर्न संशयः 1.13.७०
ग्रहीताहिगृहीतस्य दानाद्वै तपसा तथा
पापसंशोधनं कुर्यादन्यथा रौरवं व्रजेत् ७१
आत्मवित्तं त्रिधा कुर्याद्धर्मवृद्ध्यात्मभोगतः
नित्यं नैमित्तकं काम्यं कर्म कुर्यात्तु धर्मतः ७२
वित्तस्य वर्धनं कुर्याद्वृद्ध्यंशेन हि साधकः
हितेन मितमे ध्येन भोगं भोगांशतश्चरेत् ७३
कृष्यर्जिते दशांशं हि देयं पापस्य शुद्धये
शेषेण कुर्याद्धर्मादि अन्यथा रौरवं व्रजेत् ७४
अथवा पापबुद्धिः स्यात्क्षयं वा सत्यमेष्यति
वृद्धिवाणिज्यके देयष्षडंशो हि विचक्षणैः ७५
शुद्धप्रतिग्रहे देयश्चतुर्थांशो द्विजोत्तमैः
अकस्मादुत्थितेऽर्थे हि देयमर्धं द्विजोत्तमैः ७६
असत्प्रतिग्रहसर्वं दुर्दानं सागरे क्षिपेत्
आहूय दानं कर्तव्यमात्मभोगसमृद्धये ७७
पृष्टं सर्वं सदा देयमात्मशक्त्यनुसारतः ७८ब्
जन्मांतरे ऋणी हि स्याददत्ते पृष्टवस्तुनि ७८
परेषां च तथा दोषं न प्रशंसेद्विचक्षणः
विशेषेण तथा ब्रह्मञ्छ्रुतं दृष्टं च नो वदेत् ७९
न वदेत्सर्वजंतूनां हृदि रोषकरं बुधः
संध्ययोरग्निकार्यं च कुर्यादैश्वर्यसिद्धये 1.13.८०
अशक्तस्त्वेककाले वा सूर्याग्नी च यथाविधि
तंडुलं धान्यमाज्यं वा फलं कंदं हविस्तथा ८१
स्थालीपाकं तथा कुर्याद्यथान्यायं यथाविधि

प्रधानहोममात्रं वा हव्याभावे समाचरेत् ८२
नित्यसंधानमित्युक्तं तमजस्रं विदुर्बुधाः
अथवा जपमात्रं वा सूर्यवंदनमेव च ८३
एवमात्मार्थिनः कुर्युरर्थार्थी च यथाविधि
ब्रह्मयज्ञरता नित्यं देवपूजारतास्तथा ८४
अग्निपूजापरा नित्यं गुरुपूजारतास्तथा
ब्राह्मणानां तृप्तिकराः सर्वे स्वर्गस्य भागिनः ८५
इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां त्रयोदशोऽध्यायः १३

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः १४

https://sa.wikisource.org/s/sqh
< शिवपुराणम् | संहिता १ (विश्वेश्वरसंहिता)

ऋषय ऊचुः

अग्नियज्ञं देवयज्ञं ब्रह्मयज्ञं तथैव च

गुरुपूजां ब्रह्मतृप्तिं क्रमेण ब्रूहि नः प्रभो १

सूत उवाच

अग्नौ जुहोति यद्द्रव्यमग्नियज्ञः स उच्यते

ब्रह्मचर्याश्रमस्थानां समिदाधानमेव हि २

समिदग्नौ व्रताद्यं च विशेषयजनादिकम्

प्रथमाश्रमिणामेवं यावदौपासनं द्विजाः ३

आत्मन्यारोपिताग्नीनां वनिनां यतिनां द्विजाः

हितं च मितमेध्यान्नं स्वकाले भोजनं हुतिः ४

औपासनाग्निसंधानं समारभ्य सुरक्षितम्

कुंडे वाप्यथ भांडे वा तदजस्रं समीरितम् ५

अग्निमात्मन्यरण्यां वा राजदैववशाद्ध्रुवम्

अग्नित्यागभयादुक्तं समारोपितमुच्यते ६

संपत्करी तथा ज्ञेया सायमग्न्याहुतिर्द्विजाः

आयुष्करीति विज्ञेया प्रातः सूर्याहुतिस्तथा ७

अग्नियज्ञो ह्ययं प्रोक्तो दिवा सूर्यनिवेशनात्

इंद्रा दीन्सकलान्देवानुद्दिश्याग्नौ जुहोतियत् ८

देवयज्ञं हि तं विद्यात्स्थालीपाकादिकान्क्रतून्

चौलादिकं तथा ज्ञेयं लौकिकाग्नौ प्रतिष्ठितम् ९

ब्रह्मयज्ञं द्विजः कुर्याद्देवानां तृप्तये सकृत्

ब्रह्मयज्ञ इति प्रोक्तो वेदस्याऽध्ययनं भवेत् 1.14.१०

नित्यानंतरमासोयं ततस्तु न विधीयते

अनग्नौ देवयजनं शृणुत श्रद्धयादरात् ११

आदिसृष्टौ महादेवः सर्वज्ञः करुणाकरः

सर्वलोकोपकारार्थं वारान्कल्पितवान्प्रभुः १२
संसारवैद्यः सर्वज्ञः सर्वभेषजभेषजम्
आदावारोग्यदं वारं स्ववारं कृतवान्प्रभुः १३
संपत्कारं स्वमायाया वरं च कृतवांस्ततः
जनने दुर्गतिक्रांते कुमारस्य ततः परम् १४
आलस्यदुरितक्रांत्यै वारं कल्पितवान्प्रभुः
रक्षकस्य तथा विष्णोर्लोकानां हितकाम्यया १५
पुष्ट्यर्थं चैव रक्षार्थं वारं कल्पितवान्प्रभुः
आयुष्करं ततो वारमायुषां कर्तुरेव हि १६
त्रैलोक्यसृष्टिकर्त्तुर्हि ब्रह्मणः परमेष्ठिनः
जगदायुष्यसिद्ध्यर्थं वारं कल्पितवान्प्रभुः १७
आदौ त्रैलोक्यवृद्ध्यर्थं पुण्यपापे प्रकल्पिते
तयोः कर्त्रोस्ततो वारमिंद्र स्य च यमस्य च १८
भोगप्रदं मृत्युहरं लोकानां च प्रकल्पितम्
आदित्यादीन्स्वस्वरूपान्सुखदुःखस्य सूचकान् १९
वारेशान्कल्पयित्वादौ ज्योतिश्चक्रेप्रतिष्ठितान्
स्वस्ववारे तु तेषां तु पूजा स्वस्वफलप्रदा 1.14.२०
आरोग्यं संपदश्चैव व्याधीनां शांतिरेव च
पुष्टिरायुस्तथा भोगो मृतेर्हानिर्यथाक्रमम् २१
वारक्रमफलं प्राहुर्देवप्रीतिपुरःसरम्
अन्येषामपि देवानां पूजायाः फलदः शिवः २२
देवानां प्रीतये पूजापंचधैव प्रकल्पिता
तत्तन्मंत्रजपो होमो दानं चैव तपस्तथा २३
स्थंडिले प्रतिमायां च ह्यग्नौ ब्राह्मणविग्रहे
समाराधनमित्येवं षोडशैरुपचारकैः २४
उत्तरोत्तरवैशिष्ट्यात्पूर्वाभावे तथोत्तरम्
नेत्रयोः शिरसो रोगे तथा कुष्ठस्य शांतये २५
आदित्यं पूजयित्वा तु ब्राह्मणान्भोजयेत्ततः

दिनं मासं तथा वर्षं वर्षत्रयमथवापि वा २६
प्रारब्धं प्रबलं चेत्स्यान्नश्येद्रो गजरादिकम्
जपाद्यमिष्टदेवस्य वारादीनां फलं विदुः २७
पापशांतिर्विशेषेण ह्यादिवारे निवेदयेत्
आदित्यस्यैव देवानां ब्राह्मणानां विशिष्टदम् २८
सोमवारे च लक्ष्म्यादीन्संपदर्थं यजेद्बुधः
आज्यान्नेन तथा विप्रान्सपत्नीकांश्च भोजयेत् २९
काल्यादीन्भौम वारे तु यजेद्रो गप्रशांतये
माषमुद्गाढकान्नेन ब्रह्मणांश्चैव भोजयेत् 1.14.३०
सौम्यवारे तथा विष्णुं दध्यन्नेन यजेद्बुधः
पुत्रमित्रकलत्रादिपुष्टिर्भवति सर्वदा ३१
आयुष्कामो गुरोर्वारे देवानां पुष्टिसिद्धये
उपवीतेन वस्त्रेण क्षीराज्येन यजेद्बुधः ३२
भोगार्थं भृगवारे तु यजेद्देवान्समाहितः
षड्रसोपेतमन्नं च दद्याद्ब्राह्मणतृप्तये ३३
स्त्रीणां च तृप्तये तद्वद्देयं वस्त्रादिकं शुभम्
अपमृत्युहरे मंदे रुद्रा द्री श्वं! यजेद्बुधः ३४
तिलहोमेन दानेन तिलान्नेन च भोजयेत्
इत्थं यजेच्च विबुधानारोग्यादिफलं लभेत् ३५
देवानां नित्ययजने विशेषयजनेपि च
स्नाने दाने जपे होमे ब्राह्मणानां च तर्पणे ३६
तिथिनक्षत्रयोगे च तत्तद्देवप्रपूजने
आदिवारादिवारेषु सर्वज्ञो जगदीश्वरः ३७
तत्तद्रू पेण सर्वेषामारोग्यादिफलप्रदः
देशकालानुसारेण तथा पात्रानुसारतः ३८
द्र व्यश्रद्धानुसारेण तथा लोकानुसारतः ३९ब्
तारतम्यक्रमाद्देवस्त्वारोग्यादीन्प्रयच्छति ३९
शुभादावशुभांते च जन्मर्क्षेषु गृहे गृही

आरोग्यादिसमृद्ध्यर्थमादित्यादीन्ग्रहान्यजेत् 1.14.४०
तस्माद्वै देवयजनं सर्वाभीष्टफलप्रदम्
समंत्रकं ब्राह्मणानामन्येषां चैव तांत्रिकम् ४१
यथाशक्त्यानुरूपेण कर्तव्यं सर्वदा नरैः
सप्तस्वपि च वारेषु नरैः शुभफलेप्सुभिः ४२
दरिद्र स्तपसा देवान्यजेदाढ्यो धनेन हि
पुनश्चैवंविधं धर्मं कुरुते श्रद्धया सह ४३
पुनश्च भोगान्विविधान्भुक्त्वा भूमौ प्रजायते
छायां जलाशयं ब्रह्मप्रतिष्ठां धर्मसंचयम् ४४
सर्वं च वित्तवान्कुर्यात्सदा भोगप्रसिद्धये
कालाच्च पुण्यपाकेन ज्ञानसिद्धिः प्रजायते ४५
य इमं शृणुतेऽध्यायं पठते वा नरो द्विजाः
श्रवणस्योपकर्ता च देवयज्ञफलं लभेत् ४६
इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां चतुर्दशोऽध्यायः १४

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः १५

https://sa.wikisource.org/s/sqi

< शिवपुराणम् | संहिता १ (विश्वेश्वरसंहिता)

ऋषय ऊचुः

देशादीन्क्रमशो ब्रूहि सूत सर्वार्थवित्तम्

सूत उवाच

शुद्धं गृहं समफलं देवयज्ञादिकर्मसु १

ततो दशगुणं गोष्ठं जलतीरं ततो दश

ततो दशगुणं बिल्वतुलस्यश्वत्थमूलकम् २

ततो देवालयं विद्यात्तीर्थतीरं ततो दश

ततो दशगुणं नद्यास्तीर्थनद्यास्ततो दश ३

सप्तगंगानदीतीरं तस्या दशगुणं भवेत्

गंगा गोदावरी चैव कावेरी ताम्रपर्णिका ४

सिंधुश्च सरयू रेवा सप्तगंगाः प्रकीर्तिताः

ततोऽब्धितीरं दश च पर्वताग्रे ततो दश ५

सर्वस्मादधिकं ज्ञेयं यत्र वा रोचते मनः

कृते पूर्णफलं ज्ञेयं यज्ञदानादिकं तथा ६

त्रेतायुगे त्रिपादं च द्वापरेऽर्धं सदा स्मृतम्

कलौ पादं तु विज्ञेयं तत्पादोनं ततोर्द्धके ७

शुद्धात्मनः शुद्धदिनं पुण्यं समफलं विदुः

तस्माद्दशगुणं ज्ञेयं रविसंक्रमणे बुधाः ८

विषुवे तद्दशगुणमयने तद्दश स्मृतम्

तद्दश मृगसंक्रांतौ तच्चंद्र ग्रहणे दश ९

ततश्च सूर्यग्रहणे पूर्णकालोत्तमे विदुः

जगद्रूपस्य सूर्यस्य विषयोगाच्च रोगदम् 1.15.१०

अतस्तद्विषशांत्यर्थं स्नानदानजपांश्चरेत्

विषशांत्यर्थकालत्वात्स कालः पुण्यदः स्मृतः ११

जन्मर्क्षे च व्रतांते च सूर्यरागोपमं विदुः

महतां संगकालश्च कोट्यर्कग्रहणं विदुः १२
तपोनिष्ठा ज्ञाननिष्ठा योगिनो यतयस्तथा
पूजायाः पात्रमेते हि पापसंक्षयकारणम् १३
चतुर्विंशतिलक्षं वा गायत्र्या जपसंयुतः
ब्राह्मणस्तु भवेत्पात्रं संपूर्णफलभोगदम् १४
पतनात्त्रायत इति पात्रं शास्त्रे प्रयुज्यते
दातुश्च पातकात्त्राणात्पात्रमित्यभिधीयते १५
गायकं त्रायते पाताद्गायत्रीत्युच्यते हि सा
यथाऽर्थहिनो लोकेऽस्मिन्परस्यार्थं न यच्छति १६
अर्थवानिह यो लोके परस्यार्थं प्रयच्छति
स्वयं शुद्धो हि पूतात्मा नरान्संत्रातुमर्हति १७
गायत्रीजपशुद्धो हि शुद्धब्राह्मण उच्यते
तस्माद्दाने जपे होमे पूजायां सर्वकर्मणि १८
दानं कर्तुं तथा त्रातुं पात्रं तु ब्राह्मणोर्हति
अन्नस्य क्षुधितं पात्रं नारीनरमयात्मकम् १९
ब्राह्मणं श्रेष्ठमाहूय यत्काले सुसमाहितम्
तदर्थं शब्दमर्थं वा सद्बोधकमभीष्टदम् 1.15.२०
इच्छावतः प्रदानं च संपूर्णफलदं विदुः
यत्प्रश्नानंतरं दत्तं तदर्धं फलदं विदुः २१
यत्सेवकाय दत्तं स्यात्तत्पादफलदं विदुः
जातिमात्रस्य विप्रस्य दीनवृत्तेर्द्विजर्षभाः २२
दत्तमर्थं हि भोगाय भूर्लोकेदशवार्षिकम्
वेदयुक्तस्य विप्रस्य स्वर्गे हि दशवार्षिकम् २३
गायत्रीजपयुक्तस्य सत्ये हि दशवार्षिकम्
विष्णुभक्तस्य विप्रस्य दत्तं वैकुंठदं विदुः २४
शिवभक्तस्य विप्रस्य दत्तं कैलासदं विदुः
तत्तल्लोकोपभोगार्थं सर्वेषां दानमिष्यते २५
दशांगमन्नं विप्रस्य भानुवारे ददन्नरः

परजन्मनि चारोग्यं दशवर्षं समश्नुते २६
बहुमानमथाह्वानमभ्यंगं पादसेवनम्
वासो गंधाद्यर्चनं च घृतापूपरसोत्तरम् २७
षड्रसं व्यंजनं चैव तांबूलं दक्षिणोत्तरम्
नमश्चानुगमश्चैव स्वन्नदानं दशांगकम् २८
दशांगमन्नं विप्रेभ्यो दशभ्यो वै ददन्नरः
अर्कवारे तथाऽऽरोग्यं शतवर्षं समश्नुते २९
सोमवारादिवारेषु तत्तद्वारगुणं फलम्
अन्नदानस्य विज्ञेयं भूर्लोके परजन्मनि 1.15.३०
सप्तस्वपि च वारेषु दशभ्यश्च दशांगकम्
अन्नं दत्त्वा शतं वर्षमारोग्यादिकमश्नुते ३१
एवं शतेभ्यो विप्रेभ्यो भानुवारे ददन्नरः
सहस्रवर्षमारोग्यं शर्वलोके समश्नुते ३२
सहस्रेभ्यस्तथा दत्त्वाऽयुतवर्षं समश्नुते
एवं सोमादिवारेषु विज्ञेयं हि विपश्चिता ३३
भानुवारे सहस्राणां गायत्रीपूतचेतसाम्
अन्नं दत्त्वा सत्यलोके ह्यारोग्यादि समश्नुते ३४
अयुतानां तथा दत्त्वा विष्णुलोके समश्नुते
अन्नं दत्त्वा तु लक्षाणां रुद्र लोके समश्नुते ३५
बालानां ब्रह्मबुद्ध्या हि देयं विद्यार्थिभिर्नरैः
यूनां च विष्णुबुद्ध्या हि पुत्रकामार्थिभिर्नरैः ३६
वृद्धानां रुद्र बुद्ध्या हि देयं ज्ञानार्थिभिर्नरैः
बालस्त्रीभारतीबुद्ध्या बुद्धिकामैर्नरोत्तमैः ३७
लक्ष्मीबुद्ध्या युवस्त्रीषु भोगकामैर्नरोत्तमैः
वृद्धासु पार्वतीबुद्ध्या देयमात्मार्थिभिर्जनैः ३८
शिलवृत्त्योञ्छवृत्त्या च गुरुदक्षिणयार्जितम्
शुद्धद्रव्यमिति प्राहुस्तत्पूर्णफलदं विदुः ३९
शुक्लप्रतिग्रहाद्दत्तं मध्यमं द्रव्यमुच्यते

कृषिवाणिज्यकोपेतमधमं द्रव्यमुच्यते 1.15.४०
क्षत्रियाणां विशां चैव शौर्यवाणिज्यकार्जितम्
उत्तमं द्रव्यमित्याहुः शूद्राणां भृतकार्जितम् ४१
स्त्रीणां धर्मार्थिनां द्रव्यं पैतृकं भर्तृकं तथा
गवादीनां द्वादशीनां चैत्रादिषु यथाक्रमम् ४२
संभूय वा पुण्यकाले दद्यादिष्टसमृद्धये
गोभूतिलहिरण्याज्यवासोधान्यगुडानि च ४३
रौप्यं लवणकूष्मांडे कन्याद्वादशकं तथा
गोदानाद्दत्तगव्येन गोमयेनोपकारिणा ४४
धनधान्याद्याश्रितानां दुरितानां निवारणम्
जलस्नेहाद्याश्रितानां दुरितानां तु गोजलैः ४५
कायिकादित्राणां तु क्षीरदध्याज्यकैस्तथा
तथा तेषां च पुष्टिश्च विज्ञेया हि विपश्चिता ४६
भूदानं तु प्रतिष्ठार्थमिह चाऽमुत्र च द्विजाः
तिलदानं बलार्थं हि सदा मृत्युजयं विदुः ४७
हिरण्यं जाठराग्नेस्तु वृद्धिदं वीर्यदं तथा
आज्यं पुष्टिकरं विद्याद्वस्त्रमायुष्करं विदुः ४८
धान्यमन्नं समृद्ध्यर्थं मधुराहारदं गुडम्
रौप्यं रेतोभिवृद्ध्यर्थं षड्रसार्थं तु लावणम् ४९
सर्वं सर्वसमृद्ध्यर्थं कूष्मांडं पुष्टिदं विदुः
प्राप्तिदं सर्वभोगानामिह चाऽमुत्र च द्विजाः 1.15.५०
यावज्जीवनमुक्तं हि कन्यादानं तु भोगदम्
पनसाम्रकपित्थानां वृक्षाणां फलमेव च ५१
कदल्याद्यौषधीनां च फलं गुल्मोद्भवं तथा
माषादीनां च मुद्गानां फलं शाकादिकं तथा ५२
मरीचिसर्षपाद्यानां शाकोपकरणं तथा
यदृतौ यत्फलं सिद्धं तद्देयं हि विपश्चिता ५३
श्रोत्रादींद्रियतृप्तिश्च सदा देया विपश्चिता

शब्दादिदशभोगार्थं दिगादीनां च तुष्टिदा ५४
वेदशास्त्रं समादाय बुद्ध्वा गुरुमुखात्स्वयम्
कर्मणां फलमस्तीति बुद्धिरास्तिक्यमुच्यते ५५
बंधुराजभयाद्बुद्धिश्रद्धा सा च कनीयसी
सर्वाभावे दरिद्र स्तु वाचा वा कर्मणा यजेत् ५६
वाचिकं यजनं विद्यान्मंत्रस्तोत्रजपादिकम्
तीर्थयात्राव्रताद्यं हि कायिकं यजनं विदुः ५७
येन केनाप्युपायेन ह्यल्पं वा यदि वा बहु
देवतार्पणबुद्ध्या च कृतं भोगाय कल्पते ५८
तपश्चर्या च दानं च कर्तव्यमुभयं सदा
प्रतिश्रयं प्रदातव्यं स्ववर्णगुणशोभितम् ५९
देवानां तृप्तयेऽत्यर्थं सर्वभोगप्रदं बुधैः
इहाऽमुत्रोत्तमं जन्मसदाभोगं लभेद्बुधः
ईश्वरार्पणबुद्ध्या हि कृत्वा मोक्षफलं लभेत् 1.15.६०
य इमं पठतेऽध्यायं यः शृणोति सदा नरः
तस्य वैधर्मबुद्धिश्च ज्ञानसिद्धिः प्रजायते ६१
इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां पंचदशोध्यायः १५

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः १६

https://sa.wikisource.org/s/sqj

< शिवपुराणम् | संहिता १ (विश्वेश्वरसंहिता)

ऋषय ऊचुः

पार्थिवप्रतिमापूजाविधानं ब्रूहि सत्तम

येन पूजाविधानेन सर्वाभिष्टमवाप्यते १

सूत उवाच

सुसाधुपृष्टं युष्माभिः सदा सर्वार्थदायकम्

सद्यो दुःखस्य शमनं शृणुत प्रब्रवीमि वः २

अपमृत्युहरं कालमृत्योश्चापि विनाशनम्

सद्यः कलत्रपुत्रादिधनधान्यप्रदं द्विजाः ३

अन्नादिभोज्यं वस्त्रादिसर्वमुत्पद्यते यतः

ततो मृदादिप्रतिमापूजाभीष्टप्रदा भुवि ४

पुरुषाणां च नारीणामधिकारोत्र निश्चितम्

नद्यां तडागे कूपे वा जलांतर्मृदमाहरेत् ५

संशोध्य गंधचूर्णेन पेषयित्वा सुमंडपे

हस्तेन प्रतिमां कुर्यात्क्षीरेण च सुसंस्कृताम् ६

अंगप्रत्यंगकोपेतामायुधैश्च समन्विताम्

पद्मासनस्थितां कृत्वा पूजयेदादरेण हि ७

विघ्नेशादित्यविष्णूनामंबायाश्च शिवस्य च

शिवस्यशिवलिंगं च सर्वदा पूजयेद्द्विज ८

षोडशैरुपचारैश्च कुर्यात्तत्फलसिद्धये

पुष्पेण प्रोक्षणं कुर्यादभिषेकं समंत्रकम् ९

शाल्यन्नेनैव नैवेद्यं सर्वं कुडवमानतः

गृहे तु कुडवं ज्ञेयं मानुषे प्रस्थमिष्यते 1.16.१०

दैवे प्रस्थत्रयं योग्यं स्वयंभोः प्रस्थपंचकम्

एवं पूर्णफलं विद्यादधिकं वै द्वयं त्रयम् ११

सहस्रपूजया सत्यं सत्यलोकं लभेद्द्विजः

द्वादशांगुलमायामं द्विगुणं च ततोऽधिकम् १२
प्रमाणमंगुलस्यैकं तदूर्ध्वं पंचकत्रयम्
अयोदारुकृतं पात्रं शिवमित्युच्यते बुधैः १३
तदष्टभागः प्रस्थः स्यात्तच्चतुःकुडवं मतम्
दशप्रस्थं शतप्रस्थं सहस्रप्रस्थमेव च १४
जलतैलादिगंधानां यथायोग्यं च मानतः
मानुषार्षस्वयंभूनां महापूजेति कथ्यते १५
अभिषेकादात्मशुद्धिर्गंधात्पुण्यमवाप्यते
आयुस्तृप्तिश्च नैवेद्याद्धूपादर्थमवाप्यते १६* तु. मण्डलब्राह्मणोपनिषत् २.२.५
दीपाज्ज्ञानमवाप्नोति तांबूलाद्भोगमाप्नुयात्
तस्मात्स्नानादिकं षट्कं प्रयत्नेन प्रसाधयेत् १७
नमस्कारो जपश्चैव सर्वाभीष्टप्रदावुभौ
पूजान्ते च सदाकार्यौ भोगमोक्षार्थिभिर्नरैः १८
संपूज्य मनसा पूर्वं कुर्यात्तत्तत्सदा नरः
देवानां पूजया चैव तत्तल्लोकमवाप्नुयात् १९
तदवांतरलोके च यथेष्टं भोग्यमाप्यते
तद्विशेषान्प्रवक्ष्यामि शृणुत श्रद्धया द्विजाः 1.16.२०
विघ्नेशपूजया सम्यग्भूर्लोकेऽभीष्टमाप्नुयात्
शुक्रवारे चतुर्थ्यां च सिते श्रावणभाद्र के २१
भिषगृक्षे धनुर्मासे विघ्नेशं विधिवद्यजेत्
शतं पूजासहस्रं वा तत्संख्याकदिनैर्व्रजेत् २२
देवाग्निश्रद्धया नित्यं पुत्रदं चेष्टदं नृणाम्
सर्वपापप्रशमनं तत्तद्दुरितनाशनम् २३
वारपूजांशिवादीनामात्मशुद्धिप्रदां विदुः
तिथिनक्षत्रयोगानामाधारं सार्वकामिकम् २४
तथा बृद्धिक्षयाभावात्पूर्णब्रह्मात्मकं विदुः
उदयादुदयं वारो ब्रह्मप्रभृति कर्मणाम् २५
तिथ्यादौ देवपूजा हि पूर्णभोगप्रदा नृणाम्

पूर्वभागः पितृ-णां तु निशि युक्तः प्रशस्यते २६
परभागस्तु देवानां दिवा युक्तः प्रशस्यते
उदयव्यापिनी ग्राह्या मध्याह्ने यदि सा तिथिः २७
देवकार्ये तथा ग्राह्यास्थिति ऋक्षादिकाः शुभाः
सम्यग्विचार्य वारादीन्कुर्यात्पूजाजपादिकम् २८
पूजार्यते ह्यनेनेति वेदेष्वर्थस्य योजना
पूर्णभोगफलसिद्धिश्च जायते तेन कर्मणा २९
मनोभावांस्तथा ज्ञानमिष्टभोगार्थयोजनात्
पूजाशब्दर्थ एवं हि विश्रुतो लोकवेदयोः 1.16.३०
नित्यनैमित्तिकं कालात्सद्यः काम्ये स्वनुष्ठिते
नित्यं मासं च पक्षं च वर्षं चैव यथाक्रमम् ३१
तत्तत्कर्मफलप्राप्तिस्तादृक्पापक्षयः क्रमात्
महागणपतेः पूजा चतुर्थ्यां कृष्णपक्षके ३२
पक्षपापक्षयकरी पक्षभोगफलप्रदा
चैत्रे चतुर्थ्यां पूजा च कृता मासफलप्रदा ३३
वर्षभोगप्रदा ज्ञेया कृता वै सिंहभाद्र के
श्रवण्यादित्यवारे च सप्तम्यां हस्तभे दिने ३४
माघशुक्ले च सप्तम्यामादित्ययजनं चरेत्
ज्येष्ठभाद्र कसौम्ये च द्वादश्यां श्रवर्णक्षके ३५
द्वादश्यां विष्णुयजनमिष्टंसंपत्करं विदुः
श्रावणे विष्णुयजनमिष्टारोग्यप्रदं भवेत् ३६
गवादीन्द्वादशानर्थान्सांगान्दत्वा तु यत्फलम्
तत्फलं समवाप्नोति द्वादश्यां विष्णुतर्पणात् ३७
द्वादश्यां द्वादशान्विप्रान्विष्णोर्द्वादशनामतः
षोडशैरुपचारैश्च यजेत्तत्प्रीतिमाप्नुयात् ३८
एवं च सर्वदेवानां तत्तद्द्वादशनामकैः
द्वादशब्रह्मयजनं तत्तत्प्रीतिकरं भवेत् ३९
कर्कटे सोमवारे च नवम्यां मृगशीर्षके

अंबां यजेद्भूतिकामः सर्वभोगफलप्रदाम् 1.16.४०
आश्वयुक्छुक्लनवमी सर्वाभीष्टफलप्रदा
आदिवारे चतुर्दश्यां कृष्णपक्षे विशेषतः ४१
आर्द्रायां च महार्द्रायां शिवपूजा विशिष्यते
माघकृष्णचतुर्दश्यां सर्वाभीष्टफलप्रदा ४२
आयुष्करी मृत्युहरा सर्वसिद्धिकरी नृणाम्
ज्येष्ठमासे महार्द्रायां चतुर्दशीदिनेपि च ४३
मार्गशीर्षार्द्रकायां वा षोडशैरुपचारकैः
तत्तन्मूर्तिशिवं पूज्य तस्य वै पाददर्शनम् ४४
शिवस्य यजनं ज्ञेयं भोगमोक्षप्रदं नृणाम्
वारादिदेवयजनं कार्तिके हि विशिष्यते ४५
कार्तिके मासि संप्राप्ते सर्वान्देवान्यजेद्बुधः
दानेन तपसा होमैर्जपेन नियमेन च ४६
षोडशैरुपचारैश्च प्रतिमा विप्रमंत्रकैः
ब्राह्मणानां भोजनेन निष्कामार्तिकरो भवेत् ४७
कार्तिके देवयजनं सर्वभोगप्रदं भवेत्
व्याधीनां हरणं चैव भवेद्भूतग्रहक्षयः ४८
कार्तिकादित्यवारेषु नृणामादित्यपूजनात्
तैलकार्पासदानात्तु भवेत्कुष्ठादिसंक्षयः ४९
हरीतकीमरीचीनां वस्त्रक्षीरादिदानतः
ब्रह्मप्रतिष्ठया चैव क्षयरोगक्षयो भवेत् 1.16.५०
दीपसर्षपदानाच्च अपस्मारक्षयो भवेत्
कृत्तिकासोमवारेषु शिवस्य यजनं नृणाम् ५१
महादारिद्र्य शमनं सर्वसंपत्करं भवेत्
गृहक्षेत्रादिदानाच्च गृहोपकरणादिना ५२
कृत्तिकाभौमवारेषु स्कंदस्य यजनान्नृणाम्
दीपघंटादिदानाद्वै वाक्सिद्धिरचिराद्भवेत् ५३
कृत्तिकासौम्यवारेषु विष्णोर्वै यजनं नृणाम्

दध्योदनस्य दानं च सत्संतानकरं भवेत् ५४
कृतिकागुरुवारेषु ब्रह्मणो यजनाद्धनैः
मधुस्वर्णाज्यदानेन भोगवृद्धिर्भवेन्नृणाम् ५५
कृत्तिकाशुक्रवारेषु गजकोमेडयाजनात् १
गंधपुष्पान्नदानेन भोग्यवृद्धिर्भवेन्नृणाम् ५६
वंध्या सुपुत्रं लभते स्वर्णरौप्यादिदानतः
कृत्तिकाशनिवारेषु दिक्पालानां च वंदनम् ५७
दिग्गजानां च नागानां सेतुपानां च पूजनम्
त्र्यंबकस्य च रुद्रस्य विष्णोः पापहरस्य च ५८
ज्ञानदं ब्रह्मणश्चैव धन्वंतर्यश्विनोस्तथा
रोगापमृत्युहरणं तत्कालव्याधिशांतिदम् ५९
लवणायसतैलानां माषादीनां च दानतः
त्रिकटुफलगंधानां जलादीनां च दानतः 1.16.६०
द्रवाणां कठिनानां च प्रस्थेन पलमानतः
स्वर्गप्राप्तिर्धनुर्मासे ह्युषःकाले च पूजनम् ६१
शिवादीनां च सर्वेषां क्रमाद्वै सर्वसिद्धये
शाल्यन्नस्य हविष्यस्य नैवेद्यं शस्तमुच्यते* ६२
विविधान्नस्य नैवेद्यं धनुर्मासे विशिष्यते
मार्गशीर्षेऽन्नदस्यैव सर्वमिष्टफलं भवेत् ६३
पापक्षयं चेष्टसिद्धिं चारोग्यं धर्ममेव च
सम्यग्वेदपरिज्ञानं सदनुष्ठानमेव च ६४
इहामुत्र महाभोगानंते योगं च शाश्वतम्
वेदांतज्ञानसिद्धिं च मार्गशीर्षान्नदो लभेत् ६५
मार्गशीर्षे ह्युषःकाले दिनत्रयमथापि वा
यजेद्देवान्भोगकामो नाधनुर्मासिको भवेत् ६६
यावत्संगवकालं तु धनुर्मासो विधीयते
धनुर्मासे निराहारो मासमात्रं जितेंद्रियः ६७
आमध्याह्नजपेद्विप्रो गायत्रीं वेदमातरम्

पंचाक्षरादिकान्मंत्रान्पश्चादासप्तिकं जपेत् ६८
ज्ञानं लब्ध्वा च देहांते विप्रो मुक्तिमवाप्नुयात्
अन्येषां नरनारीणां त्रिःस्नानेन जपेन च ६९
सदा पंचाक्षरस्यैव विशुद्धं ज्ञानमाप्यते
इष्टमन्त्रान्सदा जप्त्वा महापापक्षयं लभेत् 1.16.७०
धनुर्मासे विशेषेण महानैवेद्यमाचरेत्
शालितंडुलभारेण मरीचप्रस्थकेन च ७१
गणनाद्द्वादशं सर्वं मध्वाज्यकुडवेन हि
द्रोणयुक्तेन मुद्गेन द्वादशव्यंजनेन च ७२
घृतपक्वैरपूपैश्च मोदकैः शालिकादिभिः
द्वादशैश्च दधिक्षीरैर्द्वादशप्रस्थकेन च ७३
नारिकेलफलादीनां तथा गणनया सह
द्वादशक्रमुकैर्युक्तं षट्त्रिंशत्पत्रकैर्युतम् ७४
कर्पूरखुरचूर्णेन पंचसौगंधिकैर्युतम्
तांबूलयुक्तं तु यदा महानैवेद्यलक्षणम्* ७५
महानैवेद्यमेतद्वै देवतार्पणपूर्वकम्
वर्णानुक्रमपूर्वेण तद्भक्तेभ्यः प्रदापयेत् ७६
एवं चौदननैवेद्याद्भूमौ राष्ट्रपतिर्भवेत्
महानैवेद्यदानेन नरः स्वर्गमवाप्नुयात् ७७
महानैवेद्यदानेन सहस्रेण द्विजर्षभाः
सत्यलोके च तल्लोके पूर्णमायुरवाप्नुयात् ७८
सहस्राणां च त्रिंशत्या महानैवेद्यदानतः
तदूर्ध्वलोकमाप्यैव न पुनर्जन्मभाग्भवेत् ७९
सहस्राणां च षट्त्रिंशज्जन्म नैवेद्यमीरितम्
तावन्नैवेद्यदानं तु महापूर्णं तदुच्यते 1.16.८०
महापूर्णस्य नैवेद्यं जन्मनैवेद्यमिष्यते
जन्मनैवेद्यदानेन पुनर्जन्म न विद्यते ८१
ऊर्जे मासि दिने पुण्ये जन्म नैवेद्यमाचरेत्

संक्रांतिपातजन्मर्क्षपौर्णमास्यादिसंयुते ८२
अब्दजन्मदिने कुर्याज्जन्मनैवेद्यमुत्तमम्
मासांतरेषु जन्मर्क्षपूर्णयोगदिनेपि च ८३
मेलने च शनैर्वापि तावत्साहस्रमाचरेत्
जन्मनैवेद्यदानेन जन्मार्पणफलं लभेत् ८४
जन्मार्पणाच्छिवः प्रीतिः स्वसायुज्यं ददाति हि
इदं तज्जन्मनैवेद्यं शिवस्यैव प्रदापयेत् ८५
योनिलिंगस्वरूपेण शिवो जन्मनिरूपकः
तस्माज्जन्मनिवृत्त्यर्थं जन्म पूजा शिवस्य हि ८६
बिंदुनादात्मकं सर्वं जगत्स्थावरजंगमम्
बिंदुः शक्तिः शिवो नादः शिवशक्त्यात्मकं जगत् ८७
नादाधारमिदं बिंदुर्बिंद्वाधारमिदं जगत्
जगदाधारभूतौ हि बिंदुनादौ व्यवस्थितौ ८८
बिन्दुनादयुतं सर्वं सकलीकरणं भवेत्
सकलीकरणाज्जन्मजगत्प्राप्नोत्यसंशयः ८९
बिंदुनादात्मकं लिंगं जगत्कारणमुच्यते
बिंदुर्देवीशिवो नादः शिवलिंगं तु कथ्यते 1.16.९०
तस्माज्जन्मनिवृत्त्यर्थं शिवलिंगं प्रपूजयेत्
माता देवी बिंदुरूपा नादरूपः शिवः पिता ९१
पूजिताभ्यां पितृभ्यां तु परमानंद एव हि
परमानंदलाभार्थं शिवलिंगं प्रपूजयेत् ९२
सा देवी जगतां माता स शिवो जगतः पिता
पित्रोः शुश्रूषके नित्यं कृपाधिक्यं हि वर्धते ९३
कृपयांतर्गतैश्वर्यं पूजकस्य ददाति हि
तस्मादंतर्गतानंदलाभार्थं मुनिपुंगवाः ९४
पितृमातृस्वरूपेण शिवलिंगं प्रपूजयेत्
भर्गः पुरुषरूपो हि भर्गा प्रकृतिरुच्यते ९५
अव्यक्तांतरधिष्ठानं गर्भः पुरुष उच्यते

सुव्यक्तांतरधिष्ठानं गर्भः प्रकृतिरुच्यते ९६
पुरुषत्वादिगर्भो हि गर्भवाञ्जनको यतः
पुरुषात्प्रकृतो युक्तं प्रथमं जन्म कथ्यते ९७
प्रकृतेर्व्यक्ततां यातं द्वितीयं जन्म कथ्यते
जन्म जंतुर्मृत्युजन्म पुरुषात्प्रतिपद्यते ९८
अन्यतो भाव्यतेऽवश्यं मायया जन्म कथ्यते
जीर्यते जन्मकालाद्यत्तस्माज्जीव इति स्मृतः ९९
जन्यते तन्यते पाशैर्जीवशब्दार्थ एव हि
जन्मपाशनिवृत्त्यर्थं जन्मलिंगं प्रपूजयेत् 1.16.१००
भं वृद्धिं गच्छतीत्यर्थाद्भगः प्रकृतिरुच्यते
प्राकृतैः शब्दमात्राद्यैः प्राकृतेंद्रियभोजनात् १०१
भगस्येदं भोगमिति शब्दार्थो मुख्यतः श्रुतः
मुख्यो भगस्तु प्रकृतिर्भगवाञ्छिव उच्यते १०२
भगवान्भोगदाता हि नाऽन्यो भोगप्रदायकः
भगस्वामी च भगवान्भर्ग इत्युच्यते बुधैः १०३
भगेन सहितं लिंगं भगंलिंगेन संयुतम्
इहामुत्र च भोगार्थं नित्यभोगार्थमेव च १०४
भगवंतं महादेवं शिवलिंगं प्रपूजयेत्
लोकप्रसविता सूर्यस्तच्चिह्नं प्रसवाद्भवेत् १०५
लिंगेप्रसूतिकर्तारं लिंगिनं पुरुषो यजेत्
लिंगार्थगमकं चिह्नं लिंगमित्यभिधीयते १०६
लिंगमर्थं हि पुरुषं शिवं गमयतीत्यदः
शिवशक्त्योश्च चिह्नस्य मेलनं लिंगमुच्यते १०७
स्वचिह्नपूजनात्प्रीतश्चिह्नकार्यं न वीयते
चिह्नकार्यं तु जन्मादिजन्माद्यं विनिवर्तते १०८
प्राकृतैः पुरुषैश्चापि बाह्याभ्यंतरसंभवैः
षोडशैरुपचारैश्च शिवलिंगं प्रपूजयेत् १०९
एवमादित्यवारे हि पूजा जन्मनिवर्तिका

आदिवारे महालिंगं प्रणवेनैव पूजयेत् 1.16.११०

आदिवारे पंचगव्यैरभिषेको विशिष्यते

गोमयं गोजलं क्षीरं दध्याज्यं पंचगव्यकम् १११

क्षीराद्यं च पृथक्च्चैव मधुना चेक्षुसारकैः

गव्यक्षीरान्ननैवेद्यं प्रणवेनैव कारयेत् ११२

प्रणवं ध्वनिलिंगं तु नादलिंगं स्वयंभुवः

बिंदुलिंगं तु यंत्रं स्यान्मकारं तु प्रतिष्ठितम् ११३

उकारं चरलिंगं स्यादकारं गुरुविग्रहम्

षड्लिंगं पूजया नित्यं जीवन्मुक्तो न संशयः ११४

शिवस्य भक्त्या पूजा हि जन्ममुक्तिकरी नृणाम्

रुद्रा क्षधारणात्पादमर्धं वैभूतिधारणात् ११५

त्रिपादं मंत्रजाप्याच्च पूजया पूर्णभक्तिमान्

शिवलिंगं च भक्तं च पूज्य मोक्षं लभेन्नरः ११६

य इमं पठतेऽध्यायं शृणुयाद्वा समाहितः

तस्यैव शिवभक्तिश्च वर्धते सुदृढा द्विजाः ११७

इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां षोडशोऽध्यायः १६

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः १७

https://sa.wikisource.org/s/sqk

< शिवपुराणम् | संहिता १ (विश्वेश्वरसंहिता)

ऋषय ऊचुः

प्रणवस्य च माहात्म्यं षड्लिंगस्य महामुने

शिवभक्तस्य पूजां च क्रमशो ब्रूहि नःप्रभो १

सूत उवाच

तपोधनैर्भवद्भिश्च सम्यक्प्रश्नस्त्वयं कृतः

अस्योत्तरं महादेवो जानाति स्म न चापरः २

अथापि वक्ष्ये तमहं शिवस्य कृपयैव हि

शिवोऽस्माकं च युष्माकं रक्षां गृह्णातु भूरिशः ३

प्रो हि प्रकृतिजातस्य संसारस्य महोदधेः

नवं नावांतरमिति प्रणवं वै विदुर्बुधाः ४

प्रः प्रपंचो न नास्तिवो युष्माकं प्रणवं विदुः

प्रकर्षेण नयेद्यस्मान्मोक्षं वः प्रणवं विदुः ५

स्वजापकानां योगिनां स्वमंत्रपूजकस्य च

सर्वकर्मक्षयं कृत्वा दिव्यज्ञानं तु नूतनम् ६

तमेव मायारहितं नूतनं परिचक्षते

प्रकर्षेण महात्मानं नवं शुद्धस्वरूपकम् ७

नूतनं वै करोतीति प्रणवं तं विदुर्बुधाः

प्रणवं द्विविधं प्रोक्तं सूक्ष्मस्थूलविभेदतः ८

सूक्ष्ममेकाक्षरं विद्यात्स्थूलं पंचाक्षरं विदुः

सूक्ष्ममव्यक्तपंचार्णं सुव्यक्तार्णं तथेतरत् ९

जीवन्मुक्तस्य सूक्ष्मं हि सर्वसारं हि तस्य हि

मंत्रेणार्थानुसंधानं स्वदेहविलयावधि 1.17.१०

स्वदेहेगलिते पूर्णं शिवं प्राप्नोति निश्चयः

केवलं मंत्रजापी तु योगं प्राप्नोति निश्चयः ११

षट्त्रिंशत्कोटिजापी तु निश्चयं योगमाप्नुयात्

सूक्ष्मं च द्विविधं ज्ञेयं ह्रस्वदीर्घविभेदतः १२
अकारश्च उकारश्च मकारश्च ततः परम्
बिंदुनादयुतं तद्धि शब्दकालकलान्वितम् १३
दीर्घप्रणवमेवं हि योगिनामेव हृद्गतम्
मकारं तंत्रितत्त्वं हि ह्रस्वप्रणव उच्यते १४
शिवः शक्तिस्तयोरैक्यं मकारं तु त्रिकात्मकम्
ह्रस्वमेवं हि जाप्यं स्यात्सर्वपापक्षयैषिणाम् १५
भूवायुकनकार्णोद्योःशब्दाद्याश्च तथा दश
आशान्वयेदशपुनः प्रवृत्ता इति कथ्यते १६
ह्रस्वमेव प्रवृत्तानां निवृत्तानां तु दीर्घकम्
व्याहृत्यादौ च मंत्रादौ कामं शब्दकलायुतम् १७
वेदादौ च प्रयोज्यं स्याद्वंदने संध्ययोरपि
नवकौटिजपाञ्जस्वा संशुद्धः पुरुषो भवेत् १८
पुनश्च नवकोट्या तु पृथिवीजयमाप्नुयात्
पुनश्च नवकोट्या तु ह्यपांजयमवाप्नुयात् १९
पुनश्च नवकोट्या तु तेजसांजयमाप्नुयात्
पुनश्च नवकोट्या तु वायोर्जयमवाप्नुयात्
आकाशजयमाप्नोति नवकोटिजपेन वै 1.17.२०
गंधादीनांक्रमेणैवनवकोटिजपेणवै
अहंकारस्य च पुनर्नव कोटिजपेन वै २१
सहस्रमंत्रजप्तेन नित्यशुद्धो भवेत्पुमान्
ततः परं स्वसिद्ध्यर्थं जपो भवति हि द्विजाः २२
एवमष्टोत्तरशतकोटिजप्तेन वै पुनः
प्रणवेन प्रबुद्धस्तु शुद्धयोगमवाप्नुयात् २३
शुद्धयोगेन संयुक्तो जीवन्मुक्तो न संशयः
सदा जपन्सदाध्यायञ्छिवं प्रणवरूपिणम् २४
समाधिस्थो महायोगीशिव एव न संशयः
ऋषिच्छंदोदेवतादि न्यस्य देहेपुनर्जपेत् २५

प्रणवं मातृकायुक्तं देहे न्यस्य ऋषिर्भवेत्
दशमातृषडध्वादि सर्वं न्यासफलं लभेत् २६
प्रवृत्तानां च मिश्राणां स्थूलप्रणवमिष्यते
क्रियातपोजपैर्युक्तास्त्रिविधाः शिवयोगिनः २७
धनादिविभवैश्चैव करायंगैर्नमादिभिः
क्रियया पूजया युक्तः क्रियायोगीति कथ्यते २८
पूजायुक्तश्च मितभुग्बाह्येंद्रि यजयान्वितः
परद्रो हादिरहितस्तपोयोगीति कथ्यते २९
एतैर्युक्तः सदा क्रुद्धः सर्वकामादिवर्जितः
सदा जपपरः शांतोजपयोगीति तं विदुः 1.17.३०
उपचारैः षोडशभिः पूजया शिवयोगिनाम्
सालोक्यादिक्रमेणैव शुद्धो मुक्तिं लभेन्नरः ३१
जपयोगमथो वक्ष्ये गदतः शृणुत द्विजाः
तपःकर्तुर्जपः प्रोक्तो यज्जपन्परिमार्जते ३२
शिवनाम नमःपूर्वं चतुर्थ्यां पंचतत्त्वकम्
स्थूलप्रणवरूपं हि शिवपंचाक्षरं द्विजाः ३३
पंचाक्षरजपेनैव सर्वसिद्धिं लभेन्नरः
प्रणवेनादिसंयुक्तं सदा पंचाक्षरं जपेत् ३४
गुरूपदेशं संगम्य सुखवासे सुभूतले
पूर्वपक्षे समारभ्य कृष्णभूतावधि द्विजाः ३५
माघं भाद्रं विशिष्टं तु सर्वकालोत्तमोत्तमम्
एकवारं मिताशीतु वाग्यतो नियतेंद्रि यः ३६
स्वस्य राजपितृ-णां च शुश्रूषणं च नित्यशः
सहस्रजपमात्रेण भवेच्छुद्धोऽन्यथा ऋणी ३७
पंचाक्षरं पंचलक्षं जपेच्छिवमनुस्मरन्
पद्मासनस्थं शिवदं गंगाचंद्र कलान्वितम् ३८
वामोरुस्थितशक्त्या च विराजं तं महागणैः
मृगटंकधरं देवं वरदाभयपाणिकम् ३९

सदानुग्रहकर्त्तारं सदा शिवमनुस्मरन्
संपूज्य मनसा पूर्वं हृदिवासूर्यमंडले 1.17.४०
जपेत्पंचाक्षरीं विद्यां प्राण्मुखः शुद्धकर्मकृत्
प्रातः कृष्णचतुर्दश्यां नित्यकर्मसमाप्य च ४१
मनोरमे शुचौ देशे नियतः शुद्धमानसः
पंचाक्षरस्य मंत्रस्य सहस्रं द्वादशं जपेत् ४२
वरयेच्च सपत्नीकाञ्छैवान्वै ब्राह्मणोत्तमान्
एकं गुरुवरं शिष्टं वरयेत्सांबमूर्तिकम् ४३
ईशानं चाथ पुरुषमघोरं वाममेव च
सद्योजातं च पंचैव शिवभक्तान्द्विजोत्तमान् ४४
पूजाद्र व्याणि संपाद्य शिवपूजां समारभेत्
शिवपूजां च विधिवत्कृत्वा होमं समारभेत् ४५
मुखांतं च स्वसूत्रेण कृत्वा होमं समारभेत्
दशैकं वा शतैकं वा सहस्रैकमथापि वा ४६
कापिलेन घृतेनैव जुहुयात्स्वयमेव हि
कारयेच्छिवभक्तैर्वाप्यष्टोत्तरशतं बुधः ४७
होमान्ते दक्षिणा देया गुरोर्गोमिथुनं तथा
ईशानादिस्वरूपांस्तान्गुरुं सांबं विभाव्य च ४८
तेषां पत्सिक्ततोयेन स्वशिरः स्नानमाचरेत्
षट्त्रिंशत्कोटितीर्थेषु सद्यः स्नानफलं लभेत् ४९
दशांगमन्नं तेषां वै दद्याद्वैभक्तिपूर्वकम्
पराबुद्ध्या गुरोः पत्नीमीशानादिक्रमेण तु 1.17.५०
परमान्नेन संपूज्य यथाविभवविस्तरम्
रुद्रा क्षवस्त्रपूर्वं च वटकापूपकैर्युतम् ५१
बलिदानं ततः कृत्वा भूरिभोजनमाचरेत्
ततः संप्रार्थ्य देवेशं जपं तावत्समापयेत् ५२
पुरश्चरणमेवं तु कृत्वा मन्त्रीभवेन्नरः
पुनश्च पंचलक्षेण सर्वपापक्षयो भवेत् ५३

अतलादि समारभ्य सत्यलोकावधिक्रमात्
पंचलक्षजपात्तत्तल्लोकैश्वर्यमवाप्नुयात् ५४
मध्ये मृतश्चेद्भोगांते भूमौ तज्जापको भवेत्
पुनश्च पंचलक्षेण ब्रह्मसामीप्यमाप्नुयात् ५५
पुनश्च पंचलक्षेण सारूप्यैश्वर्यमाप्नुयात्
आहत्य शतलक्षेण साक्षाद्ब्रह्मसमो भवेत् ५६
कार्यब्रह्मण एवं हि सायुज्यं प्रतिपद्य वै
यथेष्टं भोगमाप्नोति तद्ब्रह्मप्रलयावधि ५७
पुनः कल्पांतरे वृत्ते ब्रह्मपुत्रः सजायते
पुनश्च तपसा दीप्तः क्रमान्मुक्तो भविष्यति ५८
पृथ्व्यादिकार्यभूतेभ्यो लोका वै निर्मिताः क्रमात्
पातालादि च सत्यांतं ब्रह्मलोकाश्चतुर्दश ५९
सत्यादूर्ध्वं क्षमांतं वैविष्णुलोकाश्चतुर्दश
क्षमलोके कार्यविष्णुर्वैकुंठे वरपत्तने 1.17.६०
कार्यलक्ष्म्या महाभोगिरक्षां कृत्वाऽधितिष्ठति
तदूर्ध्वगाश्च शुच्यंतां लोकाष्टाविंशतिः स्थिताः ६१
शुचौ लोके तु कैलासे रुद्रो वै भूतहृत्स्थितः
षडुत्तराश्च पंचाशदहिंसांतास्तदूर्ध्वगाः ६२
अहिंसालोकमास्थाय ज्ञानकैलासके पुरे
कार्येश्वरस्तिरोभावं सर्वान्कृत्वाधितिष्ठति ६३
तदंते कालचक्रं हि कालातीतस्ततः परम्
शिवेनाधिष्ठितस्तत्र कालश्चक्रेश्वराह्वयः ६४
माहिषं धर्ममास्थाय सर्वान्कालेन युंजति
असत्यश्चाशुचिश्चैव हिंसा चैवाथ निर्घृणा ६५
असत्यादिचतुष्पादः सर्वांशः कामरूपधृक्
नास्तिक्यलक्ष्मीर्दुःसंगो वेदबाह्यध्वनिः सदा ६६
क्रोधसंगः कृष्णवर्णो महामहिषवेषवान्
तावन्महेश्वरः प्रोक्तस्तिरोधास्तावदेव हि ६७

तदर्वाक्कर्मभोगो हि तदूर्ध्वं ज्ञानभोगकम्
तदर्वाक्कर्ममाया हि ज्ञानमाया तदूर्ध्वकम् ६८
मा लक्ष्मीः कर्मभोगो वै याति मायेति कथ्यते
मा लक्ष्मीर्ज्ञानभोगो वै याति मायेति कथ्यते ६९
तदूर्ध्वं नित्यभोगो हि तदर्वाण्नश्वरं विदुः
तदर्वाक्च तिरोधानं तदूर्ध्वं न तिरोधनम् 1.17.७०
तदर्वाक्पाशबंधो हि तदूर्ध्वं न हि बंधनम्
तदर्वाक्परिवर्तंते काम्यकर्मानुसारिणः ७१
निष्कामकर्मभोगस्तु तदूर्ध्वं परिकीर्तितः
तदर्वाक्परिवर्तंते बिंदुपूजापरायणाः ७२
तदूर्ध्वं हि व्रजंत्येव निष्कामा लिंगपूजकाः
तदर्वाक्परिवर्तंते शिवान्यसुरपूजकाः ७३
शिवैकनिरता ये च तदूर्ध्वं संप्रयांति ते
तदर्वाग्जीवकोटिः स्यात्तदूर्ध्वं परकोटिकाः ७४
सांसारिकास्तदर्वाक्च मुक्ताः खलु तदूर्ध्वगाः
तदर्वाक्परिवर्तंते प्राकृतद्र व्यपूजकाः ७५
तदूर्ध्वं हि व्रजंत्येते पौरुषद्र व्यपूजकाः
तदर्वाक्छक्तिलिंगं तु शिवलिंगं तदूर्ध्वकम् ७६
तदर्वागावृतं लिंगं तदूर्ध्वं हि निरावृति
तदर्वाक्कल्पितं लिंगं तदूर्ध्वं वै न कल्पितम् ७७
तदर्वाग्बाह्यलिंगं स्यादंतरंगं तदूर्ध्वकम्
तदर्वाक्छक्तिलोका हि शतं वै द्वादशाधिकम् ७८
तदर्वाग्बिंदुरूपं हि नादरूपं तदुत्तरम्
तदर्वाक्कर्मलोकस्तु तदूर्ध्वं ज्ञानलोककः ७९
नमस्कारस्तदूर्ध्वं हि मदाहंकारनाशनः
जनिजं वै तिरोधानं नानिषिद्ध्याततते इति 1.17.८०
ज्ञानशब्दार्थ एवं हि तिरोधाननिवारणात्
तदर्वाक्परिवर्तंते ह्याधिभौतिकपूजकाः ८१

आध्यात्मिकार्चका एव तदूर्ध्वं संप्रयांतिवै
तावद्वै वेदिभागं तन्महालोकात्मलिंगके ८२
प्रकृत्याद्यष्टबंधोपि वेद्यंते संप्रतिष्ठतः
एवमेतादृशं ज्ञेयं सर्वं लौकिकवैदिकम् ८३
अधर्ममहिषारूढं कालचक्रं तरंति ते
सत्यादिधर्मयुक्ता ये शिवपूजापराश्च ये ८४
तदूर्ध्वं वृषभो धर्मो ब्रह्मचर्यस्वरूपधृक्
सत्यादिपादयुक्तस्तु शिवलोकाग्रतः स्थितः ८५
क्षमाशृङ्गः शमश्रोत्रो वेदध्वनिविभूषितः
आस्तिक्यचक्षुर्निश्वासगुरुबुद्धिमना वृषः ८६
क्रियादिवृषभा ज्ञेयाः कारणादिषु सर्वदा
तं क्रियावृषभं धर्मं कालातीतोधितिष्ठति ८७
ब्रह्मविष्णुमहेशानां स्वस्वायुर्दिनमुच्यते
तदूर्ध्वं न दिनं रात्रिर्न जन्ममरणादिकम् ८८
पुनः कारणसत्यांताः कारणब्रह्मणस्तथा
गंधादिभ्यस्तु भूतेभ्यस्तदूर्ध्वं निर्मिताः सदा ८९
सूक्ष्मगंधस्वरूपा हि स्थिता लोकाश्चतुर्दश
पुनः कारणविष्णोर्वै स्थिता लोकाश्चतुर्दश 1.17.९०
पुनःकारणरुद्र स्य लोकाष्टाविंशका मताः
पुनश्च कारणेशस्य षट्पंचाशत्तदूर्ध्वगाः ९१
ततः परं ब्रह्मचर्यलोकाख्यं शिवसंमतम्
तत्रैव ज्ञानकैलासे पंचावरणसंयुते ९२
पंचमंडलसंयुक्तं पंचब्रह्मकलान्वितम्
आदिशक्तिसमायुक्तमादिलिंगं तु तत्र वै ९३
शिवालयमिदं प्रोक्तं शिवस्य परमात्मनः
परशक्त्यासमायुक्तस्तत्रैव परमेश्वरः ९४
सृष्टिः स्थितिश्च संहारस्तिरोभावोप्यनुग्रहः
पंचकृत्यप्रवीणोऽसौ सच्चिदानंदविग्रहः ९५

ध्यानधर्मः सदा यस्य सदानुग्रहतत्परः
समाध्यासनमासीनः स्वात्मारामो विराजते ९६
तस्य संदर्शनं सांध्यं कर्मध्यानादिभिः क्रमात्
नित्यादिकर्मयजनाच्छिवकर्ममतिर्भवेत् ९७
क्रियादिशिवकर्मभ्यः शिवज्ञानं प्रसाधयेत्
तद्दर्शनगताः सर्वे मुक्ता एव न संशयः ९८
मुक्तिरात्मस्वरूपेण स्वात्मारामत्वमेव हि
क्रियातपोजपज्ञानध्यानधर्मेषु सुस्थितः ९९
शिवस्य दर्शनं लब्धा स्वात्मारामत्वमेव हि
यथा रविः स्वकिरणादशुद्धिमपनेष्यति 1.17.१००
कृपाविचक्षणः शंभुरज्ञानमपनेष्यति
अज्ञानविनिवृत्तौ तु शिवज्ञानं प्रवर्तते १०१
शिवज्ञानात्स्वस्वरूपमात्मारामत्वमेष्यति
आत्मारामत्वसंसिद्धौ कृतकृत्यो भवेन्नरः १०२
पुनश्च शतलक्षेण ब्रह्मणः पदमाप्नुयात्
पुनश्च शतलक्षेण विष्णोः पदमवाप्नुयात् १०३
पुनश्च शतलक्षेण रुद्र स्य पदमाप्नुयात्
पुनश्च शतलक्षेण ऐश्वर्यं पदमाप्नुयात् १०४
पुनश्चैवंविधेनैव जपेन सुसमाहितः
शिवलोकादिभूतं हि कालचक्रमवाप्नुयात् १०५
कालचक्रं पंचचक्रमेकैकेन क्रमोत्तरे
सृष्टिमोहौ ब्रह्मचक्रं भोगमोहौ तु वैष्णवम् १०६
कोपमोहौ रौद्र चक्रं भ्रमणं चैश्वरं विदुः
शिवचक्रं ज्ञानमोहौ पंचचक्रं विदुर्बुधाः १०७
पुनश्च दशकोट्या हि कारणब्रह्मणः पदम्
पुनश्च दशकोट्या हि तत्पदैश्वर्यमाप्नुयात् १०८
एवं क्रमेण विष्ण्वादेः पदं लब्ध्वा महौजसः
क्रमेण तत्पदैश्वर्यं लब्ध्वा चैव महात्मनः १०९

शतकोटिमनुं जप्त्वा पंचोत्तरमतंद्रि तः
शिवलोकमवाप्नोति पंचमावरणाद्बहिः 1.17.११०
राजसं मंडपं तत्र नंदीसंस्थानमुत्तमम्
तपोरूपश्च वृषभस्तत्रैव परिदृश्यते १११
सद्योजातस्य तत्स्थानं पंचमावरणं परम्
वामदेवस्य च स्थानं चतुर्थावरणं पुनः ११२
अघोरनिलयं पश्चात्तृतीयावरणं परम्
पुरुषस्यैव सांबस्य द्वितीयावरणं शुभम् ११३
ईशानस्य परस्यैव प्रथमावरणं ततः
ध्यानधर्मस्य च स्थानं पंचमं मंडपं ततः ११४
बलिनाथस्य संस्थानं तत्र पूर्णामृतप्रदम्
चतुर्थं मंडपं पश्चाच्चंद्र शेखरमूर्तिमत् ११५
सोमस्कंदस्य च स्थानं तृतीयं मंडपं परम्
द्वितीयं मंडपं नृत्यमंडपं प्राहुरास्तिकाः ११६
प्रथमं मूलमायायाः स्थानं तत्रैव शोभनम्
ततः परं गर्भगृहं लिंगस्थानं परं शुभम् ११७
नंदिसंस्थानतः पश्चान्न विदुः शिववैभवम्
नंदीश्वरो बहिस्तिष्ठन्पंचाक्षरमुपासते ११८
एवं गुरुक्रमाल्लब्धं नंदीशाच्च मया पुनः
ततः परं स्वसंवेद्यं शिवे नैवानुभावितम् ११९
शिवस्य कृपया साक्षाच्छिव लोकस्य वैभवम्
विज्ञातुं शक्यते सर्वैर्नान्यथेत्याहुरास्तिकाः 1.17.१२०
एवंक्रमेणमुक्ताः स्युर्ब्राह्मणा वै जितेंद्रि यः
अन्येषां च क्रमं वक्ष्ये गदतः शृणुतादरात् १२१
गुरूपदेशाज्जाप्यं वै ब्राह्मणानां नमोऽतकम्
पंचाक्षरं पंचलक्षमायुष्यं प्रजपेद्विधिः १२२
स्त्रीत्वापनयनार्थं तु पंचलक्षं जपेत्पुनः
मंत्रेण पुरुषो भूत्वा क्रमान्मुक्तो भवेद्बुधः १२३

क्षत्रियः पंचलक्षेण क्षत्त्रत्वमपनेष्यति
पुनश्च पंचलक्षेण क्षत्त्रियो ब्राह्मणो भवेत् १२४
मंत्रसिद्धिर्जपाच्चैव क्रमान्मुक्तो भवैन्नरः
वैश्यस्तु पंचलक्षेण वैश्यत्वमपनेष्यति १२५
पुनश्च पंचलक्षेण मंत्रक्षत्त्रिय उच्यते
पुनश्च पंचलक्षेण क्षत्त्रत्वमपनेष्यति १२६
पुनश्च पंचलक्षेण मंत्रब्राह्मण उच्यते
शूद्र श्चैव नमॐतेन पंचविंशतिलक्षतः १२७
मंत्रविप्रत्वमापद्य पश्चाच्छुद्धो भवेद्द्विजः
नारीवाथ नरो वाथ ब्राह्मणो वान्य एव वा १२८
नमोन्तं वा नमःपूर्वमातुरः सर्वदा जपेत्
ततः स्त्रीणां तथैवोह्यगुरुर्निर्दर्शयेत्क्रमात् १२९
साधकः पंचलक्षान्ते शिवप्रीत्यर्थमेव हि
महाभिषेक नैवेद्यं कृत्वा भक्तांश्च पूजयेत् 1.17.१३०
पूजया शिवभक्तस्य शिवः प्रीततरो भवेत्
शिवस्य शिवभक्तस्य भेदो नास्ति शिवो हि सः १३१
शिवस्वरूपमंत्रस्य धारणाच्छिव एव हि
शिवभक्तशरीरे हि शिवे तत्परमो भवेत् १३२
शिवभक्ताः क्रियाः सर्वा वेदसर्वक्रियां विदुः
यावद्यावच्छिवं मंत्रं येन जप्तं भवेत्क्रमात् १३३
तावद्वै शिवसान्निध्यं तस्मिन्देहे न संशयः
देवीलिंगं भवेद्रू पं शिवभक्तस्त्रियास्तथा १३४
यावन्मंत्रं जपेद्देव्यास्तावत्सान्निध्यमस्ति हि
शिवं संपूजयेद्धीमान्स्वयं वै शब्दरूपभाक् १३५
स्वयं चैव शिवो भूत्वा परां शक्तिं प्रपूजयेत्
शक्तिं बेरं च लिंगं च ह्यालेख्या मायया यजेत् १३६
शिवलिंगं शिवं मत्वा स्वात्मानं शक्तिरूपकम्
शक्तिलिंगं च देवीं च मत्वा स्वं शिवरूपकम् १३७

शिवलिंगं नादरूपं बिंदुरूपं तु शक्तिकम्
उपप्रधानभावेन अन्योन्यासक्तलिंगकम् १३८
पूजयेच्च शिवं शक्तिं स शिवो मूलभावनात्
शिवभक्ताञ्छिवमंत्ररूपकाञ्छिवरूपकान् १३९
षोडशैरुपचारैश्च पूजयेदिष्टमाप्नुयात्
येन शुश्रूषणाद्यैश्च शिवभक्तस्य लिंगिनः 1.17.१४०
आनंदं जनयेद्विद्वाञ्छिवः प्रीततरो भवेत्
शिवभक्तान्सपत्नीकान्पत्न्या सह सदैव तत् १४१
पूजयेद्भोजनाद्यैश्च पंच वा दश वा शतम्
धने देहे च मंत्रे च भावनायामवंचकः १४२
शिवशक्तिस्वरूपेण न पुनर्जायते भुवि
नाभेरधो ब्रह्मभागमाकंठं विष्णुभागकम् १४३
मुखं लिंगमिति प्रोक्तं शिवभक्तशरीरकम्
मृतान्दाहादियुक्तान्वा दाहादिरहितान्मृतान् १४४
उद्दिश्य पूजयेदादिपितरं शिवमेव हि
पूजां कृत्वादिमातुश्च शिवभक्तांश्च पूजयेत् १४५
पितृलोकं समासाद्यक्रमान्मुक्तो भवेन्मृतः
क्रियायुक्तदशभ्यश्च तपोयुक्तो विशिष्यते १४६
तपोयुक्तशतेभ्यश्च जपयुक्तो विशिष्यते
जपयुक्तसहस्रेभ्यः शिवज्ञानी विशिष्यते १४७
शिवज्ञानिषु लक्षेषु ध्यानयुक्तो विशिष्यते
ध्यानयुक्तेषु कोटिभ्यः समाधिस्थो विशिष्यते १४८
उत्तरोत्तर वै शिष्ट्यात्पूजायामुत्तरोत्तरम्
फलं वैशिष्ट्यरूपं च दुर्विज्ञेयं मनीषिभिः १४९
तस्माद्वै शिवभक्तस्य माहात्म्यं वेत्ति को नरः
शिवशक्त्योः पूजनं च शिवभक्तस्य पूजनम् 1.17.१५०
कुरुते यो नरो भक्त्या स शिवः शिवमेधते
य इमं पठतेऽध्यायमर्थवद्वेदसंमतम् १५१

शिवज्ञानी भवेद्विप्रः शिवेन सह मोदते
श्रावयेच्छिवभक्तांश्च विशेषज्ञो मनीश्वराः १५२
शिवप्रसादशिद्धिः स्याच्छिवस्य कृपया बुधाः १५३
इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां सप्तदशोऽध्यायः १७

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः १८

https://sa.wikisource.org/s/sql
< शिवपुराणम् | संहिता १ (विश्वेश्वरसंहिता)

ऋषयः ऊचुः

बंधमोक्षस्वरूपं हि ब्रूहि सर्वार्थवित्तम

सूत उवाच

बंधमोक्षं तथोपायं वक्ष्येऽहं शृणुतादरात् १

प्रकृत्याद्यष्टबंधेन बद्धो जीवः स उच्यते

प्रकृत्याद्यष्टबंधेन निर्मुक्तो मुक्त उच्यते २

प्रकृत्यादिवशीकारो मोक्ष इत्युच्यते स्वतः

बद्धजीवस्तु निर्मुक्तो मुक्तजीवः स कथ्यते ३

प्रकृत्यग्रे ततो बुद्धिरहंकारो गुणात्मकः

पंचतन्मात्रमित्येते प्रकृत्याद्यष्टकं विदुः ४

प्रकृट्याद्यष्टजो देहो देहजं कर्म उच्यते

पुनश्च कर्मजो देहो जन्मकर्म पुनः पुनः ५

शरीरं त्रिविधं ज्ञेयं स्थूलं सूक्ष्मं च कारणम्

स्थूलं व्यापारदं प्रोक्तं सूक्ष्ममिंद्रि यभोगदम् ६

कारणं त्वात्मभोगार्थं जीवकर्मानुरूपतः

सुखं दुःखं पुण्यपापैः कर्मभिः फलमश्नुते ७

तस्माद्धि कर्मरज्ज्वा हि बद्धो जीवः पुनः पुनः

शरीरत्रयकर्मभ्यां चक्रवद्भ्राम्यते सदा ८

चक्रभ्रमनिवृत्यर्थं चक्रकर्तारमीडयेत्

प्रकृत्यादि महाचक्रं प्रकृतेः परतः शिवः ९

चक्रकर्ता महेशो हि प्रकृतेः परतोयतः

पिबति वाथ वमति जीवन्बालो जलं यथा 1.18.१०

शिवस्तथा प्रकृत्यादि वशीकृत्याधितिष्ठति

सर्वं वशीकृतं यस्मात्तस्माच्छिव इति स्मृतः

शिव एव हि सर्वज्ञः परिपूर्णश्च निःस्पृहः ११

सर्वज्ञता तृप्तिरनादिबोधः स्वतंत्रता नित्यमलुप्तशक्तिः

अनंतशक्तिश्च महेश्वरस्य यन्मानसैश्वर्यमवैति वेदः १२

अतः शिवप्रसादेन प्रकृत्यादिवशं भवेत्

शिवप्रसादलाभार्थं शिवमेव प्रपूजयेत् १३

निःस्पृहस्य च पूर्णस्य तस्य पूजा कथं भवेत्

शिवोद्देशकृतं कर्म प्रसादजनकं भवेत् १४

लिंगे बेरे भक्तजने शिवमुद्दिश्य पूजयेत्

कायेन मनसा वाचा धनेनापि प्रपूजयेत् १५

पुजया तु महेशो हि प्रकृतेः परमः शिवः

प्रसादं कुरुते सत्यं पूजकस्य विशेषतः १६

शिवप्रसादात्कर्माद्यं क्रमेण स्ववशं भवेत्

कर्मारभ्य प्रकृत्यंतं यदासर्वं वशं भवेत् १७

तदामुक्त इति प्रोक्तः स्वात्मारामो विराजते

प्रसादात्परमेशस्य कर्म देहो यदावशः १८

तदा वै शिवलोके तु वासः सालोक्यमुच्यते

सामीप्यं याति सांबस्य तन्मात्रे च वशं गते १९

तदा तु शिवसायुज्यमायुधाद्यैः क्रियादिभिः

महाप्रसादलाभे च बुद्धिश्चापि वशा भवेत् 1.18.२०

बुद्धिस्तु कार्यं प्रकृतेस्तत्सृष्टिरिति कथ्यते

पुनर्महाप्रसादेन प्रकृतिर्वशमेष्यति २१

शिवस्य मानसैश्वर्यं तदाऽयत्नं भविष्यति

सार्वज्ञाद्यं शिवैश्वर्यं लब्ध्वा स्वात्मनि राजते २२

तत्सायुज्यमिति प्राहुर्वेदागमपरायणाः

एवं क्रमेण मुक्तिः स्याल्लिंगादौ पूजया स्वतः २३

अतः शिवप्रसादार्थं क्रियाद्यैः पूजयेच्छिवम्

शिवक्रिया शिवतपः शिवमंत्रजपः सदा २४

शिवज्ञानं शिवध्यानमुत्तरोत्तरमभ्यसेत्

आसुप्तेरामृतेः कालं नयेद्वै शिवचिंतया २५

सद्यादिभिश्च कुसुमैरर्चयेच्छिवमेष्यति

ऋषय ऊचुः

लिंगादौ शिवपूजाया विधानं ब्रूहि सर्वतः २६

सूत उवाच

लिंगानां च क्रमं वक्ष्ये यथावच्छृणुत द्विजाः

तदेव लिंगं प्रथमं प्रणवं सार्वकामिकम् २७

सूक्ष्मप्रणवरूपं हि सूक्ष्मरूपं तु निष्फलम्

स्थूललिंगं हि सकलं तत्पंचाक्षरमुच्यते २८

तयोः पूजा तपः प्रोक्तं साक्षान्मोक्षप्रदे उभे

पौरुषप्रकृतिभूतानि लिंगानिसुबहूनि च २९

तानि विस्तरतो वक्तुं शिवो वेत्ति न चापरः

भूविकाराणि लिंगानि ज्ञातानि प्रब्रवीमि वः 1.18.३०

स्वयं भूलिंगं प्रथमं बिंदुलिंगंद्वितीयकम्

प्रतिष्ठितं चरंचैव गुरुलिंगं तु पंचमम् ३१

देवर्षितपसा तुष्टः सान्निध्यार्थं तु तत्र वै

पृथिव्यन्तर्गतः शर्वो बीजं वै नादरूपतः ३२

स्थावरांकुरवद्भूमिमुद्भिद्य व्यक्त एव सः

स्वयंभूतं जातमिति स्वयंभूरिति तं विदुः ३३

तल्लिंगपूजया ज्ञानं स्वयमेव प्रवर्द्धते

सुवर्णरजतादौ वा पृथिव्यां स्थिंडिलेपि वा ३४

स्वहस्ताल्लिखितं लिंगं शुद्धप्रणवमंत्रकम्

यंत्रलिंगं समालिख्य प्रतिष्ठावाहनं चरेत् ३५

बिंदुनादमयं लिंगं स्थावरं जंगमं च यत्

भावनामयमेतद्धि शिवदृष्टं न संशयः ३६

यत्र विश्वस्य ते शंभुस्तत्र तस्मै फलप्रदः

स्वहस्ताल्लिख्यते यंत्रे स्थावरादावकृत्रिमे ३७

आवाह्य पूजयेच्छंभुं षोडशैरुपचारकैः

स्वयमैश्वर्यमाप्नोति ज्ञानमभ्यासतो भवेत् ३८

देवैश्च ऋषिभिश्चापि स्वात्मसिद्ध्यर्थमेव हि
समंत्रेणात्महस्तेन कृतं यच्छुद्धमंडले ३९
शुद्धभावनया चैव स्थापितं लिंगमुत्तमम्
तल्लिंगं पौरुषं प्राहुस्तत्प्रतिष्ठितमुच्यते 1.18.४०
तल्लिंगपूजया नित्यं पौरुषैश्वर्यमाप्नुयात्
महद्भिर्ब्राह्मणैश्चापि राजभिश्च महाधनैः ४१
शिल्पिनाकल्पितं लिंगं मंत्रेण स्थापितं च यत्
प्रतिष्ठितं प्राकृतं हि प्राकृतैश्वर्यभोगदम् ४२
यदूर्जितं च नित्यं च तद्धि पौरुषमुच्यते
यद्दुर्बलमनित्यं च तद्धि प्राकृतमुच्यते ४३
लिंगं नाभिस्तथा जिह्वा नासाग्रञ्च शिखा क्रमात्
कट्यादिषु त्रिलोकेषु लिंगमाध्यात्मिकं चरम् ४४
पर्वतं पौरुषं प्रोक्तं भूतलं प्राकृतं विदुः
वृक्षादि पौरुषं ज्ञेयं गुल्मादि प्राकृतं विदुः ४५
षाष्टिकं प्राकृतं ज्ञेयं शालिगोधूमपौरुषम्
ऐश्वर्यं पौरुषं विद्यादणिमाद्यष्टसिद्धिदम् ४६
सुस्त्रीधनादिविषयं प्राकृतं प्राहुरास्तिकाः
प्रथमं चरलिंगेषु रसलिंगं प्रकथ्यते ४७
रसलिंगं ब्राह्मणानां सर्वाभीष्टप्रदं भवेत्
बाणलिंगं क्षत्रियाणां महाराज्यप्रदं शुभम् ४८
स्वर्णलिंगं तु वैश्यानां महाधनपतित्वदम्
शिलालिंगं तु शूद्रा णां महाशुद्धिकरं शुभम् ४९
स्फाटिकं बाणलिंगं च सर्वेषांसर्वकामदम्
स्वीयाभावेऽन्यदीयं तु पूजायां न निषिद्ध्यते 1.18.५०
स्त्रीणां तु पार्थिवं लिंगं सभर्तृणां विशेषतः
विधवानां प्रवृत्तानां स्फाटिकं परिकीर्तितम् ५१
विधवानां निवृत्तानां रसलिंगं विशिष्यते
बाल्येवायौवनेवापि वार्द्धकेवापि सुव्रताः ५२

शुद्धस्फटिकलिंगं तु स्त्रीणां तत्सर्वभोगदम्
प्रवृत्तानां पीठपूजा सर्वाभीष्टप्रदा भुवि ५३
पात्रेणैव प्रवृत्तस्तु सर्वपूजां समाचरेत्
अभिषेकांते नैवेद्यं शाल्यन्न्नेन समाचरेत् ५४
पूजांते स्थापयेल्लिंगं संपुटेषु पृथग्गृहे
करपूजानि वृत्तानां स्वभोज्यं तु निवेदयेत् ५५
निवृत्तानां परं सूक्ष्मलिंगमेव विशिष्यते
विभूत्यभ्यर्चनं कुर्याद्विभूतिं च निवेदयेत् ५६
पूजां कृत्वाथ तल्लिंगं शिरसा धारयेत्सदा
विभूतिस्त्रिविधा प्रोक्ता लोकवेदशिवाग्निभिः ५७
लोकाग्निजमथो भस्मद्र व्यशुद्ध्यर्थमावहेत्
मृद्दारुलोहरूपाणां धान्यानां च तथैव च ५८
तिलादीनां च द्र व्याणां वस्त्रादीनां तथैव च
तथा पर्युषितानां च भस्मना शिद्धिरिष्यते ५९
श्वादिभिर्दूषितानां च भस्मना शुद्धिरिष्यते
सजलं निर्जलं भस्म यथायोग्यं तु योजयेत् 1.18.६०
वेदाग्निजं तथा भस्म तत्कर्मांतेषु धारयेत्
मंत्रेण क्रियया जन्यं कर्माग्नौ भस्मरूपधृक् ६१
तद्भस्मधारणात्कर्म स्वात्मन्यारोपितं भवेत्
अघोरेणात्ममंत्रेण बिल्वकाष्ठं प्रदाहयेत् ६२
शिवाग्निरिति संप्रोक्तस्तेन दग्धं शिवाग्निजम्
कपिलागोमयं पूर्वं केवलं गव्यमेव वा ६३
शम्यस्वत्थपलाशान्वा वटारम्वधबिल्वकान्
शिवाग्निना दहेच्छुद्धं तद्वै भस्म शिवाग्निजम् ६४
दर्भाग्नौ वा दहेत्काष्ठं शिवमंत्रं समुच्चरन्
सम्यक्संशोध्य वस्त्रेण नवकुंभे निधापयेत् ६५
दीप्त्यर्थं तत्तु संग्राह्यं मन्यते पूज्यतेपि च
भस्मशब्दार्थ एवं हि शिवः पूर्वं तथाऽकरोत् ६६

यथा स्वविषये राजा सारं गृह्णाति यत्करम्
यथा मनुष्याः सस्यादीन्दग्ध्वा सारं भजंति वै ६७
यथा हि जाठराग्निश्च भक्ष्यादीन्विविधान्बहून्
दग्ध्वा सारतरं सारात्स्वदेहं परिपुष्यति ६८
तथा प्रपंचकर्तापि स शिवः परमेश्वरः
स्वाधिष्ठेयप्रपंचस्य दग्ध्वा सारं गृहीतवान् ६९
दग्ध्वा प्रपंचं तद्भस्म् अस्वात्मन्यारोपयच्छिवः
उद्धूलनेन व्याजेन जगत्सारं गृहीतवान् 1.18.७०
स्वरत्नं स्थापयामास स्वकीये हि शरीरके
केशमाकाशसारेण वायुसारेण वै मुखम् ७१
हृदयं चाग्निसारेण त्वपां सारेण वैकटिम्
जानु चावनिसारेण तद्वत्सर्वं तदंगकम् ७२
ब्रह्मविष्णवोश्च रुद्रा णां सारं चैव त्रिपुंड्रकम्
तथा तिलकरूपेण ललाटान्ते महेश्वरः ७३
भवृद्ध्या सर्वमेतद्धि मन्यते स्वयमैत्यसौ
प्रपंचसारसर्वस्वमनेनैव वशीकृतम् ७४
तस्मादस्य वशीकर्ता नास्तीति स शिवः स्मृतः
यथा सर्वमृगाणां च हिंसको मृगहिंसकः ७५
अस्य हिंसामृगो नास्ति तस्मात्सिंह इतीरितः
शं नित्यं सुखमानंदमिकारः पुरुषः स्मृतः ७६
वकारः शक्तिरमृतं मेलनं शिव उच्यते
तस्मादेवं स्वमात्मानं शिवं कृत्वार्चयेच्छिवम् ७७
तस्मादुद्धूलनं पूर्वं त्रिपुंड्रं धारयेत्परम्
पूजाकाले हि सजलं शुद्ध्यर्थं निर्जलं भवेत् ७८
दिवा वा यदि वारात्रौ नारी वाथ नरोपि वा
पूजार्थं सजलं भस्म त्रिपुंड्रेणैव धारयेत् ७९
त्रिपुंड्रं सजलं भस्म धृत्वा पूजां करोति यः
शिवपूजां फलं सांगं तस्यैव हि सुनिश्चितम् 1.18.८०

भस्म वै शिवमंत्रेण धृत्वा ह्यत्याश्रमी भवेत्
शिवाश्रमीति संप्रोक्तः शिवैकपरमो यतः ८१
शिवव्रतैकनिष्ठस्य नाशौचं न च सूतकम्
ललाटेऽग्रे सितं भस्म तिलकं धारयेन्मृदा ८२
स्वहस्ताद्गुरुहस्ताद्वाशिवभक्तस्य लक्षणम्
गुणान्रुंध इति प्रोक्तो गुरुशब्दस्य विग्रहः ८३
सविकारान्राजसादीन्गुणान्रुंधे व्यपोहति
गुणातीतः परशिवो गुरुरूपं समाश्रितः ८४
गुणत्रयं व्यपोह्याग्रे शिवं बोधयतीति सः
विश्वस्तानां तु शिष्याणां गुरुरित्यभिधीयते ८५
तस्माद्गुरुशरीरं तु गुरुलिंगं भवेद्बुधः
गुरुलिंगस्य पूजा तु गुरुशुश्रूषणं भवेत् ८६
श्रुतं करोति शुश्रूषा कायेन मनसा गिरा
उक्तं यद्गुरुणा पूर्वं शक्यं वाऽशक्यमेव वा ८७
करोत्येव हि पूतात्मा प्राणैरपि धनैरपि
तस्माद्वै शासने योग्यः शिष्य इत्यभिधीयते ८८
शरीराद्यर्थकं सर्वं गुरोर्दत्त्वा सुशिष्यकः
अग्रपाकं निवेद्याग्रेभुंजीयाद्गुर्वनुज्ञया ८९
शिष्यः पुत्र इति प्रोक्तः सदाशिष्यत्वयोगतः
जिह्वालिंगान्मंत्रशुक्रं कर्णयोनौ निषिच्यवै 1.18.९०
जातः पुत्रो मंत्रपुत्रः पितरं पूजयेद्गुरुम्
निमज्जयति पुत्रं वै संसारे जनकः पिता ९१
संतारयति संसाराद्गुरुर्वै बोधकः पिता
उभयोरंतरं ज्ञात्वा पितरं गुरुमर्चयेत् ९२
अंगशुश्रूषया चापि धनाद्यैः स्वार्जितैर्गुरुम्
पादादिकेशपर्यंतं लिंगान्यंगानि यद्गुरोः ९३
धनरूपैः पादुकाद्यैः पादसंग्रणादिभिः
स्नानाभिषेकनैवेद्यैर्भोजनैश्च प्रपूजयेत् ९४

गुरुपूजैव पूजा स्याच्छिवस्य परमात्मनः
गुरुशेषं तु यत्सर्वमात्मशुद्धिकरं भवेत् ९५
गुरोः शेषः शिवोच्छिष्टं जलमन्नादिनिर्मितम्
शिष्याणां शिवभक्तानां ग्राह्यं भोज्यं भवेद्द्विजाः ९६
गुर्वनुज्ञाविरहितं चोरवत्सकलं भवेत्
गुरोरपि विशेषज्ञं यत्नाद्गृह्णीत वै गुरुम् ९७
अज्ञानमोचनं साध्यं विशेषज्ञो हि मोचकः
आदौ च विघ्नशमनं कर्तव्यं कर्म पूर्तये ९८
निर्विघ्नेन कृतं सांगं कर्म वै सफलं भवेत्
तस्मात्सकलकर्मादौ विघ्नेशं पूजयेद् बुधः ९९
सर्वबाधानिवृत्त्यर्थं सर्वान्देवान्यजेद्बुधः
ज्वरादिग्रंथिरोगाश्च बाधा ह्याध्यात्मिका मता 1.18.१००
पिशाचजंबुकादीनां वल्मीकाद्युद्भवे तथा
अकस्मादेव गोधादिजंतूनां पतनेपि च १०१
गृहे कच्छपसर्पस्त्रीदुर्जनादर्शनेपि च
वृक्षनारीगवादीनां प्रसूतिविषयेपि च १०२
भाविदुःखं समायाति तस्मात्ते भौतिका मता
अमेध्या शनिपातश्च महामारी तथैव च १०३
ज्वरमारी विषूचिश्च गोमारी च मसूरिका
जन्मर्क्षग्रहसंक्रांतिग्रहयोगाः स्वराशिके १०४
दुःस्वप्नदर्शनाद्याश्च मता वै ह्यधिदैविकाः
शवचांडालपतितस्पर्शाद्यैंतर्गृहे गते १०५
एतादृशे समुत्पन्ने भाविदुःखस्य सूचके
शांतियज्ञं तु मतिमान्कुर्यात्तद्दोषशांतये १०६
देवालयेऽथ गोष्ठे वा चैत्ये वापि गृहांगणे
प्रादेशोन्नतधिष्ण्ये वै द्विहस्ते च स्वलंकृते १०७
भारमात्रव्रीहिधान्यं प्रस्थाप्य परिसृत्य च
मध्ये विलिख्यकमलं तथा दिक्षुविलिख्य वै १०८

तंतुना वेष्टितं कुंभं नवगुग्गुलधूपितम्
मध्ये स्थाप्य महाकुंभं तथा दिक्ष्वपि विन्यसेत् १०९
सनालाम्रककूर्चादीन्कलशांश्च तथाष्टसु
पूरयेन्मंत्रपूतेन पंचद्र व्ययुतेन हि 1.18.११०
प्रक्षिपेन्नव रत्नानि नीलादीन्क्रमशस्तथा
कर्मज्ञं च सपत्नीकमाचार्यं वरयेद्बुधः १११
सुवर्णप्रतिमां विष्णोरिंद्रा दीनां च निक्षिपेत्
सशिरस्के मध्यकुंभे विष्णुमावाह्य पूजयेत् ११२
प्रागादिषु यथामंत्रमिंद्रा दीन्क्रमशो यजेत्
तत्तन्नाम्ना चतुर्थ्यां च नमोन्ते न यथाक्रमम् ११३
आवाहनादिकं सर्वमाचार्येणैव कारयेत्
आचार्य ऋत्विजा सार्धं तन्मात्रान्प्रजपेच्छतम् ११४
कुंभस्य पश्चिमे भागे जपांते होममाचरेत्
कोटिं लक्षं सहस्रं वा शतमष्टोत्तरं बुधाः ११५
एकाहं वा नवाहं वा तथा मंडलमेव वा
यथायोग्यं प्रकुर्वीत कालदेशानुसारतः ११६
शमीहोमश्च शांत्यर्थे वृत्त्यर्थे च पलाशकम्
समिदन्नाज्यकैर्द्र व्यैर्नाम्ना मंत्रेण वा हुनेत् ११७
प्रारंभे यत्कृतं द्र व्यं तत्क्रियांतं समाचरेत्
पुण्याहं वाचयित्वांते दिने संप्रोक्ष्ययेज्जलैः ११८
ब्राह्मणान्भोजयेत्पश्चाद्यावदाहुतिसंख्यया
आचार्यश्च हविष्याशीऋत्विजश्च भवेद्बुधाः ११९
आदित्यादीन्ग्रहानिष्ट्वा सर्वहोमांत एव हि
ऋत्विभ्यो दक्षिणां दद्यान्नवरत्नं यथाक्रमम् 1.18.१२०
दशदानं ततः कुर्याद्भूरिदानं ततः परम्
बालानामुपनीतानां गृहिणां वनिनां धनम् १२१
कन्यानां च सभर्तृ-णां विधवानां ततः परम्
तंत्रोपकरणं सर्वमाचार्याय निवेदयेत् १२२

उत्पातानां च मारीणां दुःखस्वामी यमः स्मृतः
तस्माद्यमस्य प्रीत्यर्थं कालदानं प्रदापयेत् १२३
शतनिष्केण वा कुर्याद्दशनिष्केण वा पुनः
पाशांकुशधरं कालं कुर्यात्पुरुषरूपिणम् १२४
तत्स्वर्णप्रतिमादानं कुर्याद्दक्षिणया सह
तिलदानं ततः कुर्यात्पूर्णायुष्यप्रसिद्धये १२५
आज्यावेक्षणदानं च कुर्याद्व्याधिनिवृत्तये
सहस्रं भोजयेद्विप्रान्दरिद्र ः! शतमेव वा १२६
वित्ताभावे दरिद्र स्तु यथाशक्ति समाचरेत्
भैरवस्य महापूजां कुर्याद्भूतादिशांतये १२७
महाभिषेकं नैवेद्यं शिवस्यान्ते तुकारयेत्
ब्राह्मणान्भोजयेत्पश्चाद्भूरिभोजनरूपतः १२८
एवं कृतेन यज्ञेन दोषशांतिमवाप्नुयात्
शांतियज्ञमिमं कुर्याद्वर्षे वर्षे तु फाल्गुने १२९
दुर्दर्शनादौ सद्यो वै मासमात्रे समाचरेत्
महापापादिसंप्राप्तौ कुर्याद्भैरवपूजनम् 1.18.१३०
महाव्याधिसमुत्पत्तौ संकल्पं पुनराचरेत्
सर्वभावे दरिद्र स्तु दीपदानमथाचरेत् १३१
तदप्यशक्तः स्नात्वा वै यत्किंचिद्दानमाचरेत्
दिवाकरं नमस्कुर्यान्मन्त्रेणाष्टोत्तरं शतम् १३२
सहस्रमयुतं लक्षं कोटिं वा कारयेद् बुधः
नमस्कारात्मयज्ञेन तुष्टाः स्युः सर्वदेवताः १३३
त्वत्स्वरूपेर्पिता बुद्धिर्नतेऽशून्ये च रोचति
या चास्त्यस्मदहंतेति त्वयि दृष्टे विवर्जिता १३४
नम्रोऽहं हि स्वदेहेन भो महांस्त्वमसि प्रभो
न शून्यो मत्स्वरूपो वै तव दासोऽस्मि सांप्रतम् १३५
यथायोग्यं स्वात्मयज्ञं नमस्कारं प्रकल्पयेत्
अथात्र शिवनैवेद्यं दत्त्वा तांबूलमाहरेत् १३६

शिवप्रदक्षिणं कुर्यात्स्वयमष्टोत्तरं शतम्
सहस्रमयुतं लक्षं कोटिमन्येन कारयेत् १३७
शिवप्रदक्षिणात्सर्वं पातकं नश्यति क्षणात्
दुःखस्य मूलं व्याधिर्हि व्याधेर्मूलं हि पातकम् १३८
धर्मेणैव हि पापानामपनोदनमीरितम्
शिवोद्देशकृतो धर्मः क्षमः पापविनोदने १३९
अध्यक्षं शिवधर्मेषु प्रदक्षिणमितीरितम्
क्रियया जपरूपं हि प्रणवं तु प्रदक्षिणम् 1.18.१४०
जननं मरणं द्वंद्वं मायाचक्रमितीरितम्
शिवस्य मायाचक्रं हि बलिपीठं तदुच्यते १४१
बलिपीठं समारभ्य प्रादक्षिण्यक्रमेण वै
पदे पदांतरं गत्वा बलिपीठं समाविशेत् १४२
नमस्कारं ततः कुर्यात्प्रदक्षिणमितीरितम्
निर्गमाज्जननं प्राप्तं नमस्त्वात्मसमर्पणम् १४३
जननं मरणं द्वंद्वं शिवमायासमर्पितम्
शिवमायार्पितद्वंद्वो न पुनस्त्वात्मभाग्भवेत् १४४
यावद्देहं क्रियाधीनः सजीवो बद्ध उच्यते
देहत्रयवशीकारे मोक्ष इत्युच्यते बुधैः १४५
मायाचक्रप्रणेता हि शिवः परमकारणम्
शिवमायार्पितद्वंद्वं शिवस्तु परिमार्जति १४६
शिवेन कल्पितं द्वंद्वं तस्मिन्नेव समर्पयेत्
शिवस्यातिप्रियं विद्यात्प्रदक्षिणं नमो बुधाः १४७
प्रदक्षिणनमस्काराः शिवस्य परमात्मनः
षोडशैरुपचारैश्च कृतपूजा फलप्रदा १४८
प्रदक्षिणाऽविनाश्यं हि पातकं नास्ति भूतले
तस्मात्प्रदक्षिणेनैव सर्वपापं विनाशयेत् १४९
शिवपूजापरो मौनी सत्यादिगुणसंयुतः
क्रियातपोजपज्ञानध्यानेष्वेकैकमाचरेत् 1.18.१५०

ऐश्वर्यं दिव्यदेहश्च ज्ञानमज्ञानसंशयः

शिवसान्निध्यमित्येते क्रियादीनां फलं भवेत् १५१

करणेन फलं याति तमसः परिहापनात्

जन्मनः परिमार्जित्वाज्ज्ञबुद्ध्या जनितानि च १५२

यथादेशं यथाकालं यथादेहं यथाधनम्

यथायोग्यं प्रकुर्वीत क्रियादीञ्छिवभक्तिमान् १५३

न्यायार्जितसुवित्तेन वसेत्प्राज्ञः शिवस्थले

जीवहिंसादिरहितमतिक्लेशविवर्जितम् १५४

पंचाक्षरेण जप्तं च तोयमन्नं विदुः सुखम्

अथवाऽहुर्दरिद्र स्य भिक्षान्नंज्ञानदं भवेत् १५५

शिवभक्तस्य भिक्षान्नंशिवभक्तिविवर्धनम्

शंभुसत्रमिति प्राहुर्भिक्षान्नंशिवयोगिनः १५६

येन केनाप्युपायेन यत्र कुत्रापि भूतले

शुद्धान्नभुक्सदा मौनीरहस्यं न प्रकाशयेत् १५७

प्रकाशयेत्तु भक्तानां शिवमाहात्म्यमेव हि

रहस्यं शिवमंत्रस्य शिवो जानाति नापरः १५८

शिवभक्तो वसेन्नित्यं शिवलिंगं समाश्रितः

स्थाणुलिंगाश्रयेणैव स्थाणुर्भवति भूसुराः १५९

पूजया चरलिंगस्य क्रमान्मुक्तो भवेद्ध्रुवम्

सर्वमुक्तं समासेन साध्यसाधनमुत्तमम् 1.18.१६०

व्यासेन यत्पुराप्रोक्तं यच्छ्रुतं हि मया पुरा

भद्र मस्तु हि वोऽस्माकं शिवभक्तिर्दृढाऽस्तुसा १६१

य इमं पठतेऽध्यायं यः शृणोति नरः सदा

शिवज्ञानं स लभतेशिवस्य कृपया बुधाः १६२

इति श्रीशैवेमहापुराणे विद्येश्वरसंहितायां साध्यसाधनखंडे शिवलिंगमहिमावर्णनं नामाष्टादशोऽध्यायः १८

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः १९

https://sa.wikisource.org/s/sqm

< शिवपुराणम् | संहिता १ (विश्वेश्वरसंहिता)

ऋषय ऊचुः

सूत सूत चिरंजीव धन्यस्त्वं शिवभक्तिमान्

सम्यगुक्तस्त्वया लिंगमहिमा सत्फलप्रदः १

यत्र पार्थिवमाहेशलिंगस्य महिमाधुना

सर्वोत्कृष्टश्च कथितो व्यासतो ब्रूहि तं पुनः २

सूत उवाच

शृणुध्वमृषयः सर्वे सद्भक्त्या हरतो खिलाः

शिवपार्थिवलिंगस्य महिमा प्रोच्यते मया ३

उक्तेष्वेतेषु लिंगेषु पार्थिवं लिंगमुत्तमम्

तस्य पूजनतो विप्रा बहवः सिद्धिमागताः ४

हरिर्ब्रह्मा च ऋषयः सप्रजापतयस्तथा

संपूज्य पार्थिवं लिंगं प्रापुःसर्वेप्सितं द्विजाः ५

देवासुरमनुष्याश्च गंधर्वोरगराक्षसाः

अन्येपि बहवस्तं संपूज्य सिद्धिं गताः परम् ६

कृते रत्नमयं लिंगं त्रेतायां हेमसंभवम्

द्वापरे पारदं श्रेष्ठं पार्थिवं तु कलौ युगे ७

अष्टमूर्तिषु सर्वासु मूर्तिर्वै पार्थिवी वरा

अनन्यपूजिता विप्रास्तपस्तस्मान्महत्फलम् ८

यथा सर्वेषु देवेषु ज्येष्ठः श्रेष्ठो महेश्वरः

एवं सर्वेषु लिंगेषु पार्थिवं श्रेष्टमुच्यते ९

यथा नदीषु सर्वासु ज्येष्ठा श्रेष्ठा सुरापगा

तथा सर्वेषु लिंगेषु पार्थिवं श्रेष्ठमुच्यते 1.19.१०

यथा सर्वेषु मंत्रेषु प्रणवो हि महान्स्मृतः

तथेदं पार्थिवं श्रेष्ठमाराध्यं पूज्यमेव हि ११

यथा सर्वेषु वर्णेषु ब्राह्मणःश्रेष्ठ उच्यते

तथा सर्वेषु लिंगेषु पार्थिवं श्रेष्ठमुच्यते १२
यथा पुरीषु सर्वासु काशीश्रेष्ठतमा स्मृता
तथा सर्वेषु लिंगेषु पार्थिवं श्रेष्ठमुच्यते १३
यथा व्रतेषु सर्वेषु शिवरात्रिव्रतं परम्
तथा सर्वेषु लिंगेषु पार्थिवं श्रेष्थमुच्यते १४
यथा देवीषु सर्वासु शैवीशक्तिः परास्मृता
तथा सर्वेषु लिंगेषु पार्थिवं श्रेष्ठमुच्यते १५
प्रकृत्यपार्थिवं लिंगं योन्यदेवं प्रपूजयेत्
वृथा भवति सा पूजा स्नानदानादिकं वृथा १६
पार्थिवाराधनं पुण्यं धन्यमायुर्विवर्धनम्
तुष्टिदं पुष्टिदंश्रीदं कार्यं साधकसत्तमैः १७
यथा लब्धोपचारैश्च भक्त्या श्रद्धासमन्वितः
पूजयेत्पार्थिवं लिंगं सर्वकामार्थसिद्धिदम् १८
यः कृत्वा पार्थिवं लिंगे पूजयेच्छुभवेदिकम्
इहैव धनवाञ्छ्रीमानंते रुद्रो भिजायते १९
त्रिसंध्यं योर्चयंल्लिंगं कृत्वा बिल्वेन पार्थिवम्
दशैकादशकंयावत्तस्य पुण्यफलं शृणु 1.19.२०
अनेनैव स्वदेहेन रुद्र लोके महीयते
पापहं सर्वमर्त्यानां दर्शनात्स्पर्शनादपि २१
जीवन्मुक्तः स वैज्ञानी शिव एव न संशयः
तस्य दर्शनमात्रेण भुक्तिर्मुक्तिश्च जायते २२
शिवं यः पूजयेन्नित्यं कृत्वा लिंगं तु पार्थिवम्
यावज्जीवनपर्यंतं स याति शिवमन्दिरम् २३
मृडेनाप्रमितान्वर्षाञ्छिवलोकेहि तिष्ठति
सकामः पुनरागत्य राजेन्द्रो भारते भवेत् २४
निष्कामः पूजयेन्नित्यं पार्थिवंलिंगमुत्तमम्
शिवलोके सदा तिष्ठेत्ततः सायुज्यमाप्नुयात् २५
पार्थिवं शिवलिंगं च विप्रो यदि न पूजयेत्

स याति नरकं घोरं शूलप्रोतं सुदारुणम् २६
यथाकथंचिद्विधिना रम्यं लिंगं प्रकारयेत्
पंचसूत्रविधानां च पार्थिवेन विचारयेत् २७
अखण्डं तद्धि कर्तव्यं न विखण्डं प्रकारयेत्
द्विखण्डं तु प्रकुर्वाणो नैव पूजाफलं लभेत् २८
रत्नजं हेमजं लिंगं पारदं स्फाटिकं तथा
पार्थिवं पुष्परागोत्थमखंडं तु प्रकारयेत् २९
अखंडं तु चरं लिंगं द्विखंडमचरं स्मृतम्
खंडाखंडविचारोयं सचराचरयोः स्मृतः 1.19.३०
वेदिका तु महाविद्या लिंगं देवो महेश्वरः
अतो हि स्थावरे लिंगे स्मृता श्रेष्ठादिखंडिता ३१
द्विखंडं स्थावरं लिंगं कर्तव्यं हि विधानतः
अखंडं जंगमं प्रोक्तंश् ऐवसिद्धान्तवेदिभिः ३२
द्विखंडं तु चरां लिंगं कुर्वन्त्यज्ञानमोहिताः
नैव सिद्धान्तवेत्तारो मुनयः शास्त्रकोविदाः ३३
अखंडं स्थावरं लिंगं द्विखंडं चरमेव च
येकुर्वन्तिनरामूढानपूजाफलभागिनः ३४
तस्माच्छास्त्रोक्तविधिना अखंडं चरसंज्ञकम्
द्विखंडं स्थावरं लिंगं कर्तव्यं परया मुदा ३५
अखंडे तु चरे पूजा सम्पूर्णफलदायिनी
द्विखंडे तु चरे पूजामहाहानिप्रदा स्मृता ३६
अखंडे स्थावरे पूजा न कामफलदायिनी
प्रत्यवायकरी नित्यमित्युक्तं शास्त्रवेदिभिः ३७
इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां साध्यसाधनखंडे पार्थिवशिवलिंगपूजनमाहात्म्यवर्णनं नामैकोनविंशोऽध्यायः १९

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः २०



सूत उवाच

अथ वैदिकभक्तानां पार्थिवार्चा निगद्यते

वैदिकेनैव मार्गेण भुक्तिमुक्तिप्रदायिनी १

सूत्रोक्तविधिना स्नात्वा संध्यां कृत्वा यथाविधि

ब्रह्मयज्ञं विधायादौ ततस्तर्प्पणमाचरेत् २

नैत्यिकं सकलं कामं विधायानंतरं पुमान्

शिवस्मरणपूर्वं हि भस्मरुद्राक्षधारकः ३

वेदोक्ताविधिना सम्यक्संपूर्णफलसिद्धये

पूजयेत्परया भक्त्या पार्थिवं लिंगमुत्तमम् ४

नदीतीरे तडागे च पर्वते काननेऽपि च

शिवालये शुचौ देशे पार्थिवार्चा विधीयते ५

शुद्धप्रदेशसंभूतां मृदमाहृत्य यत्नतः

शिवलिंगं प्रकल्पेत सावधानतया द्विजाः ६

विप्रे गौरा स्मृता शोणा बाहुजे पीतवर्णका

वैश्ये कृष्णा पादजाते ह्यथवा यत्र या भवेत् ७

संगृह्य मृत्तिकां लिंगनिर्माणार्थं प्रयत्नतः

अतीव शुभदेशे च स्थापयेत्तां मृदं शुभाम् ८

संशोध्य च जलेनापि पिंडीकृत्य शनैः शनैः

विधीयेत शुभं लिंगं पार्थिवं वेदमार्गतः ९

ततः संपूजयेद्भक्त्या भुक्तिमुक्तिफलाप्तये

तत्प्रकारमहं वच्मि शृणुध्वं संविधानतः 1.20.१०

नमः शिवाय मंत्रेणार्चनद्र व्यं च प्रोक्षयेत्

भूरसीति च मंत्रेण क्षेत्रसिद्धिं प्रकारयेत् ११

आपोस्मानिति मंत्रेण जलसंस्कारमाचरेत्

नमस्ते रुद्र मंत्रेण फाटिकाबंधमुच्यते १२

शंभवायेति मंत्रेण क्षेत्रशुद्धिं प्रकारयेत्
नमः पूर्वेण कुर्यात्पंचामृतस्यापि प्रोक्षणम् १३
नीलग्रीवाय मंत्रेण नमःपूर्वेण भक्तिमान्
चरेच्छंकरलिंगस्य प्रतिष्ठापनमुत्तमम् १४
भक्तितस्तत एतत्ते रुद्रा येति च मंत्रतः
आसनं रमणीयं वै दद्याद्वैदिकमार्गकृत् १५
मानो महन्तमिति च मंत्रेणावाहनं चरेत्
याते रुद्रे ण मंत्रेण संचरेदुपवेशनम् १६
मंत्रेण यामिषुमिति न्यासं कुर्य्याच्छिवस्य च
अध्यवोचदिति प्रेम्णाधिवासं मनुनाचरेत् १७
मनुना सौजीव इति देवतान्यासमाचरेत्
असौ योवसर्पतीति चाचरेदपसर्पणम् १८
नमोस्तु नीलग्रीवायेति पाद्यं मनुनाहरेत्
अर्घ्यं च रुद्र गायत्र्! याऽचमनं त्र्! यंबकेण च १९
पयः पृथिव्यामिति च पयसा स्नानमाचरेत्
दधिक्राव्णेतिमंत्रेण दधिस्नानं च कारयेत् 1.20.२०
घृटं स्नाने खलु घृतं घृतं यावेति मंत्रतः
मधुवाता मधुनक्तं मधुमान्न इति त्र्! यृचा २१
मधुखंडस्नपनं प्रोक्तमिति पंचामृतं स्मृतम्
अथवा पाद्यमंत्रेण स्नानं पंचामृतेन च २२
मानस्तोके इति प्रेम्णा मंत्रेण कटिबंधनम्
नमो धृष्णवे इति वा उत्तरीयं च धापयेत् २३
या ते हेतिरिति प्रेम्णा ऋक्चतुष्केण वैदिकः
शिवाय विधिना भक्तश्चरेद्वस्त्रसमर्पणम् २४
नमः श्वभ्य इति प्रेम्णा गंधं दद्यादृचा सुधीः
नमस्तक्षभ्य इति चाक्षतान्मंत्रेण चार्पयेत् २५
नमः पार्याय इति वा पुष्प मंत्रेण चार्पयेत्
नमः पर्ण्याय इति वा बिल्बपत्रसमर्पणम् २६

नमः कपर्दिने चेति धूपं दद्याद्यथाविधि
दीपं दद्याद्यथोक्तं तु नम आशव इत्यृचा २७
नमो ज्येष्ठाय मंत्रेण दद्यान्नैवेद्यमुत्तमम्
मनुना त्र्! यम्बकमिति पुनराचमनं स्मृतम् २८
इमा रुद्रा येति ऋचा कुर्यात्फलसमर्पणम्
नमो व्रज्यायेति ऋचा सकलं शंभवेर्पयेत् २९
मानो महांतमिति च मानस्तोके इति ततः
मंत्रद्वयेनैकदशाक्षतै रुद्रा न्प्रपूजयेत् 1.20.३०
हिरण्यगर्भ इति त्र्! यृचा दक्षिणां हि समर्पयेत्
देवस्य त्वेति मंत्रेण ह्यभिषेकं चरेद्बुधः ३१
दीपमंत्रेण वा शंभोर्नीराजनविधिं चरेत्
पुष्पांजलिं चरेद्भक्त्या इमा रुद्रा य च त्र्! यृचा ३२
मानो महान्तमिति च चरेत्प्राज्ञः प्रदक्षिणाम्
मानस्तोकेति मंत्रेण साष्टाण्गं प्रणमेत्सुधीः ३३
एषते इति मंत्रेण शिवमुद्रा ं! प्रदर्शयेत्
यतोयत इत्यभयां ज्ञानाख्यां त्र्! यंबकेण च ३४
नमःसेनेति मंत्रेण महामुद्रा ं! प्रदर्शयेत्
दर्शयेद्धेनुमुद्रा ं! च नमो गोभ्य ऋचानया ३५
पंचमुद्रा ः! प्रदर्श्याथ शिवमंत्रजपं चरेत्
शतरुद्रि यमंत्रेण जपेद्वेदविचक्षणः ३६
ततः पंचाण्गपाठं च कुर्य्याद्वेदविचक्षणः
देवागात्विति मंत्रेण कुर्याच्छंभोर्विसर्जनम् ३७
इत्युक्तः शिवपूजाया व्यासतो वैदिकोविधिः
समासतश्च शृणुत वैदिकं विधिमुत्तमम् ३८
ऋचा सद्योजातमिति मृदाहरणमाचरेत्
वामदेवाय इति च जलप्रक्षेपमाचरेत् ३९
अघोरेण च मंत्रेण लिंगनिर्माणमाचरेत्
तत्पुरुषाय मंत्रेणाह्वानं कुर्याद्यथाविधि 1.20.४०

संयोजयेद्वेदिकायामीशानमनुना हरम्
अन्यत्सर्वं विधानं च कुर्य्यात्संक्षेपतः सुधीः ४१
पंचाक्षरेण मंत्रेण गुरुदत्तेन वा तथा
कुर्यात्पूजां षोडशोपचारेण विधिवत्सुधीः ४२
भवाय भवनाशाय महादेवाय धीमहि
उग्राय उग्रनाशाय शर्वाय शशिमौलिने ४३
अनेन मनुना वापि पूजयेच्छंकरं सुधीः
सुभक्त्या च भ्रमं त्यक्त्वा भक्त्यैव फलदः शिवः ४४
इत्यपि प्रोक्तमादृत्य वैदिकक्रमपूजनम्
प्रोच्यतेन्यविधिः सम्यक्साधारणतया द्विजः ४५
पूजा पार्थिवलिंगस्य संप्रोक्ता शिवनामभिः
तां शृणुध्वं मुनिश्रेष्ठाः सर्वकामप्रदायिनीम् ४६
हरो महेश्वरः शंभुः शूलपाणिः पिनाकधृक्
शिवः पशुपतिश्चैव महादेव इति क्रमात् ४७
मृदाहरणसंघट्टप्रतिष्ठाह्वानमेव च
स्नपनं पूजनं चैव क्षमस्वेति विसर्जनम् ४८
ॐकारादिचतुर्थ्यंतैर्नमोन्तैर्नामभिः क्रमात्
कर्तव्या च क्रिया सर्वा भक्त्या परमया मुदा ४९
कृत्वा न्यासविधिं सम्यक्षडण्गकरयोस्तथा
षडक्षरेण मंत्रेण ततो ध्यानं समाचरेत् 1.20.५०
कैलासपीठासनमध्यसंस्थं भक्तैः सनंदादिभिरर्च्यमानम्
भक्तार्तिदावानलमप्रमेयं ध्यायेदुमालिंगितविश्वभूषणम् ५१
ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचंद्रा वतंसं रत्नाकल्पोज्ज्वलांगं परशुमृगवराभीतिहस्तं प्रसन्नम्
पद्मासीनं समंतात्स्थितममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्वबीजं निखिलभयहरं पंचवक्त्रं त्रिनेत्रम् ५२
इति ध्यात्वा च संपूज्य पार्थिवं लिंगमुत्तमम्
जपेत्पंचाक्षरं मंत्रं गुरुदत्तं यथाविधि ५३

स्तुतिभिश्चैव देवेशं स्तुवीत प्रणमन्सुधीः
नानाभिधाभिर्विप्रेन्द्रा ः! पठेद्वै शतरुद्रि यम् ५४
ततः साक्षतपुष्पाणि गृहीत्वांजलिना मुदा
प्रार्थयेच्छंकरं भक्त्या मंत्रैरेभिः सुभक्तितः ५५
तावकस्त्वद्गुणप्राणस्त्वच्चित्तोहं सदा मृड
कृपानिध इति ज्ञात्वा भूतनाथ प्रसीद मे ५६
अज्ञानाद्यदि वा ज्ञानाज्जप पूजादिकं मया
कृतं तदस्तु सफलं कृपया तव शंकर ५७
अहं पापी महानद्य पावनश्च भवान्महान्
इति विज्ञाय गौरीश यदिच्छसि तथा कुरु ५८
वेदैः पुराणैः सिद्धान्तैरृषिभिर्विविधैरपि
न ज्ञातोसि महादेव कुतोहं त्वं महाशिव ५९
यथा तथा त्वदीयोस्मि सर्वभावैर्महेश्वर
रक्षणीयस्त्वयाहं वै प्रसीद परमेश्वर 1.20.६०
इत्येवं चाक्षतान्पुष्पानारोप्य च शिवोपरि
प्रणमेद्भक्तितश्शंभुं साष्टांगं विधिवन्मुने ६१
ततः प्रदक्षिणां कुर्याद्यथोक्तविधिना सुधीः
पुनः स्तुवीत देवेशं स्तुतिभिः श्रद्धयान्वितः ६२
ततो गलरवं कृत्वा प्रणमेच्छुचिनम्रधीः
कुर्याद्विज्ञप्तिमादृत्य विसर्जनमथाचरेत् ६३
इत्युक्ता मुनिशार्दूलाः पार्थिवार्चा विधानतः
भुक्तिदा मुक्तिदा चैव शिवभक्तिविवर्धिनी ६४
इत्यध्यायं सुचित्तेन यः पठेच्छृणुयादपि
सर्वपापविशुद्धात्मासर्वान्कामानवाप्नुयात् ६५
आयुरारोग्यदं चैव यशस्यं स्वर्ग्यमेव च
पुत्रपौत्रादिसुखदमाख्यानमिदमुत्तमम् ६६
इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां साध्यसाधनखण्डे पार्थिवशिवलिंगपूजाविधिवर्णनं नाम विंशोऽध्यायः २०

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः २१

https://sa.wikisource.org/s/sqo
< शिवपुराणम् | संहिता १ (विश्वेश्वरसंहिता)

ऋषय ऊचुः

सूत सूत महाभाग व्यासशिष्य नमोस्तु ते

सम्यगुक्तं त्वया तात पार्थिवार्चाविधानकम् १

कामनाभेदमाश्रित्य संख्यां ब्रूहि विधानतः

शिवपार्थिवलिंगानां कृपया दीनवत्सल २

सूत उवाच

शृणुध्वमृषयः सर्वे पार्थिवार्चाविधानकम्

यस्यानुष्ठानमात्रेण कृतकृत्यो भवेन्नरः ३

अकृत्वा पार्थिवं लिंगं योन्यदेवं प्रपूजयेत्

वृथा भवति सा पूजा दमदानादिकं वृथा ४

संख्या पार्थिवलिंगानां यथाकामं निगद्यते

संख्या सद्यो मुनिश्रेष्ठ निश्चयेन फलप्रदा ५

प्रथमावाहनं तत्र प्रतिष्ठा पूजनं पृथक्

लिंगाकारं समं तत्र सर्वं ज्ञेयं पृथक्पृथक् ६

विद्यार्थी पुरुषः प्रीत्या सहस्रमितपार्थिवम्

पूजयेच्छिवलिंगं हि निश्चयात्तत्फलप्रदम् ७

नरः पार्थिवलिंगानां धनार्थी च तदर्द्धकम्

पुत्रार्थी सार्द्धसाहस्रं वस्त्रार्थी शतपंचक्रम् ८

मोक्षार्थी कोटिगुणितं भूकामश्च सहस्रकम्

दयार्थी च त्रिसाहस्रं तीर्थार्थी द्विसहस्रकम् ९

सुहृत्कामी त्रिसाहस्रं वश्यार्थी शतमष्टकम्

मारणार्थी सप्तशतं मोहनार्थी शताष्टकम् 1.21.१०

उच्चाटनपरश्चैव सहस्रं च यथोक्ततः

स्तंभनार्थी सहस्रं तु द्वेषणार्थी तदर्द्धकम् ११

निगडान्मुक्तिकामस्तु सहस्रं सर्द्धमुत्तमम्

महाराजभये पंचशतं ज्ञेयं विचक्षणैः १२

चौरादिसंकटे ज्ञेयं पार्थिवानां शतद्वयम्

डाकिन्यादिभये पंचशतमुक्तं जपार्थिवम् १३

दारिद्र ये! पंचसाहस्रमयुतं सर्वकामदम्

अथ नित्यविधिं वक्ष्ये शृणुध्वं मुनिसत्तमाः १४

एकं पापहरं प्रोक्तं द्विलिंगं चार्थसिद्धिदम्

त्रिलिंगं सर्वकामानां कारणं परमीरितम् १५

उत्तरोत्तरमेवं स्यात्पूर्वोक्तगणनाविधि

मतांतरमथो वक्ष्ये संख्यायां मुनिभेदतः १६

लिंगानामयुतं कृत्वा पार्थिवानां सुबुद्धिमान्

निर्भयो हि भवेन्नूनं महाराजभयं हरेत् १७

कारागृहादिमुक्त्यर्थमयुतं कारयेद्बुधः

डाकिन्यादिभये सप्तसहस्रं कारयेत्तथा १८

सहस्राणि पंचपंचाशदपुत्रः प्रकारयेत्

लिंगानामयुतेनैव कन्यकासंततिं लभेत् १९

लिंगानामयुतेनैव विष्ण्वादैश्वर्यमाप्नुयात्

लिंगानां प्रयुतेनैव ह्यतुलां श्रियमाप्नुयात् 1.21.२०

कोटिमेकां तु लिंगानां यः करोति नरो भुवि

शिव एव भवेत्सोपि नात्र कार्य्या विचारणा २१

अर्चा पार्थिवलिंगानां कोटियज्ञफलप्रदा

भुक्तिदा मुक्तिदा नित्यं ततः कामर्थिनां नृणाम् २२

विना लिंगार्चनं यस्य कालो गच्छति नित्यशः

महाहानिर्भवेत्तस्य दुर्वृत्तस्य दुरात्मनः २३

एकतः सर्वदानानि व्रतानि विविधानि च

तीर्थानि नियमा यज्ञा लिंगार्चा चैकतः स्मृता २४

कलौ लिंगार्चनं श्रेष्ठं तथा लोके प्रदृश्यते

तथा नास्तीति शास्त्राणामेष सिद्धान्तनिश्चयः २५

भुक्तिमुक्तिप्रदं लिंगं विविधापन्निवारणम्

पूजयित्वा नरो नित्यं शिवसायुज्यमाप्नुयात् २६
शिवानाममयं लिंगं नित्यं पूज्यं महर्षिभिः
यतश्च सर्वलिंगेषु तस्मात्पूज्यं विधानतः २७
उत्तमं मध्यमं नीचं त्रिविधं लिंगमीरितम्
मानतो मुनिशार्दूलास्तच्छृणुध्वं वदाम्यहम् २८
चतुरंगुलमुच्छ्रायं रम्यं वेदिकया युतम्
उत्तमं लिंगमाख्यातं मुनिभिः शास्त्रकोविदैः २९
तदर्द्धं मध्यमं प्रोक्तं तदर्द्धमधमं स्मृतम्
इत्थं त्रिविधमाख्यातमुत्तरोत्तरतः परम् 1.21.३०
अनेकलिंगं यो नित्यं भक्तिश्रद्धासमन्वितः
पूजयेत्स लभेत्कामान्मनसा मानसेप्सितान् ३१
न लिंगाराधनादन्यत्पुण्यं वेदचतुष्टये
विद्यते सर्वशास्त्राणामेष एव विनिश्चयः ३२
सर्वमेतत्परित्यज्य कर्मजालमशेषतः
भक्त्या परमया विद्वाँ ल्लिंगमेकं प्रपूजयेत् ३३
लिंगेर्चितेर्चितं सर्वं जगत्स्थावरजंगमम्
संसारांबुधिमग्नानां नान्यत्तारणसाधनम् ३४
अज्ञानतिमिरांधानां विषयासक्तचेतसाम्
प्लवो नान्योस्ति जगति लिंगाराधनमंतरा ३५
हरिब्रह्मादयो देवा मुनयो यक्षराक्षसाः
गंधर्वाश्चरणास्सिद्धा दैतेया दानवास्तथा ३६
नागाः शेषप्रभृतयो गरुडाद्याःखगास्तथा
सप्रजापतयश्चान्ये मनवः किन्नरा नराः ३७
पूजयित्वा महाभक्त्या लिंगं सर्वार्थसिद्धिदम्
प्राप्ताः कामानभीष्टांश्च तांस्तान्सर्वान्हृदि स्थितान् ३८
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा प्रतिलोमजः
पूजयेत्सततं लिंगं तत्तन्मंत्रेण सादरम् ३९
किं बहूक्तेन मुनयः स्त्रीणामपि तथान्यतः

अधिकारोस्ति सर्वेषां शिवलिंगार्चने द्विजाः 1.21.४०
द्विजानां वैदिकेनापि मार्गेणाराधनं वरम्
अन्येषामपि जंतूनां वैदिकेन न संमतम् ४१
वैदिकानां द्विजानां च पूजा वैदिकमार्गतः
कर्तव्यानान्यमार्गेण इत्याह भगवाञ्छिवः ४२
दधीचिगौतमादीनां शापेनादग्धचेतसाम्
द्विजानां जायते श्रद्धानैव वैदिककर्मणि ४३
यो वैदिकमनादृत्य कर्म स्मार्तमथापि वा
अन्यत्समाचरेन्मर्त्यो न संकल्पफलं लभेत् ४४
इत्थं कृत्वार्चनं शंभोर्नैवेद्यांतं विधानतः
पूजयेदष्टमूर्तीश्च तत्रैव त्रिजगन्मयीः ४५
क्षितिरापोनलो वायुराकाशः सूर्य्यसोमकौ
यजमान इति त्वष्टौ मूर्तयः परिकीर्तिताः ४६
शर्वो भवश्च रुद्र श्च उग्रोभीम इतीश्वरः
महादेवः पशुपतिरेतान्मूर्तिभिरर्चयेत् ४७
पूजयेत्परिवारं च ततः शंभोः सुभक्तितः
ईशानादिक्रमात्तत्र चंदनाक्षतपत्रकैः ४८
ईशानं नंदिनं चंडं महाकालं च भृंगिणम्
वृषं स्कंदं कपर्दीशं सोमं शुक्रं च तत्क्रमात् ४९
अग्रतो वीरभद्रं च पृष्ठे कीर्तिमुखं तथा
तत एकादशान्रुद्रा न्पूजयेद्विधिना ततः 1.21.५०
ततः पंचाक्षरं जप्त्वा शतरुद्रि यमेव च
स्तुतीर्नानाविधाः कृत्वा पंचांगपठनं तथा ५१
ततः प्रदक्षिणां कृत्वा नत्वा लिंगं विसर्जयेत्
इति प्रोक्तमशेषं च शिवपूजनमादरात् ५२
रात्रावुदण्मुखः कुर्याद्देवकार्यं सदैव हि
शिवार्चनं सदाप्येवं शुचिः कुर्यादुदण्मुखः ५३
न प्राचीमग्रतः शंभोर्नोदीचीं शक्तिसंहितान्

न प्रतीचीं यतः पृष्ठमतो ग्राह्यं समाश्रयेत् ५४

विना भस्मत्रिपुंड्रेण विना रुद्रा क्षमालया

बिल्वपत्रं विना नैव पूजयेच्छंकरं बुधः ५५

भस्माप्राप्तौ मुनिश्रेष्ठाः प्रवृत्ते शिवपूजने

तस्मान्मृदापि कर्तव्यं ललाटे च त्रिपुंड्रकम् ५६

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां साध्यसाधनखण्डे पार्थिवपूजनवर्णनं नामैकविंशोऽध्यायः २१

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः २२

https://sa.wikisource.org/s/sqp

< शिवपुराणम् | संहिता १ (विश्वेश्वरसंहिता)

ऋषयः ऊचुः

अग्राह्यं शिवनैवेद्यमिति पूर्वं श्रुतं वचः

ब्रूहि तन्निर्णयं बिल्वमाहात्म्यमपि सन्मुने १

सूत उवाच

शृणुध्वं मुनयः सर्वे सावधानतयाधुना

सर्वं वदामि संप्रीत्या धन्या यूयं शिवव्रताः २

शिवभक्तः शुचिः शुद्धः सद्व्रतीदृढनिश्चयः

भक्षयेच्छिवनैवेद्यं त्यजेदग्राह्यभावनाम् ३

दृष्ट्वापि शिवनैवेद्ये यांति पापानि दूरतः

भक्ते तु शिवनैवेद्ये पुण्यान्या यांति कोटिशः ४

अलं यागसहस्रेणाप्यलं यागार्बुदैरपि

भक्षिते शिवनैवेद्ये शिवसायुज्यमाप्नुयात् ५

यद्गृहे शिवनैवेद्यप्रचारोपि प्रजायते

तद्गृहं पावनं सर्वमन्यपावनकारणम् ६

आगतं शिवनैवेद्यं गृहीत्वा शिरसा मुदा

भक्षणीयं प्रयत्नेन शिवस्मरणपूर्वकम् ७

आगतं शिवनैवेद्यमन्यदा ग्राह्यमित्यपि

विलंबे पापसंबंधो भवत्येव हि मानवे ८

न यस्य शिवनैवेद्यग्रहणेच्छा प्रजायते

स पापिष्ठो गरिष्ठः स्यान्नरकं यात्यपि ध्रुवम् ९

हृदये चन्द्र कान्ते च स्वर्णरूप्यादिनिर्मिते

शिवदीक्षावता भक्तेनेदं भक्ष्यमितीर्य्यते 1.22.१०

शिवदीक्षान्वितो भक्तो महाप्रसादसंज्ञकम्

सर्वेषामपि लिंगानां नैवेद्यं भक्षयेच्छुभम् ११

अन्यदीक्षायुजां नृणां शिवभक्तिरतात्मनाम्

शृणुध्वं निर्णयं प्रीत्या शिवनैवेद्यभक्षणे १२
शालग्रामोद्भवे लिंगे रसलिंगे तथा द्विजाः
पाषाणे राजते स्वर्णे सुरसिद्धप्रतिष्ठिते १३
काश्मीरे स्फाटिके रात्ने ज्योतिर्लिंगेषु सर्वशः
चान्द्रायणसमं प्रोक्तं शंभोर्नैवेद्यभक्षणम् १४
ब्रह्महापि शुचिर्भूत्वा निर्माल्यं यस्तु धारयेत्
भक्षयित्वा द्रुतं तस्य सर्वपापं प्रणश्यति १५
चंडाधिकारो यत्रास्ति तद्भोक्तव्यं न मानवैः
चंडाधिकारो नो यत्र भोक्तव्यं तच्च भक्तितः १६
बाणलिंगे च लौहे च सिद्धे लिंगे स्वयंभुवि
प्रतिमासु च सर्वासु न चंडोधिकृतो भवेत् १७
स्नापयित्वा विधानेन यो लिंगस्नापनोदकम्
त्रिःपिबेत्त्रिविधं पापं तस्येहाशु विनश्यति १८
अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं जलम्
शालग्रामशिलासंगात्सर्वं याति पवित्रिताम् १९
लिंगोपरि च यद्द्रव्यं तदग्राह्यं मुनीश्वराः
सुपवित्रं च तज्ज्ञेयं यल्लिंगस्पर्शबाह्यतः 1.22.२०
नैवेद्यनिर्णयः प्रोक्तं इत्थं वो मुनिसत्तमाः
शृणुध्वं बिल्वमाहात्म्यं सावधानतयाऽदरात् २१
महादेवस्वरूपोयं बिल्वो देवैरपि स्तुतिः
यथाकथंचिदेतस्य महिमा ज्ञायते कथम् २२
पुण्यतीर्थानि यावंति लोकेषु प्रथितान्यपि
तानि सर्वाणि तीर्थानिबिल्वमूलेव संति हि २३
बिल्वमूले महादेवं लिंगरूपिणमव्ययम्
यः पूजयति पुण्यात्मा स शिवं प्राप्नुयाद्ध्रुवम् २४
बिल्वमूले जलैर्यस्तु मूर्द्धानमभिषिंचति
स सर्वतीर्थस्नातः स्यात्स एव भुवि पावनः २५
एतस्य बिल्वमूलस्याथालवालमनुत्तमम्

जलाकुलं महादेवो दृष्ट्वा तुष्टोभवत्यलम् २६
पूजयेद्बिल्वमूलं यो गंधपुष्पादिभिर्नरः
शिवलोकमवाप्नोति संततिर्वर्द्धते सुखम् २७
बिल्वमूले दीपमालां यः कल्पयति सादरम्
स तत्त्वज्ञानसंपन्नो महेशांतर्गतो भवेत् २८
बिल्वशाखां समादाय हस्तेन नवपल्लवम्
गृहीत्वा पूजयेद्बिल्वं स च पापैः प्रमुच्यते २९
बिल्वमूले शिवरतं भोजयेद्यस्तु भक्तितः
एकं वा कोटिगुणितं तस्य पुण्यं प्रजायते 1.22.३०
बिल्वमूले क्षीरमुक्तमन्नमाज्येन संयुतम्
यो दद्याच्छिवभक्ताय स दरिद्रो न जायते ३१
सांगोपांगमिति प्रोक्तं शिवलिंगप्रपूजनम्
प्रवृत्तानां निवृत्तानां भेदतो द्विविधं द्विजाः ३२
प्रवृत्तानां पीठपूजां सर्वपूजां समाचरेत्
अभिषेकान्ते नैवेद्यं शाल्यन्नेन समाचरेत्
पूजान्ते स्थापयेल्लिंगं पुटे शुद्धे पृथग्गृहे ३४
करपूजानिवृत्तानां स्वभोज्यं तु निवेदयेत्
निवृत्तानां परं सूक्ष्मं लिंगमेव विशिष्यते ३५
विभूत्यभ्यर्चनं कुर्याद्विभूतिं च निवेदयेत्
पूजां कृत्वा तथा लिंगं शिरसाधारयेत्सदा ३६
इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां साध्यसाधनखण्डे शिवनैवेद्यवर्णनोनामद्वाविंशोऽध्यायः २२

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः २३

https://sa.wikisource.org/s/sqq



ऋषय ऊचुः

सूत सूत महाभाग व्यासशिष्य नमोस्तु ते

तदेव व्यासतो ब्रूहि भस्ममाहात्म्यमुत्तमम् १

तथा रुद्रा क्षमाहात्म्यं नाम माहात्म्यमुत्तमम्

त्रितयं ब्रूहि सुप्रीत्या ममानंदयचेतसम् २

सूत उवाच

साधुपृष्टं भवद्भिश्च लोकानां हितकारकम्

भवंतो वै महाधन्याः पवित्राः कुलभूषणाः ३

येषां चैव शिवः साक्षाद्दैवतं परमं शुभम्

सदा शिवकथा लोके वल्लभा भवतां सदा ४

ते धन्याश्च कृतार्थाश्च सफलं देहधारणम्

उद्धृतञ्च कुलं तेषां ये शिवं समुपासते ५

मुखे यस्य शिवनाम सदाशिवशिवेति च

पापानि न स्पृशंत्येव खदिरांगारंकयथा ६

श्रीशिवाय नमस्तुभ्यं मुखं व्याहरते यदा

तन्मुखं पावनं तीर्थं सर्वपापविनाशनम् ७

तन्मुखञ्च तथा यो वै पश्यतिप्रीतिमान्नरः

तीर्थजन्यं फलं तस्य भवतीति सुनिश्चितम् ८

यत्र त्रयं सदा तिष्ठेदेतच्छुभतरं द्विजा

तस्य दर्शनमात्रेण वेणीस्नानफलंलभेत् ९

शिवनामविभूतिश्च तथा रुद्रा क्ष एव च

एतत्त्रयं महापुण्यं त्रिवेणीसदृशं स्मृतम् 1.23.१०

एतत्त्रयं शरीरे च यस्य तिष्ठति नित्यशः

तस्यैव दर्शनं लोके दुर्लभं पापहारकम् ११

तद्दर्शनं यथा वेणी नोभयोरंतरं मनाक्

एवं योनविजानाति सपापिष्ठो न संशयः १२
विभूतिर्यस्य नो भाले नांगे रुद्रा क्षधारणम्
नास्ये शिवमयी वाणी तं त्यजेदधमं यथा १३
शैवं नाम यथा गंगा विभूतिर्यमुना मता
रुद्रा क्षं विधिना प्रोक्ता सर्वपापाविनाशिनी १४
शरीरे च त्रयं यस्य तत्फलं चैकतः स्थितम्
एकतो वेणिकायाश्च स्नानजंतुफलं बुधैः १५
तदेवं तुलितं पूर्वं ब्रह्मणाहितकारिणा
समानं चैव तज्जातं तस्माद्धार्यं सदा बुधैः १६
तद्दिनं हि समारभ्य ब्रह्मविष्ण्वादिभिः सरैः
धार्यते त्रितयं तच्च दर्शनात्पापहारकम् १७
ऋष्य ऊचुः
ईदृशं हि फलं प्रोक्तं नामादित्रितयोद्भवम्
तन्माहात्म्यं विशेषेण वक्तुमर्हसि सुव्रत १८
सूत उवाच
ऋषयो हि महाप्राज्ञाः सच्छैवा ज्ञानिनां वराः
तन्माहात्म्यं हि सद्भक्त्या शृणुतादरतो द्विजाः १९
सुगूढमपि शास्त्रेषु पुराणेषु श्रुतिष्वपि
भवत्स्नेहान्मया विप्राः प्रकाशः क्रियतेऽधुना 1.23.२०
कस्तत्त्रितयमाहात्म्यं संजानाति द्विजोत्तमाः
महेश्वरं विना सर्वं ब्रह्माण्डे सदसत्परम् २१
वच्म्यहं नाम माहात्म्यं यथाभक्ति समासतः
शृणुत प्रीतितो विप्राः सर्वपापहरं परम् २२
शिवेति नामदावाग्नेर्महापातकपर्वताः
भस्मीभवंत्यनायासात्सत्यंसत्यं न संशयः २३
पापमूलानि दुःखानि विविधान्यपि शौनक
शिवनामैकनश्यानि नान्यनश्यानि सर्वथा २४
स वैदिकः स पुण्यात्मा स धन्यस्स बुधो मतः

शिवनामजपासक्तो यो नित्यं भुवि मानव २५
भवंति विविधा धर्मास्तेषां सद्यः फलोन्मुखाः
येषां भवति विश्वासः शिवनामजपे मुने २६
पातकानि विनश्यंति यावंति शिवनामतः
भुवि तावंति पापानि क्रियंते न नरैर्मुने २७
ब्रह्महत्यादिपापानां राशीनप्रमितान्मुने
शिवनाम द्रुतं प्रोक्तं नाशयत्यखिलान्नरैः २८
शिवनामतरीं प्राप्य संसाराब्धिं तरंति ये
संसारमूलपापानि तानि नश्यंत्यसंशयम् २९
संसारमूलभूतानां पातकानां महामुने
शिवनामकुठारेण विनाशो जायते ध्रुवम् 1.23.३०
शिवनामामृतं पेयं पापदावानलार्दितैः
पापदावाग्नितप्तानां शांतिस्तेन विना न हि ३१
शिवेति नामपीयूषवर्षधारापरिप्लुताः
संसारदवमध्येपि न शोचंति कदाचन ३२
शिवनाम्नि महद्भक्तिर्जाता येषां महात्मनाम्
तद्विधानां तु सहसा मुक्तिर्भवति सर्वथा ३३
अनेकजन्मभिर्येन तपस्तप्तं मुनीश्वर
शिवनाम्नि भवेद्भक्तिः सर्वपापापहारिणी ३४
यस्या साधारणं शंभुनाम्नि भक्तिरखंडिता
तस्यैव मोक्षः सुलभो नान्यस्येति मतिर्मम ३५
कृत्वाप्यनेकपापानि शिवनामजपादरः
सर्वपापविनिर्मुक्तो भवत्येव न संशयः ३६
भवंति भस्मसाद्वृक्षा दवदग्धा यथा वने
तथा तावंति दग्धानि पापानि शिवनामतः ३७
यो नित्यं भस्मपूतांगः शिवनामजपादरः
संतरत्येव संसारं सघोरमपि शौनक ३८
ब्रह्मस्वहरणं कृत्वा हत्वापि ब्राह्मणान्बहून्

न लिप्यते नरः पापैः शिवनामजपादरः ३९
विलोक्य वेदानखिलाञ्छिवनामजपः परम्
संसारतारणोपाय इति पूर्वैर्विनिश्चितः 1.23.४०
किं बहूक्त्या मुनिश्रेष्ठाः श्लोकेनैकेन वच्म्यहम्
शिवनाम्नो महिमानं सर्वपापापहारिणम् ४१
पापानां हरणे शंभोर्नामः शक्तिर्हि पावनी
शक्नोति पातकं तावत्कर्तुं नापि नरः क्वचित् ४२
शिवनामप्रभावेण लेभे सद्गतिमुत्तमाम्
इन्द्र द्युम्ननृपः पूर्वं महापापः पुरामुने ४३
तथा काचिद्द्विजायोषा सौ मुने बहुपापिनी
शिवनामप्रभावेण लेभे सद्गतिमुत्तमाम् ४४
इत्युक्तं वो द्विजश्रेष्ठा नाममाहात्म्यमुत्तमम्
शृणुध्वं भस्ममाहात्म्यं सर्वपावनपावनम् ४५
इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां साध्यसाधनखंडेशिवनममाहात्म्यवर्णनोनामत्रयोविंशोऽध्यायः २३

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः २४

https://sa.wikisource.org/s/sqr

< शिवपुराणम् | संहिता १ (विश्वेश्वरसंहिता)

सूत उवाच

द्विविधं भस्म संप्रोक्तं सर्वमंगलदं परम्

तत्प्रकारमहं वक्ष्ये सावधानतया शृणु १

एकं ज्ञेयं महाभस्म द्वितीयं स्वल्पसंज्ञकम्

महाभस्म इति प्रोक्तं भस्म नानाविधं परम् २

तद्भस्म त्रिविधं प्रोक्तं श्रोतं स्मार्तं च लौकिकम्

भस्मैव स्वल्पसंज्ञं हि बहुधा परिकीर्तितम् ३

श्रौतं भस्म तथा स्मार्तं द्विजानामेव कीर्तितम्

अन्येषामपि सर्वेषामपरं भस्म लौकिकम् ४

धारणं मंत्रतः प्रोक्तं द्विजानां मुनिपुंगवैः

केवलं धारणं ज्ञेयमन्येषां मंत्रवर्जितम् ५

आग्नेयमुच्यते भस्म दग्धगोमयसंभवम्

तदापि द्र व्यमित्युक्तं त्रिपुंड्रस्य महामुने ६

अग्निहोत्रोत्थितं भस्मसंग्राह्यं वा मनीषिभिः

अन्ययज्ञोत्थितं वापि त्रिपुण्ड्रस्य च धारणे ७

अग्निरित्यादिभिर्मंत्रैर्जाबालोपनिषद्गतेः

सप्तभिधूलनं कार्यं भस्मना सजलेन च ८

वर्णानामाश्रमाणां च मंत्रतो मंत्रतोपि च

त्रिपुंड्रोद्धूलनं प्रोक्तजाबालैरादरेण च ९

भस्मनोद्धूलनं चैव यथा तिर्यक्!त्रिपुंड्रकम्

प्रमादादपि मोक्षार्थी न त्यजेदिति विश्रुतिः 1.24.१०

शिवेन विष्णुना चैव तथा तिर्यक्!त्रिपुंड्रकम्

उमादेवी च लक्ष्मींश्च वाचान्याभिश्च नित्यशः ११

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रै रपि च संस्करैः

अपभ्रंशैर्धृतं भस्मत्रिपुंड्रोद्धूलनात्मना १२

उद्धूलनं त्रिपुंड्रं च श्रद्धया नाचरंति ये
तेषां नास्ति समाचारो वर्णाश्रमसमन्वितः १३
उद्धूलनं त्रिपुंड्रं च श्रद्धया नाचरंति ये
तेषां नास्ति विनिर्मुक्तिस्संसाराज्जन्मकोटिभिः १४
उद्धूलनं त्रिपुंड्रं च श्रद्धया नाचरन्ति ये
तेषां नास्ति शिवज्ञानं कल्पकोटिशतैरपि १५
उद्धूलनं त्रिपुंड्रं च श्रद्धया नाचरन्ति ये
ते महापातकैर्युक्ता इति शास्त्रीयनिर्णयः १६
उद्धूलनं त्रिपुंड्रं च श्रद्धया नाचरन्ति ये
तेषामाचरितं सर्वं विपरीतफलाय हि १७
महापातकयुक्तानां जंतूनां शर्वविद्विषाम्
त्रिपुंड्रोद्धूलनद्वेषो जायते सुदृढं मुने १८
शिवाग्निकार्यं यः कृत्वा कुर्यात्त्रियायुषात्मवित्
मुच्यते सर्वपापैस्तु स्पृष्टेन भस्मना नरः १९
सितेन भस्मना कुर्य्यात्त्रिसन्ध्यं यस्त्रिपुण्ड्रकम्
सर्वपापविनिर्मुक्तः शिवेन सह मोदते 1.24.२०
सितेन भस्मना कुर्याल्लाटे तु त्रिपुण्ड्रकम्
यो सावनादिभूतान्हि लोकानाप्तो मृतो भवेत् २१
अकृत्वा भस्मना स्नानं न जपेद्वै षडक्षरम्
त्रिपुंड्रं च रचित्वा तु विधिना भस्मना जपेत् २२
अदयो वाधमो वापि सर्वपापान्वितोपि वा
उषःपापान्वितो वापि मूर्खो वा पतितोपि वा २३
यस्मिन्देशेव सेन्नित्यं भूतिशासनसंयुतः
सर्वतीर्थैश्च क्रतुभिः सांनिध्यं क्रियते सदा २४
त्रिपुंड्रसहितो जीवः पूज्यः सर्वैः सुरासुरैः
पापान्वितोपि शुद्धात्मा किं पुनः श्रद्धया युतः २५
यस्मिन्देशे शिवज्ञानी भूतिशासनसंयुतः
गतो यदृच्छयाद्यापि तस्मिस्तीर्थाः समागताः २६

बहुनात्र किमुक्तेन धार्यं भस्म सदा बुधैः
लिंगार्चनं सदा कार्यं जप्यो मंत्रः षडक्षरः २७
ब्रह्मणा विष्णुना वापि रुद्रे ण मुनिभिः सुरैः
भस्मधारणमाहात्म्यं न शक्यं परिभाषितुम् २८
इति वर्णाश्रमाचारो लुप्तवर्णक्रियोपि च
पापात्सकृत्त्रिपुंड्रस्य धारणात्सोपि मुच्यते २९
ये भस्मधारिणं त्यक्त्वा कर्म कुर्वंति मानवाः
तेषां नास्ति विनिर्मोक्षः संसाराज्जन्मकोटिभिः 1.24.३०
ते नाधीतं गुरोः सर्वं ते न सर्वमनुष्ठितम्
येन विप्रेण शिरसि त्रिपुंड्रं भस्मना कृतम् ३१
ये भस्मधारिणं दृष्ट्वा नराः कुर्वंति ताडनम्
तेषां चंडालतो जन्म ब्रह्मन्नूह्यं विपश्चिता ३२
मानस्तोकेन मंत्रेण मंत्रितं भस्म धारयेत्
ब्राह्मणः क्षत्रियश्चैव प्रोक्तेष्वंगेषु भक्तिमान् ३३
वैश्यस्त्रियं बकेनैव शूद्र ः! पंचाक्षरेण तु
अन्यासां विधवास्त्रीणां विधिः प्रोक्तश्च शूद्र वत् ३४
पंचब्रह्मादिमनुभिर्गृहस्थस्य विधीयते
त्रियंबकेन मनुना विधिर्वै ब्रह्मचारिणः ३५
अघोरेणाथ मनुना विपिनस्थविधिः स्मृतः
यतिस्तु प्रणवेनैव त्रिपुंड्रादीनि कारयेत् ३६
अतिवर्णाश्रमी नित्यं शिवोहं भावनात्परात्
शिवयोगी च नियतमीशानेनापि धारयेत् ३७
न त्याज्यं सर्ववर्णैश्च भस्मधारणमुत्तमम्
अन्यैरपि यथाजीवैस्सदेति शिवशासनम् ३८
भस्मस्नानेन यावंतः कणाः स्वाण्गे प्रतिष्ठिताः
तावंति शिवलिंगानि तनौ धत्ते हि धारकः ३९
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा श्चापि च संकराः
स्त्रियोथ विधवा बालाः प्राप्ताः पाखंडिकास्तथा 1.24.४०

ब्रह्मचारी गृही वन्यः संन्यासी वा व्रती तथा
नार्यो भस्म त्रिपुंड्रांका मुक्ता एव न संशयः ४१
ज्ञानाज्ञानधृतो वापि वह्निदाहसमो यथा
ज्ञानाज्ञानधृतं भस्म पावयेत्सकलं नरम् ४२
नाश्नीयाज्जलमन्नमल्पमपि वा भस्माक्षधृत्या विना
भुक्त्वावाथ गृही वनीपतियतिर्वर्णी तथा संकरः
एनोभुण्नरकं प्रयाति सत दागायत्रिजापेन तद्वर्णानां तु यतेस्तु मुख्यप्रणवाजपेन मुक्तंभवेत् ४३
त्रिपुंड्रं ये विनिंदंति निन्दन्ति शिवमेव ते
धारयंति च ये भक्त्या धारयन्ति तमेव ते ४४
धिग्भस्मरहितं भालं धिग्ग्राममशिवालयम्
धिगनीशार्चनं जन्म धिग्विद्यामशिवाश्रयाम् ४५
ये निंदंति महेश्वरं त्रिजगतामाधारभूतं हरं ये निन्दंति त्रिपुंड्रधारणकरं दोषस्तु तद्दर्शने
ते वै संकरसूकरासुरखरश्वक्रोष्टुकीटोपमा जाता एव भवंति पापपरमास्तेनारकाः केवलम् ४६
ते दृष्ट्वा शशिभास्करौ निशि दिने स्वप्नेपि नो केवलं पश्यंतु श्रुतिरुद्र सूक्तजपतो मुच्येत तेनादृताः
सत्संभाषणतो भवेद्धि नरकं निस्तारवानास्थितं ये भस्मादिविधारणं हि पुरुषं निंदंति मंदा हि ते ४७
न तांत्रिकस्त्वधिकृतो नोर्द्ध्वपुंड्रधरो मुने
संतप्तचक्रचिह्नोत्र शिवयज्ञे बहिष्कृतः ४८
तत्रैते बहवो लोका बृहज्जाबालचोदिताः
ते विचार्याः प्रयत्नेन ततो भस्मरतो भवेत् ४९
यच्चंदनैश्चंदनकेपि मिश्रं धार्यं हि भस्मैव त्रिपुंड्रभस्मना
विभूतिभालोपरि किंचनापि धार्यं सदा नो यदि संतिबुद्धयः 1.24.५०
स्त्रीभिस्त्रिपुण्ड्रमलकावधि धारणीयं भस्म द्विजादिभिरथो विधवाभिरेवम्
तद्वत्सदाश्रमवतां विशदाविभूतिर्धार्यापवर्गफलदा सकलाघहन्त्री ५१
त्रिपुण्ड्रं कुरुते यस्तु भस्मना विधिपूर्वकम्
महापातकसंघातैर्मुच्यते चोपपातकैः ५२
ब्रह्मचारी गृहस्थो वा वानप्रस्थोथ वा यतिः
ब्रह्मक्षत्त्राश्च विट्शूद्रा स्तथान्ये पतिताधमाः ५३
उद्धूलनं त्रिपुंड्रं च धृत्वा शुद्धा भवंति च

भस्मनो विधिना सम्यक्पापराशिं विहाय च ५४
भस्मधारी विशेषेण स्त्रीगोहत्यादिपातकैः
वीरहत्याश्वहत्याभ्यां मुच्यते नात्र संशयः ५५
परद्र व्यापहरणं परदाराभिमर्शनम्
परनिन्दा परक्षेत्रहरणं परपीडनम् ५६
सस्यारामादिहरणं गृहदाहादिकर्म च
गोहिरण्यमहिष्यादितिलकम्बलवाससाम् ५७
अन्नधान्यजलादीनां नीचेभ्यश्च परिग्रहः
दशवेश्यामतंगीषु वृषलीषु नटीषु च ५८
रजस्वलासु कन्यासु विधवासु च मैथुनम्
मांसचर्मरसादीनां लवणस्य च विक्रयः ५९
पैशुन्यं कूटवादश्च साक्षिमिथ्याभिलाषिणाम्
एवमादीन्यसंख्यानि पापानि विविधानि च
सद्य एव विनश्यंति त्रिपुंड्रस्य च धारणात् 1.24.६०
शिवद्र व्यापहरणं शिवनिंदा च कुत्रचित्
निंदा च शिवभक्तानां प्रायश्चित्तैर्न शुद्ध्यति ६१
रुद्रा क्षं यस्य गात्रेषु ललाटे तु त्रिपंड्रकम्
सचांडालोपि संपूज्यस्सर्ववर्णोत्तमोत्तमः ६२
यानि तीर्थानि लोकेस्मिन्गंगाद्यास्सरितश्च याः
स्नातो भवति सर्वत्र ललाटे यस्त्रिपुंड्रकम् ६३
सप्तकोटि महामंत्राः पंचाक्षरपुरस्सराः
तथान्ये कोटिशो मंत्राः शैवकैवल्यहेतवः ६४
अन्ये मंत्राश्च देवानां सर्वसौख्यकरा मुने
ते सर्वे तस्य वश्याः स्युर्यो बिभर्ति त्रिपुंड्रकम् ६५
सहस्रं पूर्वजातानां सहस्रं जनयिष्यताम्
स्ववंशजानां ज्ञातीनामुद्धरेद्यस्त्रिपुंड्रकृत् ६६
इह भुक्त्वा खिलान्भोगान्दीर्घायुर्व्याधिवर्जितः
जीवितांते च मरणं सुखेनैव प्रपद्यते ६७

अष्टैश्वर्यगुणोपेतं प्राप्य दिव्यवपुः शिवम्
दिव्यं विमानमारुह्य दिव्यत्रिदशसेवितम् ६८
विद्याधराणां सर्वेषां गंधर्वाणां महौजसाम्
इंद्रा दिलोकपालानां लोकेषु च यथाक्रमम् ६९
भुक्त्वा भोगान्सुविपुलान्प्रजेशानां पदेषु च
ब्रह्मणः पदमासाद्य तत्र कन्याशतं रमेत् 1.24.७०
तत्र ब्रह्मायुषो मानं भुक्त्वा भोगाननेकशः
विष्णोर्लोके लभेद्भोगं यावद्ब्रह्मशतात्ययः ७१
शिवलोकं ततः प्राप्य लब्ध्वेष्टं काममक्षयम्
शिवसायुज्यमाप्नोति संशयो नात्र जायते ७२
सर्वोपनिषदां सारं समालोक्य मुहुर्मुहुः
इदमेव हि निर्णीतं परं श्रेयस्त्रिपुंड्रकम् ७३
विभूतिं निंदते यो वै ब्राह्मणः सोन्यजातकः
याति च नरके घोरे यावद्ब्रह्मा चतुर्मुखः ७४
श्राद्धे यज्ञे जपे होमे वैश्वदेवे सुरार्चने
धृतत्रिपुंड्रः पूतात्मा मृत्युं जयति मानवः ७५
जलस्नानं मलत्यागे भस्मस्नानं सदा शुचि
मंत्रस्नानं हरेत्पापं ज्ञानस्नाने परं पदम् ७६
सर्वतीर्थेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम्
तत्फलं समवाप्नोति भस्मस्नानकरो नरः ७७
भस्मस्नानं परं तीर्थं गंगास्नानं दिने दिने
भस्मरूपी शिवः साक्षाद्भस्म त्रैलोक्यपावनम् ७८
न तदूनं न तद्ध्यानं न तद्दानं जपो न सः
त्रिपुंड्रेण विनायेन विप्रेण यदनुष्ठितम् ७९
वानप्रस्थस्य कन्यानां दीक्षाहीननृणां तथा
मध्याह्नात्प्राग्जलैर्युक्तं परतो जलवर्जितम् 1.24.८०
एवं त्रिपुंड्रं यः कुर्य्यान्नित्यं नियतमानसः
शिवभक्तः सविज्ञेयो भुक्तिं मुक्तिं च विंदति ८१

यस्यांगेनैव रुद्रा क्ष एकोपि बहुपुण्यदः
तस्य जन्मनिरर्थं स्यात्त्रिपुंड्ररहितो यदि ८२
एवं त्रिपुंड्रमाहात्म्यं समासात्कथितं मया
रहस्यं सर्वजंतूनां गोपनीयमिदं त्वया ८३
तिस्रो रेखा भवंत्येव स्थानेषु मुनिपुंगवाः
ललाटादिषु सर्वेषु यथोक्तेषु बुधैर्मुने ८४
भ्रुवोर्मध्यं समारभ्य यावदंतो भवेद्भ्रुवोः
तावत्प्रमाणं संधार्यं ललाटे च त्रिपुंड्रकम् ८५
मध्यमानामिकांगुल्या मध्ये तु प्रतिलोमतः
अंगुष्ठेन कृता रेखा त्रिपुंड्राख्या भिधीयते ८६
मध्येंगुलिभिरादाय तिसृभिर्भस्म यत्नतः
त्रिपुण्ड्रधारयेद्भक्त्या भुक्तिमुक्तिप्रदं परम् ८७
तिसृणामपि रेखानां प्रत्येकं नवदेवताः
सर्वत्रांगेषु ता वक्ष्ये सावधानतया शृणु ८८
अकारो गार्हपत्याग्निर्भूधर्मश्च रजोगुणः
ऋग्वेदश्च क्रियाशक्तिः प्रातःसवनमेव च ८९
महदेवश्च रेखायाः प्रथमायाश्च देवता
विज्ञेया मुनिशार्दूलाः शिवदीक्षापरायणैः 1.24.९०
उकारो दक्षिणाग्निश्च नभस्तत्त्वं यजुस्तथा
मध्यंदिनं च सवनमिच्छाशक्त्यंतरात्मकौ ९१
महेश्वरश्च रेखाया द्वितीयायाश्च देवता
विज्ञेया मुनिशार्दूल शिवदीक्षापरायणैः ९२
मकाराहवनीयौ च परमात्मा तमोदिवौ
ज्ञानशक्तिः सामवेदस्तृतीयं सवनं तथा ९३
शिवश्चैव च रेखायास्तृतियायाश्च देवता
विज्ञेया मुनिशार्दूल शिवदीक्षापरायणौ ९४
एवं नित्यं नमस्कृत्य सद्भक्त्या स्थानदेवताः
त्रिपुंड्रं धारयेच्छुद्धो भुक्तिं मुक्तिं च विंदति ९५

इत्युक्ताः स्थानदेवाश्च सर्वांगेषु मुनीश्वरः
तेषां संबंधिनो भक्त्या स्थानानि शृणु सांप्रतम् ९६
द्वात्रिंशत्स्थानके वार्द्धषोडशस्थानकेपि च
अष्टस्थाने तथा चैव पंचस्थानेपि नान्यसेत् ९७
उत्तमांगे ललाटे च कर्णयोर्नेत्रयोस्तथा
नासावक्त्रगलेष्वेवं हस्तद्वय अतः परम् ९८
कूर्परे मणिबंधे च हृदये पार्श्वयोर्द्वयोः
नाभौ मुष्कद्वये चैवमूर्वोर्गुल्फे च जानुनि ९९
जंघाद्वयेपदद्वन्द्वे द्वात्रिंशत्स्थानमुत्तमम् १००ब्
अग्न्यब्भूवायुदिग्देशदिक्पालान्वसुभिः सह 1.24.१००
धरा ध्रुवश्च सोमश्च अपश्चेवानिलोनलः १०१ब्
प्रत्यूषश्च प्रभासश्च वसवोष्टौ प्रकीर्तिताः १०१
एतेषां नाममात्रेण त्रिपुंड्रं धारयेद्बुधाः १०२ब्
कुर्याद्वा षोडशस्थाने त्रिपुण्ड्रं तु समाहितः १०२
शीर्षके च ललाटेच कंठे चांसद्वये भुजे १०३ब्
कूर्परे मणिबंधे च हृदये नाभिपार्श्वके १०३
पृष्ठे चैवं प्रतिष्ठाय यजेत्तत्राश्विदैवते १०४ब्
शिवशक्तिं तथा रुद्र मीशं नारदमेव च १०४
वामादिनवशक्तीश्च एताः षोडशदेवताः १०५ब्
नासत्यो दस्रकश्चैव अश्विनौ द्वौ प्रकीर्तितौ १०५
अथवा मूर्द्ध्नि केशे च कर्मयोर्वदने तथा १०६ब्
बाहुद्वये च हृदये नाभ्यामूरुयुगे तथा १०६
जानुद्वये च पदयोः पृष्ठभागे च षोडश १०७ब्
शिवश्चन्द्र श्च रुद्र ः! को विघ्नेशो विष्णुरेव वा १०७
श्रीश्चैव हृदये शम्भुस्तथा नाभौ प्रजापतिः १०८ब्
नागश्च नागकन्याश्च उभयोरृषिकन्यकाः १०८
पादयोश्च समुद्रा श्च तीर्थाः पृष्ठे विशालतः १०९ब्
इत्येव षोडशस्थानमष्टस्थानमथोच्यते १०९

गुह्यस्थानं ललाटश्च कर्णद्वयमनुत्तमम् ११०ब्

अंसयुग्मं च हृदयं नाभिरित्येवमष्टकम् 1.24.११०

ब्रह्मा च ऋषयः सप्तदेवताश्च प्रकीर्तिताः १११ब्

इत्येवं तु समुद्दिष्टं भस्मविद्भिर्मुनीश्वराः १११

अथ वा मस्तकं बाहूहृदयं नाभिरेव च ११२ब्

पंचस्थानान्यमून्याहुर्धारणे भस्मविज्जनाः ११२

यथासंभवनं कुर्य्याद्देशकालाद्यपेक्षया ११३ब्

उद्धूलनेप्यशक्तिश्चेत्त्रिपुण्ड्रादीनि कारयेत् ११३

त्रिनेत्रं त्रिगुणाधारं त्रिवेदजनकं शिवम् ११४ब्

स्मरन्नमः शिवायेति ललाटे तु त्रिपुण्ड्रकम् ११४

ईशाभ्यां नम इत्युक्त्वापार्श्वयोश्च त्रिपुण्ड्रकम् ११५ब्

बीजाभ्यां नम इत्युक्त्वा धारयेत्तु प्रकोष्ठयोः ११५

कुर्यादधः पितृभ्यां च उमेशाभ्यां तथोपरि ११६ब्

भीमायेति ततः पृष्ठे शिरसः पश्चिमे तथा ११६

इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां भस्मधारणवर्णनोनाम चतुर्विंशोऽध्यायः

# शिवपुराणम्/संहिता १ (विश्वेश्वरसंहिता)/अध्यायः २५

https://sa.wikisource.org/s/sqs



सूत उवाच

शौनकर्षे महाप्राज्ञ शिवरूपमहापते

शृणु रुद्रा क्षमाहात्म्यं समासात्कथयाम्यहम् १

शिवप्रियतमो ज्ञेयो रुद्रा क्षः परपावनः

दर्शनात्स्पर्शनाज्जाप्यात्सर्वपापहरः स्मृतः २

पुरा रुद्रा क्षमहिमा देव्यग्रे कथितो मुने

लोकोपकरणार्थाय शिवेन परमात्मना ३

शिव उवाच

शृणु देविमहेशानि रुद्रा क्षमहिमा शिवे

कथयामि तवप्रीत्या भक्तानां हितकाम्यया ४

दिव्यवर्षसहस्राणि महेशानि पुनः पुरा

तपः प्रकुर्वतस्त्रस्तं मनः संयम्य वै मम ५

स्वतंत्रेण परेशेन लोकोपकृतिकारिणा

लीलया परमेशानि चक्षुरुन्मीलितं मया ६

पुटाभ्यां चारुचक्षुर्भ्यां पतिता जलबिंदवः

तत्राश्रुबिन्दवो जाता वृक्षा रुद्रा क्षसंज्ञकाः ७

स्थावरत्वमनुप्राप्य भक्तानुग्रहकारणात्

ते दत्ता विष्णुभक्तेभ्यश्चतुर्वर्णेभ्य एव च ८

भूमौ गौडोद्भवांश्चक्रे रुद्रा क्षाञ्छिववल्लभान्

मथुरायामयोध्यायां लंकायां मलये तथा ९

सह्याद्रौ च तथा काश्यां दशेष्वन्येषु वा तथा

परानसह्यपापौघभेदनाञ्छ्रुतिनोदनात् 1.25.१०

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा जाता ममाज्ञया

रुद्रा क्षास्ते पृथिव्यां तु तज्जातीयाः शुभाक्षकाः ११

श्वेतरक्ताः पीतकृष्णा वर्णाज्ञेयाः क्रमाद्बुधैः

स्वजातीयं नृभिर्धार्यं रुद्रा क्षं वर्णतः क्रमात् १२
वर्णैस्तु तत्फलं धार्यं भुक्तिमुक्तिफलेप्सुभिः
शिवभक्तैर्विशेषेण शिवयोः प्रीतये सदा १३
धात्रीफलप्रमाणं यच्छ्रेष्ठमेतदुदाहृतम्
बदरीफलमात्रं तु मध्यमं संप्रकीर्त्तितम् १४
अधमं चणमात्रं स्यात्प्रक्रियैषा परोच्यते
शृणु पार्वति सुप्रीत्या भक्तानां हितकाम्यया १५
बदरीफलमात्रं च यत्स्यात्किल महेश्वरि
तथापि फलदं लोके सुखसौभाग्यवर्द्धनम् १६
धात्रीफलसमं यत्स्यात्सर्वारिष्टविनाशनम्
गुंजया सदृशं यत्स्यात्सर्वार्थफलसाधनम् १७
यथा यथा लघुः स्याद्वै तथाधिकफलप्रदम्
एकैकतः फलं प्रोक्तं दशांशैरधिकं बुधैः १८
रुद्रा क्षधारणं प्रोक्तं पापनाशनहेतवे
तस्माच्च धारणी यो वै सर्वार्थसाधनो ध्रुवम् १९
यथा च दृश्यते लोके रुद्रा क्षफलदः शुभः
न तथा दृश्यतेऽन्या च मालिका परमेश्वरि 1.25.२०
समाः स्निग्धा दृढाः स्थूलाः कंटकैः संयुताः शुभाः
रुद्रा क्षाः कामदा देवि भुक्तिमुक्तिप्रदाः सदा २१
क्रिमिदुष्टं छिन्नभिन्नं कंटकैर्हीनमेव च
व्रणयुक्तमवृत्तं च रुद्रा क्षान्षड्विवर्जयेत् २२
स्वयमेव कृतद्वारं रुद्रा क्षं स्यादिहोत्तमम्
यत्तु पौरुषयत्नेन कृतं तन्मध्यमं भवेत् २३
रुद्रा क्षधारणं प्राप्तं महापातकनाशनम्
रुद्र संख्याशतं धृत्वा रुद्र रूपो भवेन्नरः २४
एकादशशतानीह धृत्वा यत्फलमाप्यते
तत्फलं शक्यते नैव वक्तुं वर्षशतैरपि २५
शतार्द्धेन युतैः पंचशतैर्वै मुकुटं मतम्

रुद्रा क्षैर्विरचेत्सम्यग्भक्तिमान्पुरुषो वरः २६
त्रिभिः शतैः षष्टियुक्तैस्त्रिरावृत्त्या तथा पुनः
रुद्रा क्षैरुपवीतं व निर्मीयाद्भक्तितत्परः २७
शिखायां च त्रयं प्रोक्तं रुद्र क्षाणां महेश्वरि
कर्णयोः षट् च षट्चैव वामदक्षिणयोस्तथा २८
शतमेकोत्तरं कंठे बाह्वोर्वै रुद्र संख्यया
कूर्परद्वारयोस्तत्र मणिबंधे तथा पुनः २९
उपवीते त्रयं धार्यं शिवभक्तिरतैर्नरैः
शेषानुर्वरितान्पंच सम्मितान्धारयेत्कटौ 1.25.३०
एतत्संख्या धृता येन रुद्रा क्षाः परमेश्वरि
तद्रू पं तु प्रणम्यं हि स्तुत्यं सर्वैर्महेशवत् ३१
एवंभूतं स्थितं ध्याने यदा कृत्वासनैर्जनम्
शिवेति व्याहरंश्चैव दृष्ट्वा पापैः प्रमुच्यते ३२
शतादिकसहस्रस्य विधिरेष प्रकीर्तितः
तदभावे प्रकारोन्यः शुभः संप्रोच्यते मया ३३
शिखायामेकरुद्रा क्षं शिरसा त्रिंशतं वहेत्
पंचाशच्च गले दध्याद्बाह्वोः षोडश षोडश ३४
मणिबंधे द्वादशद्विस्कंधे पंचशतं वहेत्
अष्टोत्तरशतैर्माल्यमुपवीतं प्रकल्पयेत् ३५
एवं सहस्ररुद्रा क्षान्धारयेद्यो दृढव्रतः
तं नमंति सुराः सर्वे यथा रुद्र स्तथैव सः ३६
एकं शिखायां रुद्रा क्षं चत्वारिंशत्तु मस्तके
द्वात्रिंशत्कण्ठदेशे तु वक्षस्यष्टोत्तरं शतम् ३७
एकैकं कर्णयोः षट्षड्बाह्वोः षोडश षोडश
करयोरविमानेन द्विगुणेन मुनीश्वर ३८
संख्या प्रीतिर्धृता येन सोपि शैवजनः परः
शिववत्पूजनीयो हि वंद्यस्सर्वैरभीक्ष्णशः ३९
शिरसीशानमंत्रेण कर्णे तत्पुरुषेण च

अघोरेण गले धार्यं तेनैव हृदयेपि च 1.25.४०

अघोरबीजमंत्रेण करयोर्धारयेत्सुधीः

पंचदशाक्षग्रथितां वामदेवेन चोदरे ४१

पंच ब्रह्मभिरंगश्च त्रिमालां पंचसप्त च

अथवा मूलमंत्रेण सर्वानक्षांस्तुधारयेत् ४२

मद्यं मांसं तु लशुनं पलाण्डुं शिग्रुमेव च

श्लेष्मांतकं विड्वराहं भक्षणे वर्जयेत्ततः ४३

वलक्षं रुद्रा क्षं द्विजतनुभिरेवेह विहितं सुरक्तं क्षत्त्राणां प्रमुदितमुमे पीतमसकृत् ४४

छिन्नं खंडितं भिन्नं विदीर्ण

ततो वैश्यैर्धार्यं प्रतिदिवसभावश्यकमहो तथा कृष्णं शूद्रै ः! श्रुतिगदितमार्गोयमगजे ४४

वर्णी वनी गृहयतीर्नियमेन दध्यादेतद्र हस्यपरमो न हि जातु तिष्ठेत्

रुद्रा क्षधारणमिदं सुकृतैश्च लभ्यं त्यक्त्वेदमेतदखिलान्नरकान्प्रयांति ४५

आदावामलकात्स्वतो लघुतरा रुग्णास्ततः कंटकैः संदष्टाः कृमिभिस्तनूपकरणच्छिद्रे ण हीनास्तथा

धार्या नैव शुभेप्सुभिश्चणकवद्रुद्रा क्षमप्यंततो रुद्रा क्षोमम लिंगमंगलमुमे सूक्ष्मं प्रशस्तं सदा ४६

सर्वाश्रमाणां वर्णानां स्त्रीशूद्रा णां शिवाज्ञया

धार्याः सदैव रुद्रा क्षा यतीनां प्रणवेन हि ४७

दिवा बिभ्रद्रा त्रिकृतै रात्रौ विभ्रद्दिवाकृतैः

प्रातर्मध्याह्नसायाह्ने मुच्यते सर्वपातकैः ४८

ये त्रिपुण्ड्रधरा लोके जटाधारिण एव ये

ये रुद्रा क्षधरास्ते वै यमलोकं प्रयांति न ४९

रुद्रा क्षमेकं शिरसा बिभर्ति तथा त्रिपुण्ड्रं च ललाटमध्ये

पंचाक्षरं ये हि जपंति मंत्रं पूज्या भवद्भिः खलु ते हि साधवः 1.25.५०

यस्याण्गे नास्ति रुद्रा क्षस्त्रिपुण्ड्रं भालपट्टके

मुखे पंचाक्षरं नास्ति तमानय यमालयम् ५१

ज्ञात्वा ज्ञात्वा तत्प्रभावं भस्मरुद्रा क्षधारिणः

ते पूज्याः सर्वदास्माकं नो नेतव्याः कदाचन ५२

एवमाज्ञापयामास कालोपि निजकिण्करान्

तथेति मत्त्वा ते सर्वे तूष्णीमासन्सुविस्मिताः ५३

अत एव महादेवि रुद्रा क्षोत्यघनाशनः
तद्धरो मत्प्रियः शुद्धोऽत्यघवानपि पार्वति ५४
हस्ते बाहौ तथा मूर्ध्नि रुद्रा क्षं धारयेत्तु यः
अवध्यः सर्वभूतानां रुद्र रूपी चरेद्भुवि ५५
सुरासुराणां सर्वेषां वंदनीयः सदा स वै
पूजनीयो हि दृष्टस्य पापहा च यथा शिवः ५६
ध्यानज्ञानावमुक्तोपि रुद्रा क्षं धारयेत्तु यः
सर्वपापविनिर्मुक्तः स याति परमां गतिम् ५७
रुद्रा क्षेण जपन्मन्त्रं पुण्यं कोटिगुणं भवेत्
दशकोटिगुणं पुण्यं धारणाल्लभते नरः ५८
यावत्कालं हि जीवस्य शरीरस्थो भवेत्स वै
तावत्कालं स्वल्पमृत्युर्न तं देवि विबाधते ५९
त्रिपुंड्रेण च संयुक्तं रुद्रा क्षाविलसांगकम्
मृत्युंजयं जपंतं च दृष्ट्वा रुद्र फलं लभेत् 1.25.६०
पंचदेवप्रियश्चैव सर्वदेवप्रियस्तथा
सर्वमन्त्राञ्जपेद्भक्तो रुद्रा क्षमालया प्रिये ६१
विष्णवादिदेवभक्ताश्च धारयेयुर्न संशयः
रुद्र भक्तो विशेषेण रुद्रा क्षान्धारयेत्सदा ६२
रुद्रा क्षा विविधाः प्रोक्तास्तेषां भेदान्वदाम्यहम्
शृणु पार्वति सद्भक्त्या भुक्तिमुक्तिफलप्रदान् ६३
एकवक्त्रः शिवः साक्षाद्भुक्तिमुक्तिफलप्रदः
तस्य दर्शनमात्रेण ब्रह्महत्या व्यपोहति ६४
यत्र संपूजितस्तत्र लक्ष्मीर्दूरतरा न हि
नश्यंत्युपद्र वाः सर्वे सर्वकामा भवंति हि ६५
द्विवक्त्रो देवदेवेशस्सर्वकामफलप्रदः
विशेषतः स रुद्रा क्षो गोवधं नाशयेद्द्रुतम् ६६
त्रिवक्त्रो यो हि रुद्रा क्षः साक्षात्साधनदस्सदा
तत्प्रभावाद्भवेयुर्वै विद्याः सर्वाः प्रतिष्ठिताः ६७

चतुर्वक्त्रः स्वयं ब्रह्मा नरहत्यां व्यपोहति
दर्शनात्स्पर्शनात्सद्यश्चतुर्वर्गफलप्रदः ६८
पंचवक्त्रः स्वयं रुद्र ाः! कालाग्निर्नामतः प्रभुः
सर्वमुक्तिप्रदश्चैव सर्वकामफलप्रदः ६९
अगम्यागमनं पापमभक्ष्यस्य च भक्षणम्
इत्यादिसर्वपापानि पंचवक्त्रो व्यपोहति 1.25.७०
षड्वक्त्रः कार्तिकेयस्तुधारणाद्दक्षिणे भुजे
ब्रह्महत्यादिकैः पापैर्मुच्यते नात्र संशयः ७१
सप्तवक्त्रो महेशानि ह्यनंगो नाम नामतः
धारणात्तस्य देवेशिदरिद्रो पीश्वरो भवेत् ७२
रुद्रा क्षश्चाष्टवक्त्रश्च वसुमूर्तिश्च भैरवः
धारणात्तस्य पूर्णायुर्मृतो भवति शूलभृत् ७३
भैरवो नववक्त्रश्च कपिलश्च मुनिः स्मृतः
दुर्गा वात दधिष्ठात्री नवरूपा महेश्वरी ७४
तं धारयेद्वामहस्ते रुद्रा क्षं भक्तितत्परः
सर्वेश्वरो भवेन्नूनं मम तुल्यो न संशयः ७५
दशवक्त्रो महेशानि स्वयं देवो जनार्दनः
धारणात्तस्य देवेशि सर्वान्कामानवाप्नुयात् ७६
एकादशमुखो यस्तु रुद्रा क्षः परमेश्वरि
स रुद्रो धारणात्तस्य सर्वत्र विजयी भवेत् ७७
द्वादशास्यं तु रुद्रा क्षं धारयेत्केशदेशके
आदित्याश्चैव ते सर्वेद्वादशैव स्थितास्तथा ७८
त्रयोदशमुखो विश्वेदेवस्तद्धारणान्नरः
सर्वान्कामानवाप्नोति सौभाग्यं मंगलंलभेत् ७९
चतुर्दशमुखो यो हि रुद्रा क्षः परमः शिवः
धारयेन्मूर्ध्नि तं भक्त्या सर्वपापं प्रणश्यति 1.25.८०
इति रुद्रा क्षभेदा हि प्रोक्ता वै मुखभेदतः
तत्तन्मंत्राञ्छृणु प्रीत्या क्रमाच्छैल्लेश्वरात्मजे ८१

ॐ ह्रीं नमः १ ॐ नमः २ ॐ क्लीं नमः ३ ॐ ह्रीं नमः ४ ॐ ह्रीं नमः ५ ॐ ह्रीं हुं नमः ६ ॐ हुंनमः ७ ॐ हुं नमः ८ ॐ ह्रीं हुं नमः ९ ॐ ह्रीं नमः नमः १० ॐ ह्रीं हुं नमः ११ ॐ क्रौं क्षौं रौं नमः १२ ॐ ह्रीं नमः १३ ॐ नम १४

भक्तिश्रद्धा युतश्चैव सर्वकामार्थसिद्धये

रुद्रा क्षान्धारयेन्मंत्रैर्देवनालस्य वर्जितः ८२

विना मंत्रेण हो धत्ते रुद्रा क्षं भुवि मानवः

स याति नरकं घोरं यावदिन्द्रा श्चतुर्दश ८३

रुद्रा क्षमालिनं दृष्ट्वा भूतप्रेतपिशाचकाः

डाकिनीशाकिनी चैव ये चान्ये द्रो हकारकाः ८४

कृत्रिमं चैव यत्किंचिदभिचारादिकं च यत्

तत्सर्वं दूरतो याति दृष्ट्वा शंकितविग्रहम् ८५

रुद्रा क्षमालिनं दृष्ट्वा शिवो विष्णुः प्रसीदति

देवीगणपतिस्सूर्यः सुराश्चान्येपि पार्वति ८६

एवं ज्ञात्वा तु माहात्म्यं रुद्रा क्षस्य महेश्वरि

सम्यग्धार्यास्समंत्राश्च भक्त्याधर्मविवृद्धये ८७

इत्युक्तं गिरिजाग्रे हि शिवेन परमात्मना

भस्मरूद्रा क्षमाहात्म्यं भुक्तिमुक्तिफलप्रदम् ८८

शिवस्यातिप्रियौ ज्ञेयौ भस्मरुद्रा क्षधारिणौ

तद्धारणप्रभावद्धि भुक्तिर्मुक्तिर्न संशयः ८९

भस्मरुद्रा क्षधारी यः शिवभक्तस्स उच्यते

पंचाक्षरजपासक्तः परिपूर्णश्च सन्मुखे 1.25.९०

विना भस्मत्रिपुंड्रेण विना रुद्रा क्षमालया

पूजितोपि महादेवो नाभीष्टफलदायकः ९१

तत्सर्वं च समाख्यातं यत्पृष्टं हि मुनीश्वर

भस्मरुद्रा क्षमाहात्म्यं सर्वकामसमृद्धिदम् ९२

एतद्यः शृणुयान्नित्यं माहात्म्यपरमं शुभम्

रुद्रा क्षभस्मनोर्भक्त्यासर्वान्कामानवाप्नुयात् ९३

इह सर्वसुखं भुक्त्वा पुत्रपौत्रादिसंयुतः

लभेत्परत्र सन्मोक्षं शिवस्यातिप्रियो भवेत् ९४
विद्येश्वरसंहितेयं कथिता वो मुनीश्वराः
सर्वसिद्धिप्रदा नित्यं मुक्तिदा शिवशासनात् ९५

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां साध्यसाधनखण्डे रुद्रा क्षमहात्म्यवर्णनोनाम पञ्चविंशोऽध्यायः २५

इति श्रीशिवमहापुराणे प्रथमा विद्येश्वरसंहिता समाप्ता

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः ०१

https://sa.wikisource.org/s/tjx
< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः १ (सृष्टिखण्डः)

श्रीगणेशायः नमः ।।

।। श्रीगौरीशंकराभ्यां नमः ।। ।।

अथ द्वितीया रुद्रसंहिता प्रारभ्यते ।। ।।

विश्वोद्भवस्थितिलयादिषु हेतुमेकं गौरीपर्तिविदिततत्त्वमनन्तकीर्तिम् ।।
मायाश्रयम्विगतमायमचिंत्यरूपम्बोधस्वरूपममलं हि शिवन्नमामि ।। १ ।।

वन्दे शिवन्तम्प्रकृतेरनादिम्प्रशान्तमेकम्पुरुषोत्तमं हि ।।
स्वमायया कृत्स्नमिदं हि सृष्ट्वा नभोवदन्तर्बहिरास्थितो यः ।।२ ।।

वन्देतरस्थं निजगूढरूपं शिवंस्वतस्स्रष्टुमिदम्विचष्टे ।।
जगन्ति नित्यम्परितो भ्रमंति यत्सन्निधौ चुम्बकलोहवत्तम् ।। ३ ।।

व्यास उवाच ।।

जगतः पितरं शम्भुञ्जगतो मातरं शिवाम् ।।
तत्पुत्रश्च गणाधीशन्नत्वैतद्वर्णयामहे ।।४।।

एकदा मुनयस्सर्वे नैमिषारण्य वासिनः ।।
पप्रच्छुर्वरया भक्त्या सूतन्ते शौनकादयः ।। ५ ।।

ऋषय ऊचुः ।।

विद्येश्वरसंहितायाः श्रुता सा सत्कथा शुभा ।।
साध्यसाधनखंडा ख्या रम्याद्या भक्तवत्सला ।।६।।

सूत सूत महाभाग चिरञ्जीव सुखी भव ।।
यच्छ्रावयसि नस्तात शांकरीं परमां कथाम् ।। ७ ।।

पिबन्तस्त्वन्मुखाम्भोजच्युतं ज्ञानामृतम्वयम्।।
अवितृप्ताः पुनः किंचित्प्रष्टुमिच्छामहेऽनघ ।।८।।

व्यासप्रसादात्सर्वज्ञो प्राप्तोऽसि कृतकृत्यताम् ।।
नाज्ञातम्विद्यते किंचिद्भूतं भब्यं भवच्च यत्।।९।।

गुरोर्व्यासस्य सद्भक्त्या समासाद्य कृपां पराम् ।।
सर्वं ज्ञातं विशेषेण सर्वं सार्थं कृतं जनुः ।।2.1.1.१०।।
इदानीं कथय प्राज्ञ शिवरूपमनुत्तमम् ।।
दिव्यानि वै चरित्राणि शिवयोरप्यशेषतः ।।११।।
अगुणो गुणतां याति कथं लोके महेश्वरः ।।
शिवतत्त्वं वयं सर्वे न जानीमो विचारतः ।।१२।।
सृष्टेः पूर्वं कथं शंभुस्स्वरूपेणावतिष्ठते ।।
सृष्टिमध्ये स हि कथं क्रीडन्संवर्त्तते प्रभुः ।।१३।।
तदन्ते च कथन्देवस्स तिष्ठति महेश्वरः ।।
कथम्प्रसन्नतां याति शंकरो लोकशंकरः।।१४।।
स प्रसन्नो महेशानः किं प्रयच्छति सत्फलम् ।।
स्वभक्तेभ्यः परेभ्यश्च तत्सर्वं कथयस्व नः ।।१५।।
सद्यः प्रसन्नो भगवान्भवतीत्यनुशश्रुम।।
भक्तप्रयासं स महान्न पश्यति दयापरः।।१६।।
ब्रह्माविष्णुर्महेशश्च त्रयो देवाश्शिवांगजाः ।।
महेशस्तत्र पूर्णांशस्स्वयमेव शिवोऽपरः ।। १७ ।।
तस्याविर्भावमाख्याहि चरितानि विशेषतः ।।
उमाविर्भावमाख्याहि तद्विवाहं तथा प्रभो ।। १८ ।।
तद्गार्हस्थ्यं विशेषेण तथा लीलाः परा अपि ।।
एतत्सर्वं तदन्यच्च कथनीयं त्वयाऽनघ ।।१९।।
व्यास उवाच।।
इति पृष्टस्तदा तैस्तु सूतो हर्षसमन्वितः।
स्मृत्वा शंभुपदांभोजम्प्रत्युवाच मुनीश्वरान् ।।2.1.1.२०।।
सूत उवाच ।।
सम्यक्पृष्टं भवद्भिश्च धन्या यूयं मुनीश्वराः।।
सदाशिवकथायां वो यज्जाता नैष्ठिकी मतिः ।।२१।।
सदाशिवकथाप्रश्नः पुरुषांस्त्रीन्पुनाति हि ।।
वक्तारं पृच्छकं श्रोतृन्जाह्नवीसलिलं यथा ।। २२ ।।

शंभोर्गुणानुवादात्को विरज्येत पुमान्द्विजाः ।
विना पशुघ्नं त्रिविधजनानन्दकरात्सदा।।२३।।
गीयमानो वितृष्णैश्च भवरोगौषधोऽपि हि ।।
मनःश्रोत्राभिरामश्च यत्तस्सर्वार्थदस्स वै ।।२४।।
कथयामि यथाबुद्धि भवत्प्रश्नानुसारतः ।।
शिवलीलां प्रयत्नेन द्विजास्तां शृणुतादरात् ।। २५ ।।
भवद्भिः पृच्छ्यते यद्वत्तत्तथा नारदेन वै ।।
पृष्टं पित्रे प्रेरितेन हरिणा शिवरूपिणा ।। २६ ।।
ब्रह्मा श्रुत्वा सुतवचश्शिवभक्तः प्रसन्नधीः ।।
जगौ शिवयशः प्रीत्या हर्षयन्मुनिसत्तमम् ।। २७ ।।
व्यास ।।
सूतोक्तमिति तद्वाक्यमाकर्ण्य द्विजसत्तमाः ।।
पप्रच्छुस्तत्सुसंवादं कुतूहलसमन्विताः ।। २८ ।।
ऋषय ऊचुः ।।
सूत सूत महाभाग शैवोत्तम महामते ।।
श्रुत्वा तव वचो रम्यं चेतो नस्सकुतूहलम् ।। २९ ।।
कदा बभूव सुखकृद्विधिनारदयोर्महान् ।।
संवादो यत्र गिरिशसु लीला भवमोचिनी ।।2.1.1.३०।।
विधिनारदसंवादपूर्वकं शांकरं यशः ।।
ब्रूहि नस्तात तत्प्रीत्या तत्तत्प्रश्नानुसारतः ।।३१।।
इत्याकर्ण्य वचस्तेषां मुनीनां भावितात्मनाम् ।।
सूतः प्रोवाच सुप्रीतस्तत्संवादानुसारतः ।। ३२ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखंडे सृष्ट्युपाख्याने मुनिप्रश्नवर्णनो नाम प्रथमोऽध्यायः ।। १ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः ०२

https://sa.wikisource.org/s/uu8
< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः १ (सृष्टिखण्डः)

सूत उवाच ।।

एतस्मिन्समये विप्रा नारदो मुनिसत्तमः ।।

ब्रह्मपुत्रो विनीतात्मा तपोर्थं मन आदधे।।१।।

हिमशैलगुहा काचिदेका परमशोभना ।।

यत्समीपे सुरनदी सदा वहति वेगतः।।२।।

तत्राश्रमो महादिव्यो नानाशोभासमन्वितः ।।

तपोर्थं स ययौ तत्र नारदो दिव्यदर्शनः ।। ३ ।।

तां दृष्ट्वा मुनिशार्दूलस्तेपे स सुचिरं तपः ।।

बध्वासनं दृढं मौनी प्राणानायम्य शुद्धधीः ।। ४ ।।

चक्रे मुनिस्समाधिं तमहम्ब्रह्मेति यत्र ह ।।

विज्ञानं भवति ब्रह्मसाक्षात्कारकरं द्विजाः ।।५।।

इत्थं तपति तस्मिन्वै नारदे मुनिसत्तमे ।।

चकंपेऽथ शुनासीरो मनस्संतापविह्वलः ।। ६ ।।

मनसीति विचिंत्यासौ मुनिर्मे राज्यमिच्छति ।।

तद्विघ्नकरणार्थं हि हरिर्यत्नमियेष सः ।। ७ ।।

सस्मार स्मरं शक्रश्चेतसा देवनायकः ।।

आजगाम द्रुतं कामस्समधीर्महिषीसुतः ।।८।।

अथागतं स्मरं दृष्ट्वा संबोध्य सुरराट् प्रभुः ।।

उवाच तं प्रपश्याशु स्वार्थे कुटिलशेमुषिः ।। ९ ।।

इन्द्र उवाच ।।

मित्रवर्य्य महावीर सर्वदा हितकारक ।।

शृणु प्रीत्या वचो मे त्वं कुरु साहाय्यमात्मना ।। 2.1.2.१० ।।

त्वद्बलान्मे बहूनाञ्च तपोगर्वो विनाशितः ।।

मद्राज्यस्थिरता मित्र त्वदनुग्रहतस्सदा ।। ११ ।।

हिमशैलगुहायां हि मुनिस्तपति नारदः ।।
मनसोद्दिश्य विश्वेशं महासंयमवान्दृढः ।।१२।।
याचेन्न विधितो राज्यं स ममेति विशंकितः।।
अद्यैव गच्छ तत्र त्वं तत्तपोविघ्नमाचर।।१३।।
इत्याज्ञप्तो महेन्द्रेण स कामस्समधु प्रियः।।
जगाम तत्स्थलं गर्वादुपायं स्वञ्चकार ह।।१४।।
रचयामास तत्राशु स्वकलास्सकला अपि ।।
वसंतोपि स्वप्रभावं चकार विविधं मदात् ।।१५।।
न बभूव मुनेश्चेतो विकृतं मुनिसत्तमाः ।।
भ्रष्टो बभूव तद्गर्वो महेशानुग्रहेण ह ।। १६ ।।
शृणुतादरतस्तत्र कारणं शौनकादयः ।।
ईश्वरानुग्रहेणात्र न प्रभावः स्मरस्य हि ।।१७।।
अत्रैव शम्भुनाऽकारि सुतपश्च स्मरारिणा ।।
अत्रैव दग्धस्तेनाशु कामो मुनितपोपहः ।। १८ ।।
कामजीवनहेतोर्हि रत्या संप्रार्थितैस्सुरैः ।।
सम्प्रार्थित उवाचेदं शंकरो लोकशंकरः ।। १९ ।।
कंचित्समयमासाद्य जीविष्यति सुराः स्मरः ।।
परं त्विह स्मरोपायश्चरिष्यति न कश्चन ।।2.1.2.२०।।
इह यावद्दृश्यते भूर्जनैः स्थित्वाऽमरास्सदा ।।
कामबाणप्रभावोत्र न चलिष्यत्यसंशयम्।।२१।।
इति शंभूक्तितः कामो मिथ्यात्मगतिकस्तदा ।।
नारदे स जगामाशु दिवमिन्द्रसमीपतः ।। २२ ।।
आचख्यौ सर्ववृत्तांतं प्रभावं च मुनेः स्मरः ।।
तदाज्ञया ययौ स्थानं स्वकीयं स मधुप्रियः ।। २३ ।।
विस्मितोभूत्सुराधीशः प्रशशंसाथ नारदम् ।।
तद्वृत्तांतानभिज्ञो हि मोहितश्शिवमायया ।। २४ ।।
दुर्ज्ञेया शांभवी माया सर्वेषां प्राणिनामिह ।।
भक्तं विनार्पितात्मानं तया संमोह्यते जगत् ।।२५।।

नारदोऽपि चिरं तस्थौ तत्रेशानुग्रहेण ह ।।
पूर्णं मत्वा तपस्तत्स्वं विरराम ततो मुनिः ।। २६ ।।
कामोप्यजेयं निजं मत्वा गर्वितोऽभून्मुनीश्वरः ।।
वृथैव विगतज्ञानश्शिवमायाविमोहितः ।। २७ ।।
धन्या धन्या महामाया शांभवी मुनिसत्तमाः ।।
तद्गतिं न हि पश्यंति विष्णुब्रह्मादयोपि हि ।। २८ ।।
तया संमोहितोतीव नारदो मुनिसत्तमः ।।
कैलासं प्रययौ शीघ्रं स्ववृत्तं गदितुं मदी ।।२९।।
रुद्रं नत्वाब्रवीत्सर्वं स्ववृत्तङ्गर्ववान्मुनिः ।।
मत्वात्मानं महात्मानं स्वप्रभुञ्च स्मरञ्जयम्।।2.1.2.३०।।
तच्छ्रुत्वा शंकरः प्राह नारदं भक्तवत्सलः ।।
स्वमायामोहितं हेत्वनभिज्ञं भ्रष्टचेतसम् ।।३१।।
रुद्र उवाच ।।
हे तात नारद प्राज्ञ धन्यस्त्वं शृणु मद्वचः।।
वाच्यमेवं न कुत्रापि हरेरग्रे विशेषतः।।३२।।
पृच्छमानोऽपि न ब्रूयाः स्ववृत्तं मे यदुक्तवान्।।
गोप्यं गोप्यं सर्वथा हि नैव वाच्यं कदाचन।।३३।।
शास्म्यहं त्वां विशेषेण मम प्रियतमो भवान् ।।
विष्णुभक्तो यतस्त्वं हि तद्भक्तोतीव मेऽनुगः ।।३४।।
शास्तिस्मेत्थञ्च बहुशो रुद्रस्सूतिकरः प्रभुः ।
नारदो न हितं मेने शिवमायाविमोहितः ।।३५।।
प्रबला भाविनी कर्म गतिर्ज्ञेया विचक्षणैः।।
न निवार्या जनैः कैश्चिदपीच्छा सैव शांकरी।।३६।।
ततस्स मुनिवर्यो हि ब्रह्मलोकं जगाम ह ।।
विधिं नत्वाऽब्रवीत्कामजयं स्वस्य तपोबलात् ।।३७।।
तदाकर्ण्य विधिस्सोथ स्मृत्वा शम्भुपदाम्बुजम् ।।
ज्ञात्वा सर्वं कारणं तन्निषिषेध सुतं तदा ।।३८।।
मेने हितन्न विध्युक्तं नारदो ज्ञानिसत्तमः ।।

शिवमायामोहितश्च रूढचित्तमदांकुरः ।।३९।।
शिवेच्छा यादृशी लोके भवत्येव हि सा तदा ।।
तदधीनं जगत्सर्वं वचस्तंत्यांत स्थितं यतः।।2.1.2.४०।।
नारदोऽथ ययौ शीघ्रं विष्णुलोकं विनष्टधीः ।।
मदांकुरमना वृत्तं गदितुं स्वं तदग्रतः ।।४१।।
आगच्छंतं मुनिन्दृष्ट्वा नारदं विष्णुरादरात्।।
उत्थित्वाग्रे गतोऽरं तं शिश्लेषज्ञातहेतुकः ।। ४२ ।।
स्वासने समुपावेश्य स्मृत्वा शिवपदाम्बुजम् ।।
हरिः प्राह वचस्तथ्यं नारदं मदनाशनम् ।। ४३ ।।
विष्णुरुवाच ।।
कुत आगम्यते तात किमर्थमिह चागतः ।।
धन्यस्त्वं मुनिशार्दूल तीर्थोऽहं तु तवागमात् ।। ४४ ।।
विष्णुवाक्यमिति श्रुत्वा नारदो गर्वितो मुनिः ।।
स्ववृत्तं सर्वमाचष्ट समदं मदमोहितः ।। ४५ ।।
श्रुत्वा मुनिवचो विष्णुस्समदं कारणं ततः ।।
ज्ञातवानखिलं स्मृत्वा शिवपादाम्बुजं हृदि ।।४६।।
तुष्टाव गिरिशं भक्त्या शिवात्मा शैवराड् हरिः।।
सांजलिर्विसुधीर्नम्रमस्तकः परमेश्वरम् ।।४७ ।।
विष्णुरुवाच ।।
देवदेव महादेव प्रसीद परमेश्वर ।।
धन्यस्त्वं शिव धन्या ते माया सर्व विमोहिनी ।। ४८ ।।
इत्यादि स स्तुतिं कृत्वा शिवस्य परमात्मनः ।।
निमील्य नयने ध्यात्वा विरराम पदाम्बुजम् ।।४९।।
यत्कर्तव्यं शंकरस्य स ज्ञात्वा विश्वपालकः ।।
शिवशासनतः प्राह हृदाथ मुनिसत्तमम् ।। 2.1.2.५० ।।
विष्णुरुवाच ।।
धन्यस्त्वं मुनिशार्दूल तपोनिधिरुदारधीः ।।
भक्तित्रिकं न यस्यास्ति काममोहादयो मुने ।।५१।।

विकारास्तस्य सद्यो वै भवंत्यखिलदुःखदाः ।।
नैष्ठिको ब्रह्मचारी त्वं ज्ञानवैराग्यवान्सदा ।। ५२ ।।
कथं कामविकारी स्या जन्मना विकृतस्सुधीः ।।
इत्याद्युक्तं वचो भूरि श्रुत्वा स मुनिसत्तमः ।।५३।।
विजहास हृदा नत्वा प्रत्युवाच वचो हरिम् ।।
नारद उवाच ।।
किं प्रभावः स्मरः स्वामिन्कृपा यद्यस्ति ते मयि ।। ५४ ।।
इत्युक्त्वा हरिमानम्य ययौ यादृच्छिको मुनिः ।।५५।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखंडे सृष्ट्युपाख्याने नारदतपोवर्णनं नाम द्वितीयोऽध्यायः ।। २ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः ०३



ऋषय ऊचुः ।।

सूतसूत महाभाग व्यासशिष्य नमोऽस्तु ते ।।

अद्भुतेयं कथा तात वर्णिता कृपया हि नः ।। १ ।।

मुनौ गते हरिस्तात किं चकार ततः परम्।।

नारदोपि गतः कुत्र तन्मे व्याख्यातुमर्हसि ।।२।।

व्यास उवाच ।।

इत्याकर्ण्य वचस्तेषां सूतः पौराणिकोत्तमः ।।

प्रत्युवाच शिवं स्मृत्वा नानासूतिकरं बुधः।।३।।

सूत उवाच ।।

मुनौ यदृच्छया विष्णुर्गते तस्मिन्हि नारदे।।

शिवेच्छया चकाराशु माया मायाविशारदः ।। ४ ।।

मुनिमार्गस्य मध्ये तु विरेचे नगरं महत् ।।

शतयोजनविस्तारमद्भुतं सुमनोहरम्।।५।।

स्वलोकादधिकं रम्यं नानावस्तुविराजितम् ।।

नरनारीविहाराढ्यं चतुर्वर्णाकुलं परम् ।।६।।

तत्र राजा शीलनिर्धिर्नामैश्वर्यसमन्वितः ।।

सुतास्वयम्वरोद्युक्तो महोत्सवसमन्वितः ।।७।।

चतुर्दिग्भ्यः समायातैस्संयुतं नृपनन्दतैः ।।

नानावेषैस्सुशोभैश्च तत्कन्यावरणोत्सुकैः ।।८।।

एतादृशम्पुरं दृष्ट्वा मोहम्प्राप्तोऽथ नारदः ।।

कौतुकी तन्नृपद्वारं जगाम मदनेधितः ।।९।।

आगतं मुनिवर्यं तं दृष्ट्वा शीलनिधिर्नृपः ।।

उपवेश्यार्चयांचक्रे रत्नसिंहासने वरे ।।2.1.3.१०।।

अथ राजा स्वतनयां नामतश्श्रीमतीं वराम् ।।

समानीय नारदस्य पादयोस्समपातयत् ।।११।।
तत्कन्यां प्रेक्ष्य स मुनिर्नारदः प्राह विस्मितः ।।
केयं राजन्महाभागा कन्या सुरसुतोपमा ।। १२ ।।
तस्य तद्वचनं श्रुत्वा राजा प्राह कृतांजलिः ।।
दुहितेयं मम मुने श्रीमती नाम नामतः ।। १३ ।।
प्रदानसमयं प्राप्ता वरमन्वेषती शुभम् ।।
सा स्वयंवरसंप्राप्ता सर्वलक्षणलक्षिता ।। १४ ।।
अस्या भाग्यं वद मुने सर्वं जातकमादरात्।।
कीदृशं तनयेयं मे वरमाप्स्यति तद्वद ।।१५।।
इत्युक्तो मुनिशार्दूलस्तामिच्छुः कामविह्वलः।।
समाभाष्य स राजानं नारदो वाक्यमब्रवीत् ।।१६।।
सुतेयं तव भूपाल सर्वलक्षणलक्षिता।।
महाभाग्यवती धन्या लक्ष्मीरिव गुणालया ।।१७।।
सर्वेश्वरोऽजितो वीरो गिरीशसदृशो विभुः ।।
अस्याः पतिर्ध्रुवं भावी कामजित्सुरसत्तमः ।।१८।।
इत्युक्त्वा नृपमामंत्र्य ययौ यादृच्छिको मुनिः।।
बभूव कामविवशश्शिवमाया विमोहितः।।१९।।
चित्ते विचिन्त्य स मुनिराप्नुयां कथमेनकाम्।।
स्वयंवरे नृपालानामेकं मां वृणुयात्कथम्।।2.1.3.२०।।
सौन्दर्यं सर्वनारीणां प्रियं भवति सर्वथा।।
तद्दृष्ट्वैव प्रसन्ना सा स्ववशा नात्र संशयः।।२१।।
विधायेत्थं विष्णुरूपं ग्रहीतुं मुनिसत्तमः ।।
विष्णुलोकं जगामाशु नारदः स्मरविह्वलः।।२२।।
प्रणिपत्य हृषीकेशं वाक्यमेतदुवाच ह।।
रहसि त्वां प्रवक्ष्यामि स्ववृत्तान्तमशेषतः ।।२३।।
तथेत्युक्ते तथा भूते शिवेच्छा कार्यकर्त हि ।।
ब्रूहीत्युक्तवति श्रीशे मुनिराह च केशवम्।।२४।।
नारद उवाच।।

त्वदीयो भूपतिः शीलनिधिस्स वृषतत्परः।।
तस्य कन्या विशालाक्षी श्रीमतीवरवर्णिनी ।।२५।।
जगन्मोहिन्यभिख्याता त्रैलोक्येप्यति सुन्दरी ।।
परिणेतुमहं विष्णो तामिच्छाम्यद्य मा चिरम्।।२६।।
स्वयंवरं चकरासौ भूपतिस्तनयेच्छया।।
चतुर्दिग्भ्यः समायाता राजपुत्रास्सहस्रशः ।।२७।।
यदि दास्यसि रूपं मे तदा तां प्राप्नुयां ध्रुवम् ।।
त्वद्रूपं सा विना कंठे जयमालां न धास्यति ।।२८।।
स्वरूपं देहि मे नाथ सेवकोऽहं प्रियस्तव ।।
वृणुयान्मां यथा सा वै श्रीमती क्षितिपात्मजा।। २९ ।।
सुत उवाच ।। वचः श्रुत्वा मुनेरित्थं विहस्य मधुसूदनः ।।
शांकरीं प्रभुतां बुद्ध्वा प्रत्युवाच दयापरः।।2.1.3.३०।।
विष्णुरुवाच ।।
स्वेष्टदेशं मुने गच्छ करिष्यामि हितं तव।।
भिषग्वरो यथार्त्तस्य यतः प्रियतरोऽसि मे।।३१।।
इत्युक्त्वा मुनये तस्मै ददौ विष्णुर्मुखं हरे।।
स्वरूपमनुगृह्यास्य तिरोधानं जगाम सः।।३२।।
एवमुक्तो मुनिर्हृष्टः स्वरूपं प्राप्य वै हरेः।।
मेने कृतार्थमात्मानं तद्यत्नं न बुबोध सः ।।३३।।
अथ तत्र गतः शीघ्रन्नारदो मुनिसत्तमः।।
चक्रे स्वयम्वरं यत्र राजपुत्रैस्समाकुलम् ।। ३४ ।।
स्वयम्वरसभा दिव्या राजपुत्रसमावृता।।
शुशुभेऽतीव विप्रेन्द्रा यथा शक्रस भा परा ।।३५।।
तस्यां नृपसभायां वै नारदः समुपाविशत् ।।
स्थित्वा तत्र विचिन्त्येति प्रीतियुक्तेन चेतसा ।।३६।।
मां वरिष्यति नान्यं सा विष्णुरूपधरन्ध्रुवम् ।।
आननस्य कुरूपत्वं न वेद मुनिसत्तमः ।। ३७ ।।
पूर्वरूपं मुनिं सर्वे ददृशुऽस्तत्र मानवाः।

तद्भेदं बुबुधुस्ते न राजपुत्रादयो द्विजाः ।। ३८ ।।

तत्र रुद्रगणौ द्वौ तद्रक्षणार्थं समागतौ ।।

विप्ररूपधरौ गूढौ तत्रेदं जज्ञतुः परम्।।३९।।

मूढ मत्वा मुनिं तौ तन्निकटं जग्मतुर्गणौ ।।

कुरुतस्तत्प्रहासं वै भाषमाणौ परस्परम् ।। 2.1.3.४० ।।

पश्य नारद रूपं हि विष्णोरिव महोत्तमम् ।।

मुखं तु वानरस्येव विकटं च भयंकरम् ।। ४१ ।।

इच्छत्ययं नृपसुता वृथैव स्मरमोहितः ।।

इत्युक्त्वा सच्छलं वाक्यमुपहासं प्रचक्रतुः ।। ४२ ।।

न शुश्राव यथार्थं तु तद्वाक्यं स्मरविह्वलः ।।

पर्यैक्षच्छ्रीमतीं तां वै तल्लिप्सुर्मोहितो मुनिः ।। ४३ ।।

एतस्मिन्नंतरे भूपकन्या चांतःपुरात्तु सा ।।

स्त्रीभिस्समावृता तत्राजगाम वरवर्णिनी ।। ४४ ।।

मालां हिरण्मयीं रम्यामादाय शुभ क्षणा ।।

तत्र स्वयम्बरे रेजे स्थिता मध्ये रमेव सा ।। ४५ ।।

बभ्राम सा सभां सर्वां मालामादाय सुव्रता ।।

वरमन्वेषती तत्र स्वात्माभीष्टं नृपात्मजा ।। ४६ ।।

वानरास्यं विष्णुतनुं मुनिं दृष्ट्वा चुकोप सा ।।

दृष्टिं निवार्य च ततः प्रस्थिता प्रीतमानसा ।। ४७ ।।

न दृष्ट्वा स्ववरं तत्र त्रस्तासीन्मनसेप्सितम् ।।

अंतस्सभास्थिता कस्मिन्नर्पयामास न स्रजम् ।। ४८ ।।

एतस्मिन्नंतरे विष्णुराजगाम नृपाकृतिः ।।

न दृष्टः कैश्चिदपरैः केवलं सा ददर्श हि ।। ४९ ।।

अथ सा तं समालोक्य प्रसन्नवदनाम्बुजा ।।

अर्पयामास तत्कण्ठे तां मालां वरवर्णिनी ।। 2.1.3.५० ।।

तामादाय ततो विष्णू राजरूपधरः प्रभुः ।।

अंतर्धानमगात्सद्यस्स्वस्थानं प्रययौ किल ।।५१।।

सर्वे राजकुमाराश्च निराशाः श्रीमतीम्प्रति।।

मुनिस्तु विह्वलोऽतीव बभूव मदनातुरः।।५२।।
तदा तावूचतुस्सद्यो नारदं स्वरविह्वलम् ।।
विप्ररूपधरौ रुद्रगणौ ज्ञानविशारदौ ।।५३।।
गणावूचतुः ।।
हे नारदमुने त्वं हि वृथा मदनमोहितः ।।
तल्लिप्सुस्स्वमुखं पश्य वानरस्येव गर्हितम्।।५४।।
सूत उवाच।।
इत्याकर्ण्य तयोर्वाक्यं नारदो विस्मितोऽभवत् ।।
मुखं ददर्श मुकुरे शिवमायाविमोहितः ।।५५।।
स्वमुखं वानरस्येव दृष्ट्वा चुक्रोध सत्वरम्।।
शापन्ददौ तयोस्तत्र गणयोर्मोहितो मुनिः ।।५६।।
युवां ममोपहासं वै चक्रतुर्ब्राह्मणस्य हि।।
भवेतां राक्षसौ विप्रवीर्यजौ वै तदाकृती।।५७।।
श्रुत्वा हरगणावित्थं स्वशापं ज्ञानिसत्तमौ।।
न किंचिदूचतुस्तौ हि मुनिमाज्ञाय मोहितम् ।।५८।।
स्वस्थानं जग्मतुर्विप्रा उदासीनौ शिवस्तुतिम्।।
चक्रतुर्मन्यमानौ वै शिवेच्छां सकलां सदा ।।५९।।
इति श्रीशिव महापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखंडे सृष्ट्युपाख्याने नारदमोहवर्णनं नाम तृतीयोऽध्यायः ।। ३ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः ०४



ऋषय ऊचुः ।।

सूत सूत महाप्राज्ञ वर्णिता ह्यद्भुता कथा ।।

धन्या तु शांभवी माया तदधीनं चराचरम् ।। १ ।।

गतयोर्गणयोश्शंभोस्स्वयमात्मेच्छया विभोः।।

किं चकार मुनिः क्रुद्धो नारदः स्मरविह्वलः ।। २ ।।

सूत उवाच ।।

विमोहितो मुनिर्दत्त्वा तयोश्शापं यथोचितम् ।।

जले मुखं निरीक्ष्याथ स्वरूपं गिरिशेच्छया ।। ३ ।।

शिवेच्छया न प्रबुद्धः स्मृत्वा हरिकृतच्छलम् ।।

क्रोधं दुर्विषहं कृत्वा विष्णुलोकं जगाम ह ।। ४ ।।

उवाच वचनं कुद्धस्समिद्ध इव पावकः ।।

दुरुक्तिगर्भितं व्यङ्गः नष्टज्ञानश्शिवेच्छया ।। ५ ।।

नारद उवाच ।।

हे हरे त्वं महादुष्टः कपटी विश्वमोहनः ।।

परोत्साहं न सहसे मायावी मलिनाशयः ।। ६ ।।

मोहिनीरूपमादाय कपटं कृतवान्पुरा ।।

असुरेभ्योऽपाययस्त्वं वारुणीममृतं न हि ।।७।।

चेत्पिबेन्न विषं रुद्रो दयां कृत्वा महेश्वरः ।।

भवेन्नष्टाऽखिला माया तव व्याजरते हरे ।। ८ ।।

गतिस्स कपटा तेऽतिप्रिया विष्णो विशेषतः ।।

साधुस्वभावो न भवान्स्वतंत्रः प्रभुणा कृतः ।।९।।

कृतं समुचितन्नैव शिवेन परमात्मना।।

तत्प्रभावबलं ध्यात्वा स्वतंत्रकृतिकारकः।।2.1.4.१ ० ।।

त्वद्गतिं सुसमाज्ञाय पश्चात्तापमवाप सः ।।

विप्रं सर्वोपरि प्राह स्वोक्तवेद प्रमाणकृत् ।। ११ ।।
तज्ज्ञात्वाहं हरे त्वाद्य शिक्षयिष्यामि तद्बलात् ।।
यथा न कुर्याः कुत्रापीदृशं कर्म कदाचन ।। १२ ।।
अद्यापि निर्भयस्त्वं हि संगं नापस्तरस्विना ।।
इदानीं लप्स्यसे विष्णो फलं स्वकृतकर्मणः ।। १३।।
इत्थमुक्त्वा हरिं सोथ मुनिर्मायाया विमोहितः ।।
शशाप क्रोधनिर्विण्णो ब्रह्मतेजः प्रदर्शयन्।। १४।।
स्त्रीकृते व्याकुलं विष्णो मामकार्षीर्विमोहकः ।।
अन्वकार्षीस्स्वरूपेण येन कापट्यकार्यकृत् ।।१५।।
तद्रूपेण मनुष्यस्त्वं भव तद्दुःखभुग्घरे ।।
यन्मुखं कृतवान्मे त्वं ते भवंतु सहायिनः ।। १६ ।।
त्वं स्त्रीवियोगजं दुःखं लभस्व परदुःखदः ।।
मनुष्यगतिकः प्रायो भवाज्ञानविमोहितः ।। १७।।
इति शस्वा हरिं मोहान्नारदोऽज्ञानमोहितः ।।
विष्णुर्जग्राह तं शापं प्रशंसञ्शांभवीमजाम् ।। १६ ।।
अथ शंभुर्महालीलो निश्चकर्ष विमोहिनीम ।।
स्वमायां मोहितो ज्ञानी नारदोप्यभवद्यया ।। १९ ।।
अंतर्हितायां मायायां पूर्ववन्मतिमानभूत् ।।
नारदो विस्मितमनाः प्राप्तबोधो निराकुलः ।। 2.1.4.२० ।।
पश्चात्तापमवाप्याति निनिन्द स्वं मुहुर्मुहुः ।।
प्रशशंस तदा मायां शांभवीं ज्ञानिमोहिनीम् ।। २१ ।।
अथ ज्ञात्वा मुनिस्सर्वं मायाविभ्रममात्मनः ।।
अपतत्पादयोर्विष्णोर्नारदो वैष्णवोत्तमः ।। २२ ।।
हर्य्युपस्थापितः प्राह वचनं नष्ट दुर्मतिः ।।
मया दुरुक्तयः प्रोक्ता मोहितेन कुबुद्धिना ।। २३ ।।
दत्तश्शापोऽपि तेनाथ वितथं कुरु तं प्रभो ।।
महत्पापमकार्षं हि यास्यामि निरयं ध्रुवम् ।। २४ ।।
कमुपायं हरे कुर्यां दासोऽहं ते तमादिश ।।

येन पापकुलं नश्येन्निरयो न भवेन्मम ।। २५ ।।

इत्युक्त्वा स पुनर्विष्णोः पादयोर्मुनिसत्तमः ।।

पपात सुमतिर्भक्त्या पश्चात्तापमुपागतः ।। २६ ।।

अथ विष्णुस्तमुत्थाप्य बभाषे सूनृतं वचः ।।

विष्णुरुवाच ।।

न खेदं कुरु मे भक्त वरस्त्वं नात्र संशयः ।। २७ ।।

शृणु तात प्रवक्ष्यामि सुहितं तव निश्चयात् ।।१।

निरयस्ते न भविता शिवश्शं ते विधास्यति ।। २८ ।।

यदकार्षीश्शिववचो वितथं मदमोहितः ।।

स दत्तवानीदृशं ते फलं कर्म फलप्रदः ।। २९ ।।

शिवेच्छाऽखिलं जातं कुर्वित्थं निश्चितां मतिम् ।।

गर्वापहर्ता स स्वामी शंकरः परमेश्वरः ।। 2.1.4.३० ।।।

परं ब्रह्म परात्मा स सच्चिदानंदबोधनः ।।

निर्गुणो निर्विकारो च रजस्सत्वतमःपर ।। ३१ ।।

स एवमादाय मायां स्वां त्रिधा भवति रूपतः ।।

ब्रह्मविष्णुमहेशात्मा निर्गुणोऽनिर्गुणोऽपि सः ।। ३२ ।।

निर्गुणत्वे शिवाह्वो हि परमात्मा महेश्वरः ।।

परं ब्रह्माव्ययोऽनंतो महादेवेति गीयते ।। ३३ ।।

तत्सेवया विधिस्स्रष्टा पालको जगतामहम् ।।

स्वयं सर्वस्य संहारी रुद्ररूपेण सर्वदा ।। ३४ ।।

साक्षी शिवस्वरूपेण मायाभिन्नस्स निर्गुणः ।।

स्वेच्छाचारी संविहारी भक्तानुग्रहकारकः ।। ३५ ।।

शृणु त्वं नारद मुने सदुपायं सुखप्रदम् ।।

सर्वपापापहर्त्तारं भुक्तिमुक्तिप्रदं सदा ।। ३६ ।।

इत्युक्त्वास्त्वसंशयं सर्वं शंकरसद्यशः ।।

शतनामशिवस्तोत्रं सदानन्यमतिर्जप ।। ३७ ।।

यज्जपित्वा द्रुतं सर्वं तव पापं विनश्यति ।।

इत्युक्त्वा नारदं विष्णुः पुनः प्राह दयान्वितः ।। ३८ ।।

मुने न कुरु शोकं त्वं त्वया किंचित्कृतं नहि ।।
स्वेच्छया कृतवान्शंभुरिदं सर्वं न संशयः ।। ३९ ।।
अहार्षित्त्वन्मतिं दिव्यां काम क्लेशमदात्स ते।।
त्वन्मुखाद्दापयांचक्रे शापं मे स महेश्वरः ।। 2.1.4.४० ।।
इत्थं स्वचरितं लोके प्रकटीकृतवान् स्वयम् ।।
मृत्युंजयः कालकालो भक्तोद्धारपरायणः ।। ४१ ।।
न मे शिवसमानोस्ति प्रियः स्वामी सुखप्रदः ।।
सर्वशक्तिप्रदो मेऽस्ति स एव परमेश्वरः ।। ४२ ।।
तस्योपास्यां कुरु मुने तमेव सततं भज ।।
तद्यशः शृणु गाय त्वं कुरु नित्यं तदर्चनम् ।। ४३ ।।
कायेन मनसा वाचा यश्शंकरमुपैति भो ।।
स पण्डित इति ज्ञेयस्स जीवन्मुक्त उच्यते ।। ४४ ।।
शिवेति नामदावाग्नेर्महापातकप र्वताः ।।
भस्मीभवन्त्यनायासात्सत्यं सत्यं न संशयः ।।४५।।
पापमूलानि दुःखानि विविधान्यपि तान्यतः ।।
शिवार्चनैकनश्यानि नान्य नश्यानि सर्वथा ।। ४६ ।।
स वैदिकस्य पुण्यात्मा स धन्यस्स बुधो मुने ।।
यस्सदा कायवाक्चित्तैश्शरणं याति शंकरम् ।। ४७ ।।
भवंति विविधा धर्मा येषां सद्यःफलोन्मुखाः ।।
तेषां भवति विश्वासस्त्रिपुरांतकपूजने ।। ४८ ।।
पातकानि विनश्यंति यावंति शिवपूजया ।।
भुवि तावंति पापानि न संत्येव महामुने ।।४९।।
ब्रह्महत्यादिपापानां राशयोप्यमिता मुने ।।
शिवस्मृत्या विनश्यंति सत्यंसत्यं वदाम्यहम् ।।2.1.4.५०।।
शिवनामतरीं प्राप्य संसाराब्धिं तरंति ते।।
संसारमूलपापानि तस्य नश्यंत्यसंशयम्।।५१।।
संसारमूलभूतानां पातकानां महामुने ।।
शिवनामकुठारेण विनाशो जायते ध्रुवम् ।। ५२ ।।

शिवनामामृतं पेयं पापदावानलार्दितैः ।।
पापदावाग्नितप्तानां शांतिस्तेन विना न हि ।।५३।।
शिवेति नामपीयूषवर्षधारापरिप्लुतः ।।
संसारदवमध्यपि न शोचति न संशयः ।।५४।।
न भक्तिश्शंकरे पुंसां रागद्वेषरतात्मनाम् ।।
तद्विधानां हि सहसा मुक्तिर्भवति सर्वथा ।।५५।।
अनंतजन्मभिर्येन तपस्तप्तं भविष्यति।।
तस्यैव भक्तिर्भवति भवानी प्राणवल्लभे।।५६।।
जातापि शंकरे भक्तिरन्यसाधारणी वृथा।।
परं त्वव्यभिचारेण शिवभक्तिरपेक्षिता ।।५७।।
यस्या साधारणी शंभौ भक्तिरव्यभिचारिणी।।
तस्यैव मोक्षस्सुलभो नास्येतिन्य मतिर्मम।।५८।।
कृत्वाप्यनंतपापानि यदि भक्तिर्महेश्वरे ।।
सर्वपापविनिर्मुक्तो भवत्येव न संशयः।।५९।।
भवंति भस्मसाद्वृक्षादवदग्धा यथा वने ।।
तथा भवंति दग्धानि शांकराणामघान्यपि ।।2.1.4.६०।।
यो नित्यं भस्मपूतांगो शिवपूजोन्मुखो भवेत्।।
स तरत्येव संसारमपारमतिदारुणम्।।६१।।
ब्रह्मस्वहरणं कृत्वा हत्वापि ब्राह्मणान्बहून् ।।
लिप्यते नरः पापैर्विरूपाक्षस्य सेवकः ।। ६२ ।।
विलोक्य वेदानखिलाञ्छिवस्यैवार्चनम्परम् ।।
संसारनाशनोपाय इति पूर्वैर्विनिश्चितम् ।।६३।।
अद्यप्रभृति यत्नेन सावधानो यथाविधि।।
साम्बं सदाशिवं भक्त्या भज नित्यं महेश्वरम्।।६४।।
आपादमस्तकं सम्यक् भस्मनोद्धूल्य सादरम् ।।
सर्वश्रुतिश्रुतं शैवम्मंत्रञ्जप षडक्षरम् ।।६५।।
सवार्ङ्गेषु प्रयत्नेन रुद्राक्षाञ्छिववल्लभान्।।
धारयस्वातिसद्भक्त्या समन्त्रम्विधिपूर्वकम् ।।६६।।

शृणु शैवीं कथां नित्यं वद शैवीं कथां सदा ।।
पूजयस्वातियत्नेन शिवभक्तान्पुनः पुनः ।। ६७ ।।
अप्रमादेन सततं शिवैकशरणो भव ।।
शिवार्चनेन सततमानन्दः प्राप्यते यतः ।।६८।।
उरस्याधाय विशदे शिवस्य चरणाम्बुजौ ।।
शिवतीर्थानि विचर प्रथमं मुनिसत्तम ।।६९।।
पश्यन्माहात्म्यमतुलं शंकरस्य परात्मनः ।।
गच्छानन्दवनं पश्चाच्छंभुप्रियतमं मुने ।।2.1.4.७० ।।
तत्र विश्वेश्वरं दृष्ट्वा पूजनं कुरु भक्तितः ।।
नत्वा स्तुत्वा विशेषेण निर्विकल्पो भविष्यसि ।।७१।।
ततश्च भवता नूनं विधेयं गमनं मुने ।।
ब्रह्मलोके स्वकामार्थं शासनान्मम भक्तितः ।। ७२ ।।
नत्वा स्तुत्वा विशेषेण विधिं स्वजनकं मुने ।।
प्रष्टव्यं शिवमाहात्म्यं बहुशः प्रीतचेतसा ।।७३।।
स शैवप्रवरो ब्रह्मा माहात्म्यं शंकरस्य ते ।।
श्रावयिष्यति सुप्रीत्या शतनामस्तवं च हि ।।७४।।
अद्यतस्त्वं भव मुने शैवश्शिवपरायणः ।।
मुक्तिभागी विशेषेण शिवस्ते शं विधास्यति ।। ७५ ।।
इत्थं विष्णुर्मुनिं प्रीत्या ह्युपदिश्य प्रसन्नधीः ।।
स्मृत्वा नुत्वा शिवं स्तुत्वा ततस्त्वंतरधीयत ।।७६।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखंडे सृष्ट्युपाख्याने नारदस्य विष्णूपदेशवर्णनो नाम चतुर्थोऽध्यायः ।।४।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः ०५



सूत उवाच ।।

अंतर्हिते हरौ विप्रा नारदो मुनिसत्तमः ।।

विचचार महीं पश्यञ्छिवलिंगानि भक्तितः ।। १ ।।

पृथिव्या अटनं कृत्वा शिवरूपाण्यनेकशः ।।

ददर्श प्रीतितो विप्रा भुक्तिमुक्तिप्रदानि सः ।। २ ।।

अथ तं विचरंतं कौ नारदं दिव्यदर्शनम् ।।

ज्ञात्वा शंभुगणौ तौ तु सुचित्तमुपजग्मतुः ।। ३ ।।

शिरसा सुप्रणम्याशु गणावूचतुरादरात् ।।

गृहीत्वा चरणौ तस्य शापोद्धारेच्छया च तौ ।। ४ ।।

शिवगणावूचतुः ।।

ब्रह्मपुत्र सुरर्षे हि शृणु प्रीत्या वयोर्वचः ।।

तवापराधकर्तारावावां विप्रौ न वस्तुतः ।। ५ ।।

आवां हरगणौ विप्र तवागस्कारिणौ मुने ।।

स्वयम्बरे राजपुत्र्या मायामोहितचेतसा ।। ६ ।।

त्वया दत्तश्च नौ शापः परेशप्रेरितेन ह ।।

ज्ञात्वा कुसमयं तत्र मौनमेव हि जीवनम् ।। ७ ।।

स्वकर्मणः फलं प्राप्तं कस्यापि न हि दूषणम् ।।

सुप्रसन्नो भव विभो कुर्वनुग्रहमद्य नौ ।। ८ ।।

सूत उवाच ।।

वच आकर्ण्य गणयोरिति भक्त्युक्तमादरात् ।।

प्रत्युवाच मुनिः प्रीत्या पश्चात्तापमवाप्य सः ।। ९ ।।

नारद उवाच ।।

शृणुतं मे महादेव गणा मान्यतमौ सताम् ।।

वचनं सुखदं मोहनिर्मुक्तं च यथार्थकम्।।! 2.1.5.१०।।

पुरा मम मतिर्भ्रष्टासीच्छिवेच्छावशात् युवम् ।।
सर्वथा मोहमापन्नश्शप्तवान्वां कुशेमुषिः ।। ११ ।।
यदुक्तं तत्तथा भावि तथापि शृणुतां गणौ ।।
शापोद्धारमहं वच्मि क्षमथा मघमद्य मे ।। १२ ।।
वीर्यान्मुनिवरस्यास्वा राक्षसेशत्वमादिशम् ।।
स्यातां विभवसंयुक्तौ बलिनो सुप्रतापिनौ ।। १३ ।।
सर्वब्रह्मांडराजानौ शिवभक्तौ जितेन्द्रियौ ।।
शिवापरतनोर्मृत्युं प्राप्य स्वं पदमाप्स्यथः ।। १४ ।।
सूत उवाच ।।
इत्याकर्ण्य मुनेर्वाक्यं नारदस्य महात्मनः ।।
उभौ हरगणौ प्रीतौ स्वं पदं जग्मतुर्मुदा ।। १५ ।।
नारदोऽपि परं प्रीतो ध्यायञ्छिवमनन्यधीः ।।
विचचार महीं पश्यञ्छिवतीर्थान्यभीक्ष्णशः ।। १६ ।।
काशीं प्राप्याथ स मुनिः सर्वोपरि विराजिताम् ।।
शिवप्रियां शंभुसुखप्रदां शम्भुस्वरूपिणीम् ।। १७ ।।
दृष्ट्वा काशीं कृताऽर्थोभूत्काशीनाथं ददर्श ह ।।
आनर्च परम प्रीत्या परमानन्दसंयुतः ।। १८ ।।
स मुदः सेव्यतां काशीं कृतार्थो मुनिसत्तमः ।।
नमन्संवर्णयन्भक्त्या संस्मरन्प्रेमविह्वलः ।। ।।१९।।
ब्रह्मलोकं जगामाथ शिवस्मरणसन्मतिः ।।
शिवतत्त्वं विशेषेण ज्ञातुमिच्छुस्स नारदः ।। 2.1.5.२० ।।
नत्वा तत्र विधिं भक्त्या स्तुत्वा च विविधैस्तवैः ।।
पप्रच्छ शिवत्तत्वं शिवसंभक्तमानसः ।।२१।।
नारद उवाच ।।
ब्रह्मन्ब्रह्मस्वरूपज्ञ पितामह जगत्प्रभो ।।
त्वत्प्रसादान्मया सर्वं विष्णोर्माहात्म्यमुत्तमम् ।। २२ ।।
भक्तिमार्गं ज्ञानमार्गं तपोमार्गं सुदुस्तरम् ।।
दानमार्गञ्च तीर्थानां मार्गं च श्रुतवानहम् ।। २३ ।।

न ज्ञातं शिवतत्त्वं च पूजाविधिमतः क्रमात् ।।
चरित्रं विविधं तस्य निवेदय मम प्रभो ।। २४ ।।
निर्गुणोऽपि शिवस्तात सगुणश्शंकरः कथम् ।।
शिवतत्त्वं न जानामि मोहितश्शिवमायया ।।२५।।
सृष्टेः पूर्वं कथं शंभुस्स्वरूपेण प्रतिष्ठितः ।।
सृष्टिमध्ये स हि कथं क्रीडन्संवर्तते प्रभुः ।। २६ ।।
तदन्ते च कथं देवस्स तिष्ठति महेश्वरः ।।
कथं प्रसन्नतां याति शंकरो लोकशंकरः ।। २७ ।।
संतुष्टश्च स्वभक्तेभ्यः परेभ्यश्च महेश्वरः ।।
किं फलं यच्छति विधे तत्सर्वं कथयस्व मे ।। २८ ।।
सद्यः प्रसन्नो भगवान्भवतीत्यनुसंश्रुतम् ।।
भक्तप्रयासं स महान्न पश्यति दयापरः ।। २९ ।।
ब्रह्मा विष्णुर्महेशश्च त्रयो देवाश्शिवांशजाः ।।
महेशस्तत्र पूर्णांशस्स्वयमेव शिवः परः ।। 2.1.5.३० ।।
तस्याविर्भावमाख्याहि चरितानि विशेषतः ।।
उमाविर्भावमाख्याहि तद्विवाहं तथा विभो ।।३१।।
तद्गार्हस्थ्यं विशेषेण तथा लीलाः परा अपि।।
एतत्सर्वं तथान्यच्च कथनीयं त्वयानघ ।।३२।।
तदुत्पत्तिं विवाहं च शिवायास्तु विशेषतः।।
प्रब्रूहि मे प्रजानाथ गुहजन्म तथैव च।।३३।।
बहुभ्यश्च श्रुतं पूर्वं न तृप्तोऽस्मि जगत्प्रभो।।
अतस्त्वां शरणं प्राप्तः कृपां कुरु ममोपरि ।।३४।।
इति श्रुत्वा वचस्तस्य नारदस्यांगजस्य हि।।
उवाच वचनं तत्र ब्रह्मा लोकपितामहः।।३५।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखंडे सृष्ट्युपाख्याने नारदप्रश्नवर्णनोनाम पञ्चमोऽध्यायः।।५।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः ०६

https://sa.wikisource.org/s/sy4
< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः १ (सृष्टिखण्डः)

।।ब्रह्मोवाच।।

भो ब्रह्मन्साधु पृष्टोऽहं त्वया विबुधसत्तम ।।

लोकोपकारिणा नित्यं लोकानां हितकाम्यया ।। १ ।।

यच्छ्रुत्वा सर्वलोकानां सर्वपापक्षयो भवेत् ।।

तदहं ते प्रवक्ष्यामि शिवतत्त्वमनामयम् ।।२।।

शिवतत्त्वं मया नैव विष्णुनापि यथार्थतः ।।

ज्ञातश्च परमं रूपमद्भुतं च परेण न ।।३।।

महाप्रलयकाले च नष्टे स्थावरजंगमे ।।

आसीत्तमोमयं सर्वमनर्कग्रहतारकम् ।।४।।

अचन्द्रमनहोरात्रमनग्न्यनिलभूजलम् ।।

अप्रधानं वियच्छून्यमन्यतेजोविवर्जितम् ।।२।।

अदृष्टत्वादिरहितं शब्दस्पर्शसमुज्झितम् ।।

अव्यक्तगंधरूपं च रसत्यक्तमदिङ्मुखम् ।। ६ ।।

इत्थं सत्यंधतमसे सूचीभेद्यं निरंतरे ।।

तत्सद्ब्रह्मेति यच्छ्रुत्वा सदेकं प्रतिपद्यते ।। ७ ।।

इतीदृशं यदा नासीद्यत्तत्सदसदात्मकम् ।।

योगिनोंतर्हिताकाशे यत्पश्यंति निरंतरम् ।।८।।

अमनोगोचरम्वाचां विषयन्न कदाचन ।।

अनामरूपवर्णं च न च स्थूलं न यत्कृशम्।।९।।

अह्रस्वदीर्घमलघुगुरुत्वपरिवर्जितम् ।।

न यत्रोपचयः कश्चित्तथा नापचयोऽपि च ।। 2.1.6.१०।।

अभिधत्ते स चकितं यदस्तीति श्रुतिः पुनः ।।

सत्यं ज्ञानमनंतं च परानंदम्परम्महः ।। १ १।।

अप्रमेयमनाधारमविकारमनाकृति ।।

निर्गुणं योगिगम्यञ्च सर्वव्याप्येककारकम् ।।१२।।
निर्विकल्पं निरारंभं निर्मायं निरुपद्रवम् ।।
अद्वितीयमनाद्यन्तमविकाशं चिदात्मकम् ।।१३।।
यस्येत्थं संविकल्पंते संज्ञासंज्ञोक्तितः स्म वै ।।
कियता चैव कालेन द्वितीयेच्छाऽभवत्किल ।। १४ ।।
अमूर्तेन स्वमूर्तिश्च तेनाकल्पि स्वलीलया ।।
सर्वैश्वर्यगुणोपेता सर्वज्ञानमयी शुभा ।। १५ ।।
सर्वगा सर्वरूपा च सर्वदृक्सर्वकारिणी ।।
सर्वैकवंद्या सर्वाद्या सर्वदा सर्वसंस्कृतिः ।। १६ ।।
परिकल्प्येति तां मूर्तिमैश्वरीं शुद्धरूपिणीम् ।।
अद्वितीयमनाद्यंतं सर्वाभासं चिदात्मकम् ।।
अंतर्दधे पराख्यं यद्ब्रह्म सर्वगमव्ययम् ।। १७ ।।
अमूर्ते यत्पराख्यं वै तस्य मूर्तिस्सदाशिवः ।।
अर्वाचीनाः पराचीना ईश्वरं तं जगुर्बुधाः ।। ।। १८ ।।
शक्तिस्तदैकलेनापि स्वैरं विहरता तनुः ।।
स्वविग्रहात्स्वयं सृष्टा स्वशरीरानपायिनी ।। १९ ।।
प्रधानं प्रकृतिं तां च मायां गुणवतीं पराम् ।।
बुद्धितत्त्वस्य जननीमाहुर्विकृतिवर्जिताम् ।। 2.1.6.२० ।।
सा शक्तिरम्बिका प्रोक्ता प्रकृतिस्सकलेश्वरी।।
त्रिदेवजननी नित्या मूलकारणमित्युत ।। २१ ।।
अस्या अष्टौ भुजाश्चासन्विचित्रवदना शुभा ।।
राकाचन्द्रसहस्रस्य वदने भाश्च नित्यशः ।।२२।।
नानाभरणसंयुक्ता नानागतिसमन्विता ।।
नानायुधधरा देवी फुल्लपंकजलोचना ।। २३ ।।
अचिंत्यतेजसा युक्ता सर्वयोनिस्समुद्यता ।।
एकाकिनी यदा माया संयोगाच्चाप्यनेकिका ।। २४ ।।
परः पुमानीश्वरस्स शिवश्शंभुरनीश्वरः ।।
शीर्षे मन्दाकिनीधारी भालचन्द्रस्त्रिलोचनः ।।२५।।

पंचवक्त्रः प्रसन्नात्मा दशबाहुस्त्रिशूलधृक् ।।
कर्पूरगौरसुसितो भस्मोद्धूलितविग्रहः ।।२६।।
युगपच्च तया शक्त्या साकं कालस्वरूपिणा ।।
शिवलोकाभिधं क्षेत्रं निर्मितं तेन ब्रह्मणा।। २७ ।।
तदेव काशिकेत्येतत्प्रोच्यते क्षेत्रमुत्तमम् ।।
परं निर्वाणसंख्यानं सर्वोपरि विराजितम् ।। २८ ।।
ताभ्यां च रममाणाभ्यां च तस्मिन्क्षेत्रे मनोरमे ।।
परमानंदरूपाभ्यां परमानन्दरूपिणी ।।२९।।
मुने प्रलयकालेपि न तत्क्षेत्रं कदाचन ।।
विमुक्तं हि शिवाभ्यां यदविमुक्तं ततो विदुः।।2.1.6.३०।।
अस्यानन्दवनं नाम पुराकारि पिनाकिना ।।
क्षेत्रस्यानंदहेतुत्वादविमुक्तमनंतरम्।।३१।।
अथानन्दवने तस्मिञ्च्छिवयो रममाणयोः।।
इच्छेत्यभूत्सुरर्षे हि सृज्यः कोप्यपरः किल ।। ३२ ।।
यस्मिन्यस्य महाभारमावां स्वस्वैरचारिणौ ।।
निर्वाणधारणं कुर्वः केवलं काशिशायिनौ ।।३३।।
स एव सर्वं कुरुतां स एव परिपातु च ।।
स एव संवृणोत्वं ते मदनुग्रहतस्सदा ।।३४।।
चेतस्समुद्रमाकुंच्य चिंताकल्लोललोलितम् ।।
सत्त्वरत्नं तमोग्राहं रजोविद्रुमवल्लितम् ।।३५।।
यस्य प्रसादात्तिष्ठावस्सुखमानंदकानने।।
परिक्षिप्तमनोवृत्तौ बहिश्चिंतातुरे सुखम् ।।३६।।
संप्रधार्य्येति स विभुस्तया शक्त्या परेश्वरः ।।
सव्ये व्यापारयांचक्रे दशमेंऽगेसुधासवम् ।। ३७ ।।
ततः पुमानाविरासीदेकस्त्रैलोक्यसुंदरः ।।
शांतस्सत्त्वगुणोद्रिक्तो गांभीर्य्यामितसागरः ।।३८।।
तथा च क्षमया युक्तो मुनेऽलब्धोपमो ऽभवत् ।।
इन्द्रनीलद्युतिः श्रीमान्पुण्डरीकोत्तमेक्षणः ।।३९ ।।

सुवर्णकृतिभृच्छ्रेष्ठ दुकूलयुगलावृतः ।।
लसत्प्रचंडदोर्दण्डयुगलोह्यपराजितः ।।2.1.6.४०।।
ततस्स पुरुषश्शंभुं प्रणम्य परमेश्वरम् ।।
नामानि कुरु मे स्वामिन्वद कर्मं जगाविति ।।४१।।
तच्छ्रुत्वा वचनम्प्राह शंकरः प्रहसन्प्रभुः ।।
पुरुषं तं महेशानो वाचा मेघगभीरया।।४२।।
शिव उवाच।।
विष्णिवतिव्यापकत्वात्ते नाम ख्यातं भविष्यति।।
बहून्यन्यानि नामानि भक्तसौख्यकराणि ह ।।४३।।
तपः कुरु दृढो भूत्वा परमं कार्यसाधनम् ।।
इत्युक्त्वा श्वासमार्गेण ददौ च निगमं ततः ।।४४।।
ततोऽच्युतश्शिवं नत्वा चकार विपुलं तपः ।।
अंतर्द्धानं गतश्शक्त्या सलोकः परमेश्वरः ।।४९।।
दिव्यं द्वादश साहस्रं वर्षं तप्त्वापि चाच्युतः ।।
न प्राप स्वाभिलषितं सर्वदं शंभुदर्शनम् ।। ४६ ।।
ततत्संशयमापन्नश्चिंतितं हृदि सादरम् ।।
मयाद्य किं प्रकर्तव्यमिति विष्णुश्शिवं स्मरन् ।। ४७ ।।
एतस्मिन्नंतरे वाणी समुत्पन्ना शिवाच्छुभा ।।
तपः पुनः प्रकर्त्तव्यं संशयस्यापनुत्तये ।। ४८ ।।
ततस्तेन च तच्छ्रुत्वा तपस्तप्तं सुदारुणम् ।।
बहुकालं तदा ब्रह्मध्यानमार्गपरेण हि ।। ४९ ।।
ततस्स पुरुषो विष्णुः प्रबुद्धो ध्यानमार्गतः ।।
सुप्रीतो विस्मयं प्राप्तः किं यत्तव महा इति ।। 2.1.6.५० ।।
परिश्रमवतस्तस्य विष्णोः स्वाङ्गेभ्य एव च ।।
जलधारा हि संयाता विविधाश्शिवमायया ।।५१।।
अभिव्याप्तं च सकलं शून्यं यत्तन्महामुने ।।
ब्रह्मरूपं जलमभूत्स्पर्शनात्पापनाशनम् ।। ५२ ।।
तदा श्रांतश्च पुरुषो विष्णुस्तस्मिञ्जले स्वयम् ।।

सुष्वाप परम प्रीतो बहुकालं विमोहितः ।। ५३ ।।

नारायणेति नामापि तस्यसीच्छ्रुतिसंमतम् ।।

नान्यत्किंचित्तदा ह्यासीत्प्राकृतं पुरुषं विना।।५४।।

एतस्मिन्नन्तरे काले तत्त्वान्यासन्महात्मनः ।।

तत्प्रकारं शृणु प्राज्ञ गदतो मे महामते ।। ५५ ।।

प्रकृतेश्च महानासीन्महतश्च गुणास्त्रयः ।।

अहंकारस्ततो जातस्त्रिविधो गुणभेदतः ।। ५६ ।।

तन्मात्राश्च ततो जातः पञ्चभूतानि वै तता ।।

तदैव तानीन्द्रियाणि ज्ञानकर्ममयानि च ।।२७।।

तत्त्वानामिति संख्यानमुक्तं ते ऋषिसत्तम ।।

जडात्मकञ्च तत्सर्वं प्रकृतेः पुरुषं विना ।।५८।।

तत्तदैकीकृतं तत्त्वं चतुर्विंशतिसंख्यकम्।।

शिवेच्छया गृहीत्वा स सुष्वाप ब्रह्मरूपके ।।५९।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां सृष्टिव्याख्यने प्रथमखंडे विष्णूत्पत्तिवर्णनो नाम षष्ठोऽध्यायः ।।६।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः ०७

https://sa.wikisource.org/s/t6e



ब्रह्मोवाच ।।

सुप्ते नारायणे देवे नाभौ पंकजमुत्तमम् ।।

आविर्बभूव सहसा बहव संकरेच्छया ।।१।।

अनंतयष्टिकायुक्तं कर्णिकारसमप्रभम् ।।

अनंतयोजनायाममनंतोच्छ्रायसंयुतम्।।२।।

कोटिसूर्यप्रतीकाशं सुंदर वचसंयुतम् ।।

अत्यद्भुतं महारम्यं दर्शनीयमनुत्तमम् ।। ३ ।।

कृत्वा यत्नं पूर्ववत्स शंकरः परमेश्वरः ।।

दक्षिणांगान्निजान्मां कैसाशीश्शंभुरजीजनत् ।। ४ ।।

स मायामोहितं कृत्वा मां महेशो द्रुतं मुने ।।

तन्नाभिपंकजादाविर्भावयामास लीलया ।। ९ ।।

एष पद्मात्ततो जज्ञे पुत्रोऽहं हेमगर्भकः ।।

चतुर्मुखो रक्तवर्णस्त्रिपुड्रांकितमस्तकः ।। ६ ।।

तन्मायामोहितश्चाहं नाविदं कमल विना ।।

स्वदेहजनकं तात पितरं ज्ञानदुर्बलः ।। ७ ।।

कोहं वा कुत आयातः किं कार्यं तु मदीयकम् ।।

कस्य पुत्रोऽहमुत्पन्नः केनैव निर्मितोऽधुना ।। ८ ।।

इति संशयमापन्नं बुद्धिर्मां समपद्यत ।।

किमर्थं मोहमायामि तज्ज्ञानं सुकरं खलु ।। ९ ।।

एतत्कमलपुष्पस्य पत्रारोहस्थलं ह्यधः ।।

मत्कर्ता च स वै तत्र भविष्यति न संशयः ।।2.1.7.१०।।

इति बुद्धिं समास्थाय कमलादवरोहयन् ।।

नाले नालेगतस्तत्र वर्षाणां शतकं मुने ।।१ १।।

न लब्धं तु मया तत्र कमलस्थानमुत्तमम् ।।

संशयं च पुनः प्राप्तः कमले गन्तुमुत्सुकः ।। १२ ।।

आरुरोहाथ कमलं नालमार्गेण वै मुने ।।

कुड्मलं कमलस्याथ लब्धवान्न विमोहिताः ।।१३।।

नालमार्गेण भ्रमतो गतं वर्षशतं पुनः ।।

क्षणमात्र तदा तत्र ततस्तिष्ठन्विमोहितः ।।१४।।

तदा वाणी समुत्पन्ना तपेति परमा शुभा ।।

शिवेच्छया परा व्योम्नो मोहविध्वंसिनी मुने ।।१५।।

तच्छ्रुत्वा व्योमवचनं द्वादशाब्दं प्रयत्नतः ।।

पुनस्तप्तं तपो घोरं द्रष्टुं स्वजनकं तदा।।१६।।

तदा हि भगवान्विष्णुश्चतुर्बाहुस्सुलोचनः ।।

मय्येवानुग्रहं कर्तुं द्रुतमाविर्बभूव ह ।।१७।।

शंखचक्रायुधकरो गदापद्मधरः परः ।।

घनश्यामलसर्वांगः पीताम्बरधरः परः ।। १८ ।।

मुकुटादिमहाभूषः प्रसन्नमुखपंकजः ।।

कोटिकंदर्पसंकाशस्सन्दष्टो मोहितेन सः ।। १९ ।।

तद्दृष्ट्वा सुन्दरं रूपं विस्मयं परमं गतः ।।

कालाभं कांचनाभं च सर्वात्मानं चतुर्भुजम् ।। 2.1.7.२० ।।

तथाभूतमहं दृष्ट्वा सदसन्मयमात्मना ।।

नारायणं महाबाहु हर्षितो ह्यभवं तदा ।। २१ ।।

मायया मोहितश्शम्भोस्तदा लीलात्मनः प्रभोः ।।

अविज्ञाय स्वजनकं तमवोचं प्रहर्षितः ।। २२ ।।

ब्रह्मोवाच ।।

कस्त्वं वदेति हस्तेन समुत्थाप्य सनातनम् ।।

तदा हस्तप्रहारेण तीव्रेण सुदृढेन तु ।। २३ ।।

प्रबुद्ध्योत्थाय शयनात्समासीनः क्षणं वशी ।।

ददर्श निद्राविक्लिन्ननीरजामललोचनः ।।२४।।

मामत्र संस्थितं भासाध्यासितो भगवान्हरिः ।।

आह चोत्थाय ब्रह्माणं हसन्मां मधुरं सकृत् ।। २५ ।।

विष्णुरुवाच ।।

स्वागतं स्वागतं वत्स पितामह महाद्युते ।।

निर्भयो भव दास्येऽहं सर्वान्कामान्न संशयः ।। २६ ।।

तस्य तद्वचनं श्रुत्वा स्मितपूर्वं सुरर्षभः ।।

रजसा बद्धवैरश्च तमवोचं जनार्दनम् ।। २७ ।।

ब्रह्मोवाच ।।

भाषसे वत्स वत्सेति सर्वसंहारकारणम् ।।

मामिहाति स्मितं कृत्वा गुरुश्शिष्यमिवानघ ।। २८ ।।

कर्तारं जगतां साक्षात्प्रकृतेश्च प्रवर्तकम् ।।

सनातनमजं विष्णुं विरिंचिं विष्णुसंभवम् ।। २९ ।।

विश्वात्मानं विधातारं धातारम्पंकजेक्षणम् ।।

किमर्थं भाषसे मोहाद्वक्तुमर्हसि सत्वरम् ।। 2.1.7.३० ।।

वेदो मां वक्ति नियमात्स्वयंभुवमजं विभुम् ।।

पितामहं स्वराजं च परमेष्ठिनमुत्तमम् ।। ३१ ।।

इत्याकर्ण्य हरिर्वाक्यं मम क्रुद्धो रमापतिः ।।

सोऽपि मामाह जाने त्वां कर्तारमिति लोकतः ।। ३२ ।।

विष्णुरुवाच ।। ।।

कर्तुं धर्तुं भवानंगादवतीर्णो ममाव्ययात् ।।

विस्मृतोऽसि जगन्नाथं नारायणमनामयम्।।३३।।

पुरुषं परमात्मानं पुरुहूतं पुरुष्टुतम् ।।

विष्णुमच्युतमीशानं विश्वस्य प्रभवोद्भवम्।।३४।।

नारायणं महाबाहुं सर्वव्याप कमीश्वरम् ।।

मन्नाभिपद्मतस्त्वं हि प्रसूतो नात्र संशयः ।। ३५ ।।

तवापराधो नास्त्यत्र त्वयि मायाकृतं मम ।।

शृणु सत्यं चतुर्वक्त्र सर्वदेवेश्वरो ह्यहम् ।।३६।।

कर्ता हर्ता च भर्ता च न मयास्तिसमो विभुः ।।

अहमेव परं ब्रह्म परं तत्त्वं पितामह।।३७।।

अहमेव परं ज्योतिः परमात्मा त्वहं विभुः ।।

अद्य दृष्टं श्रुतं सर्वं जगत्यस्मिँश्चराचरम् ।। ३८ ।।
तत्तद्विद्धि चतुर्वक्त्र सर्वं मन्मयमित्यथ ।।
मया सृष्टं पुरा व्यक्तं चतुर्विंशतितत्त्वकम्।। ३९ ।।
नित्यं तेष्वणवो बद्धास्सृष्टक्रोधभयादयः ।।
प्रभावाच्च भवानंगान्यनेकानीह लीलया ।। 2.1.7.४० ।।
सृष्टा बुद्धिर्मया तस्यामहंकारस्त्रिधा ततः ।।
तन्मात्रं पंकजं तस्मान्मनोदेहेन्द्रियाणि च ।।४१।।
आकाशादीनि भूतानि भौतिकानि च लीलया ।।
इति बुद्ध्वा प्रजानाथ शरणं व्रज मे विधे ।।४२।।
अहं त्वां सर्वदुःखेभ्यो रक्षिष्यामि न संशयः ।।
ब्रह्मोवाच ।।
इति श्रुत्वा वचस्तस्य ब्रह्मा क्रोधसमन्वितः ।।
को वा त्वमिति संभत्स्र्माब्रुवं मायाविमोहितः ।। ४३ ।।।
किमर्थं भाषसे भूरि वह्वनर्थकरं वचः ।।
नेश्वरस्त्वं परब्रह्म कश्चित्कर्ता भवेत्तव ।।४४।।
मायया मोहितश्चाहं युद्धं चक्रे सुदारुणम् ।।
हरिणा तेन वै सार्द्धं शंकरस्य महाप्रभोः ।। ४५ ।।
एवं मम हरेश्चासीत्संगरो रोमहर्षणः ।।
प्रलयार्णवमध्ये तु रजसा बद्धवैरयोः ।। ४६ ।।
एतस्मिन्नंतरे लिंगमभवच्चावयोः पुरः।।
विवादशमनार्थं हि प्रबोधार्थं तथाऽऽवयोः ।।४७।।
ज्लामालासहस्राढ्यं कालानलशतोपमम्।।
क्षयवृद्धि विनिर्मुक्तमादिमध्यांतवर्जितम्।।४८।।
अनौपम्यमनिर्देश्यमव्यक्तं विश्वसंभवम् ।।
तस्य ज्वालासहस्रेण मोहितो भगवान्हरिः।।४९।।
मोहितं चाह मामत्र किमर्थं स्पर्द्धसेऽधुना ।।
आगतस्तु तृतीयोऽत्र तिष्ठतां युद्धमावयोः ।। 2.1.7.५० ।।
कुत एवात्र संभूतः परीक्षावो ऽग्निसंभवम् ।।

अधो गमिष्याम्यनलस्तंभस्यानुपमस्य च ।।५१।।

परीक्षार्थं प्रजानाथ तस्य वै वायुवेगतः ।।

भवानूर्द्ध्वं प्रयत्नेन गंतुमर्हति सत्वरम् ।। ५२ ।।

ब्रह्मोवाच ।।

एवं व्याहृत्य विश्वात्मा स्वरूपमकरोत्तदा ।।

वाराहमहप्याशु हंसत्वं प्राप्तवान्मुने ।। ।। ५३ ।।

तदा प्रभृति मामाहुर्हंसहंसो विराडिति ।।

हंसहंसेति यो ब्रूयात्स हंसोऽथ भविष्यति ।। ५४ ।।

सुश्वे ह्यनलप्रख्यो विश्वतः पक्षसंयुतः ।।

मनोनिलजवो भूत्वा गत्वोर्द्ध्वं चोर्द्ध्वतः पुरा ।।५५।।

नारायणोऽपि विश्वात्मा सुश्वेतो ह्यभवत्तदा।।

दश योजनविस्तीर्णं शतयोजनमायतम् ।।५६।।

मेरुपर्वतवर्ष्माणं गौरतीक्ष्णोग्रदंष्ट्रिणम् ।।

कालादित्यसमाभासं दीर्घघोणं महास्वनम् ।। ५७ ।।

ह्रस्वपादं विचित्रांगं जैत्रं दृढमनौपमम् ।।

वाराहाकारमास्थाय गतवांस्तदधौ जवात् ।। ५८ ।।

एवम्बर्षसहस्रं च चरन्विष्णुरधो गतः ।।

तथाप्रभृति लोकेषु श्वेतवाराहसंज्ञकः ।।५९।।

कल्पो बभूव देवर्षे नराणां कालसंज्ञकः ।।

बभ्राम बहुधा विष्णुः प्रभविष्णुरधोगतः ।। 2.1.7.६० ।।

नापश्यदल्पमप्यस्य मूलं लिंगस्य सूकरः ।।

तावत्कालं गतश्चोर्द्ध्वमहमप्यरिसूदन ।।६१।।

सत्वरं सर्वयत्नेन तस्यान्तं ज्ञातुमिच्छया ।।

श्रान्तो न दृष्ट्वा तस्यांतमहं कालादधोगतः ।।६२।।

तथैव भगवान्विष्णुश्श्रांतं कमललोचनः ।।

सर्वदेवनिभस्तूर्णमुत्थितस्स महावपुः ।। ६३ ।।

समागतो मया सार्द्धं प्रणिपत्य भवं मुहुः ।।

मायया मोहितश्शंभोस्तस्थौ संविग्नमानसः ।। ६४ ।।

पृष्ठतः पार्श्वतश्चैव ह्यग्रतः परमेश्वरम् ।।
प्रणिपत्य मया सार्द्धं सस्मार किमिदं त्विति ।।६५।।
अनिर्देश्यं च तद्रूपमनाम कर्मवर्जितम् ।।
अलिंगं लिंगतां प्राप्तं ध्यानमार्गेप्यगोचरम् ।।६६।।
स्वस्थं चित्तं तदा कृत्वा नमस्कार परायणो ।।
बभूवतुरुभावावामहं हरिरपि ध्रुवम्।।६७।।
जानीवो न हि ते रूपं योऽसियोऽसि महाप्रभो ।।
नमोऽस्तु ते महेशान रूपं दर्शय नौ त्वरन् ।।६८।।
एवं शरच्छतान्यासन्नमस्कारं प्रकुर्वतोः ।।
आवयोर्मुनिशार्दूल मदमास्थितयोस्तदा ।।६९।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसं हितायां प्रथमखंडे विष्णुब्रह्मविवादवर्णनोनाम सप्तमोऽध्यायः।।
७।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः ०८

https://sa.wikisource.org/s/t6f

< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः १ (सृष्टिखण्डः)

ब्रह्मोवाच ।।

एवं तयोर्मुनिश्रेष्ठ दर्शनं कांक्षमाणयोः ।।

विगर्वयोश्च सुरयोः सदा नौ स्थितयोर्मुने ।। १।।

दयालुरभवच्छंभुर्दीनानां प्रतिपालकः ।।

गर्विणां गर्वहर्ता च सवेषां प्रभुरव्ययः ।।२।।

तदा समभवत्तत्र नादो वै शब्दलक्षणः ।।

ओमोमिति सुरश्रेष्ठात्सुव्यक्तः प्लुतलक्षणः ।।३।।

किमिदं त्विति संचिंत्य मया तिष्ठन्महास्वनः ।।

विष्णुस्सर्वसुराराध्यो निर्वैरस्तुष्टचेतसा ।। ४ ।।

लिंगस्य दक्षिणे भागे तथापश्यत्सनातनम् ।।

आद्यं वर्णमकाराख्यमुकारं चोत्तरं ततः ।। ५ ।।

मकारं मध्यतश्चैव नादमंतेऽस्य चोमिति ।।

सूर्यमंडलवद्दृष्ट्वा वर्णमाद्यं तु दक्षिणे ।।६।।

उत्तरे पावकप्रख्यमुकारमृषि सत्तम ।।

शीतांशुमण्डलप्रख्यं मकारं तस्य मध्यतः ।।७।।

तस्योपरि तदाऽपश्यच्छुद्धस्फटिकसुप्रभम् ।।

तुरीयातीतममलं निष्कलं निरुपद्रवम् ।। ८ ।।

निर्द्वंद्वं केवलं शून्यं बाह्याभ्यंतरवर्जितम् ।।

स बाह्यभ्यंतरे चैव बाह्याभ्यंतरसंस्थितम् ।। ९ ।।

आदिमध्यांतरहितमानंदस्यापिकारणम् ।।

सत्यमानन्दममृतं परं ब्रह्मपरायणम् ।। 2.1.8.१० ।।

कुत एवात्र संभूतः परीक्षावोऽग्निसंभवम् ।।

अधोगमिष्याम्यनलस्तंभस्यानुपमस्य च ।। ११ ।।

वेदशब्दोभयावेशं विश्वात्मानं व्यचिंतयत् ।।

तदाऽभवदृषिस्तत्र ऋषेस्सारतमं स्मृतम् ।।१२।।

तेनैव ऋषिणा विष्णुर्ज्ञातवान्परमेश्वरम् ।।

महादेवं परं ब्रह्म शब्दब्रह्मतनुं परम् ।।१३।।

चिंतया रहितो रुद्रो वाचो यन्मनसा सह ।।

अप्राप्य तन्निवर्तंते वाच्यस्त्वेकाक्षरेण सः ।।१४।।

एकाक्षरेण तद्वाक्यमृतं परमकारणम् ।।

सत्यमानन्दममृतं परं ब्रह्म परात्परम् ।। १५ ।।

एकाक्षरादकाराख्याद्भगवान्बीजकोण्डजः ।।

एकाक्षरादुकाराख्याद्धरिः परमकारणम्।।१६।।

एकाक्षरान्मकाराख्याद्भगवान्नीललोहितः ।।

सर्गकर्ता त्वकाराख्यो ह्युकाराख्यस्तु मोहकः ।।१७।।

मकाराख्यस्तु यो नित्यमनुग्रहकरोऽभवत्।।

मकाराख्यो विभुर्बीजी ह्यकारो बीज उच्यते ।। १८ ।।

उकाराख्यो हरिर्योनिः प्रधानपुरुषेश्वरः ।।

बीजी च बीजं तद्योनिर्नादाख्यश्च महेश्वरः ।। १९ ।।

बीजी विभज्य चात्मानं स्वेच्छया तु व्यवस्थितः ।।

अस्य लिंगादभूद्बीजमकारो बीजिनः प्रभोः ।। 2.1.8.२० ।।

उकारयोनौ निःक्षिप्तमवर्द्धत समंततः।।

सौवर्णमभवच्चांडमावेद्य तदलक्षणम् ।। २१ ।।

अनेकाब्दं तथा चाप्सु दिव्यमंडं व्यवस्थितम्।।

ततो वर्षसहस्रांते द्विधाकृतमजोद्भवम् ।।२२।।

अंडमप्सु स्थितं साक्षाद्व्याघातेनेश्वरेण तु ।।

तथास्य सुशुभं हैमं कपालं चोर्द्ध्वसंस्थितम् ।।२३।।

जज्ञे सा द्यौस्तदपरं पृथिवी पंचलक्षणा ।।

तस्मादंडाद्भवो जज्ञे ककाराख्यश्चतुर्मुखः ।।२४।।

स स्रष्टा सर्वलोकानां स एव त्रिविधः प्रभुः ।।

एवमोमोमिति प्रोक्तमित्याहुर्यजुषां वराः ।।२५।।

यजुषां वचनं श्रुत्वा ऋचः समानि सादरम् ।।

एवमेव हरे ब्रह्मन्नित्याहुश्चावयोस्तदा ।।२६।।

ततो विज्ञाय देवेशं यथावच्छक्तिसंभवैः ।।

मंत्रं महेश्वरं देवं तुष्टाव सुमहोदयम्।।२७।।

एतस्मिन्नंतरेऽन्यच्च रूपमद्भुतसुन्दरम् ।।

ददर्श च मया सार्द्धं भगवान्विश्वपालकः ।। २८ ।।

पंचवक्त्रं दशभुजं गौरकर्पूरवन्मुने ।।

नानाकांति समायुक्तं नानाभूषणभूषितम् ।। २९ ।।

महोदारं महावीर्यं महापुरुषलणम् ।।

तं दृष्ट्वा परमं रूपं कृतार्थोऽभून्मया हरिः ।।2.1.8.३०।।

अथ प्रसन्नो भगवान्महेशः परमेश्वरः ।।

दिव्यं शब्दमयं रूपमाख्याय प्रहसन्स्थितः ।। ३१ ।।

अकारस्तस्य मूर्द्धा हि ललाटो दीर्घ उच्यते ।।

इकारो दक्षिणं नेत्रमीकारो वामलोचनम् ।।३२।।।।

उकारो दक्षिणं श्रोत्रमूकारो वाम उच्यते ।।

ऋकारो दक्षिणं तस्य कपोलं परमेष्ठिनः ।।३३।।

वामं कपोलमूकारो लृ लॄ नासापुटे उभे।।

एकारश्चोष्ठ ऊर्द्ध्वश्च ह्यैकारस्त्वधरो विभोः ।।३४।।

ओकारश्च तथौकारो दन्तपंक्तिद्वयं क्रमात् ।।

अमस्तु तालुनी तस्य देवदेवस्य शूलिनः ।।३५।।

कादिपंचाक्षराण्यस्य पञ्च हस्ताश्च दक्षिणे ।।

चादिपंचाक्षराण्येवं पंच हस्तास्तु वामतः ।। ३६ ।।

टादिपंचाक्षरं पादास्तादिपंचाक्षरं तथा ।।

पकार उदरं तस्य फकारः पार्श्व उच्यते ।।३७।।

बकारो वामपार्श्वस्तु भकारः स्कंध उच्यते ।।

मकारो हृदयं शंभोर्महादेवस्य योगिनः ।।३८।।

यकारादिसकारान्ता विभोर्वै सप्तधातवः ।।

हकारो नाभिरूपो हि क्षकारो घ्राण उच्यते ।।३९।।

एवं शब्दमयं रूपमगुणस्य गुणात्मनः।।

दृष्ट्वा तमुमया सार्द्धं कृतार्थोऽभून्मया हरिः ।।2.1.8.४०।।

एवं दृष्ट्वा महेशानं शब्दब्रह्मतनुं शिवम् ।।

प्रणम्य च मया विष्णुः पुनश्चापश्यदूर्द्ध्वतः।।४१।।

ॐकारप्रभवं मंत्रं कलापंचकसंयुतम् ।।

शुद्धस्फटिकसंकाशं शुभाष्टत्रिंशदक्षरम् ।। ४२ ।।

मेधाकारमभूद्भूयस्सर्वधर्मार्थसाधकम् ।।

गायत्रीप्रभवं मंत्रं सहितं वश्यकारकम् ।। ४३ ।।

चतुर्विंशतिवर्णाढ्यं चतुष्कालमनुत्तमम् ।।

अथ पंचसितं मंत्रं कलाष्टक समायुतम् ।। ४४ ।।

आभिचारिकमत्यर्थं प्रायस्त्रिंशच्छुभाक्षरम् ।।

यजुर्वेदसमायुक्तं पञ्चविंशच्छुभाक्षरम् ।।४५।।

कलाष्टकसमा युक्तं सुश्वेतं शांतिकं तथा ।।

त्रयोदशकलायुक्तं बालाद्यैस्सह लोहितम् ।। ४६ ।।

बभूवुरस्य चोत्पत्तिवृद्धिसंहारकारणम् ।।

वर्णा एकाधिकाः षष्टिरस्य मंत्रवरस्य तु ।। ४७ ।।

पुनर्मृत्युंजयं मन्त्रं पञ्चाक्षरमतः परम् ।।

चिंतामणिं तथा मंत्रं दक्षिणामूर्ति संज्ञकम् ।। ४८ ।।

ततस्तत्त्वमसीत्युक्तं महावाक्यं हरस्य च ।।

पञ्चमंत्रांस्तथा लब्ध्वा जजाप भगवान्हरिः ।। ४९ ।।

अथ दृष्ट्वा कलावर्णमृग्यजुस्सामरूपिणम् ।।

ईशानमीशमुकुटं पुरुषाख्यं पुरातनम् ।। 2.1.8.५० ।।

अघोरहृदयं हृद्यं सर्वगुह्यं सदाशिवम् ।।

वामपादं महादेवं महाभोगीन्द्रभूषणम् ।। ५१ ।।

विश्वतः पादवन्तं तं विश्वतोक्षिकरं शिवम् ।।

ब्रह्मणोऽधिपति सर्गस्थितिसंहारकारणम् ।। ५२ ।।

तुष्टाव वाग्भिरिष्टाभिस्साम्बं वरदमीश्वरम् ।।

मया च सहितो विष्णुर्भगवांस्तुष्टचेतसा ।। ५३ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखण्डे सृष्ट्युपाख्याने शब्दब्रह्मतनुवर्णनो नामाष्टमोऽध्यायः ।। ८ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः ०९

https://sa.wikisource.org/s/t6g
< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः १ (सृष्टिखण्डः)

ब्रह्मोवाच ।।

अथाकर्ण्य नुर्तिविष्णुकृतां स्वस्य महेश्वरः ।।

प्रादुर्बभूव सुप्रीतस्सवामं करुणानिधिः ।। १ ।।

पंचवक्त्रस्त्रिनयनो भालचन्द्रो जटाधरः ।।

गौरवर्णो विशालाक्षो भस्मोद्धूलितविग्रहः ।। २ ।।

दशबाहुर्नीलगल सर्वाभरणभूषितः ।।

सर्वांगसुन्दरो भस्मत्रिपुण्ड्रांकितमस्तकः ।। ३ ।।

तं दृष्ट्वा तादृशं देवं सवामं परमेश्वरम् ।।

तुष्टाव पुनरिष्टाभिर्वाग्भिर्विष्णुर्मया सह ।। ४ ।।

निगमं श्वासरूपेण ददौ तस्मै ततो हरः ।।

विष्णवे च प्रसन्नात्मा महेशः करुणाकरः ।। ५ ।।

ततो ज्ञानमदात्तस्मै हरये परमात्मने ।।

परमात्मा पुनर्मह्यं दत्तवान्कृपया मुने ।। ६ ।।

संप्राप्य निगमं विष्णुः पप्रच्छ पुनरेव तम् ।।

कृतार्थस्सांजलिर्नत्वा मया सह महेश्वरम् ।। ७ ।।

विष्णुरुवाच ।।

कथं च तुष्यसे देव मया पूज्यः कथं प्रभो ।

कथं ध्यानं प्रकर्तव्यं कथं व्रजसि वश्यताम् ।। ८ ।।

किं कर्तव्यं महादेव ह्यावाभ्यां तव शासनात् ।।

सदासदाज्ञापय नौ प्रीत्यर्थं कुरु शंकर ।। ९ ।।

एतत्सर्वं महाराज कृपां कृत्वाऽवयोः प्रभो ।।

कथनीयं तथान्यच्च विज्ञाय स्वानुगौ शिव ।। 2.1.9.१० ।।

ब्रह्मोवाच।।

इत्येतद्वचनं श्रुत्वा प्रसन्नो भगवान्हरः ।।

उवाच वचनं प्रीत्या सुप्रसन्नः कृपानिधिः ।। ११ ।।

श्रीशिव उवाच ।।

भक्त्या च भवतोर्नूनं प्रीतोहं सुरसत्तमौ ।।

पश्यतं मां महादेवं भयं सर्वं विमुंचताम् ।। १२ ।।

मम लिंगं सदा पूज्य ध्येयं चैतादृशं मम ।।

इदानीं दृश्यते यद्वत्तथा कार्यं प्रयत्नतः ।। १३ ।।

पूजितो लिंगरूपेण प्रसन्नो विविधं फलम् ।।

दास्यामि सर्वलोकेभ्यो मनोभीष्टान्यनेकशः ।। १४ ।।

यदा दुःखं भवेत्तत्र युवयोस्सुरसत्तमौ ।।

पूजिते मम लिंगे च तदा स्याद्दुःखनाशनम् ।। १५ ।।

युवां प्रसूतौ प्रकृतेर्मदीयाया महाबलौ ।।

गात्राभ्यां सव्यसव्याभ्यां मम सर्वेश्वरस्य हि ।। १६ ।।

अयं मे दक्षिणात्पार्श्वाद्ब्रह्मा लोकपितामहः ।।

वामपार्श्वाच्च विष्णुस्त्वं समुत्पन्नः परात्मनः ।। १७ ।।

प्रीतोहं युवयोस्सम्यग्वरं दद्यां यथेप्सितम् ।।

मयि भक्तिर्दृढा भूयाद्युवयोरभ्यनुज्ञया ।। १८ ।।

पार्थिवीं चैव मन्मूर्तिं विधाय कुरुतं युवाम् ।।

सेवां च विविधां प्राज्ञौ कृत्वा सुखमवाप्स्यथ ।। १९ ।।

ब्रह्मन्सृष्टिं कुरु त्वं हि मदाज्ञापरिपालकः ।।

वत्स वत्स हरे त्वं च पालयैवं चराचरम् ।। 2.1.9.२० ।।

ब्रह्मोवाच ।।

इत्युक्त्वा नौ प्रभुरताभ्यां पूजाविधिमदाच्छुभाम् ।।

येनैव पूजितश्शंभुः फलं यच्छत्यनेकशः ।। २१ ।।

ब्रह्मोवाच ।।

इत्याकर्ण्य वचश्शंभोर्मया च सहितो हरिः ।।

प्रत्युवाच महेशानं प्रणिपत्य कृतांजलिः ।। २२ ।।

विष्णुरुवाच ।।

यदि प्रीतिः समुत्पन्ना यदि देयो वरश्च नौ ।।

भक्तिर्भवतु नौ नित्यं त्वयि चाव्यभिचारिणी ।। २३ ।।

त्वमप्यवतरस्वाद्य लीलया निर्गुणोपि हि ।।

सहायं कुरु नौ तात त्वं परः परमेश्वरः ।। २४ ।।

आवयोर्देवदेवेश विवादमपि शोभनम् ।।

इहागतो भवान्यस्माद्विवादशमनाय नौ ।। २५ ।।

ब्रह्मोवाच ।।

तस्य तद्वचनं श्रुत्वा पुनः प्राह हरो हरिम् ।।

प्रणिपत्य स्थितं मूर्ध्ना कृतांजलिपुटः स्वयम् ।।२६।।

श्रीमहेश उवाच ।।

प्रलयस्थितिसर्गाणां कर्ताहं सगुणोऽगुणः ।।

परब्रह्म निर्विकारी सच्चिदानंदलक्षणः ।। २७ ।।

त्रिया भिन्नो ह्यहं विष्णो ब्रह्मविष्णुहराख्यया।।

सर्गरक्षालयगुणैर्निष्कलोहं सदा हरे ।।२८।।

स्तुतोऽहं यत्त्वया विष्णो ब्रह्मणा मेऽवतारणे।।

प्रार्थनां तां करिष्यामि सत्यां यद्भक्तवत्सलः ।।२९।।

मद्रूपं परमं ब्रह्मन्नीदृशं भवदंगतः ।।

प्रकटीभविता लोके नाम्ना रुद्रः प्रकीर्तितः ।।2.1.9.३०।।

मदंशात्तस्य सामर्थ्यं न्यूनं नैव भविष्यति ।।

योहं सोहं न भेदोस्ति पूजाविधिविधानतः ।।३१।।

यथा च ज्योतिषस्संगाज्जलादेः स्पर्शता न वै ।।

तथा ममागुणस्यापि संयोगाद्बन्धनं न हि ।। ३२ ।।

शिवरूपं ममैतञ्च रुद्रोऽपि शिववत्तदा ।।

न तत्र परभेदो वै कर्तव्यश्च महामुने ।। ३३ ।।

वस्तुतो ह्येकरूपं हि द्विधा भिन्नं जगत्युत ।।

अतो न भेदा विज्ञेयः शिवे रुद्रे कदाचन ।। ३४ ।।

सुवर्णस्य तथैकस्य वस्तुत्वं नैव गच्छति ।।

अलंकृतिकृते देव नामभेदो न वस्तुतः ।।३५।।

तथैकस्या मृदो भेदो नानापात्रे न वस्तुतः।।

कारणस्यैव कार्ये च सन्निधानं निदर्शनम् ।।३६।।

ज्ञातव्यं बुधवर्यैश्च निर्मलज्ञानिभिः सुरौ ।।

एवं ज्ञात्वा भवभ्यां तु न दृश्यं भेदकार णम् ।।३७।।

वस्तुवत्सर्वदृश्यं च शिवरूपम्मतम्मम ।।

अहं भवानजश्चैव रुद्रो योऽयं भविष्यति।।३८।।

एकरूपा न भेदस्तु भेदे वै बंधनं भवेत् ।।

तथापि च मदीयं हि शिवरूपं सनातनम् ।।३९।।

मूलीभूतं सदोक्तं च सत्यज्ञानमनंतकम्।।

एवं ज्ञात्वा सदा ध्येयं मनसा चैव तत्त्वतः ।। 2.1.9.४० ।।

श्रूयतां चैव भो ब्रह्मन्यद्गोप्यं कथ्यते मया ।।

भवंतौ प्रकृतेर्यातौ नायं वै प्रकृतेः पुनः ।।४१।।

मदाज्ञा जायते तत्र ब्रह्मणो भ्रुकुटेरहम्।।

गुणेष्वपि यथा प्रोक्तस्तामसः प्रकृतो हरः ।।४२।।

वैकारिकश्च विज्ञेयो योऽहंकार उदाहृतः ।।

नामतो वस्तुतो नैव तामसः परिचक्ष्यते।।४३।।

एतस्मात्कारणाद्ब्रह्मन्करणीयमिदं त्वया ।।

सृष्टिकर्ता भव ब्रह्मन्सृष्टेश्च पालको हरिः ।।४४।।

मदीयश्च तथांऽशो यो लयकर्ता भविष्यति ।।

इयं या प्रकृतिर्देवी ह्युमाख्या परमेश्वरी ।।४५।।

तस्यास्तु शक्तिर्वा देवी ब्रह्माणं सा भजिष्यति ।।

अन्या शक्तिः पुनस्तत्र प्रकृतेः संभविष्यति ।।४६।।

समाश्रयिष्यति विष्णुं लक्ष्मीरूपेण सा तदा।।

पुनश्च काली नाम्ना सा मदंशं प्राप्स्यति ध्रुवम् ।।४७।।

ज्योती रूपेण सा तत्र कार्यार्थे संभविष्यति ।।

एवं देव्यास्तथा प्रोक्ताश्शक्तयः परमाश्शुभाः ।। ४८ ।।

सृष्टिस्थितिलयानां हि कार्यं तासां क्रमाद्ध्रुवम् ।।

एतस्याः प्रकृतेरंशा मत्प्रियायास्सुरौत्तम ।।४९।।

त्वं च लक्ष्मीमुपाश्रित्य कार्यं कर्तुमिहार्हसि ।।

ब्रह्मंस्त्वं च गिरां देवीं प्रकृत्यंशामवाप्य च ।। 2.1.9.५० ।।
सृष्टिकार्यं हृदा कर्तुम्मन्निदेशादिहार्हसि ।।
अहं कालीं समाश्रित्य मत्प्रियांशां परात्पराम् ।। ५१ ।।
रुद्ररूपेण प्रलयं करिष्ये कार्यमुत्तमम् ।।
चतुर्वर्णमयं लोकं तत्सर्वैराश्रमै ध्रुवम् ।। ५२ ।।
तदन्यैर्विविधैः कार्यैः कृत्वा सुखमवाप्स्यथः।।
ज्ञानविज्ञानसंयुक्तो लोकानां हितकारकः ।। ५३ ।।
मुक्तिदोऽत्र भवानद्य भव लोके मदाज्ञया ।।
मद्दर्शने फलं यद्वत्तदेव तव दर्शने ।।५४।।
इति दत्तो वरस्तेद्य सत्यं सत्यं न संशयः।।
ममैव हृदये विष्णुर्विष्णोश्च हृदये ह्यहम् ।।५५।।
उभयोरंतरं यो वै न जानाति मनो मम ।।
वामांगजो मम हरिर्दक्षिणांगोद्भवो विधिः ।। ५६ ।।
महाप्रलयकृद्रुद्रो विश्वात्मा हृदयोद्भवः ।।
त्रिधा भिन्नो ह्यहं विष्णो ब्रह्मविष्णुभवाख्यया ।।५७।।
सर्गरक्षालयकरस्त्रिगुणैरज आदिभिः ।।
गुणभिन्नश्शिवस्साक्षात्प्रकृते पुरुषात्परः ।। ५८ ।।
परं ब्रह्माद्वयो नित्योऽनन्तः पूर्णो निरंजनः ।।
अंतस्तमो वहिस्सत्त्वस्त्रिजगत्पालको हरिः ।। ५९ ।।
अंतस्सत्त्वस्तमोबाह्यस्त्रिजगल्लयकृद्धरः ।। 2.1.9.६० ।।
अंतर्बहीरजाश्चैव त्रिजगत्सृष्टिकृद्विधिः ।।
एवं गुणास्त्रिदेवेषु गुणभिन्नः शिवः स्मृतः ।। ६१ ।।
विष्णो सृष्टिकरं प्रीत्या पालयैनं पितामहम् ।।
संपूज्यस्त्रिषु लोकेषु भविष्यसि मदाज्ञया ।।६२ ।।
तव सेव्यो विधेश्चापि रुद्र एव भविष्यति ।।
शिवपूर्णावतारो हि त्रिजगल्लयकारकः।।६३।।
पाद्मे भविष्यति सुतः कल्पे तव पितामहः ।।
तदा द्रक्ष्यसि मां चैव सोऽपि द्रक्ष्यति पद्मजः ।। ६४ ।।

एवमुक्त्वा महेशानः कृपां कृत्वातुलां हरः ।।

पुनः प्रोवाच सुप्रीत्या विष्णुं सर्वेश्वरः प्रभुः ।। ६५ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथम खण्डे सृष्ट्युपाख्याने शिवतत्त्ववर्णनो नाम नवमोऽध्यायः ।।९।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः १०

https://sa.wikisource.org/s/t6h
< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः १ (सृष्टिखण्डः)

परमेश्वर उवाच ।।

अन्यच्छृणु हरे विष्णो शासनं मम सुव्रत।।

सदा सर्वेषु लोकेषु मान्यः पूज्यो भविष्यसि।। १ ।।

ब्रह्मणा निर्मिते लोके यदा दुखं प्रजायते ।।

तदा त्वं सर्वदुःखानां नाशाय तत्परो भव ।। २ ।।

सहायं ते करिष्यामि सर्वकार्ये च दुस्सहे ।।

तव शत्रून्हनिष्यामि दुस्साध्यान्परमोत्कटान् ।। ३ ।।

विविधानवतारांश्च गृहीत्वा कीर्तिमुत्तमाम् ।।

विस्तारय हरे लोके तारणाय परो भव ।। ४ ।।

गुणरूपो ह्ययं रुद्रो ह्यनेन वपुषा सदा ।।

कार्यं करिष्ये लोकानां तवाशक्यं न संशयः ।। ५ ।।

रुद्रध्येयो भवांश्चैव भवद्ध्येयो हरस्तथा ।।

युवयोरन्तरन्नैव तव रुद्रस्य किंचन ।। ६ ।।

वस्तुतश्चापि चैकत्वं वरतोऽपि तथैव च ।।

लीलयापि महाविष्णो सत्यं सत्यं न संशयः ।। ७ ।।

रुद्रभक्तो नरो यस्तु तव निंदां करिष्यति ।।

तस्य पुण्यं च निखिलं द्रुतं भस्म भविष्यति ।। ८ ।।

नरके पतनं तस्य त्वद्द्वेषात्पुरुषोत्तम ।।

मदाज्ञया भवेद्विष्णो सत्यं सत्यं न संशयः ।। ९ ।।

लोकेऽस्मिन्मुक्तिदो नृणां भुक्तिदश्च विशेषतः ।।

ध्येयः पूज्यश्च भक्तानां निग्रहानुग्रहौ कुरु ।। 2.1.10.१० ।।

इत्युक्त्वा मां च धातारं हस्ते धृत्वा स्वयं हरिम् ।।

कथयामास दुःखेषु सहायो भव सर्वदा ।। ११ ।।

सर्वाध्यक्षश्च सर्वेषु भुक्तिमुक्तिप्रदायकः ।।

भव त्वं सर्वथा श्रेष्ठस्सर्वकामप्रसाधकः ।। १२ ।।
सर्वेषां प्राणरूपश्च भव त्वं च ममाज्ञया ।।
संकटे भजनीयो हि स रुद्रो मत्तनुर्हरे ।। १३ ।।
त्वां यस्समाश्रितो नूनं मामेव स समाश्रितः।।
अंतरं यश्च जानाति निरये पतति ध्रुवम् ।। १४ ।।
आयुर्बलं शृणुष्वाद्य त्रिदेवानां विशेषतः ।।
संदेहोऽत्र न कर्त्तव्यो ब्रह्मविष्णु हरात्मनाम् ।।१५ ।।
चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते ।।
रात्रिश्च तावती तस्य मानमेतत्क्रमेण ह ।। १६ ।।
तेषां त्रिंशद्दिनेर्मासो द्वादशैस्तैश्च वत्सरः।।
शतवर्षप्रमाणेन ब्रह्मायुः परिकीर्तितम्।।१७।।
ब्रह्मणो वर्षमात्रेण दिनं वैष्णवमुच्यते ।।
सोऽपि वर्षशतं यावदात्ममानेन जीवति।।१८।।
वैष्णवेन तु वर्षेण दिनं रौद्रं भवेद्ध्रुवम्।।
हरो वर्षशते याते नररूपेण संस्थितः।।१९।।
यावदुच्छ्वसितं वक्त्रे सदाशिवसमुद्भवम् ।।
पश्चाच्छक्तिं समभ्येति यावन्निश्वसितं भवेत् ।। 2.1.10.२० ।।
निःश्वासोच्छ्वसितानां च सर्वेषामेव देहिनाम् ।।
ब्रह्मविष्णुहराणां च गंधर्वोरगरक्षसाम् ।।२१।।
एकविंशसहस्राणि शतैः षड्भिश्शतानि च।।
अहोरात्राणि चोक्तानि प्रमाणं सुरसत्तमौ ।।२२।।
षड्भिच्छ्वासनिश्वासैः पलमेकं प्रवर्तितम् ।।
घटी षष्टि पलाः प्रोक्ता सा षष्ट्या च दिनं निशा ।।२३।।
निश्वासोच्छ्वासितानां च परिसंख्या न विद्यते ।।
सदाशिवसमुत्थानमेतस्मात्सोऽक्षयः स्मृतः ।। २४ ।।
इत्थं रूपं त्वया तावद्रक्षणीयं ममाज्ञया ।।
तावत्सृष्टेश्च कार्यं वै कर्तव्यं विविधैर्गुणैः ।।२५।।
ब्रह्मोवाच।।

इत्याकर्ण्य वचश्शंभोर्मया च भगवान्हरिः ।।
प्रणिपत्य च विश्वेशं प्राह मंदतरं वशी ।। २६ ।।
विष्णुरुवाच ।।
शंकर श्रूयतामेतत्कृपासिंधो जगत्पते ।।
सर्वमेतत्करिष्यामि भवदाज्ञावशानुगः ।। २७ ।।
मम ध्येयस्सदा त्वं च भविष्यसि न चान्यथा ।।
भवतस्सर्वसामर्थ्यं लब्धं चैव पुरा मया ।। २८ ।।
क्षणमात्रमपि स्वामिंस्तव ध्यानं परं मम ।।
चेतसो दूरतो नैव निर्गच्छतु कदाचन ।। २९ ।।
मम भक्तश्च यः स्वामिँस्तव निंदा करिष्यति ।।
तस्य वै निरये वासं प्रयच्छ नियतं ध्रुवम् ।। 2.1.10.३० ।।
त्वद्भक्तो यो भवेत्स्वामिन्मम प्रियतरो हि सः ।।
एवं वै यो विजानाति तस्य मुक्तिर्न दुर्लभा ।। ३१ ।।
महिमा च मदीयोद्य वर्द्धितो भवता ध्रुवम् ।।
कदाचिदगुणश्चैव जायते क्षम्यतामिति ।। ३२ ।।
ब्रह्मोवाच ।।
तदा शंभुस्तदीयं हि श्रुत्वा वचनमुत्तमम् ।।
उवाच विष्णुं सुप्रीत्या क्षम्या तेऽगुणता मया ।। ३३ ।।
एवमुक्त्वा हरिं नौ स कराभ्यां परमेश्वरः ।।
पस्पर्श सकलांगेषु कृपया तु कृपानिधिः ।।३४।।
आदिश्य विविधान्धर्मान्सर्वदुःखहरो हरः ।।
ददौ वराननेकांश्चावयोर्हितचिकीर्षया।। ३५ ।।
ततस्स भगवाञ्छंभुः कृपया भक्तवत्सलः ।।
दृष्टया संपश्यतो शीघ्रं तत्रैवांतरधीयतः ।। ३६ ।।
तदा प्रकृति लोकेऽस्मिँल्लिंगपूजाविधिः स्मृतः ।।
लिंगे प्रतिष्ठितश्शंभुर्भुक्तिमुक्तिप्रदायकः ।। ३७ ।।
लिंगवेदिर्महादेवी लिंगं साक्षान्महेश्वरः ।।
लयनाल्लिंगमित्युक्तं तत्रैव निखिलं जगत् ।। ३८ ।।

यस्तु लैंगं पठेन्नित्यमाख्यानं लिंगसन्निधौ ।।

षण्मासाच्छिवरूपो वै नात्र कार्या विचारणा ।। ३९ ।।

यस्तु लिंगसमीपे तु कार्यं किंचित्करोति च ।।

तस्य पुण्यफलं वक्तुं न शक्नोमि महामुने ।। 2.1.10.४० ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखंडे सृष्ट्युपाख्याने परम शिवतत्त्ववर्णनं नाम दशमोऽध्यायः ।। १० ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः ११



ऋषय ऊचुः ।।

सूतसूत महाभाग व्यासशिष्य नमोस्तु ते ।।

श्राविताद्याद्भुता शैवकथा परमपावनी ।। १ ।।

तत्राद्भुता महादिव्या लिंगोत्पत्तिः श्रुता शुभा ।।

श्रुत्वा यस्याः प्रभावं च दुःखनाशो भवेदिह।।२।।

ब्रह्मनारदसंवादमनुसृत्य दयानिधे।।

शिवार्चनविधिं ब्रूहि येन तुष्टो भवेच्छिवः ।।३।।

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैर्वा पूज्यते शिवः।।

कथं कार्यं च तद् ब्रूहि यथा व्यासमुखाच्छ्रुतम् ।। ४ ।।

तच्छ्रुत्वा वचनं तेषां शर्मदं श्रुतिसंमतम्।।

उवाच सकलं प्रीत्या मुनि प्रश्नानुसारतः ।। ५ ।।

सूत उवाच ।।

साधु पृष्टं भवद्भिश्च तद्रहस्यं मुनीश्वराः ।।

तदहं कथयाम्यद्य यथाबुद्धि यथाश्रुतम् ।। ६ ।।

भवद्भिः पृच्छ्यते तद्वत्तथा व्यासेन वै पुरा।।

पृष्टं सनत्कुमाराय तच्छ्रुतं ह्युपमन्युना ।।७।।

ततो व्यासेन वै श्रुत्वा शिवपूजादिकं च यत् ।।

मह्यं च पाठितं तेन लोकानां हितकाम्यया ।। ८ ।।

तच्छ्रुतं चैव कृष्णेन ह्युपमन्योर्महात्मनः ।।

तदहं कथयिष्यामि यथा ब्रह्मावदत्पुरा।।९।।

ब्रह्मोवाच ।।

शृणु नारद वक्ष्यामि संक्षेपाल्लिंगपूजनम् ।।

वक्तुं वर्षशतेनापि न शक्यं विस्तरान्मुने ।।2.1.11.१०।।

एवं तु शांकरं रूपं सुखं स्वच्छं सनातनम् ।।

पूजयेत्परया भक्त्या सर्वकामफलाप्तये ।।११।।

दारिद्र्यं रोगदुःखं च पीडनं शत्रुसंभवम् ।।

पापं चतुर्विधं तावद्यावन्नार्चयते शिवम् ।।१२।।

सम्पूजिते शिवे देवे सर्वदुःखं विलीयते ।।

संपद्यते सुखं सर्वं पश्चान्मुक्तिरवाप्यते ।।१३।।

ये वै मानुष्यमाश्रित्य मुख्यं संतानतस्सुखम् ।।

तेन पूज्यो महादेवः सर्वकार्यार्थसाधकः ।।१४।।

ब्राह्मणाः क्षत्रिया वैश्याश्शूद्राश्च विधिवत्क्रमात् ।।

शंकरार्चां प्रकुर्वंतु सर्वकामार्थसिद्धये।।१५।।

प्रातःकाले समुत्थाय मुहूर्ते ब्रह्मसंज्ञके।।

गुरोश्च स्मरणं कृत्वा शंभोश्चैव तथा पुनः ।।१६।।

तीर्थानां स्मरणं कृत्वा ध्यानं चैव हरेरपि ।।

ममापि निर्जराणां वै मुन्यादीनां तथा मुने।१७।।

ततः स्तोत्रं शुभं नाम गृह्णीयाद्विधिपूर्वकम् ।।

ततोत्थाय मलोत्सर्गं दक्षिणस्यां चरेद्दिशि ।। १८ ।।

एकान्ते तु विधिं कुर्यान्मलोत्सर्गस्स यच्छ्रुतम् ।।

तदेव कथयाम्यद्य शृण्वाधाय मनो मुने।।१९।।

शुद्धां मृदं द्विजो लिप्यात्पंचवारं विशुद्धये ।।

क्षत्रियश्च चतुर्वारं वैश्यो वरत्रयं तथा ।।2.1.11.२०।।

शूद्रो द्विवारं च मृदं गृह्णीयाद्विधिशुद्धये ।।

गुदे वाथ सकृल्लिंगे वारमेकं प्रयत्नतः ।। २१ ।।

दशवारं वामहस्ते सप्तवारं द्वयोस्तथा ।।

प्रत्येकम्पादयोस्तात त्रिवारं करयोः पुनः ।। २२ ।।

स्त्रीभिश्च शूद्रवत्कार्यं मृदाग्रहणमुत्तमम्।।

हस्तौ पादौ च प्रक्षाल्य पूर्ववन्मृदमाहरेत् ।।२३।।

दंतकाष्ठं ततः कुर्यात्स्ववर्णक्रमतो नरः ।।२४।।

विप्रः कुर्याद्दंतकाष्ठं द्वादशांगुलमानतः।।

एकादशांगुलं राजा वैश्यः कुर्याद्दशांगुलम् ।।२५।।

शूद्रो नवागुलं कुर्यादिति मानमिदं स्मृतम् ।।
कालदोषं विचार्य्यैव मनुदृष्टं विवर्जयेत् ।।२६।।
षष्ट्याद्यामाश्च नवमी व्रतमस्तं रवेर्दिनम्।।
तथा श्राद्धदिनं तात निषिद्धं रदधावने ।। २७ ।।
स्नानं तु विधिवत्कार्यं तीर्थादिषु क्रमेण तु ।।
देशकालविशेषेण स्नानं कार्यं समंत्रकम् ।। २८ ।।
आचम्य प्रथमं तत्र धौतवस्त्रेण चाधरेत् ।।
एकान्ते सुस्थले स्थित्वा संध्याविधिमथाचरेत् ।।२९ ।।
यथायोग्यं विधिं कृत्वा पूजाविधिमथारभेत् ।।
मनस्तु सुस्थिरं कृत्वा पूजागारं प्रविश्य च ।।2.1.11.३०।।
पूजाविधिं समादाय स्वासने ह्युपविश्य वै ।।
न्यासादिकं विधायादौ पूजयेत्क्रमशो हरम्।।३१।।
प्रथमं च गणाधीशं द्वारपालांस्तथैव च ।।
दिक्पालांश्च सुसंपूज्य पश्चात्पीठं प्रकल्पयेत् ।। ३२ ।।
अथ वाऽष्टदलं कृत्वा पूजाद्रव्यं समीपतः ।।
उपविश्य ततस्तत्र उपवेश्य शिवम् प्रभुम् ।।३३।।
आचमनत्रयं कृत्वा प्रक्षाल्य च पुनः करौ ।।
प्राणायामत्रयं कृत्वा मध्ये ध्यायेच्च त्र्यम्बकम् ।। ३४ ।।
पंचवक्त्रं दशभुजं शुद्धस्फटिकसन्निभम् ।।
सर्वाभरणसंयुक्तं व्याघ्रचर्मोत्तरीयकम् ।। ३५ ।।
तस्य सारूप्यतां स्मृत्वा दहेत्पापं नरस्सदा ।।
शिवं ततः समुत्थाप्य पूजयेत्परमेश्वरम् ।।३६।।
देहशुद्धिं ततः कृत्वा मूल मंत्रं न्यसेत्क्रमात् ।।
सर्वत्र प्रणवेनैव षडंगन्यासमाचरेत्।।३७।।
कृत्वा हृदि प्रयोगं च ततः पूजां समारभेत् ।।
पाद्यार्घाचमनार्थं च पात्राणि च प्रकल्पयेत्।।३८।।
स्थापयेद्विविधान्कुंभान्नव धीमान्यथाविधि।।
दर्भैराच्छाद्य तैरेव संस्थाप्याभ्युक्ष्य वारिणा ।।३९।।

तेषु तेषु च सर्वेषु क्षिपेत्तोयं सुशीतलम्।।

प्रणवेन क्षिपेत्तेषु द्रव्याण्यालोक्य बुद्धिमान् ।।2.1.11.४०।।

उशीरं चन्दनं चैव पाद्ये तु परिकल्पयेत् ।।

जातीकं कोलकर्पूरवटमूल तमालकम् ।।४१।।

चूर्णयित्वा यथान्यायं क्षिपेदाचमनीयके ।।

एतत्सर्वेषु पात्रेषु दापयेच्चन्दनान्वितम् ।।४२।।

पार्श्वयोर्देवदेवस्य नंदीशं तु समर्चयेत् ।।

गंधैर्धूपैस्तथा दीपैर्विविधैः पूजयेच्छिवम्।।४३।।

लिंगशुद्धिं ततः कृत्वा मुदा युक्तो नरस्तदा ।।

यथोचितं तु मंत्रौघैः प्रणवादिर्नमोंतकैः ।।४४।।

कल्पयेदासनं स्वस्तिपद्मादि प्रणवेन तु ।।

तस्मात्पूर्वदिशं साक्षादणिमामयमक्षरम् ।। ४५ ।।

लघिमा दक्षिणं चैव महिमा पश्चिमं तथा ।।

प्राप्तिश्चैवोत्तरं पत्रं प्राकाम्यं पावकस्य च।।४६।।

ईशित्वं नैर्ऋतं पत्रं वशित्वं वायुगोचरे।।

सर्वज्ञत्वं तथैशान्यं कर्णिका सोम उच्यते ।। ४७ ।।

सोमस्याधस्तथा सूर्यस्तस्याधः पावकस्त्वयम्।।

धर्मादीनपि तस्याधो भवतः कल्पयेत् क्रमात् ।। ४८ ।।

अव्यक्तादि चतुर्दिक्षु सोमस्यांते गुणत्रयम् ।।

सद्योजातं प्रवक्ष्यामीत्यावाह्य परमेश्वरम् ।। ४९ ।।

वामदेवेन मंत्रेण तिष्ठेच्चैवासनोपरि ।।

सान्निध्यं रुद्रगायत्र्या अघोरेण निरोधयेत् ।। 2.1.11.५० ।।

ईशानं सर्वविद्यानामिति मंत्रेण पूजयेत्।।

पाद्यमाचनीयं च विधायार्घ्यं प्रदापयेत्।।५१।।

स्थापयेद्विधिना रुद्रं गंधचंदनवारिणा ।।

पञ्चागव्यविधानेन गृह्यपात्रेऽभिमंत्र्य च।। ।।५२।।

प्रणवेनैव गव्येन स्नापयेत्पयसा च तम् ।।

दध्ना च मधुना चैव तथा चेक्षुरसेन तु।।५३।।

घृतेन तु यथा पूज्य सर्वकामहितावहम् ।।

पुण्यैर्द्रव्यैर्महादेवं प्रणवेनाभिषेचयेत्।। ५४ ।।

पवित्रजलभाण्डेषु मंत्रैः तोयं क्षिपेत्ततः ।।

शुद्धीकृत्य यथान्यायं सितवस्त्रेण साधकः ।।५५।।।

तावद्दूरं न कर्तव्यं न यावच्चन्दनं क्षिपेत् ।।

तंदुलैस्सुन्दरैस्तत्र पूजयेच्छंकरम्मुदा ।। ५६ ।।

कुशापामार्गकर्पूर जातिचंपकपाटलैः ।।

करवीरैस्सितैश्चैव मल्लिकाकमलोत्पलैः ।।५७।।

अपूर्वपुष्पैर्विविधैश्चन्दनाद्यैस्तथैव च ।।

जलेन जलधाराञ्च कल्पयेत्परमेश्वरे ।। ५८ ।।

पात्रैश्च विविधैर्देवं स्नापयेच्च महेश्वरम् ।।

मंत्रपूर्वं प्रकर्तव्या पूजा सर्वफलप्रदा ।। ५९ ।।

मंत्राँश्च तुभ्यं ताँस्तात सर्वकामार्थसिद्धये ।।

प्रवक्ष्यामि समासेन सावधानतया शृणु ।। 2.1.11.६० ।।

पाठयमानेन मंत्रेण तथा वाङ्मयकेन च।।

रुद्रेण नीलरुद्रेण सुशुक्लेन सुभेन च ।।६१।।

होतारेण तथा शीर्ष्णा शुभेनाथर्वणेन च ।।

शांत्या वाथ पुनश्शांत्यामारुणेनारुणेन च ।। ६२ ।।

अर्थाभीष्टेन साम्ना च तथा देवव्रतेन च।। ६३ ।।

रथांतरेण पुष्पेण सूक्तेन युक्तेन च ।।

मृत्युंजयेन मंत्रेण तथा पंचाक्षरेण च ।। ६४ ।।

जलधाराः सहस्रेण शतेनैकोत्तरेण वा ।।

कर्तव्या वेदमार्गेण नामभिर्वाथ वा पुनः ।।६५ ।।

ततश्चंदनपुष्पादि रोपणीयं शिवोपरि ।।

दापयेत्प्रणवेनैव मुखवासादिकं तथा ।। ६६ ।।

ततः स्फटिकसंकाशं देवं निष्कलमक्षयम् ।।

कारणं सर्वलोकानां सर्वलोकमयं परम् ।। ६७ ।।

ब्रह्मेन्द्रोपेन्द्रविष्ण्वाद्यैरपि देवैरगोचरम् ।।

वेदविद्भिर्हि वेदांते त्वगोचर मिति स्मृतम् ।। ६८ ।।
आदिमध्यान्तरहितं भेषजं सर्वरोगिणाम् ।।
शिवतत्त्वमिति ख्यातं शिवलिंगं व्यवस्थितम् ।। ६९ ।।
प्रणवेनैव मंत्रेण पूजयेल्लिंगमूर्द्धनि ।।
धूपैर्दीपैश्च नैवेद्यैस्ताम्बूलैः सुन्दरैस्तथा ।। 2.1.11.७० ।।
नीराजनेन रम्येण यथोक्तविधिना ततः ।।
नमस्कारैः स्तवैश्चान्यैर्मंत्रैर्नानाविधैरपि ।। ७१ ।।
अर्घ्यं दत्त्वा तु पुष्पाणि पादयोस्सुविकीर्य च ।।
प्रणिपत्य च देवेशमात्मनाराधयेच्छिवम् ।।७२।।
हस्ते गृहीत्वा पुष्पाणि समुत्थाय कृतांजलिः ।।
प्रार्थयेत्पुनरीशानं मंत्रेणानेन शंकरम् ।। ७३ ।।
अज्ञानाद्यदि वा ज्ञानाज्जपपूजादिकं मया ।।
कृतं तदस्तु सफलं कृपया तव शंकर ।।७४।।
पठित्वैवं च पुष्पाणि शिवोपरि मुदा न्यसेत् ।।
स्वस्त्ययनं ततः कृत्वा ह्याशिषो विविधास्तथा ।।७५।।
मार्जनं तु ततः कार्यं शिवस्योपरि वै पुनः ।।
नमस्कारं ततः क्षांतिं पुनराचमनाय च ।।७६
अघोच्चारणमुच्चार्य नमस्कारं प्रकल्पयेत् ।।
प्रार्थयेच्च पुनस्तत्र सर्वभावसमन्वितः ।।७७।।
शिवे भक्तिश्शिवे भक्तिश्शिवे भक्तिर्भवे भवे ।।
अन्यथा शरणं नास्ति त्वमेव शरणं मम ।।७८।।
इति संप्रार्थ्य देवेशं सर्वसिद्धिप्रदायकम् ।।
पूजयेत्परया भक्त्या गलनादैर्विशेषतः ।। ७९ ।।
नमस्कारं ततः कृत्वा परिवारगणैस्सह ।।
प्रहर्षमतुलं लब्ध्वा कार्यं कुर्याद्यथासुखम् ।। 2.1.11.८० ।।
एवं यः पूजयेन्नित्यं शिवभक्तिपरायणः ।।
तस्य वै सकला सिद्धिर्जायते तु पदे पदे ।। ८१ ।।
वाग्मी स जायते तस्य मनोभी ष्टफलं ध्रुवम् ।।

रोगं दुःखं च शोकं च ह्युद्वेगं कृत्रिमं तथा ।। ८२ ।।

कौटिल्यं च गरं चैव यद्यदुःखमुपस्थितम् ।।

तद्दुःखं नाश यत्येव शिवः शिवकरः परः ।।८३।।

कल्याणं जायते तस्य शुक्लपक्षे यथा शशी ।।

वर्द्धते सद्गुणस्तत्र ध्रुवं शंकरपूजनात् ।।८४।।

इति पूजाविधिश्शंभोः प्रोक्तस्ते मुनिसत्तम ।।

अतः परं च शुश्रूषुः किं प्रष्टासि च नारद ।। ८५ ।।

इति श्रीशिवमहापुराणे द्विती यायां रुद्रसंहितायां प्रथमखण्डे सृष्ट्युपाख्याने शिवपूजाविधिवर्णनो नामैकादशोऽध्यायः ।। ११ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः १२



नारद उवाच।।

ब्रह्मन्प्रजापते तात धन्यस्त्वं शिवसक्तधीः ।।

एतदेव पुनस्सम्यग्ब्रूहि मे विस्तराद्विधे ।। १ ।।

ब्रह्मोवाच ।।

एकस्मिन्समये तात ऋषीनाहूय सर्वतः ।।

निर्जरांश्चाऽवदं प्रीत्या सुवचः पद्मसंभवः ।। २ ।।

यदि नित्यसुखे श्रद्धा यदि सिद्धेश्च कामुकाः ।।

आगंतव्यं मया सार्द्धं तीरं क्षीरपयोनिधेः ।। ३ ।।

इत्येतद्वचनं श्रुत्वा गतास्ते हि मया सह ।।

यत्रास्ते भगवान्विष्णुस्सर्वेषां हितकारकः ।। ४ ।।

तत्र गत्वा जगन्नाथं देवदेवं जनार्द्दनम् ।।

उपतस्थुस्सुरा नत्वा सुकृतांजलयोः मुने ।। ५ ।।

तान्दृष्ट्वा च तदा विष्णुर्ब्रह्माद्यानमरान्स्थितान् ।।

स्मरञ्छिवपदांभोजमब्रवीत्परमं वचः ।।६।।

विष्णुरुवाच ।।

किमर्थमागता यूयं ब्रह्माद्याश्च सुरर्षयः ।।

सर्वं वदत तत्प्रीत्या किं कार्यं विद्यतेऽधुना ।। ७ ।।

ब्रह्मोवाच ।।

इति पृष्टास्तदा तेन विष्णुना च मया सुराः ।।

पुनः प्रणम्य तं प्रीत्या किं कार्यं विद्यतेऽधुना ।।

विनिवेदयितुं कार्यं ह्यब्रुवन्वचनं शुभम् ।। ८ ।।

देवा ऊचुः ।।

नित्यं सेवा तु कस्यैव कार्या दुःखपहारिणी ।। ९ ।।

इत्येतद्वचनं श्रुत्वा भगवान्भक्तवत्सलः ।।

सामरस्य मम प्रीत्या कृपया वाक्यमब्रवीत् ।।2.1.12.१०।।

श्रीभगवानुवाच ।।

ब्रह्मञ्च्छृणु सुरैस्सम्यक्श्रुतं च भवता पुरा ।।

तथापि कथ्यते तुभ्यं देवेभ्यश्च तथा पुनः ।।११।।

दृष्टं च दृश्यतेऽद्यैव किं पुनः पृच्छ्यते ऽधुना ।।

ब्रह्मन्देवैस्समस्तैश्च बहुधा कार्यतत्परैः ।। १२ ।।

सेव्यसेव्यस्सदा देवश्शंकरस्सर्वदुःखहा ।।

ममापि कथितं तेन ब्रह्म णोऽपि विशेषतः ।। १३ ।।

प्रस्तुतं चैव दृष्टं वस्सर्वं दृष्टांतमद्भुतम् ।।

त्याज्यं तदर्चनं नैव कदापि सुखमीप्सुभिः ।। १४ ।।

संत्यज्य देवदेवेशं लिंगमूर्तिं महेश्वरम् ।।

तारपुत्रास्तथैवैते नष्टास्तेऽपि सबांधवाः ।। १५ ।।

मया च मोहितास्ते वै मायया दूरतः कृताः ।।

सर्वे विनष्टाः प्रध्वस्ताः शिवेन रहिता यदा ।।१६।।

तस्मात्सदा पूजनीयो लिंगमूर्तिधरी हरः ।।

सेवनीयो विशेषेण श्रद्धया देवसत्तमः ।। १७ ।।

शर्वलिङ्गार्चनादेव देवा दैत्याश्च सत्तमाः ।।

अहं त्वं च तथा ब्रह्मन्कथं तद्विस्मृतं त्वया ।।।०।।।

तल्लिङ्गमर्चयेन्नित्यं येन केनापि हेतुना ।।

तस्मात् ब्रह्मन्सुरः शर्वः सर्वकामफलेप्सया ।।१९।।

सा हनिस्तन्महाछिद्रं सान्धता सा च मुग्धता ।।

यन्मुहूर्तं क्षणं वापि शिवं नैव समर्चयेत् ।। 2.1.12.२० ।।

भवभक्तिपरा ये च भवप्रणतचेतसः ।।

भवसंस्मरणा ये च न ते दुःखस्यभाजनाः ।। २१ ।।

भवनानि मनोज्ञानि मनोज्ञाभरणाः स्त्रियः ।।

धनं च तुष्टिपर्यंतं पुत्रपौत्रादिसंततिः ।।२२।।

आरोग्यं च शरीरं च प्रतिष्ठां चाप्यलौकिकीम् ।।

ये वांछंति महाभागाः सुखं वा त्रिदशालयम् ।।२३ ।।

अंते मुक्तिफलं चैव भक्तिं वा परमेशितुः ।।
पूर्वपुण्यातिरेकेण तेऽर्चयंति सदाशिवम् ।। २४ ।।
योऽर्चयेच्छिवलिंगं वै नित्यं भक्तिपरायणः ।।
तस्य वै सफला सिद्धिर्न स पापैः प्रयुज्यते ।। २५ ।।
ब्रह्मोवाच ।।
इत्युक्ताश्च तदा देवाः प्रणिपत्य हरिं स्वयम् ।।
लिंगानि प्रार्थयामासुस्सर्वकामाप्तये नृणाम् ।। २६ ।।
तच्छ्रुत्वा च तदा विष्णु विश्वकर्माणमब्रवीत ।।
अहं च मुनिशार्दूल जीवोद्धारपरायणः ।। २७ ।।
विश्वकर्मन्यथा शंभोः कल्पयित्वा शुभानि च।।
लिंगानि सर्वदेवेभ्यो देयानि वचनान्मम ।। २८ ।।
ब्रह्मोवाच ।।
लिंगानि कल्पयित्वेवमधिकारानुरूपतः ।।
विश्वकर्मा ददौ तेभ्यो नियोगान्मम वा हरेः।।२९।।
तदेव कथयाम्यद्य श्रूयतामृषिसत्तम।।
पद्मरागमयं शक्रो हेम विश्र वसस्सुतः।।2.1.12.३०।।
पीतं मणिमयं धर्मो वरुणश्श्यामलं शिवम् ।।
इन्द्रनीलमयं विष्णुर्ब्रह्मा हेममयं तथा।।३१।।
विश्वेदेवास्तथा रौप्यं वसवश्च तथैव च ।।
आरकूटमयं वापि पार्थिवं ह्यश्विनौ मुने ।।३२।।
लक्ष्मीश्च स्फाटिकं देवी ह्यादित्यास्ताम्रनिर्मितम् ।।
मौक्तिकं सोमराजो वै वज्रलिंगं विभावसुः ।।३३।।
मृण्मयं चैव विप्रेंद्रा विप्रपत्न्यस्तथैव च ।।
चांदनं च मयो नागाः प्रवालमयमादरात् ।।३४।।
नवनीतमयं देवी योगी भस्ममयं तथा।।
यक्षा दधिमयं लिंगं छाया पिष्टमयं तथा ।।३५।।
शिवलिंगं च ब्रह्माणी रत्नं पूजयति ध्रुवम्।।
पारदं पार्थिवं बाणस्समर्चति परेऽपि वा ।। ३६।।

एवं विधानि लिंगानि दत्तानि विश्वकर्मणा ।।
ते पूजयंति सर्वे वै देवा ऋषिगणा स्तथा ।।३७।।
विष्णुर्दत्त्वा च लिंगानि देवेभ्यो हितकाम्यया।।
पूजाविधिं समाचष्ट ब्रह्मणे मे पिनाकिनः ।।३८।।
तच्छ्रुत्वा वचनं तस्य ब्रह्माहं देवसत्तमैः ।।
आगच्छं च स्वकं धाम हर्षनिर्भरमानसः ।।३९।।
तत्रागत्य ऋषीन्सर्वान्देवांश्चाहं तथा मुने।।
शिवपूजाविधिं सम्यगब्रुवं सकलेष्टदम् ।।2.1.12.४०।।
ब्रह्मोवाच।।
श्रूयतामृषयः सर्वे सामराः प्रेमतत्पराः ।।
शिवपूजाविधिं प्रीत्या कथये भुक्तिमुक्तिदम् ।।४१ ।।
मानुषं जन्म संप्राप्य दुर्लभं सर्वजंतुषु ।।
तत्रापि सत्कुले देवा दुष्प्राप्यं च मुनीश्वराः ।।४२।।
अव्यंगं चैव विप्रेषु साचारेषु सपुण्यतः ।।
शिवसंतोषहेतोश्च कर्मस्वोक्तं समाचरेत् ।। ४३ ।।
यद्यज्जातिसमुद्दिष्टं तत्तत्कर्म न लंघयेत् ।।
यावद्दानस्य संपत्तिस्तावत्कर्म समावहेत् ।। ४४ ।।
कर्मयज्ञसहस्रेभ्यस्तपोयज्ञो विशिष्यते ।।
तपोयज्ञसहस्रेभ्यो जपयज्ञो विशिष्यते ।।४५।।
ध्यानयज्ञात्परं नास्ति ध्यानं ज्ञानस्य साधनम् ।।
यतस्समरसं स्वेष्टं यागी ध्यानेन पश्यति ।।४६ ।।
ध्यानयज्ञरतस्यास्य सदा संनिहितश्शिवः ।।
नास्ति विज्ञानिनां किंचित्प्रायश्चित्तादिशोधनम् ।। ४७ ।।
विशुद्धा विद्यया ये च ब्रह्मन्ब्रह्मविदो जनाः ।।
नास्ति क्रिया च तेषां वै सुखं दुखं विचारतः ।। ४८ ।।
धर्माधर्मौ जपो होमो ध्यानं ध्यानविधिस्तथा ।।
सर्वदा निर्विकारास्ते विद्यया च तयामराः ।। ४९ ।।
परानंदकरं लिंगं विशुद्धं शिवमक्षरम् ।।

निष्कलं सर्वगं ज्ञेयं योगिनां हृदि संस्थितम् ।।2.1.12.५०।।
लिंगं द्विविधं प्रोक्तं बाह्यमाभ्यंतरं द्विजाः ।।
बाह्यं स्थूलं समुद्दिष्टं सूक्ष्ममाभ्यंतरं मतम्।।५१।।
कर्मयज्ञरता ये च स्थूललिंगार्चने रताः ।।
असतां भावनार्थाय सूक्ष्मेण स्थूलविग्रहाः ।। ५२ ।।
आध्यात्मिकं यल्लिंगं प्रत्यक्षं यस्य नो भवेत् ।।
स तल्लिंगे तथा स्थूले कल्पयेच्च न चान्यथा ।। ५३ ।।
ज्ञानिनां सूक्ष्मममलं भावात्प्रत्यक्षमव्ययम् ।।
यथा स्थूलमयुक्तानामुत्कृष्टादौ प्रकल्पितम् ।। ५४ ।।
अहो विचारतो नास्ति ह्यन्यत्तत्वार्थवादिनः ।।
निष्कलं सकलं चित्ते सर्वं शिवमयं जगत् ।। ५५ ।।
एवं ज्ञानविमुक्तानां नास्ति दोष विकल्पना ।।
विधिश्चैव तथा नास्ति विहिताविहिते तथा ।। ५६ ।।
यथा जलेषु कमलं सलिलैर्नावलिप्यते ।।
तथा ज्ञानी गृहे तिष्ठन्कर्मणा नावबध्यते ।। ५७ ।।
इति ज्ञानं समुत्पन्नं यावन्नैव नरस्य वै ।।
तावच्च कर्मणा देवं शिवमाराधयेन्नरः ।। ५८ ।।
प्रत्ययार्थं च जगतामेकस्थोऽपि दिवाकरः।।
एकोऽपि बहुधा दृष्टो जलाधारादिवस्तुषु ।। ५९ ।।
दृश्यते श्रूयते लोके यद्यत्सदसदात्मकम् ।।
तत्तत्सर्वं सुरा वित्त परं ब्रह्म शिवात्मकम् ।। 2.1.12.६० ।।
भेदो जलानां लोकेऽस्मिन्प्रतिभावे विचारतः ।।
एवमाहुस्तथा चान्ये सर्वे वेदार्थतत्त्वगाः ।।६१।।
हृदि संसारिणः साक्षात्सकलः परमेश्वरः ।।
इति विज्ञानयुक्तस्य किं तस्य प्रतिमादिभिः।।६२ऽ।।
इति विज्ञानहीनस्य प्रतिमाकल्पना शुभा ।।
पदमुच्चैस्समारोढुं पुंसो ह्यालम्बनं स्मृतम् ।। ६३ ।।
आलम्बनं विना तस्य पदमुच्चैः सुदुष्करम् ।।

निर्गुणप्राप्तये नृणां प्रतिमालम्बनं स्मृतम् ।। ६४ ।।

सगुणानिर्गुणा प्राप्तिर्भवती सुनिश्चितम् ।।

एवं च सर्वदेवानां प्रतिमा प्रत्ययावहा ।।६५।।

देवश्चायं महीयान्वै तस्यार्थे पूजनं त्विदम् ।।

गंधचन्दनपुष्पादि किमर्थं प्रतिमां विना ।।६६।।

तावच्च प्रतिमा पूज्य यावद्विज्ञानसंभवः ।।

ज्ञानाभावेन पूज्येत पतनं तस्य निश्चितम् ।। ६७ ।।

एवस्मात्कारणाद्विप्राः श्रूयतां परमार्थतः।।

स्वजात्युक्तं तु यत्कर्म कर्तव्यं तत्प्रयत्नतः ।। ६८ ।।

यत्र यत्र यथा भक्तिः कर्तव्यं पूजनादिकम् ।।

विना पूजनदानादि पातकं न च दूरतः ।।६९।।

यावच्च पातकं देहे तावत्सिद्धिर्न जायते ।।

गते च पातके तस्य सर्वं च सफलं भवेत् ।।2.1.12.७०।।

तथा च मलिने वस्त्रे रंगः शुभतरो न हि ।।

क्षालने हि कृते शुद्धे सर्वो रंगः प्रसज्जते ।। ७१ ।।

तथा च निर्मले देहे देवानां सम्यगर्चया ।।

ज्ञानरंगः प्रजायेत तदा विज्ञानसंभवः ।। ७२ ।।

विज्ञानस्य च सन्मूलं भक्तिरव्यभिचारिणी ।।

ज्ञानस्यापि च सन्मूलं भक्तिरेवाऽभिधीयते ।। ७३ ।।

भक्तेर्मूलं तु सत्कर्म स्वेष्टदेवादिपूजनम् ।।

तन्मूलं सद्गुरुः प्रोक्तस्तन्मूलं संगतिः सताम् ।। ७४ ।'

संगत्या गुरुराप्येत गुरोर्मंत्रादि पूजनम् ।।

पूजनाज्जायते भक्तिर्भक्त्या ज्ञानं प्रजायते ।।७४।।।

विज्ञानं जायते ज्ञानात्परब्रह्मप्रकाशकम् ।।

विज्ञानं च यदा जातं तदा भेदो निवर्तते ।।७६।।

भेदे निवृत्ते सकले द्वंद्वदुःखविहीनता ।।

द्वंद्वदुःखविहीनस्तु शिवरूपो भवत्यसौ ।।७७।।

द्वंद्वाप्राप्तौ न जायेतां सुखदुःखे विजानतः ।।

विहिताविहिते तस्य न स्यातां च सुरर्षयः ।। ७८ ।।

ईदृशो विरलो लोके गृहाश्रमविवर्जितः ।।

यदि लोके भवत्यस्मिन्दर्शनात्पापहारकः ।।७९।।

तीर्थानि श्लाघयंतीह तादृशं ज्ञानवित्तमम् ।।

देवाश्च मुनयस्सर्वे परब्रह्मात्मकं शिवम् ।।2.1.12.८०।।

तादृशानि न तीर्थानि न देवा मृच्छिलामयाः ।।

ते पुनंत्युरुकालेन विज्ञानी दर्शनादपि ।।८१।।

यावद्गृहाश्रमे तिष्ठेत्तावदाकारपूजनम् ।।

कुर्याच्छ्रेष्ठस्य सप्रीत्या सुरेषु खलु पंचसु ।। ८२ ।।

अथवा च शिवः पूज्यो मूलमेकं विशिष्यते ।।

मूले सिक्ते तथा शाखास्तृप्तास्स्सत्यखिलास्सुराः।। ८३ ।।

शाखासु च सुतृप्तासु मूलं तृप्तं न कर्हिचित् ।।

एवं सर्वेषु तृप्तेषु सुरेषु मुनिसत्तमाः ।।८४।।

सर्वथा शिवतृप्तिर्नो विज्ञेया सूक्ष्मबुद्धिभिः ।।

शिवे च पूजिते देवाः पूजितास्सर्व एव हि।।८५।।

तस्माच्च पूजयेद्देवं शंकरं लोकशंकरम् ।।

सर्वकामफलावाप्त्यै सर्वभूतहिते रतः ।। ८६ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्र संहितायां प्रथमखण्डे सृष्ट्युपाख्याने पूजाविधिवर्णने सारासारविचारवर्णनो नाम द्वादशोऽध्यायः ।। १२ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः १३



ब्रह्मोवाच ।।

अतः परं प्रवक्ष्यामि पूजाविधिमनुत्तमम् ।।

श्रूयतामृषयो देवास्सर्वकामसुखावहम् ।। १ ।।

ब्राह्मे मुहूर्ते चोत्थाय संस्मरेत्सांबकं शिवम् ।।

कुर्यात्तत्प्रार्थनां भक्त्या सांजलिर्नतमस्तकः ।। २ ।।

उत्तिष्ठोत्तिष्ठ देवेश उत्तिष्ठ हृदयेशय ।।

उत्तिष्ठ त्वमुमास्वामिन्ब्रह्माण्डे मंगलं कुरु ।। ३ ।।

जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः ।।

त्वया महादेव हृदिस्थितेन यथा नियुक्तोऽस्मि तथा करोमि ।। ४ ।।

इत्युक्त्वा वचनं भक्त्या स्मृत्वा च गुरुपादके ।।

बहिर्गच्छेद्दक्षिणाशां त्यागार्थं मलमूत्रयोः ।। ५ ।।

देहशुद्धिं ततः कृत्वा स मृज्जलविशोधनैः ।।

हस्तौ पादौ च प्रक्षाल्य दंतधावनमाचरेत् ।। ६ ।।

दिवानाथे त्वनुदिते कृत्वा वै दंतधावनम्।।

मुखं षोडशवारं तु प्रक्षाल्यांजलिभिस्तथा ।। ७ ।।

षष्ठ्याद्यमाश्च तिथयो नवम्यर्कदिने तथा ।।

वर्ज्यास्सुरर्षयो यत्नाद्भक्तेन रदधावने ।।८।।

यथावकाशं सुस्नायान्नद्यादिष्वथवा गृहे ।।

देशकालाविरुद्धं च स्नानं कार्यं नरेण च ।।९।।

रवेर्दिने तथा श्राद्धे संक्रान्तौ ग्रहणे तथा ।।

महादाने तथा तीर्थे ह्युपवासदिने तथा।।2.1.13.१०।।

अशौचेप्यथवा प्राप्ते न स्नायादुष्णवारिणा ।।

यथा साभिमुखंस्नायात्तीर्थादौ भक्तिमान्नरः ।। ११ ।।

तैलाभ्यंगं च कुर्वीत वारान्दृष्ट्वा क्रमेण च ।।

नित्यमभ्यंगके चैव वासितं वा न दूषितम्।।१२।।
श्राद्धे च ग्रहणे चैवोपवासे प्रतिपद्दिने ।।
अथवा सार्षपं तैलं न दुष्येद्ग्रहणं विना ।।१३।।
देशं कालं विचार्यैवं स्नानं कुर्याद्यथा विधि ।।
उत्तराभिमुखश्चैव प्राङ्मुखोप्यथवा पुनः।। १४ ।।
उच्छिष्टेनैव वस्त्रेण न स्नायात्स कदाचन ।।
शुद्धवस्त्रेण संस्नायात्तद्देवस्मरपूर्वकम् ।। १५ ।।
परधार्य्यं च नोच्छिष्टं रात्रौ च विधृतं च यत् ।।
तेन स्नानं तथा कार्यं क्षालितं च परित्यजेत् ।। १६ ।।
तर्पणं च ततः कार्यं देवर्षिपितृतृप्तिदम् ।।
धौतवस्त्रं ततो धार्यं पुनराचमनं चरेत् ।।१७।।
शुचौ देशे ततो गत्वा गोमयाद्युपमार्जिते ।।
आसनं च शुभं तत्र रचनीयं द्विजोत्तमाः ।। १८ ।।
शुद्धकाष्ठसमुत्पन्नं पूर्णं स्तरितमेव वा ।।
चित्रासनं तथा कुर्यात्सर्वकामफलप्र दम् ।।१९।।
यथायोग्यं पुनर्ग्राह्यं मृगचर्मादिकं च यत् ।।
तत्रोपविश्य कुर्वीत त्रिपुंड्रं भस्मना सुधीः ।।2.1.13.२०।।
जपस्तपस्तथा दानं त्रिपुण्ड्रात्सफलं भवेत् ।।
अभावे भस्मनस्तत्र जलस्यादि प्रकीर्तितम् ।।२१।।
एवं कृत्वा त्रिपुंड्रं च रुद्राक्षान्धारयेन्नरः ।।
संपाद्य च स्वकं कर्म पुनराराधयेच्छिवम् ।। २२ ।।
पुनराचमनं कृत्वा त्रिवारं मंत्रपूर्वकम् ।।
एकं वाथ प्रकुर्याच्च गंगाबिन्दुरिति ब्रुवन्।।२३।।
अन्नोदकं तथा तत्र शिवपूजार्थमाहरेत् ।।
अन्यद्वस्तु च यत्किंचिद्यथाशक्ति समीपगम् ।।२४।।
कृत्वा स्थेयं च तत्रैव धैर्यमास्थाय वै पुनः ।।
अर्घं पात्रं तथा चैकं जलगंधाक्षतैर्युतम् ।। २५ ।।
दक्षिणांसे तथा स्थाप्यमुपचारस्य क्लृप्तये ।।

गुरोश्च स्मरणं कृत्वा तदनुज्ञामवाप्य च ।। २६ ।।

संकल्पं विधिवत्कृत्वा कामनां च नियुज्य वै ।।

पूजयेत्परया भक्त्या शिवं सपरिवारकम् ।।२७।।

मुद्रामेकां प्रदर्श्यैव पूजयेद्विघ्नहारकम्।।

सिंदुरादिपदार्थैश्च सिद्धिबुद्धिसमन्वितम् ।।२८।।

लक्षलाभयुतं तत्र पूजयित्वा नमेत्पुनः।।

चतुर्थ्यंतैर्नामपदैर्नमोन्तैः प्रणवादिभिः ।।२९।।

क्षमाप्यैनं तदा देवं भ्रात्रा चैव समन्वितम् ।।

पूजयेत्परया भक्त्या नमस्कुर्यात्पुनः पुनः ।। 2.1.13.३० ।।

द्वारपालं सदा द्वारि तिष्ठंतं च महोदरम् ।।

पूजयित्वा ततः पश्चात्पूजयेद्गिरिजां सतीम् ।।३१।।

चंदनैः कुंकुमैश्चैव धूपैर्दीपैरनेकशः ।।

नैवेद्यैर्विविधैश्चैव पूजयित्वा ततश्शिवम्।।३२।।

नमस्कृत्य पुनस्तत्र गच्छेच्च शिवसन्निधौ।।

यदि गेहे पार्थिवीं वा हैमीं वा राजतीं तथा ।। ३३ ।।

धातुजन्यां तथैवान्यां पारदां वा प्रकल्पयेत् ।।

नमस्कृत्य पुनस्तां च पूजयेद्भक्तितत्परः ।।३४।।

तस्यां तु पूजितायां वै सर्वे स्युः पूजितास्तदा ।।

स्थापयेच्च मृदा लिंगं विधाय विधिपूर्वकम् ।।३५।।

कर्तव्यं सर्वथा तत्र नियमास्स्वगृहे स्थितैः ।।

प्राणप्रतिष्ठां कुर्वीत भूतशुद्धिं विधाय च ।।३६।।

दिक्पालान्पूजयेत्तत्र स्थापयित्वा शिवालये ।।

गृहे शिवस्सदा पूज्यो मूलमंत्राभियोगतः ।।३७।।

तत्र तु द्वारपालानां नियमो नास्ति सर्वथा ।।

गृहे लिंगं च यत्पूज्यं तस्मिन्सर्वं प्रतिष्ठितम् ।। ३८ ।।

पूजाकाले च सांगं वै परिवारेण संयुतम् ।।

आवाह्य पूजयेद्देवं नियमोऽत्र न विद्यते ।। ३९ ।।

शिवस्य संनिधिं कृत्वा स्वासनं परिकल्पयेत् ।।

उदङ्मुखस्तदा स्थित्वा पुनराचमनं चरेत् ।। 2.1.13.४० ।।

प्रक्षाल्य हस्तौ पश्चाद्वै प्राणायामं प्रकल्पयेत् ।।

मूलमंत्रेण तत्रैव दशावर्तं नयेन्नरः ।। ४१ ।।

पंचमुद्राः प्रकर्तव्याः पूजावश्यं करेप्सिताः ।।

एता मुद्राः प्रदर्श्यैव चरेत्पूजाविधिं नरः ।।४२।।

दीपं कृत्वा तदा तत्र नमस्कारं गुरोरथ ।।

बध्वा पद्मासनं तत्र भद्रासनमथापि वा ।। ४३ ।।

उत्तानासनकं कृत्वा पर्यंकासनकं तथा ।।

यथासुखं तथा स्थित्वा प्रयोगं पुनरेव च ।।४४।।

कृत्वा पूजां पुराजातां वट्टकेनैव तारयेत् ।।

यदि वा स्वयमेवेह गृहे न नियमोऽस्ति च ।।४५।।

पश्चाच्चैवार्घपात्रेण क्षारयेल्लिंगमुत्तमम् ।।

अनन्यमानसो भूत्वा पूजाद्रव्यं निधाय च ।।४६।।

पश्चाच्चावाहयेद्देवं मंत्रेणानेन वै नरः ।।

कैलासशिखरस्थं च पार्वतीपतिमुत्तमम् ।। ४७ ।।

यथोक्तरूपिणं शंभुं निर्गुणं गुणरूपिणम् ।।

पंचवक्त्रं दशभुजं त्रिनेत्रं वृषभध्वजम् ।। ४८ ।।

कर्पूरगौरं दिव्यांगं चन्द्रमौलिं कपर्दिनम् ।।

व्याघ्रचर्मोत्तरीयं च गजचर्माम्बरं शुभम् ।। ४९ ।।

वासुक्यादिपरीतांगं पिनाकाद्यायुधान्वितम् ।।।

सिद्धयोऽष्टौ च यस्याग्रे नृत्यंतीह निरंतरम् ।।2.1.13.५० ।।

जयजयेति शब्दश्च सेवितं भक्त पूजकैः ।।

तेजसा दुःसहेनैव दुर्लक्ष्यं देवसेवितम् ।। ५१ ।।

शरण्यं सर्वसत्त्वानां प्रसन्नमुखपंकजम् ।।

वेदैश्शास्त्रैर्यथा गीतं विष्णुब्रह्मनुतं सदा ।। ५२ ।।

भक्तवत्सलमानंदं शिवमावाहयाम्यहम्।।

एवं ध्वात्वा शिवं साम्बमासनं परिकल्पयेत् ।।५३।।

चतुर्थ्यंतपदेनैव सर्वं कुर्याद्यथाक्रमम् ।।

ततः पाद्यं प्रदद्याद्वै ततोर्घ्यं शंकराय च ।।५४।।

ततश्चाचमनं कृत्वा शंभवे परमात्मने ।।

पश्चाच्च पंचभिर्द्रव्यैः स्नापयेच्छंकरं मुदा ।।५५।।

वेदमंत्रैर्यथायोग्यं नामभिर्वा समंत्रकैः ।।

चतुर्थ्यंतपदैर्भक्त्या द्रव्याण्येवार्पयेत्तदा ।।५६।।

तथाभिलषितं द्रव्यमर्पयेच्छंकरोपरि ।।

ततश्च वारुणं स्नानं करणीयं शिवाय वै ।।५७।।

सुगंधं चंदनं दद्यादन्यलेपानि यत्नतः ।।

ससुगंधजलेनैव जलधारां प्रकल्पयेत् ।।५८।।

वेदमंत्रैः षडंगैर्वा नामभी रुद्रसंख्यया ।।

यथावकाशं तां दत्वा वस्त्रेण मार्जयेत्ततः ।। ५९ ।।

पश्चादाचमनं दद्यात्ततो वस्त्रं समर्पयेत ।।

तिलाश्चैव जवा वापि गोधूमा मुद्गमाषकाः ।।2.1.13.६०।।

अर्पणीयाः शिवायैव मंत्रैर्नानाविधैरपि।।

ततः पुष्पाणि देयानि पंचास्याय महात्मने ।। ६१ ।।

प्रतिवक्त्रं यथाध्यानं यथायोग्याभिलाषतः ।।

कमलैश्शतपत्रैश्च शंखपुष्पैः परैस्तथा ।।६२।।

कुशपुष्पैश्च धत्तूरैर्मंदारैर्द्रोणसंभवैः ।।

तथा च तुलसीपत्रैर्बिल्वपत्रैर्विशेषतः ।।६३।।

पूजयेत्परया भक्त्या शंकरं भक्तवत्सलम् ।।

सर्वाभावे बिल्वपत्रमपर्णीयं शिवाय वै ।।६४।।

बिल्वपत्रार्पणेनैव सर्वपूजा प्रसिध्यति ।।

ततस्सुगंधचूर्णं वै वासितं तैलमुत्तमम् ।। ६५ ।।

अर्पणीयं च विविधं शिवाय परया मुदा ।।

ततो धूपं प्रकर्तव्यो गुग्गुलागुरुभिर्मुदा ।।६६।।

दीपो देयस्ततस्तस्मै शंकराय घृतप्लुतः ।।

अर्घं दद्यात्पुनस्तस्मै मंत्रेणानेन भक्तितः ।।६७।।

कारयेद्भावतो भक्त्या वस्त्रेण मुखमार्जनम् ।।

रूपं देहि यशो देहि भोगं देहि च शंकर।।६८।।

भुक्तिमुक्तिफलं देहि गृहीत्वार्घं नमोस्तु ते।।

ततो देयं शिवायैव नैवेद्यं विविधं शुभम्।।६९।।

तत आचमनं प्रीत्या कारयेद्वा विलम्बतः ।।

ततश्शिवाय ताम्बूलं सांगोपाङ्गं विधाय च ।।2.1.13.७०।।

कुर्यादारार्तिकं पञ्चवर्तिकामनुसंख्यया ।।

पादयोश्च चतुर्वारं द्विःकृत्वो नाभिमण्डले ।। ७१ ।।

एककृत्वे मुखे सप्तकृत्वः सर्वाङ्गं एव हि ।।

ततो ध्यानं यथोक्तं वै कृत्वा मंत्रमुदीरयेत् ।। ७२ ।।

यथासंख्यं यथाज्ञानं कुर्यान्मंत्रविधिन्नरः ।।

गुरूपदिष्टमार्गेण कृत्वा मंत्रजपं सुधीः ।। ७३ ।।

गुरूपदिष्टमार्गेण कृत्वा मन्त्रमुदीरयेत् ।।

यथासंख्यं यथाज्ञानं कुर्यान्मंत्रविधिन्नरः ।। ७४ ।।

स्तोत्रैर्नानाविधैः प्रीत्या स्तुवीत वृषभध्वजम् ।।

ततः प्रदक्षिणां कुर्याच्छिवस्य च शनैश्शनैः ।। ७५ ।।

नमस्कारांस्ततः कुर्यात्साष्टांगं विधिवत्पुमान् ।।

ततः पुष्पांजलिर्देयो मंत्रेणानेन भक्तितः।।७६।।

शंकराय परेशाय शिवसंतोषहेतवे।।

अज्ञानाद्यदि वा ज्ञानाद्यद्यत्पूजादिकं मया ।। ७७ ।।

कृतं तदस्तु सफलं कृपया तव शंकर ।।

तावकस्त्वद्गतप्राण त्वच्चित्तोहं सदा मृड ।। ७८ ।।

इति विज्ञाय गौरीश भूतनाथ प्रसीद मे ।।

भूमौ स्खलितवादानां भूमिरेवावलंबनम् ।।७९।।

त्वयि जातापराधानां त्वमेव शरणं प्रभो ।।

इत्यादि बहु विज्ञप्तिं कृत्वा सम्यग्विधानतः ।।2.1.13.८०।।

पुष्पांजलिं समर्प्यैव पुनः कुर्यान्नतिं मुहुः।।

स्वस्थानं गच्छ देवेश परिवारयुतः प्रभो।।।।

पूजाकाले पुनर्नाथ त्वया गंतव्यमादरात्।।

इति संप्रार्थ्य वहुशश्शंकरं भक्तवत्सलम्।।८२।।

विसर्जयेत्स्वहृदये तदपो मूर्ध्नि विन्यसेत्।।

इति प्रोक्तमशेषेण मुनयः शिवपूजनम् ।।

भुक्तिमुक्तिप्रदं चैव किमन्यच्छ्रोतुमर्हथ ।।८३।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखंडे सृष्ट्युपाख्याने शिवपूजन वर्णनो नाम त्रयोदशोध्यायः ।। १३ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः १४

https://sa.wikisource.org/s/t7b



ऋषय ऊचुः ।। ।।

व्यासशिष्य महाभाग कथय त्वं प्रमाणतः ।।

कैः पुष्पैः पूजितश्शंभुः किं किं यच्छति वै फलम् ।।१।।

।। सूत उवाच ।। ।।

शौनकाद्याश्च ऋषयः शृणुतादरतोऽखिलम् ।।

कथयाम्यद्य सुप्रीत्या पुष्पार्पणविनिर्णयम् ।।२।।

एष एव विधिः पृष्टो नारदेन महर्षिणा ।।

प्रोवाच परमप्रीत्या पुष्पार्पणविनिर्णयम् ।।३।।

ब्रह्मोवाच।।

कमलैर्बिल्वपत्रैश्च शतपत्रैस्तथा पुनः ।।

शंखपुष्पैस्तथा देवं लक्ष्मीकामोऽर्चयेच्छिवम् ।।४।।

एतैश्च लक्षसंख्याकैः पूजितश्चेद्भवेच्छिवः ।।

पापहानिस्तथा विप्र लक्ष्मीस्स्यान्नात्र संशयः ।। ५।।

विंशतिः कमलानां तु प्रस्थमेकमुदाहृतम् ।।

बिल्वो दलसहस्रेण प्रस्थार्द्धं परिभाषितम् ।। ६ ।।

शतपत्रसहस्रेण प्रस्थार्द्धं परिभाषितम् ।।

पलैः षोडशभिः प्रत्थः पलं टंकदशस्मृतः ।। ७ ।।

अनेनैव तु मानेन तुलामारोपयेद्यदा।।

सर्वान्कामानवाप्नोति निष्कामश्चेच्छिवो भवेत् ।।८।।

राज्यस्य कामुको यो वै पार्थिवानां च पूजया ।।

तोषयेच्छंकरं देवं दशकोट्या मुनीश्वराः ।। ९ ।।

लिंगं शिवं तथा पुष्पमखण्डं तंदुलं तथा ।।

चर्चितं चंदनेनैव जलधारां तथा पुनः ।। 2.1.14.१० ।।

प्रतिरूपं तथा मंत्रं बिल्वीदलमनुत्तमम् ।।

अथवा शतपत्रं च कमलं वा तथा पुनः ।।११।।

शंखपुष्पैस्तथा प्रोक्तं विशेषेण पुरातनैः ।।

सर्वकामफलं दिव्यं परत्रेहापि सर्वथा ।।१२।।

धूपं दीपं च नैवेद्यमर्घं चारार्तिक तथा ।।

प्रदक्षिणां नमस्कारं क्षमापनविसर्जने ।। ३३ ।।

कृत्वा सांगं तथा भोज्यं कृतं येन भवेदिह ।।

तस्य वै सर्वथा राज्यं शंकरः प्रददाति च ।। १४ ।।

प्रधान्यकामुको यो वै तदर्द्धेनार्चयेत्पुमान् ।।

कारागृहगतो यो वै लक्षेनैवार्चयेद्धनम् ।। १५।।

रोगग्रस्तो यदा स्याद्वै तदर्द्धेनार्चयेच्छिवम् ।।

कन्याकामो भवेद्यो वै तदर्द्धेन शिवं पुनः।।१६।।

विद्याकामस्तथा यः स्यात्तदर्द्धेनार्चयेच्छिवम् ।।

वाणीकामो भवेद्यो वै घृतेनैवार्चयेच्छिवम् ।। १७ ।।

उच्चाटनार्थं शत्रूणां तन्मितेनैव पूजनम् ।।

मारणे वै तु लक्षेण मोहने तु तदर्धतः ।। १८ ।।

सामंतानां जये चैव कोटिपूजा प्रशस्यते ।।

राज्ञामयुतसंख्यं च वशीकरणकर्मणि ।।१९।।

यशसे च तथा संख्या वाहनाद्यैः सहस्रिका ।।

मुक्तिकामोर्चयेच्छंभुं पंचकोट्या सुभक्तितः ।। 2.1.14.२० ।।

ज्ञानार्थी पूजयेत्कोट्या शंकरं लोक शंकरम् ।।

शिवदर्शनकामो वै तदर्धेन प्रपूजयेत् ।। २१ ।।

तथा मृत्युंजयो जाप्यः कामनाफलरूपतः ।।

पंचलक्षा जपा यर्हि प्रत्यक्षं तु भवेच्छिवः ।। २२ ।।

लक्षेण भजते कश्चिद्द्वितीये जातिसंभवः ।।

तृतीये कामनालाभश्चतुर्थे तं प्रपश्यति ।। २३ ।।

पंचमं च यदा लक्षं फलं यच्छत्यसंशयम् ।।

अनेनैव तु मंत्रेण दशलक्षे फलं भवेत् ।। २४ ।।

मुक्तिकामो भवेद्यो वै दर्भैश्च पूजनं चरेत् ।।

लक्षसंख्या तु सर्वत्र ज्ञातव्या ऋषिसत्तम ।। २५ ।।

आयुष्कामो भवेद्यो वै दूर्वाभिः पूजनश्चरेत् ।।

पुत्रकामो भवेद्यो वै धत्तूरकुसुमैश्चरेत् ।।२६।।

रक्तदण्डश्च धत्तूरः पूजने शुभदः स्मृतः ।।

अगस्त्यकुसुमैश्चैव पूजकस्य महद्यशः ।।२७।।

भुक्तिमुक्तिफलं तस्य तुलस्याः पूजयेद्यदि ।।

अर्कपुष्पैः प्रतापश्च कुब्जकल्हारकैस्तथा ।। २८ ।।

जपाकुसुमपूजा तु शत्रूणां मृत्युदा स्मृता ।।

रोगोच्चाटनकानीह करवीराणि वै क्रमात् ।।२९।।

बंधुकैर्भूषणावाप्तिर्जात्यावाहान्न संशयः ।।

अतसीपुष्पकैर्देवं विष्णुवल्लभतामियात्।। ।।2.1.14.३०।।

शमीपत्रैस्तथा मुक्तिः प्राप्यते पुरुषेण च ।।

मल्लिकाकुसुमैर्दत्तैः स्त्रियं शुभतरां शिवः ।।३१।।

यूथिकाकुसुमैश्शस्यैर्गृहं नैव विमुच्यते ।।

कर्णिकारैस्तथा वस्त्रसंपत्तिर्जायते नृणाम् ।।३२।।

निर्गुण्डीकुसुमैर्लोके मनो निर्मलतां व्रजेत् ।।

बिल्वपत्रैस्तथा लक्षैः सर्वान्कामानवाप्नुयात् ।।३३।।

शृङ्गारहारपुष्पैस्तु वर्द्धते सुख सम्पदा ।।

ऋतुजातानि पुष्पाणि मुक्तिदानि न संशयः ।। ३४ ।।

राजिकाकुसुमानीह शत्रूणां मृत्युदानि च ।।

एषां लक्षं शिवे दद्याद्दद्याच्च विपुलं फलम् ।।३५।।

विद्यते कुसुमं तन्न यन्नैव शिववल्लभम्।।

चंपकं केतकं हित्वा त्वन्यत्सर्वं समर्पयेत् ।। ३६।।

अतः परं च धान्यानां पूजने शंकरस्य च ।।

प्रमाणं च फलं सर्वं प्रीत्या शृणु च सत्तम ।। ३७ ।।

तंदुलारोपणे नृणां लक्ष्मी वृद्धिः प्रजायते ।।

अखण्डितविधौ विप्र सम्यग्भक्त्या शिवोपरि ।।३८।।

षट्केनैव तु प्रस्थानां तदर्धेन तथा पुनः ।।

पलद्वयं तथा लक्षमानेन समदाहृतम् ।।३९।।

पूजां रुद्रप्रधानेन कृत्वा वस्त्रं सुसुन्दरम् ।।

शिवोपरि न्यसेत्तत्र तंदुलार्पणमुत्तमम् ।।2.1.14.४०

उपरि श्रीफलं त्वेकं गंधपुष्पादिभिस्तथा ।।

रोपयित्वा च धूपादि कृत्वा पूजाफलं भवेत्।।।। ४१ ।।

प्रजापत्यद्वयं रौप्यमासंख्या च दक्षिणा ।।

देया तदुपदेष्ट्रे हि शक्त्या वा दक्षिणा मता ।। ४२ ।।

आदित्यसंख्यया तत्र ब्राह्मणान्भोजयेत्ततः ।।

लक्षपूजा तथा जाता साङ्गश्च मन्त्रपूर्वकम् ।। ४३ ।।

शतमष्टोत्तरं तत्र मंत्रे विधिरुदाहृतः।।

तिलानां च पलं लक्षं महापातकनाशनम् ।। ४४ ।।

एकादशपलैरेव लक्षमानमुदाहृतम् ।।

पूर्ववत्पूजनं तत्र कर्तव्यं हितकाम्यया ।। ४५ ।।

भोज्या वै ब्राह्मणास्तस्मादत्र कार्या नरेण हि ।।

महापातकजं दुखं तत्क्षणान्नश्यति ध्रुवम् ।। ४६ ।।

यवपूजा तथा प्रोक्ता लक्षेण परमा शिवे ।।

प्रस्थानामष्टकं चैव तथा प्रस्थार्द्धकं पुनः ।। ४७ ।।

पलद्वययुतं तत्र मानमेतत्पुरातनम् ।।

यवपूजा च मुनिभिः स्वर्गसौख्यविवर्द्धिनी ।। ४८ ।।

प्राजापत्यं ब्राह्मणानां कर्तव्यं च फलेप्सुभिः ।।

गोधूमान्नैस्तथा पूजा प्रशस्ता शंकरस्य वै ।। ४९ ।।

संततिर्वर्द्धते तस्य यदि लक्षावधिः कृता ।।

द्रोणार्द्धेन भवेल्लक्षं विधानं विधिपूर्वकम् ।। 2.1.14.५० ।।

मुद्गानां पूजने देवः शिवो यच्छति वै सुखम् ।।

प्रस्थानां सप्तकेनैव प्रस्थार्द्धेनाथवा पुनः ।।५१।।

पलद्वययुतेनैव लक्षमुक्तं पुरातनैः ।।

ब्राह्मणाश्च तथा भोज्या रुद्रसंख्याप्रमाणतः ।। ५२ ।।

प्रियंगुपूजनादेव धर्माध्यक्षे परात्मनि ।।

धर्मार्थकामा वर्द्धंते पूजा सर्वसुखावहा ।। ५३ ।।

प्रस्थैकेन च तस्योक्तं लक्षमेकं पुरातनैः।।

ब्रह्मभोजं तथा प्रोक्तमर्कसंख्याप्रमाणतः।।५४।।

राजिकापूजनं शंभोश्शत्रोर्मृत्युकरं स्मृतम्।।

सार्षपानां तथा लक्षं पलैर्विंशतिसंख्यया ।।५५।।

तेषां च पूजनादेव शत्रोर्मृत्युरुदाहृतः ।।

आढकीनां दलैश्चैव शोभयित्वार्चयेच्छिवम्।।५६।।

वृता गौश्च प्रदातव्या बलीवर्दस्तथैव च ।।

मरीचिसंभवा पूजा शत्रोर्नाशकरी स्मृता ।। ५७ ।।

आढकीनां दलैश्चैव रंजयि त्वार्चयेच्छिवम् ।।

नानासुखकरी ह्येषा पूजा सर्वफलप्रदा ।।५८।।

धान्यमानमिति प्रोक्तं मया ते मुनिसत्तम ।।

लक्षमानं तु पुष्पाणां शृणु प्रीत्या मुनीश्वर ।।५९।।

प्रस्थानां च तथा चैकं शंखपुष्पसमुद्भवम् ।।

प्रोक्तं व्यासेन लक्षं हि सूक्ष्ममानप्रदर्शिना ।।2.1.14.६०।।

प्रस्थैरेकादशैर्जातिलक्षमानं प्रकीर्तितम् ।।

यूथिकायास्तथा मानं राजिकायास्तदर्द्धकम् ।। ६१ ।।

प्रस्थैर्विंशतिकैश्चैव मल्लिकामान मुत्तमम् ।।

तिलपुष्पैस्तथा मानं प्रस्थान्न्यूनं तथैव च ।।६२।।

ततश्च द्विगुणं मानं करवीरभवे स्मृतम् ।।

निर्गुंडीकुसुमे मानं तथैव कथितं बुधैः ।। ६३ ।।

कर्णिकारे तथा मानं शिरीषकुसुमे पुनः ।।

बंधुजीवे तथा मानं प्रस्थानं दशकेन च ।।६४।।

इत्याद्यैर्विविधै मानं दृष्ट्वा कुर्याच्छिवार्चनम् ।।

सर्वकामसमृध्यर्थं मुक्त्यर्थं कामनोज्झितः ।। ६५ ।।

अतः परं प्रवक्ष्यामि धारापूजाफलं महत् ।।

यस्य श्रवणमात्रेण कल्याणं जायते नृणाम् ।। ६६ ।।

विधानपूर्वकं पूजां कृत्वा भक्त्या शिवस्य वै ।।

पश्चाच्च जलधारा हि कर्तव्या भक्तितत्परैः ।। ६७ ।।

ज्वरप्रलापशांत्यर्थं जल धारा शुभावहा ।।

शतरुद्रियमंत्रेण रुद्रस्यैकादशेन तु ।। ६८ ।।

रुद्रजाप्येन वा तत्र सूक्तेन् पौरुषेण वा ।।

षडंगेनाथ वा तत्र महामृत्युंजयेन च ।। ६९ ।।

गायत्र्या वा नमोंतैश्च नामभिः प्रणवादिभिः ।।

मंत्रैवाथागमोक्तैश्च जलधारादिकं तथा ।।2.1.14.७०।।

सुखसंतानवृद्ध्यर्थं धारापूजनमुत्तमम् ।।

नानाद्रव्यैः शुभैर्दिव्यैः प्रीत्या सद्भस्मधारिणा ।। ७१ ।।

घृतधारा शिवे कार्या यावन्मंत्रसहस्रकम् ।।

तदा वंशस्य विस्तारो जायते नात्र संशयः ।। ।। ७२ ।।

एवं मदुक्तमंत्रेण कार्यं वै शिवपूजनम् ।।

ब्रह्मभोज्यं तथा प्रोक्तं प्राजापत्यं मुनीश्वरैः ।। ७३ ।।

केवलं दुग्धधारा च तदा कार्या विशेषतः ।।

शर्करामिश्रिता तत्र यदा बुद्धिजडो भवेत् ।। ७४ ।।

तस्या संजायते जीवसदृशी बुद्धिरुत्तमा ।।

यावन्मंत्रायुतं न स्यात्तावद्धाराप्रपूजनम् ।। ७५ ।।

यदा चोच्चाटनं देहे जायते कारणं विना ।।

यत्र कुत्रापि वा प्रेम दुःखं च परिवर्द्धितम् ।। ७६ ।।

स्वगृहे कलहो नित्यं यदा चैव प्रजायते ।।

तद्धारायां कृतायां वै सर्वं दुःखं विलीयते ।। ७७ ।।

शत्रूणां तापनार्थं वै तैलधारा शिवोपरि ।।

कर्तव्या सुप्रयत्नेन कार्यसिद्धिर्ध्रुवं भवेत् ।। ७८ ।।

मासि तेनैव तैलेन भोगवृद्धिः प्रजायते ।।

सार्षपेनैव तैलेन शत्रुनाशो -भवेद्ध्रुवम् ।। ७९ ।।

मधुना यक्षराजो वै गच्छेच्च शिवपूजनात ।।

धारा चेक्षुरसस्यापि सर्वानन्दकरी शिवे ।। 2.1.14.८० ।।

धारा गंगाजलस्यैव भुक्तिमुक्तिफलप्रदा ।।

एतास्सर्वाश्च याः प्रोक्ता मृत्यंजयसमुद्भवाः ।। ८१ ।।

तत्राऽयुतप्रमाणं हि कर्तव्यं तद्विधानतः ।।

कर्तव्यं ब्राह्मणानां च भोज्यं वै रुद्रसंख्यया ।। ८२ ।।

एतत्ते सर्वमाख्यातं यत्पृष्टोऽहं मुनीश्वर ।।

एतद्वै सफलं लोके सर्वकामहितावहम् ।। ८३ ।।

स्कंदोमासहितं शंभुं संपूज्य विधिना सह ।।

यत्फलं लभते भक्त्या तद्वदामि यथाश्रुतम् ।।८४ ।।

अत्र भुक्त्वाखिलं सौख्यं पुत्रपौत्रादिभिः शुभम् ।।

ततो याति महेशस्य लोकं सर्वसुखावहम् ।।८५।।

सूर्यकोटिप्रतीकाशैर्विमानैः सर्वकामगैः ।।

रुद्रकन्यासमाकीर्णैर्गेयवाद्यसमन्वितैः ।।८६।।

क्रीडते शिवभूतश्च यावदाभूतसंप्लवम् ।।

ततो मोक्षमवाप्नोति विज्ञानं प्राप्य चाव्ययम् ।। ८७ ।।

इति श्रीशिवमहापुराणे प्रथम खंडे द्वितीयायां रुद्रसंहितायां सृष्ट्युपाख्याने शिवपूजाविधानवर्णनो नाम चतुर्दशोऽध्यायः ।। १४ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः १५



नारद उवाच ।।

विधे विधे महाभाग धन्यस्त्वं सुरसत्तम ।।

श्राविताद्याद्भुता शैवकथा परमपावनी ।। १ ।।

तत्राद्भुता महादिव्या लिंगोत्पत्तिः श्रुता शुभा ।।

श्रुत्वा यस्याः प्रभावं च दुःखनाशो भवेदिह ।। २ ।।

अनंतरं च यज्जातं माहात्म्यं चरितं तथा ।।

सृष्टेश्चैव प्रकारं च कथय त्वं विशेषतः ।। ३ ।।

ब्रह्मोवाच ।।

सम्यक् पृष्टे च भवता यज्जातं तदनंतरम् ।।

कथयिष्यामि संक्षेपाद्यथा पूर्वं श्रुतं मया ।। ४ ।।

अंतर्हिते तदा देवे शिवरूपे सनातने ।।

अहं विष्णुश्च विप्रेन्द्र अधिकं सुखमास्तवान् ।।५।।

मया च विष्णुना रूपं हंसवाराहयोस्तदा ।।

संवृतं तु ततस्ताभ्यां लोकसर्गावनेच्छया ।।६।।

नारद उवाच ।।

विधे ब्रह्मन् महाप्राज्ञ संशयो हृदि मे महान् ।।

कृपां कृत्वातुलां शीघ्रं तं नाशयितुमर्हसि ।। ७ ।।

हंसवाराहयो रूपं युवाभ्यां च धृतं कथम् ।।

अन्यद्रूपं विहायैव किमत्र वद कारणम् ।। ८ ।।

सूत उवाच ।।

इत्येतद्वचनं श्रुत्वा नारदस्य महात्मनः ।।

स्मृत्वा शिवपदांभोजं ब्रह्मा सादरमब्रवीत् ।। ९ ।।

ब्रह्मोवाच ।।

हंसस्य चोर्द्ध्वगमने गतिर्भवति निश्चला ।।

तत्त्वातत्त्वविवेकोऽस्ति जलदुग्धविभागवत् ।। 2.1.15.१० ।।

अज्ञानज्ञानयोस्तत्त्वं विवेचयति हंसकः।।

हंसरूपं धृतं तेन ब्रह्मणा सृष्टिकारिणा ।। ११ ।।

विवेको नैव लब्धश्च यतो हंसो व्यलीयत ।।

शिवस्वरूपतत्त्वस्य ज्योतिरूपस्य नारद ।। १२ ।।

सृष्टिप्रवृत्तिकामस्य कथं ज्ञानं प्रजायते ।।

यतो लब्धो विवेकोऽपि न मया हंसरूपिणा ।। १३ ।।

गमनेऽधो वराहस्य गतिर्भवति निश्चला ।।

धृतं वाराहरूपं हि विष्णुना वनचारिणा ।। १४ ।।

अथवा भवकल्पार्थं तद्रूपं हि प्रकल्पितम् ।।

विष्णुना च वराहस्य भुवनावनकारिणा ।। १५ ।।

यद्दिनं हि समारभ्य तद्रूपं धृतवान्हरिः ।।

तद्दिनं प्रति कल्पोऽसौ कल्पो वाराहसंज्ञकः ।। १६ ।।

तदिच्छा वा यदा जाता ताभ्यां रूपं हि धारणे ।।

तद्दिनं प्रतिकल्पोऽसौ कल्पो वाराहसंज्ञक् ।। १७ ।।

इति प्रश्नोत्तरं दत्तं प्रस्तुतं शृणु नारद ।।

स्मृत्वा शिवपदांभोजं वक्ष्ये सृष्टिविधिं मुने ।। १८ ।।

अंतर्हिते महादेवे त्वहं लोकपितामहः ।।

तदीयं वचनं कर्तुमध्यायन्ध्यानतत्परः ।। १९ ।।

नमस्कृत्य तदा शंभुं ज्ञानं प्राप्य हरेस्तदा ।।

आनंदं परमं गत्वा सृष्टिं कर्तुं मनो दधे ।। 2.1.15.२० ।।

विष्णुश्चापि तदा तत्र प्रणिपत्य सदाशिवम् ।।

उपदिश्य च मां तात ह्यंतर्धानमुपागतः ।। २१ ।।

ब्रह्माण्डाच्च बहिर्गत्वा प्राप्य शम्भोरनुग्रहम् ।।

वैकुंठनगरं गत्वा तत्रोवास हरिस्सदा ।। २२ ।।

अहं स्मृत्वा शिवं तत्र विष्णुं वै सृष्टिकाम्यया ।।

पूर्वं सृष्टं जलं यच्च तत्रांजलिमुदाक्षिपम् ।।२३।।

अतोऽण्डमभवत्तत्र चतुर्विंशतिसंज्ञ कम् ।।

विराड्रूपमभूद्विप्र जलरूपमपश्यतः ।। २४ ।।

ततस्संशयमापन्नस्तपस्तेपे सुदारुणम् ।।

द्वादशाब्दमहं तत्र विष्णुध्यानपरायणः ।। २५ ।।

तस्मिंश्च समये तात प्रादुर्भूतो हरिस्स्वयम् ।।

मामुवाच महाप्रीत्या मदंगं संस्पृशन्मुदा ।। २६ ।।

।। विष्णुरुवाच ।। ।।

वरं ब्रूहि प्रसन्नोऽस्मि नादेयो विद्यते तव ।।

ब्रह्मञ्छंभुप्रसादेन सर्वं दातुं समर्थकः ।। २७ ।।

ब्रह्मोवाच ।। ।।

युक्तमेतन्महाभाग दत्तोऽहं शंभुना च ते ।।

तदुक्तं याचते मेऽद्य देहि विष्णो नमोऽस्तु ते ।। २८ ।।

विराड्रूपमिदं ह्यंडं चतुर्विंशतिसंज्ञकम् ।।

न चैतन्यं भवत्यादौ जडीभूतं प्रदृश्यते ।। २९ ।।

प्रादुर्भूतो भवानद्य शिवानुग्रहतो हरे ।।

प्राप्तं शंकरसंभूत्या ह्यण्डं चैतन्यमावह ।। 2.1.15.३० ।।

इत्युक्ते च महाविष्णुश्शंभोराज्ञापरायणः ।।

अनंतरूपमास्थाय प्रविवेश तदंडकम् ।। ।। ३१ ।।

सहस्रशीर्षा पुरुषस्सहस्राक्षः सहस्रपात् ।।

स भूमिं सर्वतस्पृत्वा तदण्डं व्याप्तवानिति ।। ३२ ।।

प्रविष्टे विष्णुना तस्मिन्नण्डे सम्यक्स्तुतेन मे ।।

सचेतनमभूदण्डं चतुर्विंशतिसंज्ञकम् ।। ३३ ।।

पातालादि समारभ्य सप्तलोकाधिपः स्वयम् ।।

राजते स्म हरिस्तत्र वैराजः पुरुषः प्रभुः ।। ३४ ।।

कैलासनगरं रम्यं सर्वोपरि विराजितम् ।।

निवासार्थं निजस्यैव पंचवक्त्र श्चकार ह ।।३५।।

ब्रह्मांडस्य तथा नाशे वैकुण्ठस्य च तस्य च ।।

कदाचिदेव देवर्षे नाशो नास्ति तयोरिह ।। ३६ ।।

सत्यं पदमुपाश्रित्य स्थितोऽहं मुनिसत्तम ।।

सृष्टिकामोऽभवं तात महादेवाज्ञया ह्यहम् ।।३७।।

सिसृक्षोरथ मे प्रादुरभवत्पापसर्गकः।

अविद्यापंचकस्तात बुद्धिपूर्वस्तमोपमः ।। ३८ ।।

ततः प्रसन्नचित्तोऽहमसृजं स्थावराभिधम् ।।

मुख्यसर्गं च निस्संगमध्यायं शंभुशासनात् ।। ३९ ।।

तं दृष्ट्वा मे सिसृक्षोश्च ज्ञात्वा साधकमात्मनः ।।

सर्गोऽवर्तत दुःखाढ्यस्तिर्यक्स्रोता न साधकः ।। 2.1.15.४० ।।

तं चासाधकमाज्ञाय पुनश्चिंतयतश्च मे ।।

अभवत्सात्त्विकस्सर्ग ऊर्ध्वस्रोता इति द्रुतम् ।। ४१ ।।

देवसर्गः प्रतिख्यातस्सत्योऽतीव सुखावहः ।।

तमप्यसाधकं मत्वाऽचिंतयं प्रभुमात्मनः ।। ४२ ।।

प्रादुरासीत्ततस्सर्गो राजसः शंकराज्ञया ।।

अवाक्स्रोता इति ख्यातो मानुषः परसाधकः ।। ४३ ।।

महादेवाज्ञया सर्गस्ततो भूतादिकोऽभवत् ।।

इति पंचविधा सृष्टिः प्रवृत्ता वै कृता मया ।। ४४ ।।

त्रयस्सर्गाः प्रकृत्याश्च ब्रह्मणः परिकीर्तिताः ।।

तत्राद्यो महतस्सर्गो द्वितीयः सूक्ष्मभौतिकः ।।४५।।

वैकारिकस्तृतीयश्च इत्येते प्रकृतास्त्रयः ।।

एवं चाष्टविधास्सर्गाः प्रकृतेर्वैकृतैः सह ।।४६।।

कौमारो नवमः प्रोक्तः प्राकृतो वैकृतश्च सः ।।

एषामवांतरो भेदो मया वक्तुं न शक्यते ।। ४७ ।।

अल्पत्वादुपयोगस्य वच्मि सर्गं द्विजात्मकम् ।।

कौमारः सनकादीनां यत्र सर्गो महानभूत् ।। ४८ ।।

सनकाद्याः सुता मे हि मानसा ब्रह्मसंमिताः ।।

महावैराग्यसंपन्ना अभवन्पंच सुव्रताः ।। ४९ ।।

मयाज्ञप्ता अपि च ते संसारविमुखा बुधाः ।।

शिवध्यानैकमनसो न सृष्टौ चक्रिरे मतिम् ।। 2.1.15.५० ।।

प्रत्युत्तरं च तदनु श्रुत्वाहं मुनिसत्तम ।।

अकार्षं क्रोधमत्युग्रं मोहमाप्तश्च नारद ।।५१।।

कुद्धस्य मोहितस्याथ विह्वलस्य मुने मम ।।

क्रोधेन खलु नेत्राभ्यां प्रापतन्नश्रुबिंदवः ।। ।।५२।।

तस्मिन्नवसरे तत्र स्मृतेन मनसा मया ।।

प्रबोधितोहं त्वरितमागतेना हि विष्णुना ।।५३।।

तपः कुरु शिवस्येति हरिणा शिक्षितोऽप्यहम् ।।

तपोकारी महद्घोरं परमं मुनिसत्तम ।। ५४ ।।

तपस्यतश्च सृष्ट्यर्थं भ्रुवोर्घ्राणस्य मध्यतः ।।

अविमुक्ताभिधाद्देशात्स्वकीयान्मे विशेषतः ।। ५५।।

त्रिमूर्तीनां महेशस्य प्रादुरासीद्घृणानिधिः ।।

आर्द्धनारीश्वरो भूत्वा पूर्णांशस्सकलेश्वरः ।। ५६ ।।

तमजं शंकरं साक्षात्तेजोराशिमुमापतिम् ।।

सर्वज्ञं सर्वकर्तारं नीललोहितसंज्ञकम् ।। ५७ ।।

दृष्ट्वा नत्वा महाभक्त्या स्तुत्वाहं तु प्रहर्षितः ।।

अवोचं देवदेवेशं सृज त्वं विविधाः प्रजाः।।५८।।

श्रुत्वा मम वचस्सोथ देवदेवो महेश्वरः ।।

ससर्ज स्वात्मनस्तुल्यान्रुद्रो रुद्रगणान्बहून ।। ५९ ।।

अवोचं पुनरेवेशं महारुद्रं महेश्वरम् ।।

जन्ममृत्युभयाविष्टास्सृज देव प्रजा इति ।। 2.1.15.६० ।।

एवं श्रुत्वा महादेवो मद्वचः करुणानिधिः ।।

प्रहस्योवाच मां सद्यः प्रहस्य मुनिसत्तम ।।६१ ।।

महादेव उवाच ।।

जन्ममृत्युभयाविष्टा नाहं स्रक्ष्ये प्रजा विधे ।।

अशोभनाः कर्मवशा विमग्ना दुःखवारिधौ ।। ६२ ।।

अहं दुःखोदधौ मग्ना उद्धरिष्यामि च प्रजाः ।।

सम्यक्ज्ञानप्रदानेन गुरुमूर्तिपरिग्रहः ।। ६३ ।।

त्वमेव सृज दुःखाढ्याः प्रजास्सर्वाः प्रजापते ।।

मदाज्ञया न बद्धस्त्वं मायया संभविष्यसि ।। ६४ ।।

ब्रह्मोवाच ।।

इत्युक्त्वा मां स भगवान्सुश्रीमान्नीललोहितः ।।

सगणः पश्यतो मे हि द्रुतमंतर्दधे हरः ।।६५।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखंडे सृष्ट्युपक्रमे रुद्रावताराविर्भाववर्णनो नाम पञ्चदशोऽध्यायः।।
।। १५ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः १६



ब्रह्मोवाच ।।

शब्दादीनि च भूतानि पंचीकृत्वाहमात्मना ।।

तेभ्यः स्थूलं नभो वायुं वह्निं चैव जलं महीम् ।। १ ।।

पर्वतांश्च समुद्रांश्च वृक्षादीनपि नारद ।।

कलादियुगपर्यंतान्कालानन्यानवासृजम् ।। २ ।।

सृष्ट्यंतानपरांश्चापि नाहं तुष्टोऽभव न्मुने ।।

ततो ध्यात्वा शिवं साम्बं साधकानसृजं मुने ।। ३ ।।

मरीचिं च स्वनेत्राभ्यां हृदयाद्भृगुमेव च ।।

शिरसोऽगिरसं व्यानात्पुलहं मुनिसत्तमम् ।। ४ ।।

उदानाच्च पुलस्त्यं हि वसिष्ठञ्च समानतः ।।

क्रतुं त्वपानाच्छ्रोत्राभ्यामत्रिं दक्षं च प्राणतः ।। ५ ।।

असृजं त्वां तदोत्संगाच्छायायाः कर्दमं मुनिम् ।।

संकल्पादसृजं धर्मं सर्वसाधनसाधनम् ।।६।।

एवमेतानहं सृष्ट्वा कृतार्थस्साधकोत्तमान् ।।

अभवं मुनिशार्दूल महादेवप्रसादतः ।। ७ ।।

ततो मदाज्ञया तात धर्मः संकल्पसंभवः ।।

मानवं रूपमापन्नस्साधकैस्तु प्रवर्तितः ।।८।।

ततोऽसृजं स्वगात्रेभ्यो विविधेभ्योऽमितान्सुतान् ।।

सुरासुरादिकांस्तेभ्यो दत्त्वा तां तां तनुं मुने ।।९।।

ततोऽहं शंकरेणाथ प्रेरितोंऽतर्गतेन ह ।।

द्विधा कृत्वात्मनो देहं द्विरूपश्चाभवं मुने ।। 2.1.16.१० ।।

अर्द्धेन नारी पुरुषश्चार्द्धेन संततो मुने ।

स तस्यामसृजद्द्वंद्वं सर्वसाधनमुत्तमम् ।।११।।

स्वायंभुवो मनुस्तत्र पुरुषः परसाधनम् ।।

शतरूपाभिधा नारी योगिनी सा तपस्विनी ।। १२ ।।

सा पुनर्मनुना तेन गृहीतातीव शोभना ।।

विवाहविधिना ताताऽसृजत्सर्गं समैथुनम् ।। १३ ।।

तस्यां तेन समुत्पन्नस्तनयश्च प्रियव्रतः ।।

तथैवोत्तानपादश्च तथा कन्यात्रयं पुनः।।१४।।

आकूतिर्देवहूतिश्च प्रसूतिरिति विश्रुताः ।।

आकूतिं रुचये प्रादात्कर्दमाय तु मध्यमाम् ।।१५।।

ददौ प्रसूतिं दक्षायोत्तानपादानुजां सुताः ।।

तासां प्रसूतिप्रसवैस्सर्वं व्याप्तं चराचरम् ।।१६।।

आकूत्यां च रुचेश्चाभूद्द्वंद्वं यज्ञश्च दक्षिणा ।।

यज्ञस्य जज्ञिरे पुत्रा दक्षिणायां च द्वादश ।। १७ ।।

देवहूत्यां कर्दमाच्च बह्व्यो जातास्सुता मुने ।।

दशाज्जाताश्चतस्रश्च तथा पुत्र्यश्च विंशतिः ।। १८ ।।

धर्माय दत्ता दक्षेण श्रद्धाद्यास्तु त्रयोदश ।।

शृणु तासां च नामानि धर्मस्त्रीणां मुनीश्वर।।१९।।

श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा तथा क्रिया ।।

वसुःर्बुद्धि लज्जा शांतिः सिद्धिः कीर्तिस्त्रयोदश ।।2.1.16.२०।।

ताभ्यां शिष्टा यवीयस्य एकादश सुलोचनाः ।।

ख्यातिस्सत्पथसंभूतिः स्मृतिः प्रीतिः क्षमा तथा।।२१।।

सन्नतिश्चानुरूपा च ऊर्जा स्वाहा स्वधा तथा ।।

भृगुर्भवो मरीचिश्च तथा चैवांगिरा मुनिः ।। २२ ।।

पुलस्त्यः पुलहश्चैव क्रतुश्चर्षिवरस्तथा ।।

अत्रिर्वासिष्ठो वह्निश्च पितरश्च यथाक्रमम् ।। २३ ।।

ख्यातास्ता जगृहुः कन्या भृग्वाद्यास्साधका वराः ।।

ततस्संपूरितं सर्वं त्रैलोक्यं सचराचरम् ।। २४ ।।

एवं कर्मानुरूपेण प्रणिनामंबिकापते।।

आज्ञया बहवो जाता असंख्याता द्विजर्षभाः ।।२५।।

कल्पभेदेन दक्षस्य षष्टिः कन्याः प्रकीर्तिताः ।।

तासां दश च धर्माय शशिने सप्तविंशतिम् ।।२६।।
विधिना दत्तवान्दक्षः कश्यपाय त्रयोदश ।।
चतस्रः पररूपाय ददौ ताक्ष्यार्य नारद।।२७।।
भृग्वंगिरः कृशाश्वेभ्यो द्वे द्वे कन्ये च दत्तवान् ।।
ताभ्यस्तेभ्यस्तु संजाता बह्वी सृष्टिश्चराचरा ।।२८।।
त्रयोदशमितास्तस्मै कश्यपाय महात्मने ।।
दत्ता दक्षेण याः कन्या विधिवन्मुनिसत्तम ।। २९ ।।
तासां प्रसूतिभिर्व्याप्तं त्रैलोक्यं सचराचरम् ।।
स्थावरं जंगमं चैव शून्य नैव तु किंचन ।। 2.1.16.३० ।।
देवाश्च ऋषयश्चैव दैत्याश्चैव प्रजज्ञिरे ।।
वृक्षाश्च पक्षिणश्चैव सर्वे पर्वतवीरुधः ।। ३१ ।।
दक्षकन्याप्रसूतैश्च व्याप्तमेवं चराचरम् ।।
पातालतलमारभ्य सत्यलोकावधि ध्रुवम् ।। ३२ ।।
ब्रह्मांडं सकलं व्याप्तं शून्यं नैव कदाचन ।।
एवं सृष्टिः कृता सम्यग्ब्रह्मणा शंभुशासनात् ।। ३३ ।।
सती नाम त्रिशूलाग्रे सदा रुद्रेण रक्षिता ।।
तपोर्थं निर्मिता पूर्वं शंभुना सर्वविष्णुना ।। ३४ ।।
सैव दक्षात्समुद्भूता लोककार्यार्थमेव च ।।
लीलां चकार बहुशो भक्तोद्धरणहेतवे।। ।। ३५ ।।
वामांगो यस्य वैकुंठो दक्षिणांगोऽहमेव च ।।
रुद्रो हृदयजो यस्य त्रिविधस्तु शिवः स्मृतः।। ३६ ।।
अहं विष्णुश्च रुद्रश्च गुणास्त्रय उदाहृताः।।
स्वयं सदा निर्गुणश्च परब्रह्माव्ययश्शिवः ।।३७।।
विष्णुस्सत्त्वं रजोऽहं च तमो रुद्र उदाहृतः।।
लोकाचारत इत्येवं नामतो वस्तुतोऽन्यथा ।।३८।।
अंतस्तमो बहिस्सत्त्वो विष्णूरुद्रस्तथा मतः ।।
अंतस्सत्त्वस्तमोबाह्यो रजोहं सर्वेथा मुने ।। ।। ३९ ।।
राजसी च सुरा देवी सत्त्वरूपात्तु सा सती ।।

लक्ष्मीस्तमोमयी ज्ञेया विरूपा च शिवा परा ।।2.1.16.४०।।

एवं शिवा सती भूत्वा शंकरेण विवाहिता ।।

पितुर्यज्ञे तनुं त्यक्त्वा नादात्तां स्वपदं ययौ ।।४१।।

पुनश्च पार्वती जाता देवप्रार्थनया शिवा ।।

तपः कृत्वा सुविपुलं पुनश्शिवमुपागता ।।४२।।

तस्या नामान्यनेकानि जातानि च मुनीश्वर।।

कालिका चंडिका भद्रा चामुंडा विजया जया ।।४३।।

जयंती भद्रकाली च दुर्गा भगवतीति च ।।

कामाख्या कामदा ह्यम्बा मृडानी सर्वमंगला ।। ४४ ।।

नामधेयान्यनेकानि भुक्तिमुक्तिप्रदानि च।।

गुणकर्मानुरूपाणि प्रायशस्तत्र पार्वती ।।४५।।

गुणमय्यस्तथा देव्यो देवा गुणमयास्त्रयः ।।

मिलित्वा विविधं सृष्टेश्चक्रुस्ते कार्यमुत्तमम् ।।४६।।

एवं सृष्टिप्रकारस्ते वर्णितो मुनिसत्तम।।

शिवाज्ञया विरचितो ब्रह्मांडस्य मयाऽखिलः ।। ।।४७।।

परं ब्रह्म शिवः प्रोक्तस्तस्य रूपास्त्रयः सुराः ।।

अहं विष्णुश्च रुद्रश्च गुणभेदानुरूपतः ।।४८।।

शिवया रमते स्वैरं शिवलोके मनोरमे ।।

स्वतंत्रः परमात्मा हि निर्गुणस्सगुणोऽपि वै ।।४९।।

तस्य पूर्णवतारो हिं रुद्रस्साक्षाच्छिवः स्मृतः ।।

कैलासे भवनं रम्यं पंचवक्त्रश्चकार ह ।।

ब्रह्मांडस्य तथा नाशे तस्य नाशोस्ति वै न हि ।।2.1.16.५०।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथम खंडे सृष्ट्युपाख्याने ब्रह्मनारदसंवादे सृष्टिवर्णनो नाम षोडशोऽध्यायः ।।१६।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः १७



सूत उवाच ।।

इत्याकर्ण्य वचस्तस्य ब्रह्मणस्स तु नारदः ।।

पुनः पप्रच्छ तं नत्वा विनयेन मुनीश्वराः ।। १ ।।

नारद उवाच ।।

कदागतो हि कैलासं शंकरो भक्तवत्सलः ।।

क्व वा सखित्वं तस्यासीत्कुबेरेण महात्मना ।। २ ।।

किं चकार हरस्तत्र परिपूर्णः शिवाकृतिः ।।

एतत्सर्वं समाचक्ष्व परं कौतूहलं मम ।। ।। ३ ।।

ब्रह्मोवाच ।।

शृणु नारद वक्ष्यामि चरितं शशिमौलिनः ।।

यथा जगाम कैलासं सखित्वं धनदस्य च ।।४।।

असीत्कांपिल्यनगरे सोमयाजिकुलोद्भवः।।

दीक्षितो यज्ञदत्ताख्यो यज्ञविद्याविशारदः ।।५।।

वेदवेदांगवित्प्राज्ञो वेदान्तादिषु दक्षिणः।।

राजमान्योऽथ बहुधा वदान्यः कीर्तिभाजनः।।६।।

अग्निशुश्रूषणरतो वेदाध्ययनतत्परः।।

सुन्दरो रमणीयांगश्चन्द्रबिंबसमाकृतिः।।७।।

आसीद्गुणनिधिर्नाम दीक्षितस्यास्य वै सुतः।।

कृतोपनयनस्सोष्टौ विद्या जग्राह भूरिशः।।

अथ पित्रानभिज्ञातो यूतकर्मरतोऽभवत् ।।८।।

आदायादाय बहुशो धनं मातुस्सकाशतः।।

समदाद्यूतकारेभ्यो मैत्रीं तैश्च चकार सः।।९।।

संत्यक्तब्राह्मणाचारः संध्यास्नानपराङ्मुखः।।

निंदको वेदशास्त्राणां देवब्राह्मणनिंदकः।।2.1.17.१०।।

स्मृत्याचारविहीनस्तु गीतवाद्यविनोदभाक्।।

नटपाखंडभाण्डैस्तु बद्धप्रेमपरंपरः ।। ११ ।।

प्रेरितोऽपि जनन्या स न ययौ पितुरंतिकम् ।।

गृहकार्यांतरव्याप्तो दीक्षितो दीक्षितायिनीम्।।१२।।

यदा यदैव तां पृच्छेदये गुणनिधिस्सुतः ।।

न दृश्यते मया गेहे कल्याणि विदधाति किम् ।। १३ ।।

तदा तदेति सा ब्रूयादिदानीं स बहिर्गतः ।।

स्नात्वा समर्च्य वै देवानेतावंतमनेहसम्।।१४।।

अधीत्याध्ययनार्थं स द्विजैर्मित्रैस्समं ययौ ।।

एकपुत्रेति तन्माता प्रतारयति दीक्षितम्।।१५।।

न तत्कर्म च तद्वृत्तं किंचिद्वेत्ति स दीक्षितः ।।

सर्वं केशांतकर्मास्य चक्रे वर्षेऽथ षोडशे। १६ ।।

अथो स दीक्षितो यज्ञदत्तः पुत्रस्य तस्य च।।

गृह्योक्तेन विधानेन पाणिग्राहमकारयम्।।१७।।

प्रत्यहं तस्य जननी सुतं गुणनिधिं मृदु।।

शास्ति स्नेहार्द्रहृदया ह्युपवेश्य स्म नारद ।।१-।।

क्रोधनस्तेऽस्ति तनय स महात्मा पितेत्यलम् ।।

यदि ज्ञास्यति ते वृत्तं त्वां च मां ताडयिष्यति।।१९।।

आच्छादयामि ते नित्यं पितुरग्रे कुचेष्टितम्।।

लोकमान्योऽस्ति ते तातस्सदाचारैर्न वै धनैः ।।2.1.17.२०।।

ब्राह्मणानां धनं तात सद्विद्या साधुसं- गमः ।।

किमर्थं न करोषि त्वं सुरुचिं प्रीतमानसः ।।२१।।

सच्छ्रोत्रियास्तेऽनूचाना दीक्षितास्सोमयाजिनः ।।

इति रूढिमिह प्राप्तास्तव पूर्वपितामहाः ।।२२।।

त्यक्त्वा दुर्वृत्तसंसर्गं साधुसंगरतो भव ।।

सद्विद्यासु मनो धेहि ब्राह्मणाचारमाचर ।।२३।।

तातानुरूपो रूपेण यशसा कुलशीलतः ।।

ततो न त्रपसे किन्नस्त्यज दुर्वृत्ततां स्वकाम् ।।२४।।

ऊनविंशतिकोऽसि त्वमेषा षोडशवार्षिकी ।।
एतां संवृणु सद्वृत्तां पितृभक्तियुतो भव ।।२५।।
श्वशुरोऽपि हि ते मान्यस्सर्वत्र गुणशीलतः ।।
ततो न त्रपसे किन्नस्त्यज दुर्वृत्ततां सुत ।।२६।।
मातुलास्तेऽतुलाः पुत्र विद्याशीलकुलादिभिः ।।
तेभ्योऽपि न बिभेषि त्वं शुद्धोऽस्युभयवंशतः ।।२७।।
पश्यैतान्प्रति वेश्मस्थान्ब्राह्मणानां कुमारकान् ।।
गृहेऽपि शिष्यान्पश्यैतान्पितुस्ते विनयोचितान् ।।२८।।
राजापि श्रोष्यति यदा तव दुश्चेष्टितं सुत ।।
श्रद्धां विहाय ते ताते वृत्तिलोपं करिष्यति ।। २९ ।।
बालचेष्टितमेवैतद्वदंत्यद्यापि ते जनाः ।।
अनंतरं हरिष्यंति युक्तां दीक्षितताामिह ।। 2.1.17.३० ।।
सर्वेप्याक्षारयिष्यंति तव तातं च मामपि ।।
मातुश्चरित्रं तनयो धत्ते दुर्भाषणैरिति ।। ३१ ।।
पितापि ते न पापीयाञ्छ्रुतिस्मृतिपथानुगः ।।
तदंघ्रिलीनमनसो मम साक्षी महेश्वरः ।।३२।।
न चर्तुस्नातययापीह मुखं दुष्टस्य वीक्षितम्।।
अहो बलीयान्स विधिर्येन जातो भवानिति ।। ३३ ।।
प्रतिक्षणं जनन्येति शिक्ष्यमाणोतिदुर्मतिः ।।।
न तत्याज च तद्धर्मं दुर्बोधो व्यसनी यतः ।। ३४ ।।
मृगयामद्यपैशुन्यानृतचौर्यदुरोदरैः ।।
स वारदारैर्व्यसनैरेभिः कोऽत्र न खंडितः ।। ३५ ।।।
यद्यन्मध्यगृहे पश्येत्तत्तन्नीत्वा सुदुर्मतिः ।।
अर्पयेद्द्यूतकाराणां सकुप्यं वसनादिकम् ।। ३६ ।।
न्यस्तां रत्नमयीं गेहे करस्य पितुरूर्मिकाम् ।।
चोरयित्वैकदादाय दुरोदरकरेऽर्पयत् ।। ३७ ।।
दीक्षितेन परिज्ञातो दैवाद्द्यूतकृतः करे ।।
उवाच दीक्षितस्तं च कुतो लब्धा त्वयोर्मिका ।। ३८ ।।

पृष्टस्तेनाथ निर्बंधादसकृत्तमुवाच सः ।।
मामाक्षिपसि विप्रोच्चैः किं मया चौर्यकर्मणा ।।३९।।
लब्धा मुद्रा त्वदीयेन पुत्रेणैव समर्पिता ।।
मम मातुर्हि पूर्वेद्युर्जित्वा नीतो हि शाटकः।।2.1.17.४०।।
न केवलं ममैवैतदंगुलीयं समर्पितम् ।।
अन्येषां द्यूतकर्तॄणां भूरि तेनार्पितं वसु ।। ४१ ।।
रत्नकुप्यदुकूलानि शृंगारप्रभृतीनि च ।।
भाजनानि विचित्राणि कांस्यताम्रमयानि च ।। ४२ ।।
नग्नीकृत्य प्रतिदिनं बध्यते द्यूतकारिभिः ।।
न तेन सदृशः कश्चिदाक्षिको भूमिमंडले ।। ४३ ।।
अद्यावधि त्वया विप्र दुरोदर शिरोमणिः ।।
कथं नाज्ञायि तनयोऽविनयानयकोविदः ।। ४४ ।।
इति श्रुत्वा त्रपाभारविनम्रतरकंधरः ।।
प्रावृत्य वाससा मौलिं प्राविशन्निजमन्दिरम् ।। ४५ ।।
महापतिव्रतामस्य पत्नी प्रोवाच तामथ ।।
स दीक्षितो यज्ञदत्तः श्रौतकर्मपरायणः ।। ४६ ।।
यज्ञदत्त उवाच ।।
दीक्षितायनि कुत्रास्ति धूर्ते गुणनिधिस्सुतः ।।
अथ तिष्ठतु किं तेन क्व सा मम शुभोर्मिका ।। ।।४७।।
अंगोद्वर्तनकाले या त्वया मेऽङ्गुलितो हृता ।।
सा त्वं रत्नमयी शीघ्रं तामानीय प्रयच्छ मे ।। ४८ ।।
इति श्रुत्वाथ तद्वाक्यं भीता सा दीक्षितायनी ।।
प्रोवाच स्नानमध्याह्नीं क्रियां निष्पादयत्यथ ।। ४९ ।।
व्यग्रास्मि देवपूजार्थमुपहारादिकर्मणि ।।
समयोऽयमतिक्रामेदतिथीनां प्रियातिथे ।। 2.1.17.५० ।।
इदानीमेव पक्वान्नकारणव्यग्रया मया ।।
स्थापिता भाजने क्वापि विस्मृतेति न वेद्म्यहम् ।।५१।।
दीक्षित उवाच ।।

हं हेऽसत्पुत्रजननि नित्यं सत्यप्रभाषिणि ।।
यदा यदा त्वां संपृछे तनयः क्व गतस्त्विति ।। ।। ५२ ।।
तदातदेति त्वं ब्रूयान्नथेदानीं स निर्गतः ।।
अधीत्याध्ययनार्थं च द्वित्रैर्मित्रैस्सयुग्बहिः ।। ५३ ।।
कुतस्ते शाटकः पत्नि मांजिष्ठो यो मयार्पितः ।।
लभते योऽनिशं धाम्नि तथ्यं ब्रूहि भयं त्यज ।। ५४ ।।
सांप्रतं नेक्ष्यते सोऽपि भृंगारो मणिमंडितः ।।
पट्टसूत्रमयी सापि त्रिपटी या मयार्पिता ।।५५।।
क्व दाक्षिणात्यं तत्कांस्यं गौडी ताम्रघटी क्व सा ।।
नागदंतमयी सा क्व सुखकौतुक मंचिका ।। ५६ ।।
क्व सा पर्वतदेशीया चन्द्रकांतिरिवाद्भुता ।।
दीपकव्यग्रहस्ताग्रालंकृता शालभञ्जिका ।। ५७ ।।
किं बहूक्तेन कुलजे तुभ्यं कुप्याम्यहं वृथा ।।
तदाभ्यवहारिष्येहमुपयंस्याम्यहं यदा ।। ५८ ।।
अनपत्योऽस्मि तेनाहं दुष्टेन कुलदूषिणा ।।
उत्तिष्ठानय पाथस्त्वं तस्मै दद्यास्तिलांजलिम् ।।५९।।
अपुत्रत्वं वरं नृणां कुपुत्रात्कुलपांसनात् ।।
त्यजेदेकं कुलस्यार्थे नीतिरेषा सनातनी ।। 2.1.17.६० ।।
स्नात्वा नित्यविधिं कृत्वा तस्मिन्नेवाह्नि कस्यचित् ।।
श्रोत्रियस्य सुतां प्राप्य पाणिं जग्राह दीक्षितः ।। ६१ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखण्डे सृष्ट्युपाख्याने गुणनिधिचरित्रवर्णनोनाम सप्तदशोऽध्यायः ।।१७।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः १८



ब्रह्मोवाच ।।

श्रुत्वा तथा स वृत्तांतं प्राक्तनं स्वं विनिंद्य च ।।

कांचिद्दिशं समालोक्य निर्ययौ दीक्षितांगजः ।। १ ।।

कियच्चिरं ततो गत्वा यज्ञदत्तात्मजस्स हि ।।

दुष्टो गुणनिधिस्तस्थौ गतोत्साहो विसर्जितः ।।२ ।।

चिंतामवाप महतीं क्व यामि करवाणि किम् ।।

नाहमभ्यस्तविद्योऽस्मि न चैवातिधनोऽस्म्यहम् ।। ३ ।।

देशांतरे यस्य धनं स सद्यस्सुखमेधते ।।

भयमस्ति धने चौरात्स विघ्नस्सर्वतोभवः ।।४।।

याजकस्य कुले जन्म कथं मे व्यसनं महत्।।

अहो बलीयान्हि विधिर्भाविकर्मानुसंधयेत् ।।५।।

भिक्षितुन्नाधिगच्छामि न मे परिचितिः क्वचित् ।।

न च पार्श्वे धनं किञ्चित्किमत्र शरणं भवेत् ।।६।।

सदानभ्युदिते भानौ प्रसूर्मे मिष्टभोजनम् ।।

दद्यादद्यात्र कं याचे न चेह जननी मम ।। ७ ।।

ब्रह्मोवाच ।। ।।

इति चिंतयतस्तस्य बहुशस्तत्र नारद ।।

अति दीनं तरोर्मूले भानुरस्ताचलं गतः ।।८।।

एतस्मिन्नेव समये कश्चिन्माहेश्वरो नरः ।।

सहोपहारानादाय नगराद्बहिरभ्यगात् ।।९।।

नानाविधान्महादिव्यान्स्वजनैः परिवारितः ।।

समभ्यर्चितुमीशानं शिवरात्रावुपोषितः ।।2.1.18.१०।।

शिवालयं प्रविश्याथ स भक्तश्शिवसक्तधीः ।।

यथोचितं सुचित्तेन पूजयामास शंकरम् ।। ११ ।।

पक्वान्नगंधमाघ्राय यज्ञदत्तात्मजो द्विजः ।।
पितृत्यक्तो मातृहीनः क्षुधितः स तमन्वगात् ।।१२।।
इदमन्नं मया ग्राह्यं शिवायोपकृतं निशि ।।
सुप्ते शैवजने दैवात्सर्वस्मिन्विविधं महत् ।। १३ ।।
इत्याशामवलम्ब्याथ द्वारि शंभोरुपाविशत् ।।
ददर्श च महापूजां तेन भक्तेन निर्मिताम् ।।१४।।
विधाय नृत्यगीतादि भक्तास्सुप्ताः क्षणे यदा ।।
नैवेद्यं स तदादातुं भर्गागारं विवेश ह ।।१५।।
दीपं मंदप्रभं दृष्ट्वा पक्वान्नवीक्षणाय सः ।।
निजचैलांजलाद्वर्तिं कृत्वा दीपं प्रकाश्य च ।।१६।।
यज्ञदत्तात्मजस्सोऽथ शिवनैवेद्यमादरात् ।।
जग्राह सहसा प्रीत्या पक्वान्न वहुशस्ततः ।। १७ ।।
ततः पक्वान्नमादाय त्वरितं गच्छतो बहिः ।।
तस्य पादतलाघातात्प्रसुप्तः कोप्यबुध्यत ।।१८।।
कोऽयं कोऽयं त्वरापन्नो गृह्यतां गृह्यता मसौ ।।
इति चुक्रोश स जनो गिरा भयमहोच्चया ।। १९ ।।
यावद्भयात्समागत्य तावत्स पुररक्षकैः ।।
पलायमानो निहतः क्षणादंधत्वमागतः ।। 2.1.18.२० ।।
अभक्षयच्च नैवेद्यं यज्ञदत्तात्मजो मुने ।।
शिवानुग्रहतो नूनं भाविपुण्यबलान्न सः ।। २१ ।।
अथ बद्धस्समागत्य पाशमुद्गरपाणिभिः ।।
निनीषुभिः संयमनीं याम्यैस्स विकटैर्भटैः ।। २२ ।।
तावत्पारिषदाः प्राप्ताः किंकि णीजालमालिनः ।।
दिव्यं विमानमादाय तं नेतुं शूलपाणयः ।। २३ ।।
शिवगणा ऊचुः ।। ।।
मुंचतैनं द्विजं याम्या गणाः परम धार्मिकम् ।।
दण्डयोग्यो न विप्रोऽसौ दग्धसर्वाघसंचयः ।। २४ ।।
इत्याकर्ण्य वचस्ते हि यमराजगणास्ततः ।।

महादेवगणानाहुर्बभूवुश्चकिता भृशम् ।। २५ ।।
शंभोर्गणानथालोक्य भीतैस्तैर्यमकिंकरैः ।।
अवादि प्रणतैरित्थं दुर्वृत्तोऽयं गणा द्विजः ।। २६ ।।
यमगणा ऊचुः ।।
कुलाचारं प्रतीर्य्यैष पित्रोर्वाक्यपराङ्मुखः ।।
सत्यशौचपरिभ्रष्टस्संध्यास्नानविवर्जितः ।। २७ ।।
आस्तां दूरेस्य कर्मान्यच्छिवनिर्माल्यलंघकः ।।
प्रत्यक्षतोऽत्र वीक्षध्वमस्पृश्योऽयं भवादृशाम् ।। २८ ।।
शिवनिर्माल्यभोक्तारश्शिवनिर्म्माल्यलंघकाः ।।
शिवनिर्माल्यदातारः स्पर्शस्तेषां ह्यपुण्यकृत्।।२९।।
विषमालोक्य वा पेयं श्रेयो वा स्पर्शनं परम्।।
सेवितव्यं शिवस्वं न प्राणः कण्ठगतैरपि ।।2.1.18.३०।।
यूयं प्रमाणं धर्मेषु यथा न च तथा वयम् ।।
अस्ति चेद्धर्मलेशोस्य गणास्तं शृणुमो वयम्।।३१।।
इत्थं तद्वाक्यमाकर्ण्य यामानां शिवकिंकराः ।।
स्मृत्वा शिवपदाम्भोजं प्रोचुः पारिषदास्तु तान् ।। ३२ ।।
शिवकिंकरा ऊचुः ।। ।।
किंकराश्शिवधर्मा ये सूक्ष्मास्ते तु भवादृशैः ।।
स्थूललक्ष्यैः कथं लक्ष्या लक्ष्या ये सूक्ष्मदृष्टिभिः ।। ३३ ।।
अनेनानेनसा कर्म यत्कृतं शृणुतेह तत् ।।
यज्ञदत्तात्मजेनाथ सावधानतया गणाः ।। ३४ ।।
पतंती लिंगशिरसि दीपच्छाया निवारिता ।।
स्वचैलांचलतोऽनेन दत्वा दीपदशां निशि ।। ३९ ।।
अपरोपि परो धर्मो जातस्तत्रास्य किंकरः ।।
शृण्वतः शिवनामानि प्रसंगादपि गृह्णताम्।ऽ।३६।।
भक्तेन विधिना पूजा क्रियमाणा निरीक्षिता ।।
उपोषितेन भूतायामनेनास्थितचेतसा।।३७।।
शिवलोकमयं ह्यद्य गंतास्माभिस्सहैव तु ।।

कंचित्कालं महाभोगान्करिष्यति शिवानुगः।।३८।।

कलिंगराजो भविता ततो निर्धूतकल्मषः।।

एष द्विजवरो नूनं शिवप्रियतरो यतः ।। ३९ ।।

अन्यत्किंचिन्न वक्तव्यं यूयं यात यथागतम् ।।

यमदूतास्स्वलोकं तु सुप्रसन्नेन चेतसा।।2.1.18.४०।।

।। ब्रह्मोवाच ।। ।।

इत्याकर्ण्य वचस्तेषां यमदूता मुनीश्वर ।।

यथागतं ययुस्सर्वे यमलोकं पराङ्मुखाः ।। ४१ ।।

सर्वं निवेदयामासुश्शमनाय गणा मुने ।।

तद्वृत्तमादितः प्रोक्तं शंभुदूतैश्च धर्मतः ।। ४२ ।।

।। धर्मराज उवाच ।। ।।

सर्वे शृणुत मद्वाक्यं सावधानतया गणाः ।।

तदेव प्रीत्या कुरुत मच्छासनपुरस्सरम् ।।४३।।

ये त्रिपुण्ड्रधरा लोके विभूत्या सितया गणाः।।

ते सर्वे परिहर्तव्या नानेतव्याः कदाचन ।।४४।।

उद्धूलनकरा ये हि विभूत्या सितया गणाः ।।

ते सर्वे परिहर्तव्या नानेतव्याः कदाचन।।४५।।

शिववेषतया लोके येन केनापि हेतुना।।

ते सर्वे परिहर्तव्या नानेतव्याः कदाचन ।।४६।।

ये रुद्राक्षधरा लोके जटाधारिण एव ये ।।

ते सवे परिहर्तव्या नानेतव्याः कदाचन ।।४७।।

उपजीवनहेतोश्च शिववेषधरा हि ये ।।

ते सर्वे परिहर्तव्या नानेतव्याः कदाचन।। ।।४८।।

दंभेनापि च्छलेनापि शिववेषधरा हि ये ।।

ते सर्वे परिहर्तव्या नानेतव्याः कदाचन।।४९।।

एवमाज्ञापयामास स यमो निज किंकरान् ।।

तथेति मत्वा ते सर्वे तूष्णीमासञ्छुचिस्मिताः ।।2.1.18.५०।।

।। ब्रह्मोवाच ।।

पार्षदैर्यमदूतेभ्यो मोचितस्त्विति स द्विजः ।।
शिवलोकं जगामाशु तैर्गणैश्शुचिमानसः ।।५१।।
तत्र भुक्त्वाखिलान्भोगान्संसेव्य च शिवाशिवौ ।।
अरिंदमस्य तनयः कलिंगाधिपतेरभूत्।।५२।।
दम इत्यभिधानोऽभूच्छिवसेवापरायणः।।
बालोऽपि शिशुभिः साकं शिवभक्तिं चकार सः।।५३।।
क्रमाद्राज्यमवापाथ पितर्युपरते युवा ।।
प्रीत्या प्रवर्तयामास शिवधर्मांश्च सर्वशः।।५४।।
नान्यं धर्मं स जानाति दुर्दमो भूपतिर्दमः।।
शिवालयेषु सर्वेषु दीपदानादृते द्विजः ।। ५५ ।।
ग्रामाधीशान्समाहूय सर्वान्स विषयस्थितान् ।।
इत्थमाज्ञापयामास दीपा देयाश्शिवालये ।।५६।।
अन्यथा सत्यमेवेदं स मे दण्ड्यो भविष्यति ।।
दीप दानाच्छिवस्तुष्टो भवतीति श्रुतीरितम् ।। ५७ ।।
यस्ययस्याभितो ग्रामं यावतश्च शिवालयाः।।
तत्रतत्र सदा दीपो द्योतनीयोऽविचारितम् ।।५८।।
ममाज्ञाभंगदोषेण शिरश्छेत्स्याम्यसंशयम्।।
इति तद्भयतो दीपा दीप्ताः प्रतिशिवालयम् ।। ५९ ।।
अनेनैव स धर्मेण यावज्जीवं दमो नृपः ।।
धर्मर्द्धिं महतीं प्राप्य कालधर्मवशं गतः ।।2.1.18.६०।।
स दीपवासनायोगाद्बहून्दीपान्प्रदीप्य वै ।।
अलकायाः पतिरभूद्रत्नदीपशिखाश्रयः ।। ६१ ।।
एवं फलति कालेन शिवेऽल्पमपि यत्कृतम् ।।
इति ज्ञात्वा शिवे कार्यं भजनं सुसुखार्थिभिः ।।६२।।
क्व स दीक्षितदायादः सर्वधर्मारतिः सदा ।।
शिवालये दैवयोगाद्यातश्चोरयितुं वसु ।।
स्वार्थदीपदशोद्योतलिंगमौलितमोहरः ।। ६३ ।।
कलिंगविषये राज्यं प्राप्तो धर्मरतिं सदा ।।

शिवालये समुद्दीप्य दीपान्प्राग्वासनोदयात् ।। ६४ ।।

कैषा दिक्पालपदवी मुनीश्वर विलोकय ।।

मनुष्यधर्मिणानेन सांप्रतं येह भुज्यते।।६५।।

इति प्रोक्तं गुणनिधेर्यज्ञदत्तात्मजस्य हि ।।

चरितं शिवसंतोषं शृण्वतां सर्वकामदम् ।।६६।।

सर्वदेवशिवेनासौ सखित्वं च यथेयिवान् ।।

तदप्येकमना भूत्वा शृणु तात ब्रवीमि ते ।। ६७ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखण्डे सृष्ट्यु पाख्याने कैलाशगमनोपाख्याने गुणनिधिसद्गतिवर्णनो नामाष्टादशोऽध्यायः ।। १८ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः १९



ब्रह्मोवाच ।।

पाद्मे कल्पे मम सुरा ब्रह्मणो मानसात्सुतात् ।।

पुलस्त्याद्विश्रवा जज्ञे तस्य वैश्रवणस्सुतः ।।१।।

तेनेयमलका भुक्ता पुरी विश्वकृता कृता ।।

आराध्य त्र्यंबकं देवमत्युग्रतपसा पुरा ।। २ ।।

व्यतीते तत्र कल्पे वै प्रवृत्ते मेघवाहने ।।

याज्ञदत्तिरसौ श्रीदस्तपस्तेपे सुदुस्सहम् ।। ३ ।।

भक्ति प्रभावं विज्ञाय शंभोस्तद्दीपमात्रतः ।।

पुरा पुरारेस्संप्राप्य काशिकां चित्प्रकाशिकाम् ।। ४ ।।

शिवैकादशमुद्बोध्य चित्तरत्नप्रदीपकैः।।

अनन्यभक्तिस्नेहाढ्यस्तन्मयो ध्याननिश्चलः।।५।।

शिवैक्यं सुमहापात्रं तपोग्निपरिबृंहितम्।।

कामक्रोधमहाविघ्नपतंगाघात वर्जितम् ।। ६ ।।

प्राणसंरोधनिर्वातं निर्मलं निर्मलेक्षणात् ।।

संस्थाप्य शांभवं लिंगं सद्भावकुसुमार्चितम् ।। ७ ।।

तावत्ताप स तपस्त्वगस्थिपरिशेषितम् ।।

यावद्बभूव तद्वर्णं वर्षाणामयुतं शतम् ।।८।।

ततस्सह विशालाक्ष्या देवो विश्वेश्वररस्वयम्।।

अलकापतिमालोक्य प्रसन्नेनांतरात्मना ।।९।।

लिंगे मनस्समाधाय स्थितं स्थाणुस्वरूपिणम्।।

उवाच वरदोऽस्मीति तदाचक्ष्वालकापते ।। ।। 2.1.19.१० ।।

उन्मील्य नयने यावत्स पश्यति तपोधनः ।।

तावदुद्यत्सहस्रांशु सहस्राधिकतेजसम् ।। ११ ।।

पुरो ददर्श श्रीकंठं चन्द्रचूडमुमाधवम् ।।

तत्तेजः परिभूताक्षितेजाः संमील्य लोचने ।।१२।।

उवाच देवदेवेशं मनोरथपदातिगम् ।।

निजांघ्रिदर्शने नाथ दृक्सामर्थ्यं प्रयच्छ मे ।। १३ ।।

अयमेव वरो नाथ यत्त्वं साक्षान्निरीक्ष्यसे ।।

किमन्येन वरेणेश नमस्ते शशिशेखर ।। १४ ।।

इति तद्वचनं श्रुत्वा देवदेव उमापतिः।।

ददौ दर्शनसामर्थ्यं स्पृष्ट्वा पाणितलेन तम्।।१५।।

प्रसार्य नयने पूर्वमुमामेव व्यलोकयत्।।

तोऽसौ याज्ञदत्तिस्तु तत्सामर्थ्यमवाप्य च ।। १६ ।।

शंभोस्समीपे का योषिदेषा सर्वांगसुन्दरी ।।

अनया किं तपस्तप्तं ममापि तपसोऽधिकम् ।। १७ ।।

अहो रूपमहो प्रेम सौभाग्यं श्रीरहो भृशम् ।।

इत्यवादीदसौ पुत्रो मुहुर्मुहुरतीव हि ।। १८ ।।

क्रूर दृग्वीक्षते यावत्पुनःपुनरिदं वदन् ।।

तावत्पुस्फोट तन्नेत्रं वारां वामाविलोकनात् ।।१९।।

अथ देव्यब्रवीद्देव किमसौ दुष्टतापसः ।।

असकृद्वीक्ष्य मां वक्ति कुरु त्वं मे तपःप्रभाम् ।। 2.1.19.२० ।।

असकृद्दक्षिणेनाक्ष्णा पुनर्मामेव पश्यति ।।

असूयमानो मे रूपप्रेम सौभाग्यसंपद ।। २१ ।।

इति देवीगिरं श्रुत्वा प्रहस्य प्राह तां प्रभुः ।।

उमे त्वदीयः पुत्रोऽयं न च क्रूरेण चक्षुषा ।। २२ ।।

संपश्यति तपोलक्ष्मीं तव किं त्वधिवर्णयेत् ।।

इति देवीं समाभाष्य तमीशः पुनरब्रवीत् ।।२३।।

वरान्ददामि ते वत्स तपसानेन तोषितः ।।

निधीनामथ नाथस्त्वं गुह्यकानां भवेश्वरः ।।२४।।

यक्षाणां किन्नराणां च राज्ञां राज च सुव्रतः ।।

पतिः पुण्यजनानां च सर्वेषां धनदो भव ।। २५ ।।

मया सख्यं च ते नित्यं वत्स्यामि च तवांतिके ।।

अलकां निकषा मित्र तव प्रीतिविवृद्धये।।२६।।

आगच्छ पादयोरस्याः पत ते जननी त्वियम् ।।

याज्ञदत्ते महाभक्त सुप्रसन्नेन चेतसा ।। २७ ।।

ब्रह्मोवाच ।।

इति दत्त्वा वरान्देवः पुनराह शिवां शिवः ।।

प्रसादं कुरु देवेशि तपस्विन्यंगजेऽत्र वै ।। २८ ।।

इत्याकर्ण्य वचश्शंभोः पार्वती जगदम्बिका ।।

अब्रवीद्याज्ञदत्तिं तं सुप्रसन्नेन चेतसा ।। २९ ।।

देव्युवाच ।।

वत्स ते निर्मला भक्तिर्भवे भवतु सर्वदा ।।

भवैकपिंगो नेत्रेण वामेन स्फुटितेन ह ।। 2.1.19.३० ।।

देवेन दत्ता ये तुभ्यं वरास्संतु तथैव ते ।।

कुबेरो भव नाम्ना त्वं मम रूपेर्ष्यया सुत ।। ३१ ।।

इति दत्त्वा वरान्देवो देव्या सह महेश्वरः ।।

धनदायाविवेशाथ धाम वैश्वेश्वराभिधम् ।। ३२ ।।

इत्थं सखित्वं श्रीशंभोः प्रापैष धनदः पुरम् ।।

अलकान्निकषा चासीत्कैलासश्शंकरालयः ।। ३३ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखण्डे कैलासगमनोपाख्याने कुबेरस्य शिवमित्रत्ववर्णनो नामैकोनविंशोऽध्यायः ।। १९ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः १ (सृष्टिखण्डः)/अध्यायः २०



ब्रह्मोवाच ।।

नारद त्वं शृणु मुने शिवागमनसत्तमम् ।।

कैलासे पर्वतश्रेष्ठे कुबेरस्य तपोबलात् ।। १ ।।

निधिपत्व वरं दत्त्वा गत्वा स्वस्थानमुत्तमम् ।।

विचिन्त्य हृदि विश्वेशः कुबेरवरदायकः ।। २ ।।

विध्यंगजस्स्वरूपो मे पूर्णः प्रलयकार्यकृत् ।।

तद्रूपेण गमिष्यामि कैलासं गुह्यकालयम् ।। ३ ।।

रुद्रो हृदयजो मे हि पूर्णांशो ब्रह्मनिष्फलः ।।

हरि ब्रह्मादिभिस्सेव्यो मदभिन्नो निरंजन ।। ४ ।।

तत्स्वरूपेण तत्रैव सुहृद्भूवा विलास्यहम् ।।

कुबेरस्य च वत्स्यामि करिष्यामि तपो महत् ।। ५ ।।

इति संचिंत्य रुद्रोऽसौ शिवेच्छां गंतुमुत्सुकः ।।

ननाद तत्र ढक्कां स्वां सुगतिं नादरूपिणीम् ।। ६ ।।

त्रैलोक्यामानशे तस्या ध्वनिरुत्साहकारकः ।।

आह्वानगतिसंयुक्तो विचित्रः सांद्रशब्दकः ।।७।।

तच्छ्रुत्वा विष्णुब्रह्माद्याः सुराश्च मुनयस्तथा।।

आगमा निगमामूर्तास्सिद्धा जग्मुश्च तत्र वै ।।८।।

सुरासुराद्यास्सकलास्तत्र जग्मुश्च सोत्सवाः ।।

सर्वेऽपि प्रमथा जग्मुर्यत्र कुत्रापि संस्थिताः ।। ९ ।।

गणपाश्च महाभागास्सर्वलोक नमस्कृताः ।।

तेषां संख्यामहं वच्मि सावधानतया शृणु ।। 2.1.20.१० ।।

अभ्ययाच्छंखकर्णश्च गणकोट्या गणेश्वरः ।।

दशभिः केकराक्षश्च विकृतोऽष्टाभिरेव च ।।११।।

चतुःषष्ट्या विशाखश्च नवभिः पारियात्रकः ।।

षड्भिः सर्वान्तकः श्रीमान्दुन्दुभोऽष्टाभिरेव च ।। १२ ।।

जालंको हि द्वादशभिः कोटिभिर्गणपुंगवः ।।

सप्तभिस्समदः श्रीमाँस्तथैव विकृताननः ।। १३ ।।

पंचभिश्च कपाली हि षड्भिः सन्दारकश्शुभः ।।

कोटिकोटिभिरेवेह कण्डुकः कुण्डकस्तथा ।।१४।।

विष्टंभोऽष्टाभिरगमदष्टभिश्चन्द्रतापनः ।। १५ ।।

महाकेशस्सहस्रेण कोटीनां गणपो वृतः ।। १६ ।।

कुण्डी द्वादशभिर्वाहस्तथा पर्वतकश्शुभः ।।

कालश्च कालकश्चैव महाकालः शतेन वै ।। १७ ।।

अग्निकश्शतकोट्या वै कोट्याभिमुख एव च ।।

आदित्यमूर्द्धा कोट्या च तथा चैव धनावहः ।। १८ ।।

सन्नाहश्च शतेनैव कुमुदः कोटिभिस्तथा ।।

अमोघः कोकिलश्चैव कोटिकोट्या सुमंत्रकः ।। १९ ।।

काकपादोऽपरः षष्ट्या षष्ट्या संतानकः प्रभुः ।।

महाबलश्च नवभिर्मधु पिंगश्च पिंगलः ।।2.1.20.२०।।

नीलो नवत्या देवेशं पूर्णभद्रस्तथैव च ।।

कोटीनां चैव सप्तानां चतुर्वक्त्रो महाबलः ।। २१ ।।

कोटिकोटिसहस्राणां शतैर्विंशतिभिर्वृतः ।।

तत्राजगाम सर्वेशः कैलासगमनाय वै ।।। २२ ।।

काष्ठागूढश्चतुष्षष्ट्या सुकेशो वृषभस्तथा ।।

कोटिभिस्सप्तभिश्चैत्रो नकुलीशस्त्वयं प्रभुः ।। २३ ।।

लोकांतकश्च दीप्तात्मा तथा दैत्यांतकः प्रभुः।।

देवो भृंगी रिटिः श्रीमान्देवदेवप्रियस्तथा ।। २४ ।।

अशनिर्भानुकश्चैव चतुष्षष्ट्या सनातनः ।।

नंदीश्वरो गणाधीशः शतकोट्या महाबलः ।। २५ ।।

एते चान्ये च गणपा असंख्याता महाबलः ।।

सर्वे सहस्रहस्ताश्च जटामुकुटधारिणः ।। २६ ।।

सर्वे चंद्रावतंसाश्च नीलकण्ठास्त्रिलोचनाः ।।

हारकुण्डलकेयूरमुकुटाद्यैरलंकृताः ।।२७।।

ब्रह्मेन्द्रविष्णुसंकाशा अणिमादि गणैर्वृताः ।।

सूर्यकोटिप्रतीकाशास्तत्राजग्मुर्गणेश्वराः ।।२८।।

एते गणाधिपाश्चान्ये महान्मानोऽमलप्रभाः ।।

जग्मुस्तत्र महाप्रीत्या शिवदर्शनलालसाः ।।२९।।

गत्वा तत्र शिवं दृष्ट्वा नत्वा चक्रुः परां नुतिम् ।।

सर्वे साञ्जलयो विष्णुप्रमुखा नतमस्तकाः ।।2.1.20.३०।।

इति विष्ण्वादिभिस्सार्द्धं महेशः परमेश्वरः ।।

कैलासमगमत्प्रीत्या कुबेरस्य महात्मनः ।। ३१ ।।

कुबेरोप्यागतं शंभुं पूजयामास सादरम्।।

भक्त्या नानोपहारैश्च परिवारसमन्वितः ।।३२।।

ततो विष्ण्वादिकान्देवान्गणांश्चान्यानपि ध्रुवम् ।।

शिवानुगान्समानर्च शिवतोषणहेतवे ।। ३३ ।।

अथ शम्भुस्तमालिंग्य कुबेरं प्रीतमानसः ।।

मूर्ध्नि चाघ्राय संतस्थावलकां निकषाखिलैः ।। ३४ ।।

शशास विश्वकर्माणं निर्माणार्थं गिरौ प्रभुः ।।

नानाभक्तैर्निवासाय स्वपरेषां यथोचितम् ।। ३५ ।।

विश्वकर्मा ततो गत्वा तत्र नानाविधां मुने ।।

रचनां रचयामास द्रुतं शम्भोरनुज्ञया ।। ३६ ।।

अथ शम्भुः प्रमुदितो हरिप्रार्थनया तदा ।। ३७ ।।

कुबेरानुग्रहं कृत्वा ययौ कैलासपर्वतम् ।।

सुमुहूर्ते प्रविश्यासौ स्वस्थानं परमेश्वरः ।। ३८ ।।

अकरोदखिलान्प्रीत्या सनाथान्भक्तवत्सलः ।।

अथ सर्वे प्रमुदिता विष्णुप्रभृतयस्सुराः ।।

मुनयश्चापरे सिद्धा अभ्यषिंचन्मुदा शिवम् ।। ३९ ।।

समानर्चुः क्रमात्सर्वे नानोपायनपाणयः।।

नीराजनं समाकार्षुर्महोत्सवपुरस्सरम् ।। 2.1.20.४० ।।

तदासीत्सुमनोवृष्टिर्मंगलायतना मुने ।।

सुप्रीता ननृतुस्तत्राप्सरसो गानतत्पराः ।। ४१ ।।
जयशब्दो नमश्शब्दस्तत्रासीत्सर्वसंस्कृतः ।।
तदोत्साहो महानासीत्सर्वेषां सुखवर्धनः ।। ४२ ।।
स्थित्वा सिंहासने शंभुर्विराजाधिकं तदा ।।
सर्वैस्संसेवितोऽभीक्ष्णं विष्ण्वाद्यैश्च यथोचितम् ।। ४३ ।।
अथ सर्वे सुराद्याश्च तुष्टुवुस्तं पृथक्पृथक् ।।
अर्थ्याभिर्वाग्भिरिष्टाभिश्शकरं लोकशंकरम् ।। ४४ ।।
प्रसन्नात्मा स्तुतिं श्रुत्वा तेषां कामान्ददौ शिवः ।।
मनोभिलषितान्प्रीत्या वरान्सर्वेश्वरः प्रभुः।।४५।।
शिवाज्ञयाथ ते सर्वे स्वंस्वं धाम ययुर्मुने।।
प्राप्तकामाः प्रमुदिता अहं च विष्णुना सह।।४६।।
उपवेश्यासने विष्णुं माञ्च शम्भुरुवाच ह ।।
बहु सम्बोध्य सुप्रीत्यानुगृह्य परमेश्वरः ।।४७।।
शिव उवाच ।।
हे हरे हे विधे तातौ युवां प्रियतरौ मम ।।
सुरोत्तमौ त्रिजगतोऽवनसर्गकरौ सदा।।४८।।
गच्छतं निर्भयन्नित्यं स्वस्थानश्च मदाज्ञया ।।
सुखप्रदाताहं वै वाम्विशेषात्प्रेक्षकस्सदा ।।४९।।
इत्याकर्ण्य वचश्शम्भोस्सुप्रणम्य तदाज्ञया ।।
अहं हरिश्च स्वं धामागमाव प्रीतमानसौ ।।2.1.20.५०।।
तदानीमेव सुप्रीतश्शंकरो निधिपम्मुदा ।।
उपवेश्य गृहीत्वा तं कर आह शुभं वचः ।। ५१ ।।
।। शिव उवाच ।।
तव प्रेम्णा वशीभूतो मित्रतागमनं सखे ।।
स्वस्थानङ्गच्छ विभयस्सहायोहं सदानघ ।। ५२ ।।
इत्याकर्ण्य वचश्शम्भोः कुबेरः प्रीतमानसः ।।
तदाज्ञया स्वकं धाम जगाम प्रमुदान्वितः ।।५३।।
स उवाच गिरौ शम्भुः कैलासे पर्वतोत्तमे।।

सगणो योगनिरतस्स्वच्छन्दो ध्यान तत्परः ।।५४।।

क्वचिद्दध्यौ स्वमात्मानं क्वचिद्योगरतोऽभवत् ।।

इतिहासगणान्प्रीत्यावादीत्स्वच्छन्दमानसः ।।५५।।

क्वचित्कैलास कुधरसुस्थानेषु महेश्वरः ।।

विजहार गणैः प्रीत्या विविधेषु विहारवित् ।। ५६ ।।

इत्थं रुद्रस्वरूपोऽसौ शंकरः परमेश्वरः।।

अकार्षीत्स्वगिरौ लीला नाना योगिवरोऽपि यः ।।५७।।

नीत्वा कालं कियन्तं सोऽपत्नीकः परमेश्वरः ।।

पश्चादवाप स्वाम्पत्नीन्दक्षपत्नीसमुद्भवाम् ।।५८।।

विजहार तया सत्या दक्षपुत्र्या महेश्वरः।।

सुखी बभूव देवर्षे लोकाचारपरायणः ।।५९।।

इत्थं रुद्रावतारस्ते वर्णितोऽयं मुनीश्वर ।।

कैलासागमनञ्चास्य सखित्वान्निधिपस्य हि ।।2.1.20.६०।।

तदन्तर्गतलीलापि वर्णिता ज्ञानवर्धिनी ।।

इहामुत्र च या नित्यं सर्वकामफलप्रदा ।। ६१ ।।

इमां कथाम्पठेद्यस्तु शृणुयाद्वा समाहितः ।।

इह भुक्तिं समासाद्य लभेन्मुक्तिम्परत्र सः ।।६२।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखंडे कैलासोपाख्याने शिवस्य कैलासगमनं नाम विंशोऽध्यायः ।।२०।।

अथ सतीखंडो द्वितीयः प्रारभ्यते ।।

नारद उवाच ।।

विधे सर्वं विजानासि कृपया शंकरस्य च ।।

त्वयाद्भुता हि कथिताः कथा मे शिवयोश्शुभाः ।। १।।

त्वन्मुखांभोजसंवृत्तां श्रुत्वा शिवकथां पराम् ।।

अतृप्तो हि पुनस्तां वै श्रोतुमिच्छाम्यहं प्रभो।।२।।

पूर्णांशश्शंकरस्यैव यो रुद्रो वर्णितः पुरा ।।

विधे त्वया महेशानः कैलासनिलयो वशी।।३।।

स योगी सर्वविष्ण्वादिसुरसे व्यस्सतां गतिः ।।

निर्द्वंद्वः क्रीडति सदा निर्विकारी महाप्रभुः ।। ४ ।।

सोऽभूत्पुनर्गृहस्थश्च विवाह्य परमां स्त्रियम् ।।

हरिप्रार्थनया प्रीत्या मंगलां स्वतपस्विनीम् ।।५।।

प्रथमं दक्षपुत्री सा पश्चात्सा पर्वतात्मजा ।।

कथमेकशरीरेण द्वयोरप्यात्मजा मता।।६।।

कथं सती पार्वती सा पुनश्शिवमुपागता ।।

एतत्सर्वं तथान्यच्च ब्रह्मन् गदितुमर्हसि ।।७।।

सूत उवाच ।।

इति तस्य वचः श्रुत्वा सुरर्षेः शंकरात्मनः ।।

प्रसन्नमानसो भूत्वा ब्रह्मा वचनमब्रवीत् ।। ८ ।।

ब्रह्मोवाच ।।

शृणु तात मुनिश्रेष्ठ कथयामि कथां शुभाम् ।।

यां श्रुत्वा सफलं जन्म भविष्यति न संशयः।।९।।

पुराहं स्वसुतां दृष्ट्वा संध्याह्वां तनयैस्सह ।।

अभवं विकृतस्तात कामबाणप्रपीडितः ।। 2.2.1.१० ।।

धर्मः स्मृतस्तदा रुद्रो महायोगी परः प्रभुः।।

धिक्कृत्य मां सुतैस्तात स्वस्थानं गतवानयम् ।। ११ ।।

यन्मायामोहितश्चाहं वेदवक्ता च मूढधीः ।।

तेनाकार्षं सहाकार्य परमेशेन शंभुना ।। १२ ।।
तदीर्षयाहमाकार्षं बहूपायान्सुतैः सह ।।
कर्तुं तन्मोहनं मूढः शिवमाया विमोहितः ।। १३ ।।
अभवंस्तेऽथ वै सर्वे तस्मिन्त्र् शंभो परप्रभो ।।
उपाया निष्फलास्तेषां मम चापि मुनीश्वर ।। १४ ।।
तदाऽस्मरं रमेशानं व्यथोपायस्तुतैस्सह ।।
अबोधयत्स आगत्य शिवभक्तिरतस्सुधीः ।। १५ ।।
प्रबोधितो रमेशेन शिवतत्त्वप्रदर्शिना ।।
तदीर्षामत्यजं सोहं तं हठं न विमोहितः ।। १६ ।।
शक्तिं संसेव्य तत्प्रीत्योत्पादयामास तां तदा ।।
दक्षादशिक्न्यां वीरिण्यां स्वपुत्राद्धरमोहने ।। १७ ।।
सोमा भूत्वा दक्षसुता तपः कृत्वा तु दुस्सहम् ।।
रुद्रपत्न्यभवद्भक्त्या स्वभक्तहितकारिणी ।। १८ ।।
सोमो रुद्रो गृही भूत्वाऽकार्षील्लीलां परां प्रभुः ।।
मोहयित्वाथ मां तत्र स्वविवाहेऽविकारधीः ।। ।। १९ ।।
विवाहय तां स आगत्य स्वगिरौ सूतिकृत्तया ।।
रेमे बहुविमोहो हि स्वतंत्रस्स्वात्तविग्रहः ।। 2.2.1.२० ।।
तया विहरतस्तस्य व्यातीयाय महान् मुने ।।
कालस्सुखकरश्शभोर्निर्विकारस्य सद्रतेः ।। २१ ।।
ततो रुद्रस्य दक्षेण स्पर्द्धा जाता निजेच्छया ।।
महामूढस्य तन्मायामोहितस्य सुगर्विणः ।। २२ ।।
तत्प्रभावाद्धरं दक्षो महागर्वी विमूढधीः ।।
महाशांतं निर्विकारं निनिxद बहुमोहितः ।। २३ ।।
ततो दक्षः स्वयं यज्ञं कृतवान्गर्वितोऽहरम् ।।
सर्वानाहूय देवादीन् विष्णुं मां चाखिलाधिपः ।।२४।।
नाजुहाव तथाभूतो रुद्रं रोषसमाकुलः ।।
तथा तत्र सतीं नाम्ना स्वपुत्रीं विधिमोहितः ।।२५।।
यदा नाकारिता पित्रा मायामोहित चेतसा।।

लीलां चकार सुज्ञाना महासाध्वी शिवा तदा।।२६।।
अथागता सती तत्र शिवाज्ञामधिगम्य सा ।।
अनाहूतापि दक्षेण गर्विणा स्वपितुर्गृहम् ।। २७ ।।
विलोक्य रुद्रभागं नो प्राप्यावज्ञां च ताततः ।।
विनिंद्य तत्र तान्सर्वान्देहत्यागमथाकरोत् ।। २८ ।।
तच्छुत्वा देव देवेशः क्रोधं कृत्वा तु दुस्सहम् ।।
जटामुत्कृत्य महतीं वीरभद्रमजीजनत् ।।२९।।
सगणं तं समुत्पाद्य किं कुर्य्या मिति वादिनम् ।।
सर्वापमानपूर्वं हि यज्ञध्वंसं दिदेश ह ।।2.2.1.३०।।।
तदाज्ञां प्राप्य स गणाधीशो बहुबलान्वितः ।।
गतोऽरं तत्र सहसा महाबलपराक्रमः ।।३१।।
महोपद्रवमाचेरुर्गणास्तत्र तदाज्ञया।।
सर्वान्स दंडयामास न कश्चिदवशेषितः।३२।।
विष्णुं संजित्य यत्नेन सामरं गणसत्तमः ।।
चक्रे दक्षशिरश्छेदं तच्छिरोग्नौ जुहाव च ।। ३३ ।।
यज्ञध्वंसं चकाराशु महोपद्रवमाचरन् ।।
ततो जगाम स्वगिरिं प्रणनाम प्रभुं शिवम् ।। ३४ ।।
यज्ञध्वंसोऽभवच्चेत्थं देवलोके हि पश्यति ।।
रुद्रस्यानुचरैस्तत्र वीरभद्रादिभिः कृतः।।३५।।
मुने नीतिरियं ज्ञेया श्रुतिस्मृतिषु संमता ।।
रुद्रे रुष्टे कथं लोके सुखं भवति सुप्रभो ।।३६।।
ततो रुद्रः प्रसन्नोभूत्स्तुतिमाकर्ण्य तां पराम् ।।
विज्ञप्तिं सफलां चक्रे सर्वेषां दीनवत्सलः ।।३७।।
पूर्ववच्च कृतं तेन कृपालुत्वं महात्मना।।
शंकरेण महेशेन नानालीलावि हारिणा ।।३८।।
जीवितस्तेन दक्षो हि तत्र सर्वे हि सत्कृताः ।।
पुनस्स कारितो यज्ञः शंकरेण कृपालुना ।।३९।।
रुद्रश्च पूजितस्तत्र सर्वैर्देवैर्विशेषतः ।।

यज्ञे विश्वादिभिर्भक्त्या सुप्रसन्नात्मभिर्वने ।।2.2.1.४०।। ।।

सतीदेहसमुत्पन्ना ज्वाला लोकसुखावहा ।।

पतिता पर्वते तत्र पूजिता सुखदायिनी ।। ४१ ।।

ज्वालामुखीति विख्याता सर्वकामफलप्रदा ।।

बभूव परमा देवी दर्शनात्पापहारिणी ।। ४२ ।।

इदानीं पूज्यते लोके सर्वकामफलाप्तये ।।

संविधाभिरनेकाभिर्महोत्सवपरस्परम् ।। ४३ ।।

ततश्च सा सती देवी हिमालयसुता ऽभवत् ।।

तस्याश्च पार्वतीनाम प्रसिद्धमभवत्तदा ।। ४४ ।।

सा पुनश्च समाराध्य तपसा कठिनेन वै ।।

तमेव परमेशानं भर्त्तारं समुपाश्रिता ।। ४५ ।।

एतत्सर्वं समाख्यातं यत्पृष्टोहं मुनीश्वर ।।

यच्छुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ।। ४६ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीसंक्षेपचरित्रवर्णनं नाम प्रथमोऽध्यायः ।। १ ।।

सूत उवाच ।।
इत्याकर्ण्य वचस्तस्य नेमिषारण्यवासिनः ।।
पप्रच्छ च मुनिश्रेष्ठः कथां पापप्रणाशिनीम् ।। १ ।।
नारद उवाच ।।
विधेविधे महा भाग कथां शंभोश्शुभावहाम् ।।
शृण्वन् भवन्मुखांभोजान्न तृप्तोस्मि महाप्रभो ।।२।।
अतः कथय तत्सर्वं शिवस्य चरितं शुभम् ।।
सतीकीर्त्यन्वितं दिव्यं श्रोतुमिच्छामि विश्वकृत् ।। ३ ।।
सती हि कथमुत्पन्ना दक्षदारेषु शोभना ।।
कथं हरो मनश्चक्रे दाराहरणकर्मणि ।। ४ ।।
कथं वा दक्षकोपेन त्यक्तदेहा सती पुरा ।।
हिमवत्तनया जाता भूयो वाकाशमागता ।। ५ ।।
पार्वत्याश्च तपोऽत्युग्रं विवाहश्च कथं त्वभूत् ।।
कथमर्द्धशरीरस्था बभूव स्मरनाशिनः ।। ६ ।।
एतत्सर्वं समाचक्ष्व विस्तरेण महामते ।।
नान्योस्ति संशयच्छेत्ता त्वत्समो न भविष्यति ।। ७ ।।
ब्रह्मोवाच ।।
शृणु त्वं च मुने सर्वं सतीशिवयशश्शुभम् ।।
पावनं परमं दिव्यं गुह्याद्गुह्यतमं परम् ।। ८ ।।
एतच्छंभुः पुरोवाच भक्तवर्याय विष्णवे ।।
पृष्टस्तेन महाभक्त्या परोपकृतये मुने ।। ।। ९ ।।
ततस्सोपि मया पृष्टो विष्णुश्शैववरस्सुधीः ।।
प्रीत्या मह्यं समाचख्यौ विस्तरान्मुनिसत्तम ।। 2.2.2.१० ।।
अहं तत्कथयिष्यामि कथामेतां पुरातनीम् ।।
शिवाशिवयशोयुक्तां सर्वकामफलप्रदाम् ।। ११ ।।
पुरा यदा शिवो देवो निर्गुणो निर्विकल्पकः ।।
अरूपश्शक्तिरहितश्चिन्मात्रस्सदसत्परः ।। १२ ।।
अभवत्सगुणस्सोपि द्विरूपश्शक्तिमान्प्रभुः ।।
सोमो दिव्याकृतिर्विप्र निर्वि कारी परात्परः ।। १३ ।।
तस्य वामांगजो विष्णुर्ब्रह्माहं दक्षिणांगजः ।।
रुद्रो हृदयतो जातोऽभवच्च मुनिसत्तम ।। १४ ।।
सृष्टिकर्ताभवं ब्रह्मा विष्णुः पालनकारकः ।।
लयकर्ता स्वयं रुद्रस्त्रिधाभूतस्सदाशिवः ।।१५।।

तमेवाहं समाराध्य ब्रह्मा लोकपितामहः।।
प्रजा ससर्ज सर्वास्तास्सुरासुरनरादिकाः ।। १६ ।।
सृष्ट्वा प्रजापतीन् दक्षप्रमुखान्सुरसत्तमान् ।।
अमन्यं सुप्रसन्नोहं निजं सर्वमहोन्नतम् ।।१७।।
मरीचिमत्रिं पुलहं पुलस्त्यांगिरसौ क्रतुम् ।।
वसिष्ठं नारदं दक्षं भृगुं चेति महाप्रभून् ।।१८।।
ब्रह्माहं मानसान्पुत्रानसर्जं च यदा मुने ।।
तदा मन्मनसो जाता चारुरूपा वरांगना ।।१९।।
नाम्ना संध्या दिवक्षांता सायं संध्या जपंतिका ।।
अतीव सुन्दरी सुभ्रूर्मुनिचेतोविमोहिनी।।2.2.2.२०।।
न तादृशी देवलोके न मर्त्ये न रसातले ।।
कालत्रयेपि वै नारी सम्पूर्णगुणशालिनी।।२।।
दृष्ट्वाहं तां समुत्थाय चिन्तयन्हृदि हृद्गतम्।।
दक्षादयश्च स्रष्टारो मरीच्याद्याश्च मत्सुताः ।।२२।।
एवं चिंतयतो मे हि ब्रह्मणो मुनिसत्तम ।।
मानसः पुरुषो मंजुराविर्भूतो महाद्भुतः ।। २३ ।।
कांचनीकृतजाताभः पीनोरस्कस्सुनासिकः ।।
सुवृत्तोरुकटीजंघो नीलवेल्लितकेसरः ।।२४।।
लग्नभ्रूयुगलो लोलः पूर्णचन्द्रनिभाननः ।।
कपाटायतसद्वक्षो रोमराजीवराजितः ।।२५।।
अभ्रमातंगकाकारः पीनो नीलसुवासकः ।।
आरक्तपाणिनयनमुखपादकरोद्भवः।।२६।।
क्षीणमध्यश्चारुदन्तः प्रमत्तगजगंधनः।।
प्रफुल्लपद्मपत्राक्षः केसरघ्राणतर्पणः ।।२७।।
कंबुग्रीवो मीनकेतुः प्रांशुर्मकरवाहनः ।।
पंचपुष्पायुधो वेगी पुष्पकोदंडमंडितः ।।२८।।
कांतः कटाक्षपातेन भ्रामयन्नयनद्वयम् ।।
सुगंधिमारुतो तात शृंगाररससेवितः ।। २९ ।।
तं वीक्ष्य पुरुषं सर्वे दक्षाद्या मत्सुताश्च ते ।।
औत्सुक्यं परमं जग्मुर्विस्मयाविष्टमानसाः ।। 2.2.2.३० ।।
अभवद्विकृतं तेषां मत्सुतानां मनो द्रुतम् ।।
धैर्यं नैवालभत्तात कामाकुलितचेतसाम् ।।३१।।
मां सोपि वेधसं वीक्ष्य स्रष्टारं जगतां पतिम् ।।

प्रणम्य पुरुषः प्राह विनयानतकंधरः ।। ३२ ।।
पुरुष उवाच ।।
किं करिष्याम्यहं कर्म ब्रह्मंस्तत्र नियोजय।।
मान्योद्य पुरुषो यस्मादुचितः शोभितो विधे ।।३३।।
अभिमानं च योग्यं च स्थानं पत्नी च या मम ।।
तन्मे वद त्रिलोकेश त्वं स्रष्टा जगतां पतिः ।।३४।।
ब्रह्मोवाच ।।
एवं तस्य वचः श्रुत्वा पुरुषस्य महात्मनः ।।
क्षणं न किंचित्प्रावोचत्स स्रष्टा चातिविस्मितः ।।३५।।
अतो मनस्सुसंयम्य सम्यगुत्सृज्य विस्मयम् ।।
अवोचत्पुरुषं ब्रह्मा तत्कामं च समावहन् ।।३६।।
।। ब्रह्मोवाच ।। ।।
अनेन त्वं स्वरूपेण पुष्पबाणैश्च पंचभिः ।।
मोहयन् पुरुषान् स्त्रीश्च कुरु सृष्टिं सनातनीम् ।। ३७ ।।
अस्मिञ्जीवाश्च देवाद्यास्त्रैलोक्ये सचराचरे ।।
एते सर्वे भविष्यन्ति न क्षमास्त्यवलंबने ।। ३८ ।।
अहं वा वासुदेवो वा स्थाणुर्वा पुरुषोत्तमः ।।
भविष्यामस्तव वशे किमन्ये प्राणधारकाः ।।३९।।
प्रच्छन्नरूपो जंतूनां प्रविशन्हृदयं सदा ।।
सुखहेतुः स्वयं भूत्वा सृष्टिं कुरु सनातनीम् ।।2.2.2.४०।।
त्वत्पुष्पबाणस्य सदा सुखलक्ष्यं मनोद्भुतम् ।।
सर्वेषां प्राणिनां नित्यं सदा मदकरो भवान् ।।४१।।
इति ते कर्म कथितं सृष्टिप्रावर्तकं पुनः ।।
नामान्येते वदिष्यंति सुता मे तव तत्त्वतः ।। ४२ ।।
ब्रह्मोवाच ।।
इत्युक्त्वाहं सुरश्रेष्ठ स्वसुतानां मुखानि च।।
आलोक्य स्वासने पाद्मे प्रोपविष्टोऽभवं क्षणम् ।।४३।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे कामप्रादुर्भावो नाम द्वितीयोऽध्यायः ।।२।।

ब्रह्मोवाच ।।
ततस्ते मुनयः सर्वे तदाभिप्रायवेदिनः ।।
चक्रुस्तदुचितं नाम मरीचिप्रमुखास्सुताः ।। १ ।।
मुखावलोकनादेव ज्ञात्वा वृत्तांतमन्यतः ।।
दक्षादयश्च स्रष्टारः स्थानं पत्नीं च ते ददुः ।।२।।
ततो निश्चित्य नामानि मरीचिप्रमुखा द्विजाः ।।
ऊचुस्संगतमेतस्मै पुरुषाय ममात्मजाः ।। ३ ।।
ऋषय ऊचुः ।।
यस्मात्प्रमथसे तत्त्वं जातोस्माकं यथा विधेः ।।
तस्मान्मन्मथनामा त्वं लोके ख्यातो भविष्यसि ।।४।।
जगत्सु कामरूपस्त्वं त्वत्समो न हि विद्यते।।
अतस्त्वं कामनामापि ख्यातो भव मनोभव ।।५।।
मदनान्मदनाख्यस्त्वं जातो दर्पात्सदर्पकः ।।
तस्मात्कंदर्पनामापि लोके ख्यातो भविष्यसि ।।६।।
त्वत्समं सर्वदेवानां यद्वीर्यं न भविष्यति ।।
ततः स्थानानि सर्वाणि सर्वव्यापी भवांस्ततः ।।७।।
दक्षोयं भवते पत्नी स्वयं दास्यति कामिनीम् ।।
आद्यः प्रजापतिर्यो हि यथेष्टं पुरुषोत्तमः ।।८।।
एषा च कन्यका चारुरूपा ब्रह्ममनोभवा ।।
संध्या नाम्नेति विख्याता सर्वलोके भविष्यति ।। ९ ।।
ब्रह्मणो ध्यायतो यस्मात्सम्यग्जाता वरांगना ।।
अतस्संध्येति विख्याता क्रांताभा तुल्यमल्लिका ।। 2.2.3.१० ।।
।। ब्रह्मोवाच ।।
कौसुमानि तथास्त्राणि पंचादाय मनोभवः ।।
प्रच्छन्नरूपी तत्रैव चिंतयामास निश्चयम् ।। ११ ।।
हर्षणं रोचनाख्यं च मोहनं शोषणं तथा ।।
मारणं चेति प्रोक्तानि मुनेर्मोहकराण्यपि ।। १२ ।।
ब्रह्मणा मम यत्कर्म समुद्दिष्टं सनातनम् ।।
तदिहैव करिष्यामि मुनीनां सन्निधौ विधे ।। १३ ।।
तिष्ठंति मुनयश्चात्र स्वयं चापि प्रजापतिः ।।
एतेषां साक्षिभूतं मे भविष्यंत्यद्य निश्चयम् ।।१४।।
संध्यापि ब्रह्मणा प्रोक्ता चेदानीं प्रेषयेद्वचः ।।
इह कर्म परीक्ष्यैव प्रयोगान्मोहयाम्यहम् ।। १५ ।।

ब्रह्मोवाच ।।
इति संचित्य मनसा निश्चित्य च मनोभवः ।।
पुष्पजं पुष्पजातस्य योजयामास मार्गणैः ।। १६ ।।
आलीढस्थानमासाद्य धनुराकृष्य यत्नतः ।।
चकार वलयाकारं कामो धन्विवरस्तदा ।। १७ ।।
संहिते तेन कोदंडे मारुताश्च सुगंधयः ।।
ववुस्तत्र मुनिश्रेष्ठ सम्यगाह्लादकारिणः ।। १८ ।।
ततस्तानपि धात्रादीन् सर्वानेव च मानसान् ।।
पृथक् पुष्पशरैस्तीक्ष्णैर्मोहयामास मोहनः ।।१९।।
ततस्ते मुनयस्सर्वे मोहिताश्चाप्यहं मुने ।।
सहितो मनसा कंचिद्विकारं प्रापुरादितः ।। 2.2.3.२० ।।
संध्यां सर्वे निरीक्षंतस्सविकारं मुहुर्मुहुः ।।
आसन् प्रवृद्धमदनाः स्त्री यस्मान्मदनैधिनी ।। २१ ।।
ततः सर्वान्स मदनो मोहयित्वा पुनःपुनः ।।
यथेन्द्रियविकारं त प्रापुस्तानकरोत्तथा ।।२२।।
उदीरितेंद्रियो धाता वीक्ष्याहं स यदा च ताम् ।।
तदैव चोनपंचाशद्भावा जाताश्शरीरतः ।। २३ ।।
सापि तैर्वीक्ष्यमाणाथ कंदर्पशरपातनात् ।।
चक्रे मुहुर्मुहुर्भावान्कटाक्षावरणादिकान् ।। २४ ।।
निसर्गसुंदरी संध्या तान्भावान् मानसोद्भवान् ।।
कुर्वंत्यतितरां रेजे स्वर्णदीव तनूर्मिभिः ।। २५ ।।
अथ भावयुतां संध्यां वीक्ष्याकार्षं प्रजापतिः ।।
धर्माभिपूरित तनुरभिलाषमहं मुने ।।२६।।
ततस्ते मुनयस्सर्वे मरीच्यत्रिमुखा अपि ।।
दक्षाद्याश्च द्विजश्रेष्ठ प्रापुर्वैकारिकेन्द्रियम् ।। २७ ।।
दृष्ट्वा तथाविधा दक्षमरीचिप्रमुखाश्च माम् ।।
संध्यां च कर्मणि निजे श्रद्दधे मदनस्तदा ।।२८।।
यदिदं ब्रह्मणा कर्म ममोद्दिष्टं मयापि तत् ।।
कर्तुं शक्यमिति ह्यद्धा भावितं स्वभुवा तदा।।२९।।
इत्थं पापगतिं वीक्ष्य भ्रातृणां च पितुस्तथा ।।
धर्मस्सस्मार शंभुं वै तदा धर्मावनं प्रभुम् ।। 2.2.3.३० ।।
संस्मरन्मनसा धर्मं शंकरं धर्मपालकम् ।।
तुष्टाव विविधैर्वाक्यैर्दीनो भूत्वाजसंभवः ।। ३१ ।।

धर्म उवाच ।।
देवदेव महादेव धर्मपाल नमोस्तु ते ।।
सृष्टिस्थितिविनाशानां कर्ता शंभो त्वमेव हि ।। ३२ ।।
सृष्टौ ब्रह्मा स्थितौ विष्णुः प्रलये हररूपधृक् ।।
रजस्सत्त्वतमोभिश्च त्रिगुणैरगुणः प्रभो ।। ३३ ।।
निस्त्रैगुण्यः शिवः साक्षात्तुर्यश्च प्रकृतेः परः ।।
निर्गुणो निर्विकारी त्वं नानालीलाविशारदः ।। ३४ ।।
रक्षरक्ष महादेव पापान्मां दुस्तरादितः ।।
मत्पितायं तथा चेमे भ्रातरः पापबुद्धयः ।। ३५ ।।
ब्रह्मोवाच।।
इति स्तुतो महेशानो धर्मेणैव परः प्रभुः ।।
तत्राजगाम शीघ्रं वै रक्षितुं धर्ममात्मभूः ।। ३६ ।।
जातो वियद्गतश्शंभुर्विधिं दृष्ट्वा तथाविधम्।।
मां दक्षाद्यांश्च मनसा जहासोपजहास च ।। ३७ ।।
स साधुवादं तान् सर्वान्विहस्य च पुनः पुनः ।।
उवाचेदं मुनिश्रेष्ठ लज्जयन् वृषभध्वजः ।। ३८ ।।
शिव उवाच ।।
अहो ब्रह्मंस्तव कथं कामभावस्समुद्गतः ।।
दृष्ट्वा च तनयां नैव योग्यं वेदानुसारिणाम् ।।३९।।
यथा माता च भगिनी भ्रातृपत्नी तथा सुता ।।
एतः कुदृष्ट्या द्रष्टव्या न कदापि विपश्चिता ।। 2.2.3.४० ।।
एष वै वेदमार्गस्य निश्चयस्त्वन्मुखे स्थितः ।।
कथं तु काममात्रेण स ते विस्मारितो विधे ।। ४१ ।।
धैर्यं जागरितं ब्रह्मन्मनस्ते चतुरानन ।।
कथं क्षुद्रेण कामेन रंतुं विगटितं विधे ।। । ४२ ।।
एकांतयोगिनस्तस्मात्सर्वदादित्यदर्शिनः ।।
कथं दक्षमरीच्याद्या लोलुपाः स्त्रीषु मानसाः ।। ४३ ।।
कथं कामोपि मंदात्मा प्राबल्यात्सोधुनैव हि ।।
विकृतान्बाणैः कृतवानकालज्ञोल्पचेतनः ।।४४।।
धिक्तं श्रुतं सदा तस्य यस्य कांता मनोहरत् ।।
धैर्यादाकृष्य लौल्येषु मज्जयत्यपि मानसम् ।।४५।।
ब्रह्मोवाच ।।
इति तस्य वचः श्रुत्वा लोके सोहं शिवस्य च ।।

व्रीडया द्विगुणीभूतस्स्वेदार्द्रस्त्वभवं क्षणात् ।।४६।।
ततो निगृह्यैंद्रियकं विकारं चात्यजं मुने ।।
जिघृक्षुरपि तद्भीत्या तां संध्यां कामरूपिणीम् ।।४७।।
मच्छरीरात्तु घर्मांभो यत्पपात द्विजोत्तम ।। धर्मांभो
अग्निष्वात्ताः पितृगणा जाताः पितृगणास्ततः ।।४८।।
भिन्नांजननिभास्सर्वे फुल्लराजीवलोचनाः ।।
नितांतयतयः पुण्यास्संसारविमुखाः परे ।।४९।।
सहस्राणां चतुःषष्टिरग्निष्वात्ताः प्रकीर्तिता ।।
षडशीतिसहस्राणि तथा बर्हिषदो मुने ।। 2.2.3.५० ।।
घर्मांभः पतितं भूमौ तदा दक्षशरीरतः ।।
समस्तगुणसंपन्ना तस्माज्जाता वरांगना ।।५१।।
तन्वंगी सममध्या च तनुरोमावली श्रुता ।।
मृद्वंगी चारुदशना नवकांचनसुप्रभा ।।५२।।
सर्वावयवरम्या च पूर्णचन्द्राननाम्बुजा ।।
नाम्ना रतिरिति ख्याता मुनीनामपि मोहिनी ।।५३।।
मरीचिप्रमुखा षड् वै निगृहीतेन्द्रियक्रियाः ।।
ऋते क्रतुं वसिष्ठं च पुलस्त्यांगिरसौ तथा ।।।। ५४ ।।
क्रत्वादीनां चतुर्णां च बीजं भूमौ पपात च ।।
तेभ्यः पितृगणा जाता अपरे मुनिसत्तम।।५५।।
सोमपा आज्यपा नाम्ना तथैवान्ये सुकालिनः ।।
हविष्मंतस्तु तास्सर्वे कव्यवाहाः प्रकीर्तिताः ।। ५६ ।।
क्रतोस्तु सोमपाः पुत्रा वसिष्ठात्कालिनस्तथा ।।
आज्यपाख्याः पुलस्त्यस्य हविष्मंतोंगिरस्सुताः ।।५७।।
जातेषु तेषु विप्रेन्द्र अग्निष्वात्तादिकेष्वथ।।
लोकानां पितृवर्गेषु कव्यवाह स समंततः ।। ५८ ।।
संध्या पितृप्रसूर्भूत्वा तदुद्देशयुताऽभवत् ।।
निर्दोषा शंभुसंदृष्टा धर्मकर्मपरायणा ।। ५९ ।।
एतस्मिन्नंतरे शम्भुरनुगृह्याखिलान्द्विजान् ।।
धर्मं संरक्ष्य विधिवदंतर्धानं गतो द्रुतम् ।। 2.2.3.६० ।।
अथ शंकरवाक्येन लज्जितोहं पितामहः ।।
कंदर्प्पायाकोपिंत हि भ्रुकुटीकुटिलाननः ।। ६१ ।।
दृष्ट्वा मुखमभिप्रायं विदित्वा सोपि मन्मथः ।।
स्वबाणान्संजहाराशु भीतः पशुपतेर्मुने ।। ६२ ।।

ततः कोपसमायुक्तः पद्मयोनिरहं मुने ।।
अज्वलं चातिबलवान् दिधक्षुरिव पावकः ।। ६३ ।।
भवनेत्राग्निनिर्दग्धः कंदर्पो दर्पमोहितः ।।
भविष्यति महादेवे कृत्वा कर्म सुदुष्करम् ।। ६४ ।।
इति वेधास्त्वहं काममक्षयं द्विजसत्तम ।।
समक्षं पितृसंघस्य मुनीनां च यतात्मनाम् ।। ६५ ।।
इति भीतो रतिपतिस्तत्क्षणात्त्यक्तमार्गणः ।।
प्रादुर्बभूव प्रत्यक्षं शापं श्रुत्वातिदारुणम् ।। ६६ ।।
ब्रह्माणं मामुवाचेदं स दक्षादिसुतं मुने ।।
शृण्वतां पितृसंघानां संध्यायाश्च विगर्वधीः ।। ६७ ।।
काम उवाच ।।
किमर्थं भवता ब्रह्मञ् शप्तोहमिति दारुणम् ।।
अनागास्तव लोकेश न्याय्यमार्गानुसारिणः ।। ६८ ।।
त्वया चोक्तं नु मत्कर्म यत्तद्ब्रह्मन् कृतं मया ।।
तत्र योग्यो न शापो मे यतो नान्यत्कृतं मया ।। ६९ ।।
अहं विष्णुस्तथा शंभुः सर्वे त्वच्छ रगोचराः ।।
इति यद्भवता प्रोक्तं तन्मयापि परीक्षितम् ।।2.2.3.७० ।।
नापराधो ममाप्यत्र ब्रह्मन् मयि निरागसि ।।
दारुणः समयश्चैव शापो देव जगत्पते ।। ७१ ।।
ब्रह्मोवाच।।
इति तस्य वचः श्रुत्वा ब्रह्माहं जगतां पतिः ।।
प्रत्यवोचं यतात्मानं मदनं दमयन्मुहुः।। ।। ७२ ।।
ब्रह्मोवाच ।।
आत्मजा मम संध्येयं यस्मादेतत्स कामतः ।।
लक्ष्यीकृतोहं भवता ततश्शापो मया कृतः ।। ७३ ।।
अधुना शांतरोषोहं त्वां वदामि मनोभव ।।
शृणुष्व गतसंदेहस्सुखी भव भयं त्यज ।।७४।।
त्वं भस्म भूत्वा मदन भर्गलोचनवह्निना ।।
तथैवाशु समं पश्चाच्छरीरं प्रापयिष्यसि ।। ७५ ।।
यदा करिष्यति हरोंजसा दारपरिग्रहम् ।।
तदा स एव भवतश्शरीरं प्रापयिष्यति ।। ७६ ।।
ब्रह्मोवाच ।।
एवमुक्त्वाथ मदनमहं लोकपितामहः ।।

अंतर्गतो मुनीन्द्राणां मानसानां प्रपश्यताम् ।।७७।।
इत्येवं मे वचश्श्रुत्वा मदनस्तेपि मानसाः ।।
संबभूवुस्सुतास्सर्वे सुखिनोऽरं गृहं गताः ।।७८।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे कामशापानुग्रहो नाम तृतीयोऽध्यायः ।।३।।

नारद उवाच।।
विष्णुशिष्य महाप्राज्ञ विधे लोककर प्रभो ।।
अद्भुतेयं कथा प्रोक्ता शिवलीलामृतान्विता ।। १ ।।
ततः किमभवत्तात चरितं तद्वदाधुना ।।
अहं श्रद्धान्वितः श्रोतुं यदि शम्भुकथाश्रयम् ।। २ ।। ।।
ब्रह्मोवाच ।।
शंभौ गते निजस्थाने वेधस्यंतर्हिते मयि ।।
दक्ष प्राहाथ कंदर्पं संस्मरन् मम तद्वचः ।। ।। ३ ।। ।।
दक्ष उवाच ।।
मद्देहजेयं कंदर्प सद्रूपगुणसंयुता ।।
एनां गृहणीष्व भार्यार्थं भवतस्सदृशीं गुणैः ।। ४ ।।
एषा तव महा तेजास्सर्वदा सहचारिणी ।।
भविष्यति यथाकामं धर्मतो वशवर्तिनी ।। ५ ।।
ब्रह्मोवाच ।।
इत्युक्त्वा प्रददौ तस्यै देहस्वेदांबुसम्भवाम् ।।
कंदर्प्पायाग्रतः कृत्वा नाम कृत्वा रतीति ताम् ।। ६ ।।
विवाह्य तां स्मरस्सोपि मुमोदातीव नारद ।।
दक्षजां तनयां रम्यां मुनीनामपि मोहिनीम् ।। ७ ।।
अथ तां वीक्ष्य मदनो रत्याख्यां स्वस्त्रियं शुभाम् ।।
आत्मा गुणेन विद्धोसौ मुमोह रतिरंजितः ।।८ ।।
क्षणप्रदाऽभवत्कांता गौरी मृगदृशी मुदा ।।
लोलापांग्यथ तस्यैव भार्या च सदृशी रतौ ।। ९ ।।
तस्या भ्रूयुगलं वीक्ष्य संशयं मदनोकरोत् ।।
उत्सादनं मत्कोदण्डं विधात्रास्यां निवेशितम् ।। 2.2.4.१० ।।
कटाक्षाणामाशुगतिं दृष्ट्वा तस्या द्विजोत्तम।।
आशु गन्तुं निजास्त्राणां श्रद्दधे न च चारुताम् ।। ११ ।।
तस्याः स्वभावसुरभिधीरश्वासानिलं तथा ।।
आघ्राय मदनः श्रद्धां त्यक्तवान् मलयांतिके ।। १२ ।
पूर्णेन्दुसदृशं वक्त्रं दृष्ट्वा लक्ष्मसुलक्षितम् ।।
न निश्चिकाय मदनो भेदं तन्मुखचन्द्रयोः ।। १३ ।।
सुवर्ण पद्मकलिकातुल्यं तस्याः कुचद्वयम् ।।
रेजे चूचुकयुग्मेन भ्रमरेणेव वेष्टितम् ।। १४ ।।
दृढपीनोन्नतं तस्यास्तनमध्यं विलंबिनीम् ।।

आनाभिप्रतलं मालां तन्वीं चन्द्रायितां शुभाम् ।। १५।।
ज्यां पुष्पधनुषः कामः षट्पदावलिसंभ्रमाम् ।।
विसस्मार च यस्मात्तां विसृज्यैनां निरीक्षते ।।१६।।
गम्भीरनाभिरंध्रांतश्चतुःपार्श्वत्वगाद्दतम् ।।
आननाब्जेऽक्षणद्वंद्वमारक्तकफलं यथा ।। १७ ।।
मध्येन वपुषा निसर्गाष्टापदप्रभा ।।
रुक्मवेदीव ददृशे कामेन रमणी हि सा ।। १८ ।।
रंभास्तंभायतं स्निग्धं यदूरुयुगलं मृदु ।।
निजशक्तिसमं कामो वीक्षांचक्रे मनोहरम् ।। १९ ।।
आरक्तपार्ष्णिपादाग्रप्रांतभागं पदद्वयम् ।।
अनुरागमिवाऽनेन मित्रं तस्या मनोभवः ।। 2.2.4.२० ।।
तस्याः करयुगं रक्तं नखरैः किंशुकोपमैः ।।
वृत्ताभिरंगुलीभिश्च सूक्ष्माग्राभिर्मनोहरम् ।।२१।।
तद्बाहुयुगुलं कांतं मृणालयुगलायतम् ।।
मृदु स्निग्धं चिरं राजत्कांतिलोहप्रवालवत् ।।२२।।
नीलनीरदसंकाशः केशपाशो मनोहरः ।।
चमरीवाल भरवद्विभाति स्म स्मरप्रियः ।।२३।।
एतादृशीं रतिं नाम्ना प्रालेयाद्रिसमुद्भवाम्।।
गंगामिव महादेवो जग्राहोत्फुल्ललोचनः ।।२४।।
चक्रपद्मां चारुबाहुं मृणालशकलान्विताम् ।।
भ्रूयुग्मविभ्रमव्राततनूर्मिपरिराजिताम् ।। २५ ।।
कटाक्षपाततुंगौघां स्वीयनेत्रोत्पलान्विताम् ।।
तनुलोमांबुशैवालां मनोद्रुमविलासिनीम् ।। २६ ।।
निम्ननाभिह्रदां क्षामां सर्वांगरमणीयिकाम् ।।
सर्वलावण्यसदनां शोभमानां रमामिव ।। २७ ।।
द्वादशाभरणैर्युक्तां शृंगारैः षोडशैर्युताम् ।।
मोहनीं सर्वलोकानां भासयंतीं दिशो दश ।।२८।।
इति तां मदनो वीक्ष्य रतिं जग्राह सोत्सुकः ।।
रागादुपस्थितां लक्ष्मीं हृषीकेश इवोत्तमाम् ।।२९।।
नोवाच च तदा दक्षं कामो मोदभवात्ततः ।।
विस्मृत्य दारुणं शापं विधिदत्तं विमोहितः।।2.2.4.३०।।
तदा महोत्सवस्तात बभूव सुखवर्द्धनः ।।
दक्षः प्रीततरश्चासीन्मुमुदे तनया मम ।। ३१ ।।

कामोतीव सुखं प्राप्य सर्वदुःखक्षयं गतः ।।
दक्षजापि रतिः कामं प्राप्य चापि जहर्ष ह ।।३२।।
रराज चेतयासार्द्धं भिन्नश्चारुवचः स्मरः ।।
जीमूत इव संध्यायां सौदामन्या मनोज्ञया ।। ३३ ।।
इति रतिपतिरुच्चैर्मोहयुक्तो रतिं तां हृदुपरि जगृहे वै योगदर्शीव विद्याम् ।।
रतिरपि पतिमग्र्यं प्राप्य सा चापि रेजे हरिमिव कमला वै पूर्णचन्द्रोपमास्या ।।३४।। इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्विती- स० कामविवाहवर्णनं नाम चतुर्थोऽध्यायः ।।४।।

सूत उवाच।।
इत्याकर्ण्य वचस्तस्य ब्रह्मणो मुनिसत्तमः ।।
स मुदोवाच संस्मृत्य शंकरं प्रीतमानसः ।। १ ।।
नारद उवाच ।। ।।
ब्रह्मन् विधे महाभाग विष्णुशिष्य महामते ।।
अद्भुता कथिता लीला त्वया च शशिमौलिनः ।। २ ।।
गृहीतदारे मदने हृष्टे हि स्वगृहे गते ।।
दक्षे च स्वगृहं याते तथा हि त्वयि कर्तरि ।। ३ ।।
मानसेषु च पुत्रेषु गतेषु स्वस्वधामसु ।।
संध्या कुत्र गता सा च ब्रह्मपुत्री पितृप्रसूः ।। ४ ।।
किं चकार च केनैव पुरुषेण विवाहिता ।।
एतत्सर्वं विशेषेण संध्यायाश्चरितं वद ।। ५ ।।
सूत उवाच ।।
इत्याकर्ण्य वचस्तस्य ब्रह्मपुत्रश्च धीमतः ।।
संस्मृत्य शंकरं सक्त्या ब्रह्मा प्रोवाच तत्त्ववित् ।। ६ ।।
ब्रह्मोवाच ।।
शृणु त्वं च मुने सर्वं संध्यायाश्चरितं शुभम् ।।
यच्छ्रुत्वा सर्वकामिन्यस्साध्व्यस्स्युस्सर्वदा मुने ।। ७ ।।
सा च संध्या सुता मे हि मनोजाता पुराऽ भवत् ।।
तपस्तप्त्वा तनुं त्यक्त्वा सैव जाता त्वरुंधती ।।८।।
मेधातिथेस्सुता भूत्वा मुनिश्रेष्ठस्य धीमती ।।
ब्रह्मविष्णुमहेशानवचनाच्चरितव्रता।।९।।
वव्रे पतिं महात्मानं वसिष्ठं शंसितव्रतम् ।।
पतिव्रता च मुख्याऽभूद्वंद्या पूज्या त्वभीषणा।।2.2.5.१०।।
नारद उवाच।।
कथं तया तपस्तप्तं किमर्थं कुत्र संध्यया।।
कथं शरीरं सा त्यक्त्वाऽभवन्मेधातिथेः सुता।।।।।
कथं वा विहितं देवैर्ब्रह्मविष्णुशिवैः पतिम्।
वसिष्ठं तु महात्मानं संवव्रे शंसितव्रतम्।।१२।।
एतन्मे श्रोष्यमाणाय विस्तरेण पितामह।।
कौतूहलमरुंधत्याश्चरितं ब्रूहि तत्त्वतः ।।१३।। ।
ब्रह्मोवाच ।।
अहं स्वतनयां संध्यां दृष्ट्वा पूर्वमथात्मनः।।

कामायाशु मनोऽकार्षं त्यक्त्वा शिवभयाच्च सा ।।१४।।
संध्यायाश्चलितं चित्तं कामबाणविलोडितम् ।।
ऋषीणामपि संरुद्धमानसानां महात्मनाम्।।१५।।
भर्गस्य वचनं श्रुत्वा सोपहासं च मां प्रति ।।
आत्मनश्चलितत्वं वै ह्यमर्यादमृषीन्प्रति ।।१६।।
कामस्य तादृशं भावं मुनिमोहकरं मुहुः।।
दृष्ट्वा संध्या स्वयं तत्रोपयमायातिदुःखिता।। १७ ।। ।
ततस्तु ब्रह्मणा शप्ते मदने च मया मुने।।
अंतर्भूते मयि शिवे गते चापि निजास्पदे ।।१८।।
आमर्षवशमापन्ना सा संध्या मुनिसत्तम।।
मम पुत्री विचार्यैवं तदा ध्यानपराऽभवत् ।। १९ ।।
ध्यायंती क्षणमेवाशु पूर्वं वृत्तं मनस्विनी ।।
इदं विममृशे संध्या तस्मिन्काले यथोचितम् ।। 2.2.5.२० ।।
संध्योवाच ।।
उत्पन्नमात्रां मां दृष्ट्वा युवतीं मदनेरितः ।।
अकार्षित्सानुरागोयमभिलाषं पिता मम ।।२१।। ।
पश्यतां मानसानां च मुनीनां भावितात्मनाम्।।
दृष्ट्वैव माममर्यादं सकाममभवन्मनः।।२२।।
ममापि मथितं चित्तं मदनेन दुरात्मना ।।
येन दृष्ट्वा मुनीन्सर्वांश्चलितं मन्मनो भृशम् ।।२६।।
फलमेतस्य पापस्य मदनस्स्वयमाप्तवान्।।
यस्तं शशाप कुपितः शंभोरग्रे पितामहः।।२४।।
प्राप्नुयां फलमेतस्य पापस्य स्वघकारिणी ।।
तच्छोधनफलमहमाशु नेच्छामि साधनम् ।।२९।।
यन्मां पिता भ्रातरश्च सकाममपरोक्षतः ।।
दृष्ट्वा चक्रुस्स्पृहां तस्मान्न मत्तः पापकृत्परा ।।२६।।
ममापि कामभावोभूदमर्यादं समीक्ष्य तान् ।।
पत्या इव स्वकेताते सर्वेषु सहजेष्वषि।।२७।।
करिष्यारम्यस्य पापस्य प्रायश्चित्तमहं स्वयम्।।
आत्मानमग्नौ होष्यामि वेदमार्गानुसारत।।२८।।
किं त्वेकां स्थापयिष्यामि मर्यादामिह भूतले ।।
उत्पन्नमात्रा न यथा सकामास्स्युश्शरीरिणः ।। २९ ।।
एतदर्थमहं कृत्वा तपः परम दारुणम् ।।

मर्यादां स्थापयिष्यामि पश्चात्त्यक्षामि जीवितम्।।2.2.5.३०।।
यस्मिञ्च्छरीरे पित्रा मे ह्यभिलाषस्स्वयं कृतः।।
भ्रातृभिस्तेन कायेन किंचिन्नास्ति प्रयोजनम् ।।३१।।
मया येन शरीरेण तातेषु सहजेषु च ।।
उद्भावितः कामभावो न तत्सुकृतसाधनम्।।३२।।
इति संचित्य मनसा संध्या शैलवरं ततः ।।
जगाम चन्द्रभागाख्यं चन्द्रभागापगा यतः ।। ३३ ।।
अथ तत्र गतां ज्ञात्वा संध्यां गिरिवरं प्रति ।।
तपसे नियतात्मानं ब्रह्मावोचमहं सुतम् ।। ३४ ।।
वशिष्ठं संयतात्मानं सर्वज्ञं ज्ञानयोगिनम् ।।
समीपे स्वे समासीनं वेदवेदाङ्गपारगम् ।।३५।।
ब्रह्मोवाच ।।
वसिष्ठ पुत्र गच्छ त्वं संध्यां जातां मनस्विनीम्।।
तपसे धृतकामां च दीक्षस्वैनां यथा विधि ।।३६।।
मंदाक्षमभवत्तस्याः पुरा दृष्ट्वैव कामुकान्।।
युष्मान्मां च तथात्मानं सकामां मुनिसत्तम।।३७।।
अभूतपूर्वं तत्कर्म पूर्व मृत्युं विमृश्य सा ।।
युष्माकमात्मनश्चापि प्राणान्संत्यक्तुमिच्छति ।।३८।।
समर्यादेषु मर्यादां तपसा स्थापयिष्यति ।।
तपः कर्तुं गता साध्वी चन्द्रभागाख्यभूधरे।।३९।।
न भावं तपसस्तात सानुजानाति कंचन।।
तस्माद्यथोपदेशात्सा प्राप्नोत्विष्टं तथा कुरु।।2.2.5.४०।।
इदं रूपं परित्यज्य निजं रूपांतरं मुने ।।
परिगृह्यांतिके तस्यास्तपश्चर्यां निदर्शयन् ।। ४१ ।।
इदं स्वरूपं भवतो दृष्ट्वा पूर्वं यथात्र वाम् ।।
नाप्नुयात्साऽथ किंचिद्वै ततो रूपांतरं कुरु ।।४२।।
ब्रह्मोवाच ।।नारदेत्थं वसिष्ठो मे समाज्ञप्तो दयावता ।।
यथाऽस्विति च मां प्रोच्य ययौ संध्यांतिकं मुनिः ।। ४३ ।।
तत्र देवसरः पूर्णं गुणैर्मानससंमितम् ।।
ददर्श स वसिष्टोथ संध्यां तत्तीरगामपि।।। ४४ ।।
तीरस्थया तया रेजे तत्सरः कमलोज्ज्वलम् ।।
उद्यदिंदुसुनक्षत्र प्रदोषे गगनं यथा ।। ४५ ।।
मुनिर्दृष्ट्वाथ तां तत्र सुसंभावां स कौतुकी ।।

वीक्षांचक्रे सरस्तत्र बृहल्लोहितसंज्ञकम् ।। ४६ ।।
चन्द्रभागा नदी तस्मात्प्राकाराद्दक्षिणांबुधिम् ।।
यांती सा चैव ददृशे तेन सानुगिरेर्महत् ।। ४७ ।।
निर्भिद्य पश्चिमं सा तु चन्द्रभागस्य सा नदी ।।
यथा हिमवतो गंगा तथा गच्छति सागरम् ।।४८।।
तस्मिन् गिरौ चन्द्रभागे बृहल्लोहिततीरगाम् ।।
संध्यां दृष्ट्वाथ पप्रच्छ वसिष्ठस्सादरं तदा ।।४९।।
वशिष्ठ .उवाच ।।
किमर्थमागता भद्रे निर्जनं त्वं महीधरम् ।।
कस्य वा तनया किं वा भवत्यापि चिकीर्षितम् ।। 2.2.5.५० ।।
एतदिच्छाम्यहं श्रोतुं वद गुह्यं न चेद्भवेत् ।।
वदनं पूर्णचन्द्राभं निश्चेष्टं वा कथं तव ।। ५१ ।।
ब्रह्मोवाच ।।
तच्छ्रुत्वा वचनं तस्य वशिष्ठस्य महात्मनः ।।
दृष्ट्वा च तं महात्मानं ज्वलंतमिव पावकम् ।। ५२ ।।
शरीरधृग्ब्रह्मचर्यं विलसंतं जटाधरम् ।।
सादरं प्रणिपत्याथ संध्योवाच तपोधनम् ।। ५३ ।।
संध्योवाच ।।
यदर्थमागता शैलं सिद्धं तन्मे निबोध ह ।।
तव दर्शनमात्रेण यन्मे सेत्स्यति वा विभो ।। ५४ ।।
तपश्चर्तुमहं ब्रह्मन्निर्जनं शैलमागता ।।
ब्रह्मणोहं सुता जाता नाम्ना संध्येति विश्रुता ।।५५।।
यदि ते युज्यते सह्यं मां त्वं समुपदेशय ।।
एतच्चिकीर्षितं गुह्यं नान्यैः किंचन विद्यते ।।५६।।
अज्ञात्वा तपसो भावं तपोवनमुपाश्रिता ।।
चिंतया परिशुष्येहं वेपते हि मनो मम ।।५७।।
ब्रह्मोवाच ।।
आकर्ण्य तस्या वचनं वसिष्ठो ब्रह्मवित्तमः ।।
स्वयं च सर्वकृत्यज्ञो नान्यत्किंचन पृष्टवान् ।। ५८ ।।
अथ तां नियतात्मानं तपसेति धृतोद्यमाम् ।।
प्रोवाच मनसा स्मृत्वा शंकरं भक्तवत्सलम् ।। ५९ ।।
वसिष्ठ उवाच ।।
परमं यो महत्तेजः परमं यो महत्तपः ।।

परमः परमाराध्यः शम्भुर्मनसि धार्यताम् ।। 2.2.5.६० ।।
धर्मार्थकाममोक्षाणां य एकस्त्वादिकारणम् ।।
तमेकं जगतामाद्यं भजस्व पुरुषोत्तमम् ।। ६१ ।।
मंत्रेणानेन देवेशं शम्भुं भज शुभानने ।।
तेन ते सकला वाप्तिर्भविष्यति न संशयः ।।६२।।
ॐ नमश्शंकरायेति ॐमित्यंतेन सन्ततम् ।।
मौनतपस्याप्रारंम्भं तन्मे निगदतः शृणु।।६३।।
स्नानं मौनेन कर्तव्यं मौनेन हरपूजनम् ।।
द्वयोः पूर्णजलाहारं प्रथमं षष्ठकालयोः ।। ६४ ।।
तृतीये षष्ठकाले तु ह्युपवासपरो भवेत् ।।
एवं तपस्समाप्तौ वा षष्ठे काले क्रिया भवेत् ।। ६५ ।।
एवं मौनतपस्याख्या ब्रह्मचर्यफलप्रदा ।।
सर्वाभीष्टप्रदा देवि सत्यंसत्यं न संशयः ।। ६६ ।।
एवं चित्ते समुद्दिश्य कामं चिंतय शंकरम् ।।
स ते प्रसन्न इष्टार्थमचिरादेव दास्यति ।। ६७ ।।
ब्रह्मोवाच ।।
उपविश्य वसिष्ठोथ संध्यायै तपसः क्रियाम् ।।
तामाभाष्य यथान्यायं तत्रैवांतर्दधे मुनिः ।। ६८ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखण्डे संध्याचरित्रवर्णनो नाम पंचमोऽध्यायः ।। ५ ।। ।।

ब्रह्मोवाच ।।
सुतवर्य महाप्राज्ञ शृणु संध्यातपो महत् ।।
यच्छ्रुत्वा नश्यते पापसमूहस्तत्क्षणाद्ध्रुवम् ।। १ ।।
उपविश्य तपोभावं वसिष्ठे स्वगृहं गते ।।
संध्यापि तपसो भावं ज्ञात्वा मोदमवाप ह ।। २ ।।
ततस्सानंदमनसो वेषं कृत्वा तु यादृशम् ।।
तपश्चर्तुं समारेभे बृहल्लोहिततीरगा ।। ३ ।।
यथोक्तं तु वशिष्ठेन मंत्रं तपसि साधनम् ।।
मंत्रेण तेन सद्भक्त्या पूजयामास शंकरम् ।।४।।
एकान्तमनसस्तस्याः कुर्वंत्या सुमहत्तपः ।।
शंभौ विन्यस्तचित्ताया गतमेकं चतुर्युगम् ।। ५ ।।
प्रसन्नोभूत्तदा शंभुस्तपसा तेन तोषितः ।।
अंतर्बहिस्तथाकाशे दर्शयित्वा निजं वपुः ।। ६ ।।
यद्रूपं चिंतयंती सा तेन प्रत्यक्षतां गतः ।। ७ ।।
अथ सा पुरतो दृष्ट्वा मनसा चिंतितं प्रभुम् ।।
प्रसन्नवदनं शांतं मुमोदातीव शंकरम् ।।८।।
ससाध्वसमहं वक्ष्ये किं कथं स्तौमि वा हरम् ।।
इति चिंतापरा भूत्वा न्यमीलयत चक्षुषी ।। ९ ।।
निमीलिताक्ष्यास्तस्यास्तु प्रविश्य हृदयं हरः ।।
दिव्यं ज्ञानं ददौ तस्यै वाचं दिव्ये च चक्षुषी ।।2.2.6.१०।।
दिव्यज्ञानं दिव्यचक्षुर्दिव्या वाचमवाप सा ।।
प्रत्यक्षं वीक्ष्य दुर्गेशं तुष्टाव जगतां पतिम् ।।११।। ।।
संध्योवाच ।।
निराकारं ज्ञानगम्यं परं यन्नैव स्थूलं नापि सूक्ष्मं न चोच्चम् ।।
अंतश्चिंत्यं योगिभिस्तस्य रूपं तस्मै तुभ्यं लोककर्त्रे नमोस्तु ।। १२ ।।
सर्वं शांतं निर्मलं निर्विकारं ज्ञानागम्यं स्वप्रकाशेऽविकारम् ।।
खाध्वप्रख्यं ध्वांतमार्गात्परस्तद्रूपं यस्य त्वां नमामि प्रसन्नम् ।। १३ ।।
एकं शुद्धं दीप्यमानं तथाजं चिदानंदं सहजं चाविकारि ।।
नित्यानंदं सत्यभूतिप्रसन्नं यस्य श्रीदं रूपमस्मै नमस्ते ।। १४ ।।
विद्याकारोद्भावनीयं प्रभिन्नं सत्त्वच्छंदं ध्येयमात्मस्वरूपम् ।।
सारं पारं पावनानां पवित्रं तस्मै रूपं यस्य चैवं नमस्ते ।। १५ ।।
यत्त्वाकारं शुद्धरूपं मनोज्ञं रत्नाकल्पं स्वच्छकर्पूरगौरम् ।।
इष्टाभीती शूलमुंडे दधानं हस्तैर्नमो योगयुक्ताय तुभ्यम् ।।१६।।

गगनं भूर्दिशश्चैव सलिलं ज्योतिरेव च ।।
पुनः कालश्च रूपाणि यस्य तुभ्यं नमोस्तु ते ।। १७ ।।
प्रधानपुरुषौ यस्य कायत्वेन विनिर्गतौ ।।
तस्मादव्यक्तरूपाय शंकराय नमोनमः ।। १८ ।।
यो ब्रह्मा कुरुते सृष्टिं यो विष्णुः कुरुते स्थितिम् ।।
संहरिष्यति यो रुद्रस्तस्मै तुभ्यं नमोनमः ।।१९।।
नमोनमः कारणकारणाय दिव्यामृतज्ञानविभूतिदाय।।
समस्तलोकांतरभूतिदाय प्रकाशरूपाय परात्पराय ।। 2.2.6.२० ।।
यस्याऽपरं नो जगदुच्यते पदात् क्षितिर्दिशस्सूर्य इंदुर्मनौजः ।।
बर्हिर्मुखा नाभितश्चान्तरिक्षं तस्मै तुभ्यं शंभवे मे नमोस्तु ।। २१ ।।
त्वं परः परमात्मा च त्वं विद्या विविधा हरः ।।
सद्ब्रह्म च परं ब्रह्म विचारणपरायणः ।।२२।।
यस्य नादिर्न मध्यं च नांतमस्ति जगद्यतः ।।
कथं स्तोष्यामि तं देवं वाङ्मनोगोचरं हरम्।। ।। २३ ।।
यस्य ब्रह्मादयो देव मुनयश्च तपोधनाः ।।
न विप्रण्वंति रूपाणि वर्णनीयः कथं स मे ।। २४ ।।
स्त्रिया मया ते किं ज्ञेया निर्गुणस्य गुणाः प्रभो ।।
नैव जानंति यद्रूपं सेन्द्रा अपि सुरासुराः ।। २५ ।।
नमस्तुभ्यं महेशान नमस्तुभ्यं तमोमय ।।
प्रसीद शंभो देवेश भूयोभूयो नमोस्तु ते ।। २६ ।।
ब्रह्मोवाच ।।
इत्याकर्ण्य वचस्तस्यास्संस्तुतः परमेश्वरः ।।
सुप्रसन्नतरश्चाभूच्छंकरो भक्तवत्सलः ।। २७ ।।
अथ तस्याश्शरीरं तु वल्कलाजिनसंयुतम् ।।
परिच्छन्नं जटाव्रातैः पवित्रे मूर्ध्नि राजितैः ।। २८ ।।
हिमानीतर्जितांभोजसदृशं वदनं तदा ।।
निरीक्ष्य कृपयाविष्टो हरः प्रोवाच तामिदम् ।।२९।।
महेश्वर उवाच ।।
प्रीतोस्मि तपसा भद्रे भवत्याः परमेण वै ।।
स्तवेन च शुभप्राज्ञे वरं वरय सांप्रतम् ।। 2.2.6.३० ।।
येन ते विद्यते कार्यं वरेणास्मिन्मनोगतम् ।।
तत्करिष्ये च भद्रं ते प्रसन्नोहं तव व्रतैः ।। ३१ ।।
ब्रह्मोवाच ।।

इति श्रुत्वा महेशस्य प्रसन्नमनसस्तदा ।।
संध्योवाच सुप्रसन्ना प्रणम्य च मुहुर्मुहुः ।। ३२ ।।
संध्योवाच ।। ।।
यदि देयो वरः प्रीत्या वरयोग्यास्म्यहं यदि ।।
यदि शुद्धास्म्यहं जाता तस्मात्पापान्महेश्वर।।३३।।
यदि देव प्रसन्नोऽसि तपसा मम सांप्रतम् ।।
वृतस्तदायं प्रथमो वरो मम विधीयताम् ।।३४।।
उत्पन्नमात्रा देवेश प्राणिनोस्मिन्नभः स्थले ।।
न भवंतु समेनैव सकामास्संभवंतु वै ।।३५।।
यद्धि वृत्ता हि लोकेषु त्रिष्वपि प्रथिता यथा ।।
भविष्यामि तथा नान्या वर एको वृतो मया ।। ३६ ।।
सकामा मम सृष्टिस्तु कुत्रचिन्न पतिष्यति ।।
यो मे पतिर्भवेन्नाथ सोपि मेऽतिसुहृच्च वै ।। ३७ ।।
यो द्रक्ष्यति सकामो मां पुरुषस्तस्य पौरुषम् ।।
नाशं गमिष्यति तदा स च क्लीबो भविष्यति ।।।३८।।
ब्रह्मोवाच ।।
इति श्रुत्वा वचस्तस्यश्शंकरो भक्तवत्सलः ।।
उवाच सुप्रसन्नात्मा निष्पापायास्तयेरिते ।।३९।।
महेश्वर उवाच ।।
शृणु देवि च संध्ये त्वं त्वत्पापं भस्मतां गतम् ।।
त्वयि त्यक्तो मया क्रोधः शुद्धा जाता तपःकरात् ।।2.2.6.४०।।
यद्यद्वृतं त्वया भद्रे दत्तं तदखिलं मया।।
सुप्रसन्नेन तपसा तव संध्ये वरेण हि ।। ४१ ।।
प्रथमं शैशवो भावः कौमाराख्यो द्वितीयकः ।।
तृतीयो यौवनो भावश्चतुर्थो वार्द्धकस्तथा ।।४२।।
तृतीये त्वथ संप्राप्ते वयोभागे शरीरिणः।।
सकामास्स्युर्द्वितीयांतो भविष्यति क्वचित् क्वचित् ।। ४३ ।।
तपसा तव मर्यादा जगति स्थापिता मया ।।
उत्पन्नमात्रा न यथा सकामास्स्युश्शरीरिणः ।।४४।।
त्वं च लोके सतीभावं तादृशं समवाप्नुहि ।।
त्रिषु लोकेषु नान्यस्या यादृशं संभविष्यति ।। ४५ ।।
यः पश्यति सकामस्त्वां पाणिग्राहमृते तव ।।
स सद्यः क्लीबतां प्राप्य दुर्बलत्वं गमिष्यति ।। ४६ ।।

पतिस्तव महाभागस्तपोरूपसमन्वितः ।।
सप्तकल्पांतजीवी च भविष्यति सह त्वया ।। ४७ ।।
इति ते ये वरा मत्तः प्रार्थितास्ते कृता मया ।।
अन्यच्च ते वदिष्यामि पूर्वजन्मनि संस्थितम् ।। ४८ ।।
अग्नौ शरीत्यागस्ते पूर्वमेव प्रतिश्रुतः ।।
तदुपायं वदामि त्वां तत्कुरुष्व न संशयः ।।४९।।
स च मेधातिथिर्यज्ञे मुने द्वादशवार्षिके ।।
कृत्स्नप्रज्वलिते वह्नावचिरात् क्रियतां त्वया ।।2.2.6.५०।।
एतच्छैलोपत्यकायां चंद्रभागानदीतटे ।।
मेधातिथिर्महायज्ञं कुरुते तापसाश्रमे ।।५१।।
तत्र गत्वा स्वयं छंदं मुनिभिर्न्नोपलक्षिता ।।
मत्प्रसादाद्वह्निजाता तस्य पुत्री भविष्यसि ।। ५२ ।।
यस्ते वरो वाञ्छनीयः स्वामी मनसि कश्चन ।।
तं निधाय निजस्वांते त्यज वह्नौ वपुः स्वकम् ।। ५३ ।।
यदा त्वं दारुणं संध्ये तपश्चरसि पर्वते ।।
यावच्चतुर्युगं तस्य व्यतीते तु कृते युगे ।।५४।।
त्रेतायाः प्रथमे भागे जाता दक्षस्य कन्यका ।।
वाक्पाश्शीलसमापन्ना यथा योग्यं विवाहिताः।।५५।।
तन्मध्ये स ददौ कन्या विधवे सप्तविंशतिः ।।
चन्द्रोऽन्यास्संपरित्यज्य रोहिण्यां प्रीतिमानभूत्।
तद्धेतोर्हि यदा चन्द्रश्शप्तो दक्षेण कोपिना ।।
तदा भवत्या निकटे सर्वे देवास्समागताः ।।५७।।
न दृष्टाश्च त्वया संध्ये ते देवा ब्रह्मणा सह ।।
मयि विन्यस्तमनसा खं च दृष्ट्वा लभेत्पुनः ।।५८।।
चंद्रस्य शापमोक्षार्थं जाता चंद्रनदी तदा।।
सृष्टा धात्रा तदैवात्र मेधातिथिरुपस्थितः।।५९।।
तपसा सत्समो नास्ति न भूतो न भविष्यति।।
येन यज्ञस्समारब्धो ज्योतिष्टोमो महाविधिः।।2.2.6.६०।।
तत्र प्रज्वलितो वह्निस्तस्मिन्त्यज वपुः स्वकम् ।।
सुपवित्रा त्वमिदानीं संपूर्णोस्तु पणस्तव ।।६१।।
एतन्मया स्थापितन्ते कार्यार्थं भो तपस्विनि।।
तत्कुरुष्व महाभागे याहि यज्ञे महामुनेः ।
तस्याहितं च देवेशस्तत्रैवांतरधीयत।।६२।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे संध्याचरित्रवर्णनं नाम षष्ठोऽध्यायः ।। ६ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः ०७

https://sa.wikisource.org/s/ul1



ब्रह्मोवाच ।।

वरं दत्त्वा मुने तस्मिन् शंभावंतर्हिते तदा ।।

संध्याप्यगच्छत्तत्रैव यत्र मेधातिथिर्मुनिः ।। १ ।।

तत्र शंभोः प्रसादेन न केनाप्युपलक्षिता ।।

सस्मार वर्णिनं तं वै स्वोपदेशकरं तपः ।। २ ।।

वसिष्ठेन पुरा सा तु वर्णीभूत्वा महामुने ।।

उपदिष्टा तपश्चर्तुं वचनात्परमेष्ठिनः ।। ३ ।।

तमेव कृत्वा मनसा तपश्चर्योपदेशकम् ।।

पतित्वेन तदा संध्या ब्राह्मणं ब्रह्मचारिणम् ।। ४ ।।

समिद्धेग्नौ महायज्ञे मुनिभिर्नोपलक्षिता ।।

दृष्टा शंभुप्रसादेन सा विवेश विधेः सुता ।। ५ ।।

तस्याः पुरोडाशमयं शरीरं तत्क्षणात्ततः ।।

दग्धं पुरोडाशगंधं तस्तार यदलक्षितम् ।।६।।

वह्निस्तस्याः शरीरं तु दग्ध्वा सूर्यस्य मंडलम् ।।

शुद्धं प्रवेशयामास शंभोरेवाज्ञया पुनः ।।७।।

सूर्यो त्र्यर्थं विभज्याथ तच्छरीरं तदा रथे ।।

स्वकेशं स्थापयामास प्रीतये पितृदेवयोः ।।८।।

तदूर्द्ध्वभागस्तस्यास्तु शरीरस्य मुनीश्वर।।

प्रातस्संध्याभवत्सा तु अहोरात्रादिमध्यगा।९।

तच्छेषभागस्तस्यास्तु अहोरात्रांतमध्यगा ।।

सा सायमभवत्संध्या पितृप्रीतिप्रदा सदा ।।2.2.7.१ ०।।

सूर्योदयात्तु प्रथमं यदा स्यादरुणोदयः ।।

प्रातस्संध्या तदोदेति देवानां प्रीतिकारिणी ।। ११ ।।

अस्तं गते ततः सूर्य्ये शोणपद्मनिभे सदा ।।
उदेति सायं संध्यापि पितॄणां मोदकारिणी ।।१२।।
तस्याः प्राणास्तु मनसा शंभुनाथ दयालुना ।।
दिव्येन तु शरीरेण चक्रिरे हि शरीरिणः ।।१३।।
मुनेर्यज्ञावसाने तु संप्राप्ते मुनिना तु सा ।।
प्राप्ता पुत्री वह्निमध्ये तप्तकांचनसुप्रभा ।। १४ ।।
तां जग्राह तदा पुत्रीं मुनुरामोदसंयुतः ।।
यज्ञार्थं तान्तु संस्नाप्य निजक्रोडे दधौ मुने ।। १५ ।।
अरुंधती तु तस्यास्तु नाम चक्रे महामुनिः ।।
शिष्यैः परिवृतस्तत्र महामोदमवाप ह ।। १६ ।।
विरुणद्धि यतो धर्मं सा कस्मादपि कारणात् ।।
अतस्त्रिलोके विदितं नाम संप्राप तत्स्वयम् ।।१७।।
यज्ञं समाप्य स मुनिः कृतकृत्यभावमासाद्य संपदयुतस्तनया प्रलंभात् ।।
तस्मिन्निजाश्रमपदे सह शिष्यवर्गैस्तामेव सततमसौ दयिते सुरर्षे ।।१८।।
अथ सा ववृधे देवी तस्मिन्मुनिवराश्रमे ।।
चन्द्रभागानदीतीरे तापसारण्यसंज्ञके ।। १९ ।।
संप्राप्ते पञ्चमे वर्षे चन्द्रभागां तदा गुणैः ।।
तापसारण्यमपि सा पवित्रमकरोत्सती ।।2.2.7.२०।।
विवाहं कारयामासुस्तस्या ब्रह्मसुतेन वै ।।
वसिष्ठेन ह्यरुंधत्या ब्रह्मविष्णुमहेश्वराः ।।२१।।
तद्विवाहे महोत्साहो वभूव सुखवर्द्धनः।।
सर्वे सुराश्च मुनयस्सुखमापुः परं मुनो।२२।।
ब्रह्मविष्णुमहेशानां करनिस्सृततोयतः ।।
सप्तनद्यस्समुत्पन्नाश्शिप्राद्यास्सुपवित्रकाः ।। २३ ।।
अरुंधती महासाध्वी साध्वीनां प्रवरोत्तमा ।।
वसिष्ठं प्राप्य संरेजे मेधातिथिसुता मुने ।। २४ ।।
यस्याः पुत्रास्समुत्पन्नाः श्रेष्ठाश्शक्त्यादयश्शुभाः ।।
वसिष्ठं प्राप्य तं कांतं संरेजे मुनिसत्तमाः ।। २५ ।।

एवं संध्याचरित्रं ते कथितं मुनिसत्तम ।।

पवित्रं पावनं दिव्यं सर्वकामफलप्रदम् ।। २६ ।।

य इदं शृणुयान्नारी पुरुषो वा शुभव्रतः ।।

सर्वान्कामानवाप्नोति नात्र कार्या विचारणा ।। २७ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वि- सतीखंडे सप्तमोऽध्यायः ।। ७ ।।

---

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः ०८

https://sa.wikisource.org/s/ul2
< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः २ (सतीखण्डः)

सूत उवाच ।।

इत्याकर्ण्य वचस्तस्य ब्रह्मणो हि प्रजापतेः ।।

प्रसन्नमानसो भूत्वा तं प्रोवाच स नारदः ।।१।।

नारद उवाच ।।

ब्रह्मन् विधे महाभाग विष्णुशिष्य महामते ।।

धन्यस्त्वं शिवभक्तो हि परतत्त्वप्रदर्शकः ।।२।।

श्राविता सुकथा दिव्या शिवभक्तिविवर्द्धिनी ।।

अरुंधत्यास्तथा तस्याः स्वरूपायाः परे भवे ।। ३ ।।

इदानीं ब्रूहि धर्मज्ञ पवित्रं चरितं परम् ।।

शिवस्य परपापघ्नं मंगलप्रदमुत्तमम् ।। ४ ।।

गृहीतदारे कामे च दृष्टे तेषु गतेषु च ।।

संध्यायां किं तपस्तप्तुं गतायामभवत्ततः ।। ५ ।।

सूत उवाच ।।

इति श्रुत्वा वचस्तस्य ऋषेर्वै भावितात्मनः ।।

सुप्रसन्नतरो भूत्वा ब्रह्मा वचनमब्रवीत् ।। ६ ।।

ब्रह्मोवाच ।।

शृणु नारद विप्रेन्द्र तदेव चरितं शुभम् ।।

शिवलीलान्वितं भक्त्या धन्यस्त्वं शिवसेवकः ।। ७ ।।

अहं विमोहितस्तात यदैवांतर्हितः पुरा ।।

अचिंतयं सदाहं तच्छंभुवाक्यविषार्दितः ।।८।।

चिंतयित्वा चिरं चित्ते शिवमायाविमोहितः ।।

शिवे चेर्ष्यामकार्षं हि तच्छ्ृृणुष्व वदामि ते ।। ९ ।।

अथाहमगमं तत्र यत्र दक्षादयः स्थिताः ।।

सरतिं मदनं दृष्ट्वा समदोह हि किञ्चन ।। 2.2.8.१० ।।

दक्षमाभाष्य सुप्रीत्या परान्पुत्रांश्च नारद ।।
अवोचं वचनं सोहं शिवमायाविमोहितः ।। ११ ।।
ब्रह्मोवाच ।।
हे दक्ष हे मरीच्याद्यास्सुताः शृणुत मद्वचः ।।
श्रुत्वोपायं विधेयं हि मम कष्टापनुत्तये ।। १२ ।।
कांताभिलाषमात्रं मे दृष्ट्वा शम्भुरगर्हयत् ।।
मां च युष्मान्महायोगी धिक्कारं कृतवान्बहु ।। १३ ।।
तेन दुःखाभितप्तोहं लभेहं शर्म न क्वचित् ।।
यथा गृह्णातु कांतां स स यत्नः कार्य एव हि ।। १४ ।।
यथा गृह्णातु कांतां स सुखी स्यां दुःखवर्जितः ।।
दुर्लभस्य तु कामो मे परं मन्ये विचारतः ।।१५।।
कांताभिलाषमात्रं मे दृष्ट्वा शंभुरगर्हयत् ।।
मुनीनां पुरतः कस्मात्स कांतां संग्रहीष्यति ।। १६ ।।
का वा नारी त्रिलोकेस्मिन् या भवेत्तन्मनाः स्थिता ।।
योगमार्गमवज्ञाप्य तस्य मोहं करिष्यति ।। १७ ।।
मन्मथोपि समर्थो नो भविष्यत्यस्य मोहने ।।
नितांतयोगी रामाणां नामापि सहते न सः ।। १८ ।।
अगृहीतेषुणा चैव हरेण कथमादिना ।।
मध्यमा च भवेत्सृष्टिस्तद्वाचा नान्यवारिता ।। १९ ।।
भुवि केचिद्भविष्यंति मायाबद्धा महासुराः ।।
बद्धा केचिद्धरेर्नूनं केचिच्छंभोरुपायतः ।। 2.2.8.२० ।।
संसारविमुखे शंभौ तथैकांतविरागिणि ।।
अस्मादृते न कर्मान्यत् करिष्यति न संशयः ।। २१ ।।
इत्युक्त्वा तनयांश्चाहं दक्षादीन् सुनिरीक्ष्य च ।।
सरतिं मदनं तत्र सानंदमगदं ततः ।। २२ ।।
ब्रह्मोवाच ।।
मत्पुत्र वर काम त्वं सर्वथा सुखदायकः ।।
मद्वचश्शृणु सुप्रीत्या स्वपत्न्या पितृवत्सल ।। २३ ।।

अनया सहचारिण्या राजसे त्वं मनोभव ।।
एषा च भवता पत्या युक्ता संशोभते भृशम् ।। २४ ।।
यथा स्त्रिया हृषीकेशो हरिणा सा यथा रमा ।।
क्षणदा विधुना युक्ता तया युक्तो यथा विधुः ।। २५ ।।
तथैव युवयोश्शोभा दांपत्यं च पुरस्कृतम् ।।
अतस्त्वं जगतः केतुर्विश्वकेतुर्भविष्यसि।। २६ ।।
जगद्धिताय वत्स त्वं मोहयस्व पिनाकिनम् ।।
यथाशु सुमनश्शंभुः कुर्य्याद्दारप्रतिग्रहम् ।। २७ ।।
विजने स्निग्धदेशे तु पर्वतेषु सरस्सु च ।।
यत्रयत्र प्रयातीशस्तत्र तत्रानया सह ।। २८ ।।
मोहय त्वं यतात्मानं वनिताविमुखं हरम् ।।
त्वदृते विद्यते नान्यः कश्चिदस्य विमोहकः ।। २९ ।।
भूते हरे सानुरागे भवतोपि मनोभव ।
शापोपशांतिर्भविता तस्मादात्महितं कुरु ।। 2.2.8.३० ।।
सानुरागो वरारोहां यदीच्छति महेश्वरः ।।
तदा भवोपि योग्यार्यस्त्वां च संतारयिष्यति ।। ३१ ।।
तस्माज्जायाद्वितीयस्त्वं यतस्व हरमोहने ।।
विश्वस्य भव केतुस्त्वं मोहयित्वा महेश्वरम् ।।३२।।
ब्रह्मोवाच ।।
इति श्रुत्वा वचो मे हि जनकस्य जगत्प्रभोः ।।
उवाच मन्मथस्तथ्यं तदा मां जगतां पतिम् ।। ३३ ।।
मन्मथ उवाच ।।
करिष्येहं तव विभो वचनाच्छंभुमोहनम् ।।
किं तु योषिन्महास्त्रं मे तत्कांतां भगवन् सृज ।।३४।।
मया संमोहिते शंभो यया तस्यानुमोहनम् ।।
कर्तव्यमधुना धातस्तत्रोपायं परं कुरु ।। ३५ ।।
ब्रह्मोवाच ।।
एवंवादिनि कंदर्पे धाताहं स प्रजापतिः ।।

कया संमोहनीयोसाविति चिंतामयामहम् ।। ३६ ।।
चिंताविष्टस्य मे तस्य निःश्वासो यो विनिस्सृतः ।।
तस्माद्वसंतस्संजातः पुष्पव्रातविभूषितः ।। ३७ ।।
शोणराजीवसंकाशः फुल्लतामरसेक्षणः ।।
संध्योदिताखंडशशिप्रतिमास्यस्सुनासिकः।।३८।।
शार्ङ्गवच्चरणावर्त्तश्श्यामकुंचितमूर्द्धजः।।
संध्यांशुमालिसदृशः कुडलद्वयमंडितः ।। ३९ ।।
प्रमत्तेभगतिः पीनायतदोरुन्नतांसकः ।।
कंबुग्रीवस्सुविस्तीर्णहृदयः पीनसन्मुखः ।। 2.2.8.४० ।।
सर्वांगसुन्दरः श्यामस्सम्पूर्णस्सर्वलक्षणैः ।।
दर्शनीयतमस्सर्वमोहनः कामवर्द्धनः ।। ४१ ।।
एतादृशे समुत्पन्ने वसंते कुसुमाकरे ।।
ववौ वायुस्सुसुरभिः पादपा अपि पुष्पिताः ।। ४२ ।।
पिका विनेदुश्शतशः पंचमं मधुरस्वनाः ।।
प्रफुल्लपद्मा अभवन्सरस्यः स्वच्छपुष्कराः ।। ४३ ।।
तमुत्पन्नमहं वीक्ष्य तदा तादृशमुत्तमम् ।।
हिरण्यगर्भो मदनमगदं मधुरं वचः ।। ४४ ।।
ब्रह्मोवाच ।। एवं स मन्मथनिभस्सदा सहचरोभवत् ।।
आनुकूल्यं तव कृतः सर्वं देव करिष्यति ।। ४५ ।।
यथाग्नेः पवनो मित्रं सर्वत्रोपकरिष्यति ।।
तथायं भवतो मित्रं सदा त्वामनुयास्यति ।। ४६ ।।
वसंतेरंतहेतुत्वाद्वसंताख्यो भवत्वयम् ।।
तवानुगमनं कर्म तथा लोकानुरञ्जनम् । ४७ ।।
असौ वसंतशृंगारो वासंतो मलयानिलः ।।
भवेत्तु सुहृदो भावस्सदा त्वद्वशवर्त्तिनः ।।४८।।
विष्वोकाद्यास्तथा हावाश्चतुष्षष्टिकलास्तथा ।।
रत्याः कुर्वंतु सौहृद्यं सुहृदस्ते यथा तव ।। ४९ ।।
एभिस्सहचरैः काम वसंत प्रमुखैर्भवान् ।।

मोहयस्व महादेवं रत्या सह महोद्यतः ।। 2.2.8.५० ।।

अहं तां कामिनीं तात भावयिष्यामि यत्नतः ।।

मनसा सुविचार्यैव या हरं मोहयिष्यति ।। ५१ ।।

ब्रह्मोवाच ।।

एवमुक्तो मया कामः सुरज्येष्ठेन हर्षितः ।।

ननाम चरणौ मेऽपि स पत्नी सहितस्तदा ।। ५२ ।।

दक्षं प्रणम्य तान् सर्वान्मानसानभिवाद्य च ।।

यत्रात्मा गतवाञ्शंभुस्तत्स्थानं मन्मथो ययौ ।। ५३ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां सतीचरित्रे द्वितीये सतीखंडे वसंतस्वरूपवर्णनं नामाष्टमोऽध्यायः ।। ८ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः ०९



ब्रह्मोवाच ।।

तस्मिन् गते सानुचरे शिवस्थानं च मन्मथे ।।

चरित्रमभवच्चित्रं तच्छृणुष्व मुनीश्वर ।। १ ।।

गत्वा तत्र महावीरो मन्मथो मोहकारकः ।।

स्वप्रभावं ततानाशु मोहयामास प्राणिनः।।२।।

वसंतोपि प्रभावं स्वं चकार हरमोहनम् ।।

सर्वे वृक्षा एकदैव प्रफुल्ला अभवन्मुने ।। ३ ।।

विविधान्कृतवान्यत्नान् रत्या सह मनोभवः ।।

जीवास्सर्वे वशं यातास्सगणेशश्शिवो न हि ।। ४ ।।

समधोर्मदनस्यासन्प्रयासा निष्फला मुने ।।

जगाम स मम स्थानं निवृत्य विमदस्तदा ।।५।।

कृत्वा प्रणामं विधये मह्यं गद्गदया गिरा ।।

उवाच मदनो मां चोदासीनो विमदो मुने ।।६।।

काम उवाच ।।

ब्रह्मन् शंभुर्मोहनीयो न वै योगपरायणः ।।

न शक्तिर्मम नान्यस्य तस्य शंभोर्हि मोहने ।। ७ ।।

समित्रेण मया ब्रह्मन्नुपाया विविधाः कृताः ।।

रत्या सहाखिलास्ते च निष्फला अभवञ्छिवे ।।८।।

शृणु ब्रह्मन्यथाऽस्माभिः कृतां हि हरमोहने ।।

प्रयासा विविधास्तात गदतस्तान्मुने मम ।।९।।

यदा समाधिमाश्रित्य स्थितश्शंभुर्नियंत्रितः ।।

तदा सुगंधिवातेन शीतलेनातिवेगिना ।। 2.2.9.१० ।।

उद्वीजयामि रुद्रं स्म नित्यं मोहनकारिणा ।।

प्रयत्नतो महादेवं समाधिस्थं त्रिलोचनम् ।। ११ ।।

स्वसायकांस्तथा पंच समादाय शरासनम् ।।
तस्याभितो भ्रमंतस्तु मोहयंस्तद्ग णानहम् ।। १२ ।।
मम प्रवेशमात्रेण सुवश्यास्सर्वजंतवः ।।
अभवद्विकृतो नैव शंकरस्सगणः प्रभुः ।। १३ ।।
यदा हिमवतः प्रस्थं स गतः प्रमथाधिपः ।।
तत्रागतस्तदैवाहं सरतिस्समधुर्विधे ।। १४ ।।
यदा मेरुं गतो रुद्रो यदा वा नागकेशरम् ।।
कैलासं वा यदा यातस्तत्राहं गतवाँस्तदा ।। १५ ।।
यदा त्यक्तसमाधिस्तु हरस्तस्थौ कदाचन ।।
तदा तस्य पुरश्चक्रयुगं रचितवानहम् ।। ।। १६ ।।
तच्च भ्रूयुगलं ब्रह्मन् हावभावयुतं मुहुः ।।
नानाभावानकार्षीच्च दांपत्यक्रममुत्तमम् ।। १७ ।।
नीलकंठं महादेवं सगणं तत्पुरःस्थिताः ।।
अकार्षुमोहितं भावं मृगाश्च पक्षिणस्तथा ।। १८ ।।
मयूरमिथुनं तत्राकार्षीद्भावं रसोत्सुकम् ।।
विविधां गतिमाश्रित्य पार्श्वे तस्य पुरस्तथा ।। १९ ।।
नालभद्विवरं तस्मिन् कदाचिदपि मच्छरः ।।
सत्यं ब्रवीमि लोकेश मम शक्तिर्न मोहने ।। 2.2.9.२० ।।
मधुरप्यकरोत्कर्म युक्तं यत्तस्य मोहने ।।
तच्छृणुष्व महाभाग सत्यं सत्यं वदाम्यहम् ।। २१ ।।
चंपकान्केशरान्वालान्कारणान्पाटलांस्तथा ।।
नागकेशरपुन्नागान्किंशुकान्केतकान्करान् ।। २२ ।।
मागंधिमल्लिकापर्णभरान्कुरवकांस्तथा ।।
उत्फुल्लयति तत्र स्म यत्र तिष्ठति वै हरः ।।२३।।
सरांस्युत्फुल्लपद्मानि वीजयन् मलयानिलैः ।।
यत्रात्सुगंधीन्यकरोदतीव गिरिशाश्रमे ।। २४ ।।
लतास्सर्वास्सुमनसो दधुरंकुरसंचयान् ।।
वृक्षांकं चिरभावेन वेष्टयंति स्म तत्र च ।। २५ ।।

तान्वृक्षांश्च सुपुष्पौघान् तैः सुगंधिसमीरणैः ।।
दृष्ट्वा कामवशं याता मुनयोपि परे किमु ।। २६ ।।
एवं सत्यपि शंभोर्न दृष्टं मोहस्य कारणम् ।।
भावमात्रमकार्षीन्नो कोपो मय्यपि शंकरः ।। २७ ।।
इति सर्वमहं दृष्ट्वा ज्ञात्वा तस्य च भावनाम् ।।
विमुखोहं शंभुमोहान्नियतं ते वदाम्यहम् ।।२८।।
तस्य त्यक्तसमाधेस्तु क्षणं नो दृष्टिगोचरे ।।
शक्नुयामो वयं स्थातुं तं रुद्रं को विमोहयेत् ।। २९ ।।
ज्वलदग्निप्रकाशाक्षं जट्टाराशिकरालिनम् ।।
शृंगिणं वीक्ष्य कस्स्थातुं ब्रह्मन् शक्नोति तत्पुरः ।। 2.2.9.३० ।।
।। ब्रह्मोवाच ।।
मनो भववचश्चेत्थं श्रुत्वाहं चतुराननः ।।
विवक्षुरपि नावोचं चिंताविष्टोऽभवं तदा ।।३१।।
मोहनेहं समर्थो न हरस्येति मनोभवः ।।
वचः श्रुत्वा महादुःखान्निरश्वसमहं मुने ।। ३२ ।।
निश्श्वासमारुता मे हि नाना रूपमहाबलः ।।
जाता गता लोलजिह्वा लोलाश्चातिभयंकराः ।। ३३ ।।
अवादयंत ते सर्वे नानावाद्यानसंख्यकान् ।।
पटहादिगणास्तांस्तान् विकरालान्महारवान् ।।३४।।
अथ ते मम निश्श्वाससंभवाश्च महागणाः ।।
मारयच्छेदयेत्यूचुर्ब्रह्मणो मे पुरः स्थिताः ।। ३५ ।।
तेषां तु वदतां' तत्र मारयच्छेदयेति माम् ।।
वचः श्रुत्वा विधिं कामः प्रवक्तुमुपचक्रमे ।। ३६ ।।
मुनेऽथ मां समाभाष्य तान् दृष्ट्वा मदनो गणान् ।।
उवाच वारयन् ब्रह्मन्गणानामग्रतः स्मरः ।। ३७ ।।
काम उवाच ।।
हे ब्रह्मन् हे प्रजानाथ सर्वसृष्टिप्रवर्तक ।।
उत्पन्नाः क इमे वीरा विकराला भयंकराः ।। ३८ ।।

किं कर्मैते करिष्यंति कुत्र स्थास्यंति वा विधे ।।

किन्नामधेया एते तद्वद तत्र नियोजय ।। ३९ ।।

नियोज्य तान्निजे कृत्ये स्थानं दत्त्वा च नाम च ।।

मामाज्ञापय देवेश कृपां कृत्वा यथोचिताम् ।। 2.2.9.४० ।।

ब्रह्मोवाच ।।

इति तद्वाक्यमाकर्ण्य मुनेऽहं लोककारकः ।।

तमवोचं ह मदनं तेषां कर्मादिकं दिशन् ।। ४१ ।।

ब्रह्मोवाच ।।

एत उत्पन्नमात्रा हि मारयेत्यवदन् वचः ।।

मुहुर्मुहुरतोमीषां नाम मारेति जायताम् ।। ४२ ।।

सदैव विघ्नं जंतूनां करिष्यन्ति गणा इमे ।।

विना निजार्चनं काम नाना कामरतात्मनाम् ।।४३।।

तवानुगमने कर्म मुख्यमेषां मनोभव ।।

सहायिनो भविष्यंति सदा तव न संशयः ।। ४४ ।।

यत्रयत्र भवान् याता स्वकर्मार्थं यदा यदा ।।

गंता स तत्रतत्रैते सहायार्थं तदातदा ।।४५।।

चित्तभ्रांतिं करिष्यंति त्वदस्त्रवशवर्तिनाम् ।।

ज्ञानिनां ज्ञानमार्गं च विघ्नयिष्यंति सर्वथा ।। ४६ ।।

ब्रह्मोवाच ।।

इत्याकर्ण्य वचो मे हि सरतिस्समहानुगः ।।

किंचित्प्रसन्नवदनो बभूव मुनिसत्तम ।।४७।।

श्रुत्वा तेपि गणास्सर्वे मदनं मां च सर्वतः ।।

परिवार्य्य यथाकामं तस्थुस्तत्र निजाकृतिम् ।। ४८ ।।

अथ ब्रह्मा स्मरं प्रीत्याऽगदन्मे कुरु शासनम् ।।

एभिस्सहैव गच्छ त्वं पुनश्च हरमोहने ।।४९।।।

मन आधाय यवाद्धि कुरु मारगणैस्सह ।।

मोहो भवेद्यथा शंभोर्दारग्रहणहेतवे ।।2.2.9.५०।।

इत्याकर्ण्य वचः कामः प्रोवाच वचनं पुनः ।।
देवर्षे गौरवं मत्वा प्रणम्य विनयेन माम् ।।५१।।
काम उवाच ।।
मया सम्यक् कृतं कर्म मोहने तस्य यत्नतः ।।
तन्मोहो नाभवत्तात न भविष्यति नाधुना ।। ५२ ।।
तव वाग्गौरवं मत्वा दृष्ट्वा मारगणानपि ।।
गमिष्यामि पुनस्तत्र सदारोहं त्वदाज्ञया ।। ५३ ।।
मनो निश्चितमेतद्धि तन्मोहो न भविष्यति ।।
भस्म कुर्यान्न मे देहमिति शंकास्ति मे विधे ।। ५४ ।।
इत्युक्त्वा समधुः कामस्सरतिस्सभयस्तदा ।।
ययौ मारगणैः सार्द्धं शिवस्थानं मुनीश्वर ।। ५५ ।।
पूर्ववत् स्वप्रभावं च चक्रे मनसिजस्तदा ।।
बहूपायं स हि मधुर्विविधां बुद्धिमावहन् ।। ५६ ।।
उपायं स चकाराति तत्र मारगणोऽपि च ।।
मोहोभवन्न वै शंभोरपि कश्चित्परात्मनः ।। ५७ ।।
निवृत्य पुनरायातो मम स्थानं स्मरस्तदा ।।
आसीन्मारगणोऽगर्वोऽहर्षो मेपि पुरस्थितः ।। ५८ ।।
कामः प्रोवाच मां तात प्रणम्य च निरुत्सवः ।।
स्थित्वा मम पुरोऽगर्वो मारैश्च मधुना तदा ।।५९।।
कृतं पूर्वादधिकतः कर्म तन्मोहने विधे ।।
नाभवत्तस्य मोहोपि कश्चिद्ध्यानरतात्मनः ।। 2.2.9.६० ।।
न दग्धा मे तनुश्चैव तत्र तेन दयालुना ।।
कारणं पूर्वपुण्यं च निर्विकारी स वै प्रभुः ।। ६१ ।।
चेद्वरस्ते हरो भार्यां गृह्णीयादिति पद्मज ।।
परोपायं कुरु तदा विगर्व इति मे मतिः ।। ६२ ।।
ब्रह्मोवाच ।।
इत्युक्त्वा सपरीवारो ययौ कामस्स्वमाश्रमम् ।।

प्रणम्य मां स्मरन् शंभुं गर्वदं दीनवत्सलम् ।।६३।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां सतीखंडे सत्युपाख्याने कामप्रभावमारगणोत्पत्तिवर्णनो नाम नवमोऽध्यायः ।।९।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः १०

https://sa.wikisource.org/s/uu4



नारद उवाच।।

ब्रह्मन् विधे महाभाग धन्यस्त्वं शिवसक्तधीः।।

कथितं सुचरित्रं ते शंकरस्य परात्मनः।।१।।

निजाश्रमे गते कामे सगणे सरतौ ततः।।

किमासीत्किमकार्षीस्त्वं तच्चरित्रं वदाधुना ।।२।।

ब्रह्मोवाच।।

शृणु नारद सुप्रीत्या चरित्रं शशिमौलिनः।।

यस्य श्रवणमात्रेण निर्विकारो भवेन्नरः ।। ३ ।।

निजाश्रमं गते कामे परिवारसमन्विते।।

यद्बभूव तदा जातं तच्चरित्रं निबोध मे ।।४।।

नष्टोभून्नारद मदो विस्मयोऽभूच्च मे हृदि ।।

निरानंदस्य च मुनेऽपूर्णो निजमनोरथे।।५।।

अशोचं बहुधा चित्ते गृह्णीयात्स कथं स्त्रियम् ।।

निर्विकारी जितात्मा स शंकरो योगतत्परः।।६।।

इत्थं विचार्य बहुधा तदाहं विमदो मुने ।।

हरिं तं सोऽस्मरं भक्त्या शिवात्मानं स्वदेहदम् ।।७।।

अस्तवं च शुभस्तोत्रैर्दीनवाक्यसमन्वितैः।।

तच्छ्रुत्वा भगवानाशु बभूवाविर्हि मे पुरा।।८।।

चतुर्भुजोरविंदाक्षः शंखवार्ज गदाधरः।।

लसत्पीत पटश्श्यामतनुर्भक्तप्रियो हरिः ।। ९ ।।

तं दृष्ट्वा तादृशमहं सुशरण्यं मुहुर्मुहुः ।।

अस्तवं च पुनः प्रेम्णा बाष्पगद्गदया गिरा ।।2.2.10.१०।।

हरिराकर्ण्य तत्स्तोत्रं सुप्रसन्न उवाच माम् ।।

दुःखहा निजभक्तानां ब्रह्माणं शरणं गतम् ।। ११ ।।

हरिरुवाच ।।

विधे ब्रह्मन् महाप्राज्ञ धन्यस्त्वं लोककारक ।।

किमर्थं स्मरणं मेऽद्य कृतं च क्रियते नुतिः ।। १२।।

किं जातं ते महद्दुःखं मदग्रे तद्वदाधुना ।।

शमयिष्यामि तत्सर्वं नात्र कार्य्या विचारणा ।। १३ ।।

ब्रह्मोवाच ।।

इति विष्णोर्वचश्श्रुत्वा किंचिदुच्छ्वसिताननः ।।

अवोच वचनं विष्णुं प्रणम्य सुकृतांजलिः ।।१४ ।।

ब्रह्मोवाच ।।

देवदेव रमानाथ मद्वार्तां शृणु मानद ।।

श्रुत्वा च करुणां कृत्वा हर दुःखं कमावह ।।१५।।

रुद्रसंमोहनार्थं हि कामं प्रेषितवानहम् ।।

परिवारयुतं विष्णो समारमधुबांधवम् ।।१६।।

चक्रुस्ते विविधोपायान् निष्फला अभवंश्च ते ।।

अभवत्तस्य संमोहो योगिनस्समदर्शिनः ।।१७।।

इत्याकर्ण्य वचो मे स हरिर्मां प्राह विस्मितः ।।

विज्ञाताखिलदज्ञानी शिवतत्त्वविशारदः ।। १८ ।।

।। विष्णुरुवाच ।।

कस्माद्धेतोरिरिति मतिस्तव जाता पितामह ।।

सर्वं विचार्य सुधिया ब्रह्मन् सत्यं हि तद्वद ।। १९ ।।

ब्रह्मोवाच ।।

शृणु तात चरित्रं तत् तव माया विमोहिनी ।।

तदधीनं जगत्सर्वं सुखदुःखादितत्परम् ।।2.2.10.२०।।

ययैव प्रेषितश्चाहं पापं कर्तुं समुद्यतः ।।

आसं तच्छृणु देवेश वदामि तव शासनात् ।।२१।।

सृष्टिप्रारंभसमये दश पुत्रा हि जज्ञिरे ।।

दक्षाद्यास्तनया चैका वाग्भवाप्यतिसुन्दरी ।। २२ ।।

धर्मो वक्षःस्थलात्कामो मनसोन्योपि देहतः ।।

जातास्तत्र सुतां दृष्ट्वा मम मोहो भवद्धरे ।।२३।।

कुदृष्ट्या तां समद्राक्ष तव मायाविमोहितः ।।

तत्क्षणाद्धर आगत्य मामनिन्दत्सुतानपि ।।२४।।

धिक्कारं कृतवान् सर्वान्निजं मत्वा परप्रभुम् ।।

ज्ञानिनं योगिनं नाथाभोगिनं विजितेन्द्रियम्।।२५।।

पुत्रो भूत्वा मम हरेऽनिन्दन्मां च समक्षतः ।।

इति दुःखं महन्मे हि तदुक्तं तव सन्निधौ ।।२६।।

गृह्णीयाद्यदि पत्नीं स स्यां सुखी नष्टदुःखधी ।।

एतदर्थं समायातुश्शरणं तव केशव ।। २७ ।।

ब्रह्मोवाच ।।

इत्याकर्ण्य वचो मे हि ब्रह्मणो मधुसूदनः ।।

विहस्य मां द्रुतं प्राह हर्षयन्भवकारकम् ।। २८ ।।

विष्णुरुवाच ।।

विधे शृणु हि मद्वाक्यं सर्वं भ्रमनिवारणम् ।।

सर्वं वेदागमादीनां संमतं परमार्थतः ।। २९ ।।

महामूढमतिश्चाद्य संजातोसि कथं विधे ।।

वेदवक्तापि निखिललोककर्त्ता हि दुर्मतिः ।। 2.2.10.३० ।।

जडतां त्यज मन्दात्मन् कुरु त्वं नेदृशीं मतिम् ।।

किं ब्रुवंत्यखिला वेदाः स्तुत्या तत्स्मर सद्धिया ।। ३१ ।।

रुद्रं जानासि दुर्बुद्धे स्वसुतं परमेश्वरम् ।।

वेदवक्तापि विज्ञानं विस्मृतं तेखिलं विधे ।। ३२ ।।

शंकरं सुरसामान्यं मत्वा द्रोहं करोषि हि ।।

सुबुद्धिर्विगता तेद्याविर्भूता कुमतिस्तथा ।।३३।।

तत्त्वसिद्धांतमाख्यातं शृणु सद्बुद्धिमावह ।।

यथार्थं निगमाख्यातं निर्णीय भवकारकम् ।।३४।।

शिवस्सर्वस्वकर्ता हि भर्ता हर्ता परात्परः ।।

परब्रह्म परेशश्च निर्गुणो नित्य एव च । ३५ ।।

अनिर्देश्यो निर्विकारी परमात्माऽद्वयोऽच्युतः ।।

अनंतोंतकरः स्वामी व्यापकः परमेश्वरः ।। ३६ ।।

सृष्टिस्थितिविनाशानां कर्ता त्रिगुणभाग्विभुः ।।

ब्रह्मविष्णुमहेशाख्यो रजस्सत्त्व तमःपरः ।। ३७ ।।

मायाभिन्नो निरीहश्च मायो मायाविशारदः ।।

सगुणोपि स्वतंत्रश्च निजानंदो विकल्पकः ।। ३८ ।।

आत्मा रामो हि निर्द्वन्द्वो भक्ताधीनस्सुविग्रहः ।।

योगी योगरतो नित्यं योगमार्गप्रदर्शकः ।। ३९ ।।

गर्वापहारी लोकेशस्सर्वदा दीनवत्सलः ।।

एतादृशो हि यः स्वामी स्वपुत्रं मन्यसे हि तम् ।। 2.2.10.४० ।।

ईदृशं त्यज कुज्ञानं शरणं व्रज तस्य वै ।।

भज सर्वात्मना शम्भुं सन्तुष्टश्शं विधास्यति ।। ४१ ।।

गृह्णीयाच्छंकरः पत्नीं विचारो हृदि चेत्तव ।।

शिवामुद्दिश्य सुतपः कुरु ब्रह्मन् शिवं स्मरन् ।।४२।।

कुरु ध्यानं शिवायात्स्वं काममुद्दिश्य तं हृदि ।।

सा चेत्प्रसन्ना देवेशी सर्वं कार्यं विधास्यति ।।४३।।

कृत्वावतारं सगुणा यदि स्यान्मानुषी शिवा ।।

कस्यचित्तनया लोके सा तत्पत्नी भवेद्ध्रुवम्।।४४।।

दक्षमाज्ञापय ब्रह्मन् तपः कुर्य्यात्प्रयत्नतः ।।

तामुत्पादयितुं पत्नीं शिवार्थं भक्तितत्स्वतः ।।४५।।

भक्ताधीनौ च तौ तात सुविज्ञेयौ शिवाशिवौ ।।

स्वेच्छया सगुणौ जातौ परब्रह्मस्वरूपिणौ ।। ४६।।

ब्रह्मोवाच ।। ।।

इत्युक्त्वा तत्क्षणं मेशश्शिवं सस्मार स्वप्रभुम् ।।

कृपया तस्य संप्राप्य ज्ञानमूचे च मां ततः ।। ४७ ।।

विष्णुरुवाच ।।

विधे स्मर पुरोक्तं यद्वचनं शंकरेण च ।।

प्रार्थितेन यदावाभ्यामुत्पन्नाभ्यां तदिच्छया ।। ४८ ।।

विस्मृतं तव तत्सर्वं धन्या या शांभवी परा ।।

तया संमोहितं सर्वं दुर्विज्ञेया शिवं विना ।। ४९ ।।

यदा हि सगुणो जातस्स्वेच्छया निर्गुणश्शिवः ।।

मामुत्पाद्य ततस्त्वां च स्वशक्त्या सुविहारकृत् ।। 2.2.10.५० ।।

उपादिदेश त्वां शम्भुस्सृष्टिकार्यं तदा प्रभुः ।।

तत्पालनं च मां ब्रह्मन् सोमस्सूतिकरोऽव्ययः ।। ५१ ।।

तदा वां वेश्म संप्राप्तौ सांजली नतमस्तकौ ।।

भव त्वमपि सर्वेशोऽवतारी गुणरूपधृक् ।।५२।।

इत्युक्तः प्राह स स्वामी विहस्य करुणान्वितः ।।

दिवमुद्वीक्ष्य सुप्रीत्या नानालीलाविशारदः ।। ।।५३।।

मद्रूपं परमं विष्णो ईदृशं ह्यंगतो विधेः ।।

प्रकटीभविता लोके नाम्ना रुद्रः प्रकीर्तितः ।। ५४ ।।

पूर्णरूपस्स मे पूज्यस्सदा वां सर्वकामकृत् ।।

लयकर्त्ता गुणाध्यक्षो निर्विशेषः सुयोगकृत् ।। ५५ ।।

त्रिदेवा अपि मे रूपं हरः पूर्णो विशेषतः ।।

उमाया अपि रूपाणि भविष्यंति त्रिधा सुताः ।।५६।।

लक्ष्मीर्नाम हरेः पत्नी ब्रह्मपत्नी सरस्वती ।।

पूर्णरूपा सती नाम रुद्रपत्नी भविष्यति।।५७।।

विष्णुरुवाच ।।

इत्युक्त्वांतर्हितो जातः कृपां कृत्वा महेश्वरः ।।

अभूतां सुखिनावावां स्वस्वकार्यपरायणौ ।। ५८ ।।

समयं प्राप्य सस्त्रीकावावां ब्रह्मन्न शंकरः।।

अवतीर्णस्स्वयं रुद्रनामा कैलाससंश्रयः।।५९।।

अवतीर्णा शिवा स्यात्सा सतीनाम प्रजेश्वर।।

तदुत्पादनहेतोर्हि यत्नोतः कार्य एव वै ।।2.2.10.६०।।

इत्युक्त्वांतर्दधे विष्णुः कृत्वा स करुणां परम् ।।

प्राप्नुवं प्रमुदं चाथ ह्यधिकं गतमत्सरः।। ।। ६१ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसहितायां द्वितीये सतीखण्डे ब्रह्मविष्णुसंवादो नाम दशमोऽध्यायः।।१०।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः ११



नारद उवाच ।।

ब्रह्मन् तात महाप्राज्ञ वद नो वदतां वर।।

गते विष्णौ किमभवदकार्षीत्किं विधे भवान्।।१।।

ब्रह्मोवाच ।।

विप्रनन्दनवर्य त्वं सावधानतया शृणु ।।

विष्णौ गते भगवति यदकार्षमहं खलु ।।२।।

विद्याविद्यात्मिकां शुद्धां परब्रह्मस्वरूपिणीम् ।।

स्तौमि देव जगद्धात्रीं दुर्गां शम्भुप्रियां सदा ।।३।।

सर्वत्र व्यापिनीं नित्यां निरालंबां निराकुलाम्।।

त्रिदेवजननीं वंदे स्थूलस्थूलामरूपिणीम्।। ।।४।।

त्वं चितिः परमानंदा परमात्मस्वरूपिणी ।।

प्रसन्ना भव देवेशि मत्कार्यं कुरु ते नमः ।।५।।

ब्रह्मोवाच ।।

एवं संस्तूयमाना सा योगनिद्रा मया मुने ।।

आविर्बभूव प्रत्यक्षं देवर्षे चंडिका मम ।। ६ ।।

स्निग्धांजनद्युतिश्चारुरूपा दिव्यचतुर्भुजा ।।

सिंहस्था वरहस्ता च मुक्तामणिकचोत्कटा ।। ७ ।।

शरदिंद्वानना शुभ्रचन्द्रभाला त्रिलोचना ।।

सर्वावयवरम्या च कमलांघ्रिनखद्युतिः।।८।।

समक्षं तामुमां वीक्ष्य मुने शक्तिं शिवस्य हि ।।

भक्त्या विनततुंगांशः प्रास्तवं सुप्रणम्य वै ।। ९ ।।

ब्रह्मोवाच ।।

नमो नमस्ते जगतःप्रवृत्तिनिवृतिरूपे स्थितिसर्गरूपे ।।

चराचराणां भवती सुशक्तिस्सनातनी सर्वविमोहनीति ।। 2.2.11.१० ।।

या श्रीः सदा केशवमूर्तिमाला विश्वंभरा या सकलं बिभर्ति।।
या त्वं पुरा सृष्टिकरी महेशी हर्त्री त्रिलोकस्य परा गुणेभ्य ।।११।।
या योगिनां वै महिता मनोज्ञा सा त्वं न ते परमाणुसारे ।।
यमादिपूते हृदि योगिनां या या योगिनां ध्यानपथे प्रतीता ।। १२ ।।
प्रकाशशुद्ध्यादियुता विरागा सा त्वं हि विद्या विविधावलंबा ।।
कूटस्थमव्यक्तमनंतरूपं त्वं बिभ्रती कालमयी जगंति ।। १३ ।।
विकारबीजं प्रकरोपि नित्यं गुणान्विता सर्वजनेषु नूनम् ।।
त्वं वै गुणानां च शिवे त्रयाणां निदानभूता च ततः परासि ।। १४ ।।
सत्वं रजस्तामस इत्यमीषां विकारहीना समु वस्तितीर्या ।।
सा त्वं गुणानां जगदेकहेतुं ब्रह्मांतरारंभसि चात्सि पासि ।। १५ ।।
अशेषजगतां बीजे ज्ञेयज्ञानस्वरूपिणि ।।
जगद्धिताय सततं शिवपत्नि नमोस्तु ते ।।१६।।
ब्रह्मोवाच।।
इत्याकर्ण्य वचः सा मे काली लोक विभाविनी ।।
प्रीत्या मां जगतामूचे स्रष्टारं जनशब्दवत् ।।१७।।
देव्युवाच ।।
ब्रह्मन्किमर्थं भवता स्तुताहमवधारय ।।
उच्यतां यदि धृष्योसि तच्छीघ्रं पुरतो मम ।। १८ ।।
प्रत्यक्षमपि जातायां सिद्धिः कार्यस्य निश्चिता ।।
तस्मात्त्वं वांछितं ब्रूहि या करिष्यामि भाविता ।। १९ ।।
ब्रह्मोवाच ।।
शृणु देवि महेशानि कृपां कृत्वा ममोपरि ।।
मनोरथस्थं सर्वज्ञे प्रवदामि त्वदाज्ञया ।। 2.2.11.२० ।।
यः पतिस्तव देवेशि ललाटान्मेऽभवत्पुरा ।।
शिवो रुद्राख्यया योगी स वै कैलासमास्थितः ।।२१।।
तपश्चरति भूतेश एक एवाविकल्पकः ।।
अपत्नीको निर्विकारो न द्वितीयां समीहते ।। २२ ।।
तं मोहय यथा चान्यां द्वितीयां सति वीक्षते ।।

त्वदृते तस्य नो काचिद्भविष्यति मनोहरा ।।२३।।
तस्मात्त्वमेव रूपेण भवस्व हरमोहिनी।।
सुता भूत्वा च दक्षस्य रुद्रपत्नी शिवे भव।।२४।।
यथा धृतशरीरा त्वं लक्ष्मीरूपेण केशवम्।।
आमोदयसि विश्वस्य हितायैतं तथा कुरु।।२५।।
कांताभिलाषमात्रं मे दृष्ट्वाऽनिंदद्वृषध्वजः ।।
स कथं वनितां देवी स्वेच्छया संग्रहीष्यति ।।२६।
हरे गृहीतकांते तु कथं सृष्टिश्शुभावहा ।।
आद्यंतमध्ये चैतस्य हेतौ तस्मिन्विरागिणि ।।२७।।
इति चिंतापरो नाहं त्वदन्यं शरणं हितम्।।
कृच्छ्रवांस्तेन विश्वस्य हितायैतत्कुरुष्व मे।।२८।।
न विष्णुस्तस्य मोहाय न लक्ष्मीर्न मनोभवः।।
न चाप्यहं जगन्मातर्नान्यस्त्वां कोपि वै विना ।।२९।।
तस्मात्त्वं दक्षजा भूत्वा दिव्यरूपा महेश्वरी ।।
तत्पत्नी भव मद्भक्त्या योगिनं मोहयेश्वरम् ।।2.2.11.३०।।
दक्षस्तपति देवेशि क्षीरोदोत्तरतीरगः।।
त्वामुद्दिश्य समाधाय मनस्त्वयि दृढव्रतः ।।३१।।
ब्रह्मोवाच।।
इत्याकर्ण्य वचस्सा चिंतामाप शिवा तदा।।
उवाच च स्वमनसि विस्मिता जगदम्बिका।।३२।।
देव्युवाच ।।
अहो सुमहदाश्चर्यं वेदवक्तापि विश्वकृत् ।।
महाज्ञानपरो भूत्वा विधाता किं वदत्ययम् ।।३३।।
विधेश्चेतसि संजातो महामोहोऽसुखावहः ।।
यद्वरं निर्विकारं तं संमोहयितुमिच्छति ।।३४।।
हरमोहवरं मत्तस्समिच्छति विधिस्त्वयम् ।।
को लाभोस्यात्र स विभुर्निर्मोहो निर्विकल्पकः ।।३५।।
परब्रह्माख्यो यश्शंभुर्निर्गुणो निर्विकारवान् ।।

तस्याहं सर्वदा दासी तदाज्ञावशगा सदा ।।३६।।

स एव पूर्णरूपेण रुद्रनामाभवच्छिवः ।।

भक्तोद्धारणहेतोर्हि स्वतंत्रः परमेश्वरः ।।३७।।

हरेर्विधेश्च स स्वामी शिवान्न्यूनो न कर्हिचित् ।।

योगादरो ह्यमायस्थो मायेशः परतः परः ।।३८।।

मत्वा तमात्मजं ब्रह्मा सामान्यसुरसंनिभम् ।।

इच्छत्ययं मोहयितुमतोऽज्ञानविमोहितः ।। ३९ ।।

न दद्यां चेद्वरं वेदनीतिर्भ्रष्टा भवेदिति ।।

किं कुर्यां येन न विभुः क्रुद्धस्स्यान्मे महेश्वरः ।।2.2.11.४०।।

ब्रह्मो वाच ।।

विचार्य्येत्थं महेशं तं सस्मार मनसा शिवा ।।

प्रापानुज्ञां शिवस्याथोवाच दुर्गा च मां तदा ।। ४१ ।।

।। दुर्गोवाच ।।

यदुक्तं भवता ब्रह्मन् समस्तं सत्यमेव तत् ।।

मदृते मोहयित्रीह शंकरस्य न विद्यते ।। ४२ ।।

हरेऽगृहीतदारे तु सृष्टिनैषा सनातनी ।।

भविष्यतीति तत्सत्यं भवता प्रतिपादितम् ।।४३ ।।

ममापि मोहने यन्नो विद्यतेस्य महाप्रभोः ।।

त्वद्वाक्याद्विगुणो मेद्य प्रयत्नोऽभूत्स निर्भरः ।। ४४ ।।

अहं तथा यतिष्यामि यथा दारपरिग्रहम् ।।

हरः करिष्यति विधे स्वयमेव विमोहितः ।। ४५ ।।

सतीमूर्तिमहं धृत्वा तस्यैव वशवर्तिनी ।।

भविष्यामि महाभागा लक्ष्मीर्विष्णोर्यथा प्रिया।।४६।।

यथा सोपि मयैवेय वशवर्ती सदा भवेत्।।

तथा यत्नं करिष्यामि तस्यैव कृपया विधे।।४७।।

उत्पन्ना दक्षजायायां सतीरूपेण शंकरम्।।

अहं सभाजयिष्यामि लीलया तं पितामह ।।४८।।

यथान्यजंतुरवनौ वर्तते वनितावशे ।।

मद्भक्त्या स हरो वामावशवर्ती भविष्यति ।।४९।।

ब्रह्मोवाच ।।

मह्यमित्थं समाभाष्य शिवा सा जगदम्बिका।।

वीक्ष्यमाणा मया तात तत्रैवांतर्दधे ततः।।2.2.11.५०।।

तस्यामंतर्हितायां तु सोहं लोकपितामहः।।

अगमं यत्र स्वसुतास्तेभ्यस्सर्वमवर्णयम् ।। ५१ ।।

इति श्रीशिवपुराणे द्वितीयायां रुद्रसंहितायां सतीखण्डे दुर्गास्तुतिब्रह्मवरप्राप्तिवर्णनो नामेकादशोऽध्यायः ।। ११ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः १२



नारद उवाच ।।

ब्रह्मन् शंभुवर प्राज्ञ सम्यगुक्तं त्वयानघ ।।

शिवाशिवचरित्रं च पावितं जन्म मे हितम् ।। १ ।।

इदानीं वद दक्षस्तु तपः कृत्वा दृढव्रतः ।।

कं वरं प्राप देव्यास्तु कथं सा दक्षजाऽभवत् ।। २ ।।

ब्रह्मोवाच ।।

शृणु नारद धन्यस्त्वं मुनिभिर्भक्तितोखिलैः ।।

यथा तेपे तपो दक्षो वरं प्राप च सुव्रतः ।। ३ ।।

मदाज्ञप्तस्सुधीर्दक्षस्समाधाय महाधिपः ।।

अपाद्यष्टुं च तां देवीं तत्कामो जगदंबिकाम् ।। ४ ।।

क्षीरोदोत्तरतीरस्थां तां कृत्वा हृदयस्थिताम् ।।

तपस्तप्तुं समारेभे द्रष्टुं प्रत्यक्षतोम्बिकाम् ।। ५ ।।

दिव्यवर्षेण दक्षस्तु सहस्राणां त्रयं समाः ।।

तपश्चचार नियतस्सं यतात्मा दृढव्रतः ।। ।। ६ ।।

मारुताशी निराहारो जलाहारी च पर्णभुक् ।।

एवं निनाय तं कालं चिंतयन्तां जगन्मयीम् ।। ७ ।।

दुर्गाध्यानसमासक्तश्चिरं कालं तपोरतः ।।

नियमैर्बहुभिर्देवीमाराधयति सुव्रतः ।। ८ ।।

ततो यमादियुक्तस्य दक्षस्य मुनिसत्तम ।।

जगदम्बा पूजयतः प्रत्यक्षमभवच्छिवा ।। ९ ।।

ततः प्रत्यक्षतो दृष्ट्वा जगदम्बां जगन्मयीम् ।।

कृतकृत्यमथात्मानं मेने दक्षः प्रजापतिः ।। 2.2.12.१० ।।

सिंहस्थां कालिकां कृष्णां चारुवक्त्रां चतुर्भुजाम् ।।

वरदाभयनीलाब्जखड्गहस्तां मनोहराम् ।। ११ ।।

आरक्तनयनां चारुमुक्तकेशीं जगत्प्रसूम् ।

तुष्टाव वाग्भिश्चित्राभिः सुप्रणम्याथ सुप्रभाम् ।। १२ ।।

दक्ष उवाच ।।

जगदेव महामाये जगदीशे महेश्वरि ।।

कृपां कृत्वा नमस्तेस्तु दर्शितं स्ववपुर्मम।।१३।।

प्रसीद भगवत्याद्ये प्रसीद शिवरूपिणम् ।।

प्रसीद भक्तवरदे जगन्माये नमोस्तु ते ।।१४।।

ब्रह्मोवाच ।।

इति स्तुता महेशानी दक्षेण प्रयतात्मना ।।

उवाच दक्षं ज्ञात्वापि स्वयं तस्येप्सितं मुने ।। १५ ।।

देव्युवाच ।।

तुष्टाहं दक्ष भवतस्सद्भक्त्या ह्यनया भृशम् ।।

वरं वृणीष्व स्वाभीष्टं नादेयं विद्यते तव ।।१६।।

ब्रह्मोवाच ।।

जगदम्बावचश्श्रुत्वा ततो दक्षः प्रजापतिः ।।

सुप्रहृष्टतरः प्राह नामं नामं च तां शिवाम् ।।१७।।

दक्ष उवाच।।

जगदम्बा महामाये यदि त्वं वरदा मम।।

मद्वचः शृणु सुप्रीत्या मम कामं प्रपूरय।।१८।।

मम स्वामी शिवो यो हि स जातो ब्रह्मणस्तुतः ।।

रुद्रनामा पूर्णरूपावतारः परमात्मनः ।। १९।।

तवावतारो नो जातः का तत्पत्नी भवेदतः ।।

तं मोहय महेशानमवतीर्य क्षितौ शिवे ।।2.2.12.२० ।।

त्वदृते तस्य मोहाय न शक्तान्या कदाचन ।।

तस्मान्मम सुता भूत्वा हरजायाभवाऽधुना ।।२१।।

इत्थं कृत्वा सुलीला च भव त्वं हर मोहिनी ।।

ममैवैष वरो देवि सत्यमुक्तं तवाग्रतः ।।२२।।

केवलं स्वार्थमिति च सर्वेषां जगतामपि ।।

ब्रह्मविष्णुशिवानां च ब्रह्मणा प्रेरितो ह्यहम् ।। २३ ।।

ब्रह्मोवाच ।।

इत्याकर्ण्य प्रजेशस्य वचनं जगदम्बिका ।।

प्रत्युवाच विहस्येति स्मृत्वा तं मनसा शिवम्।। २४।।

देव्युवाच।।

तात प्रजापते दक्ष शृणु मे परमं वचः।।

सत्यं ब्रवीमि त्वद्भक्त्या सुप्रसन्नाखिलप्रदा ।।२५।।

अहं तव सुता दक्ष त्वज्जायायां महेश्वरी।।

भविष्यामि न संदेहस्त्वद्भक्तिवशवर्तिनी।।२६।।

तथा यत्नं करिष्यामि तपः कृत्वा सुदुस्सहम् ।।

हरजाया भविष्यामि तद्वरं प्राप्य चानघ ।।२७।।

नान्यथा कार्यसिद्धिर्हि निर्विकारी च स प्रभुः ।।

विधेर्विष्णोश्च संसेव्यः पूर्ण एव सदाशिवः ।।२८।।

अहं तस्य सदा दासी प्रिया जन्मनि जन्मनि ।।

मम स्वामी स वै शंभुर्नानारूपधरोपि ह ।। २९ ।।

वरप्रभावाद्भ्रुकुटेरवतीर्णो विधेस्म च ।।

अहं तद्वरतोपीहावतरिष्ये तदाज्ञया ।।2.2.12.३०।।

गच्छ स्वभवनं तात मया ज्ञाता तु दूतिका ।।

हरजाया भविष्यामि भूता ते तनयाचिरात् ।।३१।।

इत्युक्त्वा सद्वचो दक्षं शिवाज्ञां प्राप्य चेतसि ।।

पुनः प्रोवाच सा देवी स्मृत्वा शिवपदाम्बुजम् ।।३२।।

परन्तु पण आधेयो मनसा ते प्रजापते ।।

श्रावयिष्यामि ते तं वै सत्यं जानीहि नो मृषा ।।३३।।

यदा भवान् मयि पुनर्भवेन्मंदादरस्तपा ।।

देहं त्यक्ष्ये निजं सत्यं स्वात्मन्यस्म्यथ वेतरम् ।। ३४ ।।

एष दत्तस्तव वरः प्रतिसर्गं प्रजापते ।।

अहं तव सुता भूत्वा भविष्यामि हरप्रिया ।। ३५ ।।

ब्रह्मोवाच ।। एवमुक्त्वा महेशानी दक्षं मुख्यप्रजापतिम् ।।

अंतर्दधे द्रुतं तत्र सम्यग् दक्षस्य पश्यतः ।।३६।।

अंतर्हितायां दुर्गायां स दक्षोपि निजाश्रमम् ।।

जगाम च मुदं लेभे भविष्यति सुतेति सा ।।३७।।

इति श्रीशिवमहा पुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे दक्षवरप्राप्तिवर्णनो नाम द्वादशोऽध्यायः ।।१२।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः १३

https://sa.wikisource.org/s/uu7
< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः २ (सतीखण्डः)

नारद उवाच ।।

ब्रह्मन्विधे महा प्राज्ञ वद नो वदतां वर ।।

दक्षे गृहं गते प्रीत्या किमभूत्तदनंतरम् ।। १ ।।

ब्रह्मोवाच ।।

दक्षः प्रजापतिर्गत्वा स्वाश्रमं हृष्टमानसः ।।

सर्गं चकार बहुधा मानसं मम चाज्ञया ।। २ ।।

तमबृंहितमालोक्य प्रजासर्गं प्रजापतिः ।।

दक्षो निवेदयामास ब्रह्मणे जनकाय मे ।। ३ ।।

दक्ष उवाच ।।

ब्रह्मंस्तात प्रजानाथ वर्द्धन्ते न प्रजाः प्रभो ।।

मया विरचितास्सर्वास्तावत्यो हि स्थिताः खलु ।। ४ ।।

किं करोमि प्रजानाथ वर्द्धेयुः कथमात्मना ।।

तदुपायं समाचक्ष्व प्रजाः कुर्यां न संशयः ।। ५ ।।

ब्रह्मोवाच ।।

दक्ष प्रजापते तात शृणु मे परमं वचः ।।

तत्कुरुष्व सुरश्रेष्ठ शिवस्ते शं करिष्यति ।।६।।

या च पञ्चजनस्यांग सुता रम्या प्रजापतेः ।।

असिक्नी नाम पत्नीत्वे प्रजेश प्रतिगृह्यताम् ।।७।।

वामव्यवायधर्मस्त्वं प्रजासर्गमिमं पुनः ।।

तद्विधायां च कामिन्यां भूरिशो भावयिष्यसि ।।८।।

ब्रह्मोवाच ।।

ततस्समुत्पादयितुं प्रजा मैथुनधर्मतः ।।

उपयेमे वीरणस्य निदेशान्मे सुतां ततः ।।९।।

अथ तस्यां स्वपत्न्यां च वीरिण्यां स प्रजापतिः ।।

हर्यश्वसंज्ञानयुतं दक्षः पुत्रानजीजनत् ।। 2.2.13.१० ।।
अपृथग्धर्मशीलास्ते सर्व आसन् सुता मुने ।।
पितृभक्तिरता नित्यं वेदमार्गपरायणाः ।। ११ ।।
पितृप्रोक्ताः प्रजासर्गकरणार्थं ययुर्दिशम् ।।
प्रतीचीं तपसे तात सर्वे दाक्षायणास्सुताः ।।१२।।
तत्र नारायणसरस्तीर्थं परमपावनम्।।
गमो यत्र संजातो दिव्यसिन्धुसमुद्रयोः ।। १३ ।।
तदुपस्पर्शनादेव प्रोत्पन्नमतयोऽ भवन् ।।
धर्मे पारमहंसे च विनिर्द्धूतमलाशयाः ।।१४।।
प्रजाविवृद्धये ते वै तेपिर तत्र सत्तमाः ।।
दाक्षायणा दृढात्मानः पित्रादेश सुयंत्रिताः ।। १५ ।।
त्वं च तान् नारद ज्ञात्वा तपतस्सृष्टि हेतवे ।।
अगमस्तत्र भूरीणि हार्दमाज्ञाय मापतेः ।। १६ ।।
अदृष्ट्वा तं भुवस्सृष्टि कथं कर्तुं समुद्यताः ।।
हर्यश्वा दक्षतनया इत्यवोचस्तमादरात् ।। १७ ।।
ब्रह्मोवाच ।।
तन्निशम्याथ हर्यश्वास्ते त्वदुक्तमतंद्रिताः ।।
औत्पत्तिकधियस्सर्वे स्वयं विममृशुर्भृशम् ।।१८ ।।
सुशास्त्रजनकादेशं यो न वेद निवर्तकम्।।
स कथं गुणविश्रंभी कर्तुं सर्गमुपक्रमेत्।। १९।।
इति निश्चित्य ते पुत्रास्सुधियश्चैकचेतसः ।।
प्रणम्य तं परिक्रम्यायुर्मार्गमनिवर्तकम्।।2.2.13.२०।।
नारद त्वं मनश्शंभोर्लोकानन्यचरो मुने ।।
निर्विकारो महेशानमनोवृत्तिकरस्तदा ।। २१ ।।
काले गते बहुतरे मम पुत्रः प्रजापतिः ।।
नाशं निशम्य पुत्राणां नारदादन्वतप्यत ।। २२ ।।
मुहुर्मुहुरुवाचेति सुप्रजात्वं शुचां पदम् ।।
शुशोच बहुशो दक्षश्शिवमायाविमोहितः ।।२३।।

अहमागत्य सुप्रीत्या सांत्वयं दक्षमात्मजम् ।।
शांतिभावं प्रदर्श्यैव देवं प्रबलमित्युत ।। २४ ।।
अथ दक्षः पंचजन्या मया स परिसांत्वितः ।।
सबलाश्वाभिधान्् पुत्रान् सहस्रं चाप्यजीजनत् ।। २५ ।।
तेपि जग्मुस्तत्र सुताः पित्रादिष्टा दृढव्रताः ।।
प्रजासर्गे अत्र सिद्धास्स्वपूर्वभ्रातरो ययुः ।। २६ ।।
तदुपस्पर्शनादेव नष्टाघा विमलाशयाः ।।
तेपुर्महत्तपस्तत्र जपन्तो ब्रह्म सुव्रताः ।। ।। २७ ।।
प्रजासर्गोद्यतांस्तान् वै ज्ञात्वा गत्वेति नारद ।।
पूर्ववच्चागदो वाक्यं संस्मरन्नैश्वरीं गतिम् ।। २८ ।।
भ्रातृपंथानमादिश्य त्वं मुने मोघदर्शनः ।।
अयाश्चोर्द्ध्वगतिं तेऽपि भ्रातृमार्गं ययुस्सुताः ।। २९ ।।
उत्पातान् बहुशोऽपश्यत्तदैव स प्रजापतिः ।।
विस्मितोभूत्स मे पुत्रो दक्षो मनसि दुःखितः ।। 2.2.13.३० ।।
पूर्ववत्त्वत्कृतं दक्षश्शुश्राव चकितो भृशम् ।।
पुत्रनाशं शुशोचाति पुत्रशोक विमूर्छितः ।। ३१ ।।
चुक्रोध तुभ्यं दक्षोसौ दुष्टोयमिति चाब्रवीत् ।।
आगतस्तत्र दैवात्त्वमनुग्रहकरस्तदा ।। ३२ ।।
शोकाविष्टस्स दक्षो हि रोषविस्फुरिताधरः ।।
उपलभ्य तमाहत्य धिग्धिक् प्रोच्य विगर्हयन् ।। ३३ ।।
दक्ष उवाच ।।
किं कृतं तेऽधमश्रेष्ठ साधूनां साधुलिंगतः ।।
भिक्षोमार्गोऽर्भकानां वै दर्शितस्साधुकारि नो ।।३४।।
ऋणैस्त्रिभिरमुक्तानां लोकयोरुभयोः कृतः ।।
विघातश्श्रेयसोऽमीषां निर्दयेन शठेन ते ।।३५।।
ऋणानि त्रीण्यपाकृत्य यो गृहात्प्रव्रजेत्पुमान्।।
मातरं पितरं त्यक्त्वा मोक्षमिच्छन्व्रजत्यधः ।।३६।।
निर्दयस्त्वं सुनिर्लज्जश्शिशुधीभिद्यशोऽपहा।।

हरेः पार्षदमध्ये हि वृथा चरसि मूढधीः ।।३७।।

मुहुर्मुहुरभद्रं त्वमचरो मेऽधमा ऽधम ।।

विभवेद्भ्रमतस्तेऽतः पदं लोकेषु स्थिरम्।।३८।।

शशापेति शुचा दक्षस्त्वां तदा साधुसंमतम्।।

बुबोध नेश्वरेच्छां स शिवमायाविमोहितः ।।३९।।

शापं प्रत्यग्रहीश्च त्वं स मुने निर्विकारधीः ।।

एष एव ब्रह्मसाधो सहते सोपि च स्वयम्।।2.2.13.४०।।

इति श्रीशिव महापुराणे द्वितीयायां रुद्रसंहितायां द्वि० सतीखंडे दक्षसृष्टौ नारदशापो नाम त्रयोदशोऽध्यायः

।। १३ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः १४



ब्रह्मोवाच ।। ।।

एतस्मिन्नन्तरे देवमुने लोकपितामह ।।

तत्रागममहं प्रीत्या ज्ञात्वा तच्चरितं द्रुतम् ।।१।।

असांत्वयमहं दक्षं पूर्ववत्सुविचक्षणः ।।

अकार्षं तेन सुस्नेहं तव सुप्रीतिमावहन् ।।२।।

स्वात्मजं मुनिवर्यं त्वां सुप्रीत्या देववल्लभम्।।

समाश्वास्य समादाय प्रत्यपद्ये स्वधाम ह।।३।।

ततः प्रजापतिर्दक्षोऽनुनीतो मे निजस्त्रियाम् ।।

जनयामास दुहितृस्सुभगाः षष्टिसंमिताः ।।४।।

तासां विवाहकृतवान्धर्मादिभिरतंद्रितः ।।

तदेव शृणु सुप्रीत्या प्रवदामि मुनीश्वर ।।५।।

ददौ दश सुता दक्षो धर्माय विधिवन्मुने ।।

त्रयोदश कश्यपाय मुनये त्रिनवेंदवे ।। ६ ।।

भूतांगिरः कृशाश्वेभ्यो द्वेद्वे पुत्री प्रदत्तवान् ।।

ताक्ष्र्याय चापरः कन्या प्रसूतिप्रसवैर्यतः ।।७।।

त्रिलोकाः पूरितास्तन्नो वर्ण्यते व्यासतो भयात् ।। ८ ।।

केचिद्वदंति तां ज्येष्ठां मध्यमां चापरे शिवाम् ।।

सर्वानन्तरजां केचित्कल्पभेदात्त्रयं च सत ।।९।।

अनंतरं सुतोत्पत्तेः सपत्नीकः प्रजापतिः ।।

दक्षो दधौ सुप्रीत्मा तां मनसा जगदम्बिकाम् ।।2.2.14.१०।।

अतः प्रेम्णा च तुष्टाव गिरा गद्गदया हि सः ।।

भूयोभूयो नमस्कृत्य सांजलिर्विनयान्वितः ।। ११ ।।

सन्तुष्टा सा तदा देवी विचारं मनसीति च ।।

चक्रेऽवतारं वीरिण्यां कुर्यां पणविपूर्तये ।। १२ ।।

अथ सोवास मनसि दक्षस्य जगदम्बिका ।।
विललास तदातीव स दक्षो मुनिसत्तम ।। १३ ।।
सुमुहूर्तेनाथ दक्षोऽपि स्वपत्न्यां निदधे मुदा ।।
दक्षपत्न्यास्तदा चित्ते शिवोवास दयान्विता ।। १४ ।।
आविर्बभूवुश्चिह्नानि दोहदस्याखिलानि वै ।। १५ ।।
विरेजे वीरिणी तात हृष्टचित्ताधिका च सा ।।
शिवावासप्रभावात्तु महामंगल रूपिणी ।। १५ ।।
कुलस्य संपदश्चैव श्रुतेश्चितसमुन्नतेः ।।
व्यधत्त सुक्रिया दक्षः प्रीत्या पुंसवनादिकाः ।। १७ ।।
उत्सवोतीव संजातस्तदा तेषु च कर्मसु ।।
वित्तं ददौ द्विजातिभ्यो यथाकामं प्रजापतिः ।। १८ ।।
अथ तस्मिन्नवसरे सर्वे हर्यादयस्सुराः ।।
ज्ञात्वा गर्भगतां देवीं वीरिण्यास्ते मुदं ययुः ।।१९।।
तत्रागत्य च सर्वे ते तुष्टुवुर्जगदम्बिकाम् ।।
लोकोपकारकरिणीं प्रणम्य च मुहुर्मुहुः ।।2.2.14.२०।।
कृत्वा ततस्ते बहुधा प्रशंसां हृष्टमानसाः ।।
दक्षप्रजापतेश्चैव वीरिण्यास्स्वगृहं ययुः ।।२१।।
गतेषु नवमासेषु कारयित्वा च लौकिकीम् ।।
गतिं शिवा च पूर्णे सा दशमे मासि नारद ।। २२ ।।
आविर्बभूव पुरतो मातुस्सद्यस्तदा मुने।।
मुहूर्ते सुखदे चन्द्रग्रहतारानुकूलके ।। २३ ।।
तस्यां तु जातमात्रायां सुप्रीतोऽसौ प्रजापतिः ।।
सैव देवीति तां मेने दृष्ट्वा तां तेजसोल्बणाम् ।। २४ ।।
तदाभूत्पुष्पसद्वृष्टिर्मेघाश्च ववृषुर्जलम् ।।
दिशश्शांता द्रुतं तस्यां जातायां च मुनीश्वर ।। २५ ।।
अवादयंत त्रिदशाश्शुभवाद्यानि खे गताः।।
जज्ज्वलुश्चाग्नयश्शांताः सर्वमासीत्सुमंगलम्।।२६।।
वीरिणोसंभवां दृष्ट्वा दक्षस्तां जगदम्बिकाम् ।।

नमस्कृत्य करौ बद्ध्वा बहु तुष्टाव भक्तितः ।। २७ ।।

दक्ष उवाच ।।

महेशानि नमस्तुभ्यं जगदम्बे सनातनि ।।

कृपां कुरु महादेवि सत्ये सत्यस्वरूपिणि ।।२८।।

शिवा शांता महामाया योगनिद्रा जगन्मयी।।

या प्रोच्यते वेदविद्भिर्नमामि त्वां हितावहाम् ।। २९ ।।

यया धाता जगत्सृष्टौ नियुक्तस्तां पुराकरोत् ।।

तां त्वां नमामि परमां जगद्धात्रीं महेश्वरीम् ।।2.2.14.३०।।

यया विष्णुर्जगत्स्थित्यै नियुक्तस्तां सदाकरोत् ।।

तां त्वां नमामि परमां जगद्धात्रीं महेश्वरीम् ।।३१।।

यया रुद्रो जगन्नाशे नियुक्तस्तां सदाकरोत्।।

तां त्वां नमामि परमां जगद्धात्रीं महेश्वरीम् ।।३२।।

रजस्सत्त्वतमोरूपां सर्वकार्यकरीं सदा ।।

त्रिदेवजननीं देवीं त्वां नमामि च तां शिवाम् ।।३३।।

यस्त्वां विचिंतयेद्देवीं विद्याविद्यात्मिकां पराम् ।।

तस्य भुक्तिश्च मुक्तिश्च सदा करतले स्थिता।।३४।।।

यस्त्वां प्रत्यक्षतो देवि शिवां पश्यति पावनीम् ।।

तस्यावश्यं भवेन्मुक्तिर्विद्याविद्याप्रकाशिका ।। ३५ ।।।

ये स्तुवंति जगन्मातर्भवानीमंबिकेति च ।।

जगन्मयीति दुर्गेति सर्वं तेषां भविष्यति ।। ३६ ।।

ब्रह्मोवाच ।।

इति स्तुता जगन्माता शिवा दक्षेण धीमता ।।

तथोवाच तदा दक्षं यथा माता शृणोति न ।। ३७ ।।

सर्वं मुमोह तथ्यं च तथा दक्षः शृणोतु तत् ।।

नान्यस्तथा शिवा प्राह नानोतिः परमेश्वरी ।। ३८ ।।

देव्युवाच ।।

अहमाराधिता पूर्वं सुतार्थं ते प्रजापते ।।

ईप्सितं तव सिद्धं तु तपो धारय संप्रति ।। ३९ ।।

ब्रह्मोवाच ।।

एवमुक्त्वा तदा देवी दक्षं च निजमायया ।।

आस्थाय शैशवं भावं जनन्यंते रुरोद सा ।।2.2.14.४०।।

अथ तद्रोदनं श्रुत्वा स्त्रियो वाक्यं ससंभ्रमाः।।

आगतास्तत्र सुप्रीत्या दास्योपि च ससंभ्रमाः ।। ४१ ।।

दृष्ट्वासिक्नीसुतारूपं ननन्दुस्सर्वयोषितः ।।

सर्वे पौरजनाश्चापि चक्रुर्जयरवं तदा ।। ४२ ।।

उत्सवश्च महानासीद्गानवाद्यपुरस्सरम् ।।

दक्षोसिक्नी मुदं लेभे शुभं दृष्ट्वा सुताननम् ।। ४३ ।।

दक्षः श्रुतिकुलाचारं चक्रे च विधिवत्तदा ।।

दानं ददौ द्विजातिभ्योन्येभ्यश्च द्रविणं तथा ।। ४४ ।।

बभूव सर्वतो गानं नर्तनं च यथोचितम् ।।

नेदुर्वाद्यानि बहुशस्सुमंगलपुरस्सरम् ।। ४५ ।।

अथ हर्यादयो देवास्सर्वे सानुचरास्तदा ।।

मुनिवृन्दैः समागत्योत्सवं चक्रुर्यथाविधि ।।४६।।

दृष्ट्वा दक्षसुतामंबां जगतः परमेश्वरीम् ।।

नेमुः सविनयास्सर्वे तुष्टुवुश्च शुभैस्तवैः ।। ४७ ।।

ऊचुस्सर्वे प्रमुदिता गिरं जयजयात्मिकाम् ।।

प्रशशंसुर्मुदा दक्षं वीरिणीं च विशेषतः ।। ४८ ।।

तदोमेति नाम चक्रे तस्या दक्षस्तदाज्ञया ।।

प्रशस्तायास्सर्वगुणसत्त्वादपि मुदान्वितः ।। ४९ ।।

नामान्यन्यानि तस्यास्तु पश्चाज्जातानि लोकतः ।।

महामंगलदान्येव दुःखघ्नानि विशेषतः ।। 2.2.14.५० ।।

दक्षस्तदा हरिं नत्वा मां सर्वानमरानपि ।।

मुनीनपि करौ बद्ध्वा स्तुत्वा चानर्च भक्तितः ।। ५१ ।।

अथ विष्ण्वादयस्सर्वे सुप्रशस्याजनंदनम् ।।

प्रीत्या ययुस्वधामानि संस्मरन् सशिवं शिवम् ।। ५२ ।।

अतस्तां च सुतां माता सुसंस्कृत्य यथोचितम् ।।

शिशुपानेन विधिना तस्यै स्तन्यादिकं ददौ ।। ५३ ।।

पालिता साथ वीरिण्या दक्षेण च महात्मना ।।

ववृधे शुक्लपक्षस्य यथा शशिकलान्वहम् ।। ५४ ।।

तस्यां तु सद्गुणास्सर्वे विविशुर्द्विजसत्तम ।।

शैशवेपि यथा चन्द्रे कलास्सर्वा मनोहराः ।। ५५ ।।

आचरन्निजभावेन सखीमध्यगता यदा ।।

तदा लिलेख भर्गस्य प्रतिमामन्वहं मुहुः ।। ५६ ।।

यदा जगौ सुगीतानि शिवा बाल्योचितानि सा ।।

तदा स्थाणुं हरं रुद्रं सस्मार स्मरशासनम् ।। ५७ ।।

ववृधेतीव दंपत्योः प्रत्यहं करुणातुला ।।

तस्या बाल्येपि भक्तायास्तयोर्नित्यं मुहुर्मुहुः ।। ५८ ।।

सर्वबालागुणा क्रांतां सदा स्वालयकारिणीम्।।

तोषयामास पितरौ नित्यंनित्यं मुहुर्मुहुः।।५९।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां सती खण्डे सतीजन्म बाललीलावर्णनंनाम चतुर्दशोऽध्यायः ।। १४ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः १५

https://sa.wikisource.org/s/uuc
< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः २ (सतीखण्डः)

ब्रह्मोवाच ।।

अथैकदा पितुः पार्श्वे तिष्ठंतीं तां सतीमहम् ।।

त्वया सह मुनेद्राक्षं सारभूतां त्रिलोकके ।। १ ।।

पित्रा नमस्कृतं वीक्ष्य सत्कृतं त्वां च मां सती ।।

प्रणनाम मुदा भक्त्या लोकलीलानुसारिणी ।। २ ।।

प्रणामांते सतीं वीक्ष्य दक्षदत्तशुभासने ।।

स्थितोहं नारद त्वं च विनतामहमागदम् ।। ३ ।।

त्वामेव यः कामयते यन्तु कामयसे सति ।।

तमाप्नुहि पतिं देवं सर्वज्ञं जगदीश्वरम् ।।४।।

यो नान्यां जगृहे नापि गृह्णाति न ग्रहीष्यति ।।

जायां स ते पतिर्भूयादनन्यसदृशश्शुभे।।५।।

इत्युक्त्वा सुचिरं तां वै स्थित्वा दक्षालये पुनः।।

विसृष्टौ तेन संयातौ स्वस्थानं तौ च नारद ।।६।।

दक्षोभवच्च सुप्रीतः तदाकर्ण्य गतज्वरः ।।

आददे तनयां स्वां तां मत्वा हि परमेश्वरीम्।।७।।

इत्थं विहारै रुचिरैः कौमारैर्भक्तवत्सला ।।

जहाववस्थां कौमारीं स्वेच्छाधृतनराकृतिः ।।८।।

बाल्यं व्यतीत्य सा प्राप किञ्चिद्यौवनतां सती ।९।

अतीव तपसांगेन सर्वांगेषु मनोहरा ।।९।।

दक्षस्तां वीक्ष्य लोकेशः प्रोद्भिन्नांतर्वयस्थिताम् ।।

चिंतयामास भर्गाय कथं दास्य इमां सुताम् ।। 2.2.15.१ ०।।

अथ सापि स्वयं भर्गं प्राप्तुमैच्छत्तदान्वहम् ।।

पितुर्मनोगतिं ज्ञात्वा मातुर्निकटमागमत् ।। ११ ।।

पप्रच्छाज्ञां तपोहेतोश्शंकरस्य विनीतधीः ।।

मातुश्शिवाथ वैरिण्यास्सा सखी परमेश्वरी ।।१२।।

ततस्सती महेशानं पतिं प्राप्तुं दृढव्रता ।।

सा तमाराधयामास गृहे मातुरनुज्ञया ।। १ ३।।

आश्विने मासि नन्दायां तिथावानर्च भक्तितः ।।

गुडौदनैस्सलवणैर्हरं नत्वा निनाय तम् ।। १४।।

कार्तिकस्य चतुर्दश्यामपूपैः पायसैरपि ।।

समाकीर्णैस्समाराध्य सस्मार परमेश्वरम्।। १५।।

मार्गशीर्षेऽसिताष्टम्यां सतिलैस्सयवौदनैः ।।

पूजयित्वा हरं कीलैर्निनाय दिवसान् सती ।। १६ ।।

पौषे तु शुक्लसप्तम्यां कृत्वा जागरणं निशि ।।

अपूजयच्छिवं प्रातः कृशरान्नेन सा सती ।। १७ ।।

माघे तु पौर्णमास्यां स कृत्वा जागरणं निशि ।।

आर्द्रवस्त्रा नदीतीरेऽकरोच्छंकरपूजनम् ।। १८।।

तपस्यसितभूतायां कृत्वा जागरणं निशि।।।

विशेषतस्समानर्च शैलूषैस्सर्वयामसु ।। १९।।

चैत्रे शुक्लचतुर्दश्यां पलाशैर्दमनैश्शिवम् ।।

अपूजयद्दिवारात्रौ संस्मरन् सा निनाय तम्।।2.2.15.२०।।

राधशुक्लतृतीयायां तिलाहारयवौदनैः।।

पूजयित्वा सती रुद्रं नव्यैर्मासं निनाय तम् ।।२१।।

ज्येष्ठस्य पूर्णिमायां वै रात्रै संपूज्य शंकरम् ।।

वसनैर्बृहतीपुष्पैर्निराहारा निनाय तम् ।।२२।।

आषाढस्य चतुर्दश्यां शुक्लायां कृष्णवाससा।

बृहतीकुसुमैः पूजा रुद्रस्याकारि वै तया ।।२३।।

श्रावणस्य सिताष्टम्यां चतुर्दश्यां च सा शिवम्।।

यज्ञोपवीतैर्वासोभिः पवित्रैरप्यपूजयत् ।। २४ ।।

भाद्रे कृष्णत्रयोदश्यां पुष्पैर्नानाविधैः फलैः ।।

संपूज्य च चतुर्दश्यां चकार जलभो जनम् ।।२५।।

नानाविधैः फलैः पुष्पैस्सस्यैस्तत्कालसंभवैः ।।

चक्रे सुनियताहारा जपन्मासे शिवार्चनम् ।।२६।।
सर्वमासे सर्वदिने शिवार्चनरता सती।।
दृढव्रताभवद्देवी स्वेच्छाधृतनराकृतिः ।।२७।।
इत्थं नंदाव्रतं कृत्स्नं समाप्य सुसमाहिता ।।
दध्यौ शिवं सती प्रेम्णा निश्चलाभूदनन्यधीः ।। २८ ।।
एतस्मिन्नंतरे देवा मुनयश्चाखिला मुने ।।
विष्णुं मां च पुरस्कृत्य ययुर्द्रष्टुं सतीतपः ।। ।। २९ ।।
दृष्टागत्य सती देवैर्मूर्ता सिद्धिरिवापरा ।।
शिवध्यानमहामग्ना सिद्धावस्थां गता तदा ।। 2.2.15.३० ।।
चक्रुः सर्वे सुरास्सत्ये मुदा सांजलयो नतिम् ।।
मुनयश्च नतस्कंधा विष्णवाद्याः प्रीतमानसाः ।। ३१ ।।
अथ सर्वे सुप्रसन्ना विष्णवाद्याश्च सुरर्षयः ।।
प्रशशंसुस्तपस्तस्यास्सत्यास्तस्मात्सविस्मयाः ।।३२।।
ततः प्रणम्य तां देवीं पुनस्ते मुनयस्सुराः ।।
जग्मुर्गिरिवरं सद्यः कैलासं शिववल्लभम् ।। ३३ ।।
सावित्रीसहितश्चाहं सह लक्ष्म्या मुदान्वितः ।।
वासुदेवोपि भगवाञ्जगामाथ हरांतिकम् ।। ३४ ।।
गत्वा तत्र प्रभुं दृष्ट्वा सुप्रणम्य सुसंभ्रमाः।।
तुष्टुवुर्विविधैः स्तोत्रैः करौ बद्ध्वा विनम्रकाः ।।३५।।
देवा ऊचुः ।।
नमो भगवते तुभ्यं यत एतच्चराचरम् ।।
पुरुषाय महेशाय परेशाय महात्मने ।।३६।।
आदिबीजाय सर्वेषां चिद्रूपाय पराय च ।।
ब्रह्मणे निर्विकाराय प्रकृतेः पुरुषस्य च ।।३७।।
य इदं प्रतिपंच्येदं येनेदं विचकास्ति हि ।।
यस्मादिदं यतश्चेदं यस्येदं त्वं च यन्नतः ।।३८।।
योस्मात्परस्माच्च परो निर्विकारी महाप्रभुः ।।
ईक्षते यस्स्वात्मनीदं तं नताः स्म स्वयंभुवम् ।। ३९ ।।

अविद्धदृक् परः साक्षी सर्वात्मा ऽनेकरूपधृक् ।।
आत्मभूतः परब्रह्म तपंतं शरणं गताः ।। 2.2.15.४० ।।
न यस्य देवा ऋषयः सिद्धाश्च न विदुः पदम् ।।
कः पुनर्जंतुरपरो ज्ञातुमर्हति वेदितुम् ।।४१।।
दिदृक्षवो यस्य पदं मुक्तसंगास्सुसाधवः ।।
चरितं सुगतिर्नस्त्वं सलोकव्रतमव्रणम् ।।४२।।
त्वज्जन्मादिविकारा नो विद्यंते केपि दुःखदा ।।
तथापि मायया त्वं हि गृह्णासि कृपया च तान् ।। ४३ ।।
तस्मै नमः परेशाय तुभ्यमाश्चर्यकर्मणे ।।
नमो गिरां विदूराय ब्रह्मणे परमात्मने ।। ४४ ।।
अरूपायोरुरूपाय परायानंतशक्तये ।।
त्रिलोकपतये सर्वसाक्षिणे सर्वगाय च ।। ४५ ।।
नम आत्मप्रदीपाय निर्वाणसुखसंपदे ।।
ज्ञानात्मने नमस्तेऽस्तु व्यापकायेश्वराय च ।।४६।।
नैष्कर्म्येण सुलभ्याय कैवल्यपतये नमः ।।
पुरुषाय परेशाय नमस्ते सर्वदाय च।।४७।।
क्षेत्रज्ञायात्मरूपाय सर्वप्रत्ययहेतवे।।४८।।
सर्वाध्यक्षाय महते मूलप्रकृतये नमः ।।
पुरुषाय परेशाय नमस्ते सर्वदाय च ।। ४९ ।।
त्रिनेत्रायेषुवक्त्राय सदाभासाय ते नमः ।।
सर्वेन्द्रियगुणद्रष्ट्रे निष्कारण नमोस्तु ते ।। 2.2.15.५० ।।
त्रिलोककारणायाथापवर्गाय नमोनमः ।।
अपवर्गप्रदायाशु शरणागततारिणे ।। ५१ ।।
सर्वाम्नायागमानां चोदधये परमेष्ठिने ।।
परायणाय भक्तानां गुणानां च नमोस्तु ते ।।५२।।
नमो गुणारणिच्छन्न चिदूष्माय महेश्वर ।।
मूढदुष्प्राप्तरूपाय ज्ञानिहृद्वासिने सदा ।। ५३ ।।
पशुपाशविमोक्षाय भक्तसन्मुक्तिदाय च ।।

स्वप्रकाशाय नित्यायाऽव्ययायाजस्रसंविदे ।। ५४ ।।

प्रत्यग्द्रष्ट्रेऽविकाराय परमैश्वर्य धारिणे ।।

यं भजन्ति चतुर्वर्गे कामयंतीष्टसद्गतिम् ।।

सोऽभूदकरुणस्त्वं नः प्रसन्नो भव ते नमः ।। ५५ ।।

एकांतिनः कंचनार्थं भक्ता वांछंति यस्य न ।।

केवलं चरितं ते ते गायंति परमंगलम्।।५६।।

अक्षरं परमं ब्रह्मतमव्यक्ताकृतिं विभुम् ।।

अध्यात्मयोगगम्यं त्वां परिपूर्णं स्तुमो वयम् ।।५७।।

अतींद्रियमनाधारं सर्वाधारमहेतुकम् ।।

अनंतमाद्यं सूक्ष्मं त्वां प्रणमामोऽखिलेश्वरम् ।।५८।।

हर्यादयोऽखिला देवास्तथा लोकाश्चराचराः ।।

नामरूपविभेदेन फल्ग्व्या च कलया कृताः ।।५९।।

यथार्चिषोग्नेस्सवितुर्यांति निर्यांति वासकृत् ।।

गभस्तयस्तथायं वै प्रवाहो गौण उच्यते ।।2.2.15.६०।।

न त्वं देवो ऽसुरो मर्त्यो न तिर्यङ् न द्विजः प्रभो ।।

न स्त्री न षंढो न पुमान्सदसन्न च किंचन ।। ६१ ।।

निषेधशेषस्सर्वं त्वं विश्वकृद्विश्व पालकः ।।

विश्वलयकृद्विश्वात्मा प्रणतास्स्मस्तमीश्वरम् ।।६२।।

योगरंधितकर्माणो यं प्रपश्यन्ति योगिनः ।।

योगसंभाविते चित्ते योगेशं त्वां नता वयम् ।। ६३ ।।

नमोस्तु तेऽसह्यवेग शक्तित्रय त्रयीमय ।।

नमः प्रसन्नपालाय नमस्ते भूरिशक्तये ।। ६४ ।।

कदिंद्रियाणां दुर्गेशानवाप्य परवर्त्मने ।।

भक्तोद्धाररतायाथ नमस्ते गूढवर्चसे ।।६५।।

यच्छक्त्याहं धियात्मानं हंत वेद न मूढधी ।।

तं दुरत्ययमाहात्म्यं त्वां नतः स्मो महाप्रभुम् ।। ६६ ।।

ब्रह्मोवाच ।।

इति स्तुत्वा महादेवं सर्वे विष्ण्वादिकास्सुराः ।।

तूष्णीमासन्प्रभोरग्रे सद्भक्तिनतकंधराः ।।६७।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे नंदाव्रतविधानशिवस्तुति वर्णनं नाम पंचदशोऽध्यायः ।। १५ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः १६

https://sa.wikisource.org/s/uud



।। ब्रह्मोवाच ।।

इति स्तुतिं च हर्यादिकृतामाकर्ण्य शंकरः ।।

बभूवातिप्रसन्नो हि विजहास च सूतिकृत् ।। १ ।।

ब्रह्मविष्णू तु दृष्ट्वा तौ सस्त्रीकौ संगतौ हरः ।।

यथोचितं समाभाष्य पप्रच्छागमनं तयोः ।।२।।

रुद्र उवाच।।

हहर हावध देवा मुनयश्चाद्य निर्भयाः ।।

निजागमनहेतुं हि कथयस्व सुतत्त्वतः ।।३।।

किमर्थमागता यूयं किं कार्यं चेह विद्यते ।।

तत्सर्वं श्रोतुमिच्छामि भवत्स्तुत्या प्रसन्नधीः ।। ४ ।।

।। ब्रह्मोवाच ।।

इति पृष्टे हरेणाहं सर्वलोकपितामहः ।।

मुनेऽवोचं महादेवं विष्णुना परिचोदितः ।। ५ ।।

देवदेव महादेव करुणासागर प्रभो ।।

यदर्थमागतावावां तच्छृणु त्वं सुरर्षिभिः ।। ६ ।।

विशेषतस्तवैवार्थमागता वृपभध्वज ।।

सहार्थिनस्सदायोग्यमन्यथा न जगद्भवेत् ।।७।।

केचिद्भविष्यंत्यसुरा मम वध्या महेश्वर ।।

हरेर्वध्यास्तथा केचिद्भवंतश्चापि केचन ।।८।।

केचित्त्वद्वीर्यजातस्य तनयस्य महाप्रभो ।।

मायावध्याः प्रभो केचिद्भविष्यंत्यसुरास्सदा ।।९।।

तवैव कृपया शंभोस्सुराणां सुखमुत्तमम्।।

नाशयित्वाऽसुरान् घोराञ्जगत्स्वास्थ्यं सदाभयम् ।।2.2.16.१ ० ।।

योगयुक्ते त्वयि सदा राग द्वेषविवर्जिते ।।

दयापात्रैकनिरते न वध्या ह्यथवा तव ।। १ १।।

अराधितेषु तेष्वीश कथं सृष्टिस्तथा स्थितिः ।।

अतश्च भविता युक्तं नित्यंनित्यं वृषध्वज ।। १२ ।।

सृष्टिस्थित्यंतकर्माणि न कार्याणि यदा तदा ।।

शरीरभेदश्चास्माकं मायायाश्च न युज्यते ।।१ ३।।

एकस्वरूपा हि वयं भिन्नाः कार्यस्य भेदतः ।।

कार्यभेदो न सिद्धश्चेद्रूपभेदाऽप्रयोजनः ।। १४।।

एक एव त्रिधा भिन्नः परमात्मा महेश्वरः ।।

मायास्वाकारणादेव स्वतंत्रो लीलया प्रभुः ।। १५।।

वामाङ्गजो हरिस्तस्य दक्षिणांगभवो ह्यहम् ।।

शिवस्य हृदयाज्जातस्त्वं हि पूर्णतनुश्शिवः ।। १६ ।।

इत्थं वयं त्रिधा भूताः प्रभाभिन्नस्वरूपिणः ।।

शिवाशिवसुतास्तत्त्वं हृदा विद्धि सनातन ।। १७ ।।

अहं विष्णुश्च सस्त्रीकौ संजातौ कार्यहेतुतः ।।

लोककार्यकरौ प्रीत्या तव शासनतः प्रभो ।। १८ ।।

तस्माद्विश्वहितार्थाय सुराणां सुखहेतवे ।।

परिगृह्णीष्व भार्यार्थे रामामेकां सुशोभनाम् ।। १९ ।।

अन्यच्छृणु महेशान पूर्ववृत्तं स्मृतं मया ।।

यन्नौ पुरःपुरा प्रोक्तं त्वयैव शिवरूपिणा ।। 2.2.16.२० ।।

मद्रूपं परमं ब्रह्मन्नीदृशं भवदंगतः ।।

प्रकटी भविता लोके नाम्ना रुद्रः प्रकीर्तितः ।। २१ ।।

सृष्टिकर्ताऽभवद्ब्रह्मा हरिः पालनकारकः ।।

लयकारी भविष्यामि रुद्ररूपो गुणाकृतिः ।। २२ ।।

स्त्रियं विवाह्य लोकस्य करिष्ये कार्यमुत्तमम् ।।

इति संस्मृत्य स्वप्रोक्तं पूर्णं कुरु निजं पणम् ।। २३ ।।

निदेशस्तव च स्वामिन्नहं सृष्टिकरो हरिः ।।

पालको लयहेतुस्त्वमाविर्भूतस्स्वयं शिवः ।। २४ ।।

त्वां विना न समर्थौ हि आवां च स्वस्वकर्मणि ।।

लोककार्यरतो तस्मादेकां गृह्णीष्व कामिनीम् ।। २५ ।।

यथा पद्मालया विष्णोस्सावित्री च यथा मम ।।

तथा सहचरीं शंभो कांतां गृह्णीष्व संप्रति ।। २६ ।।

ब्रह्मोवाच ।।

इति श्रुत्वा वचो मे हि ब्रह्मणः पुरतो हरेः ।।

स मां जगाद लोकेशः स्मेराननमुखो हरः ।।२७।।

ईश्वर उवाच ।।

हे ब्रह्मन् हे हरे मे हि युवां प्रियतरौ सदा ।।

दृष्ट्वा त्वां च ममानंदो भवत्यतितरां खलु ।। २८ ।।

युवां सुरविशिष्टौ हि त्रिभव स्वामिनौ किल ।।

कथनं वां गरिष्ठेति भवकार्यरतात्मनोः ।।२९।।

उचितं न सुरश्रेष्ठौ विवाहकरणं मम ।।

तपोरतविरक्तस्य सदा विदितयोगिनः ।। 2.2.16.३० ।।

यो निवृत्तिसुमार्गस्थः स्वात्मारामो निरंजनः ।।

अवधूततनुर्ज्ञानी स्वद्रष्टा कामवर्जितः ।। ३१ ।।

अविकारी ह्यभोगी च सदाशुचिरमंगलः ।।

तस्य प्रयोजनं लोके कामिन्या किं वदाधुना ।। ३२ ।।

केवलं योगलग्नस्य ममानंदस्सदास्ति वै ।।

ज्ञानहीनस्तु पुरुषो मनुते बहु कामकम् ।। ३३ ।।

विवाहकरणं लोके विज्ञेयं परबंधनम् ।।

तस्मात्तस्य रुचिर्नो मे सत्यं सत्यं वदाम्यहम् ।। ३४ ।।

न स्वार्थं मे प्रवृत्तिर्हि सम्यक्स्वार्थविचिंतनात् ।।

तथापि तत्करिष्यामि भवदुक्तं जगद्धितम् ।। ३५ ।।

मत्त्वा वचो गरिष्ठं वा नियोक्तिपरिपूर्तये ।।

करिष्यामि विवाहं वै भक्तवश्यस्सदा ह्यहम् ।। ३६ ।।

परंतु यादृशीं कांतां ग्रहीष्यामि तथापणम् ।।

तच्छृणुष्व हरे ब्रह्मन् युक्तमेव वचो मम ।। ३७ ।।

या मे तेजस्समर्था हि ग्रहीतुं स्याद्विभागशः ।।

तां निदेशय भार्यार्थे योगिनीं कामरूपिणीम् ।।३८।।
योगयुक्ते मयि तथा योगिन्येव भविष्यति ।।
कामासक्ते मयि तथा कामिन्येव भविष्यति ।। ३९ ।।
यमक्षरं वेदविदो निगदंति मनीषिणः ।।
ज्योतीरूपं शिवं ते च चिंतयिष्ये सनातनम् ।। 2.2.16.४० ।।
तच्चिंतायां यदा सक्तो ब्रह्मन् गच्छामि भाविनीम् ।।
तत्र या विघ्नजननी न भवित्री हतास्तु मे ।। ४१ ।।
त्वं वा विष्णुरहं वापि शिवस्य ब्रह्मरूपिणः ।।
अंशभूता महाभागा योग्यं तदनुचिंतनम् ।। ४२ ।।
तच्चिंतया विनोद्वाहं स्थास्यामि कमलासन ।।
तस्माज्जायां प्रादिश त्वं मत्कर्मानुगतां सदा ।। ४३ ।।
तत्राप्येकं पणं मे त्वं वृणु ब्रह्मँश्च मां प्रति ।।
अविश्वासो मदुक्ते चेन्मया त्यक्ता भविष्यति ।। ४४ ।।
ब्रह्मोवाच ।।
इति तस्य वचश्श्रुत्वाहं स विष्णुर्हरस्य च ।।
सस्मितं मोदितमनोऽवोचं चेति विनम्रकः ।। ४५ ।।
शृणु नाथ महेशान मार्गिता यादृशी त्वया ।।
निवेदयामि सुप्रीत्या तां स्त्रियं तादृशीं प्रभो ।। ४६ ।।
उमा सा भिन्नरूपेण संजाता कार्यसाधिनी ।।
सरस्वती तथा लक्ष्मीर्द्विधा रूपा पुरा प्रभो ।।४७।।
पाद्मा कांताऽभवद्विष्णोस्तथा मम सरस्वती ।।
तृतीयरूपा सा नाभूल्लोककार्यहितैषिणी ।।४८।।
दक्षस्य तनया याभूत्सती नाम्ना तु सा विभो ।।
सैवेदृशी भवेद्भार्या भवेद्धि हितकारिणी ।। ४९ ।।
सा तपस्यति देवेश त्वदर्थं हि दृढव्रता ।।
त्वां पतिं प्राप्तुकामा वै महातेजोवती सती ।। 2.2.16.५० ।।
दातुं गच्छ वरं तस्यै कृपां कुरु महेश्वर ।।
तां विवाहय सुप्रीत्या वरं दत्त्वा च तादृशम् ।।५१।।

हरेर्मम च देवानामियं वाञ्छास्ति शंकर ।।
परिपूरय सद्दृष्ट्या पश्यामोत्सवमादरात् ।। ५२ ।।
मङ्गलं परमं भूयात्त्रिलोकेषु सुखावहम् ।।
सर्वज्वरो विनश्येद्वै सर्वेषां नात्र संशयः ।। ५३ ।।
अथवास्मद्वचश्शेषे वदंत मधुसूदनः ।।
लीलाजाकृतिमीशानं भक्तवत्सलमच्युतः ।। ५४ ।।
विष्णुरुवाच ।।
देवदेव महादेव करुणाकर शंकर ।।
यदुक्तं ब्रह्मणा सर्वं मदुक्तं तन्न संशयः ।। ५५ ।।
तत्कुरुष्व महेशान कृपां कृत्वा ममोपरि ।।
सनाथं कुरु सद्दृष्ट्या त्रिलोकं सुविवाह्यताम् ।। ५६ ।।
ब्रह्मोवाच ।।
इत्युक्त्वा भगवान् विष्णुस्तूष्णीमास मुने सुधीः ।।
तथा स्तुतिं विहस्याह स प्रभुर्भक्तवत्सलः ।। ५७ ।।
ततस्त्वावां च संप्राप्य चाज्ञां स मुनिभिस्सुरैः ।।
अगच्छावस्वेष्टदेशं सस्त्रीकौ परहर्षितौ ।।५८।।
इति श्रीशिवमहापुणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे विष्णुब्रह्मकृतशिव प्रार्थनावर्णनं नाम षोडशोऽध्यायः ।। १६ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः १७

https://sa.wikisource.org/s/v3i
< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः २ (सतीखण्डः)

ब्रह्मोवाच ।।

इत्युक्त्वा सर्वदेवैश्च कृता शंभोर्नुतिः परा ।।

शिवाच्च सा वरं प्राप्ता शृणु ह्यादरतो मुने ।। १ ।।

अथो सती पुनः शुक्लपक्षेऽष्टम्यामुपोषिता ।।

आश्विने मासि सर्वेशं पूजयामास भक्तितः ।।२।।

इति नंदाव्रते पूर्णे नवम्यां दिनभागतः ।।

तस्यास्तु ध्यानमग्नायाः प्रत्यक्षमभवद्धरः ।। ३ ।।

सर्वाङ्गसुन्दरो गौरः पंचवक्त्रस्त्रिलोचनः।।

चंद्रभालः प्रसन्नात्मा शितिकंठश्चतुर्भुज ।। ४ ।।

त्रिशूलब्रह्मकवराभयधृग्भस्मभास्वरः ।।

स्वर्धुन्या विलसच्छीर्षस्सकलाङ्गमनोहरः ।। ५ ।।

महालावण्यधामा च कोटिचन्द्रसमाननः ।।

कोटिस्मरसमाकांतिस्सर्वथा स्त्रीप्रियाकृतिः ।। ६ ।।

प्रत्यक्षतो हरं वीक्ष्य सती सेदृविधं प्रभुम् ।।

ववन्दे चरणौ तस्य सुलज्जावनतानना ।। ७ ।।

अथ प्राह महादेवस्सतीं सद्व्रतधारिणीम् ।।

तामिच्छन्नपि भार्यार्थं तपश्चर्याफलप्रदः ।। ८ ।।

महादेव उवाच ।।

दक्षनंदिनि प्रीतोस्मि व्रतेनानेन सुव्रते ।।

वरं वरय संदास्ये यत्तवाभिमतं भवेत् ।। ९ ।।

ब्रह्मोवाच ।।

जानन्नपीह तद्भावं महादेवो जगत्पतिः।।

जगौ वरं वृणीष्वेति तद्वाक्यश्रवणेच्छया ।। 2.2.17.१० ।।

सापि त्रपावशा युक्ता वक्तुं नो हृदि यत्स्थितम् ।।

शशाक सा त्वभीष्टं यत्तल्लज्जाच्छादितं पुनः ।।११।।

प्रेममग्नाऽभवत्साति श्रुत्वा शिववचः प्रियम् ।।

तज्ज्ञात्वा सुप्रसन्नोभूच्छंकरो भक्तवत्सलः ।। १२ ।।

वरं ब्रूहि वरं ब्रूहि प्राहेति स पुनर्द्रुतम् ।।

सतीभक्तिवशश्शंभुरंतर्यामी सतां गतिः ।।१३।।

अथ त्रपां स्वां संधाय यदा प्राह हरं सती ।।

यथेष्टं देहि वरद वरमित्यनिवारकम् ।। १४ ।।

तदा वाक्यस्यावसानमनवेक्ष्य वृषध्वजः ।।

भव त्वं मम भार्येति प्राह तां भक्तवत्सलः ।।१५।।

एतच्छ्रुत्वा वचस्तस्य साभीष्टफल भावनम् ।।

तूष्णीं तस्थौ प्रमुदिता वरं प्राप्य मनोगतम् ।। १६ ।।

सकामस्य हरस्याग्रे स्थिता सा चारुहासिनी ।।

अकरोन्निजभावांश्च हावान्कामविवर्द्धनान् ।। १७ ।।

ततो भावान्समादाय शृंगाराख्यो रसस्तदा ।।

तयोश्चित्ते विवेशाशु कला हावा यथोदितम् ।। १८ ।।

तत्प्रवेशात्तु देवर्षे लोकलीलानुसारिणोः ।।

काप्यभिख्या तयोरासीच्चित्रा चन्द्रमसोर्यथा ।। १९ ।।

रेजे सती हरं प्राप्य स्निग्धभिन्नांजनप्रभा ।।

चन्द्राभ्याशेऽभ्रलेखेव स्फटिकोज्ज्वलवर्ष्मणः ।।2.2.17.२०।।

अथ सा तमुवाचेदं हरं दाक्षायणी मुहुः ।।

सुप्रसन्ना करौ बद्ध्वा नतका भक्तवत्सलम् ।। २१ ।।

सत्युवाच ।।

देवदेव महादेव विवाह विधिना प्रभौ ।।

पितुर्मे गोचरीकृत्य मां गृहाण जगत्पते ।। २२ ।।

।। ब्रह्मोवाच ।।

एवं सतीवचः श्रुत्वा महेशो भक्तवत्सलः ।।

तथास्त्विति वचः प्राह निरीक्ष्य प्रेमतश्च ताम् ।। २३ ।।

दाक्षायण्यपि तं नत्वा शंभुं विज्ञाप्य भक्तितः ।।

प्राप्ताज्ञा मातुरभ्याशमगान्मोहमुदान्विता ।। २४ ।।

हरोपि हिमवत्प्रस्थं प्रविश्य च निजाश्रमम् ।।

दाक्षायणीवियोगाद्वै कृच्छ्रध्यानपरोऽभवत् ।।२५।।

समाधाय मनः शंभुर्लौकिकीं गतिमाश्रितः ।।

चिंतयामास देवर्षे मनसा मां वृषध्वजः ।। २६ ।।

ततस्संचिंत्यमानोहं महेशेन त्रिशूलिना ।।

पुरस्तात्प्राविशं तूर्णं हरसिद्धिप्रचोदितः ।। २७ ।।

यत्रासौ हिमवत्प्रस्थे तद्वियोगी हरः स्थितः ।।

सरस्वतीयुतस्तात तत्रैव समुपस्थितः ।। २८ ।।

सरस्वतीयुतं मां च देवर्षे वीक्ष्य स प्रभुः ।।

उत्सुकः प्रेमबद्धश्च सत्या शंभुरुवाच ह ।।२९।।

शंभुरुवाच ।।

अहं ब्रह्मन्स्वार्थपरः परिग्रहकृतौ च यत् ।।

तदा स्वत्वमिवस्वार्थे प्रतिभाति ममाधुना ।।2.2.17.३०।।

अहमाराधितस्सत्याद्दाक्षायण्याथ भक्तितः ।।

तस्यै वरो मया दत्तो नंदाव्रतप्रभावतः ।।३१।।

भर्ता भवेति च तया मत्तो ब्रह्मन् वरो वृतः ।।

मम भार्या भवेत्युक्तं मया तुष्टेन सर्वथा ।।३२।।

अथावदत्तदा मां सा सती दाक्षायणी त्विति ।।

पितुर्मे गोचरीकृत्य मां गृहाण जगत्पते ।।३३।।

तदप्यंगीकृतं ब्रह्मन्मया तद्भक्ति तुष्टितः ।।

सा गता भवनं मातुरहमत्रागतो विधे ।।३४।।

तस्मात्त्वं गच्छ भवनं दक्षस्य मम शासनात् ।।

तां दक्षोपि यथा कन्यां दद्यान्मेऽरं तथा वद ।। ३५ ।।

सतीवियोगभंगस्स्याद्यथा मे त्वं तथा कुरु ।।

समाश्वासय तं दक्षं सर्वविद्याविशारदः ।। ३६ ।।

।। ब्रह्मोवाच ।।

इत्युदीर्य महादेवस्सकाशे मे प्रजापतेः ।।

सरस्वतीं विलोक्याशु वियोगवशगोभवत् ।।३७।।
तेनाहमपि चाज्ञप्तः कृतकृत्यो मुदान्वितः ।।
प्रावोचं चेति जगतां नाथं तं भक्तवत्सलम् ।।३८।।
।। ब्रह्मोवाच ।।
यदात्थ भगवञ्शम्भो तद्विचार्य सुनिश्चितम् ।।
देवानां मुख्यस्स्वार्थो हि ममापि वृषभध्वज।।३९।।
दक्षस्तुभ्यं सुतां स्वां च स्वयमेव प्रदास्यति ।।
अहं चापि वदिष्यामि त्वद्वाक्यं तत्समक्षतः ।।2.2.17.४० ।।
ब्रह्मोवाच ।।
इत्युदीर्य्य महादेवमहं सर्वेश्वरं प्रभुम् ।।
अगमं दक्षनिलयं स्यंदनेनातिवेगिना ।।४१।।
।। नारद उवाच ।।
विधे प्राज्ञ महाभाग वद नो वदतां वर ।।
सत्यै गृहागतायै स दक्षः किमकरोत्ततः ।। ४२ ।।
ब्रह्मोवाच ।।
तपस्तस्वा वरं प्राप्य मनोभिलषितं सती ।।
गृहं गत्वा पितुर्मातुः प्रणाममकरोत्तदा ।।४३।।
मात्रे पित्रेऽथ तत्सर्वं समाचख्यौ महेश्वरात् ।।
वरप्राप्तिः स्वसख्या वै सत्यास्तुष्टस्तु भक्तितः ।। ४४ ।।
माता पिता च वृत्तांतं सर्वं श्रुत्वा सखीमुखात् ।।
आनन्दं परमं लेभे चक्रे च परमोत्सवम् ।।४५।।
द्रव्यं ददौ द्विजातिभ्यो यथाभीष्टमुदारधीः।।
अन्येभ्यश्चांधदीनेभ्यो वीरिणी च महामनाः ।।४६।।
वीरिणी तां समालिंग्य स्वसुतां प्रीतिवर्द्धिनीम् ।।
मूर्ध्न्युपाघ्राय मुदिता प्रशशंस मुहुर्मुहुः ।।४७।।
अथ दक्षः कियत्काले व्यतीते धर्मवित्तमः ।।
चिंतयामास देयेयं स्वसुता शम्भवे कथम् ।। ४८ ।।
आगतोपि महादेवः प्रसन्नस्स जगाम ह ।।

पुनरेव कथं सोपि सुतार्थेऽत्रागमिष्यति ।। ४९ ।।
प्रास्थाप्योथ मया कश्चिच्छंभोर्निकटमंजसा ।।
नैतद्योग्यं निगृह्णीयाद्यद्येवं विफलार्दना ।। 2.2.17.५० ।।
अथवा पूजयिष्यामि तमेव वृषभध्वजम्।।
मदीयतनया भक्त्या स्वयमेव यथा भवेत्।।५१।।
तथैव पूजितस्सोपि वांछत्यार्यप्रयत्नतः।।
शंभुर्भवतु मद्भर्त्तेत्येवं दत्तवरेणतत्।।५२।।
इति चिंतयतस्तस्य दक्षस्य पुरतोऽन्वहम्।।
उपस्थितोहं सहसा सरस्वत्यन्वितस्तदा।५३।।
मां दृष्ट्वा पितरं दक्षः प्रणम्यावनतः स्थितः ।।
आसनं च ददौ मह्यं स्वभवाय यथोचितम् ।।५४।।
ततो मां सर्वलोकेशं तत्रागमन कारणम् ।।
दक्षः पप्रच्छ स क्षिप्रं चिंताविष्टोपि हर्षितः ।।५५।।
दक्ष उवाच ।।
तवात्रागमने हेतुः कः प्रवेशे स सृष्टिकृत् ।।
ममोपरि सुप्रसादं कृत्वाचक्ष्व जगद्गुरो ।।५६।।
पुत्रस्नेहात्कार्यवशादथ वा लोककारक।।
ममाश्रमं समायातो हृष्टस्य तव दर्शनात्।।५७।।
ब्रह्मोवाच ।।
इति पृष्टस्स्वपुत्रेण दक्षेण मुनिसत्तम ।।
विहसन्नब्रुवं वाक्यं मोदयंस्तं प्रजापतिम् ।। ५८ ।।
ब्रह्मोवाच ।।
शृणु दक्ष यदर्थं त्वत्समीपमहमागतः ।।
त्वत्तोकस्य हितं मेपि भवतोपि तदीप्सितम् ।।५९ ।।
तव पुत्री समाराध्य महादेवं जगत्पतिम् ।।
यो वरः प्रार्थितस्तस्य समयोयमुपागतः ।। 2.2.17.६० ।।
शंभुना तव पुत्र्यर्थं त्वत्सकाशमहं धुवम् ।।
प्रस्थापितोस्मि यत्कृत्यं श्रेय स्तदवधारय ।। ६१ ।।

वरं दत्त्वा गतो रुद्रस्तावत्प्रभृति शंकरः ।।

त्वत्सुताया वियोगेन न शर्म लभतेंजसा ।। ६२ ।।

अलब्धच्छिद्रमदनो जिगाय गिरिशं न यम् ।।

सर्वैः पुष्पमयैर्बाणैर्यत्नं कृत्वापि भूरिशः ।। ६३ ।।

स कामबाणविद्धोपि परित्यज्यात्म चिंतनम् ।।

सतीं विचिंतयन्नास्ते व्याकुलः प्राकृतो यथा ।। ६४ ।।

विस्मृत्य प्रश्रुतां वाणीं गणाग्रे विप्रयोगतः ।।

क्व सतीत्येवमभितो भाषते निकृतावपि ।। ६५ ।।

मया यद्वांछितं पूर्वं त्वया च मदनेन च ।।

मरीच्याद्यैमुनिवरैस्तत्सिद्धमधुना सुत ।। ६६ ।।

त्वत्पुत्र्याराधितश्शंभुस्सोपि तस्या विचिंतनात् ।।

अनुशोधयितुं प्रेप्सुर्वर्त्तते हिमवद्गिरौ ।। ६७ ।।

यथा नानाविधैर्भावैस्सत्वात्तेन व्रतेन च ।।

शंभुराराधितस्तेन तथैवाराध्यते सती ।।६८।।

तस्मात्तु दक्षतनयां शंभ्वर्थं परिकल्पिताम् ।।

तस्मै देह्यविलंबेन कृता ते कृतकृत्यता ।। ६९ ।।

अहं तमानयिष्यामि नारदेन त्वदालयम् ।।

तस्मै त्वमेनां संयच्छ तदर्थे परिकल्पिताम् ।। 2.2.17.७० ।।

ब्रह्मोवाच ।।

श्रुत्वा मम वचश्चेति स मे पुत्रोतिहर्षितः ।।

एवमेवेतिमां दक्ष उवाच परिहर्षितः ।।७१ ।।

ततस्सोहं मुने तत्रागममत्यंतहर्षितः ।।

उत्सुको लोकनिरतो गिरिशो यत्र संस्थितः ।। ७२ ।।

गते नारद दक्षोपि सदार तनयो ह्यपि ।।

अभवत्पूर्णकामस्तु पीयूषैरिव पूरितः ।। ७३ ।। ।।

इति श्रीशैवे महापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे सतीवरलाभो नाम सप्तदशोऽध्यायः ।।

१७ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः १८



नारद उवाच ।।

रुद्रपार्श्वे त्वयि गते किमभूच्चरितं ततः ।।

का वार्ता ह्यभवत्तात किं चकार हरः स्वयम् ।। १ ।।

ब्रह्मोवाच ।।

अथाहं शिवमानेतुं प्रसन्नः परमेश्वरम् ।।

आसदं हि महादेवं हिमवद्गिरिसंस्थितम् ।। २ ।।

मां वीक्ष्य लोकस्रष्टारमायांतं वृषभध्वजः ।।

मनसा संशयं चक्रे सतीप्राप्तौ मुहुर्मुहुः ।। ३ ।।

अथ प्रीत्या हरो लोक गतिमाश्रित्य लीलया ।।

सत्या भक्त्या च मां क्षिप्रमुवाच प्राकृतो यथा ।। ४ ।।

ईश्वर उवाच ।।

किमकार्षीत्सुरज्येष्ठ सत्यर्थे त्वत्सुतस्स माम् ।।

कथयस्व यथा स्वांतं न दीर्ये मन्मथेन हि ।। ५ ।।

धावमानो विप्रयोगो मामेव च सतीं प्रति ।।

अभिहंति सुरज्येष्ठ त्यक्त्वान्यां प्राणधारिणीम् ।। ६ ।।

सतीति सततं ब्रह्मन् वद कार्यं करोम्यहम् ।।

अभेदान्मम सा प्राप्या तद्विधे क्रियतां तथा ।। ७ ।।

ब्रह्मोवाच ।।

इति रुद्रोक्तवचनं लोकाचारसुगर्भितम् ।।

श्रुत्वाहं नारदमुने सांत्वयन्नगदं शिवम् ।। ८ ।।

ब्रह्मोवाच ।।

सत्यर्थं यन्मम सुतो वदति स्म वृषध्वज ।।

तच्छ्रणुष्व निजासाध्य सिद्धमित्यवधारय ।। ९ ।।

देया तस्मै मया पुत्री तदर्थं परिकल्पिता ।।

ममाभीष्टमिदं कार्यं त्वद्वाक्यादधिकं पुनः ।। 2.2.18.१० ।।

मत्पुत्र्याराधितश्शंभुरेतदर्थं स्वयं पुनः ।।

सोप्यन्विष्यति मां यस्मात्तदा देया मया हरे ।। ११ ।।

शुभे लग्न सुमुहूर्ते समागच्छतु सौंतिकम् ।।

तदा दास्यामि तनयां भिक्षार्थं शंभवे विधे ।। १२।।

इत्युवाच स मां दक्षस्तस्मात्त्वं वृषभध्वज ।।

शुभे मुहूर्ते तद्वेश्म गच्छ तामानयस्व च ।। १ ३।।

ब्रह्मोवाच ।।

इति श्रुत्वा मम वचो लौकिकी गतिमाश्रितः ।।

उवाच विहसन्रुद्रो मुने मां भक्तवत्सलः।। १४।।

रुद्र उवाच ।।

गमिष्ये भवता सार्द्धं नारदेन च तद्गृहम् ।।

अहमेव जगत्स्रष्टस्तस्मात्त्वं नारदं स्मर ।। १५।।

मरीच्यादीन् स्वपुत्रांश्च मानसानपि संस्मर ।।

तैः सार्द्धं दक्षनिलयं गमिष्ये सगणो विधे ।। १६ ।।

ब्रह्मोवाच ।।

इत्याज्ञप्तोहमीशेन लोकाचारपरेण ह ।।

संस्मरं नारदं त्वां च मरीच्यदीन्सुतांस्तथा ।। १७ ।।

ततस्समागतास्सर्वे मानसास्तनयास्त्वया ।।

मम स्मरणमात्रेण हृष्टास्ते द्रुतमादरात् ।। १८ ।।

विष्णुस्समागतस्तूर्णं स्मृतो रुद्रेण शैवराट् ।।

सस्वसैन्यः कमलया गरुडारूढं एव च ।। १९।।

अथ चैत्रसिते पक्षे नक्षत्रे भगदैवते ।।

त्रयोदश्यां दिने भानौ निगच्छत्स महेश्वरः ।।2.2.18.२०।।

सर्वैस्सुरगणैस्सार्द्धं ब्रह्मविष्णु पुरस्सरैः ।।

तथा तैर्मुनिभिर्गच्छन् स बभौ पथि शंकरः ।। २१ ।।

मार्गे समुत्सवो जातो देवादीनां च गच्छताम् ।।

तथा हरगणानां च सानंदमनसामति ।। २२ ।।

गजगोव्याघ्रसर्पाश्च जटा चंद्रकला तथा ।।
जग्मुः सर्वे भूषणत्वं यथायोग्यं शिवेच्छया ।। २० ।।
ततः क्षणेन बलिना बलीवर्देन योगिना ।।
स विष्णुप्रमुखः प्रीत्या प्राप दक्षालयं हरः ।। २४ ।।
ततो दक्षो विनीतात्मा संप्रहृष्टतनूरुहः ।।
प्रययौ सन्मुखं तस्य संयुक्तस्सकलैर्निजैः ।।२५।।
सर्वे सुरगणास्तत्र स्वयं दक्षेण सत्कृताः ।।
पार्श्वे श्रेष्ठं च मुनिभिरुपविष्टा यथाक्रमम् ।। २६ ।।
परिवार्याखिलान्देवान्गणांश्च मुनिभिर्यथा ।।
दक्षस्समानयामास गृहाभ्यंतरतश्शिवम् ।।२७।।
अथ दक्षः प्रसन्नात्मा स्वयं सर्वेश्वरं हरम् ।।
समानर्च विधानेन दत्त्वासनमनुत्तमम् ।। २८ ।।
ततो विष्णुं च मां विप्रान्सुरान्सर्वान्गणांस्तथा ।।
पूजयामास सद्भक्त्या यथोचितविधानतः ।। २९ ।।
कृत्वा यथोचितां पूजां तेषां पूज्यादिभिस्तथा ।।
चकार संविदं दक्षो मुनिभिर्मानसैः पुनः ।। ।। 2.2.18.३० ।।
ततो मां पितरं प्राह दक्षः प्रीत्या हि मत्सुतः ।।
प्रणिपत्य त्वया कर्म कार्यं वैवाहिकं विभो ।। ३१ ।।
बाढमित्यहमप्युक्त्वा प्रहृष्टैनांतरात्मना ।।
समुत्थाय ततोऽकार्षं तत्कार्यमखिलं तथा ।।३२।।
ततश्शुभे मुहूर्ते हि लग्ने ग्रहबलान्विते ।।
सती निजसुतां दक्षो ददौ हर्षेण शंभवे ।। ३३ ।।
उद्वाहविधिना सोपि पाणिं जग्राह हर्षितः ।।
दाक्षायण्या वरतनोस्तदानीं वृषभध्वजः ।। ३४ ।।
अहं हरिस्त्वदाद्या वै मुनयश्च सुरा गणाः ।।
नेमुस्सर्वे संस्तुतिभि स्तोषयामासुरीश्वरम् ।। ३५ ।।
समुत्सवो महानासीन्नृत्यगानपुरस्सरः ।।
आनन्दं परमं जग्मुस्सर्वे मुनिगणाः सुराः ।। ३६ ।।

कन्या दत्त्वा कृतार्थोऽभूत्तदा दक्षो हि मत्सुतः ।।

शिवाशिवौ प्रसन्नौ च निखिलं मंगलालयम् ।।३७।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे कन्यादानवर्णनो नामाष्टादशोऽध्यायः

।। १८ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः १९



।। ब्रह्मोवाच ।।

कृत्वा दक्षस्तुतादानं यौतकं विविधं ददौ ।।

हराय सुप्रसन्नश्च द्विजेभ्यो विविधं धनम् ।। १ ।।

अथ शंभु मुदागत्य समुत्थाय कृतांजलिः ।।

सार्द्धं कमलया चेदमुवाच गरुडध्वजः ।। २ ।।

।। विष्णुरुवाच ।। ।।

देवदेव महादेव करुणासागर प्रभो ।।

त्वं पिता जगतां तात सती माताखिलस्य च ।। ३ ।।

युवां लीलावतारौ द्वे सतां क्षेमाय सर्वदा ।।

खलानां निग्रहार्थाय श्रुतिरेषा सनातनी ।। ४ ।।

स्निग्धनीलांजनश्यामशोभया शोभसे हर।।

दाक्षायण्या यथा चाहं प्रतिलोमेन पद्मया ।।५।।

देवानां वा नृणां रक्षां कुरु सत्याऽनया सताम् ।।

संसारसारिणां शम्भो मंगलं सर्वदा तथा ।। ।। ६ ।।

य एनां साभिलाषो वै दृष्ट्वा श्रुत्वाथवा भवेत् ।।

तं हन्यास्सर्वभूतेश विज्ञप्तिरिति मे प्रभो ।। ७ ।।

।। ब्रह्मोवाच ।। ।।

इति श्रुत्वा वचो विष्णोर्विहस्य परमेश्वरः ।।

एवमस्त्विवति सर्वज्ञः प्रोवाच मधुसूदनम् ।। ८ ।।

स्वस्थानं हरिरागत्य स्थित आसीन्मुनीश्वर ।।

उत्सवं कारयामास जुगोप चरितं च तत् ।।९।।

अहं देवीं समागत्य गृह्योक्तविधिनाऽखिलम् ।।

अग्निकार्यं यथोद्दिष्टमकार्षं च सुविस्तरम् ।।2.2.19.१०।।

ततश्शिवा शिवश्चैव यथाविधि प्रहृष्टवत् ।।

अग्नेः प्रदक्षिणं चक्रे मदाचार्यद्विजाज्ञया ।।११।।

तदा महोत्सवस्तत्राद्भुतोभूद्द्विजसत्तम ।।

सर्वेषां सुखदं वाद्यं गीतनृत्यपुरस्सरम् ।।१२।।

तदानीमद्भुतं तत्र चरितं समभूदति ।।

सुविस्मयकरं तात तच्छृणु त्वं वदामि ते ।। १३ ।।

दुर्ज्ञेया शांभवी माया तया संमोहितं जगत् ।।

सचराचरमत्यंतं सदेवासुरमानुषम् ।। १४ ।।

योऽहं शंभुं मोहयितुं पुरैच्छं कपटेन ह ।।

मां च तं शंकरस्तात मोहयामास लीलया ।। १५ ।।

इच्छेत्परापकारं यस्स तस्यैव भवेद्ध्रुवम् ।।

इति मत्वाऽपकारं नो कुर्यादन्यस्य पूरुषः ।।१६।।

प्रदक्षिणां प्रकुर्वंत्या वह्नेस्सत्याः पदद्वयम्।।

आविर्बभूव वसनात्तदद्राक्षमहं मुने ।। १७ ।।

मदनाविष्टचेताश्च भूत्वांगानि व्यलोकयम् ।।

अहं सत्या द्विजश्रेष्ठ शिवमायाविमोहितः ।।१८।।

यथा यथाहं रम्याणि व्यैक्षमंगानि कौतुकात् ।।

सत्या बभूव संहृष्टः कामार्तो हि तथा तथा ।।१९।।

अहमेवं तथा दृष्ट्वा दक्षजां च पतिव्रताम् ।।

स्मराविष्टमना वक्त्रं द्रष्टुकामोभवं मुने ।। 2.2.19.२० ।।

न शंभोर्लज्जया वक्त्रं प्रत्यक्षं च विलोकितम् ।।

न च सा लज्जयाविष्टा करोति प्रगटं मुखम् ।। २१ ।।

ततस्तद्दर्शनार्थाय सदुपायं विचारयन् ।।

धूम्रघोरेण कामार्तोऽकार्षं तच्च ततः परम् ।। २२ ।।

आर्द्रेंधनानि भूरीणि क्षिप्त्वा तत्र विभावसौ ।।

स्वल्पाज्याहुतिविन्यासादार्द्रद्रव्योद्भवस्तथा ।। २३ ।।

प्रादुर्भूतस्ततो धूमो भूयांस्तत्र समंततः।।

तादृग् येन तमो भूतं वेदीभूमिविनिर्मितम् ।। २४ ।।

ततो धूमाकुले नेत्रे महेशः परमेश्वरः ।।

हस्ताभ्यां छादयामास बहुलीलाकरः प्रभुः ।।२५।।

ततो वस्त्रं समुत्क्षिप्य सतीवक्त्रमहं मुने ।।

अवेक्षं किल कामार्तः प्रहृष्टेनांतरात्मना ।। २६ ।।

मुहुर्मुहुरहं तात पश्यामि स्म सतीमुखम् ।।

अथेन्द्रियविकारं च प्राप्तवानस्मि सोऽवशः ।। २७ ।।

मम रेतः प्रचस्कंद ततस्तद्वीक्षणाद्द्रुतम्।।

चतुर्बिन्दुमित भूमौ तुषारचयसंनिभम् ।।२८।।

ततोहं शंकितो मौनी तत्क्षणं विस्मितो मुने ।।

आच्छादयेस्म तद्रेतो यथा कश्चिद्बुबोध न।।२९।।

अथ तद्भगवाञ्छंभुर्ज्ञात्वा दिव्येन चक्षुषा ।।

रेतोवस्कंदनात्तस्य कोपादेतदुवाच ह ।। 2.2.19.३० ।।

रुद्र उवाच ।।

किमेतद्विहितं पाप त्वया कर्म विगर्हितम् ।।

विवाहे मम कांताया वक्त्रं दृष्टं न रागतः ।। ३१ ।।

त्वं वेत्सि शंकरेणैतत्कर्म ज्ञातं न किंचन ।।

त्रैलोक्येपि न मेऽज्ञातं गूढं तस्मात्कथं विधे ।। ३२ ।।

यत्किंचित्त्रिषु लोकेषु जंगमं स्थावरं तथा ।।

तस्याहं मध्यगो मूढ तैलं यद्वत्तिलांति कम् ।। ३३ ।।

ब्रह्मोवाच ।।

इत्युक्त्वा प्रिय विष्णुर्मां तदा विष्णुवचः स्मरन् ।।

इयेष हंतुं ब्रह्माणं शूलमुद्यम्य शंकरः ।। ३४ ।।

शभुंनोद्यमिते शूले मां च हंतुं द्विजोत्तम ।।

मरीचिप्रमुखास्ते वै हाहाकारं च चक्रिरे ।। ३५ ।।

ततो देवगणास्सर्वे मुनयश्चाखिलास्तथा ।।

तुष्टवुश्शंकरं तत्र प्रज्वलंतं भयातुराः ।। ३६ ।।

देवा ऊचुः ।।

देव देव महादेव शरणागतवत्सल ।।

ब्रह्माणं रक्ष रक्षेश कृपां कुरु महेश्वर ।। ३७ ।।

जगत्पिता महेश त्वं जगन्माता सती मता ।।

हरिब्रह्मादयस्सर्वे तव दासास्सुरप्रभो ।।३८।। ।।

अद्भुताकृतिलीलस्त्वं तव मायाद्भुता प्रभो ।।

तया विमोहितं सर्वं विना त्वद्भक्तिमीश्वर ।। ३९ ।।

ब्रह्मोवाच ।।

इत्थं बहुतरं दीना निर्जरा मुनयश्च ते ।।

तुष्टुवुर्देवदेवेशं क्रोधाविष्टं महेश्वरम् ।। 2.2.19.४० ।।

दक्षो मैवं मैवमिति पाणिमुद्यम्य शंकितः ।।

वारयामास भूतेशं क्षिप्रमेत्य पुरोगतः ।। ४१ ।।

अथाग्रे संगतं वीक्ष्य तदा दक्षं महेश्वरः ।।

प्रत्युवाचाप्रियमिदं संस्मरन्प्रार्थनां हरेः ।। ४२ ।।

महेश्वर उवाच ।।

विष्णुना मेतिभक्तेन यदिदानीमुदीरितम् ।।

मयाप्यंगीकृतं कर्तुं तदिहैव प्रजापते ।। ४३ ।।

सतीं यस्याभिलाषस्सन् वीक्षेत वध तं प्रभो ।।

इति विष्णुवचस्सत्यं विधिं हत्वा करोम्यहम् ।। ४४ ।।

साभिलाषः कथं ब्रह्मा सतीं समवलोकयत् ।।

अभवत्त्यक्तरेतास्तु ततो हन्मि कृतागसम् ।। ४५ ।।

ब्रह्मोवाच ।।

इत्युक्तवति देवेश महेशे क्रोधसंकुले ।।

चकंपिरे जनाः सर्वे सदेवमुनिमानुषाः ।।४६।।

हाहाकारो महानासीदौदासीन्यं च सर्वशः ।।

अभूवम्बिकलोऽतीव तदाहं तद्विमोहकः ।।४७।।

अथ विष्णुर्महेशातिप्रियः कार्यविचक्षणः ।।

तमेवंवादिनं रुद्रं तुष्टाव प्रणतस्सुधीः ।।४८।।

स्तुत्वा च विविधैः स्तोत्रैश्शंकरं भक्तवत्सलम् ।।

इदमूचे वारयंस्तं क्षिप्रं भूत्वा पुरस्सरः ।।४९।।

विष्णुरुवाच ।।

विधिन्न जहि भूतेश स्रष्टारं जगतां प्रभुम्।।

अयं शरणगस्तेद्य शरणागतवत्सलः ।।2.2.19.५०।।

अहं तेऽतिप्रियो भक्तो भक्तराज इतीरितः ।।

विज्ञप्तिं हृदि मे मत्वा कृपां कुरु ममोपरि ।।५१।।

अन्यच्च शृणु मे नाथ वचनं हेतुगर्भितम् ।।

तन्मनुष्व महेशान कृपां कृत्वा ममोपरि ।। ५२ ।।

प्रजास्स्रष्टुमयं शंभो प्रादुर्भूतश्चतुर्मुखः ।।

अस्मिन्हते प्रजास्रष्टा नास्त्यन्यः प्राकृतोऽधुना ।।५३।।

सृष्टिस्थित्यंतकर्माणि करिष्यामः पुनः पुनः ।।

त्रयो देवा वयं नाथ शिवरूप त्वदाज्ञया ।।५४।।

एतस्मिन्निहते शम्भो कस्त्वत्कर्म करिष्यति ।।

तस्मान्न वध्यो भवता सृष्टिकृल्लयकृद्विभो ।।५५।।

अनेनैव सती कन्या दक्षस्य च शिवा विभो ।।

सदुपायेन वै भार्या भवदर्थे प्रकल्पिता ।। ५६ ।।

ब्रह्मोवाच ।।

इत्याकर्ण्य महेशस्तु विज्ञप्तिं विष्णुना कृताम् ।।

प्रत्युवाचाखिलांस्तांश्च श्रावयंश्च दृढव्रतः ।। ५७ ।।

महेश उवाच ।।

देव देव रमेशान विष्णो मत्प्राणवल्लभ ।।

न निवारय मां तात वधादस्य खलस्त्वयम् ।।५८।।

पूरयिष्यामि विज्ञप्तिं पूर्वान्तेंगीकृतां मया ।।

महापापकरं दुष्टं हन्म्येनं चतुराननम् ।।५९।।

अहमेव प्रजास्स्रक्ष्ये सर्वाः स्थिरचरा अपि ।।

अन्यं स्रक्ष्ये सृष्टिकरमथवाहं स्वतेजसा।।2.2.19.६०।।

हत्वैनं विधिमेवाहं स्वपणं पूरयन् कृतम् ।।

स्रष्टारमेकं स्रक्ष्यामि न निवारय मेश माम् ।।६१।।

ब्रह्मोवाच।।

इति तस्य वचश्श्रुत्वा गिरीश स्याह चाच्युतः ।।

स्मितप्रभिन्नहृदयः पुनर्मैवमितीरयन् ।।६२।।
अच्युत उवाच।।
प्रतिज्ञापूरणं योग्यं परस्मिन्पुरुषेस्ति वै।।
विचारयस्व वध्येश भवत्यात्मनि न प्रभो ।।६३।।
त्रयो देवा वयं शंभो त्वदात्मानः परा नहि ।।
एकरूपा न भिन्नाश्च तत्त्वतस्सुविचारय ।। ।।६४।।
ततस्तद्वचनं श्रुत्वा विष्णोस्स्वातिप्रियस्य सः ।।
शंभुरूचे पुनस्तं वै ख्यापयन्नात्मनो गतिम् ।।६५।।
।। शम्भुरुवाच ।।
हे विष्णो सर्वभक्तेश कथमात्मा विधिर्मम ।।
लक्ष्यते भिन्न एवायं प्रत्यक्षेणाग्रतः स्थितः ।। ६६ ।।
।। ब्रह्मोवाच ।।
इत्याज्ञप्तो महेशेन सर्वेषां पुरतस्तदा ।।
इदमूचे महादेवं तोषयन् गरुडध्वजः ।। ६७ ।।
विष्णुरुवाच ।।
न ब्रह्मा भवतो भिन्नो न त्वं तस्मात्सदाशिव ।।
न वाहं भवतो भिन्नो न मत्त्वं परमेश्वर ।। ६८ ।।
सर्वं जानासि सर्वज्ञ परमेश सदाशिव ।।
मन्मुखादखिलान्सर्वं संश्रावयितुमिच्छसि ।। ६९ ।।
त्वदाज्ञया वदामीश शृण्वंतु निखिलास्सुराः ।।
मुनयश्चापरे शैवं तत्त्वं संधार्य स्वं मनः ।। 2.2.19.७० ।।
प्रधानस्याऽप्रधानस्य भागाभागस्य रूपिणः ।।
ज्योतिर्मयस्य भागास्ते वयं देवाः प्रभोस्त्रयः ।।७१।।
कस्त्वं कोहं च को ब्रह्मा तवैव परमात्मनः ।।
अंशत्रयमिदं भिन्नं सृष्टिस्थित्यंतकारणम् ।।७२।।
चिंतयस्वात्मनात्मानं स्वलीलाधृतविग्रहः ।।
एकस्त्वं ब्रह्म सगुणो ह्यंशभूता वयं त्रयः ।। ७३ ।।
शिरोग्रीवादिभेदेन यथैकस्यैव वर्ष्मणः ।।

अंगानि ते तथेशस्य तस्य भगत्रयं हर ।। ७४ ।।

यज्ज्योतिरभ्रं स्वपुरं पुराणं कूटस्थमव्यक्तमनंतरूपम् ।।

नित्यं च दीर्घादिविशेषणाद्यैर्हीनं शिवस्त्वं तत एव सर्वम् ।।७५।।

ब्रह्मोवाच ।। एतच्छ्रुत्वा वचस्तस्य महादेवो मुनीश्वर ।।

बभूव सुप्रसन्नश्च न जघान स मां ततः ।। ७६ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे सतीविवाहशिवलीलावर्णनं नामैकोनविंशोऽध्यायः ।। १९ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः २०

https://sa.wikisource.org/s/v3q



नारद उवाच ।।

ब्रह्मन् विधे महाभाग शिवभक्तवर प्रभो ।।

श्रावितं चरितं शंभोरद्भुतं मंगलायनम् ।।१।।

ततः किमभवत्तात कथ्यतां शशिमौलिनः

सत्याश्च चरितं दिव्यं सर्वाघौघविनाशनम् ।। २ ।।

।। ब्रह्मोवाच ।।

निवृत्ते शंकरे चास्मद्वधाद्भक्तानुकंपिनि ।।

अभवन्निर्भयास्सर्वे सुखिनस्तु प्रसन्नकाः ।। ३ ।।

नतस्कंधास्सांजलयः प्रणेमुर्निखिलाश्च ते ।।

तुष्टुवुश्शंकरं भक्त्या चक्रुर्जयरवं मुदा ।। ४ ।।

तस्मिन्नेव कालेऽहं प्रसन्नो निर्भयो मुने ।।

अस्तवं शंकरं भक्त्या विविधैश्च शुभस्तवैः ।। ५ ।।

ततस्तुष्टमनाश्शंभुर्बहुलीलाकरः प्रभुः ।।

मुने मां समुवाचेदं सर्वेषां शृण्वतां तदा ।। ६ ।।

।। रुद्र उवाच ।।

ब्रह्मन् तात प्रसन्नोहं निर्भयस्त्वं भवाधुना ।।

स्वशीर्षं स्पृश हस्तेन मदाज्ञां कुर्वसंशयम् ।। ७ ।।

ब्रह्मोवाच ।।

इत्याकर्ण्य वचश्शम्भोर्बहुलीलाकृतः प्रभोः ।।

स्पृशन् स्वं कं तथा भूत्वा प्राणमं वृषभध्वजम् ।। ८ ।।

यावदेवमहं स्वं कं स्पृशामि निजपाणिना ।।

तावत्तत्र स्थितं सद्यस्तद्रूपवृषवाहनम् ।। ९ ।।

ततो लज्जापरीतांगस्स्थितश्चाहमधोमुखः ।।

इन्द्राद्यैरमरैस्सर्वैस्सुदृष्टस्सर्वतस्स्थितैः ।।2.2.20.१०।।

अथाहं लज्जयाविष्टः प्रणिपत्य महेश्वरम् ।।
प्रवोचं संस्तुतिं कृत्वा क्षम्यतां क्षम्यतामिति ।।११।।
अस्य पापस्य शुध्यर्थं प्रायश्चित्तं वद प्रभो।।
निग्रहं च तथान्यायं येन पापं प्रयातु मे ।।१२।।
इत्युक्तस्तु मया शंभुरुवाच प्रणतं हि तम् ।।
सुप्रसन्नतरो भूत्वा सर्वेशो भक्तवत्सलः ।। १३ ।।
शंभुरुवाच ।।
अनेनैव स्वरूपेण मदधिष्ठितकेन हि ।।
तपः कुरु प्रसन्नात्मा मदाराधनतत्परः।। १४ ।।
ख्यातिं यास्यसि सर्वत्र नाम्ना रुद्रशिरः क्षितौ।।
साधकः सर्वकृत्यानां तेजोभाजां द्विजन्मनाम् ।।१५।।
मनुष्याणामिदं कृत्यं यस्माद्वीर्य्यं त्वयाऽधुना ।।
तस्मात्त्वं मानुषो भूत्वा विचरिष्यसि भूतले ।।१६।।
यस्त्वां चानेन रूपेण दृष्ट्वा कौ विचरिष्यति ।।
किमेतद्ब्रह्मणो मूर्ध्नि वदन्निति पुरान्तकः ।।१७।।
ततस्ते चेष्टितं सर्वं कौतुकाच्छ्रोष्यतीति यः ।।
परदारकृतात्त्यागान्मुक्तिं सद्यस्स यास्यति ।। १८ ।।
यथा यथा जनश्चैतत्कृत्यन्ते कीर्तयिष्यति ।।
तथा तथा विशुद्धिस्ते पापस्यास्य भविष्यति ।।१९।।
एतदेव हि ते ब्रह्मन् प्रायश्चित्तं मयेरितम् ।।
जनहास्यकरं लोके तव गर्हाकरं परम् ।।2.2.20.२०।।
एतच्च तव वीर्य्यं हि पतितं वेदिमध्यगम् ।।
कामार्तस्य मया दृष्टं नैतद्धार्यं भविष्यति ।। २१ ।।
चतुर्बिन्दुमितं रेतः पतितं यत्क्षितौ तव ।।
तन्मितास्तोयदा व्योम्नि भवेयुः प्रलयंकराः ।। २२ ।।
एतस्मिन्नंतरे तत्र देवर्षीणां पुरो द्रुतम् ।।
तद्रेतसस्समभवंस्तन्मिताश्च बलाहका ।। २३ ।।
संवर्तकस्तथावर्त्तः पुष्करो द्रोण एव च ।।

एते चतुर्विधास्तात महामेघा लयंकराः ।। २४ ।।

गर्जंतश्चाथ मुचंतस्तोयानीषच्छिवेच्छया ।।

फेलुर्व्योम्नि मुनिश्रेष्ठ तोयदास्ते कदारवाः ।। २५ ।।

तैस्तु संछादिते व्योम्नि सुगर्जद्भिश्च शंकरः।।

प्रशान्दाक्षायणी देवी भृशं शांतोऽभवदद्रुतम् ।।२६।।

अथ चाहं वीतभयश्शंकरस्या ज्ञया तदा ।।

शेषं वैवाहिकं कर्म समाप्तिमनयं मुने ।। २७ ।।

पपात पुष्पवृष्टिश्च शिवाशिवशिरस्कयोः ।।

सर्वत्र च मुनिश्रेष्ठ मुदा देवगणोज्झिता ।।२८।।

वाद्यमानेषु वाद्येषु गायमानेषु तेषु च ।।

पठत्सु विप्रवर्येषु वादान् भक्त्यान्वितेषु च ।।२९।।

रंभादिषु पुरंध्रीषु नृत्यमानासु सादरम् ।।

महोत्सवो महानासीद्देवपत्नीषु नारद ।। 2.2.20.३० ।।

अथ कर्मवितानेशः प्रसन्नः परमेश्वरः ।।

प्राह मां प्रांजलिं प्रीत्या लौकिकीं गतिमाश्रितः ।। ३१ ।।

ईश्वर उवाच ।।

हे ब्रह्मन् सुकृतं कर्म सर्वं वैवाहिकं च यत् ।।

प्रसन्नोस्मि त्वमाचार्यो दद्यां ते दक्षिणां च काम् ।। ३२ ।।

याचस्व तां सुरज्येष्ठ यद्यपि स्यात्सुदुर्लभा ।।

ब्रूहि शीघ्रं महाभाग नादेयं विद्यते मम ।। ३३ ।।

।। ब्रह्मोवाच ।।

इत्याकर्ण्य वचस्सोहं शंकरस्य कृतांजलिः ।।

मुनेऽवोचं विनीतात्मा प्रणम्येशं मुहुर्मुहुः ।। ३४ ।।

।। ब्रह्मोवाच ।।

यदि प्रसन्नो देवेश वरयोग्योस्म्यहं यदि ।।

तत्कुरु त्वं महेशान सुप्रीत्या यद्वदाम्यहम् ।।३५।।

अनेनैव तु रूपेण वेद्यामस्यां महेश्वर ।।

त्वया स्थेयं सदैवात्र नृणां पापविशुद्धये ।। ३६ ।।

येनास्य संनिधौ कृत्वा स्वाश्रमं शशि शेखर ।।
तपः कुर्या विनाशाय स्वपापस्यास्य शंकर ।। ३७ ।।
चैत्रशुक्लत्रयोदश्यां नक्षत्रे भगदैवते ।।
सूर्यवारे च यो भक्त्या वीक्षेत भुवि मानवः ।। ३८ ।।
तदैव तस्य पापानि प्रयांतु हर संक्षयम् ।।
वर्द्धते विपुलं पुण्यं रोगा नश्यंतु सर्वशः ।।३९।।
या नारी दुर्भगा वंध्या काणा रूपविवर्जिता ।।
सापि त्वद्दर्शनादेव निर्दोषा संभवेद्ध्रुवम् ।। 2.2.20.४० ।।
ब्रह्मोवाच ।।
इत्याकर्ण्य वचो मे हि स्वात्मसर्वसुखावहम् ।।
तथाऽस्त्विति शिवः प्राह सुप्रसन्नेन चेतसा ।। ४१ ।।
शिव उवाच ।।
हिताय सर्वलोकस्य वेद्यां तस्यां व्यवस्थितः ।।
स्थास्यामि सहितः पत्न्या सत्या त्वद्वचनाद्विधे ।। ४२ ।।
।। ब्रह्मोवाच ।।
इत्युक्त्वा भगवांस्तत्र सभार्यो वृषभध्वजः ।।
उवाच वेदिमध्यस्थो मूर्तिं कृत्वांशरूपिणीम् ।। ४३ ।।
ततो दक्षं समामंत्र्य शंकरः परमेश्वरः ।।
पत्न्या सत्या गंतुमना अभूत्स्वजनवत्सलः ।। ४४ ।।
एतस्मिन्नंतरे दक्षो विनयावनतस्सुधीः ।।
सांजलिर्नतकः प्रीत्या तुष्टाव वृषभध्वजम् ।। ।।४५।।
विष्ण्वादयस्सुरास्सर्वे मुनयश्च गणास्तदा ।।
नत्वा संस्तूय विविधं चक्रुर्जयरवं मुदा ।।४६।।
आरोप्य वृषभे शंभुस्सतीं दक्षाज्ञया मुदा ।।
जगाम हिमवत्प्रस्थं वृषभस्थस्स्वयं प्रभुः।।४७।।
अथ सा शंकराभ्यासे सुदती चारुहासिनी ।।
विरेजे वृषभस्था वै चन्द्रांते कालिका यथा ।। ४८ ।।
विष्ण्वादयस्सुरास्सर्वे मरीच्याद्यास्तथर्षयः ।।

दक्षोपि मोहितश्चासीत्तथान्ये निश्चला जनाः ॥४९॥
केचिद्वाद्यान्वादयन्तो गायंतस्सुस्वरं परे ॥
शिवं शिवयशश्शुद्धमनुजग्मुः शिवं मुदा ॥2.2.20.५०॥
मध्यमार्गाद्विसृष्टो हि दक्षः प्रीत्याथ शम्भुना ॥
वधाम प्राप सगणः शम्भुः प्रेमसमाकुलः ॥ ५१ ॥
विसृष्टा अपि विष्ण्वाद्याश्शम्भुना पुनरेव ते ॥
अनुजग्मुश्शिवं भक्त्या सुराः परमया मुदा ॥५२॥
तैस्सर्वैस्सगणैश्शंभुस्सत्यः च स्वस्त्रिया युतः ॥
प्राप स्वं धाम संहृष्टो हिमवद्गिरि शोभितम् ॥ ५३ ॥
तत्र गत्वाखिलान्देवान्मुनीनपि परांस्तथा ॥
मुदा विसर्जयामास बहु सम्मान्य सादरम् ॥ ५४ ॥
शंभुमाभाष्य ते सर्वे विष्ण्वाद्या मुदितानना ॥
स्वंस्वं धाम ययुर्नत्वा स्तुत्वा च मुनयस्सुराः ॥ ५५ ॥
शिवोपि मुदितोत्यर्थं स्वपत्न्या दक्षकन्यया ॥
हिमवत्प्रस्थसंस्थो हि विजहार भवानुगः ॥ ५६ ॥
ततस्स शंकरस्सत्या सगणस्सूतिकृन्मुने ॥
प्राप स्वं धाम संहृष्टः कैलाशं पर्वतोत्तमम् ॥ ५७ ॥
एतद्वस्सर्वमाख्यातं यथा तस्य पुराऽभवत् ॥
विवाहो वृषयानस्य मनुस्वायंभुवान्तक ॥ ५८ ॥
विवाहसमये यज्ञे प्रारंभे वा शृणोति यः ॥
एतदाख्यानमव्यग्रस्संपूज्य वृषभध्वजम् ॥ ५९ ॥
तस्याऽविघ्नं भवेत्सर्वं कर्म वैवाहिकं च यत् ॥
शुभाख्यमपरं कर्म निर्विघ्नं सर्वदा भवेत् ॥2.2.20.६०॥
कन्या च सुखसौभण्यशीलाचारगुणान्विता॥
साध्वी स्यात्पुत्रिणी प्रीत्या श्रुत्वाख्यानमिदं शुभम् ॥६१॥
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखण्डे सती विवाहवर्णनं नाम विंशोऽध्यायः ॥ २० ॥

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः २१



।। नारद उवाच ।।

समीचीनं वचस्तात सर्वज्ञस्य तवाऽनघ ।।

महाद्भुतं श्रुतं नो वै चरितं शिवयोश्शुभम् ।। १ ।।

विवाहश्च श्रुतस्सम्यक् सर्वमोहापहारकः ।।

परमज्ञानसंपन्नो मंगलालय उत्तमः ।।२।।

भूय एव विवित्सा मे चरितं शिवयोश्शुभम् ।।

तद्वर्णय महाप्राज्ञ कृपां कृत्वाऽतुलामरम् ।। ३ ।।

।। ब्रह्मोवाच ।।

सम्यक्कारुणिकस्यैव मुने ते विचिकित्सितम् ।।

यदहं नोदितस्सौम्य शिवलीलानुवर्णने ।। ४ ।।

विवाह्य दक्षजां देवीं सतीं त्रैलोक्यमातरम् ।।

गत्वा स्वधाम सुप्रीत्या यदकार्षीन्निबोध मे ।। ५ ।।

ततो हरस्स स्वगणस्स्वस्थानं प्राप्य मोदनम ।।

देवर्षे तत्र वृषभादवातरदतिप्रियात् ।। ६ ।।

यथायोग्यं निजस्थानं प्रविश्य स सतीसखः ।।

मुमुदेऽतीव देवर्षे भवाचारकरश्शिवः।।७।।

ततो विरूपाक्ष इमां प्राप्य दाक्षायणीं गणान् ।।

स्वीयानिर्यापयामास नद्यादीन् गिरिकंदरात् ।।८।।

उवाच चैतास्तान् सर्वान्नंद्यादीनतिसूनृतम् ।।

लौकिकीं रीतिमाश्रित्य करुणासागरः प्रभुः ।। ९ ।।

महेश उवाच ।।

यदाहं च स्मराम्यत्र स्मरणादरमानसाः ।।

समागमिष्यथ तदा मत्पार्श्वं मे गणा द्रुतम् ।। 2.2.21.१० ।।

इत्युक्ते वामदेवेन नद्याद्यास्स्वगणाश्च ते ।।

महावेगा महावीरा नानास्थानेषु संययुः ।। ११ ।।
ईश्वरोपि तया सार्द्धं तेषु यातेषु विभ्रमी ।।
दाक्षायण्या समं रेमे रहस्ये मुदितो भृशम् ।। १२ ।।
कदाचिद्वन्य पुष्पाणि समाहृत्य मनोहराम् ।।
मालां विधाय सत्यास्तु हारस्थाने स योजयत्।। ३।।
कदाचिद्दर्पणे चैव वीक्षतीमात्मनस्सतीम् ।।
अनुगम्य हरो वक्त्रम् स्वीयमप्यवलोकयत ।। १४ ।।
कदाचित्कुंडलं तस्या उल्लास्योल्लास्य संगतः।।
बध्नाति मोचयत्येव सा स्वयं मार्जयत्यपि ।। १५।।
सरागौ चरणावस्याः पावकेनोज्ज्वलेन च ।।
निसर्गरक्तौ कुरुते पूर्णरागौ वृषध्वजः ।। १६।।
उच्चैरपि यदाख्येयमन्येषां पुरतो बहु ।।
तत कर्णे कथयत्यस्याहरो द्रष्टुं तदाननम् ।। १७।।
न दूरमपि गन्तासौ समागत्य प्रयत्नतः।।
अनुबध्नाति नामाक्षी पृष्ठदेशेन्यमानसाम्।। १८।।
अंतर्हितस्तु तत्रैव मायया वृषभध्वजः ।।
तामालिलिंग भीत्या स्वं चकिता व्याकुलाऽभवत्।। १९।।
सौवर्णपद्मकलिकातुल्ये तस्या कुचद्वये ।।
चकार भ्रमराकारं मृगनाभिविशेषकम् ।। 2.2.21.२० ।।
हारमस्याः कुचयुगाद्वियोज्य सहसा हरः ।।
न्ययोजयच्च तत्रैव स्वकरस्पर्शनं मुहुः ।।२१।।
अंगदान्वलयानूर्मान्विश्लेष्य च पुनः पुनः।।
तत्स्थानात्पुनरेवासौ तत्स्थाने प्रत्ययोजयत् ।। २२ ।।
कालिकेति समायाति सवर्णा ते सखी त्विमाम् ।।
यास्यत्वस्यास्तथेक्षंत्याः प्रोत्तुंगौ साहसं कुचौ ।। २३ ।।
कदाचिन्मदनोन्मादचेतनः प्रमथाधिपः ।।
चकार नर्म शर्माणि तथाकृत्प्रियया मुदा ।। २४ ।।
आहृत्य पद्मपुष्पाणि रम्यपुष्पाणि शंकरः ।।

सर्वांगेषु करोति स्म पुष्पाभरणमादरात् ।। २५ ।।
गिरिकुंजेषु रम्येषु सत्या सह महेश्वरः ।।
विजहार समस्तेषु प्रियया भक्तवत्सलः ।। २६ ।।
तया विना स्म नो याति नास्थितो न स्म चेष्टते ।।
तया विना क्षममपि शर्म लेभे न शंकरः ।।२७।।
विहृत्य सुचिरं कालं कैलासगिरिकुंजरे ।।
अगमद्धिमवत्प्रस्थं सस्मार स्वेच्छया स्मरन् ।। २८ ।।
तस्मिन्प्रविष्टे कामे तु वसंतश्शंकरांतिके ।।
वितस्तार निजं भावं हार्दं विज्ञाय यत्प्रभो ।।२९।।
सर्वे च पुष्पिता वृक्षा लताश्चान्याश्च पुष्पिताः।
अंभांसि फुल्लपद्मानि पद्मास्सभ्रमरास्तथा।।2.2.21.३०।।
प्रविष्टे तत्र सद्दतौ ववौ स मलयो मरुत् ।।
सुगंधिगंधपुष्पेण मोदकश्च सुगंधियुक् ।।३१।।
संध्यार्द्रचन्द्रसंकाशाः पलाशाश्च विरेजिरे ।।
कामास्त्रवत्सुमनसः प्रमोदात्पादपाधरः ।।३२।।
बभुः पंकजपुष्पाणि सरस्सु संकलाञ्जनान् ।।
संमोहयितुमुद्युक्ता सुमुखी वायुदेवता ।। ३३ ।।
नागकेशरवृक्षाश्च स्वर्णवर्णैः प्रसूनकैः ।।
बभुर्मदनकेत्वाभा मनोज्ञाश्शंकरांतिके ।। ३४ ।।
लवंगवल्लीसुरभिगंधेनोद्वास्य मारुतम् ।।
मोहयामास चेतांसि भृशं कामिजने पुरा ।। ३५ ।।
चारु पावकचर्चित्सु सुस्वराश्चूतशालिनः ।।
बभुर्मदनबाणौघपर्यंकमदनावृताः ।। ३६ ।।
अंभांसि मलहीनानि रेजुः फुल्लकुशाशयाः ।।
मुनीनामिव चेतांसि प्रव्यक्तज्योतिरुद्गमम् ।। ३७ ।।
तुषारास्सूर्यरश्मीनां संगमादगमन् बहिः ।।
प्रमत्वानीक्ष्यतेक्षाश्च सलिलीहृदयास्तदा ।। ३८ ।।
प्रसन्नास्सह चन्द्रेण ननिषारास्तदाऽभवन् ।।

विभावर्यः प्रियेणैवं कामिन्यस्तु मनोहराः ।। ३९ ।।
तस्मिन्काले महादेवस्सह सत्या धरोत्तमे ।।
रेमे स सुचिरं छन्दं निकुंजेषु नदीषु च ।। 2.2.21.४० ।।
तथा तेन समं रेजे तदा दाक्षायिणि मुने ।।
यथा हरः क्षणमपि शांतिमाप तया विना ।। ४१ ।।
संभोगविषये देवी सती तस्य मनः प्रिया ।।
विशतीव हरस्यांगे पाययन्निव तद्रसम् ।। ४२ ।।
तस्या कुसुममालाभिर्भूषयन्सकलां तनुम् ।।
स्वहस्तरचिताभिस्तु नवशर्माकरोच्च सः ।। ४३ ।।
आलापैर्वीक्षितैर्हास्यैस्तथा संभाषणैर्हरः ।।
तस्यादिदेश गिरिजां सपतीवात्मसंविदम् ।। ४४ ।।
तद्वक्त्रचंद्र पीयूषपानस्थिरतनुर्हरः ।।
नानावैशेषिकीं तन्वीमवस्थां स कदाचन ।। ४५ ।।
तद्वक्त्राम्बुजवासेन तत्सौन्दर्य्यैश्च नर्मभिः ।।
गुणैरिव महादंती बद्धो नान्यविचेष्टितः ।। ४६ ।।
इति हिमगिरिकुंजप्रस्थभागे दरीषु प्रतिदिनमभिरेमे दक्षपुत्र्या महेशः ।।
क्रतुभुजपरिमाणैः क्रीडतस्तस्य जाता दश दश च सुरर्षे वत्सराः पंच चान्ये ।। ४७ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहि तायां द्वितीये सतीखंडे सतीशिवक्रीडावर्णनं नामैकविंशोध्यायः ।। २१ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः २२



ब्रह्मोवाच ।।

कदाचिदथ दक्षस्य तनया जलदागमे ।।

कैलासक्ष्माभृतः प्राह प्रस्थस्थं वृषभध्वजम् ।।१।।

सत्युवाच ।।

देव देव महादेव शंभो मत्प्राणवल्लभ ।।

शृणु मे वचनं नाथ श्रुत्वा तत्कुरु मानद ।।२।।

घनागमोयं संप्राप्तः कालः परमदुस्सहः ।।

अनेकवर्णमेघौघास्संगीतांबरदिक्चयाः ।।३।।

विवांति वाता हृदयं हारयंतीत वेगिनः ।।

कदंबरजसा धौताः पाथोबिन्दुविकर्षणाः ।। ४ ।।

मेघानां गर्जितैरुच्चैर्धारासारं विमुंचताम् ।।

विद्युत्पताकिनां तीव्रः क्षुब्धं स्यात्कस्य नो मनः ।।५।।

न सूर्यो दृश्यते नापि मेघच्छन्नो निशापतिः ।।

दिवापि रात्रिवद्भाति विरहि व्यसनाकरः ।। ६ ।।

मेघानैकत्र तिष्ठंतो ध्वनन्त पवनेरिताः ।।

पतंत इव लोकानां दृश्यंते मूर्ध्नि शंकर ।। ७ ।।

वाताहता महावृक्षा नर्तंत इव चांबरे ।।

दृश्यंते हर भीरूणां त्रासदाः कामुकेप्सिता ।। ८ ।।

स्निग्धनीलांजनस्याशु सदिवौघस्य पृष्ठतः ।।

बलाकराजी वात्युच्चैर्यमुनापृष्ठफेनवत् ।। ९ ।।

क्षपाक्षयेषवलयं दृश्यते कालिकागता ।।

अंबुधाविव संदीप्तपावको वडवामुखः ।। 2.2.22.१० ।।

प्रारोहंतीह सस्यानि मंदिरं प्राङ्गणेष्वपि ।।

किमन्यत्र विरूपाक्ष सस्यौद्भूतिं वदाम्यहम् ।। ११ ।।

श्यामलै राजतैरक्तैर्विशदोयं हिमाचलः ।।
मंदराश्रयमेघौघः पत्रैर्दुग्धांबुधिर्यथा ।।१२।।
असमश्रीश्च कुटिलं भेजे यस्याथ किंशुकान् ।।
उच्चावचान् कलौ लक्ष्मीर्गन्ता संत्यज्य सज्जनान् ।। १३ ।।
मंदारस्तन पीलूनां शब्देन हृषिता मुहुः ।।
केकायंते प्रतिवने सततं पृष्ठसूचकम् ।। १४ ।।
मेघोत्सुकानां मधुरश्चातकानां मनोहरः ।।
धारासारशरैस्तापं पेतुः प्रतिपथोद्गतम् ।। १५ ।।
मेघानां पश्य मद्देहे दुर्नयं करकोत्करैः ।।
ये छादयंत्यनुगते मयूरांश्चातकांस्तथा ।। १६ ।।
शिखसारंगयोर्दृष्ट्वा मित्रादपि पराभवम् ।।
हर्षं गच्छंति गिरिशं विदूरमपि मानसम् ।। १७ ।।
एतस्मिन्विषमे काले नीलं काकाश्चकोरकाः ।।
कुर्वंति त्वां विना गेहान् कथं शांतिमवाप्स्यसि ।। ।। १८ ।।
महतीवाद्य नो भीतिर्मा मेघोत्था पिनाकधृक् ।।
यतस्व यस्माद्वासाय माचिरं वचनान्मम ।। १९ ।।
कैलासे वा हिमाद्रौ वा महाकाश्यामथ क्षितौ ।।
तत्रोपयोग्यं संवासं कुरु त्वं वृषभध्वज ।। 2.2.22.२० ।।
।। ब्रह्मोवाच ।।
एवमुक्तस्तया शंभुर्दाक्षायण्या तथाऽसकृत ।।
संजहास च शीर्षस्थचन्द्ररश्मिस्मितालयम् ।। २१ ।।
अथोवाच सतीं देवीं स्मितभिन्नौष्ठसंपुटः ।।।
महात्मा सर्वतत्त्वज्ञस्तोषयन्परमेश्वरः ।। २२ ।।
ईश्वरः उवाच ।।
यत्र प्रीत्यै मया कार्यो वासस्तव मनोहरे ।।
मेघास्तत्र न गंतारः कदाचिदपि मत्प्रिये ।। २३ ।।
मेघा नितंबपर्यंतं संचरंति महीभृतः ।।
सदा प्रालेयसानोस्तु वर्षास्वपि मनोहरे । ।। २४ ।।

कैलासस्य तथा देवि पादगाः प्रायशो घनाः ।।
संचरंति न गच्छंति तत ऊर्द्ध्वं कदाचन ।। २५ ।।
सुमेरोर्वा गिरेरूर्द्ध्वं न गच्छंति बलाहकाः ।।
जम्बूमूलं समासाद्य पुष्करावर्तकादयः ।। २६ ।।
इत्युक्तेषु गिरीन्द्रेषु यस्योपरि भवेद्धि ते ।।
मनोरुचिर्निवासाय तमाचक्ष्व द्रुतं हि मे ।। २७ ।।
स्वेच्छाविहारैस्तव कौतुकानि सुवर्णपक्षानिलवृन्दवृन्दैः ।।
शब्दोत्तरंगैर्मधुरस्वनैस्तैर्मुदोपगेयानि गिरौ हिमोत्थे ।। २८ ।।
सिद्धाङ्गनास्ते रचितासना भुवमिच्छंति चैवोपहृतं सकौतुकम् ।।
स्वेच्छाविहारे मणिकुट्टिमे गिरौ कुर्वन्ति चेष्यंति फलादिदानकैः ।। २९ ।।
फणीन्द्रकन्या गिरिकन्यकाश्च या नागकन्याश्च तुरंगमुख्याः ।।
सर्वास्तु तास्ते सततं सहायतां समाचरिष्यंत्यनुमोदविभ्रमैः ।। 2.2.22.३० ।।
रूपं तदेवमतुलं वदनं सुचारु दृष्ट्वांगना निजवपुर्निजकांतिसह्यम् ।।
हेला निजे वपुषि रूपगणेषु नित्यं कर्तार इत्यनिमिषेक्षणचारुरूपाः ।। ३१ ।।
या मेनका पर्वतराज जाया रूपैर्गुणैः ख्यातवती त्रिलोके ।।
सा चापि ते तत्र मनोनुमोदं नित्यं करिष्यत्यनुनाथनाद्यैः ।। ३२ ।।
पुरं हि वर्गैर्गिरिराजवंद्यैः प्रीतिं विचिन्वद्भिरुदाररूपा ।।
शिक्षा सदा ते खलु शोचितापि कार्याऽन्वहं प्रीतियुता गुणाद्यैः ।। ३३ ।।
विचित्रैः कोकिलालापमोदैः कुंजगणावृतम् ।।
सदा वसंतप्रभवं गंतुमिच्छसि किं प्रिये ।। ३४ ।।
नानाबहुजलापूर्णसरश्शीत समावृतम् ।।
पद्मिनीशतशोयुक्तमचलेन्द्रं हिमालयम् ।। ३५ ।।
सर्वकामप्रदैर्वृक्षैश्शाद्वलैः कल्पसंज्ञकैः ।।
सक्षणं पश्य कुसुमान्यथाश्वकरि गोव्रजे ।। ३६ ।।
प्रशांतश्वापदगणं मुनिभिर्यतिभिर्वृतम् ।।
देवालयं महामाये नानामृगगणैर्युतम् ।। ३७ ।।
स्फटिक स्वर्णवप्राद्यै राजतैश्च विराजितम् ।।
मानसादिसरोरंगैरभितः परिशोभितम् ।। ३८ ।।

हिरण्मयै रत्ननालैः पंकजैर्मुकुलैर्वृतम् ।।
शिशुमारैस्तथासंख्यैः कच्छपैर्मकरैः करैः ।। ३९ ।।
निषेवितं मंजुलैश्च तथा नीलोत्पलादिभिः ।।
देवेशि तस्मान्मुक्तैश्च सर्वगंधैश्च कुंकुमैः ।। 2.2.22.४० ।।
लसद्गंधजलैः शुभ्रैरापूर्णैः स्वच्छकांतिभिः ।।
शाद्वलैस्तरुणैस्तुंगैस्तीरस्थैरुपशोभितम् ।। ४१ ।।
नृत्यद्भिरिव शाखोटैर्वर्जयंतं स्वसंभवम् ।।
कामदेवैस्सारसैश्च मत्तचक्रांगशोभितैः ।। ४२ ।।
मधुराराविभिर्मोदकारिभिर्भ्रमरादिभिः ।।
शब्दायमानं च मुदा कामोद्दीपनकारकम् ।। ४३ ।।
वासवस्य कुबेरस्य यमस्य वरुणस्य च ।।
अग्नेः कोणपराजस्य मारुतस्य परस्य च ।। ४४ ।।
पुरीभिश्शोभिशिखरं मेरोरुच्चैस्सुरालयम् ।।
रंभाशचीमेनकादिरंभोरुगणसेवितम् ।। ।। ४५ ।।
किं त्वमिच्छसि सर्वेषां पर्वतानां हि भूभृताम् ।।
सारभूते महारम्ये संविहर्तुं महागिरौ ।। ४६ ।।
तत्र देवी सखियुता साप्सरोगणमंडिता ।।
नित्यं करिष्यति शची तव योग्यां सहायताम्।।४७।।
अथवा मम कैलासे पर्वतेंद्रे सदाश्रये ।।
स्थानमिच्छसि वित्तेशपुरीपरिविराजिते ।।४८।।
गंगाजलौघप्रयते पूर्णचन्द्रसमप्रभे ।।
दरीषु सानुषु सदा ब्रह्मकन्याभ्युदीरिते ।।४९।।
नानामृगगणैर्युक्ते पद्माकरशतावृते ।।
सर्वैर्गुणैश्च सद्वस्तुसुमेरोरपि सुंदरि ।।2.2.22.५०।।
स्थानेष्वेतेषु यत्रापि तवांतःकरणे स्पृहा ।।
तं द्रुतं मे समाचक्ष्व वासकर्तास्मि तत्र ते ।। ५१ ।।
ब्रह्मोवाच ।।
इतीरिते शंकरेण तदा दाक्षायणी शनैः ।।

इदमाह महादेवं लक्षणं स्वप्रकाशनम् ।। ५२ ।।

।। सत्युवाच ।।

हिमाद्रावेव वसितुमहमिच्छे त्वया सह ।।

न चिरात्कुरु संवासं तस्मिन्नेव महागिरौ ।। ५३ ।।

ब्रह्मोवाच ।।

अथ तद्वाक्यमाकर्ण्य हरः परममोहितः ।।

हिमाद्रिशिखरं तुंगं दाक्षायण्या समं ययौ ।। ५४ ।।

सिद्धांगनागणयुतमगम्यं चैव पक्षिभिः ।।

अगमच्छिखरं रम्यं सरसीवनराजितम् ।। ५५ ।।

विचित्ररूपैः कमलैः शिखरं रत्नकर्बुरम्।।

बालार्कसदृशं शंभुराससाद सतीसखः।।५६।।

स्फटिकाभ्रमये तस्मिन् शादवलद्रुमराजिते

विचित्रपुष्पावलिभिस्सरसोभिश्च संयुते।।५७।।

प्रफुल्लतरुशाखाग्रं गुंजद्भ्रमरसेवितम्।

पंकेरुहैः प्रफुल्लैश्च नीलोत्पलचयैस्तथा।।५८।।

शोभितं चक्रवाकाद्यैः कादंबैर्हंसशंकुभिः।।

प्रमत्तसारसैः क्रौंचैर्नीलस्कंधैश्च शब्दितैः।।५९।।

पुंस्कोकिलानां निनदैर्मधुरैर्गणसेवितैः।।

तुरंगवदनैस्सिद्धैरप्सरोभिश्च गुह्यकैः।।2.2.22.६०।।

विद्याधरीभिर्देवीभिः किन्नरीभिर्विहारितम्।।

पुरंध्रीभिः पार्वतीभिः कन्याभिरभिसंगतम्।।६१।।

विपंचीतांत्रिकामत्तमृदंगपटहस्वनैः।

नृत्यद्भिरप्सरोभिश्च कौतुकोत्थैश्च शोभितम् ।। ६२ ।।

देविकाभिर्दीर्घिकाभिर्गंधिभिस्सुसमावृतम् ।।

प्रफुल्लकुसुमैर्नित्यं सकुंजैरुपशोभितम् ।।६३।।

शैलराजपुराभ्यर्णे शिखरे वृषभध्वजः ।।

सह सत्या चिरं रेमे एवंभूतेषु शोभनम् ।। ।। ६४ ।।

तस्मिन्स्वर्गसमे स्थाने दिव्यमानेन शंकरः ।।

दशवर्षसहस्राणि रेमे सत्या समं मुदा ।। ६५ ।।

स कदाचित्ततस्स्थानादन्यद्याति स्थलं हरः ।।

कदाचिन्मेरुशिखरं देवी देववृतं सदा ।।६६।।

द्वीपान्नाना तथोद्यानवनानि वसुधातलम्।।

गत्वागत्वा पुनस्तत्राभ्येत्य रेमे सतीसुखम् ।।६७।।

न जज्ञे स दिवा रात्रौ न ब्रह्मणि तपस्समम् ।।

सत्यां हि मनसा शंभुः प्रीतिमेव चकार ह ।।६८।।

एवं महादेवमुखं सत्यपश्यत्स्म सर्वदा ।।

महादेवोऽपि सर्वत्र सदाद्राक्षीत्सतीमुखम् ।।६९।।

एवमन्योन्यसंसर्गादनुरागमहीरुहम् ।।

वर्द्धयामासतुः कालीशिवौ भावांबुसेचनैः ।। 2.2.22.७० ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे शिवाशिवविहारवर्णनं नाम द्वाविंशोऽध्यायः ।।२२।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः २३

https://sa.wikisource.org/s/v3t
< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः २ (सतीखण्डः)

ब्रह्मोवाच ।।

एवं कृत्वा विहारं वै शंकरेण च सा सती ।।

संतुष्टा साभवच्चाति विरागा समजायत ।। १ ।।

एकस्मिन्दिवसे देवी सती रहसि संगता ।।

शिवं प्रणम्य सद्भक्त्या न्यस्योच्चैः सुकृतांजलिः ।। २ ।।

सुप्रसन्नं प्रभुं नत्वा सा दक्षतनया सती ।।

उवाच सांजलिर्भक्त्या विनयावनता ततः ।। ३ ।।

सत्युवाच ।।

देवदेव महादेव करुणा सागर प्रभो ।।

दीनोद्धर महायोगिन् कृपां कुरु ममोपरि ।।४।।

त्वं परः पुरुषस्स्वामी रजस्सत्त्वतमः परः ।।

निर्गुणस्सगुणस्साक्षी निर्विकारी महाप्रभुः ।। ५ ।।

धन्याहं ते प्रिया जाता कामिनी सुविहारिणी ।।

जातस्त्वं मे पतिस्स्वामिन्भक्तिवात्सल्यतो हर ।। ६ ।।

कृतो बहुसमा नाथ विहारः परमस्त्वया ।।

संतुष्टाहं महेशान निवृत्तं मे मनस्ततः ।।७।।

ज्ञातुमिच्छामि देवेश परं तत्त्वं सुखावहम् ।।

यं न संसारदुःखाद्वै तरेज्जीवोंजसा हर ।।८।।

यत्कृत्वा विषयी जीवस्स लभेत्परमं पदम् ।।

संसारी न भवेन्नाथ तत्त्वं वद कृपां कुरु ।।९।।

ब्रह्मोवाच।।

इत्यपृच्छत्स्म सद्भक्त्या शंकरं सा सती मुने ।।

आदिशक्तिर्महेशानी जीवोद्धाराय केवलम् ।।2.2.23.१०।

आकर्ण्य तच्छिवः स्वामी स्वेच्छयोपात्तविग्रहः ।।

अवोचत्परमप्रीतस्सतीं योगविरक्तधीः ।। ११ ।।

।। शिव उवाच ।।

शृणु देवि प्रवक्ष्यामि दाक्षायणि महेश्वरि ।।

परं तत्त्वं तदेवानुशयी मुक्तो भवेद्यतः ।। १२ ।

परतत्त्वं विजानीहि विज्ञानं परमेश्वरी ।।

द्वितीयं स्मरणं यत्र नाहं ब्रह्मेति शुद्धधीः ।।१३।।

तद्दुर्लभं त्रिलोकेस्मिंस्तज्ज्ञाता विरलः प्रिये ।।

यादृशो यस्सदासोहं ब्रह्मसाक्षात्परात्परः ।। १४ ।।

तन्माता मम भक्तिश्च भुक्तिमुक्तिफलप्रदा ।।

सुलभा मत्प्रसादाद्धि नवधा सा प्रकीर्तिता ।। १५ ।।

भक्तौ ज्ञाने न भेदो हि तत्कर्तुस्सर्वदा सुखम् ।।

विज्ञानं न भवत्येव सति भक्तिविरोधिनः ।। १६ ।।

भक्त्या हीनस्सदाहं वै तत्प्रभावाद्गृहेष्वपि ।।

नीचानां जातिहीनानां यामि देवि न संशयः ।। १७ ।।

सा भक्तिर्द्विविधा देवि सगुणा निर्गुणा मता ।।

वैधी स्वाभाविकी या या वरा सा त्ववरा स्मृता ।। १८ ।।

नैष्ठिक्या नैष्ठिकी भेदाद्द्विविधे द्विविधे हि ते ।।

षड्विधा नैष्ठिकी ज्ञेया द्वितीयैकविधा स्मृता ।। १९ ।।

विहिताविहिताभेदात्तामनेकां विदुर्बुधाः ।।

तयोर्बहुविधत्वाच्च तत्त्वं त्वन्यत्र वर्णितम् ।। 2.2.23.२० ।।

ते नवांगे उभे ज्ञेये वर्णिते मुनिभिः प्रिये ।।

वर्णयामि नवांगानि प्रेमतः शृणु दक्षजे ।। २१ ।।

श्रवणं कीर्तनं चैव स्मरणं सेवनं तथा ।।

दास्यं तथार्चनं देवि वंदनं मम सर्वदा ।। २२ ।।

सख्यमात्मार्पणं चेति नवांगानि विदुर्बुधाः ।।

उपांगानि शिवे तस्या बहूनि कथितानि वै ।। २३ ।।

शृणु देवि नवांगानां लक्षणानि पृथक्पृथक् ।।

मम भक्तेर्मनो दत्त्वा भक्ति मुक्तिप्रदानि हि ।। २४ ।।

कथादेर्नित्यसम्मानं कुर्वन्देहादिभिर्मुदा ।।
स्थिरासनेन तत्पानं यत्तच्छ्रवणमुच्यते ।। २५ ।।
हृदाकाशेन संपश्यञ् जन्मकर्माणि वै मम ।।
प्रीत्याचोच्चारणं तेषामेतत्कीर्तनमुच्यते ।। २६ ।।
व्यापकं देवि मां दृष्ट्वा नित्यं सर्वत्र सर्वदा ।।
निर्भयत्वं सदा लोके स्मरणं तदुदाहृतम् ।। २७ ।।
अरुणोदयमारभ्य सेवाकालेंचिता हृदा ।।
निर्भयत्वं सदा लोके स्मरणं तदुदाहृतम् ।। २८ ।।
सदा सेव्यानुकूल्येन सेवनं तद्धि गोगणैः ।।
हृदयामृतभोगेन प्रियं दास्यमुदाहृतम् ।।२९।।
सदा भृत्यानुकूल्येन विधिना मे परात्मने ।।
अर्पणं षोडशानां वै पाद्यादीनां तदर्चनम् ।।2.2.23.३०।।
मंत्रोच्चारणध्यानाभ्यां मनसा वचसा क्रमात् ।।
यदष्टांगेन भूस्पर्शं तद्वै वंदनमुच्यते ।।३१।।
मंगलामंगलं यद्यत्करोतीतीश्वरो हि मे ।।
सर्वं तन्मंगलायेति विश्वासः सख्यलक्षणम् ।। ३२ ।।
कृत्वा देहादिकं तस्य प्रीत्यै सर्वं तदर्पणम्।।
निर्वाहाय च शून्यत्वं यत्तदात्मसमर्पणम्।।३३।।
नवांगानीति मद्भक्तेर्भुक्तिमुक्तिप्रदानि च ।।
मम प्रियाणि चातीव ज्ञानोत्पत्तिकराणि च ।।३४।।
उपांगानि च मद्भक्तेर्बहूनि कथितानि वै ।।
बिल्वादिसेवनादीनि समू ह्यानि विचारतः ।। ३५ ।।
इत्थं सांगोपांगभक्तिर्मम सर्वोत्तमा प्रिये ।।
ज्ञानवैराग्यजननी मुक्तिदासी विराजते ।।३६।।
सर्वकर्मफलोत्पत्तिस्सर्वदा त्वत्समप्रिया ।।
यच्चित्ते सा स्थिता नित्यं सर्वदा सोति मत्प्रियः ।।३७।।
त्रैलोक्ये भक्तिसदृशः पंथा नास्ति सुखावहः ।।
चतुर्युगेषु देवेशि कलौ तु सुविशेषतः ।। ३८ ।।

कलौ तु ज्ञानवैरागो वृद्धरूपौ निरुत्सवौ ।।
ग्राहकाभावतो देवि जातौ जर्जर तामति ।। ३९ ।।
कलौ प्रत्यक्षफलदा भक्तिस्सर्वयुगेष्वपि ।।
तत्प्रभावादहं नित्यं तद्वशो नात्र संशयः ।। 2.2.23.४० ।।
यो भक्तिमान्पुमाँल्लोके सदाहं तत्सहायकृत् ।।
विघ्नहर्ता रिपुस्तस्य दंड्यो नात्र च संशयः ।। ४१ ।।
भक्तहेतोरहं देवि कालं क्रोधपरिप्लुतः
अदहं वह्निना नेत्रभवेन निजरक्षकः ।।४२।।
भक्तहेतोरहं देवि रव्युपर्यभवं किल।
अतिक्रोधान्वितः शूलं गृहीत्वाऽन्वजयं पुरा।।४३।।
भक्तहेतोरहं देवि रावणं सगणं क्रुधा ।।
त्यजति स्म कृतो नैव पक्षपातो हि तस्य वै।।४४।।
भक्तहेतोरहं देवि व्यासं हि कुमतिग्रहम् ।।
काश्या न्यसारयत् क्रोधाद्दण्डयित्वा च नंदिना ।।४५।।
किं बहूक्तेन देवेशि भक्त्याधीनस्सदा ह्यहम् ।।
तत्कर्तुं पुरुषस्यातिवशगो नात्र संशयः ।। ४६ ।।
ब्रह्मोवाच ।।
इत्थमाकर्ण्य भक्तेस्तु महत्त्वं दक्षजा सती ।।
जहर्षातीव मनसि प्रणनाम शिवं मुदा ।। ४७ ।।
पुनः पप्रच्छ सद्भक्त्या तत्काण्डविषयं मुने ।।
शास्त्रं सुखकरं लोके जीवोद्धारपरायणम् ।।४८।।
सयंत्रमंत्रशास्त्रं च तन्माहात्म्यं विशेषतः ।।
अन्यानि धर्मवस्तूनि जीवोद्धारकराणि हि ।। ४९ ।।
शंकरोपि तदाकर्ण्य सतीं प्रश्नं प्रहृष्टधीः ।।
वर्णयामास सुप्रीत्या जीवोद्धाराय कृत्स्नशः ।। 2.2.23.५० ।।
तत्र शास्त्रं सयंत्रं हि सपंचाङ्गं महेश्वरः ।।
बभाषे महिमानं च तत्तद्दैववरस्य वै ।। ५१ ।।
सेतिहासकथं तेषां भक्तमाहात्म्यमेव च ।।

सवर्णाश्रमधर्मांश्च नृपधर्मान् मुनीश्वर ।। ५२ ।।

सुतस्त्रीधर्ममाहात्म्यं वर्णाश्रममनश्वरम् ।।

वैद्यशास्त्रं तथा ज्योतिश्शास्त्रं जीवसुखावहम् ।। ५३ ।।

सामुद्रिकं परं शास्त्रमन्यच्छास्त्राणि भूरिशः ।।

कृपां कृत्वा महे शानो वर्णयामास तत्त्वतः ।। ५४ ।।

इत्थं त्रिलोकसुखदौ सर्वज्ञौ च सतीशिवौ ।।

लोकोपकारकरणधृतसद्गुणविग्रहौ ।। ५५ ।।

चिक्रीडाते बहुविधे कैलासे हिमवद्गिरौ ।।

अन्यस्थलेषु च तदा परब्रह्मस्वरूपिणौ ।। ५६ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखण्डे भक्तिप्रभाववर्णनं नाम त्रयोविंशोऽध्यायः ।। २३ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः २४



।। नारद उवाच ।।

ब्रह्मन् विधे प्रजानाथ महाप्राज्ञ कृपाकर ।।

श्रावितं शंकरयशस्सतीशंकरयोः शुभम् ।। १ ।।

इदानीं ब्रूहि सत्प्रीत्या परं तद्यश उत्तमम् ।।

किमकार्ष्टां हि तत्स्थौ वै चरितं दंपती शिवौ ।। २ ।।

ब्रह्मोवाच ।।

सतीशिवचरित्रं च शृणु मे प्रेमतो मुने ।।

लौकिकीं गतिमाश्रित्य चिक्रीडाते सदान्वहम् ।। ३ ।।

ततस्सती महादेवी वियोगमलभन्मुने ।।

स्वपतश्शंकरस्येति वदंत्येके सुबुद्धयः ।। ४ ।।

वागर्थाविव संपृक्तौ शक्तीशौ सर्वदा चितौ ।।

कथं घटेत च तयोर्वियोगस्तत्त्वतो मुने ।।५।।

लीलारुचित्वादथ वा संघटेताऽखिलं च तत् ।।

कुरुते यद्यदीशश्च सती च भवरीतिगौ ।। ६ ।।

सा त्यक्ता दक्षजा दृष्ट्वा पतिना जनकाध्वरे ।।

शंभोरनादरात्तत्र देहं तत्याज संगता ।। ७ ।।

पुनर्हिमालये सैवाविर्भूता नामतस्सती ।।

पार्वतीति शिवं प्राप तप्त्वा भूरि विवाहतः ।। ८ ।।

सूत उवाच ।।

इत्याकर्ण्य वचस्तस्य ब्रह्मणस्स तु नारदः ।।

पप्रच्छ च विधातारं शिवाशिवमहद्यशः ।।९।।

नारद उवाच ।।

विष्णुशिष्य महाभाग विधे मे वद विस्तरात् ।।

शिवाशिवचरित्रं तद्भवाचारपरानुगम् ।। 2.2.24.१० ।।

किमर्थं शंकरो जायां तत्याज प्राणतः प्रियाम् ।।
तस्मादाचक्ष्व मे तात विचित्रमिति मन्महे ।। ११ ।।
कुतोऽह्यध्वरजः पुत्रां नादरोभूच्छिवस्य ते ।।
कथं तत्याज सा देहं गत्वा तत्र पितृक्रतौ ।। १२ ।।
ततः किमभवत्तत्र किमकार्षीन्महेश्वरः ।।
तत्सर्वं मे समाचक्ष्व श्रद्धायुक् तच्छुतावहम् ।। १३ ।।
ब्रह्मोवाच ।। ।।
शृणु तात परप्रीत्या मुनिभिस्सह नारद ।।
सुतवर्य महाप्राज्ञ चरितं शशिमौलिनः ।। १४ ।।
नमस्कृत्य महेशानं हर्यादिसुरसेवितम् ।।
परब्रह्म प्रवक्ष्यामि तच्चरित्रं महाद्भुतम् ।। १५ ।।
सर्वेयं शिवलीला हि बहुलीलाकरः प्रभुः ।।
स्वतंत्रो निर्विकारी च सती सापि हि तद्विधा ।। १६ ।।
अन्यथा कस्समर्थो हि तत्कर्मकरणे मुने ।।
परमात्मा परब्रह्म स एव परमेश्वरः ।। १७ ।।
यं सदा भजते श्रीशोऽहं चापि सकलाः सुराः ।।
मुनयश्च महात्मानः सिद्धाश्च सनकादयः ।। १८ ।।
शेषस्सदा यशो यस्य मुदा गायति नित्यशः ।।
पारं न लभते तात स प्रभुश्शंकरः शिवः ।। १९ ।।
तस्यैव लीलया सर्वोयमिति तत्त्वविभ्रमः ।।
तत्र दोषो न कस्यापि सर्वव्यापी स प्रेरकः ।। 2.2.24.२० ।।
एकस्मिन्समये रुद्रस्सत्या त्रिभुवने भवः ।।
वृषमारुह्य पर्याटद्रसां लीलाविशारदः ।। २१ ।।
आगत्य दण्डकारण्यं पर्यटन् सागरांबराम् ।।
दर्शयन् तत्र गां शोभां सत्यै सत्यपणः प्रभुः ।। २२ ।।
तत्र रामं ददर्शासौ लक्ष्मणेनान्वितं हरः ।।
अन्विष्यंतं प्रियां सीतां रावणेन हृता छलात् ।। २३ ।।
हा सीतेति प्रोच्चरंतं विरहाविष्टमानसम् ।।

यतस्ततश्च पश्यंतं रुदंतं हि मुहुर्मुहुः ।। २४ ।।

समिच्छंतं च तत्प्राप्तिं पृच्छंतं तद्गतिं हृदा।।

कुजादिभ्यो नष्टधियमत्रपं शोकविह्वलम्।।२५।।

सूर्यवंशोद्भवं वीरं भूपं दशरथात्मजम्।।

भरताग्रजमानंदरहितं विगतप्रभम्।।२६।।

पूर्णकामो वराधीनं प्राणमत्स्म मुदा हरः ।।

रामं भ्रमन्तं विपिने सलक्ष्मणमुदारधीः।।२७।।

जयेत्युक्त्वाऽन्यतो गच्छन्नदात्तस्मै स्वदर्शनम्।।

रामाय विपिने तस्मिच्छंकरो भक्तवत्सलः।।२८।।

इतीदृशीं सतीं दृष्ट्वा शिवलीलां विमोहनीम्।।

सुविस्मिता शिवं प्राह शिवमायाविमोहिता।।२९।।

सत्युवाच।।

देव देव परब्रह्म सर्वेश परमेश्वर।।

सेवंते त्वां सदा सर्वे हरिब्रह्मादयस्सुराः ।।2.2.24.३०।।

त्वं प्रणम्यो हि सर्वेषां सेव्यो ध्येयश्च सर्वदा ।।

वेदांतवेद्यो यत्नेन निर्विकारी परप्रभुः ।।३१।।

काविमौ पुरुषौ नाथ विरहव्याकुलाकृती ।।

विचरंतौ वने क्लिष्टौ दीनौ वीरौ धनुर्धरौ ।।३२।।

तयोर्ज्येष्ठं कंजश्यामं दृष्ट्वा वै केन हेतुना ।।

सुदितस्सुप्रसन्नात्माऽभवो भक्त इवाऽधुना ।।३३।।

इति मे संशयं स्वामिञ्शंकर छेत्तुमर्हसि ।।

सेव्यस्य सेवकेनैव घटते प्रणतिः प्रभो ।।३४।।

ब्रह्मोवाच ।।

आदिशक्तिस्सती देवी शिवा सा परमेश्वरी ।।

शिवमायावशीभूत्वा पप्रच्छेत्थं शिवं प्रभुम् ।। ३५ ।।

तदाकर्ण्य वचस्सत्याश्शंकरः परमेश्वरः ।।

तदा विहस्य स प्राह सतीं लीलाविशारदः ।।३६

परमेश्वर उवाच ।।

शृणु देवि सति प्रीत्या यथार्थं वच्मि नच्छलम् ।।

वरदानप्रभावात्तु प्रणामं चैवमादरात् ।।३७।।

रामलक्ष्मणनामानौ भ्रातरौ वीरसम्मतौ।।

सूर्यवंशोद्भवौ देवि प्राज्ञौ दशरथात्मजौ ।।३८।।

गौरवर्णौ लघुर्बंधुश्शेषेशो लक्ष्मणाभिधः ।।

ज्येष्ठो रामाभिधो विष्णुः पूर्णांशो निरुपद्रवः ।।३९।।

अवतीर्णं क्षितौ साधुरक्षणाय भवाय नः ।।

इत्युक्त्वा विररामाऽसौ शंभुस्मृतिकरः प्रभुः ।। 2.2.24.४० ।।

श्रुत्वापीत्थं वचश्शम्भोर्न विशश्वास तन्मनः ।।

शिवमाया बलवती सैव त्रैलोक्यमोहिनी ।। ४१ ।।

अविश्वस्तं मनो ज्ञात्वा तस्याश्शंभुस्सनातनः ।।

अवोचद्वचनं चेति प्रभुलीलाविशारदः ।। ४२ ।।

शिव उवाच ।।

शृणु मद्वचनं देवि न विश्वसिति चेन्मनः ।।

तव रामपरिक्षां हि कुरु तत्र स्वया धिया ।। ४३ ।।

विनश्यति यथा मोहस्तत्कुरु त्वं सति प्रिये ।।

गत्वा तत्र स्थितस्तावद्वटे भव परीक्षिका । ४४ ।।

ब्रह्मोवाच ।।

शिवाज्ञया सती तत्र गत्वाचिंतयदीश्वरी ।।

कुर्यां परीक्षां च कथं रामस्य वनचारिणः ।।४५।।

सीतारूपमहं धृत्वा गच्छेयं रामसन्निधौ ।।

यदि रामो हरिस्सर्वं विज्ञास्यति न चान्यथा ।।४६।।

इत्थं विचार्य सीता सा भूत्वा रामसमीपतः ।।

आगमत्तत्परीक्षार्थं सती मोहपरायणा ।। ४७ ।।

सीतारूपां सतीं दृष्ट्वा जपन्नाम शिवेति च ।।

विहस्य तत्प्रविज्ञाय नत्वावोचद्रघूद्वहः ।।४८।।

राम उवाच ।।

प्रेमतस्त्वं सति ब्रूहि क्व शंभुस्ते नमोगतः ।।

एका हि विपिने कस्मादागता पतिना विना ।। ४९ ।।

त्यक्त्वा स्वरूपं कस्मात्ते धृतं रूपमिदं सति ।।

ब्रूहि तत्कारणं देवि कृपां कृत्वा ममोपरि।।2.2.24.५०।।

ब्रह्मोवाच ।।

इति रामवचः श्रुत्वा चकितासीत्सती तदा ।।

स्मृत्वा शिवोक्तं मत्वा चावितथं लज्जिता भृशम् ।। ५१ ।।

रामं विज्ञाय विष्णुं तं स्वरूपं संविधाय च ।।

स्मृत्वा शिवपदं चित्ते सत्युवाच प्रसन्नधीः ।। ५२ ।।

शिवो मया गणैश्चैव पर्यटन् वसुधां प्रभुः ।।

इहागच्छच्च विपिने स्वतंत्रः परमेश्वरः ।। ५३ ।।

अपश्यदत्र स त्वां हि सीतान्वेषणतत्परम् ।।

सलक्ष्मणं विरहिणं सीतया क्लिष्टमानसम् ।। ५४ ।।

नत्वा त्वां स गतो मूले वटस्य स्थित एव हि ।।

प्रशंसन् महिमानं ते वैष्णवं परमं मुदा ।। ५५ ।।

चतुर्भुजं हरिं त्वां नो दृष्ट्वेव मुदितोऽभवत् ।।

यथेदं रूपममलं पश्यन्नानंदमाप्तवान् ।।५६।।

तच्छ्रुत्वा वचनं शंभोर्भ्रममानीय चेतसि।।

तदाज्ञया परीक्षां ते कृतवत्य स्मि राघव ।। ५७ ।।

ज्ञातं मे राम विष्णुस्त्वं दृष्टा ते प्रभुताऽखिला ।।

निःसशंया तदापि तच्छृणु त्वं च महामते।। ५८ ।।

कथं प्रणम्यस्त्वं तस्य सत्यं ब्रूहि ममाग्रतः ।।

कुरु निस्संशयां त्वं मां शमलं प्राप्नुहि द्रुतम्।।५९।।

ब्रह्मोवाच ।।

इत्याकर्ण्य वचस्तस्या रामश्चोत्फुल्ललोचनः ।।

अस्मरत्स्वं प्रभुं शंभुं प्रेमाभूद्धृदि चाधिकम्।।2.2.24.६०।।

सत्या विनाज्ञया शंभुसमीपं नागमन्मुने ।।

संवर्ण्य महिमानं च प्रावोचद्राघवस्सतीम् ।। ६१ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे रामपरीक्षावर्णनं नाम चतुर्विंशोऽध्यायः ।।२४।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः २५



राम उवाच ।।

एकदा हि पुरा देवि शंभुः परमसूतिकृत् ।।

विश्वकर्माणमाहूय स्वलोके परतः परे ।।१।।

स्वधेनुशालायां रम्यं कारयामास तेन च ।।

भवनं विस्तृतं सम्यक् तत्र सिंहासनं वरम् ।। २ ।।

तत्रच्छत्रं महादिव्यं सर्वदाद्भुत मुत्तमम् ।।

कारयामास विघ्नार्थं शंकरो विश्वकर्मणा ।। ३ ।।

शक्रादीनां जुहावाशु समस्तान्देवतागणान् ।।

सिद्धगंधर्वनागानुपदे शांश्च कृत्स्नशः ।।४।।

देवान् सर्वानागमांश्च विधिं पुत्रैर्मुनीनपि ।।

देवीः सर्वा अप्सरोभिर्नानावस्तुसमन्विताः ।। ५ ।।

देवानां च तथर्षीणां सिद्धानां फणिनामपि।।

आनयन्मंगलकराः कन्याः षोडशषोडश।।६।।

वीणामृदंगप्रमुखवाद्यान्नानाविधान्मुने।।

उत्सवं कारयामास वादयित्वा सुगायनैः ।।७।।

राजाभिषेकयोग्यानि द्रव्याणि सकलौषधैः

प्रत्यक्षतीर्थपाथोभिः पंचकुभांश्च पूरितान् ।।८।।

तथान्यास्संविधा दिव्या आनयत्स्वगणैस्तदा ।।

ब्रह्मघोषं महारावं कारयामास शंकरः ।।९।।

अथो हरिं समाहूय वैकुंठात्प्रीतमानसः।।

तद्भक्त्या पूर्णया देवि मोदतिस्म महेश्वरः ।। 2.2.25.१० ।।

सुमुहूर्ते महादेवस्तत्र सिंहासने वरे ।।

उपवेश्य हरिं प्रीत्या भूषयामास सर्वशः ।।११।।

आबद्धरम्यमुकुटं कृतकौतुकमंगलम् ।।

अभ्यषिंचन्महेशस्तु स्वयं ब्रह्मांडमंडपे ।। १२ ।।

दत्तवान्निखिलैश्वर्यं यन्नैजं नान्यगामि यत् ।।

ततस्तुष्टाव तं शंभुस्स्वतंत्रो भक्तवत्सलः ।। १३ ।।

ब्रह्माणं लोककर्तारमवोचद्वचनं त्विदम् ।।

व्यापयन्स्वं वराधीनं स्वतंत्रं भक्तवत्सलः ।। १४।।

महेश उवाच ।।

अतः प्रभृति लोकेश मन्निदेशादयं हरिः ।।

मम वंद्य स्वयं विष्णुर्जातस्सर्वश्शृणोति हि ।। १५ ।।

सर्वैर्देवादिभिस्तात प्रणमत्वममुं हरिम् ।।

वर्णयंतु हरिं वेदा ममैते मामिवाज्ञया ।। १६ ।

राम उवाच ।।

इत्युक्त्वाथ स्वयं रुद्रोऽनमद्वै गरुडध्वजम् ।।

विष्णुभक्तिप्रसन्नात्मा वरदो भक्तवत्सलः ।। १७।।

ततो ब्रह्मादिभिर्देवैः सर्वरूपसुरैस्तथा ।।

मुनिसिद्धादिभिश्चैवं वंदितोभूद्धरिस्तदा ।। १८ ।।

ततो महेशो हरयेशंसद्दिविषदां तदा ।।

महावरान् सुप्रसन्नो धृतवान्भक्तवत्सलः ।। १९ ।।

महेश उवाच ।।

त्वं कर्ता सर्वलोकानां भर्ता हर्ता मदाज्ञया ।।

दाता धर्मार्थकामानां शास्ता दुर्नयकारिणाम् ।। 2.2.25.२० ।।

जगदीशो जगत्पूज्यो महाबलपराक्रमः ।।

अजेयस्त्वं रणे क्वापि ममापि हि भविष्यसि ।। २१ ।।

शक्तित्रयं गृहाण त्वमिच्छादि प्रापितं मया ।।

नानालीलाप्रभावत्वं स्वतंत्रत्वं भवत्रये ।। २२ ।।

त्वद्द्वेष्टारो हरे नूनं मया शास्याः प्रयत्नतः ।।

त्वद्भक्तानां मया विष्णो देयं निर्वाणमुत्तमम् ।। २३ ।।

मायां चापि गृहाणेमां दुःप्रणोद्यां सुरादिभिः ।।

यया संमोहितं विश्वमचिद्रूपं भविष्यति ।। २४ ।।

मम बाहुर्मदीयस्तं दक्षिणोऽसौ विधिर्हरे ।।
अस्यापि हि विधेः पाता जनितापि भविष्यसि ।। २५ ।।
हृदयं मम यो रुद्रस्स एवाहं न संशयः ।।
पूज्यस्तव सदा सोपि ब्रह्मादीनामपि ध्रुवम् ।। २६ ।।
अत्र स्थित्वा जगत्सर्वं पालय त्वं विशेषतः ।।
नानावतारभेदैश्च सदा नानोति कर्तृभिः ।। २७ ।।
मम लोके तवेदं व स्थानं च परमर्द्धिमत् ।।
गोलोक इति विख्यातं भविष्यति महोज्ज्वलम् ।। २८ ।।
भविष्यंति हरे ये तेऽवतारा भुवि रक्षकाः ।।
मद्भक्तास्तान् ध्रुवं द्रक्ष्ये प्रीतानथ निजाद्वरात ।। २९ ।।
राम उवाच ।।
अखंडैश्वर्यमासाद्य हरेरित्थं हरस्स्वयम् ।।
कैलासे स्वगणैस्तस्मिन् स्वैरं क्रीडत्युमापतिः ।। 2.2.25.३० ।।
तदाप्रभृति लक्ष्मीशो गोपवेषोभवत्तथा ।।
अयासीत्तत्र सुप्रीत्या गोपगोपोगवां पतिः ।। ३१ ।।
सोपि विष्णुः प्रसन्नात्मा जुगोप निखिलं जगत् ।।
नानावतारस्संधर्ता वनकर्ता शिवाज्ञया ।। ३२ ।।
इदानीं स चतुर्द्धात्रावातरच्छंकराज्ञया ।।
रामोहं तत्र भरतो लक्ष्मणश्शत्रुहेति च ।। ३३ ।।
अथ पित्राज्ञया देवि ससीतालक्ष्मणस्सति ।।
आगतोहं वने चाद्य दुःखितौ दैवतो ऽभवम् ।। ३४ ।।
निशाचरेण मे जाया हृता सीतेति केनचित् ।।
अन्वेष्यामि प्रियां चात्र विरही बंधुना वने ।। ३५ ।।
दर्शनं ते यदि प्राप्तं सर्वथा कुशलं मम ।।
भविष्यति न संदेहो मातस्ते कृपया सति ।। ३६ ।।
सीताप्राप्तिवरो देवि भविष्यति न संशयः ।।
तं हत्वा दुःखदं पापं राक्षसं त्वदनुग्रहात् ।। ३७ ।।
महद्भाग्यं ममाद्यैव यद्यकार्ष्टां कृपां युवाम् ।।

यस्मिन् सकरुणौ स्यातां स धन्यः पुरुषो वरः ।। ३८ ।।

इत्थमाभाष्य बहुधा सुप्रणम्य सतीं शिवाम् ।।

तदाज्ञया वने तस्मिन् विचचार रघूद्वहः ।। ३९ ।।

अथाकर्ण्य सती वाक्यं रामस्य प्रयतात्मनः ।।

हृष्टाभूत्सा प्रशंसन्ती शिवभक्तिरतं हृदि ।। 2.2.25.४० ।।

स्मृत्वा स्वकर्म मनसाकार्षीच्छोकं सुविस्तरम् ।।

प्रत्यागच्छदुदासीना विवर्णा शिवसन्निधौ।।४१।।

अचिंतयत्पथि सा देवी संचलंती पुनः पुनः ।।

नांगीकृतं शिवोक्तं मे रामं प्रति कुधीः कृता ।।४२।।

किमुत्तरमहं दास्ये गत्वा शंकरसन्निधौ ।।

इति संचिंत्य बहुधा पश्चात्तापोऽभवत्तदा ।।४३।।

गत्वा शंभुसमीपं च प्रणनाम शिवं हृदा ।।

विषण्णवदना शोकव्याकुला विगतप्रभा।।४४।।

अथ तां दुःखितां दृष्ट्वा पप्रच्छ कुशलं हरः ।।

प्रोवाच वचनं प्रीत्या तत्परीक्षा कृता कथम् ।। ४५ ।।

श्रुत्वा शिववचो नाहं किमपि प्रणतानना ।।

सती शोकविषण्णा सा तस्थौ तत्र समीपतः ।। ४६ ।।

अथ ध्यात्वा महेशस्तु बुबोध चरितं हृदा ।।

दक्षजाया महायोगी नानालीला विशारदः ।। ४७ ।।

सस्मार स्वपणं पूर्वं यत्कृतं हरिकोपतः ।।

तत्प्रार्थितोथ रुद्रोसौ मर्यादा प्रतिपालकः ।। ४८ ।।

विषादोभूत्प्रभोस्तत्र मनस्येवमुवाच ह ।।

धर्मवक्ता धर्मकर्त्ता धर्मावनकरस्सदा ।। ४९ ।।

शिव उवाच ।।

कुर्यां चेद्दक्षजायां हि स्नेहं पूर्वं यथा महान् ।।

नश्येन्मम पणः शुद्धो लोकलीलानुसारिणः ।। 2.2.25.५० ।।

ब्रह्मोवाच ।।

इत्थं विचार्य बहुधा हृदा तामत्यजत्सतीम् ।।

पणं न नाशयामास वेदधर्मप्रपालकः ।। ५१ ।।

ततो विहाय मनसा सतीं तां परमेश्वरः ।।

जगाम स्वगिरि भेदं जगावद्धा स हि प्रभुः ।। ५२ ।।

चलंतं पथि तं व्योमवाण्युवाच महेश्वरम् ।।

सर्वान् संश्रावयन् तत्र दक्षजां च विशेषतः ।। ५३ ।।

व्योमवाण्युवाच ।।

धन्यस्त्वं परमेशान त्वत्समोद्य तथा पणः ।।

न कोप्यन्यस्त्रिलोकेस्मिन् महायोगी महाप्रभुः ।। ५४ ।।

ब्रह्मोवाच ।।

श्रुत्वा व्योमवचो देवी शिवं पप्रच्छ विप्रभा।।

कं पणं कृतवान्नाथ ब्रूहि मे परमेश्वर ।। ५५ ।।

इति पृष्टोपि गिरिशस्सत्या हितकरः प्रभुः ।।

नोद्वाहे स्वपणं तस्यै कहर्यग्रेऽकरोत्पुरा।।५६।।

तदा सती शिवं ध्यात्वा स्वपतिं प्राणवल्लभम्।।

सर्वं बुबोध हेतुं तं प्रियत्यागमयं मुने ।।५७।।

ततोऽतीव शुशोचाशु बुध्वा सा त्यागमात्मनः ।।

शंभुना दक्षजा तस्मान्निश्वसंती मुहुर्मुहुः ।।५८।।

शिवस्तस्याः समाज्ञाय गुप्तं चक्रे मनोभवम् ।।

सत्ये पणं स्वकीयं हि कथा बह्वीर्वदन्प्रभुः।।५९।।

सत्या प्राप स कैलासं कथयन् विविधाः कथा ।।

वरे स्थित्वा निजं रूपं दधौ योगी समाधिभृत् ।।2.2.25.६०।।

तत्र तस्थौ सती धाम्नि महाविषण्णमानसा ।।

न बुबोध चरित्रं तत्कश्चिच्च शिवयोर्मुने ।।६१।।

महान्कालो व्यतीयाय तयोरित्थं महामुने ।।

स्वोपात्तदेहयोः प्रभ्वोर्लोकलीलानुसारिणोः ।। ६२ ।।

ध्यानं तत्याज गिरिशस्ततस्स परमार्तिहृत् ।।

तज्ज्ञात्वा जगदंबा हि सती तत्राजगाम सा ।। ६३ ।।

ननामाथ शिवं देवी हृदयेन विदूयता ।।

आसनं दत्तवाञ्शंभुः स्वसन्मुख उदारधीः ।। ६४ ।।

कथयामास सुप्रीत्या कथा बह्वीर्मनोरमाः ।।

निश्शोका कृतवान्सद्यो लीलां कृत्वा च तादृशीम् ।।६५।।

पूर्ववत्सा सुखं लेभे तत्याज स्वपणं न सः ।।

नेत्याश्चर्यं शिवे तात मंतव्यं परमेश्वरे ।।६६।।

इत्थं शिवाशिवकथां वदन्ति मुनयो मुने ।।

किल केचिदविद्वांसो वियोगश्च कथं तयोः ।।६७।।

शिवाशिवचरित्रं को जानाति परमार्थतः ।।

स्वेच्छया क्रीडतस्तो हि चरितं कुरुतस्सदा ।। ६८ ।।

वागर्थाविव संपृक्तौ सदा खलु सतीशिवौ।।

तयोर्वियोगस्संभाव्यस्संभवेदिच्छया तयोः।।६९।।

इति श्रीशिवमहापुराणे द्द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे सतीवियोगो नाम पंचविंशोऽध्यायः।।२५।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः २६

https://sa.wikisource.org/s/v3y
< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः २ (सतीखण्डः)

ब्रह्मोवाच ।।

पुराभवच्च सर्वेषामध्वरो विधिना महान् ।।

प्रयागे समवेतानां मुनीनां च महा त्मनाम् ।।१।।

तत्र सिद्धास्समायातास्सनकाद्यास्सुरर्षयः ।।

सप्रजापतयो देवा ज्ञानिनो ब्रह्मदर्शिनः ।।२।।

अहं समागतस्तत्र परिवारसमन्वितः ।।

निगमैरागमैर्युक्तो मूर्तिमद्भिर्महाप्रभैः ।।३।।

समाजोभूद्विचित्रो हि तेषामुत्सवसंयुः ।।

ज्ञानवादोऽभवत्तत्र नानाशास्त्रस मुद्भवः ।।४।।

तस्मिन्नवसरे रुद्रस्सभवानीगणः प्रभुः ।।

त्रिलोकहितकृत्स्वामी तत्रागात्सूक्तिकृन्मुने।।५।।

दृष्ट्वा शिवं सुरास्सर्वे सिद्धाश्च मुनयस्तथा ।।

अनमंस्तं प्रभुं भक्त्या तुष्टुवुश्च तथा ह्यहम् ।।६।।

तस्थुश्शिवाज्ञया सर्वे यथास्थानं मुदान्विताः ।।

प्रभुदर्शनसंतुष्टाः वर्णयन्तो निजं विधिम् ।। ७ ।।

तस्मिन्नवसरे दक्षः प्रजापतिपतिः प्रभुः ।।

आगमत्तत्र सुप्रीतस्सुवर्चस्वी यदृच्छया ।। ८ ।।

मां प्रणम्य स दक्षो हि न्युष्टस्तत्र मदाज्ञया ।।

ब्रह्माण्डाधिपतिर्मान्यो मानी तत्त्वबहिर्मुखः ।। ९ ।।

स्तुतिभिः प्रणिपातैश्च दक्षस्सर्वैस्सुरर्षिभिः ।।

पूजितो वरतेजस्वी करौ बध्वा विनम्रकैः ।। 2.2.26.१० ।।

नानाविहारकृन्नाथस्स्वतंत्र परमोतिकृत् ।।

नानामत्तं तदा दक्षं स्वासनस्थो महेश्वरः ।। ११ ।।

दृष्टाऽनतं हरं तत्र स मे पुत्रोऽप्रसन्नधीः ।।

अकुपत्सहसा रुद्रे तदा दक्षः प्रजापतिः ।। १२ ।।

क्रूरदृष्ट्या महागर्वो दृष्ट्वा रुद्रं महाप्रभुम् ।।

सर्वान्संश्रावयन्नुच्चैरवोचज्ज्ञानवर्जितः ।। १३ ।।

एते हि सर्वे च सुरासुरा भृशं नमंति मां विप्रवरास्तथर्षयः ।।

कथं ह्यसौ दुर्जनवन्महामनास्त्वभूत्तु यः प्रेतपिशाचसंवृतः ।। १४ ।।

श्मशानवासी निरपत्रपो ह्ययं कथं प्रणामं न करोति मेऽधुना ।।

लुप्तक्रियो भूतपिशाचसेवितो मत्तोऽविधो नीतिविदूषकस्सदा ।। १५।।

पाखंडिनो दुर्जनपाप शीला दृष्ट्वा द्विजं प्रोद्धतनिंदकाश्च ।।

वध्वां सदासक्तरतिप्रवीणस्तस्मादमुं शप्तुमहं प्रवृत्तः ।। १६ ।।

ब्रह्मोवाच ।।

इत्येवमुक्त्वा स महाखलस्तदा रुषान्वितो रुद्रमिदं ह्यवोचत् ।।

शृण्वंत्वमी विप्रवरास्तथा सुरा वध्यं हि मे चार्हथ कर्तुमेतम् ।। १७ ।। ।।

दक्ष उवाच ।। ।।

रुद्रो ह्ययं यज्ञबहिष्कृतो मे वर्णेष्वतीतोथ विवर्णरूपः ।।

देवैर्न भागं लभतां सहैव श्मशानवासी कुलजन्म हीनः ।। १८ ।।

।। ब्रह्मोवाच ।। ।।

इति दक्षोक्तमाकर्ण्य भृग्वाद्या बहवो जनाः ।।

अगर्हयन् दुष्टसत्त्वं रुद्रं मत्त्वामरैस्समम्। १९।।

नन्दी निशम्य तद्वाक्यं लालाक्षोतिरुषान्वितः ।।

अब्रवीत्त्वरितं दक्षं शापं दातुमना गणः ।।2.2.26.२०।।

नन्दीश्वर उवाच ।।

रेरे शठ महा मूढ दक्ष दुष्टमते त्वया ।।

यज्ञबाह्यो हि मे स्वामी महेशो हि कृतः कथम् ।।२१ ।।

यस्य स्मरणमात्रेण भवंति सफला मखाः ।।

तीर्थानि च पवित्राणि सोयं शप्तो हरः कथम् ।। २२ ।।

वृथा ते ब्रह्मचापल्याच्छप्तोयं दक्ष दुर्मते ।।

वृथोपहसितश्चैवादुष्टो रुद्रो महा प्रभुः ।। २३ ।।

येनेदं पाल्यते विश्वं सृष्टमंते विनाशितम् ।।

शप्तोयं स कथं रुद्रो महेशो ब्राह्मणाधम ।। २४ ।।

एवं निर्भत्सितस्तेन नन्दिना हि प्रजापतिः ।।

नन्दिनं च शशापाथ दक्षो रोषसमन्वितः ।।२५।।

दक्ष उवाच ।।

यूयं सर्वे रुद्रगणा वेदबाह्या भवंतु वै ।।

वेदमार्गपरित्यक्तास्तथा त्यक्ता महर्षिभिः ।।२६।।

पाखंडवादनिरताः शिष्टाचारबहिष्कृताः ।।

मदिरापाननिरता जटा भस्मास्थिधारिणः ।। २७ ।।

ब्रह्मोवाच ।।

इति शप्तास्तथा तेन दक्षेण शिवकिंकराः ।।

तच्छ्रुत्वातिरुषाविष्टोभवन्नंदी शिवप्रियः।।। ।। २८।।

प्रत्युवाच द्रुतं पक्षं गर्वितं तं महाखलम् ।।

शिलादतनयो नंदी तेजस्वी शिववल्लभः ।। २९ ।।

नन्दीश्वर उवाच।।

रे दक्ष शठ दुर्बुद्धे वृथैव शिवकिंकराः ।।

शप्तास्ते ब्रह्मचापल्याच्छिवतत्त्वमजानता ।।2.2.26.३०।।

भृग्वाद्यैर्दुष्टचित्तैश्च मूढैस्स उपहासितः।।

महा प्रभुर्महेशानो ब्राह्मणत्वादहंमते।।३१।।

ये रुद्रविमुखाश्चात्र ब्राह्मणास्त्वादृशाः खलाः।।

रुद्रतेजःप्रभावत्वात्तेषां शापं ददाम्यहम्।।३२।।

वेदवादरता यूयं वेदतत्त्वबहिर्मुखाः ।।

भवंतु सततं विप्रा नान्यदस्तीति वादिनः ।। ३३ ।।

कामात्मानस्स्वर्गपराः क्रोधलोभमदान्विताः।।

भवंतु सततं विप्रा भिक्षुका निरपत्रपाः।।३४।।

वेदमार्गं पुरस्कृत्य ब्राह्मणाश्शूद्रयाजिनः ।।

दरिद्रा वै भविष्यंति प्रतिग्रहरता स्सदा।।३५।।

असत्प्रतिग्रहाश्चैव सर्वे निरयगामिनः ।।

भविष्यंति सदा दक्ष केचिद्वै ब्रह्मराक्षसाः ।।३६।।

यश्शिवं सुरसामान्यमुद्दिश्य परमेश्वरम् ।।
द्रुह्यत्यजो दुष्टमतिस्तत्त्वतो विमुखो भवेत् ।। ३७ ।।
कूटधर्मेषु गेहेषु सदा ग्राम्यसुखेच्छया ।।
कर्मतंत्रं वितनुता वेदवादं च शाश्वतम् ।। ३८ ।।
विनष्टानंदकमुखो विस्मृतात्मगतिः पशुः ।।
भ्रष्टकर्मानयसदा दक्षो बस्तमुखोऽचिरात् ।।३९।।
शप्तास्ते कोपिना तत्र नंदिना ब्राह्मणा यदा।।
हाहाकारो महानासीच्छप्तो दक्षेण चेश्वरः।।2.2.26.४०।।
तदाकर्ण्यामहत्यंतमनिंदंतं मुहुर्मुहुः।।
भृग्वादीनपि विप्रांश्च वेदसृट् शिव तत्त्ववित् ।।४१।।
ईश्वरोपि वचः श्रुत्वा नंदिनः प्रहसन्निव ।।
उवाच मधुरं वाक्यं बोधयंस्तं सदाशिवः ।।४२।।
सदाशिव उवाच ।।
शृणु नंदिन् महाप्राज्ञ न कर्तुं क्रोधमर्हसि।।
वृथा शप्तो ब्रह्मकुलो मत्वा शप्तं च मां भ्रमात् ।। ४३ ।।
वेदो मंत्राक्षरमयस्साक्षात्सूक्तमयो भृशम् ।।
सूक्ते प्रतिष्ठितो ह्यात्मा सर्वेषामपि देहिनाम् ।। ४४ ।।
तस्मादात्मविदो नित्यं त्वं मा शप रुषान्वितः ।।
शप्या न वेदाः केनापि दुर्द्धियापि कदाचन ।।४५।।
अहं शप्तो न चेदानीं तत्त्वतो बोद्धुमर्हसि।।
शान्तो भव महाधीमन्सनकादिविबोधकः ।। ४६ ।।
यज्ञोहं यज्ञकर्माहं यज्ञांगानि च सर्वशः ।।
यतात्मा यज्ञनिरतो यज्ञबाह्योहमेव वै ।। ४७ ।।
कोयं कस्त्वमिमे के हि सर्वोहमपि तत्त्वतः ।।
इति बुद्ध्या हि विमृश वृथा शप्तास्त्वया द्विजाः ।। ४८ ।।
तत्त्वज्ञानेन निर्हृत्य प्रपंचरचनो भव ।।
बुधस्स्वस्थो महाबुद्धे नन्दिन् क्रोधादिवर्जितः ।। ४९ ।।
।। ब्रह्मोवाच ।।

एवं प्रबोधितस्तेन शम्भुना नन्दिकेश्वरः ।।

विवेकपरमो भूत्वा शांतोऽभूत्क्रोधवर्जितः ।।2.2.26.५०।।

शिवोपि तं प्रबोध्याशु स्वगणं प्राणवल्लभम् ।।

सगणस्स ययौ तस्मात्स्वस्थानं प्रमुदान्वितः ।। ५१ ।।

दक्षोपि स रुषाविष्टस्तैर्द्विजैः परिवारितः ।।

स्वस्थानं च ययौ चित्ते शिवद्रो हपरायणः ।। ५२ ।।

रुद्रं तदानीं परिशप्यमानं संस्मृत्य दक्षः परया रुषान्वितः ।।

श्रद्धां विहायैव स मूढबुद्धिर्निंदापरोभूच्छिवपूजकानाम् ।। ५३ ।।

इत्युक्तो दक्षदुर्बुद्धिश्शंभुना परमात्मना ।।

परां दुर्धिषणां तस्य शृणु तात वदाम्यहम् ।। ५४ ।। ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीयखण्डे सत्युपाख्याने शिवेन दक्षविरोधो नाम षड्विंशोऽध्यायः ।। २६ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः २७



।। ब्रह्मोवाच ।।

एकदा तु मुने तेन यज्ञः प्रारंभितो महान् ।।

तत्राहूतास्तदा सर्वे दीक्षितेन सुरर्षयः ।। १ ।।

महर्षयोऽखिलास्तत्र निर्जराश्च समागताः ।।

यद्यज्ञकरणार्थं हि शिवमायाविमोहितः ।। २ ।।

अगस्त्यः कश्यपोत्रिश्च वामदेवस्तथा भृगुः ।।

दधीचिर्भगवान् व्यासो भारद्वाजोऽथ गौतमः ।। ३ ।।

पैलः पराशरो गर्गो भार्गवः ककुपस्सितः ।।

सुमंतुत्रिककंकाश्च वैशंपायन एव च ।। ४ ।।

एते चान्ये च बहवो मुनयो हर्षिता ययु ।।

मम पुत्रस्य दक्षस्य सदारास्ससुता मखम् ।। ५ ।।

तथा सर्वे सुरगणा लोकपाला महोदयाः ।।

तथोपनिर्जरास्सर्वे स्वापकारबलान्विताः ।। ६ ।।

सत्यलोकात्समानीतो नुतोहं विश्वकारकः।।

ससुतस्स परीवारो मूर्तवेदापिसंयुतः ।। ७ ।।

वैकुंठाच्च तथा विष्णुस्संप्रार्थ्य विविधादरात् ।।

सपार्षदपरीवारस्समानीतो मखं प्रति ।।८।।

एवमन्ये समायाता दक्षयज्ञं विमोहिताः ।।

सत्कृतास्तेन दक्षेन सर्वे ते हि दुरात्मना ।। ९ ।।

भवनानि महार्हाणि सुप्रभाणि महांति च ।।

त्वष्ट्रा कृतानि दिव्यानि तेभ्यो दत्तानि तेन वै ।। 2.2.27.१० ।।

तेषु सर्वेषु धिष्ण्येषु यथायोग्यं च संस्थिताः ।।

सन्मानिता अराजंस्ते सकला विष्णुना मया ।। ११ ।।

वर्त्तमाने महायज्ञे तीर्थे कनखले तदा ।।

ऋत्विजश्च कृतास्तेन भृग्वाद्याश्च तपोधनाः ।। १२ ।।

अधिष्ठाता स्वयं विष्णुस्सह सर्वमरुद्गणैः ।।

अहं तत्राऽभवं ब्रह्मा त्रयीविधिनिदर्शकः ।। १३ ।।

तथैव सर्वदिक्पाला द्वारपालाश्च रक्षकाः ।।

सायुधास्सपरीवाराः कुतूहलकरास्सदा ।। १४ ।।

उपतस्थे स्वयं यज्ञस्सुरूपस्तस्य चाध्वरे।।

सर्वे महामुनिश्रेष्ठाः स्वयं वेदधराऽभवन् ।।१५।।

तनूनपादपि निजं चक्रे रूपं सहस्रशः ।।

हविषा ग्रहणायाशु तस्मिन् यज्ञे महोत्सवे ।। १६ ।।

अष्टाशीतिसहस्राणि जुह्वति सह ऋत्विजः ।।

उद्गातारश्चतुषष्टि सहस्राणि सुरर्षयः ।।१७।।

अध्वर्यवोथ होतारस्तावन्तो नारदादयः ।।

सप्तर्षयस्समा गाथाः कुर्वंति स्म पृथक्पृथक् ।। १८।।

गंधर्वविद्याधरसिद्धसंघानादित्यसंघान् सगणान् सयज्ञान् ।।

संख्यावरान्नागचरान् समस्तान् वव्रे स दक्षो हि महाध्वरे स्वे ।। १९ ।।

द्विजर्षिराजर्षिसुरर्षिसंघा नृपास्समित्राः सचिवास्स सैन्याः ।।

वसुप्रमुख्या गणदेवताश्च सर्वे वृतास्तेन मखोपवेत्त्राः ।। 2.2.27.२० ।।

दीक्षायुक्तस्तदा दक्षः कृतकौतुकमंगलः ।।

भार्यया सहितो रेजे कृतस्वस्त्ययनो भृशम् ।। २१ ।।

तस्मिन् यज्ञे वृतश्शंभुर्न दक्षेण दुरात्मना ।।

कपालीति विनिश्चित्य तस्य यज्ञार्हता न हि ।। २२ ।।

कपालिभार्येति सती दयिता स्वसुतापि च ।।

नाहूता यज्ञविषये दक्षेणागुणदर्शिना ।। २३ ।।

एवं प्रवर्तमाने हि दक्षयज्ञे महोत्सवे ।।

स्वकार्यलग्नास्तत्रासन् सर्वे तेऽध्वरसंमताः ।। २४ ।।

एतस्मिन्नंतरेऽदृष्ट्वा तत्र वै शंकरं प्रभुम् ।।

प्रोद्विग्नमानसश्शैवो दधीचो वाक्यमब्रवीत् ।। २५ ।।

दधीच उवाच ।। ।।

सर्वे शृणुत मद्वाक्यं देवर्षिप्रमुखा मुदा ।।

कस्मान्नैवागतश्शंभुरस्मिन् यज्ञे महोत्सवे ।।२६।।

एते सुरेशा मुनयो महत्तरास्सलोकपालाश्च समागता हि ।।

तथापि यज्ञस्तु न शोभते भृशं पिनाकिना तेन महात्मना विना ।।२७।।

येनैव सर्वाण्यपि मंगलानि भवंति शंसन्ति महाविपश्चितः ।।

सोऽसौ न दृष्टोऽत्र पुमान् पुराणो वृषध्वजो नीलगलः परेशः ।। २८ ।।

अमंगलान्येव च मंगलानि भवंति येनाधिगतानि दक्षः ।।

त्रिपंचकेनाप्यथ मंगलानि भवंति सद्यः परतः पुराणि ।।२९।।

तस्मात्त्वयैव कर्तव्यमाह्वानं परमेशितुः ।।

त्वरितं ब्रह्मणा वापि विष्णुना प्रभुविष्णुना।।2.2.27.३०।।

इन्द्रेण लोकपालैश्च द्विजैस्सिद्धैस्सहाधुना ।।

सर्वथाऽऽनयनीयोसौ शंकरो यज्ञपूर्तये ।।३१।।

सर्वैर्भवद्भिर्गंतव्यं यत्र देवो महेश्वरः।।

दाक्षायण्या समं शम्भुमानयध्वं त्वरान्विताः ।। ३२ ।।

तेन सर्वं पवित्रं स्याच्छम्भुना परमात्मना ।।

अत्रागतेन देवेशास्सांबेन परमात्मना ।।३३।।

यस्य स्मृत्या च नामोक्त्या समग्रं सुकृतं भवेत् ।।

तस्मात्सर्वप्रयत्नेन ह्यानेतव्यो वृषध्वजः ।।३४।।

समागते शंकरेऽत्र पावनो हि भवेन्मखः ।।

भविष्यत्यन्यथाऽपूर्णः सत्यमेतद्ब्रवीम्यहम् ।। ३५ ।।

ब्रह्मोवाच ।।

तस्य तद्वचनं श्रुत्वा दक्षो रोषसमन्वितः।।

उवाच त्वरितं मूढः प्रहसन्निव दुष्टधीः ।।३६।।

मूलं विष्णुर्देवतानां यत्र धर्मस्सनातनः।।

समानीतो मया सम्यक् किमूनं यज्ञकर्मणि ।।३७।।

यस्मिन्वेदाश्च यज्ञाश्च कर्माणि विविधानि च ।।

प्रतिष्ठितानि सर्वाणि सोऽसौ विष्णुरिहागतः।।३८।।

सत्यलोकात्समायातो ब्रह्मा लोकपितामहः ।।

वेदैस्सोपनिषद्भिश्च विविधैरागमैस्सह ।। ३९ ।।

तथा सुरगणैस्साकमागतस्सुरराट् स्वयम्।।

तथा यूयं समायाता ऋषयो वीतकल्मषाः ।।2.2.27.४०।।

येये यज्ञोचिताश्शांताः पात्रभूतास्समागताः ।।

वेदवेदार्थतत्त्वज्ञास्सर्वे यूयं दृढव्रताः ।। ।। ४१ ।।

अत्रैव च किमस्माकं रुद्रेणापि प्रयोजनम् ।।

कन्या दत्ता मया विप्र ब्रह्मणा नोदितेन हि ।। ४२ ।।

हरोऽकुलीनोसौ विप्र पितृमातृविवर्जितः ।।

भूतप्रेतपिशाचानां पतिरेको दुरत्ययः ।।४३।।

आत्मसंभावितो मूढ स्तब्धो मौनी समत्सरः ।।

कर्मण्यस्मिन्न योग्योसौ नानीतो हि मयाऽधुना ।।४४।।

तस्मात्त्वमीदृशं वाक्यं पुनर्वाच्यं न हि क्वचित् ।।

सर्वैर्भवद्भिः कर्तव्यो यज्ञो मे सफलो महान् ।।४५।।

ब्रह्मोवाच।।

एतच्छ्रुत्वा वचस्तस्य दधीचो वाक्यमब्रवीत्।।

सर्वेषां शृण्वतां देवमुनीनां सारसं युतम् ।। ४६ ।।

दधीच उवाच ।।

अयज्ञोयं महाजातो विना तेन शिवेन हि ।।

विनाशोपि विशेषेण ह्यत्र ते हि भविष्यति ।।४७।।

एवमुक्त्वा दधीचोसावेक एव विनिर्गतः ।।

यज्ञवाटाच्च दक्षस्य त्वरितः स्वाश्रमं ययौ।।४८।।

ततोन्ये शांकरा ये च मुख्याश्शिवमतानुगाः ।।

निर्ययुस्स्वाश्रमान् सद्यश्शापं दत्त्वा तथैव च ।।४९।।

मुनौ विनिर्गते तस्मिन् मखादन्येषु दुष्टधीः ।।

शिवद्रोही मुनीन् दक्षः प्रहसन्निदमब्रवीत् ।। 2.2.27.५० ।।

।। दक्ष उवाच ।।

गतः शिवप्रियो विप्रो दधीचो नाम नामतः ।।

अन्ये तथाविधा ये च गतास्ते मम चाध्वरात् ।। ५१ ।।

एतच्छुभतरं जातं संमतं मे हि सर्वथा ।।

सत्यं ब्रवीमि देवेश सुराश्च मुनयस्तथा ।। ५२ ।।

विनष्टचित्ता मंदाश्च मिथ्यावादरताः खलाः ।।

वेदबाह्या दुराचारास्त्याज्यास्ते मखकर्मणि।।५३।।

वेदवादरता यूयं सर्वे विष्णुपुरोगमाः ।।

यज्ञं मे सफलं विप्रास्सुराः कुर्वंतु माऽचिरम् ।। ५४ ।।

।। ब्रह्मोवाच ।।

इत्याकर्ण्य वचस्तस्य शिवमायाविमोहिताः ।।

यन्मखे देवयजनं चक्रुस्सर्वे सुरर्षयः ।। ५५ ।।

इति तन्मखशापो हि वर्णितो मे मुनीश्वर ।।

यज्ञविध्वंसयोगोपि प्रोच्यते शृणु सादरम् ।। ५६ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे यज्ञप्रारंभो नाम सप्तविंशोऽध्यायः ।। २७ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः २८

https://sa.wikisource.org/s/veb
< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः २ (सतीखण्डः)

।। ब्रह्मोवाच ।।

यदा ययुर्दक्षमखमुत्सवेन सुरर्षयः ।।

तस्मिन्नैवांतरे देवो पर्वते गंधमादने ।। १ ।।

धारागृहे वितानेन सखीभिः परिवारिता ।।

दाक्षायणी महाक्रीडाश्चकार विविधास्सती ।।२।।

क्रीडासक्ता तदा देवी ददर्शाथ मुदा सती।।

दक्षयज्ञे प्रयांतं च रोहिण्या पृच्छ्य सत्वरम् ।। ३ ।।

दृष्ट्वा सीमंतया भूतां विजयां प्राह सा सती ।।

स्वसखीं प्रवरां प्राणप्रियां सा हि हितावहाम् ।। ।। ४ ।।

।। सत्युवाच ।।

हे सखीप्रवरे प्राणप्रिये त्वं विजये मम ।।

क्व गमिष्यति चन्द्रोयं रोहिण्यापृच्छ्य सत्वरम् ।। ५ ।।

ब्रह्मोवाच ।।

तथोक्ता विजया सत्या गत्वा तत्सन्निधौ द्रुतम्।।

क्व गच्छसीति पप्रच्छ शशिनं तं यथोचितम्।।६।।

विजयोक्तमथाकर्ण्य स्वयात्रां पूर्वमादरात् ।।

कथितं तेन तत्सर्वं दक्षयज्ञोत्सवादिकम् ।।७।।

तच्छ्रुत्वा विजया देवीं त्वरिता जातसंभ्रमा।।

कथयामास तत्सर्वं यदुक्तं शशिना सतीम् ।।८।।

तच्छ्रुत्वा कालिका देवी विस्मिताभूत्सती तदा।।

विमृश्य कारणं तत्राज्ञात्वा चेतस्यचिंतयत् ।।९।।

दक्षः पिता मे माता च वीरिणी नौ कुतस्सती ।।

आह्वानं न करोति स्म विस्मृता मां प्रियां सुताम् ।।2.2.28.१०।।

पृच्छेयं शंकरं तत्र कारणं सर्वमादरात् ।।

चिंतयित्वेति सासीद्वै तत्र गंतुं सुनिश्चया ।। ११ ।।
अथ दाक्षायणी देवी विजयां प्रवरां सखीम् ।।
स्थापयित्वा द्रुतं तत्र समगच्छच्छिवांतिकम् ।। १२ ।।
ददर्श तं सभामध्ये संस्थितं बहुभिर्गणैः ।।
नंद्यादिभिर्महावीरैः प्रवरैर्यूथयूथपै ।। १३ ।।
दृष्ट्वा तं प्रभुमीशानं स्वपतिं साथ दक्षजा ।।
प्रष्टुं तत्कारणं शीघ्रं प्राप शंकरसंनिधिम् ।। १४ ।।
शिवेन स्थापिता स्वांके प्रीतियुक्तेन स्वप्रिया ।।
प्रमोदिता वचोभिस्सा बहुमानपुरस्सरम् ।। १५ ।।
अथ शंभुर्महालीलस्सर्वेशस्सुखदस्सताम् ।।
सतीमुवाच त्वरितं गणमध्यस्थ आदरात् ।। १६ ।।
शंभुरुवाच ।।
किमर्थमागतात्र त्वं सभामध्ये सविस्मया ।।
कारणं तस्य सुप्रीत्या शीघ्रं वद सुमध्यमे ।। १७ ।।
ब्रह्मोवाच ।।
एवमुक्ता तदा तेन महेशेन मुनीश्वर ।।
सांजलिस्सुप्रणम्याशु सत्युवाच प्रभुं शिवा ।। १८ ।।
सत्युवाच ।।
पितुर्मम महान् यज्ञो भवतीति मया श्रुतम् ।।
तत्रोत्सवो महानस्ति समवेतास्सुरर्षयः ।। १९ ।।
पितुर्मम महायज्ञे कस्मात्तव न रोचते ।।
गमनं देवदेवेश तत्सर्वं कथय प्रभो ।। 2.2.28.२० ।।
सुहृदामेष वै धर्मस्सुहृद्भिस्सह संगतिः ।।
कुर्वंति यन्महादेव सुहृदः प्रीतिवर्द्धिनीम् ।। २१ ।।
तस्मात्सर्वप्रयत्नेन मयागच्छ सह प्रभो ।।
यज्ञवाटं पितुर्मेद्य स्वामिन् प्रार्थनया मम।। २२ ।।
ब्रह्मोवाच ।।
तस्यास्तद्वचनं श्रुत्वा सत्या देवो महेश्वरः ।।

दक्ष वागिषुहृद्विद्धो बभाषे सूनृतं वचः ।। २३ ।।

महेश्वर उवाच ।।

दक्षस्तव पिता देवी मम द्रोही विशेषतः ।। २४ ।।

यस्य ये मानिनस्सर्वे ससुरर्षिमुखाः परे ।।

ते मूढा यजनं प्राप्ताः पितुस्ते ज्ञानवर्जिताः ।। २५ ।।

अनाहूताश्च ये देवी गच्छंति परमंदिरम् ।।

अवमानं प्राप्नुवंति मरणादधिकं तथा ।। २६ ।।

परालयं गतोपींद्रो लघुर्भवति तद्विधः ।।

का कथा च परेषां वै रीढा यात्रा हि तद्विधा ।। २७ ।।

तस्मात्त्वया मया चापि दक्षस्य यजनं प्रति ।।

न गंतव्यं विशेषेण सत्यमुक्तं मया प्रियं ।।२८।।

तथारिभिर्न व्यथते ह्यर्दितोपि शरैर्जनः ।।

स्वानांदुरुक्तिभिर्मर्मताडितस्स यथा मतः ।।२९।।

विद्यादिभिर्गुणैः षड्भिरसदन्यैस्सतां स्मृतौ ।।

हतायां भूयसां धाम न पश्यंति खलाः प्रिये ।। 2.2.28.३० ।।

ब्रह्मोवाच ।।

एवमुक्ता सती तेन महेशेन महात्मना ।।

उवाच रोषसंयुक्ता शिवं वाक्यविदां वरम् ।। ३१ ।।

सत्युवाच ।।

यज्ञस्स्यात्सफलो येन स त्वं शंभोखिलेश्वर ।।

अनाहूतोसि तेनाद्य पित्रा मे दुष्टकारिणा ।। ३२ ।।

तत्सर्वं ज्ञातुमिच्छामि भव भावं दुरात्मनः ।।

सुरर्षीणां च सर्वेषामागतानां दुरात्मनाम् ।।३३।।

तस्माच्चाद्यैव गच्छामि स्वपितुर्यजनं प्रभो ।।

अनुज्ञां देहि मे नाथ तत्र गंतुं महेश्वर ।। ३४ ।।

।। ब्रह्मोवाच ।।

इत्युक्तौ भगवान् रुद्रस्तया देव्या शिवस्स्वयम् ।।

विज्ञाताखिलदृक् द्रष्टा सतीं सूतिकरोऽब्रवीत् ।। ३५ ।।

।। शिव उवाच ।।

यद्येवं ते रुचिर्देवि तत्र गंतुमवश्यकम् ।।

सुव्रते वचनान्मे त्वं गच्छ शीघ्रं पितुर्मखम् ।।३६।।

एतं नंदिनमारुह्य वृषभं सज्जमादरात् ।।

महाराजोपचाराणि कृत्वा बहुगुणान्विता ।। ३७ ।।

भूषितं वृषमारोहेत्युक्ता रुद्रेण सा सती ।।

सुभूषिता सती युक्ता ह्यगमत्पितुमंदिरम्।।३८।।

महाराजोपचाराणि दत्तानि परमात्मना ।।

सुच्छत्रचामरादीनि सद्वस्त्राभरणानि च ।।३९।।

गणाः षष्टिसहस्राणि रौद्रा जग्मुश्शिवाज्ञया ।।

कुतूहलयुताः प्रीता महोत्सवसमन्विताः ।। 2.2.28.४० ।।

तदोत्सवो महानासीद्यजने तत्र सर्वतः ।।

सत्याश्शिवप्रियायास्तु वामदेवगणैः कृतः ।। ४१ ।।

कुतूहलं गणाश्चक्रुश्शिवयोर्यश उज्जगुः ।।

बालांतः पुप्लुवुः प्रीत्या महावीराश्शिवप्रियाः ।। ४२ ।।

सर्वथासीन्महाशोभा गमने जागदम्बिके ।।

सुखारावस्संबभूव पूरितं भुवनत्रयम् ।। ४३ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे सतीयात्रावर्णनं नामाष्टविंशोध्यायः ।। २८ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः २९



ब्रह्मोवाच ।।

दाक्षायणी गता तत्र तत्र यज्ञो महाप्रभः ।।

सुरासुरमुनीन्द्रादिकुतूहलसमन्वितः ।। १ ।।

स्वपितुर्भवनं तत्र नानाश्चर्यसमन्वितम् ।।

ददर्श सुप्रभं चारु सुरर्षिगण संयुतम् ।। २ ।।

द्वारि स्थिता तदा देवी ह्यवरुह्य निजासनात् ।।

नन्दिनोऽभ्यंतरं शीघ्रमेकैवागच्छदध्वरम् ।। ३ ।।

आगतां च सतीं दृष्ट्वाऽसिक्नी माता यशस्विनी ।।

अकरोदादरं तस्या भगिन्यश्च यथोचितम् ।। ४ ।।

नाकरोदादरं दक्षो दृष्ट्वा तामपि किंचन ।।

नान्योपि तद्भयात्तत्र शिवमायाविमोहितः ।। ५ ।।

अथ सा मातरं देवी पितरं च सती मुने ।।

अनमद्विस्मितात्यंतं सर्वलोक पराभवात् ।। ६ ।।

भागानपश्यद्देवानां हर्यादीनां तदध्वरे ।।

न शंभुभागमकरोत् क्रोधं दुर्विषहं सती ।। ७ ।।

सत्युवाच ।।

तदा दक्षं दहन्तीव रुषा पूर्णा सती भृशम् ।।

क्रूरदृष्ट्या विलोक्यैव सर्वानप्यपमानिता ।। ८ ।।

सत्युवाच ।।

अनाहूतस्त्वया कस्माच्छंभुः परमशोभनः ।।

येन पूतमिदं विश्वं समग्रं सचराचरम् ।। ९ ।।

यज्ञो यज्ञविदां श्रेष्ठो यज्ञांगो यज्ञदक्षिणः ।।

यज्ञकर्ता च यश्शंभुस्तं विना च कथं मखः ।। 2.2.29.१० ।।

यस्य स्मरणमात्रेण सर्वं पूतं भवत्यहो ।।

विना तेन कृतं सर्वमपवित्रं भविष्यति ।।११।।
द्रव्यमंत्रादिकं सर्वं हव्यं कव्यं च यन्मयम् ।।
शंभुना हि विना तेन कथं यज्ञः प्रवर्तितः ।।१२।।
किं शिवं सुरसामान्यं मत्याकार्षीरनादरम् ।।
भ्रष्टबुद्धिर्भवानद्य जातोसि जनकाधम ।। १३ ।।
विष्णुब्रह्मादयो देवा यं संसेव्य महेश्वरम् ।।
प्राप्ताः स्वपदवीं सर्वे तं न जानासि रे हरम् ।। १४ ।।
एते कथं समायाता विष्णुब्रह्मादयस्सुराः ।।
तव यज्ञे विना शंभुं स्वप्रभुं मुनयस्तथा ।। १५ ।।
।। ब्रह्मोवाच ।।
इत्युक्त्वा परमेशानी विष्ण्वादीन्सकलान् प्रति ।।
पृथक्पृथगवोचत्सा भर्त्सयंती भवात्मिका ।। १६ ।।
सत्युवाच ।।
हे विष्णो त्वं महादेवं किं न जानासि तत्त्वतः ।।
सगुणं निर्गुणं चापि श्रुतयो यं वदंति ह ।। १७ ।।
यद्यपि त्वां करं दत्त्वा बहुवारं महेश्वरः ।।
अशिक्षयत्पुरा शाल्वप्रमुखाकृतिभिर्हरे।।१८।।
तदपि ज्ञानमायातं न ते चेतसि दुर्मते ।।
भागार्थी दक्षयज्ञेस्मिन् शिवं स्वस्वामिनं विना ।।१९।।
पुरा पंचमुखो भूत्वा गर्वितोऽसि सदाशिवम् ।।
कृतश्चतुर्मुखस्तेन विस्मृतोसि तदद्भुतम् ।। 2.2.29.२० ।।
इन्द्र त्वं किं न जानासि महादेवस्य विक्रमम् ।।
भस्मी कृतः पविस्ते हि हरेण क्रूरकर्मणा ।। २१ ।।
हे सुराः किन्न जानीथ महादेवस्य विक्रमम् ।।
अत्रे वसिष्ठ मुनयो युष्माभिः किं कृतं त्विह ।। २२ ।।
भिक्षाटनं च कृतवान् पुरा दारुवने विभुः ।।
शप्तो यद्भिक्षुको रुद्रो भवद्भिर्मुनिभिस्तदा ।। २३ ।।
शप्तेनापि च रुद्रेण यत्कृतं विस्मृतं कथम् ।।

तल्लिंगेनाखिलं दग्धं भुवनं सचराचरम् ।। २४ ।।

सर्वे मूढाश्च संजाता विष्णुब्रह्मादयस्सुराः ।।

मुनयोऽन्ये विना शंभुमागता यदिहाध्वरे ।। २५ ।।

सर्वे वेदाश्च संभूताः सांगाश्शास्त्राणि वाग्यतः ।।

योसौ वेदांतगश्शम्भुः कैश्चिज्ज्ञातुं न पार्यते ।। २६ ।।

।। ब्रह्मोवाच ।।

इत्यनेकविधा वाणीरगदज्जगदम्बिका ।।

कोपान्विता सती तत्र हृदयेन विदूयता ।। २७ ।।

विष्ण्वादयोखिला देवा मुनयो ये च तद्वचः ।।

मौनीभूतास्तदाकर्ण्य भयव्याकुलमानसाः ।। २८ ।।

अथ दक्षस्समाकर्ण्य स्वपुत्र्यास्तादृशं वचः।।

विलोक्य क्रूरदृष्ट्या तां सतीं क्रुद्धोऽब्रवीद्वचः ।।२९।।

दक्ष उवाच ।।

तव किं बहुनोक्तेन कार्यं नास्तीह सांप्रतम् ।।

गच्छ वा तिष्ठ वा भद्रे कस्मात्त्वं हि समागता ।।2.2.29.३०।।

अमंगलस्तु ते भर्ता शिवोसौ गम्यते बुधैः ।।

अकुलीको वेदबाह्यो भूतप्रेतपिशाचराट् ।।३१।।

तस्मान्नाह्वारितो रुद्रो यज्ञार्थं सुकुवेषभृत् ।।

देवर्षिसंसदि मया ज्ञात्वा पुत्रि विपश्चिता ।।३२।।

विधिना प्रेरितेन त्वं दत्ता मंदेन पापिना।।

रुद्रायाविदितार्थाय चोद्धताय दुरात्मने ।।३३।।

तस्मात्कोपं परित्यज्य स्वस्था भव शुचिस्मिते ।।

यद्यागतासि यज्ञेस्मिन् दायं गृह्णीष्व चात्मना।।३४।।

ब्रह्मोवाच।।

दक्षेणोक्तेति सा पुत्री सती त्रैलोक्यपू जिता ।।

निंदायुक्तं स्वपितरं दृष्ट्वासीद्रुषिता भृशम् ।। ३५ ।।

अचिंतयत्तदा सेति कथं यास्यामि शंकरम् ।।

शंकरं द्रष्टुकामाहं पृष्टा वक्ष्ये किमुत्तरम् ।। ३६ ।।

अथ प्रोवाच पितरं दक्षं तं दुष्टमानसम् ।।
निश्श्वसंती रुषाविष्टा सा सती त्रिजगत्प्रसूः ।। ३७ ।।
सत्युवाच ।।
यो निंदति महादेवं निंद्यमानं शृणोति वा ।।
तावुभौ नरकं यातौ यावच्चन्द्रदिवाकरौ ।। ३८ ।।
तस्मात्त्यक्ष्याम्यहं देवं प्रवेक्ष्यामि हुताशनम् ।।
किं जीवितेन मे तात शृण्वंत्यानादरं प्रभोः ।। ३९ ।।
यदि शक्तस्स्वयं शंभोर्निंदकस्य विशेषतः ।।
छिंद्यात् प्रसह्य रसनां तदा शुद्ध्येन्न संशयः ।।2.2.29.४०।।
यद्यशक्तो जनस्तत्र निरयात्सुपिधाय वै ।।
कर्णौ धीमान् ततश्शुद्ध्येद्वदंतीदं बुधान्वरान् ।।४१।।
ब्रह्मोवाच ।।
इत्थमुक्त्वा धर्मनीतिं पश्चात्तापमवाप सा ।।
अस्मरच्छांकरं वाक्यं दूयमानेन चेतसा ।।४२।।
ततस्संकुद्ध्य सा दक्षं निश्शंकं प्राह तानपि ।।
सर्वान्विष्ण्वादिकान्देवान्मुनीनपि सती ध्रुवम् ।।४३।।
सत्युवाच ।।
तात त्वं निंदकश्शंभोः पश्चात्तापं गमिष्यसि ।।
इह भुक्त्वा महादुःखमंते यास्यसि यातनाम् ।। ४४ ।।
यस्य लोकेऽप्रियो नास्ति प्रियश्चैव परात्मनः ।।
तस्मिन्नवैरे शर्वेस्मिन् त्वां विना कः प्रतीपकः ।। ४५ ।।
महद्विनिंदा नाश्चर्यं सर्वदाऽसत्सु सेर्ष्यकम् ।।
महदंघ्रिरजो ध्वस्ततमस्सु सैव शोभना ।। ४६ ।।
शिवेति द्व्यक्षरं यस्य नृणां नाम गिरेरितम् ।।
सकृत्प्रसंगात्सकलमघमाशु विहंति तत् ।। ४७ ।।
पवित्रकीर्तितमलं भवान् द्वेष्टि शिवेतरः ।।
अलंघ्यशासनं शंभुमहो सर्वेश्वरं खलः ।। ४८ ।।
यत्पादपद्मं महतां मनोऽलिसुनिषेवितम् ।।

सर्वार्थदं ब्रह्मरसैः सर्वार्थिभिरथादरात् ।।४९।।
यद्वर्षत्यर्थिनश्शीघ्रं लोकस्य शिवआदरात् ।।
भवान् द्रुह्यति मूर्खत्वात्तस्मै चाशेषबंधवे ।।2.2.29.५०।।
किंवा शिवाख्यमशिवं त्वदन्ये न विदुर्बुधाः ।।
ब्रह्मादयस्तं मुनयस्सनकाद्यास्तथापरे ।। ५१ ।।
अवकीर्य जटाभूतैश्श्मशाने स कपालधृक् ।।
तन्माल्यभस्म वा ज्ञात्वा प्रीत्यावसदुदारधीः ।। ५२ ।।
ये मूर्द्धभिर्दधति तच्चरणोत्सृष्टमाराद् ।।
निर्माल्यं मुनयो देवास्स शिवः परमेश्वरः ।।५३।।
प्रवृत्तं च निवृत्तं च द्विविधं कर्मचोदि तम् ।।
वेदे विविच्य वृत्तं च तद्विचार्यं मनीषिभिः ।।५४।।
विरोधियौगपद्यैककर्तृके च तथा द्वयम् ।।
परब्रह्मणि शंभो तु कर्मर्च्छति न किंचन ।। ५५ ।।
मा वः पदव्यस्स्म पितर्या अस्मदास्थितास्सदा ।।
यज्ञशालासु वो धूम्रवर्त्मभुक्तोज्झिताः परम् ।।५६।।
नोऽव्यक्तलिंगस्सततमवधूतसुसेविताः।।
अभिमानमतो न त्वं कुरु तात कुबुद्धिधृक् ।।५७।।
किंबहूक्तेन वचसा दुष्टस्त्वं सर्वथा कुधीः।
त्वदुद्भवेन देहेन न मे किंचित्प्रयोजनम्।।५८।।
तज्जन्म धिग्यो महतां सर्वथावद्यकृत्खलः ।।
परित्याज्यो विशेषेण तत्संबंधो विपश्चिता ।।५९।।
गोत्रं त्वदीयं भगवान् यदाह वृषभध्वजः ।।
दाक्षायणीति सहसाहं भवामि सुदुर्मनाः ।।2.2.29.६०।।
तस्मात्त्वदंगजं देहं कुणपं गर्हितं सदा ।।
व्युत्सृज्य नूनमधुना भविष्यामि सुखावहा।।६१।।
हे सुरा मुनयस्सर्वे यूयं शृणुत मद्वचः ।।
सर्वथानुचितं कर्म युष्माकं दुष्टचेतसाम् ।। ६२ ।।
सर्वे यूयं विमूढा हि शिवनिंदाः कलिप्रियाः ।।

प्राप्स्यंति दण्डं नियतमखिलं च हराद्ध्रुवम् ।। ६३ ।।

।। ब्रह्मोवाच ।।

दक्षमुक्त्वाध्वरे तांश्च व्यरमत्सा सती तदा ।।

अनूद्य चेतसा शम्भुमस्मरत्प्राणवल्लभम्।।६४।।

इतिश्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे सतीवाक्यवर्णनं नामैकोनत्रिंशोऽध्यायः ।। २९ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः ३०

https://sa.wikisource.org/s/ved



।। नारद उवाच ।।

मौनीभूता यदा सासीत्सती शंकरवल्लभा ।।

चरित्रं किमभूत्तत्र विधे तद्वद चादरात् ।। १ ।।

।। ब्रह्मोवाच ।।

मौनीभूता सती देवी स्मृत्वा स्वपतिमादरात ।।

क्षितावुदीच्यां सहसा निषसाद प्रशांतधीः ।। २ ।।

जलमाचम्य विधिवत् संवृता वाससा शुचिः ।।

दृङ्निमील्य पतिं स्मृत्वा योगमार्गं समाविशत् ।।३।।

कृत्वासमानावनिलौ प्राणापानौ सितानना।।

उत्थाप्योदानमथ च यत्नात्सा नाभिचक्रतः।।४।।

हृदि स्थाप्योरसि धिया स्थितं कंठाद्भ्रुवोस्सती ।।

अनिंदितानयन्मध्यं शंकरप्राणवल्लभा ।। ५ ।।

एवं स्वदेहं सहसा दक्षकोपाज्जिहासती ।।

दग्धे गात्रे वायुशुचिर्धारणं योगमार्गतः ।। ६ ।।

ततस्स्वभर्तुश्चरणं चिंतयंती न चापरम् ।।

अपश्यत्सा सती तत्र योगमार्गनिविष्टधीः ।। ७ ।।

हतकल्मषतद्देहः प्रापतच्च तदग्निना ।।

भस्मसादभवत्सद्यो मुनिश्रेष्ठ तदिच्छया ।। ८ ।।।

तत्पश्यतां च खे भूमौ वादोऽभूत्सुमहांस्तदा ।।

हाहेति सोद्भुतश्चित्रस्सुरादीनां भयावहः ।।९।।

हं प्रिया परा शंभोर्देवी दैवतमस्य हि ।।

अहादसून् सती केन सुदुष्टेन प्रकोपिता ।।2.2.30.१०।।

अहो त्वनात्म्यं सुमहदस्य दक्षस्य पश्यत ।।

चराचरं प्रजा यस्य यत्पुत्रस्य प्रजापतेः ।। ११ ।।

अहोद्य द्विमनाऽभूत्सा सती देवी मनस्विनी ।।
वृषध्वजप्रियाऽभीक्ष्णं मानयोग्या सतां सदा ।। १२ ।।
सोयं दुर्मर्षहृदयो ब्रह्मधृक् स प्रजापतिः ।।
महतीमपकीर्तिं हि प्राप्स्यति त्वखिले भवे ।। १३।।
यत्स्वांगजां सुतां शंभुद्विट् न्यषे धत्समुद्यताम् ।।
महानरकभोगी स मृतये नोऽपराधतः ।। १४ ।।
वदत्येवं जने सत्या दृष्ट्वाऽसुत्यागमद्भुतम् ।।
द्रुतं तत्पार्षदाः क्रोधादुदतिष्ठन्नुदायुधाः ।।१५।।
द्वारि स्थिता गणास्सर्वे रसायुतमिता रुषा ।।
शंकरस्य प्रभोस्ते वाऽकुध्यन्नतिमहाबलाः।।१६।।
हाहाकारमकुर्वंस्ते धिक्धिक् न इति वादिनः ।।
उच्चैस्सर्वेऽसकृद्वीरःश्शंकरस्य गणाधिपाः ।। १७ ।।
हाहाकारेण महता व्याप्त मासीद्दिगन्तरम् ।।
सर्वे प्रापन् भयं देवा मुनयोन्येपि ते स्थिताः ।। १८ ।।
गणास्संमंत्र्य ते सर्वेऽभूवन् क्रुद्धा उदायुधाः ।।
कुर्वन्तः प्रलयं वाद्यशस्त्रैर्व्याप्तं दिगंतरम् ।। १९ ।।
शस्त्रैरघ्नन्निजांगानि केचित्तत्र शुचाकुलाः ।।
शिरोमुखानि देवर्षे सुतीक्ष्णैः प्राणनाशिभिः ।। 2.2.30.२० ।।
इत्थं ते विलयं प्राप्ता दाक्षायण्या समं तदा ।।
गणायुते द्वे च तदा तदद्भुतमिवाभवत् ।। ।। २१ ।।
गणा नाशाऽवशिष्टा ये शंकरस्य महात्मनः ।।
दक्षं तं क्रोधितं हन्तुं मुदा तिष्ठन्नुदायुधाः ।। २२ ।।
तेषामापततां वेगं निशम्य भगवान् भृगुः ।।
यज्ञघ्नघ्नेन यजुषा दक्षिणाग्नौ जुहोन्मुने ।। २३ ।।
हूयमाने च भृगुणा समुत्पेतुर्महासुराः ।।
ऋभवो नाम प्रबलवीरास्तत्र सहस्रशः ।। २४ ।।
तैरलातायुधैस्तत्र प्रमथानां मुनीश्वर ।।
अभूद्युद्धं सुविकटं शृण्वतां रोमहर्षणम्।। २५ ।।

ऋभुभिस्तैर्महावीरैर्हन्यमानास्समन्ततः ।।

अयत्नयानाः प्रमथा उशद्भिर्ब्रह्मतेजसा ।।२६।।

एवं शिवगणास्ते वै हता विद्राविता द्रुतम् ।।

शिवेच्छया महाशक्त्या तदद्भुतमिवाऽभवत् ।।२७।।

तद्दृष्ट्वा ऋषयो देवाश्शक्राद्यास्समरुद्गणाः ।।

विश्वेश्विनौ लोकपालास्तूष्णीं भूतास्तदाऽभवन् ।।२८।।

केचिद्विष्णुं प्रभुं तत्र प्रार्थयन्तस्समन्ततः ।।

उद्विग्ना मन्त्रयंतश्च विप्राभावं मुहुर्मुहुः।।२९।।

सुविचार्योदर्कफलं महोद्विग्नास्सुबुद्धयः ।।

सुरविष्ण्वादयोभूवन् तन्नाशाद्रावणान्मुहुः ।।2.2.30.३०।।

एवंभूतस्तदा यज्ञो विघ्नो जातो दुरात्मनः ।।

ब्रह्मबंधोश्च दक्षस्य शंकरद्रोहिणो मुने ।। ३१ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखण्डे सत्युपाख्याने सतीदेहत्यागोपद्रववर्णनं नाम त्रिंशोऽध्यायः ।। ३० ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः ३१

https://sa.wikisource.org/s/vee



ब्रह्मोवाच ।।

एतस्मिन्नन्तरे तत्र नभोवाणी मुनीश्वर ।।

अवोचच्छृण्वतां दक्षसुरादीनां यथार्थतः ।। १ ।।

व्योमवाण्युवाच ।।

रे रे दक्ष दुराचार दंभाचारपरायण ।।

किं कृतं ते महामूढ कर्म चानर्थकारकम् ।।२।।

न कृतं शैवराजस्य दधीचेर्वचनस्य हि ।।

प्रमाणं तत्कृते मूढ सर्वानंदकरं शुभम् ।। ३ ।।

निर्गतस्ते मखाद्विप्रः शापं दत्वा सुदुस्सहम् ।।

ततोपि बुद्धं किंचिन्नो त्वया मूढेन चेतसि ।।४।।

ततः कृतः कथं नो वै स्वपुत्र्यास्त्वादरः परः ।।

समागतायास्सत्याश्च मंगलाया गृहं स्वतः ।।५।।

सतीभवौ नार्चितौ हि किमिदं ज्ञानदुर्बल ।।

ब्रह्मपुत्र इति वृथा गर्वितोसि विमोहितः।। ।। ६ ।।

सा सत्येव सदाराध्या सर्वा पापफलप्रदा ।।

त्रिलोकमाता कल्याणी शंकरार्द्धांगभागिनी ।। ७ ।।

सा सत्येवार्चिता नित्यं सर्वसौभाग्यदायिनी ।।

माहेश्वरी स्वभक्तानां सर्वमंगलदायिनी ।।८।।

सा सत्येवार्चिता नित्यं संसारभयनाशिनी।।

मनोभीष्टप्रदा दैवी सर्वोपद्रवहारिणी ।। ९ ।।

सा सत्येवार्चिता नित्यं कीर्तिसंपत्प्रदायिनी ।।

परमा परमेशानी भुक्तिमुक्तिप्रदायिनी ।। 2.2.31.१० ।।

सा सत्येव जगद्धात्री जगद्रक्षणकारिणी ।।

अनादिशक्तिः कल्पान्ते जगत्संहारकारिणी ।। ११ ।।

सा सत्येव जगन्माता विष्णु मातावilासिनी ।।
ब्रह्मेन्द्रचन्द्रवह्न्यर्कदेवादिजननी स्मृता ।।१२।।
सा सत्येव तपोधर्मदातादिफलदायिनी ।।
शंभुशक्तिर्महादेवी दुष्टहंत्री परात्परा ।।१३।।
ईदृग्विधा सती देवी यस्य पत्नी सदा प्रिया ।।
तस्यै भागो न दत्तस्ते मूढेन कुविचारिणा ।।१४।।
शंभुर्हि परमेशानस्सर्वस्वामी परात्परः।।
विष्णुब्रह्मादिसंसेव्यः सर्वकल्याणकारकः ।।१५।
तप्यते हि तपः सिद्धैरेतद्दर्शनकांक्षिभिः ।।
युज्यते योगिभिर्योगैरेतद्दर्शनकांक्षिभिः ।।१६।।
अनंतधनधान्यानां यागादीनां तथैव च ।।
दर्शनं शंकरस्यैव महत्फलमुदाहृतम् ।।१७।।
शिव एव जगद्धाता सर्वविद्यापतिः प्रभुः ।।
आदिविद्यावरस्वामी सर्वमंगलमंगलः ।। १८ ।।
तच्छक्तेर्न कृतो यस्मात्सत्करोद्य त्वया खल ।।
अतएवाऽध्वरस्यास्य विनाशो हि भविष्यति ।।१९।।
अमंगलं भवत्येव पूजार्हाणामपूजया ।।
पूज्यमाना च नासौ हि यतः पूज्यतमा शिवा ।।2.2.31.२०।।
सहस्रेणापि शिरसां शेषो यत्पादजं रजः ।।
वहत्यहरहः प्रीत्या तस्य शक्तिः शिवा सती ।। २१ ।।
यत्पादपद्ममनिशं ध्यात्वा संपूज्य सादरम् ।।
विष्णुविष्णुत्वमापन्नस्तस्य शंभोः प्रिया सती ।।२२।।
यत्पादपद्ममनिशं ध्यात्वा संपूज्य सादरम् ।।
ब्रह्मा ब्रह्मत्वमापन्नस्तस्य शंभोः प्रिया सती ।। २३ ।।
यत्पादपद्ममनिशं ध्यात्वा संपूज्य सादरम् ।।
इन्द्रादयो लोकपालाः प्रापुस्स्वं स्वं परं पदम् ।। २४ ।।
जगत्पिता शिवश्शक्तिर्जगन्माता च सा सती ।।
सत्कृतौ न त्वया मूढ कथं श्रेयो भविष्यति ।। २५ ।।

दौर्भाग्यं त्वयि संक्रांतं संक्रांतास्त्वयि चापदः ।।
यौ चानाराधितौ भक्त्या भवानीशंकरौ च तौ ।। २६ ।।
अनभ्यर्च्य शिवं शंभुं कल्याणं प्राप्नुयामिति ।।
किमस्ति गर्वो दुर्वारस्स गर्वोद्य विनश्यति ।। २७ ।।
सर्वेशविमुखो भूत्वा देवेष्वेतेषु कस्तव ।।
करिष्यति सहायं तं न ते पश्यामि सर्वथा ।। २८ ।।
यदि देवाः करिष्यंति साहाय्यमधुना तव ।।
तदा नाशं समाप्स्यंति शलभा इव वह्निना ।। २९ ।।
ज्वलत्वद्य मुखं ते वै यज्ञध्वंसो भवत्वति ।।
सहायास्तव यावंतस्ते ज्वलंत्वद्य सत्वरम् ।। 2.2.31.३० ।।
अमराणां च सर्वेषां शपथोऽमंगलाय ते ।।
करिष्यंत्यद्य साहाय्यं यदेतस्य दुरात्मनः ।। ३१ ।।
निर्गच्छंत्वमरास्स्वोकमेतदध्वरमंडपात् ।।
अन्यथा भवतो नाशो भविष्यत्यद्य सर्वथा ।। ३२ ।।
निर्गच्छंत्वपरे सर्वे मुनिनागादयो मखात् ।।
अन्यथा भवतां नाशो भविष्यत्यद्य सर्वथा।।३३।।
निर्गच्छ त्वं हरे शीघ्रमेतदध्वरमंडपात् ।।
अन्यथा भवतो नाशो भविष्यत्यद्य सर्वथा ।। ३४ ।।
निर्गच्छ त्वं विधे शीघ्रमेतदध्वरमंडपात् ।।
अन्यथा भवतो नाशो भविष्यत्यद्य सर्वथा ।।३५।।
ब्रह्मोवाच ।।
इत्युक्त्वाध्वरशालायामखिलायां सुसंस्थितान् ।।
व्यरमत्सा नभोवाणी सर्वकल्याणकारिणी ।।३६।।
तच्छ्रुत्वा व्योमवचनं सर्वे हर्यादयस्सुराः ।।
अकार्षुर्विस्मयं तात मुनयश्च तथा परे ।। ३७ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे सत्युपाख्याने नभोवाणीवर्णनं नामैकत्रिंशोऽध्यायः ।। ५१ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः ३२



।। नारद उवाच ।।

श्रुत्वा व्योमगिरं दक्षः किमकार्षीत्तदाऽबुधः ।।

अन्ये च कृतवंतः किं ततश्च किमभूद्वद ।। १ ।।

पराजिताः शिवगणा भृगुमंत्रबलेन वै ।।

किमकार्षुः कुत्र गतास्तत्त्वं वद महामते ।। २ ।।

ब्रह्मोवाच ।।

श्रुत्वा व्योमगिरं सर्वे विस्मिताश्च सुरादयः ।।

नावोचत्किंचिदपि ते तिष्ठन्तस्तु विमोहिताः ।।३।।

पलायमाना ये वीरा भृगुमंत्रबलेन ते ।।

अवशिष्टा शिवगणाश्शिवं शरणमाययुः ।।४।।

सर्वं निवेदयामासू रुद्रायामिततेजसे ।।

चरित्रं च तथाभूतं सुप्रणम्यादराच्च ते ।। ५ ।।

गणा ऊचुः ।।

देवदेव महादेव पाहि नश्शरणागतान्।।

संशृण्वादरतो नाथ सती वार्तां च विस्तरात् ।। ६ ।।

गर्वितेन महेशानदक्षेन सुदुरात्मना ।।

अवमानः कृतस्सत्याऽनादरो निर्जरैस्तथा ।। ७ ।।

तुभ्यं भागमदात्रो स देवेभ्यश्च प्रदत्तवान् ।।

दुर्वचांस्यवदत्प्रोच्चैर्दुष्टो दक्षस्सुगर्वितः ।। ८ ।।

ततो दृष्ट्वा न ते भागं यज्ञेऽकुप्यत्सती प्रभो ।।

विनिंद्य बहुशस्तातमधाक्षीत्स्वतनुं तदा ।।९।।

गणास्त्वयुतसंख्याका मृतास्तत्र विलज्जया ।।

स्वांगान्याछिद्य शस्त्रैश्च क्रुध्याम ह्यपरे वयम् ।। 2.2.32.१० ।।

तद्यज्ञे ध्वंसितुं वेगात्सन्नद्धास्तु भयावहाः ।।

तिरस्कृता हि भृगुणा स्वप्रभावाद्विरोधिना ।। ११ ।।
ते वयं शरणं प्राप्तास्तव विश्वंभर प्रभो ।।
निर्भयान् कुरु नस्तस्माद्दयमानभवाद्भयात् ।। १२ ।।
अपमानं विशेषेण तस्मिन् यज्ञे महाप्रभो ।।
दक्षाद्यास्तेऽखिला दुष्टा अकुर्वन् गर्विता अति ।। १३ ।।
इत्युक्तं निखिलं वृत्तं स्वेषां सत्याश्च नारद ।।
तेषां च मूढबुद्धीनां यथेच्छसि तथा कुरु ।। १४ ।।
।। ब्रह्मोवाच ।।
इत्याकर्ण्यवचस्तस्य स्वगणानां वचः प्रभुः ।।
सस्मार नारदं सर्वं ज्ञातुं तच्चरितं लघु ।। १५ ।।
आगतस्त्वं द्रुतं तत्र देवर्षे दिव्यदर्शन ।।
प्रणम्य शंकरं भक्त्या सांजलिस्तत्र तस्थिवान् ।। १६ ।।
त्वां प्रशस्याथ स स्वामी सत्या वार्त्तां च पृष्टवान् ।।
दक्षयज्ञगताया वै परं च चरितं तथा ।।१७।।
पृष्टेन शंभुना तात त्वयाश्वेव शिवात्मना।।
तत्सर्वं कथितं वृतं जातं दक्षाध्वरे हि यत् ।।१८।।
तदाकर्ण्येश्वरो वाक्यं मुने तत्त्वन्मुखोदितम् ।।
चुकोपातिद्रुतं रुद्रो महारौद्रपराक्रमः।।१९।।
उत्पाट्यैकां जटां रुद्रो लोकसंहारकारकः ।।
आस्फालयामास रुषा पर्वतस्य तदोपरि ।।2.2.32.२० ।।
तोदनाच्च द्विधा भूता सा जटा च मुने प्रभोः ।।
संबभूव महारावो महाप्रलयभीषणः ।। ।। २१ ।।
तज्जटायास्समुद्भूतो वीरभद्रो महाबलः ।।
पूर्वभागेन देवर्षे महाभीमो गणाग्रणीः ।। २२ ।।
स भूमिं विश्वतो वृत्त्वात्यतिष्ठद्दशांगुलम् ।।
प्रलयानलसंकाशः प्रोन्नतो दोस्सहस्रवान् ।।२३।।
कोपनिश्वासतस्तत्र महारुद्रस्य चेशितुः ।।
जातं ज्वराणां शतकं संनिपातास्त्रयोदश ।।२४।।

महाकाली समुत्पन्ना तज्जटापरभा गतः ।।
महाभयंकरा तात भूतकोटिभिरावृता ।।२५।।
सर्वे मूर्त्तिधराः क्रूराः स्वर लोकभयंकराः ।।
स्वतेजसा प्रज्वलंतो दहंत इव सर्वतः ।। २६ ।।
अथ वीरो वीरभद्रः प्रणम्य परमेश्वरम्।।
कृतांजलिपुटः प्राह वाक्यं वाक्यविशारदः ।।२७।।
वीरभद्र उवाच ।।
महारुद्र महारौद्र सोमसूर्याग्निलोचन ।।
किं कर्तव्यं मया कार्यं शीघ्रमाज्ञापय प्रभो ।।२८।।
शोषणीयाः किमीशान क्षणार्द्धेनैव सिंधवः ।।
पेषणीयाः किमीशान क्षणार्द्धेनैव पर्वताः ।।२९।।
क्षणेन भस्मसात्कुर्यां ब्रह्मांडमुत किं हर ।।
क्षणेन भस्मसात्कुर्याम्सुरान्वा किं मुनीश्वरान् ।।2.2.32.३०।।
व्याश्वासः सर्वलोकानां किमु चार्यो हि शंकर ।।
कर्तव्य किमुतेशान सर्वप्राणिविहिंसनम् ।।३१।।
ममाशक्यं न कुत्रापि त्वत्प्रसादान्महेश्वर ।।
पराक्रमेण मत्तुल्यो न भूतो न भविष्यति ।। ३२ ।।
यत्र यत्कार्यमुद्दिश्य प्रेषयिष्यसि मां प्रभो ।।
तत्कार्यं साधयाम्येव सत्वरं त्वत्प्रसादतः।।३३।।
क्षुद्रास्तरंति लोकाब्धिं शासनाच्छंकरस्य ते ।।
हरातोहं न किं तर्तुं महापत्सागरं क्षमः ।। ३४ ।।
त्वत्प्रेषिततृणेनापि महत्कार्यं मयत्नतः ।।
क्षणेन शक्यते कर्तुं शंकरात्र न संशयः ।।३५।।
लीलामात्रेण ते शंभो कार्यं यद्यपि सिद्ध्यति ।।
तथाप्यहं प्रेषणीयो तवैवानुग्रहो ह्ययम् ।। ३६ ।।
शक्तिरेतादृशी शंभो ममापि त्वदनुग्रहात् ।।
विना शक्तिर्न कस्यापि शंकर त्वदनुग्रहात् ।। ३७ ।।
त्वदाज्ञया विना कोपि तृणादीनपि वस्तुतः ।।

नैव चालयितुं शक्तस्सत्यमेतन्न संशयः ।। ३८ ।।

शंभो नियम्यास्सर्वेपि देवाद्यास्ते महेश्वर ।।

तथैवाहं नियम्यस्ते नियंतुस्सर्वदेहिनाम् ।। ३९ ।।

प्रणतोस्मि महादेव भूयोपि प्रणतोस्म्यहम् ।।

प्रेषय स्वेष्ट सिद्ध्यर्थं मामद्य हर सत्वरम् ।। 2.2.32.४० ।।

स्पंदोपि जायते शंभो सव्यांगानां मुहुर्मुहुः ।।

भविष्यत्यद्य विजयो मामतः प्रेषय प्रभो ।। ४१ ।।

हर्षोत्साहविशेषोपि जायते मम कश्चन ।।

शंभो त्वत्पादकमले संसक्तश्च मनो मम ।। ४२ ।।

भविष्यति प्रतिपदं शुभसंतानसंततिः ।। ४३ ।।

तस्यैव विजयो नित्यं तस्यैव शुभमन्वहम् ।।

यस्य शंभौ दृढा भक्तिस्त्वयि शोभनसंश्रये ।।४४।।

ब्रह्मोवाच ।।

इत्युक्तं तद्वचः श्रुत्वा संतुष्टो मंगलापतिः ।।

वीरभद्र जयेति त्वं प्रोक्ताशीः प्राह तं पुनः ।। ४५ ।।

महेश्वर उवाच ।।

शृणु मद्वचनं तात वीरभद्र सुचेतसा ।।

करणीयं प्रयत्नेन तद्द्रुतं मे प्रतोषकम् ।। ४६ ।।

यागं कर्तुं समुद्युक्तो दक्षो विधिसुतः खलः ।।

मद्विरोधी विशेषेण महागर्वोऽबुधोऽधुना ।। ४७ ।।

तन्मखं भस्मसात्कृत्वा सयागपरिवारकम् ।।

पुनरायाहि मत्स्थानं सत्वरं गणसत्तम ।।४८।।

सुरा भवंतु गंधर्वा यक्षा वान्ये च केचन ।।

तानप्यद्यैव सहसा भस्मसात्कुरु सत्वरम्।।४९।।

तत्रास्तु विष्णुर्ब्रह्मा वा शचीशो वा यमोपि वा ।।

अपि चाद्यैव तान्सर्वान्पातयस्व प्रयत्नतः ।। 2.2.32.५० ।।

सुरा भवंतु गंधर्वा यक्षा वान्ये च केचन ।।

तानप्यद्यैव सहसा भस्मसात्कुरु सत्वरम् ।। ५१ ।।

दधीचिकृतमुल्लंघ्य शपथं मयि तत्र ये ।।
तिष्ठंति ते प्रयत्नेन ज्वालनीयास्त्वया ध्रुवम् ।। ५२ ।।
प्रमथाश्चागमिष्यंति यदि विष्ण्वादयो भ्रमात् ।।
नानाकर्षणमंत्रेण ज्वालयानीय सत्वरम् ।। ५३ ।।
ये तत्रोल्लंघ्य शपथं मदीयं गर्विताः स्थिताः ।।
ते हि मद्द्रोहिणोऽतस्तान् ज्वालयानलमालया ।। ५४ ।।
सपत्नीकान्ससारांश्च दक्षयागस्थलस्थितान् ।।
प्रज्वाल्य भस्मसात्कृत्वा पुनरायाहि सत्वरम् ।।५५।।
तत्र त्वयि गते देवा विश्वाद्य अपि सादरम् ।।
स्तोष्यंति त्वां तदाप्याशु ज्वालया ज्वालयैव तान् ।।५६।।
देवानपि कृतद्रोहान् ज्वालामालासमाकुलः ।।
ज्वालय ज्वलनैश्शीघ्रं माध्यायाध्यायपालकम् ।।५७।।
दक्षादीन्सकलांस्तत्र सपत्नीकान्सबांधवान् ।।
प्रज्वाल्य वीर दक्षं नु सलीलं सलिलं पिब ।। ५८ ।।
ब्रह्मोवाच ।।
इत्युक्तो रोषताम्राक्षो वेदमर्यादपालकः ।।
विरराम महावीरं कालारिस्सकलेश्वरः ।।५९।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे वीरभद्रोत्पत्तिशिवोपदेशवर्णनं नाम द्वात्रिंशोऽध्यायः ।।३२।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः ३३



ब्रह्मोवाच ।।

इत्युक्तं श्रीमहेशस्य श्रुत्वा वचनमादरात्।।

वीरभद्रोतिसंतुष्टः प्रणनाम महेश्वरम।।१।।

शासनं शिरसा धृत्वा देवदेवस्य शूलिनः।

प्रचचाल ततः शीघ्रं वीरभद्रो मखं प्रति।।२।।

शिवोथ प्रेषयामास शोभार्थं कोटिशो गणान्।।

तेन सार्द्धं महावीरान्मलयानलसन्निभान्।। ।।३।।

अथ ते वीरभद्रस्य पुरतः प्रबला गणाः।।

पश्चादपि ययुर्वीराः कुतूहलकरा गणाः।।४।।

वीरभद्रसमेता येगणाश्शतसहस्रशः ।।

पार्षदाः कालकालस्य सर्वे रुद्रस्वरूपिणः ।।५।]

गणैस्समेतः किलतैर्महात्मा स वीरभद्रो हरवेषभूषणः ।।

सहस्रबाहुर्भुजगाधिपाढ्यो ययौ रथस्थः प्रबलोतिभीकरः ।।६।।

नल्वानं च सहस्रे द्वे प्रमाणं स्यंदनस्य हि ।।

अयुतेनैव सिंहानां वाहनानां प्रयत्नतः ।।७।।

तथैव प्रबलाः सिंहा बहवः पार्श्वरक्षकाः ।।

शार्दूला मकरा मत्स्या गजास्तत्र सहस्रशः ।।८।।

वीरभद्रे प्रचलिते दक्षनाशाय सत्वरम् ।।

कल्पवृक्षसमुत्सृष्टा पुष्पवृष्टिरभूत्तदा ।। ९ ।।

तुष्टुवुश्च गणा वीर शिपिविष्टे प्रचेष्टितम् ।।

चक्रुः कुतूहलं सर्वे तस्मिंश्च गमनोत्सवैः ।।2.2.33.१०।।

काली कात्यायिनीशानी चामुंडा मुंडमर्दिनी ।।

भद्रकाली तथा भद्रा त्वरिता वैष्णवी तथा ।। ११ ।।

एताभिर्नवदुर्गाभिर्महाकाली समन्विता ।

ययौ दक्षविनाशाय सर्वभूतगणैस्सह ।।१२।।

डाकिनी शाकिनी चैव भूतप्रमथगुह्यकाः ।।

कूष्मांडाः पर्पटा श्चैव चटका ब्रह्मराक्षसाः ।। १३ ।।

भैरवाः क्षेत्रपालाश्च दक्षयज्ञविनाशकाः ।।

निर्ययुस्त्वरितं वीराश्शिवाज्ञाप्रतिपालकाः ।। १४ ।।

तथैव योगिनीचक्रं चतुःषष्टिगणान्वितम् ।।

निर्ययौ सहसा क्रुद्धं दक्षयज्ञं विनाशितुम् ।।१५।।

तेषां गणानां सर्वेषां संख्यानं शृणु नारद ।।

महाबलवतां संघोमुख्यानां धैर्यशालिनाम् ।।१६।।

अभ्ययाच्छंकुकर्णश्च दशकोट्या गणेश्वरः।।

दशभिः केकराक्षश्च विकृतो ष्टाभिरेव ।।१७।।

चतुःषष्ट्या विशाखश्च नवभिः पारियात्रिकः ।।

षड्भिस्सर्वाङ्गको वीरस्तथैव विकृताननः ।। १८ ।।

ज्वालकेशो द्वादशभिः कोटिभिर्गणपुंगवः ।।

सप्तभिः समदज्जीमान् दुद्रभोष्टाभिरेव च ।।१९।।

पंचभिश्च कपालीशः षड्भिस्संदारको गणः ।।

कोटिकोटिभिरेवेह कोटिकुण्डस्तथैव च ।। 2.2.33.२० ।।

विष्टंभोऽष्टाभिर्वीरैः कोटिभिर्गणसत्तमः ।।

सहस्रकोटिभिस्तात संनादः पिप्पलस्तथा ।। २१ ।।

आवेशनस्तथाष्टाभिरष्टाभिश्चंद्रतापनः ।।

महावेशः सहस्रेण कोटिना गणपो वृतः ।। २२ ।।

कुण्डी द्वादशकोटीभिस्तथा पर्वतको मुने ।।

विनाशितुं दक्षयज्ञं निर्ययौ गणसत्तम ।। २३ ।।

कालश्च कालकश्चैव महाकालस्तथैव च ।।

कोटीनां शतकेनैव दक्षयज्ञं ययौ प्रति ।। २४ ।।

अग्निकृच्छतकोट्या च कोट्याग्निमुख एव च ।।

आदित्यमूर्द्धा कोट्या च तथा चैव घनावहः ।। २५ ।।

सन्नाहश्शतकोट्या च कोट्या च कुमुदो गणः ।।

अमोघः कोकिलश्चैव कोटिकोट्या गणाधिपः ।। २६ ।।

काष्ठागूढश्चतुःषष्ट्या सुकेशी वृषभस्तथा ।।

सुमन्त्रको गणाधीशस्तथा तात सुनिर्ययौ ।। २७ ।।

काकपादोदरः षष्टिकोटिभिर्गणसत्तमः ।।

तथा सन्तानकः षष्टिकोटिभिर्गणपुंगवः ।। २८ ।।

महाबलश्च नवभिः कोटिभिः पुंगवस्तथा ।। २९ ।।

मधुपिंगस्तथा तात गणाधीशो हि निर्ययौ ।।

नीलो नवत्या कोटीनां पूर्णभद्रस्तथैव च ।। 2.2.33.३० ।।

निर्ययौ शतकोटीभिश्चतुर्वक्त्रो गणाधिपः ।।

काष्ठागूढेश्चतुष्षष्ट्या सुकेशो वृषभस्तथा ।। ३१ ।।

विरूपाक्षश्च कोटीनां चतुःषष्ट्या गणेश्वरः ।।

तालकेतुः षडास्यश्च पंचास्यश्च गणाधिपः ।।३२।।

संवर्तकस्तथा चैव कुलीशश्च स्वयं प्रभुः ।।

लोकांतकश्च दीप्तात्मा तथा दैत्यान्तको मुने ।। ३३ ।।

गणो भृंगीरिटिः श्रीमान् देवदेवप्रियस्तथा ।।

अशनिर्भालकश्चैव चतुःषष्ट्या सहस्रकः ।। ३४ ।।

कोटिकोटिसहस्राणां शतैर्विंश तिभिर्वृतः ।।

वीरेशो ह्यभ्ययाद्वीरः वीरभद्र शिवाज्ञया ।। ३५ ।।

भूतकोटिसहस्रैस्तु प्रययौ कोटिभिस्त्रिभिः ।।

रोमजैः श्वगणै श्चैव तथा वीरो ययौ द्रुतम् ।। ३६ ।।

तदा भेरीमहानादः शंखाश्च विविधस्वनाः ।।

जटाहरोमुखाश्चैव शृंगाणि विविधानि च ।। ३७ ।।

ते तानि विततान्येव बंधनानि सुखानि च ।।

वादित्राणि विनेदुश्च विविधानि महोत्सवे ।। ३८ ।।

वीरभद्रस्य यात्रायां सबलस्य महामुने ।।

शकुनान्यभवंस्तत्र भूरीणि सुखदानि च ।। ३९ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखण्डे वीरभद्रयात्रावर्णनं नाम त्रयस्त्रिंशोऽध्यायः ।। ३३ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः ३४



ब्रह्मोवाच ।।

एवं प्रचलिते चास्मिन् वीरभद्रे गणान्विते ।।

दुष्टचिह्नानि दक्षेण दृष्टानि विबुधैरपि ।। १ ।।

उत्पाता विविधाश्चासन् वीरभद्रे गणान्विते ।।

त्रिविधा अपि देवर्षे यज्ञविध्वंससूचकाः ।।२।।

दक्षवामाक्षिबाहूरुविस्पंदस्समजायत ।।

नानाकष्टप्रदस्तात सर्वथाऽशुभसूचकः ।।३।।

भूकंपस्समभूत्तत्र दक्षयागस्थले तदा ।।

दक्षोपश्यच्च मध्याह्ने नक्षत्राण्यद्भुतानि च ।।४।।

दिशश्चासन्सुमलिनाः कर्बुरोभूद्दिवाकरः ।।

परिवेषसहस्रेण संक्रांतश्च भयंकरः ।।५।।

नक्षत्राणि पतंति स्म विद्युदग्निप्रभाणि च ।।

नक्षत्राणामभूद्वक्रा गतिश्चाधोमुखी तदा ।।६।।

गृध्रा दक्ष शिरः स्पृष्ट्वा समुद्भूताः सहस्रशः।।

आसीद्गृध्रपक्षच्छायैस्सच्छायो यागमंडपः।।७।।

ववाशिरे यागभूमौ क्रोष्टारो नेत्रकस्तदा।।

उल्कावृष्टिरभूत्तत्र श्वेतवृश्चिकसंभवा ।।८।।

खरा वाता ववुस्तत्र पांशुवृष्टिसमन्विताः।।

शलभाश्च समुद्भूता विवर्तानिलकंपिताः ।।९।।

रीतैश्च पवनै रूर्द्ध्वं स दक्षाध्वरमंडपः।।

दैवान्वितेन दक्षेण यः कृतो नूतनोद्भुतः।। 2.2.34.१०।।

वेमुर्दक्षादयस्सर्वे तदा शोणितमद्भुतम्।।

वेमुश्च मांसखण्डानि सशल्यानि मुहुर्मुहुः ।। ११ ।।

सकंपाश्च बभूवुस्ते दीपा वातहता इव ।।

दुःखिताश्चाभवन्सर्वे शस्त्रधाराहता इव ।। १२ ।।
तदा निनादजातानि बाष्पवर्षाणि तत्क्षणे ।।
प्रातस्तुषारवर्षीणि पद्मानीव वनांतरे ।। १३ ।।
दक्षाद्यक्षीणि जातानि ह्यकस्माद्विशदान्यपि ।।
निशायां कमलाश्चैव कुमुदानीव संगवे ।। १४।।
असृग्ववर्ष देवश्च तिमिरेणावृता दिशः ।।
दिग्दाहोभूद्विशेषेण त्रासयन् सकलाञ्जनान्।। ।। १५ ।।
एवं विधान्यरिष्टानि ददृशुर्विबुधादयः ।।
भयमापेदिरेऽत्यंतं मुने विष्ण्वादिकास्तदा ।। १६।।
भुवि ते मूर्छिताः पेतुर्हा हताः स्म इतीरयन् ।।
तरवस्तीरसंजाता नदीवेगहता इव ।। १७ ।।
पतित्वा ते स्थिता भूमौ क्रूराः सर्पा हता इव ।।
कंदुका इव ते भूयः पतिताः पुनरुत्थिताः ।। १८ ।।
ततस्ते तापसंतप्ता रुरुदुः कुररी इव ।।
रोदनध्वनिसंक्रातोरुक्तिप्रत्युक्तिका इव ।। १९।।
सवैकुंठास्ततस्सर्वे तदा कुंठितशक्तयः ।।
स्वस्वोपकंठमाकंठं लुलुठुः कमठा इव ।। 2.2.34.२० ।।
एतस्मिन्नंतरे तत्र संजाता चाशरीरवाक् ।।
श्रावयत्यखिलान् देवान्दक्षं चैव विशेषतः ।। २१ ।।
आकाशवाण्युवाच ।।
धिक् जन्म तव दक्षाद्य महामूढोसि पापधीः ।।
भविष्यति महद्दुःखमनिवार्यं हरोद्भवम् ।। २२ ।।
हाहापि नोत्र ये मूढास्तव देवादयस्स्थिताः ।।
तेषामपि महादुःखं भविष्यति न संशयः ।। २३ ।।
ब्रह्मोवाच ।। तच्छ्रुत्वाकाशवचनं दृष्ट्वारिष्टानि तानि च ।।
दक्षः प्रापद्भयं चाति परे देवादयोपि ह ।।२४।।
वेपमानस्तदा दक्षो विकलश्चाति चेतसि ।।
अगच्छच्छरणं विष्णोः स्वप्रभोरिंदिरापतेः ।। २५ ।।

सुप्रणम्य भयाविष्टः संस्तूय च विचेतनः ।।

अवोचद्देवदेवं तं विष्णुं स्वजनवत्सलम् ।। २६ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सती खंडे दुश्शकुनदर्शनं नाम चतुस्त्रिंशोऽध्यायः ।। ३४ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः ३५

https://sa.wikisource.org/s/vpv
< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः २ (सतीखण्डः)

दक्ष उवाच ।।

देवदेव हरे विष्णो दीनबंधो कृपानिधे ।।

मम रक्षा विधातव्या भवता साध्वरस्य च ।। १ ।।

रक्षकस्त्वं मखस्यैव मखकर्मा मखात्मकः ।।

कृपा विधेया यज्ञस्य भंगो भवतु न प्रभो।।२।।

।। ब्रह्मोवाच ।।

इत्थं बहुविधां दक्षः कृत्वा विज्ञप्तिमादरात् ।।

पपात पादयोस्तस्य भयव्याकुलमानसः ।।३।।

उत्थाप्य तं ततो विष्णुर्दक्षं विक्लिन्नमानसम् ।।

श्रुत्वा च तस्य तद्वाक्यं कुमतेरस्मरच्छिवम् ।। ४ ।।

स्मृत्वा शिवं महेशानं स्वप्रभुं परमेश्वरम् ।।

अवदच्छिवतत्त्वज्ञो दक्षं सबोधयन्हरिः ।। ५ ।।

हरिरुवाच ।।

शृणु दक्ष प्रवक्ष्यामि तत्त्वतः शृणु मे वचः ।।

सर्वथा ते हितकरं महामंत्रसुखप्रदम् ।। ६ ।।

अवज्ञा हि कृता दक्ष त्वया तत्त्वमजानता ।।

सकलाधीश्वरस्यैव शंकरस्य परात्मनः ।।७।।

ईश्वरावज्ञया सर्वं कार्यं भवति सर्वथा ।।

विफलं केवलं नैव विपत्तिश्च पदेपदे ।। ८ ।।

अपूज्या यत्र पूज्यंते पूजनीयो न पूज्यते ।।

त्रीणि तत्र भविष्यंति दारिद्र्यं मरणं भयम् ।। ९ ।।

तस्मात्सर्वप्रयत्नेन माननीयो वृषध्वजः ।।

अमानितान्महेशाच्च महद्भयमुपस्थितम् ।। 2.2.35.१० ।।

अद्यापि न वयं सर्वे प्रभवः प्रभवामहे ।।

भवतो दुर्नयेनैव मया सत्यमुदीर्य्यते ।। ११ ।।

ब्रह्मोवाच ।।

विष्णोस्तद्वचनं श्रुत्वा दक्षश्चिंतापरोऽभवत् ।।

विवर्णवदनो भूत्वा तूष्णीमासीद्भुवि स्थितः ।।१२।।

एतस्मिन्नंतरे वीरभद्रः सैन्यसमन्वितः ।।

अगच्छदध्वरं रुद्रप्रेरितो गणनायकः ।।१३।।

पृष्ठे केचित्समायाता गगने केचिदागताः।।

दिशश्च विदिशः सर्वे समावृत्य तथापरे।। ।।१४।।

शर्वाज्ञया गणाः शूरा निर्भया रुद्रविक्रमाः ।।

असंख्याः सिंहनादान्वै कुर्वंतो वीरसत्तमाः ।।१५।।

तेन नादेन महता नादितं भुवनत्रयम् ।।

रजसा चावृतं व्योम तमसा चावृता दिशः ।।१६।।

सप्तद्वीपान्विता पृथ्वी चचालाति भयाकुला ।।

सशैलकानना तत्र चुक्षुभुस्सकलाब्धयः ।।१७।।

एवंभूतं च तत्सैन्यं लोकक्षयकरं महत् ।।

दृष्ट्वा च विस्मितास्सर्वे बभूवुरमरादयः ।। १८ ।।

सैन्योद्योगमथालोक्य दक्षश्चासृङ्मुखाकुलः ।।

दंडवत्पतितो विष्णुं सकलत्रोऽभ्यभाषत।। १९।।

।। दक्ष उवाच ।।

भवद्बलेनैव मया यज्ञः प्रारंभितो महान् ।।

सत्कर्मसिद्धये विष्णो प्रमाणं त्वं महाप्रभो ।।2.2.35.२० ।।

विष्णो त्वं कर्मणां साक्षी यज्ञानां प्रतिपालकः ।।

धर्मस्य वेदगर्भस्य ब्रह्मणस्त्वं महाप्रभो ।।२१।।

तस्माद्रक्षा विधातव्या यज्ञस्यास्य मम प्रभो ।।

त्वदन्यः यस्समर्थोस्ति यतस्त्वं सकलप्रभुः ।।२२।। ।

।। ब्रह्मोवाच ।।

दक्षस्य वचनं श्रुत्वा विष्णुर्दीनतरं तदा ।।

अवोचद्बोधयंस्तं वै शिवतत्त्वपराङ्मुखम् ।।२३।।

विष्णुरुवाच ।।
मया रक्षा विधातव्या तव यज्ञस्य दक्ष वै ।।
ख्यातो मम पणः सत्यो धर्मस्य परिपालनम् ।।२४।।
तत्सत्यं तु त्वयोक्तं हि किं तत्तस्य व्यतिक्रमः ।।
शृणु त्वं वच्म्यहं दक्ष क्रूरबुद्धिं त्यजाऽधुना ।।२५।।
नैमिषे निमिषक्षेत्रे यज्जातं वृत्तमद्भुतम् ।।
तत्किं न स्मर्यते दक्ष विस्मृतं किं कुबुद्धिना ।।२६।।
रुद्रकोपाच्च को ह्यत्र समर्थो रक्षणे तव ।।
न यस्याभिमतं दक्ष यस्त्वां रक्षति दुर्मतिः।।२७।।
किं कर्म किमकर्मेति तत्र पश्यसि दुर्मते ।।
समर्थं केवलं कर्म न भविष्यति सर्वदा ।। २८ ।।
स्वकर्मविद्धि तद्येन समर्थत्वेन जायते ।।
न त्वन्यः कर्मणो दाता शं भवेदीश्वरं विना ।।२९।।
ईश्वरस्य च यो भक्त्या शांतस्तद्गतमानसः ।।
कर्मणो हि फलं तस्य प्रयच्छति तदा शिवः ।। 2.2.35.३० ।।
केवलं ज्ञानमाश्रित्य निरीश्वरपरा नराः ।।
निरयं ते च गच्छंति कल्पकोटिशतानि च ।। ३१ ।।
पुनः कर्ममयैः पाशैर्वद्धा जन्मनि जन्मनि ।।
निरयेषु प्रपच्यंते केवलं कर्मरूपिणः ।। ३२ ।।
अयं रुद्रगणाधीशो वीरभद्रोऽरि मर्दनः ।।
रुद्रकोपाग्निसंभूतः समायातोध्वरांगणे ।।३३।।
अयमस्मद्विनाशार्थमागतोस्ति न संशयः ।।
अशक्यमस्य नास्त्येव किमप्यस्तु तु वस्तुतः ।। ३४ ।।
प्रज्वाल्यास्मानयं सर्वान् ध्रुवमेव महाप्रभुः ।।
ततः प्रशांतहृदयो भविष्यति न संशयः ।। ३५ ।।
श्रीमहादेवशपथं समुल्लंघ्य भ्रमान्मया ।।
यतः स्थितं ततः प्राप्यं मया दुःखं त्वया सह ।। ३६ ।।
शक्तिर्मम तु नास्त्येव दक्षाद्यैतन्निवारणे ।।

शपथोल्लंघनादेव शिवद्रोही यतोस्म्यहम् ।। ३७ ।।

कालत्रयेपि न यतो महेशद्रोहिणां सुखम् ।।

ततोऽवश्यं मया प्राप्तं दुःखमद्य त्वया सह ।। ३८ ।।

सुदर्शनाभिधं चक्रमेतस्मिन्न लगिष्यति ।।

शैवचक्रमिदं यस्मादशैवलयकारणम्।।३९।।

विनापि वीरभद्रेण नामैतच्चक्रमैश्वरम् ।।

हत्वा गमिष्यत्यधुना सत्वरं हरसन्निधौ ।। 2.2.35.४० ।।

शैवं शपथमुल्लंघ्य स्थितं मां चक्रमीदृशम् ।।

असंहत्यैव सहसा कृपयैव स्थिरं परम् ।।४१।।

अतः परमिदं चक्रमपि न स्थास्यति ध्रुवम्

गमिष्यत्यधुना शीघ्रं ज्वालामालासमाकुलम् ।।४२।।

वीरभद्रः पूजितोपि शीघ्रमस्माभिरादरात् ।।

महाक्रोधसमाक्रांतो नास्मान्संरक्षयिष्यति ।। ४३ ।।

अकांडप्रलयोऽस्माकमागतोद्य हि हा हहा ।।

हा हा बत तवेदानीं नाशोस्माकमुपस्थितः ।।४४।।

शरण्योऽस्माकमधुना नास्त्येव हि जगत्त्रये ।।

शंकरद्रोहिणो लोके कश्शरण्यो भविष्यति ।।४५।।

तनुनाशेपि संप्राप्यास्तैश्चापि यमयातनाः ।।

तानैव शक्यते सोढुं बहुदुःखप्रदायिनीः ।। ४६ ।।

शिवद्रोहिणमालोक्य दष्टदंतो यमः स्वयम् ।।

तप्ततैलकटाहेषु पातयत्येव नान्यथा ।। ४७ ।।

गन्तुमेवाहमुद्युक्तं सर्वथा शपथोत्तरम् ।।

तथापि न गतश्शीघ्रं दुष्टसंसर्गपापतः ।।४८।।

यदद्य क्रियतेस्माभिः पलायनमितस्तदा ।।

शार्वो ना कर्षकश्शस्त्रैरस्मानाकर्षयिष्यति ।।४९।।

स्वर्गे वा भुवि पाताले यत्र कुत्रापि वा यतः ।।

श्रीवीरभद्रशस्त्राणां गमनं न हि दुर्ल भम् ।। 2.2.35.५० ।।

यावतश्च गणास्संति श्रीरुद्रस्य त्रिशूलिनः ।।

तावतामपि सर्वेषां शक्तिरेतादृशी धुवम् ।। ५१ ।।

श्रीकालभैरवः काश्यां नखाग्रेणैव लीलया ।।

पुरा शिरश्च चिच्छेद पंचमं ब्रह्मणो ध्रुवम् ।।५२।।

एतदुक्त्वा स्थितो विष्णुरतित्रस्तमुखाम्बुजः ।।

वीरभद्रोपि संप्राप तदैवाऽध्वरमंडपम् ।। ५३ ।।

एवं ब्रुवति गोविन्द आगतं सैन्यसागरम् ।।

वीरभद्रेण सहितं ददृशुश्च सुरादया ।। ५४ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे सत्युपाख्याने विष्णुवाक्यवर्णनं नाम पंचत्रिंशोऽध्यायः ।। ३५ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः ३६



ब्रह्मोवाच ।।

इन्द्रोऽपि प्रहसन् विष्णुमात्मवादरतं तदा ।।

वज्रपाणिस्सुरैस्सार्द्धं योद्धुकामोऽभवत्तदा ।। १ ।।

तदेन्द्रो गजमारूढो बस्तारूढोऽनलस्तथा ।।

यमो महिषमारूढो निर्ऋतिः प्रेतमेव च ।। २ ।।

पाशी च मकरारूढो मृगारूढो स्सदागतिः ।।

कुबेरः पुष्पकारूढस्संनद्धोभूदतंद्रितः ।। ३ ।।

तथान्ये सुरसंघाश्च यक्षचारणगुह्यकाः ।।

आरुह्य वाहनान्येव स्वानि स्वानि प्रतापिनः ।।४।।

तेषामुद्योगमालोक्य दक्षश्चासृङ्मुखस्तथा ।।

तदंतिकं समागत्य सकलत्रोऽभ्यभाषत ।। ५ ।।

दक्षउवाच ।।

युष्मद्बलेनैव मया यज्ञः प्रारंभितो महान् ।।

सत्कर्मसिद्धये यूयं प्रमाणास्स्युर्महाप्रभाः ।। ६ ।।

ब्रह्मोवाच ।।

तच्छ्रुत्वा दक्षवचनं सर्वे देवास्सवासवाः ।।

निर्ययुस्त्वरितं तत्र युद्धं कर्तुं समुद्यताः।।७।।

अथ देवगणाः सर्वे युयुधुस्ते बलान्विताः।।

शक्रादयो लोकपाला मोहिताः शिवमायया।।८।।

देवानां च गणानां च तदासीत्समरो महान् ।।

तीक्ष्णतोमरनाराचैर्युयुधुस्ते परस्परम् ।।९।।

नेदुश्शंखाश्च भेर्य्यश्च तस्मिन् रणमहोत्सवे ।।

महादुंदुभयो नेदुः पटहा डिंडिमादयः ।।2.2.36.१०।।

तेन शब्देन महता श्लाघ्मानास्तदा सुराः ।।

लोकपालैश्च सहिता जघ्नुस्ताञ्छिवकिंकरान् ।। ११ ।।
इन्द्राद्यैर्लोकपालैश्च गणाश्शंभो पराङ्मुखाः ।।
कृताश्च मुनिशार्दूल भृगोर्मंत्रबलेन च ।।१२।।
उच्चाटनं कृतं तेषां भृगुणा यज्वना तदा ।।
यजनार्थं च देवानां तुष्ट्यर्थं दीक्षितस्य च ।। १३ ।।
पराजितान्स्वकान्दृष्ट्वा वीरभद्रो रुषान्वितः ।।
भूतप्रेतपिशाचांश्च कृत्वा तानेव पृष्ठतः ।। १४ ।।
वृषभस्थान् पुरस्कृत्य स्वयं चैव महाबलः ।।
महात्रिशूलमादाय पातयामास निर्जरान् ।।१५।।
देवान्यक्षान् साध्यगणान् गुह्यकान् चारणानपि ।।
शूलघातैश्च सर्वे गणा वेगात् प्रजघ्निरे।।१६।।
केचिद्द्विधा कृताः खड्गैर्मुद्गरैश्च विपोथिताः।।
अन्यैश्शस्त्रैरपि सुरा गणैर्भिन्नास्तदाऽभवन्।।१७।।
एवं पराजितास्सर्वे पलायनपरायणाः।।
परस्परं परित्यज्य गता देवास्त्रिविष्टपम्।।१८।।
केवलं लोकपालास्ते शक्राद्यास्तस्थुरुत्सुकाः ।।
संग्रामे दारुणे तस्मिन् धृत्वा धैर्यं महाबलाः ।। १९ ।।
सर्वे मिलित्वा शक्राद्या देवास्तत्र रणाजिरे ।।
बृहस्पतिं च पप्रच्छुर्विनयावनतास्तदा ।। 2.2.36.२० ।।
लोकपाला ऊचुः ।।
गुरो बृहस्पते तात महाप्राज्ञ दयानिधे ।।
शीघ्रं वद पृच्छतो नः कुतोऽ स्माकं जयो भवेत् ।।२१।।
ब्रह्मोवाच ।।
इत्याकर्ण्य वचस्तेषां स्मृत्वा शंभुं प्रयत्नवान् ।।
बृहस्पतिरुवाचेदं महेन्द्रं ज्ञानदुर्बलम् ।। २२ ।।
बृहस्पतिरुवाच ।।
यदुक्तं विष्णुना पूर्वं तत्सर्वं जातमद्य वै ।।
तदेव विवृणोमीन्द्र सावधानतया शृणु ।। २३ ।।

अस्ति यक्षेश्वरः कश्चित् फलदः सर्वकर्मणाम् ।।

कर्तारं भजते सोपि न स्वकर्तुः प्रभुर्हि सः ।। २४ ।।

अमंत्रौषधयस्सर्वे नाभिचारा न लौकिकाः ।।

न कर्माणि न वेदाश्च न मीमांसाद्वयं तथा ।। २५ ।।

अन्यान्यपि च शास्त्राणि नानावेदयुतानि च ।।

ज्ञातुं नेशं संभवंति वदंत्येवं पुरातनाः ।। २६ ।।

न स्वज्ञेयो महेशानस्सर्ववेदायुतेन सः ।।

भक्तेरनन्यशरणैर्नान्यथेति महाश्रुतिः ।। २७ ।।

शांत्या च परया दृष्ट्या सर्वथा निर्विकारया ।।

तदनुग्रहतो नूनं ज्ञातव्यो हि सदाशिवः ।।२८।।

परं तु संवदिष्यामि कार्याकार्य विवक्षितौ ।।

सिध्यंशं च सुरेशान तं शृणु त्वं हिताय वै ।। २९ ।।

त्वमिंद्र बालिशो भूत्वा लोकपालैः सदाद्य वै ।।

आगतो दक्ष यज्ञं हि किं करिष्यसि विक्रमम् ।। 2.2.36.३० ।।

एते रुद्रसहायाश्च गणाः परमकोपनाः ।।

आगता यज्ञविघ्नार्थं तं करिष्यंत्यसंशयम ।। ३१ ।।

सर्वथा न ह्युपायोत्र केषांचिदपि तत्त्वतः ।।

यज्ञविघ्नविनाशार्थ सत्यं सत्यं ब्रवीम्यहम् ।।३२।।

ब्रह्मोवाच ।।

एवं बृहस्पतेर्वाक्यं श्रुत्वा ते हि दिवौकसः ।।

चिंतामापेदिरे सर्वे लोकपालास्सवासवाः ।। ३३ ।।

ततोब्रवीद्वीरभद्रो महावीरगणैर्वृतः ।।

इन्द्रादीन् लोकपालांस्तान् स्मृत्वा मनसि शंकरम् ।। ३४ ।।

वीरभद्र उवाच ।।

सर्वे यूयं बालिशत्वादवदानार्थमागताः ।।।

अवदानं प्रयच्छामि आगच्छत ममांतिकम् ।।३५।।

हे शक्र हे शुचे भानो हे शशिन् हे धनाधिप।।

हे पाशपाणे हे वायो निर्ऋते यम शेष हे ।। ३६ ।।

हे सुरासुरसंघाहीहैत यूयं हे विचक्षणाः ।।
अवदानानि दास्यामि आतृप्त्याद्यासतां वराः ।। ३७ ।।
।। ब्रह्मोवाच ।।
एवमुक्त्वा सितैर्बाणैर्जघानाथ रुषान्वितः ।।
निखिलांस्तान् सुरान् सद्यो वीरभद्रो गणाग्रणीः ।।
तैर्बाणैर्निहतास्सर्वे वासवाद्याः सुरेश्वराः ।। ३८ ।।
पलायनपरा भूत्वा जग्मुस्ते च दिशो दश ।।
गतेषु लोकपालेषु विद्रुतेषु सुरेषु च ।।
यज्ञवाटोपकंठं हि वीरभद्रोगमद्गणैः ।। ३९ ।।
तदा ते ऋषयस्सर्वे सुभीता हि रमेश्वरम् ।।
विज्ञसुकामास्सहसा शीघ्रमूचुर्नता भृशम् ।। 2.2.36.४० ।।
ऋषय ऊचुः ।।
देवदेव रमानाथ सर्वेश्वर महाप्रभो ।।
रक्ष यज्ञं हि दक्षस्य यज्ञोसि त्वं न संशयः ।। ४१ ।।।
यज्ञकर्मा यज्ञरूपो यज्ञांगो यज्ञरक्षकः ।।
रक्ष यज्ञमतो रक्ष त्वत्तोन्यो न हि रक्षकः ।। ४२ ।।
।। ब्रह्मोवाच ।।
इत्याकर्ण्य वचस्तेषामृषीणां वचनं हरिः ।।
योद्धुकामो भयाद्विष्णुर्वीरभद्रेण तेन वै ।। ४३ ।।
चतुर्भुजस्सुसनद्धो चक्रायुधधरः करैः ।।
महाबलोमरगणैर्यज्ञवाटात्स निर्ययौ ।।४४।।
वीरभद्रः शूलपाणिर्नानागणसमन्वितः ।।
ददर्श विष्णुं संनद्धं योद्धुकामं महाप्रभुम्।।।। ४५ ।।
तं दृष्ट्वा वीरभद्रोभूद्भ्रुकुटीकुटिलाननः ।।
कृतांत इव पापिष्ठं मृगेन्द्र इव वारणम् ।।४६।।
तथाविधं हरिं दृष्ट्वा वीरभद्रो रिमर्दनः ।।
अवदत्त्वरितः क्रुद्धो गणैर्वीरैस्समावृतः ।। ४७ ।।
वीरभद्र उवाच ।।

रेरे हरे महादेव शपथोल्लंघनं त्वया ।।
कथमद्य कृतं चित्ते गर्वः किमभवत्तव ।। ४८ ।।
तव श्रीरुद्रशपथोल्लंघने शक्तिरस्ति किम् ।।
को वा त्वमसिको वा ते रक्ष कोस्ति जगत्त्रये। ।। ४९ ।।
अत्र त्वमागतः कस्माद्वयं तन्नैव विद्महे ।।
दक्षस्य यज्ञपातात्त्वं कथं जातोसि तद्वद ।। 2.2.36.५० ।।
दाक्षायण्याकृतं यच्च तन्न दृष्टं किमु त्वया ।।
प्रोक्तं यच्च दधीचेन श्रुतं तन्न किमु त्वया ।।५१।।
त्वञ्चापि दक्षयज्ञेस्मिन्नवदानार्थमागतः ।।
अवदानं प्रयच्छामि तव चापि महाभुज ।। ५२ ।।
वक्षो विदारयिष्यामि त्रिशूलेन हरे तव ।।
कस्तवास्ति समायातो रक्षकोद्य ममांतिकम् ।। ५३ ।।
पातयिष्यामि भूपृष्ठे ज्वालयिष्यामि वह्निना ।।
दग्धं भवंतमधुना पेषयिष्यामि सत्वरम् ।।५४।।
रेरे हरे दुराचार महेश विमुखाधम ।।
श्रीमहारुद्रमाहात्म्यं किन्न जानासि पावनम् ।। ५५ ।।
तथापि त्वं महाबाहो योद्धुकामोग्रतः स्थितः ।।
नेष्यामि पुनरावृत्तिं यदि तिष्ठेस्त्वमात्मना ।।५६।।
ब्रह्मोवाच ।। ।।
तस्य तद्वचनं श्रुत्वा वीरभद्रस्य बुद्धिमान् ।।
उवाच विहसन् प्रीत्या विष्णुस्त्र सुरेश्वरः ।।५७।।
विष्णुरुवाच ।।
शृणु त्वं वीरभद्राद्य प्रवक्ष्यामि त्वदग्रतः ।।
न रुद्रविमुखं मां त्वं वद शंकरसेवकम् ।।५८।।
अनेन प्रार्थितः पूर्वं यज्ञार्थं च पुनः पुनः ।।
दक्षेणाविदितार्थेन कर्मनिष्ठेन मौढ्यतः ।। ५९ ।।
अहं भक्तपराधीनस्तथा सोपि महेश्वरः ।।
दक्षो भक्तो हि मे तात तस्मादत्रागतो मखे ।। 2.2.36.६० ।।

शृणु प्रतिज्ञां मे वीर रुद्रकोपसमुद्भव ।।

रुद्रतेजस्स्वरूपो हि सुप्रतापालयंप्रभो ।। ६१ ।।

अहं निवारयामि त्वां त्वं च मां विनिवारय ।।

तद्भविष्यति यद्भावि करिष्येऽहं पराक्रमम् ।। ६२ ।।

।। ब्रह्मोवाच ।।

इत्युक्तवति गोविन्दे प्रहस्य स महाभुजः ।।

अवदत्सुप्रसन्नोस्मि त्वां ज्ञात्वास्मत्प्रभोः प्रियम् ।। ६३ ।।

ततो विहस्य सुप्रीतो वीरभद्रो गणाग्रणीः ।।

प्रश्रयावनतोवादीद्विष्णुं देवं हि तत्त्वतः ।। ६४ ।।

।। वीरभद्र उवाच ।।

तव भावपरीक्षार्थमित्युक्तं मे महाप्रभो ।।

इदानीं तत्त्वतो वच्मि शृणु त्वं सावधानतः ।। ६५ ।।

यथा शिवस्तथा त्वं हि यथा त्वं च तथा शिवः ।।

इति वेदा वर्णयंति शिवशासनतो हरे ।। ६६ ।।

शिवाज्ञया वयं सर्वे सेवकाः शंकरस्य वै ।।

तथापि च रमानाथ प्रवादोचितमादरात् ।। ६७ ।।

।। ब्रह्मोवाच ।।

तच्छ्रुत्वा वचनं तस्य वीरभद्रस्य सोऽच्युतः ।।

प्रहस्य चेदं प्रोवाच वीरभद्रमिदं वचः ।। ६८ ।।

।। विष्णुरुवाच ।।

युद्धं कुरु महावीर मया सार्द्धमशंकितः ।।

तवास्त्रैः पूर्यमाणोहं गमिष्यामि स्वमाश्रमम् ।। ६९ ।।

।। ब्रह्मोवाच ।।

इत्युक्त्वा हि विरम्यासौ सन्नद्धोभूद्रणाय च ।।

स्वगणैर्वीरभद्रोपि सन्नद्धोथ महाबलः ।। 2.2.36.७० ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे विष्णुवीरभद्रसम्वादो नाम षट्त्रिंशोऽध्यायः ।।३६।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः ३७

https://sa.wikisource.org/s/vwf
< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः २ (सतीखण्डः)

।। ब्रह्मोवाच ।।

वीरभद्रोथ युद्धे वै विष्णुना स महाबलः ।।

संस्मृत्य शंकरं चित्ते सर्वापद्विनिवारणम् ।। ।।१।।

आरुह्य स्यंदनं दिव्यं सर्ववैरिविमर्दनः ।।

गृहीत्वा परमास्त्राणि सिंहनादं जगर्ज ह ।।२।।

विष्णुश्चापि महाघोषं पांचजन्या भिधन्निजम् ।।

दध्मौ बली महाशंखं स्वकीयान् हर्षयन्निव ।।३।।

तच्छ्रुत्वा शंखनिर्ह्लादं देवा ये च पलायिताः ।।

रणं हित्वा गताः पूर्वं ते द्रुतं पुनराययुः ।। ४ ।।

वीरभद्र गणैस्तेषां लोकपालास्सवासवाः ।।

युद्धञ्चक्रुस्तथा सिंहनादं कृत्वा बलान्विताः ।। ५ ।।

गणानां लोकपालानां द्वन्द्वयुद्धं भयावहम् ।।

अभवत्तत्र तुमुलं गर्जतां सिंहनादतः ।।६।।

नन्दिना युयुधे शक्रोऽनलो वै वैष्णवास्तथा।।

कुबेरोपि हि कूष्माण्डपतिश्च युयुधे बली ।। ७ ।।

तदेन्द्रेण हतो नन्दी वज्रेण शतपर्वणा ।। ८ ।।

नन्दिना च हतश्शक्रस्त्रिशूलेन स्तनांतरे ।।९।।

बलिनौ द्वावपि प्रीत्या युयुधाते परस्परम् ।।

नानाघातांश्च कुर्वंतौ नन्दिशक्रौ जिगीषया ।। 2.2.37.१० ।।

शक्त्या जघान चाश्मानं शुचिः परमकोपनः ।।

सोपि शूलेन तं वेगाच्छितधारेण पावकम् ।। ११ ।।

यमेन सह संग्रामं महालोको गणाग्रणीः ।।

चकार तुमुलं वीरो महादेवं स्मरन्मुदा ।। १२ ।।

नैर्ऋतेन समागम्य चंडश्च बलवत्तरः ।।

युयुधे परमास्त्रैश्च नैर्ऋतिं निबिडं वयन् ।। १३ ।।

वरुणेन समं वीरो मुंडश्चैव महाबलः ।।

युयुधे परया शक्त्या त्रिलोकीं विस्मयन्निव ।। १४ ।।

वायुना च हतो भृंगी स्वास्त्रेण परमोजसा ।।

भृंगिणा च हतो वायुस्त्रिशूलेन प्रतापिना ।। १५ ।।

कुबेरेणैव संगम्य कूष्मांडपतिरादरात् ।।

युयुधे बलवान् वीरो ध्यात्वा हृदि महेश्वरम् ।।१६।।

योगिनीचक्रसंयुक्तो भैरवीनायको महान् ।।

विदीर्य्य देवानखिलान्पपौ शोणितमद्भुतम् ।। १७ ।।

क्षेत्रपालास्तथा तत्र बुभुक्षुः सुरपुंगवान् ।।

काली चापि विदार्यैव तान्पपौ रुधिरं बहु ।। १८ ।।

अथ विष्णुर्महातेजा युयुधे तैश्च शत्रुहा ।।

चक्रं चिक्षेप वेगेन दहन्निव दिशो दश ।। १९ ।।

क्षेत्रपालस्समायांतं चक्रमालोक्य वेगतः ।।

तत्रागत्यागतो वीरश्चाग्रसत्सहसा बली ।।2.2.37.२०।।

चक्रं ग्रसितमालोक्य विष्णुः परपुरंजयः ।।

मुखं तस्य परामृज्य तमुद्गालितवानरिम्।।। ।।२१।।

स्वचक्रमादाय महानुभावश्चुकोप चातीव भवैकभर्त्ता ।।

महाबली तैर्युयुधे प्रवीरैस्सक्रुद्धनानायुधधारकोस्त्रैः ।। २२ ।।

चक्रे महारणं विष्णुस्तैस्सार्द्धं युयुधे मुदा ।।

नानायुधानि संक्षिप्य तुमुलं भीमविक्रमम् ।। २३ ।।

अथ ते भैरवाद्याश्च युयुधुस्तेन भूरिशः ।।

नानास्त्राणि विमुंचंतस्संक्रुद्धाः परमोजसा ।। २४ ।।

इत्थं तेषां रणं दृष्ट्वा हरिणातुलतेजसा ।।

विनिवृत्य समागम्य तान्स्वयं युयुधे बली ।। २५ ।।

अथ विष्णुर्महातेजाश्चक्रमुद्यम्य मूर्च्छितः ।।

युयुधे भगवांस्तेन वीरभद्रेण माधवः ।। २६ ।।

तयोः समभवद्युद्धं सुघोरं रोमहर्षणम् ।।

महावीराधिपत्योस्तु नानास्त्रधरयोर्मुने ।।२७।।

विष्णोर्योगबलात्तस्य देवदेव सुदारुणाः।।

शङ्खचक्रगदाहस्ता असंख्याताश्च जज्ञिरे ।। २८ ।।

ते चापि युयुधुस्तेन वीरभद्रेण भाषता ।।

विष्णुवत् बलवंतो हि नानायुधधरा गणाः ।।२९।।

तान्सर्वानपि वीरोसौ नारायणसमप्रभान् ।।

भस्मीचकार शूलेन हत्वा स्मृत्वा शिवं प्रभुम् ।।2.2.37.३०।।

ततश्चोरसि तं विष्णुं लीलयैव रणाजिरे ।।

जघान वीरभद्रो हि त्रिशूलेन महाबली ।। ३१ ।।

तेन घातेन सहसा विहतः पुरुषोत्तमः ।।

पपात च तदा भूमौ विसंज्ञोभून्मुने हरिः ।। ३२ ।।

ततो यज्ञोद्भुतं तेजः प्रलयानलसन्निभम् ।।

त्रैलोक्यदाहकं तीव्रं वीराणामपि भीकरम् ।। ३३ ।।

क्रोधरक्तेक्षणः श्रीमान् पुनरुत्थाय स प्रभुः ।।

प्रहर्तुं चक्रमुद्यम्य ह्यतिष्ठत्पुरुषर्षभः ।। ३४ ।।

तस्य चक्रं महारौद्रं काला दित्यसमप्रभम् ।।

व्यष्टंभयददीनात्मा वीरभद्रश्शिवः प्रभुः ।। ३५ ।।

मुने शंभोः प्रभावात्तु मायेशस्य महाप्रभोः ।।

न चचाल हरेश्चक्रं करस्थं स्तंभितं ध्रुवम् ।। ३६ ।।

अथ विष्णुर्गणेशेन वीरभद्रेण भाषता ।।

अतिष्ठत्स्तंभितस्तेन शृंगवानिव निश्चलः ।। ३७ ।।

ततो विष्णुः स्तंभितो हि वीरभद्रेण नारद ।।

यज्वोपमंत्रणमना नीरस्तंभनकारकम् ।।३८।।

ततस्स्तंभननिर्मुक्तः शार्ङ्गधन्वा रमेश्वरः ।।

शार्ङ्गं जग्राह स क्रुद्धः स्वधनुस्सशरं मुने ।। ३९ ।।

त्रिभिश्च धर्षितो बाणैस्तेन शार्ङ्गं धनुर्हरेः ।।

वीरभद्रेण तत्तात त्रिधाभूत्तत्क्षणान्मुने ।। 2.2.37.४० ।।

अथ विष्णुर्मया वाण्या बोधितस्तं महागणम् ।।

असह्यवर्चसं ज्ञात्वा ह्यंतर्धातुं मनो दधे।। ।। ४१ ।।
ज्ञात्वा च तत्सर्वमिदं भविष्यं सतीकृतं दुष्प्रसहं परेषाम् ।।
गताः स्वलोकं स्वगणान्वितास्तु स्मृत्वा शिवं सर्वपतिं स्वतंत्रम् ।। ४२ ।।
सत्यलोकगतश्चाहं पुत्र शोकेन पीडितः ।।
अचिंतयं सुदुःखार्तो मया किं कार्यमद्य वै ।।४३।।
विष्णौ मयि गते चैव देवाश्च मुनिभिस्सह ।।
विनिर्जिता गणैस्सर्वे ये ते यज्ञोपजीविनः ।। ४४ ।।
समुपद्रवमालक्ष्य विध्वस्तं च महामखम् ।।
मृगस्वरूपो यज्ञो हि महाभीतोऽपि दुद्रुवे।।४५।।
तं तदा मृगरूपेण धावंतं गगनं प्रति।।
वीरभद्रस्समादाय विशिरस्कमथाकरोत्।।४६।।
ततः प्रजापतिं धर्मं कश्यपं च प्रगृह्य सः ।।
अरिष्टनेमिनं वीरो बहुपत्रमुनीश्वरम् ।।४७।।
मुनिमांगिरसं चैव कृशाश्वं च महागणः ।।
जघान मूर्ध्नि पादेन दत्तं च मुनिपुंगवम् ।। ४८ ।।
सरस्वत्याश्च नासाग्रं देवमास्तु तथैव च ।।
चिच्छेद करजाग्रेण वीर भद्रः प्रतापवान् ।। ४९ ।।
ततोन्यानपि देवादीन् विदार्य पृथिवीतले ।।
पातयामास सोयं वै क्रोधाक्रांतातिलोचनः ।। 2.2.37.५० ।।
वीरभद्रो विदार्य्यापि देवान्मुख्यान्मुनीनपि ।।
नाभूच्छांतो द्रुतक्रोधः फणिराडिव मंडितः ।।५१।।
वीरभद्रोद्धतारातिः केसरीव वनद्विपान् ।।
दिशो विलोकयामास कः कुत्रास्तीत्यनुक्षणम् ।।५२।।
व्यपोथयद्भृगुं यावन्मणिभद्रः प्रतापवान् ।।
पदाक्रम्योरसि तदाऽकार्षीत्तच्छमश्रुलुंचनम् ।।५३।।
चंडश्चोत्पाटयामास पूष्णो दंतान् प्रवेगतः ।।
शप्यमाने हरे पूर्वं योऽहसद्दर्शयन्दतः ।।५४।।
नन्दी भगस्य नेत्रे हि पातितस्य रुषा भुवि ।।

उज्जहार स दक्षोक्ष्णा यश्शपंतमसूसुचत् ।। ५५ ।।
विडंबिता स्वधा तत्र सा स्वाहा दक्षिणा तथा।।
मंत्रास्तंत्रास्तथा चान्ये तत्रस्था गणनायकैः।।५६।।
ववृषुस्ते पुरीषाणि वितानाऽग्नौ रुषा गणाः।।
अनिर्वाच्यं तदा चक्रुर्गणा वीरास्तमध्वरम् ।।५७।।
अंतर्वेद्यंतरगतं निलीनं तद्भयाद्बलात् ।।
आनिनाय समाज्ञाय वीरभद्रेः स्वभूश्चुतम्५८।।
कपोलेऽस्य गृहीत्वा तु खड्गेनोपहृतं शिरः ।।
अभेद्यमभवत्तस्य तच्च योगप्रभावतः ।। ५९ ।।
अभेद्यं तच्छिरो मत्वा शस्त्रास्त्रैश्च तु सर्वशः ।।
करेण त्रोटयामास पद्भ्यामाक्रम्य चोरसि ।। 2.2.37.६० ।।
तच्छिरस्तस्य दुष्टस्य दक्षस्य हरवैरिणः ।।
अग्निकुंडे प्रचिक्षेप वीरभद्रो गणाग्रणीः ।। ६१ ।।
रेजे तदा वीरभद्रस्त्रिशूलं भ्रामयन्करे ।।
क्रुद्धा रणाक्षसंवर्ताः प्रज्वाल्य पर्वतोपमाः (?) ।। ।। ६२ ।।
अनायासेन हत्वैतान् वीरभद्रस्ततोऽग्निना ।।
ज्वालयामास सक्रोधो दीप्ताग्निश्शलभानिव ।। ६३ ।।
वीरभद्रस्ततो दग्धान्दृष्ट्वा दक्षपुरोगमान् ।।
अट्टाट्टहासमकरोत्पूरयंश्च जगत्त्रयम् ।।६४।।
वीरश्रिया वृतस्तत्र ततो नन्दनसंभवा ।।
पुष्पवृष्टिरभूद्दिव्या वीरभद्रे गणान्विते ।। ६५ ।।
ववुर्गंधवहाश्शीतास्सुगन्धास्सुखदाः शनैः ।।
देवदुंदुभयो नेदुस्सममेव ततः परम् ।। ६६ ।।
कैलासं स ययौ वीरः कृतकार्य्यस्ततः परम् ।।
विनाशितदृढध्वांतो भानुमानिव सत्वरम् ।।६७।।
कृतकार्यं वीरभद्रं दृष्ट्वा संतुष्टमा नसः ।।

शंभुर्वीरगणाध्यक्षं चकार परमेश्वरः।।६८।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसहितायां द्वितीये सतीखंडे यज्ञविध्वं सवर्णनो नाम सप्तत्रिंशोऽध्यायः ।। ३७ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः ३८

https://sa.wikisource.org/s/vwg

< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः २ (सतीखण्डः)

।। सूत उवाच ।। ।।

इत्याकर्ण्य वचस्तस्य विधेरमितधीमतः ।।

पप्रच्छ नारदः प्रीत्या विस्मितस्तं द्विजोत्तमः ।। १ ।।

।। नारद उवाच ।। ।।

शिवं विहाय दक्षस्य सुरैर्यज्ञं हरिर्गतः ।।

हेतुना केन तद् ब्रूहि यत्रावज्ञाऽ भवत्ततः ।।२।।

जानाति किं स शंभुं नो हरिः प्रलयविक्रमम् ।।

रणं कथं च कृतवान् तद्गणैरबुधो यथा ।। ३ ।।

एष मे संशयो भूयांस्तं छिंधि करुणानिधे ।।

चरितं ब्रूहि शंभोस्तु चित्तोत्साहकरं प्रभो ।। ४ ।।

ब्रह्मोवाच ।।

द्विजवर्य शृणु प्रीत्या चरितं शशिमौलिनः ।।

यत्पृच्छते कुर्वतश्च सर्वसंशयहारकम् ।। ५ ।।

दधीचस्य मुनेः शापाद्भ्रष्टज्ञानो हरिः पुरा ।।

सामरो दक्षयज्ञं वै गतः क्षुवसहायकृत् ।। ६ ।।

।। नारद उवाच ।।

किमर्थं शप्तवान्विष्णुं दधीचो मुनिसत्तमः ।।

कोपाकारः कृतस्तस्य हरिणा तत्सहायिना ।। ७ ।।

ब्रह्मोवाच ।।

समुत्पन्नो महातेजा राजा क्षुव इति स्मृतः।।

अभून्मित्रं दधीचस्य मुनीन्द्रस्य महाप्रभोः ।। ८ ।।

चिरात्तपःप्रसंगाद्वै वादः क्षुवदधीचयोः।।

महानर्थकरः ख्यातस्त्रिलोकेष्वभवत्पुरा।।९।।

तत्र त्रिवर्णतः श्रेष्ठो विप्र एव न संशयः ।।

इति प्राह दधीचो हि शिवभक्तस्तु वेदवित् ।।2.2.38.१०।।

तच्छ्रुत्वा वचनं तस्य दधीचस्य महामुने।।

क्षुवः प्राहेति नृपतिः श्रीमदेन विमोहितः ।।११।।

क्षुव उवाच ।।

अष्टानां लोकपालानां वपुर्धारयते नृपः ।।

तस्मान्नृपो वरिष्ठो हि वर्णाश्रमपतिः प्रभुः ।।१२।।

सर्वदेवमयो- राजा श्रुति प्राहेति तत्परा।।

महती देवता या सा सोहमेव ततो मुने ।।१३।।

तस्माद्विप्राद्वरो राजा च्यवनेय विचार्यताम्।।

नावमंतव्य एवातः पूज्योऽहं सर्वथा त्वया ।। १४ ।।

ब्रह्मोवाच ।।

श्रुत्वा तथा मतं तस्य क्षुवस्य मुनिसत्तमः ।।

श्रुतिस्मृतिविरुद्धं तं चुकोपातीव भार्गवः।।१५।।

अथ क्रुद्धो महातेजा गौरवाच्चात्मनो मुने ।।

अताडयत्क्षुवं मूर्ध्नि दधीचो वाममुष्टितः ।।१६।।

वज्रेण तं च चिच्छेद दधीचं ताडितः क्षुवः।।

जगर्जातीव संक्रुद्धो ब्रह्मांडाधिपतिः कुधीः ।।१७।।

पपात भूमौ निहतो तेन वज्रेण भार्गवः।।

शुक्रं सस्मार क्षुवकृद्भार्गवस्य कुलंधरः।।१८।।

शुक्रोथ संधयामास ताडितं च क्षुवेन तु।।

योगी दधीचस्य तदा देहमागत्य सद्रुतम्।।१९।।

संधाय पूर्ववद्देहं दधीचस्याह भार्गवः ।।

शिवभक्ताग्रणीर्भृत्यं जयविद्याप्रवर्तकः ।। 2.2.38.२० ।।

शुक्र उवाच ।।

दधीच तात संपूज्य शिवं सर्वेश्वरं प्रभुम् ।।

महामृत्युंजयं मंत्रं श्रौतमग्र्यं वदामि ते ।। २१ ।।

त्र्यम्बकं यजामहे त्रैलोक्यं पितरं प्रभुम् ।।

त्रिमंडलस्य पितरं त्रिगुणस्य महेश्वरम् ।।२२।।

त्रितत्त्वस्य त्रिवह्नेश्च त्रिधाभूतस्य सर्वतः ।।
त्रिदिवस्य त्रिबाहोश्च त्रिधाभूतस्य सर्वतः।। ।।२३।।
त्रिदेवस्य महादेवस्सुगंधि पुष्टिवर्द्धनम्।।
सर्वभूतेषु सर्वत्र त्रिगुणेषु कृतौ यथा।।२४।।
इन्द्रियेषु तथान्येषु देवेषु च गणेषु च।।
पुष्पे सुगंधिवत्सूरस्सुगंधिममरेश्वरः ।। २५ ।।
पुष्टिश्च प्रकृतेर्यस्मात्पुरुषाद्वै द्विजोत्तम ।।
महदादिविशेषांतविकल्पश्चापि सुव्रत।। ।।२६।।
विष्णोः पितामहस्यापि मुनीनां च महामुने ।।
इन्द्रियस्य च देवानां तस्माद्वै पुष्टिवर्द्धनः ।।२७।।
तं देवममृतं रुद्रं कर्मणा तपसापि वा ।।
स्वाध्यायेन च योगेन ध्यानेन च प्रजापते ।।२८।।
सत्येनान्येन सूक्ष्माग्रान्मृत्युपाशाद्भवः स्वयम् ।।
वंधमोक्षकरो यस्मादुर्वारुकमिव प्रभुः ।। २९ ।।
मृतसंजीवनीमन्त्रो मम सर्वोत्तमः स्मृतः ।।
एवं जपपरः प्रीत्या नियमेन शिवं स्मरन्।।2.2.38.३०।।
जप्त्वा हुत्वाभिमंत्र्यैव जलं पिब दिवानिशम्।।
शिवस्य सन्निधौ ध्यात्वा नास्ति मृत्युभयं क्वचित् ।।३१।।
कृत्वा न्यासादिकं सर्वं संपूज्य विधिवच्छिवम्।।
संविधायेदं निर्व्यग्रश्शंकरं भक्तवत्सलम् ।।३२।।
ध्यानमस्य प्रवक्ष्यामि यथा ध्यात्वा जपन्मनुम् ।।
सिद्ध मन्त्रो भवेद्धीमान् यावच्छंभुप्रभावतः ।।३३।।
हस्तांभोजयुगस्थकुंभयुगलादुद्धृत्यतोयं शिरस्सिंचंतं करयोर्युगेन दधतं स्वांकेभकुंभौ करौ ।।
अक्षस्रङ्मृगहस्तमंबुजगतं मूर्द्धस्थचन्द्रस्रवत्पीयूषार्द्रतनुं भजे सगिरिजं त्र्यक्षं च मृत्युंजयम् ।। ३४ ।।
ब्रह्मोवाच ।।
उपदिश्येति शुक्रः स्वं दधीचिं मुनिसत्तमम् ।।
स्वस्थानमगमत्तात संस्मरञ् शंकरं प्रभुम् ।।३५।।
तस्य तद्वचनं श्रुत्वा दधीचो हि महामुनिः ।।

वनं जगाम तपसे महाप्रीत्या शिवं स्मरन् ।।३६।।

तत्र गत्वा विधानेन महामृत्युंजयाभिधम् ।।

तं मनुं प्रजपन् प्रीत्या तपस्तेपे शिवं स्मरन् ।। ३७ ।।

तन्मनुं सुचिरं जप्त्वा तपसाराध्य शंकरम् ।।

शिवं संतोषयामास महामृत्युंजयं हि सः ।।३८।।

अथ शंभुः प्रसन्नात्मा तज्जपाद्भक्तवत्सलः।।

आविर्बभूव पुरतस्तस्य प्रीत्या महामुने।।३९।।

तं दृष्ट्वा स्वप्रभुं शंभुं स मुमोद मुनीश्वरः।।

प्रणम्य विधिवद्भक्त्या तुष्टाव सुकृतांजलिः ।।2.2.38.४०।।

अथ प्रीत्या शिवस्तात प्रसन्नश्च्यावनिं मुने ।।

वरं ब्रूहीति स प्राह सुप्रसन्नेन चेतसा ।। ४१ ।।

तच्छ्रुत्वा शंभुवचनं दधीचो भक्तसत्तमः ।।

सांजलिर्नतकः प्राह शंकरं भक्तवत्सलम् ।। ४२ ।।

दधीच उवाच।। ।।

देवदेव महादेव मह्यं देहि वरत्रयम् ।।

वज्रास्थित्वादवध्यत्वमदीनत्वं हि सर्वतः ।। ४३ ।।

ब्रह्मोवाच ।।

तदुक्तवचनं श्रुत्वा प्रसन्नः परमेश्वरः ।।

वरत्रयं ददौ तस्मै दधीचाय तथास्त्विति ।। ४४ ।।

वरत्रयं शिवात्प्राप्य सानंदश्च महामुनिः ।।

क्षुवस्थानं जगामाशु वेदमार्गे प्रतिष्ठितः ।।४५।।

ब्रह्मोवाच ।।

प्राप्यावध्यत्वमुग्रात्स वज्रास्थित्वमदीनताम् ।।

अताडयच्च राजेन्द्रं पादमूलेन मूर्द्धनि ।। ४६ ।।

क्षुवो दधीचं वज्रेण जघानोरस्यथो नृपः ।।

क्रोधं कृत्वा विशेषेण विष्णुगौरवगर्वितः ।।४७।।

नाभून्नाशाय तद्वज्रं दधीचस्य महात्मनः।।

प्रभावात्परमेशस्य धातृपुत्रो विसिस्मिये।।४८।।

दृष्ट्वाप्यवध्यत्वमदीनतां च वज्रस्य चात्यंतपरप्रभावम्।।

क्षुवो दधीचस्य मुनीश्वरस्य विसिस्मिये चेतसि धातृपुत्रः ।। ४९ ।।

आराधयामास हरिं मुकुन्दमिन्द्रानुजं काननमाशु गत्वा ।।

प्रपन्नपालश्च पराजितो हि दधीचमृत्युंजयसेवकेन ।।2.2.38.५०।।

पूजया तस्य सन्तुष्टो भगवान् मधुसूदनः ।।

प्रददौ दर्शनं तस्मै दिव्यं वै गरुडध्वजः ।। ५१ ।।

दिव्येन दर्शनेनैव दृष्ट्वा देवं जनार्दनम् ।।

तुष्टाव वाग्भिरिष्टाभिः प्रणम्य गरुडध्वजम् ।।५२।।

सम्पूज्य चैवं त्रिदशेश्वराद्यैः स्तुतं देवमजेयमीशम् ।।

विज्ञापयामास निरीक्ष्य भक्त्या जनार्दनाय प्रणिपत्य मूर्ध्ना ।। ५३ ।।

राजोवाच।। ।।

भगवन् ब्राह्मणः कश्चिद्दधीच इति विश्रुतः ।।

धर्मवेत्ता विनीतात्मा सखा मम पुराभवत् ।। ५४ ।।

अवध्यस्सर्वदा सर्वैश्शंकरस्य प्रभावतः ।।

तमाराध्य महादेवं मृत्युंजयमनामयम् ।। ५५ ।।

सावज्ञं वामपादेन मम मूर्ध्नि सदस्यपि ।।

ताडयामास वेगेन स दधीचो महातपाः ।। ५६ ।।

उवाच तं च गर्वेण न बिभेमीति सर्वतः ।।

मृत्युंजयाप्त सुवरो गर्वितो ह्यतुलं हरिः ।। ५७ ।।

।। ब्रह्मोवाच ।।

अथ ज्ञात्वा दधीचस्य ह्यवध्यत्वं महात्मनः ।।

सस्मारास्य महेशस्य प्रभावमतुलं हरिः ।। ५८ ।।

एवं स्मृत्वा हरिः प्राह क्षुवं विधिसुतं द्रुतम् ।।

विप्राणां नास्ति राजेन्द्र भयमण्वपि कुत्रचित् ।। ५९ ।।

विशेषाद्रुद्रभक्तानां भयं नास्ति च भूपते ।।

दुःखं करोति विप्रस्य शापार्थं ससुरस्य मे ।।2.2.38.६०।।

भविता तस्य शापेन दक्षयज्ञे सुरेश्वरात् ।।

विनाशो मम राजेन्द्र पुनरुत्थानमेव च ।। ६१ ।।

तस्मात्समेत्य राजेन्द्र सर्वयज्ञो न भूयते ।।
करोमि यत्नं राजेन्द्र दधीचविजयाय ते ।। ६२ ।।
श्रुत्वा वाक्यं क्षुवः प्राह तथास्त्विवति हरेर्नृपः ।।
तस्थौ तत्रैव तत्प्रीत्या तत्कामोत्सुकमानसः ।। ६३ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीयसतीखंडे क्षुवदधीचवादवर्णनं नामाष्टत्रिंशोऽध्यायः ।। ३८ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः ३९

https://sa.wikisource.org/s/vwh



ब्रह्मोवाच ।।

क्षुवस्य हितकृत्येन दधीचस्याश्रमं ययौ।।

विप्ररूपमथास्थाय भगवान् भक्तवत्सलः १।।

दधीचं प्राह विप्रर्षिमभिवंद्य जगद्गुरुः।।

क्षुवकार्य्यार्थमुद्युक्तश्शैवेन्द्रं छलमाश्रितः ।।२।।

विष्णुरुवाच ।।

भो भो दधीच विप्रर्षे भवार्चनरताव्यय ।।

वरमेकं वृणे त्वत्तस्तद्भवान् दातुमर्हति ।। ३ ।।

ब्रह्मोवाच ।।

याचितो देवदेवेन दधीचश्शैवसत्तमः ।।

क्षुवकार्यार्थिना शीघ्रं जगाद वचनं हरिम् ।। ४ ।।

दधीच उवाच ।।

ज्ञातं तवेप्सितं विप्र क्षुवकार्यार्थमागतः ।।

भगवान् विप्ररूपेण मायी त्वमसि वै हरिः।।५।।

भूतं भविष्यं देवेश वर्तमानं जनार्दन ।।

ज्ञानं प्रसादाद्रुद्रस्य सदा त्रैकालिकं मम ।।६।।

त्वां जानेहं हरिं विष्णुं द्विजत्वं त्यज सुव्रत ।।

आराधितोऽसि भूपेन क्षुवेण खलबुद्धिना ।। ७ ।।

जाने तवैव भगवन् भक्तवत्सलतां हरे ।।

छलं त्यज स्वरूपं हि स्वीकुरु स्मर शंकरम् ।।८।।

अस्ति चेत्कस्यचिद्भीतिर्भवार्चनरतस्य मे ।।

वक्तुमर्हसि यत्नेन सत्यधारणपूर्वकम् ।। ९ ।।

वदामि न मृषा क्वापि शिवस्मरणसक्तधीः ।।

न बिभेमि जगत्यस्मिन्देवदैत्यादिकादपि ।। 2.2.39.१० ।।

विष्णुरुवाच ।। ।।

भयं दधीच सर्वत्र नष्टं च तव सुव्रत ।।

भवार्चनरतो यस्माद्भवान्सर्वज्ञ एव च ।। ११ ।।

बिभेमीति सकृद्वक्तुमर्हसि त्वं नमस्तव ।।

नियोगान्मम राजेन्द्र क्षुवात् प्रतिसहस्य च ।। १२।।

ब्रह्मोवाच ।।

एवं श्रुत्वापि तद्वाक्यं विष्णोस्स तु महामुनिः ।।

विहस्य निर्भयः प्राह दधीचश्शैवसत्तमः ।। १३ ।।

दधीच उवाच ।।।

न बिभेमि सदा क्वापि कुतश्चिदपि किंचन ।।

प्रभावाद्देवदेवस्य शंभोस्साक्षात्पिनाकिनः ।। १४ ।।

ब्रह्मोवाच ।।

ततस्तस्य मुनेः श्रुत्वा वचनं कुपितो हरिः ।।

चक्रमुद्यम्य संतस्थौ दिधक्षुमुनिसत्तमम् ।। १५ ।।

अभवत्कुंठितं तत्र विप्रे चक्रं सुदारुणम् ।।

प्रभावाच्च तदीशस्य नृपतेस्संनिधावपि ।। १६।।

दृष्ट्वा तं कुंठितास्यं तच्चक्रं विष्णुं जगाद ह ।।

दधीचस्सस्मितं साक्षात्सदसद्व्यक्ति कारणम् ।। १७ ।।

दधीच उवाच ।। ।।

भगवन् भवता लब्धं पुरातीव सुदारुणम् ।।

सुदर्शनमिति ख्यातं चक्रं विष्णोः प्रयत्नतः ।।

भवस्य तच्छुभं चक्रं न जिघांसति मामिह ।। १८ ।।

भगवानथ क्रुद्धोऽस्मै सर्वास्त्राणि क्रमाद्धरिः ।।

ब्रह्मास्त्राद्यैः शरैश्चास्त्रैः प्रयत्नं कर्तुमर्हसि ।। १९ ।।

ब्रह्मोवाच ।।

स तस्य वचनं श्रुत्वा दृष्ट्वा न्िर्वीर्य्यमानुषम् ।।

ससर्जाथ क्रुधा तस्मै सर्वास्त्राणि क्रमाद्धरिः ।। 2.2.39.२० ।।

चक्रुर्देवास्ततस्तस्य विष्णोस्साहाय्यमादरात् ।।

द्विजेनैकेन संयोद्धुं प्रसृतस्य विबुद्धयः ।।२१।।
चिक्षिपुः स्वानि स्वान्याशु शस्त्राण्यस्त्राणि सर्वतः ।।
दधीचोपरि वेगेन शक्राद्या हरिपाक्षिकाः ।। २२ ।।
कुशमुष्टिमथादाय दधीचस्संस्मरन् शिवम् ।।
ससर्ज सर्वदेवेभ्यो वज्रास्थि सर्वतो वशी ।। २३ ।।
शंकरस्य प्रभावात्तु कुशमुष्टिर्मुनेर्हि सा ।।
दिव्यं त्रिशूलमभवत् कालाग्निसदृशं मुने ।। २४ ।।
दग्धुं देवान् मतिं चक्रे सायुधं सशिखं च तत् ।।
प्रज्वलत्सर्वतश्शैवं युगांताग्न्यधिकप्रभम् ।। २५ ।।
नारायणेन्दुमुख्यैस्तु देवैः क्षिप्तानि यानि च ।।
आयुधानि समस्तानि प्रणेमुस्त्रिशिखं च तत् ।। २६ ।
देवाश्च दुद्रुवुस्सर्वे ध्वस्तवीर्या दिवौकसः ।।
तस्थौ तत्र हरिर्भीतः केवलं मायिनां वरः ।। २७ ।।
ससर्ज भगवान् विष्णुः स्वदेहात्पुरुषोत्तमः ।।
आत्मनस्सदृशान् दिव्यान् लक्षलक्षायुतान् गणान् ।। २८ ।।
ते चापि युयुधुस्तत्र वीरा विष्णुगणास्ततः ।।
मुनिनैकेन देवर्षे दधीचेन शिवात्मना ।। २९ ।।
ततो विष्णुगणान् तान्वै नियुध्य बहुशो रणे ।।
ददाह सहसा सर्वान् दधी चश्शैव सत्तमः ।। 2.2.39.३० ।।
ततस्तद्विस्मयाथाय दधीचेस्य मुनेर्हरिः ।।
विश्वमूर्तिरभूच्छीघ्रं महामायाविशारदः ।। ३१ ।।
तस्य देहे हरेः साक्षादपश्यद्द्विजसत्तमः ।।
दधीचो देवतादीनां जीवानां च सहस्रकम् ।। ३२ ।।
भूतानां कोटयश्चैव गणानां कोटयस्तथा ।।
अंडानां कोटयश्चैव विश्वमूतस्तनौ तदा ।।३३।।
दृष्ट्वैतदखिलं तत्र च्यावनिस्सततं तदा ।।
विष्णुमाह जगन्नाथं जगत्स्तु वमजं विभुम् ।। ३४ ।।
दधीच उवाच ।।

मायां त्यज महाबाहो प्रतिभासो विचारतः ।।
विज्ञातानि सहस्राणि दुर्विज्ञेयानि माधव ।। ३५ ।।
मयि पश्य जगत्सर्वं त्वया युक्तमतंद्रितः ।।
ब्रह्माणं च तथा रुद्रं दिव्यां दृष्टिं ददामि ते ।। ३६ ।।
।। ब्रह्मोवाच ।।
इत्युक्त्वा दर्शयामास स्वतनौ निखिलं मुनिः ।।
ब्रह्मांडं च्यावनिश्शंभुतेजसा पूर्णदेहकः ।। ३७ ।।
ददाह विष्णुं देवेशं दधीचश्शैवसत्तमः ।।
संस्मरञ् शंकरं चित्ते विहसन् विभयस्सुधीः ।।३८।।
दधीच उवाच ।।
मायया त्वनया किं वा मंत्रशक्त्याथ वा हरे ।।
सत्कामायामिमां तस्माद्योद्धुमर्हसि यत्नतः ।।३९।।
ब्रह्मोवाच ।।
एतच्छ्रुत्वा मुनेस्तस्य वचनं निर्भयस्तदा।।
शंभुतेजोमयं विष्णुश्चुकोपातीव तं मुनिम् ।। 2.2.39.४० ।।
देवाश्च दुद्रुवुर्भूयो देवं नारायणं च तम् ।।
योद्धुकामाश्च मुनिना दधीचेन प्रतापिना ।। ४१ ।।
एतस्मिन्नंतरे तत्रागमन्मत्संगतः क्षुवः ।।
अवारयंतं निश्चेष्टं पद्मयोनिं हरिं सुरान् ।। ४२ ।।
निशम्य वचनं मे हि ब्राह्मणो न विनिर्जितः ।।
जगाम निकटं तस्य प्रणनाम मुनिं हरिः ।। ४३ ।।
क्षुवो दीनतरो भूत्वा गत्वा तत्र मुनीश्वरम् ।।
दधीचमभिवाद्यैव प्रार्थयामास विक्लवः ।। ४४ ।।
क्षुव उवाच ।।
प्रसीद मुनिशार्दूल शिवभक्तशिरोमणे ।।
प्रसीद परमेशान दुर्लक्ष्ये दुर्जनैस्सह ।। ४५ ।।
ब्रह्मोवाच।।
इत्याकर्ण्य वचस्तस्य राज्ञस्सुरगणस्य हि ।।

अनुजग्राह तं विप्रो दधीचस्तपसां निधिः ।।४६।।

अथ दृष्ट्वा रमेशादीन् क्रोधविह्वलितो मुनिः ।।

हृदि स्मृत्वा शिवं विष्णुं शशाप च सुरानपि ।।४७।।

दधीच उवाच ।।

रुद्रकोपाग्निना देवास्सदेवेंद्रा मुनीश्वराः ।।

ध्वस्ता भवंतु देवेन विष्णुना च समं गणैः ।। ४८ ।।

।। ब्रह्मोवाच ।। ।।

एवं शस्वा सुरान् प्रेक्ष्य क्षुवमाह ततो मुनिः ।।

देवैश्च पूज्यो राजेन्द्र नृपैश्चैव द्विजोत्तमः ।। ४९ ।।

ब्राह्मणा एव राजेन्द्र बलिनः प्रभविष्णवः ।।

इत्युक्त्वा स स्फुट विप्रः प्रविवेश निजाश्रमम् ।। 2.2.39.५० ।।

दधीचमभिवंद्यैव क्षुवो निजगृहं गतः ।।

विष्णुर्जगाम स्वं लोकं सुरैस्सह यथागतम् ।। ५१ ।।

तदेवं तीर्थमभवत् स्थानेश्वर इति स्मृतम् ।।

स्थानेश्वरमनुप्राप्य शिवसायुज्यमाप्नुयात् ।। ५२ ।।

कथितस्तव संक्षेपाद्वादः क्षुवदधीचयोः ।।

नृपाप्तशापयोस्तात ब्रह्मविष्ण्वोः शिवं विना ।। ५३ ।।

य इदं कीत्तयेन्नित्यं वादं क्षुवदधीचयोः ।।

जित्वापमृत्युं देहान्ते ब्रह्मलोकं प्रयाति सः ।। ।। ५४ ।।

रणे यः कीर्तयित्वेदं प्रविशेत्तस्य सर्वदा ।।

मृत्युभीतिर्भवेन्नैव विजयी च भविष्यति ।। ५५ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखण्डे विष्णुदधीचयुद्धवर्णनो नाम नवत्रिंशोऽध्यायः ।। ३९ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः ४०



।। नारद उचाच ।।

विधे विधे महाप्राज्ञा शैवतत्त्वप्रदर्शक ।।

श्राविता रमणीप्राया शिवलीला महाद्भुता ।। १ ।।

वीरेण वीरभद्रेण दक्षयज्ञं विनाश्य वै ।।

कैलासाद्रौ गते तात किमभूत्तद्वदाधुना ।। २ ।।

।। ब्रह्मोवाच ।।

अथ देवगणास्सर्वे मुनयश्च पराजिताः ।।

रुद्रानीकैर्विभिन्नांगा मम लोकं ययुस्तदा ।। ३ ।।

स्वयंभुवे नमस्कृत्य मह्यं संस्तूय भूरिशः ।।

तत्स्वक्लेशं विशेषेण कार्त्स्न्येनैव न्यवेदयन् ।। ४ ।।

तदाकर्ण्य ततोहं वै पुत्रशोकेन पीडितः ।।

अचिन्तयमतिव्यग्रो दूयमानेन चेतसा ।। ५ ।।

किं कार्य्यं कार्यमद्याशु मया देवसुखावहम् ।।

येन जीवतु दक्षासौ मखः पूर्णो भवेत्सुरः ।। ६ ।।

एवं विचार्य बहुधा नालभं शमहं मुने ।।

विष्णुं तदा स्मरन् भक्त्या ज्ञानमाप्तं तदोचितम् ।। ७ ।।

अथ देवैश्च मुनिभिर्विष्णोर्लोकमहं गतः ।।

नत्वा नुत्वा च विविधैस्स्तवैर्दुःखं न्यवेदयम् ।।८।।

यथाध्वरः प्रपूर्णः स्याद्वेव यज्ञकरश्च सः ।।

सुखिनस्स्युस्सुरास्सर्वे मुनयश्च तथा कुरु ।। ९ ।।

देव देव रमानाथ विष्णो देवसुखावह ।।

वयं त्वच्छरणं प्राप्तास्सदेवमुनयो ध्रुवम् ।। 2.2.40.१० ।।

।। ब्रह्मोवाच ।।

इत्याकर्ण्य वचो मे हि ब्रह्मणस्स रमेश्वरः ।।

प्रत्युवाच शिवं स्मृत्वा शिवात्मा दीनमानसः ।। ११ ।।

।। विष्णुरुवाच ।।

तेजीयसि न सा भूता कृतागसि बुभूषताम् ।।

तत्र क्षेमाय बहुधा बुभूषा हि कृतागसाम् ।। १२ ।।

कृतपापास्सुरा सर्वे शिवे हि परमेश्वरे ।।

परादुर्यज्ञभागं तस्य शंभोर्विधे यतः ।।१३ ।।

प्रसादयध्यं सर्वे हि यूयं शुद्धेन चेतसा ।।

अथापरप्रसादं तं गृहीतांघ्रियुगं शिवम् ।।१४।।

यस्मिन् प्रकुपिते देवे विनश्यत्यखिलं जगत् ।।

सलोकपालयज्ञस्य शासनाज्जीवितं द्रुतम् ।।१५।।

तमाशु देवं प्रियया विहीनं च दुरुक्तिभिः ।।

क्षमापयध्वं हृद्विद्धं दक्षेण सुदुरात्मना ।। १६ ।।

अयमेव महोपायस्तच्छांत्यै केवलं विधे ।।

शंभोस्संतुष्टये मन्ये सत्यमेवोदितं मया ।। १७ ।।

नाहं न त्वं सुराश्चान्ये मुनयोपि तनूभृतः ।।

यस्य तत्त्वं प्रमाणं च न विदुर्बलवीर्ययोः ।। १८ ।।

आत्मतंत्रस्य तस्यापि परस्य परमात्मनः ।।

क उपायं विधित्सेद्वै परं मूढं विरोधिनम् ।। १९ ।।

चलिष्येहमपि ब्रह्मन् सर्वैः सार्द्धं शिवालयम् ।।

क्षमापयामि गिरिशं कृतागाश्च शिवे धुवम् ।। 2.2.40.२० ।।

।। ब्रह्मोवाच ।।

इत्थमादिश्य विष्णुर्मां ब्रह्माणं सामरादिकम् ।।

सार्द्धं देवेर्मतिं चक्रे तद्गिरौ गमनाय सः ।। २१ ।।

ययौ स्वधिष्ण्य निलयं शिवस्याद्रिवरं शुभम् ।।

कैलासं सामरमुनिप्रजेशादिमयो हरिः ।।२२।।

अतिप्रियं प्रभोर्नित्यं सुजुष्टं किन्नरादिभिः ।।

नरेतरैरप्सरोभिर्योगसिद्धैमहोन्नतम् ।। २३ ।।

नानामणिमयैश्शृंगैः शोभमानं समंततः ।।

नानाधातुविचित्रं वै नानाद्रुमलताकुलम् ।। ।। २४ ।।
नानामृगगणाकीर्णं नानापक्षिसमन्वितम् ।।
नानाजलप्रस्रवणैरमरैस्सिद्धयोषिताम् ।। २५ ।।
रमणैवाहरंतीनां नानाकंदर सानुभिः ।।
द्रुमजातिभिरन्याभी राजितं राजतप्रभम् ।। २६ ।।
व्याघ्रादिभिर्महासत्त्वैर्निर्घुष्टं क्रूरतोज्झितम् ।।
सर्वशोभान्वितं दिव्यं महाविस्मयकारकम् ।। २७ ।।
पर्यस्तं गंगया सत्या स्थानपुण्यतरोदया ।।
सर्वपावनसंकर्त्र्या विष्णुपद्या सुनिर्मलम् ।।। ।। २८ ।।
एवंविधं गिरिं दृष्ट्वा कैलासाख्यं शिवप्रियम् ।।
ययुस्ते विस्मयं देवा विष्ण्वाद्यास्समुनीश्वराः ।। २९ ।।
तस्समीपेऽलकां रम्यां ददृशुर्नाम ते पुरीम् ।।
कुबेरस्य महादिव्यां रुद्रमित्रस्य निर्जराः ।।2.2.40.३०।।
वनं सौगंधिकं चापि ददृशुस्तत्समीपतः ।।
सर्वद्रुमान्वितं दिव्यं यत्र तन्नादमद्भुतम् ।।३१।।
तद्बाह्यतस्तस्य दिव्ये सरितावतिपावने ।।
नंदा चालकनंदा च दर्शनात्पापहारिके।। ।। ३२ ।।
पपुः सुरस्त्रियो नित्यमवगूह्य स्वलोकतः ।।
विगाह्य पुंभिस्तास्तत्र क्रीडंति रतिकर्शिताः ।।३३।।
हित्वा यक्षेश्वरपुरीं वनं सौगंधिकं च यत्।।
गच्छंतस्ते सुरा आराद्ददृशुश्शांकरं वटम् ।। ३४ ।।
पर्यक् कृताचलच्छायं पादोन विटपाय तम् ।।
शतयोजन कोत्सेधं निर्नीडं तापवर्ज्जितम् ।।३५।।
महापुण्यवतां दृश्यं सुरम्यं चातिपावनम् ।।
शंभुयोगस्थलं दिव्यं योगिसेव्यं महोत्तमम् ।।। ।। ३६ ।।
मुमुक्षुशरणे तस्मिन् महायोगमये वटे ।।
आसीनं ददृशुस्सर्वे शिवं विष्ण्वादयस्सुराः ।।३७।।
विधिपुत्रैर्महासिद्धैश्शिव भक्तिरतैस्सदा ।।

उपास्यमानं सुमुदा शांतैस्संशांतविग्रहैः ।।३८।।

तथा सख्या कुबेरेण भर्त्रा गुह्यकरक्षसाम् ।।

सेव्यमानं विशेषेण स्वगणैर्ज्ञातिभिस्सदा ।। ३९ ।।

तापसाभीष्टसद्रूपं बिभ्रतं परमेश्वरम् ।।

वात्सल्याद्विश्वसुहृदं भस्मादिसुविराजितम् ।। 2.2.40.४० ।।

मुने तुभ्यं प्रवोचंतं पृच्छते ज्ञानमुत्तमम् ।।

कुशासने सूपविष्टं सर्वेषां शृण्वतां सताम् ।। ४१ ।।

कृत्वोरौ दक्षिणे सव्यं चरणं चैव जानुनि ।।

बाहुप्रकोष्ठाक्षमालं स्थितं सत्तर्कमुद्रया ।।४२।।

एवंविधं शिवं दृष्ट्वा तदा विष्ण्वादयस्सुराः ।।

प्रणेमुस्त्वरितं सर्वे करौ बध्वा विनम्रकाः ।। ४३ ।।

उपलभ्यागतं रुद्रो मया विष्णुं सतां गतिः ।।

उत्थाय चक्रे शिरसाभिवंदनमपि प्रभुः ।। ४४ ।।

वंदितांघ्रिस्तदा सर्वैर्दिव्यैर्विष्ण्वादिभिश्शिवः ।।

ननामाथ यथा विष्णुं कश्यपं लोकसद्गतिः ।। ४५ ।।

सुरसिद्धगणाधीशमहर्षिसु नमस्कृतम्।।

समुवाच सुरैर्विष्णुं कृतसन्नतिमादरात् ।।४६।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे शिवदर्शनवर्णनं नाम चत्वारिंशोध्यायः ।। ४० ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः ४१



विष्ण्वादय ऊचुः ।।

देवदेव महादेव लौकिकाचारकृत्प्रभो ।।

ब्रह्म त्वामीश्वरं शंभुं जानीमः कृपया तव ।। १ ।।

किं मोहयसि नस्तात मायया परया तव ।।

दुर्ज्ञेयया सदा पुंसां मोहिन्या परमेश्वर ।। २ ।।।

प्रकृतः पुरुषस्यापि जगतो योनिबीजयोः ।।

परब्रह्म परस्त्वं च मनोवाचामगोचरः ।। ३ ।।

त्वमेव विश्वं सृजसि पास्यत्सि निजतंत्रतः ।।

स्वरूपां शिवशक्तिं हि क्रीडन्नूर्णपटो यथा ।। ४ ।।

त्वमेव क्रतुमीशान ससर्जिथ दयापरः ।।

दक्षेण सूत्रेण विभो सदा त्रय्यभिपत्तये ।। ५ ।।

त्वयैव लोकेवसितास्सेतवो यान् धृतव्रताः ।।

शुद्धान् श्रद्दधते विप्रा वेदमार्गविचक्षणाः ।।६।।

कर्तुस्त्वं मंगलानां हि स्वपरं तु मुखे विभो ।।

अमंगलानां च हितं मिश्रं वाथ विपर्ययम् ।।७।।

सर्वकर्मफलानां हि सदा दाता त्वमेव हि।।

सर्वे हि प्रोक्ता हि यशस्तत्पतिस्त्वं श्रुतिश्रुतः ।।८।।

पृथग्धियः कर्मदृशोऽरुंतुदाश्च दुराशयाः ।।

वितुदंति परान्मूढा दुरुक्तैर्मत्सरान्विताः ।।९।।

तेषां दैववधानां भो भूयात्त्वच्च वधो विभो ।।

भगवन्परमेशान कृपां कुरु परप्रभो ।।2.2.41.१०।।

नमो रुद्राय शांताय ब्रह्मणे परमात्मने।।

कपर्दिने महेशाय ज्योत्स्नाय महते नमः ।।११।।

त्वं हि विश्वसृजां स्रष्टा धाता त्वं प्रपितामहः।।

त्रिगुणात्मा निर्गुणश्च प्रकृतेः पुरुषात्परः ।। १२ ।।

नमस्ते नीलकंठाय वेधसे परमात्मने ।।

विश्वाय विश्वबीजाय जगदानंदहेतवे ।। १३ ।।

ओंकारस्त्वं वषट्कारस्सर्वारंभप्रवर्तकः ।।

हंतकास्स्वधाकारो हव्यकव्यान्नभुक् सदा ।।१४।।

कृतः कथं यज्ञभंगस्त्वया धर्मपरायण।

ब्रह्मण्यस्त्वं महादेव कथं यज्ञहनो विभो ।। १५ ।।

ब्राह्मणानां गवां चैव धर्मस्य प्रतिपालकः ।।

शरण्योसि सदानंत्यः सर्वेषां प्राणिनां प्रभो ।। १६ ।।

नमस्ते भगवन् रुद्र भास्करामिततेजसे ।।

नमो भवाय देवाय रसायांबुमयाय ते ।। ।। १७ ।।

शर्वाय क्षितिरूपाय सदा सुरभिणे नमः ।।

रुद्रायाग्निस्वरूपाय महातेजस्विने नमः ।। १८ ।।

ईशाय वायवे तुभ्यं संस्पर्शाय नमोनमः ।।

पशूनांपतये तुभ्यं यजमानाय वेधसे ।। १९ ।।

भीमाय व्योमरूपाय शब्दमात्राय ते नमः ।।

महादेवाय सोमाय प्रवृत्ताय नमोस्तु ते ।। 2.2.41.२० ।।

उग्राय सूर्यरूपाय नमस्ते कर्मयोगिने ।।

नमस्ते कालकालाय नमस्ते रुद्र मन्यवे ।। ।। २१ ।।

नमश्शिवाय भीमाय शंकराय शिवाय ते ।।

उग्रोसि सर्व भूतानां नियंता यच्छिवोसि नः ।। २२ ।।

मयस्कराय विश्वाय ब्रह्मणे ह्यार्तिनाशिने ।।

अम्बिकापतये तुभ्यमुमायाः पतये नमः ।। २३ ।।

शर्वाय सर्वरूपाय पुरुषाय परात्मने ।।

सदसद्व्यक्तिहीनाय महतः कारणाय ते ।।२४।।

जाताय बहुधा लोके प्रभूताय नमोनमः ।।

नीलाय नीलरुद्राय कद्रुद्राय प्रचेतसे ।। २५ ।।

मीढुष्टमाय देवाय शिपिविष्टाय ते नमः ।।

महीयसे नमस्तुभ्यं हंत्रे देवारिणां सदा ।। २६ ।।
ताराय च सुताराय तरुणाय सुतेजसे ।।
हरिकेशाय देवाय महेशाय नमोनमः ।। २७ ।।
देवानां शंभवे तुभ्यं विभवे परमात्मने ।।
परमाय नमस्तुभ्यं कालकंठाय ते नमः ।। २८ ।।
हिरण्याय परेशाय हिरण्यवपुषे नमः ।।
भीमाय भीमरूपाय भीमकर्मरताय च ।। २९ ।।
भस्मदिग्धशरीराय रुद्राक्षाभरणाय च ।।
नमो ह्रस्वाय दीर्घाय वामनाय नमोस्तु ते ।। 2.2.41.३० ।।
दूरेवधाय ते देवा ग्रेवधाय नमोनमः ।।
धन्विने शूलिने तुभ्यं गदिने हलिने नमः ।। ३१ ।।
नानायुधधरायैव दैत्यदानवनाशिने ।।
सद्याय सद्यरूपाय सद्योजाताय वै नमः ।। ३२ ।।
वामाय वामरूपाय वामनेत्राय ते नमः ।।
अघोराय परेशाय विकटाय नमोनमः ।। ३३ ।।
तत्पुरुषाय नाथाय पुराणपुरुषाय च ।।
पुरुषार्थप्रदानाय व्रतिने परमेष्ठिने ।। ३४ ।।
ईशानाय नमस्तुभ्यमीश्वराय नमो नमः ।।
ब्रह्मणे ब्रह्मरूपाय नमस्साक्षात्परात्मने ।। ३५ ।।
उग्रोसि सर्वदुष्टानां नियंतासि शिवोसि नः ।।
कालकूटाशिने तुभ्यं देवाद्यवन कारिणे ।। ३६ ।।
वीराय वीरभद्राय रक्षद्वीराय शूलिने ।।
महादेवाय महते पशूनां पतये नमः ।। ३७ ।।
वीरात्मने सुविद्याय श्रीकंठाय पिनाकिने ।।
नमोनंताय सूक्ष्माय नमस्ते मृत्युमन्यवे ।। ३८ ।।
पराय परमेशाय परात्परतराय ते ।।
परात्पराय विभवे नमस्ते विश्वमूर्तये ।।३९।।
नमो विष्णुकलत्राय विष्णुक्षेत्राय भानवे ।।

भैरवाय शरण्याय त्र्यंबकाय विहारिणे ।। 2.2.41.४० ।।
मृत्युंजयाय शोकाय त्रिगुणाय गुणात्मने ।।
चन्द्रसूर्याग्निनेत्राय सर्वकारणसेतवे ।। ४१ ।।
भवता हि जगत्सर्वं व्याप्तं स्वेनैव तेजसा ।।
परब्रह्म निर्विकारी चिदानंदःप्रकाशवान् ।। ४२ ।।
ब्रह्मविष्ण्विंद्रचन्द्रादिप्रमुखास्सकलास्सुराः ।।
मुनयश्चापरे त्वत्तस्संप्रसूता महेश्वर ।।४३।।
यतो बिभर्षि सकलं विभज्य तनुमष्टधा ।।
अष्टमूर्तिरितीशश्च त्वमाद्यः करुणामयः ।। ।। ४४ ।।
त्वद्भयाद्वाति वातोयं दहत्यग्निर्भयात्तव ।।
सूर्यस्तपति ते भीत्या मृत्युर्धावति सर्वतः ।। ४५ ।।
दयासिन्धो महेशान प्रसीद परमेश्वर ।।
रक्ष रक्ष सदैवास्मान् यस्मान्नष्टान् विचेतसः ।। ४६ ।।
रक्षिताः सततं नाथ त्वयैव करुणानिधे ।।
नानापद्भ्यो वयं शंभो तथैवाद्य प्रपाहि नः ।।४७।।
यज्ञस्योद्धरणं नाथ कुरु शीघ्रं प्रसादकृत्।।
असमाप्तस्य दुर्गेश दक्षस्य च प्रजापतेः।।४८।।
भगोक्षिणी प्रपद्येत यजमानश्च जीवतु ।।
पूष्णो दंताश्च रोहंतु भृगोः श्मश्रूणि पूर्ववत्।।४९।।
भवतानुग्रहीतानां देवादीनांश्च सर्वशः।।।।
आरोग्यं भग्नगात्राणां शंकर त्वायुधाश्मभिः ।। 2.2.41.५० ।।
पूर्णभागोस्तु ते नाथावशिष्टेऽध्वरकर्मणि ।।
रुद्रभागेन यज्ञस्ते कल्पितो नान्यथा क्वचित् ।। ५१ ।।
इत्युक्त्वा सप्रजेशश्च रमेशश्च कृतांजलिः ।।
दंडवत्पतितो भूमौ क्षमापयितुमुद्यतः।।५२।।
इति श्रीशिव महापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे देवस्तुतिवर्णनं नामैकचत्वारिंशोऽध्यायः।। ४१ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः ४२



।। ब्रह्मोवाच ।।

श्रीब्रह्मेशप्रजेशेन सदैव मुनिना च वै।।

अनुनीतश्शंभुरासीत्प्रसन्नः परमेश्वरः ।।१।।

आश्वास्य देवान् विष्ण्वादीन्विहस्य करुणानिधिः।

उवाच परमेशानः कुर्वन् परमनुग्रहम् ।।२।।

श्रीमहादेव उवाच ।।

शृणुतं सावधानेन मम वाक्यं सुरोत्तमौ ।।

यथार्थं वच्मि वां तात वां क्रोधं सर्वदासहम् ।। ३ ।।

नाघं तनौ तु बालानां वर्णमेवानुचिंतये ।।

मम मायाभिभूतानां दंडस्तत्र धृतो मया ।। ४ ।।

दक्षस्य यज्ञभंगोयं न कृतश्च मया क्वचित् ।।

परं द्वेष्टि परेषां यदात्मनस्तद्भविष्यति ।।५।।

परेषां क्लेदनं कर्म न कार्यं तत्कदाचन।।

परं द्वेष्टि परेषां यदात्मनस्तद्भविष्यति ।। ६ ।।

दक्षस्य यज्ञशीर्ष्णो हि भवत्वजमुखं शिरः ।।

मित्रनेत्रेण संपश्येद्यज्ञभागं भगस्सुरः ।। ७ ।।

पूषाभिधस्सुरस्तातौ दद्भिर्यज्ञसुपिष्टभुक् ।।

याजमानैर्भग्नदंतस्सत्यमेतन्मयोदितम् ।।८।।

बस्तश्मश्रुर्भवेदेव भृगुर्मम विरोध कृत्।।

देवाः प्रकृतिसर्वांगा ये म उच्छेदनं ददुः।।९।।

बाहुभ्यामश्विनौ पूष्णो हस्ताभ्यां कृतवाहकौ ।।

भवंत्वध्वर्यवश्चान्ये भवत्प्रीत्या मयोदितम् ।।2.2.42.१०।।

ब्रह्मोवाच ।।

इत्युक्त्वा परमेशानो विरराम दयान्वितः ।।

चराचरपतिर्देवः सम्राट् वेदानुसारकृत्।।११।।

तदा सर्व सुराद्यास्ते श्रुत्वा शंकरभाषितम्।।

साधुसाध्विति संप्रोचुः परितुष्टाः सविष्णवजाः।।१२।।

ततश्शंभुं समामंत्र्य मया विष्णुस्सुरर्षिभिः।।

भूयस्तद्देवयजनं ययौ च परया मुदा।।१३।।

एवं तेषां प्रार्थनया विष्णुप्रभृतिभिस्सुरैः।।

ययौ कनखलं शंभुर्यज्ञवाटं प्रजापतेः।।१४।।

रुद्रस्तदा ददर्शाथ वीरभद्रेण यत्कृतम् ।।

प्रध्वंसं तं क्रतोस्तत्र देवर्षीणां विशेषतः ।। १५ ।।

स्वाहा स्वधा तथा पूषा तुष्टिर्धृतिः सरस्वती ।।

तथान्ये ऋषयस्सर्वे पितरश्चाग्नयस्तथा ।।१६।।

येऽन्ये च बहवस्तत्र यक्षगंधवर्राक्षसाः ।।

त्रोटिता लुंचिताश्चैव मृताः केचिद्रणाजिरे ।। १७।।

यज्ञं तथाविधं दृष्ट्वा समाहूय गणाधिपम् ।।

वीरभद्रं महावीरमुवाच प्रहसन् प्रभुः ।।१८ ।।

वीरभद्र महाबाहो किं कृतं कर्म ते त्विदम् ।।

महान्दंडो धृतस्तात देवर्ष्यादिषु सत्वरम् ।। १९ ।।

दक्षमानय शीघ्रं त्वं येनेदं कृतमीदृशम् ।।

यज्ञो विलक्षणस्तात यस्येदं फलमीदृशम् ।।2.2.42.२०।।

।। ब्रह्मोवाच ।।

एवमुक्तश्शंकरेण वीरभद्रस्त्वरान्वितः ।।

कबंधमानयित्वाग्रे तस्य शंभोरथाक्षिपत् ।।२१।।

विशिरस्कं च तं दृष्ट्वा शंकरो लोकशंकरः ।।

वीरभद्रमुवाचाग्रे विहसन्मुनिसत्तम ।। २२ ।।

शिरः कुत्रेति तेनोक्ते वीरभद्रोऽब्रवीत्प्रभुः ।।

मया शिरो हुतं चाग्नौ तदानीमेव शंकर ।।२३।।

इति श्रुत्वा वचस्तस्य वीरभद्रस्य शंकरः ।।

देवान् तथाज्ञपत्प्रीत्या यदुक्तं तत्पुरा प्रभुः ।। २४ ।।

विधाय कात्स्न्र्येन च तद्यदाह भगवान् भवः ।।
मया विष्ण्वादयः सर्वे भृग्वादीनथ सत्वरम् ।।२५।।
अथ प्रजापतेस्तस्य सवनीयपशोश्शिरः।।
बस्तस्य संदधुश्शंभोः कायेनारं सुशासनात्।।२६।।
संधीयमाने शिरसि शंभुसद्दृष्टिवीक्षितः ।।
सद्यस्सुप्त इवोत्तस्थौ लब्धप्राणः प्रजापतिः।।२७।।
उत्थितश्चाग्रतश्शंभुं ददर्श करुणानिधिम् ।।
दक्षः प्रीतमतिः प्रीत्या संस्थितः सुप्रसन्नधीः।।२८।।
पुरा हर महाद्वेषकलिलात्माभवद्धि सः।।
शिवावलोकनात्सद्यश्शरच्चन्द्र इवामलः।।२९।।
भवं स्तोतुमना सोथ नाशक्नोदनुरागतः ।।
उत्कंठाविकलत्वाच्च संपरेतां सुतां स्मरन् ।। 2.2.42.३० ।।
अथ दक्षः प्रसन्नात्मा शिवं लज्जासमन्वितः ।।
तुष्टाव प्रणतो भूत्वा शंकरं लोकशंकरम् ।। ३१ ।।
दक्ष उवाच ।।
नमामि देव वरदं वरेण्यं महेश्वरं ज्ञाननिधिं सनातनम् ।।
नमामि देवाधिपतीश्वरं हरं सदासुखाढ्यं जगदेकबांधवम् ।।३२।।
नमामि विश्वेश्वर विश्वरूपं पुरातनं ब्रह्मनिजात्मरूपम्।।
नमामि शर्वं भव भावभावं परात्परं शंकरमानतोमि ।।३३।।
देवदेव महादेव कृपां कुरु नमोस्तु ते ।।
अपराधं क्षमस्वाद्य मम शंभो कृपानिधे ।। ।।३४।।
अनुग्रहः कृतस्ते हि दंडव्याजेन शंकर ।।
खलोहं मूढधीर्देव ज्ञातं तत्त्वं मया न ते ।। ३५ ।।
अद्य ज्ञातं मया तत्त्वं सर्वोपरि भवान्मतः ।।
विष्णुब्रह्मादिभिस्सेव्यो वेदवेद्यो महेश्वरः।।३६।।।।
साधूनां कल्पवृक्षस्त्वं दुष्टानां दंडधृक्सदा ।।
स्वतंत्रः परमात्मा हि भक्ताभीष्टवरप्रदः ।।३७।।
विद्यातपोव्रतधरानसृजः प्रथमं द्विजा ।।

आत्मतत्त्वं समावेतुं मुखतः परमेश्वरः ।।३८।।

सर्वापद्भ्यः पालयिता गोपतिस्तु पशूनिव ।।

गृहीतदंडो दुष्टांस्तान् मर्यादापरिपालकः ।।३९।।

मया दुरुक्तविशिखैः प्रविद्धः परमेश्वरः ।।

अमरानतिदीनाशान् मदनुग्रहकारकः ।।2.2.42.४०।।

स भवान् भगवान् शंभो दीनबंधो परात्परः ।।

स्वकृतेन महार्हेण संतुष्टो भक्तवत्सल ।।४१।।

।। ब्रह्मोवाच ।।

इति स्तुत्वा महेशानं शंकरं लोकशंकरम् ।।

प्रजापतिर्विनीतात्मा विरराम महाप्रभुम् ।।४२।।

अथ विष्णुः प्रसन्नात्मा तुष्टाव वृषभध्वजम् ।।

बाष्पगद्गदया वाण्या सुप्रणम्य कृतांजलिः ।। ४३ ।।

विष्णुवाच ।।

महादेव महेशान लोकानुग्रहकारक ।।

परब्रह्म परात्मा त्वं दीनबंधो दयानिधे ।।४४।।

सर्वव्यापी स्वैरवर्ती वेदवेद्ययशाः प्रभोः ।।

अनुग्रहः कृतस्तेन कृताश्चासुकृता वयम्।। ।।४५।।

दक्षोयं मम भक्तस्त्वां यन्निनिंद खलः पुरा ।।

तत् क्षंतव्यं महेशाद्य निर्विकारो यतो भवान् ।।४६।।

कृतो मयापराधोपि तव शंकर मूढतः ।।

त्वद्गणेन कृतं युद्धं वीरभद्रेण पक्षतः ।।४७।।

त्वं मे स्वामी परब्रह्म दासोहं ते सदाशिव ।।

पोष्यश्चापि सदा ते हि सर्वेषां त्वं पिता यतः ।।४८।।

ब्रह्मोवाच ।।

देवदेव महादेव करुणासागर प्रभो ।।

स्वतंत्रः परमात्मा त्वं परमेशो द्वयोव्ययः।। ।।४९।।

मम पुत्रोपरि कृतो देवानुग्रह ईश्वर।।

स्वापमानमगणयन् दक्षयज्ञं समुद्धर ।।2.2.42.५०।।

प्रसन्नो भव देवेश सर्वशापान्निराकुरु ।।

सबोधः प्रेरकस्त्वं मे त्वमेवं विनिवारकः।।५१।।

इति स्तुत्वा महेशानं परमं च महामुने ।।

कृतांजलिपुटो भूत्वा विनम्रीकृतमस्तकः।। ।।५२।।

अथ शक्रादयो देवा लोकपालास्सुचेतसः ।।

तुष्टुवुः शंकरं देवं प्रसन्नमुखपंकजम् ।।५३।।

ततः प्रसन्नमनसः सर्वे देवास्तथा परे ।।

सिद्धर्षयः प्रजेशाश्च तुष्टुवुः शंकरं मुदा ।।५४।।

तथोपदेवनागाश्च सदस्या ब्राह्मणास्तथा ।।

प्रणम्य परया भक्त्या तुष्टुवुश्च पृथक् पृथक्।।५५।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे दक्षदुःखनिराकरणवर्णनं नाम द्विचत्वारिंशो ऽध्यायः ।।४२।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः २ (सतीखण्डः)/अध्यायः ४३

https://sa.wikisource.org/s/vya
< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः २ (सतीखण्डः)

ब्रह्मोवाच ।।

इति स्तुतो रमेशेन मया चैव सुरर्षिभिः ।।

तथान्यैश्च महादेवः प्रसन्नस्संबभूव ह ।।१।।

अथ शंभुः कृपा दृष्ट्या सर्वान् ऋषिसुरादिकान् ।।

ब्रह्मविष्णू समाधाय दक्षमेतदुवाच ह ।।२।।

महादेव उवाच ।।

शृणु दक्ष प्रवक्ष्यामि प्रसन्नोस्मि प्रजापते ।।

भक्ताधीनः सदाहं वै स्वतंत्रोप्यखिलेश्वरः ।।३।।

चतुर्विधा भजंते मां जनाः सुकृतिनस्सदा।।

उत्तरोत्तरतः श्रेष्ठास्तेषां दक्षप्रजापते ।।४।।

आर्तो जिज्ञासुरर्थार्थी ज्ञानी चैव चतुर्थकः ।।

पूर्वे त्रयश्च सामान्याश्चतुर्थो हि विशिष्यते ।। ५ ।।

तत्र ज्ञानी प्रियतर ममरूपञ्च स स्मृतः ।।

तस्मात्प्रियतरो नान्यः सत्यं सत्यं वदाम्यहम्।।६।।

ज्ञानगम्योहमात्मज्ञो वेदांतश्रुतिपारगैः ।।

विना ज्ञानेन मां प्राप्तुं यतन्ते चाल्पबुद्धयः ।।७।।

न वेदैश्च न यज्ञैश्च न दानैस्तपसा क्वचित् ।।

न शक्नुवंति मां प्राप्तुं मूढाः कर्मवशा नरा ।।८।।

केवलं कर्म्मणा त्वं स्म संसारं तर्तुमिच्छसि ।।

अत एवाभवं रुष्टो यज्ञविध्वंसकारकः ।।९।।

इतः प्रभृति भो दक्ष मत्वा मां परमेश्वरम् ।।

बुद्ध्या ज्ञानपरो भूत्वा कुरु कर्म समाहितः ।।2.2.43.१०।।

अन्यच्च शृणु सद्बुद्ध्या वचनं मे प्रजापते ।।

वच्मि गुह्यं धर्महेतोः सगुणत्वेप्यहं तव ।।११।।

अहं ब्रह्मा च विष्णुश्च जगतः कारणं परम् ।।
आत्मेश्वर उपद्रष्टा स्वयंदृगविशेषणः ।।१२।।
आत्ममायां समाविश्य सोहं गुणमयीं मुने ।।
सृजन्रक्षन्हरन्विश्वं दधे संज्ञाः क्रियोचिताः ।।१३।।
अद्वितीये परे तस्मिन् ब्रह्मण्यात्मनि केवले ।।
अज्ञः पश्यति भेदेन भूतानि ब्रह्मचेश्वरम् ।।१४।।
शिरः करादिस्वांगेषु कुरुते न यथा पुमान् ।।
पारक्यशेमुषीं क्वापि भूतेष्वेवं हि मत्परः ।।१५।।
सर्वभूतात्मनामेकभावनां यो न पश्यति ।।
त्रिसुराणां भिदां दक्ष स शांतिमधिगच्छति ।।१६।।
यः करोति त्रिदेवेषु भेदबुद्धिं नराधमः ।।
नरके स वसेन्नूनं यावदाचन्द्रतारकम् ।।१७।।
मत्परः पूजयेद्देवान् सर्वानपि विचक्षणः ।।
स ज्ञानं लभते येन मुक्तिर्भवति शाश्वती ।।१८।।
विधिभक्तिं विना नैव भक्तिर्भवति वैष्णवी ।।
विष्णुभक्तिं विना मे न भक्तिः क्वापि प्रजायते ।।१९।।
इत्युक्त्वा शंकरस्स्वामी सर्वेषां परमेश्वरः ।।
सर्वेषां शृण्वतां तत्रोवाच वाणीं कृपाकरः ।।2.2.43.२०।।
हरिभक्तो हि मां निन्देत्तथा शैवोभवे द्यदि ।।
तयोः शापा भवेयुस्ते तत्त्वप्राप्तिर्भवेन्न हि ।। २१ ।।
।। ब्रह्मोवाच ।।
इत्याकर्ण्य महेशस्य वचनं सुखकारकम् ।।
जहृषुस्सकलास्तत्र सुरमुन्यादयो मुने ।।२२।।
दक्षोभवन्महाप्रीत्या शिवभक्तिरतस्तदा ।।
सकुटुम्बस्सुराद्यास्ते शिवं मत्वाखिलेश्वरम् ।।२३।।
यथा येन कृता शंभोः संस्तुतिः परमात्मनः ।।
तथा तस्मै वरो दत्तश्शंभुना तुष्टचेतसा ।। २४ ।।
ज्ञप्तः शिवेनाशु दक्षः शिवभक्तः प्रसन्नधीः ।।

यज्ञं चकार संपूर्णं शिवानुग्रहतो मुने ।।२५।।

ददौ भागान्सुरेभ्यो हि पूर्णभागं शिवाय सः ।।

दानं ददौ द्विजेभ्यश्च प्राप्तः शंभोरनुग्रहः ।।२६।।

अथो देवस्य सुमहत्तत्कर्म विधिपूर्वकम् ।।

दक्षः समाप्य विधिवत्सहर्त्विग्भिः प्रजापतिः ।।२७।।

एवं दक्षमखः पूर्णोभवत्तत्र मुनीश्वरः ।।

शंकरस्य प्रसादेन परब्रह्मस्वरूपिणः ।।२८।।

अथ देवर्षयस्सर्वे शंसंतश्शांकरं यशः ।।

स्वधामानि ययुस्तु ष्टाः परेपि सुखतस्तदा ।।२९।।

अहं विष्णुश्च सुप्रीतावपि स्वंस्वं परं मुदा ।।

गायन्तौ सुयशश्शंभोः सर्वमंगलदं सदा ।।2.2.43.३०।।

दक्ष संमानितः प्रीत्या महादेवोपि सद्गतिः ।।

कैलासं स ययौ शैलं सुप्रीतस्सगणो निजम्।।३१।।

आगत्य स्वगिरिं शंभुस्सस्मार स्वप्रियां सतीम् ।।

गणेभ्यः कथयामास प्रधानेभ्यश्च तत्कथाम् ।।३२।।

कालं निनाय विज्ञानी बहु तच्चरितं वदन्।।

लौकिकीं गतिमाश्रित्य दर्शयन् कामितां प्रभुः ।।३३।।

नानीतिकारकः स्वामी परब्रह्म सतां गतिः।।

तस्य मोहः क्व वा शोकः क्व विकारः परो मुने ।।३४।।

अहं विष्णुश्च जानीवस्तद्भेदं न कदाचन ।।

केपरे मुनयो देवा मनुषाद्याश्च योगिनः ।।३५।।

महिमा शांकरोनंतो दुर्विज्ञेयो मनीषिभिः ।।

भक्तज्ञातश्च सद्भक्त्या तत्प्रसादाद्विना श्रमम् ।।३६।।

एकोपि न विकारो हि शिवस्य परमात्मनः ।।

संदर्शयति लोकेभ्यः कृत्वा तां तादृशीं गतिम्।।३७।।

यत्पठित्वा च संश्रुत्य सर्वलोकसुधीर्मुने।।

लभते सद्गतिं दिब्यामिहापि सुखमुत्तमम्।।३८।।

इत्थं दाक्षायणी हित्वा निजदेहं सती पुनः ।।

जज्ञे हिमवतः पत्न्यां मेनायामिति विश्रुतम् ।।३९।।

पुनः कृत्वा तपस्तत्र शिवं वव्रे पतिं च सा ।।

गौरी भूत्वार्द्धवामांगी लीलाश्चक्रेद्भुताश्शिवा ।।2.2.43.४०।।

इत्थं सतीचरित्रं ते वर्णितं परमाद्भुतम् ।।

भुक्तिमुक्तिप्रदं दिव्यं सर्वकामप्रदायकम् ।। ४१ ।।

इदमाख्यानमनघं पवित्रं परपावनम् ।।

स्वर्ग्यं यशस्यमायुष्यं पुत्रपौत्रफलप्रदम् ।। ४२ ।।

य इदं शृणुयाद्भक्त्या श्रावयेद्भक्तिमान्नरान् ।।

सर्वकर्मा लभेत्तात परत्र परमां गतिम् ।। ४३ ।।

यः पठेत्पाठयेद्वापि समाख्यानमिदं शुभम् ।।

सोपि भुक्त्वाखिलान् भोगानंते मोक्षमवाप्नुयात् ।। ४४ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे दक्षय ज्ञानुसंधानवर्णनं नाम त्रिचत्वारिंशोऽध्यायः ।। ४३ ।। ।। श्रीः ।।

समाप्तोयं रुद्रसंहितान्तर्गतसतीखण्डो द्वितीयः ।। २ ।।

।।श्रीसांबसदाशिवार्पणमस्तु।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ०१

https://sa.wikisource.org/s/vyn



।। श्रीगणेशाय नमः ।।

।। अथ तृतीयः पार्वतीखण्डः प्रारभ्यते ।।

नारद उवाच ।।

दाक्षायणी सती देवी त्यक्तदेहा पितुर्मखे ।।

कथं गिरिसुता ब्रह्मन्बभूव जगदम्बिका ।। १ ।।

कथं कृत्वा तपोऽत्युग्रम्पतिमाप शिवं च सा ।।

एतन्मे पृच्छते सम्यक्कथय त्वं विशेषतः ।। २ ।।

ब्रह्मोवाच ।।

शृणु त्वं मुनिशार्दूल शिवाचरितमुत्तमम् ।।

पावनं परमं दिव्यं सर्वपापहरं शुभम् ।। ३ ।।

यदा दाक्षायणी देवी हरेण सहिता मुदा ।।

हिमाचले सुचिक्रीडे लीलया परमेश्वरी ।।४।।

मत्सुतेयमिति ज्ञात्वा सिषेवे मातृवर्चसा ।।

हिमाचलप्रिया मेना सर्वर्द्धिभिरनिर्भरा ।।५।।

यदा दाक्षायणी रुष्टा नादृता स्वतनुं जहौ ।।

पित्रा दक्षेण तद्यज्ञे संगता परमेश्वरी ।। ६ ।।

तदैव मेनका तां सा हिमाचलप्रिया मुने ।।

शिवलोकस्थितां देवीमारिराधयिषुस्तदा ।।७।।

तस्यामहं सुता स्यामित्यवधार्य सती हृदा ।।

त्यक्तदेहा मनो दध्रे भवितुं हिमवत्सुता ।। ८ ।।

समयं प्राप्य सा देवी सर्वदेवस्तुता पुनः ।।

सती त्यक्ततनुः प्रीत्या मेनकातनयाभवत् ।।९।।

नाम्ना सा पार्वती देवी तपः कृत्वा सुदुस्सहम्।।

नारदस्योपदेशाद्वै पतिम्प्राप शिवं पुनः ।।2.3.1.१०।।

नारद उवाच।।

ब्रह्मन्विधे महाप्राज्ञ वद मे वदतां वर ।।

मेनकायास्समुत्पतिं विवाहं चरितं तथा।।११।।

धन्या हि मेनका देवी यस्यां जाता सुता सती ।।

अतो मान्या च धन्या च सर्वेषां सा पतिव्रता ।।१२।।

ब्रह्मोवाच।।

शृणु त्वं नारद मुने पार्वतीमातुरुद्भवम्।।

विवाहं चरितं चैव पावनं भक्तिवर्द्धनम् ।। १३

अस्त्युत्तरस्यां दिशि वै गिरीशो हिमवान्महान् ।।

पर्वतो हि मुनिश्रेष्ठ महातेजास्समृद्धिभाक् ।। १४ ।।

द्वैरूप्यं तस्य विख्यातं जंगमस्थिरभेदतः ।।

वर्णयामि समासेन तस्य सूक्ष्मस्वरूपकम् ।। १५ ।।

पूर्वापरौ तोयनिधी सुविगाह्य स्थितो हि यः ।।

नानारत्नाकरो रम्यो मानदण्ड इव क्षितेः ।।१६।।

नानावृक्षसमाकीर्णो नानाशृंगसुचित्रितः।।

सिंहव्याघ्रादिपशुभिस्सेवितस्सुखिभिस्सदा ।। १७ ।।

तुषारनिधिरत्युग्रो नानाश्चर्यविचित्रितः ।।

देवर्षिसिद्धमुनिभिस्संश्रितः शिवसंप्रियः ।। १८ ।।

तपस्थानोऽतिपूतात्मा पावनश्च महात्मनाम् ।।

तपस्सिद्धिप्रदोत्यंतं नानाधात्वाकरः शुभः ।। १९ ।।

स एव दिव्यरूपो हि रम्यः सर्वाङ्गसुन्दरः ।।

विष्ण्वंशोऽविकृतः शैलराजराजस्सताम्प्रियः।।2.3.1.२०।।

कुलस्थित्यै च स गिरिर्धर्म्मवर्द्धनहेतवे ।।

स्वविवाहं कर्त्तुमैच्छत्पितृदेवहितेच्छया ।।२१ ।।

तस्मिन्नवसरे देवाः स्वार्थमाचिन्त्य कृत्स्नशः ।।

ऊचुः पितॄन्समागत्य दिव्यान्प्रीत्या मुनीश्वर ।।२२।।

देवा ऊचुः।।

सर्वे शृणुत नो वाक्यं पितरः प्रीतमानसाः ।।
कर्त्तव्यं तत्तथैवाशु देवकार्य्येप्सवो यदि ।।२३।।
मेना नाम सुता या वो ज्येष्ठा मङ्गलरूपिणी ।।
ताम्विवाह्य च सुप्रीत्या हिमाख्येन महीभृता ।। २४ ।।
एवं सर्वमहालाभः सर्वेषां च भविष्यति ।।
युष्माकममराणां च दुःखहानिः पदे पदे ।। २५ ।।
ब्रह्मोवाच ।।
इत्याकर्ण्यापरवचः पितरस्ते विमृश्य च ।।
स्मृत्वा शापं सुतानां च प्रोचुरोमिति तद्वचः ।। २६ ।।
ददुर्मेनां सुविधिना हिमागाय निजात्मजाम् ।।
समुत्सवो महानासीत्तद्विवाहे सुमङ्गले ।। २७ ।।
हर्य्यादयाऽपि ते देवा मुनयश्चापरोखिलाः ।।
आजग्मुस्तत्र संस्मृत्य वामदेवं भवं धिया ।। २८ ।।
उत्सवं कारयामासुर्दत्त्वा दानान्यनेकशः ।।
सुप्रशस्य पितॄन्दिव्यान्प्रशशंसुर्हिमाचलम् ।।२९।।
महामोदान्विता देवास्ते सर्वे समुनीश्वराः।।
संजग्मुः स्वस्वधामानि संस्मरन्तः शिवाशिवौ ।।2.3.1.३०।।
कौतुकं बहु सम्प्राप्य सुविवाह्य प्रियां च ताम् ।।
आजगाम स्वभवनं मुदमाप गिरीश्वरः ।।३१।।
ब्रह्मोवाच ।। मेनया हि हिमागस्य सुविवाहो मुनीश्वर।।
प्रोक्तो मे सुखदः प्रीत्या किम्भूयः श्रोतुमिच्छसि ।।३२।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे हिमाचलविवाहवर्णनं नाम प्रथमोध्यायः।।१।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ०२

https://sa.wikisource.org/s/vyo



नारद उवाच ।।

विधे प्राज्ञ वदेदानीं मेनोत्पत्तिं समादरात् ।।

अपि शापं समाचक्ष्व कुरु संदेहभंजनम् ।।१।।

ब्रह्मोवाच ।।

शृणु नारद सुप्रीत्या मेनोत्पत्तिं विवेकतः ।।

मुनिभिः सह वक्ष्येहं सुतवर्य्य महाबुध ।।२।।

दक्षनामा मम सुतो यः पुरा कथितो मुने ।।

तस्य जाताः सुताः षष्टिप्रमितास्सृष्टिकारणाः ।।३।।

तासां विवाहमकरोत्स वरैः कश्यपादिभिः ।।

विदितं ते समस्तं तत्प्रस्तुतं शृणु नारद ।। ४ ।।

तासां मध्ये स्वधानाम्नीं पितृभ्यो दत्तवान्सुताम् ।।

तिस्रोभवन्सुतास्तस्यास्सुभगा धर्ममूर्तयः ।। ५ ।।

तासां नामानि शृणु मे पावनानि मुनीश्वर ।।

सदा विघ्नहराण्येव महामंगलदानि च ।।६।।

मेनानाम्नी सुता ज्येष्ठा मध्या धन्या कलावती।।

अन्त्या एतास्सुतास्सर्वाः पितृणाम्मानसोद्भवाः ।।७।।

अयोनिजाः स्वधायाश्च लोकतस्तत्सुता मताः।।।

आसाम्प्रोच्य सुनामानि सर्वान्कामाञ्जनो लभेत् ।।८।।

जगद्वंद्याः सदा लोकमातरः परमोददाः ।।

योगिन्यः परमा ज्ञाननिधानास्तास्त्रिलोकगाः ।।९।।

एकस्मिन्समये तिस्रो भगिन्यस्ता मुनीश्वर ।।

श्वेतद्वीपं विष्णुलोकं जग्मुर्दर्शनहेतवे।।2.3.2.१०।।

कृत्वा प्रणामं विष्णोश्च संस्तुतिं भक्तिसंयुताः ।।

तस्थुस्तदाज्ञया तत्र सुसमाजो महानभूत् ।। ११ ।।

तदैव सनकाद्यास्तु सिद्धा ब्रह्मसुता मुने ।।

गतास्तत्र हरिं नत्वा स्तुत्वा तस्थुस्तदाज्ञया ।। १२ ।।

सनकाद्यान्मुनीन्दृष्ट्वोत्तस्थुस्ते सकला द्रुतम् ।।

तत्रस्थान्संस्थितान्नत्वा देवाद्याँल्लोकवन्दितान् ।। १३ ।।

तिस्रो भगिन्यस्तांस्तत्र नोत्तस्थुर्मोहिता मुने ।।

मायया दैवविवशाश्शङ्करस्य परात्मनः ।। १४ ।।

मोहिनी सर्व लोकानां शिवमाया गरीयसी ।।

तदधीनं जगत्सर्वं शिवेच्छा सा प्रकीर्त्यते ।।१५।।

प्रारब्धं प्रोच्यते सैव तन्नामानि ह्यनेकशः ।।

शिवेच्छया भवत्येव नात्र कार्या विचारणा ।।१६।।

भूत्वा तद्वशगास्ता वै न चक्रुरपि तन्नतिम्।।

विस्मितास्सम्प्रदृश्यैव संस्थितास्तत्र केवलम् ।। १७ ।।

तादृशीं तद्गतिं दृष्ट्वा सनकाद्या मुनीश्वराः ।।

ज्ञानिनोऽपि परं चक्रुः क्रोधं दुर्विषहं च ते ।। १८ ।।

शिवेच्छामोहितस्तत्र सक्रोधस्ता उवाच ह ।।

सनत्कुमारो योगीशश्शापन्दण्डकरं ददन् ।। १९ ।।

सनत्कुमार उवाच ।।

यूयं तिस्रो भगिन्यश्च मूढाः सद्वयुनोज्झिताः ।।

अज्ञातश्रुतितत्त्वा हि पितृकन्या अपि ध्रुवम् ।। 2.3.2.२० ।।

अभ्युत्थानं कृतं नो यन्नमस्कारोपि गर्वतः ।।

मोहिता नरभावत्वात्स्वर्गाद्दूरा भवन्तु हि ।। २१ ।।

नरस्त्रियः सम्भवन्तु तिस्रोऽपि ज्ञानमोहिताः ।।

स्वकर्मणः प्रभणावे लभध्वं फलमीदृशम् ।। २२ ।।

।। ब्रह्मोवाच ।।

इत्याकर्ण्य च साध्वस्तास्तिस्रोऽपि चकिता भृशम् ।।

पतित्वा पादयोस्तस्य समूचूर्नतमस्तकाः ।। २३ ।।

पितृतनया ऊचुः ।।

मुनिवर्य्य दयासिन्धो प्रसन्नो भव चाधुना ।।

त्वत्प्रणामं वयं मूढाः कुर्महे स्म न भावतः ।। २४ ।।
प्राप्तं च तत्फलं विप्र न ते दोषो महामुने ।।
अनुग्रहं कुरुष्वात्र लभेम स्वर्गतिम्पुनः ।। २५ ।।
ब्रह्मोवाच ।।
श्रुत्वा तद्वचनं तात प्रोवाच स मुनिस्तदा ।।
शापोद्धारं प्रसन्नात्मा प्रेरितः शिवमायया ।। २६ ।।
सनत्कुमार उवाच ।।
पितॄणां तनयास्तिस्रः शृणुत प्रीतमानसाः ।।
वचनं मम शोकघ्नं सुखदं सर्वदैव वः ।। २७ ।।
विष्णोरंशस्य शैलस्य हिमाधारस्य कामिनी ।।
ज्येष्ठा भवतु तत्कन्या भविष्यत्येव पार्वती ।। २८ ।।
धन्या प्रिया द्वितीया तु योगिनी जनकस्य च ।।
तस्याः कन्या महालक्ष्मीर्नाम्ना सीता भविष्यति ।। २९ ।।
वृषभानस्य वैश्यस्य कनिष्ठा च कलावती ।।।
भविष्यति प्रिया राधा तत्सुता द्वापरान्ततः ।। 2.3.2.३० ।।
मेनका योगिनी पत्या पार्वत्याश्च वरेण च ।।
तेन देहेन कैलासं गमिष्यति परम्पदम् ।। ३१ ।।
धन्या च सीतया सीरध्वजो जनकवंशजः ।।
जीवन्मुक्तो महायोगी वैकुण्ठं च गमिष्यति ।। ३२ ।।
कलावती वृषभानस्य कौतुकात्कन्यया सह ।।
जीवन्मुक्ता च गोलोकं गमिष्यति न संशयः ।। ३३ ।।
विना विपत्तिं महिमा केषां कुत्र भविष्यति ।।
सुकर्मिणां गते दुःखे प्रभवेद्दुर्लभं सुखम् ।। ३४ ।।
यूयं पितॄणां तनयास्सर्वास्स्वर्गविलासिकाः ।।
कर्मक्षयश्च युष्माकमभवद्विष्णुदर्शनात् ।। ३५ ।।
इत्युक्त्वा पुनरप्याह गतक्रोधो मुनीश्वरः ।।
शिवं संस्मृत्य मनसा ज्ञानदं भुक्तिमुक्तिदम् ।। ३६ ।।
अपरं शृणुत प्रीत्या मद्वचस्सुखदं सदा ।।

धन्या यूयं शिवप्रीता मान्याः पूज्या ह्यभीक्ष्णशः ।। ३७ ।।

मेनायास्तनया देवी पार्वती जगदम्बिका ।।

भविष्यति प्रिया शम्भोस्तपः कृत्वा सुदुस्सहम् ।। ३८ ।।

धन्या सुता स्मृता सीता रामपत्नी भविष्यति ।।

लौकिकाचारमाश्रित्य रामेण विहरिष्यति ।। ३९ ।।

कलावतीसुता राधा साक्षाद्गोलोकवासिनी ।।

गुप्तस्नेहनिबद्धा सा कृष्णपत्नी भविष्यति ।।2.3.2.४० ।।

ब्रह्मोवाच ।। इत्थमाभाष्य स मुनिर्भ्रातृभिस्सह संस्तुतः ।।

सनत्कुमारो भगवाँस्तत्रैवान्तर्हितोऽभवत् ।। ४१ ।।

तिस्रो भगिन्यस्तास्तात पितॄणां मानसीः सुताः ।।

गतपापास्सुखं प्राप्य स्वधाम प्रययुर्द्रुतम् ।।४२।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखंडे पूर्वगतिवर्णनं नाम द्वितीयोऽध्यायः ।। २ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ०३

https://sa.wikisource.org/s/vyp



नारद उवाच ।।

विधे प्राज्ञ महाधीमन्वद मे वदतां वर ।।

ततः परं किमभवच्चरितं विष्णुसद्गुरो ।। १ ।।

अद्भुतेयं कथा प्रोक्ता मेना पूर्वगतिः शुभा ।।

विवाहश्च श्रुतस्सम्यक्परमं चरितं वद ।।२।।

मेनां विवाह्य स गिरिः कृतवान्किं ततः परम् ।।

पार्वती कथमुत्पन्ना तस्यां वै जगदम्बिका ।।३।।

तपस्सुदुस्सहं कृत्वा कथं प्राप पतिं हरम् ।।

एतत्सर्वं समाचक्ष्व विस्तराच्छांकरं यशः ।। ४ ।।

।। ब्रह्मोवाच ।।

मुने त्वं शृणु सुप्रीत्या शांकरं सुयशः शुभम्।।

यच्छ्रुत्वा ब्रह्महा शुद्ध्येत्सर्वान्कामानवाप्नुयात्।।५।।

यदा मेनाविवाहन्तु कृत्वागच्छद्गिरिर्गृहम्।।

तदा समुत्सवो जातस्त्रिषु लोकेषु नारद।।६।।

हिमाचलोऽपि सुप्रीतश्चकार परमोत्सवम्।।

भूसुरान्बंधुवर्गांश्च परानानर्च सद्धिया ।।७।।

सर्वे द्विजाश्च सन्तुष्टा दत्त्वाशीर्वचनं वरम् ।।

ययुस्तस्मै स्वस्वधाम बंधुवर्गास्तथापरे ।।८।।

हिमाचलोऽपि सुप्रीतो मेनया सुखदे गृहे ।।

रेमेऽन्यत्र च सुस्थाने नन्दनादिवनेष्वपि ।।९।।

तस्मिन्नवसरे देवा मुने विष्ण्वादयोऽखिलाः ।।

मुनयश्च महात्मानः प्रजग्मुर्भूधरान्तिके ।। 2.3.3.१० ।।

दृष्ट्वा तानागतान्देवान्प्रणनाम मुदा गिरिः ।।

संमानं कृतवान्भक्त्या प्रशंसन्स्व विधिं महान् ।। ११ ।।

येन स्यां सुसुखी नित्यं निर्विकारः प्रसन्नधीः ।। २५ ।।

तच्छ्रुत्वाहं मुनेऽवोचं सात्त्विको भाव उच्यत ।।

तत्त्वसार इति प्रीत्या सृजाम्येकां वरां स्त्रियम् ।। २६ ।।

वरांगीं नाम तां दत्त्वा तस्मै दितिसुताय वै ।।

अयां स्वधाम सुप्रीतः कश्यपस्तत्पितापि च ।।२७।।

ततो दैत्यस्य वज्रांगस्सात्विकं भावमाश्रितः।।

आसुरं भावमुत्सृज्य निर्वैरस्सुखमाप्तवान्।।२८।।

न बभूव वरांग्या हि हृदि भावोथ सात्विकः।।

सकामा स्वपतिं भेजे श्रद्धया विविधं सती ।।२९।।

अथ तत्सेवनादाशु संतुष्टोऽभून्महाप्रभुः ।।

स वज्रांगः पतिस्तस्या उवाच वचनं तदा ।।2.3.14.३०।।

वज्रांग उवाच।।

किमिच्छसि प्रिये ब्रूहि किं ते मनसि वर्तते ।।

तच्छुत्वानम्य तं प्राह सा पतिं स्वमनोरथम् ।। ३१ ।।

वरांग्युवाच ।।

चेत् प्रसन्नोऽभवस्त्वं वै सुतं मे देहि सत्पते ।।

महाबलं त्रिलोकस्य जेतारं हरिदुःखदम् ।। ३२ ।।

ब्रह्मोवाच ।।

इति श्रुत्वा प्रियावाक्यं विस्मितोऽभूत्स आकुलः।।

उवाच हृदि स ज्ञानी सात्विको वैरवर्जितः ।।३३।।

प्रियेच्छति विरोधं वै सुरैर्मे न हि रोचते ।।

किं कुर्यां हि क्व गच्छेयं कथं नश्ये न मे पणः ।। ३४ ।।

प्रियामनोरथश्चैव पूर्णस्स्यात्त्रिजगद्भवेत् ।।

क्लेशयुङ्नितरा भूयो देवाश्च मुनयस्तथा ।। ३५ ।।

न पूर्णस्स्यात्प्रियाकामस्तदा मे नरको भवेत्।।

द्विधापि धर्महानिर्वै भवतीत्यनुशुश्रुवान् ।।३६।।

वज्रांग इत्थं बभ्राम स मुने धर्मसंकटे ।।

बलाबलं द्वयोस्तत्र विचिचिंत च बुद्धितः ।। ३७ ।।

शिवेच्छया स हि मुने वाक्यं मेने स्त्रियो बुधः ।।
तथास्त्विति वचः प्राह प्रियां प्रति स दैत्यराट् ।।३८।।
तदर्थमकरोत्तीव्रं तपोन्यद्दुष्करं स तु ।।
मां समुद्दिश्य सुप्रीत्या बहुवर्षं जितेंद्रियः ।।३९।।
वरं दातुमगां तस्मै दृष्ट्वाहं तत्तपो महत् ।।
वरं ब्रूहि ह्यवोचं तं सुप्रसन्नेन चेतसा ।। 2.3.14.४० ।।
वज्रांगस्तु तदा प्रीतं मां दृष्ट्वा स्थितं विभुम् ।।
सुप्रणम्य बहुस्तुत्वा वरं वव्रे प्रियाहितम् ।। ४१ ।।
वज्रांग उवाच।।
सुतं देहि स्वमातुर्मे महाहितकरं प्रभो ।।
महाबलं सुप्रतापं सुसमर्थं तपोनिधिम् ।।४२।।
ब्रह्मोवाच।।
इत्याकर्ण्य च तद्वाक्यं तथास्त्वित्यब्रवं मुने ।।
अया स्वधाम तद्दत्वा विमनास्ससस्मरच्छिवम् ।।४३।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे तारकोत्पत्तौ वज्रांगोत्पत्तितपोवर्णनं नाम चतुर्दशोऽध्यायः ।। १४ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः १५

https://sa.wikisource.org/s/w24
< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः ३ (पार्वतीखण्डः)

ब्रह्मोवाच ।।

अथ सा गर्भमाधत्त वरांगी तत्पुरादरात् ।।

स ववर्द्धाभ्यंतरे हि बहुवर्षैः सुतेजसा।।१।।

ततः सा समये पूर्णे वरांगी सुषुवे सुतम्।।

महाकायं महावीर्यं प्रज्वलंतं दिशो दश।।२।।

तदैव च महोत्पाता बभूवुर्दुःखहेतवः ।।

जायमाने सुते तस्मिन्वरांग्यात्सुखदुःखदे ।।३।।

दिवि भुव्यंतरिक्षे च सर्वलोकभयंकराः ।।

अनर्थसूचकास्तात त्रिविधास्तान्ब्रवीम्यहम् ।। ४ ।।

सोल्काश्चाशनयः पेतुर्महाशब्दा भयंकराः ।।

उदयं चक्रुरुत्कृष्टाः केतवो दुःखदायकाः ।। ५ ।।

चचाल वसुधा साद्रिर्जज्वलुस्सकला दिशः ।।

चुक्षुभुस्सरितस्सर्वाः सागराश्च विशेषतः ।। ६ ।।

हूत्करानीरयन्धीरान्खरस्पर्शो मरुद्ववौ ।।

उन्मूलयन्महावृक्षान्वात्यानीकोरजोध्वजः।।७।।

सराह्वोस्सूर्य्यविध्वोस्तु मुहुः परिधयोऽभवन्।।

महाभयस्य विप्रेन्द्र सूचकास्सुखहारकः ।।८।।

महीध्रविवरेभ्यश्च निर्घाता भयसूचकाः ।।

रथनिर्ह्रादतुल्याश्च जज्ञिरेऽवसरे ततः ।।९।।

सृगालोलूकटंकारैर्वमन्त्यो मुखतोऽनलम् ।।

अंतर्ग्रामेषु विकटं प्रणेदुरशिवाश्शिवाः ।। 2.3.15.१० ।।

यतस्ततो ग्रामसिंहा उन्नमय्य शिरोधराम् ।।

संगीतवद्रोदनवद्व्यमुचन्विविधान्रवान् ।।११।।

खार्कीररभसा मत्ताः सुरैर्घ्नंतो रसांखराः ।।

वरूथशस्तदा तात पर्यधावन्नितस्ततः ।।१२।।

खगा उदपतन्नीडाद्रासभत्रस्तमानसः ।।

क्रोशंतो व्यग्रचित्ताश्च स्थितमापुर्न कुत्रचित् ।। १३ ।।

शकृन्मूत्रमकार्षुश्च गोष्ठेऽरण्ये भयाकुलः ।।

बभ्रमुः स्थितिमापुर्नो पशवस्ताडिता इव ।।१४।।

गावोऽत्रसन्नसृग्दोहा वाष्पनेत्रा भयाकुलाः ।।

तोयदा अभवंस्तत्र भयदाः पूयवर्षिणः ।।१५।।

व्यरुदन्प्रतिमास्तत्र देवानामुत्पतिष्णवः ।।

विनाऽनिलं द्रुमाः पेतुर्ग्रहयुद्धं बभूव खे ।।१६।।

इत्यादिका बहूत्पाता जज्ञिरे मुनिसत्तम ।।

अज्ञानिनो जनास्तत्र मेनिरे विश्वसंप्लवम् ।। १७ ।।

अथ प्रजापतिर्नामाकरोत्तस्यासुरस्य वै ।।

तारकेति विचार्यैव कश्यपो हि महौजसः ।। १८ ।।

महावीरस्य सहसा व्यज्यमानात्मपौरुषः ।।

ववृधेत्यश्मसारेण कायेनाद्रिपतिर्यथा ।। १९ ।।

अथो स तारको दैत्यो महाबलपराक्रमः ।।

तपः कर्तुं जनन्याश्चाज्ञां ययाचे महामनाः ।।2.3.15.२०।।

प्राप्ताज्ञः स महामायी मायिनामपि मोहकः ।।

सर्वदेवजयं कर्तुं तपोर्थं मन आदधे ।। २१ ।।

मधोर्वनमुपागम्य गुर्वाज्ञाप्रतिपालकः ।।

विधिमुद्दिश्य विधिवत्तपस्तेपे सुदारुणम् ।।२२।।

ऊर्द्ध्वबाहुश्चैकपादो रविं पश्यन्स चक्षुषा ।।

शतवर्षं तपश्चक्रे दृढचित्तो दृढव्रतः ।।२३।।

अंगुष्ठेन भुवं स्पृष्ट्वा शत वर्षं च तादृशः ।।

तेपे तपो दृढात्मा स तारकोऽसुरराट्प्रभुः ।।२४।।

शतवर्षं जलं प्राश्नञ्च्छतवर्षं च वायुभुक्।।

शतवर्ष जले तिष्ठञ्च्छतं च स्थंडिलेऽतपत् ।।२५।।

शतवर्षं तथा चाग्नौ शतवर्षमधोमुखः ।।

शतवर्षं तु हस्तस्य तलेन च भुवं स्थित ।।२६।।

शतवर्षं तु वृक्षस्य शाखामालब्य वै मुने ।।

पादाभ्यां शुचिधूमं हि पिबंश्चाधोमुखस्तथा ।।२७।।

एवं कष्टतरं तेपे सुतपस्स तु दैत्यराट्।।

काममुद्दिश्य विधिवच्छृण्वतामपि दुस्सहम्।।२८।।

तत्रैवं तपतस्तस्य महत्तेजो विनिस्सृतम्।।

शिरसस्सर्वसंसर्पि महोपद्रवकृन्मुने।।२९।।

तेनैव देवलोकास्ते दग्धप्राया बभूविरे।।

अभितो दुःखमापन्नास्सर्वे देवर्षयो मुने।।2.3.15.३०।।

इंद्रश्च भयमापेदे ऽधिकं देवेश्वरस्तदा।।

तपस्यत्यद्य कश्चिद्वै मत्पदं धर्षयिष्यति ।।३१ ।।

अकांडे चैव ब्रह्माण्डं संहरिष्यत्ययं प्रभु ।।

इति संशयमापन्ना निश्चयं नोपलेभिरे ।।३२।।

ततस्सर्वे सुसंमन्त्र्य मिथस्ते निर्जरर्षयः ।।

मल्लोकमगमन्भीता दीना मां समुपस्थिताः ।। ३३ ।।

मां प्रणम्य सुसंस्तूय सर्वे ते क्लिष्टचेतसः ।।

कृतस्वंजलयो मह्यं वृत्तं सर्वं न्यवेदयन् ।। ३४ ।।

अहं सर्वं सुनिश्चित्य कारणं तस्य सद्धिया ।।

वरं दातुं गतस्तत्र यत्र तप्यति सोऽसुरः ।। ३५ ।।

अवोचं वचनं तं वै वरं ब्रूहीत्यहं मुने ।।

तपस्तप्तं त्वया तीव्रं नादेयं विद्यते तव ।। ३६ ।।

इत्येवं मद्वचः श्रुत्वा तारकस्स महासुरः ।।

मां प्रणम्य सुसंस्तूय वरं वव्रेऽतिदारुणम् ।। ३७ ।।

तारक उवाच ।।

त्वयि प्रसन्ने वरदे किमसाध्यं भवेन्मम ।।

अतो याचे वरं त्वत्तः शृणु तन्मे पितामह ।। ३८ ।।

यदि प्रसन्नो देवेश यदि देयो वरो मम ।।

देयं वरद्वयं मह्यं कृपां कृत्वा ममोपरि ।।३९।।

त्वया च निर्मिते लोके सकलेऽस्मिन्महाप्रभो ।।
मत्तुल्यो बलवान्नूनं न भवेत्कोऽपि वै पुमान् ।। 2.3.15.४० ।।
शिववीर्यसमुत्पन्नः पुत्रस्सेनापतिर्यदा ।।
भूत्वा शस्त्रं क्षिपेन्मह्यं तदा मे मरणं भवेत् ।। ४१ ।।
इत्युक्तोऽथ तदा तेन दैत्येनाहं मुनीश्वर।।
वरं च तादृशं दत्त्वा स्वलोकमगमं द्रुतम्।।४२।।
दैत्योऽपि स वरं लब्ध्वा मनसेप्सितमुत्तमम्।।
सुप्रसन्नोतरो भूत्वा शोणिताख्यपुरं गतः।।४३।।
अभिषिक्तस्तदा राज्ये त्रैलोक्यस्यासुरैस्सह।।
शुक्रेण दैत्यगुरुणाज्ञया मे स महासुरः ।।४४।।
ततस्तु स महादैत्योऽभवस्त्रैलोक्यनायकः ।।
स्वाज्ञां प्रवर्तयामास पीडयन्सचराचरम्।।४५।।
राज्यं चकार विधिवस्त्रिलोकस्य स तारकः ।।
प्रजाश्च पालयामास पीडयन्निर्जरादिकान्।।४६।।
ततस्स तारको दैत्यस्तेषां रत्नान्युपाददे ।।
इंद्रादिलोकपालानां स्वतो दत्तानि तद्भयात् ।।४७।।
इंद्रेणैरावतस्तस्य भयात्तस्मै समर्पितः ।।
कुबेरेण तदा दत्ता निधयो नवसंख्यका ।।४८।।
वरुणेन हयाः शुभ्रा ऋषिभिः कामकृत्तथा ।।
सूर्येणोच्चैश्श्रवा दिव्यो भयात्तस्मै समर्पितः ।।४९।।
यत्र यत्र शुभं वस्तु दृष्टं तेनासुरेण हि।।
तत्तद्गृहीतं तरसा निस्सारस्त्रिभवोऽभवत् ।।2.3.15.५०।।
समुद्राश्च तथा रत्नान्यदुस्तस्मै भयान्मुने।।
अकृष्टपच्यासीत्पृथ्वी प्रजाः कामदुघाः खिलाः।।५१।।
सूर्यश्च तपते तद्वत्तद्दुःखं न यथा भवेत् ।।
चंद्रस्तु प्रभया दृश्यो वायुस्सर्वानुकूलवान् ।।५२।।
देवानां चैव यद्द्रव्यं पितॄणां च परस्य च ।।
तत्सर्वं समुपादत्तमसुरेण दुरात्मना ।। ५३ ।।

वशीकृत्य स लोकांस्त्रीन्स्वयमिंद्रो बभूव ह ।।
अद्वितीयः प्रभुश्चासीद्राज्यं चक्रेऽद्भुतं वशी।।५४।।
निस्सार्य सकलान्देवान्दैत्यानस्थापयत्ततः।।
स्वयं नियोजयामास देवयोनिस्स्वकर्मणि।।५५।।
अथ तद्बाधिता देवास्सर्वे शक्रपुरोगमाः।।
मुने मां शरणं जग्मुरनाथा अतिविह्वलाः ।।५६।। ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे तारकासुरतपोराज्यवर्णनंनाम पंचदशोऽध्यायः ।। १५ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः १६

https://sa.wikisource.org/s/w5u



।। ब्रह्मोवाच ।।

अथ ते निर्जरास्सर्वे सुप्रणम्य प्रजेश्वरम् ।।

तुष्टुवुः परया भक्त्या तारकेण प्रपीडिताः।।१।।

अहं श्रुत्वामरनुतिं यथार्थां हृदयंगमा।।

सुप्रसन्नतरो भूत्वा प्रत्यवोचं दिवौकसः ।।२।।

स्वागतं स्वाधिकारा वै निर्विघ्नाः संति वस्तुतः ।।

किमर्थमागता यूयमत्र सर्वे वदंतु मे ।। ३ ।।

इति श्रुत्वा वचो मे ते नत्वा सर्वे दिवौकसः ।।

मामूचुर्नतका दीनास्तारकेण प्रपीडिताः ।।४।।

देवा ऊचुः ।।

लोकेश तारको दैत्यो वरेण तव दर्पित ।।

निरस्यास्मान्हठात्स्थानान्यग्रहीन्नो बलात्स्वयम् ।।५।।

भवतः किमु न ज्ञातं दुःखं यन्नः उपस्थितम् ।।

तद्दुःखं नाशय क्षिप्रं वयं ते शरणं गताः ।।६।।

अहर्निशं बाधतेस्मान्यत्र तत्रास्थितान्स वै ।।

पलायमानाः पश्यामो यत्र तत्रापि तारकम् ।।७।।

तारकान्नश्च यद्दुःखं संभूतं सकलेश्वर ।।

तेन सर्वे वयं तात पीडिता विकला अति ।। ८ ।।

अग्निर्यमोथ वरुणो निर्ऋतिर्वायुरेव च।। ।।

अन्ये दिक्पतयश्चापि सर्वे यद्वशगामिनः ।।९।।

सर्वे मनुष्यधर्माणस्सर्वैः परिकरैर्युताः।।

सेवंते तं महादैत्यं न स्वतंत्राः कदाचन ।। 2.3.16.१० ।।

एवं तेनार्दिता देवा वशगास्तस्य सर्वदा ।।

तदिच्छाकार्य्यनिरतास्सर्वे तस्यानुजीविनः ।। ११ ।।

यावत्यो वनितास्सर्वा ये चाप्यप्सरसां गणाः।।
सर्वांस्तानग्रहीद्दैत्यस्तारकोऽसौ महाबली ।।१२।।
न यज्ञास्संप्रवर्तते न तपस्यंति तापसाः।।
दानधर्मादिकं किंचिन्न लोकेषु प्रवर्त्तते ।। १३ ।।
तस्य सेनापतिः क्रौंचो महापाप्यस्ति दानवः ।।
स पातालतलं गत्वा बाधते त्वनिशं प्रजाः ।। १४ ।।
तेन नस्तारकेणेदं सकलं भुवनत्रयम् ।।
हृतं हठाज्जगद्धातः पापेनाकरुणात्मना ।। १५ ।।
वयं च तत्र यास्यामो यत्स्थानं त्वं विनिर्दिशेः ।।
स्वस्थास्तद्वारितास्तेन लोकनाथसुरारिणा ।। १५ ।।
त्वं नो गतिश्च शास्ता च धाता त्राता त्वमेव हि ।।
वयं सर्वे तारकाख्यवह्नौ दग्धास्सुविह्वलाः ।। १७।।
तेन क्रूरा उपाय नः सर्वे हतबलाः कृताः।।
विकारे सांनिपाते वा वीर्यवंत्यौषधानि च ।। १८।।
यत्रास्माकं जयाशा हि हरिचक्रे सुदर्शने ।।
उत्कुंठितमभूत्तस्य कंठे पुष्पमिवार्पितम् ।। १९ ।।
ब्रह्मोवाच ।।
इत्येतद्वचनं श्रुत्वा निर्जराणामहं मुने ।।
प्रत्यवोचं सुरान्सर्वांस्तत्कालसदृशं वचः ।।2.3.16.२०।।
ब्रह्मोवाच ।।
ममैव वचसा दैत्यस्तारकाख्यस्समेधितः।।
न मत्तस्तस्य हननं युज्यते हि दिवौकसः ।।२१ ।।
ततो नैव वधो योग्यो यतो वृद्धिमुपागतः ।।
विष वृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्।।२२।।
युष्माकं चाखिलं कार्यं कर्तुं योग्यो हि शंकरः।।
किन्तु स्वयं न शक्तो हि प्रतिकर्तुं प्रचो दितः।।२३।।
तारकाख्यस्तु पापेन स्वयमेष्यति संक्षयम् ।।
यथा यूयं संविदध्वमुपदेशकरस्त्वहम् ।। २४ ।।

न मया तारको वध्यो हरिणापि हरेण च।।
नान्येनापि सुरैर्वापि मद्वरात्सत्यमुच्यते।।२५।।
शिववीर्य्यसमुत्पन्नो यदि स्यात्तनयस्सुराः।।
स एव तारकाख्यस्य हंता दैत्यस्य नापरः।।२६।।
यमुपायमहं वच्मि तं कुरुध्वं सुरोत्तमाः ।।
महादेवप्रसादेन सिद्धिमेष्यति स ध्रुवम्।।२७।।
सती दाक्षा यिणी पूर्वं त्यक्तदेहा तु याभवत् ।।
सोत्पन्ना मेनकागर्भात्सा कथा विदिता हि वः ।।२८।।
तस्या अवश्यं गिरिशः करिष्यति कर ग्रहम् ।।
तत्कुरुध्वमुपायं च तथापि त्रिदिवौकसः ।।२९।।
तथा विदध्वं सुतरां तस्यां तु परियत्नतः ।।
पार्वत्यां मेनकाजायां रेतः प्रतिनिपातने ।। 2.3.16.३० ।।
तमूर्द्ध्वरेतसं शंभुं सैव प्रच्युतरेतसम् ।।
कर्तुं समर्था नान्यास्ति तथा काप्यबला बलात् ।। ३१ ।।
सा सुता गिरिराजस्य सांप्रतं प्रौढयौवना ।।
तपस्यते हिमगिरौ नित्यं संसेवते हरम् ।।३२।।
वाक्याद्धिमवतः कालीं स्वपितुर्हठतश्शिवा ।।
सखीभ्यां सेवते सार्द्धं ध्यानस्थं परमेश्वरम् ।।३३।।
तामग्रतोऽर्च्चमानां वै त्रैलोक्ये वरवर्णिनीम् ।।
ध्यानसक्तो महेशो हि मनसापि न हीयते ।।३४।।
भार्य्यां समीहेत यथा स कालीं चन्द्रशेखरः ।।
तथा विधध्वं त्रिदशा न चिरादेव यत्नतः ।।३५।।
स्थानं गत्वाथ दैत्यस्य तमहं तारकं ततः ।।
निवारयिष्ये कुहठात्स्वस्थानं गच्छतामराः।।३६।।
इत्युक्त्वाहं सुरान्शीघ्रं तारकाख्यासुरस्य वै ।।
उपसंगम्य सुप्रीत्या समाभाष्येदमब्रवम् ।।३७।।
।। ब्रह्मोवाच ।।
तेजोसारमिदं स्वर्गं राज्यं त्वं परिपासि नः ।।

यदर्थं सुतपस्तप्तं वाञ्छसि त्वं ततोऽधिकम्।।३८।।

वरश्चाप्यवरो दत्तो न मया स्वर्गराज्यता ।।

तस्मात्स्वर्गं परित्यज्य क्षितौ राज्यं समाचर ।।३९।।

देवयोग्यानि तत्रैव कार्य्याणि निखिलान्यपि ।।

भविष्यत्यरसुरश्रेष्ठ नात्र कार्य्या विचारणा ।।2.3.16.४०।।

इत्युक्त्वाहं च संबोध्यासुरं तं सकलेश्वरः ।।

स्मृत्वा शिवं च सशिवं तत्रांतर्धानमागतः ।।४ १ ।।

तारकोऽपि परित्यज्य स्वर्गं क्षितिमथाभ्यगात्।।

शोणिताख्य पुरे स्थित्वा सर्वराज्यं चकार सः ।।४२।।

देवास्सर्वेऽपि तच्छ्रुत्वा मद्वाक्यं सुप्रणम्य माम् ।।

शक्रस्थानं ययुः प्रीत्या शक्रेण सुस माहिताः ।।४३।।

तत्र गत्वा मिलित्वा च विचार्य्य च परस्परम् ।।

ते सर्वे मरुतः प्रीत्या मघवंतं वचोऽब्रुवन् ।।४४।।

देवा ऊचुः ।। ।।

शम्भोर्य्यथा शिवायां वै रुचिजायेत कामतः ।।

मघवंस्ते प्रकर्तव्यं ब्रह्मोक्तं सर्वमेव तत् ।।४५।। ।।

ब्रह्मोवाच।।

इत्येवं सर्ववृत्तांतं विनिवेद्य सुरेश्वरम् ।।

जग्मुस्ते सर्वतो देवाः स्वं स्वं स्थानं मुदान्विताः ।।४६।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्ड देवसांत्वनवर्णनं नाम षोडशोऽध्यायः ।। १६।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः १७

https://sa.wikisource.org/s/w5v

< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः ३ (पार्वतीखण्डः)

।। ब्रह्मोवाच ।।

गतेषु तेषु देवेषु शक्रः सस्मार वै स्मरम् ।।

पीडितस्तारकेनातिदेत्येन च दुरात्मना ।। १ ।।

आगतस्तत्क्षणात्कामस्सवसंतो रतिप्रियः ।।

सावलेपो युतो रत्या त्रैलोक्य विजयी प्रभुः ।। २ ।।

प्रणामं च ततः कृत्वा स्थित्वा तत्पुरतस्स्मरः ।।

महोन्नतमनास्तात सांजलिश्शक्रमब्रवीत् ।। ३ ।।

काम उवाच ।।

किं कार्य्यं ते समुत्पन्नं स्मृतोऽहं केन हेतुना ।।

तत्त्वं कथय देवेश तत्कर्तुं समुपागतः ।। ४ ।।

।। ब्रह्मोवाच ।।

तच्छ्रुत्वा वचनं तस्य कंदर्पस्य सुरेश्वरः ।।

उवाच वचनं प्रीत्या युक्तं युक्तमिति स्तुवन् ।। ५ ।।

।। शक्र उवाच।।

तव साधु समारम्भो यन्मे कार्य्यमुपस्थितम्।।

तत्कतुर्मुद्यतोऽसि त्वं धन्योऽसि मकरध्वज ।।६।।

प्रस्तुतं शृणु मद्वाक्यं कथयामि तवाग्रतः।।

मदीयं चैव यत्कार्यं त्वदीयं तन्न चान्यथा ।।७।।

मित्राणि मम संत्येव बहूनि सुमहांति च ।।

परं तु स्मर सन्मित्रं त्वत्तुल्यं न हि कुत्रचित् ।। ८ ।।

जयार्थं मे द्वयं तात निर्मितं वजमुत्तमम् ।।

वज्रं च निष्फलं स्याद्वै त्वं तु नैव कदाचन ।। ९ ।।

यतो हितं प्रजायेत ततः को नु प्रियः परः ।।

तस्मान्मित्रवरस्त्वं हि मत्कार्य्यं कर्तुमर्हसि ।। 2.3.17.१० ।।

मम दुःखं समुत्पन्नमसाध्य चापि कालजम् ।।
केनापि नैव तच्छक्यं दूरीकर्तुं त्वया विना ।। ११ ।।
दातुः परीक्षा दुर्भिक्षे रणे शूरस्य जायते ।।
आपत्काले तु मित्रस्याशक्तौ स्त्रीणां कुलस्य हि ।। १२ ।।
विनये संकटे प्राप्तेऽवितथस्य परोक्षतः ।।
सुस्नेहस्य तथा तात नान्यथा सत्यमीरितम् ।। १३ ।।
प्राप्तायां वै ममापत्तावविवार्यायां परेण हि ।।
परीक्षा च त्वदीयाऽद्य मित्रवर्य भविष्यति ।।१४।।
न केवलं मदीयं च कार्य्यमस्ति सुखावहम् ।।
किं तु सर्वसुरादीनां कार्य्यमेतन्न संशयः ।।१५।।
ब्रह्मोवाच ।।
इत्येतन्मघवद्वाक्यं श्रुत्वा तु मकरध्वजाः ।।
उवाच प्रेमगभीरं वाक्यं सुस्मितपूर्वकम् ।। १६ ।।
।। काम उवाच ।।
किमर्थमित्थं वदसि नोत्तरं वच्म्यहं तव ।।
उपकृत्कृत्रिमं लोके दृश्यते कथ्यते न च ।।१७।।
सङ्कटे बहु यो ब्रूते स किं कार्य्यं करिष्यति ।।
तथापि च महाराज कथयामि शृणु प्रभो ।। १८ ।।
पदं ते कर्षितुं यो वै तपस्तपति दारुणम् ।।
पातयिष्याम्यहं तं च शत्रुं ते मित्र सर्वथा ।। १९ ।।
क्षणेन भ्रंशयिष्यामि कटाक्षेण वरस्त्रियाः ।।
देवर्षिदानवादींश्च नराणां गणना न मे ।।2.3.17.२०।।
वज्रं तिष्ठतु दूरे वै शस्त्राण्यन्यान्यनेकशः ।।
किं ते कार्यं करिष्यंति मयि मित्र उपस्थिते ।।२१।।
ब्रह्माणं वा हरिं वापि भ्रष्टं कुर्य्यां न संशयः ।।
अन्येषां गणना नास्ति पातयेयं हरं त्वपि ।।२२।।
पंचैव मृदवो बाणास्ते च पुष्पमया मम ।।
चापस्त्रिधा पुष्पमयश्शिंजिनी भ्रमराज्जिता ।।

बलं सुदयिता मे हि वसंतः सचिवस्स्मृतः ।। २३ ।।

अहं पञ्चबलोदेवा मित्रं मम सुधानिधिः ।। २४ ।।

सेनाधिपश्च शृंगारो हावभावाश्च सैनिकाः ।।

सर्वे मे मृदवः शक्र अहं चापि तथाविधः।।२५।।

यद्येन पूर्यते कार्य्यं धीमांस्तत्तेन योजयेत्।।

मम योग्यं तु यत्कार्य्यं सर्वं तन्मे नियोजय।।२६।।

।। ब्रह्मोवाच ।।

इत्येवं तु वचस्तस्य श्रुत्वा शक्रस्सुहर्षितः ।।

उवाच प्रणमन्वाचा कामं कांतासुखावहम् ।। २७ ।।

शक्र उवाच ।।

यत्कार्य्यं मनसोद्दिष्टं मया तात मनोभव ।।

कर्त्तुं तत्त्वं समर्थोऽसि नान्यस्मात्तस्यसम्भवः ।।२८।।

शृणु काम प्रवक्ष्यामि यथार्थं मित्रसत्तम ।।

यदर्थे च स्पृहा जाता तव चाद्य मनोभव ।।२९।।

तारकाख्यो महादैत्यो ब्रह्मणो वरमद्भुतम् ।।

अभूदजेयस्संप्राप्य सर्वेषामपि दुःखदः ।। 2.3.17.३० ।।

तेन संपीड्यते लोको नष्टा धर्मा ह्यनेकशः ।।

दुःखिता निर्जरास्सर्वे ऋषयश्च तथाखिलाः ।। ३१ ।।

देवैश्च सकलैस्तेन कृतं युद्धं यथाबलम् ।।

सर्वेषां चायुधान्यत्र विफलान्यभवन्पुरा ।। ३२ ।।

भग्नः पाशो जलेशस्य हरिं चक्रं सुदर्शनम् ।।

तत्कुण्ठितमभूत्तस्य कण्ठे क्षिप्तं च विष्णुना ।। ३३ ।।

एतस्य मरणं प्रोक्तं प्रजेशेन दुरात्मनः ।।

शम्भोर्वीर्योद्भवाद्बालान्महायोगीश्वरस्य हि ।। ३४ ।।

एतत्कार्य्यं त्वया साधु कर्तव्यं सुप्रयत्नतः ।।

ततस्स्यान्मित्रवर्य्याति देवानां नः परं सुखम् ।। ३५ ।।

ममापि विहितं तस्मात्सर्वलोकसुखावहम् ।।

मित्रधर्मं हृदि स्मृत्वा कर्तुमर्हसि सांप्रतम् ।। ३६ ।।

शंभुस्स गिरिराजे हि तपः परममास्थितः ।।

स प्रभुर्नापि कामेन स्वतंत्रः परमेश्वरः ।। ३७ ।।

तत्समीपे च देवाथ पार्वती स्वसखीयुता ।।

सेवमाना तिष्ठतीति पित्राज्ञप्ता मया श्रुतम् ।। ३८ ।।

यथा तस्यां रुचिस्तस्य शिवस्य नियतात्मनः ।।

जायते नितरां मार तथा कार्यं त्वया ध्रुवम् ।।३९।।

इति कृत्वा कृती स्यास्त्वं सर्वं दुःखं विनंक्ष्यति ।।

लोके स्थायी प्रतापस्ते भविष्यति न चान्यथा ।।2.3.17.४०।।

ब्रह्मोवाच ।।

इत्युक्तस्य तु कामो हि प्रफुल्लमुखपंकज ।।

प्रेम्णोवाचेति देवेशं करिष्यामि न संशयः ।। ४१ ।।

इत्युक्त्वा वचनं तस्मै तथेत्योमिति तद्वचः ।।

अग्रहीत्तरसा कामः शिवमायाविमोहितः ।। ४२ ।।

यत्र योगीश्वरस्साक्षात्तप्यते परमं तपः ।।

जगाम तत्र सुप्रीतस्सदारस्सवसंतकः।।४३।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे शक्र कामसंवादवर्णनं नाम सप्तदशोऽध्यायः ।। १७ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः १८



।। ब्रह्मोवाच ।।

तत्र गत्वा स्मरो गर्वी शिवमायाविमोहितः ।।

मोहकस्समधोश्चादौ धर्मं विस्तारयन्स्थितः ।। १ ।।

वसंतस्य च यो धर्म्मः प्रससार स सर्वतः ।।

तपस्थाने महेशस्यौषधिप्रस्थे मुनीश्वर ।। २ ।।

वनानि च प्रफुल्लानि पादपानां महामुने ।।

आसन्विशेषतस्तत्र तत्प्रभावान्मुनीश्वर ।। ३ ।।

पुष्पाणि सहकाराणामशोकवनिकासु वै ।।

विरेजुस्सुस्मरोद्दीपकाराणि सुरभीण्यपि ।।४।।

कैरवाणि च पुष्पाणि भ्रमराकलितानि च ।।

बभूबुर्मदनावेशकराणि च विशेषतः ।। ५ ।।

सकामोद्दीपनकरं कोकिलाकलकूजितम् ।।

आसीदति सुरम्यं हि मनोहरमतिप्रियम् ।। ६ ।।

भ्रमराणां तथा शब्दा विविधा अभवन्मुने ।।

मनोहराश्च सर्वेषां कामोद्दीपकरा अपि ।। ७ ।।

चंद्रस्य विशदा कांतिर्विकीर्णा हि समंतत ।।

कामिनां कामिनीनां च दूतिका इव साभवत् ।। ८ ।।

मानिनां प्रेरणायासीत्तत्काले कालदीपिका ।।

मारुतश्च सुखः साधो ववौ विरहिणोऽप्रियः ।। ९ ।।

एवं वसंतविस्तारो मदनावेशकारकः ।।

वनौकसां तदा तत्र मुनीनां दुस्सहोऽत्यभूत् ।। 2.3.18.१० ।।

अचेतसामपि तदा कामासक्तिरभून्मुने ।।

सुचेतासां हि जीवानां सेति किं वर्ण्यते कथा।।१ १ ।।

एवं चकार स मधुस्स्वप्रभावं सुदुस्सहम्।।

सर्वेषा चैव जीवानां कामोद्दीपनकारकः ।।१२।।
अकालनिमितं तात मधोर्वीक्ष्य हरस्तदा ।।
आश्चर्य्यं परमं मेने स्वलीलात्ततनुः प्रभुः ।। १३ ।।
अथ लीलाकरस्तत्र तपः परमदुष्करम् ।।
तताप स वशीशो हि हरो दुःखहरः प्रभुः ।। १४ ।।
वसंते प्रसृते तत्र कामो रतिसमन्वितः ।।
चूतं बाणं समाकृष्य स्थितस्तद्वामपार्श्वतः ।। १५ ।।
स्वप्रभावं वितस्तार मोहयन्सकलाञ्जनान् ।।
रत्यायुक्तं तदा कामं दृष्ट्वा को वा न मोहितः ।। १६ ।।
एवं प्रवृत्तसुरतौ शृंगारोऽपि गणैस्सह ।।
हावभावयुतस्तत्र प्रविवेश हरांतिकम् ।। १७ ।।
मदनः प्रकटस्तत्र न्यवसच्चित्तगो बहिः ।।
न दृष्टवांस्तदा शंभोश्छिद्रं येन प्रविश्यते ।।१८।।
यदा चाप्राप्तविवरस्तस्मिन्योगिवरे स्मरः ।।
महादेवस्तदा सोऽभून्महाभयविमोहितः ।। १९ ।।
ज्वलज्ज्वालाग्निसंकाशं भालनेत्रसमन्वितम् ।।
ध्यानस्थं शंकरं को वा समासादयितुं क्षमः ।। 2.3.18.२० ।।
एतस्मिन्नंतरे तत्र सखीभ्यां संयुता शिवा ।।
जगाम शिवपूजार्थं नीत्वा पुष्पाण्यनेकशः ।। २१ ।।
पृथिव्यां यादृशं लोकैस्सौंदर्यं वर्ण्यते महत् ।।
तत्सर्वमधिकं तस्यां पार्वत्यामस्ति निश्चितम् ।। ।। २२ ।।
आर्तवाणि सुपुष्पाणि धृतानि च तया यदा ।।
तत्सौंदर्यं कथं वर्ण्यमपि वर्षशतैरपि ।।२३।।
यदा शिवसमीपे तु गता सा पर्वतात्मजा ।।
तदैव शंकरो ध्यानं त्यक्त्वा क्षणमवस्थितः ।।२४।।
तच्छिद्रं प्राप्य मदनः प्रथमं हर्षणेन तु ।।
बाणेन हर्षयामास पार्श्वस्थं चन्द्रशेखरम् ।। २५ ।।
शृंगारैश्च तदा भावैस्सहिता पार्वती हरम् ।।

जगाम कामसाहाय्ये मुने सुरभिणा सह ।। २६ ।।

तदेवाकृष्य तच्चापं रुच्यर्थं शूलधारिणः ।।

द्रुतं पुष्पशरं तस्मै स्मरोऽमुंचत्सुसंयतः ।। २७ ।।

यथा निरंतरं नित्यमागच्छति तथा शिवम् ।।

तन्नमस्कृत्य तत्पूजां कृत्वा तत्पुरतः स्थिता ।।२८।।

सा दृष्टा पार्वती तत्र प्रभुणा गिरिशेन हि ।।

विवृण्वती तदांगानि स्त्रीस्वभावात्सुलज्जया ।। २९ ।।

सुसंस्मृत्य वरं तस्या विधिदत्तं पुरा प्रभुः ।।

शिवोपि वर्णयामास तदंगानि मुदा मुने ।। 2.3.18.३० ।।

शिव उवाच ।।

कि मुखं किं शशांकश्च किं नेत्रे चोत्पले च किम् ।।

भ्रुकुट्यौ धनुषी चैते कंदर्पस्य महात्मनः ।।३१ ।।

अधरः किं च बिंबं किं किं नासा शुकचंचुका ।।

किं स्वरः कोकिलालापः किं मध्यं चाथ वेदिका ।। ३२ ।।

किं गतिर्वर्ण्यते ह्यस्याः किं रूपं वर्ण्यते मुहुः ।।

पुष्पाणि किं च वर्ण्यंते वस्त्राणि च तथा पुनः ।।३३।।

लालित्यं चारु यत्सृष्टौ तदेकत्र विनिर्मितम् ।।

सर्वथा रमणीयानि सर्वांगानि न संशयः ।।३४।।

अहो धन्यतरा चेयं पार्वत्यद्भुतरूपिणी ।।

एतत्समा न त्रैलोक्ये नारी कापि सुरूपिणी।।३५।।

सुलावण्यानिधिश्चेयमद्भुतांगानि बिभ्रती ।।

विमोहिनी मुनीनां च महासुखविवर्द्धिनी ।। ३६ ।।

।। ब्रह्मोवाच ।।

इत्येवं वर्णयित्वा तु तदंगानि मुहुर्मुहुः ।।

विधिदत्तवराध्यासाद्धरस्तु विरराम ह ।।३७।।

हस्तं वस्त्रांतरे यावदचालयत शंकरः ।।

स्त्रीस्वभावाच्च सा तत्र लज्जिता दूरतो गता ।। ३८।।

विवृण्वती निजांगानि पश्यंती च मुहुर्मुहुः ।।

सुवीक्षणैर्महामोदात्सुस्मिताभूच्छिवा मुने ।।३९।।
एवं चेष्टां तदा दृष्ट्वा शंभुर्मोहमुपागतः।।
उवाच वचनं चैवं महालीलो महेश्वरः ।।2.3.18.४०।।
अस्या दर्शनमात्रेण महानंदो भवत्यलम् ।।
यदालिंगनमेनस्याः कुर्य्यां किन्तु ततस्सुखम् ।। ४१ ।।
क्षणमात्रं विचार्य्येत्थं संपूज्य गिरिजां ततः ।।
प्रबुद्धस्य महायोगी सुविरक्तो जगाविति ।। ४२ ।।
किं जातं चरितं चित्रं किमहं मोहमागतः ।।
कामेन विकृतश्चाद्य भूत्वापि प्रभुरीश्वरः ।। ४३ ।।
ईश्वरोहं यदीच्छेयं परांगस्पर्शनं खलु।।
तर्हि कोऽन्योऽक्षमः क्षुद्रः किं किं नैव करिष्यति ।।४४।।
एवं वैराग्यमासाद्य पर्य्यंकासादनं च तत्।।
वारयामास सर्वात्मा परेशः किं पतेदिह ।।४५।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितान्तर्गततृतीये पार्वतीखण्डे कामकृतविकारवर्णननामाष्टादशोऽध्यायः।।१८।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः १९



।। नारद उवाच।।

ब्रह्मन्विधे महाभाग किं जातं तदनंतरम्।।

कथय त्वं प्रसादेन तां कथां पापनाशिनीम् ।। १ ।।

।। ब्रह्मोवाच ।।

श्रूयतां सा कथा तात यज्जातं तदनंतरम् ।।

तव स्नेहात्प्रवक्ष्यामि शिवलीलां मुदावहाम् ।। २ ।।

धैर्यस्य व्यसनं दृष्ट्वा महायोगी महेश्वरः ।।

विचिंतितं मनस्येवं विस्मितोऽतिततः परम् ।। ३ ।।

।। शिव उवाच ।।

किमु विघ्नाः समुत्पन्नाः कुर्वतस्तप उत्तमम् ।।

केन मे विकृतं चित्तं कृतमत्र कुकर्मिणा ।। ४ ।।

कुवर्णनं मया प्रीत्या परस्त्र्युपरि वै कृतम् ।।

जातो धर्मविरोधोऽत्र श्रुतिसीमा विलंघिता ।। ५ ।।

।। ब्रह्मोवाच ।।

विचिंत्येत्थं महायोगी परमेशस्सतां गतिः ।।

दिशो विलोकयामास परितश्शंकितस्तदा ।। ६ ।।

वामभागे स्थितं कामं ददर्शाकृष्टबाणकम् ।।

स्वशरं क्षेप्तुकामं हि गर्वितं मूढचेतसम् ।। ७ ।।

तं दृष्ट्वा तादृशं कामं गिरीशस्य परात्मनः ।।

संजातः क्रोधसंमर्दस्तत्क्षणादपि नारद। ।। ८ ।।

कामः स्थितोऽन्तरिक्षे स धृत्वा तत्सशरं धनुः ।।

चिक्षेपास्त्रं दुर्निवारममोघं शंकरे मुने ।। ९ ।।

बभूवामोघमस्त्रं तु मोघं तत्परमात्मनि ।।

समशाम्यत्ततस्तस्मिन्संक्रुद्धे परमेश्वरे ।। 2.3.19.१० ।।

मोघीभूते शिवे स्वेस्त्रे भयमापाशु मन्मथः ।।
चकंपे च पुरः स्थित्वा दृष्ट्वा मृत्युंजयं प्रभुम् ।। ११ ।।
सस्मार त्रिदशान्सर्वान्शक्रादीन्भयविह्वलः ।।
स स्मरो मुनिशार्दूल स्वप्रयासे निरर्थके ।। १२ ।।
कामेन सुस्मृता देवाश्शक्राद्यास्ते मुनीश्वर ।।
आययुः सकलास्ते हि शंभुं नत्वा च तुष्टुवुः ।। १३ ।।
स्तुतिं कुर्वत्सु देवेषु कुद्धस्याति हरस्य हि ।।
तृतीयात्तस्य नेत्राद्वै निस्ससार ततो महान् ।। १४ ।।
ललाट मध्यगात्तस्मात्सवह्निर्द्रुतसम्भवः ।।
जज्वालोर्द्ध्वशिखो दीप्तः प्रलयाग्निसमप्रभः ।। १५ ।।
उत्पत्य गगने तूर्णं निष्पत्य धरणी तले ।।
भ्रामंभ्रामं स्वपरितः पपात मेदनीं परि ।। १६
भस्मसात्कृतवान्साधो मदनं तावदेव हि ।।
यावच्च मरुतां वाचः क्षम्यतां क्षम्यतामिति ।। १७ ।।
हते तस्मिन्स्मरे वीरे देव दुःखमुपागताः ।।
रुरुदुर्विह्वलाश्चातिक्रोशतः किमभूदिति ।। १८ ।।।।
श्वेतांगा विकृतात्मा च गिरिराजसुता तदा ।।
जगाम मंदिरं स्वं च समादाय सखीजनम् ।। १९ ।।
क्षणमात्रं रतिस्तत्र विसंज्ञा साभवत्तदा ।।
भर्तृमृत्युजदुःखेन पतिता सा मृता इव ।।2.3.19.२०।।
जातायां चैव संज्ञायां रतिरत्यंतविह्वला।।
विललाप तदा तत्रोच्चरंती विविधं वचः ।। २१ ।।
।। रतिरुवाच ।।
किं करोमि क्व गच्छामि किं कृतं दैवतैरिह ।।
मत्स्वामिनं समाहूय नाशयामासुरुद्धतम् ।। २२ ।।
हा हा नाथ स्मर स्वामिन्प्राणप्रिय सुखप्रद ।।
इदं तु किमभूदत्र हा हा प्रिय प्रियेति च ।।२३ ।।
।। ब्रह्मोवाच ।।।

इत्थं विलपती सा तु वदंती बहुधा वचः ।।

हस्तौ पादौ तदास्फाल्य केशानत्रोटयत्तदा ।।२४।।

तद्विलापं तदा श्रुत्वा तत्र सर्वे वनेचराः ।।

अभवन्दुःखितास्सर्वे स्थावरा अपि नारद ।।२५।।

एतस्मिन्नंतरे तत्र देवाश्शक्रादयोऽखिलाः ।।

रतिमूचुस्समाश्वास्य संस्मरंतो महेश्वरम् ।।२६।।

।। देवा ऊचुः ।।

किंचिद्भस्म गृहीत्वा तु रक्ष यत्नाद्भयं त्यज।।

जीवयिष्यति स स्वामी लप्स्यसे त्वं पुनः प्रियम् ।। २७ ।।

सुखदाता न कोप्यस्ति दुःखदाता न कश्चन ।।

सर्वोऽपि स्वकृतं भुंक्ते देवाञ्शोचसि वै वृथा ।। २८ ।।।

।। ब्रह्मोवाच ।।

इत्याश्वास्य रतिं देवास्सर्वे शिवमुपागताः ।।

सुप्रसाद्य शिवं भक्त्या वचनं चेदमब्रुवन् ।।२९।।

।। देवा ऊचुः ।।

भगवञ्छ्रूयतोमेतद्वचनं नश्शुभं प्रभो।।

कृपां कृत्वा महेशान शरणागतवत्सल ।।2.3.19.३०।।

सुविचारय सुप्रीत्या कृति कामस्य शंकर ।।

कामेनैतत्कृतं यत्र न स्वार्थं तन्महेश्वर ।।३१।।

दुष्टेन पीडितैर्देवैस्तारकेणाऽखिलैर्विभो ।।

कर्म तत्कारितं नाथ नान्यथा विद्धि शंकर ।।३२।।

रतिरेकाकिनी देव विलापं दुःखिता सती ।।

करोति गिरिश त्वं च तामाश्वासय सर्वदा ।।३३।।

संहारं कर्तुकामोऽसि क्रोधेनानेन शंकर ।।

दैवतैस्सह सर्वेषां हतवांस्तं यदि स्मरम्।।३४।।

दुःखं तस्या रतेर्दृष्ट्वा नष्टप्रायाश्च देवताः।।

तस्मात्त्वया च कर्तव्यं रत्याशोकापनोदनम् ।। ३५ ।।

।। ब्रह्मोवाच ।।

इत्याकर्ण्य वचस्तेषां प्रसन्नो भगवाञ्छिवः ।।

देवानां सकलानां च वचनं चेदमब्रवीत् ।। ३६ ।।

।। शिव उवाच ।। ।।

देवाश्च ऋषयस्सर्वे मद्वचश्शृणुतादरात् ।।

मत्कोपेन च यज्जातं तत्तथा नान्यथा भवत् ।। ३७ ।।

अनंगस्तावदेव स्यात्कामो रतिपतिः प्रभुः ।।

यावच्चावतरेत्कृष्णो धरण्यां रुक्मिणीपतिः ।। ३८ ।।

द्वारकायां यदा स्थित्वा पुत्रानुत्पादयिष्यति।।

तदा कृष्णस्तु रुक्मिण्यां काममुत्पादयिष्यति ।।३९।।

प्रद्युम्ननाम तस्यैव भविष्यति न संशयः ।।

जातमात्रं तु तं पुत्रं शंबरस्संहरिष्यति ।। 2.3.19.४० ।।

हृत्वा प्रास्य समुद्रं तं शंबरो दानवोत्तमः ।।

मृतं ज्ञात्वा वृथा मूढो नगरं स्वं गमिष्यति ।।४१।।

तावच्च नगरं तस्य रते स्थेयं यथासुखम् ।।

तत्रैव स्वपतेः प्राप्तिः प्रद्युम्नस्य भविष्यति ।। ४२ ।।

तत्र कामो मिलित्वा तं हत्वा शम्बरमाहवे ।।

भविष्यति सुखी देवाः प्रद्युम्नाख्यस्स्वकामिनीम् ।। ४३ ।।

तदीयं चैव यद्द्रव्यं नीत्वा स नगरं पुनः ।।

गमिष्यति तया सार्द्धं देवास्सत्यं वचो मम ।। ४४ ।।

ब्रह्मोवाच ।।

इति श्रुत्वा वचश्शंभोर्देवा ऊचुः प्रणम्य तम् ।।

किंचिदुच्छ्वसिताश्चित्ते करौ बद्ध्वा नतांगकाः ।। ४५ ।।

देवा ऊचुः ।।

देवदेव महादेव करुणासागर प्रभो ।।

शीघ्रं जीवय कामं त्वं रक्ष प्राणान् रतेर्हर ।।४६।।

ब्रह्मोवाच।।

इत्याकर्ण्यामरवचः प्रसन्नः परमेश्वरः।।

पुनर्बभाषे करुणासागरस्सकलेश्वरः ।। ४७ ।।

शिव उवाच ।।

हे देवास्सुप्रसन्नोऽस्मि जीवयिष्यामि चांतरे ।।

कामः स मद्गणो भूत्वा विहरिष्यति नित्यशः ।। ४८ ।।

नाख्येयमिदमाख्यानं कस्यचित्पुरतस्सुराः ।।

गच्छत स्वस्थलं दुखं नाशयिष्यामि सर्वतः ।। ४९ ।।

ब्रह्मोवाच ।।

इत्युक्त्वांतर्दधे रुद्रो देवानां स्तुवतां तदा।।

सर्वे देवास्सुप्रस्सन्ना बभूवुर्गतविस्मयाः ।।2.3.19.५० ।।

ततस्तां च समाश्वास्य रुद्रस्य वचने स्थिताः।।

उक्त्वा वचस्तदीयं च स्वं स्वं धाम ययुर्मुने ।।५१।।

कामपत्नी समादिष्टं नगरं सा गता तदा ।।

प्रतीक्षमाणा तं कालं रुद्रादिष्टं मुनीश्वर ।। ५२ ।। ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे कामनाशवर्णनं नामैकोनविंशोऽध्यायः ।। १९ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः २०



नारद उवाच ।। ।।

विधे नेत्रसमुद्भूतवह्निज्वाला हरस्य सा ।।

गता कुत्र वद त्वं तच्चरित्रं शशिमौलिनः ।। १ ।।

।। ब्रह्मोवाच ।। ।।

यदा भस्म चकाराशु तृतीयनयनानलः ।।

शम्भोः कामं प्रजज्वाल सर्वतो विफलस्तदा ।।२।।

हाहाकारो महानासीत्त्रैलोक्ये सचराचरे।

सर्वदेवर्षयस्तात शरणं मां ययुर्द्रुतम् ।।३।।

सर्वे निवेदयामासुस्तद्दुखं मह्यमाकुलाः ।।

सुप्रणम्य सुसंस्तुत्य करौ बद्ध्वा नतानना ।। ४ ।।

तच्छ्रुत्वाहं शिवं स्मृत्वा तद्धेतुं सुविमृश्य च ।।

गतस्तत्र विनीतात्मा त्रिलोकावनहेतवे ।। ५ ।।

संदग्धुकामः स शुचिज्वालामालातिदीपितः ।।

स्तंभितोऽरं मया शंभुप्रसादात्ससुतेजसा ।। ६ ।।

अथ क्रोधमयं वह्निं दग्धुकाम जगत्त्रयम् ।।

वाडवांतकमार्षं च सौम्यज्वालामुखं मुने ।।७।।

तं वाडवतनुमहं समादाय शिवेच्छया ।।

सागरं समगां लोकहिताय जगतां पतिः ।। ८ ।।

आगतं मां समालोक्य सागरस्सांजलिर्मुने ।।

धृत्वा च पौरुषं रूपमागतस्संनिधिं मम ।। ९ ।।

सुप्रणम्याथ मां सिंधुस्संस्तूय च यथा विधि ।।

स मामुवाच सुप्रीत्या सर्वलोकपितामहम् ।।2.3.20.१०।।

सागर उवाच ।।

किमर्थमागतोऽसि त्वं ब्रह्मन्नत्राखिलाधिप ।।

तन्निदेशय सुप्रीत्या मत्वा मां च स्वसेवकम् ।। ११ ।।
अथाहं सागरवचश्श्रुत्वा प्रीतिपुरस्सरम् ।।
प्रावोचं शंकरं स्मृत्वा लौकिकं हितमावहन् ।। १२ ।।
ब्रह्मोवाच ।।
शृणु तात महाधीमन्सर्वलोकहितावह ।।
वच्म्यहं प्रीतितस्सिंधो शिवेच्छाप्रेरितो हृदा ।। १३ ।।
अयं क्रोधो महेशस्य वाडवात्मा महाप्रभुः ।।
दग्ध्वा कामं द्रुतं सर्वं दग्धुकामोऽभवत्ततः ।।१४।।
प्रार्थितोऽहं सुरैश्शीघ्रं पीडितैश्शंकरेच्छया ।।
तत्रागत्य द्रुतं तं वै तात स्तंभितवाञ्शुचिम् ।।१५।।
वाडवं रूपमाधत्त तमादायाग तोत्र ह ।।
निर्दिशामि जलाधार त्वामहं करुणाकरः ।। १६ ।।
अयं क्रोधी महेशस्य वाडवं रूपमाश्रितः ।।
ज्वालामुखस्त्वया धार्य्यो यावदाभूतसंप्लवम् ।।१७।।
यदात्राहं समागम्य वत्स्यामि सरितां पते ।।
तदा त्वया परित्याज्यः क्रोधोऽयं शांकरोऽद्भुतः ।।१८।।
भोजनं तोयमेतस्य तव नित्यं भविष्यति ।।
यत्नादेवावधार्य्योऽयं यथा नोपैति चांतरम् ।। १९ ।।
ब्रह्मोवाच ।।
इत्युक्तो हि मया सिंधुरंगीचक्रे तदा ध्रुवम् ।।
ग्रहीतुं वाडवं वह्निं रौद्रं चाशक्यमन्यतः ।। 2.3.20.२० ।।
ततः प्रविष्टो जलधौ स वाडवतनुः शुचिः ।।
वार्य्योघान्सुदहंस्तस्य ज्वालामालाभिदीपितः ।। २१ ।।
ततस्संतुष्टचेतस्कस्स्वं धामाहं गतो मुने ।।
अंतर्धानमगात्सिंधुर्दिव्यरूपः प्रणम्य माम् ।।२२।।
स्वास्थ्यं प्राप जगत्सर्वं निर्मुक्तं तद्भवाद्भयात् ।।

देवा बभूवुः सुखिनो मुनयश्च महामुने २३ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखंडे वडवानलचरितं नाम विंशोऽध्यायः ।। २० ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः २१



नारद उवाच ।।

विधे तात महाप्राज्ञ विष्णुशिष्य त्रिलोककृत् ।।

अद्भुतेयं कथा प्रोक्ता शंकरस्य महात्मनः ।। १ ।।

भस्मीभूते स्मरे शंभुतृतीयनयनाग्निना ।।

तस्मिन्प्रविष्टे जलधौ वद त्वं किमभूत्ततः ।।२।।

किं चकार ततो देवी पार्वती कुधरात्मजः ।।

गता कुत्र सखीभ्यां सा तद्वदाद्य दयानिधे ।।३।।

।। ब्रह्मोवाच ।।

शृणु तात महाप्राज्ञ चरितं शशिमौलिनः ।।

महोतिकारकस्यैव स्वामिनो मम चादरात् ।। ४ ।।

यदाहच्छंभुनेत्रोद्भवो हि मदनं शुचिः ।।

महाशब्दोऽद्भुतोऽभूद्वै येनाकाशः प्रपूरितः ।। ५ ।।

तेन शब्देन महता कामं दग्धं समीक्ष्य च।।

सखीभ्यां सह भीता सा ययौ स्वगृहमाकुला।।६।।

तेन शब्देन हिमवान्परिवारसमन्वितः ।।

विस्मितोऽभूदतिक्लिष्टस्सुतां स्मृत्वा गतां ततः ।। ७ ।।

जगाम शोकं शैलेशो सुतां दृष्ट्वातिविह्वलाम् ।।

रुदतीं शंभुविरहादाससादाचलेश्वरः ।। ८ ।।

आसाद्य पाणिना तस्या मार्जयन्नयनद्वयम् ।।

मा बिभीहि शिवेऽरोदीरित्युक्त्वा तां तदाग्रहीत् ।।९।।

क्रोडे कृत्वा सुतां शीघ्रं हिम वानचलेश्वरः ।।

स्वमालयमथानिन्ये सांत्वयन्नतिविह्वलाम् ।।2.3.21.१०।।

अंतर्हिते स्मरं दग्ध्वा हरे तद्विरहाच्छिवा ।।

विकलाभूद् भृशं सा वै लेभे शर्म न कुत्रचित् ।।११।।

पितुर्गृहं तदा गत्वा मिलित्वा मातरं शिवा ।।

पुनर्जातं तदा मेने स्वात्मानं सा धरात्मजा ।। ।।१२।।

निनिंद च स्वरूपं सा हा हतास्मीत्यथाब्रवीत् ।।

सखीभिर्बोधिता चापि न बुबोध गिरीन्द्रजा ।।१३।।

स्वपती च पिबंती च सा स्नाती गच्छती शिवा ।।

तिष्ठंती च सखीमध्ये न किंचित्सुखमाप ह ।।१४।।

धिक्स्वरूपं मदीयं च तथा जन्म च कर्म च ।।

इति ब्रुवंती सततं स्मरंती हरचेष्टितम् ।।१५।।

एवं सा पार्वती शंभुविरहोत्क्लिष्टमानसा ।।

सुखं न लेभे किंचिद्राऽब्रवीच्छिवशिवेति च ।। १६ ।।

निवसंती पितुर्गेहे पिनाकिगतचेतना ।।

शुशोचाथ शिवा तात मुमोह च मुहुर्मुहुः ।। १७ ।।

शैलाधिराजोप्यथ मेनकापि मैनाकमुख्यास्तनयाश्च सर्वे।।

तां सांत्वयामासुरदीनसत्त्वा हरं विसस्मार तथापि नो सा ।।१८।।

अथ देवमुने धीमन्हिमव त्प्रस्तरे तदा ।।

नियोजितो बलभिदागमस्त्वं कामचारतः ।। १९ ।।

ततस्त्वं पूजितस्तेन भूधरेण महात्मना ।।

कुशलं पृष्टवांस्तं वै तदाविष्टो वरासने ।। 2.3.21.२० ।।

ततः प्रोवाच शैलेशः कन्याचरितमादितः ।।

हरसेवान्वितं कामदहनं च हरेण ह ।। २१ ।।

श्रुत्वावोचो मुने त्वं तु तं शैलेशं शिवं भज ।।

तमामंत्र्योदतिष्ठस्त्वं संस्मृत्य मनसा शिवम् ।। २२ ।।

तं समुत्सृज्य रहसि कालीं तामगमंस्त्वरा ।।

लोकोपकारको ज्ञानी त्वं मुने शिववल्लभः ।।२३।।

आसाद्य कालीं संबोध्य तद्धिते स्थित आदरात्।।

अवोचस्त्वं वचस्तथ्यं सर्वेषां ज्ञानिनां वरः ।।२४।।

नारद उवाच ।।

शृणु कालि वचो मे हि सत्यं वच्मि दयारतः।।

सर्वथा ते हितकरं निर्विकारं सुकामदम् ।। २५ ।।
सेवितश्च महादेवस्त्वयेह तपसा विना ।।
गर्ववत्या यदध्वंसीद्दीनानुग्रहकारकः ।।२६।।
विरक्तश्च स ते स्वामी महायोगी महेश्वरः ।।
विसृष्टवान्स्मरं दग्ध्वा त्वां शिवे भक्तवत्सलः ।। २७ ।।
तस्मात्त्वं सुतपोयुक्ता चिरमाराधयेश्वरम् ।।
तपसा संस्कृतां रुद्रस्स द्वितीयां करिष्यति ।।२८।।
त्वं चापि शंकरं शम्भुं न त्यक्ष्यसि कदाचन ।।
नान्यं पतिं हठाद्देवि ग्रहीष्यसि शिवादृते ।। २९ ।।
।। ब्रह्मोवाच ।। ।।
इत्याकर्ण्यवचस्ते हि मुने सा भूधरात्मजा ।।
किंचिदुच्छ्वसिता काली प्राह त्वां सांजलिर्मुदा ।।2.3.21.३०।।
शिवोवाच ।।
त्वं तु सर्वज्ञ जगतामुपकारकर प्रभो ।।
रुद्रस्याराधनार्थाय मंत्रं देहि मुने हि मे ।। ३१ ।।
न सिद्यति क्रिया कापि सर्वेषां सद्गुरुं विना ।।
मया श्रुता पुरा सत्यं श्रुतिरेषा सनातनी ।। ३२ ।।
ब्रह्मोवाच ।।
इति श्रुत्वा वचस्तस्याः पार्वत्या मुनिसत्तमः ।।
पंचाक्षरं शम्भुमन्त्रं विधिपूर्वमुपादिशः ।। ३३ ।।
अवोचश्च वचस्तां त्वं श्रद्धामुत्पादयन्मुने।।
प्रभावं मन्त्रराजस्य तस्य सर्वाधिकं मुने ।। ३४।।
नारद उवाच ।।
शृणु देवि मनोरस्य प्रभावं परमाद्भुतम् ।।
यस्य श्रवणमात्रेण शंकरस्तु प्रसीददति ।। ३५ ।।
मंत्रोयं सर्वमंत्राणामधिराजश्च कामदः ।।
भुक्तिमुक्तिप्रदोऽत्यंतं शंकरस्य महाप्रियः ।। ३६ ।।
सुभगे येन जप्तेन विधिना सोऽचिराद् द्रुतम् ।।

आराधितस्ते प्रत्यक्षो भविष्यति शिवो ध्रुवम्।।३७।।

चिंतयती च तद्रूपं नियमस्था शराक्षरम् ।।

जप मन्त्रं शिवे त्वं हि संतुष्यति शिवो द्रुतम् ।। ३८ ।।

एवं कुरु तप साध्वि तपस्साध्यो महेश्वरः ।।

तपस्येव फलं सर्वैः प्राप्यते नान्यथा क्वचित् ।।३९।।

।। ब्रह्मोवाच ।।

एवमुक्त्वा तदा कालीं नारद त्वं शिवप्रियः।।

यादृच्छिकोऽगमस्त्वं तु स्वर्गं देवहिते रतः ।। 2.3.21.४० ।।

पार्वती च तदा श्रुत्वा वचनं तव नारद ।।

सुप्रसन्ना तदा प्राप पंचाक्षरमनूत्तमम् ।। ४१ ।। ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे नारदोपदेशो नामैकविंशोऽध्यायः ।। २१ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः २२



ब्रह्मोवाच ।।

त्वयि देवमुने याते पार्वती हृष्टमानसा ।।

तपस्साध्यं हरं मेने तपोर्थं मन आदधे ।। १ ।।

ततः सख्यौ समादाय जयां च विजयां तथा।।

मातरं पितरं चैव सखीभ्यां पर्यपृच्छत ।।२।।

प्रथमं पितरं गत्वा हिमवन्तं नगेश्वरम् ।।

पर्यपृच्छत्सुप्रणम्य विनयेन समन्विता ।। ३ ।।

सख्यावूचतुः ।।

हिमवञ्च्छ्रूयतां पुत्री वचनं कथ्यतेऽधुना ।।

सा स्वयं चैव देहस्य रूपस्यापि तथा पुनः ।। ४ ।।

भवतो हि कुलस्यास्य साफल्यं कर्तुमिच्छति ।।

तपसा साधनीयोऽसौ नान्यथा दृश्यतां व्रजेत् ।।५।।

तस्माच्च पर्वतश्रेष्ठ देह्याज्ञां भवताधुना ।।

तपः करोतु गिरिजा वनं गत्वेति सादरम् ।।६।।

ब्रह्मोवाच ।।

इत्येवं च तदा पृष्टस्सखीभ्यां मुनिसत्तम ।।

पार्वत्या सुविचार्याथ गिरिराजोऽब्रवीदिदम् ।। ७ ।।

हिमालय उवाच ।।

मह्यं च रोचतेऽत्यर्थं मेनायै रुच्यतां पुनः ।।

यथेदं भवितव्यं च किमतः परमुत्तमम् ।। ८ ।।

साफल्यं तु मदीयस्य कुलस्य च न संशयः ।।

मात्रे तु रुच्यते चेद्वै ततः शुभतरं नु किम्।।९।।

ब्रह्मोवाच ।।

इत्येवं वचनं पित्रा प्रोक्तं श्रुत्वा तु ते तदा ।।

जग्मतुर्मातरं सख्यौ तदाज्ञप्ते तया सह ।। 2.3.22.१० ।।
गत्वा तु मातरं तस्याः पार्वत्यास्ते च नारद ।।
सुप्रणम्य करो बध्वोचतुर्वचनमादरात् ।। ११ ।।
सख्यावूचतुः ।।
मातस्त्वं वचनं पुत्र्याः शृणु देवि नमोऽस्तु ते ।।
सुप्रसन्नतया तद्वै श्रुत्वा कर्तुमिहार्हसि ।।१२।।
तप्तुकामा तु ते पुत्री शिवार्थं परमं तपः।।
प्राप्तानुज्ञा पितुश्चैव तुभ्यं च परिपृच्छति ।। १३ ।।
इयं स्वरूपसाफल्यं कर्तुकामा पतिव्रते ।।
त्वदाज्ञया यदि जायेत तप्यते च तथा तपः ।। १४ ।।
।। ब्रह्मोवाच ।।
इत्युक्त्वा च ततस्सख्यौ तूष्णीमास्तां मुनीश्वर ।।
नांगीचकार मेना सा तद्वाक्यं खिन्नमानसा ।। १५ ।।
ततस्सा पार्वती प्राह स्वयमेवाथ मातरम् ।।
करौ बद्ध्वा विनीतात्मा स्मृत्वा शिवपदांबुजम् ।। १६।।
पार्वत्युवाच ।।
मातस्तप्तुं गमिष्यामि प्रातः प्राप्तुं महेश्वरम् ।।
अनुजानीहि मां गंतुं तपसेऽद्य तपोवनम् ।। १७ ।।
।। ब्रह्मोवाच ।।
इत्याकर्ण्य वचः पुत्र्या मेना दुःख मुपागता ।।
सोपाहूय तदा पुत्रीमुवाच विकला सती ।। १८ ।।
मेनोवाच ।।
दुःखितासि शिवे पुत्री तपस्तप्तुं पुरा यदि ।।
तपश्चर गृहेऽद्य त्वं न बहिर्गच्छ पार्वति ।। १९ ।।
कुत्र यासि तपः कर्तुं देवास्संति गृहे मम ।।
तीर्थानि च समस्तानि क्षेत्राणि विविधानि च ।। 2.3.22.२० ।।
कर्तव्यो न हठः पुत्रि गंतव्यं न बहिः क्वचित् ।।
साधितं किं त्वया पूर्वं पुनः किं साधयिष्यसि ।।२१।।

शरीरं कोमलं वत्से तपस्तु कठिनं महत् ।।
एवस्मात्तु त्वया कार्यं तपोऽत्र न बहिर्व्रज ।।२२।।
स्त्रीणां तपोवनगतिर्न श्रुता कामनार्थिनी ।।
तस्मात्त्वं पुत्रि मा कार्षीस्तपोर्थं गमनं प्रति ।।२३।।
।। ब्रह्मोवाच ।।
इत्येवं बहुधा पुत्री तन्मात्रा विनवारिता ।।
संवेदे न सुखं किंचिद्विनाराध्य महेश्वरम् ।।२४।।
तपोनिषिद्धा तपसे वनं गंतुं च मेनया ।।
हेतुना तेन सोमेति नाम प्राप शिवा तदा ।।२५।।
अथ तां दुखितां ज्ञात्वा मेना शैलप्रिया शिवाम् ।।
निदेशं सा ददौ तस्याः पार्वत्यास्तपसे मुने ।।२६।।
मातुराज्ञां च संप्राप्य सुव्रता मुनिसत्तम ।।
ततः स्वांते सुखं लेभे पार्वती स्मृतशंकरा।।२७।।
मातरं पितरं साथ प्रणिपत्य मुदा शिवा ।।
सखीभ्यां च शिवं स्मृत्वा तपस्तप्तुं समुद्गता।।२८।।
हित्वा मतान्यनेकानि वस्त्राणि विविधानि च।।
वल्कलानि धृतान्याशु मौंजीं बद्ध्वा तु शोभनाम् ।।२९।।
हित्वा हारं तथा चर्म्म मृगस्य परमं धृतम् ।।
जगाम तपसे तत्र गंगावतरणं प्रति।।2.3.22.३०।।
शंभुना कुर्वता ध्यानं यत्र दग्धो मनोभवः।।
गंगावतरणो नाम प्रस्थो हिमवतस्स च ।। ३१ ।।
हरशून्योऽथ ददृशे स प्रस्थो हिमभूभृतः ।।
काल्या तत्रेत्य भोस्तात पार्वत्या जगदम्बया ।। ३२ ।।
यत्र स्थित्वा पुरा शंभुस्तप्तवान्दुस्तरं तपः ।।
तत्र क्षणं तु सा स्थित्वा बभूव विरहार्दिता ।। ३३ ।।
हा हरेति शिवा तत्र रुदन्ती सा गिरेस्सुता ।।
विललापातिदुःखार्ता चिन्ताशोकसमन्विता ।। ३४ ।।
ततश्चिरेण सा मोहं धैर्य्या त्संस्तभ्य पार्वती ।।

नियमायाऽभवत्तत्र दीक्षिता हिमवत्सुता ।। ३५ ।।

तपश्चकार सा तत्र शृंगितीर्थे महोत्तमे ।।

गौरीशिखर नामासीत्तत्तपःकरणाद्धि तत् ।। ३६ ।।

सुंदराश्च द्रुमास्तत्र पवित्राश्शिवया मुने ।।

आरोपिताः परीक्षार्थं तपसः फलभागिनः ।। ३७ ।।

भूमिशुद्धिं ततः कृत्वा वेदीं निर्माय सुन्दरी ।।

तथा तपस्समारब्धं मुनीनामपि दुष्करम् ।। ३८ ।।

विगृह्य मनसा सर्वाणींद्रियाणि सहाशु सा ।।

समुपस्थानिके तत्र चकार परमं तपः ।। ३९ ।

ग्रीष्मे च परितो वह्निं प्रज्वलंतं दिवानिशम् ।।

कृत्वा तस्थौ च तन्मध्ये सततं जपती मनुम ।। 2.3.22.४० ।।

सततं चैव वर्षासु स्थंडिले सुस्थिरासना ।।

शिलापृष्ठे च संसिक्ता बभूव जलधारया।।४१।।

शीते जलांतरे शश्वत्तस्थौ सा भक्तितत्परा।।

अनाहारातपत्तत्र नीहारे निशासु च।। ४२।।

एवं तपः प्रकुर्वाणा पंचाक्षरजपे रता ।।

दध्यौ शिवं शिवा तत्र सर्वकामफलप्रदम्।।४३।।

स्वारोपिताच्छुभान्वृक्षान्सखीभिस्सिंचती मुदा।।

प्रत्यहं सावकाशे सा तत्रातिथ्यमकल्पयत्।।४४।।

वातश्चैव तथा शीतवृष्टिश्च विविधा तथा।।

दुस्सहोऽपि तथा घर्म्मस्तया सेहे सुचित्तया।।४५।।

दुःखं च विविधं तत्र गणितं न तयागतम् ।।

केवलं मन आधाय शिवे सासीत्स्थिता मुने ।।४६।।

प्रथमं फलभोगेन द्वितीयं पर्णभोजनैः।।

तपः प्रकुर्वती देवी क्रमान्निन्येऽमिताः समाः ।।४७।।

ततः पर्णान्यपि शिवा निरस्य हिमवत्सुता।।

निराहाराभवद्देवी तपश्चरणसंरता।।४८।।

आहारे त्यक्तपर्णाभूद्यस्माद्धिमवतः सुतः ।।

तेन देवैरपर्णेति कथिता नामतः शिवा।।४९।।
एका पादस्थिता सासीच्छिवं संस्मृत्य पार्वती।।
पंचाक्षरं जपंती च मनुं तेपे तपो महत् ।। 2.3.22.५० ।।
चीरवल्कलसंवीता जटासंघातधारिणी।।
शिवचिंतनसंसक्ता जिगाय तपसा मुनीम् ।।५१।।
एवं तस्यास्तपस्यन्त्या चिंतयंत्या महेश्वरम् ।।
त्रीणि वर्ष सहस्राणि जग्मुः काल्यास्तपोवने ।।५२।।
षष्टिवर्षसहस्राणि यत्र तेपे तपो हरः ।।
तत्र क्षणमथोषित्वा चिंतयामास सा शिवा ।।५३।।
नियमस्थां महादेव किं मां जानासि नाधुना ।।
येनाहं सुचिरं तेन नानुयाता तवोरता ।।५४।।
लोके वेदे च गिरिशो मुनिभिर्गीयते सदा ।।
शंकरस्य हि सर्वज्ञस्सर्वात्मा सर्वदर्शनः।।५५।।
सर्वभूतिप्रदो देवस्सर्वभावानुभावनः ।।
भक्ताभीष्टप्रदो नित्यं सर्वक्लेशनिवारणः ।।५६।।
सर्वकामान्परित्यज्य यदि चाहं वृषध्वजे।।
अनुरक्ता तदा सोत्र संप्रसीदतु शंकरः ।। ५७ ।।
यदि नारद तत्रोक्तमंत्रो जप्तश्शराक्षरः ।।
सुभक्त्या विधिना नित्यं संप्रसीदतु शंकरः ।। ५८ ।।
यदि भक्त्या शिवस्याहं निर्विकारा यथोदितम् ।।
सर्वेश्वरस्य चात्यंतं संप्रसीदतु शंकरः ।। ५९ ।।
एवं चिंतयती नित्यं तेपे सा सुचिरं तपः ।।
अधोमुखी निर्विकारा जटावल्कलधारिणी ।। 2.3.22.६० ।।
तथा तया तपस्तप्तं मुनीनामपि दुष्करम् ।।
स्मृत्वा च पुरुषास्तत्र परमं विस्मयं गताः ।। ६१ ।।
तत्तपोदर्शनार्थं हि समाजग्मुश्च तेऽखिलाः ।।
धन्यान्निजान्मन्यमाना जगदुश्चेति सम्मताः ।। ६२ ।।
महतां धर्म्मवृद्धेषु गमनं श्रेय उच्यते ।।

प्रमाणं तपसो नास्ति मान्यो धर्म्मस्सदा बुधैः ।। ६३ ।।
श्रुत्वा दृष्ट्वा तपोऽस्यास्तु किमन्यैः क्रियते तपः ।।
अस्मात्तपोऽधिकं लोके न भूतं न भविष्यति ।। ६४ ।।
जल्पंत इति ते सर्वे सुप्रशस्य शिवातपः ।।
जग्मुः स्वं धाम मुदिताः कठिनांगाश्च ये ह्यपि ।। ६५ ।।
अन्यच्छृणु महर्षे त्वं प्रभावं तपसोऽधुना ।।
पार्वत्या जगदम्बायाः पराश्चर्य्यकरं महत् ।। ६६ ।।
तदाश्रमगता ये च स्वभावेन विरोधिनः ।।
तेप्यासँस्तत्प्रभावेण विरोधरहि तास्तदा ।।६७।।
सिंहा गावश्च सततं रागादिदोषसंयुताः ।।
तन्महिम्ना च ते तत्र नाबाधंत परस्परम् ।। ६८ ।।
अथान्ये च मुनिश्रेष्ठ मार्ज्जारा मूषकादयः ।।
निसर्गाद्वैरिणो यत्र विक्रियंते स्म न क्वचित् ।।६९।।
वृक्षाश्च सफलास्तत्र तृणानि विविधानि च ।।
पुष्पाणि च विचित्राणि तत्रासन्मुनिसत्तम ।। 2.3.22.७० ।।
तद्वनं च तदा सर्वं कैलासेनोपमान्वितम् ।।
जातं च तपस्तस्यास्सिद्धिरूपमभूत्तदा ।। ७१ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसं० तृतीये पार्वती० पार्वतीतपोव० नाम द्वाविंशोऽध्यायः ।। २२ ।। ।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः २३



।। ब्रह्मोवाच ।।

एवं तपत्यां पार्वत्यां शिवप्राप्तौ मुनीश्वर।।

चिरकालो व्यतीयाय प्रादुर्भूतो हरो न हि ।। १ ।।

हिमालयस्तदागत्य पार्वतीं कृतनिश्चयाम्।।

सभार्यस्ससुतामात्य उवाच परमेश्वरीम् ।।२।।

हिमालय उवाच।।

मा खिद्यतां महाभागे तपसानेन पार्वती ।।

रुद्रो न दृश्यते बाले विरक्तो नात्र संशयः ।। ३ ।।

त्वं तन्वी सुकुमारांगी तपसा च विमोहिता ।।

भविष्यसि न संदेहस्सत्यं सत्यं वदामि ते ।।४।।

तस्मादुत्तिष्ठ चैहि त्वं स्वगृहं वरवर्णिनि ।।

किं तेन तव रुद्रेण येन दग्धः पुरा स्मरः ।। ५ ।।

अतो हि निर्विकार त्वात्त्वामादातुं वरां हराः ।।

नागमिष्यति देवेशि तं कथं प्रार्थयिष्यसि ।। ६ ।।

गगनस्थो यथा चंद्रो ग्रहीतुं न हि शक्यते ।।

तथैव दुर्गमं शंभुं जानीहि त्वमिहानघे ।। ७ ।।

।। ब्रह्मोवाच ।।

तथैव मेनया चोक्ता तथा सह्याद्रिणा सती ।।

मेरुणा मंदरेणैव मैनाकेन तथैव सा ।। ८ ।।

एवमन्यैः क्षितिभैश्च क्रौंचादिभिरनातुरा ।।

तथैव गिरिजा प्रोक्ता नानावादविधायिभिः ।। ९ ।।

।। ब्रह्मोवाच ।।

एवं प्रोक्ता यदा तन्वी सा सर्वैस्तपसि स्थिता ।।

उवाच प्रहसंत्येव हिमवंतं शुचिस्मिता ।।2.3.23.१०।।

पार्वत्युवाच ।।

पुरा प्रोक्तं मया तात मातः किं विस्मृतं त्वया ।।

अधुनापि प्रतिज्ञां च शृणुध्वं मम बांधवाः ।। ११ ।।

विरक्तोसौ महादेवो येन दग्धा रुषा स्मरः ।।

तं तोषयामि तपसा शंकरं भक्तवत्सलम् ।। १२ ।।

सर्वे भवंतो गच्छंतु स्वं स्वं धाम प्रहर्षिताः ।।

भविष्यत्येव तुष्टोऽसौ नात्र कार्य्या विचारणा ।। १ ३।।

दग्धो हि मदनो येन येन दग्धं गिरेर्वनम् ।।

तमानयिष्ये चात्रैव तपसा केव लेन हि ।। १४।।

तपोबलेन महता सुसेव्यो हि सदाशिवः ।।

जानीध्वं हि महाभागास्सत्यं सत्यं वदामि वः ।। १५ ।।

आभाष्य चैवं गिरिजा च मेनकां मैनाकबंधुं पितरं हिमालयम् ।।

तूष्णीं बभूवाशु सुभाषिणी शिवा समंदरं पर्वतराजबालिका ।।१६।।

जग्मुस्तथोक्ताः शिवया हि पर्वता यथागतेनापि विचक्षणास्ते ।।

प्रशंसमाना गिरिजा मुहुर्मुहुस्सुविस्मिता हेमनगेश्वराद्याः ।। १७।।

गतेषु तेषु सूर्येषु सखीभिः परिवारिता ।।

तपस्तेपे तदधिकं परमार्थसुनिश्चया ।। १-।।

तपसा महता तेन तप्तमासीच्चराचरम् ।।

त्रैलोक्यं हि मुनिश्रेष्ठ सदेवासुरमानुषम् ।। १९ ।।

तदा सुरासुराः सर्वे यक्षकिन्नरचारणाः।।

सिद्धास्साध्याश्च मुनयो विद्याधरमहोरगाः।। ।। 2.3.23.२० ।।

सप्रजापतयश्चैव गुह्यकाश्च तथापरे ।।

कष्टात् कष्टतरं प्राप्ताः कारणं न विदुः स्म तत् ।।२१।।

सर्वे मिलित्वा शक्राद्या गुरुमामंत्र्य विह्वलाः ।।

सुमेरौ तप्तसर्वांगा विधिं मां शरणं ययुः ।। २२ ।।

तत्र गत्वा प्रणम्याशु विह्वला नष्टसुत्विषः ।।

ऊचुस्सर्वे च संस्तूय ह्यैकपद्येन मां हि ते ।। २३ ।।

देवा ऊचुः ।।

त्वया सृष्टमिदं सर्वं जगदेतच्चराचरम् ।।
संतप्तमति कस्माद्वै न ज्ञातं कारणं विभो।।२४।।
तद्ब्रूहि कारणं ब्रह्मन् ज्ञातुमर्हसि नः प्रभो ।।
दग्धभूततनून्देवान् त्वत्तो नान्योऽस्ति रक्षक ।।२८।।
।। ब्रह्मोवाच ।।
इत्याकर्ण्य वचस्तेषामहं स्मृत्वा शिवं हृदा ।।
विचार्य मनसा सर्वं गिरिजायास्तपः फलम् ।। २६ ।।
दग्धं विश्वमिति ज्ञात्वा तैः सर्वैरिह सादरात् ।।
हरये तत्कथयितुं क्षीराब्धिमगमं द्रुतम् ।।२७।।
तत्र गत्वा हरिं दृष्ट्वा विलसंतं सुखासने ।।
सुप्रणम्य सुसंस्तूय प्रावोचं सांजलिः सुरैः ।।२८।।
त्राहि त्राहि महाविष्णो तप्तान्नश्शरणागतान् ।।
तपसोग्रेण पार्वत्यास्तपत्याः परमेण हि ।।२९।
इत्याकर्ण्य वचस्तेषामस्मदादि दिवौकसाम् ।।
शेषासने समाविष्टोऽस्मानुवाच रमेश्वरः ।।2.3.23.३०।।
।। विष्णुरुवाच ।।
ज्ञातं सर्वं निदानं मे पार्वती तपसोद्य वै ।।
युष्माभिस्सहितस्त्वद्य व्रजामि परमेश्वरम् ।। ३१ ।।
महादेवं प्रार्थयामो गिरिजाप्रापणाय तम् ।।
पाणिग्रहार्थमधुना लोकानां स्वस्तयेऽमराः।।३२।।
वरं दातुं शिवायै हि देवदेव पिनाकधृक् ।।
यथा चेष्यति तत्रैव करिष्यामोऽधुना हि तत्।।२३।
तस्माद्वयं गमिष्यामो यत्र रुद्रो महाप्रभुः ।।
तपसोग्रेण संयुक्तोऽद्यास्ते परममंगलः ।। ३४ ।।
।। ब्रह्मोवाच ।।
विष्णोस्तद्वचनं श्रुत्वा सर्व ऊचुस्सुरादयः ।।
महाभीता हठात् क्रुद्धाद्दग्धुकामात् लयंकरात् ।। ३५ ।।
देवा ऊचुः ।।

महाभयंकरं क्रुद्धं कालानलसमप्रभम् ।।
न यास्यामो वयं सर्वे विरूपाक्षं महाप्रभम् ।। ३६ ।।
यथा दग्धः पुरा तेन मदनो दुरतिक्रमः ।।
तथैव क्रोधयुक्तो नः स धक्ष्यति न संशयः ।। ३७ ।।
ब्रह्मोवाच ।। तदाकर्ण्य वचस्तेषां शक्रादीनां रमेश्वरः ।।
सांत्वयंस्तान्सुरान्सर्वान्प्रोवाच स हरिर्मुने ।। ३८ ।।
।। हरिरुवाच ।।
हे सुरा मद्वचः प्रीत्या शृणुतादरतोऽखिलाः ।।
न वो धक्ष्यति स स्वामी देवानां भयनाशनः ।। ३९ ।।
तस्माद्भवद्भिर्गंतव्यं मया सार्द्धं विचक्षणैः ।।
शंभुं शुभकरं मत्वा शरणं तस्य सुप्रभो ।।2.3.23.४०।।
शिवं पुराणं पुरुषमधीशं वरेण्यरूपं हि परं पुराणम् ।।
तपोजुषाणां परमात्मरूपं परात्परं तं शरणं व्रजामः ।। ४१ ।।
ब्रह्मोवाच ।।
एवमुक्तास्तदा देवा विष्णुना प्रभवि ष्णुना ।।
जग्मुस्सर्वे तेन सह द्रष्टुकामाः पिनाकिनम् ।।४२।।
प्रथमं शैलपुत्र्यास्तत्तपो द्रष्टुं तदाश्रमम् ।।
जग्मुर्मार्गवशात्सर्वे विष्ण्वाद्यस्सकुतूहलाः ।। ४३ ।।
पार्वत्यास्तु तपो दृष्ट्वा तेजसा व्यापृतास्तदा ।।
प्रणेमुस्तां जगद्धात्रीं तेजोरूपां तपः स्थिताम् ।। ४४ ।।
प्रशंसंतस्तपस्तस्यास्साक्षात्सिद्धितनोस्सुराः ।।
जग्मुस्तत्र तदा ते च यत्रास्ते वृषभध्वजः ।। ४५ ।।
तत्र गत्वा च ते देवास्त्वां मुने प्रैषयंस्तदा ।।
पश्यतो दूरतस्तस्थुः कामभस्मकृतोहरात् ।।४६।।
नारद त्वं शिवस्थानं तदा गत्वाऽभयस्सदा ।।
शिवभक्तो विशेषेण प्रसन्नं दृष्टवान् प्रभुम् ।।४७।।
पुनरागत्य यत्नेन देवानाहूय तांस्ततः ।।
निनाय शंकरस्थानं तदा विष्ण्वादिकान्मुने ।। ४८ ।।

अथ विष्ण्वादयस्सर्वे तत्र गत्वा शिवं प्रभुम् ।।

ददृशुस्सुखमासीनं प्रसन्नं भक्तवत्सलम् ।।४९।।

योगपट्टस्थितं शंभुं गणैश्च परिवारितम् ।।

तपोरूपं दधानं च परमेश्वररूपिणम्।।2.3.23.५०।।

ततो विष्णुर्मयान्ये च सुरसिद्धमुनीश्वराः।।

प्रणम्य तुष्टुवुस्सूक्तैर्वेदोपनिषदन्वितैः।।५१।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तुतीये पार्वतीखंडे पार्वतीसांत्वनशिवदेवदर्शनवर्णनं नाम त्रयोविंशोऽध्यायः।।२३।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः २४



।। देवा ऊचुः ।।

नमो रुद्राय देवाय मदनांतकराय च ।।

स्तुत्याय भूरिभासाय त्रिनेत्राय नमोनमः ।। १।।

शिपिविष्टाय भीमाय भीमाक्षाय नमोनमः।।

महादेवाय प्रभवे त्रिविष्टपतये नमः ।।२।।

त्वं नाथः सर्वलोकानां पिता माता त्वमीश्वरः ।।

शंभुरीशश्शंकरोसि दयालुस्त्वं विशेषतः ।। ३ ।।

त्वं धाता सर्वजगतां त्रातुमर्हसि नः प्रभो ।।

त्वां विना कस्समर्थोस्ति दुःखनाशे महेश्वर ।। ।। ४ ।।

ब्रह्मोवाच ।।

इत्याकर्ण्य वचस्तेषां सुराणां नन्दिकेश्वरः ।।

कृपया परया युक्तो विज्ञप्तुं शंभुमारभत् ।। ५ ।।

।। नंदिकेश्वर उवाच ।।

विष्ण्वादयस्सुरगणा मुनिसिद्धसंघास्त्वां द्रष्टुमेव सुरवर्य्य विशेषयंति ।।

कार्यार्थिनोऽसुरवरैः परिभर्त्स्य मानास्सम्यक् पराभवपदं परमं प्रपन्नाः ।। ६ ।।

तस्मात्त्वया हि सर्वेश त्रातव्या मुनयस्सुराः ।।

दीनबंधुर्विशेषेण त्वमुक्तो भक्तवत्सलः ।।७।।

।। ब्रह्मोवाच ।।

एवं दयावता शंभुर्विज्ञप्तो नंदिना भृशम् ।।

शनैश्शनैरुपरमद्ध्यानादुन्मील्य चाक्षिणी ।।८।।

ईशोऽथोपरतश्शंभुस्तदा परमकोविदः ।।

समाधेः परमात्मासौ सुरान्सर्वानुवाच ह ।। ९ ।।

शंभुरुवाच ।।

कस्माद्यूयं समायाता मत्समीपं सुरेश्वरः ।।

हरिब्रह्मादयस्सर्वे ब्रूत कारणमाशु तत् ।। 2.3.24.१० ।।

ब्रह्मोवाच ।।

इति श्रुत्वा वचश्शम्भोस्सर्वे देवा मुदाऽन्विताः ।।

विष्णोर्विलोकयामासुर्मुखं विज्ञप्तिहेतवे ।। ११ ।।

अथ विष्णुर्महाभक्तो देवानां हितकारकः ।।

मदीरितमुवाचेदं सुरकार्यं महत्तरम् ।। १२ ।।

तारकेण कृतं शंभो देवानां परमाद्भुतम् ।।

कष्टात्कष्टतरं देवा विज्ञप्तुं सर्व आगताः ।। १३ ।।

हे शंभो तव पुत्रेणौरसेन हि भविष्यति।।

निहतस्तारको दैत्यो नान्यथा मम भाषितम् ।। १४ ।।

विचार्य्येत्थं महादेव कृपां कुरु नमोऽस्तु ते ।।

देवान्समुद्धर स्वामिन् कष्टात्तारकनिर्मितात् ।। १५ ।।

तस्मात्त्वया गिरिजा देव शंभो ग्रहीतव्या पाणिना दक्षिणेन ।।

पाणिग्रहेणैव महानुभावां दत्तां गिरींद्रेण च तां कुरुष्व ।। १६।।

विष्णोस्तद्वचनं श्रुत्वा प्रसन्नो ह्यब्रवीच्छिवः ।।

दर्शयन् सद्गतिं तेषां सर्वेषां योगतत्परः ।। १७ ।।

शिव उवाच ।।

यदा मे स्वीकृता देवी गिरिजा सर्वसुंदरी ।।

तदा सर्वे सुरेंद्राश्च मुनयो ऋषयस्तदा ।। १८ ।।

सकामाश्च भविष्यन्ति न क्षमाश्च परे पथि ।।

जीवयिष्यति दुर्गा सा पाणिग्रहणतस्स्मरम् ।। १९ ।।

मदनो हि मया दग्धस्सर्वेषां कार्य्यसिद्धये ।।।

ब्रह्मणो वचनाद्विष्णो नात्र कार्या विचारणा ।। 2.3.24.२० ।।

एवं विमृश्य मनसा कार्याकार्यव्यवस्थितौ ।।

सुधीः सर्वैश्च देवेंद्र हठं नो कर्तुमर्हसि ।। २१ ।।

दग्धे कामे मया विष्णो सुरकार्यं महत् कृतम् ।।

सर्वे तिष्ठंतु निष्कामा मया सह सुनिश्चितम् ।। २२ ।।

यथाऽहं च सुरास्सर्वे तथा यूयमयत्नतः ।।

तपः परमसंयुक्ताः करिष्यध्वं सुदुष्करम् ।।२३।।

यूयं समाधिना तेन मदनेन विना सुराः ।।

परमानंदसंयुक्ता निर्विकारा भवंतु वै ।। २४ ।।

पुरावृत्तं स्मरकृतं विस्मृतं यद्विधे हरे ।।

महेन्द्र मुनयो देवा यत्तत्सर्वं विमृश्यताम् ।। २५ ।।

महाधनुर्धरेणैव मदनेन हठात्सुराः ।।

सर्वेषां ध्यानविध्वंसः कृतस्तेन पुरापुरा ।। २६ ।।

कामो हि नरकायैव तस्मात् क्रोधोभिजायते ।।

क्रोधाद्भवति संमोहो मोहाच्च भ्रंशते तपः ।। २७ ।।

कामक्रोधौ परित्याज्यौ भवद्भिस्सुरसत्तमैः ।।

सर्वैरेव च मंतव्यं मद्वाक्यं नान्यथा क्वचित् ।।२८।।

।। ब्रह्मोवाच ।।

एवं विश्राव्य भगवान् महादेवो वृषध्वजः ।।

सुरान् प्रवाचयामास विधिविष्णू तथा मुनीम् ।। २९ ।।

तूष्णींभूतोऽभवच्छंभुर्ध्यानमाश्रित्य वै पुनः ।।

आस्ते पुरा यथा स्थाणुर्गणैश्च परिवारितः ।। 2.3.24.३० ।।

स्वात्मानमात्मना शंभुरात्मन्येव व्यचिंतयत् ।।

निरंजनं निराभासं निर्विकारं निरामयम् ।। ३१ ।।

परात्परतरं नित्यं निर्ममं निरवग्रहम् ।।

शब्दातीतं निर्गुणं च ज्ञानगम्यं परात्परम् ।। ३२ ।।

एवं स्वरूपं परमं चिंतयन् ध्यानमास्थितः ।।

परमानंदसंमग्नो बभूव बहुसूतिकृत् ।। ३३ ।।

ध्यानस्थितं च सर्वेशं दृष्ट्वा सर्वे दिवौकसः ।।

हरि शक्रादयस्सर्वे नंदिनं प्रोचुरानताः ।। ३४ ।।

।। देवा ऊचुः ।।

किं वयं करवामाद्य विरक्तो ध्यानमास्थितः ।।

शंभुस्त्वं शंकर सखस्सर्वज्ञः शुचिसेवकः ।। ३५ ।।

केनोपायेन गिरिशः प्रसन्नः स्याद्गणाधिप ।।

तदुपायं समाचक्ष्व वयं त्वच्छरणं गताः ।। ।।।३६।।

।। ब्रह्मोवाच ।!

इति विज्ञापितो देवैर्मुने हर्षादिभिस्तदा ।।

प्रत्युवाच सुरांस्तान्स नंदी शंभुप्रियो गणः ।। ३७ ।।

नंदीश्वर उवाच ।।

हे हरे हे विधे शक्रनिर्जरा मुनयस्तथा ।।

शृणुध्वं वचनं मे हि शिवसंतोषकारकम् ।। ३८ ।।

यदि वो हठ एवाद्य शिव दारपरिग्रहे ।।

अतिदीनतया सर्वे सुनुतिं कुरुतादरात् ।। ३९ ।।

भक्तेर्वश्यो महादेवो न साधारणतस्तुराः ।।

अकार्यमपि सद्भक्त्या करोति परमेश्वरः ।। 2.3.24.४० ।।

एवं कुरुत सर्वे हि विधिविष्णुमुखाः सुराः ।।

यथागतेन मार्गेणान्यथा गच्छत मा चिरम् ।। ४१ ।।

ब्रह्मोवाच ।।

इत्याकर्ण्य वचस्तस्य मुने विष्ण्वादयस्सुराः ।।

तथेति मत्त्वा सुप्रीत्या शंकरं तुष्टुवुर्हि ते ।। ४२ ।।

देवदेव महादेव करुणासागर प्रभो ।।

समुद्धर महाक्लेशात्त्राहि नश्शरणागतान् ।।४३।।

ब्रह्मोवाच ।।

इत्येवं बहुदीनोक्त्या तुष्टुवुश्शंकरं सुराः ।।

रुरुदुस्सुस्वरं सर्वे प्रेमव्याकुलमानसः ।।४५।।

हरिर्मया सुदीनोक्त्या सुविज्ञप्तं चकार ह ।।

संस्मरन्मनसा शंभुं भक्त्या परमयान्वितः ।। ४५ ।।

ब्रह्मोवाच ।।

सुरैरेवं स्तुतश्शंभुर्हरिणा च मया भृशम् ।।

भक्तवात्सल्यतो ध्यानाद्विरतोभून्महेश्वरः ।।४६।।

उवाच सुप्रसन्नात्मा हर्यादीन्हर्षयन्हरः ।।

विलोक्य करुणादृष्ट्या शंकरो भक्तवत्सलः ।।४७।।

शंकर उवाच ।।
हे हरे हे विधे देवाश्शक्राद्या युगपत्समे ।।
किमर्थमागता यूयं सत्यं ब्रूत ममाग्रतः ।। ४८ ।।
हरिरुवाच ।।
सर्वज्ञस्त्वं महेशान त्वंतर्याम्यखिलेश्वरः ।।
किं न जानासि चित्तस्थं तथा वच्म्यपि शासनात् ।। ४९ ।।
तारकासुरतो दुःखं संभूतं विविधं मृड ।।
सर्वेषां नस्तदर्थं हि प्रसन्नोऽकारि वै सुरैः ।। 2.3.24.५० ।।
शिवा सा जनिता शैलात्त्वदर्थं हि हिमालयात् ।।
तस्यां त्वदुद्भवात्पुत्रात्तस्य मृत्युर्न चान्यथा ।।५१ ।।
इति दत्तो ब्रह्मणा हि तस्मै दैत्याय यद्वरः ।।
तदन्यस्मादमृत्युस्स बाधते निखिलं जगत् ।।५२।।
नारदस्य निर्देशात्सा करोति कठिनं तपः ।।
तत्तेजसाखिलं व्याप्तं त्रैलोक्यं सचराचरम् ।। ५३ ।।
वरं दातुं शिवायै हि गच्छ त्वं परमेश्वर ।।
देवदुःखं जहि स्वामिन्नस्माकं सुखमावह ।। ५४ ।।
देवानां मे महोत्साहो हृदये चास्ति शंकर ।।
विवाहं तव संद्रष्टुं तत्त्वं कुरु यथोचितम् ।। ५५ ।।
रत्यै यद्भवता दत्तो वरस्तस्य परात्पर ।।
प्राप्तोऽवसर एवाशु सफलं स्वपणं कुरु ।। ५६ ।।
ब्रह्मोवाच ।।
इत्युक्त्वा तं प्रणम्यैव विष्णुर्देवा महर्षयः ।।
संस्तूय विविधैस्तोत्रैस्संतस्थुस्तत्पुरोऽखिलाः ।।५७।।
भक्ताधीनः शंकरोऽपि श्रुत्वा देववचस्तदा ।।
विहस्य प्रत्युवाचाशु वेदमर्यादरक्षकः ।। ५८ ।।
।। शंकर उवाच ।।
हे हरे हे विधे देवाश्शृणुतादरतोऽखिलाः ।।
यथोचितमहं वच्मि सविशेषं विवेकतः ।।५९।।

नोचितं हि विधानं वै विवाहकरणं नृणाम् ।।
महानिगडसंज्ञो हि विवाहो दृढबन्धनः ।।2.3.24.६०।
कुसंगा बहवो लोके स्त्रीसंगस्तत्र चाधिकः ।।
उद्धरेत्सकलबंधैर्न स्त्रीसंगात्प्रमुच्यते ।।६१ ।।
लोहदारुमयैः पाशैर्दृढं बद्धोऽपि मुच्यते ।।
स्त्र्यादिपाशसुसंबद्धो मुच्यते न कदाचन ।। ६२ ।।
वर्द्धंते विषयाश्शश्वन्महाबंधनकारिणः ।।
विषयाक्रांतमनसस्स्वप्ने मोक्षोऽपि दुर्लभः ।। ६३ ।।
सुखमिच्छतु चेत्प्राज्ञो विधिवद्विषयाँस्त्यजेत् ।।
विषवद्विषयानाहुर्विषयैर्यैर्निहन्यते ।। ६४ ।।
जनो विषयिणा साकं वार्तातः पतति क्षणात् ।।
विषयं प्राहुराचार्यास्सितालितेंद्रवारुणीम् ।। ६५ ।।
यद्यप्येवं हि जानामि सर्वं ज्ञानं विशेषतः ।।
तथाप्यहं करिष्यामि प्रार्थनां सफलां च वः ।।६६।।
भक्ताधीनोऽहमेवास्मि तद्वशात्सर्वकार्य कृत् ।।
अयथोचितकर्ता हि प्रसिद्धो भुवनत्रये ।। ६७ ।।
कामरूपाधिपस्यैव पणश्च सफलः कृतः ।।
सुदक्षिणस्य भूपस्य भैमबंधगतस्य हि । ६८ ।।
गौतमक्लेशकर्ताहं त्र्यंबकात्मा सुखावहः ।।
तत्कष्टप्रददुष्टानां शापदायी विशेषतः ।।६९।।
विषं पीतं सुरार्थं हि भक्तवत्सलभावधृक् ।।
देवकष्टं हृतं यत्नात्सर्वदैव मया सुराः ।।2.3.24.७०।।
भक्तार्थमसहं कष्टं बहुशो बहुयत्नतः ।।
विश्वानर मुनेर्दुःखं हृतं गृहपतिर्भवन् ।।७१।।
किं बहूक्तेन च हरे विधे सत्यं ब्रवीम्यहम् ।।
मत्पणोऽस्तीति यूयं वै सर्वे जानीथ तत्त्वतः।।७२।।
यदा यदा विपत्तिर्हि भक्तानां भवति क्वचित् ।।
तदा तदा हरम्याशु तत्क्षणात्सर्वशस्सदा ।। ७३ ।।

जानेऽहं तारकाद्दुःखं सर्वेषां वस्समुत्थितम्।।
असुरा त्तद्धरिष्यामि सत्यंसत्यं वदाम्यहम् ।।७४।।
नास्ति यद्यपि मे काचिद्विहारकरणे रुचिः ।।
विवाहयिष्ये गिरिजा पुत्रोत्पादनहेतवे ।। ७५ ।।
गच्छत स्वगृहाण्येव निर्भयास्सकलाः सुराः ।।
कार्यं वस्साधयिष्यामि नात्र कार्या विचारणा ।। ७६ ।।
।। ब्रह्मोवाच ।।
इत्युक्त्वा मौनमास्थाय समाधिस्थोऽभवद्धरः ।।
सर्वे विष्ण्वादयो देवास्स्वधामानि ययुर्मुने।।७७।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे पार्वतीविवाहस्वीकारो नाम चतुर्विंशोऽध्यायः ।। २४ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः २५

https://sa.wikisource.org/s/wio



।। नारद उवाच ।।

गतेषु तेषु देवेषु विधि विष्ण्वादिकेषु च ।।

सर्वेषु मुनिषु प्रीत्या किं बभूव ततः परम्।।१।।

किं कृतं शंभुना तात वरं दातुंसमागतः ।।

कियत्कालेन च कथं तद्वद प्रीतिमावहन् ।।२।।

।। ब्रह्मोवाच ।।

गतेषु तेषु देवेषु ब्रह्मादिषु निजाश्रमम् ।।

तत्तपस्सु परीक्षार्थं समाधिस्थोऽभवद्भवः ।।३।।

स्वात्मानमात्मना कृत्वा स्वात्मन्येव व्यचिंतयत् ।।

परात्परतरं स्वस्थं निर्माय निरवग्रहम् ।।४।।

तद्वस्तुभूतो भगवानीश्वरो वृषभध्वजः ।।

अविज्ञातगतिस्सूतिस्स हरः परमेश्वरः ।। ५ ।।

ब्रह्मोवाच ।।

गिरिजा हि तदा तात तताप परमं तपः।।

तपसा तेन रुद्रोऽपि परं विस्मयमागतः ।।६।।

समाधेश्चलितस्सोऽभूद्भक्ताधीनोऽपि नान्यथा ।।

वसिष्ठादीन्मुनीन्सप्त सस्मार सूतिकृद्धरः ।।७।।

सप्तापि मुनयश्शीघ्रमाययुस्स्मृति मात्रतः ।।

प्रसन्नवदनाः सर्वे वर्णयंतो विधिं बहु ।।८।।

प्रणम्य तं महेशानं तुष्टुवुर्हर्षनिर्भराः ।।

वाण्या गद्गदया बद्धकरा विनतकंधराः ।।९।। ।।

सप्तर्षय ऊचुः ।।

देवदेव महादेव करुणासागर प्रभो ।।

जाता वयं सुधन्या हि त्वया यदधुना स्मृताः ।। 2.3.25.१० ।।

किमर्थं संस्मृता वाथ शासनं देहि तद्धि नः ।।

स्वदाससदृशीं स्वामिन्कृपां कुरु नमोऽस्तु ते ।।११।।

।। ब्रह्मोवाच ।।

इत्याकर्ण्य नीनां तु विज्ञप्तिं करुणानिधिः ।।

प्रोवाच विहसन्प्रीत्या प्रोत्फुल्लनयनाम्बुजः ।। १२ ।।

।। महेश्वर उवाच ।।

हे सप्तमुनयस्ताताश्शृणुतारं वचो मम ।।

अस्मद्धितकरा यूयं सर्वज्ञानविचक्षणाः ।। १३ ।।

तपश्चरति देवेशी पार्वती गिरिजाऽधुना ।।

गौरीशिखरसंज्ञे हि पार्वते दृढमानसा ।।१४।।

मां पतिं प्राप्तुकामा हि सा सखीसेविता द्विजाः ।।

सर्वान्कामान्विहायान्यान्परं निश्चयमागता ।। १५ ।।

तत्र गच्छत यूयं मच्छासनान्मुनिसत्तमाः।।

परीक्षां दृढतायास्तत्कुरुत प्रेमचेतसः।।१६।।

सर्वथा छलसंयुक्तं वचनीयं वचश्च वः ।।

न संशयः प्रकर्तव्यश्शासनान्मम सुव्रताः ।। १७ ।।

।।ब्रह्मोवाच ।।

इत्याज्ञप्ताश्च मुनयो जग्मुस्तत्र द्रुतं हि ते ।।

यत्र राजति सा दीप्ता जगन्माता नगात्मजा।।१८।।

तत्र दृष्ट्वा शिवा साक्षात्तपःसिद्धिरिवापरा।।

मूर्ता परमतेजस्का विलसंती सुतेजसा ।।१९।।

हृदा प्रणम्य तां ते तु ऋषयस्सप्त सुव्रताः।।

सन्नता वचनं प्रोचुः पूजिताश्च विशेषतः।।।2.3.25.२०।।

।। ऋषय ऊचुः ।।

शृणु शैलसुते देवी किमर्थं तप्यते तपः ।।

इच्छसि त्वं सुरं कं च किं फलं तद्वदाधुना ।।२१।।

ब्रह्मोवाच ।।

इत्युक्ता सा शिवा देवी गिरींद्रतनया द्विजैः ।।

प्रत्युवाच वचस्सत्यं सुगूढमपि तत्पुरः ।। २२ ।।
।। पार्वत्युवाच ।।
मुनीश्वरास्संशृणुत मद्वाक्यं प्रीतितो हृदा ।।
ब्रवीमि स्वविचारं वै चिंतितो यो धिया स्वया ।। २३ ।।
करिष्यथ प्रहासं मे श्रुत्वा वाचो ह्यसंभवाः ।।
संकोचो वर्णनाद्विप्रा भवत्येव करोमि किम् ।। २४ ।।
इदं मनो हि सुदृढमवशं परकर्मकृत् ।।
जलोपरि महाभित्तिं चिकीर्षति महोन्नताम् ।। २५ ।।
सुरर्षेश्शासनं प्राप्य करोमि सुदृढं तपः ।।
रुद्रः पतिर्भवेन्मे हि विधायेति मनोरथम् ।। २६ ।।
अपक्षो मन्मनः पक्षी व्योम्नि उड्डीयते हठात् ।।
तदाशां शंकरस्वामी पिपर्त्तु करुणानिधिः ।। २७ ।।
।। ब्रह्मोवाच ।।
इत्याकर्ण्य वचस्तस्या विहस्य मुनयश्च ते ।।
संमान्य गिरिजां प्रीत्या प्रोचुश्छलवचो मृषा ।।२८।।
ऋषय ऊचुः ।।
न ज्ञातं तस्य चरितं वृथापण्डितमानिनः ।।
देवर्षेः क्रूरमनसः सुज्ञा भूत्वाप्यगात्मजे ।।२९।।
नारदः कूटवादी च परचित्तप्रमंथकः ।।
तस्य वार्त्ताश्रवणतो हानिर्भवति सर्वथा ।। 2.3.25.३० ।।
तत्र त्वं शृणु सद्बुध्या चेतिहासं सुशोभितम् ।।
क्रमात्त्वां बोधयंतो हि प्रीत्या तमुपधारय ।। ३१ ।।
ब्रह्मपुत्रो हि यो दक्षस्सुषुवे पितुराज्ञया ।।
स्वपत्न्यामयुतं पुत्रानयुंक्त तपसि प्रियान् ।। ३२ ।।
ते सुताः पश्चिमां दिशि नारायणसरो गताः ।।
तपोर्थे ते प्रतिज्ञाय नारदस्तत्र वै ययौ ।। ३३ ।।
कूटोपदेशमाश्राव्य तत्र तान्नारदो मुनिः ।।
तदाज्ञया च ते सर्वे पितुर्न गृहमाययुः ।। ३४ ।।

तच्छ्रुत्वा कुपितो दक्षः पित्राश्वासितमानसः ।।
उत्पाद्य पुत्रान्प्रायुंक्त सहस्रप्रमितांस्ततः ।। ३५ ।।
तेऽपि तत्र गताः पुत्रास्तपोर्थं पितुराज्ञया ।।
नारदोऽपि ययौ तत्र पुनस्तत्स्वोपदेशकृत् ।। ३६ ।।
ददौ तदुपदेशं ते तेभ्यो भ्रातृपथं ययुः ।।
आययुर्न पितुर्गेहं भिक्षुवृत्तिरताश्च ते ।।३७।।
इत्थं नारदसद्वृत्तिर्विश्रुता शैलकन्यके ।।
अन्यां शृणु हि तद्वृत्तिं वैराग्यकरणीं नृणाम् ।। ३८ ।।
विद्याधरश्चित्रकेतुर्यो बभूव पुराकरोत् ।।
स्वोपदेशमयं दत्त्वा तस्मै शून्यं च तद्गृहम् ।। ३९ ।।
प्रह्लादाय स्वोपदेशान्हिरण्यकशिपोः परम् ।।
दत्त्वा दुखं ददौ चायं परबुद्धिप्रभेदकः ।। 2.3.25.४० ।।
मुनिना निजविद्या यच्छ्राविता कर्णरोचना ।।
स स्वगेहं विहायाशु भिक्षां चरति प्रायशः ।।४१।।
नारदो मलिनात्मा हि सर्वदो ज्ज्वलदेहवान् ।।
जानीमस्तं विशेषेण वयं तत्सहवासिनः ।। ४२ ।।
बकं साधुं वर्णयंति न मत्स्यानत्ति सर्वथा ।।
सहवासी विजानीयाच्चरित्रं सहवासिनाम् ।।४३।।
लब्ध्वा तदुपदेशं हि त्वमपि प्राज्ञसंमता ।।
वृथैव मूर्खीभूता तु तपश्चरसि दुष्करम् ।।४४।।
यदर्थमीदृशं बाले करोषि विपुलं तपः ।।
सदोदासी निर्विकारो मदनारिर्नसंशयः ।।४५।।
अमंगलवपुर्धारी निर्लज्जोऽसदनोऽकुली ।।
कुवेषी प्रेतभूतादिसंगी नग्नौ हि शूलभृत् ।।४६।।
स धूर्तस्तव विज्ञानं विनाश्य निजमायया ।।
मोहयामास सद्युक्त्या कारयामास वै तपः ।।४७।।
ईदृशं हि वरं लब्ध्वा किं सुखं संभविष्यति ।।
विचारं कुरु देवेशि त्वमेव गिरिजात्मजे।।४६।।

प्रथमं दक्षजां साध्वी विवाह्य सुधिया सतीम् ।।
निर्वाहं कृतवान्नैव मूढः किंचिद्दिनानि हि ।।४९।।
तां तथैव स वै दोषं दत्वात्याक्षीत्स्वयं प्रभुः ।।
ध्यायन्स्वरूप मकलमशोकमरमत्सुखी ।।2.3.25.५०।।
एकलः परनिर्वाणो ह्यसंगोऽद्वय एव च ।।
तेन नार्याः कथं देवि निर्वाहः संभविष्यति ।। ५१ ।।
अद्यापि शासनं प्राप्य गृहमायाहि दुर्मतिम् ।।
त्यजास्माकं महाभागे भविष्यति च शं तव ।।५२।।
त्वद्योग्यो हि वरो विष्णुस्सर्वसद्गुणवान्प्रभुः ।।
वैकुण्ठवासी लक्ष्मीशो नानाक्रीडाविशारदः ।। ५३ ।।
तेन ते कारयिष्यामो विवाहं सर्वसौख्यदम् ।।
इतीदृशं त्यज हठं सुखिता भव पार्वति ।। ५४ ।।
ब्रह्मोवाच ।।
इत्येदं वचनं श्रुत्वा पार्वती जगदम्बिका ।।
विहस्य च पुनः प्राह मुनीन्ज्ञान विशारदान् ।।५५।।
पार्वत्युवाच ।।
सत्यं भवद्भिः कथितं स्वज्ञानेन मुनीश्वराः ।।
परंतु मे हठो नैव मुक्तो भवति वै द्विजाः ।।५६।।
स्वतनोः शैलजातत्वात्काठिन्यं सहजं स्थितम् ।।
इत्थं विचार्य सुधिया मां निषेद्धुं न चार्हथ ।।५७।।
सुरर्षेर्वचनं पथ्यं त्यक्ष्ये नैव कदाचन ।।
गुरूणां वचनं पथ्यमिति वेदविदो विदुः ।।५८।।
गुरूणां वचनं सत्यमिति येषां दृढा मतिः ।।
तेषामिहामुत्र सुखं परमं नासुखं क्वचित् ।।५९।।
गुरूणां वचनं सत्यमिति यद्धृदये न धीः ।।
इहामुत्रापि तेषां हि दुखं न च सुखं क्वचित् ।। 2.3.25.६० ।।
सर्वथा न परित्याज्यं गुरूणां वचनं द्विजाः।।
गृहं वसेद्वा शून्यं स्यान्मे हठस्सुखदस्सदा।।६१।।

यद्भवद्भिस्सुभणितं वचनं मुनिसत्तमाः ।।
तदन्यथा तद्विवेकं वर्णयामि समासतः ।।६२।।
गुणालयो विहारी च विष्णुस्सत्यं प्रकीर्तितः ।।
सदाशिवोऽगुणः प्रोक्तस्तत्र कारण मुच्यते ।। ६३ ।।
शिवो ब्रह्माविकारः स भक्तहेतोर्धृताकृतिः ।।
प्रभुतां लौकिकीं नैव संदर्शयितुमिच्छति।।।६४।
अतः परमहंसानां धार्यये सुप्रिया गतिः।।
अवधूतस्वरूपेण परानंदेन शंभुना।।६५।।
भूषूणादिरुचिर्मायार्लिप्तानां ब्रह्मणो न च।।
स प्रभुर्निर्गुणोऽजो निर्मायोऽलक्ष्यगतिर्विराट् ।।६६।।
धर्मजात्यादिभिश्शम्भुर्नानुगृह्णाति व द्विजाः ।।
गुरोरनुग्रहेणैव शिवं जानामि तत्त्वतः ।।६७।।
चेच्छिवस्स हि मे विप्रा विवाहं न करिष्यति ।।
अविवाहा सदाहं स्यां सत्यं सत्यं वदाम्यहम् ।।६८।।
उदयति यदि भानुः पश्चिमे दिग्विभागे प्रचलति यदि मेरुश्शीततां याति वह्निः ।।
विकसति यदि पद्मं पर्वताग्रे शिलायां न हि चलति हठो मे सत्यमेतद्ब्रवीमि।।६९।।
।। ब्रह्मोवाच।।
इत्युक्त्वा तान्प्रणम्याशु मुनीन्सा पर्वतात्मजा ।।
विरराम शिवं स्मृत्वा निर्विकारेण चेतसा ।। 2.3.25.७० ।।
ऋषयोऽपीत्थमाज्ञाय गिरिजायास्सुनिश्चयम् ।।
प्रोचुर्जयगिरं तत्र ददुश्चाशिषमुत्तमाम् ।। ७१
अथ प्राणम्य तां देवीं मुनयो हृष्टमानसाः ।।
शिवस्थानं द्रुतं जग्मुस्तत्परीक्षाकरा मुने।।७२।।
तत्र गत्वा शिवं नत्वा वृत्तांतं विनिवेद्य तम् ।।
तदाज्ञां समनुप्राप्य स्वर्लोकं जग्मुरादरात् ।।७३।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखंडे सप्तर्षिकृतपरीक्षावर्णनो नाम पंचविशोऽध्याय ।। २५ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः २६

https://sa.wikisource.org/s/wip



।। ब्रह्मोवाच ।।

गतेषु तेषु मुनिषु स्वं लोकं शंकरः स्वयम् ।।

परीक्षितुं तपो देव्या ऐच्छत्सूतिकरः प्रभुः ।।१।।

परीक्षा छद्मना शंभुर्द्रष्टुं तां तुष्टमानसः।।

जाटिलं रूपमास्थाय स ययौ पार्वतीवनम् ।। २ ।।

अतीव स्थविरो विप्रदेहधारी स्वतेजसा ।।

प्रज्वलन्मनसा हृष्टो दंडी छत्री बभूव सः ।। ३ ।।

तत्रापश्यत्स्थितां देवीं सखीभिः परिवारिताम् ।।

वेदिकोपरि शुद्धां तां शिवामिव विधोः कलाम् ।। ४ ।।

शंभु निरीक्ष्य तां देवीं ब्रह्मचारिस्वरूपवान् ।।

उपकंठं ययौ प्रीत्या तदाऽसौ भक्तवत्सलः ।। ५ ।।

आगतं तं तदा दृष्ट्वा ब्राह्मणं तेजसाद्भुतम् ।।

अपूजयच्छिवा देवी सर्वपूजोपहारकैः ।।६।।

सुसत्कृतं संविधाभिः पूजितं परया मुदा ।।

पार्वती कुशलं प्रीत्या पप्रच्छ द्विजमादरात ।।७।।

।। पार्वत्युवाच ।।

ब्रह्मचारिस्वरूपेण कस्त्वं हि कुत आगतः ।।

इदं वनं भासयसे वद वेदविदां वर ।।८।।

।। विप्र उवाच ।।

अहमिच्छाभिगामी च वृद्धो विप्रतनुस्सुधीः ।।

तपस्वी सुखदोऽन्येषामुपकारी न संशयः ।। ९ ।।

का त्वं कस्यासि तनया किमर्थ विजने वने ।।

तपश्चरसि दुर्धर्षं मुनिभिः प्रपदैरपि ।।2.3.26.१०।।

न बाला न च वृद्धासि तरुणी भासि शोभना ।।

कथं पतिं विना तीक्ष्णं तपश्चरसि वै वने ।।११।।

कि त्वं तपस्विनी भद्रे कस्यचित्सहचारिणी ।।

तपस्वी स न पुष्णाति देवि त्वां च गतोऽन्यतः ।। १२ ।।

वद कस्य कुले जाता कः पिता तव का विधा ।।

महासौभाग्यरूपा त्वं वृथा तव तपोरतिः ।। १३ ।।

किं त्वं वेदप्रसूर्लक्ष्मीः किं सुरूपा सरस्वती ।।

एतासु मध्ये का वा त्वं नाहं तर्कितुमुत्सहे ।। १४ ।।

।। पार्वत्युवाच ।।

नाहं वेदप्रसूर्विप्र न लक्ष्मीश्च सरस्वती ।।

अहं हिमाचलसुता सांप्रतं नाम पार्वती ।।१५।।

पुरा दक्षसुता जाता सती नामान्यजन्मनि ।।

योगेन त्यक्तदेहाऽहं यत्पित्रा निन्दितः पतिः ।। १६ ।।

अत्र जन्मनि संप्राप्तश्शिवोऽपि विधिवैभवात् ।।

मां त्यक्त्वा भस्मसात्कृत्य मन्मथं स जगाम ह ।। १७ ।।

प्रयाते शंकरे तापोद्विजिताहं पितुर्गृहात् ।।

आगता तपसे विप्र सुदृढा स्वर्णदीतटे ।।१८।।

कृत्वा तपः कठोरं च सुचिरं प्राणवल्लभम् ।।

न प्राप्याग्नौ विविक्षन्ती त्वं दृष्ट्वा संस्थिता क्षणम्।।१९।।

गच्छ त्वं प्रविशाम्यग्नौ शिवेनांगीकृता न हि ।।

यत्र यत्र जनुर्लप्स्ये वरिष्यामि शिवं वरम् ।।2.3.26.२०।।

ब्रह्मोवाच ।।

इत्युक्त्वा पार्वती वह्नौ तत्पुरः प्रविवेश सा ।।

निषिध्यमाना पुरतो ब्राह्मणेन पुनः पुनः ।।२१।।

वह्निप्रवेशं कुर्वत्याः पार्वत्यास्तत्प्रभावतः।।

बभूव तत्क्षणं सद्यो वह्नि श्चंदनपंकवत् ।।२२।।

क्षणं तदंतरे स्थित्वा ह्युत्पतंती दिवं द्विजः ।।

पुनः पप्रच्छ सहसा विहसन्सुतनुं शिवः ।।२३।।

द्विज उवाच ।।

अहो तपस्ते किं भद्रे न बुद्धं किंचिदेव हि ।।
न दग्धो वह्निना देहो न च प्राप्तं मनीषितम्।।२४।।
अतस्सत्यं निकामं वै वद देवि मनोरथम् ।।
ममाग्रे विप्रवर्यस्य सर्वानंदप्रदस्य हि ।।२५।।
यथाविधि त्वया देवि कीर्त्यतां सर्वथात्मना ।।
तस्मान्मैत्री च संजाता कार्य्यं गोप्यं त्वया न हि ।। २६ ।।
किमिच्छसि वरं देवि प्रष्टुमिच्छाम्यतः परम् ।।
त्वय्येव तदसौ देवि फलं सर्वं प्रदृश्यते ।। २७ ।।
परार्थे च तपश्चेद्वै तिष्ठेत्तु तप एव तत् ।।
रत्नं हस्ते समादाय हित्वा काचस्तु संचितः ।।२८।।
ईदृशं तव सौंदर्यं कथं व्यर्थीकृतं त्वया ।।
हित्वा वस्त्राण्यनेकानि चर्मादि च धृतं त्वया ।।२९।।
तत्सर्वं कारणं ब्रूहि तपसस्त्वस्य सत्यतः ।।
तच्छ्रुत्वा विप्रवर्योऽहं यथा हर्षमावाप्नुयाम् ।।2.3.26.३०।।
ब्रह्मोवाच ।।
इति पृष्टा तदा तेन सखीं प्रैरयताम्बिका ।।
तन्मुखेनैव तत्सर्वं कथयामास सुव्रता ।।३१।।
तया च प्रेरिता तत्र पार्वत्या विजयाभिधा ।।
प्राणप्रिया सुव्रतज्ञा सखी जटिलमब्रवीत् ।। ३२ ।।
सख्युवाच ।।
शृणु साधो प्रवक्ष्यामि पार्वतीचरितं परम् ।।
हेतुं च तपसस्सर्वं यदि त्वं श्रोतुमिच्छसि ।। ३३ ।।
सखा मे गिरिराजस्य सुतेयं हिमभूभृतः ।।
ख्याता वै पार्वती नाम्ना सा कालीति च मेनका ।। ३४ ।।
ऊढेयं न च केनापि न वाञ्छति शिवात्परम् ।।
त्रीणि वर्षसहस्राणि तपश्चरणसाधिनी ।। ३५ ।।
तदर्थं मेऽनया सख्या प्रारब्धं तप ईदृशम् ।।
तदत्र कारणं वक्ष्ये शृणु साधो द्विजोत्तम ।। ३६ ।।

हित्वेन्द्रप्रमुखान्देवान् हरिं ब्रह्माणमेव च ।।
पतिं पिनाकपाणिं वै प्राप्नुमिच्छति पार्वती ।। ३७ ।।
इयं सखी मदीया वै वृक्षानारोप यत्पुरा ।।
तेषु सर्वेषु संजातं फलपुष्पादिकं द्विज ।। ३८ ।।
रूपसार्थाय जनककुलालंकरणाय च ।।
समुद्दिश्य महेशानं कामस्यानुग्रहाय च ।। ३९ ।।
मत्सखी नारदोपदेशात्तपस्तपति दारुणम् ।।
मनोरथः कुतस्तस्या न फलिष्यति तापस ।। 2.3.26.४० ।।
यत्ते पृष्टं द्विजश्रेष्ठ मत्सख्या मनसीप्सितम् ।।
मया ख्यातं च तत्प्रीत्या किमन्यच्छ्रोतुमिच्छसि ।। ४१ ।।
ब्रह्मोवाच ।।
इत्येवं वचनं श्रुत्वा विजयाया यथार्थतः ।।
मुने स जटिलो रुद्रो विहसन्वाक्यमब्रवीत् ।। ४२ ।।
जटिल उवाच ।।
सख्येदं कथितं तत्र परिहासोनुमीयते ।।
यथार्थं चेत्तदा देवी स्वमुखेनाभिभाषताम् ।।४३।।
।। ब्रह्मोवाच ।।
इत्युक्ते च तदा तेन जटिलेन द्विजन्मना ।।
उवाच पार्वती देवी स्वमुखेनैव तं द्विजम् ।। ४४ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे शिवाजटिलसंवादो नाम षड्विंशोध्यायः ।। २६ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः २७

https://sa.wikisource.org/s/wiq



पार्वत्युवाच ।।

शृणु द्विजेन्द्र जटिल मद्वृत्तं निखिलं खलु ।।

सख्युक्तं मेऽद्य यत्सत्यं तत्तथैव न चान्यथा ।। १ ।।

मनसा वचसा साक्षात्कर्म्मणा पतिभावतः ।।

सत्यं ब्रवीमि नोऽसत्यं वृतो वै शंकरो या ।। २ ।।

जानामि दुर्ल्लभं वस्तु कथम्प्राप्यं मया भवेत् ।।

तथापि मन औत्सुक्यात्तप्यतेऽद्य तपो मया ।। ३ ।।

।। ब्रह्मोवाच ।।

इत्युक्त्वा वचनन्तस्मै स्थिता सा गिरिजा तदा ।।

उवाच ब्राह्मणस्तत्र तच्छ्रुत्वा पार्वतीवचः ।। ४ ।।

ब्राह्मण उवाच ।।

एतावत्कालपर्य्यन्तम्ममेच्छा महती ह्यभूत् ।।

किं वस्तु कांक्षती देवी कुरुते सुमहत्तपः ।। ५ ।।

तज्ज्ञात्वा निखिलं देवि श्रुत्वा त्वन्मुखपंकजात् ।।

इतो गच्छाम्यहं स्थानाद्यथेच्छसि तथा कुरु ।। ६ ।।

न कथ्यते त्वया मह्यं मित्रत्वं निष्फलम्भवेत् ।।

यथा कार्य्यं तथा भावि कथनीयं सुखेन च ।। ७ ।।

।। ब्रह्मोवाच ।।

इत्युक्त्वा वचनं तस्य यावद्गन्तुमियेष सः ।।

तावच्च पार्वती देवी प्रणम्योवाच तं द्विजम् ।। ८ ।।

।। पार्वत्युवाच ।।

किं गमिष्यसि विप्रेन्द्र स्थितो भव हितं वद ।।

इत्युक्ते च तया तत्र स्थित्वोवाच स दण्डधृक् ।। ९ ।।

द्विज उवाच ।।

यदि श्रोतुमना देवि मां स्थापयसि भक्तितः ।।
वदामि तत्त्वं तत्सर्वं येन ते वयुनम्भवेत् ।। 2.3.27.१० ।।
जानाम्यहं महादेवं सर्वथा गुरुधर्म्मतः ।।
प्रवदामि यथार्थं हि सावधानतया शृणु ।।११।।
वृषध्वजो महादेवो भस्मदिग्धो जटाधरः ।।
व्याघ्रचर्म्मांबरधरः संवीतो गजकृत्तिना ।। १२ ।।
कपालधारी सर्पौघैस्सर्वगात्रेषु वेष्टितः ।।
विषदिग्धोऽभक्ष्यभक्षो विरूपाक्षो विभीषणः ।।१३।।
अव्यक्तजन्मा सततं गृहभोगविवर्जितः ।।
दिगंबरो दशभुजो भूत प्रेतान्वितस्सदा ।।१४।।
केन कारणेन त्वं तं भर्तारं समीहसे ।।
क्व ज्ञानं ते गतं देवि तद्वदाद्य विचारतः ।।१५।।
पूर्वं श्रुतं मया चैव व्रतन्तस्य भयंकरम् ।।
शृणु ते निगदाम्यद्य यदि ते श्रवणे रुचिः ।।१६।।
दक्षस्य दुहिता साध्वी सती वृषभवाहनम्।।
वव्रे पतिं पुरा दैवात्तत्संभोगः परिश्रुतः ।।१७।।
कपालिजायेति सती दक्षेण परिवर्जिता ।।
यज्ञे भागप्रदानाय शंभुश्चापि विवर्जितः ।।१८।।
सा तथैवापमानेन भृशं कोपाकुला सती ।।
तत्याजासून्प्रियांस्तत्र तया त्यक्तश्च शंकरः ।।१९।।
त्वं स्त्रीरत्नं तव पिता राजा निखिल भूभृताम् ।।
तथाविधं पतिं कस्मादुग्रेण तपसेहसे ।।2.3.27.२०।।
दत्त्वा सुवर्णमुद्रां च ग्रहीतुं काचमिच्छसि ।।
हित्वा च चंदनं शुभ्रं कर्दमं लेप्तुमिच्छसि ।। २१ ।।
सूर्य्यतेजः परित्यज्य खद्योतद्युतिमिच्छसि ।।
चीनांशुकं विहायैव चर्म्मांबरमिहेच्छसि ।। २२ ।।
गृहवासम्परित्यज्य वनवासं समीहसे ।।
लोहमिच्छसि देवेश त्यक्त्वा शेवधिमुत्तमम् ।।२३।।

इन्द्रादिलोकपालांश्च हित्वा शिवमनु व्रता ।।

नैतत्सूक्तं हि लोकेषु विरुद्धं दृश्यतेऽधुना ।।२४।।

क्व त्वं कमलपत्राक्षी क्वासौ वै त्रिविलोचनः ।।

शशांकवदना त्वं च पंचवक्त्रः शिवस्स्मृतः ।। २५ ।।

वेणी शिरसि ते दिव्या सर्पिणीव विभासिता ।।

जटाजूटं शिवस्येव प्रसिद्धम्परिचक्षते ।। २६ ।।

चंदनं च त्वदीयांगे चिताभस्म शिवस्य च ।।

क्व दुकूलं त्वदीयं वै शांकरं क्व गजाजिनम् ।। २७ ।।

भूषणानि दिव्यानि क्व सर्पाश्शंकरस्य च ।।

क्व चरा देवतास्सर्वाः क्व च भूतबलिप्रियः ।। २८ ।।

क्व वा मृदंगवादश्च क्व च तड्डमरुस्तथा ।।

क्व च भेरीकलापश्च क्व च शृंगरवोऽशुभः ।।२९।।

क्व च ढक्कामयः शब्दो गलनादः क्व चाशुभः ।।

भवत्याश्च शिवस्यैव न युक्तं रूपमुत्तमम् ।। 2.3.27.३० ।।

यदि द्रव्यं भवेत्तस्य कथं स्यात्स दिगम्बरः ।।

वाहनं च बलीवर्दस्सामग्री कापि तस्य न ।। ३१ ।।

वरेषु ये गुणाः प्रोक्ता नारीणां सुखदायकाः ।।

तन्मध्ये हि विरूपाक्षे एकोपि न गुणः स्मृतः ।। ३२ ।।

तवापि कामो दयितो दग्धस्तेन हरेण च ।।

अनादरस्तदा दृष्टो हित्वा त्वामन्यतो गतः ।।३३।।

जातिर्न दृश्यते तस्य विद्याज्ञानं तथैव च ।।

सहायाश्च पिशाचा हि विषं कण्ठे हि दृश्यते ।। ३४ ।।

एकाकी च सदा नित्यं विरागी च विशेषतः ।।

तस्मात्त्वं हि हरे नैव मनो योक्तुं तु चार्हसि ।। ३५ ।।

क्व च हारस्त्वदीयो वै क्व च तन्मुण्डमालिका ।।

अंगरागः क्व ते दिव्यः चिताभस्म क्व तत्तनौ ।। ३६ ।।

सर्वं विरुद्धं रूपादि तव देवि हरस्य च ।।

मह्यं न रोचते ह्येतद्यदिच्छसि तथा कुरु ।।३७।।

असद्वस्तु च यत्किंचित् तत्सर्वं स्वयमीहसे ।।

निर्वर्तय मनस्तस्मान्नोचेदिच्छसि तत्कुरु ।। ३८ ।।

ब्रह्मोवाच ।।

इत्येवं वचनं श्रुत्वा तस्य विप्रस्य पार्वती ।।

उवाच क्रुद्धमनसा शिवनिन्दापरं द्विजम्।।३९।।

इतिश्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखंडे ब्रह्मचारिप्रतारणवाक्यवर्णनं नाम सप्तविंशोऽध्यायः।।२७।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः २८

https://sa.wikisource.org/s/wj7



पार्वत्युवाच ।।

एतावद्धि मया ज्ञातं कश्चिदन्योयमागतः ।।

इदानीं सकलं ज्ञातमवध्यस्त्वम्विशेषतः ।।१।।

त्वयोक्तं विदितं देव तदलीकं न चान्यथा ।।

यदि त्वयोदितं स्याद्वै विरुद्धं नोच्यते त्वया।।२।।

कदाचिद्दृश्यते तादृक् वेषधारी महेश्वरः ।।

स्वलीलया परब्रह्म स्वरागोपात्तविग्रहः।।३।।

ब्रह्मचारिस्वरूपेण प्रतारयितुमुद्यतः।।

आगतश्छलसंयुक्तं वचोवादीः कुयुक्तितः। ।।४।।

शंकरस्य स्वरूपं तु जानामि सुविशेषतः ।।

शिवतत्त्वमतो वच्मि सुविचार्य्य यथार्हतः ।।५।।

वस्तुतो निर्गुणो ब्रह्म सगुणः कारणेन सः ।।

कुतो जातिर्भवेत्तस्य निर्गुणस्य गुणात्मनः ।।६।।

स सर्वासां हि विद्यानामधिष्ठानं सदाशिवः ।।

किं तस्य विद्यया कार्य्यं पूर्णस्य परमात्मनः ।।७।।

वेदा उच्छवासरूपेण पुरा दत्ताश्च विष्णवे ।।

शंभुना तेन कल्पादौ तत्समः कोऽस्ति सुप्रभुः ।। ८ ।।

सर्वेषामादिभूतस्य वयोमानं कुतस्ततः ।।

प्रकृतिस्तु ततो जाता किं शक्तेस्तस्य कारणम् ।। ९ ।।

ये भजंति च तं प्रीत्या शक्तीशं शंकरं सदा ।।

तस्मै शक्तित्रयं शंभुः स ददाति सदाव्ययम् ।। 2.3.28.१० ।।

तस्यैव भजनाज्जीवो मृत्युं जयति निर्भयः ।।

तस्मान्मृत्युंजयन्नाम प्रसिद्धम्भुवनत्रये ।।११।।

तस्यैव पक्षपातेन विष्णुर्विष्णुत्वमाप्नुयात् ।।

ब्रह्मत्वं च यथा ब्रह्मा देवा देवत्वमेव च ।१२।।

दर्शनार्थं शिवस्यादौ यथा गच्छति देवराट्।।

भूतादयस्तत्परस्य द्वारपालाश्शिवस्य तु।।१३।।

दण्डैश्च मुकुटं विद्धं मृष्टं भवति सर्वतः ।।

किं तस्य बहुपक्षेण स्वयमेव महाप्रभुः ।।१४।।

कल्याणरूपिणस्तस्य सेवयेह न किं भवेत्।।

किं न्यूनं तस्य देवस्य मामिच्छति सदाशिवः।।१५।।

सप्तजन्मदरिद्रः स्यात्सेवेन्नो यदि शंकरम् ।।

तस्यैतत्सेवनाल्लोको लक्ष्मीः स्यादनपायिनी।।१६।।

यदग्रे सिद्धयोष्टौ च नित्यं नृत्यंति तोषितुम्।।

अवाङ्मुखास्सदा तत्र तद्धितं दुर्ल्लभं कुतः।।१७।।

यद्यस्य मंगालानीह सेवते शंकरस्य न।।

यथापि मंगलन्तस्य स्मरणादेव जायते ।। १८।।

यस्य पूजाप्रभावेण कामास्सिद्ध्यन्ति सर्वशः ।।

कुतो विकारस्तस्यास्ति निर्विकारस्य सर्वदा ।।१९।।

शिवेति मंगलन्नाम मुखे यस्य निरन्तरम् ।।

तस्यैव दर्शनादन्ये पवित्रास्संति सर्वदा ।।2.3.28.२०।।

यद्यपूतम्भवेद्भस्म चितायाश्च त्वयोदितम् ।।

नित्यमस्यांगगं देवैश्शिरोभिर्द्धार्यते कथम्।।२१।।

यो देवो जगतां कर्ता भर्ता हर्ता गुणान्वितः ।।

निर्गुणश्शिवसंज्ञश्च स विज्ञेयः कथम्भवेत् ।। २२ ।।

अगुणं ब्रह्मणो रूपं शिवस्य परमात्मनः ।।

तत्कथं हि विजानन्ति त्वादृशास्तद्बहिर्मुखाः ।। २३ ।।

दुराचाराश्च पापाश्च देवेभ्यस्ते विनिर्गताः ।।

तत्त्वं ते नैव जानन्ति शिवस्यागुणरूपिणः ।। २४ ।।

शिवनिन्दां करोतीह तत्त्वमज्ञाय यः पुमान् ।।

आजन्मसंचितं पुण्यं भस्मीभवति तस्य तत् ।। २५ ।।

त्वया निंदा कृता यात्र हरस्यामित तेजसः ।।

त्वत्पूजा च कृता यन्मे तस्मात्पापम्भजाम्यहम् ।। २६ ।।

शिवविद्वेषिणं दृष्ट्वा सचेलं स्नानमाचरेत् ।।

शिवविद्वेषिणं दृष्ट्वा प्रायश्चितं समाचरेत् ।।२७।।

रे रे दुष्ट त्वया चोक्तमहं जानामि शंकरम् ।।

निश्चयेन न विज्ञातश्शिव एव सनातनः ।।२८।।

यथा तथा भवेद्रुद्रो यथा वा बहुरूपवान् ।।

ममाभीष्टतमो नित्यं निर्विकारी सतां प्रियः ।। २९ ।।

विष्णुर्ब्रह्मापि न समस्तस्य क्वापि महात्मनः ।।

कुतोऽन्ये निर्जराद्याश्च कालाधीनास्सदैवतम्।।2.3.28.३०।।

इति बुध्या समालोक्य स्वया सत्या सुतत्त्वतः ।।

शिवार्थं वनमागत्य करोमि विपुलं तपः ।। ३१ ।।

स एव परमेशानस्सर्वेशो भक्तवत्सलः ।।

संप्राप्तुम्मेऽभिलाषो हि दीनानुग्रहकारकम् ।। ३२ ।।

ब्रह्मोवाच ।।

इत्युक्त्वा गिरिजा सा हि गिरीश्वरसुता मुने ।।

विरराम शिवं दध्यो निर्विकारेण चेतसा ।। ३३ ।।

तदाकर्ण्य वचो देव्या ब्रह्मचारी स वै द्विजः ।।

पुनर्वचनमाख्यातुं यावदेव प्रचक्रमे ।।३४।।

उवाच गिरिजा तावत्स्वसखीं विजयां द्रुतम् ।।

शिव सक्तमनोवृत्तिश्शिवनिंदापराङ्मुखी।।३५।।

गिरिजोवाच ।।

वारणीयः प्रयत्नेन सख्ययं हि द्विजाधमः ।।

पुनर्वक्तुमनाश्चैव शिवनिंदां करिष्यति ।। ३६ ।।

न केवलम्भवेत्पापं निन्दां कर्तुश्शिवस्य हि ।।

यो वै शृणोति तन्निन्दां पापभाक् स भवेदिह ।। ३७ ।।

शिवनिन्दाकरो वध्यस्सर्वथा शिवकिंकरैः ।।

ब्राह्मणश्चेत्स वै त्याज्यो गन्तव्यं तत्स्थलाद्द्रुतम् ।। ३८ ।।

अयं दुष्टः पुनर्निन्दां करिष्यति शिवस्य हि ।।

ब्राह्मणत्वादवध्यश्चैत्याज्योऽदृश्यश्च सर्वथा ।। ३९ ।।

हित्वैतत्स्थलमद्येव यास्यामोऽन्यत्र मा चिरम् ।।

यथा संभाषणं न स्यादनेनाऽविदुषा पुनः ।। 2.3.28.४० ।।

ब्रह्मोवाच ।।

इत्युक्त्वा चोमया यावत्पादमुत्क्षिप्यते मुने ।।

असौ तावच्छिवस्साक्षादालंबे प्रियया स्वयम् ।। ४१ ।।

कृत्वा स्वरूपं सुभगं शिवाध्यानं यथा तथा ।।

दर्शयित्वा शिवायै तामुवाचावाङ्मुखीं शिवः ।।४२।।

शिव उवाच ।।

कुत्र यास्यसि मां हित्वा न त्वं त्याज्या मया पुनः ।।

प्रसन्नोऽस्मि वरं ब्रूहि नादेयम्विद्यते तव ।। ।। ४३ ।।

अद्यप्रभृति ते दासस्तपोभिः क्रीत एव ते ।।

क्रीतोऽस्मि तवसौन्दर्यात्क्षणमेकं युगाय ते ।। ४४ ।।

त्यज्यतां च त्वया लज्जा मम पत्नी सनातनी ।।

गिरिजे त्वं हि सद्बुध्या विचारय महेश्वरि ।। ४५ ।।

मया परीक्षितासि त्वं बहुधा दृढमानसे ।।

तत्क्षमस्वापराधम्मे लोकलीलानुसारिणः ।। ४६ ।।

न त्वादृशीम्प्रणयिनीं पश्यामि च त्रिलोकके ।।

सर्वथाहं तवाधीनस्स्वकामः पूर्य्यतां शिवे ।। ४७ ।।

एहि प्रिये मत्सकाशं पत्नी त्वं मे वरस्तव ।।

त्वया साकं द्रुतं यास्ये स्वगृहम्पर्वतोत्तमम् ।। ४८ ।।

ब्रह्मोवाच ।।

इत्युक्ते देवदेवेन पार्वती मुदमाप सा ।।

तपोजातं तु यत्कष्टं तज्जहौ च पुरातनम् ।। ४९ ।।

सर्वः श्रमो विनष्टोभूत्स त्यास्तु मुनिसत्तम ।।

फले जाते श्रमः पूर्वो जन्तोर्नाशमवाप्नुयात् ।। 2.3.28.५० ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखंडे पार्वत्याश्शिवरूपदर्शनं नामाष्टाविंशोऽध्यायः ।। २८ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः २९

https://sa.wikisource.org/s/wj8



नारद उवाच ।।

ब्रह्मन् विधे महाभाग किं जातं तदनन्तरम्।। ।।

तत्सर्वं श्रोतुमिच्छामि कथय त्वं शिवायशः ।।१।।

ब्रह्मोवाच।।

देवर्षे श्रूयतां सम्यक्कथयामि कथां मुदा।।

तां महापापसंहर्त्रीं शिवभक्तिविवर्द्धिनीम् ।।२।।

पार्वती वचनं श्रुत्वा हरस्स परमात्मनः ।।

दृष्ट्वानन्दकरं रूपं जहर्षातीव च द्विज ।।३।।

प्रत्युवाच महा साध्वी स्वोपकण्ठस्थितं विभुम् ।।

अतीव सुखिता देवी प्रीत्युत्फुल्लानना शिवा ।। ४ ।।

पार्वत्युवाच ।।

त्वं नाथो मम देवेश त्वया किं विस्मृतम्पुरा ।।

दक्षयज्ञविनाशं हि यदर्थं कृतवान्हठात् ।। ५ ।।

स त्वं साहं समुत्पन्ना मेनयां कार्य्यसिद्धये ।।

देवानां देव देदेश तारकात्साऽसुखात्मनाम् ।।६।।

यदि प्रसन्नो देवेश करोषि च कृपां यदि ।।

पतिर्भव ममेशान मम वाक्यं कुरु प्रभो ।।७।।

पितुर्गेहे मया सम्यग्गम्यते त्वदनुजया ।।

प्रसिद्धं क्रियतां तद्वै विशुद्धं परमं यशः ।। ८ ।।

गन्तव्यं भवता नाथ हिमवत्पार्श्वतं प्रभो ।।

याचस्व मां ततो भिक्षु भूत्वा लीलाविशारदः ।। ९ ।।

तथा त्वया प्रकर्तव्यं लोके ख्यापयता यशः ।।

पितुर्मे सफलं सर्वं कुरुष्वैवं गृहा*मम् ।। 2.3.29.१० ।।

ऋषिभिर्बोधितः प्रीत्या स्वबन्धुपरिवारितः ।।

करिष्यति न संदेहस्तव वाक्यं पिता मम ।।११।।

दक्षकन्या पुराहं वै पित्रा दत्ता यदा तव ।।

यथोक्तविधिना तत्र विवाहो न कृतस्त्वया ।। १२ ।।

न ग्रहाः पूजितास्तेन दक्षेण जनकेन मे ।।

ग्रहाणां विषयस्तेन सच्छिद्रोयं महानभूत् ।। १३ ।।

तस्माद्यथोक्तविधिना कर्तुमर्हसि मे प्रभो ।।

विवाहं त्वं महादेव देवानां कार्य्यसिद्धये ।। १४ ।।

विवाहस्य यथा रीतिः कर्तव्या सा तथा ध्रुवम् ।।

जानातु हिमवान् सम्यक् कृतं पुत्र्या शुभं तपः ।। १५ ।।

ब्रह्मोवाच ।। इत्येवं वचनं श्रुत्वा सुप्रसन्नस्सदाशिवः ।।

प्रोवाच वचनं प्रीत्या गिरिजां प्रहसन्निव ।।। १६ ।।

शिव उवाच ।।

शृणु देवि महेशानि परमं वचनं मम ।।

यथोचितं सुमाङ्गल्यमविकारि तथा कुरु ।। १७ ।।

ब्रह्मादिकानि भूतानि त्वनित्यानि वरानने ।।

दृष्टं यत्सर्वमेतच्च नश्वरं विद्धि भामिनि ।। १८ ।।

एकोनेकत्वमापन्नो निर्गुणो हि गुणान्वितः।।।

ज्योत्स्नया यो विभाति परज्योत्स्नान्वितोऽभवत् ।।१९।।

स्वतन्त्रः परतन्त्रश्च त्वया देवि कृतो ह्यहम्।।

सर्वकर्त्री च प्रकृतिर्महामाया त्वमेव हि।।2.3.29.२०।।

मायामयं कृतमिदं च जगत्समग्रं सर्वात्मना हि विधृतं परया स्वबुद्ध्या ।।

सवात्र्मभिस्सुकृतिभिः परमात्मभावैस्संसिक्तमात्मनि गणः परिवेष्टितश्च ।।२१।।

के ग्रहाः के ऋतुगणाः के वान्येपि त्वया ग्रहाः।।

किमुक्तं चाधुना देवि शिवार्थं वरवर्णिनि ।।२२।।

गुणकार्य्यप्रभेदेनावाभ्यां प्रादुर्भवः कृतः ।।

भक्तहेतोर्जगत्यस्मिन्भक्तवत्सलभावतः ।।२३।।

त्वं हि वै प्रकृतिस्सूक्ष्मा रजस्सत्त्वतमोमयी।।

व्यापारदक्षा सततं सगुणा निर्गुणापि च।।२४।।

सर्वेषामिह भूतानामहमात्मा सुमध्यमे।।
निर्विकारी निरीहश्च भक्तेच्छोपात्तविग्रहः ।।२५।।
हिमालयं न गच्छेयं जनकं तव शैलजे ।।
ततस्त्वां भिक्षुको भूत्वा न याचेयं कथंचन ।। २६ ।।
महागुणैर्गरिष्ठोपि महात्मापि गिरीन्द्रजे ।।
देहीतिवचनात्सद्यः पुरुषो याति लाघवम् ।।२७।।
इत्थं ज्ञात्वा तु कल्याणि किमस्माकं वदस्यथ ।।
कार्य्यं त्वदाज्ञया भद्रे यथेच्छसि तथा कुरु ।। २८ ।।
।। ब्रह्मोवाच ।।
तेनोक्तापि महादेवी सा साध्वी कमलेक्षणा ।।
जगाद शंकरं भक्त्या सुप्रणम्य पुनः पुनः।।२९।।
पार्वत्युवाच ।।
त्वमात्मा प्रकृतिश्चाहं नात्र कार्य्या विचारणा ।।
स्वतन्त्रौ भक्तवशगौ निर्गुणौ सगुणावपि ।। 2.3.29.३० ।।
प्रयत्नेन त्वया शम्भो कार्यं वाक्यं मम प्रभो ।।
याचस्व मां हिमगिरेस्सौभाग्यं देहि शङ्कर ।। ३१ ।।
कृपां कुरु महेशान तव भक्तास्मि नित्यशः ।।
तव पत्नी सदा नाथ ह्यहं जन्मनि जन्मनि ।।३२।।
त्वं ब्रह्म परमात्मा हि निर्गुणः प्रकृतेः परः ।।
निर्विकारी निरीहश्च स्वतन्त्रः परमेश्वरः ।। ३३ ।।
तथापि सगुणोपीह भक्तोद्धारपरायणः ।।
विहारी स्वात्मनिरतो नानालीलाविशारदः ।। ३४ ।।
सर्वथा त्वामहं जाने महादेव महेश्वर ।।
किमुक्तेन च सर्वज्ञ बहुना हि दयां कुरु ।। ३५ ।।
विस्तारय यशो लोके कृत्वा लीलां महाद्भुताम् ।।
यत्सुगीय जना नाथांजसोत्तीर्णा भवाम्बुधेः ।।३६।।
ब्रह्मोवाच ।।
इत्येवमुक्त्वा गिरिजा सुप्रणम्य पुनः पुनः ।।

विरराम महेशानं नतस्कन्धा कृतांजलिः ।। ३७ ।।

इत्येवमुक्तस्स तया महात्मा महेश्वरो लोकविडम्बनाय ।।

तथेति मत्वा प्रहसन्बभूव मुदान्वितः कर्तुमनास्तदेव ।।३८।।

ततो ह्यन्तर्हितश्शम्भुर्बभूव सुप्रहर्षितः ।।

कैलासं प्रययौ काल्या विरहाकृष्टमानसः ।। ३९ ।।

तत्र गत्वा महेशानो नन्द्यादिभ्यस्स ऊचिवान् ।।

वृत्तान्तं सकलं तम्वै परमानन्दनिर्भरः ।।2.3.29.४०।।

तेऽपि श्रुत्वा गणास्सर्वे भैरवाद्याश्च सर्वशः।।

बभूवुस्सुखिनोत्यन्तं विदधुः परमोत्सवम्।।४१।।

सुमंगलं तत्र द्विज बभूवातीव नारद ।।

सर्वेषां दुःखनाशोभूद्रुद्रः प्रापापि संमुदम् ।। ४२ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे शिवाशिवसम्वादवर्णनं नामैकोनत्रिंशोऽध्यायः ।। २९ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ३०

https://sa.wikisource.org/s/wj9



।। नारद उवाच।।

विधे तात महाभाग धन्यस्त्वं परमार्थदृक् ।।

अद्भुतेयं कथाश्रावि त्वदनुग्रहतो मया ।। १ ।।

गते हरे स्वशैले हि पार्वती सर्वमंगला ।।

किं चकार गता कुत्र तन्मे वद महामते ।। २ ।।

।। ब्रह्मोवाच ।।

शृणु सुप्रीतितस्तात यज्जातं तदनन्तरम् ।।

हरे गते निजस्थाने तद्वदामि शिवं स्मरन् ।।३।।

पार्वत्यपि सखीयुक्ता रूपं कृत्वा तु सार्थकम् ।।

जगाम स्वपितुर्गेहं महादेवेति वादिनी ।। ४ ।।

पार्वत्यागमनं श्रुत्वा मेना च स हिमाचलः ।।

दिव्यं यानं समारुह्य प्रययौ हर्षविह्वलः ।। ५ ।।

पुरोहितश्च पौराश्च सख्यश्चैवाप्यनेकशः ।।

सम्वन्धिनस्तथान्ये च सर्वे ते च समाययुः ।।६।।

भ्रातरः सकला जग्मुर्मैनाकप्रमुखास्तदा ।।

जयशब्दं प्रब्रुवन्तो महाहर्षसमन्विताः ।।७।।

संस्थाप्य मंगलघटं राजवर्त्मनि राजिते ।।

चन्दनागरुकस्तूरीफलशाखासमन्विते ।।८।।

सपुरोधोब्राह्मणैश्च मुनिभिर्ब्रह्मवादिभिः ।।

नारीभिर्नर्तकीभिश्च गजेन्द्राद्रिसुशोभितैः ।।९।।

परितः परितो रंभास्तम्भवृन्दसमन्विते।।

पतिपुत्रवतीयोषित्समूहैर्दीपहस्तकैः ।।2.3.30.१ ०।।

द्विजवृन्दैश्च संयुक्ते कुर्वद्भिर्मङ्गलध्वनिम् ।।

नानाप्रकारवाद्यैश्च शंखध्वनिभिरन्विते ।। ११ ।।

एतस्मिन्नन्तरे दुर्गा जगाम स्वपुरान्तिकम् ।।
विशंती नगरं देवी ददर्श पितरौ पुनः ।।१२।।
सुप्रसन्नौ प्रधावन्तौ हर्षविह्वलमानसौ ।।
दृष्ट्वा काली सुप्रहृष्टा स्वालिभिः प्रणनाम तौ ।।१३।।
तौ सम्पूर्णाशिषं दत्त्वा चक्रतुस्तौ स्ववक्षसि ।।
हे वत्से त्वेवमुच्चार्य रुदन्तौ प्रेमविह्वलौ ।।१४।।
ततस्स्वकीया अप्यस्या अन्या नार्यापि संमुदा ।।
भ्रातृस्त्रियोपि सुप्रीत्या दृढालिंगनमादधुः ।। १५ ।।
साधितं हि त्वया सम्यक्सुकार्यं कुलतारणम् ।।
त्वत्सदाचरणेनापि पाविताः स्माखिला वयम् ।। १६ ।।
इति सर्वे सुप्रशंस्य प्रणेमुस्तां प्रहर्षिताः ।।
चन्दनैः सुप्रसूनैश्च समानर्चुश्शिवां मुदा ।। १७ ।।
तस्मिन्नवसरे देवा विमानस्था मुदाम्बरे ।।
पुष्पवृष्टिं शुभां चक्रुर्नत्वा तां तुष्टुवुः स्तवैः ।। १८ ।।
तदा तां च रथे स्थाप्य सर्वे शोभान्विते वरे ।।
पुरं प्रवेशयामासुस्सर्वे विप्रादयो मुदा ।।१९।।
अथ विप्राः पुरोधाश्च सख्योन्याश्च स्त्रियः शिवाम् ।।
गृहं प्रवेशयामासुर्बहुमानपुरस्सरम् ।। 2.3.30.२० ।।
स्त्रियो निर्मच्छनं चक्रुर्विप्रा युयुजुराशिषः ।।
हिमवान्मेनका माता मुमोदाति मुनीश्वर ।। २१ ।।
स्वाश्रमं सफलं मेने कुपुत्रात्पुत्रिका वरा ।।
हिमवान्नारदं त्वाञ्च संस्तुवन् साधुसाध्विति ।। २२ ।।
ब्राह्मणेभ्यश्च बंदिभ्यः पर्वतेन्द्रो धनं ददौ ।।
मङ्गलं पाठयामास स द्विजेभ्यो महोत्सवम् ।।२३।।
एवं स्वकन्यया हृष्टौ पितरौ भ्रातरस्तथा ।।
जामयश्च महाप्रीत्या समूषुः प्रांगणे मुने ।।२४।।
ततस्स हिमवान् तात सुप्रहृष्टाः प्रसन्नधीः ।।
सम्मान्य सकलान्प्रीत्या स्नातुं गंगां जगाम ह ।। २२ ।।

एतस्मिन्नंतरे शंभुस्सुलीलो भक्तवत्सलः ।।
सुनर्तकनटो भूत्वा मेनकासंनिधिं ययौ ।। २६ ।।
शृंगं वामे करे धृत्वा दक्षिणे डमरु तथा ।।
पृष्ठे कंथां रक्तवासा नृत्यगानविशारदः ।।२७।।
ततस्सुनटरूपोसौ मेनकाया गणे मुदा ।।
चक्रे सुनृत्यं विविधं गानं चातिमनोहरम्।।२८।।
शृंगं च डमरुं तत्र वादयामास सुध्वनिम् ।।
महतीं विविधां तत्र स चकार मनोहराम् ।।२९।।
तां द्रष्टुं नागरास्सर्वे पुरुषाश्च स्त्रियस्तथा ।।
आजग्मुस्सहसा तत्र बाला वृद्धा अपि ध्रुवम् ।।2.3.30.३०।।
श्रुत्वा सुगीतं तद्दृष्ट्वा सुनृत्यं च मनोहरम् ।।
सहसा मुमुहुस्सर्वे मेनापि च तदा मुने ।।३१।।
मूर्च्छां संप्राप्य सा दुर्गा सुदृष्ट्वा हृदि शंकरम् ।।
त्रिशूलादिकचिह्नानि बिभ्रतं चातिसुन्दरम् ।। ३२।।
विभूतिविभूषितं रम्यमस्थिमालासमन्वितम् ।।
त्रिलोचनोज्ज्वलद्वक्त्रं नागायज्ञोपवीतकम् ।। ३३ ।।
वरं वृण्वित्युक्तवन्तं गौरवर्णं महेश्वरम् ।।
दीनबन्धु दयासिन्धुं सर्वथा सुमनोहरम् ।। ३४ ।।
हृदयस्थं हरं दृष्ट्वेदृशं सा प्रणनाम तम् ।।
वरं वव्रे मानसं हि पतिर्मे त्वं भवेति च ।।३५।।
वरं दत्त्वा शिवं चाथ तादृशं प्रीतितो हृदा ।।
अन्तर्धाय पुनस्तत्र सुननर्त्त स भिक्षुकः ।।३६।।
ततो मेना सुरत्नानि स्वर्णपात्रस्थितानि च ।।
तस्मै दातुं ययौ प्रीत्या तद्भूति प्रीतमानसः ।। ३७ ।।
तानि न स्वीचकारासौ भिक्षां याचे शिवां च ताम् ।।
पुनस्सुनृत्यं गानश्च कौतुकात्कर्तुमुद्यतः ।। ३८ ।।
मेना तद्वचनं श्रुत्वा चुकोपाति सुविस्मिता ।।
भिक्षुकं भर्त्सयामास बहिष्कर्तुमियेष सा ।। ३९ ।।

एतस्मिन्नन्तरे तत्र गंगातो गिरिरायपौ ।।
ददर्श पुरतो भिक्षुं प्रांगणस्थं नराकृतिम् ।। 2.3.30.४० ।।
श्रुत्वा मेनामुखाद्वृत्तं तत्सर्वं सुचुकोप सः ।।
आज्ञां चकारानुचरान्बहिष्कर्तुञ्च तं नटम् ।।४१ ।।
महाग्निमिव दुःस्पर्शं प्रज्वलन्तं सुतेजसम् ।।
न शशाक बहिष्कर्तुं कोपि तं मुनिसत्तम।।४२।।
ततस्स भिक्षुकस्तात नानालीलाविशारदः ।।
दर्शयामास शैलाय स्वप्रभावमनन्तकम् ।। ४३ ।।
शैलो ददर्श तं तत्र विष्णुरूपधरं द्रुतम् ।।
किरीटिनं कुण्डलिनं पीतवस्त्रं चतुर्भुजम् ।। ४४ ।।
यद्यत्पुष्पादिकं दत्तं पूजाकाले गदाभृते ।।
गात्रे शिरसि तत्सर्वं भिक्षुकस्य ददर्श ह ।।४५।।
ततो ददर्श जगतां स्रष्टारं स चतुर्मुखम् ।।
रक्तवर्णं पठन्तञ्च श्रुतिसूक्तं गिरीश्वरः ।। ४६ ।।
ततस्सूर्य्यस्वरूपञ्च जगच्चक्षुस्स्वरूपकम् ।।
ददर्श गिरिराजस्स क्षणं कौतुककारिणाम् ।। ४७ ।।
ततो ददर्श तं तात रुद्ररूपं महाद्भुतम् ।।
पार्वती सहितं रम्यं विहसन्तं सुतेजसम् ।।४८।।
ततस्तेजस्स्वरूपञ्च निराकारं निरंजनम् ।।
निरुपाधिं निरीहञ्च महाद्भुतमरूपकम् ।।४९।।
एवं बहूनि रूपाणि तस्य तत्र ददर्श सः ।।
सुविस्मितो बभूवाशु परमानन्दसंयुतः ।।2.3.30.५०।।
अथासौ भिक्षुवर्य्यो हि तस्मात्तस्याश्च सूतिकृत् ।।
भिक्षां ययाचे दुर्गान्तां नान्यज्जग्राह किञ्चन ।।५१।।
न स्वीचकार शैलेन्द्रो मोहितश्शिवमायया ।।
भिक्षुः किंचिन्न जग्राह तत्रैवान्तर्दधे ततः ।। ५२ ।।
तदा बभूव सुज्ञानं मेनाशैलेशयोरिति ।।
आवां शिवो वञ्चयित्वा स्वस्थानं गतवान्प्रभुः ।। ५३ ।।

तयोर्विचिन्त्य तत्रैव शिवे भक्तिरभूत्परा ।।

महामोक्षकरी दिव्या सर्वानन्दप्रदायिनी ।।५४।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखंडे पार्वतीप्रत्यागमनमहोत्सववर्णनं नाम त्रिंशोऽध्यायः ।। ३० ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ३१

https://sa.wikisource.org/s/wja
< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः ३ (पार्वतीखण्डः)

।। ब्रह्मोवाच ।।

तयोर्भक्तिं शिवे ज्ञात्वा परामव्यभिचारिणीम् ।।

सर्वे शक्रादयो देवाश्चिचिन्तुरिति नारद ।। १ ।।

देवा ऊचुः ।।

एकान्तभक्त्या शैलश्चेत्कन्यां तस्मै प्रदास्यति ।।

ध्रुवं निर्वाणता सद्यस्स प्राप्स्यति च भारते ।।२।।

अनन्तरत्नाधारश्चेत्पृथ्वी त्यक्त्वा प्रयास्यति ।।

रत्नगर्भाभिधा भूमिर्मिथ्यैव भविता ध्रुवम् ।।३।।

स्थावरत्वं परित्यज्य दिव्यरूपं विधाय सः ।।

कन्यां शूलभृते दत्त्वा शिवलोकं गमिष्यति।।४।।

महादेवस्य सारूप्यं लप्स्यते नात्र संशयः ।।

तत्र भुक्त्वा वरान्भोगांस्ततो मोक्षमवाप्स्यति ।। ५।।

ब्रह्मोवाच ।।

इत्यालोच्य सुरास्सर्वे कृत्वा चामन्त्रणं मिथः ।।

प्रस्थापयितुमैच्छंस्ते गुरुं तत्र सुविस्मिताः ।।६।।

ततः शक्रादयो देवास्सर्वे गुरुनिकेतनम्।।

जग्मुः प्रीत्या सविनया नारद स्वार्थसाधकाः।।७।।

गत्वा तत्र गुरुं नत्वा सर्वे देवास्सवासवाः।।

चक्रुर्निवेदनं तस्मै गुरवे वृत्तमादरात्।।८।। ।

।। देवा ऊचुः ।।

गुरो हिमालयगृहं गच्छास्मत्कार्य्यसिद्धये ।।

तत्र गत्वा प्रयत्नेन कुरु निन्दाञ्च शूलिनः ।।९।।

पिनाकिना विना दुर्गा वरं नान्यं वरिष्यति ।।

अनिच्छया सुतां दत्त्वा फलं तूर्णं लभिष्यति ।।2.3.31.१०।।

कालेनैवाधुना शैल इदानीं भुवि तिष्ठतु।।
अनेकरत्नाधारं तं स्थापय त्वं क्षितौ गुरौ ।।११।।
।। ब्रह्मोवाच ।।
इति देववचः श्रुत्वा प्रददौ कर्णयोः करम् ।।
न स्वीचकार स गुरुस्स्मरन्नाम शिवेति च ।।१२।।
अथ स्मृत्वा महादेवं बृहस्पतिरुदारधीः।।
उवाच देववर्यांश्च धिक्कृत्वा च पुनः पुनः ।।१३।।
बृहस्पतिरुवाच ।।
सर्वे देवास्स्वार्थपराः परार्थध्वंसकारकाः ।।
कृत्वा शंकरनिंदा हि यास्यामि नरकं ध्रुवम् ।। १४ ।।
कश्चिन्मध्ये च युष्माकं गच्छेच्छैलान्तिकं सुराः ।।
संपादयेत्स्वाभिमतं शैलेन्द्रं प्रतिबोध्य च ।।१५।।
अनिच्छया सुतां दत्त्वा सुखं तिष्ठतु भारते ।।
तस्मै भक्त्या सुतां दत्त्वा मोक्षं प्राप्स्यति निश्चितम्।।१६।।
पश्चात्सप्तर्षयस्सर्वे बोधयिष्यन्ति पर्वतम् ।।
पिनाकिना विना दुर्गा वरं नान्यं वरिष्यति।।१७।।
अथवा गच्छत सुरा ब्रह्मलोकं सवासवाः ।।
वृत्तं कथयत स्वं तत्स वः कार्यं करिष्यति ।।१८।।
ब्रह्मोवाच ।।
तच्छ्रुत्वा ते समालोच्याजग्मुर्मम सभां सुराः ।।
सर्वे निवेदयांचक्रुर्नत्वा तद्वृतमादरात् ।।१९।।
देवानां तद्वचः श्रुत्वा शिवनिन्दाकरं तदा ।।
वेदवक्ता विलप्याहं तानवोचं सुरान्मुने ।। 2.3.31.२० ।।
ब्रह्मोवाच ।।
नाहं कर्तुं क्षमो वत्साः शिवनिन्दां सुदुस्सहाम् ।।
संपद्विनाश रूपाञ्च विपदां बीजरूपिणीम् ।। २१ ।।
सुरा गच्छत कैलासं सन्तोषयत शंकरम् ।।
प्रस्थापयत तं शीघ्रं हिमालयगृहं प्रति।।२२।।

स गच्छेदुपशैलेशमात्मनिन्दां करोतु वै ।।
परनिन्दाविनाशाय स्वनिन्दा यशसे मता ।। २३ ।।
ब्रह्मोवाच ।।
श्रुत्वेति मद्वचो देवा मां प्रणम्य मुदा च ते ।।
कैलासं प्रययुः शीघ्रं शैलानामधिपं गिरिम्।२४।।
तत्र गत्वा शिवं दृष्ट्वा प्रणम्य नतमस्तकाः।।
सुकृतांजलयस्सर्वे तुष्टुवुस्तं सुरा हरम् ।।२५।।
।। देवा ऊचुः ।।
देवदेव महादेव करुणाकर शंकर ।।
वयं त्वां शरणापन्नाः कृपां कुरु नमोऽस्तु ते ।।२६।।
त्वं भक्तवत्सलः स्वामिन्भक्तकार्यकरस्सदा ।।
दीनोद्धरः कृपासिन्धुर्भक्तापद्विनिमोचकः।।२७।।
।। ब्रह्मोवाच।।
इति स्तुत्वा महेशानं सर्वे देवास्सवासवाः ।।
सर्वं निवेदयांचक्रुस्तद्वृत्तं तत आदरात् ।।२८।।
तच्छ्रुत्वा देववचनं स्वीचकार महेश्वरः ।।
देवान् सुयापयामास तानाश्वास्य विहस्य सः ।।२९।।
देवा मुमुदिरे सर्वे शीघ्रं गत्वा स्वमंदिरम्।।
सिद्धं मत्वा स्वकार्य्यं हि प्रशंसन्तस्सदाशिवम् ।। 2.3.31.३० ।।
ततः स भगवाञ्छम्भुर्महेशो भक्तवत्सलः ।।
प्रययौ शैलभूपञ्च मायेशो निर्विकारवान् ।।३१।।
यदा शैलस्सभामध्ये समुवास मुदान्वितः ।।
बन्धुवर्गैः परिवृतः पार्वतीसहितस्स्वयम् ।। ३२ ।।
एतस्मिन्नन्तरे तत्र ह्याजगाम सदाशिवः ।।
दण्डी छत्री दिव्यवासा बिभ्रत्तिलकमुज्ज्वलम् ।।३३।।
करे स्फटिकमालाञ्च शालग्रामं गले दधत् ।।
जपन्नाम हरेर्भक्त्या साधुवेषधरो द्विजः ।।३४।।
तं च दृष्ट्वा समुत्तस्थौ सगणोऽपि हिमालयः ।।

ननाम दण्डवद्भूमौ भक्त्यातिथिमपूर्वकम् ।।३५।।

ननाम पार्वती भक्त्या प्राणेशं विप्ररूपिणम्।।

ज्ञात्वा तं मनसा देवी तुष्टाव परया मुदा।।३६।।

आशिषं युयुजे विप्रस्सर्वेषां प्रीतितश्शिवः।।

शिवाया अधिकं तात मनोभिलषितं हृदा ।।३७।।

मधुपर्कादिकं सर्वं जग्राह ब्राह्मणो मुदा ।।

दत्तं शैलाधिराजेन हिमांगेन महादरात् ।।३८।।

पप्रच्छ कुशलं चास्य हिमाद्रिः पर्वतोत्तमः।।

तं द्विजेन्द्रं महाप्रीत्या सम्पूज्य विधिवन्मुने।।३९।।

पुनः पप्रच्छ शैलेशस्तं ततः को भवानिति ।।

उवाच शीघ्रं विप्रेन्द्रो गिरीद्रं सादरं वचः।।2.3.31.४०।।

विप्रेन्द्र उवाच ।।

ब्राह्मणोऽहं गिरिश्रेष्ठ वैष्णवो बुधसत्तमः ।।

घटिकीं वृतिमाश्रित्य भ्रमामि धरणीतले ।। ४१।।

मनोयायी सर्व गामी सर्वज्ञोहं गुरोर्बलात् ।।

परोपकारी शुद्धात्मा दयासिन्धुर्विकारहा ।।४२।।

मया ज्ञातं हराय त्वं स्वसुतां दातुमिच्छसि।।

इमां पद्मसमां दिव्यां वररूपां सुलक्षणाम् ।।४३।।

निराश्रयायासंगाय कुरूपायागुणाय च ।।

श्मशानवासिने व्यालग्राहिरूपाय योगिने ।।४४।।

दिग्वाससे कुगात्राय व्यालभूषणधारिणे ।।

अज्ञातकुलनाम्ने च कुशीलायाविहारिणे ।।४५।।

विभूतिदिग्धदेहाय संक्रुद्धायाविवेकिने ।।

अज्ञातवयसेऽतीव कुजटाधारिणे सदा ।। ४६ ।।

सर्वाश्रयाय भ्रमिणे नागहाराय भिक्षवे

कुमार्गनिरतायाथ वेदाऽध्वत्यागिने हठात् ।। ४७ ।।

इयं ते बुद्धिरचल न हि मंगलदा खलु ।।

विबोध ज्ञानिनां श्रेष्ठ नारायणकुलोद्भव ।। ४८ ।।

न ते पात्रानुरूपश्च पार्वतीदानकर्मणि ।।

महाजनः स्मेरमुखः श्रुतमात्राद्भविष्यति ।। ४९ ।।

पश्य शैलाधिप त्वं च न तस्यैकोस्ति बान्धवः ।।

महारत्नाकरस्त्वञ्च तस्य किञ्चिद्धनं न हि ।। 2.3.31.५० ।।

बान्धवान्मेनकां कुध्रपते शीघ्रं सुतांस्तथा ।।

सर्वान्पृच्छ प्रयत्नेन पण्डितान्पार्वती विना ।। ५१ ।।

रोगिणो नौषधं शश्वद्रोचते गिरिसत्तम ।।

कुपथ्यं रोचतेऽभीक्ष्णं महादोषकरं सदा ।।५२।।

ब्रह्मोवाच ।।

इत्युक्त्वा ब्राह्मणः शीघ्रं स वै भुक्त्वा मुदान्वितः ।।

जगाम स्वालयं शान्तो नानालीलाकर श्शिवः ।।५३।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे शिवमायावर्णनं नामैकत्रिंशोऽध्यायः ।।३१।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ३२



।। ब्रह्मोवाच ।।

ब्राह्मणस्य वचः श्रुत्वा मेनोवाच हिमालयम् ।।

शोकेनासाधुनयना हृदयेन विदूयता ।। १ ।।

मेनोवाच ।।

शृणु शैलेन्द्र मद्वाक्यं परिणामे सुखावहम् ।।

पृच्छ शैववरान्सर्वान्किमुक्तं ब्राह्मणेन ह ।। २ ।।

निन्दानेन कृता शम्भोर्वैष्णवेन द्विजन्मना ।।

श्रुत्वा तां मे मनोऽतीव निर्विण्णं हि नगेश्वर ।।३।।

तस्मै रुद्राय शैलेश न दास्यामि सुतामहम् ।।

कुरूपशीलनम्मे हि सुलक्षणयुतां निजाम् ।। ४ ।।

न मन्यसे वचो चेन्मे मरिष्यामि न संशयः ।।

त्यक्ष्यामि च गृहं सद्यो भक्षयिष्यामि वा विषम् ।।५।।

गले बद्ध्वांबिकां रज्ज्वा यास्यामि गहनं वनम् ।।

महाम्बुधौ मज्जयिष्ये तस्मै दास्यामि नो सुताम् ।।६।।

इत्युक्त्वाशु तथा गत्वा मेना कोपालयं शुचा ।।

त्यक्त्वा हारं रुदन्ती सा चकार शयनं भुवि ।। ७ ।।

एतस्मिन्नन्तरे तात शम्भुना सप्त एव ते ।।

संस्मृता ऋषयस्सद्यो विरहव्याकुलात्मना ।।८।।

ऋषयश्चैव ते सर्वे शम्भुना संस्मृता यदा ।।

तदाऽऽजग्मुः स्वयं सद्यः कल्पवृक्षा इवापरे ।। ९ ।।

अरुन्धती तथाऽऽयाता साक्षात्सिद्धिरिवापरा ।।

तान्द्रष्ट्वा सूर्यसंकाशान्विजहौ स्वजपं हरः ।। 2.3.32.१० ।।

स्थित्वाग्रे ऋषयः श्रेष्ठं नत्वा स्तुत्वा शिवं मुने ।।

मेनिरे च तदात्मानं कृतार्थं ते तपस्विनः ।। ११ ।।

ततो विस्मयमापन्ना नम स्कृत्य स्थिताः पुनः ।।

प्रोचुः प्राञ्जलयस्ते वै शिवं लोकनमस्कृतम् ।। १२ ।।

ऋषय ऊचुः ।।

सर्वोत्कृष्टं महाराज सार्वभौम दिवौकसाम् ।।

स्वभाग्यं वर्ण्यतेऽस्माभिः किं पुनस्सकलोत्तमम् ।।१३।।

तपस्तप्तं त्रिधा पूर्वं वेदाध्ययनमुत्तमम् ।।

अग्नयश्च हुताः पूर्वं तीर्थानि विविधानि च ।।१४।।

वाङ्मनःकायजं किंचित्पुण्यं स्मरणसम्भवम् ।।

तत्सर्वं संगतं चाद्य स्मरणानुग्रहात्तव।।१५।।

यो वै भजति नित्यं त्वां कृतकृत्यो भवेन्नरः ।।

किं पुण्यं वर्ण्यते तेषां येषां च स्मरणं तव ।।१६।।

सर्वोत्कृष्टा वयं जाताः स्मरणात्ते सदाशिव ।।

मनोरथपथं नैव गच्छसि त्वं कथंचन ।। १७ ।।

वामनस्य फलं यद्वज्जन्मान्धस्य दृशौ यथा ।।

वाचालत्वञ्च मूकस्य रंकस्य निधिदर्शनम् ।। १८ ।।

पङ्गोर्गिरिवराक्रान्तिर्वन्ध्यायः प्रसवस्तथा ।।

दर्शनं भवतस्तद्वज्जातं नो दुर्लभं प्रभो ।। १९ ।।

अद्य प्रभृति लोकेषु मान्याः पूज्या मुनीश्वराः ।।

जातास्ते दर्शनादेव स्वमुच्चैः पदमाश्रिताः ।। 2.3.32.२० ।।

अत्र किं बहुनोक्तेन सर्व था मान्यतां गताः ।।

दर्शनात्तव देवेश सर्वदेवेश्वरस्य हि ।।२१।।

पूर्णानां किञ्च कर्तव्यमस्ति चेत्परमा कृपा ।।

सदृशं सेवकानां तु देयं कार्यं त्वया शुभम् ।। २२ ।।

।। ब्रह्मोवाच ।।

इत्येवं वचनं श्रुत्वा तेषां शम्भुर्महेश्वरः ।।

लौकिकाचारमाश्रित्य रम्यं वाक्यमुपाददे ।। २३ ।।

शिव उवाच ।।

ऋषयश्च सदा पूज्या भवन्तश्च विशेषतः ।।

युष्माकं कारणाद्विप्राः स्मरणं च मया कृतम् ।। २४ ।।
ममावस्था भवद्भिश्च ज्ञायते ह्युपकारिका ।।
साधनीया विशेषेण लोकानां सिद्धिहेतवे ।। २५ ।।
देवानां दुःखमुत्पन्नं ता रकात्सुदुरात्मनः ।।
ब्रह्मणा च वरौ दत्तः किं करोमि दुरासदः ।। २६ ।।
मूर्तयोऽष्टौ च याः प्रोक्ता मदीयाः परमर्षयः ।।
तास्सर्वा उपकाराय न तु स्वार्थाय तत्स्फुटम् ।। २७ ।।
तथा च कर्तुकामोहं विवाहं शिवया सह ।।
तया वै सुतपस्तप्तं दुष्करं परमर्षिभिः ।। २८ ।।
तस्यै परं फलं देयमभीष्टं तद्धितावहम् ।।
एतादृशः पणो मे हि भक्तानन्दप्रदः स्फुटम् ।। २९ ।।
पार्वतीवचनाद्भिक्षुरूपो यातो गिरेर्गृहम् ।।
अहं पावितवान्कालीं यतो लीलाविशारदः ।। 2.3.32.३० ।।
मां ज्ञात्वा तौ परं ब्रह्म दम्पती परभक्तितः ।।
दातुकामावभूतां च स्वसुतां वेदरीतितः ।।३१।।
देवप्रेरणयाहं वै कृतवानस्मि निन्दनम् ।।
तदा स्वस्य च तद्भक्तिं विहन्तुं वैष्णवात्मना ।। ३२ ।।
तच्छ्रुत्वा तौ सुनिर्विण्णो तद्धीनौ संबभूवतुः ।।
स्वकन्यां नेच्छतो दातुं मह्यं हि मुनयोऽधुना ।। ३३ ।।
तस्माद्भवन्तो गच्छन्तु हिमाचलगृहं ध्रुवम् ।।
तत्र गत्वा गिरिवरं तत्पत्नीञ्च प्रबोधय ।।३४।।
कथनीयं प्रयत्नेन वचनं वेदसम्मितम् ।।
सर्वथा करणीयन्तद्यथा स्यात्कार्य्यमुत्तमम् ।।३५।।
उद्वाहं कर्तुमिच्छामि तत्पुत्र्या सह सत्तमाः ।।
स्वीकृतस्त द्विवाहो मे वरो दत्तश्च तादृशः ।। ३६ ।।
अत्र किं बहुनोक्तेन बोधनीयो हिमालयः ।।
तथा मेना च बोद्धव्या देवानां स्याद्धितं यथा ।। ३७ ।।
भवद्भिः कल्पितो यो वै विधिस्स्यादधिकस्ततः ।।

भवताञ्चैव कार्य्यं तु भवन्तः कार्य्यभागिनः ।। ३८ ।।

।। ब्रह्मोवाच ।।

इत्येवं वचनं श्रुत्वा मुनयस्तेऽमलाशयाः ।।

आनन्दं लेभिरे सर्वे प्रभुणानुग्रहीकृताः ।।३९।।

वयं धन्या अभूवँश्च कृतकृत्याश्च सर्वथा ।।

वंद्या याताश्च सर्वेषां पूजनीया विशेषतः।।2.3.32.४०।।

ब्रह्मणा विष्णुना यो वै वन्द्यस्सर्वार्थसाधकः।।

सोस्मान्प्रेषयते प्रेष्यान्कार्ये लोकसुखावहे ।।४१।।

अयं वै जगतां स्वामी पिता सा जननी मता।।

अयं युक्तश्च सम्बन्धो वर्द्धतां चन्द्रवत्सदा ।।४२।।

ब्रह्मोवाच।।

इत्युक्त्वा ह्यृषयो दिव्या नमस्कृत्य शिवं तदा ।।

गता आकाशमार्गेण यत्रास्ति हिमवत्पुरम्।।४३।।

दृष्ट्वा तां च पुरं दिव्या मृषयस्तेऽतिविस्मिताः ।।

वर्णयन्तश्च स्वं पुण्यमब्रुवन्वै परस्परम् ।। ४४ ।।

।। ऋषय ऊचुः ।।

पुण्यवन्तो वयं धन्या दृष्ट्वैतद्धिमव त्पुरम् ।।

यस्मादेवंविधे कार्य्ये शिवेनैव नियोजिताः ।।४५।।

अलकायाश्च स्वर्गाच्च भोगवत्यास्तथा पुनः ।।

विशेषेणामरावत्या दृश्य ते पुरमुत्तमम् ।। ४६ ।।

सुगृहाणि सुरम्याणि स्फटिकैर्विविधैर्वरैः ।।

मणिभिर्वा विचित्राणि रचितान्यङ्गणानि च ।। ४७ ।।

सूर्यकान्ताश्च मणयश्चन्द्रकान्तास्तथैव च ।।

गृहे गृहे विचित्राश्च वृक्षात्स्वर्गसमुद्भवाः ।। ४८ ।।

तोरणानां तथा लक्ष्मीर्दृश्यते च गृहेगृहे ।।

विविधानि विचित्राणि शुकहंसैर्विमानकैः ।। ४९ ।।

वितानानि विचित्राणि चैलवत्तोरणैस्सह ।।

जलाशयान्यनेकानि दीर्घिका विविधाः स्थिताः ।। 2.3.32.५० ।।

उद्यानानि विचित्राणि प्रसन्नैः पूजितान्यथ ।।
नराश्च देवतास्सर्वे स्त्रियश्चाप्सरसस्तथा ।। ५१ ।।
कर्मभूमौ याज्ञिकाश्च पौराणास्स्वर्गकाम्यया ।।
कुर्वन्ति ते वृथा सर्वे विहाय हिमवत्पुरम् ।। ५२ ।।
यावन्न दृष्टमेतच्च तावत्स्वर्गपरा नराः ।।
दृष्ट्रमेतद्यदा विप्राः किं स्वर्गेण प्रयोजनम् ।।५३।।
।। ब्रह्मोवाच ।।
इत्येवमृषिवर्य्यास्ते वर्णयन्तः पुरश्च तत्।।
गता हैमालयं सर्वे गृहं सर्वसमृद्धिमत् ।। ५४ ।।
तान्द्रष्ट्वा सूर्यसंकाशान् हिमवान्विस्मितोऽब्रवीत् ।।
दूरादाकाशमार्गस्थान्मुनीन्सप्त सुतेजसः ।। ५५ ।।
।। हिमवानुवाच ।।
सप्तैते सूर्य्यसंकाशाः समायांति मदन्तिके ।।
पूजा कार्य्या प्रयत्नेन मुनीनां च मयाधुना ।। ५६ ।।
वयं धन्या गृहस्थाश्च सर्वेषां सुखदायिनः।।
येषां गृहे समायान्ति महात्मानो यदीदृशाः ।। ५७ ।।
ब्रह्मोवाच।।
एतस्मिन्नन्तरे चैवाकाशादेत्य भुवि स्थितान् ।।
सन्मुखे हिमवान्दृष्ट्वा ययौ मानपुरस्सरम् ।।५८।।
कृतांजलिर्नतस्कन्धः सप्तर्षीन्सुप्रणम्य सः ।।
पूजां चकार तेषां वै बहुमानपुरस्सरम्।।५९।।
हितास्सप्तर्षयस्ते च हिमवन्तन्नगेश्वरम्।।
गृहीत्वोचुः प्रसन्नास्या वचनं मङ्गलालयम् ।। 2.3.32.६० ।।
यथाग्रतश्च तान्कृत्वा धन्या मम गृहाश्रमः ।।
इत्युक्त्वासनमानीय ददौ भक्तिपुरस्सरम् ।। ६१ ।।
आसनेषूपविष्टेषु तदाज्ञप्तस्स्वयं स्थितः ।।
उवाच हिमवाँस्तत्र मुनीञ्ज्योतिर्मयास्तदा ।।६२।।
हिमालय उवाच ।।

धन्यो हि कृतकृत्योहं सफलं जीवित मम ।।

लोकेषु दर्शनीयोहं बहुतीर्थसमो मतः ।।६३।।

यस्माद्भवन्तो मद्गेहमागता विष्णुरूपिणः ।।

पूर्णानां भवतां कार्य्यं कृपणानां गृहेषु किम् ।।६४।।

तथापि किञ्चित्कार्यं च सदृशं सेवकस्य मे ।।

कथनीयं सुदयया सफलं स्याज्जनुर्मम ।।६५।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायान्तृतीये पार्वतीखण्डे सप्तर्ष्यागमनवर्णनं नाम द्वात्रिंशोऽध्यायः ।।३२।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ३३



।। ऋषय ऊचुः ।।

जगत्पिता शिवः प्रोक्तो जगन्माता शिवा मता ।।

तस्माद्देया त्वया कन्या शंकराय महात्मने ।। १ ।।

एवं कृत्वा हिमगिरे सार्थकं ते भवेज्जनुः ।।

जगद्गुरोर्गुरुस्त्वं हि भविष्यसि न संशयः ।। २ ।।

।। ब्रह्मोवाच ।।

एवं वचनमाकर्ण्य सप्तर्षीणां मुनीश्वर ।।

प्रणम्य तान्करौ बद्ध्वा गिरिराजोऽब्रवीदिदम्।।३।।

हिमालय उवाच ।।

सप्तर्षयो महाभागा भवद्भिर्यदुदीरितम्।।

तत्प्रमाणीकृतं मे हि पुरैव गिरिशेच्छया।।४।।

इदानीमेक आगत्य विप्रो वैष्णवधर्मवान्।।

शिवमुद्दिश्य सुप्रीत्या विपरीतं वचोऽब्रवीत् ।।।५।।

तदारभ्य शिवामाता ज्ञानभ्रष्टा बभूव ह ।।

सुताविवाहं रुद्रेण योगिना तेन नेच्छति ।।६।।

कोपागारमगात्सा हि सुतप्ता मलिनाम्बरा ।।

कृत्वा महाहठं विप्रा बोध्यमानापिऽनाबुधत् ।।७।।

अहं च ज्ञानविभ्रष्टो जातोहं सत्यमीर्य्यते ।।

दातुं सुतां महेशाय नेच्छामि भिक्षुरूपिणे ।।

ब्रह्मोवाच।।इत्युक्त्वा शैलराजस्तु शिवमायाविमोहितः ।।

तूष्णीं बभूव तत्रस्थो मुनीनां मध्यतो मुने।।९।।

सर्वे सप्तर्षयस्ते हि शिवमायां प्रशस्य वै ।।

प्रेषयामासुरथ तां मेनकां प्रत्यरुन्धतीम् ।।2.3.33.१ ०।।

अथ पत्युस्समादाय निदेशं ज्ञानदा हि सा।।

जगामारुन्धती तूर्णं यत्र मेना च पार्वती ।।११।।
गत्वा ददर्श मेनां तां शयानां शोकमूर्च्छिताम्।।
उवाच मधुरं साध्वी सावधाना हितं वचः ।।१२।।
अरुन्धत्युवाच ।।
उत्तिष्ठ मेनके साध्वि त्वद्गृहेऽहमरुन्धती ।।
आगता मुनयश्चापि सप्तायाताः कृपालवः ।।१३।।
ब्रह्मोवाच ।।
अरुन्धतीस्वरं श्रुत्वा शीघ्रमुत्थाय मेनका ।।
उवाच शिरसा नत्वा तां पद्मामिव तेजसा ।।१४।।
मेनोवाच ।।
अहोद्य किमिदं पुण्यमस्माकं पुण्यजन्मनाम् ।।
वधूर्जगद्विधेः पत्नी वसिष्ठस्यागतेह वै ।।१५।।
किमर्थमागता देवि तन्मे ब्रूहि विशेषतः ।।
अहं दासीसमा ते हि ससुता करुणां कुरु ।। १६ ।।
ब्रह्मोवाच ।।
इत्युक्त्वा मेनकां साध्वी बोधयित्वा च तां बहु ।।
तथागता च सुप्रीत्या सास्ते यत्रर्षयोऽपि ते ।।१७।।
अथ शैलेश्वरं ते च बोधयामासुरादरात्।।
स्मृत्वा शिवपदद्वन्द्वं सर्वे वाक्यविशारदाः ।। १८ ।।
ऋषय ऊचुः ।।
शैलेन्द्र श्रूयतां वाक्यमस्माकं शुभकारणम् ।।
शिवाय पार्वतीं देहि संहर्त्तुः श्वशुरो भव ।। १९ ।।
अयाचितारं सर्वेशं प्रार्थयामास यत्नतः ।।
तारकस्य विनाशाय ब्रह्मासम्बंधकर्म्मणि ।।2.3.33.२०।।
नोत्सुको दारसंयोगे शंकरो योगिनां वरः ।।
विधेः प्रार्थनया देवस्तव कन्यां ग्रहीष्यति ।।२१।।
दुहितुस्ते तपस्तप्तं प्रतिज्ञानं चकार सा।।
हेतुद्वयेन योगीन्द्रो विवाहं च करिष्यति ।।२२।।

ब्रह्मोवाच ।।

ऋषीणां वचनं श्रुत्वा प्रहस्य स हिमालयः ।।

उवाच किञ्चिद्भीतस्तु परं विनयपूर्वकम् ।। २३ ।।

हिमालय उवाच ।।

शिवस्य राजसामग्रीं न हि पश्यामि काञ्चन।।

कञ्चिदाश्रयमैश्वर्यं कं वा स्वजनबान्धवम् ।।२४।।

नेच्छाम्यति विनिर्लिप्तयोगिने स्वां सुतामहम् ।।

यूयं वेदविधातुश्च पुत्रा वदत निश्चितम् ।।२५।।

वरायाननुरूपाय पिता कन्यां ददाति चेत् ।।

कामान्मोहाद्भयाल्लोभात्स नष्टो नरकं यजेत् ।।२६।।

न हि दास्याम्यहं कन्यामिच्छया शूलपाणये ।।

यद्विधानं भवेद्योग्यमृषयस्त द्विधीयताम् ।।२७।।

ब्रह्मोवाच ।।

इत्याकर्ण्य वचस्तस्य हिमागस्य मुनीश्वर ।।

प्रत्युवाच वसिष्ठस्तं तेषां वाक्यविशारद ।।२८।।

वसिष्ठ उवाच ।।

शृणु शैलेश मद्वाक्यं सर्वथा ते हितावहम् ।।

धर्माविरुद्धं सत्यश्च परत्रेह मुदावहम् ।। २९ ।।

वचनं त्रिविधं शैल लौकिके वैदिकेऽपि च ।।

सर्वं जानाति शास्त्रज्ञो निर्मलज्ञानचक्षुषा ।। 2.3.33.३० ।।

असत्यमहितं पश्चात्सांप्रतं श्रुतिसुन्दरम् ।।

सुबुद्धिर्वक्ति शत्रुर्हि हितं नैव कदाचन ।। ३१ ।।

आदावप्रीतिजनकं परिणामे सुखावहम् ।।

दयालुर्धर्मशीलो हि बोधयत्येव बांधवः ।। ३२ ।।

श्रुतिमात्रात्सुधातुल्यं सर्वकालसुखावहम् ।।

सत्यसारं हितकरं वचनं श्रेष्ठमीप्सितम् ।। ३३ ।।

एवञ्च त्रिविधं शैल नीतिशास्त्रोदितं वचः ।।

कथ्यतां त्रिषु मध्ये किं ब्रुवे वाक्यं त्वदीप्सितम् ।। ३४ ।।

ब्राह्मसम्पद्विहीनश्च शंकरस्त्रिदशेश्वरः
तत्त्वज्ञानसमुद्रेषु सन्निमग्नैकमानसः ।। ३५ ।।
ज्ञानानन्दस्येश्वरस्य ब्राह्मवस्तुषु का स्पृहा ।।
गृही ददाति स्वसुतां राज्यसम्पत्तिशालिने ।। ३६ ।।
कन्यकां दुःखिने दत्त्वा कन्याघाती भवेत्पिता ।।
को वेद शंकरो दुःखी कुबेरो यस्य किंकरः ।। ३७ ।।
भ्रूभङ्गलीलया सृष्टिं स्रष्टुं हर्तुं क्षमो हि सः ।।
निर्गुणः परमात्मा च परेशः प्रकृतेः परः ।। ३८ ।।
यस्य च त्रिविधा मूर्तिर्विधा तुस्सृष्टिकर्मणि ।।
सृष्टिस्थित्यन्तजननी ब्रह्मविष्णुहराभिधा ।। ३९ ।।
ब्रह्मा च ब्रह्मलोकस्थो विष्णुः क्षीरोदवासकृत् ।।
हरः कैलासनिलयः सर्वाः शिवविभूतयः ।। 2.3.33.४० ।।
धत्ते च त्रिविधा मूर्ती प्रकृतिः शिवसम्भवा ।।
अंशेन लीलया सृष्टौ कलया बहुधा अपि ।। ४१ ।।
मुखोद्भवा स्वयं वाणी वागधिष्ठातृदेवता ।।
वक्षःस्थलोद्भवा लक्ष्मीस्सर्वसम्पत्स्वरूपिणी ।। ४२ ।।
शिवा तेजस्सु देवानामाविर्भावं चकार सा ।।
निहत्य दानवान्सर्वान्देवेभ्यश्च श्रियं ददौ ।। ४३ ।।
प्राप कल्पान्तरे जन्म जठरे दक्ष योषितः ।।
नाम्ना सती हरं प्राप दक्षस्तस्मै ददौ च ताम् ।। ४४ ।।
देहं तत्याज योगेन श्रुत्वा सा भर्तृनिन्दनम् ।।
साद्य त्वत्तस्तु मेनायां जज्ञे जठरतश्शिवा ।। ४५ ।।
शिवा शिवस्य पत्नीयं शैल जन्मनिजन्मनि ।।
कल्पेकल्पे बुद्धिरूपा ज्ञानिनां जननी परा ।।४६।।
जायते स्म सदा सिद्धा सिद्धिदा सिद्धिरूपिणी ।।
सत्या अस्थि चिताभस्म भक्त्या धत्ते हरस्स्वयम् ।। ४७ ।।
अतस्त्वं स्वेच्छया कन्यां देहि भद्रां हराय च ।।
अथवा सा स्वयं कान्तस्थाने यास्यत्यदास्यसि ।। ४८ ।।

कृत्वा प्रतिज्ञां देवेशो दृष्ट्वा क्लेशमसंख्यकम् ।।
दुहितुस्ते तपःस्थानमाजगाम द्विजात्मकः ।।४९।।
तामाश्वास्य वरं दत्त्वा जगाम निजमन्दिरम् ।।
तत्प्रार्थनावशाच्छम्भुर्ययाचे त्वां शिवां गिरे ।।2.3.33.५०।।
अंगीकृतं युवाभ्यां तच्छिवभक्तिरतात्मना ।।
विपरीतमतिर्जाता वद कस्माद्गिरीश्वर ।।५१।।
तद्गत्वा प्रभुणा देव प्रार्थितेन त्वदन्तिकम् ।।
प्रस्थापिता वयं शीघ्रं ह्यृषयस्साप्यरुन्धती ।। ५२ ।।
शिक्षयामो वयं त्वा हि दत्त्वा रुद्राय पार्वतीम् ।।
एवंकृते महानन्दो भविष्यति गिरे तव ।। ५३ ।।
शिवां शिवाय शैलेन्द्र स्वेच्छया चेन्न दास्यसि।।
भविता तद्विवाहोऽत्र भवितव्यबलेन हि ।। ५४ ।।
वरं ददौ शिवायै स तपन्त्यै तात शंकरः ।।
नहीश्वरप्रतिज्ञातं विपरीताय कल्पते ।। ५५ ।।
अहो प्रतिज्ञा दुर्लंघ्या साधूनामीशवर्तिनाम् ।।
सर्वेषां जगतां मध्ये किमीशस्य पुनर्गिरे ।। ५६ ।।
एको महेन्द्रश्शैलानां पक्षांश्चिच्छेद लीलया ।।
पार्वती लीलया मेरोश्शृङ्गभङ्गं चकार च ।।५७।
एकार्थे नहि शैलेश नाश्यास्सर्वा हि सम्पदः ।।
एकं त्यजेत्कुलस्यार्थे श्रुतिरेषा सनातनी ।।५८।।
दत्त्वा विप्राय स्वसुतामनरण्यो नृपेश्वर ।।
ब्राह्मणाद्भयमापन्नो ररक्ष निजसम्पदम् ।। ५९ ।।
तमाशु बोधयामासुर्नीतिशास्त्रविदो जनाः ।।
ब्रह्मशापाद्विभीताश्च गुरवो ज्ञातिसत्तमाः ।।2.3.33.६०।।
शैलराज त्वमप्येव सुतां दत्त्वा शिवाय च ।।
रक्ष सर्वान्बंधुवर्गान्वशं कुरु सुरानपि ।।६१।।
ब्रह्मोवाच ।।
इत्याकर्ण्य वसिष्ठस्य वचनं स प्रह स्य च ।।

पप्रच्छ नृपवार्त्तांश्च हृदयेन विदूयता ।।६२।।

हिमालय उवाच ।।

कस्य वंशोद्भवो ब्रह्मन्ननरण्यो नृपश्चसः ।।

सुतां दत्त्वा स च कथं ररक्षाखिलसम्पदः ।। ६३ ।।

ब्रह्मोवाच ।।

इति श्रुत्वा वसिष्ठस्तु शैलवाक्यं प्रसन्नधीः ।।

प्रोवाच गिरये तस्मै नृपवार्त्ता सुखावहाम्।।६४।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे गिरिसांत्वनोनाम त्रयस्त्रिंशोऽध्यायः।।३३।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ३४

https://sa.wikisource.org/s/wjd



।। वसिष्ठ उवाच ।।

मनोर्वंशोद्भवो राजा सोऽनरण्यो नृपेश्वर ।।

इन्द्रसावर्णिसंज्ञस्य चतुर्दशमितस्य हि।।१।।

अनरण्यो नृपश्रेष्ठस्स सद्वीपमहीपतिः ।।

शम्भुभक्तो विशेषेण मङ्गलारण्यजो बली ।।२।।

भृगुं पुरोधसं कृत्वा शतं यज्ञांश्चकार सः ।।

न स्वीचकार शक्रत्वं दीयमानं सुरैरपि ।।३।।

बभूवश्शतपुत्राश्च राज्ञस्तस्य हिमालय ।।

कन्यैका सुन्दरी नाम्ना पद्मा पद्मालया समा ।। ४ ।।

यस्स्नेहः पुत्रशतके कन्यायाञ्च ततोऽधिकः ।।

नृपस्य तस्य तस्यां हि बभूव नगसत्तम ।।५।।

प्राणाधिकाः प्रियतमा महिष्यस्सर्वयोषितः ।।

नृपस्य पत्न्यः पञ्चासन्सर्वास्सौभाग्यसंयुता ।। ६ ।।

सा कन्या यौवनस्था च बभूव स्वपितुर्गृहे ।।

पत्रं प्रस्थापयामास सुवरान यनायसः ।। ७ ।।

एकदा पिप्पलादर्षिर्गन्तुं स्वाश्रममुत्सुकः ।।

तपःस्थाने निर्जने च गन्धर्वं स ददर्श ह ।।८।।

स्त्रीयुतं मग्नचित्तं च शृङ्गारे रससागरे ।।

विहरन्तं महाप्रेम्णा कामशास्त्रविशारदम् ।। ९।।

दृष्ट्वा तं मुनिशार्दूलः सकामः संबभूव सः ।।

तपत्स्वदत्तचित्तश्चाचिंतयद्दारसंग्रहम् ।। 2.3.34.१० ।।

एवंवृत्तस्य तस्यैव पिप्पलादस्य सन्मुनेः।।

कियत्कालो गतस्तत्र कामोन्मथितचेतसः ।।११।।

एकदा पुष्पभद्रायां स्नातुं गच्छन्मुनीश्वरः ।।

ददर्श पद्मां युवतीं पद्मामिव मनोरमाम् ।।१२।।

केयं कन्येति पप्रच्छ समीपस्थाञ्जनान्मुनिः ।।

जना निवेदयांचक्रुर्नत्वा शापनियन्त्रिताः ।।१३।।

जना ऊचुः ।।

अनरण्यसुतेयं वै पद्मा नाम रमापरा।।

वरारोहा प्रार्थ्यमाना नृपश्रेष्ठैर्गुणालया ।। १४ ।।

।। ब्रह्मोवाच ।।

तच्छ्रुत्वा स मुनिर्वाक्यं जनानां तथ्यवादिनाम् ।।

चुक्षोभातीव मनसि तल्लिप्सुर भवच्च सः ।। १५ ।।

मुनिः स्नात्वाभीष्टदेवं सम्पूज्य विधिवच्छिवम् ।।

जगाम कामी भिक्षार्थमनरण्यसभां गिरे ।। १६ ।।

राजा शीघ्रं मुनिं दृष्ट्वा प्रणनाम भयाकुलः ।।

मधुपर्कादिकं दत्त्वा पूजयामास भक्तितः ।।१७।।

कामात्सर्वं गृहीत्वा च ययाचे कन्यकां मुनिः ।।

मौनी बभूव नृपतिः किञ्चिनिर्वक्तुमक्षमः ।। १८ ।।

मुनिर्ययाचे कन्यां स तां देहीति नृपेश्वर ।।

अन्यथा भस्मसात्सर्वं करिष्यामि क्षणेन च ।। १९ ।।

सर्वे बभूववुराच्छन्ना गणास्तत्तेजसा मुने ।।

रुरोद राजा सगणो दृष्ट्वा विप्रं जरातुरम् ।। 2.3.34.२० ।।

महिष्यो रुरुदुस्सर्वा इतिकर्त्तव्यताक्षमाः ।।

मूर्च्छामाप महाराज्ञी कन्यामाता शुचाकुला ।। २१ ।।

बभूवुस्तनयास्सर्वे शोकाकुलि तमानसाः ।।

सर्वं शोकाकुलं जातं नृपसम्बन्धि शैलप ।। २२ ।।

एतस्मिन्नन्तरे प्राज्ञो द्विजो गुरुरनुत्तमः ।।

पुरोहितश्च मतिमानागतो नृपसन्निधिम् ।।२३।।

राजा प्रणम्य सम्पूज्य रुरोद च तयोः पुरः ।।

सर्वं निवेदयांचक्रे पप्रच्छोचितमाशु तत् ।।२४।।

अथ राज्ञो गुरुर्विप्रः पण्डितश्च पुरोहितः ।।

अपि द्वौ शास्त्रनीतिज्ञौ बोधयामासतुर्नृपम् ।। २५ ।।
शोकाकुलाश्च महिषीर्नृपबालाँश्च कन्यकाम् ।।
उत्तमा नीतिमादृत्य सर्वेषां हितकारिणीम् ।।२६।।
गुरुपुरोधसावूचतुः।।
शृणु राजन्महाप्राज्ञ वचो नौ सद्धितावहम् ।।
मा शुचः सपरीवारश्शास्त्रे कुरु मतिं सतीम् ।।२७।।
अद्य वाब्ददिनान्ते वा दातव्या कन्यका नृप ।।
पात्राय विप्रायान्यस्मै कस्मै चिद्वा विशेषतः ।। २८ ।।
सत्पात्रं ब्राह्मणादन्यन्न पश्यावो जगत्त्रये ।।
सुतां दत्त्वा च मुनये रक्ष स्वां सर्वसम्पदम् ।। २९ ।।
राजन्नेकनिमित्तेन सर्वसंपद्विनश्यति ।।
सर्वं रक्षति तं त्यक्त्वा विना तं शरणागतम् ।। 2.3.34.३० ।।
वसिष्ठ उवाच ।।
राजा प्राज्ञवचः श्रुत्वा विलप्य च मुहुर्मुहुः ।।
कन्यां सालंकृतां कृत्वा मुनीन्द्राय ददौ किल ।।३१।।
कान्तां गृहीत्वा स मुनिर्विवाह्य विधिवद्गिरे ।।
पद्मां पद्मोपमां तां वै मुदितस्स्वालयं ययौ ।। ३२ ।।
राजा सर्वान्परित्यज्य दत्त्वा वृद्धाय चात्मजाम् ।।
ग्लानिं चित्ते समाधाय जगाम तपसे वनम् ।।३३।।
तद्भार्य्यापि वनं याते प्राणनाथे तदा गिरे ।।
भर्तुश्च दुहितुश्शोकात्प्राणांस्तत्याज सुन्दरी ।। ३४ ।।
पूज्याः पुत्राश्च भृत्याश्च मूर्च्छामापुर्नृपं विना ।।
शुशुचुः श्वाससंयुक्तं ज्ञात्वा सर्वेपरे जनाः।।३५।।
अनरण्यो वनं गत्वा तपस्तप्त्वाति शंकरम् ।।
समाराध्य ययौ भक्त्या शिवलोकमनामयम् ।।३६।।
नृपस्य कीर्तिमान्नाम्ना ज्येष्ठपुत्रोथ धार्मिकः ।।
पुत्रवत्पालयामास प्रजा राज्यं चकार ह ।।३७ ।।
इति ते कथितं शैलानरण्यचरितं शुभम् ।।

कन्यां दत्त्वा यथारक्षद्वंशं चाप्यखिलं धनम् ।। ३८।।
शैलराज त्वमप्येवं सुतां दत्त्वा शिवाय च ।।
रक्ष सर्वकुलं सर्वान्वशान्कुरु सुरानपि ।।३९।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डेऽनरण्यचरितवर्णनं नाम चतुस्त्रिंशोऽध्यायः ।।३४।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ३५



नारद उवाच ।।

अनरण्यस्य चरितं सुतादानसमन्वितम् ।।

श्रुत्वा गिरिवरस्तात किं चकार च तद्वद ।। १ ।।

ब्रह्मोवाच ।।

अनरण्यस्य चरितं कन्यादानसमन्वितम्।।

श्रुत्वा पप्रच्छ शैलेशो वसिष्ठं साञ्जलिः पुनः।।२।।

शैलेश उवाच ।।

वसिष्ठ मुनिशार्दूल ब्रह्मपुत्र कृपानिधे ।।

अनरण्यचरित्रन्ते कथितं परमाद्भुतम् ।।३।।

अनरण्यसुता यस्मात् पिप्पलादं मुनिं पतिम् ।।

सम्प्राप्य किमकार्षीत्सा तच्चरित्रं मुदावहम्।।४।।

वसि० ।

पिप्पलादो मुनिवरो वयसा जर्जरोधिकः ।।

गत्वा निजाश्रमं नार्याऽनरण्यसुतया तया ।।५।।

उवास तत्र सुप्रीत्या तपस्वी नातिलम्पटः।।

तत्रारण्ये गिरिवर स नित्यं निजधर्मकृत् ।। ६ ।।

अथानरण्यकन्या सा सिषेवे भक्तितो मुनिम् ।।

कर्मणा मनसा वाचा लक्ष्मीनारायणं यथा ।।७।।

एकदा स्वर्णदीं स्नातुं गच्छन्तीं सुस्मितां च ताम् ।।

ददर्श पथि धर्मश्च मायया वृषरूपधृक् ।। ८ ।।

चारुरत्नरथस्थश्च नानालं कारभूषितः ।।

नवीनयौवनश्श्रीमान्कामदेवसभप्रभः ।। ९ ।।

दृष्ट्वा तां सुन्दरीं पद्मामुवाच स वृषो विभुः ।।

विज्ञातुं भावमन्तःस्थं तस्याश्च मुनियोषितः ।। 2.3.35.१० ।।

।। धर्म उवाच ।।

अयि सुन्दरि लक्ष्मीर्वै राजयोग्ये मनोहरे ।।

अतीव यौवनस्थे च कामिनि स्थिरयौवने ।। ११ ।।

जरातुरस्य वृद्धस्य पिप्पलादस्य वै मुनेः ।।

सत्यं वदामि तन्वंगि समीपे नैव राजसे ।। १२ ।।

विप्रं तपस्सु निरतं निर्घृणं मरणोन्मुखम् ।।

त्वक्त्वा मां पश्य राजेन्द्रं रतिशूरं स्मरातुरम् ।। १३ ।।

प्राप्नोति सुन्दरी पुण्यात्सौन्दर्य्यं पूर्वजन्मनः ।।

सफलं तद्भवेत्सर्वं रसिकालिंगनेन च ।।१४।।

सहस्रसुन्दरीकान्तं कामशास्त्रविशारदम् ।।

किंकरं कुरु मां कान्ते सम्परित्यज्य तं पतिम् ।। १५ ।।

निर्जने कानने रम्ये शैले शैले नदीतटे ।।

विहरस्व मया सार्द्धं जन्मेदं सफलं कुरु ।। १६ ।।

।। वसिष्ठ उवाच ।।

इत्येवमुक्तवन्तं सा स्वरथादवरुह्य च ।।

ग्रहीतुमुत्सुकं हस्ते तमुवाच पतिव्रता ।। १७ ।।

पद्मो वाच ।।

गच्छ दूरं गच्छ दूरं पापिष्ठस्त्वं नराधिप ।।

मां चेत्पश्यसि कामेन सद्यो नष्टो भविष्यसि ।। १८ ।।

पिप्पलादं मुनि श्रेष्ठं तपसा पूतविग्रहम् ।।

त्यक्त्वा कथं भजेयं त्वां स्त्रीजितं रतिलम्पटम् ।। १९ ।।

स्त्रीजितस्पर्शमात्रेण सर्वं पुण्यं प्रणश्यति ।।

स्त्रीजितः परपापी च तद्दर्शनमघावहम् ।।2.3.35.२०।।

सत्क्रियो ह्यशुचिर्नित्यं स पुमान् यः स्त्रिया जितः ।।

निन्दन्ति पितरो देवा मान वास्सकलाश्च तम्।।२१।।

तस्य किं ज्ञान सुतपो जपहोमप्रपूजनैः ।।

विद्यया दानतः किम्वा स्त्रीभिर्यस्य मनो हृतम् ।। २२ ।।

मातरं मां स्त्रियो भावं कृत्वा येन ब्रवीषि ह ।।

भविष्यति क्षयस्तेन कालेन मम शापतः ।।२३।।

वसिष्ठ उवाच ।।

श्रुत्वा धर्मस्सतीशापं नृप मूर्तिं विहाय च ।।

धृत्वा स्वमूर्तिं देवेशः कम्पमान उवाच सः ।। २४ ।।

धर्म उवाच ।।

मातर्जानीहि मां धर्मं ज्ञानिनाञ्च गुरो र्गुरुम् ।।

परस्त्रीमातृबुद्धिश्च कुर्व्वन्तं सततं सति ।।२५।।

अहं तवान्तरं ज्ञातुमागतस्तव सन्निधिम् ।।

तवाहञ्च मनो जाने तथापि विधिनोदितः ।। २६ ।।

कृतं मे दमनं साध्वि न विरुद्धं यथोचितम् ।।

शास्तिः समुत्पथस्थानामीश्वरेण विनिर्मिता ।। २७ ।।

स्वयं प्रदाता सर्वेभ्यः सुखदुःखवरान्क्षमः ।।

सम्पदं विपदं यो हि नमस्तस्मै शिवाय हि ।। २८ ।।

शत्रुं मित्रं सम्विधातुं प्रीतिञ्च कलहं क्षमः ।।

स्रष्टुं नष्टुं च यस्सृष्टिं नमस्तस्मै शिवाय हि ।।२९।।

येन शुक्लीकृतं क्षीरं जले शैत्यं कृतम्पुरा ।।

दाहीकृतो हुता शश्च नमस्तस्मै शिवाय हि ।।2.3.35.३०।।

प्रकृतिर्निर्मिता येन तस्वाति महदादितः ।।

ब्रह्मविष्णुमहेशाद्या नमस्तस्मै शिवाय हि ।।३१।।

ब्रह्मोवाचः ।।

इत्युक्त्वा पुरतस्तस्यास्तस्थौ धर्मो जगद्गुरुः ।।

किञ्चिन्नोवाच चकितस्तत्पातिव्रत्य तोषितः।।३२।।

पद्मापि नृपकन्या सा पिप्पलादप्रिसा तदा ।।

साध्वी तं धर्ममाज्ञाय विस्मितोवाच पर्वत।।३३।।

पद्मोवाच ।।

त्वमेव धर्म सर्वेषां साक्षी निखिलकर्मणाम्।।

कथं मनो मे विज्ञातुं विडम्बयसि मां विभो ।। ३४ ।।

यत्तत्सर्वं कृतं ब्रह्मन् नापराधो बभूव मे ।।

त्वञ्च शप्तो मयाऽज्ञानात्स्त्रीस्वभा वाद्वृथा वृष ।। ३५ ।।

का व्यवस्था भवेत्तस्य चिन्तयामीति साम्प्रतम् ।।

चित्ते स्फुरतु सा बुद्धिर्यया शं सँल्लभामि वै ।। ३६ ।।

आकाशोसौ दिशस्सर्वा यदि नश्यन्तु वायवः ।।

तथापि साध्वीशापस्तु न नश्यति कदाचन ।। ३७ ।।

सत्ये पूर्णश्चतुष्पादः पौर्ण मास्यां यथा शशी ।।

विराजसे देवराज सर्वकालं दिवानिशम्।।३८।।

त्वञ्च नष्टो भवसि चेत्सृष्टिनाशो भवेत्तदा।।

इति कर्तव्यतामूढा वृथापि च वदाम्यहम् ।।३९।।

पादक्षयश्च भविता त्रेतायां च सुरोत्तम।।

पादोपरे द्वापरे च तृतीयोऽपि कलौ विभो ।।2.3.35.४०।।

कलिशेषेऽखिलाश्छिन्ना भविष्यन्ति तवांघ्रयः ।।

पुनस्सत्ये समायाते परिपूर्णो भविष्यसि ।।४१ ।।

सत्ये सर्वव्यापकस्त्वं तदन्येषु च कु त्रचित् ।।

युगव्यवस्थया स त्वं भविष्यसि तथा तथा ।।४२।।

इत्येवं वचनं सत्यं ममास्तु सुखदं तव ।।

याम्यहं पतिसेवायै गच्छ त्वं स्वगृहं विभो ।।४३।।

।। ब्रह्मोवाच ।।

इत्याकर्ण्य वचस्तस्यास्सन्तुष्टोभूद्वृषस्स वै ।।

तदेवंवादिनीं साध्वीमुवाच विधिनन्दन ।। ४४ ।।

धर्म उवाच ।।

धन्यासि पतिभक्तासि स्वस्ति तेस्तु पतिव्रते ।।

वरं गृहाण त्वत्स्वामी त्वत्परित्राणकारणात् ।। ४५ ।।

युवा भवतु ते भर्ता रतिशूरश्च धार्मिकः ।।

रूपवान् गुणवान्वाग्मी संततस्थिरयौवनः ।।४६।।

चिरञ्जीवी स भवतु मार्कण्डेयात्प रश्शुभे ।।

कुबेराद्धनवाँश्चैव शक्रादैश्वर्य्यवानपि ।।४७।।

शिवभक्तो हरिसमस्सिद्धस्तु कपिलात्परः ।।

बुद्ध्या बृहस्पतिसमस्समत्वेन विधेस्समः ।। ४८ ।।
स्वामिसौभाग्यसंयुक्ता भव त्वं जीवनावधि ।।
तथा च सुभगे देवि त्वं भव स्थिरयौवना ।।४९।।
माता त्वं दशपुत्राणां गुणिनां चिरजीविनाम् ।।
स्वभर्तुरधिकानां च भविष्यसि न संशयः ।। 2.3.35.५० ।।
गृहा भवन्तु ते साध्वि सर्वसम्पत्सम न्विताः ।।
प्रकाशमन्तस्सततं कुबेरभवनाधिकाः ।।५१ ।।
।। वसिष्ठ उवाच ।।
इत्येवमुक्ता सन्तस्थौ धर्मस्स गिरिसत्तम ।।
सा तं प्रदक्षिणीकृत्य प्रणम्य स्वगृहं ययौ ।।५२।।
धर्मस्तथाशिषो दत्वा जगाम निजमन्दिरम् ।।
प्रशशंस च तां प्रात्या पद्मां संसदि संसदि ।। ५३ ।।
सा रेमे स्वामिना सार्द्धं यूना रहसि सन्ततम् ।।
पश्चाद्बभूवुऽस्सत्पुत्रास्तद्भर्तुरधिका गुणैः ।।५४।।
बभूव सकला सम्पद्दम्पत्योः सुखवर्द्धिनी ।।
सर्वानन्दवृद्धिकरी परत्रेह च शर्मणे ।। ५५ ।।
शैलेन्द्र कथितं सर्वमितिहासं पुरातनम् ।।
दम्पत्योश्च तयोः प्रीत्या श्रुतं ते परमादरात् ।। ५६ ।।
बुद्ध्वा तत्त्वं सुतां देहि पार्वतीमीश्वराय च ।।
कुरुषं त्यज शैलेन्द्र मेनया स्वस्त्रिया सह ।। ५७ ।।
सप्ताहे समतीते तु दुर्लभेति शुभे क्षणे ।।
लग्नाधिपे च लग्नस्थे चन्द्रेस्वत्रयान्विते ।। ५८ ।।
मुदिते रोहिणीयुक्ते विशुद्धे चन्द्रतारके ।।
मार्गमासे चन्द्रवारे सर्वदोषविवर्जिते ।। ५९ ।।
सर्वसद्ग्रहसंसृष्टऽसद्ग्रहदृष्टिवर्जिते ।।
सदपत्यप्रदे जीवे पतिसौभाग्यदायिनि ।। 2.3.35.६० ।।
जगदम्बां जगत्पित्रे मूलप्रकृतिमीश्वरीम् ।।
कन्यां प्रदाय गिरिजां कृती त्वं भव पर्वत ।।६१।।

ब्रह्मोवाच ।।

इत्युक्त्वा मुनिशार्दूलो वसिष्ठो ज्ञानिसत्तमः ।।

विरराम शिवं स्मृत्वा नानालीलाकरं प्रभुम् ।। ६२ ।।

इति श्रीशिव महापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे पद्मापिप्पलादचरितवर्णनं नाम पञ्चत्रिंशोऽध्यायः ।।३५।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ३६



ब्रह्मोवाच ।।

वसिष्ठस्य वचः श्रुत्वा सगणोपि हिमालयः ।।

विस्मितो भार्य्यया शैलानुवाच स गिरीश्वरः ।।१।।

हिमालय उवाच ।।

हे मेरो गिरिराट् सह्य गन्धमादन मन्दर ।।

मैनाक विन्ध्य शैलेन्द्रास्सर्वे शृणुत मद्वचः ।। २ ।।

वसिष्ठो हि वदत्येवं किं मे कार्य्यं विचार्य्यते ।।

यथा तथा च शंसध्वं निर्णीय मनसाखिलम् ।। ३ ।।

ब्रह्मोवाच ।।

तच्छ्रुत्वा वचनं तस्य सुमेरुप्रमुखाश्च ते ।।

प्रोचुर्हिमालयं प्रीत्या सुनिर्णीय महीधराः ।।४।।

शैला ऊचुः ।।

अधुना किं विमर्शेन कृतं कार्य्यं तथैव हि ।।

उत्पन्नेयं महाभाग देवकार्यार्थमेव हि ।।५।।

प्रदातव्या शिवायेति शिवस्यार्थेवतारिणी ।।

अनयाराधितो रुद्रो रुद्रेण यदि भाषिता ।।६।।

ब्रह्मोवाच।।

एतच्छ्रुत्वा वचस्तेषाम्मेर्वादीनां हिमाचलः ।।

सुप्रसन्नतरोभूद्वै जहास गिरिजा हृदि ।। ७ ।।

अरुन्धती च तां मेनां बोधयामास कारणात् ।।

नानावाक्यसमूहेनेतिहासैर्विविधैरपि ।। ८ ।।

अथ सा मेनका शैलपत्नी बुद्ध्वा प्रसन्नधीः ।।

मुनीनरुन्धतीं शैलं भोजयित्वा बुभोज च ।। ९ ।।

अथ शैलवरो ज्ञानी सुसंसेव्य मुनींश्च ताम् ।।

उवाच साञ्जलिः प्रीत्या प्रसन्नात्मागतभ्रमः।। 2.3.36.१० ।।

हिमाचल उवाच ।।

सप्तर्षयो महाभागा वचः शृणुत मामकम् ।।

विस्मयो मे गतस्सर्वश्शिवयोश्चरितं श्रुतम् ।। ११ ।।।

मदीयं च शरीरम्वै पत्नी मेना सुतास्सुता ।।

ऋद्धिस्सिद्धिश्च चान्यद्वै शिवस्यैव न चान्यथा ।। १२।।

।। ब्रह्मोवाच ।।

इत्युक्त्वा स तदा पुत्रीं दृष्ट्वा तत्सादरं च ताम् ।।

भूषयित्वा तदङ्गानि ऋष्युत्संगे न्यवेशयेत्।। १३।।

उवाच च पुनः प्रीत्या शैलराज ऋषींस्तदा।।।

अयं भागो मया तस्मै दातव्य इति निश्चितम् ।। १४।।

।। ऋषय ऊचुः ।।

शंकरो भिक्षुकस्तेथ स्वयं दाता भवान् गिरे ।।

भैक्ष्यञ्च पार्वती देवी किमतः परमुत्तमम् ।। १५।।

हिमवन् शिखराणान्ते यद्धेतोस्सदृशी गतिः ।।

धन्यस्त्वं सर्वशैलानामधिपस्सर्वतो वरः ।। १६ ।।

।। ब्रह्मोवाच ।।

एवमुक्त्वा तु कन्यायै मुनयो विमलाशयाः ।।

आशिषं दत्तवन्तस्ते शिवाय सुखदा भव ।।१७।।

स्पृष्ट्वा करेण तां तत्र कल्याणं ते भविष्यति ।।

शुक्लपक्षे यथा चन्द्रो वर्द्धन्तां त्वद्गुणास्तथा।। १८।।

इत्युक्त्वा मुनयस्सर्वे दत्त्वा ते गिरये मुदा ।।

पुष्पाणि फलयुक्तानि प्रत्ययं चक्रिरे तदा ।। १९ ।।

अरुन्धती तदा तत्र मेनां सा सुसुखी मुदा ।।

गुणैश्च लोभयामास शिवस्य परमा सती ।। 2.3.36.२० ।।

हरिद्राकुंकुमैश्शैलश्मश्रूणि प्रत्यमार्जयत् ।।

लौकिकाचारमाधाय मंगलायनमुत्तमम् ।। २१ ।।

ततश्च ते चतुर्थेह्नि संधार्य्य लग्नमुत्तमम् ।।

परस्परं च सन्तुष्य संजग्मुश्शिवसन्निधिम्।।२२।।
तत्र गत्वा शिवं नत्वा स्तुत्वा विवि धसूक्तिभिः ।।
ऊचुः सर्वे वसिष्ठाद्या मुनयः परमेश्वरम् ।।२३।।
ऋषय ऊचुः ।।
देवदेव महादेव परमेश महाप्रभो ।।
शृण्वस्मद्वचनं प्रीत्या यत्कृतं सेवकैस्तव ।। २४ ।।
बोधितो गिरिराजश्च मेना विविधसूक्तिभिः ।।
सेतिहासं महेशान प्रबुद्धोसौ न संशयः।।२५।।
वाक्यदत्ता गिरीन्द्रेण पार्वती ते हि नान्यथा ।।
उद्वाहाय प्रगच्छ त्वं गणैर्देवैश्च संयुतः ।।२६।।
गच्छ शीघ्रं महादेव हिमाचलगृहं प्रभो ।।
विवाहय यथा रीतिः पार्वतीमात्मजन्मने ।।२७।।
।। ब्रह्मोवाच ।।
तच्छ्रुत्वा वचनं तेषां लौकिकाचारतत्परः।।
प्रहृष्टात्मा महेशानः प्रहस्येदमुवाच सः ।।२८।।
महेश उवाच ।।
विवाहो हि महाभागा न दृष्टो न श्रुतो मया ।।
यथा पुरा भवद्भिस्तद्विधिः प्रोच्यो विशेषतः ।। २९ ।।
।। ब्रह्मोवाच ।।
तदाकर्ण्य महेशस्य लौकिकं वचनं शुभम् ।।
प्रत्यूचुः प्रहसन्तस्ते देवदेवं सदाशिवम् ।। 2.3.36.३० ।।
ऋषय ऊचुः ।।
विष्णुमाहूय वै शीघ्रं ससमाजं विशेषतः ।।
ब्रह्माणं ससुतं प्रीत्या तथा देवं शतक्रतुम् ।। ३१ ।।
तथा ऋषिगणान्सर्वान् यक्षगन्धर्वकिन्नरान् ।।
सिद्धान् विद्याधरांश्चैव तथा चैवाप्सरोगणान् ।।३२।।
एतांश्चान्यान्प्रभो सर्वानानय स्वेह सादरम् ।।
सर्वं संसाधयिष्यन्ति त्वत्कार्य्यं ते न संशयः ।।३३।।

ब्रह्मोवाच ।।

इत्युक्त्वा सप्त ऋषयस्तदाज्ञां प्राप्य ते मुदा ।।

स्वधाम प्रययुस्सर्वे शंसन्तः शङ्करीं गतिम् ।। ३४ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखंडे सप्तऋषिवचनं नाम षट्त्रिंशोऽध्यायः।।३६।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ३७

https://sa.wikisource.org/s/wka



नारद उवाच ।।

तात प्राज्ञ वदेदानीं सप्तर्षिषु गतेषु च ।।

किमकार्षीद्धिमगिरिस्तन्मे कृत्वा कृपां प्रभो ।। १ ।।

।। ब्रह्मोवाच ।।

गतेषु तेषु मुनिषु सप्तस्वपि मुनीश्वर ।।

सारुन्धतीषु हिमवान् यदकार्षीद्ब्रवीमि ते ।।२।।

तत आमन्त्र्य स्वभ्रातॄन् मेर्वादीन् ससुतप्रियः ।।

महामनास्स मुमुदे हिमवान् पर्वतेश्वरः ।। ३ ।।

तदाज्ञप्तस्ततः प्रीत्या हिमवान् लग्न पत्रिकाम् ।।

लेखयामास सुप्रीत्या गर्गेण स्वपुरोधसा ।।४।।

अथ प्रस्थापयामास तां शिवाय स पत्रिकाम्।।

नानाविधास्तु सामग्र्यः स्वजनैर्मुदितात्मभिः ।। ५ ।।

ते जनास्तत्र गत्वा च कैलासे शिवसन्निधिम् ।।

ददुश्शिवाय तत्पत्रं तिलकं सम्विधाय च ।। ६ ।।

सन्मानिता विशेषेण प्रभुणा च यथोचितम् ।।

सर्वे ते प्रीतिमनस आजग्मुश्शैलसन्निधिम् ।। ७ ।।

सन्मानितान्विशेषेण महेशेनागताञ्जनान् ।।

दृष्ट्वा सुहर्षिताञ्च्छैलो मुमोदातीव चेतसि ।। ८ ।।

ततो निमन्त्रणं चक्रे स्वबन्धूनां प्रमोदितः ।।

नानादेशस्थितानाञ्च निखिलानां सुखास्पदम् ।।९।।

ततस्स कारयामास स्वर्णसंग्रहमादरात् ।।

नानाविधाश्च सामग्रीर्विवाहकरणोचिताः ।। 2.3.37.१० ।।

तण्डुलानां बहूञ्छैलान् पृथुकानां तथैव च ।।

गुडानां शर्कराणाञ्च लवणानां तथैव च ।।११।।

क्षीराणां च घृतानाञ्च दध्नां वापीश्चकार सः ।।
यवादिधान्यपिष्टानां लड्डुकानां तथैव च ।। १२ ।।
शष्कुलीनां स्वस्तिकानां शर्कराणां तथैव च ।।
अमृतेक्षुरसानां च तत्र वापीश्चकार सः ।।१३।।
बह्वीर्हैयंगवानाञ्च ह्यासवानां तथैव च ।।
नाना पक्वान्नसंघांश्च महास्वादुरसाँस्तथा ।। १४ ।।
नाना व्यञ्जनवस्तूनि गणदेवहितानि च ।।
अमूल्यनानावस्त्राणि वह्निशौचानि यानि च ।। १९।।
मणिरत्नप्रकाराणि सुवर्णरजतानि च ।।
द्रव्याण्येतानि चान्यानि संगृह्य विधिपूर्वकम् ।। १६ ।।
मंगलं कर्तुमारेभे गिरिर्मंगलकृद्दिने ।।
संस्कारं कारयामासुः पार्वत्याः पर्वतस्त्रियः ।। १७ ।।
ता मंगलं मुदा चक्रुर्भूषिता भूषणैः स्वयम् ।।
पुरद्विजस्त्रियो दृष्ट्वा लोकाचारं प्रचक्रिरे ।। १८ ।।
सोत्सवं विविधं तत्र सुमंगलपुरस्सरम् ।।
हिमालयोऽपि हृष्टात्मा कृत्वाचारं सुमंगलम् ।। १९ ।।
सर्वभावेन सुप्रीतो बन्धुवर्गागमोत्सुकः ।।
एतस्मिन्नन्तरे तस्य बान्धवाश्च निमन्त्रिताः ।। 2.3.37.२० ।।
आजग्मुस्सस्त्रियो हृष्टास्ससुतास्सपरिच्छदाः ।।
तदैव शृणु देवर्षे गिर्य्यागमनमादृतः ।।२१।।
वर्णयामि समासेन शिवप्रीतिविवृद्धये ।।
देवालय गिरिर्यो हि दिव्यरूपधरो महान् ।। २२ ।।
नानारत्नपरिभ्राजत्समाजस्सपरिच्छदः ।।
नानामणिमहारत्नसारमादाय यत्नतः ।। २३ ।।
सुवेषालंकृतः श्रीमान् जगाम स हिमालयम् ।।
मन्दरस्सर्वशोभाढ्यस्सनारीतनयो गिरिः ।। २४ ।।
सूपायनानि संगृह्य जगाम विविधानि च ।।
अस्ताचलोपि दिव्यात्मा सोपायन उदारधीः ।।२५।।

बहुशोभासमायुक्त आजगाम मुदान्वितः ।।
उदयाचल आदाय सद्रत्नानि मणीनपि।।२६।।।
अत्युत्कृष्टपरीवार आजगाम महासुखी ।।
मलयो गिरिराजो हि सपरीवार आद्दतः ।।२७।।
सुदिव्यरचनायुक्त आययौ बहुसद्बलः ।।
सद्यो दर्दुरनामा च मुदितस्सकलत्रकः ।।२८।।
बहुशोभान्वितस्तातः ययौ हिमगिरेर्गृहम्।।
निषदोपि प्रहृष्टात्मा सपरिच्छद आययौ ।।२९।।
ससुतस्त्रीगणः प्रीत्या ययौ हिमगिरेर्गृहम् ।।
आजगाम महाभाग्यो भूधरो गन्धमादनः ।।2.3.37.३० ।।
करवीरस्तथैवापि महाविभव संयुतः ।।
महेन्द्रः पर्वतश्रेष्ठ आजगाम हिमालयम् ।।३ १ ।।
सगणस्ससुतस्त्रीको बहुशोभासमन्वितः ।।
पारियात्रो हि हृष्टात्मा मणि रत्नाकरस्सयुत् ।।३२।।
सगणस्सपरीवार आययौ हिमभूधरम् ।।
क्रौञ्चः पर्वतराजो हि महाबलपरिच्छदः ।।
आजगाम गिरिश्रेष्ठस्स मुपायन आद्दतः ।।३३।।
पुरुषोत्तमशैलोपि सपरिच्छद आद्दतः ।।
महोपायनमादायाजगाम हिमभूधरम् ।।३४।।
नीलः सलीलस्स सुतस्सस्त्रीको द्रव्यसंयुतः ।।
आजगाम हिमागस्य गृहमानन्दसंयुतः ।।३५।।
त्रिकूटश्चित्रकूटोपि वेंकटः श्रीगिरिस्तथा ।।
गोकामुखी नारदश्च हिमगेहमुपागमत् ।। ३६ ।।
विन्ध्यश्च पर्वतश्रेष्ठो नानासम्पत्समन्वितः ।।
आजगाम प्रहृष्टात्मा सदारतनयश्शुभः ।।३७।।
कालंजरो महाशैलो बहुहर्षसमन्वितः ।।
बहुभस्सगणः प्रीत्याजगामहिमभूधरम् ।।३८।।
कैलासस्तु महाशैलो महाहर्षसमन्वितः।।

आजगाम कृपां कृत्वा सर्वोपरि लसत्प्रभुः ।।३९।।
अन्येपि भूभृतो ये हि द्वीपेष्वन्येष्वपि द्विज ।।
इहापि येऽचलास्सर्वे आययुस्ते हिमालयम् ।। 2.3.37.४० ।।
निमन्त्रिता नगास्तत्र तेन पूर्वं मुदा मुने ।।
आययुर्निखिलाः प्रीत्या विवाहश्शिवयोरिति ।।४१।।
तदा सर्वे समायाताश्शोणभद्रादयः खलु।।
बहुशोभा महाप्रीत्या विवाहश्शिवयोरिति।।४२।।
नद्यस्सर्वास्समायाता नानालंकारसंयुताः ।।
दिव्य रूपधराः प्रीत्या विवाहश्शिवयोरिति ।।४३।।
गोदावरी च यमुना ब्रह्मस्त्रीर्वेणिका तथा ।।
आययौ हिमशैलम्वै विवाहश्शिवयोरिति ।।४४।।
गंगा तु सुमहाप्रीत्या नानालंकारसंयुता ।।
दिव्यरूपा ययौ प्रीत्या विवाहश्शिवयोरिति ।।४५।।
नर्मदा तु महामोदा रुद्रकन्या सरिद्वरा ।।
महाप्रीत्या जगामाशु विवाहश्शिवयोरिति ।।४६।।
आगतैस्तैस्ततः सर्वैस्सर्वतो हिमभूधरम्।।
संकुलासीत्पुरी दिव्या सर्वशोभासमन्विता ।।४७।।
महोत्सवा लसत्केतुध्वजातोरणकाधिका ।।
वितानविनिवृत्तार्का तथा नानालसत्प्रभा ।। ४८ ।।
हिमालयोपि सुप्रीत्यादरेण विविधेन च ।।
तेषां चकार सन्मानं तासां चैव यथायथम् ।।४९।।
सर्वान्निवासयामास सुस्थानेषु पृथक् पृथक् ।।
सामग्रीभिरनेकाभिस्तोषयामास कृत्स्नशः ।।2.3.37.५०।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पावतीखण्डे लग्नपत्रसंप्रेषणसामग्रीसंग्रहशैलागमनवर्णनं नाम सप्तत्रिंशोऽध्यायः ।। ३७ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ३८

https://sa.wikisource.org/s/wkb

< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः ३ (पार्वतीखण्डः)

।। ब्रह्मोवाच ।।

अथ शैलेश्वरः प्रीतो हिमवान्मुनि सत्तम ।।

स्वपुरं रचयामास विचित्रं परमोत्सवम् ।।१।।

सिक्तमार्गं संस्कृतं च शोभितं परमर्द्धिभिः ।।

द्वारि द्वारि च रम्भादि मङ्गलं द्रव्यसंयुतम् ।।२।।

प्रांगणं रचयामास रम्भास्तंभसमन्वितम् ।।

पट्टसूत्रैस्संनिबद्धरसालपल्लवान्वितम् ।। ३ ।।

मालतीमाल्यसंयुक्तं लसत्तोरणसुप्रभम् ।।

शोभितम्मंगलद्रव्यैश्चतुर्दिक्षु स्थितैश्शुभैः ।। ४ ।।

तथैव सर्वं परया मुदान्वितश्चक्रे गिरीन्द्रस्स्वसुतार्थमेव।।

गर्गम्पुरस्कृत्य महाप्रभावं प्रस्तावयोग्यं च सुमंगलं हि ।।५।।

आहूय विश्वकर्माणं कारयामास सादरम् ।।

मण्डपं च सुविस्तीर्णं वेदिकादिमनोहरम् ।। ६ ।।

अयुतेन सुरर्षे तद्योजनानां च विस्तृतम् ।।

अनेकलक्षणोपेतं नानाश्चर्य्यसमन्वितम् ।। ७ ।

स्थावरं जंगमं सर्वं सदृशन्तैर्मनोहरम् ।।

सर्वतोऽद्भुतसर्वत्वं नानावस्तुचमत्कृतम् ।।८।।

जंगमं विजितन्तत्र स्थावरेण विशेषतः ।।

जंगमेन च तत्रासीज्जितं स्थावरमेव हि ।।९।।

पयसा च जिता तत्र स्थलभूमिर्न चान्यथा ।।

जलं किं हि स्थलं किं हि न विदुः केऽपि कोविदाः ।। 2.3.38.१० ।।

क्वचित्सिंहाः कृत्रिमाश्च क्वचित्सारसपंक्तयः ।।

क्वचिच्छिखण्डिनस्तत्र कृत्रिमाश्च मनोहराः ।। ।। ११ ।।

क्वचित्स्त्रियः कृत्रिमाश्च नृत्यन्त्यः पुरुषैस्सह ।।

मोहयन्त्यो जनान्सर्वान्पश्यन्त्यः कृत्रिमास्तथा।।१२।।

तथा तेनैव विधिना द्वारपाला मनोहराः ।।

हस्तैर्धनूंषि चोद्धृत्य स्थावरा जंगमोपमाः ।।१३।।

द्वारि स्थिता महालक्ष्मीः कृत्रिमा रचिताद्भुता।।

सर्वलक्षणसंयुक्ता गताः साक्षत्पयोर्णवात ।।१४।।

गजाश्वालङ्कृता ह्यासन्कृत्रिमा अकृतोपमाः ।।

तथाश्वाः न सादिभिश्चैव गजाश्च गजसादिभिः ।। १५ ।।

रथा रथिभिराकृष्टा महाश्चर्यसमन्विताः ।।

वाहनानि तथान्यानि पत्तयः कृत्रिमास्तथा ।। १६ ।।

एवं विमोहनार्थन्तु कृतं वै विश्वकर्मणा ।।

देवानां च मुनीनां च तेन प्रीतात्मना मुने ।।१७।।

महाद्वारि स्थितौ नन्दी कृत्रिमश्च कृतो मुने ।।

शुद्धस्फटिकसंकाशो यथा नन्दी तथैव सः ।।१-।।

तस्योपरि महादिव्यम्पुष्पकं रत्नभूषितम् ।।

राजितं पल्लवैश्शुभ्रश्चामरैश्च सुशोभितम् ।।१९।।

वामपार्श्वे गजौ द्वौ च शुद्धकाश्मीरसन्निभौ ।।

चतुर्दन्तो षष्टिवर्षौ भेदमानौ महाप्रभौ ।।2.3.38.२०।।

तथैवार्कनिभौ तेन कृतौ चाश्वौ महाप्रभौ ।।

चामरालंकृतौ दिव्यौ दिव्यालङ्कारभूषितौ ।। २१ ।।

दंशिता वररत्नाढ्या लोकपालास्तथैव च ।।

सर्वे देवा यथार्थं वै कृता वै विश्वकर्मणा ।।२२।।

तथा हि ऋषयस्सर्वे भृग्वाद्याश्च तपोधनाः ।।

अन्ये ह्युपसुरास्तद्वत्सिद्धाश्चान्येऽपि वै कृताः ।।२३।।

विष्णुश्च पार्षदैस्सर्वैर्गरुडाख्यैस्समन्वितः ।।

कृत्रिमो निर्मितस्तद्वत्परमाश्चर्यरूपवान् ।। २४ ।।

तथैवाहं सुतैर्वेदैस्सिद्धैश्च परिवारितः ।।

कृत्रिमो निर्मितस्तद्वत्पठन्सूक्तानि नारद ।।२५।।

ऐरावतगजारूढश्शक्रस्स्वदलसंयुतः ।।

कृत्रिमो निर्मितस्तद्वत्परिपूर्णेन्दुसंनिभः ।। २६ ।।

किं बहूक्तेन देवर्षे सर्वो वै विश्वकर्मणा ।।

हिमागप्रेरितेनाशु क्लृप्तस्सुरसमाजकः ।। २७ ।।

एवंभूतः कृतस्तेन मण्डपो दिव्यरूपवान् ।।

अनेकाश्चर्यसम्भूतो महान्देवविमोहनः ।। २८ ।।

अथाज्ञप्तो गिरीशेन विश्वकर्मा महामतिः ।।

निवासार्थं सुरादीनां तत्तल्लोकाम् हि यत्नतः ।।२९।।

तत्रैव च महामञ्चाः सुप्रभाः परमाद्भुताः ।।

रचितास्सुखदा दिव्या स्तेषां वै विश्वकर्मणा ।।2.3.38.३०।।

तथाप्तसप्तलोकं वै विरेचे क्षणतोऽद्भुतम् ।।

दीप्त्या परमया युक्तं निवासार्थं स्वयम्भुवः ।।३१।।

तथैव विष्णोस्त्वपरं वैकुण्ठाख्यं महोज्ज्वलम् ।।

विरेचे क्षणतो दिव्यं नानाश्चर्यसमन्वितम् ।।३२।।

अमरेशगृहन्दिव्यं तथैवाद्भुतमुत्तमम्।।

विरेचे विश्वकर्मासौ सर्वैश्वर्यसमन्वितम् ।।३३।।

गृहाणि लोकपालानां विरेचे सुन्दराणि च ।।

तद्वत्स प्रीतितो दिव्यान्यद्भुतानि महान्ति च ।। ३४ ।।

अन्येषाममराणां च सर्वेषां क्रमशस्तथा ।।

सदनानि विचित्राणि रचितानि च तेन वै ।।३५।।

विश्वकर्मा महाबुद्धिः प्राप्तशम्भुमहावरः ।।

विरेचे क्षणतः सर्वं शिवतुष्ट्यर्थमेव च ।। ३६ ।।

तथैव चित्रं परमं महोज्ज्वलं महाप्रभन्देववरैस्सुपूजितम् ।।

गिरीशचिह्नं शिवलोकसंस्थितं सुशोभितं शम्भुगृहं चकार ।। ३७ ।।

एवम्भूता कृता तेन रचना विश्वकर्मणा ।।

विचित्रा शिवतुष्ट्यर्थं पराश्चर्या महोज्ज्वला ।। ३८ ।।

एवं कृत्वाखिलं चेदं व्यवहारं च लौकिकम् ।।

पर्य्यैक्षिष्ट मुदा शम्भ्वागमनं स हिमाचलः ।। ३९ ।।

इति प्रोक्तमशेषेण वृत्तान्तम्प्रमुदावहम् ।।

हिमालयस्य देवर्षे किम्भूयः श्रोतुमिच्छसि ।। 2.3.38.४० ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे मण्डपादिरचनावर्णनं नामाष्टत्रिंशोऽध्यायः ।।३८।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ३९



नारद उवाच ।। ।।

विधे तात महाप्राज्ञ विष्णुशिष्य नमोऽस्तु ते ।।

अद्भुतेयं कथाश्रावि त्वत्तोऽस्माभिः कृपानिधे ।। १ ।।

इदानीं श्रोतुमिच्छामि चरितं शशिमौलिनः ।।

वैवाहिकं सुमाङ्गल्यं सर्वाघौघविनाशनम् ।। २ ।।

किं चकार महादेवः प्राप्य मङ्गलपत्रिकाम् ।।

तां श्रावय कथान्दिव्यां शङ्करस्सपरात्मनः ।। ३ ।।

।। ब्रह्मोवाच ।।

शृणु वत्स महाप्राज्ञ शाङ्करम्परमं यशः ।।

यच्चकार महादेवः प्राप्य मङ्गलपत्रिकाम् ।। ४ ।।

अथ शम्भुर्गृहीत्वा तां मुदा मंगलपत्रिकाम् ।।

विजहास प्रहृष्टात्मा मानन्तेषां व्यधाद्विभुः ।।५।।

वाचयित्वा च तां सम्यग्स्वीचकार विधानतः ।।

तज्जनन्यापयामास बहुसम्मान्य चादृतः ।।६।।

उवाच सुनिवर्गांस्तान्कार्य्यं सम्यक् कृतं शुभम् ।।

आगन्तव्यं विवाहे मे विवाहस्स्वीकृतो मया ।।७।।

इत्याकर्ण्य वचश्शम्भोः प्रहृष्टास्ते प्रणम्य तम्।।

परिक्रम्य ययुर्धाम शंसन्तः स्वं विधिम्परम् ।। ८ ।।

अथ देवेश्वरश्शम्भुस्सामरस्त्वां मुने द्रुतम् ।।

लौकिकाचारमाश्रित्य महालीलाकरः प्रभुः ।।९।।

त्वमागतः परप्रीत्या प्रशंसंस्त्वं विधिम्परम् ।।

प्रणमंश्च नतस्कन्धो विनीतात्मा कृताञ्जलिः ।।2.3.39.१०।।

अस्तौस्सुजयशब्दान्हि समुच्चार्य मुहुर्मुहुः।।

निदेशं प्रार्थयंस्तस्य प्रशंसंस्त्वं विधिम्मुने।।११।।

ततश्शंभुः प्रहृष्टात्मा दर्शयँल्लौकिकीं गतिम् ।।
उवाच मुनिवर्य त्वां प्रीणयञ्छुभया गिरा ।। १२ ।।
शिव उवाच ।।
प्रीत्या शृणु मुनिश्रेष्ठ ह्यस्मत्तोऽद्य वदामि ते ।।
ब्रुवे तत्त्वां प्रियो मे यद्भक्तराजशिरोमणिः ।। १३।।
कृतं महत्तपो देव्या पार्वत्या तव शासनात् ।।
तस्यै वरो मया दत्तः पतित्वे तोषितेन वै ।। १४ ।।
करिष्येऽहं विवाहं च तस्या वश्यो हि भक्तितः ।।
सप्तर्षिभिस्साधितश्च तल्लग्नं शोधितं च तैः ।। १५ ।।
अद्यतस्सप्तमे चाह्नि तद्भविष्यति नारद ।।
महोत्सवं करिष्यामि लौकिकीं गतिमाश्रितः ।।१६।।
ब्रह्मोवाच।।
इति श्रुत्वा वचस्तस्य शंकरस्य परात्मनः ।।
प्रसन्नधीः प्रभुं नत्वा तात त्वं वाक्यमब्रवीः ।।१७।।
नारद उवाच।।
भवतस्तु व्रतमिदम्भक्तवश्यो भवान्मतः।।
सम्यक् कृतं च भवता पार्वतीमानसेप्सितम् ।।१८।।
कार्यं मत्सदृशं किञ्चित्कथनीयन्त्वया विभो ।।
मत्वा स्वसेवकं मां हि कृपां कुरु नमोऽस्तु ते ।।१९।।
ब्रह्मोवाच ।।
इत्युक्तस्तु त्वया शम्भुश्शंकरो भक्तवत्सलः ।।
प्रत्युवाच प्रसन्नात्मा सादरं त्वां मुनीश्वर ।।2.3.39.२०।।
शिव उवाच ।।
विष्णुप्रभृतिदेवांश्च मुनीन्सिद्धानपि ध्रुवम् ।।
त्वन्निमन्त्रय मद्वाण्या मुनेऽन्यानपि सर्वतः ।।२१।।
सर्व आयान्तु सोत्साहास्सर्वशोभासमन्विताः ।।
सस्त्रीसुतगणाः प्रीत्या मम शासनगौरवात् ।। २२।।
नागमिष्यन्ति ये त्वत्र मद्विवाहोत्सवे मुने ।।

ते स्वकीया न मन्तव्या मया देवादयः खलु ।।२३।।

ब्रह्मोवाच ।।

इतीशाज्ञां ततो धृत्वा भवाञ्छङ्करवल्लभः ।।

सर्वान्निमन्त्रयामास तं तं गत्वा द्रुतं मुने ।।२४।।

शम्भूपकण्ठमागत्य द्रुतं मुनिवरो भवान्।।

तद्भृत्यात्तत्र सन्तस्थौ तदाज्ञाम्प्राप्य नारद।।२५।।

शिवोऽपि तस्थौ सोत्कण्ठस्तदागमनलालसः ।।

स्वगणैस्सोत्सवैस्सर्वैर्नृत्यद्भिस्सर्वतोदिशम् ।।२६।।

एतस्मिन्नेव काले तु रचयित्वा स्ववेषकम्।।

आजगामाच्युतश्शीघ्रं कैलासं सपरिच्छदः।।२७।।

शिवम्प्रणम्य सद्भक्त्या सदारस्सदलो मुदा।।

तदाज्ञाम्प्राप्य सन्तस्थौ सुस्थाने प्रीतमानसः ।। २८ ।।

तथाहं स्वगणैराशु कैलासमगमं मुदा ।।

प्रभुम्प्रणम्यातिष्ठं वै सानन्दस्स्वगणान्वितः ।। २९ ।।

इन्द्रादयो लोकपाला आययुस्सपरिच्छदाः।।

तथैवालंकृतास्सर्वे सोत्सवास्सकलत्रकाः ।।2.3.39.३०।।

तथैव मुनयो नागास्सिद्धा उपसुरा स्तथा ।।

आययुश्चापरेऽपीह सोत्सवास्सुनिमन्त्रिताः ।। ३१ ।।

महेश्वरस्तदा तत्रागतानां च पृथक् पृथक् ।।

सर्वेषाममराद्यानां सत्कारं व्यदधान्मुदा ।। ३२ ।।

अथोत्सवो महानासीत्कैलासे परमोद्भुतः ।।

नृत्यादिकन्तदा चक्रुर्यथायोग्यं सुरस्त्रियः ।। ३३ ।।

एतस्मिन्समये देवा विष्ण्वाद्या ये समागताः ।।

यात्रां कारयितुं शम्भोस्तत्रोषुस्तेऽखिला मुने ।। ३४ ।।

शिवाज्ञप्तास्तदा सर्वे मदीयमिति यन्त्रिताः ।।

शिवकार्यमिदं सर्वं चक्रिरे शिवसेवनम् ।।३५।।

मातरस्सप्त तास्तत्र शिवभूषाविधिम्परम् ।।

चक्रिरे च मुदा युक्ता यथायोग्यन्तथा पुनः ।३६।।

तस्य स्वाभाविको वेषो भूषाविविरभूत्तदा ।।

तस्येच्छया मुनिश्रेष्ठ परमेशस्य सुप्रभो ।।३७।।

चन्द्रश्च मुकुटस्थाने सान्निध्यमकरोत्तदा ।।

लोचनं सुन्दरं ह्यासीत्तृतीयन्तिलकं शुभम् ।। ३८ ।।

कर्णाभरणरूपौ च यौ हि सर्पौ प्रकीर्तितौ ।।

कुण्डलेऽभवतान्तस्य नानारत्नान्विते मुने ।। ३९ ।।

अन्यांगसंस्थितास्सर्पास्तदंगाभरणानि च ।।

बभूवुरतिरम्याणि नानारत्नमयानि च ।। 2.3.39.४० ।।

विभूतिरंगरागोऽभूच्चन्दनादिसमुद्भवः ।।

तद्दुकूलमभूद्दिव्यं गजचर्मादि सुन्दरम् ।। ४१ ।।

ईदृशं सुन्दरं रूपं जातं वर्णातिदुष्करम् ।।

ईश्वरोऽपि स्वयं साक्षादैश्वर्यं लब्धवान्स्वतः ।।४२।।

ततश्च सर्वे सुरपक्षदानवा नागाः पतंगाप्सरसो महर्षयः ।।

समेत्य सर्वे शिवसन्निधिं तदा महोत्सवाः प्रोचुरहो मुदान्विताः ।। ४३ ।।

सर्वै ऊचुः ।।

गच्छ गच्छ महादेव विवाहार्थं महेश्वर ।।

गिरिजाया महादेव्याः सहास्माभिः कृपां कुरु ।। ४४ ।।

ततो विष्णुरुवाचेदं प्रस्तावसदृशं वचः ।।

प्रणम्य शंकरं भक्त्या विज्ञानप्रीतमानसः ।। ४५ ।।

।। विष्णुरुवाच ।।

देव देव महादेव शरणागतवत्सल ।।

कार्यकर्त्ता स्वभक्तानां विज्ञप्तिं शृणु मे प्रभो।। ४६ ।।

गृह्योक्तविधिना शम्भो स्वविवाहस्य शंकर।।

गिरीशसुतया देव्या कर्म कर्तुमिहार्हसि ।।४७।।

त्वया च क्रियमाणे तु विवाहस्य विधौ हर ।।

स एव हि तथा लोके सर्वस्सुख्यातिमाप्नुयात ।। ४८ ।।

मण्डपस्थापनन्नान्दीमुखन्तत्कुलधर्मतः ।।

कारय प्रीतितो नाथ लोके स्वं ख्यापयन् यशः ।। ४९ ।।

ब्रह्मोवाच ।।

एवमुक्तस्तदा शम्भुर्विष्णुना परमेश्वरः ।।

लौकिकाचारनिरतो विधिना तच्चकार सः ।। 2.3.39.५० ।।

अहं ह्यधिकृतस्तेन सर्वमभ्युदयोचितम् ।।

अकुर्वं मुनिभिः प्रीत्या तत्र तत्कर्म चादरात् ।। ५१ ।।

कश्यपोऽत्रिर्वशिष्ठश्च गौतमो भागुरिर्गुरुः ।।

कण्वो बृहस्पतिश्शक्तिर्जमदग्निः पराशरः ।। ५२ ।।

मार्कण्डेयश्शिलापाकोऽरुणपालोऽकृतश्रमः ।।

अगस्त्यश्च्यवनो गर्गश्शिलादोऽथ महामुने ।। ५३ ।।

दधीचिरुपमन्युश्च भरद्वाजोऽकृतव्रणः ।।

पिप्पलादोऽथ कुशिकः कौत्सो व्यासः सशिष्यकः ।। ५४ ।।

एते चान्ये च बहव आगताश्शिवसन्निधिम् ।।

मया सुनोदितास्तत्र चक्रुस्ते विधिवत्क्रियाम् ।। ५५ ।।

वेदोक्तविधिना सर्वे वेदवेदांगपारगाः ।।

रक्षां चक्रुर्महेशस्य कृत्वा कौतुकमंगलम् ।। ५६ ।।

ऋग्यजुस्सामसूक्तैस्तु तथा नानाविधैः परैः ।।

मंगलानि च भूरीणि चक्रुः प्रीत्यर्षयोऽखिलाः ।।५७।।

ग्रहाणां पूजनं प्रीत्या चक्रुस्ते शम्भुना मया ।।

मण्डलस्थसुराणां च सर्वेषां विघ्नशान्तये।५८।।

ततश्शिवस्तु सन्तुष्टः कृत्वा सर्वं यथोचितम्।।

लौकिकं वैदिकं कर्म ननाम च मुदा द्विजान् ।।५९।।

अथ सर्वेश्वरो विप्रान्देवान्कृत्वा पुरस्सरान् ।।

निस्ससार मुदा तस्मात्कैलासात्पर्वतोत्तमात् ।।2.3.39.६०।।

बहिः कैलासकुधराच्छम्भुस्तस्थौ मुदान्वितः ।।

देवैस्सह द्विजैश्चैव नानास्वीकारकः प्रभुः ।। ६१ ।।

तदोत्सवो महानासीत्तत्र देवादिभिः कृतः ।।

सन्तुष्ट्यर्थं महेशस्य गानवाद्यसुनृत्यकः ।। ६२ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे देवनिमन्त्रण देवागमन शिवयात्रावर्णनं नामैकोनचत्वारिंशोऽध्यायः ।। ३९ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ४०

https://sa.wikisource.org/s/wq5

< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः ३ (पार्वतीखण्डः)

ब्रह्मोवाच ।।

अथ शम्भुः समाहूय नन्द्यादीन् सकलान्गणान् ।।

आज्ञापयामास मुदा गन्तुं स्वेन च तत्र वै ।।१।।

।। शिव उवाच ।।

अपि यूयं सह मया संगच्छध्वं गिरेः पुरम् ।।

कियद्गणानिहास्थाप्य महोत्सवपुरस्सरम् ।। २ ।।

ब्रह्मोवाच ।।

अथ ते समनुज्ञप्ता गणेशा निर्ययुर्मुदा ।।

स्वंस्वं बलमुपादाय तान् कथंचिद्वदाम्यहम् ।। ३ ।।

अभ्यगाच्छंखकर्णश्च गणकोट्या गणेश्वरः ।।

शिवेन सार्द्धं संगन्तुं हिमाचलपुरम्प्रति ।। ४ ।।

दशकोट्या केकराक्षो गणानां समहोत्सवः ।।

अष्टकोट्या च विकृतो गणानां गणनायकः ।।५।।

चतुष्कोट्या विशाखश्च गणानां गणनायकः।।

पारिजातश्च नवभिः कोटिभिर्गणपुंगवः ।।६।।

षष्टिस्सर्वान्तकः श्रीमान्तथैव विकृताननः ।।

गणानान्दुन्दुभोष्टाभिः कोटिकोटिभिर्गणनायकः ।।७।।

पञ्चभिश्च कपालाख्यो गणेशः कोटिभिस्तथा ।।

षड्भिस्सन्दारको वीरो गणानां कोटिभिर्मुने ।।८।।

कोटिकोटिभिरेवेह कन्दुकः कुण्डकस्तथा ।।

विष्टम्भो गणपोऽष्टाभिर्गणानां कोटिभिस्तथा ।।९।।

सहस्रकोट्या गणपः पिप्पलो मुदितो ययौ ।।

तथा संनादको वीरो गणेशो मुनिसत्तम।।2.3.40.१०।।

आवेशनस्तथाष्टाभिः कोटिभिर्गणनायकः ।।

महाकेशस्सहस्रेण कोटीनां गणपो ययौ ।।११।।
कुण्डो द्वादशकोट्या हि तथा पर्वतको मुने।।
अष्टाभिः कोटिभिर्वीरस्समगाच्चन्द्रतापनः ।। १२ ।।
कालश्च कालकश्चैव महाकालश्शतेन वै ।।
कोटीनां गणनाथो हि तथैवाग्निकनामकः ।। १३ ।।
कोट्यग्निमुख एवागाद् गणानां गणनायकः ।।
आदित्यमूर्द्धा कोट्या च तथा चैव घनावहः ।। १४ ।।
सन्नाहश्शतकोट्या हि कुमुदो गणपस्तथा ।।
अमोघः कोकिलश्चैव शतकोट्या गणाधिपः ।।१५।।
सुमन्त्रः कोटिकोट्या च गणानां गणानायकः ।।
काकपादोदरः कोटिषष्ट्या सन्तानकस्तथा ।।१६।।
महाबलश्च नवभिर्मधुपिंगश्च कोकिलः ।।
नीलो नवत्या कोटीनां पूर्णभद्रस्तथैव च ।।१७।।
सप्तकोट्या चतुर्वक्त्रः करणो विंशकोटिभिः ।।
ययौ नवतिकोट्या तु गणेशानो हि रोमकः ।।१८।।
यज्वाशश्शतमन्युश्च मेघमन्युश्च नारद ।।
तावत्कोट्या ययुस्सर्वे गणेशा हि पृथक्पृथक्।।१९।।
काष्ठाङ्गुष्ठश्चतुष्षष्ट्या कोटीनां गणनायकः ।।
विरूपाक्षस्सुकेशश्च वृषाभश्च सनातनः ।। 2.3.40.२० ।।
तालकेतुः षडास्यश्च चञ्च्वास्यश्च सनातनः ।।
सम्वर्तकस्तथा चैत्रो लकुलीशस्स्वयम्प्रभुः ।।२१।।
लोकान्तकश्च दीप्तात्मा तथा दैत्यान्तको मुने ।।
देवो भृंगिरिटिश्श्रीमान्देवदेवप्रियस्तथा ।।२२।।
अशनिर्भानुकश्चैव चतुष्षष्ट्या सहस्रशः ।।
ययुश्शिवविवाहार्थं शिवेन सहसोत्सवाः ।।२३।।
भूतकोटिसहस्रेण प्रमथाः कोटिभिस्त्रिभिः ।।
वीरभद्रश्चतुष्षष्ट्या रोमजानान्त्रिकोटिभिः ।। २४ ।।
कोटिकोटिसहस्राणां शतैर्विंशतिभिर्वृताः ।।

तत्र जग्मुश्च नन्द्याद्या गणपाश्शंकरोत्सवे ।। २५ ।।

क्षेत्रपालो भैरवश्च कोटिकोटिगणैर्युतः ।।

उद्वाहश्शंकरस्येत्याययौ प्रीत्या महोत्सवे ।। २६ ।।

एते चान्ये च गणपा असङ्ख्याता महाबलाः ।।

तत्र जग्मुर्महाप्रीत्या सोत्साहाश्शंकरोत्सवे ।। २७।।

सर्वे सहस्रहस्ताश्च जटामुकुटधारिणः ।।

चन्द्ररेखावतंसाश्च नीलकण्ठास्त्रिलोचनाः ।।२८।।

रुद्राक्षाभरणास्सर्वे तथा सद्भस्मधारिणः ।।

हारकुण्डलकेयूरमुकुटाद्यैरलंकृताः ।। २९ ।।

ब्रह्मविष्ण्विन्द्रसंकाशा अणिमादिगुणैर्युताः ।।

सूर्य्यकोटिप्रतीकाशास्तत्र रेजुर्गणेश्वराः ।।2.3.40.३०।।

पृथिवीचारिणः केचित् केचित्पातालचारिणः ।।

केचिद्व्योमचराः केचित्सप्तस्वर्गचरा मुने ।।३१।।

किम्बहूक्तेन देवर्षे सर्वलोकनिवासिनः ।।

आययुस्स्वगणाश्शम्भोः प्रीत्या वै शङ्करोत्सवे।।३२।।

इत्थं देवैर्गणैश्चान्यैस्सहितश्शङ्करः प्रभुः ।।

ययौ हिमगिरिपुरं विवाहार्थं निजस्य वै ।।३३।।

यदाजगाम सर्वेशो विवाहार्थे सुरादिभिः ।।

तदा तत्र ह्यभूद्वृत्तं तच्छृणु त्वं मुनीश्वर।।३४।।

रुद्रस्य भगिनी भूत्वा चण्डी सूत्सवसंयुता।।

तत्राजगाम सुप्रीत्या परेषां संभयावहा।।३५।।

प्रेतासनसमारूढा सर्पाभरणभूषिता।।

पूर्णं कलशमादाय हैमं मूर्ध्नि महाप्रभम् ।।३६।।

स्वपरीवारसंयुक्ता दीप्तास्या दीप्तलोचना।।

कुतूहलम्प्रकुर्वन्ती जातहर्षा महाबला।।३७।।

तत्र भूतगणा दिव्या विरूपः कोटिशो मुने ।।

विराजन्ते स्म बहुशस्तथा नानाविधास्तदा।।३८।।

तैस्समेताग्रतश्चण्डी जगाम विकृतानना।।

कुतूहलान्विता प्रीता प्रीत्युपद्रव कारिणी।।३९।।
चण्ड्या सर्वे रुद्रगणाः पृष्ठतश्च कृतास्तदा।।
कोट्येकादशसंख्याका रौद्ररुद्रप्रियाश्च ते।।2.3.40.४०।।
तदा डमरुनिर्घोषैर्व्याप्तमासीज्जगत्त्रयम्।।
भेरीझंकारशब्देन शंखानां निनदेन च ।। ४१ ।।
तथा दुन्दुभिनिर्घोषैश्शब्दः कोलाहलोऽभवत् ।।
कुर्वञ्जगन्मंगलं च नाशयेन्मंगलेतरत् ।। ४२ ।।
गणानां पृष्ठतो भूत्वा सर्वे देवास्समुत्सुकाः ।।
अन्वयुस्सर्वसिद्धाश्च लोकपालादिका मुने ।। ४३ ।।
मध्ये व्रजन् रमेशोऽथ गरुडासनमाश्रितः ।।
शुशुभे ध्रियमाणेन क्षत्रेण महता मुने।।४४।।
चामरैर्वीज्यमानोऽसौ स्वगणैः परिवारितः ।।
पार्षदैर्विलसद्भिश्च स्वभूषाविधिभूषितः ।।४५
तथाऽहमप्यशोभम्वै व्रजन्मार्गे विराजितः ।।
वेदैर्मूर्तिधरैश्शास्त्रैः पुराणैरागमैस्तथा ।। ।।४६।।
सनकादिमहासिद्धैस्सप्रजापतिभिस्सुतैः ।।
परिवारैस्संयुतो हि शिवसेवनतत्परः ।।४७।।
स्वसैन्यमध्यगश्शक्र ऐरावतगज स्थितः ।।
नामाविभूषितोऽत्यन्तं व्रजन् रेजे सुरेश्वरः ।।४८।।
तदा तु व्रजमानास्ते ऋषयो बहवश्च ते ।।
विरेजुरतिसोत्कण्ठश्शिवस्योद्वाहनम्प्रति ।।४९।।
शाकिन्यो यातुधानाश्च वेताला ब्रह्मराक्षसाः ।।
भूतप्रेतपिशाचाश्च तथान्ये प्रमथादयः ।।2.3.40.५०।।
तुम्बुरुर्नारदो हाहा हूहूश्चेत्यादयो वराः ।।
गन्धर्वाः किन्नरा जग्मुर्वाद्यानाध्माय हर्षिताः ।।५१।।
जगतो मातरस्सर्वा देवकन्याश्च सर्वशः ।।
गायत्री चैव सावित्री लक्ष्मीरन्यास्सुरस्त्रियः ।।५२।।
एताश्चान्याश्च देवानां पत्नयो भवमातरः ।।

उद्वाहश्शंकरस्येति जग्मुस्सर्वा मुदान्विताः।।५३।।
शुद्धस्फटिकसंकाशो वृषभस्सर्वसुन्दरः ।।
यो धर्म उच्यते वेदैश्शास्त्रैस्सिद्धमहर्षिभिः ।।५४।।
तमारूढो महादेवो वृषभं धर्मवत्सलः।।
शुशुभेतीव देवर्षिसेवितस्सकलैर्व्रजन् ।।५५।।
एभिस्समेतैस्सफलैमहर्षिभिर्बभौ महेशो बहुशोत्यलंकृतः।।
हिमालयाह्वस्य धरस्य संव्रजन् पाणिग्रहार्थं सदनं शिवायाः ।। ५६ ।।
इत्युक्तं शम्भुचरितं गमनम्परमोत्सवम् ।।
हिमालयपुरोद्भूतं सद्वृत्तं शृणु नारद ।।५७।।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे यात्रावर्णनं नाम चत्वारिंशोऽध्यायः ।।४०।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ४१



ब्रह्मोवाच।।

ततस्सम्मन्त्र्य च मिथः प्राप्याज्ञां शांकरीं हरिः ।।

मुने त्वाम्प्रेषयामास प्रथमं कुधरालयम् ।। १ ।।

अथ प्रणम्य सर्वेशं गतस्त्वं नारदाग्रतः ।।

हरिणा नोदितः प्रीत्या हिमाचलगृहम्प्रति ।। २ ।।

त्वं मुनेऽपश्य आत्मानं गत्वा तद्व्रीडयान्वितम् ।।

कृत्रिमं रचितं तत्र विस्मितो विश्वकर्मणा ।। ३ ।।

श्रान्तस्त्वमात्मना तेन कृत्रिमेण महामुने ।।

अवलोकपरस्सोऽभूच्चरितं विश्वकर्मणः ।।४।।

प्रविष्टो मण्डपस्तस्य हिमाद्रे रत्नचित्रितम् ।।

सुवर्णकलशैर्जुष्टं रम्भादिबहुशोभितम् ।। ५ ।।

सहस्रस्तम्भसंयुक्तं विचित्रम्परमाद्भुतम् ।।

वेदिकां च तथा दृष्ट्वा विस्मयं त्वं मुने ह्ययाः ।। ६ ।।

तदावोचश्च स मुने नारद त्वं नगेश्वरम् ।।

विस्मितोऽतीव मनसि नष्टज्ञानो विमूढधीः ।।७ ।।

आगतास्ते किमधुना देवा विष्णुपुरोगमाः ।।

तथा महर्षयस्सर्वे सिद्धा उपसुरास्तथा ।।८।।

महादेवो वृषारूढो गणैश्च परिवारितः ।।

आगतः किं विवाहार्थं वद तथ्यं नगेश्वर ।। ९ ।।

ब्रह्मोवाच ।।

इत्येवं वचनं श्रुत्वा तव विस्मित चेतसः ।।

उवाच त्वां मुने तथ्यं वाक्यं स हिमवान् गिरिः ।। 2.3.41.१० ।।

हिमवानुवाच ।।

हे नारद महाप्राज्ञागतो नैवाधुना शिवः ।।

विवाहार्थं च पार्वत्यास्सगणस्सवरातकः ।। ११ ।।
विश्वकर्मकृतं चित्रं विद्धि नारद सद्धिया ।।
विस्मयन्त्यज देवर्षे स्वस्थो भव शिवं स्मर ।। १२ ।।
भुक्त्वा विश्रम्य सुप्रीतः कृपां कृत्वा ममोपरि ।।
मैनाकादिधरैस्सार्द्धं गच्छ त्वं शंकरान्तिकम् ।। १३ ।।
एभिस्समेतो गिरिभिर्महामत संप्रार्थ्य शीघ्रं शिवमत्र चानय ।।
देवैस्समेतं च महर्षिसंघैस्सुरासुरैरर्चितपादपल्लवम् ।। १४ ।।
ब्रह्मोवाच ।।
तथेति चोक्त्वागम आशु हि त्वं सदैव तैश्शैलसुतादिभिश्च ।।
तत्रत्यकृत्यं सुविधाय भुक्त्वा महामनास्त्वं शिवस न्निधानम् ।।१५।।
तत्र दृष्टो महादेवो देवादिपरिवारितः ।।
नमस्कृतस्त्वया दीप्तश्शैलैस्तैर्भक्तितश्च वै ।।१६।।
तदा मया विष्णुना च सर्वे देवास्सवासवाः ।।
पप्रच्छुस्त्वां मुने सर्वे रुद्रस्यानुचरास्तथा ।। १७ ।।
विस्मिताः पर्वतान्दृष्ट्वा सन्देहाकुलमानसाः ।।
मैनाकसह्यमेर्वाद्यान्नानालंकारसंयुतान् ।। १८ ।।
देवा ऊचुः ।।
हे नारद महाप्राज्ञ विस्मितस्त्वं हि दृश्यसे ।।
सत्कृतोऽसि हिमागेन किं न वा वद विस्तरात् ।।१९।।
एते कस्मात्समायाताः पर्वता इह सत्तमाः ।।
मैनाकसह्यमेर्वाद्यास्सुप्रतापास्स्वलंकृताः ।।2.3.41.२०।।
कन्यां दास्यति शैलोऽसौ स भवे वा न नारद ।।
हिमालयगृहे तात किं भवत्यद्य तद्वद ।। २१ ।।
इति सन्दिग्धमनसामस्माकं च दिवौकसाम्।।
वद् त्वं पृच्छमानानां सन्देहं हर सुव्रत ।। २२ ।।
।। ब्रह्मोवाच ।।
इत्याकर्ण्य वचस्तेषां विष्ण्वादीनान्दिवौकसाम् ।।
अवोचस्तान्मुने त्वं हि विस्मितस्त्वाष्ट्रमायया ।। २३ ।।

एकान्तमाश्रित्य च मां हि विष्णुमभाषथा वाक्यमिदं मुने त्वम् ।।
शचीपतिं सर्वसुरेश्वरं वै पक्षाच्छिदं पूर्वरिपुन्धराणाम् ।। २४ ।।
नारद उवाच ।।
त्वष्ट्रा कृतन्तद्विकृतं विचित्रं विमोहनं सर्वदिवौकसां हि ।।
येनैव सर्वान्स विमोहितुं सुरान्समिच्छति प्रेमत एव युक्त्या ।। २५ ।।
पुरा कृतन्तस्य विमोहनन्त्वया सुविस्मृतन्तत् सकलं शचीपते ।।
तस्मादसौ त्वां विजिगीषुरेव गृहे धुवन्तस्य गिरेर्महात्मन ।। २६ ।।
अहं विमोहितस्तेन प्रतिरूपेण भास्वता ।।
तथा विष्णुः कृतस्तेन ब्रह्मा शक्रोऽपि तादृशः ।। २७ ।।
किम्बहूक्तेन देवेश सर्वदेवगणाः कृताः ।।
कृत्रिमाश्चित्ररूपेण न किंचिदवशेषितम्।।२८।।
विमोहनार्थं सर्वेषां देवानां च विशेषतः ।।
कृता माया चित्रमयी परिहासविकारिणी ।। २९ ।।
।। ब्रह्मोवाच ।।
तच्छ्रुत्वा वचनस्तस्य देवेन्द्रो वाक्यमब्रवीत् ।।
विष्णुम्प्रति तदा शीघ्रं भयाकुलतनुर्हरिम् ।। 2.3.41.३० ।।
।। देवेन्द्र उवाच ।।
देवदेव रमानाथ त्वष्टा मां निहनिष्यति।।
पुत्रशोकेन तप्तोऽसौ व्याजेनानेन नान्यथा ।।३१।।
ब्रह्मोवाच ।।
तस्य तद्वचनं श्रुत्वा देवदेवो जनार्दनः ।।
उवाच प्रहसन् वाक्यं शक्रमाश्वासयंस्तदा ।।३२।।
विष्णुरुवाच।।
निवातकवचैः पूर्वं मोहितोऽसि शचीपते।।
महाविद्यावलेनैव दानवैः पूर्ववैरिभिः ।।३३।।
पर्वतो हिमवानेष तथान्यऽखिलपर्वताः।।
विपक्षा हि कृतास्सर्वे मम वाक्याच्च वासव ।।३४।।
तेनुस्मृत्या तु वै दृष्ट्वा मायया गिरयो ह्यमी ।। ।।

जेतुमिच्छन्तु ये मूढा न भेतव्यमरावपि।।३५।।

ईश्वरो नो हि सर्वेषां शंकरो भक्तवत्सलः ।।

सर्वथा कुशलं शक्र करिष्यति न संशयः ।। ३६ ।।

ब्रह्मोवाच ।।

एवं संवदमानन्तं शक्रं विकृतमानसम् ।।

हरिणोक्तश्च गिरिशो लौकिकीं गतिमाश्रितः ।।३७।।

ईश्वर उवाच ।।

हे हरे हे सुरेशान किम्ब्रूथोऽद्य परस्परम् ।।

इत्युक्त्वा तौ महेशानो मुने त्वाम्प्रत्युवाच सः ।। ३८ ।।

किंनु वक्ति महाशैलो यथार्थं वद नारद ।।

वृत्तान्तं सकलम्ब्रूहि न गोप्यं कर्तुमर्हसि।।३९।।

ददाति वा नैव ददाति शैलस्सुतां स्वकीयां वद तच्च शीघ्रम् ।।

किन्ते दृष्टं किं कृतन्तत्र गत्वा प्रीत्या सर्वं तद्वदाश्वद्य तात ।। 2.3.41.४० ।।

।। ब्रह्मोवाच ।।

हत्युक्तश्शम्भुना तत्र मुने त्वन्देवदर्शनः ।।

सर्वं रहस्यवोचो वै यद्दृष्टन्तत्र मण्डपे ।। ४१ ।।

नारद उवाच।।

देवदेव महादेव शृणु मद्वचनं शुभम् ।।

नास्ति विघ्नभयं नाथ विवाहे किंचिदेव हि ।। ४२ ।।

अवश्यमेव शैलेशस्तुभ्यं दास्यति कन्यकाम् ।।

त्वामानयितुमायाता इमे शैला न संशयः ।। ४३ ।।

किन्तु ह्यमरमोहार्थं माया विरचिताद्भुता ।।

कुतूहलार्थं सर्वज्ञ न कश्चिद्विघ्नसम्भवः ।। ४४ ।।

विचित्रम्मण्डपं गेहेऽकार्षीत्तस्य तदाज्ञया ।।

विश्वकर्मा महामायी नानाश्चर्यमयं विभो ।। ४५।।

सर्वदेवसमाजश्च कृतस्तत्र विमोहनः ।।

तन्दृष्ट्वा विस्मयं प्राप्तोहं तन्मायाविमोहितः ।। ४६ ।।

।। ब्रह्मोवाच ।।

तच्छ्रुत्वा तद्वचस्तात लोकाचारकरः प्रभुः ।।
हर्षादीन्प्रहसञ्छम्भुरुवाच सकलान्सुरान् ।।४७।।
ईश्वर उवाच ।।
कन्यां दास्यति चेन्मह्यं पर्वतो हि हिमाचलः ।।
मायया मम किं कार्यं वद विष्णो यथातथम् ।।४८।।
हे ब्रह्मञ्छक्र मुनयस्तुरा ब्रूत यथार्थतः ।।
मायया मम किं कार्यं कन्यां दास्यति चेद्गिरिः ।। ४९ ।।
केनाप्युपायेन फलं हि साध्यमित्युच्यते पण्डितैर्न्यायविद्भिः ।।
तस्मात्सर्वैर्गम्यतां शीघ्रमेव कार्यार्थिभिर्विष्णुपुरोगमैश्च ।। 2.3.41.५० ।।
ब्रह्मोवाच ।।
एवं संवदमानोऽसौ देवैश्शम्भुरभूत्तदा ।।
कृतः स्मरेणैव वशी वशं वा प्राकृतो नरः।।५१।।
अथ शम्भ्वाज्ञया सर्वे विष्णवाद्या निर्जरास्तदा ।।
ऋषयश्च महात्मानो ययुर्मोहभ्रमापहम् ।।५२।।
पुरस्कृत्य मुने त्वां च पर्वतांस्तान्सविस्मयाः ।।
हिमाद्रेश्च तदा जग्मुर्मन्दिरम्परमाद्भुतम् ।।५३।।
अथ विष्णवादिसंयुक्तो मुदितैस्स्वबलैर्युतः।।
आजगामोपहैमागपुरं प्रमुदितो हरः ।।५४।।।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे मण्डपरचनावर्णनं नामैकचत्वारिंशोऽध्यायः ।।४१।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ४२

https://sa.wikisource.org/s/wq7

< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः ३ (पार्वतीखण्डः)

।। ब्रह्मोवाच ।।

अथाकर्ण्य गिरीशश्च निजपुर्य्युपकण्ठतः ।।

प्राप्तमीशं सर्वगं वै मुमुदेति हिमालयः ।। १ ।।

अथ सम्भृतसम्भार स्सम्भाषां कर्तुमीश्वरम् ।।

शैलान्प्रस्थापयामास ब्राह्मणानपि सर्वशः ।। २ ।।।

स्वयं जगाम सद्भक्त्या प्राणेप्सुन्द्रष्टुऽमीश्वरम् ।।

भक्त्युद्रुतमनाश्शैलः प्रशंसन् स्वविधिम्मुदा ।।३।।

देवसेनां तदा दृष्ट्वा हिमवान्वि स्मयं गतः ।।

जगाम सम्मुखस्तत्र धन्योऽहमिति चिन्तयन् ।।४।।

देवा हि तद्बलं दृष्ट्वा विस्मयम्परमं गताः ।।

आनन्दम्परमम्प्रापुर्देवाश्च गिरयस्तथा ।।५।।

पर्वतानां महासेना देवानां च तथा मुने ।।

मिलित्वा विरराजेव पूर्वपश्चिमसागरौ ।।६।।

परस्परं मिलित्वा ते देवाश्च पर्वतास्तथा ।।

कृतकृत्यन्तथात्मानम्मेनिरे परया मुदा ।।७।।

अथेश्वरम्पुरो दृष्ट्वा प्रणनाम हिमालयः ।।

सर्वे प्रणेमुर्गिरयो ब्राह्मणाश्च सदाशिवम् ।।८।।

वृषभस्थम्प्रसन्नास्यन्नानाभरणभूषितम् ।।

दिव्यावयवलावण्यप्रकाशितदिगन्तरम् ।। ९ ।।

सुसूक्ष्माहतसत्पट्टवस्त्रशोभितविग्रहम् ।।

सद्रत्नविलसन्मौलिं विहसन्तं शुचिप्रभम् ।।2.3.42.१० ।।

भूषाभूताहियुक्तांगमद्भुतावयवप्रभम् ।।

दिव्यद्युतिं सुरेशैश्च सेवितं करचामरैः ।। ११ ।।

वामस्थिताच्युतन्दक्षभागस्थितविभुम्प्रभुम् ।।

पृष्ठस्थितहरिं पृष्ठपार्श्वस्थितसुरादिकम् ।। १२।।
नानाविधिसुराद्यैश्च संस्तुतं लोकशंकरम् ।।
स्वहेत्वात्ततनुम्ब्रह्मसर्वेशं वरदायकम् ।। १३।।
सगुणं निर्गुणं चापि भक्ताधीनं कृपाकरम्।।
प्रकृतेः पुरुषस्यापि परं सच्चित्सुखात्मकम् ।। १४ ।।
प्रभोर्दक्षिणभागे तु ददर्श हरिमच्युतम् ।।
विनतातनयारूढं नानाभूषणभूषितम् ।। ।। १५ ।।
प्रभोश्च वामभागे तु मुने मां सन्ददर्श ह ।।
चतुर्मुखं महाशोभं स्वपरीवारसंयुतम् ।। १६ ।।
एतौ सुरेश्वरौ दृष्ट्वा शिवस्याति प्रियौ सदा ।।
प्रणनाम गिरीशश्च सपरीवार आदरात् ।।१७।।
तथा शिवस्य पृष्ठे च पार्श्वयोस्तु विराजितान् ।।
देवादीन्प्रणनामासौ दृष्ट्वा गिरिवरेश्वरः ।। १८ ।।
शिवाज्ञया पुरो भूत्वा जगाम स्वपुरं गिरिः ।।
शेषहर्यात्मभूश्शीघ्रं मुनिभिः निर्जरादिभिः ।। १९ ।।
सर्वे मुनिसुराद्याश्च गच्छन्तः प्रभुणा सह ।।
गिरेः पुरं समुदिताः शशंसुर्बहु नारद ।। 2.3.42.२० ।।
रचिते शिखरे रम्ये संस्थाप्य देवतादिकम् ।।
जगाम हिमवाँस्तत्र यत्रास्ति विधिवेदिका ।।२१।।
कारयित्वा विशेषेण चतुष्कन्तो रणैर्युतम् ।।
स्नानदानादिकं कृत्वा परीक्षामकरोत्तदा ।।२२।।
स्वपुत्रान्प्रेषयामास शिवस्य निकटे तथा ।।
हिमो विष्णवादिसम्पूर्णवर्गयुक्तस्य शैलराट् ।।२३।।
कर्तुमेच्छद्वराचारं महोत्सवपुरस्सरम् ।।
महाहर्षयुतस्सर्वबन्धुयुग्घिमशैलराट् ।।२४।।
अथ ते गिरिपु त्राश्च तत्र गत्वा प्रणम्य तम् ।।
सस्ववर्गं प्रार्थनान्तामूचुश्शैलेश्वरस्य वै ।। २५ ।।
ततस्ते स्वालयं जग्मुश्शैलपुत्रास्तदाज्ञया ।।

शैलराजाय संचख्युस्ते चायान्तीति हर्षिताः ।।२६।।

अथ देवाः प्रार्थनान्तां गिरेः श्रुत्वातिहर्षिताः ।।

मुने विष्ण्वादयस्सर्वे सेश्वरा मुमुदुर्भृशम् ।।२७।।

कृत्वा सुवेषं सर्वेपि निर्जरा मुनयो गणाः ।।

गमनं चक्रुरन्येपि प्रभुणा गिरिराड्गृहम् ।। २८ ।।

तस्मिन्नवसरे मेना द्रष्टुकामाभवच्छिवम् ।।

प्रभोराह्वाययामास मुने त्वां मुनिसत्तमम् ।।२९।।

अगमस्त्वं मुने तत्र प्रभुणा प्रेरितस्तदा।।

मनसा शिवहृद्धेतुं पूर्णं कर्तुं तमिच्छता ।। 2.3.42.३० ।।

त्वाम्प्रणम्य मुने मेना प्राह विस्मितमानसा ।।

द्रष्टुकामा प्रभो रूपं शंकरस्य मदापहम् ।। ३१ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायान्तृतीये पार्वतीखण्डे देवगिरिमेलवर्णनं नाम द्विचत्वारिंशोऽध्यायः ।। ४२ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ४३



मेनोवाच ।।

निरीक्षिष्यामि प्रथमं मुने तं गिरिजापतिम् ।।

कीदृशं शिवरूपं हि यदर्थे तप उत्तमम्।।१।।

ब्रह्मोवाच ।।

इत्यज्ञानपरा सा च दर्शनार्थं शिवस्य च ।।

त्वया मुने समं सद्यश्चन्द्रशालां समागता ।। २ ।।

शिवोऽपि च तदा तस्यां ज्ञात्वाहंकारमात्मनः ।।

प्राह विष्णुं च मान्तात लीलाकृत्वाद्भुताम्प्रभुः ।। ३ ।।

शिव उवाच ।।

मदाज्ञया युवान्तातौ सदेवौ च पृथक्पृथक् ।।

गच्छतं हि गिरिद्वारं वयं पश्चाद्व्रजेमहि ।। ४ ।।

ब्रह्मोवाच ।।

इत्याकर्ण्य हरिस्सर्वानाहूयोवाच तन्मयाः ।।

सुरास्सर्वे तथैवाशु गमनं चक्रुरुत्सुकाः ।। ५ ।।

स्थितां शिरोगृहे मेनां मुने विश्वेश्वर त्वया ।।

तथैव दर्शयामास हृद्विभ्रंशो यथा भवेत् ।।६।।

एतस्मिन्समये मेना सेनां च परमां शुभाम् ।।

निरीक्षन्ती मुने दृष्ट्वा सामान्यं हर्षिताऽभवत् ।। ७ ।।

प्रथमं चैव गन्धर्वास्सुन्दरास्सुभगास्तदा ।।

आयाताश्शुभवस्त्राढ्या नानालंकारभूषिताः ।।८।।

नानावाहनसंयुक्ता नानावाद्यपरा यणा ।।

पताकाभिर्विचित्राभिरप्सरोगणसंयुताः ।।९।।

अथ दृष्ट्वा वसुं तत्र तत्पतिं परमप्रभुम् ।।

मेना प्रहर्षिता ह्यासीच्छिवोयमिति चाब्रवीत् ।।2.3.43.१०।।

शिवस्य गणका एते न शिवोयं शिवापतिः ।।
इत्येवं त्वं ततस्तां वै अवोच ऋषिसत्तम ।।११।।
एवं श्रुत्वा तदा मेना विचारे तत्पराऽभवत् ।।
इतश्चाभ्यधिको यो वै स च कीदृग्भविष्यति ।। १२।।
एतस्मिन्नन्तरे यक्षा मणिग्रीवादयश्च ये ।।
तेषां सेना तया दृष्टा शोभादिद्विगुणीकृता ।। १३।।
तत्पतिं च मणिग्रीवं दृष्ट्वा शोभान्वितं हि सा ।।
अयं रुद्रश्शिवास्वामी मेना प्राहेति हर्षिता ।। १४।।
नायं रुद्रश्शिवास्वामी सेवकोयं शिवस्य वै ।।
इत्यवोचोगपत्न्यै त्वं तावद्वह्निस्स आगतः ।। १५।।
ततोऽपि द्विगुणां शोभां दृष्ट्वा तस्य च साब्रवीत् ।।
रुद्रोऽयं गिरिजास्वामी तदा नेति त्वमब्रवीः ।। १६ ।।
तावद्यमस्समायातस्ततोऽपि द्विगुणप्रभः।।
तं दृष्ट्वा प्राह सा मेना रुद्रोऽयमिति हर्षिता ।। १७ ।।
नेति त्वमब्रवीस्तां वै तावन्निर्ऋतिरागतः ।।
बिभ्राणो द्विगुणां शोभां शुभः पुण्यजनप्रभुः ।। १८ ।।
तं दृष्ट्वा प्राह सा मेना रुद्रोऽयमिति हर्षिता ।।
नेति त्वमब्रवीस्तां वै तावद्वरुण आगतः ।। १९।।
ततोऽपि द्विगुणां शोभां दृष्ट्वा तस्य च साब्रवीत् ।।
रुद्रोऽयं गिरिजास्वामी तद्वा नेति त्वमब्रवीः।।2.3.43.२० ।।
तावद्वायुस्समायातस्ततोऽपि द्विगुणप्रभः ।।
तं दृष्ट्वा प्राह सा मेना रुद्रोयमिति हर्षिता ।। २१ ।।
नेति त्वमब्रवीस्तां वै तावद्धनद आगतः ।।
ततोऽपि द्विगुणां शोभां बिभ्राणो गुह्यकाधिपः ।।२२।।
तं दृष्ट्वा प्राह सा मेना रुद्रोऽयमिति हर्षिता ।।
नेति त्वमब्रवीस्तां वै तावदीशान आगतः।।२३।।
ततोऽपि द्विगुणां शोभां दृष्ट्वा तस्य च साब्रवीत् ।।
रुद्रोऽयं गिरिजास्वामी तदा नेति त्वमब्रवीः।।२४।।

तावदिन्द्रस्समायातस्ततोऽपि द्विगुणप्रभः ।।
सर्वामरवरो नानादिव्यभस्त्रिदिवेश्वरः ।। २५ ।।
तं दृष्ट्वा शंकरस्सोऽयमिति सा प्राह मेनका ।।
शक्रस्सुरपतिश्चायं नेति त्वं तदाब्रवीः ।।२६।।
तावच्चन्द्रस्समायातश्शोभा तद्द्विगुणा दधत ।।
दृष्ट्वा तं प्राह रुद्रोऽयं तां तु नेति त्वमब्रवीः ।। २७ ।।
तावत्सूर्यस्समायातश्शोभा तद्द्विगुणा दधत् ।।
दृष्ट्वा तं प्राह सा सोयन्तांतु नेति त्वमब्रवीः ।।२८।।
तावत्समागतास्तत्र भृग्वाद्याश्च मुनीश्वराः ।।
तेजसो राशयस्सर्वे स्वशिष्यगणसंयुताः ।।२९।।
तन्मध्ये चैव वागीशं दृष्ट्वा सा प्राह मेनका ।।
रुद्रोऽयं गिरिजास्वामी तदा नेति त्वमब्रवीः ।।2.3.43.३० ।।
तावद्ब्रह्मा समायातस्तेजसां राशिरुत्तमः ।।
सर्षिवर्य्यसुतस्साक्षाद्धर्मपुंज इव स्तुतः ।।३ १ ।।
दृष्ट्वा सा तं तदा मेना महाहर्षवती मुने ।।
सोऽयं शिवापतिः प्राह तां तु नेति त्वमब्रवीः ।।३२।।
एतस्मिन्ननन्तरे तत्र विष्णुर्देवस्समागतः।।
सर्वशोभान्वितः श्रीमान्मेघश्यामश्चतुर्भुजः ।।३३।।
कोटिकन्दर्प्यलावण्यः पीताम्बरधरस्स्वराट्।।
राजीवलोचनश्शान्तः पक्षीन्द्रवरवाहनः।। ।।३४।।
शंखादिलक्षणैर्युक्तो मुकुटादिविभूषितः।।
श्रीवत्सवक्षा लक्ष्मीशो ह्यप्रमेय प्रभान्वितः।।३५।।
तं दृष्ट्वा चकिताक्ष्यासीन्महाहर्षेण साब्रवीत्।।
सोऽयं शिवापतिः साक्षाच्छिवो वै नात्र संशयः ।।३६।।
अथ त्वं मेनकावाक्यमाकर्ण्योवाच ऊतिकृत्।।
नायं शिवापतिरयं किन्त्वयं केशवो हरिः ।।३७।।
शंकरोखिलकार्य्यस्य ह्यधिकारी च तत्प्रियः ।।
अतोऽधिको वरो ज्ञेयस्स शिवः पार्वतीपतिः ।।३८।।

तच्छोभां वर्णितुं मेने मया नैव हि शक्यते ।।
स एवाखिलब्रह्माण्डपतिस्सर्वेश्वरः स्वराट् ।। ३९ ।।
।। ब्रह्मोवाच ।।
इत्याकर्ण्य वचस्तस्य मेना मेने च तां शुभाम् ।।
महाधनां भाग्यवती कुलत्रयसुखावहाम् ।।2.3.43.४०।।
उवाच च प्रसन्नास्या प्रीतियुक्तेन चेतसा ।।
स्वभाग्यमधिकं चापि वर्णयन्ती मुहुर्मुहुः।।४१।।
मेनोवाच ।।
धन्याहं सर्वथा जाता पार्वत्या जन्मनाधुना ।।
धन्यो गिरीश्वरोप्यद्य सर्वं धन्यतमं मम ।। ४२ ।।
येये दृष्ट्वा मया देवा नायकास्सुप्रभान्विताः ।।
एतेषां यः पतिस्सोऽत्र पतिरस्या भविष्यति ।। ४३ ।।
अस्याः किं वर्ण्यते भाग्यमपि वर्षशतैरपि ।।
वर्णितुं शक्यते नैव तत्प्रभुप्राप्तिदर्शनात ।।४४।।
ब्रह्मोवाच ।।
इत्यवादीच्च सा मेना प्रेमनिर्भरमानसा ।।
तावत्समागतो रुद्रोऽद्भुतोतिकारकः प्रभुः ।।४५।।
अद्भुतात्मागणास्तात मेनागर्वापहारकाः ।।
आत्मानं दर्शयन् मायानिर्लिप्तं निर्विकारकम् ४४६।।
तमागतमभिप्रेत्य नारद त्वं मुने तदा ।।
मेनामवोचः सुप्रीत्या दर्शयंस्तं शिवापतिम् ।।४७।।
।। नारद उवाच ।।
अयं स शंकरस्साक्षाद्दृश्यतां सुन्दरि त्वया ।।
यदर्थे शिवया तप्तं तपोऽति विपिने महत् ।। ४८ ।।
।। ब्रह्मोवाच ।।
इत्युक्त्वा हर्षिता मेना तं ददर्श मुदा प्रभुम् ।।
अद्भुताकृतिमीशानमद्भुतानुगमद्भुतम् ।। ४९ ।।
तावदेव समायाता रुद्रसेना महाद्भुता ।।

भूतप्रेतादिसंयुक्ता नानागणसमन्विता ।। 2.3.43.५० ।।

वात्यारूपधराः केचित्पताकामर्मरस्वना ।।

वक्रतुंडास्तत्र केचिद्विरूपाश्चापरे तथा ।। ५१ ।।

करालाः श्मश्रुलाः केचित्केचित्खञ्जा ह्यलोचनाः ।।

दण्डपाशधराः केचित्केचिन्मुद्गरपाणयः ।। ५२ ।।

विरुद्धवाहनाः केचिच्छृंगनादविवादिनः ।।

डमरोर्वादिनः केचित्केचिद्गोमुखवादिनः ।। ५३ ।।

अमुखा विमुखाः केचित्केचिद्बहुमुखा गणाः ।।

अकरा विकराः केचित्केचिद्बहुकरा गणाः ।।५४।।

अनेत्रा बहुनेत्राश्च विशिराः कुशिरास्तथा ।।

अकर्णा बहुकर्णाश्च नानावेषधरा गणाः ।। ५५ ।।

इत्यादिविकृताकारा अनेके प्रबला गणाः ।।

असंख्यातास्तथा तात महावीरा भयंकराः ।। ५६ ।।

अंगुल्या दर्शयँस्त्वं तां मुने रुद्रगणाँस्ततः ।।

हरस्य सेवकान्पश्य हरं चापि वरानने ।। ५७ ।।

असंख्यातान् गणान् दृष्ट्वा भूतप्रेतादिकान् मुने ।।

तत्क्षणादभवत्सा वै मेनका त्राससंकुला ।। ५८ ।।

तन्मध्ये शंकरं चैव निर्गुणं गुणवत्तरम् ।।

वृषभस्थं पञ्चवक्त्रं त्रिनेत्रं भूतिभूषितम् ।। ५९ ।।

कपर्दिनं चन्द्रमौलिं दशहस्तं कपालि नम् ।।

व्याघ्रचर्मोत्तरीयञ्च पिनाकवरपाणिनम् ।। 2.3.43.६० ।।

शूलयुक्तं विरूपाक्षं विकृताकारमाकुलम् ।।

गजचर्म वसानं हि वीक्ष्य त्रेसे शिवाप्रसूः ।। ६१ ।।

चकितां कम्पसंयुक्तां विह्वलां विभ्रमद्धियम् ।।

शिवोऽयमिति चांगुल्या दर्शयँस्तां त्वमब्रवीः ।। ६२ ।।।

त्वदीयं तद्वचः श्रुत्वा वाताहतलता इव ।।

सा पपात द्रुतम्भूमौ मेना दुःखभरा सती ।। ६३ ।।

किमिदं विकृतं दृष्ट्वा वञ्चिताहं दुराग्रहे ।।

इत्युक्त्वा मूर्च्छिता तत्र मेनका साऽभवत्क्षणात् ।। ६४ ।।

अथ प्रयत्नैर्विविधैस्सखीभिरुपसेविता ।।

लेभे संज्ञां शनै मेना गिरीश्वरप्रिया तदा ।। ६५ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे शिवाद्भुतलीलावर्णनं नाम त्रिचत्वारिंशोऽध्यायः ।। ४३ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ४४

https://sa.wikisource.org/s/wqf



।। ब्रह्मोवाच ।।

संज्ञां लब्धा ततस्सा च मेना शैलप्रिया सती ।।

विललापातिसंक्षुब्धा तिरस्कारमथाकरोत् ।। १ ।।

तत्र तावत्स्वपुत्राँश्च निनिन्द खलिता मुहुः ।।

प्रथमं सा ततः पुत्री कथयामास दुर्वचः ।। २ ।।

।। मेनोवाच।।

मुने पुरा त्वया प्रोक्तं वरिष्यति शिवा शिवम् ।।

पश्चाद्धिमवतः कृत्यं पूजार्थं विनिवेशितम् ।। ३ ।।

ततो दृष्टं फलं सत्यं विपरीतमनर्थकम् ।।

मुनेऽधमाहं दुर्बुद्धे सर्वथा वञ्चिता त्वया ।।४।।

पुनस्तया तपस्तप्तं दुष्करं मुनिभिश्च यत् ।।

तस्य लब्धं फलं ह्येतत्पश्यतां दुःखदायकम् ।। ५ ।।

किं करोमि क्व गच्छामि को मे दुःखं व्यपोहताम् ।।

कुलादिकं विनष्टं मे विहितं जीवितं मम ।। ६ ।।

क्व गता ऋषयो दिव्याः श्मश्रूणि त्रोटयाम्यहम् ।।

तपस्विनी च या पत्नी सा धूर्ता स्वयमागता ।। ७ ।।

केषाञ्चैवापराधेन सर्वं नष्टं ममाधुना ।।

इत्युक्त्वा वीक्ष्य च सुतामुवाच वचनं कटु ।।८।।

किं कृतं ते सुते दुष्टे कर्म दुःखकरं मम ।।

हेम दत्त्वा त्वयानीतः काचो वै दुष्टया स्वयम् ।।९।।

हित्वा तु चन्दनं भूयो लेपितः कर्दमस्त्वया ।।

हंसमुड्डीय काको वै गृहीतो हस्तपञ्जरे ।। 2.3.44.१० ।।

हित्वा ब्रह्मजलं दूरे पीतं कूपोदकं त्वया ।।

सूर्यं हित्वा तु खद्योतो गृहीतो यत्नतस्त्वया ।। ११ ।।

तण्डुलांश्च तथा हित्वा कृतं वै तुषभक्षणम् ।।
प्रक्षिप्याज्यं तथा तैलं कारण्डं भुक्तमादरात् ।। १२ ।।
सिंहसेवां तथा मुक्त्वा शृगालस्सेवितस्त्वया ।।
ब्रह्मविद्यां तथा मुक्त्वा कुगाथा च श्रुता त्वया ।। १३ ।।
गृहे यज्ञविभूतिं हि दूरीकृत्य सुमंगलाम् ।।
गृहीतश्च चिताभस्म त्वया पुत्रि ह्यमंगलम् ।। १४ ।।
सर्वान् देववरांस्त्यक्त्वा विष्ण्वादीन्परमेश्वरान् ।।
कृतं त्वया कुबुद्ध्या वै शिवार्थं तप ईदृशम् ।। १५ ।।
धिक्त्वा च तव बुद्धिश्च धिग्रूपं चरितं तव ।।
धिक् चोपदेशकर्त्तारं धिक्सख्यावपि ते तथा ।। १६ ।।
आवां च धिक्तथा पुत्री यौ ते जन्मप्रवर्तकौ ।।
धिक्ते नारद बुद्धिञ्च सप्तर्षींश्च सुबुद्धिदान् ।। १७ ।।
धिक्कुलं धिक्क्रियादाक्ष्यं सर्वं धिग्यत्कृतं त्वया ।।
गृहन्तु धुक्षितं त्वेतन्मरणं तु ममैव हि ।। १८ ।।
पार्वतानामयं राजा नायातु निकटे मम ।।
सप्तर्षयस्स्वयं नैव दर्शयन्तु मुखम्मम ।। १९ ।।
साधितं किञ्च सर्वैस्तु मिलित्वा घातितं कुलम् ।।
वन्ध्याहं न कथं जाता गर्भो न गलितः कथम् ।। 2.3.44.२० ।।
अथो न वा मृता चाहं पुत्रिका न मृता कथम् ।।
रक्षसाद्य कथं नो वा भक्षिता गगने पुनः ।।२१।।
छेदयामि शिरस्तेऽद्य किं करोमि कलेवरैः ।।
त्यक्त्वा त्वां च कुतो यायां हाहा मे जीवितं हतम् ।।२२।। ।
।।ब्रह्मोवाच।।
इत्युक्त्वा पतिता सा च मेना भूमौ विमूर्छिता ।।
व्याकुला शोकरोषाद्यैर्न गता भर्तृसन्निधौ।।२३।।
हाहाकारो महानासीत्त स्मिन्काले मुनीश्वर ।।
सर्वे समागतास्तत्र क्रमात्तत्सन्निधौ सुराः ।।२४।।
पुरा देवमुने चाहमागतस्तु स्वयं तदा ।।

मां दृष्ट्वा त्वं वचस्ता वै प्रावोच ऋषिसत्तम ।।२५।।

नारद उवाच ।।

यथार्थं सुंदरं रूपं ना ज्ञातं ते शिवस्य वै ।।

लीलयेदं धृतं रूपं न यथार्थं शिवेन च ।।।२६।।

तस्मात्क्रोधं परित्यज्य स्वस्था भव पतिव्रते ।।

कार्य्यं कुरु हठं त्यक्त्वा शिवां देहि शिवाय च ।। २७ ।।

।। ब्रह्मोवाच ।।

तदाकर्ण्य वचस्ते सा मेना त्वां वाक्यमब्रवीत्।।

उत्तिष्ठेतो गच्छ दूरं दुष्टाधमवरो भवान्।।२८।।

इत्युक्ते तु तया देव इन्द्राद्याः सकलाः क्रमात् ।।

समागत्य च दिक्पाला वचनं चेदमब्रुवन् ।।२९।।

।। देवा ऊचुः।।

हे मेने पितृकन्ये हि शृण्वस्मद्वचनम्मुदा ।।

अयं वै परमः साक्षाच्छिवः परसुखावहः ।।2.3.44.३०।।

कृपया च भवत्पुत्र्यास्तपो दृष्ट्वातिदुस्सहम् ।।

दर्शनं दत्तवाञ्छम्भुर्वरं सद्भक्तवत्सलः ।। ३१ ।।।

।। ब्रह्मोवाच ।।

अथोवाच सुरान्मेना विलप्याति मुहुर्मुहुः ।।

न देया तु मया कन्या गिरिशायोग्ररूपिणे ।।३२।।

किमर्थन्तु भवन्तश्च सर्वे देवाः प्रपञ्चिताः ।।

रूपमस्याः परन्नाम व्यर्थीकर्तुं समुद्यतः ।।३३।।

इत्युक्ते च तया तत्र ऋषयस्सप्त एव हि ।।

ऊचुस्ते वच आगत्य वसिष्ठाद्या मुनीश्वर ।। ३४ ।।

सप्तर्षयः ऊचुः ।।

कार्य्यं साधयितुम्प्राप्ताः पितृकन्ये गिरिप्रिये ।।

विरुद्धं चात्र उक्तार्थे कथम्मन्यामहे वयम् ।।३५।।

ब्रह्मोवाच ।।

अयं वै परमो लाभो दर्शनं शंकरस्य यत् ।।

दानपात्रं स ते भूत्वागतस्तव च मंदिरम् ।।। ३६ ।।

।। ब्रह्मोवाच ।।

इत्युक्त्वा तैस्ततो मेना मुनिवाक्यं मृषाकरोत् ।।

प्रत्युवाच च रुष्टा सा तानृषीञ्ज्ञानदुर्बला ।।३७।।

मेनोवाच ।।

शस्त्राद्यैर्घातयिष्येहं न हास्ये शंकरायताम् ।।

दूरं गच्छत सर्वे हि नागन्तव्यं मदन्तिके ।।३८।।

ब्रह्मोवाच ।।

इत्युक्त्वा विररामाशु सा विलप्यातिविह्वला ।।

हाहाकारो महानासीत्तत्र तद्वृत्ततो मुने ।। ३९ ।।

ततो हिमालयस्तत्राजगामातिसमाकुलः ।।

ताञ्च बोधयितुं प्रीत्या प्राह तत्त्वञ्च दर्शयन् ।। 2.3.44.४० ।।

हिमालय उवाच ।।

शृणु मेने वचो मेऽद्य विकलाऽसि कथम्प्रिये ।।

के के समागता गेहं कथं चैतान्विनिन्दसि ।।४१।।

शंकरं त्वं च जानासि रूपं दृष्ट्वासि विह्वला ।।

विकटं तस्य शंभोस्तु नानारूपाभिधस्य हि ।। ४२ ।।

स शंकरो मया ज्ञातस्सर्वेषां प्रतिपालकः ।।

पूज्यानां पूज्य एवासौ कर्तानुग्रहनिग्रहान् ।। ४३ ।।

हठं न कुरु मुञ्च त्वं दुःखं प्राणप्रियेऽनघे ।।

उत्तिष्ठारं तथा कार्यं कर्तुमर्हसि सुव्रते ।। ४४ ।।

यद्वै द्वारगतश्शंभुः पुरा विकटरूपधृक् ।।

नानालीलाञ्च कृतवाञ्चेतयामि च तामिमाम् ।। ४५ ।।

तन्माहात्म्यं परं दृष्ट्वा कन्यां दातुं त्वया मया ।।

अंगीकृतं तदा देवि तत्प्रमाणं कुरु प्रिये।।४६।।

ब्रह्मोवाच।।

इत्युक्त्वा सोऽद्रिनाथो हि विरराम ततो मुने ।।

तदाकर्ण्य शिवामाता मेनोवाच हिमालयम् ।। ४७ ।।

मेनोवाच ।।

मद्वचः श्रूयतां नाथ तथा कर्तुं त्वमर्हसि ।।

गृहीत्वा तनुजां चैनां बद्ध्वा कण्ठे तु पार्वतीम् ।। ४८ ।।

अधः पातय निःशंकं दास्ये तां न हराय हि ।।

तथैनामथवा नाथ गत्वा वै सागरे सुताम् ।। ४९ ।।

निमज्जय दयां त्यक्त्वा ततोऽद्रीश सुखी भव ।।

यदि दास्यसि पुत्री त्वं रुद्राय विकटात्मने ।।

तर्हि त्यक्ष्याम्यहं स्वामिन्निश्चयेन कलेवरम् ।। 2.3.44.५० ।।

।। ब्रह्मोवाच ।।

इत्युक्ते च तदा तत्र वचने मेनया हठान् ।।

उवाच वचनं रम्यं पार्वती स्वयमागता ।।५१।।

पार्वत्युवाच ।।

मातस्ते विपरीता हि बुद्धिर्जाताऽशुभावहा ।।

धर्मावलम्बनात्त्वं हि कथन्धर्मं जहासि वै।। ५२ ।।

अयं रुद्रोऽपरस्साक्षात्सर्वप्रभव ईश्वरः ।

शम्भुस्सुरूपस्सुखदस्सर्वश्रुतिषु वर्णितः ।।५३।।

महेशश्शंकरश्चायं सर्वदेवप्रभुस्स्वराट् ।।

नानारूपाभिधो मातर्हरिब्रह्मादिसेवितः ।। ५४ ।।

अधिष्ठानं च सर्वेषां कर्ता हर्ता च स प्रभुः ।।

निर्विकारी त्रिदेवेशो ह्यविनाशी सनातनः ।। ५५ ।।

यदर्थे देवतास्सर्वा आयाता किंकरीकृताः ।।

द्वारि ते सोत्सवाश्चाद्य किमतोऽन्यत्परं सुखम् ।। ५६ ।।

उत्तिष्ठातः प्रयत्नेन जीवितं सफलं कुरु ।

देहि मां त्वं शिवायास्मै स्वाश्रमं कुरु सार्थकम् ।।५७।।

देहि मां परमेशाय शंकराय जनन्यहो ।।

स्वीकुरु त्वमिमं मातर्विनयम्मे ब्रवीमि ते ।।५८।।

चेन्न दास्यसि तस्मै मां न वृणेऽन्यमहं वरम् ।।

भागं लभेत्कथं सैंहं शृगालः परवंचकः ।।५९।।

मनसा वचसा मातः कर्मणा च हरस्त्वयम् ।।
मया वृतो वृतश्चैव यदिच्छसि तथा कुरु ।। 2.3.44.६० ।।
ब्रह्मोवाच ।।
इत्याकर्ण्य शिवावाक्यं मेना शैलेश्वरप्रिया ।।
सुविलप्य महाक्रुद्धा गृहीत्वा तत्कलेवरम् ।। ६१ ।।
मुष्टिभिः कूर्परैश्चैव दन्तान्धर्षयती च सा ।।
ताडयामास तां पुत्रीं विह्वलातिरुषान्विता ।।६२।।
ये तत्र ऋषयस्तात त्वदाद्याश्चापरे मुने ।।
तद्धस्तात्ताम्परिच्छिद्य नित्युर्दूरतरं ततः ।।६३।।
तान्वै तथा विधान्दृष्ट्वा भर्त्सयित्वा पुनः पुनः ।।
उवाच श्रावयन्ती सा दुर्वचो निखिलान्पुनः।। ६४ ।।
मेनोवाच ।।
किं मेना हि करिष्येऽहं दुष्टां ग्रहवतीं शिवाम् ।।
दास्याम्यस्यै गरन्तीव्रं कूपे क्षेप्स्यामि वा ध्रुवम् ।।६५।।
छेत्स्यामि कालीमथवा शस्त्रास्त्रैर्भूरिखण्डशः ।।
निमज्जयिष्ये वा सिन्धौ स्वसुताम्पार्वतीं खलु ।। ६६ ।।
अथवा स्वशरीरं हि त्यक्ष्याम्याश्वन्यथा ध्रुवम् ।।
न दास्ये शम्भवे कन्यां दुर्गां विकटरूपिणे ।।६७।।
वरोऽयं कीदृशो भीमोऽनया लब्धश्च दुष्टया ।।
कारितश्चोपहासो मे गिरेश्चापि कुलस्य हि ।। ६८ ।।
न माता न पिता भ्राता न बन्धुर्गोत्रजोऽपि हि ।।
नो सुरूपं न चातुर्य्यं न गुहं वास्य किंचन ।। ६९ ।।
न वस्त्रं नाप्यलङ्कारास्सहायाः केऽपि तस्य न ।।
वाहनं न शुभं ह्यस्य न वयो न धनन्तथा ।। 2.3.44.७० ।।
न पावित्र्यं न विद्या च कीदृशः काय आर्तिदः ।।
किं विलोक्य मया पुत्री देयास्मै स्यात्सुमंगला ।। ७१ ।।
ब्रह्मोवाच ।।
इत्यादि सुविलप्याथ बहुशो मेनका तदा ।।

रुरोदोच्चैर्मुने सा हि दुःखशोकपरिप्लुता ।। ७२ ।।

अथाहन्द्रुतमागत्याकथयम्मेनकां च ताम्।।

शिवतत्त्वं च परमं कुज्ञानहरमुत्तमम् ।। ७३ ।।

ब्रह्मोवाच ।।

श्रोतव्यम्प्रीतितो मेने मदीयं वचनं शुभम् ।।

यस्य श्रवणतः प्रीत्या कुबुद्धिस्ते विनश्यति ।। ७४ ।।

शङ्करो जगतः कर्ता भर्ता हर्ता तथैव च ।।

न त्वं जानासि तद्रूपं कथन्दुःखं समीहसे ।। ७५ ।।

अनेकरूपनामा च नाना लीलाकरः प्रभुः ।।

सर्वस्वामी स्वतन्त्रश्च मायाधीशोऽविकल्पकः ।। ७६ ।।

इति विज्ञाय मेने त्वं शिवान्देहि शिवाय वै ।।

कुहठन्त्यज कुज्ञानं सर्वकार्यविनाशनम् ।। ७७ ।।

ब्रह्मोवाच ।।

इत्युक्ता सा मया मेना विलपन्ती मुहुर्मुहुः ।।

लज्जां किंचिच्छनैस्त्यक्त्वा मुने मां वाक्यमब्रवीत् ।।७८।।

मेनोवाच ।।

किमर्थन्तु भवान्ब्रह्मन्रूपमस्य महावरम् ।।

व्यर्थीकरोति किमियं हन्यतां न स्वयं शिवा ।। ७९ ।।

न वक्तव्यं च भवता शिवाय प्रतिदीयताम् ।।

न दास्येऽहं शिवायैनां स्वसुताम्प्राणवल्लभाम् ।। 2.3.44.८० ।।

ब्रह्मोवाच ।।

इत्युक्ते तु तदा सिद्धाः सनकाद्या महामुने ।।

समागत्य महाप्रीत्या वचनं हीदमब्रुवन् ।। ८१ ।।

सिद्धा ऊचुः ।।

अयम्वै परमस्साक्षाच्छिवः परसुखावहः ।।

कृपया च भवत्पुत्र्यै दर्शनन्दत्तवान्प्रभुः ।। ८२ ।।

।। ब्रह्मोवाच ।।

अथोवाच तु तान्मेना विलप्य च मुहुर्मुहुः ।।

न देया तु मया सम्यग्गिरिशायोग्ररूपिणे ।। ८३ ।।
किमर्थन्तु भवन्तश्च सर्वे सिद्धाः प्रपञ्चिनः ।।
रूपमस्याः परं नाम व्यर्थीकर्तुं समुद्यताः ।। ८४ ।।
इत्युक्ते च तया तत्र मुनेऽहं चकितोऽभवम् ।।
सर्वे विस्मयमापन्ना देवसिद्धर्षिमानवाः।।८५।।
एतस्मिन्समये तस्या हठं श्रुत्वा दृढं महत्।।
द्रुतं शिवप्रियो विष्णुस्समागत्याऽब्रवीदिदम्।।८६।।
विष्णुरुवाच।।
पितॄणां च प्रिया पुत्री मानसी गुणसंयुता।।
पत्नी हिमवतस्साक्षाद्ब्रह्मणः कुलमुत्तमम् ।।८७।।
सहायास्तादृशा लोके धन्या ह्यसि वदामि किम् ।।
धर्मस्याधारभूतासि कथं धर्मं जहासि हि ।।८८।।
देवैश्च ऋषिभिश्चैव ब्रह्मणा वा मया तथा ।।
विरुद्धं कथ्यते किं नु त्वयैव सुविचार्यताम् ।।।८९।।।
शिवत्वं न च जानासि निर्गुणस्य गुणस्स हि।।
विरूपस्स सुरूपो हि सर्वसेव्यस्सतां गतिः ।।2.3.44.९०।।
तेनैव निर्मिता देवी मूलप्रकृतिरीश्वरी ।।
तत्पार्श्वे च तदा तेन निर्मितः पुरुषोत्तमः ।।९१।।
ताभ्यां चाहं तथा ब्रह्मा ततश्च गुणरूपतः ।।
अवतीर्य स्वयं रुद्रो लोकानां हितकारकः ।। ९२ ।।
ततो वेदास्तथा देवा यत्किंचिद्दृश्यते जगत् ।।
स्थावरं जंगमं चैव तत्सर्वं शकरादभूत् ।।९३।।
तद्रूपम्वर्णितं केन ज्ञायते केन वा पुनः ।।
मया च ब्रह्मणा यस्य ह्यतो लब्धश्च नैव हि ।।९४।।
आब्रह्मस्तम्बपर्यंतं यत्किञ्चिद्दृश्यते जगत् ।।
तत्सर्वं च शिवं विद्धि नात्र कार्या विचारणा ।।९५।।
स एवेदृक्सुरूपेणावतीर्णो निजलीलया ।।
शिवातपः प्रभावाद्धि तव द्वारि समागतः ।।९६।।

तस्मात्त्वं हिमवत्पत्नि दुःखं मुञ्च शिवम्भज ।।

भविष्यति महानन्दः क्लेशो यास्यति संक्षयम् ।।९७।।

ब्रह्मोवाच ।। एवम्प्रबोधितायास्तु मेनकाया अभून्मुने ।।

तस्यास्तु कोमलं किंचिन्मनो विष्णुप्रबोधितम् ।। ९८ ।।

परं हठं न तत्याज कन्यान्दातुं हराय न ।।

स्वीचकार तदा मेना शिवमायाविमोहि ता ।।९९।।

उवाच च हरिं मेना किञ्चिद्बुद्ध्वा गिरिप्रिया ।।

श्रुत्वा विष्णुवचो रम्यं गिरिजाजननी हि सा।।2.3.44.१००।।

यदि रम्यतनुस्स स्यात्तदा देया मया सुता ।।

नान्यथा कोटिशो यत्नैर्वच्मि सत्यन्दृढं वचः ।।१०१।।

ब्रह्मोवाच ।।

इत्युक्त्वा वचनं मेना तूष्णीमास दृढव्रता ।।

शिवेच्छाप्रेरिता धन्या तथा याखिलमोहिनी ।। १०२ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वती खण्डे मेनाप्रबोधवर्णनो नाम चतुश्चत्वारिंशोऽध्यायः ।।४४।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ४५

https://sa.wikisource.org/s/wqg

< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः ३ (पार्वतीखण्डः)

ब्रह्मोवाच ।।

एतस्मिन्नन्तरे त्वं हि विष्णुना प्रेरितो द्रुतम् ।।

अनुकूलयितुं शंभुमयास्तन्निकटे मुने ।।१।।

तत्र गत्वा स वै रुद्रो भवता सुप्रबोधितः ।।

स्तोत्रैर्नानाविधैस्स्तुत्वा देवकार्यचिकीर्षया ।।२।।

श्रुत्वा त्वद्वचनं प्रीत्या शंभुना धृतमद्भुतम् ।।

स्वरूपमुत्तमन्दिव्यं कृपालुत्वं च दर्शितम् ।।३।।

तद्दृष्ट्वा सुन्दरं शम्भुं स्वरूपम्मन्मथा धिकम् ।।

अत्यहृष्यो मुने त्वं हि लावण्यपरमायनम् ।। ४ ।।

स्तोत्रैर्नानाविधैस्स्तुत्वा परमानन्दसंयुतः ।।

आगच्छस्त्वं मुने तत्र यत्र मेना स्थिताखिलैः ।। ५ ।।

तत्रागत्य सुप्रसन्नो मुनेऽतिप्रेमसंकुलः ।।

हर्षयंस्तां शैलपत्नी मेनान्त्वं वाक्यमब्रवीः। ।। ६ ।।

नारद उवाच ।।

मेने पश्य विशालाक्षि शिवरूपमनुत्तमम् ।।

कृता शिवेन तेनैव सुकृपा करुणात्मना ।। ७ ।।

ब्रह्मोवाच ।।

श्रुत्वा सा तद्वचो मेना विस्मिता शैलकामिनी ।।

ददर्श शिवरूपन्तत्परमानन्ददायकम् ।। ८ ।।

कोटिसूर्यप्रतीकाशं सर्वावयवसुन्दरम् ।।

विचित्रवसनं चात्र नानाभूषणभूषितम् ।। ९ ।।

सुप्रसन्नं सुहासं च सुलावण्यं मनोहरम् ।।

गौराभं द्युतिसंयुक्तं चन्द्ररेखाविभूषितम्। ।।2.3.45.१०।।

सर्वैर्देवगणैः प्रीत्या विष्ण्वाद्यस्सेवितं तथा।।

सूर्येण च्छत्रितं मूर्ध्नि चन्द्रेण च विशोभितम्।।११।।
सर्वथा रमणीयं च भूषितस्य विभूषणैः ।।
वाहनस्य महाशोभा वर्णितुं नैव शक्यते ।।१२।।
गंगा च यमुना चैव विधत्तः स्म सुचामरे।।
सिद्धयोऽष्टौ पुरस्तस्य कुर्वन्ति स्म सुनर्त्तनम् ।।१३।।
मया चैव तदा विष्णुरिन्द्राद्या ह्यमरास्तथा ।।
स्वं स्वं वेषं सुसम्भूष्य गिरिशेनाचरन्युताः ।।१४।।
तथा जयेति भाषन्तो नानारूपा गणास्तदा ।।
स्वलङ्कृतमहामोदा गिरीशपुरतोऽचरन् ।। १५ ।।
सिद्धाश्चोपसुरास्सर्वे मुनयश्च महासुखाः ।।
ययुश्शिवेन सुप्रीतास्सकलाश्चापरे तथा।।१६।।
एवन्देवादयस्सर्वे कुतूहलसमन्विताः ।।
परंब्रह्म गृणन्तस्ते स्वपत्नीभिरलंकृताः ।।१७।।
विश्वावसुमुखास्तत्र ह्यप्सरोगणसंयुताः ।।
गायन्तोप्यग्रतस्तस्य परमं शाङ्करं यशः ।। १८ ।।
इत्थं महोत्सवस्तत्र बभूव मुनिस त्तम ।।
नानाविधो महेशे हि शैलद्वारि च गच्छति ।। १९ ।।
तस्मिंश्च समये तत्र सुषमा या परात्मनः ।।
वर्णितुं तां विशेषेण कश्शक्नोति मुनीश्वर ।। 2.3.45.२० ।।
तथाविधं च तन्दृष्ट्वा मेना चित्रगता इव ।।
क्षणमासीत्ततः प्रीत्या प्रोवाच वचनं मुने ।। २१ ।।
मेनोवाच ।।
धन्या पुत्री मदीया च यया तप्तं महत्तपः ।।
यत्प्रभावान्महेशान त्वं प्राप्त इह मद्गृहे ।।२२।।
मया कृता पुरा या वै शिवनिन्दा दुरत्यया ।।
तां क्षमस्व शिवास्वामिन्सुप्रसन्नो भवाधुना ।। २३ ।।
ब्रह्मोवाच ।।
इत्थं सम्भाष्य सा मेना संस्तूयेन्दुललाटकम् ।।

साञ्जलिः प्रणता शैलप्रिया लज्जापराऽभवत् ।। २४ ।।

तावत्स्त्रियस्समाजग्मुर्हित्वा कामाननेकशः ।।

बह्व्यस्ताः पुरवासिन्यश्शिवदर्शनलालसाः ।। २५ ।।

मज्जनं कुर्वती काचित्तच्चूर्णसहिता ययौ ।।

द्रष्टुं कुतूहलाढ्या च शङ्करं गिरिजावरम् ।। २६ ।।

काचित्तु स्वामिनस्सेवां सखीयुक्ता विहाय च ।।

सुचामरकरा प्रीत्यागाच्छम्भोर्दर्शनाय वै ।। २७ ।।

काचित्तु बालकं हित्वा पिबन्तं स्तन्यमादरात्।।

अतृप्तं शङ्करन्द्रष्टुं ययौ दर्शनलालसा ।।२८।।

रशनां बध्नती काचित्तयैव सहिता ययौ ।।

वसनं विपरीतं वै धृत्वा काचिद्ययौ ततः।।२९।।

भोजनार्थं स्थितं कान्तं हित्वा काचिद्ययौ प्रिया।।

द्रष्टुं शिवावरं प्रीत्या सतृष्णा सकुतूहला।।2.3.45.३०।।

काचिद्धस्ते शलाकां च धृत्वांजनकरा प्रिया ।।

अञ्जित्वैकाक्षि सन्द्रष्टुं ययौ शैलसुतावरम्।।३१।।

काचित्तु कामिनी पादौ रञ्जयन्ती ह्यलक्तकैः ।।

श्रुत्वा घोषं च तद्धित्वा दर्शनार्थमुपागता ।। ३२ ।।

इत्यादि विविधं कार्यं हित्वा वासं स्त्रियो ययुः ।।

दृष्ट्वा तु शांकरं रूपं मोहं प्राप्तास्तदाऽभवन् ।। ३३ ।।

ततस्ताः प्रेमसंविग्नाश्शिवदर्शनहर्षिताः ।।

निधाय हृदि तन्मूर्तिं वचनं चेदमब्रुवन् ।।३४।।

पुरवासिन्य ऊचुः।।

नेत्राणि सफलान्यासन्हिमवत्पुरवासिनाम् ।।

यो योऽपश्यददो रूपं तस्य वै सार्थकं जनुः ।।३५।।

तस्यैव सफलं जन्म तस्यैव सफलाः क्रियाः ।।

येन दृष्टश्शिवस्साक्षात्सर्वपापप्रणाशकः ।।३६।।

पार्वत्या साधितं सर्वं शिवार्थं यत्तपः कृतम् ।।

धन्येयं कृतकृत्येयं शिवा प्राप्य शिवम्पतिम् ।। ३७ ।।

यदीदं युगलं ब्रह्मा न युंज्याच्छिवयोर्मुदा ।।

तदा च सकलोऽप्यस्य श्रमो निष्फलतामियात् ।। ३८ ।।

सम्यक् कृतं तथा चात्र योजितं युग्ममुत्तमम् ।।

सर्वेषां सार्थता जाता सर्वकार्यसमुद्भवा ।। ३९ ।।

विना तु तपसा शम्भोर्दर्शनं दुर्लभन्नृणाम् ।।

दर्शनाच्छंकरस्यैव सर्वे याताः कृतार्थताम् ।। 2.3.45.४० ।।

लक्ष्मीर्नारायणं लेभे यथा वै स्वामिनम्पुरा ।।

तथासौ पार्वती देवी हरम्प्राप्य सुभूषिता ।। ४१ ।।

ब्रह्माणं च यथा लेभे स्वामिनं वै सरस्वती ।।

तथासौ पार्वती देवी हरम्प्राप्य सुभूषिता ।।४२।।

वयन्धन्याः स्त्रियस्सर्वाः पुरुषास्सकला वराः ।।

ये ये पश्यन्ति सर्वेशं शंकरं गिरिजापतिम् ।।४३।।

ब्रह्मोवाच ।। इत्थमुक्त्वा तु वचनं चन्दनैश्चाक्षतैरपि ।।

शिवं समर्चयामासुर्लाजान्ववृषुरादरात्।।४४।।

तस्थुस्तत्र स्त्रियः सर्वा मेनया सह सोत्सुकाः।।

वर्णयन्त्योऽधिकम्भाग्यम्मेनायाश्च गिरेरपि।।४५।।

कथास्तथाविधाश्शृण्वंस्तद्वामा वर्णिताश्शुभाः ।।

प्रहृष्टोऽभूत्प्रभुः सर्वैर्मुने विष्ण्वादिभिस्तदा ।।४६।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे शिवसुन्दरस्वरूपपुरवास्युत्सववर्णनं नाम पञ्चचत्वारिंशोऽध्यायः ।। ४५ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ४६



।। ब्रह्मोवाच ।।

अथ शंभुः प्रसन्नात्मा सदूतं स्वगणैस्सुरैः ।।

सर्वैरन्यैर्गिरेर्द्धाम जगाम सकुतूहलम् ।। १ ।।

मेनापि स्त्रीगणैस्तैश्च हिमाचलवरप्रिया ।।

तत उत्थाय स्वगृहा भ्यंतरं सा जगाम ह ।। २ ।।

नीराजनार्थं शम्भोश्च दीपपात्रकरा सती ।।

सर्वर्षिस्त्रीगणैस्साकमगच्छद्द्वारमादरात् ।। ३ ।।

तत्रागतं महेशानं शंकरं गिरिजावरम् ।।

ददर्श प्रीतितो मेना सेवितं सकलैस्सुरैः ।।४।।

चारुचंपकवर्णाभं ह्येकवक्त्रं त्रिलोचनम्।।

ईषद्धास्यप्रसन्नास्यं रत्नस्वर्णादिभूषितम् ।।५।।

मालतीमालया युक्तं सद्रत्नमुकुटोज्ज्वलम् ।।

सत्कंठाभरणं चारुवलयांगदभूषितम् ।।६।।

वह्निशौचेनातुलेन त्वतिसूक्ष्मेण चारुणा ।।

अमूल्यवस्त्रयुग्मेन विचित्रेणातिराजितम् ।।७।।

चन्दनागरुकस्तूरीचारुकुंकुम भूषितम् ।।

रत्नदर्पणहस्तं च कज्जलोज्ज्वललोचनम् ।।८।।

सर्वस्वप्रभयाच्छन्नमतीवसुमनोहरम् ।।

अतीव तरुणं रम्यं भूषितांगैश्च भूषितम् ।।९।।

कामिनीकांतमव्यग्रं कोटिचन्द्राननांबुजम् ।।

कोटिस्मराधिकतनुच्छविं सर्वांगसुंदरम् ।।2.3.46.१०।।

ईदृग्विधं सुदेवं तं स्थितं स्वपुरतः प्रभुम् ।।

दृष्ट्वा जामातरं मेना जहौ शोकम्मुदाऽन्विता ।। ११ ।।

प्रशशंस स्वभाग्यं सा गिरिजां भूधरं कुलम् ।।

मेने कृतार्थमात्मानं जहर्ष च पुनः पुनः ।। १२ ।।
नीराजनं चकारासौ प्रफुल्लवदना सती ।।
अवलोकपरा तत्र मेना जामातरं मुदा ।। १३ ।।
गिरिजोक्तमनुस्मृत्य मेना विस्मयमागता ।।
मनसैव ह्युवाचेदं हर्षफुल्लाननाम्बुजा ।। १४ ।।
यद्वै पुरोक्तं च तया पार्वत्या मम तत्र च ।।
ततोधिकं प्रपश्यामि सौन्दर्य्यं परमेशितुः ।। १५ ।।
महेशस्य सुलावण्यमनिर्वाच्यं च संप्रति ।।
एवं विस्मयमापन्ना मेना स्वगृहमाययौ ।।१६।।
प्रशशंसुर्युवतयो धन्या धन्या गिरेः सुता ।।
दुर्गा भगवतीत्येवमूचुः काश्चन कन्यकाः।।१७।।
न दृष्टो वर इत्येवमस्माभिर्द्दानगोचरः ।।
धन्या हि गिरिजा देवीमूचुः काश्चन कन्यकाः ।।१८।।
जगुर्गन्धर्व्वप्रवरा ननृतुश्चाप्सरोगणाः ।।
दृष्ट्वा शंकररूपं च प्रहृष्टास्सर्वदेवताः।।१९।।
नानाप्रकारवाद्यानि वादका मधुराक्षरम् ।।
नानाप्रकारशिल्पेन वादयामासुरादरात् ।।2.3.46.२०।।
हिमाचलोऽपि मुदितो द्वाराचारमथाकरोत् ।।
मेनापि सर्वनारीभिर्महोत्सवपुरस्सरम् ।।२१।।
परपुच्छां चकारासौ मुदिता स्वगृहं ययौ ।।
शिवो निवेदितं स्थानं जगाम गणनिर्जरैः ।।२२।।
एतस्मिन्नन्तरे दुर्गां शैलान्तःपुरचारिका ।।
बहिर्जग्मुस्समादाय पूजितुं कुलदेवताम् ।। २३ ।।
तत्र तां ददृशुर्देवा निमेषरहिता मुदा ।।
सुनीलांजनवर्णाभां स्वांगैश्च प्रतिभूषिताम्। ।।२४।।
त्रिनेत्रादृतनेत्रांतामन्यवारितलोचनाम् ।।
ईषद्धास्यप्रसन्नास्यां सकटाक्षां मनोहराम् ।। २५ ।।
सुचारुकबरीभारां चारुपत्रक शोभिताम् ।।

कस्तूरीबिन्दुभिस्सार्द्धं सिन्दूरबिन्दुशोभिताम् ।।२६।।

रत्नेन्द्रसारहारेण वक्षसा सुविराजिताम् ।।

रत्नकेयूरवलयां रत्नकङ्कणमंडिताम् ।। २७ ।।

सद्रत्नकुण्डलाभ्यां च चारुगण्डस्थलोज्ज्वलाम् ।।

मणिरत्नप्रभामुष्टिदन्तराजिविराजिताम् ।।२८।।

मधुबिम्बाधरोष्ठां च रत्नयावकसंयुताम् ।।

रत्नदर्प्पणहस्तां च क्रीडापद्मविभूषिताम् ।। २९ ।।

चन्दनागुरुकस्तूरीकुंकुमेनाति च र्चिताम् ।।

क्वणन्मंजीरपादां च रक्तांघ्रितलराजिताम् ।। 2.3.46.३० ।।

प्रणेमुश्शिरसा देवीं भक्तियुक्ताः समेनकाम् ।।

सर्वे सुरादयो दृष्ट्वा जगदाद्यां जगत्प्रसूम् ।। ३१ ।।

त्रिनेत्रो नेत्रकोणेन तां ददर्श मुदान्वितः ।।

शिवः सत्याकृतिं दृष्ट्वा विजहौ विरहज्वरम् ।। ३२ ।।

शिवस्सर्वं विसस्मार शिवासंन्यस्तलोचनः ।।

पुलकांचितसर्वाङ्गो हर्षाद्गौरीविलोचनः ।।३३।।

अथ कालीबहिः पुर्य्यां गत्वा पूज्य कुलाम्बिकाम् ।।

विवेश भवनं रम्यं स्वपितुस्सद्विजाङ्गना ।।३४।।

शङ्करोपि सुरैस्सार्द्धं हरिणा ब्राह्मणा तथा ।।

हिमाचलसमुद्दिष्टं स्वस्थानमगमन्मुदा ।।३५।।

तत्र सर्वे सुखं तस्थुस्सेवन्तश्शङ्करं यथा ।।

सम्मानिता गिरीशेन नानाविधसुसम्पदा ।। ३६ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे वरागमादिवर्णनं नाम षट्चत्शरिंशोऽध्यायः ।।४६।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ४७



ब्रह्मोवाच ।।

ततः शैलवरः सोपि प्रीत्या दुर्गोपवीतकम् ।।

कारयामास सोत्साहं वेदमन्त्रैश्शिवस्य च ।।१।।

अथ विष्ण्वादयो देवा मुनयस्सकुतू हलम् ।।

हिमाचलप्रार्थनया विवेशान्तर्गृहं गिरेः।।२।।

श्रुत्याचारं भवाचारं विधाय च यथार्थतः ।।

शिवामलंकृतां चक्रुश्शिवदत्तविभूषणैः ।। ३ ।।

प्रथमं स्नापयित्वा तां भूषयित्वाथ सर्वशः ।।

नीराजिता सखीभिश्च विप्रपत्नीभिरेव च ।। ४ ।।

अहताम्बरयुग्मेन शोभिता वरवर्णिनी ।।

विरराज महाशैलदुहिता शङ्करप्रिया ।।५।।

कंचुकी परमा दिव्या नानारत्नान्विताद्भुता ।।

विधृता च तया देव्या विलसन्त्याधिकं मुने ।।६।।

सा बभार तथा हारं दिव्यरत्नसमन्वितम् ।।

वलयानि महार्हाणि शुद्धचामीकराणि च ।। ७ ।।

स्थिता तत्रैव सुभगा ध्यायन्ती मनसा शिवम् ।।

शुशुभेति महाशैलकन्यका त्रिजगत्प्रसूः ।।८।।

तदोत्सवो महानासीदुभयत्र मुदा वहः ।।

दानं बभूव विविधं ब्राह्मणेभ्यो विवर्णितम् ।।९।।

अन्येषां द्रव्यदानं च बभूव विविधम्महत् ।।

गीतवाद्यविनोदश्च तत्रोत्सवपुरस्सरम् ।। 2.3.47.१० ।।

अथ विष्णुरहं धाता शक्राद्या अमरास्तथा ।।

मुनयश्च महाप्रीत्या निखिलास्सोत्सवा मुदा ।। ११ ।।

सुप्रणम्य शिवां भक्त्या स्मृत्वा शिवपदाम्बुजम् ।।

सम्प्राप्य हिमगिर्य्याज्ञां स्वं स्वं स्थाने समाश्रिताः ।।१२।।

एतस्मिन्नन्तरे तत्र ज्योतिःशास्त्र विशारदः ।।

हिमवन्तं गिरीन्द्रं तं गर्गो वाक्यमभाषत ।।१३।।

।। गर्ग उवाच ।।

हिमाचल धराधीश स्वामिन् कालीपतिः प्रभो ।।

पाणिग्रहार्थं शंभुं चानय त्वं निजमंदिरम् ।।१४।।

।। ब्रह्मोवाच ।।

अथ तं समयं ज्ञात्वा कन्यादानोचितं गिरिः ।।

निवेदितं च गर्गेण मुसुदेऽतीव चेतसि ।।१५।।

महीधरान्द्विजांश्चैव परानपि तदा गिरिः ।।

प्रेषयामास सुप्रीत्या शिवानयनकाम्यया ।। १६ ।।

ते पर्वता द्विजाश्चैव सर्वमंगलपाणयः ।।

संजग्मुस्सोत्सवाः प्रीत्या यत्र देवो महेश्वरः ।।१७।।

तदा वादित्रघोषेण ब्रह्मघोषेण भूयसा ।।

महोत्साहोऽभवत्तत्र गीतनृत्यान्वितेन हि ।।१८।।

श्रुत्वा वादित्रनिर्घोषं सर्वे शंकरसेवकाः ।।

उत्थितास्त्वैकपद्येन सदेवर्षिगणा मुदा ।।१९।।

परस्परं समूचुस्ते हर्षनिर्भरमानसाः ।।

अत्रागच्छंति गिरयश्शिवानयनकाम्यया ।।2.3.47.२०।।

पाणिग्रहणकालो हि नूनं सद्यस्समागतः ।।

महद्भाग्यं हि सर्वेषां संप्राप्तमहि मन्महे ।।२१।।

धन्या वयं विशेषेण विवाहं शिवयोर्ध्रुवम्।।

द्रक्ष्यामः परमप्रीत्या जगतां मंगलालयम् ।।२२।।

ब्रह्मोवाच ।।

एवं यावदभूत्तेषां संवादस्तत्र चादरात् ।।

तावत्सर्वे समायाताः पर्वतेंद्रस्य मंत्रिणः ।। २३ ।।

ते गत्वा प्रार्थयांचक्रुश्शिव विष्ण्वादिकानपि ।।

कन्यादानोचितः कालो वर्तते गम्यतामिति ।। २४ ।।

ते तच्छ्रुत्वा सुरास्सर्वे मुने विष्ण्वादयोऽखिलाः ।।
मुमुदुश्चेतसातीव जयेत्यूचुर्गिरिं द्रुतम्।।२५।।
शिवोऽपि मुमुदेऽतीव कालीप्रापणलालसः ।।
गुप्तं चकार तच्चिह्नं मनस्येवाद्भुताकृतिः ।।२६।।
अथ स्नानं कृतन्तेन मङ्गलद्रव्यसंयुतम् ।।
शूलिना सुप्रसन्नेन लोकानुग्रहकारिणा।।२७।।
स्नातस्सुवाससा युक्तस्सर्वैस्तैः परिवारितः ।।
आरोपितो वृषस्कन्धे लोकपालैस्सुसेवितः ।।२८।।
पुरस्कृत्य प्रभुं सर्वे जग्मुर्हिमगिरेर्गृहम् ।।
वाद्यानि वादयन्तश्च कृतवन्तः कुतूहलम् ।। २९ ।।
हिमागप्रेषिता विप्रास्तथा ते पर्वतोत्तमाः ।।
शम्भोरग्रचरा ह्यासन्कुतूहलसमन्विताः ।।2.3.47.३०।।
बभौ छत्रेण महता ध्रियमाणो हि मूर्द्धनि।।
चामरैर्वीज्यमानोऽसौ सविता नो महेश्वरः।।३१।।
अहं विष्णुस्तथा चेन्द्रो लोकपाला स्तथैव च ।।
अग्रगाः स्मातिशोभन्ते श्रिया परमया श्रिताः ।।३२।।
ततश्शङ्खाश्च भेर्य्यश्च पटहानकगोमुखाः ।।
पुनः पुनरवाद्यन्त वादित्राणि महोत्सवे ।।३३।।
तथैव गायकास्सर्वे जगुः परममङ्गलम्।।
नर्तक्यो ननृतुस्सर्वा नानातालसमन्विताः ।।३४।।
एभिस्समेतो जगदेकबन्धुर्ययौ तदानीं परमेशवर्चसा ।।
सुसेव्यमानस्सकलैस्सुरेश्वरैर्विकीर्यमाणः कुसुमैश्च हर्षितैः ।।३५।।
सम्पूजितस्तदा शम्भुः प्रविष्टो यज्ञमण्डपम्।।
संस्तूयमानो बह्वीभिः स्तुतिभिः परमेश्वरः।।३६।।
वृषादुत्तारयामासुर्महेशम्पर्वतोत्तमाः।।
निन्युर्गृहान्तरम्प्रीत्या महोत्सवपुरस्सरम् ।। ३७ ।।
हिमालयोऽपि सम्प्राप्तं सदेवगणमीश्वरम् ।।
प्रणम्य विधिवद्भक्त्या नीराजनमथाकरोत् ।। ३८ ।।

सर्वान्सुरान्मुनीनन्यान्प्रणम्य समहोत्सवः ।।
सम्मानमकरोत्तेषां प्रशंसन्स्वविधिम्मुदा ।।३९।।
सोऽगस्त्साच्युतमीशानं सुपाद्यार्घ्यपुरस्सरम् ।।
सदेवमुख्यवर्गं च निनाय स्वालयान्तरम् ।। 2.3.47.४० ।।
प्राङ्गणे स्थापयामास रत्नसिंहासनेषु तान् ।।
सर्वान्विष्णु च मामीशं विशिष्टांश्च विशेषतः ।। ४१ ।।
सखीभिर्मेनया प्रीत्या ब्राह्मणस्त्रीभिरेव च ।।
अन्याभिश्च पुरन्धीभिश्चक्रे नीराजनम्मुदा ।।४२।।
पुरोधसा कृत्यविदा शंकराय महात्मने ।।
मधुपर्कादिकं यद्यत्कृत्यं तत्तत्कृतं मुदा ।।४३।।
मया स नोदितस्तत्र पुरोधाः कृतवाँस्तदा ।।
सुमंगलं च यत्कर्म प्रस्तावसदृशम्मुने ।। ४४ ।।
अन्तर्वेद्यां महाप्रीत्या सम्प्रविश्य हिमाद्रिणा ।।
यत्र सा पार्वती कन्या सर्वाभरणभूषिता ।। ४५ ।।
वेदिकोपरि तन्वंगी संस्थिता सुविराजिता ।।
तत्र नीतो मह्मदेवो विष्णुना च मया सह ।।४६।।
लग्नन्निरीक्षमाणास्ते वाचस्पतिपुरोगमाः ।।
कन्यादानोचितन्तत्र बभूवुः परमोत्सवाः ।। ४७ ।।
तत्रोपविष्टो गर्गश्च यत्रास्ति घटिकालयम् ।।
यावच्छेषा घटी तावत्कृतम्प्रणवभाषणम्।।४८।।
पुण्याहम्प्रवदन्गर्गस्समाध्रेऽञ्जलिम्मुदा।।
पार्व्वत्यक्षतपूर्णं च ववृषे च शिवोपरि ।।४९।।
तया सम्पूजितो रुद्रो दध्यक्षतकुशाम्बुभिः ।।
परमोदाढ्यया तत्र पार्वत्या रुचिरास्यया ।।2.3.47.५०।।
विलोकयन्ती तं शम्भुं यस्यार्थे परमन्तपः ।।
कृतम्पुरा महाप्रीत्या विरराज शिवाति सा ।। ५१ ।।
मया मुने तदोक्तस्तु गर्गादिमुनिभिश्च सः ।।
समानर्च शिवां शम्भुर्लौकिकाचारसंरतः।।५२।।

एवं परस्परं तौ वै पार्व्वतीपरमेश्वरौ।।

अर्चयन्तौ तदानीञ्च शुशुभाते जगन्मयौ।।५३।।

त्रैलोक्यलक्ष्म्या संवीतौ निरीक्षन्तौ परस्परम् ।।

तदा नीराजितौ लक्ष्म्यादिभिस्स्त्रीभिर्विशेषतः । ५४ ।।

तथा परा वै द्विजयोषितश्च नीराजयामासुरथो पुरस्त्रियः ।।

शिवाञ्च शम्भुञ्च विलोकयन्त्योऽवापुर्म्मुदन्तास्सकला महोत्सवम् ।।५५।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे शिव हिमगिरिगृहाभ्यन्तरगमनोत्सववर्णनं नाम सप्तचत्वारिंशोऽध्यायः ।। ४७ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ४८



।।ब्रह्मोवाच ।।

एतस्मिन्नंतरे तत्र गर्गाचार्य्यप्रणोदितः ।।

हिमवान्मेनया सार्द्धं कन्या दातुं प्रचक्रमे ।। १ ।।

हैमं कलशमादाय मेना चार्द्धांगमाश्रिता ।।

हिमाद्रेश्च महाभागा वस्त्राभरणभूषिता ।।२।।

पाद्यादिभिस्ततः शैलः प्रहृष्टः स्वपुरोहितः ।।

तं वरं वरयामास वस्त्रचंदनभूषणैः ।।३।।

ततो हिमाद्रिणा प्रोक्ता द्विजास्तिथ्यादिकीर्तने।।

प्रयोगो भण्यतां तावदस्मिन्समय आगते ।।४।।

तथेति चोक्त्वा ते सर्वे कालज्ञा द्विजसत्तमाः ।।

तिथ्यादिकीर्तनं चक्रुः प्रीत्या परमनिर्वृताः ।।५।।

ततो हिमाचलः प्रीत्या शम्भुना प्रेरितो हृदा ।।

सूती कृतः परेशेन विहसञ्शम्भुमब्रवीत् ।।६।।

स्वगोत्रं कथ्यतां शम्भो प्रवरश्च कुलं तथा।।

नाम वेदं तथा शाखां मा कार्षीत्समयात्ययम् ।।७।।

ब्रह्मोवाच ।।

इत्याकर्ण्य वचस्तस्य हिमाद्रेश्शङ्करस्तदा ।।

सुमुखाविमुखः सद्योऽप्यशोच्यः शोच्यतां गतः।। ८।।

एवंविधस्सुरवरैर्मुनिभिस्तदानीं गन्धर्वयक्षगणसिद्धगणैस्तथैव।।

दृष्टो निरुत्तरमुखो भगवान्महेशोऽकार्षीस्तु हास्यमथ तत्र स नारदत्वम्।।९।।

वीणामवादयस्त्वं हि ब्रह्मविज्ञोऽथ नारद।।

शिवेन प्रेरितस्तत्र मनसा शम्भुमानसः।।2.3.48.१०।।

तदा निवारितो धीमान्पर्वतेन्द्रेण वै हठात् ।।

विष्णुना च मया देवैर्मुनिभिश्चाखिलैस्तथा।।११।।

न निवृत्तोऽभवस्त्वं हि स यदा शङ्करेच्छया ।।

इति प्रोक्तोऽद्रिणा तर्हि वीणां मा वादयाधुना ।।१२।।

सुनिषिद्धो हठात्तेन देवर्षे त्वं यदा बुध ।।

प्रत्यवोचो गिरीशं तं सुसंस्मृत्य महेश्वरम् ।।१३।।

नारद उवाच ।।

त्वं हि मूढत्वमापन्नो न जानासि च किञ्चन ।।

वाच्ये महेशविषयेऽतीवासि त्वं बहिर्मुखः ।।१४।।

त्वया पृष्ठो हरस्साक्षात्स्वगोत्रकथनं प्रति ।।

समयेऽस्मिँस्तदत्यन्तमुपहासकरं वचः ।।१५।।

अस्य गोत्रं कुलं नाम नैव जानन्ति पर्वत ।।

विष्णुब्रह्मादयोऽपीह परेषां का कथा स्मृता ।।१६।।

यस्यैकदिवसे शैल ब्रह्मकोटिर्लयं गता ।।

स एव शङ्करस्तेद्य दृष्टः कालीतपोबलात ।। १७ ।।

अरूपोऽयं परब्रह्म निर्गुणः प्रकृतेः परः ।।

निराकारो निर्विकारो मायाधीशः परात्परः ।।१८।।

अगोत्रकुलनामा हि स्वतन्त्रो भक्तवत्सलः ।।

तदिच्छया हि सगुणस्सुतनुर्बहुनामभृत् ।। १९ ।।

सुगोत्री गोत्रहीनश्च कुलहीनः कुलीनकः ।।

पार्वतीतपसा सोऽद्य जामाता ते न संशयः ।।2.3.48.२०।।

लीलाविहारिणा तेन मोहितं च चराचरम् ।।

नो जानाति शिवं कोऽपि प्राज्ञोऽपि गिरिसत्तम ।।२१।।

लिंगाकृतेर्महेशस्य केन दृष्टं न मस्तकम्।।

विष्णुर्गत्वा हि पातालं तदेनं नापविस्मितः ।।२२।।

किंबहूक्त्या नगश्रेष्ठ शिवमाया दुरत्यया।।

तदधीनास्त्रयो लोका हरिब्रह्मादयोपि च ।।२३।।

तस्मात्त्वया शिवा तात सुविचार्य प्रयत्नतः ।।

न कर्तव्यो विमर्शोऽत्र त्वेवंविधवरे मनाक् ।।२४।।

ब्रह्मोवाच।।

इत्युक्त्वा त्वं मुने ज्ञानी शिवेच्छाकार्यकारकः ।।

प्रत्यवोचः पुनस्तं वै शैलेद्रं हर्षयन्गिरा ।।२५।।

नारद उवाच ।।

शृणु तात महाशैल शिवाजनक मद्वचः ।।

तच्छ्रुत्वा तनयां देवीं देहि त्वं शंकराय हि ।। २६ ।।

सगुणस्य महेशस्य लीलया रूप धारिणः ।।

गोत्रं कुलं विजानीहि नादमेव हि केवलम् ।।२७।।

शिवो नादमयः सत्त्यं नादश्शिवमयस्तथा ।।

उभयोरन्तरं नास्ति नादस्य च शिवस्य च ।।२८।।

सृष्टौ प्रथमजत्वाद्धि लीलासगुणरूपिणः ।।

शिवान्नादस्य शैलेन्द्र सर्वोत्कृष्टस्ततस्स हि ।। २९ ।।

अतो हि वादिता वीणा प्रेरितेन मयाद्य वै ।।

सर्वेश्वरेण मनसा शङ्करेण हिमालय ।।2.3.48.३०।।

ब्रह्मोवाच ।।

एतच्छ्रुत्वा तव मुने वचस्तत्तु गिरिश्वरः ।।

हिमाद्रिस्तोषमापन्नो गतविस्मयमानसः ।।३१।।

अथ विष्णुप्रभृतयस्सुराश्च मुनयस्तथा ।।

साधुसाध्विति ते सर्वे प्रोचुर्विगतविस्मयाः ।।३२।।

महेश्वरस्य गांभीर्यं ज्ञात्वा सर्वे विचक्षणाः ।।

सविस्मया महामोदान्विताः प्रोचुः परस्परम्।।३३।।

यस्याज्ञया जगदिदं च विशालमेव जातं परात्परतरो निजबोधरूपः ।।

शर्वः स्वतन्त्रगतिकृत्परभावगम्यस्सोऽसौ त्रिलोकपतिरद्य च नस्सुदृष्टः ।।३४।।

अथ ते पर्वतश्रेष्ठा मेर्वाद्या जातसंभ्रमाः।।

ऊचुस्ते चैकपद्येन हिमवन्तं नगेश्वरम् ।।३५।।

पर्वता ऊचुः ।।

कन्यादाने स्थीयतां चाद्य शैलनाथोक्त्या किं कार्यनाशस्तवेव ।।

सत्यं ब्रूमो नात्र कार्यो विमर्शस्तस्मात्कन्या दीयतामीश्वराय ।।३६।।

ब्रह्मो वाच ।।

तच्छ्रुत्वा वचनं तेषां सुहृदां स हिमालयः ।।
स्वकन्यादानमकरोच्छिवाय विधिनोदितः ।। ३७ ।।
इमां कन्यां तुभ्यमहं ददामि परमेश्वर ।।
भार्यार्थे परिगृह्णीष्व प्रसीद सकलेश्वर ।। ३८ ।।
तस्मै रुद्राय महते मंत्रेणानेन दत्तवान् ।।
हिमाचलो निजां कन्यां पार्वतीं त्रिजगत्प्रसूम् ।। ३९।।
इत्थं शिवाकरं शैलं शिवहस्तेनिधाय च ।।
मुमोदातीव मनसि तीर्णकाममहार्णवः ।।2.3.48.४०।।
वेदमंत्रेण गिरिशो गिरिजाकरपङ्कजम् ।।
जग्राह स्वकरेणाशु प्रसन्नः परमेश्वरः ।।४१।।
क्षितिं संस्पृश्य कामस्य कोदादिति मनुं मुने।।
पपाठ शङ्करः प्रीत्या दर्शयँल्लौकिकीं गतिम् ।।४२।।
महोत्सवो महानासीत्सर्वत्र प्रमुदावहः ।।
बभूव जयसंरावो दिवि भूम्यन्तरिक्षके ।।४३।।
साधुशब्दं नमः शब्दं चक्रुस्सर्वेऽति हर्षिताः।।
गंधर्वास्सुजगुः प्रीत्या ननृतुश्चाप्सरोगणाः ।।४४।।
हिमाचलस्य पौरा हि मुमुदु श्चाति चेतसि ।।
मंगलं महदासीद्वै महोत्सवपुरस्सरम् ।।४५।।
अहं विष्णुश्च शक्रश्च निर्जरा मुनयोऽखिलाः ।।
हर्षिता ह्यभवंश्चाति प्रफुल्लवदनाम्बुजाः ।। ४६ ।।
अथ शैलवरस्सोदात्सुप्रसन्नो हिमाचलः ।।
शिवाय कन्यादानस्य साङ्गतां सुयथोचिताम् ।। ४७ ।।
ततो वन्धुजनास्तस्य शिवां सम्पूज्य भक्तितः ।।
ददुश्शिवाय सद्द्रव्यं नानाविधिविधानतः ।। ४८ ।।
हिमालयस्तुष्टमनाः पार्वतीशि वप्रीतये ।।
नानाविधानि द्रव्याणि ददौ तत्र मुनीश्वर ।।४९।।
कौतुकानि ददौ तस्मै रत्नानि विविधानि च ।।
चारुरत्नविकाराणि पात्राणि विविधानि च ।। 2.3.48.५० ।।

गवां लक्षं हयानां च सज्जितानां शतं तथा ।।
दासीनामनुरक्तानां लक्षं सद्द्रव्यभूषितम् ।।५१।।
नागानां शतलक्षं हि रथानां च तथा मुने ।।
सुवर्णजटितानां च रत्नसारविनिर्मितम् ।। ५२ ।।
इत्थं हिमालयो दत्त्वा स्वसुतां गिरिजां शिवाम् ।।
शिवाय परमेशाय विधिनाऽऽप कृतार्थताम् ।। ५३ ।।
अथ शैलवरो माध्यंदिनोक्तस्तोत्रतो मुदा ।।
तुष्टाव परमेशानं सद्गिरा सुकृताञ्जलिः ।। ५४ ।।
ततो वेदविदा तेनाज्ञप्ता मुनिगणास्तदा ।।
शिरोऽभिषेकं चक्रुस्ते शिवायाः परमोत्सवाः ।। ५५ ।।
देवाभिधानमुच्चार्य्य पर्य्यक्षणविधिं व्यधुः ।।
महोत्सवस्तदा चासीन्महानन्दकरो मुने ।। ५६ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे कन्यादानवर्णनं नामाष्टचत्वारिंशोऽध्यायः ।। ४८ ।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ४९

https://sa.wikisource.org/s/wrq

< शिवपुराणम् | संहिता २ (रुद्रसंहिता) | खण्डः ३ (पार्वतीखण्डः)

।। ब्रह्मोवाच ।।

अथो ममाज्ञया विप्रैस्संस्थाप्यानलमीश्वरः ।।

होमं चकार तत्रैवमङ्के संस्थाप्य पार्वतीम् ।। १ ।।

ऋग्यजुस्साममन्त्रैश्चाहुतिं वह्नौ ददौ शिवः ।।

लाजाञ्जलिं ददौ कालीभ्राता मैनाकसंज्ञकः ।। २ ।।

अथ काली शिवश्चोभौ चक्रतुर्विधिवन्मुदा।।

वह्निप्रदक्षिणां तात लोकाचारं विधाय च।।३।।

तत्राद्भुतमलञ्चक्रे चरितं गिरिजापतिः ।।

तदेव शृणु देवर्षे तवस्नेहाद्ब्रवीम्यहम् ।।४।।

तस्मिन्नवसरे चाहं शिवमायाविमोहितः ।।

अपश्यञ्चरणे देव्या नखेन्दुञ्च मनोहरम् ।।५।।

दर्शनात्तस्य च तदाऽभूवं देवमुने ह्यहम् ।।

मदनेन समाविष्टोऽतीव क्षुभितमानसः ।।६।।

मुहुर्मुहुरपश्यं वै तदंगं स्मरमोहितः ।।

ततस्तद्दर्शनात्सद्यो वीर्यं मे प्राच्युतद्भुवि ।।७।।

रेतसा क्षरता तेन लज्जितोहं पितामहः ।।

मुने व्यमर्द तच्छिन्नं चरणाभ्यां हि गोपयन् ।। ८ ।।

तज्ज्ञात्वा च महादेवश्चुकोपातीव नारद ।।

हन्तुमैच्छत्तदा शीघ्रं वां विधिं काममोहितम् ।।९।।

हाहाकारो महानासीत्तत्र सर्वत्र नारद ।।

जनाश्च कम्पिरे सर्व्वे भय मायाति विश्वभृत् ।।2.3.49.१०।।

ततस्तंन्तुष्टुवुश्शम्भुं विष्णवाद्या निर्जरा मुने ।।

सकोपम्प्रज्वलन्तन्तन्तेजसा हन्तुमुद्यतम् ।। ११ ।।

देवा ऊचुः ।।

देवदेव जगद्व्यापिन्परमेश सदाशिव ।।
जगदीश जगन्नाथ सम्प्रसीद जगन्मय ।। १२ ।।
सर्वेषामपि भावानान्त्वमात्मा हेतुरीश्वरः ।।
निर्विकारोऽव्ययो नित्यो निर्विकल्पोऽक्षरः परः ।। १३ ।।
आद्यन्तावस्य यन्मध्यमिदमन्यदहम्बहिः ।।
यतोऽव्ययः सनैतानि तत्सत्यम्ब्रह्म चिद्भवान् । १४ ।।
तवैव चरणाम्भोजम्मुक्तिकामा दृढव्रताः ।।
विसृज्योभयतस्संगं मुनयस्समुपासते ।। १५ ।।
त्वम्ब्रह्म पूर्णममृतं विशोकं निर्गुणम्परम् ।।
आनंदमात्रमव्यग्रमविकारमनात्मकम् ।। १६ ।।
विश्वस्य हेतुरुदयस्थितिसंयमनस्य हि ।।
तदपेक्षतयात्मेशोऽनपेक्षस्सर्वदा विभुः ।। १७ ।।
एकस्त्वमेव सदसद्वयमद्वयमेव च ।।
स्वर्णं कृताकृतमिव वस्तुभेदो न चैव हि ।। १८ ।।
अज्ञानतस्त्वयि जनैर्विकल्पो विदितो यतः ।।
तस्माद्भ्रमप्रतीकारो निरुपाधेर्न हि स्वतः ।। १९ ।।
धन्या वयं महेशान तव दर्शनमात्रतः ।।
दृढभक्तजनानन्दप्रदश्शम्भो दयां कुरु ।। 2.3.49.२० ।।
त्वमादिस्त्वमनादिश्च प्रकृतेस्त्वं परः पुमान् ।।
विश्वेश्वरो जगन्नाथो निर्विकारः परात्परः ।। २१ ।।
योऽयं ब्रह्मास्तिऽ रजसा विश्वमूर्तिः पितामहः ।।
त्वत्प्रसादात्प्रभो विष्णुस्सत्त्वेन पुरुषोत्तमः ।। २२ ।।
कालाग्निरुद्रस्तमसा परमात्मा गुणः परः ।।
सदा शिवो महेशानस्सर्वव्यापी महेश्वरः।।२३।।
व्यक्तं महच्च भूतादिस्तन्मात्राणीन्द्रियाणि च।।
त्वयैवाधिष्ठितान्येव विश्वमूर्ते महेश्वर ।। २४ ।।
महादेव परेशान करुणाकर शंकर ।
प्रसीद देवदेवेश प्रसीद पुरुषोत्तम ।। २५ ।।

वासांसि सागरास्सप्त दिशश्चैव महाभुजाः ।।
द्यौर्मूर्द्धा ते विभोर्नाभिः खं वायुर्नासिका ततः ।। २६ ।।
चक्षूंष्यग्नी रविस्सोमः केशा मेघास्तव प्रभो ।।
नक्षत्रतारकाद्याश्च ग्रहाश्चैव विभूषणम् ।। २७ ।।
कथं स्तोष्यामि देवेश त्वां विभो परमेश्वर ।।
वाचामगोचरोऽसि त्वं मनसा चापि शंकर ।। २८ ।।
पञ्चास्याय च रुद्राय पञ्चाशत्कोटिमूर्तये ।।
त्र्यधिपाय वरिष्ठाय विद्यातत्त्वाय ते नमः ।। २९ ।।
अनिर्देश्याय नित्याय विद्युज्ज्वालाय रूपिणे ।।
अग्निवर्णाय देवाय शंकराय नमोनमः ।। 2.3.49.३० ।।
विद्युत्कोटिप्रतीकाशमष्टकोणं सुशोभनम् ।।
रूपमास्थाय लोकेऽस्मिन्संस्थिताय नमो नमः ।।३१।।
ब्रह्मोवाच ।।
इत्याकर्ण्य वचस्तेषां प्रसन्नः परमेश्वरः ।।
ब्रह्मणो मे ददौ शीघ्रमभयं भक्तवत्सलः ।।३२।।
अथ सर्वे सुरास्तत्र विष्णवाद्या मुनयस्तथा ।।
अभवन्सुस्मितास्तात चक्रुश्च परमोत्सवम् ।। ३३ ।।
मम तद्रेतसा तात मर्दितेन मुहुर्मुहुः ।।
अभवन्कणकास्तत्र भूरिशः परमोज्ज्वलाः ।। ३४ ।।
ऋषयो बहवो जाता वालखिल्यास्सहस्रशः ।।
कणकैस्तैश्च वीर्यस्य प्रज्वलद्भिः स्वतेजसा ।। ३५ ।।
अथ ते ह्यृषयस्सर्वे उपतस्थुस्तदा मुने ।।
ममान्तिकं परप्रीत्या तात तातेति चाब्रुवन् ।। ३६।।
ईश्वरेच्छाप्रयुक्तेन प्रोक्तास्ते नारदेन हि ।।
वालखिल्यास्तु ते तत्र कोपयुक्तेन चेतसा ।। ३७ ।।
।। नारद उवाच ।।
गच्छध्वं संगता यूयं पर्वतं गन्धमादनम् ।।
न स्थातव्यम्भवद्भिश्च न हि वोऽत्र प्रयोजनम् ।। ३८ ।।

तत्र तस्वा तपश्चाति भवितारो मुनीश्वराः ।।
सूर्य्यशिष्याश्शिवस्यैवाज्ञया मे कथितन्त्विदम् ।। ३९ ।।
।। ब्रह्मोवाच ।।
इत्युक्तास्ते तदा सर्वे बालखिल्याश्च पर्वतम् ।।
सत्वरम्प्रययुर्नत्वा शंकरं गन्धमादनम् ।। 2.3.49.४० ।।
विष्ण्वादिभिस्तदाभूवं श्वासितोहं मुनीश्वर ।।
निर्भयः परमेशानप्रेरितैस्तैर्महात्मभिः ।। ४१ ।।
अस्तवञ्चापि सर्वेशं शंकरम्भक्तवत्सलम् ।।
सर्वकार्यकरं ज्ञात्वा दुष्टगर्वापहारकम्।।४२।।
देवदेव महादेव करुणासागर प्रभो ।।
त्वमेव कर्ता सर्वस्य भर्ता हर्त्ता च सर्वथा ।।४३।
त्वदिच्छया हि सकलं स्थितं हि सचराचरम्।।
तन्त्यां यथा बलीवर्दा मया ज्ञातं विशेषतः ।।४४।।
इत्येवमुक्त्वा सोहं वै प्रणामं च कृताञ्जलिः ।।
अन्येऽपि तुष्टुवुस्सर्वे विष्ण्वाद्यास्तं महेश्वरम् ।। ४५ ।।
अथाकर्ण्य नुतिं शुद्धां मम दीनतया तदा ।।
विष्ण्वादीनाञ्च सर्वेषां प्रसन्नोऽभून्महेश्वरः ।। ४६ ।।
ददौ सोतिवरं मह्यमभयं प्रीतमानसः ।।
सर्वे सुखमतीवापुरत्यमोदमहं मुने ।। ४७ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे विधिमोहवर्णनं नाम नवचत्वारिंशोऽध्यायः ।।४९।।

# शिवपुराणम्/संहिता २ (रुद्रसंहिता)/खण्डः ३ (पार्वतीखण्डः)/अध्यायः ५०



।। ब्रह्मोवाच।।

ततश्चाहं मुनिगणैश्शेषकृत्यं शिवाज्ञया ।।

अकार्षं नारद प्रीत्या शिवाशिवविवाहतः ।। १ ।।

तयोश्शिरोऽभिषेकश्च बभूवादरतस्ततः।।

ध्रुवस्यदर्शनं विप्राः कारयामासुरादरात।।२।।

हृदयालम्भनं कर्म बभूव तदनन्तरम् ।।

स्वस्तिपाठश्च विप्रेन्द्र महोत्सवपुरस्सरः ।। ३ ।।

शिवाशिरसि सिन्दूरं ददौ शम्भुर्द्विजाज्ञया ।।

तदानीं गिरिजाभिख्याद्भुतावर्ण्या बभूव ह ।।४।।

ततो विप्राज्ञया तौ द्वावेकासनसमास्थितौ ।।

लेभाते परमां शोभां भक्तचित्त मुदावहाम् ।।५।।

ततः स्वस्थानमागत्य संस्रवप्राशनं मुदा ।।

चक्रतुस्तौ निदेशान्मेऽद्भुतलीलाकरौ मुने ।।६।।

इत्थं निवृत्ते विधिवद्याज्ञे वैवाहिके शिवः ।।

ब्रह्मणे पूर्णपात्रं मे ददौ लोककृते प्रभुः ।। ७ ।।

गोदानं विधिवच्छम्भुराचार्याय ददौ ततः ।।

महादानानि च प्रीत्या यानि मङ्गलदानि वै ।। ८ ।।

ततश्शतसुवर्णं च विप्रेभ्यस्स ददौ पृथक्।।

बहुभ्यो रत्नकोटीश्च नानाद्रव्याण्यनेकशः।।९।।

तदानीममरास्सर्वे परे जीवाश्चराचराः।।

मुमुदुश्चेतसातीव जयध्वनिः।।2.3.50.१०।।

मङ्गलध्वनिगानश्च बभूव बहु सर्वतः ।।
वाद्यध्वनिरभूद्रम्यो सर्वानन्दप्रवर्द्धनः ।। ११ ।।
हरिर्मयाथ देवाश्च मुनयश्चापरेऽखिलाः ।।
गिरिमामन्त्र्य सुप्रीत्या स्वस्थानम्प्रययुर्द्रुतम् ।। १२ ।।
तदानीं शैलनगरे स्त्रियश्च मुदिता वरम् ।।
शिवाशिवौ समानीय ययुः कुह वरालयम् ।। १३ ।।
लौकिकाचारमाजह्रुस्ताः स्त्रियस्तत्र चादृताः ।।
महोत्साहो बभूवाथ सर्वतः प्रमुदावहः ।।१४।।
अथ तास्तौ समानीय दम्पती जनशंकरौ।।
वासालयम्महादिव्यं भवाचारं व्यधुर्मुदा ।।१५।।
अथो समीपमागत्य शैलेन्द्रनगरस्त्रियः ।।
निर्वृत्य मङ्गलं कर्म प्रापयन्दम्पती गृहम् ।।१६।।
कृत्वा जयध्वनिं चक्रुर्ग्रन्थिनिर्मोचनादिकम् ।।
सस्मितास्सकटाक्षाश्च पुलकाञ्चितविग्रहाः ।। १७ ।।
वासगेहं सम्प्रविश्य मुमुहुः कामिनीवराः ।।
प्रसंशन्त्यस्स्वभाग्यानि पश्यन्तः परमेश्वरम् ।।१८।।
महासुरूपवेषश्च सर्व लावण्यसंयुतम् ।।
नवीनयौवनस्थञ्च कामिनीचित्तमोहनम् ।।१९।।
ईषद्धास्यप्रसन्नास्यं सकटाक्षं सुसुन्दरम् ।।
सुसूक्ष्मवासो बिभ्राणं नानारत्न विभूषितम् ।। 2.3.50.२० ।।
तदानीन्दिव्यनार्यश्च षोडशारं समाययुः ।।
तौ दम्पती च संद्रष्टुं महादरपुरस्सरम् ।। २१ ।।
सरस्वती च लक्ष्मीश्च सावित्री जाह्नवी तथा ।।
अदितिश्च शची चैव लोपामुद्राप्यरुन्धती ।। २२ ।।
अहल्या तुलसी स्वाहा रोहिणी च वसुन्धरा ।।
शतरूपा च संज्ञा च रतिरेतास्सुरस्त्रियः ।। २३ ।।
देवकन्या नागकन्या मुनिकन्या मनोहराः ।।
तत्र या याः स्थितास्तासां सङ्ख्यां कर्तुं च कः क्षमः ।। २४ ।।

ताभी रत्नासने दत्ते तत्रोवास शिवो मुदा ।।

तमूचुः क्रमतो देव्यस्सुहास मधुरं वचः ।। २५ ।।

सरस्वत्युवाच ।।

प्राप्ता सती महादेवाधुना प्राणाधिका मुदा ।।

दृष्ट्वा प्रियास्यञ्चन्द्राभं सन्तापन्त्यज कामुक ।। २६ ।।

कालं गमय कालेश सतीसंश्लेषपूर्वकम् ।।

विश्लेषस्ते न भविता सर्वकालं ममाश्रिता ।। २७ ।।

लक्ष्मीरुवाच ।।

लज्जां विहाय देवेश सतीं कृत्वा स्ववक्षसि ।।

तिष्ठ ताम्प्रति का लज्जा प्राणा यान्ति यया विना ।। २८ ।।

सावित्र्युवाच ।।

भोजयित्वा सती शम्भो शीघ्रं त्वं भुंक्ष्व मा खिद ।।

तदाचम्य सकर्पूरन्तांबूलं देहि सादरम् ।। २९ ।।

जाह्नव्युवाच ।।

स्वर्णकांतिकरां धृत्वा केशान्मार्जय योषितः ।।

कामिन्यास्स्वामिसौभाग्यसुखं नातः परं भवेत् ।। 2.3.50.३० ।।

अदितिरुवाच ।।

भोजनान्ते शिवः शम्भुं मुखं शुद्ध्यर्थमादरात् ।।

जलं देहि महाप्रीत्या दम्पतिप्रेम दुर्लभम् ।।३१।।

शच्युवाच ।।

कृत्वा विलापं यद्धेतोः शिवां कृत्वा च वक्षसि ।।

यो बभ्रामानिशं मोहात् का लज्जा ते प्रियाम्प्रति ।।३२।।

लोपामुद्रोवाच ।।

व्यवहारोऽस्ति च स्त्रीणां भुक्त्वा वासगृहे शिव ।।

दत्त्वा शिवायै ताम्बूलं शयनं कर्तुमर्हसि ।।३३।।

अरुन्धत्युवाच ।।

मया दत्तां सतीमेनां तुभ्यन्दातुमनीप्सिताम्।।

विविधं बोधयित्वेमां सुरतिं कर्तुमर्हसि ।।३४।।

अहल्योवाच ।।

वृद्धावस्थाम्परित्यज्य ह्यतीव तरुणो भव।।

येन मेनानुमन्येत त्वां सुतार्पितमानसा।।३५।।

तुलस्युवाच ।।

सती त्वया परित्यक्ता कामो दग्धः पुरा कृतः ।।

कथन्तदा वसिष्ठश्च प्रभो प्रस्थापितोऽधुना ।।३६।।

स्वाहोवाच ।।

स्थिरो भव महादेव स्त्रीणां वचसि साम्प्रतम् ।।

विवाहे व्यवहारोऽस्ति पुरन्ध्रीणां प्रगल्भता ।।३७।।

रोहिण्युवाच ।।

कामम्पूरय पार्वत्याः कामशास्त्रविशारद ।।

कुरु पारं स्वयं कामी कामिनीकामसागरम् ।। ३८ ।।

।। वसुन्धरोवाच ।।

जानासि भावं भावज्ञ कामार्तानां च योषिताम्।।

न च स्वं स्वामिनं शम्भो ईश्वरं पाति सन्ततम्।३९

शतरूपोवाच ।।

भोगं दिव्यं विना भुक्त्वा न हि तुष्येत्क्षुधातुरः ।।

येन तुष्टिर्भवेच्छंभो तत्कर्तुमुचितं स्त्रियाः ।।2.3.50.४०।।

।। संज्ञोवाच ।।

तूर्णं प्रस्थापय प्रीत्या पार्वत्या सह शङ्करम् ।।

रत्नप्रदीपन्ताम्बूलं तल्पं निर्माय निर्जने ।। ४१ ।।

।। ब्रह्मोवाच ।।

स्त्रीणान्तद्वचनं श्रुत्वा ता उवाच शिवः स्वयम् ।।

निर्विकारश्च भगवान्योगीन्द्राणां गुरोर्गुरुः ।।४२।।

शंकर उवाच ।।

देव्यो न ब्रूत वचनमेवंभूतं ममान्तिकम् ।।

जगतां मातरः साध्व्यः पुत्रे चपलता कथम् ।।४३।।

ब्रह्मोवाच ।।

शङ्करस्य वचः श्रुत्वा लज्जितास्सुरयोषितः ।।
बभूवुः सम्भ्रमात्तूष्णीं चित्रपुत्तलिका यथा ।।४४।।
भुक्त्वा मिष्टान्नमाचम्य महेशो हृष्टमानसः ।।
सकर्पूरं च तांबूलं बुभुजे भार्य या सह ।।४५।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीय पार्वतीखण्डे परिहासवर्णनंनाम पञ्चाशत्तमोऽध्यायः ।।५०।।

।। ब्रह्मोवाच ।।
तस्मिन्नवसरे ज्ञात्वानुकूलं समयं रतिः ।।
सुप्रसन्ना च तम्प्राह शङ्करं दीनवत्सलम् ।। १ ।।
रतिरुवाच ।।
गृहीत्वा पार्वतीं प्राप्तं सौभाग्यमतिदुर्लभम् ।।
किमर्थं प्राणनाथो मे निस्स्वार्थं भस्मसात्कृतः ।। २ ।।
जीवयात्रा पतिं मे हि कामव्या पारमात्मनि ।।
कुरु दूरं च सन्तापं समविश्लेषहेतुकम् ।।३।।
विवाहोत्सव एतस्मिन् सुखिनो निखिला जनाः ।।
अहमेका महेशान दुःखिनी स्वपतिम्विना ।।४।।
सनाथां कुरु मान्देव प्रसन्नो भव शङ्कर ।।
स्वोक्तं सत्यम्विधेहि त्वं दीनबन्धो पर प्रभो ।। ५ ।।
त्वाम्विना कस्समर्थोत्र त्रैलोक्ये सचराचरे ।।
नाशने मम दुःखस्य ज्ञात्वेति करुणां कुरु ।।६।।
सोत्सवे स्वविवाहेऽस्मिन्सर्वानन्द प्रदायिनी ।।
सोत्सवामपि मां नाथ कुरु दीनकृपाकर ।। ७ ।।
जीविते मम नाथे हि पार्वत्या प्रियया सह ।।
सुविहारः प्रपूर्णश्च भविष्यति न संशयः ।। ८ ।।
सर्वं कर्तुं समर्थोसि यतस्त्वं परमेश्वरः ।।
किम्बहूक्त्यात्र सर्वेश जीवयाशु पतिं मम ।। ९ ।।
।। ब्रह्मोवाच ।।
तदित्युक्त्वा कामभस्म ददौ सग्रन्धिबन्धनम् ।।
रुरोद पुरतश्शम्भोर्नाथ नाथेत्युदीर्य्य च ।। 2.3.51.१० ।।
रतिरोदनमाकर्ण्य सरस्वत्यादयः स्त्रियः ।।
रुरुदुस्सकला देव्यः प्रोचुर्दीनतरं वचः ।।११।।
।। देव्य ऊचुः ।।
भक्तवत्सलनामा त्वं दीनबन्धुर्दयानिधिः ।।
काम जीवय सोत्साहां रति कुरु नमोऽस्तु ते ।।१२।।
ब्रह्मोवाच ।।
इति तद्वचनं श्रुत्वा प्रसन्नोऽभून्महेश्वरः।।
कृपादृष्टिं चकाराशु करुणासागरः प्रभुः ।। १३ ।।
सुधादृष्ट्या शूलभृतो भस्मतो निर्गतः स्मरः ।।
तद्रूपवेषचिह्नात्मा सुन्दरोद्भुतमूर्तिमान् ।।१४।।

तद्रूपश्च तदाकारसंस्मितं सधनुश्शरम् ।।
दृष्ट्वा पतिं रतिस्तं च प्रणनाम महेश्वरम् ।।१५।।
कृतार्थाभूच्छिवं देवं तुष्टाव च कृताञ्जलिः ।।
प्राणनाथप्रदं पत्या जीवितेन पुनःपुनः ।।१६।।
कामस्य स्तुतिमाकर्ण्य सनारीकस्य शङ्करः ।।
प्रसन्नोऽभवदत्यंतमुवाच करुणार्द्रधीः ।। १७ ।।
शङ्कर उवाच ।।
प्रसन्नोहं तव स्तुत्या सनारीकस्य चित्तज ।।
स्वयंभव वरम्ब्रूहि वाञ्छितं तद्ददामि ते ।। १८ ।।
ब्रह्मोवाच ।।
इति शम्भुवचः श्रुत्वा महानदन्स्स्मरस्ततः ।।
उवाच साञ्जलिर्नम्रो गद्गदाक्षरया गिरा ।। १९ ।।
।। काम उवाच ।।
देवदेव महादेव करुणासागर प्रभो ।।
यदि प्रसन्नस्सर्वेशः ममानन्दकरो भव ।। 2.3.51.२० ।।
क्षमस्व मेऽपराधं हि यत्कृतश्च पुरा प्रभो ।।
स्वजनेषु पराम्प्रीतिं भक्तिन्देहि स्वपादयोः ।। २१ ।।
ब्रह्मोवाच ।।
इत्याकर्ण्य स्मरवचः प्रसन्नः परमेश्वरः
ॐ मित्युक्त्वाऽब्रवीत्तं वै विहसन्करुणानिधिः ।। २२ ।।
।। ईश्वर उवाच ।।
हे कामाहं प्रसन्नोऽस्मि भयन्त्यज महामते ।।
गच्छ विष्णुसमीपञ्च बहिस्थाने स्थितो भव ।। २३ ।।
।। ब्रह्मोवाच ।। ।।
तच्छ्रुत्वा शिरसा नत्वा परिक्रम्य स्तुवन्विभुम् ।।
बहिर्गत्वा हरिन्देवान्प्रणम्य समुपास्त सः ।। २४ ।।
कामं सम्भाष्य देवाश्च ददुस्तस्मै शुभाशिषम् ।।
विष्ण्वादयः प्रसन्नास्ते प्रोचुः स्मृत्वा शिवं हृदि ।। २५ ।।
।। देवा ऊचुः ।।
धन्यस्त्वं स्मर सन्दग्धः शिवेनानुग्रहीकृतः ।।
जीवयामास सत्त्वांशकृपादृष्ट्या खिलेश्वरः ।। २६ ।।
सुखदुःखदो न चान्योऽस्ति यतस्स्वकृतभृक् पुमान् ।।
काले रक्षा विवाहश्च निषेकः केन वार्यते ।। २७ ।

।। ब्रह्मोवाच ।।

इत्युक्त्वा ते च सम्मान्य तं सुखेनामरास्तदा ।।

सन्तस्थुस्तत्र विष्ण्वाद्यास्सर्वे लब्धमनोरथाः ।। २८ ।।

सोपि प्रमुदितस्तत्र समुवास शिवाज्ञया ।।

जयशब्दो नमश्शब्दस्साधुशब्दो बभूव ह ।।२९।।

ततश्शम्भुर्वासगेहे वामे संस्थाप्य पार्वतीम् ।।

मिष्टान्नं भोजयामास तं च सा च मुदान्विता ।। 2.3.51.३० ।।

अथ शम्भुर्भवाचारी तत्र कृत्यम्विधाय तत् ।।

मेनामामंत्र्य शैलं च जनवासं जगाम सः ।।३१।।

महोत्सवस्तदा चासीद्वेदध्वनिरभून्मुने ।।

वाद्यानि वादयामासुर्जनाश्चतुर्विधानि च ।। ३२ ।।

शम्भुरागत्य स्वस्थानं ववन्दे च मुनींस्तदा ।।

हरिं च मां भवाचाराद्वन्दितोऽभूत्सुरादिभिः ।। ३३ ।।

जयशब्दो बभूवाथ नम श्शब्दस्तथैव च ।।

वेदध्वनिश्च शुभदः सर्वविघ्नविदारणः ।। ३४ ।।

अथ विष्णुरहं शक्रस्सर्वे देवाश्च सर्षयः ।।

सिद्धा उपसुरा नागास्तुष्टुवुस्ते पृथक्पृथक् ।। ३५ ।।

देवा ऊचुः ।।

जय शम्भोऽखिलाधार जय नाम महेश्वर ।।

जय रुद्र महादेव जय विश्व म्भर प्रभो ।। ३६ ।।

जय कालीपते स्वामिञ्जयानन्दप्रवर्धक ।।

जय त्र्यम्बक सर्वेश जय मायापते विभो ।। ३७ ।।

जय निर्गुण निष्काम कारणातीत सर्वग ।।

जय लीलाखिलाधार धृतरूप नमोऽस्तु ते।।३८।।

जय स्वभक्तसत्कामप्रदेश करुणाकर।।

जय सानन्दसद्रूप जय मायागुणाकृते ।।३९।।

जयोग्र मृड सर्वात्मन् दीनबन्धो दयानिधे ।।

जयाविकार मायेश वाङ्मनोतीतविग्रह ।।2.3.51.४०।।

ब्रह्मोवाच ।।

इति स्तुत्वा महेशानं गिरिजानायकम्प्रभुम् ।।

सिषेविरे परप्रीत्या विष्ण्वाद्यास्ते यथोचितम् ।। ४१ ।।

अथ शम्भुर्महेशानो लीलात्ततनुरीश्वरः ।।

ददौ मानवरन्तेषां सर्वेषान्तत्र नारद।।४२।।

विष्ण्वाद्यास्तेऽखिलास्तात प्राप्याज्ञाम्परमेशितुः।।
अतिहृष्टाः प्रसन्नास्याः स्वस्थानञ्जग्मुरादृताः ।। ४३ ।।
इति श्रीशिवमहापुराणे ब्रह्मनारदसम्वादे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे कामसंजीवनवर्णनं नामैकपञ्चाशत्तमोऽध्यायः।।५१।।

ब्रह्मोवाच ।।
अथ शैलवरस्तात हिमवान्भाग्यसत्तमः ।।
प्राङ्गणं रचयामास भोजनार्थं विचक्षणः ।।१।।
मार्जनं लेपनं सम्यक्कारयामास तस्य सः ।।
स सुगन्धैरलञ्चक्रे नानावस्तुभिरादरात् ।।२।।
अथ शैलस्सुरान्सर्वानन्यानपि च सेश्वरान् ।।
भोजनायाह्वयामास पुत्रैश्शैलैः परैरपि ।।३।।
शैलाह्वानमथाकर्ण्य स प्रभुस्साच्युतो मुने ।।
सर्वैस्सुरादिभिस्तत्र भोजनाय ययौ मुदा।।४।।
गिरिः प्रभुं च सर्वांस्तान्सुसत्कृत्य यथाविधि ।।
मुदोपवेशयामास सत्पीठेषु गृहान्तरे ।।५।।
नानासुभोज्यवस्तूनि परिविष्य च तत्पुनः ।।
साञ्चलिर्भोजनायाज्ञां चक्रे विज्ञप्तिमानतः।।६।।
अथ सम्मानितास्तत्र देवा विष्णुपुरोगमाः ।।
सदाशिवं पुरस्कृत्य बुभुजुस्सकलाश्च ते ।।७।।
तदा सर्वे हि मिलिता ऐकपद्येन सर्वशः ।।
पंक्तिभूताश्च बुभुजु र्विहसन्तः पृथक्पृथक् ।।८।।
नन्दिभृंगिवीरभद्रवीरभद्रगणाः पृथक्।।
बुभुजुस्ते महाभागाः कुतूहलसमन्विताः ।।९।।
देवास्सेन्द्रा लोकपाला नानाशोभासमन्विताः ।।
बुभुजुस्ते महाभागा नानाहास्यरसैस्सह ।।2.3.52.१०।।
सर्वे च मुनयो विप्रा भृग्वाद्या ऋषयस्तथा।।
बुभुजु प्रीतितस्सर्वे पृथक् पंक्तिगतास्तदा।।११।।
तथा चण्डीगणास्सर्वे बुभुजुः कृतभाजनाः ।।
कुतूहलं प्रकुर्वन्तो नानाहास्यकरा मुदा।।१२।।
एवन्ते भुक्तवन्तश्चाचम्य सर्वे मुदान्विताः ।।
विश्रामार्थं गताः प्रीत्या विष्ण्वाद्यास्स्वस्वमाश्रमम् ।। १३ ।।
मेनाज्ञया स्त्रियस्साध्व्य श्शिवं सम्प्रार्थ्य भक्तितः ।।
गेहे निवासयामासुर्वासाख्ये परमोत्सवे ।। १४ ।।
रत्नसिंहासने शम्भुर्मेनादत्ते मनोहरे ।।
सन्निधाय मुदा युक्तो ददृशे वासमन्दिरम्।।१५।।
रत्नप्रदीपशतकैर्ज्वलद्भिर्ज्वलितं श्रिया ।।
रत्नपात्रघटाकीर्णं मुक्तामणिविराजितम्।।१६।।

रत्नदर्प्पणशोभाढ्यं मण्डितं श्वेतचामरैः।।
मुक्तामणिसुमालाभिर्वेष्टितं परमर्द्धिमत्।।१७।।
अनूपमम्महादिव्यं विचित्रं सुमनोहरम्।।
चित्ताहलादकरं नानारचनारचितस्थलम् ।।१८।।
शिवदत्तवरस्यैव प्रभावमतुलम्परम् ।।
दर्शयन्तं समुल्लासि शिवलोकाभिधानकम् ।।१९।।
नानासुगन्धसद्द्रव्यैर्वासितं सुप्रकाशकम् ।।
चन्दनागुरुसंयुक्तं पुष्पशय्यासमन्वितम् ।।2.3.52.२०।।
नानाचित्रविचित्राढ्यं निर्मितं विश्वकर्म्मणा ।।
रत्नेन्द्रसाररचितैराचितं हारकैर्वरैः ।। २१ ।।
कुत्रचित्सुरनिर्माणं वैकुण्ठं सुमनोहरम् ।।
कुत्रचिच्च ब्रह्मलोकं लोकपालपुरं क्वचित् ।। २२ ।।
कैलासं कुत्रचिद्रम्यं कुत्रचिच्छक्रमन्दिरम् ।।
कुत्रचिच्छिवलोकं च सर्वोपरि विराजितम् ।। २३ ।।
एतादृशगृहं सर्वदृष्टाश्चर्य्यं महेश्वरः ।।
प्रशंसन् हिमशैलेशं परितुष्टो बभूव ह ।। २४ ।।
तत्रातिरमणीये च रत्नपर्य्यंक उत्तमे ।।
अशयिष्ट मुदा युक्तो लीलया परमेश्वरः ।। २५ ।।
हिमाचलश्च स्वभ्रातॄन्भोजयामास कृत्स्नशः ।।
सर्वानन्यांश्च सुप्रीत्या शेषकृत्यं चकार ह ।। २६ ।।
एवं कुर्वति शैलेशे स्वपति प्रेष्ठ ईश्वरे ।।
व्यतीता रजनी सर्वा प्रातःकालो बभूव ह ।। २७ ।।
अथ प्रभातकाले च धृत्युत्साहपरायणाः ।।
नानाप्रकारवाद्यानि वादयाञ्चक्रिरे जनाः ।। २८ ।।
सर्वे सुरास्समुत्तस्थुर्विष्ण्वाद्यास्सुमुदान्विताः ।।
स्वेष्टं संस्मृत्य देवेशं सज्जिभूतास्ससंभ्रमाः ।। २९ ।।
स्ववाहनानि सज्जानि कैलासङ्गन्तुमुत्सुकाः ।।
कृत्वा सम्प्रेषयामासुर्धर्मं शिवसमीपतः ।। 2.3.52.३० ।।
वासगेहमथागत्य धर्मो नारायणाज्ञया ।।
उवाच शंकरं योगी योगीशं समयोचितम् ।। ३१ ।।
।। धर्म उवाच ।।
उत्तिष्ठोत्तिष्ठ भद्रन्ते भव नः प्रमथाधिप ।।
जनावासं समागच्छ कृतार्थं कुरु तत्र तान् ।। ३२ ।।

।। ब्रह्मोवाच ।।

इति धर्मवचः श्रुत्वा विजहास महेश्वरः ।।
ददर्श कृपया दृष्ट्या तल्पमुज्झाञ्चकार ह ।। ३३ ।।
उवाच विहसन् धर्मं त्वमग्रे गच्छ तत्र ह।।
अहमप्यागमिष्यामि द्रुतमेव न संशयः ।।३४।।

।। ब्रह्मोवाच ।।

इत्युक्तश्शंकरेणाथ जनावासं जगाम सः।।
स्वयङ्गन्तुमना आसीत्तत्र शम्भुरपि प्रभुः।।३५।
तज्ज्ञात्वा स्त्रीगणस्सोसौ तत्रागच्छन्महोत्सवः ।।
चक्रे मंगलगानं हि पश्यन्शम्भुपदद्वयम् ।।३५।।
अथ शंम्भुर्भवाचारी प्रातःकृत्यं विधाय च ।।
मेनामान्त्र्य कुध्रं च जनावासं जगाम सः ।।३७।।
महोत्सवस्तदा चासीद्वेदध्वनिरभून्मुने ।।
वाद्यानि वादयामासुर्जनाश्चातुर्विधानि च ।।३८।।
शम्भुरागत्य स्वस्थानं ववन्दे च मुनींस्तदा ।।
हरिं च मां भवाचारात् वन्दितोऽभूत्सुरादिभिः ।।३९।।
जयशब्दो बभूवाथ नमश्शब्दस्तथैव च ।।
वेदध्वनिश्च शुभदो महाकोलाहलोऽभवत् ।।2.3.52.४०।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे वरवर्गभोजनशिवशयनवर्णनं नाम द्विपञ्चाशत्तमोऽध्यायः ।। ५२ ।।

ब्रह्मोवाच ।।
अथ विष्ण्वादयो देवा मुनयश्च तपोधनाः ।।
कृत्वावश्यककर्माणि यात्रां सन्तेनिरे गिरेः ।।१।।
ततो गिरिवरः स्नात्वा स्वेष्टं सम्पूज्य यत्नतः ।।
पौरबन्धून्समाहूय जनवासं ययौ मुदा ।। २ ।।
तत्र प्रभुम्प्रपूज्याथ चक्रे सम्प्रार्थनां मुदा ।।
कियद्दिनानि सन्तिष्ठ मद्गेहे सकलैस्सह ।। ३ ।।
विलोकनेन ते शम्भो कृतार्थोहं न संशयः ।।
धन्यश्च यस्य मद्गेहे आयातोऽसि सुरैस्सह ।। ४ ।।
ब्रह्मोवाच ।।
इत्युक्त्वा बहु शैलेशः करौ बद्ध्वा प्रणम्य च ।।
प्रभुन्निमन्त्रयामास सह विष्णुसुरादिभिः ।।५।।
अथ ते मनसा गत्वा शिव संयुतमादरात् ।।
प्रत्यूचुर्मुनयो देवा हृष्टा विष्णुसुरादिभिः ।। ६ ।।
।। देवा ऊचुः ।।
धन्यस्त्वं गिरिशार्दूल तव कीर्तिर्महीयसी ।।
त्वत्समो न त्रिलोकेषु कोपि पुण्यतमो जनः ।। ७ ।।
यस्य द्वारि महेशानः परब्रह्म सतां गतिः ।।
समागतस्सदासैश्च कृपया भक्तवत्सलः ।। ८ ।।
जनावासोतिरम्यश्च सम्मानो विविधः कृतः ।।
भोजनानि त्वपूर्वाणि न वर्ण्यानि गिरीश्वर ।। ९ ।।
चित्रन्न खलु तत्रास्ति यत्र देवी शिवाम्बिका ।।
परिपूर्णमशेषञ्च यवं धन्या यदागताः ।। 2.3.53.१० ।।
।। ब्रह्मोवाच ।।
इत्थम्परस्परन्तत्र प्रशंसाभवदुत्तमा ।।
उत्सवो विविधो जातो वेदसाधुजयध्वनिः ।। ११ ।।
अभून्मङ्गलगानञ्च ननर्ताप्सरसांगणः ।।
नुतिञ्चक्रुर्मागधाद्या द्रव्यदानमभूद्बहु ।। १२ ।।
तत आमन्त्रय देवेशं स्वगेहमगमद्गिरिः ।।
भोजनोत्सवमारेभे नानाविधिविधानतः ।। १३ ।।
भोजनार्थं प्रभुम्प्रीत्यानयामास यथोचितम् ।।
परिवारसमेतं च सकुतूहलमीश्वरम् ।। १४ ।।
प्रक्षाल्य चरणौ शम्भोर्विष्णोर्मम वरादरात् ।।

सर्वेषाममराणाञ्च मुनीनाञ्च यथार्थतः ।। १५ ।।
परेषाञ्च गतानाञ्च गिरीशो मण्डपान्तरे ।।
आसयामास सुप्रीत्या तांस्तान्बन्धुभिरन्वितः ।।१६।।
सुरसैर्विविधान्नैश्च तर्पयामास तान्गिरिः ।।
बुभुजुर्निखिलास्ते वै शम्भुना विष्णुना मया ।।१७।।
तदानीम्पुरनार्यश्च गालीदानम्व्यधुर्मुदा ।।
मृदुवाण्या हसन्त्यश्च पश्यन्त्यो यत्नतश्च तान् ।।१८।।
ते भुक्त्वाचम्य विधिवद्गिरिमामन्त्र्य नारद ।।
स्वस्थानम्प्रययुस्सर्वे मुदितास्तृप्तिमागताः ।।१९।।
इत्थन्तृतीये घस्रेऽपि मानितास्तेऽभवन्मुने ।।
गिरीश्वरेण विधिवद्दानमानादरादिभिः ।।2.3.53.२०।।
चतुर्थे दिवसे प्राप्ते चतुर्थीकर्म शुद्धितः ।।
बभूव विधिवद्येन विना खण्डित एव सः ।। २१ ।।
उत्सवो विविधश्चासीत्साधुवादजयध्वनिः ।।
बहुदानं सुगानञ्च नर्त्तनम्विविधन्तथा ।। २२ ।।
पञ्चमे दिवसे प्राप्ते सर्वे देवा मुदान्विताः ।।
विज्ञप्तिञ्चक्रिरे शैलं यात्रार्थमतिप्रेमतः ।। २३ ।।
तदाकर्ण्य गिरीशश्चोवाच देवान् कृताञ्जलिः ।।
कियद्दिनानि तिष्ठन्तु कृपाङ्कुर्वन्तु मां सुराः ।।२४।।
इत्युक्त्वा स्नेहतस्ताँश्च प्रभुम्विष्णुञ्च माम्परान् ।।
वासयामास दिवसान् बहून्नित्यं समादरात् ।।२९।।
इत्थम्व्यतीयुर्दिवसा बहवो वसतां च तत् ।।
सप्तर्षीन्प्रेषयामासुर्गिरीशान्ते ततस्सुराः ।। २६ ।।
ते तं सम्बोधयामासुर्मेनाञ्च समयोचितम् ।।
शिवतत्त्वम्परम्प्रोचुः प्रशंसन्विधिवन्मुदा ।। २७ ।।
अङ्गीकृतं परेशेन तत्तद्बोधनतो मुने ।।
यात्रार्थमगमच्छम्भुश्शैलेशं सामरादिकः ।। २८ ।।
यात्राङ्कुर्वति देवेशे स्वशैलं सामरे शिवे ।।
उच्चै रुरोद सा मेना तमुवाच कृपानिधिम् ।। २९ ।।
मेनोवाच ।।
कृपानिधे कृपाङ्कृत्वा शिवां सम्पालयिष्यसि ।।
सहस्रदोषं पार्वत्या आशुतोषः क्षमिष्यसि ।। 2.3.53.३० ।।
त्वत्पादाम्बुजभक्ता च मद्वत्सा जन्मजन्मनि ।।

स्वप्ने ज्ञाने स्मृतिर्नास्ति महादेवं प्रभुम्बिना ।। ३१ ।।
त्वद्भक्तिश्रुतिमात्रेण हर्षाश्रुपुलकान्विता ।।
त्वन्निन्दया भवेन्मौना मृत्युंजय मृता इव ।।३२।।
ब्रह्मोवाच ।।
इत्युक्त्वा मेनका तस्मै समर्प्य स्वसुतान्तदा ।।
अत्युच्चै रोदनङ्कृत्वा मूर्च्छामाप तयोः पुरः।।३३।।
अथ मेनाम्बोधयित्वा तामामन्त्र्य गिरिस्तथा।।
चकार यात्रान्देवैश्च महोत्सवपुरस्सरम् ।।३४।।
अथ ते निर्जरास्सर्वे प्रभुणा स्वगणैस्सह ।।
यात्राम्प्रचक्रिरे तूष्णीं गिरिम्प्रति शिवं दधुः ।। ।।३५।।
हिमाचलपुरीबाह्योपवने हर्षितास्सुराः।।
सेश्वरास्सोत्सवास्तस्थुः पर्यैषन्त शिवागमम्।।३६।।
इत्युक्ता शिवसद्यात्रा देवैस्सह मुनीश्वर।।
आकर्णय शिवयात्रां विरहोत्सवसंयुताम् ।। ३७ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वती खण्डे शिवयात्रावर्णनं नाम त्रिपञ्चाशत्तमोऽध्यायः ।। ५३ ।।

ब्रह्मोवाच ।।
अथ सप्तर्षयस्ते च प्रोचुर्हिमगिरीश्वरम् ।।
कारय स्वात्मजा देव्या यात्रामद्योचितां गिरे ।। १ ।।
इति श्रुत्वा गिरीशो हि बुद्ध्वा तद्विरहम्परम् ।।
विषण्णोभून्महाप्रेम्णा कियत्कालं मुनीश्वर ।। २ ।।
कियत्कालेन सम्प्राप्य चेतनां शैलराट् ततः ।।
तथास्त्विति गिरामुक्त्वा मेनां सन्देशमब्रवीत् ।। ३ ।।
शैलसन्देशमाकर्ण्य हर्षशोकवशा मुने ।।
मेना संयापयामास कर्त्तुमासीत्समुद्यता।।४।।
श्रुतिस्वकुलजाचारं चचार विधिवन्मुने ।।
उत्सवम्विविधन्तत्र सा मेना क्षितिभृत्प्रिया ।।५।।
गिरिजाम्भूषयामास नानारत्नांशुकैर्वरैः।।
द्वादशाभरणैश्चैव शृंगारैर्नृपसम्मितैः ।। ६ ।।
मेनामनोगम्बुद्ध्वा साध्व्येका द्विजकामिनी ।।
गिरिजां शिक्षयामास पातिव्रत्यव्रतम्परम् ।। ७ ।।
।। द्विजपत्न्युवाच ।।
गिरिजे शृणु सुप्रीत्या मद्वचो धर्मवर्द्धनम् ।।
इहामुत्रानन्दकरं शृण्वतां च सुखप्रदम् ।। ८ ।।
धन्या पतिव्रता नारी नान्या पूज्या विशेषतः ।।
पावनी सर्वलोकानां सर्वपापौघनाशिनी ।। ९ ।।
सेवते या पतिम्प्रेम्णा परमेश्वरवच्छिवे ।।
इह भुक्त्वाखिलाम्भोगान न्ते पत्या शिवां गतिम् ।। 2.3.54.१० ।।
पतिव्रता च सावित्री लोपामुद्रा ह्यरुन्धती ।।
शाण्डिल्या शतरूपानुसूया लक्ष्मीस्स्वधा सती ।। ११ ।।
संज्ञा च सुमतिश्श्रद्धा मेना स्वाहा तथैव च ।।
अन्या बह्व्योऽपि साध्व्यो हि नोक्ता विस्तरजाद्भयात् ।। १२ ।।
पातिव्रत्यवृषेणैव ता गतास्सर्वपूज्यताम् ।।
ब्रह्मविष्णुहरैश्चापि मान्या जाता मुनीश्वरैः ।। १३ ।।
सेव्यस्त्वया पतिस्तस्मात्सर्वदा शङ्करः प्रभुः ।।
दीनानुग्रहकर्ता च सर्वसेव्यस्सतां गतिः ।। १४ ।।
महान्पतिव्रताधर्म्मश्श्रुतिस्मृतिषु नोदितः ।।
यथैष वर्ण्यते श्रेष्ठो न तथान्योऽस्ति निश्चितम् ।। १५ ।।
भुंज्याद्भुक्ते प्रिये पत्यौ पातिव्रत्यपरायणा ।।

तिष्ठेत्तस्मिंञ्छिवे नारी सर्वथा सति तिष्ठति ।। १६ ।।
स्वप्यात्स्वपिति सा नित्यं बुध्येत्तु प्रथमं सुधीः ।।
सर्वदा तद्धितं कुर्यादकैतवगतिः प्रिया ।।१७।।
अनलंकृतमात्मानन्दर्शयेन्न क्वचिच्छिवे ।।
कार्यार्थम्प्रोषिते तस्मिन्भवेन्मण्डनवर्जिता ।। १८ ।।
पत्युर्नाम न गृह्णीयात् कदाचन पतिव्रता ।।
आक्रुष्टापि न चाक्रोशेत्प्रसीदेत्ताडितापि च ।।
हन्यतामिति च ब्रूयात्स्वामिन्निति कृपां कुरु ।। १९ ।।
आहूता गृह कार्याणि त्यक्त्वा गच्छेत्तदन्तिकम् ।।
सत्वरं साञ्जलिः प्रीत्यां सुप्रणम्य वदेदिति ।। 2.3.54.२० ।।
किमर्थं व्याहृता नाथ स प्रसादो विधीयताम् ।।
तदादिष्टा चरेत्कर्म सुप्रसन्नेन चेतसा ।। २१ ।।
चिरन्तिष्ठेन्न च द्वारे गच्छेन्नैव परालये ।।
आदाय तत्त्वं यत्किंचित्कस्मै चिन्नार्पयेत्क्वचित् ।। २२ ।।
पूजोपकरणं सर्वमनुक्ता साधयेत्स्वयम् ।।
प्रतीक्षमाणावसरं यथाकालोचितं हितम् ।। २३ ।।
न गच्छेत्तीर्थयात्रां वै पत्याज्ञां न विना क्वचित् ।।
दूरतो वर्जयेत्सा हि समाजोत्सवदर्शनम् ।। २४ ।।
तीर्थार्थिनी तु या नारी पतिपादोदकम्पिबेत् ।।
तस्मिन्सर्वाणि तीर्थानि क्षेत्राणि च न संशयः ।। २५ ।।
भुंज्यात्सा भर्तुरुच्छिष्टमिष्टमन्नादिकं च यत् ।।
महाप्रसाद इत्युक्त्वा पतिदत्तम्पतिव्रता।।२६।।
अविभज्य न चाश्नीयाद्देव पित्रतिथिष्वपि।।
परिचारकवर्गेषु गोषु भिक्षुकुलेषु च ।।२७।
संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी ।।
भवेत्सा सर्वदा देवी पतिव्रतपरायणा।।२८।।
कुर्यात्पत्यननुज्ञाता नोपवासव्रतादिकम् ।।
अन्यथा तत्फलं नास्ति परत्र नरकम्व्रजेत् ।। २९ ।।
सुखपूर्वं सुखासीनं रममाणं यदृच्छया ।।
आन्तरेष्वपि कार्येषु पतिं नोत्थापयेत्क्वचित् ।। 2.3.54.३० ।।
क्लीबम्वा दुरवस्थम्वा व्याधितं वृद्धमेव च ।।
सुखितं दुःखितं वापि पतिमेकं न लंघयेत् ।। ३१ ।।
स्त्रीधर्मिणी त्रिरात्रं च स्वमुखं नैव दर्शयेत् ।।

स्ववाक्यं श्रावयेन्नापि यावत्स्नानान्न शुध्यति ।।३२।।
सुस्नाता भर्तृवदनमीक्षेतान्यस्य न क्वचित् ।।
अथवा मनसि ध्यात्वा पतिम्भानुम्विलोकयेत।।३३।।
हरिद्राकुङ्कुमं चैव सिन्दूरं कज्जलादिकम्।।
कूर्पासकञ्च ताम्बूलं मांगल्याभरणादिकम् ।।३४।।
केशसंस्कारकबरीकरकर्णादिभूषणम् ।।
भर्तुरायुष्यमिच्छन्ती दूरयेन्न पतिव्रता ।।३५।।
न रजक्या न बन्धक्या तथा श्रवणया न च ।।
न च दुर्भगया क्वापि सखित्वं कारयेत्क्वचित्।।३६।।
पतिविद्वेषिणीं नारीं न सा संभाषयेत्क्वचित् ।।
नैकाकिनी क्वचित्तिष्ठेन्नग्ना स्नायान्न च क्वचित् ।।३७।।
नोलूखले न मुसले न वर्द्धन्यां दृषद्यपि ।।
न यंत्रके न देहल्यां सती च प्रवसेत्क्वचित् ।। ३८ ।।
विना व्यवायसमयं प्रागल्भ्यं नाचरेत्क्वचित् ।।
यत्रयत्र रुचिर्भर्तुस्तत्र प्रेमवती भवेत् ।।३९।।
हृष्टाहृष्टे विषण्णा स्याद्विषण्णास्ये प्रिये प्रिया ।।
पतिव्रता भवेद्देवी सदा पतिहितैषिणी।।2.3.54.४०।।
एकरूपा भवेत्पुण्या संपत्सु च विपत्सु च।।
विकृतिं स्वात्मनः क्वापि न कुर्याद्धैर्य्यधारिणी ।।४१।।
सर्पिर्लवणतैलादिक्षयेपि च पतिव्रता।।
पतिं नास्तीति न ब्रूयादायासेषु न योजयेत् ।।४२।।
विधेर्विष्णोर्हराद्वापि पतिरेकोधिको मतः ।।
पतिव्रताया देवेशि स्वपतिश्शिव एव च ।। ४३ ।।
व्रतोपवासनियमम्पतिमुल्लंघ्य या चरेत् ।।
आयुष्यं हरते भर्तुर्मृता निरयमृच्छति ।। ४४ ।।
उक्ता प्रत्युत्तरन्दद्याद्या नारी क्रोधतत्परा ।।
सरमा जायते ग्रामे शृगाली निर्जने वने ।। ४५ ।।
उच्चासनं न सेवेत न व्रजेद्दुष्टसन्निधौ ।।
न च कातरवाक्यानि वदेन्नारी पतिं क्वचित् ।। ४६ ।।
अपवादं न च ब्रूयात्कलहं दूरतस्त्यजेत् ।।
गुरूणां सन्निधौ क्वापि नोच्चैर्ब्रूयान्न वै हसेत् ।। ४७ ।।
बाह्यादायान्तमालोक्य त्वरितान्नजलाशनैः ।।
ताम्बूलैर्वसनैश्चापि पादसम्वाहनादिभिः ।। ४८ ।।

तथैव चाटुवचनैः स्वेदसन्नोदनैः परैः ।।
या प्रियं प्रीणयेत्प्रीता त्रिलोकी प्रीणता तया ।। ४९ ।।
मितन्ददाति जनको मितं भ्राता मितं सुतः ।।
अमितस्य हि दातारं भर्तारम्पूजयेत्सदा ।। 2.3.54.५० ।।
भर्ता देवो गुरुर्भर्ता धर्मतीर्थव्रतानि च ।।
तस्मात्सर्वम्परित्यज्य पतिमेकं समर्चयेत् ।। ५१ ।।
या भर्तारम्परित्यज्य रहश्चरति दुर्मतिः ।।
उलूकी जायते क्रूरा वृक्ष कोटरशायिनी ।। ५२ ।।
ताडिता ताडितुं चेच्छेत्सा व्याघ्री वृषदंशिका ।।
कटाक्षयति यान्यम्वै केकराक्षी तु सा भवेत् ।। ५३ ।।
या भर्तारम्परित्यज्य मिष्टमश्नाति केवलम् ।।
ग्रामे वा सूकरी भूयाद्वल्गुर्वापि स्वविड्भुजा ।। ५४ ।।
या तुकृत्य प्रियम्ब्रूयान्मूका सा जायते खलु ।।
या सपत्नी सदेर्ष्येत दुर्भगा सा पुनः पुनः ।।५५।।
दृष्टिम्विलुप्य भर्त्तुर्या कश्चिदन्यं समीक्षते ।।
काणा च विमुखी चापि कुरूपापि च जायते ।। ५६ ।।
जीवहीनो यथा देहः क्षणादशुचिताम्व्रजेत् ।।
भर्तृहीना तथा योषित्सुस्नाताप्यशुचिस्सदा ।।५७।।
सा धन्या जननी लोके स धन्यो जनकः पिता ।।
धन्यस्स च पतिर्यस्य गृहे देवी पतिव्रता ।।५८।।
पितृवंश्याः मातृवंश्याः पतिवंश्यास्त्रयस्त्रयः ।।
पतिव्रतायाः पुण्येन स्वर्गे सौख्यानि भुंजते ।। ।। ५९ ।।
शीलभङ्गेन दुर्वृत्ताः पातयन्ति कुलत्रयम् ।।
पितुर्मातुस्तथा पत्युरिहामुत्रापि दुःखिताः ।। 2.3.54.६० ।।
पतिव्रतायाश्चरणो यत्र यत्र स्पृशेद्भुवम् ।।
तत्र तत्र भवेत्सा हि पापहन्त्री सुपावनी ।।६१।।
विभुः पतिव्रतास्पर्शं कुरुते भानुमानपि ।।
सोमो गन्धवहश्चापि स्वपावित्र्याय नान्यथा ।।६२।।
आपः पतिव्रतास्पर्शमभिलष्यन्ति सर्वदा ।।
अद्य जाड्यविनाशो नो जातस्त्वद्यान्यपावनाः।।६३।।
भार्या मूलं गृहस्थास्य भार्या मूलं सुखस्य च ।।
भार्या धर्मफलावाप्त्यै भार्या सन्तानवृद्धये।।६४।।
गृहे गृहे न किं नार्य्यो रूपलावण्यगर्विताः ।।

परम्विश्वेशभक्त्यैव लभ्यते स्त्री पतिव्रता ।।६५।।
परलोकस्त्वयं लोको जीयते भार्य या द्वयम् ।।
देवपित्रतिथीज्यादि नाभार्यः कर्म चार्हति ।।६६।।
गृहस्थस्स हि विज्ञेयो यस्य गेहे पतिव्रता ।।
ग्रस्यतेऽन्यान्प्रतिदिनं राक्षस्या जरया यथा ।। ६७ ।।
यथा गंगावगाहेन शरीरं पावनं भवेत् ।।
तथा पतिव्रतां दृष्ट्वा सकलम्पावनं भवेत् ।। ६८ ।।
न गङ्गाया तया भेदो या नारी पतिदेवता ।।
उमाशिवसमौ साक्षात्तस्मात्तौ पूजयेद्बुधः ।।६९।।
तारः पतिश्श्रुतिर्नारी क्षमा सा स स्वयन्तपः ।।
फलम्पतिः सत्क्रिया सा धन्यौ तौ दम्पती शिवे ।।2.3.54.७०।।
एवम्पतिव्रताधर्मो वर्णितस्ते गिरीन्द्रजे ।।
तद्भेदाञ् शृणु सुप्रीत्या सावधानतयाऽद्य मे।।७१।।
चतुर्विधास्ताः कथिता नार्यो देवि पतिव्रताः ।।
उत्तमादिविभेदेन स्मरतां पापहारिकाः।।७२।।
उत्तमा मध्यमा चैव निकृष्टातिनिकृष्टिका।।
ब्रुवे तासां लक्षणानि सावधानतया शृणु।।७३।।
स्वप्नेपि यन्मनो नित्यं स्वपतिं पश्यति ध्रुवम् ।।
नान्यम्परपतिं भद्रे उत्तमा सा प्रकीर्तिता।।७४।।
या पितृभ्रातृसुतवत् परम्पश्यति सद्धिया।।
मध्यमा सा हि कथिता शैलजे वै पतिव्रता।।७५।।
बुद्ध्वा स्वधर्मं मनसा व्यभिचारं करोति न ।।
निकृष्टा कथिता सा हि सुचरित्रा च पार्वति ।।७६।।
पत्युः कुलस्य च भयाद्व्यभिचारं करोति न ।।
पतिव्रताऽधमा सा हि कथिता पूर्वसूरिभिः ।।७७।।
चतुर्विधा अपि शिवे पापहन्त्र्यः पतिव्रताः ।।
पावनास्सर्वलोकानामिहामुत्रापि हर्षिताः ।। ७८ ।।
पातिव्रत्यप्रभावेणात्रिस्त्रिया त्रिसुरार्थनात् ।।
जीवितो विप्र एको हि मृतो वाराहशापतः ।। ७९ ।।
एवं ज्ञात्वा शिवे नित्यं कर्तव्यम्पतिसेवनम् ।।
त्वया शैलात्मज प्रीत्या सर्वकामप्रदं सदा ।। 2.3.54.८० ।।
जगदम्बा महेशी त्वं शिवस्साक्षात्पतिस्तव ।।
तव स्मरणतो नार्यो भवन्ति हि पतिव्रताः ।। ८१ ।।

त्वदग्रे कथनेनानेन किं देवि प्रयोजनम् ।।
तथापि कथितं मेऽद्य जगदाचारतः शिवे ।। ८२ ।।
।। ब्रह्मोवाच ।।
इत्युक्त्वा विररामासौ द्विजस्त्री सुप्रणम्य ताम् ।।
शिवा मुदमतिप्राप पार्वती शङ्करप्रिया ।। ८३ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे पतिव्रताधर्म वर्णनं नाम चतुःपञ्चाशत्तमोऽध्यायः ।। ५४ ।।

ब्रह्मोवाच ।।
अथ सा ब्राह्मणी देव्यै शिक्षयित्वा व्रतञ्च तत् ।।
प्रोवाच मेनामामन्त्र्य यात्रामस्याश्च कारय ।। १ ।।
तथास्त्विति च सम्प्रोच्य प्रेमवश्या बभूव सा ।।
धृतिन्धृत्वाहूय कालीं विश्लेषविरहा कुला ।। २ ।।
अत्युच्चै रोदनं चक्रे संश्लिष्य च पुनः पुनः ।।
पार्वत्यपि रुरोदोच्चैरुच्चरन्ती कृपावचः ।। ३ ।।
शैलप्रिया शिवा चापि मूर्च्छामाप शुचार्दिता।।
मूर्च्छाम्प्रापुर्देवपत्न्यः पार्वत्या रोदनेन च ।। ४ ।।
सर्वाश्च रुरुदुर्नार्य्यस्सर्वमासीदचेतनम् ।।
स्वयं रुरोद योगीशो गच्छन्कोन्य परः प्रभुः ।। ५ ।।
एतस्मिन्नन्तरे शीघ्रमाजगाम हिमालयः ।।
ससर्वतनयस्तत्र सचिवैश्च द्विजैः परैः ।। ६ ।।
स्वयं रुरोद मोहेन वत्सां कृत्वा स्ववक्षसि ।।
क्व यासीत्येवमुच्चार्य शून्यं कृत्वा मुहुर्मुहुः ।। ७ ।।
ततः पुरोहितो विप्रैरध्यात्मविद्यया सुखम् ।।
सर्वान्प्रबोधयामास कृपया ज्ञानवत्तरः ।। ८ ।।
ननाम पार्वती भक्त्या मातरम्पितरं गुरुम् ।।
महामाया भवाचाराद्रुरोदोच्चैर्मुहुर्मुहुः ।। ९ ।।
पार्वत्या रोदनेनैव रुरुदुस्सर्वयोषितः ।।
नितरां जननी मेना यामयो भ्रातरस्तथा ।। 2.3.55.१० ।।
पुनः पुनः शिवामाता यामयोऽन्याश्च योषितः ।।
भ्रातरो जनकः प्रेम्णा रुरुदुर्बद्धसौहृदाः ।। ११ ।।
तदा विप्राः समागत्य बोधयामासुरादरात् ।।
लग्नन्निवेदयामासुर्यात्रायास्सुखदम्परम् ।। १२ ।।
ततो हिमालयो मेनां धृत्वा धैर्य्यम्विवेकतः ।।
शिबिकामानयामास शिवारोहणहेतवे ।। १३ ।।
शिवामारोहयामासुस्तत्र विप्राङ्गनाश्च ताम् ।।
आशिषम्प्रददुस्सर्वाः पिता माता द्विजास्तथा ।। १४ ।।
महाराज्ञ्युपचारांश्च ददौ मेना गिरिस्तथा ।।
नानाद्रव्यसमूहं च परेषान्दुर्लभं शुभम् ।। १५ ।।
शिवा नत्वा गुरून्सर्वाञ् जनकं जननीन्तथा ।।
द्विजान्पुरोहितं यामीस्त्रीस्तथान्या ययौ मुने ।। १६ ।।

हिमाचलोऽपि ससुतोऽगच्छत्स्नेहवशी बुधः ।।
प्राप्तस्तत्र प्रभुर्यत्र सामरः प्रीतिमावहन् ।।१७।।
प्रीत्याभिरेभिरे सर्वे महोत्सवपुर स्सरम् ।।
प्रभुम्प्रणेमुस्ते भक्त्या प्रशंसन्तोऽविशन्पुरीम् ।।१८।।
जातिस्मरां स्मारयामि नित्यं स्मरसि चेद्वद ।।
लीलया त्वाञ्च देवेशि सदा प्राणप्रिया मम ।।१९।।
ब्रह्मोवाच ।।
इत्याकर्ण्य महेशस्य स्वनाथस्याथ पार्वती ।।
शङ्करस्य प्रिया नित्यं सस्मितोवाच सा सती ।। 2.3.55.२० ।।
पार्वत्युवाच ।।
सर्वं स्मरामि प्राणेश मौनी भूतो भवेति च ।।
प्रस्तावोचितमद्याशु कार्यं कुरु नमोऽस्तु ते ।।२१ ।।
ब्रह्मोवाच।।
इत्याकर्ण्य प्रियावाक्यं सुधाधाराशतोपमम् ।।
मुमुदेऽतीव विश्वेशो लौकिकाचारतत्परः।।२२।।
शिवः सम्भृतसम्भारो नानावस्तुमनोहरम् ।।
भोजयामास देवश्च नारायणपुरोगमान् ।।२३।।
तथान्यान्निखिलान्प्रीत्या स्वविवाहसमागतान् ।।
भोजयामास सुरसमन्नम्बहुविधम्प्रभुः ।।२४।।
ततो भुक्त्वा च ते देवा नानारत्न विभूषिताः ।।
सस्त्रीकास्सगणास्सर्वे प्रणेमुश्चंद्रशेखरम् ।।२५।।
संस्तुत्य वाग्भिरिष्टाभिः परिक्रम्य मुदान्विताः ।।
प्रशंसन्तो विवाहञ्च स्वधामानि ययुस्ततः ।।२६।।
नारायणं मुने मां च प्रणनाम शिवस्स्वयम् ।।
लौकिकाचारमाश्रित्य यथा विष्णुश्च कश्यपम् ।।२७।।
मयाश्लिष्याशिषन्दत्त्वा शिवस्य पुनरग्रतः ।।
मत्वा वै तं परं ब्रह्म चक्रे च स्तुतिरुत्तमा ।। २८ ।।
तमामन्त्र्य मया विष्णुस्साञ्जलिश्शिवयोर्मुदा ।।
प्रशंसंस्तद्विवाहञ्च जगाम स्वालयम्परम् ।। २९ ।।
शिवोऽपि स्वगिरौ तस्थौ पार्वत्या विहरन्मुदा ।।
सर्वे गणास्सुखं प्रापुरतीव स्वभजञ्छिवौ ।। 2.3.55.३० ।।
इत्येवङ्क थितस्तात शिवोद्वाहस्सुमंगलः ।।
शोकघ्नो हर्षजनक आयुष्यो धनवर्द्धनः ।। ३१ ।।

य इमं शृणुयान्नित्यं शुचिस्तद्गतमानसः ।।
श्रावयेद्वाथ नियमाच्छिवलोकमवाप्नुयात् ।। ३२ ।।
इदमाख्यानमाख्यातमद्भुतं मंगलायनम् ।।
सर्वविघ्नप्रशमनं सर्वव्याधिविनाशनम् ।। ३३ ।।
यशस्यं स्वर्ग्यमायुष्यं पुत्रपौत्रकरम्परम् ।।
सर्वकामप्रदं चेह भुक्तिदं मुक्तिदं सदा ।। ३४ ।।
अपमृत्युप्रशमनं महाशान्तिकरं शुभम् ।।
सर्वदुस्स्वप्नप्रशमनं बुद्धिप्रज्ञादिसाधनम् ।।३५।।
शिवोत्सवेषु सर्वेषु पठितव्यम्प्रयत्नतः ।।
शुभेप्सुभिर्जनैः प्रीत्या शिवसन्तोषकारणम् ।।३६।।
पठेत्प्रतिष्ठाकाले तु देवादीनां विशेषतः ।।
शिवस्य सर्वकार्यस्य प्रारम्भे च सुप्रीतितः ।।३७।।
शृणुयाद्वा शुचिर्भूत्वा चरितं शिवयोश्शिवम् ।।
सिध्यन्ति सर्वकार्याणि सत्यं सत्यं न संशयः ।। ३८ ।।
इति श्रीशिवमहापुराणे ब्रह्मनारदसंवादे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीखण्डे शिवकैलासगमनवर्णनं नाम पञ्चपञ्चाशत्तमोऽध्यायः ।। ५५ ।।

समाप्तोऽयं तृतीयः पार्वतीखण्डः ।। ३ ।।

।। श्रीगणेशाय नमः ।।
।। श्रीगौरीशंकराभ्यां नमः ।।
अथ रुद्रसंहितांतर्गतश्चतुर्थः कुमारखण्डः प्रारभ्यते ।।
वन्दे नन्दनतुष्टमान समति प्रेमप्रियं प्रेमदं पूर्णं पूर्णकरं प्रपूर्णनिखिलैश्वर्यैकवासं शिवम्।।
सत्यं सत्यमयं त्रिसत्यविभवं सत्यप्रियं सत्यदं विष्णुब्रह्मनुतं स्वकीयकृपयोपात्ताकृतिं शंकरम् ।। १
।।
।। नारद उवाच ।।
विवाहयित्वा गिरिजां शंकरो लोकशंकरः ।।
गत्वा स्वपर्वतं ब्रह्मन् किमकार्षिद्धि तद्वद ।। २ ।।
कथं हि तनयो जज्ञे शिवस्य परमात्मनः ।।
यदर्थमात्मारामोऽपि समुवाह शिवां प्रभुः ।। ३ ।।
तारकस्य कथं ब्रह्मन् वधोऽभूद्देवशंकरः ।।
एतत्सर्वमशेषेण वद कृत्वा दयां मयि ।। ४ ।।
सूत उवाच ।।
इत्याकर्ण्य वचस्तस्य नारदस्य प्रजापतिः ।।
सुप्रसन्नमनाः स्मृत्वा शंकरं प्रत्युवाच ह ।। ५ ।।
ब्रह्मोवाच ।।
चरितं शृणु वक्ष्यामि शशिमौलेस्तु नारद ।।
गुहजन्मकथां दिव्यां तारकासुरसद्वधम् ।।६।।
श्रूयतां कथयाम्यद्य कथां पापप्रणाशिनीम् ।।
यां श्रुत्वा सर्वपापेभ्यो मुच्यते मानवो ध्रुवम् ।।७।।
इदमाख्यानमनघं रहस्यं परमाद्भुतम् ।।
पापसंतापहरणं सर्वविघ्नविनाशनम् ।। ८ ।।
सर्वमंगलदं सारं सर्वश्रुतिमनोहरम् ।।
सुखदं मोक्षबीजं च कर्ममूलनिकृंतनम् ।। ९ ।।
कैलासमागत्य शिवां विवाह्य शोभां प्रपेदे नितरां शिवोऽपि ।।
विचारयामास च देवकृत्यं पीडां जनस्यापि च देवकृत्ये ।।2.4.1.१०।।
शिवस्स भगवान् साक्षात्कैलासमगमद्यदा ।।
सौख्यं च विविधं चक्रुर्गणास्सर्वे सुहर्षिताः ।। ।। ११ ।।
महोत्सवो महानासीच्छिवे कैलासमागते ।।
देवास्स्वविषयं प्राप्ता हर्षनिर्भरमानसाः।। १२ ।।
अथ शंभुर्महादेवो गृहीत्वा गिरिजां शिवाम् ।।
जगाम निर्जनं स्थानं महादिव्यं मनोहरम् ।।१३।।

शय्यां रतिकरीं कृत्वा पुष्पचन्दनचर्चिताम् ।।
अद्भुतां तत्र परमां भोगवस्त्वन्वितां शुभाम् ।। १४ ।।
स रेमे तत्र भगवाञ्शंभुगिरिजया सह ।।
सहस्रवर्षपर्यन्तं देवमानेन मानदः ।। १५ ।।
दुर्गांगस्पर्शमात्रेण लीलया मूर्च्छितः शिवः ।।
मूर्च्छिता सा शिवस्पर्शाद्बुबुधे न दिवानिशम् ।।१६।।
हरे भोगप्रवृत्ते तु लोकधर्मे प्रवर्तिनि ।।
महान् कालो व्यतीयाय तयोः क्षण इवानघ।।१७।।
अथ सर्वे सुरास्तात एकत्रीभूय चैकदा ।।
मंत्रयांचक्रुरागत्य मेरौ शक्रपुरोगमाः ।।१८।।
सुरा ऊचुः ।।
विवाहं कृतवाञ्छंभुरस्मत्कार्यार्थमीश्वरः।।
योगीश्वरो निर्विकारो स्वात्मारामो निरंजनः।।१९।।
नोत्पन्नस्तनयस्तस्य न जानामोऽत्र कारणम्।।
विलंबः क्रियते तेन कथं देवेश्वरेण ह।।2.4.1.२०।।
एतस्मिन्नंतरे देवा नारदाद्देवदर्शनात् ।।
बुबुधुस्तन्मितं भोगं तयोश्च रममाणयोः ।। २१ ।।
चिरं ज्ञात्वा तयोर्भोगं चिंतामापुस्सुराश्च ते।।
ब्रह्माणं मां पुरस्कृत्य ययुर्नारायणांतिकम्।।२२।।
तं नत्वा कथितं सर्वं मया वृत्तांतमीप्सितम् ।।
सन्तस्थिरे सर्वदेवा चित्रे पुत्तलिका यथा ।।२३।।
ब्रह्मोवाच।।
सहस्रवर्ष पर्य्यन्तं देवमानेन शंकरः ।।
रतौ रतश्च निश्चेष्टो योगी विरमते न हि ।।२४।। ।।
भगवानुवाच ।।
चिन्ता नास्ति जगद्धातस्सर्वं भद्रं भविष्यति ।।
शरणं व्रज देवेश शंकरस्य महाप्रभोः ।। २५ ।।
महेशशरणापन्ना ये जना मनसा मुदा ।।
तेषां प्रजेशभक्तानां न कुतश्चिद्भयं क्वचित् ।।२६।।
शृंगारभंगस्समये भविता नाधुना विधे ।।
कालप्रयुक्तं कार्यं च सिद्धिं प्राप्नोति नान्यथा ।। २७ ।।
शम्भोस्सम्भोगमिष्टं को भेदं कर्तुमिहेश्वरः ।।
पूर्णे वर्षसहस्रे च स्वेच्छया हि विरंस्यति ।। २८ ।।

स्त्रीपुंसो रतिविच्छेदमुपायेन करोति यः ।।
तस्य स्त्रीपुत्रयोर्भेदो भवेज्जन्मनि जन्मनि ।। २९ ।।
भ्रष्टज्ञानो नष्टकीर्त्तिरलक्ष्मीको भवेदिह ।।
प्रयात्यंते कालसूत्र वर्षलक्षं स पातकी ।। 2.4.1.३० ।।
रंभायुक्तं शक्रमिमं चकार विरतं रतौ ।।
महामुनीन्द्रो दुर्वासास्तत्स्त्रीभेदो बभूव ह ।। ३१ ।।
पुनरन्यां स संप्राप्य विषेव्य शुभपाणिकाम् ।।
दिव्यं वर्षसहस्रं च विजहौ विरहज्वरम् ।। ३२ ।।
घृताच्या सह संश्लिष्टं कामं वारितवान् गुरुः ।।
षण्मासाभ्यंतरे चन्द्रस्तस्य पत्नीं जहार ह ।। ३३ ।।
पुनश्शिवं समाराध्य कृत्वा तारामयं रणम् ।।
तारां सगर्भां संप्राप्य विजहौ विरहज्वरम् ।।३४
मोहिनीसहितं चन्द्रं चकार विरतं रतौ ।।
महर्षिर्गौतमस्तस्य स्त्रीविच्छेदो बभूव ह ।। ३५ ।।
हरिश्चन्द्रो हालिकं च वृषल्यासह संयुतम् ।।
चारयामास निश्चेष्टं निर्जनं तत्फलं शृणु ।।३६।।
भ्रष्टः स्त्रीपुत्रराज्येभ्यो विश्वामित्रेण ताडितः ।।
ततश्शिवं समाराध्य मुक्तो भूतो हि कश्मलात् ।। ३७ ।।
अजामिलं द्विजश्रेष्ठं वृषल्या सह संयुतम् ।।
न भिया वारयामासुस्सुरास्तां चापि केचन ।। ३८ ।।
सर्वं निषेकसाध्यं च निषेको बलवान् विधे ।।
निषेकफलदो वै स निषेकः केन वार्य्यते ।। ३९ ।।
दिव्यं वर्षसहस्रं च शंभोः संभोगकर्म तत् ।।
पूर्णे वर्षसहस्रे च गत्वा तत्र सुरेश्वराः ।।2.4.1.४०।।
येन वीर्यं पतेद्भूमौ तत् करिष्यथ निश्चितम् ।।
तत्र वीर्य्ये च भविता स्कन्दनामा प्रभोस्सुतः ।। ४१ ।।
अधुना स्वगृहं गच्छ विधे सुरगणैस्सह ।।
करोतु शंभुस्संभोगं पार्वत्या सह निर्जने ।। ४२ ।।
ब्रह्मोवाच ।।
इत्युक्त्वा कमलाकान्तः शीघ्रं स्वन्तः पुरं ययौ ।।
स्वालयं प्रययुर्देवा मया सह मुनीश्वर ।। ४३ ।।
शक्तिशक्तिमतोश्चाऽथ विहारेणाऽति च क्षितिः ।।
भाराक्रांता चकंपे सा सशेषाऽपि सकच्छपा ।।४४।।

कच्छपस्य हि भारेण सर्वाधारस्समीरणः ।।
स्तंभितोऽथ त्रिलोकाश्च बभूवुर्भयविह्वलाः ।। ४५ ।।
अथ सर्वे मया देवा हरेश्च शरणं ययुः ।।
सर्वं निवेदयांचक्रुस्तद्वृत्तं दीनमानसाः ।।४६।।
देवा ऊचुः ।।
देवदेव रमानाथ सर्वाऽवनकर प्रभोः ।।
रक्ष नः शरणापन्नान् भयव्याकुलमानसान् ।। ४७ ।।
स्तंभितस्त्रिजगत्प्राणो न जाने केन हेतुना ।।
व्याकुलं मुनिभिर्लेखैस्त्रैलोक्यं सचराचरम् ।। ४८ ।।
।। ब्रह्मोवाच ।।
इत्युक्त्वा सकला देवा मया सह मुनीश्वर ।।
दीनास्तस्थुः पुरो विष्णोर्मौनीभूतास्सु दुःखिताः ।। ४९ ।।
तदाकर्ण्य समादाय सुरान्नः सकलान् हरिः ।।
जगाम पर्वतं शीघ्रं कैलासं शिववल्लभम् ।। 2.4.1.५० ।।
तत्र गत्वा हरिर्देवैर्मया च सुरवल्लभः ।।
ययौ शिववरस्थानं शंकरं द्रष्टुकाम्यया ।। ५१ ।।
तत्र दृष्ट्वा शिवं विष्णुर्नसुरैर्विस्मितोऽभवत् ।।
तत्र स्थिताञ् शिवगणान् पप्रच्छ विनयान्वितः ।। ५२ ।।
विष्णुरुवाच ।।
हे शंकराः शिवः कुत्र गतस्सर्वप्रभुर्गणाः ।।
निवेदयत नः प्रीत्या दुःखितान्वै कृपालवः ।। ५३ ।।
ब्रह्मोवाच ।।
इत्याकर्ण्य वचस्तस्य सामरस्य हरेर्गुणाः ।।
प्रोचुः प्रीत्या गणास्ते हि शंकरस्य रमापतिम् ।। ५४ ।।
शिवगणा ऊचुः ।।
हरे शृणु शिवप्रीत्या यथार्थं ब्रूमहे वयम् ।।
ब्रह्मणा निर्जरैस्सार्द्धं वृत्तान्तमखिलं च यत् ।।५५।।
सर्वेश्वरो महादेवो जगाम गिरिजालयम् ।।
संस्थाप्य नोऽत्र सुप्रीत्या रानालीलाविशारदः ।। ५६ ।।
तद्गुहाभ्यन्तरे शंभुः किं करोति महेश्वरः ।।
न जानीमो रमानाथ व्यतीयुर्बहवस्समाः ।।५७।।
।। ब्रह्मोवाच।।
श्रुत्वेति वचनं तेषां स विष्णुस्सामरो मया ।।

विस्मितोऽति मुनिश्रेष्ठ शिवद्वारं जगाम ह ।।५८।।
तत्र गत्वा मया देवैस्स हरिर्देववल्लभः।।
आर्तवाण्या मुने प्रोचे तारस्वरतया तदा ।।५९।।
शंभुमस्तौन्महाप्रीत्या सामरो हि मया हरिः ।।
तत्र स्थितो मुनिश्रेष्ठ सर्वलोकप्रभुं हरम् ।।2.4.1.६०।।
।। विष्णुरुवाच ।।
किं करोषि महादेवाऽभ्यन्तरे परमेश्वर ।।
तारकार्तान्सुरान्सर्वान्पाहि नः शरणागतान्।।६१।।
इत्यादि संस्तुवञ् शंभुं बहुधा सोमरैर्मया ।।
रुरोदाति हरिस्तत्र तारकार्तैर्मुनीश्वर ।।६२।।
दुःखकोलाहलस्तत्र बभूव त्रिदिवौकसाम् ।।
मिश्रितश्शिव संस्तुत्याऽसुरार्त्तानां मुनीश्वर ।। ६३ ।।
इति श्रीशिवमहापुराणे रुद्रसंहितायां कुमारखण्डे शिवविहारवर्णनं नाम प्रथमोऽध्यायः ।। १ ।।

।। ब्रह्मोवाच ।।
तदाकर्ण्य महादेवो योगज्ञानविशारदः ।।
त्यक्तकामो न तत्याज संभोगं पार्वतीभयात् ।। १ ।।
आजगाम गृहद्वारि सुराणां निकटं शिवः ।।
दैत्येन पीडितानां च शंकरो भक्तवत्सलः ।।२।।
देवास्सर्वे प्रभुं दृष्ट्वा हरिणा च मया शिवम् ।।
बभूबुस्सुखिनश्चाति तदा वै भक्तवत्सलम् ।।३।।
इत्याकर्ण्य वचस्तेषां सुराणां भगवान्भवः ।।
प्रत्युवाच विषण्णात्मा दूयमानेन चेतसा ।।४।।
प्रणम्य सुमहाप्रीत्या नतस्कंधाश्च निर्जराः ।।
तुष्टुवुः शंकरं सर्वे मया च हरिणा मुने ।।५।।
देवा ऊचुः ।।
देवदेव महादेव करुणासागर प्रभो ।।
अन्तर्यामी हि सर्वेषां सर्वं जानासि शंकर ।।६।।
देवकार्यं कुरु विभो रक्ष देवान् महेश्वर ।।
जहि दैत्यान् कृपां कृत्वा तारकादीन् महाप्रभून् ।। ७ ।।
।। शिव उवाच ।।
हे विष्णो हे विधे देवास्सर्वेषां वो मनोगतिः ।।
यद्भावि तद्भवत्येव कोऽपि नो तन्निवारकः ।। ८ ।।
यज्जातं तज्जातमेव प्रस्तुतं शृणुताऽमराः ।।
शिरस्तस्खलितं वीर्यं को ग्रहीष्यति मेऽधुना ।। ९ ।।
स गृह्णीयादिति प्रोच्य पातयामास तद्भुवि ।।
अग्निर्भूत्वा कपोतो हि प्रेरितस्सर्वनिर्जरैः ।। 2.4.2.१० ।।
अभक्षच्छांभवं वीर्यं चंच्वा तु निखिलं तदा ।।
एतस्मिन्नंतरे तत्राऽऽजगाम गिरिजा मुने ।। ११ ।।
शिवागमविलंबे च ददर्श सुरपुंगवान् ।। ।।
ज्ञात्वा तद्वृत्तमखिलं महाक्रोधयुता शिवा ।। १२ ।।
उवाच त्रिदशान् सर्वान् हरिप्रभृतिकाँस्तदा ।। १३ ।।
देव्युवाच ।।
रे रे सुरगणास्सर्वे यूयं दुष्टा विशेषतः ।।
स्वार्थसंसाधका नित्यं तदर्थं परदुःखदाः ।। १४ ।।
स्वार्थहेतोर्महेशानमाराध्य परमं प्रभुम् ।।
नष्टं चक्रुर्मद्विहारं वंध्याऽभवमहं सुराः ।। १५ ।।

मां विरोध्य सुखं नैव केषांचिदपि निर्जराः ।।
तस्माद्दुःखं भवेद्वो हि दुष्टानां त्रिदिवौकसाम् ।। १६ ।।
।। ब्रह्मोवाच ।।
इत्युक्त्वा विष्णुप्रमुखान् सुरान्सर्वान् शशाप सा ।।
प्रज्वलंती प्रकोपेन शैलराजसुता शिवा ।। १७ ।।
।। पार्वत्युवाच ।।
अद्यप्रभृति देवानां वंध्या भार्या भवन्त्विति ।।
देवाश्च दुःखितास्संतु निखिला मद्विरोधिनः ।।१८।।
।। ब्रह्मोवाच ।। ।।
इति शप्त्वाखिलान्देवान् विष्ण्वाद्यान्सकलेश्वरी ।।
उवाच पावकं क्रुद्धा भक्षकं शिवरेतसः ।। १९ ।।
पार्वत्युवाच ।।
सर्वभक्षी भव शुचे पीडितात्मेति नित्यशः ।।
शिवतत्त्वं न जानासि मूर्खोऽसि सुरकार्यकृत् ।। 2.4.2.२० ।।
रे रे शठ महादुष्ट दुष्टानां दुष्टबोधवान् ।।
अभक्षश्शिववीर्यं यन्नाकार्षीरुचितं हि तत् ।। २१ ।।
।। ब्रह्मोवाच ।।
इति शप्त्वा शिवा वह्निं सहेशेन नगात्मजा ।।
जगाम स्वालयं शीघ्रमसंतुष्टा ततो मुने ।। २२ ।।
गत्वा शिवा शिवं सम्यक् बोधयामास यत्नतः ।।
अजीजनत्परं पुत्रं गणेशाख्यं मुनीश्वर।।२३।।
तद्वृत्तांतमशेषं च वर्णयिष्ये मुनेऽग्रतः।।
इदानीं शृणु सुप्रीत्या गुहोत्पत्तिं वदाम्यहम् ।।२४।।
पावकादितमन्नादि भुंजते निर्जराः खलु ।।
वेदवाण्येति सर्वे ते सगर्भा अभवन्सुराः ।।२५।।
ततोऽसहंतस्तद्वीर्यं पीडिता ह्यभवन् सुराः ।।
विष्ण्वाद्या निखिलाश्चाति शिवाऽऽज्ञा नष्टबुद्धयः ।।२६।।
अथ विष्णुप्रभृतिकास्सर्वे देवा विमोहिताः ।।
दह्यमाना ययुः शीघ्रं शरणं पार्वतीपतेः ।।२७।।
शिवालयस्य ते द्वारि गत्वा सर्वे विनम्रकाः ।।
तुष्टुवुस्सशिवं शंभुं प्रीत्या सांजलयस्सुराः ।। २८ ।।
।। देवा ऊचुः ।।
देवदेव महादेव गिरिजेश महाप्रभो ।।

किं जातमधुना नाथ तव माया दुरत्यया ।। २९ ।।
सगर्भाश्च वयं जाता दह्यमानाश्च रेतसा ।।
तव शंभो कुरु कृपां निवारय दशामिमाम् ।। 2.4.2.३० ।।
ब्रह्मोवाच ।।
इत्याकर्ण्याऽमरनुतिं परमेशश्शिवापतिः ।।
आजगाम द्रुतं द्वारि यत्र देवाः स्थिता मुने ।।३१।।
आगतं शंकरं द्वारि सर्वे देवाश्च साच्युताः ।।
प्रणम्य तुष्टुवुः प्रीत्या नर्तका भक्तवत्सलम् ।।३२।।
।। देवा ऊचुः ।।
शंभो शिव महेशान त्वां नतास्स्म विशेषतः ।।
रक्ष नश्शरणापन्नान्दह्यमानांश्च रेतसा ।।३३।।
इदं दुःखं हर हर भवामो हि मृता ध्रुवम् ।।
त्वां विना कस्समर्थोऽद्य देवदुःखनिवा रणे ।।३४।।
।। ब्रह्मोवाच ।।
इति दीनतरं वाक्यमाकर्ण्य सुरराट् प्रभुः ।।
प्रत्युवाच विहस्याऽथ स सुरान् भक्तवत्सलः ।। ३५ ।।
।। शिव उवाच ।।
हे हरे हे विधे देवास्सर्वे शृणुत मद्वचः ।।
भविष्यति सुखं वोऽद्य सावधाना भवन्तु हि ।। ३६ ।।
एतद्वमत मद्वीर्यं द्रुतमेवाऽखिलास्सुराः ।।
सुखिनस्तद्विशेषेण शासनान्मम सुप्रभो।।३७।।
।। ब्रह्मोवाच ।।
इत्याज्ञां शिरसाऽधाय विष्ण्वाद्यास्सकलास्सुराः ।।
अकार्षुर्वमनं शीघ्रं स्मरंतश्शिवमव्ययम् ।।३८।।
तच्छंभुरेतस्स्वर्णाभं पर्वताकारमद्भुतम्।।
अभवत्पतितं भूमौ स्पृशद् द्यामेव सुप्रभम्।।३९।।
अभवन्सुखिनस्सर्वे सुरास्सर्वेऽच्युतादयः ।।
अस्तुवन् परमेशानं शंकरं भक्तवत्सलम् ।।2.4.2.४०।।
पावकस्त्वभवन्नैव सुखी तत्र मुनीश्वर।।
तस्याज्ञां परमोऽदाद्वै शंकरः परमेश्वरः।।४१।।
ततस्सवह्निर्विकलस्सांजलिर्नतको मुने।।
अस्तौच्छिवं सुखी नात्मा वचनं चेदमब्रवीत् ।। ४२ ।।
।। अग्निरुवाच ।। ।।

देवदेव महेशान मूढोऽहं तव सेवकः ।।
क्षमस्व मेऽपराधं हि मम दाहं निवारय ।।४३।।
त्वं दीनवत्सल स्वामिञ्शंकरः परमेश्वरः ।।
प्रत्युवाच प्रसन्नात्मा पावको दीनवत्सलम् ।।४४।।
।। ब्रह्मोवाच ।।
इत्याकर्ण्य शुचेर्वाणीं स शंभुः परमेश्वरः ।।
प्रत्युवाच प्रसन्नात्मा पावकं दीनवत्सलः ।।४५।।
शिव उवाच ।।
कृतं त्वनुचितं कर्म मद्रेतो भक्षितं हि यत् ।।
अतोऽनिवृत्तस्ते दाहः पापाधिक्यान्मदाज्ञया ।। ४६ ।।
इदानीं त्वं सुखी नाम शुचे मच्छरणागतः ।।
अतः प्रसन्नो जातोऽहं सर्वं दुःखं विनश्यति ।।४७।।
कस्याश्चित्सुस्त्रियां योनौ मद्रेतस्त्यज यत्नतः ।।
भविष्यति सुखी त्वं हि निर्दाहात्मा विशेषतः ।। ४८ ।।
।। ब्रह्मोवाच ।।
शंभुवाक्यं निशम्येति प्रत्युवाच शनैः शुचिः ।।
सांजलिर्नतकः प्रीत्या शंकरं भक्तशंकरम् ।। ४९ ।।
दुरासदमिदं तेजस्तव नाथ महेश्वर ।।
काचिन्नास्ति विना शक्त्या धर्तुं योनौ जगत्त्रये ।। 2.4.2.५० ।।
इत्थं यदाऽब्रवीद्वह्निस्तदा त्वं मुनिसत्तम ।।
शंकरप्रेरितः प्रात्थ हृदाग्निमुपकारकः ।। ५१ ।।
।। नारद उवाच ।।
शृणु मद्वचनं वह्ने तव दाहहरं शुभम्।।
परमानंददं रम्यं सर्वकष्टनिवारकम् ।।५२।।
कृत्वोपायमिमं वह्ने सुखी भव विदाहकः ।।
शिवेच्छया मया सम्यगुक्तं तातेदमादरात् ।। ५३ ।।
तपोमासस्नानकर्त्र्यस्त्रियो यास्स्युः प्रगे शुचे ।।
तद्देहेषु स्थापय त्वं शिवरेतस्त्विदं महत् ।।५४।।
ब्रह्मोवाच ।।
तस्मिन्नवसरे तत्रा ऽगतास्सप्तमुनिस्त्रियः ।।
तपोमासि स्नानकामाः प्रातस्सन्नियमा मुने ।।५५।।
स्नानं कृत्वा स्त्रियस्ता हि महाशीतार्द्दिताश्च षट् ।।
गंतुकामा मुने याता वह्निज्वालासमीपतः ।। ५६ ।।

विमोहिताश्च ता दृष्ट्वारुन्धती गिरिशाज्ञया ।।
निषिषेध विशेषेण सुचरित्र सुबोधिनी ।। ५७ ।।
ताः षड् मुनिस्त्रियो मोहाद्धठात्तत्र गता मुने ।।
स्वशीतविनिवृत्त्यर्थं मोहिताः शिवमायया ।। ५८ ।।
तद्रेतःकणिकास्सद्यस्तद्देहान् विविशुर्मुने ।।
रोमद्वाराऽखिला वह्निरभूद्दाहविवर्जितः ।।५९।।
अंतर्धाय द्रुतं वह्निर्ज्वालारूपो जगाम ह ।।
सुखी स्वलोकं मनसा स्मरंस्त्वां शंकरं च तम् ।। 2.4.2.६० ।।
सगर्भास्ताः स्त्रियस्साधोऽभवन् दाहप्रपीडिताः ।।
जग्मुस्स्वभवनं तातारुंधती दुःखिताऽग्निना ।।६१।।
दृष्ट्वा स्वस्त्रीगतिं तात नाथाः क्रोधाकुला द्रुतम् ।।
तत्यजुस्ताः स्त्रियस्तात सुसंमंत्र्य परस्परम् ।। ६२ ।।
अथ ताः षट् स्त्रियस्सर्वा दृष्ट्वा स्वव्यभिचारकम् ।।
महादुःखान्वितास्ताताऽभवन्नाकुलमानसाः ।। ६३ ।।
तत्यजुश्शिव रेतस्तद्गर्भरूपं मुनिस्त्रियः ।।
ता हिमाचलपृष्ठेऽथाभवन् दाहविवर्जिताः ।। ६४ ।।
असहञ्शिवरेतस्तद्धिमाद्रिः कंपमुद्वहन् ।।
गंगायां प्राक्षिपत्तूर्णमसह्यं दाहपीडितः ।। ६५ ।।
गंगयाऽपि च तद्वीर्यं दुस्सहं परमात्मनः ।।
निःक्षिप्तं हि शरस्तंबे तरंगैः स्वैर्मुनीश्वर ।।६६।।
पतितं तत्र तद्रेतो द्रुतं बालो बभूव ह ।।
सुन्दरस्सुभगः श्रीमांस्तेजस्वी प्रीतिवर्द्धनः ।। ६७ ।।
मार्गमासे सिते पक्षे तिथौ षष्ठ्यां मुनीश्वर ।।
प्रादुर्भावोऽभवत्तस्य शिवपुत्रस्य भूतले ।। ६८ ।।
तस्मिन्नवसरे ब्रह्मन्न कस्माद्धिम शैलजा ।।
अभूतः सुखिनौ तत्र स्वगिरौ गिरिशोऽपि च ।।६९।।
शिवाकुचाभ्यां सुस्राव पय आनन्दसंभवम् ।।
तत्र गत्वा च सर्वेषां सुखमासीन्मुनेऽधिकम् ।। 2.4.2.७० ।।
मंगलं चाऽभवत्तात त्रिलोक्यां सुखदं सताम् ।।
खलानामभवद्विघ्नो दैत्यानां च विशेषतः ।। ७१ ।।
अकस्मादभवद्व्योम्नि परमो दुंदुभिध्वनिः ।।
पुष्पवृष्टिः पपाताऽशु बालकोपरि नारद ।। ७२ ।।
विष्ण्वादीनां समस्तानां देवानां मुनिसत्तम ।।

अभूदकस्मात्परम आनन्दः परमोत्सवः ।।७३।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां चतुर्थे कुमारखंडे शिवपुत्रजननवर्णनं नाम द्वितीयोऽध्यायः ।। २ ।।

नारद उवाच ।।
देवदेव प्रजानाथ ब्रह्मन् सृष्टिकर प्रभो ।।
ततः किमभवत्तत्र तद्वदाऽद्य कृपां कुरु ।।१।।
ब्रह्मोवाच ।।
तस्मिन्नवसरे तात विश्वामित्रः प्रतापवान् ।।
प्रेरितो विधिना तत्रागच्छत्प्रीतो यदृच्छया ।। २ ।।
स दृष्ट्वाऽलौकिकं धाम तत्सुतस्य सुतेजसः ।।
अभवत्पूर्णकामस्तु सुप्रसन्नो ननाम च ।। ३ ।।
अकरोत्सुनुतिं तस्य सुप्रसन्नेन चेतसा ।।
विधिप्रेरितवाग्भिश्च विश्वामित्रः प्रभाववित् ।।४।।
ततस्सोऽभूत्सुतस्तत्र सुप्रसन्नो महोति कृत् ।।
सुप्रहस्याद्भुतमहो विश्वामित्रमुवाच च ।। ५ ।।
शिवसुत उवाच ।।
शिवेच्छया महाज्ञानिन्नकस्मात्त्वमिहागतः ।।
संस्कारं कुरु मे तात यथावद्वेदसंमितम् ।।६।।
अद्यारभ्य पुरोधास्त्वं भव मे प्रीतिमावहन् ।।
भविष्यसि सदा पूज्यस्सर्वेषां नात्र संशयः ।। ७ ।।
।। ब्रह्मोवाच ।। ।।
इत्याकर्ण्य वचस्तस्य सुप्रसन्नो हि गाधिजः ।।
तमुवाचानुदात्तेन स्वरेण च सुविस्मितः ।। ८ ।।
विश्वामित्र उवाच ।।
शृणु तात न विप्रोऽहं गाधिक्षत्रियबालकः ।।
विश्वामित्रेति विख्यातः क्षत्रियो विप्रसेवकः ।। ९ ।।
इति स्वचरितं ख्यातं मया ते वरबालक ।।
कस्त्वं स्वचरितं ब्रूहि विस्मितायाखिलं हि मे ।। 2.4.3.१० ।।
ब्रह्मोवाच ।।
इत्याकर्ण्य वच स्तस्य तत्स्ववृत्तं जगाद ह ।।
ततश्चोवाच सुप्रीत्या गाधिजं तं महोतिकृत् ।। ११ ।।
।। शिवसुत उवाच ।।
विश्वामित्र वरान्मे त्वं ब्रह्मर्षिर्नाऽत्र संशयः ।।
वशिष्ठाद्याश्च नित्यं त्वां प्रशंसिष्यंति चादरात् ।।१२।।
अतस्त्वमाज्ञया मे हि संस्कारं कर्तुमर्हसि ।।
इदं सर्वं सुगोप्यं ते कथनीयं न कुत्रचित् ।।१३।।

ब्रह्मोवाच ।।
ततोकार्षीत्स संस्कारं तस्य प्रीत्याऽखिलं यथा ।।
शिवबालस्य देवर्षे वेदोक्तविधिना परम् ।।१४।।
शिवबालोपि सुप्रीतो दिव्यज्ञानमदात्परम् ।।
विश्वामित्राय मुनये महोतिकारकः प्रभुः ।।१५।।
पुरोहितं चकारासौ विश्वामित्रं शुचेस्सुत ।।
तदारभ्य द्विजवरो नानालीलाविशारदः ।।१६।।
इत्थं लीला कृता तेन कथिता सा मया मुने ।।
तल्लीलामपरां तात शृणु प्रीत्या वदाम्यहम् ।। १७ ।।
तस्मिन्नवसरे तात श्वेतनामा च संप्रति ।।
तत्राऽपश्यत्सुतं दिव्यं निजं परम पावनम् ।। १८ ।।
ततस्तं पावको गत्वा दृष्ट्वालिंग्य चुचुम्ब च ।।
पुत्रेति चोक्त्वा तस्मै स शस्त्रं शक्तिन्ददौ च सः ।। १९ ।।
गुहस्तां शक्तिमादाय तच्छृंगं चारुरोह ह ।।
तं जघान तया शक्त्या शृंगो भुवि पपात सः ।।2.4.3.२०।।
दशपद्ममिता वीरा राक्षसाः पूर्वमागताः।।
तद्वधार्थं द्रुतं नष्टा बभूवुस्तत्प्रहारतः।।२१।।
हाहाकारो महानासीच्चकंपे साचला मही।।
त्रैलोक्यं च सुरेशानस्सदेवस्तत्र चागमत्।।२२।।
दक्षिणे तस्य पार्श्वे च वज्रेण स जघान च ।।
शाखनामा ततो जातः पुमांश्चैको महाबलः ।।२३।।
पुनश्शक्रो जघानाऽऽशु वामपार्श्वे हि तं तदा ।।
वज्रेणाऽन्यः पुमाञ्जातो विशाखाख्योऽपरो बली ।।२४।।
ततस्तद्धृदयं शक्रो जघान पविना तदा ।।
परोऽभून्नैगमोपाख्यः पुमांस्तद्वन्महाबलः ।। २५ ।।
तदा स्कंदादिचत्वारो महावीरा महाबलाः ।।
इन्द्रं हंतुं द्रुतं जग्मुस्सोयं तच्छरणं ययौ ।। २५ ।।
शक्रस्स सामरगणो भयं प्राप्य गुहात्ततः ।।
ययौ स्वलोकं चकितो न भेदं ज्ञातवान्मुने ।। २७ ।।
स बालकस्तु तत्रैव तस्थाऽऽवानंदसंयुतः ।।
पूर्ववन्निर्भयस्तात नानालीलाकरः प्रभुः ।। २८ ।।
तस्मिन्नवसरे तत्र कृत्तिकाख्याश्च षट् स्त्रियः ।।
स्नातुं समागता बालं ददृशुस्तं महाप्रभुम् ।। २९ ।।

ग्रहीतुं तं मनश्चक्रुस्सर्वास्ता कृत्तिकाः स्त्रियः ।।
वादो बभूव तासां तद्ग्रहणेच्छापरो मुने ।। 2.4.3.३० ।।
तद्वादशमनार्थं स षण्मुखानि चकार ह ।।
पपौ दुग्धं च सर्वासां तुष्टास्ता अभवन्मुने ।। ३१ ।
तन्मनोगतिमाज्ञाय सर्वास्ताः कृत्तिकास्तदा ।।
तमादाय ययुर्लोकं स्वकीयं मुदिता मुने ।।३२।।
तं बालकं कुमाराख्यं स्तनं दत्त्वा स्तनार्थिने ।।
वर्द्धयामासुरीशस्य सुतं सूर्याधिकप्रभम् ।।३३।।
न चक्रुर्बालकं याश्च लोचनानामगोचरम् ।।
प्राणेभ्योपि प्रेमपात्रं यः पोष्टा तस्य पुत्रक ।।३४।।
यानि यानि च वस्त्राणि त्रैलोक्ये दुर्लभानि च ।।
ददुस्तस्मै च ताः प्रेम्णा भूषणानि वराणि वै ।।३५।।
दिनेदिने ताः पुपुषुर्बालकं तं महाप्रभुम् ।।
प्रसंसितानि स्वादूनि भोजयित्वा विशेषतः ।। ३६ ।।
अथैकस्मिन् दिने तात स बालः कृत्तिकात्मजः ।।
गत्वा देवसभां दिव्यां सुचरित्रं चकार ह।।३७।।
स्वमहो दर्शयामास देवेभ्यो हि महाद्भुतम् ।।
सविष्णुभ्योऽखिलेभ्यश्च महोतिकरबालकः ।। ३८ ।।
तं दृष्ट्वा सकलास्ते वै साच्युतास्सर्षयस्सुराः ।।
विस्मयं प्रापुरत्यन्तं पप्रच्छुस्तं च बालकम् ।। ३९ ।।
को भवानिति तच्छ्रुत्वा न किंचित्स जगाद ह ।।
स्वालयं स जगामाऽशु गुप्तस्तस्थौ हि पूर्ववत् ।। 2.4.3.४० ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां चतुर्थे कुमारखण्डे कार्तिकेयलीलावर्णनं नाम तृतीयोऽध्यायः ।। ३ ।।

नारद उवाच ।।
देवदेव प्रजानाथ ततः किमभवद्विधे ।।
वदेदानीं कृपातस्तु शिवलीलासमन्वितम् ।।१।।
।। ब्रह्मोवाच ।।
कृत्तिकाभिर्गृहीते वै तस्मिञ्शंभुसुते मुने ।।
कश्चित्कालो व्यतीयाय बुबुधे न हिमाद्रिजा ।।२।।
तस्मिन्नवसरे दुर्गा स्मेराननसरोरुहा।।
उवाच स्वामिनं शंभुं देवदेवेश्वरं प्रभुम् ।। ३ ।। ।।
पार्वत्युवाच ।।
देवदेव महादेव शृणु मे वचनं शुभम् ।।
पूर्वपुण्यातिभारेण त्वं मया प्राप्त ईश्वर ।।४।।
कृपया योगिषु श्रेष्ठो विहारैस्तत्परोऽभवः ।।
रतिभंगः कृतो देवैस्तत्र मे भवता भव ।।५।।
भूमौ निपतितं वीर्यं नोदरे मम ते विभो ।।
कुत्र यातं च तद्देव केन दैवेन निह्णुतम् ।। ६ ।।
कथं मत्स्वामिनो वीर्यममोघं ते महेश्वर ।।
मोघं यातं च किं किंवा शिशुर्जातश्च कुत्रचित् ।। ७ ।।
ब्रह्मोवाच ।।
पार्वतीवचनं श्रुत्वा प्रहस्य जगदीश्वरः ।।
उवाच देवानाहूय मुनींश्चापि मुनीश्वर ।। ८ ।।
।। महेश्वर उवाच ।।
देवाः शृणुत मद्वाक्यं पार्वतीवचनं श्रुतम् ।।
अमोघं कुत्र मे वीर्यं यातं केन च निह्नुतम् ।। ९ ।। ।।
सभयं नापतत्क्षिप्रं स चेद्दंडं न चार्हति ।।
शक्तौ राजा न शास्ता यः प्रजाबाध्यश्च भक्षकः ।। 2.4.4.१० ।।
शंभोस्तद्वचनं श्रुत्वा समालोच्य परस्परम् ।।
ऊचुस्सर्वे क्रमेणैव त्रस्तास्तु पुरतः प्रभोः।।११।।
विष्णुरुवाच ।।
ते मिथ्यावादिनस्संतु भारते गुरुदारिकाः ।।
गुरुनिन्दारताश्शश्वत्त्वद्वीर्यं यैश्च निह्नुतम् ।।१२।।
ब्रह्मोवाच ।।
त्वद्वीर्यं निह्नुतं येन पुण्यक्षेत्रे च भारते ।।
स नाऽन्वितो भवेत्तत्र सेवने पूजने तव ।। १३ ।।

लोकपाला ऊचुः ।।
त्वदवीर्यं निह्नुतं येन पापिना पतितभ्रमात् ।।
भाजनं तस्य सोत्यन्तं तत्तपं कर्म संततिम् ।।१४।।
देवा ऊचुः ।।
कृत्वा प्रतिज्ञां यो मूढो नाऽऽपादयति पूर्णताम् ।।
भाजनं तस्य पापस्य त्वद्वीर्यं येन निह्नुतम् ।। १५ ।।
देवपत्न्य ऊचुः ।।
या निदति स्वभर्तारं परं गच्छति पूरुषम् ।।
मातृबन्धुविहीना च त्वद्वीर्यं निह्नुतं यया ।। १६ ।।
।। ब्रह्मोवाच ।।
देवानां वचनं श्रुत्वा देवदेवेश्वरो हरः ।।
कर्म्मणां साक्षिणश्चाह धर्मादीन्सभयं वचः ।।१७।।
श्रीशिव उवाच ।।
देवैर्न निह्नुतं केन तद्वीर्यं निह्नुतं ध्रुवम् ।।
तदमोघं भगवतो महेशस्य मम प्रभोः ।। १८ ।।
यूयं च साक्षिणो विश्वे सततं सर्वकर्मणाम् ।।
युष्माकं निह्नुतं किम्वा किं ज्ञातुं वक्तुमर्हथ ।। १९ ।।
।। ब्रह्मोवाच ।।
ईश्वरस्य वचः श्रुत्वा सभायां कंपिताश्च ते ।।
परस्परं समालोक्य क्रमेणोचुः पुराः प्रभोः ।।2.4.4.२०।।
ब्रह्मोवाच ।।
रते तु तिष्ठतो वीर्यं पपात वसुधातले ।।
मया ज्ञातममोघं तच्छंकरस्य प्रकोपतः ।। २१ ।।
।। क्षितिरुवाच ।।
वीर्यं सोढुमशक्ताहं तद्वह्नो न्यक्षिपं पुरा ।।
अतोऽत्र दुर्वहं ब्रह्मन्नबलां क्षंतुमर्हसि ।। २२ ।।
वह्निरुवाच ।।
वीर्यं सोढुमशक्तोहं तव शंकर पर्वते ।।
कैलासे न्यक्षिपं सद्यः कपोतात्मा सुदुस्सहम् ।। २३ ।।
।। गिरिरुवाच ।।
वीर्यं सोढुमशक्तोऽहं तव शंकर लोकप ।।
गंगायां प्राक्षिपं सद्यो दुस्सहं परमेश्वर ।। २४ ।।
।। गंगोवाच ।।

वीर्यं सोढुमशक्ताहं तव शंकर लोकप ।।
व्याकुलाऽति प्रभो नाथ न्यक्षिपं शरकानने ।। २५ ।।
।। वायुरुवाच ।।
शरेषु पतितं वीर्यं सद्यो बालो बभूव ह ।।
अतीव सुन्दरश्शम्भो स्वर्नद्याः पावने तटे ।। २६ ।।
सूर्य उवाच ।।
रुदंतं बालकं दृष्ट्वा गममस्ताचलं प्रभो ।।
प्रेरितः कालचक्रेण निशायां स्थातुमक्षमः ।। २७ ।।
चन्द्र उवाच ।। रुदंतं बालकं प्राप्य गृहीत्वा कृत्तिकागणः ।।
जगाम स्वालयं शंभो गच्छन्बदरिकाश्रमम्।।२८।।
जलमुवाच ।।
अमुं रुदंतमानीय स्तन्यपानेन ताः प्रभो ।।
वर्द्धयामासुरीशस्य सुतं तव रविप्रभम् ।। २९ ।।
।। संध्योवाच ।।
अधुना कृत्तिकानां च वनं तम्पोष्य पुत्रकम् ।।
तन्नाम चक्रुस्ताः प्रेम्णा कार्त्तिकश्चेति कौतुकात् ।।2.4.4.३०।।
रात्रिरुवाच ।।
न चक्रुर्बालकं ताश्च लोचनानामगोचरम् ।।
प्राणेभ्योपि प्रीतिपात्रं यः पोष्टा तस्य पुत्रकः ।। ३१ ।।
दिनमुवाच ।।
यानि यानि च वस्त्राणि भूषणानि वराणि च ।।
प्रशंसितानि स्वादूनि भोजयामासुरेव तम् ।। ३२ ।।
ब्रह्मोवाच ।।
तेषां तद्वचनं श्रुत्वा संतुष्टः पुरसूदनः ।।
मुदं प्राप्य ददौ प्रीत्या विप्रेभ्यो बहुदक्षिणाम् ।। ३३ ।।
पुत्रस्य वार्त्तां संप्राप्य पार्वती हृष्टमानसा ।।
कोटिरत्नानि विप्रेभ्यो ददौ बहुधनानि च ।। ३४ ।।
लक्ष्मी सरस्वती मेना सावित्री सर्वयोषितः ।।
विष्णुस्सर्वे च देवाश्च ब्राह्मणेभ्यो ददुर्धनम् ।। ३५ ।।
प्रेरितस्स प्रभुर्देवैर्मुनिभिः पर्वतैरथ ।।
दूतान् प्रस्थापयामास स्वपुत्रो यत्र तान् गणान् ।। ३६ ।।
वीरभद्रं विशालाक्षं शंकुकर्णं कराक्रमम् ।।
नन्दीश्वरं महाकालं वज्रदंष्ट्रं महोन्मदम् ।। ३७ ।।

गोकर्णास्यं दधिमुखं ज्वलदग्निशिखोपमम् ।।
लक्षं च क्षेत्रपालानां भूतानां च त्रिलक्षकम् ।। ३८ ।।
रुद्रांश्च भैरवांश्चैव शिवतुल्यपराक्रमान् ।।
अन्यांश्च विकृताकारानसंख्यानपि नारद ।। ३९ ।।
ते सर्वे शिवदूताश्च नानाशस्त्रास्त्रपाणयः ।।
कृत्तिकानां च भवनं वेष्टयामासुरुद्धताः ।। 2.4.4.४० ।।
दृष्ट्वा तान् कृत्तिकास्सर्वा भयविह्नलमानसाः ।।
कार्त्तिकं कथयामासुर्ज्वलंतं ब्रह्मतेजसा ।। ४१ ।।
।। कृत्तिका ऊचुः ।।
वत्स सैन्यान्यसंख्यानि वेष्टयामासुरालयम् ।।
किं कर्तव्यं क्व गंतव्यं महाभयमुपस्थितम् ।। ४२ ।।
कार्तिकेय उवाच ।।
भयं त्यजत कल्याण्यो भयं किं वा मयि स्थिते ।।
दुर्निवार्योऽस्मि बालश्च मातरः केन वार्यते ।। ४३ ।।
।। ब्रह्मोवाच ।।
एतस्मिन्नंतरे तत्र सैन्येन्द्रो नन्दिकेश्वरः ।।
पुरतः कार्तिकेयस्योपविष्टस्समुवाच ह ।। ४४ ।।
नन्दीश्वर उवाच ।।
भ्रातः प्रवृत्तिं शृणु मे मातरश्च शुभावहाम् ।।
प्रेरितोऽहं महेशेन संहर्त्रा शंकरेण च ।। ४५ ।।
कैलासे सर्वदेवाश्च ब्रह्मविष्णुशिवादयः ।।
सभायां संस्थितास्तात महत्युत्सवमंगले ।। ४६ ।।
तदा शिवा सभायां वै शंकरं सर्व शंकरम् ।।
सम्बोध्य कथयामास तवान्वेषणहेतुकम् ।। ४७ ।।
पप्रच्छ तान्शिवो देवान् क्रमात्त्वत्प्राप्तिहेतवे ।।
प्रत्युत्तरं ददुस्ते तु प्रत्येकं च यथोचितम् ।। ४८ ।।
त्वामत्र कृत्तिकास्थाने कथयामासुरीश्वरम् ।।
सर्वे धर्मादयो धर्माधर्मस्य कर्मसाक्षिणः ।। ४९ ।।
प्रबभूव रहः क्रीडा पार्वतीशिवयोः पुरा ।।
दृष्टस्य च सुरैश्शंभोर्वीर्यं भूमौ पपात ह ।। 2.4.4.५० ।।
भूमिस्तदक्षिपद्वह्नौ वह्निश्चाद्रौ स भूधरः ।।
गंगायां सोऽक्षिपद्वेगात् तरंगैश्शरकानने ।। ५१ ।।
तत्र बालोऽभवस्त्वं हि देवकार्यकृति प्रभुः ।।

तत्र लब्धः कृत्तिकाभिस्त्वं भूमिं गच्छ सांप्रतम् ।। ५२ ।।
तवाभिषेकं शंभुस्तु करिष्यति सुरैस्सह ।।
लप्स्यसे सर्वशस्त्राणि तारकाख्यं हनिष्यसि ।। ५३ ।।
पुत्रस्त्वं विश्वसंहर्त्तुस्त्वां प्राप्तुञ्चाऽक्षमा इमाः ।।
नाग्निं गोप्तुं यथा शक्तश्शुष्कवृक्षस्स्व कोटरे ।। ५४ ।।
दीप्तवांस्त्वं च विश्वेषु नासां गेहेषु शोभसे ।।
यथा पतन्महाकूपे द्विजराजो न राजत ।। ५५ ।।
करोषि च यथाऽलोकं नाऽऽच्छन्नोऽस्मासु तेजसा ।।
यथा सूर्यः कलाछन्नो न भवेन्मानवस्य च ।।५६।।
विष्णुस्त्वं जगतां व्यापी नान्यो जातोसि शांभव ।।
यथा न केषां व्याप्यं च तत्सर्वं व्यापकं नभः ।।२७।।
योगीन्द्रो नाऽनुलिप्तश्च भागी चेत्परिपोषणे ।।
नैव लिप्तो यथात्मा च कर्मयोगेषु जीविनाम् ।। ५८ ।।
विश्वारंभस्त्वमीशश्च नासु ते संभवेत् स्थितिः ।।
गुणानां तेजसां राशिर्यथात्मानं च योगिनः ।। ५९ ।।
भ्रातर्ये त्वां न जानंति ते नरा हतबुद्धयः ।।
नाद्रियन्ते यथा भेकास्त्वेकवासाश्च पंकजान् ।। 2.4.4.६० ।।
कार्त्तिकेय उवाच ।। ।।
भ्रातस्सर्वं विजानासि ज्ञानं त्रैकालिकं च यत् ।।
ज्ञानी त्वं का प्रशंसा ते यतो मृत्युञ्जयाश्रितः ।। ६१ ।।
कर्मणां जन्म येषां वा यासु यासु योनिषु ।।
तासु ते निर्वृतिं भ्रातः प्राप्नुवंतीह सांप्रतम् ।। ६२ ।।
कृत्तिका ज्ञानवत्यश्च योगिन्यः प्रकृतेः कलाः ।।
स्तन्येनासां वर्द्धितोऽहमुपकारेण संततम् ।। ६३ ।।
आसामहं पोष्यपुत्रो मदंशा योषितस्त्विमाः ।।
तस्याश्च प्रकृतेरंशास्ततस्तत्स्वामिवीर्यजः ।। ६४ ।।
न मद्भंगो हे शैलेन्द्रकन्यया नन्दिकेश्वर ।।
सा च मे धर्मतो माता यथेमास्सर्वसंमताः ।। ६५ ।।
शम्भुना प्रेषितस्त्वं च शंभोः पुत्रसमो महान् ।।
आगच्छामि त्वया सार्द्धं द्रक्ष्यामि देवताकुलम् ।।६६।।
इत्येवमुक्त्वा तं शीघ्रं संबोध्य कृत्तिकागणम् ।।
कार्त्तिकेयः प्रतस्थे हि सार्द्धं शंकरपार्षदैः ।। ६७ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां चतुर्थे कुमारखण्डे कार्त्तिकेयान्वेषणनन्दिसंवादवर्णनं नाम चतुर्थोऽध्यायः ।।४।।

ब्रह्मोवाच ।।
एतस्मिन्नंतरे तत्र ददर्श रथमुत्तमम् ।।
अद्भुतं शोभितं शश्वद्विश्वकर्मविनिर्मितम् ।।१।।
शतचक्रं सुविस्तीर्णं मनोयायि मनोहरम् ।।
प्रस्थापितं च पार्वत्या वेष्टितं पार्षदैर्वरैः ।।२।।
समारोहत्ततोऽनंतो हृदयेन विदूयता ।।
कार्त्तिकः परम ज्ञानी परमेशानवीर्यजः ।।३।।
तदैव कृत्तिकाः प्राप्य मुक्तकेश्यश्शुचाऽऽतुराः ।।
उन्मत्ता इव तत्रैव वक्तुमारेभिरे वचः ।।४।।
कृत्तिका ऊचुः ।।
विहायाऽस्मान् कृपासिन्धो गच्छसि त्वं हि निर्दयः ।।
नायं धर्मो मातृवर्गान् पालितो यत् सुतस्त्यजेत् ।। ५ ।।
स्नेहेन वर्द्धितोऽस्माभिः पुत्रोऽस्माकं च धर्मतः ।।
किं कुर्मः क्व च यास्यामो वयं किं करवाम ह ।।६।।
इत्युक्त्वा कृत्तिकास्सर्वाः कृत्वा वक्षसि कार्त्तिकम्।।
द्रुतं मूर्च्छामवापुस्तास्सुतविच्छेदकारणात्।।७।।
ताः कुमारो बोधयित्वा अध्यात्मवचनेन वै ।।
ताभिश्च पार्षदैस्सार्द्धमारुरोह रथं मुने ।।८।।
दृष्ट्वा श्रुत्वा मंगलानि बहूनि सुखदानि वै ।।
कुमारः पार्षदैस्सार्द्धं जगाम पितृमन्दिरम् ।।९।।
दक्षेण नंदियुक्तश्च मनोयायिरथेन च ।।
कुमारः प्राप कैलासं न्यग्रोधाऽक्षयमूलके।।2.4.5.१०।।
तत्र तस्थौ कृत्तिकाभिः पार्षदप्रवरैः सह।।
कुमारश्शांकरिः प्रीतो नानालीलाविशारदः ।।११।।
तदा सर्वे सुरगणा ऋषयः सिद्धचारणाः ।।
विष्णुना ब्रह्मणा सार्द्धं समाचख्युस्तदागमम्।।१२।।
तदा दृष्ट्वा च गांगेयं ययौ प्रमुदितश्शिवः ।
अन्यैस्समेतो हरिणा ब्रह्मणा च सुरर्षिभिः ।।१३।।
शंखाश्च बहवो नेदुर्भेरी तूर्याण्यनेकशः ।।
उत्सवस्तु महानासीद्देवानां तुष्टचेतसाम् ।।१४।।
तदानीमेव तं सर्वे वीरभद्रादयो गणाः ।।
कुर्वन्तः स्वन्वयुः केलिं नानातालधरस्वराः ।। १५ ।।
स्तावकाः स्तूयमानाश्च चक्रुस्ते गुणकीर्त्तनम् ।।

जयशब्दं नमश्शब्दं कुर्वाणाः प्रीतमानसाः।। १६ ।।
द्रष्टुं ययुस्तं शरजं शिवात्मजमनुत्तमम् ।।१७।।
पार्वती मंगलं चक्रे राजमार्गं मनोहरम् ।।
पद्मरागादिमणिभिस्संस्कृतं परितः पुरम् ।।१८।।
पतिपुत्रवतीभिश्च साध्वीभिः स्त्रीभिरन्विता ।।
लक्ष्म्यादित्रिंशद्देवीश्च पुरः कृत्वा समाययौ।।१९।।
रम्भाद्यप्सरसो दिव्यास्स स्मिता वेषसंयुताः ।।
संगीतनर्तनपरा बभूवुश्च शिवाज्ञया ।।2.4.5.२०।।
ये तं समीक्षयामासुर्गांगेयं शंकरोपमम् ।।
ददृशुस्ते महत्तेजो व्याप्तमासीज्जगत्त्रये ।।२१।।
तत्तेजसा वृतं बालं तप्तचामीकरप्रभम् ।।
ववंदिरे द्रुतं सर्वे कुमारं सूर्यवर्चसम् ।। २२ ।।
जहुर्षुर्विनतस्कंधा नमश्शब्दरतास्तदा ।।
परिवार्योपतस्थुस्ते वामदक्षिणमागताः ।।२३।।
अहं विष्णुश्च शक्रश्च तथा देवादयोऽखिलाः ।।
दण्डवत्पतिता भूमौ परिवार्य्य कुमारकम् ।।२४।।
एतस्मिन्नन्तरे शंभुर्गिरिजा च मुदान्विता ।।
महोत्सवं समागम्य ददर्श तनयं मुदा ।।२५।।
पुत्रं निरीक्ष्य च तदा जगदेकबंधुः प्रीत्यान्वितः परमया परया भवान्या ।।
स्नेहान्वितो भुजगभोगयुतो हि साक्षात्सर्वेश्वरः परिवृतः प्रमथैः परेशः २६।।
अथ शक्तिधरः स्कन्दौ दृष्ट्वा तौ पार्वतीशिवौ ।।
अवरुह्य रथात्तूर्णं शिरसा प्रणनाम ह ।।२७।।
उपगुह्य शिवः प्रीत्या कुमारं मूर्ध्नि शंकरः ।।
जघ्रौ प्रेम्णा परमेशानः प्रसन्नः स्नेहकर्तृकः ।।२८।।
उपगुह्य गुहं तत्र पार्वती जातसंभ्रमा ।।
प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता ।।२९।।
तदा नीराजितो देवैस्सकलत्रैर्मुदान्वितैः ।।
जयशब्देन महता व्याप्तमासीन्नभस्तलम् ।। 2.4.5.३० ।।
ऋषयो ब्रह्मघोषेण गीतेनैव च गायकाः ।।
वाद्यैश्च बहवस्तत्रोपतस्थुश्च कुमारकम् ।।३१।।
स्वमंकमारोप्य तदा महेशः कुमारकं तं प्रभया समुज्ज्वलम् ।।
बभौ भवानीपतिरेव साक्षाच्छ्रियाऽन्वितः पुत्रवतां वरिष्ठः ।।३२।।
कुमारः स्वगणैः सार्द्धमाजगाम शिवालयम् ।।

शिवाज्ञया महोत्साहैस्सह देवैर्महासुखी ।। ३३ ।।
दंपती तौ तदा तत्रैकपद्येन विरेजतुः ।।
विवंद्यमानावृषिभिरावृतौ सुरसत्तमैः ।। ३४ ।।
कुमारः क्रीडयामास शिवोत्संगे मुदान्वितः ।।
वासुकिं शिवकंठस्थं पाणिभ्यां समपीडयत् ।। ३५ ।।
प्रहस्य भगवाञ् शंभुश्शशंस गिरिजां तदा ।।
निरीक्ष्य कृपया दृष्ट्या कृपालुर्लीलयाकृतिम् ।।३६।।
मदस्मितेन च तदा भगवान्महेशः प्राप्तो मुदं च परमां गिरिजासमेतः ।।
प्रेम्णा स गद्गदगिरो जगदेकबंधुर्नोवाच किंचन विभुर्भुवनैकभर्त्ता।। ३७ ।।
अथ शंभुर्जगन्नाथो हृष्टो लौकिकवृत्तवान् ।।
रत्नसिंहासने रम्ये वासयामास कार्त्तिकम्।।३८।।
वेदमंत्राभिपूतैश्च सर्वतीर्थोदपूर्णकैः ।।
सद्रत्नकुंभशतकैः स्नापया मास तं मुदा ।। ३९ ।।
सद्रत्नसाररचितकिरीटमुकुटांगदम्।।
वैजयन्ती स्वमालां च तस्मै चक्रं ददौ हरिः ।।2.4.5.४०।।
शूलं पिनाकं परशुं शक्ति पाशुपतं शरम् ।।
संहारास्त्रं च परमां विद्यां तस्मै ददौ शिवः ।।४१।।
अदामहं यज्ञसूत्रं वेदांश्च वेदमातरम् ।।
कमण्डलुं च ब्रह्मास्त्रं विद्यां चैवाऽरिमर्दिनीम् ।। ४२ ।।
गजेन्द्रं चैव वज्रं च ददौ तस्मै सुरेश्वरः ।।
श्वेतच्छत्रं रत्नमालां ददौ वस्तुं जलेश्वरः ।।४३।।
मनोयायिरथं सूर्यस्सन्नाहं च महाचयम् ।।
यमदंडं यमश्चैव सुधाकुंभं सुधानिधिः ।।४४।।
हुताशनो ददौ प्रीत्या महाशक्तिं स्वसूनवे ।।
ददौ स्वशस्त्रं निर्ऋतिर्वायव्यास्त्रं समीरणः ।।४५।।
गदां ददौ कुबेरश्च शूलमीशो ददौ मुदा ।।
नानाशस्त्राण्युपायांश्च सर्वे देवा ददुर्मुदा ।।४६।।
कामास्त्रं कामदेवोऽथ ददौ तस्मै मुदान्वितः ।।
गदां ददौ स्वविद्याश्च तस्मै च परया मुदा ।।४७।।
क्षीरोदोऽमूल्यरत्नानि विशिष्टं रत्ननूपुरम्।।
हिमालयो हि दिव्यानि भूषणान्यंशुकानि च ।। ४८ ।।
चित्रबर्हणनामानं स्वपुत्रं गरुडो ददौ ।।
अरुणस्ताम्रचूडाख्यं बलिनं चरणायुधम्।।४९।।

पार्वती सस्मिता हृष्टा परमैश्वर्यमुत्तमम् ।।
ददौ तस्मै महाप्रीत्या चिरंजीवित्वमेव च ।।2.4.5.५०।।
लक्ष्मीश्च संपदं दिव्यां महाहारं मनोहरम् ।।
सावित्री सिद्धविद्यां च समस्तां प्रददौ मुदा ।।५१।।
अन्याश्चापि मुने देव्यो यायास्तत्र समागताः ।।
स्वात्मवत्सु ददुस्तस्मै तथैव शिशुपालिकाः ।। ५२ ।।
महामहोत्सवस्तत्र बभूव मुनिसत्तम ।।
सर्वे प्रसन्नतां याता विशेषाच्च शिवाशिवौ।। ५३ ।।
एतस्मिन्नंतरे काले प्रोवाच प्रहसन् मुदा।।
मुने ब्रह्मादिकान् देवान् रुद्रो भर्गः प्रतापवान्।। ५४ ।।
शिव उवाच ।।
हे हरे हे विधे देवास्सर्वे शृणुत मद्वचः ।। ।।
सर्वथाहं प्रसन्नोस्मि वरान्वृणुत ऐच्छिकान् ।। ५५ ।।
।। ब्रह्मोवाच ।।
तच्छ्रुत्वा वचनं शंभोर्मुनेविष्ण्वादयस्सुराः ।।
सर्वे प्रोचुः प्रसन्नास्या देवं पशुपतिं प्रभुम् ।। ५६ ।।
कुमारेण हतो ह्येष तारको भविता प्रभो ।।
तदर्थमेव संजातमिदं चरितमुत्तमम् ।। ५७ ।।
तस्माददद्यैव यास्यामस्तारकं हन्तुमुद्यता ।।
आज्ञां देहि कुमाराय स तं हंतुं सुखाय नः ।। ५८ ।।
।। ब्रह्मोवाच ।।
तथेति मत्वा स विभुर्दत्तवांस्तनयं तदा ।।
देवेभ्यस्तारकं हंतुं कृपया परिभावितः ।। ५९ ।।
शिवाज्ञया सुरास्सर्वे ब्रह्मविष्णुमुखास्तदा ।।
पुरस्कृत्य गुहं सद्यो निर्जग्मुर्मिलिता गिरेः ।।2.4.5.६०।।
बहिर्निस्सृत्य कैलासात्त्वष्टा शासनतो हरेः ।।
विरेचे नगरं रम्यमद्भुतं निकटे गिरेः ।। ६१ ।।
तत्र रम्यं गृहं दिव्यमद्भुतं परमो ज्ज्वलम् ।।
गुहार्थं निर्ममे त्वष्टा तत्र सिंहासनं वरम् ।।६२।।
तदा हरिस्सुधीर्भक्त्या कारयामास मंगलम् ।।
कार्त्तिकस्याभिषेकं हि सर्वतीर्थजलैस्सुरैः ।। ६३ ।।
सर्वथा समलंकृत्य वासयामास संग्रहम् ।।
कार्त्तिकस्य विधिं प्रीत्या कारयामास चोत्सवम् ।। ६४ ।। ।।

ब्राह्मांडाधिपतित्वं हि ददौ तस्मै मुदा हरिः ।।
चकार तिलकं तस्य समानर्च सुरैस्सह ।। ६५ ।।
प्रणम्य कार्त्तिकं प्रीत्या सर्वदेवर्षिभिस्सह ।।
तुष्टाव विविधस्स्तोत्रैः शिवरूपं सनातनम्।।६६।।
वरसिंहासनस्थो हि शुशुभेऽतीव कार्तिकः ।।
स्वामिभावं समापन्नो ब्रह्मांडस्यासि पालकः ।। ६७ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां चतुर्थे कुमारखण्डे कुमाराभिषेकवर्णनं नाम पंचमोऽध्यायः ।।५।।

।। ब्रह्मोवाच ।।
अथ तत्र स गांगेयो दर्शयामास सूतिकाम् ।।
तामेव शृणु सुप्रीत्या नारद त्वं स्वभक्तिदाम् ।।१।।
द्विज एको नारदाख्य आजगाम तदैव हि ।।
तत्राध्वरकरः श्रीमाञ्शरणार्थं गुहस्य वै ।। २ ।।
स विप्रः प्राप्य निकटं कार्त्तिकस्य प्रसन्नधीः ।।
स्वाभिप्रायं समाचख्यौ सुप्रणम्य शुभैः स्तवैः ।। ३ ।।
।। विप्र उवाच ।।
शृणु स्वामिन्वचो मेद्य कष्टं मे विनिवारय ।।
सर्वब्रह्मांडनाथस्त्वमतस्ते शरणं गतः।।४।।
अजमेधाध्वरं कर्तुमारंभं कृतवानहम् ।।
सोऽजो गतो गृहान्मे हि त्रोटयित्वा स्वबंधनम् ।। ५ ।।
न जाने स गतः कुत्राऽन्वेषणं तत्कृतं बहु ।।
न प्राप्तोऽतस्स बलवान् भंगो भवति मे क्रतोः ।। ६ ।।
त्वयि नाथे सति विभो यज्ञभंगः कथं भवेत् ।।
विचार्य्यैवाऽखिलेशान काम पूर्णं कुरुष्व मे ।। ७ ।।
त्वां विहाय शरण्यं कं यायां शिवसुत प्रभो ।।
सर्वब्रह्मांडनाथं हि सर्वामरसुसेवितम् ।।८।।
दीनबंधुर्दयासिन्धुस्सुसेव्या भक्तवत्सलः।।
हरिब्रह्मादिदेवैश्च सुस्तुतः परमेश्वरः ।।९।।
पार्वतीनन्दनस्स्कन्दः परमेकः परंतपः ।।
परमात्माऽत्मदस्स्वामी सतां च शरणार्थिनाम् ।। 2.4.6.१० ।।
दीनानाथ महेश शंकरसुत त्रैलोक्यनाथ प्रभो मायाधीश समागतोऽस्मि शरणं मां पाहि विप्रप्रिय ।।
त्वं सर्वप्रभुप्रियः खिलविदब्रह्मादिदेवैस्तुतस्त्वं मायाकृतिरात्मभक्तसुखदो रक्षापरो मायिकः ।। ११ ।।
भक्तप्राणगुणाकरस्त्रिगुणतो भिन्नोसि शंभुप्रियः शंभुः शंभुसुतः प्रसन्नसुखदस्सच्चित्स्वरूपो महान्।।
सर्वज्ञस्त्रिपुरघ्नशंकरसुतः सत्प्रेमवश्यस्सदा षड्वक्त्रः प्रियसाधुरानतप्रियस्सर्वेश्वर श्शंकरः ।।
साधुद्रोहकरघ्न शंकरगुरो ब्रह्मांडनाथो प्रभुः सर्वेषाममरादिसेवितपदो मां पाहि सेवाप्रिय ।। १२ ।।
वैरिभयंकर शंकर जनशरणस्य वन्दे तव पदपद्मं सुखकरणस्य ।।
विज्ञप्तिं मम कर्णे स्कन्द निधेहि निजभक्तिं जनचेतसि सदा विधेहि ।। १३ ।।
करोति किं तस्य बली विपक्षो दक्षोऽपि पक्षोभयापार्श्वगुप्तः ।।
किन्तक्षकोप्यामिषभक्षको वा त्वं रक्षको यस्य सदक्षमानः ।।१४।।
विबुधगुरुरपि त्वां स्तोतुमीशो न हि स्यात्कथय कथमहं स्यां मंदबुद्धिर्वराच्र्यः ।।

शुचिरशुचिरनार्यो यादृशस्तादृशो वा पदकमल परागं स्कन्द ते प्रार्थयामि ।। १५ ।।
हे सर्वेश्वर भक्तवत्सल कृपासिन्धो त्वदीयोऽस्म्यहं भृत्यस्स्वस्य न सेवकस्य गणपस्याऽऽ गश्शतं सत्प्रभो ।।
भक्तिं क्वापि कृतां मनागपि विभो जानासि भृत्यार्तिहा।।
त्वत्तो नास्त्यपरोऽविता न भगवन् मत्तो नरः पामरः ।। १६ ।।
कल्याणकर्त्ता कलिकल्मषघ्नः कुबेरबन्धुः करुणार्द्रचित्तः ।।
त्रिषट्कनेत्रो रसवक्त्रशोभी यज्ञं प्रपूर्णं कुरु मे गुह त्वम् ।। १७ ।।
रक्षकस्त्वं त्रिलोकस्य शरणागतवत्सलः ।।
यज्ञकर्त्ता यज्ञभर्त्ता हरसे विघ्नकारिणाम् ।। १८ ।।
विघ्नवारण साधूनां सर्ग कारण सर्वतः ।।
पूर्णं कुरु ममेशान सुतयज्ञ नमोस्तु ते ।।१९।।
सर्वत्राता स्कन्द हि त्वं सर्वज्ञाता त्वमेव हि ।।
सर्वेश्वरस्त्वमीशानो निवेशसकलाऽवनः ।।2.4.6.२०।।
संगीतज्ञस्त्वमेवासि वेदविज्ञः परः प्रभुः ।।
सर्वस्थाता विधाता त्वं देवदेवस्सतां गतिः ।।२१।।
भवानीनन्दनश्शंभुतनयो वयुनः स्वराट् ।।
ध्याता ध्येयः पितॄणां हि पिता योनिः सदात्मनाम्।। २२ ।।
।। ब्रह्मोवाच ।।
इत्याकर्ण्य वचस्तस्य देवसम्राट् शिवात्मजः ।।
स्वगणं वीरबाहवाख्यं प्रेषयामास तत्कृते ।। २३ ।।
तदाज्ञया वीरबाहुस्तदन्वेषणहेतवे।।
प्रणम्य स्वामिनं भक्त्या महावीरो द्रुतं ययौ ।। २४ ।।
अन्वेषणं चकारासौ सर्वब्रह्माण्डगोलके ।।
न प्राप तमजं कुत्र शुश्राव तदुपद्रवम् ।।२५।।
जगामाऽथ स वैकुंठं तत्राऽजं प्रददर्श तम् ।।
उपद्रवं प्रकुर्वन्तं गलयूपं महाबलम् ।। २६ ।।
धृत्वा तं शृंगयो वीरो धर्षयित्वा तिवेगतः ।।
आनिनाय स्वामिपुरो विकुर्वंतं रवं बहु ।। २७ ।।
दृष्ट्वा तं कार्तिकस्सोऽरमारुरोह स तं प्रभुः ।।
धृतब्रह्माण्डगरिमा महासूतिकरो गुहः ।। २८ ।।
मुहूर्तमात्रतस्सोऽजो ब्रह्मांडं सकलं मुने ।।
बभ्राम श्रम एवाशु पुनस्तत्स्थानमागतः ।। २९ ।।
तत उत्तीर्य स स्वामी समुवास स्वमासनम्।।

सोऽजः स्थितस्तु तत्रैव स नारद उवाच तम् ।।2.4.6.३०।।
।। नारद उवाच ।।
नमस्ते देव देवेश देहि मेऽजं कृपानिधे।।
कुर्यामध्वरमानन्दात्सखायं कुरु मामहो ।।३१।।
।। कार्त्तिक उवाच ।।
वधयोग्यो न विप्राऽजः स्वगृहं गच्छ नारद ।।
पूर्णोऽस्तु तेऽध्वरस्सर्वः प्रसादादेव मे कृतः।।३२।।
ब्रह्मोवाच ।।
इत्याकर्ण्य द्विजस्स्वामी वचनं प्रीतमानसः।।
जगाम स्वालयं दत्त्वा तस्मा आशिषमुत्तमाम् ।।३३।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां चतुर्थे कुमारखंडे कुमाराऽद्भुतचरि तवर्णनं नाम षष्ठोऽध्यायः ।।६।।

।। ब्रह्मोवाच ।।
हर्य्यादयस्सुरास्ते च दृष्ट्वा तच्चरितं विभोः ।।
सुप्रसन्ना बभूवुर्हि विश्वासासक्तमानसाः ।।१।।
वल्गंतः कुर्वतो नादं भाविताश्शिवतेजसा ।।
कुमारन्ते पुरस्कृत्य तारकं हंतुमाययुः ।। २ ।।
देवानामुद्यमं श्रुत्वा तारकोऽपि महाबलः।।
सैन्येन महता सद्यो ययौ योद्धुं सुरान् प्रति ।।३।।
देवा दृष्ट्वा समायांतं तारकस्य महाबलम्।।
बलेन बहुकुर्वन्तः सिंहनादं विसिस्मियुः ।।४।।
तदा नभोऽऽङ्गना वाणीं जगादोपरि सत्वरम् ।।
शङ्करप्रेरिता सद्यो हर्यादीनखिलान् सुरान् ।।५।।
।। व्योमवाण्युवाच ।।
कुमारं च पुरस्कृत्य सुरा यूयं समुद्यताः ।।
दैत्यान्विजित्य संग्रामे जयिनोऽथ भविष्यथ ।।६।।
ब्रह्मोवाच।।
वाचं तु खेचरीं श्रुत्वा देवास्सर्वे समुत्सुकाः ।।
वीरशब्दान् प्रकुर्वंतो निर्भया ह्यभवंस्तदा ।।७।।
कुमारं च पुरस्कृत्य सर्वे ते जातसाध्वसाः ।।
योद्धुकामास्सुरा जग्मुर्महीसागरसंगमम् ।।८।।
आजगाम द्रुतं तत्र यत्र देवास्स तारकः ।।
सैन्येन महता सार्द्धं सुरै र्बहुभिरावृत् ।।९।।
रणदुंदुभयो नेदुः प्रलयांबुद्निस्स्वनाः ।।
कर्कशानि च वाद्यानि पराणि च तदागमे ।।2.4.7.१०।।
गर्जमानास्तदा दैत्यास्तारकेणसुरेण ह ।।
कंपयन्तो भुवं पादक्रमैर्वल्गुनकारकाः ।।११।।
तच्छ्रुत्वा रवमत्युग्रं सर्वे देवा विनिर्भयाः ।।
ऐकपद्येन चोत्तस्थुर्योद्धुकामाश्च तारकम् ।। १२ ।।
गजमारोप्य देवेन्द्रः कुमारं त्यग्रतोऽभवत् ।।
सुरसैन्येन महता लोकपालैस्समावृतः ।।१३।।
तदा दुंदुभयो नेदुर्भेरीतूर्याण्यनेकशः ।।
वीणावेणुमृदंगानि तथा गंधर्वनिस्स्वनाः ।। १४ ।।
गजं दत्त्वा महेन्द्राय कुमारो यानमारुहत् ।।
अनेकाश्चर्यसंभूतं नानारत्नसमन्वितम् ।।१५।।

विमानमारुह्य तदा महायशास्स शांकरिस्सर्वगुणैरुपेतः ।।
श्रिया समेतः परया बभौ महान् संवीज्यमानश्चमरैर्महाग्रभैः।।१६।।
प्राचेतसं छत्रमतीवसुप्रभं रत्नैरुपेतं विविधैर्विराजितम्।।
धृतं तदा तच्च कुमारमूर्ध्नि वै ह्यनन्तचान्द्रैः किरणैर्महाप्रभैः ।।१७।।
मिलितास्ते तदा सर्वे देवाश्शक्रपुरोगमा ।।
स्वैःस्वैर्बलैः परिवृता युद्धकामा महाबलाः ।।१८।।
एवं देवाश्च दैत्याश्च योद्धुकामाः स्थिता भुवि ।।
सैन्येन महता तेन व्यूहं कृत्वा पृथक् पृथक् ।। १९ ।।
ते सेने सुरदैत्यानां शुशुभाते परस्परम् ।।
हंतुकामे तदान्योन्यं स्तूयमाने च बन्दिभिः ।।2.4.7.२०।।
उभे सेनं तदा तेषामगर्जेतां वनोपमे ।।
भयंकरेऽत्यवीराणामितरेषां सुखावहे ।।२१।।
एतस्मिन्नन्तरे तत्र बलोन्मत्ताः परस्परम्।।
दैत्या देवा महावीरा युयुधुः क्रोधविह्वलाः ।। २२ ।।
आसीत्सुतुमुलं युद्धं देवदैत्यसमाकुलम् ।।
रुण्डमुंडांकितं सर्वं क्षणेन समपद्यत ।। २३ ।।
भूमौ निपतितास्तत्र शतशोऽथ सहस्रशः ।।
निकृत्तांगा महाशस्त्रैर्निहता वीरसंमताः ।। २४ ।।
केषांचिद्बाहवश्छिन्ना खड्पातैस्सुदारुणैः ।।
केषांचिदूरवश्छिन्ना वीराणां मानिनां मृधे ।।२५।।
केचिन्मथितसर्वांगा गदाभिर्मुद्गरैस्तथा ।।
केचिन्निर्भिन्नहृदयाः पाशैर्भल्लैश्च पातिताः ।।२६।।
केचिद्विदारिताः पृष्ठे कुंतैर्ऋष्टिभिरंकुशैः ।।
छिन्नान्यपि शिरांस्येव पतितानि च भूतले ।। २७ ।।
बहूनि च कबंधानि नृत्यमानानि तत्र वै ।।
वल्गमानानि शतशो उद्यतास्त्रकराणि च ।। २८ ।।
नद्यः प्रवर्तितास्तत्र शतशोऽसृङ्वहास्तदा ।।
भूतप्रेतादयस्तत्र शतशश्च समागताः ।।२९।।
गोमायवश्शिवा तत्र भक्षयन्तः पलं बहु ।।
तथा गृध्रवटाश्येना वायसा मांसभक्षकाः ।।
बुभुजुः पतितानां च पलानि सुबहूनि वै ।। 2.4.7.३० ।।
एतस्मिन्नन्तरे तत्र तारकाख्यो महाबलः ।।
सैन्येन महता सद्यो ययौ योद्धुं सुरान् प्रति ।। ३१ ।।

देवा दृष्ट्वा समायान्तं तारकं युद्धदुर्मदम् ।।
योद्धुकामं तदा सद्यो ययुश्शक्रादयस्तदा ।।
बभूवाथ महोन्नादस्सेनयोरुभयोरपि ।।३२।।
अथाभूद्द्वंद्वयुद्धं हि सुरासुरविमर्दनम्।।
यं दृष्ट्वा हर्षिता वीराः क्लीबाश्च भयमागता।।३३।।
तारको युयुधे युद्धे शक्रेण दितिजो बली।।
अग्निना सह संह्रादो जंभेनैव यमः स्वयम् ।।३४।।
महाप्रभुर्नैर्ऋतेन पाशी सह बलेन च ।।
सुवीरो वायुना सार्धं पवमानेन गुह्यराट् ।।३५।।
ईशानेन समं शंभुर्युयुधे रणवित्तमः ।।
शुंभश्शेषेण युयुधे कुंभश्चन्द्रेण दानवः ।। ३६ ।।
कुंबरो मिहिरेणाजौ महाबल पराक्रमः ।।
युयुधे परमास्त्रैश्च नानायुद्धविशारदः ।।३७।।
एवं द्वन्द्वेन युद्धेन महता च सुरासुराः ।।
संगरे युयुधुस्सर्वे बलेन कृतनिश्च याः ।।३८
अन्योन्यं स्पर्द्धमानास्तेऽमरा दैत्या महाबलाः ।।
तस्मिन्देवासुरे युद्धे दुर्जया अभवन्मुने ।। ३९ ।।
तदा च तेषां सुरदानवानां बभूव युद्धं तुमुलं जयैषिणाम् ।।
सुखावहं वीरमनस्विनां वै भयावहं चैव तथेतरेषाम् ।। 2.4.7.४० ।।
मही महारौद्रतरा विनष्टकैस्सुरासुरैर्वै पतितैरनेकशः ।।
तस्मिन्नगम्यातिभयानका तदा जाता महासौख्यवहा मनस्विनाम् ।। ४१ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां चतुर्थे कुमारखण्डे युद्धप्रारंभवर्णनं नाम सप्तमोऽध्यायः ।। ७ ।।

ब्रह्मोवाच ।।
इति ते वर्णितस्तात देवदानव सेनयोः ।।
संग्रामस्तुमुलोऽतीव तत्प्रभ्वो शृणु नारद ।। १ ।।
एवं युद्धेऽतितुमुले देवदानवसंक्षये ।।
तारकेणैव देवेन्द्रश्शक्त्या रमया सह।।२।।
सद्यः पपात नागाश्च धरण्यां मूर्च्छितोऽभवत्।।
परं कश्मलमापेदे वज्रधारी सुरेश्वरः ।।३।।
तथैव लोकपास्सर्वेऽसुरैश्च बलवत्तरैः ।।
पराजिता रणे तात महारणविशारदैः ।। ४ ।।
अन्येऽपि निर्जरा दैत्यैर्युद्ध्यमानाः पराजिताः ।।
असहंतो हि तत्तेजः पलायनपरायणाः ।। ५ ।।
जगर्जुरसुरास्तत्र जयिनस्सुकृतोद्यमाः ।।
सिंहनादं प्रकुर्वन्तः कोलाहलपरायणाः ।।६।।
एतस्मिन्नंतरे तत्र वीरभद्रो रुषान्वितः ।।
आससाद गणैर्वीरैस्तारकं वीरमानिनम् ।।७।।
निर्जरान् पृष्ठतः कृत्वा शिवकोपोद्भवो बली।।
तत्सम्मुखो बभूवाथ योद्धुकामो गणाग्रणीः ।।८।।
तदा ते प्रमथास्सर्वे दैत्याश्च परमोत्सवाः।।
युयुधुस्संयुगेऽन्योन्यं प्रसक्ताश्च महारणे ।।९।।
त्रिशूलैर्ऋष्टिभिः पाशैः खड्गैः परशुपट्टिशैः ।।
निजघ्नुस्समरेऽन्योन्यं रणे रणविशारदाः ।।2.4.8.१०।।
तारको वीरभद्रेण स त्रिशूलाहतो भृशम् ।।
पपात सहसा भूमौ क्षणं मूर्छापरिप्लुतः ।। ११ ।।
उत्थाय स द्रुतं वीरस्तारको दैत्यसत्तमः ।।
लब्धसंज्ञो बलाच्छक्त्या वीरभद्रं जघान ह ।।१२।।
वीरभद्रस्तथा वीरो महातेजा हि तारकम् ।।
जघान त्रिशिखेनाशु घोरेण निशितेन तम् ।।१३।।
सोपि शक्त्या वीरभद्रं जघान समरे ततः ।।
तारको दितिजाधीशः प्रबलो वीरसंमतः ।। १४ ।।
एवं संयुद्ध्यमानौ तौ जघ्नतुश्चेतरेतरम् ।।
नानास्त्रशस्त्रैस्समरे रणविद्याविशारदौ ।। १५ ।।
तयोर्महात्मनोस्तत्र द्वन्द्वयुद्धमभूत्तदा ।।
सर्वेषां पश्यतामेव तुमुलं रोमहर्षणम् ।। १६ ।।

ततो भेरीमृदंगाश्च पटहानकगोमुखाः ।।
विनेदुर्विहता वीरैश्शृण्वतां सुभयानकाः।।१७।।
युयुधातेतिसन्नद्धौ प्रहारैर्जर्जरीकृतौ ।।
अन्योन्यमतिसंरब्धौ तौ बुधांगारकाविव ।। १८ ।।
एवं दृष्ट्वा तदा युद्धं वीरभद्रस्य तेन च ।।
तत्र गत्वा वीरभद्रमवोचस्त्वं शिवप्रियः ।। १९ ।।
नारद उवाच ।।
वीरभद्र महावीर गणानामग्रणीर्भवान् ।।
निवर्तस्व रणादस्माद्रोचते न वधस्त्वया ।। 2.4.8.२० ।।
एवं निशम्य त्वद्वाक्यं वीरभद्रो गणाग्रणीः ।।
अवदत्स रुषाविष्टस्त्वां तदा तु कृतांजलिः ।। २१ ।।
वीरभद्र उवाच ।।
मुनिवर्य महाप्राज्ञ शृणु मे परमं वचः ।।
तारकं च वधिष्यामि पश्य मेऽद्य पराक्रमम् ।।२२।।
आनयंति च ये वीरास्स्वामिनं रणसंसदि ।।
ते पापिनो महाक्लीबा विनश्यन्ति रणं गताः ।। २३ ।।
असद्गतिं प्राप्नुवन्ति तेषां च निरयो ध्रुवम् ।।
वीरभद्रो हि विज्ञेयो न वाच्यस्ते कदाचन ।।२४।।
शस्त्रास्त्रैर्भिन्नगात्रा ये रणं कुर्वंति निर्भयाः ।।
इहामुत्र प्रशंस्यास्ते लभ्यन्ते सुखमद्भुतम् ।। २५ ।।
शृण्वन्तु मम वाक्यानि देवा हरिपुरोगमाः ।।
अतारकां महीमद्य करिष्ये स्वामिवर्जिताम् ।।२६।।
इत्युक्त्वा प्रमथैस्सार्द्धं वीरभद्रो हि शूलधृक् ।।
विचिंत्य मनसा शंभुं युयुधे तारकेण हि ।। २७ ।।
वृषारूढैरनेकैश्च त्रिशूलवरधारिभिः ।।
महावीरस्त्रिनेत्रैश्च स रेजे रणसंगतः ।। २८ ।।
कोलाहलं प्रकुर्वंतो निर्भयाश्शतशो गणाः ।।
वीरभद्रं पुरस्कृत्य युयुधुर्दानवैस्सह ।। २९ ।।
असुरास्तेऽपि युयुधुस्तारकासुरजीविनः ।।
बलोत्कटा महावीरा मर्दयन्तो गणान् रुषा ।। 2.4.8.३० ।।
पुनः पुनश्चैव बभूव संगरो महोत्कटो दैत्यवरैर्गणानाम् ।।
प्रहर्षमाणाः परमास्त्रकोविदास्तदा गणास्ते जयिनो बभूवुः ।।३१।।
गणैर्जितास्ते प्रबलैरसुरा विमुखा रणे।।

पलायनपरा जाता व्यथिता व्यग्रमानसाः ।।३२।।
एवं भ्रष्टं स्वसैन्यं तद्दृष्ट्वा तत्पालकोऽसुरः ।।
तारको हि रुषाविष्टो हंतुं देवगणान् ययौ ।। ३३ ।।
भुजानामयुतं कृत्वा सिंहमारुह्य वेगतः ।।
पातयामास तान्देवान्गणांश्च रणमूर्द्धनि ।। ३४ ।।
स दृष्ट्वा तस्य तत्कर्म वीरभद्रो गणाग्रणीः ।।
चकार सुमहत्कोपं तद्वधाय महाबली ।। ३५८ ।।
स्मृत्वा शिवपदांभोजं जग्राह त्रिशिखं परम् ।।
जज्वलुस्तेजसा तस्य दिशः सर्वा नभस्तथा ।। ३६ ।।
एतस्मिन्नन्तरे स्वामी वारयामास तं रणम् ।।
वीरबाहुमुखान्सद्यो महाकौतुकदर्शकः ।। ३७ ।।
तदाज्ञया वीरभद्रो निवृत्तोऽभूद्रणात्तदा ।।
कोपं चक्रे महावीरस्तारकोऽसुरनायकः ।। ३८ ।।
चकार बाणवृष्टिं च सुरोपरि तदाऽसुरः ।।
तप्तोऽह्वासीत्सुरान्सद्यो नानास्त्ररणकोविदः ।। ३९ ।।
एवं कृत्वा महत्कर्म तारकोऽसुरपालकः ।।
सर्वेषामपि देवानामशक्यो बलिनां वरः ।।2.4.8.४०।।
एवं निहन्यमानांस्तान् दृष्ट्वा देवान् भयाकुलान् ।।
कोपं कृत्वा रणायाशु संनद्धोऽभवदच्युतः ।।४१।।
चक्रं सुदर्शनं शार्ङ्गं धनुरादाय सायुधः ।।
अभ्युद्ययौ महादैत्यं रणाय भगवान् हरिः ।।४२।।
ततस्समभवद्युद्धं हरितारकयोर्महत् ।।
लोमहर्षणमत्युग्रं सर्वेषां पश्यतां मुने ।।४३।।
गदामुद्यम्य स हरिर्जघानासुरमोजसा ।।
द्विधा चकार तां दैत्यस्त्रिशिखेन महाबली ।। ४४ ।।
ततस्स क्रुद्धो भगवान्देवानामभयंकरः ।।
शार्ङ्गच्युतैश्शरव्यूहैर्जघानासुरनायकम् ।। ४६ ।।
सोऽपि दैत्यो महावीरस्तारकः परवीरहा ।।
चिच्छेद सकलान्बाणान्स्वशरैर्निशितैर्द्रुतम् ।। ४६ ।।
अथ शक्त्या जघानाशु मुरारिं तारकासुरः ।।
भूमौ पपात स हरिस्तत्प्रहारेण मूर्च्छितः ।।४७।।
जग्राह स रुषा चक्रमुत्थितः क्षणतोऽच्युतः ।।
सिंहनादं महत्कृत्वा ज्वलज्ज्वालासमाकुलम् ।।४८।।

तेन तञ्च जघानासौ दैत्यानामधिपं हरिः ।।
तत्प्रहारेण महता व्यथितो न्यपतद्भुवि ।।४९।।
पुनश्चोत्थाय दैत्येन्द्रस्तारकोऽसुरनायकः ।।
चिच्छेद त्वरितं चक्रं स्वशक्त्यातिबलान्वितः ।।2.4.8.५०।।
पुनस्तया महाशक्त्या जघानामरवल्लभम् ।।
अच्युतोऽपि महावीरा नन्दकेन जघान तम् ।।५१।।
एवमन्योन्यमसुरो विष्णुश्च बलवानुभौ ।।
युयुधाते रणे भूरि तत्राक्षतबलौ मुने ।। ५२ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां चतुर्थे कुमारखण्डे देव दैत्यसामान्ययुद्धवर्णनं नामाष्टमोऽध्यायः ।। ८ ।।

ब्रह्मोवाच ।।
देवदेव गुह स्वामिञ्शांकरे पार्वतीसुत ।।
न शोभते रणो विष्णु तारकासुरयोर्वृथा ।।१।।
विष्णुना न हि वध्योऽसौ तारको बलवानति ।।
मया दत्तवरस्तस्मात्सत्यं सत्यं वदाम्यहम् ।। २ ।।
नान्यो हंतास्य पापस्य त्वां विना पार्वतीसुत ।।
तस्मात्त्वया हि कर्तव्यं वचनं मे महाप्रभो ।।३।।
सन्नद्धो भव दैत्यस्य वधायाशु परंतप ।।
तद्वधार्थं समुत्पन्नः शंकरात्त्वं शिवासुत ।।४।।
रक्ष रक्ष महावीर त्रिदशान्व्यथितान्रणे ।।
न बालस्त्वं युवा नैव किं तु सर्वेश्वरः प्रभुः ।। ५ ।।
शक्रं पश्य तथा विष्णुं व्याकुलं च सुरान् गणान्।।
एवं जहि महादैत्यं त्रैलोक्यं सुखिनं कुरु ।। ६ ।।
अनेन विजितश्चेन्द्रो लोकपालैः पुरा सह ।।
विष्णुश्चापि महावीरो तर्जितस्तपसो बलात्।।७।।
त्रैलोक्यं निर्जितं सर्वमसुरेण दुरात्मना।।
इदानीं तव सान्निध्यात्पुनर्युद्धं कृतं च तैः।।८।।
तस्मात्त्वया निहंतव्यस्तारकः पापपूरुषः ।।
अन्यवध्यो न चैवायं मद्वराच्छंकरात्मज।।९।।
।।ब्रह्मोवाच।।
इति श्रुत्वा मम वचः कुमारः शंकरात्मजः ।।
विजहास प्रसन्नात्मा तथास्त्विति वचोऽब्रवीत् ।।2.4.9.१०।।
विनिश्चित्यासुरवधं शांकरिस्स महा प्रभुः ।।
विमानादवतीर्याथ पदातिरभवत्तदा।।११।।
पद्भ्यां तदासौ परिधावमानो रेजेऽतिवीरः शिवजः कुमारः।।
करे समादाय महाप्रभां तां शक्तिं महोल्कामिव दीप्तिदीप्ताम्।।१२।।
दृष्ट्वा तमायातमतिप्रचंडमव्याकुलं षण्मुखमप्रमेयम्।।
दैत्यो बभाषे सुरसत्तमान्स कुमार एष द्विषतां प्रहंता।।१३।।
अनेन साकं ह्यहमेकवीरो योत्स्ये च सर्वानहमेव वीरान्।।
गणांश्च सर्वानपि घातयामि सलोकपालान्हरिनायकांश्च।।१४।।
इत्येवमुक्त्वा स तदा महाबलः कुमारमुद्दिश्य ययौ च योद्धुम् ।।
जग्राह शक्तिं परमाद्भुतां च स तारको देववरान्बभाषे।।१५ ।।
।। तारक उवाच ।।

कुमारो मेऽग्रतश्चाद्य भवद्भिश्च कथं कृतः ।।
यूयं गतत्रपा देवा विशेषाच्छक्रमेश्वरौ ।। १६ ।।
पुरैताभ्यां कृतं कर्म विरुद्धं वेदमार्गतः ।।
तच्छृणुध्वं मया प्रोक्तं वर्णयामि विशेषतः ।।१७।।
तत्र विष्णुश्छली दोषी ह्यविवेकी विशे षतः ।।
बलिर्येन पुरा बद्धश्छलमाश्रित्य पापतः ।।१६।।
तेनैव यत्नतः पूर्वमसुरौ मधुकैटभौ ।।
शिरोहीनौ कृतौ धौर्त्याद्वेदमार्गो विवर्जितः ।।१९।।
मोहिनीरूपतोऽनेन पंक्तिभेदः कृतो हि वै ।।
देवासुरसुधापाने वेदमार्गो विगर्हितः ।। 2.4.9.२० ।।
रामो भूत्वा हता नारी वाली विध्वंसितो हि सः ।।
पुनर्वैश्रवणो विप्रौ हतो नीतिर्हता श्रुतेः ।।२१।।
पापं विना स्वकीया स्त्री त्यक्ता पापरतेन यत् ।।
तत्रापि श्रुतिमार्गश्च ध्वंसितस्स्वार्थहेतवे ।।२२।।
स्वजनन्याश्शिरश्छिन्नमवतारे रसाख्यके।।
गुरुपुत्रापमानश्च कृतोऽनेन दुरात्मना।।२३।।
कृष्णो भूत्वान्यनार्यश्च दूषिताः कुलधर्मतः ।।
श्रुतिमार्गं परित्यज्य स्वविवाहाः कृतास्तथा ।।२४।।
पुनश्च वेदमार्गो हि निंदितो नवमे भवे।।
स्थापितं नास्तिकमतं वेदमार्गविरोधकृत्।।२५।।
एवं येन कृतं पापं वेदमार्गं विसृज्य वै ।।
स कथं विजयेद्युद्धे भवेद्धर्मवतांवरः ।।२६।।
भ्राता ज्येष्ठश्च यस्तस्य शक्रः पापी महान्मतः ।।
तेन पापान्यनेकानि कृतानि निजहेतुतः ।। २७ ।।
निकृत्तो हि दितेर्गर्भस्स्वार्थ हेतोर्विशेषतः ।।
धर्षिता गौतमस्त्री वै हतो वृत्रश्च विप्रजः ।। २८ ।।
विश्वरूपद्विजातेर्वै भागिनेयस्य यद्गुरोः ।।
निकृत्तानि च शीर्षाणि तदध्वाध्वंसितश्श्रुतेः ।। २९ ।।
कृत्वा बहूनि पापानि हरिश्शक्रः पुनःपुनः ।।
तेजोभिर्विहतावेव नष्टवीर्यौ विशेषतः ।।2.4.9.३०।।
तयोर्बलेन नो यूयं संग्रामे जयमाप्स्यथ ।।
किमर्थं मूढतां प्राप्य प्राणांस्त्यक्तुमिहागताः ।। ३१ ।।
जानन्तौ धर्ममेतौ न स्वार्थलंपटमानसौ ।।

धर्मं विनाऽमराः कृत्यं निष्फलं सकलं भवेत् ।।३२।।
महाधृष्टाविमौ मेद्य कृतवंतौ पुरश्शिशुम् ।।
अहं बालं वधिष्यामि तयोस्सोऽपि भविष्यति ।। ३३ ।।
किं बाल इतो यायाद्दूरं प्राणपरीप्सया ।।
इत्युक्तोद्दिश्य च हरी वीरभद्रमुवाच सः ।। ३४ ।।
पुरा हतास्त्वया विप्रा दक्षयज्ञे ह्यनेकशः ।।
तत्कर्मणः फलं चाद्य दर्शयिष्यामि तेऽनघ।। ३९ ।।
ब्रह्मोवाच ।।
इत्येवमुक्त्वा तु विधूय पुण्यं निजं स तन्निंदनकर्मणा वै ।।
जग्राह शक्तिं परमाद्भुतां च स तारको युद्धवतां वरिष्ठः ।। ३६ ।।
तं बालान्तिकमायातं तारकासुरमोजसा ।।
आजघान च वज्रेण शक्रो गुहपुरस्सरः ।। ३७ ।।
तेन वज्रप्रहारेण तारको जर्जरीकृतः।।
भूमौ पपात सहसा निंदाहतबलः क्षणम् ।।३८।।
पतितोऽपि समुत्थाय शक्त्या तं प्राहरद्रुषा ।।
पुरंदरं गजस्थं हि पातयामास भूतले ।।३९।।
हाहाकारो महानासीत्पतिते च पुरंदरे ।।
सेनायां निर्जराणां हि तद्दृष्ट्वा क्लेश आविशत्।।2.4.9.४०।।
तारकेणाऽपि तत्रैव यत्कृतं कर्म दुःखदम् ।।
स्वनाशकारणं धर्मविरुदं तन्निबोध मे ।।४१।।
पतितं च पदाक्रम्य हस्ताद्वज्रं प्रगृह्य वै।
पुनरुद्वज्रघातेन शक्रमाताडयद्भृशम्।।४२।।
एवं तिरस्कृतं दृष्ट्वा शक्रविष्णुप्रतापवान् ।।
चक्रमुद्यस्य भगवांस्तारकं स जघान ह।।४३।।
चक्रप्रहाराभितो निपपात क्षितौ हि सः ।।
पुनरुत्थाय दैत्येन्द्रशक्त्या विष्णुं जघान तम्।।४४।।
तेन शक्तिप्रहारेण पतितो भुवि चाच्युतः।।
करो महानासीच्चुक्रुशुश्चाऽतिनिर्जराः।।४५।।
निमेषेण पुनर्विष्णुर्यावदुत्तिष्ठते स्वयम्।।
तावत्स वीरभद्रो हि तत्क्षणादागतोऽसुरम्।।४६।।
त्रिशूलं च समुद्यम्य वीरभद्रः प्रतापवान् ।।
तारकं दितिजाधीशं जघान प्रसभं बली ।। ४७ ।।
तत्त्रिशूलप्रहारेण स पपात क्षितौ तदा ।।

पतितोऽपि महातेजास्तारकः पुनरुत्थितः ।।४८।।
कृत्वा क्रोधं महावीरस्सकलासुरनायकः ।।
जघान परया शक्त्या वीरभद्रं तदोरसि ।।४९।।
वीरभद्रोऽपि पतितो भूतले मूर्छितः क्षणम् ।।
तच्छक्त्या परया क्रोधान्निहतो वक्षसि धुवम् ।। 2.4.9.५० ।।
सगणश्चैव देवास्ते गंधर्वोरगराक्षसाः ।।
हाहाकारेण महता चुक्रुशुश्च मुहुर्मुहुः ।।५१।।
निमेषमात्रात्सहसा महौजास्स वीरभद्रो द्विषतां निहंता।।
त्रिशूलमुद्यम्य तडित्प्रकाशं जाज्वल्यमानं प्रभया विरेजे ।।५२।।
स्वरोचिषा भासितदिग्वितानं सूर्येन्दुबिम्बाग्निसमानमंडलम् ।।
महाप्रभं वीरभयावहं परं कालाख्यमत्यंतकरं महोज्ज्वलम् ।।५३।।
यावत्त्रिशूलेन तदा हंतुकामो महाबलः ।।
वीरभद्रोऽसुरं यावत्कुमारेण निवारितः ।। ५४ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां चतुर्थे कुमारखंडे तारकवाक्यशक्रविष्णुवीरभद्रयुद्धवर्णनं नाम नवमोऽध्यायः ।।९।।

ब्रह्मोवाच ।।
निवार्य वीरभद्रं तं कुमारः परवीरहा।।
समैच्छत्तारकवधं स्मृत्वा शिवपदाम्बुजौ।।१।।
जगर्जाथ महातेजाः कार्तिकेयो महाबलः ।।
सन्नद्धः सोऽभवत्क्रुद्ध सैन्येन महता वृतः ।।२।।
तदा जयजयेत्युक्तं सर्वैर्देवैर्गणै स्तथा ।।
संस्तुतो वाग्भिरिष्टाभिस्तदैव च सुरर्षिभिः ।।३।।
तारकस्य कुमारस्य संग्रामोऽतीव दुस्सहः।।
जातस्तदा महाघोरस्सर्वभूत भयंकरः ।। ४ ।।
शक्तिहस्तौ च तौ वीरौ युयुधाते परस्परम् ।।
सर्वेषां पश्यतां तत्र महाश्चर्यवतां मुने ।। ५ ।।
शक्तिनिर्भिन्नदेहौ तौ महासाधनसंयुतौ।।
परस्परं वंचयंतौ सिंहाविव महाबलौ ।।६।।
वैतालिकं समाश्रित्य तथा खेचरकं मतम् ।।
पापं तं च समाश्रित्य शक्त्या शक्तिं विजघ्नतुः ।।७।।
एभिर्मंत्रैर्महावीरौ चक्रतुर्युद्धमद्भुतम् ।।
अन्योन्यं साधकौ भूत्वा महाबलपराक्रमौ ।।८।।
महाबलं प्रकुर्वतौ परस्परवधैषिणौ।।
जघ्नतुश्शक्तिधाराभी रणे रणविशारदौ।।९।।
मूर्ध्नि कंठे तथा चोर्वोर्जान्वोश्चैव कटीतटे।।
वक्षस्युरसि पृष्ठे च चिच्छिदुश्च परस्परम् ।।2.4.10.१०।।
तदा तौ युध्यमानौ च हन्तुकामौ महाबलौ ।।
वल्गन्तौ वीरशब्दैश्च नानायुद्धविशारदौ ।। ११ ।।।
अभवन्प्रेक्षकास्सर्वे देवा गंधर्वकिन्नराः ।।
ऊचुः परस्परं तत्र कोस्मिन्युद्धे विजेष्यते ।। १२ ।।
तदा नभोगता वाणी जगौ देवांश्च सांत्वयन् ।।
असुरं तारकं चात्र कुमारोऽयं हनिष्यति ।।१३।।
मा शोच्यतां सुरैः सर्वै सुखेन स्थीयतामिति।।
युष्मदर्थं शंकरो हि पुत्ररूपेण संस्थितः ।।१४।।
श्रुत्वा तदा तां गगने समीरितां वाचं शुभां सप्रमथेस्समावृतः ।।
निहंतुकामः सुखितः कुमारको दैत्याधिपं तारकमाश्वभूत्तदा ।।१५।।
शक्त्या तया महाबाहुराजघानस्तनांतरे ।।
कुमारः स्म रुषाविष्टस्तारकासुरमोजसा ।। १६ ।।

तं प्रहारमनादृत्य तारको दैत्यपुंगवः ।।
कुमारं चापि संक्रुद्धस्स्वशक्त्या संजघान सः ।। १७ ।।
तेन शक्तिप्रहारेण शांकरिर्मूच्छि तोऽभवत् ।।
मुहूर्ताच्चेतनां प्राप स्तूयमानो महर्षिभिः ।।१८।।
यथा सिंहो मदोन्मत्तो हंतुकामस्तथासुरम्।।
कुमारस्तारकं शक्त्या स जघान प्रतापवान् ।। १९ ।।
एवं परस्परं तौ हि कुमारश्चापि तारकः ।।
युयुधातेऽतिसंरब्धौ शक्तियुद्धविशारदौ ।। 2.4.10.२० ।।
अभ्यासपरमावास्तामन्योन्यं विजिगीषया ।।
पदातिनौ युध्यमान्नौ चित्ररूपौ तरस्विनौ ।।२१।।
विविधैर्घातपुंजैस्तावन्योन्यं विनि जघ्नतुः ।।
नानामार्गान्प्रकुर्वन्तौ गर्जंतौ सुपराक्रमौ ।।२२।।
अवलोकपरास्सर्वे देवगंधर्वकिन्नराः।।
विस्मयं परमं जग्मुर्नोचुः किंचन तत्र ते ।।२३।।
न ववौ पवमानश्च निष्प्रभोऽभूद्दिवाकरः ।।
चचाल वसुधा सर्वा सशैलवनकानना ।।२४।।
एतस्मिन्नंतरे तत्र हिमालयमुखा धराः ।।
स्नेहार्दितास्तदा जग्मुः कुमारं च परीप्सवः ।।२५।।
ततस्स दृष्ट्वा तान्सर्वान्भयभीतांश्च शांकरिः।।
पर्वतान्गिरिजापुत्रो बभाषे परिबोधयन् ।।२६।।
कुमार उवाच।।
मा खिद्यतां महाभागा मा चिंतां कुर्वतां नगाः ।।
घातयाम्यद्य पापिष्ठं सर्वेषां वः प्रपश्य ताम् ।।२७।।
एवं समाश्वास्य तदा पर्वतान्निर्जरान्गणान् ।।
प्रणम्य गिरिजां शंभुमाददे शक्तिमुत्प्रभाम्।।२८।।
तं तारकं हंतुमनाः करशक्तिर्महाप्रभुः ।।
विरराज महावीरः कुमारश्शंभुबालकः ।। २९ ।।
शक्त्या तया जघानाथ कुमारस्तारकासुरम् ।।
तेजसाढ्यश्शंकरस्य लोकक्लेशकरं च तम् ।।2.4.10.३०।।
पपात सद्यस्सहसा विशीर्णांगोऽसुरः क्षितौ ।।
तारकाख्यो महावीरस्सर्वासुरगणाधिपः।।३१।।
कुमारेण हतस्सोतिवीरस्स खलु तारकः ।।
लयं ययौ च तत्रैव सर्वेषां पश्यतां मुने ।।३२।।

तथा तं पतितं दृष्ट्वा तारकं बलवत्तरम् ।।
न जघान पुनर्वीरस्स गत्वा व्यसुमाहवे ।।३३।।
हते तस्मिन्महादैत्ये तारकाख्ये महाबले ।।
क्षयं प्रणीता बहवोऽसुरा देवगणैस्तदा ।।३४।।
केचिद्भीताः प्रांजलयो बभूवुस्तत्र चाहवे।।
छिन्नभिन्नांगकाः केचिन्मृता दैत्यास्सहस्रशः।।३५।।
केचिज्जाताः कुमारस्य शरणं शरणार्थिनः ।।
वदन्तः पाहि पाहीति दैत्याः सांजलयस्तदा ।।३६।।
कियंतश्च हतास्तत्र कियंतश्च पलायिताः ।।
पलायमाना व्यथिता स्ताडिता निर्ज्जरैर्गणैः ।।३७।।
सहस्रशः प्रविष्टास्ते पाताले च जिजीषवः।।
पलायमानास्ते सर्वे भग्नाशा दैन्यमागताः ।।३८।।
एवं सर्वं दैत्यसैन्यं भ्रष्टं जातं मुनीश्वर ।।
न केचित्तत्र संतस्थुर्गणदेवभयात्तदा ।।३९।।
आसीन्निष्कंटकं सर्वं हते तस्मिन्दुरात्मनि।।
ते देवाः सुखमापन्नास्सर्वे शक्रादयस्तदा ।।2.4.10.४०।।
एवं विजयमापन्नं कुमारं निखिलास्सुराः ।।
बभूवुर्युगपद्धृष्टास्त्रिलोकाश्च महासुखा।।४१।।
तदा शिवोऽपि तं ज्ञात्वा विजयं कार्तिकस्य च ।।
तत्राजगाम स मुदा सगणः प्रियया सह ।। ४२ ।।
स्वात्मजं स्वांकमारोप्य कुमारं सूर्यवर्चसम् ।।
लालयामास सुप्रीत्या शिवा च स्नेहसंकुला ।। ४३ ।।
हिमालयस्तदागत्य स्वपुत्रैः परिवारितः ।।
सबंधुस्सानुगश्शंभुं तुष्टाव च शिवां गुहम् ।। ४४ ।।
ततो देवगणास्सर्वे मुनयस्सिद्धचारणाः ।।
तुष्टुवुश्शांकरिं शंभुं गिरिजां तुषितां भृशम् ।। ४५ ।।
पुष्पवृष्टिं सुमहतीं चक्रुश्चोपसुरास्तदा ।।
जगुर्गंधर्वपतयो ननृतुश्चाप्सरोगणाः ।। ४६ ।।
वादित्राणि तथा नेदुस्तदानीं च विशेषतः ।।
जयशब्दो नमः शब्दो बभूवोच्चैर्मुहुर्मुहुः ।। ४७ ।।
ततो मयाच्युतश्चापि संतुष्टोभूद्विशेषतः ।।
शिवं शिवां कुमारं च संतुष्टाव समादरात् ।। ४८ ।।
कुमारमग्रतः कृत्वा हरिकेन्द्रमुखास्सुराः ।।

चक्रुर्नीराजनं प्रीत्या मुनयश्चापरे तथा ।। ४९ ।।
गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा ।।
तदोत्सवो महानासीत्कीर्तनं च विशेषतः ।। 2.4.10.५० ।।
गीतवाद्यैस्सुप्रसन्नैस्तथा साञ्जलिभिर्मुने ।।
स्तूयमानो जगन्नाथस्सर्वैर्दैवैर्गणैरभूत ।।५१।।
ततस्स भगवान्रुद्रो भवान्या जगदंबया ।।
सर्वैः स्तुतो जगामाथ स्वगिरिं स्वगणैर्वृतः ।।५२।।
इति श्री शिवमहापुराणे द्वितीयायां रुद्रसंहितायां चतुर्थे कुमारखण्डे तारका सुरवधदेवोत्सववर्णनं नाम दशमोऽध्यायः ।। १० ।।

ब्रह्मोवाच ।।
एतस्मिन्नंतरे तत्र क्रौञ्चनामाचलो मुने ।।
आजगाम कुमारस्य शरणं बाणपीडित ।। १ ।।
पलायमानो यो युद्धादसोढा तेज ऐश्वरम्।।
तुतोदातीव स क्रौञ्चं कोट्यायुतबलान्वितः ।।२।।
प्रणिपत्य कुमारस्य स भक्त्या चरणाम्बुजम् ।।
प्रेमनिर्भरया वाचा तुष्टाव गुहमादरात् ।।३।।
क्रौंच उवाच ।।
कुमार स्कंद देवेश तारकासुरनाशक ।।
पाहि मां शरणापन्नं बाणासुरनिपीडितम् ।। ४ ।।
संगरात्ते महासेन समुच्छिन्नः पलायितः ।।
न्यपीडयच्च मागत्य हा नाथ करुणाकर ।। ५ ।।
तत्पीडितस्ते शरणमागतोऽहं सुदुःखितः ।।
पलायमानो देवेश शरजन्मन्दयां कुरु ।। ६ ।।
दैत्यं तं नाशय विभो बाणाह्वं मां सुखीकुरु ।।
दैत्यघ्नस्त्वं विशेषेण देवावनकरस्स्वराट् ।। ७ ।।
ब्रह्मोवाच ।।
इति क्रौंचस्तुतस्स्कन्दः प्रसन्नो भक्तपालकः ।।
गृहीत्वा शक्तिमतुलां स्वां सस्मार शिवो धिया ।।८।।
चिक्षेप तां समुद्दिश्य स बाणं शंकरात्मजः ।।
महाशब्दो बभूवाथ जज्वलुश्च दिशो नभः ।।९।।
सबलं भस्मसात्कृत्वासुरं तं क्षणमात्रतः ।।
गुहोपकंठं शक्तिस्सा जगाम परमा मुने ।।2.4.11.१ ०।।
ततः कुमार प्रोवाच क्रौंचं गिरिवरं प्रभुः ।।
निर्भयस्स्वगृहं गच्छ नष्टस्स सबलोऽसुरः ।।११।।
तच्छ्रुत्वा स्वामिवचनं मुदितो गिरिराट् तदा ।।
स्तुत्वा गुहं तदारातिं स्वधाम प्रत्यपद्यत ।।१२।।
ततः स्कन्दो महेशस्य मुदा स्थापितवान्मुने ।।
त्रीणि लिंगानि तत्रैव पापघ्नानि विधानतः ।।१३।।
प्रतिज्ञेश्वरनामादौ कपालेश्वरमादरात् ।।
कुमारेश्वरमेवाथ सर्वसिद्धिप्रदं त्रयम् ।।१४।।
पुनस्सर्वेश्वरस्तत्र जयस्तंभसमीपतः ।।
स्तंभेश्वराभिधं लिंगं गुहः स्थापितवान्मुदा।।१५।।

ततस्सर्वे सुरास्तत्र विष्णुप्रभृतयो मुदा।।
लिंगं स्थापितवंतस्ते देवदेवस्य शूलिनः।।१६।।
सर्वेषां शिवलिंगानां महिमाभूत्तदाद्भुतः।।
सर्वकामप्रदश्चापि मुक्तिदो भक्तिकारिणाम् ।।१७।।
ततस्सर्वे सुरा विष्णुप्रमुखाः प्रीतमानसाः ।।
ऐच्छन्गिरिवरं गंतुं पुरस्कृत्य गुहं मुदा ।।१८।।
तस्मिन्नवसरे शेषपुत्रः कुमुद नामकः ।।
आजगाम कुमारस्य शरणं दैत्यपीडितः ।।१९।।
प्रलंबाख्योऽसुरो यो हि रणादस्मात्पलायितः ।।
स तत्रोपद्रवं चक्रे प्रबलस्तारकानुगः ।।2.4.11.२०।।
सोऽथ शेषस्य तनयः कुमुदोऽहिपतेर्महान् ।।
कुमारशरणं प्राप्तस्तुष्टाव गिरिजात्मजम् ।। २१ ।।
कुमुद उवाच ।।
देवदेव महादेव वरतात महाप्रभो।।
पीडितोऽहं प्रलंबेन त्वाहं शरणमागतः ।। २२ ।।
पाहि मां शरणापन्नं प्रलंबा सुरपीडितम् ।।
कुमार स्कन्द देवेश तारकारे महाप्रभो ।।२३।।
त्वं दीनबंधुः करुणासिन्धुरानतवत्सलः ।।
खलनिग्रहकर्ता हि शरण्यश्च सतां गतिः ।।२४।।
कुमुदेनस्तुतश्चेत्थं विज्ञप्तस्तद्वधाय हि ।।
स्वाश्च शक्तिं स जग्राह स्मृत्वा शिवपदांबुजौ ।। २५ ।।
चिक्षेप तां समुद्दिश्य प्रलंबं गिरिजासुतः ।।
महाशब्दो बभूवाथ जज्वलुश्च दिशो नभः ।।२६।।
तं सायुतबलं शक्तिर्द्रुतं कृत्वा च भस्मसात् ।।
गुहोपकंठं सहसाजगामाक्लिष्टवारिणी ।। २७ ।।
ततः कुमारः प्रोवाच कुमुदं नागबालकम् ।।
निर्भयः स्वगृहं गच्छ नष्टस्स सबलोऽसुरः ।।२८।।
तच्छुत्वा गुहवाक्यं स कुमुदोहिपतेस्सुतः ।।
स्तुत्वा कुमारं नत्वा च पातालं मुदितो ययौ ।। २९ ।।
एवं कुमारविजयं वर्णितं ते मुनीश्वर ।।
चरितं तारकवधं परमाश्चर्यकारकम् ।। 2.4.11.३० ।।
सर्वपापहरं दिव्यं सर्वकामप्रदं नृणाम् ।।
धन्यं यशस्यमायुष्यं भुक्तिमुक्तिप्रदं सताम् ।। ३१ ।।

ये कीर्तयंति सुयशोऽमितभाग्ययुता नराः ।।
कुमारचरितं दिव्यं शिव लोकं प्रयांति ते ।। ३२ ।।
श्रोष्यंति ये च तत्कीर्तिं भक्त्या श्रद्धान्विता जनाः ।।
मुक्तिं प्राप्स्यन्ति ते दिव्यामिह भुक्त्वा परं सुखम् ।। ३३ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां चतुर्थे कुमारखंडे बाणप्रलंबवध कुमारविजयवर्णनं नामैकादशोऽध्यायः ।।११।।

ब्रह्मोवाच ।।
निहतं तारकं दृष्ट्वा देवा विष्णुपुरोगमाः ।।
तुष्टुवुश्शांकरिं भक्त्या सर्वेऽन्ये मुदिताननाः ।।१।।
देवा ऊचुः ।।
नमः कल्याणरूपाय नमस्ते विश्वमंगल।।
विश्वबंधो नमस्तेऽस्तु नमस्ते विश्वभावन ।।२।।
नमोस्तु ते दानववर्यहंत्रे बाणासुरप्राणहराय देव ।।
प्रलंबनाशाय पवित्ररूपिणे नमोनमश्शंकरतात तुभ्यम् ।।३।।
त्वमेव कर्त्ता जगतां च भर्त्ता त्वमेव हर्त्ता शुचिज प्रसीद ।।
प्रपञ्चभूतस्तव लोकबिंबः प्रसीद शम्भ्वात्मज दीनबंधो।।४।।
देवरक्षाकर स्वामिन्रक्ष नस्सर्वदा प्रभो।।
देवप्राणावन कर प्रसीद करुणाकर ।।५।।
हत्वा ते तारकं दैत्यं परिवारयुतं विभो ।।
मोचितास्सकला देवा विपद्भ्यः परमेश्वर।।६।।
ब्रह्मोवाच।।
एवं स्तुतः कुमारोऽसौ देवैर्विष्णुमुखैः प्रभुः ।।
वरान्ददावभिनवान्सर्वेभ्यः क्रमशो मुने ।।७।।
शैलान्निरीक्ष्य स्तुवतस्ततस्स गिरिशात्मजः ।।
सुप्रसन्नतरो भूत्वा प्रोवाच प्रददद्वरान् ।।८।।
स्कन्द उवाच ।।
यूयं सर्वे पर्वता हि पूजनीयास्तपस्विभिः ।।
कर्मिभिर्ज्ञानिभिश्चैव सेव्यमाना भविष्यथ ।।९।।
शंभोर्विशिष्टरूपाणि लिंगरूपाणि चैव हि ।।
भविष्यथ न संदेहः पर्वता वचनान्मम ।। 2.4.12.१० ।।
योऽयं मातामहो मेऽद्य हिमवान्पर्वतोत्तमः ।।
तपस्विनां महाभागः फलदो हि भविष्यति ।।११।।
देवा ऊचुः ।।
एवं दत्त्वा वरान्हत्वा तारकं चासुराधिपम् ।।
त्वया कृताश्च सुखिनो वयं सर्वे चराचराः ।।१२।।
इदानीं खलु सुप्रीत्या कैलासं गिरिशालयम् ।।
जननी जनकौ द्रष्टुं शिवाशंभू त्वमर्हसि ।। १३ ।।
ब्रह्मोवाच।।
इत्युक्त्वा निखिला देवा विष्ण्वाद्या प्राप्तशासनाः ।।

कृत्वा महोत्सवं भूरि सकुमारा ययुर्गिरिम् ।।१४।।
कुमारे गच्छति विभौ कैलासं शंकरालयम् ।।
महामंगलमुत्तस्थौ जयशब्दो बभूव ह ।।१५।।
आरुरोह कुमारोऽसौ विमानं परमर्द्धिमत् ।।
सर्वतोलंकृतं रम्यं सर्वोपरि विराजितम् ।। १६ ।।
अहं विष्णुश्च समुदौ तदा चामरधारिणौ।।
गुह मूर्ध्नि महाप्रीत्या मुनेऽभूव ह्यतंद्रितौ ।। १७।।
इन्द्राद्या अमरास्सर्वे कुर्वंतो गुहसेवनम् ।।
यथोचितं चतुर्दिक्षु जग्मुश्च प्रमुदास्तदा ।।१८।।
शंभोर्जयं प्रभाषंतः प्रापुस्ते शंभुपर्वतम् ।।
सानंदा विविशुस्तत्रोच्चरितो मंगलध्वनिः ।। १९ ।।
दृष्ट्वा शिवं शिवां चैव सर्वे विष्ण्वादयो द्रुतम् ।।
प्रणम्य शंकरं भक्त्या करौ बद्ध्वा विनम्रकाः ।।2.4.12.२०।।
कुमारोऽपि विनीतात्मा विमानादवतीर्य च ।।
प्रणनाम मुदा शंभुं शिवां सिंहासनस्थिताम् ।।२१।।
अथ दृष्ट्वा कुमारं तं तनयं प्राणवल्लभम् ।।
तौ दंपती शिवौ देवौ मुमुदातेऽति नारद ।।२२।।
महाप्रभुस्समुत्थाप्य तमुत्संगे न्यवेशयत् ।।
मूर्ध्नि जघ्रौ मुदा स्नेहात्तं पस्पर्श करेण ह ।। २३।।
महानंदभरः शंभुश्चकार मुखचुंबनम् ।।
कुमारस्य महास्नेहात् तारकारेर्महाप्रभोः ।। २४ ।।
शिवापि तं समुत्थाप्य स्वोत्संगे संन्यवेशयत् ।।
कृत्वा मूर्ध्नि महास्नेहात् तन्मुखाब्जं चुचुम्ब हि ।।२५।।
तयोस्तदा महामोदो ववृधेऽतीव नारद।।
दंपत्योः शिवयोस्तात भवाचारं प्रकुर्वतोः।।२६।।
तदोत्सवो महानासीन्नानाविधिः शिवालये ।।
जयशब्दो नमश्शब्दो बभूवातीव सर्वतः ।। २७ ।।
ततस्सुरगणास्सर्वे विष्ण्वाद्या मुनयस्तथा ।।
सुप्रणम्य मुदा शंभुं तुष्टुवुस्सशिवं मुने ।। २८ ।।
देवा ऊचुः ।।
देवदेव महादेव भक्तानामभयप्रद ।।
नमो नमस्ते बहुशः कृपाकर महेश्वर ।। २९ ।।
अद्भुता ते महादेव महालीला सुखप्रदा ।।

सर्वेषां शंकर सतां दीनबंधो महाप्रभो ।। 2.4.12.३० ।।
एवं मूढधियश्चाज्ञाः पूजायां ते सनातनम् ।।
आवाहनं न जानीमो गतिं नैव प्रभोद्भुताम् ।। ३१ ।।
गंगासलिलधाराय ह्याधाराय गुणात्मने ।।
नमस्ते त्रिदशेशाय शंकराय नमोनमः ।३२।।
वृषांकाय महेशाय गणानां पतये नमः ।।
सर्वेश्वराय देवाय त्रिलोकपतये नमः ।।३३।।
संहर्त्रे जगतां नाथ सर्वेषां ते नमो नमः ।।
भर्त्रे कर्त्रे च देवेश त्रिगुणेशाय शाश्वते ।।३४।।
विसंगाय परेशाय शिवाय परमात्मने ।।
निष्प्रपंचाय शुद्धाय परमायाव्ययाय च ।।३५।।
दण्डहस्ताय कालाय पाशहस्ताय ते नमः ।।
वेदमंत्रप्रधानाय शतजिह्वाय ते नमः ।।३६।।
भूतं भव्यं भविष्यच्च स्थावरं जंगमं च यत् ।।
तव देहात्समुत्पन्नं सर्वथा परमेश्वर ।।३७।।
पाहि नस्सर्वदा स्वामिन्प्रसीद भगवन्प्रभो ।।
वयं ते शरणापन्नाः सर्वथा परमेश्वर ।।३८।।
शितिकण्ठाय रुद्राय स्वाहाकाराय ते नमः ।।
अरूपाय सरूपाय विश्वरूपाय ते नमः ।। ३९ ।।
शिवाय नीलकंठाय चिताभस्मांगधारिणे ।।
नित्यं नीलशिखंडाय श्रीकण्ठाय नमोनमः ।। 2.4.12.४० ।।
सर्वप्रणतदेहाय संयमप्रणताय च ।।
महादेवाय शर्वाय सर्वार्चितपदाय च ।। ४१ ।।
त्वं ब्रह्मा सर्वदेवानां रुद्राणां नीललोहितः ।।
आत्मा च सर्वभूतानां सांख्यैः पुरुष उच्यसे ।।४२।।
पर्वतानां सुमेरुस्त्वं नक्षत्राणां च चन्द्रमा ।।
ऋषीणां च वशिष्ठस्त्वं देवानां वासवस्तथा ।। ४३ ।।
अकारस्सर्ववेदानां त्राता भव महेश्वर ।।
त्वं च लोकहितार्थाय भूतानि परिषिंचसि ।।४४।।
महेश्वर महाभाग शुभाशुभनिरीक्षक ।।
आप्यायास्मान्हि देवेश कर्तॄन्वै वचनं तव ।।४५।।
रूपकोटिसहस्रेषु रूपकोटिशतेषु ते ।।
अंतं गंतुं न शक्ताः स्म देवदेव नमोस्तु ते ।। ४६ ।।

।। ब्रह्मोवाच ।।
इति स्तुत्वाखिला देवा विष्ण्वाद्या प्रमुखस्थिताः ।।
मुहुर्मुहुस्सुप्रणम्य स्कंदं कृत्वा पुरस्सरम् ।।४७।।
देवस्तुतिं समाकर्ण्य शिवस्सर्वेश्वरस्स्वराट् ।।
सुप्रसन्नो बभूवाथ विजहास दयापरः ।। ४८ ।।
उवाच सुप्रसन्नात्मा विष्ण्वादीन्सुरसत्तमान् ।।
शंकरः परमेशानो दीनबंधुस्सतां गतिः ।।४९।।
शिव उवाच ।।
हे हरे हे विधे देवा वाक्यं मे शृणुतादरात् ।।
सर्वथाहं सतां त्राता देवानां वः कृपानिधिः ।।2.4.12.५० ।।
दुष्टहंता त्रिलोकेशश्शंकरो भक्तवत्सलः ।।
कर्ता भर्ता च हर्ता च सर्वेषां निर्विकारवान् ।।५१ ।।
यदा यदा भवेद्दुःखं युष्माकं देवसत्तमाः ।।
तदा तदा मां यूयं वै भजंतु सुखहेतवे ।। ५२ ।।
ब्रह्मोवाच ।।
इत्याज्ञप्तस्तदा देवा विष्ण्वाद्यास्समुनीश्वराः ।।
शिवं प्रणम्य सशिवं कुमारं च मुदान्विताः ।।५३।।
कथयंतो यशो रम्यं शिवयोश्शांकरेश्च तत् ।।
आनन्दं परमं प्राप्य स्वधामानि ययु र्मुने ।।५४।।
शिवोपि शिवया सार्द्धं सगणः परमेश्वरः ।।
कुमारेणयुतः प्रीत्योवास तस्मिन्गिरौ मुदा ।।५५।।
इत्येवं कथितं सर्वं कौमारं चरितं मुने ।।
शैवं च सुखदं दिव्यं किमन्यच्छ्रोतुमिच्छसि ।।५६।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां चतुर्थे कुमारखंडे
स्वामिकार्तिकचरितगर्भितशिवाशिवचरितवर्णनं नाम द्वादशोऽध्यायः ।। १२ ।।

सूत उवाच ।।
तारकारेरिति श्रुत्वा वृत्तमद्भुतमुत्तमम् ।।
नारदस्सुप्रसन्नोथ पप्रच्छ प्रीतितो विधिम् ।। १ ।।
।। नारद उवाच ।।
देवदेव प्रजानाथ शिवज्ञाननिधे मया ।।
श्रुतं कार्तिकसद्वृत्तममृतादपि चोत्तमम् ।। २ ।
अधुना श्रोतुमिच्छामि गाणेशं वृत्तमुत्तमम् ।।
तज्जन्मचरितं दिव्यं सर्वमंगलमंगलम् ।।३।।
सूत उवाच ।।
इत्याकर्ण्य वचस्तस्य नारदस्य महामुने ।।
प्रसन्नमानसो ब्रह्मा प्रत्युवाच शिवं स्मरन् ।। ४ ।।
ब्रह्मोवाच ।।
कल्पभेदाद्गणेशस्य जनिः प्रोक्ता विधेः परात्।।
शनिदृष्टं शिरश्छिन्नं संचितं गजमाननम्।।५।।
इदानीं श्वेतकल्पोक्ता गणेशोत्पत्तिरुच्यते ।।
यत्र च्छिन्नं शिरस्तस्य शिवेन च कृपालुना ।।६।।
संदेहो नात्र कर्तव्यः शंकरस्सूतिकृन्मुने ।।
स हि सर्वाधिपः शंभुर्निर्गुणस्सगुणो ऽपि हि ।।७।।
तल्लीलयाखिलं विश्वं सृज्यते पाल्यते तथा ।।
विनाश्यते मुनिश्रेष्ठ प्रस्तुतं शृणु चादरात् ।।८।।
उद्वाहिते शिवे चात्र कैलासं च गते सति ।।
कियता चैव कालेन जातो गणपतेर्भवः ।। ९ ।।
एकस्मिन्नेव काले च जया च विजया सखी ।।
पार्वत्या च मिलित्वा वै विचारे तत्पराभवत् ।। 2.4.13.१० ।।
रुद्रस्य च गणास्सर्वे शिवस्याज्ञापरायणाः ।।
ते सर्वेप्यस्मदीयाश्च नन्दिभृंगिपुरस्सराः ।।११।।
प्रमथास्ते ह्यसंख्याता अस्मदीयो न कश्चन ।।
द्वारि तिष्ठन्ति ते सर्वे शंकराज्ञापरायणाः ।। १२ ।।
ते सर्वेप्यस्मदीयांश्च तथापि न मिलेन्मनः ।।
एकश्चैवास्मदीयो हि रचनीयस्त्वयानघे ।। १३ ।।
ब्रह्मोवाच ।।
इत्युक्त्वा पार्वती देवी सखीभ्यां सुन्दरं वचः ।।
हितं मेने तदा तच्च कर्तुं स्माप्यध्यवस्यति।। १४ ।।

ततः कदाचिन्मज्जत्यां पार्वत्यां वै सदाशिवः ।।
नंदिनं परिभत्स्यार्थ ह्याजगाम गृहांतरम् ।।१५।।
आयांतं शंकरं दृष्ट्वाऽसमये जगदंबिका ।।
उत्तस्थौ मज्जती सा वै लज्जिता सुन्दरी तदा ।।१६।।
तस्मिन्नवसरे देवी कौतुकेनातिसंयुता ।।
तदीयं तद्वचश्चैव हितं मेने सुखावहम् ।। १७ ।।
एवं जाते सदा काले कदाचित्पार्वती शिवा ।।
विचिंत्य मनसा चेति परमाया परेश्वरी ।। १८ ।।
मदीयस्सेवकः कश्चिद्भवेच्छुभतरः कृती ।।
मदाज्ञया परं नान्यद्रेखामात्रं चलेदिह ।। १९ ।।
विचार्येति च सा देवी वपुषो मलसंभवम् ।।
पुरुषं निर्ममौ सा तु सर्वलक्षणसंयुतम् ।। 2.4.13.२० ।।
सर्वावयवनिर्द्दोषं सर्वावयव सुन्दरम् ।।
विशालं सर्वशोभाढ्यं महाबलपराक्रमम् ।।२१।।
वस्त्राणि च तदा तस्मै दत्त्वा सा विविधानि हि ।।
नानालंकरणं चैव बह्वाशिषमनुत्तमाम् ।1२२।।
मत्पुत्रस्त्वं मदीयोसि नान्यः कश्चिदिहास्ति मे ।।
एवमुक्तस्य पुरुषो नमस्कृत्य शिवां जगौ ।। २३ ।।
।। गणेश उवाच ।।
किं कार्यं विद्यते तेद्य करवाणि तवोदितम्।।
इत्युक्ता सा तदा तेन प्रत्युवाच सुतं शिवा ।।२४।।
शिवोवाच।।
हे तात शृणु मद्वाक्यं द्वारपालो भवाद्य मे ।।
मत्पुत्रस्त्वं मदीयोऽसि नान्यथा कश्चिदस्ति मे ।।२५।।
विना मदाज्ञां मत्पुत्र नैवायान्म द्गृहान्तरम् ।।
कोऽपि क्वापि हठात्तात सत्यमेतन्मयोदितम् ।। २६ ।।
ब्रह्मोवाच ।।
इत्युक्त्वा च ददौ तस्मै यष्टिं चातिदृढां मुने ।।
तदीयं रूपमालोक्य सुन्दरं हर्षमागता ।। २७ ।।
मुखमाचुंब्य सुप्रीत्यालिंग्य तं कृपया सुतम् ।।
स्वद्वारि स्थापयामास यष्टिपाणिं गणाधिपम् ।।२८।।
अथ देवीसुतस्तात गृहद्वारि स्थितो गणः ।।
यष्टिपाणिर्महावीरः पार्वतीहितकाम्यया ।। २९ ।।

स्वद्वारि स्थापयित्वा तं गणेशं स्वसुतं शिवा ।।
स्वयं च मज्जती सा वै संस्थितासीत्सखीयुता ।।2.4.13.३० ।।
एतस्मिन्नेव काले तु शिवो द्वारि समागतः ।।
कौतुकी मुनिर्शादूल नानालीलाविशारदः ।।३१।।
उवाच च शिवेशं तमविज्ञाय गणाधिपः ।।
मातुराज्ञां विना देव गम्यतां न त्वया धुना ।। ३२ ।।
मज्जनार्थं स्थिता माता क्व यासीतो व्रजाधुना ।।
इत्युक्त्वा यष्टिकां तस्य रोधनाय तदाग्रहीत् ।। ३३ ।।
तं दृष्ट्वा तु शिवः प्राह कं निषेधसि मूढधीः ।।
मां न जानास्यसद्बुद्धे शिवोहमिति नान्यथा ।। ३४ ।।
ताडितस्तेन यष्ट्या हि गणेशेन महेश्वरः ।।
प्रत्युवाच स तं पुत्रं बहुलीलश्च कोपितः ।। ३५।।
शिव उवाच ।।
मुर्खोसि त्वं न जानासि शिवोहं गिरिजापतिः ।।
स्वगृहं यामि रे बाल निषेधसि कथं हि माम् ।। ३६ ।।
इत्युक्त्वा प्रविशंतं तं महेशं गणनायकः ।।
क्रोधं कृत्वा ततो विप्र दंडेनाताडयत्पुनः ।। ३७ ।।
ततश्शिवश्च संक्रुद्धो गणानाज्ञापयन्निजान् ।।
को वायं वर्तते किंच क्रियते पश्यतां गणाः ।। ३८ ।।
इत्युक्त्वा तु शिवस्तत्र स्थितः क्रुद्धो गृहाद्बहिः ।।
भवाचाररतस्स्वामी बह्वद्भुतसुलीलकः।। ३९ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां चतुर्थे कुमारखण्डे गणेशोत्पत्तिवर्णनं नाम त्रयोदशोऽध्यायः ।। १३ ।।

।। ब्रह्मोवाच ।।
गणास्ते क्रोधसंपन्नास्तत्र गत्वा शिवाज्ञया ।।
पप्रच्छुर्गिरिजापुत्रं तं तदा द्वारपालकम् ।। १ ।।
।। शिवगणा ऊचुः ।।
कोऽसि त्वं कुत आयातः किं वा त्वं च चिकीर्षसि ।।
इतोऽद्य गच्छ दूरं वै यदि जीवितुमिच्छसि ।।२ ।।
ब्रह्मोवाच ।।
तदीयं तद्वचः श्रुत्वा गिरिजातनयस्स वै ।।
निर्भयो दण्डपाणिश्च द्वारपानब्रवीदिदम् ।। ३ ।।
गणेश उवाच ।।
यूयं के कुत आयाता भवंतस्सुन्दरा इमे ।।
यात दूरं किमर्थं वै स्थिता अत्र विरोधिनः ।।४।।
ब्रह्मोवाच ।।
एवं श्रुत्वा वचस्तस्य हास्यं कृत्वा परस्परम्।।
ऊचुस्सर्वे शिवगणा महावीरा गतस्मयाः ।। ५ ।।
परस्परमिति प्रोच्य सर्वे ते शिवपार्षदाः ।।
द्वारपालं गणेशं तं प्रत्यूचुः क्रुद्धमानसाः ।।६।।
शिवगणा ऊचुः ।।
श्रूयतां द्वारपाला हि वयं शिवगणा वराः ।।
त्वां निवारयितुं प्राप्ताश्शंकरस्याज्ञया विभोः ।। ७ ।।
त्वामपीह गणं मत्वा न हन्यामीन्यथा हतः ।।
तिष्ठ दूरे स्वतस्त्वं च किमर्थं मृत्युमीहसे ।। ८ ।।
।। ब्रह्मोवाच ।। इत्युक्तोऽपि गणेशश्च गिरिजातनयोऽभयः ।।
निर्भर्त्स्यं शंकरगणान्न द्वारं मुक्तवांस्तदा ।।९।।
ते सर्वेपि गणाश्शैवास्तत्रत्या वचनं तदा ।।
श्रुत्वा तत्र शिवं गत्वा तद्वृत्तांतमथाब्रुवन्।।2.4.14.१०।।
ततश्च तद्वचः श्रुत्वाद्भुतलीलो महेश्वरः ।।
विनिर्भर्त्स्य गणानूचे निजाँल्लोकगतिर्मुने ।। ११ ।।
महेश्वर उवाच ।।
कश्चायं वर्तते किं च ब्रवीत्यरिवदुच्छ्रितः ।।
किं करिष्यत्यसद्बुद्धिः स्वमृत्युं वांछति ध्रुवम् ।।१२।।
दूरतः क्रियतां ह्येष द्रारपालो नवीनकः।।
क्लीबा इव स्थितास्तस्य वृत्तं वदथ मे कथम् ।।१३।।

स्वामिनोक्ता गणास्ते चाद्भुतलीलेन शंभुना ।।
पुनरागत्य तत्रैव तमूचुर्द्वारपालकम् ।। १४ ।।
।। शिवगणा ऊचुः ।।
रे रे द्वारप कस्त्वं हि स्थितश्च स्थापितः कुतः ।।
नैवास्मान्गाणयस्येवं कथं जीवितुमिच्छसि ।।१५।।
द्वारपाला वयं सर्वे स्थितः किं परिभाषसे ।।
सिंहासनगृहीतश्च शृगालः शिवमीहते ।।१६।।
तावद्गर्जसि मूर्ख त्वं यावद्गण पराक्रमः ।।
नानुभूतस्त्वयात्रैव ह्यनुभूतः पतिष्यसि ।।१७।।
इत्युक्तस्तैस्सुसंकुद्धो हस्ताभ्यां यष्टिकां तदा ।।
गृहीत्वा ताडयामास गणांस्तान्परिभाषिणः ।। १८ ।।
उवाचाथ शिवापुत्रः परिभर्त्स्य गणेश्वरान् ।।
शंकरस्य महावीरान्निर्भयस्तान्गणेश्वरः ।।१९।।
शिवापुत्र उवाच ।।
यात यात ततो दूरे नो चेद्वो दर्शयामि ह ।।
स्वपराक्रममत्युग्रं यास्यथात्युपहास्यताम् ।। 2.4.14.२० ।।
इत्याकर्ण्य वचस्तस्य गिरिजातनयस्य हि ।।
परस्परमथोचुस्ते शंकरस्य गणास्तदा ।। २१ ।।
शिवगणा ऊचुः ।।
किं कर्तव्यं क्व गंतव्यं माक्रियते स न किं पुनः ।।
मर्यादा रक्ष्यतेऽस्माभिरन्यथा किं ब्रवीति च ।। २२ ।।
ब्रह्मोवाच ।।
ततश्शंभुगणास्सर्वे शिवं दूरे व्यवस्थितम् ।।
क्रोशमात्रं तु कैलासाद्गत्वा ते च तथाब्रुवन् ।। २३ ।।
शिवो विहस्य तान्सर्वांस्त्रिशूलकर उग्रधीः ।।
उवाच परमेशो हि स्वगणान् वीरसंमतान् ।। २४ ।।
शिव उवाच ।।
रेरे गणाः क्लीबमता न वीरा वीरमानिनः ।।
मदग्रे नोदितुं योग्या भर्त्सितः किं पुनर्वदेत् ।। २५ ।।
गम्यतां ताड्यतां चैष यः कश्चित्प्रभवेदिह ।।
बहुनोक्तेन किं चात्र दूरीकर्तव्य एव सः ।।२६।।
।। ब्रह्मोवाच ।। ।।
इति सर्वे महेशेन जग्मुस्तत्र मुनीश्वर ।।

भर्त्सितास्तेन देवेन प्रोचुश्च गणसत्तमाः ।। २७ ।।
शिवगणा ऊचुः ।
रेरे त्वं शृणु वै बाल बलात्किं परिभाषसे ।।
इतस्त्वं दूरतो याहि नो चेन्मृत्युर्भविष्यति ।। २८ ।।
।। ब्रह्मोवाच ।।
इति श्रुत्वा वचस्तेषां शिवाज्ञाकारिणां ध्रुवम् ।।
शिवासुतस्तदाभूत्स किं करोमीति दुःखितः ।।२९।।
एतस्मिन्नंतरे देवी तेषां तस्य च वै पुनः ।।
श्रुत्वा तु कलहं द्वारि सखीं पश्येति साब्रवीत् ।। 2.4.14.३० ।।
समागत्य सखी तत्र वृत्तांतं समबुध्यत ।।
क्षणमात्रं तदा दृष्ट्वा गता हृष्टा शिवांतिकम् ।।३१।।
तत्र गत्वा तु तत्सर्वं वृत्तं तद्यदभून्मुने ।।
अशेषेण तया सख्या कथितं गिरिजाग्रतः ।। ३२ ।।
सख्युवाच ।।
अस्मदीयो गणो यो हि स्थितो द्वारि महेश्वरि ।।
निर्भर्त्सयति तं वीराश्शंकरस्य गणा ध्रुवम् ।।३३।।
शिवश्चैव गणास्सर्वे विना तेऽवसरं कथम् ।।
प्रविशंति हठाद्गेहे नैतच्छुभतरं तव ।।३४।।
सम्यक् कृतं ह्यनेनैव न हि कोपि प्रवेशितः ।।
दुःखं चैवानुभूयात्र तिरस्कारादिकं तथा ।। ३५ ।।
अतः परन्तु वाग्वादः क्रियते च परस्परम् ।।
वाग्वादे च कृते नैव तर्ह्यायान्तु सुखेन वै ।। ३६ ।।
कृतश्चैवात्र वाग्वादस्तं जित्वा विजयेन च ।।
प्रविशंतु तथा सर्वे नान्यथा कर्हिचित्प्रिये ।। ३७ ।।
अस्मिन्नेवास्मदीये वै सर्वे संभर्त्सिता वयम् ।।
तस्माद्देवि त्वया भद्रे न त्याज्यो मान उत्तमः ।। ३८ ।।
शिवो मर्कटवत्तेऽद्य वर्तते सर्वदा सति ।।
किं करिष्यत्यहंकारमानुकूल्यं भविष्यति।।३९।।
ब्रह्मोवाच।।
अहो क्षणं स्थिता तत्र शिवेच्छावशतस्सती ।।2.4.14.४०।।
मनस्युवाच सा भूत्वा मानिनी पार्वती तदा ।। ४१ ।।
शिवोवाच।।
अहो क्षणं स्थितो नैव हठात्कारः कथं कृतः ।।

कथं चैवात्र कर्त्तव्यं विनयेनाथ वा पुनः ।। ४२ ।।
भविष्यति भवत्येव कृतं नैवान्यथा पुनः ।।
इत्युक्त्वा तु सखी तत्र प्रेषिता प्रियया तदा ।।४३।।
समागत्याऽब्रवीत्सा च प्रियया कथितं हि यत्।।
तमाचष्ट गणेशं तं गिरिजातनयं तदा ।। ४४ ।।
सख्युवाच ।।
सम्यक्कृतं त्वया भद्र बलात्ते प्रविशंतु न ।।
भवदग्रे गणा ह्येते किं जयंतु भवादृशम् ।।४५।।
कृतं चेद्वाकृतं चैव कर्त्तव्यं क्रियतां त्वया।।
जितो यस्तु पुनर्वापि न वैरमथ वा ध्रुवम् ।।४६।।
ब्रह्मोवाच ।।
इति श्रुत्वा वचस्तस्या मातुश्चैव गणेश्वरः ।।
आनन्दं परमं प्राप बलं भूरि महोन्नतिम् ।।४७।।
बद्धकक्षस्तथोष्णीषं बद्ध्वा जंघोरु संस्पृशन् ।।
उवाच तान्गणान् सर्वान्निर्भयं वचनं मुदा ।। ४८ ।।
गणेश उवाच ।।
अहं च गिरिजासूनुर्यूयं शिवगणास्तथा ।।
उभये समतां प्राप्ताः कर्तव्यं क्रियतां पुनः ।।४९।।
भवंतो द्वारपालाश्च द्वारपोहं कथं न हि ।।
भवंतश्च स्थितास्तत्राऽहं स्थितोत्रेति निश्चितम् ।।2.4.14.५०।।
भवद्भिश्च स्थितं ह्यत्र यदा भवति निश्चितम् ।।
तदा भवद्भिः कर्त्तव्यं शिवाज्ञापरिपालनम् ।।५१।।
इदानीं तु मया चात्र शिवाज्ञापरिपालनम् ।।
सत्यं च क्रियते वीरा निर्णीतं मे यथोचितम् ।।५२।।
तस्माच्छिवगणास्सर्वे वचनं शृणुतादरात् ।।
हठाद्वा विनयाद्वा न गंतव्यं मन्दिरे पुनः ।। ५३ ।।
।। ब्रह्मोवाच ।।
इत्युक्तास्ते गणेनैव सर्वे ते लज्जिता गणाः।।
ययुश्शिवांतिकं तं वै नमस्कृत्य पुरः स्थिताः ।।५४।।
स्थित्वा न्यवेदयन्सर्वे वृत्तांतं च तदद्भुतम् ।।
करौ बद्ध्वा नतस्कंधाश्शिवं स्तुत्वा पुरः स्थिताः ।।५५ ।।
तत्सर्वं तु तदा श्रुत्वा वृत्तं तत्स्वगणोदितम्।।
लौकिकीं वृत्तिमाश्रित्य शंकरो वाक्यमब्रवीत् ।।५६।।

शंकर उवाच ।। श्रूयतां च गणास्सर्वे युद्धं योग्यं भवेन्नहि ।।
यूयं चात्रास्मदीया वै स च गौरीगणस्तथा ।।५७।।
विनयः क्रियते चेद्वै वश्यश्शंभुः स्त्रिया सदा ।।
इति ख्यातिर्भवेल्लोके गर्हिता मे गणा ध्रुवम् ।। ५८ ।।
कृते चैवात्र कर्तव्यमिति नीतिर्गरीयसी ।।
एकाकी स गणो बालः किं करिष्यति विक्रमम् ।। ५९ ।।
भवंतश्च गणा लोके युद्धे चाति विशारदाः ।।
मदीयाश्च कथं युद्धं हित्वा यास्यथ लाघवम् ।। 2.4.14.६० ।।
स्त्रिया ग्रहः कथं कार्यो पत्युरग्रे विशेषतः ।।
कृत्वा सा गिरिजा तस्य नूनं फलमवाप्स्यति ।। ६१ ।।
तस्मात्सर्वे च मद्वीराः शृणुतादरतो वचः ।।
कर्त्तव्यं सर्वथा युद्धं भावि यत्तद्भवत्विति ।। ६२ ।।
ब्रह्मोवाच ।।
इत्युक्त्वा शंकरो ब्रह्मन् नानालीलाविशारदः ।।
विरराम मुनिश्रेष्ठ दर्शयँल्लौकिकीं गतिम् ।। ६३ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां चतुर्थे कुमारखंडे गणविवादवर्णनं नाम चतुर्दशोऽध्यायः ।। १४ ।।

।। ब्रह्मोवाच ।।
इत्युक्ता विभुना तेन निश्चयं परमं गताः ।।
सन्नद्धास्तु तदा तत्र जग्मुश्च शिवमन्दिरम् ।। १ ।।
गणेशोऽपि तथा दृष्ट्वा ह्यायातान्गणसत्तमान् ।।
युद्धाऽऽटोपं विधायैव स्थितांश्चैवाब्रवीदिदम् ।।२ ।।
गणेश उवाच ।।
आयांतु गणपास्सर्वे शिवाज्ञाप रिपालकाः ।।
अहमेकश्च बालश्च शिवाज्ञापरिपालकः।।३।।
तथापि पश्यतां देवी पार्वती सूनुजं बलम् ।।
शिवश्च स्वगणानां तु बलं पश्यतु वै पुनः ।। ४ ।।
बलवद्बालयुद्धं च भवानीशिव पक्षयोः ।।
भवद्भिश्च कृतं युद्धं पूर्वं युद्धविशारदैः ।।५।।
मया पूर्वं कृतं नैव बालोस्मि क्रियतेऽधुना ।।
तथापि भवतां लज्जा गिरिजाशिवयोरिह ।।६।।
ममैवं तु भवेन्नैव वैपरीत्यं भविष्यति ।।
ममैव भवतां लज्जा गिरिजाशिवयोरिह ।। ७ ।।
एवं ज्ञात्वा च कर्त्तव्यः समरश्च गणेश्वराः ।।
भवद्भिस्स्वामिनं दृष्ट्वा मया च मातरं तदा ।। ८ ।।
क्रियते कीदृशं युद्धं भवितव्यं भवत्विति ।।
तस्य वै वारणे कोऽपि न समर्थस्त्रिलोकके ।।९।।
ब्रह्मोवाच ।।
इत्येवं भर्त्सितास्ते तु दंडभूषितबाहवः ।।
विविधान्यायुधान्येवं धृत्वा ते च समाययुः ।।2.4.15.१०।।
घर्षयन्तस्तथा दंतान् हुंकृत्य च पुनःपुनः।।
पश्य पश्य ब्रुवंतश्च गणास्ते समुपागताः ।।११।।
नंदी प्रथममागत्य धृत्वा पादं व्यकर्षयत् ।।
धावन्भृंगी द्वितीयं च पादं धृत्वा गणस्य च ।। १२ ।।
यावत्पादे विकर्षन्तौ तावद्धस्तेन वै गणः ।।
आहत्य हस्तयोस्ताभ्यामुत्क्षिप्तौ पादकौ स्वयम् ।। १३ ।।
अथ देवीसुतो वीरस्सगृह्य परिघं बृहत्।।
द्वारस्थितो गणपतिः सर्वानापोथयत्तदा ।। १४ ।।
केषांचित्पाणयो भिन्नाः केषांचित्पृष्ठ कानि च ।।
केषांचिच्च शिरांस्येव केषांचिन्मस्तकानि च ।।१५।।

केषांचिजानुनी तत्र केषांचित्स्कंधकास्तथा ।।
सम्मुखे चागता ये वै ते सर्वे हृदये हताः ।।१६।।
केचिच्च पतिताभूमौ केचिच्च विदिशो गताः ।।
केषांचिच्चरणौ छिन्नौ केचिच्छर्वान्तिकं गताः ।।१७।।
तेषां मध्ये तु कश्चिद्वै संग्रामे सम्मुखो न हि ।।
सिंहं दृष्ट्वा यथा यांति मृगाश्चैव दिशो दश ।। १८ ।।
तथा ते च गणास्सर्वे गताश्चैव सहस्रशः।।
परावृत्य तथा सोपि सुद्वारि समुपस्थितः ।।१९।।
कल्पांतकरणे कालो दृश्यते च भयंकरः ।।
यथा तथैव दृष्टस्स सर्वेषां प्रलयंकरः ।।2.4.15.२०।।
एतस्मिन्समये चैव सरमेशसुरेश्वराः ।।
प्रेरिता नारदेनेह देवास्सर्वे समागमन् ।।२१।।
समब्रुवंस्तदा सर्वे शिव स्य हितकाम्यया ।।
पुरःस्थित्वा शिवं नत्वा ह्याज्ञां देहि प्रभो इति ।।२२।।
त्वं परब्रह्म सर्वेशस्सर्वे च तव सेवकाः ।।
सृष्टेः कर्ता सदा भर्ता संहर्ता परमेश्वरः ।।२३।।
रजस्सत्त्वतमोरूपो लीलया निर्गुणः स्वतः ।।
का लीला रचिता चाद्य तामिदानीं वद प्रभो।।२४।।
।। ब्रह्मोवाच ।।
इत्याकर्ण्य वचस्तेषां मुनिश्रेष्ठ महेश्वरः ।।
गणान् भिन्नाँस्तदा दृष्ट्वा तेभ्यस्सर्वं न्यवेदयत् ।।२५।।
अथ सर्वेश्वरस्तत्र शंकरो मुनिसत्तम ।।
विहस्य गिरिजानाथो ब्रह्माणं मामुवाच ह।।२६।।
शिव उवाच ।।
ब्रह्मञ्छृणु मम द्वारि बाल एकस्समास्थितः ।।
महाबलो यष्टिपाणिर्गेहावेशनिवारकः ।। २७ ।।
महाप्रहारकर्ताऽसौ मत्पार्षदविघातकः ।।
पराजयः कृतस्तेन मद्गणानां बलादिह ।।२८।।
ब्रह्मन् त्वयैव गंतव्यं प्रसाद्योऽयं महाबलः ।।
यथा ब्रह्मन्नयः स्याद्वै तथा कार्यं त्वया विधे ।।२९।।
।। ब्रह्मोवाच ।।
इत्याकर्ण्य प्रभोर्वाक्यमज्ञात्वाऽज्ञानमोहितः ।।
तदीयनिकटं तात सर्वैर्ऋषिवरैरयाम्।।2.4.15.३०।।

समायान्तं च मां दृष्ट्वा स गणेशो महाबली।।
क्रोधं कृत्वा समभ्येत्य मम श्मश्रूण्यवाकिरत् ।। ३१ ।।
क्षम्यतां क्षम्यतां देव न युद्धार्थं समागतः ।।
ब्राह्मणोहमनुग्राह्यः शांतिकर्तानुपद्रवः ।। ३२ ।।
इत्येवं ब्रुवति ब्रह्मंस्तावत्परिघमाददे ।।
स गणेशो महावीरो बालोऽबालपराक्रमः ।। ३३ ।।
गृहीतपरिघं दृष्ट्वा तं गणेशं महाबलम् ।।
पलायनपरो यातस्त्वहं द्रुततरं तदा ।।३४।।
यात यात ब्रुवंतस्ते परिघेन हतास्तदा ।।
स्वयं च पतिताः केचित्केचित्तेन निपातिताः ।।३५।।
केचिच्च शिवसामीप्यं गत्वा तत्क्षणमात्रतः ।।
शिवं विज्ञापयांचक्रुस्तद्वृत्तां तमशेषतः ।।३६।।
तथाविधांश्च तान् दृष्ट्वा तद्वृत्तांतं निशम्य सः ।।
अपारमादधे कोपं हरो लीलाविशारदः ।।३७।।
इंद्रादिकान्देवगणान् षण्मुखप्रवरान् गणान् ।।
भूतप्रेतपिशाचांश्च सर्वानादेशयत्तदा ।।३८।।
ते सर्वे च यथायोग्यं गतास्ते सर्वतो दिशम् ।।
तं गणं हंतुकामा हि शिवाज्ञाता उदायुधाः।।३९।।
यस्य यस्यायुधं यच्च तत्तत्सर्वं विशेषतः।।
तद्गणेशोपरि बलात्समागत्य विमोचितम्।।2.4.15.४०।।
हाहाकारो महानासीत्त्रैलोक्ये सचराचरे ।।
त्रिलोकस्था जनास्सर्वे संशयं परमं गताः ।।४१।।
न यातं ब्रह्मणोऽप्यायुर्ब्रह्मांड क्षयमेति हि ।।
अकाले च तथा नूनं शिवेच्छावशतः स्वयम् ।।४२।।
ते सर्वे चागतास्तत्र षण्मुखाद्याश्च ये पुनः ।।
देवा व्यर्थायुधा जाता आश्चर्यं परमं गताः ।। ४३ ।।
एतस्मिन्नन्तरे देवी जगदम्बा विबोधना ।।
ज्ञात्वा तच्चरितं सर्वमपारं क्रोधमादधे ।। ४४ ।।
शक्तिद्वयं तदा तत्र तया देव्या मुनीश्वर ।।
निर्मितं स्वगणस्यैव सर्वसाहाय्यहेतवे ।।४५।।
एका प्रचंडरूपं च धृत्वातिष्ठन्महामुने ।।
श्यामपर्वतसंकाशं विस्तीर्य मुखगह्वरम् ।।४६।।
एका विद्युत्स्वरूपा च बहुहस्तसमन्विता ।।

भयंकरा महादेवी दुष्टदंडविधायिनी ।।४७।।
आयुधानि च सर्वाणि मोचितानि सुरैर्गणैः ।।
गृहीत्वा स्वमुखे तानि ताभ्यां शीघ्रं च चिक्षिपे ।।४८।।
देवायुधं न दृश्येत परिघः परितः पुनः ।।
एवं ताभ्यां कृतं तत्र चरितं परमाद्भुतम् ।। ४९ ।।
एको बालोऽखिलं सैन्यं लोडयामास दुस्तरम् ।।
यथा गिरिवरेणैव लोडितस्सागरः पुरा ।।2.4.15.५०।।
एकेन निहतास्सर्वे शक्राद्या निर्जरास्तथा ।।
शंकरस्य गणाश्चैव व्याकुलाः अभवंस्तदा ।।५१।।
अथ सर्वे मिलित्वा ते निश्श्वस्य च मुहुर्मुहुः ।।
परस्परं समूचुस्ते तत्प्रहारसमाकुलाः ।। ५२ ।।
देवगणा ऊचुः ।।
किं कर्तव्यं क्व गंतव्यं न ज्ञायंते दिशो दश ।।
परिघं भ्रामयत्येष सव्यापसव्यमेव च ।। ५३ ।।
ब्रह्मोवाच ।।
एतत्कालेऽप्सरश्रेष्ठाः पुष्पचन्दनपाणयः ।।
ऋषयश्च त्वदाद्या हि येऽतियुद्धेतिलालसाः ।।५४।।
ते सर्वे च समाजग्मुर्युद्धसंदर्शनाय वै ।।
पूरितो व्योम सन्मार्गस्तैस्तदा मुनिसत्तम ।। ५५ ।।
तास्ते दृष्ट्वा रणं तं वै महाविस्मयमागताः ।।
ईदृशं परमं युद्धं न दृष्टं चैकदापि हि ।।५६।।
पृथिवी कंपिता तत्र समुद्रसहिता तदा।।
पर्वताः पतिताश्चैव चक्रुः संग्रामसंभवम् ।।५७।।
द्यौर्ग्रहर्क्षगणैर्घूर्ण्णा सर्वे व्याकुलतां गताः ।।
देवाः पलायितास्सर्वे गणाश्च सकलास्तदा ।। ५८ ।।
केवलं षण्मुखस्तत्र नापलायत विक्रमी ।।
महावीरस्तदा सर्वानावार्य पुरतः स्थितः ।। ५९ ।।
शक्तिद्वयेन तद्युद्धे सर्वे च निष्फलीकृताः ।।
सर्वास्त्राणि निकृत्तानि संक्षिप्तान्यमरैर्गणैः 2.4.15.६० ।।
येऽव स्थिताश्च ते सर्वे शिवस्यांतिकमागताः ।।
देवाः पलायितास्सर्वे गणाश्च सकलास्तदा ।।६१।।
ते सर्वे मिलिताश्चैव मुहुर्नत्वा शिवं तदा ।।
अब्रुवन्वचनं क्षिप्रं कोऽयं गणवरः प्रभो ।।६२।।

पुरा चैव श्रुतं युद्धमिदानीं बहुधा पुनः ।।
दृश्यते न श्रुतं दृष्टमीदृशं तु कदाचन ।। ६३ ।।
किंचिद्विचार्यतां देव त्वन्यथा न जयो भवेत् ।।
त्वमेव रक्षकस्स्वामिन्ब्रह्मांडस्य न संशयः ।।६४।।
ब्रह्मोवाच ।।
इत्येवं तद्वचः श्रुत्वा रुद्रः परमकोपनः।।
कोपं कृत्वा च तत्रैव जगाम स्वगणैस्सह।।६५।।
देवसैन्यं च तत्सर्वं विष्णुना चक्रिणा सह ।।
समुत्सवं महत्कृत्वा शिवस्यानुजगाम ह ।। ६६ ।।
एतस्मिन्नंतरे भक्त्या नमस्कृत्य महेश्वरम् ।।
अब्रवीन्नारद त्वं वै देवदेवं कृतांजलिः।।६७।। ।।
नारद उवाच ।।
देवदेव महादेव शृणु मद्वचनं विभो।।
त्वमेव सर्वगस्स्वामी नानालीलाविशारदः।।।६८।।
त्वया कृत्वा महालीलां गणगर्वोऽपहारितः ।।
अस्मै दत्त्वा बलं भूरि देवगर्वश्च शंकर।।६९।।
दर्शितं भुवने नाथ स्वमेव बलमद्भुतम्।।
स्वतंत्रेण त्वया शंभो सर्वगर्वप्रहारिणा ।। 2.4.15.७० ।।
इदानीं न कुरुष्वेश तां लीलां भक्तवत्सलः ।।
स्वगणानमरांश्चापि सुसन्मान्याभिवर्द्धय ।।७१।। ४।
न खेलयेदानीं जहि ब्रह्मपदप्रद ।।
इत्युक्त्वा नारद त्वं वै ह्यंतर्द्धानं गतस्तदा ।।७२।।
इति श्रीशिवमहापुराणे द्वि० रुद्रसंहितायां च कुमारखण्डे गणेशयुद्धवर्णनं नाम पञ्चदशोऽध्यायः ।। १५।।

ब्रह्मोवाच ।।
इति श्रुत्वा महेशानो भक्तानुग्रहकारकः ।।
त्वद्वाचा युदकामोभूत्तेन बालेन नारद ।।१।।
विष्णुमाहूय संमंत्र्य बलेन महता युतः ।।
सामरस्सम्मुखस्तस्याप्यभूद्देवस्त्रिलोचनः ।। २ ।।
देवाश्च युयुधुस्तेन स्मृत्वा शिवपदाम्बुजम् ।।
महाबला महोत्साहाश्शिवसद्दृष्टिलोकिताः ।।३।।
युयुधेऽथ हरिस्तेन महाबलपराक्रमः।।
महादेव्यायुधो वीरः प्रवणः शिवरूपकः ।।४।।
यष्ट्या गणाधिपस्सोथ जघानामरपुङ्गवान्।।
हरिं च सहसा वीरश्शक्तिदत्तमहाबलः ।। ५ ।।
सर्वेऽमरगणास्तत्र विकुंठितबला मुने ।।
अभूवन् विष्णुना तेन हता यष्ट्या पराङ्मुखाः ।। ६ ।।
शिवोपि सह सैन्येन युद्धं कृत्वा चिरं मुने ।।
विकरालं च तं दृष्ट्वा विस्मयं परमं गतः ।।७।।
छलेनैव च हंतव्यो नान्यथा हन्यते पुनः ।।
इति बुद्धिं समास्थाय सैन्यमध्ये व्यवस्थितः।। ८।।
शिवे दृष्टे तदा देवे निर्गुणे गुणरूपिणि।।
विष्णौ चैवाथ संग्रामे आयाते सर्वदेवताः।।९।।
गणाश्चैव महेशस्य महाहर्षं तदा ययुः।।
सर्वे परस्परं प्रीत्या मिलित्वा चक्रुरुत्सवम्।।2.4.16.१०।।
अथ शक्तिसुतो वीरो वीरगत्या स्वयष्टितः ।।
प्रथम पूजयामास विष्णुं सर्वसुखावहम् ।। ११ ।।
अहं च मोहयिष्यामि हन्यतां च त्वया विभो ।।
छलं विना न वध्योऽयं तामसोयं दुरासदः ।।१२।।
इति कृत्वा मतिं तत्र सुसंमंत्र्य च शंभुना ।।
आज्ञां प्राप्याऽभवच्छैवी विष्णुर्मोहपरायणः।।१३।।
शक्तिद्वयं तथा लीनं हरिं दृष्ट्वा तथाविधम् ।।
दत्त्वा शक्तिबलं तस्मै गणेशायाभवन्मुने।।१४।।
शक्तिद्वयेऽथ संलीने यत्र विष्णुः स्थितस्स्वयम् ।।
परिघं क्षिप्तवांस्तत्र गणेशो बलवत्तरः।।१५।।
कृत्वा यत्नं किमप्यत्र वंचयामास तद्गतिम्।।
शिवं स्मृत्वा महेशानं स्वप्रभुं भक्तवत्सलम् ।।१६।।

एकतस्तन्मुखं दृष्ट्वा शंकरोप्याजगाम ह ।।
स्वत्रिशूलं समादाय सुक्रुद्धो युद्धकाम्यया ।। १७ ।।
स ददर्शागतं शंभुं शूलहस्तं महेश्वरम् ।।
हंतुकामं निजं वीरश्शिवापुत्रो महाबलः ।। १८ ।।
शक्त्या जघान तं हस्ते स्मृत्वा मातृपदांबुजम् ।।
स गणशो महावीरश्शिवशक्तिप्रवर्द्धितः ।।१९।।
त्रिशूलं पतितं हस्ताच्छिवस्य परमात्मनः ।।
दृष्ट्वा सदूतिकस्तं वै पिनाकं धनुराददे ।। 2.4.16.२० ।।
तमप्यपातयद्भूमौ परिघेण गणेश्वरः ।।
हताः पंच तथा हस्ताः पञ्चभिश्शूलमाददे ।। २१ ।।
अहो दुःखतरं नूनं संजातमधुना मम ।।
भवेत्पुनर्गणानां किं भवाचारी जगाविति ।।२२।।
एतस्मिन्नंतरे वीरः परिघेण गणेश्वरः ।।
जघान सगणान् देवान्शक्तिदत्तबलान्वितः ।।२३।।
गता दशदिशो देवास्सगणा. परिघार्द्दिताः।।
न तस्थुस्समरे केपि तेनाद्भुतप्रहा रिणा।।२४।।
विष्णुस्तं च गणं दृष्ट्वा धन्योयमिति चाब्रवीत्।।
महाबलो महावीरो महाशूरो रणप्रियः ।।२५।।
बहवो देवताश्चैव मया दृष्टास्तथा पुनः ।।
दानवा बहवो दैत्या यक्षगंधर्वराक्षसाः ।।२६।।
नैतेन गणनाथेन समतां यांति केपि च ।।
त्रैलोक्येऽप्यखिले तेजो रूपशौर्यगुणादिभिः।।२७।।
एवं संब्रुवतेऽमुष्मै परिघं भ्रामयन् स च ।।
चिक्षेप विष्णवे तत्र शक्तिपुत्रो गणेश्वरः।।२८।।
चक्रं गृहीत्वा हरिणा स्मृत्वा शिवपदाम्बुजम् ।।
तेन चक्रेण परिघो द्रुतं खंडीकृतस्तदा ।।२९।।
खंडं तु परिघस्यापि हरये प्राक्षिपद्गणः।।
गृहीत्वा गरुडेनापि पक्षिणा विफलीकृतः ।।2.4.16.३०।।
एवं विचरितं कालं महावीरावुभावपि ।।
विष्णुश्चापि गणश्चैव युयुधाते परस्परम् ।।३१।।
पुनर्वीरवरश्शक्तिसुतस्स्मृतशिवो बली ।।
गृहीत्वा यष्टिमतुलां तया विष्णुं जघान ह ।।३२।।
अविषह्य प्रहारं तं स भूमौ निपपात ह ।।

व्यास उवाच ।।
दैत्यराजे दीक्षिते च मायिना तेन मोहिते ।।
किमुवाच तदा मायी किं चकार स दैत्यपः ।। १ ।।
सनत्कुमार उवाच ।।
दीक्षां दत्त्वा यतिस्तस्मा अरिहन्नारदादिभिः।।
शिष्यैस्सेवितपादाब्जो दैत्यराजानमब्रवीत् ।। २ ।।
अरिहन्नुवाच ।।
शृणु दैत्यपते वाक्यं मम सञ्ज्ञानगर्भितम् ।।
वेदान्तसारसर्वस्वं रहस्यं परमोत्तमम् ।।३।।
अनादिसिद्धस्संसारः कर्तृकर्मविवर्जितः ।।
स्वयं प्रादुर्भवत्येव स्वयमेव विलीयते ।। ४ ।।
ब्रह्मादिस्तंबपर्यन्तं यावद्देहनिबंधनम् ।।
आत्मैवैकेश्वरस्तत्र न द्वितीयस्तदीशिता।। ५ ।।
यद्ब्रह्मविष्णुरुद्राख्यास्तदाख्या देहिनामिमाः ।।
आख्यायथास्मदादीनामरिहन्नादिरुच्यते ।। ६ ।।
देहो यथास्मदादीनां स्वकालेन विलीयते ।।
ब्रह्मादि मशकांतानां स्वकालाल्लीयते तथा ।। ७ ।।
विचार्यमाणे देहेऽस्मिन्न किंचिदधिकं क्वचित् ।।
आहारो मैथुनं निद्रा भयं सर्वत्र यत्समम् ।। ८ ।।
निराहारपरीमाणं प्राप्य सर्वो हि देहभृत् ।।
सदृशीमेव संतृप्तिं प्राप्नुयान्नाधिकेतराम्।।९।।
यथा वितृषिताः स्याम पीत्वा पेयं मुदा वयम् ।।
तृषितास्तु तथान्येपि न विशेषोऽल्पकोधिकः ।। 2.5.5.१ ०।।
संतु नार्यः सहस्राणि रूपलावण्यभूमयः ।।
परं निधुवने काले ह्यैकेवेहोपयुज्यते ।। ११ ।।
अश्वाः परश्शतास्संतु संत्वेनेकैप्यनेकधा।।
अधिरोहे तथाप्येको न द्वितीयस्तथात्मनः ।। १२।।
पर्यंकशायिनां स्वापे सुखं यदुपजायते।।
तदेव सौख्यं निद्राभिर्भूतभूशायिनामपि ।। १३।।
यथैव मरणाद्भीतिरस्मदादिवपुष्मताम् ।।
ब्रह्मादिकीटकांतानां तथा मरणतो भयम्।।१४।।
सर्वे तनुभृतस्तुल्या यदि बुद्ध्या विचार्य्यते ।।
इदं निश्चित्य केनापि नो हिंस्यः कोऽपि कुत्रचित् ।। १५।।

धर्मो जीवदयातुल्यो न क्वापि जगतीतले ।।
तस्मात्सर्वप्रयत्नेन कार्या जीवदया नृभिः ।।१६।।
एकस्मिन्रक्षिते जीवे त्रैलोक्यं रक्षितं भवेत् ।।
घातिते घातितं तद्वत्तस्माद्रक्षेन्न घातयेत् ।।१७।।
अहिंसा परमो धर्मः पापमात्मप्रपीडनम् ।।
अपराधीनता मुक्तिस्स्वर्गोऽभिलषिताशनम् ।।१८।।
पूर्वसूरिभिरित्युक्तं सत्प्रमाणतया ध्रुवम् ।।
तस्मान्न हिंसा कर्त्तव्यो नरैर्नरकभीरुभिः ।। १९ ।।
न हिंसासदृशं पापं त्रैलोक्ये सचराचरे ।।
हिंसको नरकं गच्छेत्स्वर्गं गच्छेदहिंसकः ।। 2.5.5.२० ।।
संति दानान्यनेकानि किं तैस्तुच्छफलप्रदैः ।।
अभीतिसदृशं दानं परमेकमपीह न ।। २१ ।।
इह चत्वारि दानानि प्रोक्तानि परमर्षिभिः ।।
विचार्य नानाशास्त्राणि शर्मणेऽत्र परत्र च ।। २२ ।।
भीतेभ्यश्चाभयं देयं व्याधितेभ्यस्तथोषधम् ।।
देया विद्यार्थिनां विद्या देयमन्नं क्षुधातुरे ।।२३।।
यानि यानीह दानानि बहुमुन्युदितानि च ।।
जीवाभयप्रदानस्य कलां नार्हंति षोडशीम् ।। २४ ।।
अविचिंत्य प्रभावं हि मणिमंत्रौषधं बलम् ।।
तदभ्यस्यं प्रयत्नेन नामार्थोपार्जनाय वै ।। २९ ।।
अर्थानुपार्ज्य बहुशो द्वादशायतनानि वै ।।
परितः परिपूज्यानि किमन्यैरिह पूजितैः ।। २६ ।।
पंचकर्मेन्द्रियग्रामाः पंच बुद्धींद्रियाणि च ।।
मनो बुद्धिरिह प्रोक्तं द्वादशायतनं शुभम् ।। २७ ।।
इहैव स्वर्गनरकौ प्राणिनां नान्यतः क्वचित् ।।
सुखं स्वर्गः समाख्याता दुःखं नरकमेव हि ।। २८ ।।
सुखेषु भुज्यमानेषु यत्स्याद्देहविसर्जनम् ।।
अयमेव परो मोक्षो विज्ञेयस्तत्त्वचिंतकैः ।।२९।।
वासनासहिते क्लेशसमुच्छेदे सति ध्रुवम् ।।
अज्ञानो परमो मोक्षो विज्ञेयस्तत्त्वचिंतकैः ।। 2.5.5.३० ।।
प्रामाणिकी श्रुतिरियं प्रोच्यते वेदवादिभिः ।।
न हिंस्यात्सर्वभूतानि नान्या हिंसा प्रवर्तिका ।। ३१ ।।
अग्निष्टोमीयमिति या भ्रामिका साऽसतामिह ।।

न सा प्रमाणं ज्ञातृणां पश्वालंभनकारिका ।। ३२ ।
वृक्षांश्छित्वा पशून्हत्वा कृत्वा रुधिरकर्दमम् ।।
दग्ध्वा वह्नौ तिलाज्यादि चित्रं स्वर्गोऽभिलष्यते ।। ३३ ।।
इत्येवं स्वमतं प्रोच्य यतिस्त्रिपुरनायकम् ।।
श्रावयित्वाखिलान् पौरानुवाच पुनरादरात् ।।३४।।
दृष्टार्थप्रत्ययकरान्देहसौख्यैकसाधकान् ।।
बौद्धागम विनिर्दिष्टान्धर्मान्वेदपरांस्ततः ।।३५।।
आनंदं ब्रह्मणो रूपं श्रुत्यैवं यन्निगद्यते ।।
तत्तथैव ह मंतव्यं मिथ्या नानात्वकल्पना ।।३६।।
यावत्स्वस्थमिदं वर्ष्म यावन्नेन्द्रियविक्लवः ।।
यावज्जरा च दूरेऽस्ति तावत्सौख्यं प्रसाधयेत् ।।३७।।
अस्वास्थ्येन्द्रियवैकल्ये वार्द्धके तु कुतस्सुखम् ।।
शरीरमपि दातव्यमर्थिभ्योऽतस्सुखेप्सुभिः ।। ३८ ।।
याचमानमनोवृत्तिप्रीणने यस्य नो जनिः ।।
तेन भूर्भारवत्येषा समुद्रागद्रुमैर्न हि ।। ३९ ।।
सत्वरं गत्वरो देहः संचयास्सपरिक्षयाः ।।
इति विज्ञाय विज्ञाता देहसौख्यं प्रसाधयेत् ।। 2.5.5.४० ।।
श्ववाय सकृमीणां च प्रातर्भोज्यमिदं वपुः ।।
भस्मांतं तच्छरीरं च वेदे सत्यं प्रपठ्यते ।। ४१ ।।
मुधा जातिविकषोयं लोकेषु परिकल्प्यते ।।
मानुष्ये सति सामान्ये कोऽधर्मः कोऽथ चोत्तमः ।। ४२ ।।
ब्रह्मादिसृष्टिरेषेति प्रोच्यते वृद्धपूरुषैः ।।
तस्य जातौ सुतौ दक्षमरीची चेति विश्रुतौ ।। ४३ ।।
मारीचेन कश्यपेन दक्षकन्यास्सुलोचनाः ।।
धर्मेण किल मार्गेण परिणीतास्त्रयोदश ।। ४४ ।।
अपीदानींतनैर्मर्त्यैरल्पबुद्धिपराक्रमैः ।।
अपि गम्यस्त्वगम्योऽयं विचारः क्रियते मुधा ।। ४५ ।।
मुखबाहूरुसञ्जातं चातुर्वर्ण्य सहोदितम् ।।
कल्पनेयं कृता पूर्वैर्न घटेत विचारतः ।। ४६ ।।
एकस्यां च तनौ जाता एकस्माद्यदि वा क्वचित् ।।
चत्वारस्तनयास्तत्किं भिन्नवर्णत्वमाप्नुयुः ।। ४७ ।।
वर्णावर्णविभागोऽयं तस्मान्न प्रतिभासते ।।
अतो भेदो न मंतव्यो मानुष्ये केनचित्क्वचित् ।। ४८ ।।

सनत्कुमार उवाच ।।
इत्थमाभाष्य दैत्येशं पौरांश्च स यतिर्मुने ।।
सशिष्यो वेदधर्माश्च नाशयामास चादरात् ।। ४९ ।।
स्त्रीधर्मं खंडयामास पातिव्रत्यपरं महत् ।।
जितेन्द्रियत्वं सर्वेषां पुरुषाणां तथैव सः ।। 2.5.5.५० ।।
देवधर्मान्विशेषेण श्राद्धधर्मांस्तथैव च ।।
मखधर्मान्व्रतादींश्च तीर्थश्राद्धं विशेषतः ।। ५१ ।।
शिवपूजां विशेषेण लिंगाराधनपूर्विकाम् ।।
विष्णुसूर्यगणेशादिपूजनं विधिपूर्वकम् ।। ५२ ।।
स्नानदानादिकं सर्वं पर्वकालं विशेषतः ।।
खंडयामास स यतिर्मायी मायाविनां वरः ।। ५३ ।।
किं बहूक्तेन विप्रेन्द्र त्रिपुरे तेन मायिना ।।
वेदधर्माश्च ये केचित्ते सर्वे दूरतः कृताः ।। ५४ ।।
पतिधर्माश्रयाः सर्वा मोहितास्त्रिपुरांगनाः ।।
भर्तृशुश्रूषणवतीं विजहुर्मतिमुत्तमाम् ।। ५५ ।।
अभ्यस्याकर्षणीं विद्यां वशीकृत्यमयीमपि ।।
पुरुषास्सफलीचक्रुः परदारेषु मोहिताः ।। ५६ ।।
अंतःपुरचरा नार्यस्तथा राजकुमारकाः ।।
पौराः पुरांगनाश्चापि सर्वे तैश्च विमोहिताः ।।५७ ।।
एवं पौरेषु सर्वेषु निजधर्मेषु सर्वथा।।
पराङ्मुखेषु जातेषु प्रोल्ललास वृषेतरः ।। ५८ ।।
माया च देवदेवस्य विष्णोस्तस्याज्ञया प्रभो ।।
अलक्ष्मीश्च स्वयं तस्य नियोगात्त्रिपुरं गता ।। ५९ ।।
या लक्ष्मीस्तपसा तेषां लब्धा देवेश्वरादरात् ।।
बहिर्गता परित्यज्य नियोगाद्ब्रह्मणः प्रभोः ।। 2.5.5.६० ।।
बुद्धिमोहं तथाभूतं विष्णो र्मायाविनिर्मितम् ।।
तेषां दत्त्वा क्षणादेव कृतार्थोऽभूत्स नारदः ।। ६१ ।।
नारदोपि तथारूपो यथा मायी तथैव सः ।।
तथापि विकृतो नाभूत्परमेशादनुग्रहात् ।।६२।।
आसीत्कुंठितसामर्थ्यो दैत्यराजोऽपि भो मुने ।।
भ्रातृभ्यां सहितस्तत्र मयेन च शिवेच्छया ।। ६३ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पंचमे युद्धखंडे त्रिपुरमोहनं नाम पञ्चमोऽध्यायः ।। ५ ।।

व्यास उवाच ।।
तस्मिन् दैत्याधिपे पौरे सभ्रातरि विमोहिते ।।
सनत्कुमार किं वासीत्तदाचक्ष्वाखिलं विभो ।। १ ।।
।। सनत्कुमार उवाच ।।
त्रिपुरे च तथाभूते दैत्ये त्यक्तशिवार्चने ।।
स्त्रीधर्मे निखिले नष्टे दुराचारे व्यवस्थिते ।। २ ।।
कृतार्थ इव लक्ष्मीशो देवैस्सार्द्धमुमापतिम् ।।
निवेदितुं तच्चरित्रं कैलासमगमद्धरिः ।। ३ ।।
तस्योपकंठं स्थित्वाऽसौ देवैस्सह रमापतिः ।।
ततो भूरि स च ब्रह्मा परमेण समाधिना ।। ४ ।।
मनसा प्राप्य सर्वज्ञं ब्रह्मणा स हरिस्तदा ।।
तुष्टाव वाग्भिरिष्ट्वाभिश्शंकरं पुरुषोत्तमः ।। ५ ।।
।। विष्णुरुवाच।।
महेश्वराय देवाय नमस्ते परमात्मने ।।
नारायणाय रुद्राय ब्रह्मणे ब्रह्मरूपिणे ।। ६ ।।
एवं कृत्वा महादेवं दंडवत्प्रणिपत्य ह ।।
जजाप रुद्रमंत्रं च दक्षिणामूर्तिसंभवम्।। ७ ।।
जले स्थित्वा सार्द्धकोटिप्रमितं तन्मनाः प्रभुः।।
संस्मरन् मनसा शंभुं स्वप्रभुं परमेश्वरम् ।। ८ ।।
तावद्देवास्तदा सर्वे तन्मनस्का महेश्वरम् ।।९।।
देवा ऊचुः ।।
नमस्सर्वात्मने तुभ्यं शंकरायार्तिहारिणे ।।
रुद्राय नीलकंठाय चिद्रूपाय प्रचेतसे ।। 2.5.6.१० ।।
गतिर्नस्सर्वदा त्वं हि सर्वापद्विनिवारकः ।।
त्वमेव सर्वदात्माभिर्वंद्यो देवारिसूदन ।। ११ ।।
त्वमादिस्त्वमनादिश्च स्वानंदश्चाक्षयः प्रभुः ।।
प्रकृतेः पुरुषस्यापि साक्षात्स्रष्टा जगत्प्रभुः ।।१२।।
त्वमेव जगतां कर्ता भर्ता हर्ता त्वमेव हि।।
ब्रह्मा विष्णुर्हरो भूत्वा रजस्सत्त्वतमोगुणैः।।१३।।
तारकोसि जगत्यस्मिन्सर्वेषामधिपोऽव्ययः।।
वरदो वाङ्मयो वाच्यो वाच्यवाचकवर्जितः।।१४।।
याच्यो मुक्त्यर्थमीशानो योगिभिर्योगवित्तमैः।।
हृत्पुंडरीकविवरे योगिनां त्वं हि संस्थितः ।।१५।।

वदंति वेदास्त्वां संतः परब्रह्मस्वरूपिणम् ।।
भवंतं तत्त्वमित्यद्य तेजोराशिं परात्परम्।।१६।।
परमात्मानमित्याहुररस्मिन् जगति यद्विभो।।
त्वमेव शर्व सर्वात्मन् त्रिलोकाधिपते भव।।१७।।
दृष्टं श्रुतं स्तुतं सर्वं ज्ञायमानं जगद्गुरो।।
अणोरल्पतरं प्राहुर्महतोपि महत्तरम् ।।१८।।
सर्वतः पाणिपादांतं सर्वतोक्षिशिरोमुखम् ।।
सर्वतश्श्रवणघ्राणं त्वां नमामि च सर्वतः ।१९।।
सर्वज्ञं सर्वतो व्यापिन् सर्वेश्वरमनावृतम्।।
विश्वरूपं विरूपाक्षं त्वां नमामि च सर्वतः।।2.5.6.२०।।
सर्वेश्वरं भवाध्यक्षं सत्यं शिवमनुत्तमम्।।
कोटि भास्करसंकाशं त्वां नमामि च सर्वतः।।२१।।
विश्वदेवमनाद्यंतं षट्त्रिंशत्कमनीश्वरम्।।
प्रवर्तकं च सर्वेषां त्वां नमामि च सर्वतः।।२२।।
प्रवर्तकं च प्रकृतेस्सर्वस्य प्रपितामहम् ।।
सर्वविग्रहमीशं हि त्वां नमामि च सर्वतः ।।२३।।
एवं वदंति वरदं सर्वावासं स्वयम्भुवम् ।।
श्रुतयः श्रुतिसारज्ञं श्रुतिसारविदश्च ये ।। २४ ।।
अदृश्यमस्माभिरनेकभूतं त्वया कृतं यद्भवताथ लोके ।।
त्वामेव देवासुरभूसुराश्च अन्ये च वै स्थावरजंगमाश्च ।।२५।।
पाह्यनन्यगतीञ्शंभो सुरान्नो देववल्लभ ।।
नष्टप्रायांस्त्रिपुरतो विनिहत्यासुरान्क्षणात् ।।२६।।
मायया मोहितास्तेऽद्य भवतः परमेश्वर ।।
विष्णुना प्रोक्तयुक्त्या त उज्झिता धर्मतः प्रभो ।।२७।।
संत्यक्तसर्वधर्मांश्च बोद्धागमसमाश्रिताः ।।
अस्मद्भाग्यवशाज्जाता दैत्यास्ते भक्तवत्सल ।।२८।।
सदा त्वं कार्यकर्त्ताहि देवानां शरणप्रद ।।
वयं ते शरणापन्ना यथेच्छसि तथा कुरु ।। २९ ।।
सनत्कुमार उवाच ।।
इति स्तुत्वा महेशानं देवास्तु पुरतः स्थिताः ।।
कृतांजलिपुटा दीना आसन् संनतमूर्तयः ।। ।। 2.5.6.३० ।।
स्तुतश्चैवं सुरेन्द्राद्यैर्विष्णोर्जाप्येन चेश्वरः ।।
अगच्छत्तत्र सर्वेशो वृषमारुह्य हर्षितः ।। ३१ ।।

विष्णुमालिंग्य नंदिशादवरुह्य प्रसन्नधीः ।।
ददर्श सुदृशा तत्र नन्दीदत्तकरोऽखिलान् ।।३२।।
अथ देवान् समालोक्य कृपादृष्ट्या हरिं हरः ।।
प्राह गंभीरया वाचा प्रसन्नः पार्वतीपतिः ।।३३।।
शिव उवाच ।। ।।
ज्ञातं मयेदमधुना देवकार्यं सुरेश्वर ।।
विष्णोर्मायाबलं चैव नारदस्य च धीमतः ।।३४।।।।
तेषामधर्मनिष्ठानां दैत्यानां देवसत्तम ।।
पुरत्रयविनाशं च करिष्येऽहं न संशयः ।।३५।।
परन्तु ते महादैत्या मद्भक्ता दृढमानसाः ।।
अथ वध्या मयैव स्युर्व्याजत्यक्तवृषोत्तमाः ।।३६।।
विष्णुर्हन्यात्परो वाथ यत्त्याजितवृषाः कृताः ।।
दैत्या मद्भक्तिरहितास्सर्वे त्रिपुरवासिनः ।। ३७ ।।
इति शंभोस्तु वचनं श्रुत्वा सर्वे दिवौकसः ।।
विमनस्का बभूवुस्ते हरिश्चापि मुनीश्वर ।। ३८ ।।
देवान् विष्णुमुदासीनान् दृष्ट्वा च भवकृद्विधिः ।।
कृतांजलिपुरश्शंभुं ब्रह्मा वचनमब्रवीत् ।। ३९ ।।
ब्रह्मोवाच ।।
न किंचिद्विद्यते पापं यस्मात्त्वं योगवित्तमः ।।
परमेशः परब्रह्म सदा देवर्षिरक्षकः ।। 2.5.6.४० ।।
तवैव शासनात्ते वै मोहिताः प्रेरको भवान् ।।
त्यक्तस्वधर्मत्वत्पूजाः परवध्यास्तथापि न ।।४१।।
अतस्त्वया महादेव सुरर्षिप्राणरक्षक ।।
साधूनां रक्षणार्थाय हंतव्या म्लेच्छजातयः ।। ४२ ।।
राज्ञस्तस्य न तत्पापं विद्यते धर्मतस्तव ।।
तस्माद्रक्षेद्द्विजान् साधून्कंटकाद्वै विशोधयेत् ।।४३।।
एवमिच्छेदिहान्यत्र राजा चेद्राज्यमात्मनः ।।
प्रभुत्वं सर्वलोकानां तस्माद्रक्षस्व मा चिरम् ।।४४।।
मुनीन्द्रेशास्तथा यज्ञा वेदाश्शास्त्रादयोखिलाः।।
प्रजास्ते देवदेवेश ह्ययं विष्णुरपि ध्रुवम्।।४५।।
देवता सार्वभौमस्त्वं सम्राट्सर्वेश्वरः प्रभो ।।
परिवारस्तवैवैष हर्यादि सकलं जगत् ।। ४६ ।।
युवराजो हरिस्तेज ब्रह्माहं ते पुरोहितः ।।

राजकार्यकरः शक्रस्त्वदाज्ञापरि पालकः ।। ४७ ।।
देवा अन्येपि सर्वेश तव शासनयन्त्रिताः ।।
स्वस्वकार्यकरा नित्यं सत्यं सत्यं न संशयः ।। ४८ ।।
सनत्कुमार उवाच ।।
एतच्छ्रुत्वा वचस्तस्य ब्रह्मणः परमेश्वरः ।।
प्रत्युवाच प्रसन्नात्मा शंकरस्सुरपो विधिम् ।। ४९ ।।
शिव उवाच ।।
हे ब्रह्मन् यद्यहं देवराजस्सम्राट् प्रकीर्त्तितः ।।
तत्प्रकारो न मे कश्चिद्गृह्णीयां यमिह प्रभुः ।। 2.5.6.५० ।।
रथो नास्ति महादिव्यस्तादृक् सारथिना सह ।।
धनुर्बाणादिकं चापि संग्रामे जयकारकम् ।। ५१ ।।
यमास्थाय धनुर्बाणान् गृहीत्वा योज्य व मनः ।।
निहनिष्याम्यहं दैत्यान् प्रबलानपि संगरे ।। ५२ ।।
सनत्कुमार उवाच ।।
अद्य सब्रह्मका देवास्सेन्द्रोपेन्द्राः प्रहर्षिताः ।।
श्रुत्वा प्रभोस्तदा वाक्यं नत्वा प्रोचुर्महेश्वरम् ।। ५३ ।।
देवा ऊचुः ।। वयं भवाम देवेश तत्प्रकारा महेश्वर ।।
रथादिका तव स्वा मिन्संनद्धास्संगराय हि ।।५४।।
इत्युक्त्वा संहतास्सर्वे शिवेच्छामधिगम्य ह ।।
पृथगूचुः प्रसन्नास्ते कृताञ्जलिपुटास्सुराः ।।५५।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखण्डे शिवस्तुतिवर्णनं नाम षष्ठोऽध्यायः ।।६।।

सनत्कुमार उवाच ।।
एतच्छ्रुत्वा तु सर्वेषां देवादीनां वचो हरः ।।
अंगीचकार सुप्रीत्या शरण्यो भक्तवत्सलः।।१।।
एतस्मिन्नंतरे देवी पुत्राभ्यां संयुता शिवा।।
आजगाम मुने तत्र यत्र देवान्वितो हरः ।।२।।
अथागतां शिवां दृष्ट्वा सर्वे विष्ण्वादयो द्रुतम्।।
प्रणेमुरतिनम्रास्ते विस्मिता गतसंभ्रमाः ।।३।।
प्रोचुर्जयेति सद्वाक्यं मुने सर्वे सुलक्षणम् ।।
तूष्णीमासन्नजानंतस्तदागमनकारणम् ।।४।।
अथ सर्वैः स्तुता देवैर्देव्यद्भुतकुतूहला ।।
उवाच स्वामिनं प्रीत्या नानालीलाविशारदम् ।।५।।
देव्युवाच ।।
क्रीडमानं विभो पश्य षण्मुखं रविसंनिभम् ।।
पुत्रं पुत्रवतां श्रेष्ठ भूषितं भूषणैर्वरैः ।।६।।
इत्येवं लोकमात्रा च वाग्भिस्संबोधितश्शिवः ।।
न ययौ तृप्तिमीशानः पिबन् स्कंदाननामृतम् ।। ७ ।।
न सस्मारागतान्दैत्यान्निजतेजोनिपीडितान् ।।
स्कंदमालिंग्य चाघ्राय मुगोदाति महेश्वरः ।।८।।
जगदम्बाथ तत्रैव संमंत्र्य प्रभुणा च सा ।।
स्थित्वा किञ्चित्समुत्तस्थौ नानालीलाविशारदा ।।९।।
ततस्सनंदी सह षण्मुखेन तया च सार्द्धं गिरिराजपुत्र्या ।।
विवेश शम्भुर्भवनं सुलीलः सुरैस्समस्तैरभिवंद्यमानः ।।2.5.7.१०।।
द्वारस्य पार्श्वतः तस्थुर्देवदेवस्य धीमतः ।।
तेऽथ देवा महाव्यग्रा विमनस्का मुनेऽखिलः ।। ११ ।।
किं कर्तव्यं क्व गंतव्यं कः स्यादस्मत्सुखप्रदः ।।
किं तु किंत्विति संजातं हा हताः स्मेति वादिनम् ।। १२ ।।
अन्योन्यं प्रेक्ष्य शक्राद्या बभूवुश्चातिविह्वलाः ।।
प्रोचुर्विकलवाक्यं ते धिक्कुर्वन्तो निजं विधिम् ।। १३ ।।
पापा वयमिहेत्यन्ये ह्यभाग्याश्चेति चापरे ।।
ते भाग्यवंतो दैत्येन्द्रा इति चान्येऽब्रुवन् सुराः ।। १४ ।।
तस्मिन्नेवांतरे तेषां श्रुत्वा शब्दाननेकशः ।।
कुंभोदरो महातेजा दंडेनाताडयत्सुरान् ।। १५ ।।
दुद्रुवुस्ते भयाविष्टा देवा हाहेति वादिनः ।।

अपतन्मुनयश्चान्ये विह्वलत्वं बभूव ह ।। १६ ।।
इन्द्रस्तु विकलोतीव जानुभ्यामवनीं गतः ।।
अन्ये देवर्षयोतीव विकलाः पतिता भुवि ।। १७ ।।
सर्वे मिलित्वा मुनयस्सुराश्च सममाकुलाः ।।
संगता विधिहर्योस्तु समीपं मित्रचेतसोः ।। १८ ।।
अहो विधिबलं चैतन्मुनयः कश्यपादयः ।।
वदंति स्म तदा सर्वे हरि लोकभयापदम् ।।१९।।
अभाग्यान्न समाप्तं तु कार्यमित्यपरे द्विजाः ।।
कस्माद्विघ्नमिदं जातमित्यन्ये ह्यति विस्मिताः ।। 2.5.7.२० ।।
इत्येवं वचनं श्रुत्वा कश्यपाद्युदितं मुने ।।
आश्वासयन्मुनीन्देवान् हरिर्वाक्यमुपाददे ।। २१ ।।
विष्णुरुवाच ।।
हे देवा मुनयस्सर्वे मद्वचः शृणुतादरात् ।।
किमर्थं दुःखमापन्ना दुखं तु त्यजताखिलम् ।। २२ ।।
महदाराधनं देवा न सुसाध्यं विचार्य्यताम् ।।
महदाराधने पूर्वं भवेद्दुःखमिति श्रुतम् ।।
विज्ञाय दृढतां देवाः प्रसन्नो भवति ध्रुवम् ।। २३ ।।
शिवस्सर्वगणायक्षस्सहसा परमेश्वरः ।।
विचार्यतां हृदा सर्वैः कथं वश्यो भवेदिति ।।२४।।
प्रणवं पूर्वमुच्चार्य्य नमः पश्चादुदाहरेत् ।।
शिवायेति ततः पश्चाच्छुभद्वयमतः परम् ।। २५ ।।
कुरुद्वयं ततः प्रोक्तं शिवाय च ततः पुनः ।।
नमश्च प्रणवश्चैव मंत्रमेवं सदा बुधाः ।। २६ ।।
अवर्तध्वं पुनर्यूयं यदि शंभुकृते तदा ।।
कोटिमेकं तथा जप्त्वा शिवः कार्यं करिष्यति ।। २७ ।।
इत्युक्ते च तदा तेन हरिणा प्रभविष्णुना ।।
तथा देवाः पुनश्चक्रुर्हरस्याराधनं मुने ।। २८ ।।
संजजाप हरिश्चापि सविधिश्शिवमानसः ।।
देवानां कार्यसिद्ध्यर्थं मुनीनां च विशेषतः ।।२९।।
मुहुः शिवेति भाषंतो देवा धैर्यसमन्विताः ।।
कोटिसंख्यं तदा कृत्वा स्थितास्ते मुनिसत्तम ।। 2.5.7.३० ।।
एतस्मिन्नंतरे साक्षाच्छिवः प्रादुरभूत्स्वयम् ।।
यथोक्तेन स्वरूपेण वचनं चेदमब्रवीत् ।। ३१ ।।

श्रीशिव उवाच ।।
हे हरे हे विधे देवा मुनयश्च शुभव्रताः ।।
प्रसन्नोऽस्मि वरं ब्रूत जयेनानेन चेप्सितम् ।। ३२ ।।
।। देवा ऊचुः ।।
यदि प्रसन्नो देवेश जगदीश्वर शंकर ।।
सुरान् विज्ञाय विकलान् हन्यंतां त्रिपुराणि च ।।३३।।
रक्षास्मान्परमेशान दीनबंधो कृपाकर ।।
त्वयैव रक्षिता देवास्सदापद्भ्यो मुहुर्मुहुः ।। ३४ ।।
।। सनत्कुमार उवाच ।।
इत्युक्तं वचनं तेषां श्रुत्वा सहरिवेधसाम् ।।
विहस्यांतस्तदा ब्रह्मन्महेशः पुनरब्रवीत् ।। ३५ ।।
।। महेश उवाच ।।
हे हरे हे विधे देवा मुनयश्चाखिला वचः ।।
मदीयं शृणुताद्दत्य नष्टं मत्वा पुरत्रयम् ।।३६।।
रथं च सारथिं दिव्यं कार्मुकं शरमुत्तमम् ।।
पूर्वमंगीकृतं सर्वमुपपादयताचिरम् ।। ३७ ।।
हे विष्णो हे विधे त्वं हि त्रिलोकाधिपतिर्ध्रुवम् ।।
सर्वसम्राट्प्रकारं मे कर्तुमर्हसि यत्नतः ।। ३८ ।।
नष्टं पुरत्रयं मत्वा देवसाहाय्यमित्युत ।।
करिष्यथः प्रयत्नेनाधिकृतौ सर्गपालने ।। ३९ ।।
अयं मंत्रो महापुण्यो मत्प्रीतिजनकश्शुभः ।।
भुक्तिमुक्तिप्रदस्सर्वकामदश्शैवकावह ।।2.5.7.४०।।
धन्यो यशस्य आयुष्यः स्वर्गकामार्थिनां नृणाम् ।।
अपवर्गो ह्यकामानां मुक्तानां भुक्तिमुक्तिदः ।। ४१ ।।
य इमं कीर्तयेन्मंत्रं शुचिर्भूत्वा सदा नरः ।।
शृणुयाच्छ्रावयेद्वापि सर्वान्कामानवाप्नुयात् ।। ४२ ।।
सनत्कुमार उवाच ।।
इति श्रुत्वा वचस्तस्य शिवस्य परमात्मनः ।।
सर्वे देवा मुदं प्रापुर्हरिर्ब्रह्माधिकं तथा ।। ४३ ।।
सर्वदेवमयं दिव्यं रथं परमशोभनम्।।
रचयामास विश्वार्थे विश्वकर्मा तदाज्ञया ।। ४४ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे देवस्तुतिवर्णनं नाम सप्तमोऽध्यायः ।। ७ ।।

।। व्यास उवाच ।।

सनत्कुमार सर्वज्ञ शैवप्रवर सन्मते ।।

अद्भुतेयं कथा तात श्राविता परिमेशितुः ।।१।।

इदानीं रथनिर्माणं ब्रूहि देवमयं परम् ।।

शिवार्थं यत्कृतं दिव्यं धीमता विश्वकर्मणा ।। २ ।।

।। सूत उवाच।।

इत्याकर्ण्य वचस्तस्य व्यासस्य स मुनीश्वरः ।।

सनत्कुमारः प्रोवाच स्मृत्वा शिवपदांबुजम् ।।३।।

।। सनत्कुमार उवाच ।। ।।

शृणु व्यास महाप्राज्ञ रथादेर्निर्मितिं मुने ।।

यथामति प्रवक्ष्येऽहं स्मृत्वा शिवपदाम्बुजम् ।। ४ ।।

अथ देवस्य रुद्रस्य निर्मितो विश्वकर्मणा ।।

सर्वलोकमयो दिव्यो रथो यत्नेन सादरम् ।। ५ ।।

सर्वभूतमयश्चैव सौवर्णस्सर्वसंमतः ।।

रथांगं दक्षिणं सूर्यस्तद्वामं सोम एव च ।।६।।

दक्षिणं द्वादशारं हि षोडशारं तथोत्तरम् ।।

अरेषु तेषु विप्रेन्द्र आदित्या द्वादशैव तु ।।९।।

शशिनः षोडशारास्तु कला वामस्य सुव्रत ।।

ऋक्षाणि तु तथा तस्य वामस्यैव विभूषणम् ८ ।।

ऋतवो नेमयः षट् च तयोर्वै विप्रपुंगव ।।

पुष्करं चांतरिक्षं वै रथनीडश्च मंदरः ।। ९ ।।

अस्ताद्रिरुद(दद्र?)याद्रिस्तु तावुभौ कूबरौ स्मृतौ ।।

अधिष्ठानं महामेरुराश्रयाः केशराचलाः ।। 2.5.8.१० ।।

वेगस्संवत्सरास्तस्य अयने चक्रसंगमौ ।।

मुहूर्ता वंधुरास्तस्य शम्याश्चैव कलाः स्मृताः ।। ११ ।।

तस्य काष्ठाः स्मृता घोणाश्चाक्षदंडाः क्षणाश्च वै ।।

निमेषाश्चानुकर्षश्च ईषाश्चानुलवाः स्मृताः ।। १२ ।।

द्यौर्वरूथं रथस्यास्य स्वर्गमोक्षावुभौ ध्वजौ ।।

युगान्तकोटितौ तस्य भ्रमकामदुघौ स्मृतौ ।।१३।।

ईषादंडस्तथा व्यक्तं वृद्धिस्तस्यैव नड्वलः ।।

कोणास्तस्याप्यहंकारो भूतानि च बलं स्मृतम् ।। १४ ।।

इन्द्रियाणि च तस्यैव भूषणानि समंततः ।।

श्रद्धा च गतिरस्यैव रथस्य मुनिसत्तम ।। १५ ।।

तदानीं भूषणान्येव षडंगान्युपभूषणम् ।।

पुराणन्यायमीमांसा धर्मशास्त्राणि सुव्रताः ।।१६।।

बलाशया वराश्चैव सर्वलक्षणसंयुताः ।।

मंत्रा घं(घ?)टाः स्मृतास्तेषां वर्णपादास्तदाश्रमाः ।।१७।।

अथो बन्धो ह्यनन्तस्तु सहस्रफणभूषितः ।।

दिशः पादा रथस्यास्य तथा चोपदिशश्चह ।।१८।।

पुष्कराद्याः पताकाश्च सौवर्णा रत्नभूषिताः ।।

समुद्रास्तस्य चत्वारो रथकंबलिनस्स्मृताः ।।१९।।

गंगाद्यास्सरित श्रेष्ठाः सर्वाभरणभूषिताः ।।

चामरासक्तहस्ताग्रास्सर्वास्त्रीरूपशोभिताः ।।2.5.8.२०।।

तत्र तत्र कृतस्थानाः शोभयांचक्रिरे रथम् ।।

आवहाद्यास्तथा सप्त सोपानं हैममुत्तमम् ।। २१ ।।

लोकालोकाचलस्तस्योपसोपानस्समंततः ।।

विषयश्च तथा बाह्यो मानसादिस्तु शोभनः ।। २२ ।।

पाशास्समंततस्तस्य सर्वे वर्षाचलास्स्मृताः ।।

तलास्तस्य रथस्याऽथ सर्वे तलनिवासिनः ।। २३ ।।

सारथिर्भगवान्ब्रह्मा देवा रश्मिधराः स्मृताः ।।

प्रतोदो ब्रह्मणस्तस्य प्रणवो ब्रह्मदैवतम् ।। २४ ।।

अकारश्च महच्छत्रं मंदरः पार्श्वदंडभाक् ।।

शैलेन्द्रः कार्मुकं तस्य ज्या भुजंगाधिपस्स्वयम् ।। २५ ।।

घंटा सरस्वती देवी धनुषः श्रुतिरूपिणी ।।

इषुर्विष्णुर्महातेजास्त्वग्निश्शल्यं प्रकीर्तितम् ।। २६ ।।

हयास्तस्य तथा प्रोक्ताश्चत्वारो निगमा मुने ।।

ज्योतींषि भूषणं तेषामवशिष्टान्यतः परम् ।।२७।।

अनीकं विषसंभूतं वायवो वाजका स्मृताः ।।

ऋषयो व्यासमुख्याश्च वाहवाहास्तथाभवन्।।२८।।

स्वल्पाक्षरैस्संब्रवीमि किं बहूक्त्या मुनीश्वर ।।

ब्रह्मांडे चैव यत्किंचिद्वस्तुतद्वै रथे स्मृतम् ।। २९ ।।

एवं सम्यक्कृतस्तेन धीमता विश्वकर्मणा ।।

सरथादिप्रकारो हि ब्रह्मविष्णवाज्ञया शुभः ।। 2.5.8.३० ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखण्डे रथादियुद्धप्रकारवर्णनं नामाष्टमोऽध्यायः ।। ८ ।।

सनत्कुमार उवाच ।।

ईदृग्विधं महादिव्यं नानाश्चर्यमयं रथम् ।।

संनह्य निगमानश्वांस्तं ब्रह्मा प्रार्पयच्छिवम् ।। १ ।।

शंभवेऽसौ निवेद्याधिरोपयामास शूलिनम् ।।

बहुशः प्रार्थ्य देवेशं विष्ण्वादिसुरसमतम् ।। २ ।।

ततस्तस्मिन्रथे दिव्ये रथप्राकारसंयुते ।।

सर्वदेवमयः शंभुरारुरोह महाप्रभुः ।। ३ ।।

ऋषिभिः स्तूयमानश्च देवगंधर्वपन्नगैः ।।

विष्णुना ब्रह्मणा चापि लोकपालैर्बभूव ह ।।४।।

उपावृतश्चाप्सरसां गणैर्गीतविशारदः ।।

शुशुभे वरदश्शम्भुस्स तं प्रेक्ष्य च सारथिम् ।। ५ ।।

तस्मिन्नारोऽहतिरथं कल्पितं लोकसंभृतम् ।।

शिरोभिः पतिता भूमौ तुरगा वेदसंभवाः ।।६।।

चचाल वसुधा चेलुस्सकलाश्च महीधराः ।।

चकंपे सहसा शेषोऽसोढा तद्भारमातुरः ।७।।

अथाधः स रथस्यास्य भगवान्धरणीधरः ।।

वृषेन्द्ररूपी चोत्थाय स्थापयामास वै क्षणम् ।। ८ ।।

क्षणांतरे वृषेन्द्रोऽपि जानुभ्यामगमद्धराम् ।।

रथारूढमहेशस्य सुतेजस्सोढुमक्षमः ।। ९ ।।

अभीषुहस्तो भगवानुद्यम्य च हयांस्तदा ।।

स्थापयामास देवस्य पचनाद्वैरथं वरम्।।2.5.9.१०।।

ततोऽसौ नोदयामास मनोमारुतरंहसः ।।

ब्रह्मा हयान्वेदमयान्नद्धान्रथवरे स्थितः ।।११।।

पुराण्युद्दिश्य वै त्रीणि तेषां खस्थानि तानि हि।।

अधिष्ठिते महेशे तु दानवानां तरस्विनाम्।।१२।।

अथाह भगवान्रुद्रो देवानालोक्य शंकरः।।

पशूनामाधिपत्यं मे धद्ध्वं हन्मि ततोऽसुरान्।।१३।।

पृथक्पशुत्वं देवानां तथान्येषां सुरोत्तमाः।।

कल्पयित्वैव वध्यास्ते नान्यथा दैत्यसत्तमाः ।। १४ ।।

सनत्कुमार उवाच ।।

इति श्रुत्वा वचस्तस्य देवदेवस्य धीमतः ।।

विषादमगमन्सर्वे पशुत्वं प्रतिशंकिताः ।। १५ ।।

तेषां भावमथ ज्ञात्वा देवदेवोऽम्बिकापतिः ।।

विहस्य कृपया देवाञ्छंभुस्तानिदमब्रवीत् ।। १६ ।।

शंभुरुवाच ।।

मा वोऽस्तु पशुभावेऽपि पातो विबुधसत्तमाः ।।

श्रूयतां पशुभावस्य विमोक्षः क्रियतां च सः ।। १७ ।।

यौ वै पाशुपतं दिव्यं चरिष्यति स मोक्ष्यति ।।

पशुत्वादिति सत्यं वः प्रतिज्ञातं समाहिताः ।। १८ ।।

ये चाप्यन्ये करिष्यंति व्रतं पाशुपतं मम ।।

मोक्ष्यंति ते न संदेहः पशुत्वात्सुरसत्तमाः ।। १९ ।।

नैष्ठिकं द्वादशाब्दं वा तदर्धं वर्षकत्रयम् ।।

शुश्रूषां कारयेद्यस्तु स पशुत्वाद्विमुच्यते ।। 2.5.9.२० ।।

तस्मात्परमिदं दिव्यं चरिष्यथ सुरोत्तमाः ।।

पशुत्वान्मोक्ष्यथ तदा यूयमत्र न संशयः ।।२१।।

सनत्कुमार उवाच ।।

इत्याकर्ण्य वचस्तस्य महेशस्य परात्मनः ।।

तथेति चाब्रुवन्देवा हरिब्रह्मादयस्तथा ।। २२ ।।

तस्माद्वै पशवस्सर्वे देवासुरवराः प्रभोः ।।

रुद्रः पशुपतिश्चैव पशुपाशविमोचकः ।। २३ ।।

तदा पक्षुपतीत्येतत्तस्य नाम महेशितुः ।।

प्रसिद्धमभवद्वध्वा सर्वलोकेषु शर्मदम् ।। २४ ।।

मुदा जयेति भाषंतस्सर्वे देवर्षयस्तदा ।।

अमुदंश्चाति देवेशो ब्रह्मा विष्णुः परेऽपि च ।।२५।।

तस्मिंश्च समये यच्च रूपं तस्य महात्मनः ।।

जातं तद्वर्णितुं शक्यं न हि वर्षशतैरपि ।।२६।।

एवं विधो महेशानो महेशान्यखिलेश्वरः ।।
जगाम त्रिपुरं हंतुं सर्वेषां सुखदायकः ।। २७ ।।
तं देवदेवं त्रिपुरं निहंतुं तदानु सर्वे तु रविप्रकाशाः ।।
गजैर्हयैस्सिंहवरै रथैश्च वृषैर्ययुस्तेऽमरराजमुख्याः।।२८।।
हलैश्च शालैर्मुशलैर्भुशुण्डैर्गिरीन्द्रकल्पैर्गिरिसंनिभाश्च।।
नानायुधैस्संयुतबाहवस्ते ततो नु हृष्टाः प्रययुस्सुरेशाः ।। २९ ।।
नानायुधाढ्याः परमप्रकाशा महोत्सवश्शंभुजयं वदंतः ।।
ययुः पुरस्तस्य महेश्वरस्य तदेन्द्रपद्मोद्भवविष्णुमुख्याः।।2.5.9.३०।।
जहृषुर्मुनयस्सर्वे दंडहस्ता जटाधराः ।।
ववृषुः पुष्पवर्षाणि खेचरा सिद्धचारणाः ।। ३१ ।।
पुत्रत्रयं च विप्रेन्द्रा व्रजन्सर्वे गणेश्वराः ।।
तेषां संख्या च कः कर्तुं समर्थो वच्मि कांश्चन ।। ३२ ।।
गणेश्वरैर्देवगणैश्च भृङ्गी समावृतस्सर्वगणेन्द्रवर्यः ।।
जगाम योगांस्त्रिपुरं निहंतुं विमानमारुह्य यथा महेन्द्रः ।।३३।।।
केशो विगतवासश्च महाकेशो महाज्वरः ।।
सोमवल्लीसवर्णश्च सोमदस्सनकस्तथा ।। ३४ ।।
सोमधृक् सूर्यवर्चाश्च सूर्यप्रेषणकस्तथा ।।
सूर्याक्षस्सूरिनामा च सुरस्सुन्दर एव च।।३५।।
प्रस्कंदः कुन्दरश्चंडः कंपनश्चातिकंपनः ।।
इन्द्रश्चेन्द्रजवश्चैव यंता हिमकरस्तथा।।३६।।
शताक्षश्चैव पंचाक्षः सहस्राक्षो महोदरः ।।
सतीजहुश्शतास्यश्च रंकः कर्पूरपूतनः ।।३७।।
द्विशिखस्त्रिशिखश्चैव तथाहंकारकारकः।।
अजवक्त्रोऽष्टवक्त्रश्च हयवक्त्रोऽर्द्धवक्त्रकः ।।३८।।
इत्याद्या गणपा वीरा बहवोऽपरिमेयकाः ।।
प्रययुः परिवार्येशं लक्ष्यलक्षणवर्जिताः।।३९।।
समावृत्य महादेवं तदापुस्ते पिनाकिनम् ।।
दग्धुं समर्था मनसा क्षणेन सचराचरम् ।। 2.5.9.४० ।।

दग्धुं जगत्सर्वमिदं समर्थाः किंत्वत्र दग्धुं त्रिपुरं पिनाकी ।।

रथेन किं चात्र शरेण तस्य गणैश्च किं देवगणैश्च शम्भोः ।।४१।।

स एव दग्धुं त्रिपुराणि तानि देवद्विषां व्यास पिनाकपाणिः ।।

स्वयं गतस्तत्र गणैश्च सार्द्धं निजैस्सुराणामपि सोऽद्भुतोतिः ।।४२।।

किं तत्र कारणं चान्यद्वच्मि ते ऋषिसत्तम ।।

लोकेषु ख्यापनार्थं वै यशः परमलापहम् ।।४३।।

अन्यच्च कारणं ह्येतद्दुष्टानां प्रत्ययाय वै।।

सर्वेष्वपि च देवेषु यस्मान्नान्यो विशिष्यते।।४४।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे शिवयात्रावर्णनं नाम नवमोऽध्यायः।।९।।

सनत्कुमार उवाच ।।
अथ शम्भुर्महादेवो रथस्थस्सर्वसंयुतः ।।
त्रिपुरं सकलं दग्धुमुद्यतोऽभूत्सुरद्विषाम्।।
शीर्षं स्थानकमास्थाय संधाय च शरोत्तमम् ।।
सज्जं तत्कार्मुकं कृत्वा प्रत्यालीढं महाद्भुतम् ।।२।।
निवेश्य दृढमुष्टौ च दृष्टिं दृष्टौ निवेश्य च।।
अतिष्ठन्निश्चलस्तत्र शतं वर्षसहस्रकम् ।।३।।
ततोङ्गुष्ठे गणाध्यक्षस्स तु दैत्यनिशंस्थितः।।
न लक्ष्यं विविशुस्तानि पुराण्यस्य त्रिशूलिनः ।।४।।
ततोंतरिक्षादशृणोद्धनुर्बाणधरो हरः ।।
मुंजकेशो विरूपाक्षो वाचं परमशोभनाम् ।।५।।
भो भो न यावद्भगवन्नर्चितोऽसौ विनायकः।।
पुराणि जगदीशेश सांप्रतं न हनिष्यति ।। ६ ।।
एतच्छ्रुत्वा तु वचनं गजवक्त्रमपूजयत् ।।
भद्रकालीं समाहूय ततोंधकनिषूदनः ।। ७ ।।
तस्मिन् संपूजिते हर्षात्परितुष्टे पुरस्सरे ।।
विनायके ततो व्योम्नि ददर्श भगवान्हरः ।। ८ ।।
पुराणि त्रीणि दैत्यानां तारकाणां महात्मनाम् ।।
यथातथं हि युक्तानि केचिदित्थं वदंति ह ।। ९ ।।
परब्रह्मणि देवेश सर्वोपास्ये महेश्वरे ।।
अन्यप्रसादतः कार्यं सिद्धिर्घटति नेति हि ।। 2.5.10.१० ।।
स स्वतंत्रः परं ब्रह्म सगुणो निर्गुणोऽपि ह ।।
अलक्ष्यः सकलैस्स्वामी परमात्मा निरंजनः ।। ११ ।।
पंचदेवात्मकः पंचदेवोपास्यः परः प्रभुः ।।
तस्योपास्यो न कोप्यस्ति स एवोपास्य आलयम् ।। १२ ।।
अथ वा लीलया तस्य सर्वं संघटते मुने ।।
चरितं देवदेवस्य वरदातुर्महेशितुः ।। १३ ।।
तस्मिंस्थिते महादेवे पूजयित्वा गणाधिपम् ।।
पुराणि तत्र कालेन जग्मुरेकत्वमाशु वै ।। १४।।
एकीभावं मुने तत्र त्रिपुरे समुपागते ।।
बभूव तुमुलो हर्षो देवादीनां महात्मनाम् ।। १५ ।।
ततो देवगणास्सर्वे सिद्धाश्च परमर्षयः ।।
जयेति वाचो मुमुचुः स्तुवंतश्चाष्टमूर्तिनम् ।। १६ ।।

अथाहेति तदा ब्रह्मा विष्णुश्च जगतां पतिः ।।
समयोऽपि समायातो दैत्यानां वधकर्मणः ।।१७।।
तेषां तारकपुत्राणां त्रिपुराणां महेश्वर ।।
देवकार्यं कुरु विभो एकत्वमपि चागतम् ।। १८ ।।
यावन्न यान्ति देवेश विप्रयोगं पुराणि वै ।।
तावद्बाणं विमुंचश्च त्रिपुरं भस्मसात्कुरु।।।१९।।
अथ सज्यं धनुः कृत्वा शर्वस्संधाय तं शरम् ।।
पूज्य पाशुपतास्त्रं स त्रिपुरं समचिंतयत् ।।2.5.10.२०।।
अथ देवो महादेवो वरलीलाविशारदः ।।
केनापि कारणेनात्र सावज्ञं तदवैक्षत ।। २१ ।।
पुरत्रयं विरूपाक्षः कर्तुं तद्भस्मसात्क्षणात् ।।
समर्थः परमेशानो मीनातु च सतां गतिः ।।२२।।
दग्धुं समर्थो देवेशो वीक्षणेन जगत्त्रयम् ।।
अस्मद्यशो विवृद्ध्यर्थं शरं मोक्तुमिहार्हसि ।।२३।।
इति स्तुतोऽमरैस्सर्वैर्विष्ण्वादिविधिभिस्तदा ।।
दग्धुं पुरत्रयं तद्वै बाणेनैच्छन्महेश्वरः ।। २४ ।।
अभिलाख्यमुहूर्ते तु विकृष्य धनुरद्भुतम् ।।
कृत्वा ज्यातलनिर्घोषं नादमत्यंतदुस्सहम् ।। २५ ।।
आत्मनो नाम विश्राव्य समाभाष्य महासुरान् ।।
मार्तंडकोटिवपुषं कांडमुग्रो मुमोच ह ।।२६।।
ददाह त्रिपुरस्थास्तान्दैत्यांस्त्रीन्विमलापहः ।।
स आशुगो विष्णुमयो वह्निशल्यो महाज्वलन् ।। २७ ।।
ततः पुराणि दग्धानि चतुर्जलधिमेखलाम् ।।
गतानि युगपद्भूमिं त्रीणि दग्धानि भस्मशः ।। २८ ।।
दैत्यास्तु शतशो दग्धास्तस्य बाणस्थवह्निना ।।
हाहाकारं प्रकुर्वंतश्शिवपूजाव्यतिक्रमात् ।। २९ ।।
तारकाक्षस्तु निर्दग्धो भ्रातृभ्यां सहितोऽभवत् ।।
सस्मार स्वप्रभुं देवं शंकरं भक्तवत्सलम् ।। 2.5.10.३० ।।
भक्त्या परमया युक्तः प्रलपन् विविधा गिरः ।।
महादेवं समुद्वीक्ष्य मनसा तमुवाच सः ।। ३१ ।।
तारकाक्ष उवाच ।।
भव ज्ञातोसि तुष्टोऽसि यद्यस्मान् सह बंधुभिः ।।
तेन सत्येन भूयोऽपि कदा त्वं प्रदहिष्यसि ।। ३२ ।।

दुर्लभं लब्धमस्माभिर्यदप्राप्यं सुरासुरैः ।।
त्वद्भावभाविता बुद्धिर्जातेजाते भवत्विति ।।३३।।
इत्येवं विब्रुवंतस्ते दानवास्तेन वह्निना ।।
शिवाज्ञयाद्भुतं दग्धा भस्मसादभवन्मुने ।। ३४ ।।
अन्येऽपि बाला वृद्धाश्च दानवास्तेन वह्निना ।।
शिवाज्ञया द्रुतं व्यास निर्दग्धा भस्मसात्कृताः ।। ३५ ।।
स्त्रियो वा पुरुषा वापि वाहनानि च तत्र ये ।।
सर्वे तेनाग्निना दग्धाः कल्पान्ते तु जगद्यथा ।। ३६ ।।
भर्तॄन्कंठगतान्हित्वा काश्चिद्दग्धा वरस्त्रियः ।।
काश्चित्सुप्ताः प्रमत्ताश्च रतिश्रांताश्च योषितः ।। ३७ ।।
अर्द्धदग्धा विबुद्धाश्च बभ्रमुर्मोहमूर्च्छिताः ।।
तेन नासीत्सुसूक्ष्मोऽपि घोरत्रिपुरवह्निना ।।३८।।
अविदग्धो विनिर्मुक्तः स्थावरो जंगमोपि वा ।।
वर्जयित्वा मयं दैत्यं विश्वकर्माणमव्ययम् ।।३९।।
अविरुद्धं तु देवानां रक्षितं शंभुतेजसा ।।
विपत्कालेपि सद्भक्तं महेशशरणागतम् ।।2.5.10.४०।।
सन्निपातो हि येषां नो विद्यते नाशकारकः ।।
दैत्यानामन्यसत्त्वानां भावाभावे कृताकृते ।। ४१ ।।
तस्माद्यत्नस्सुसंभाव्यः सद्भिः कर्तव्य एव हि ।।
गर्हणात्क्षीयते लोको न तत्कर्म समाचरेत् ।। ४२ ।।
न संयोगो यथा तेषां भूयात्त्रिपुरवासिनाम् ।।
मतमेतद्धि सर्वेषां दैवाद्यदि यतो भवेत् ।।४३।।
ये पूजयंतस्तत्रापि दैत्या रुद्रं सबांधवाः ।।
गाणपत्यं ययुस्सर्वे शिवपूजावि धेर्बलात् ।।४४।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे त्रिपुरदाहवर्णनं नाम दशमोऽध्यायः ।।
१० ।।

व्यास उवाच ।।
ब्रह्मपुत्र महाप्राज्ञ धन्यस्त्वं शैवसत्तम ।।
किमकार्षुस्ततो देवा दग्धे च त्रिपुरेऽखिलाः ।।१।।
मयः कुत्र गतो दग्धो पतयः कुत्र ते गताः ।।
तत्सर्वं मे समाचक्ष्व यदि शंभुकथाश्रयम् ।। २ ।।
सूत उवाच ।।
इत्याकर्ण्य व्यासवाक्यं भगवान्भवकृत्सुतः ।।
सनत्कुमारः प्रोवाच शिवपादयुगं स्मरन् ।। ३ ।।
सनत्कुमार उवाच ।। ।।
शृणु व्यास महाबुद्धे पाराशर्यं महेशितुः ।।
चरितं सर्वपापघ्नं लोकलीलानुसाररिणः ।।४।।
महेश्वरेण सर्वस्मिंस्त्रिपुरे दैत्यसंकुले ।।
दग्धे विशेषतस्तत्र विस्मितास्तेऽभवन्सुराः।। ।।५।।
न किंचिदब्रुवन्देवाः सेन्द्रोपेंद्रादयस्तदा ।।
महातेजस्विनं रुद्रं सर्वे वीक्ष्य ससंभ्रमाः ।।६।।
महाभयंकरं रौद्रं प्रज्वलंतं दिशो दश ।।
कोटिसूर्यप्रतीकाशं प्रलयानलसन्निभम् ।। ७ ।।
भयाद्देवं निरीक्ष्यैव देवीं च हिमवत्सुताम्।।
बिभ्यिरे निखिला देवप्रमुखा स्तस्थुरानताः ।। ८ ।।
दृष्ट्वानीकं तदा भीतं देवानामृषिपुंगवाः ।।
न किंचिदूचुस्संतस्थुः प्रणेमुस्ते समंततः ।। ९ ।।
अथ ब्रह्मापि संभीतो दृष्ट्वा रूपं च शांकरम् ।।
तुष्टाव तुष्टहृदयो देवैस्सह समाहितः ।। 2.5.11.१० ।।
विष्णुना च सभीतेन देवदेवं भवं हरम् ।।
त्रिपुरारिं सगिरिजं भक्ताधीनं महेश्वरम् ।। ११ ।।
।। ब्रह्मोवाच ।।
देवदेव महादेव भक्तानुग्रहकारक ।।
प्रसीद परमेशान सर्व देवहितप्रद ।। १२ ।।
प्रसीद जगतां नाथ प्रसीदानंददायक ।।
प्रसीद शंकर स्वामिन् प्रसीद परमेश्वर ।। १३ ।।
ॐकाराय नमस्तुभ्यमाकारपरतारक ।।
प्रसीद सर्वदेवेश त्रिपुरघ्न महेश्वर ।। १४ ।।
नानावाच्याय देवाय वरणप्रिय शंकर ।।

अगुणाय नमस्तुभ्यं प्रकृतेः पुरुषात्पर ।। १५ ।।
निर्विकाराय नित्याय नित्यतृप्ताय भास्वते ।।
निरंजनाय दिव्याय त्रिगु णाय नमोऽस्तु ते ।। १६ ।।
सगुणाय नमस्तुभ्यं स्वर्गेशाय नमोस्तु ते ।।
सदाशिवाय शांताय महेशाय पिनाकिने ।।१७।।
सर्वज्ञाय शरण्याय सद्योजाताय ते नमः ।।
वामदेवाय रुद्राय तदाप्यपुरुषाय च ।।१८।।
अघोराय सुसेव्याय भक्ताधीनाय ते नमः ।।
ईशानाय वरेण्याय भक्तानंदप्रदायिने ।। १९ ।।
रक्षरक्ष महादेव भीतान्नस्सकलामरान् ।।
दग्ध्वा च त्रिपुरं सर्वे कृतार्था अमराः कृ ताः ।। 2.5.11.२० ।।
स्तुत्वैवं देवतास्सर्वा नमस्कारं पृथक्पृथक् ।।
चक्रुस्ते परमप्रीता ब्रह्माद्यास्तु सदाशिवम् ।। २१ ।।
अथ ब्रह्मा स्वयं देवं त्रिपुरारिं महेश्वरम् ।।
तुष्टाव प्रणतो भूत्वा नतस्कंधः कृतांजलिः ।। २२ ।।
ब्रह्मोवाच ।। भगवन्देवदेवेश त्रिपुरान्तक शंकर ।।
त्वयि भक्तिः परा मेऽस्तु महादेवानपायिनी ।। २३ ।।
सर्वदा मेऽस्तु सारथ्यं तव देवेश शंकर ।।
अनुकूलो भव विभो सदा त्वं परमेश्वर ।। २४ ।।
सनत्कुमार उवाच ।।
इति स्तुत्वा विधिश्शंभुं भक्तवत्सलमानतः ।।
विरराम नतस्कंधः कृतांजलिरुदारधीः ।। २५ ।।
जनार्दनोऽपि भगवान् नमस्कृत्य महेश्वरम् ।।
कृतांजलिपुटो भूत्वा तुष्टाव च महेश्वरम् ।। २६ ।।
विष्णुरुवाच ।। देवाधीश महेशान दीनबंधो कृपाकर ।।
प्रसीद परमेशान कृपां कुरु नतप्रिय ।। २७ ।।
निर्गुणाय नमस्तुभ्यं पुनश्च सगुणाय च ।।
पुनः प्रकृतिरूपाय पुनश्च पुरुषाय च ।। २८ ।।
पश्चाद्गुणस्वरूपाय नतो विश्वात्मने नमः ।।
भक्तिप्रियाय शांताय शिवाय परमात्मने ।। २९ ।।
सदाशिवाय रुद्राय जगतां पतये नमः ।।
त्वयि भक्तिर्दृढा मेऽद्य वर्द्धमाना भवत्विति ।। 2.5.11.३० ।।
सनत्कुमार उवाच ।।

इत्युक्त्वा विररामासौ शैवप्रवरसत्तमः ।।
सर्वे देवाः प्रणम्योचुस्ततस्तं परमेश्वरम् ।। ३१ ।।
देवा ऊचुः ।।
देवनाथ महादेव करुणाकर शंकर।।
प्रसीद जगतां नाथ प्रसीद परमेश्वर।।३२।।
प्रसीद सर्वकर्ता त्वं नमामस्त्वां वयं मुदा।।
भक्तिर्दृढास्माकं नित्यं स्यादनपायिनी ।।३३।।
सनत्कुमार उवाच।।
इति स्तुतश्च देवेशो ब्रह्मणा हरिणामरैः।।
प्रत्युवाच प्रसन्नात्मा शंकरो लोकशंकरः ।।३४।।
शंकर उवाच ।।
हे विधे हे हरे देवाः प्रसन्नोऽस्मि विशेषतः।।
मनोऽभिलषितं ब्रूत वरं सर्वे विचा रतः ।।३५।।
सनत्कुमारः उवाच ।।
इत्युक्तं वचनं श्रुत्वा हरेण मुनिसत्तम ।।
प्रत्यूचुस्सर्वदेवाश्च प्रसन्नेनान्तरात्मना ।।३६।।
सर्वे देवा ऊचुः।।
यदि प्रसन्नो भगवन्यदि देयो वरस्त्वया।।
देवदेवेश चास्मभ्यं ज्ञात्वा दासान्हि नस्सुरान्।।३७।।
यदा दुःखं तु देवानां संभवेद्देवसत्तम ।।
तदा त्वं प्रकटो भूत्वा दुःखं नाशय सर्वदा।।३८।।
सनत्कुमार उवाच।।
इत्युक्तो भगवानुद्रो ब्रह्मणा हरिणामरैः।।
युगपत्प्राह तुष्टात्मा तथेत्यस्तु निरंतरम् ।।३९।।
स्तवैरेतैश्च तुष्टोऽस्मि दास्यामि सर्वदा ध्रुवम्।।
यदभीष्टतमं लोके पठतां शृण्वतां सुराः।।2.5.11.४०।।
इत्युक्त्वा शंकरः प्रीतो देवदुःखहरस्सदा ।।
सर्वदेवप्रियं यद्वै तत्सर्वं च प्रदत्तवान् ।। ४१ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे देवस्तुतिवर्णनं नामैकादशोऽध्यायः ।। ११।।

सनत्कुमार उवाच ।।
एतस्मिन्नंतरे शंभुं प्रसन्नं वीक्ष्य दानवः।।
तत्राजगाम सुप्रीतो मयोऽदग्धः कृपाबलात् ।। १ ।।
प्रणनाम हरं प्रीत्या सुरानन्यानपि ध्रुवम् ।।
कृतांजलिर्नतस्कंधः प्रणनाम पुन शिशवम् ।।२।।
अथोत्थाय शिवं दृष्ट्वा प्रेम्णा गद्गदसुस्वरः ।।
तुष्टाव भक्तिपूर्णात्मा स दानववरो मयः ।।३।।
मय उवाच ।। देवदेव महादेव भक्तवत्सल शंकरः ।।
कल्पवृक्षस्वरूपोसि सर्वपक्षविवर्जितः ।।४।।
ज्योतीरूपो नमस्तेस्तु विश्वरूप नमोऽस्तु ते।।
नमः पूतात्मने तुभ्यं पावनाय नमोनमः ।।५।।
चित्ररूपाय नित्याय रूपातीताय ते नमः ।।
दिव्यरूपाय दिव्याय सुदिव्याकृतये नमः।।६।।
नमः प्रणतसर्वार्तिनाशकाय शिवात्मने ।।
कर्त्रे भर्त्रे च संहर्त्रे त्रिलोकानां नमोनमः ।। ७ ।।
भक्तिगम्याय भक्तानां नमस्तुभ्यं कृपा लवे ।।
तपस्सत्फलदात्रे ते शिवाकांत शिवेश्वर।।८।।
न जानामि स्तुतिं कर्तुं स्तुतिप्रिय परेश्वर।।
प्रसन्नो भव सर्वेश पाहि मां शरणाग तम् ।।९।।
।। सनत्कुमार उवाच ।।
इत्याकर्ण्य मयोक्ता हि संस्तुतिं परमेश्वरः ।।
प्रसन्नोऽभूद्द्विजश्रेष्ठ मयं प्रोवाच चादरात्।। 2.5.12.१ ०।।
।। शिव उवाच ।।
वरं ब्रूहि प्रसन्नोऽहं मय दानवसत्तम ।।
मनोऽभिलषितं यत्ते तद्दास्यामि न संशयः ।। ११ ।।
।। सनत्कुमार उवाच ।।
श्रुत्वा शिवं वचश्शंभोस्स मयो दानवर्षभः ।।
प्रत्युवाच प्रभुं नत्वा नतस्कंधः कृतांजलिः ।। १२ ।।
मय उवाच ।।
देवदेव महादेव प्रसन्नो यदि मे भवान् ।।
वरयोग्योऽस्म्यहं चेद्धि स्वभक्तिं देहि शाश्वतीम्।। १३।।
स्वभक्तेषु सदा सख्यं दीनेषु च दयां सदा।।
उपेक्षामन्यजीवेषु खलेषु परमेश्वर।। १४।।

कदापि नासुरो भावो भवेन्मम महेश्वर ।।
निर्भयः स्यां सदा नाथ मग्नस्त्वद्भजने शुभे ।। १५ ।।
।। सनत्कुमार उवाच ।।
इति संप्रार्थ्यमानस्तु शंकरः परमेश्वरः ।।
प्रत्युवाच मये नाथ प्रसन्नो भक्तवत्सलः ।। १६ ।।
महेश्वर उवाच ।।
दानवर्षभ धन्यस्त्वं मद्भक्तो निर्विकारवान् ।।
प्रदत्तास्ते वरास्सर्वेऽभीप्सिता ये तवाधुना ।। १७ ।।
गच्छ त्वं वितलं लोकं रमणीयं दिवोऽपि हि ।।
समेतः परिवारेण निजेन मम शासनात् ।। १८ ।।
निर्भयस्तत्र संतिष्ठ संहृष्टो भक्तिमान्सदा ।।
कदापि नासुरो भावो भविष्यति मदाज्ञया ।। १९ ।।
सनत्कुमार उवाच ।।
इत्याज्ञां शिरसाधाय शंकरस्य महात्मनः ।।
तं प्रणम्य सुरांश्चापि वितलं प्रजगाम सः ।।2.5.12.२० ।।
एतस्मिन्नंतरे ते वै मुण्डिनश्च समागताः ।।
प्रणम्योचुश्च तान्सर्वान्विष्णुब्रह्मादिकान् सुरान् ।। २१ ।।
कुत्र याम वयं देवाः कर्म किं करवामहे ।।
आज्ञापयत नश्शीघ्रं भव दादेशकारकान् ।। २२ ।।
कृतं दुष्कर्म चास्माभिर्हे हरे हे विधे सुराः ।।
दैत्यानां शिवभक्तानां शिवभक्तिर्विनाशिता ।।२३।।
कोटिकल्पानि नरके नो वासस्तु भविष्यति ।।
नोद्धारो भविता नूनं शिवभक्तविरोधिनाम् ।। २४ ।।
परन्तु भवदिच्छात इदं दुष्कर्म नः कृतम् ।।
तच्छांतिं कृपया ब्रूत वयं वश्शरणागताः ।।२५।।
सनत्कुमार उवाच ।।
तेषां तद्वचनं श्रुत्वा विष्णुब्रह्मादयस्सुराः।।
अब्रु। वन्मुंडिनस्तांस्ते स्थितानग्रे कृतांजलीन् ।। २६ ।।
विष्ण्वादय ऊचुः ।।
न भेतव्यं भवद्भिस्तु मुंडिनो वै कदाचन ।।
शिवाज्ञयेदं सकलं जातं चरितमुत्तमम् ।।२७।।
युष्माकं भविता नैव कुगतिर्दुःखदायिनी ।।
शिववासा यतो यूयं देवर्षिहितकारकाः ।। २८ ।।

सुरर्षिहितकृच्छंभुस्सुरर्षिहितकृत्प्रियः ।।
सुरर्षिहितकृन्नृणां कदापि कुगतिर्नहि ।।२९।।
अद्यतो मतमेतं हि प्रविष्टानां नृणां कलौ।।
कुगतिर्भविता ब्रूमः सत्यं नैवात्र संशयः ।। 2.5.12.३० ।।
भवद्भिर्मुंडिनो धीरा गुप्तभावान्ममाज्ञया।।
तावन्मरुस्थली सेव्या कलिर्यावात्समाव्रजेत् ।।३१।।
आगते च कलौ यूयं स्वमतं स्थापयिष्यथ ।।
कलौ तु मोहिता मूढास्संग्रहीष्यंति वो मतम्।।३२।।
इत्याज्ञप्ताः सुरेशैश्च मुंडिनस्ते मुनीश्वर ।।
नमस्कृत्य गतास्तत्र यथोद्दिष्टं स्वमाश्रमम् ।। ३३ ।।
ततस्स भगवान्रुद्रो दग्ध्वा त्रिपुरवासिनः ।।
कृतकृत्यो महायोगी ब्रह्माद्यैरभिपूजितः ।। ३४ ।।
स्वगणैर्निखिलैर्देव्या शिवया सहितः प्रभुः ।।
कृत्वामरमहत्कार्यं ससुतोंतरधादथ ।।३५।।
ततश्चांतर्हिते देवे परिवारान्विते शिवे ।।
धनुश्शरस्थाद्यश्च प्राकारोंतर्द्धिमागमत् ।।३६।।
ततो ब्रह्मा हरिर्देवा मुनिगंधर्वकिन्नराः ।।
नागास्सर्पाश्चाप्सरसस्संहृष्टाश्चाथ मानुषाः ।। ३७ ।।
स्वंस्वं स्थानं मुदा जग्मुश्शंसंतः शांकरं यशः ।।
स्वंस्वं स्थानमनुप्राप्य निवृतिं परमां ययुः ।। ३८ ।।
एतत्ते कथितं सर्वं चरितं शशिमौलिनः ।।
त्रिपुरक्षयसंसूचि परलीलान्वितं महत् ।। ३९ ।।
धन्यं यशस्यमायुष्यं धनधान्यप्रवर्द्धकम् ।।
स्वर्गदं मोक्षदं चापि किं भूयः श्रोतुमिच्छसि ।। ।। 2.5.12.४० ।।
इदं हि परमाख्यानं यः पठेच्छ्रुणुयात्सदा ।।
इह भुक्त्वाखिलान्कामानंते मुक्तिमवाप्नुयात् ।। ४१ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे सनत्कुमारपाराशर्य्यसंवादे त्रिपुरवधानंतरदेवस्तुतिमयस्तुतिमुंडिनिवेशनदेवस्वस्था -नगमनवर्णनं नाम द्वादशोऽध्यायः ।।१२।।

व्यास उवाच ।।
भो ब्रह्मन्भगवन्पूर्वं श्रुतं मे ब्रह्मपुत्रक ।।
जलंधरं महादैत्यमवधीच्छंकरः प्रभुः ।।१।।
तत्त्वं वद महाप्राज्ञ चरितं शशिमौलिनः ।।
विस्तारपूर्वकं शृण्वन्कस्तृप्येत्तद्यशोऽमलम् ।।२।।
।। सूत उवाच ।।
इत्येवं व्याससंपृष्टो ब्रह्मपुत्रो महामुनिः ।।
उवाचार्थवदव्यग्रं वाक्यं वाक्यविशारदः ।। ३ ।।
सनत्कुमार उवाच ।।
एकदा जीवशक्रौ च भक्त्या परमया मुने ।।
दर्शनं कर्तुमीशस्य कैलासं जग्मतुर्भृशम् ।। ४ ।।
अथ गुर्विन्द्रयोर्ज्ञात्वागमनं शंकरः प्रभुः ।।
परीक्षितुं तयोर्ज्ञानं स्वदर्शनरतात्मनोः ।। ५ ।।
दिगम्बरोऽथ तन्मार्गमारुद्ध्य सद्गतिस्सताम् ।।
जटाबद्धेन शिरशातिष्ठत्संशोभिताननः ।।६।।
अथ तौ गुरुशक्रौ च कुर्वंतौ गमनं मुदा ।।
आलोक्य पुरुषं भीमं मार्गमध्येऽद्भुताकृतिम् ।।७।।
महातेजस्विनं शांतं जटासंबद्धमस्तकम् ।।
महाबाहुं महोरस्कं गौरं नयनभीषणम् ।। ६ ।।
अथो पुरंदरोऽपृच्छत्स्वाधिकारेण दुर्मदः ।।
पुरुषं तं स्वमार्गांतस्थितमज्ञाय शंकरम् ।।९।।
पुरन्दर उवाच ।।
कस्त्वं भोः कुत आयातः किं नाम वद तत्त्वतः ।।
स्वस्थानेसंस्थितश्शंभु किं वान्यत्र गतः प्रभुः ।। ।। 2.5.13.१० ।।
सनत्कुमार उवाच ।।
शक्रेणेत्थं स पृष्टस्तु किंचिन्नोवाच तापसः ।।
शक्रः पुनरपृच्छद्वै नोवाच स दिगंबरः ।। ११ ।।
पुनः पुरंदरोऽपृच्छल्लोकानामधिपेश्वरः ।।
तूष्णीमास महायोगी लीलारूपधरः प्रभुः ।।१२।।
इत्थं पुनः पुनः पृष्टश्शक्रेण स दिगम्बरः ।।
नोवाच किंचिद्भगवाञ्छक्रज्ञानपरीक्षया ।।१३।।
अथ चुक्रोध देवेशस्त्रैलोक्यैश्वर्यगर्वितः ।।
उवाच वचनं चैव तं निर्भर्त्स्य जटाधरम् ।। १४ ।।

।। इन्द्र उवाच ।।
रे मया पृच्छ्यमानोऽपि नोत्तरं दत्तवानसि ।।
अतस्त्वां हन्मि वज्रेण कस्ते त्रातास्ति दुर्मते ।। १५ ।।
सनत्कुमार उवाच ।।
इत्युदीर्य ततो वज्री संनिरीक्ष्य क्रुधा हि तम् ।।
हंतुं दिगंबरं वज्रमुद्यतं स चकार ह ।।१६।।
पुरंदरं वज्रहस्तं दृष्ट्वा देवस्सदाशिवः ।।
चकार स्तंभनं तस्य वज्रपातस्य शंकरः।।१७।।
ततो रुद्रः क्रुधाविष्टः करालाक्षो भयंकरः ।।
द्रुतमेव प्रजज्वाल तेजसा प्रदहन्निव ।। १८ ।।
बाहुप्रतिष्टंभभुवामन्युनांतश्शचीपतिः ।।
समदह्यत भोगीव मंत्ररुद्धपराक्रमः ।।१९।।
दृष्ट्वा बृहस्पतिस्तूर्णं प्रज्वलंतं स्वतेजसा ।।
पुरुषं तं धिया ज्ञात्वा प्रणनाम हरं प्रभुम् ।।2.5.13.२०।।
कृतांजलिपुटो भूत्वा ततो गुरुरुदारधीः ।।
नत्वा च दंडवद्भूमौ प्रभुं स्तोतुं प्रचक्रमे ।।२१।।
गुरुरुवाच ।।
नमो देवाधिदेवाय महादेवाय चात्मने ।।
महेश्वराय प्रभवे त्र्यम्बकाय कपर्दिने ।।२२।।
दीननाथाय विभवे नमोंऽधकनिषूदिने ।।
त्रिपुरघ्नाय शर्वाय ब्रह्मणे परमेष्ठिने ।।२३।।
विरूपाक्षाय रुद्राय बहुरूपाय शंभवे ।।
विरूपायातिरूपाय रूपातीताय ते नमः ।।२४।।
यज्ञविध्वंसकर्त्रे च यज्ञानां फलदायिने।।
नमस्ते मखरूपाय परकर्मप्रवर्तिने।।२५।।
कालांतकाय कालाय कालभोगिधराय च ।।
नमस्ते परमेशाय सर्वत्र व्यापिने नमः ।।२६।।
नमो ब्रह्मशिरोहंत्रे ब्रह्मचंद्र स्तुताय च।।
ब्रह्मण्याय नमस्तेऽस्तु नमस्ते परमात्मने।।२७।।
त्वमग्निरनिलो व्योम त्वमेवापो वसुंधरा।।
त्वं सूर्यश्चन्द्रमा भानि ज्योतिश्चक्रं त्वमेव हि ।। २८ ।।
त्वमेव विष्णुस्त्वं ब्रह्मा तत्स्तुतस्त्वं परेश्वरः ।।
मुनयः सनकाद्यास्त्वं नारदस्त्वं तपोधनः ।। २९ ।।

त्वमेव सर्व लोकेशस्त्वमेव जगदात्मकः ।।
सर्वान्वयस्सर्वभिन्नस्त्वमेव प्रकृतेः परः ।। 2.5.13.३० ।।
त्वं वै सृजसि लोकांश्च रजसा विधिनामभाक् ।।
सत्त्वेन हरिरूपस्त्वं सकलं यासि वै जगत् ।।३१।।
त्वमेवासि महादेव तमसा हररूपधृक् ।।
लीलया भुवनं सर्वं निखिलं पांचभौतिकम् ।।३२।।
त्वद्ध्यानबलतस्सूर्यस्तपते विश्वभावन ।।
अमृतं च्यवते लोके शशी वाति समरिणः।।३३।।
त्वद्ध्यानबलतो मेघाश्चांबु वर्षंति शंकर ।।
त्वद्ध्यानबलतश्शक्रस्त्रिलोकीं पाति पुत्रवत् ।।३४।।
त्वद्ध्यानबलतो मेघाः सर्वे देवा मुनीश्वराः ।।
स्वाधिकारं च कुर्वंति चकिता भवतो भयात् ।। ३५ ।।
त्वत्पादकमलस्यैव सेवनाद्भुवि मानवाः ।।
नाद्रियन्ते सुरान्रुद लोकैश्वर्यं च भुंजते ।।३६।।
त्वत्पादकमलस्यैव सेवनादगमन्पराम् ।।
गतिं योगधना नामप्यगम्यां सर्वदुर्लभाम् ।।३७।।
।। सनत्कुमार उवाच ।।
बृहस्पतिरिति स्तुत्वा शंकरं लोकशंकरम् ।।
पादयो पातयामास तस्येशस्य पुरंदरम् ।। ३८ ।।
पातयित्वा च देवेशमिंद्रं नत शिरोधरम्।।
बृहस्पतिरुवाचेदं प्रश्रयावनतश्शिवम् ।। ३९ ।।
।। बृहस्पतिरुवाच ।।
दीननाथ महादेव प्रणतं तव पादयोः ।।
समुद्धर च शांतं स्वं क्रोधं नयनजं कुरु ।। 2.5.13.४० ।।
तुष्टो भव महादेव पाहीद्र शरणागतम् ।।
अग्निरेव शमं यातु भालनेत्रसमुद्भवः ।। ४१ ।।
।। सनत्कुमार उवाच ।।
इत्याकर्ण्य गुरोर्वाक्यं देवदेवो महेश्वरः ।।
उवाच करुणासिन्धुर्मेघनिर्ह्लादया गिरा।। ४२ ।।
महेश्वर उवाच ।।
क्रोधं च निस्सृते नेत्राद्धारयामि बृहस्पतेः ।।
कथं हि कञ्चुकीं सर्पस्संधत्ते नोज्झितां पुनः ।।४३।।
सनत्कुमार उवाचु ।।

इति श्रुत्वा वचस्तस्य शंकरस्य बृहस्पतिः ।।
उवाच क्लिष्टरूपश्च भयव्याकुलमानसः ।। ४४ ।।
बृहस्पतिरुवाच ।।
हे देव भगवन्भक्ता अनुकंप्याः सदैव हि ।।
भक्तवत्सलनामेति त्वं सत्यं कुरु शंकर ।।४५।।
क्षेप्तुमन्यत्र देवेश स्वतेजोऽत्युग्रमर्हसि ।।
उद्धर्तस्सर्वभक्तानां समुद्धर पुरंदरम् ।।४६।।
सनत्कुमार उवाच ।।
इत्युक्तो गुरुणा रुद्रो भक्तवत्सलनामभाक् ।।
प्रत्युवाच प्रसन्नात्मा सुरेज्यं प्रणतार्त्तिहा।।४७।।
शिव उवाच ।।
प्रीतः स्तुत्यानया तात ददामि वरमुत्तमम् ।।
इन्द्रस्य जीवदानेन जीवेति त्वं प्रथां व्रज ।।।४८।।
समुद्भूतोऽनलो योऽयं भालनेत्रात्सुरेशहा ।।
एनं त्यक्ष्याम्यहं दूरं यथेन्द्रं नैव पीडयेत् ।। ४९ ।।
।। सनत्कुमार उवाच् ।।
इत्युक्त्वा तं करे धृत्वा स्वतेजोऽनलमद्भुतम् ।।
भालनेत्रात्समुद्भूतं प्राक्षिपल्लवणांभसि ।। 2.5.13.५० ।।
ततश्चांतर्दधे रुद्रो महालीलाकरः प्रभुः ।।
गुरुशक्रौ भयान्मुक्तौ जग्मतुः सुखमुत्तमम् ।।५१।।
यदर्थं गमनोद्युक्तौ दर्शनं प्राप्य तस्य वै ।।
कृतार्थौ गुरुशक्रौ हि स्वस्थानं जग्मतुर्मुदा ।। ५२ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पंचमे युद्धखण्डे जलंधरवधोपाख्याने शक्रजीवनं नाम त्रयोदशोऽ ध्यायः ।। १३ ।।

।। व्यास उवाच ।।
सनत्कुमार सर्वज्ञ ब्रह्मपुत्र नमोस्तु ते ।।
श्रुतेयमद्भुता मेऽद्य कथा शंभोर्महात्मनः ।। १ ।।
क्षिप्ते स्वतेजसि ब्रह्मन्भालनेत्रसमुद्भवे ।।
लवणांभसि किं ताताभवत्तत्र वदाशु तत् ।। २ ।।
सनत्कुमार उवाच ।।
शृणु तात महाप्राज्ञ शिवलीलां महाद्भुताम् ।।
यच्छ्रुत्वा श्रद्धया भक्तो योगिनां गतिमाप्नुयात् ।।३।।
अथो शिवस्य तत्तेजो भालनेत्रसमुद्भवम्।।
क्षिप्तं च लवणाम्भोधौ सद्यो बालत्वमाप ह ।। ४ ।।
तत्र वै सिंधुगंगायाः सागरस्य च संगमे ।।
रुरोदोच्चैस्स वै बाल सर्वलोक भयंकरः ।। ५ ।।
रुदतस्तस्य शब्देन प्राकंपद्धरणी मुहुः ।।
स्वर्गश्च सत्यलोकश्च तत्स्वनाद्बधिरीकृतः ।। ६ ।।
बालस्य रोदनेनैव सर्वे लोकाश्च तत्रसुः ।।
सर्वतो लोकपालाश्च विह्वलीकृतमानसाः ।। ७ ।।
किं बहूक्तेन विप्रेन्द्र चचाल सचराचरम् ।।
भुवनं निखिलं तात रोदनात्तच्छिशोर्विभो ।। ८ ।।
अथ ते व्याकुलास्सर्वे देवास्समुनयो द्रुतम् ।।
पितामहं लोकगुरुं ब्रह्माणं शरणं ययुः ।। ९ ।।
तत्र गत्वा च ते देवा सुनयश्च सवासवाः ।।
प्रणम्य च सुसंस्तुत्य प्रोचुस्तं परमेष्ठिनम् ।। 2.5.14.१० ।।
देवा ऊचुः ।।
लोकाधीश सुराधीश भयन्नस्समुपस्थितम् ।।
तन्नाशय महायोगिञ्जातोयं ह्यद्भुतो रवः ।।११।।
।। सनत्कुमार उवाच।। ।।
इत्याकर्ण्य वचस्तेषां ब्रह्मा लोकपितामहः ।।
गंतुमैच्छत्ततस्तत्र किमेतदिति विस्मितः ।। १२ ।।
ततो ब्रह्मा सुरैस्तातावतरत्सत्यलोकतः ।।
रसां तज्ज्ञातुमिच्छन्स समुद्रमगमत्तदा ।।१३।।
यावत्तत्रागतो ब्रह्मा सर्वलोकपितामहः ।।
तावत्समुद्रस्योत्संगे तं बालं स ददर्श ह।।१४।।
आगतं विधिमालोक्य देवरूप्यथ सागरः।।

प्रणम्य शिरसा बालं तस्योत्संगे न्यवेशयत्।।१५।।
ततो ब्रह्माब्रवीद्वाक्यं सागरं विस्मयान्वितः ।।
जलराशे द्रुतं ब्रूहि कस्यायं शिशुरद्भुतः ।।१६।।
।। सनत्कुमार उवाच ।।
ब्रह्मणो वाक्यमाकर्ण्य मुदितस्सागरस्तदा ।।
प्रत्युवाच प्रजेशं स नत्वा स्तुत्वा कृतांजलिः ।। १७ ।।
समुद्र उवाच ।।
भो भो ब्रह्मन्मया प्राप्तो बालकोऽयमजानता ।।
प्रभवं सिंधुगंगायामकस्मात्सर्वलोकप ।। १८ ।।
जातकर्मादिसंस्कारान्कुरुष्वास्य जगद्गुरो ।।
जातकोक्तफलं सर्वं विधातर्वक्तुमर्हसि ।। १९ ।।
सनत्कुमार उवाच ।।
एवं वदति पाथोधौ स बालस्सागरात्मजः ।।
ब्रह्माणमग्रहीत्कण्ठे विधुन्वंतं मुहुर्मुहुः ।। 2.5.14.२० ।।
विधूननं च तस्यैवं सर्वलोककृतो विधेः ।।
पीडितस्य च कालेय नेत्राभ्यामगमज्जलम् ।। २१ ।।
कराभ्यामब्धिजातस्य तत्सुतस्य महौजसः ।।
कथंचिन्मुक्तकण्ठस्तु ब्रह्मा प्रोवाच सादरम् ।। २२ ।।
।। ब्रह्मोवाच ।।
शृणु सागर वक्ष्यामि तवास्य तनयस्य हि ।।
जातकोक्तफलं सर्वं समाधानरतः खलु।।२३।।
नेत्राभ्यां विधृतं यस्मादनेनैव जलं मम।।
तस्माज्जलंधरेतीह ख्यातो नाम्ना भवत्वसौ ।। ।।२४।।
अधुनैवैष तरुणस्सर्वशास्त्रार्थपारगः ।।
महापराक्रमो धीरो योद्धा च रणदुर्मदः ।।२५।।
भविष्यति च गंभीरस्त्वं यथा समरे गुहः ।।
सर्वजेता च संग्रामे सर्वसंपद्विराजितः ।। २६ ।।
दैत्यानामधिपो बालः सर्वेषां च भविष्यति ।।
विष्णोरपि भवेज्जेता न कुत श्चित्पराभवः ।। २७ ।।
अवध्यस्सर्वभूतानां विना रुद्रं भविष्यति ।।
यत एष समुद्भूतस्तत्रेदानीं गमिष्यति ।।२८।।
पतिव्रतास्य भविता पत्नी सौभाग्यवर्द्धिनी ।।
सर्वाङ्गसुन्दरी रम्या प्रियवाक्छीलसागरा ।।२९।।

सनत्कुमार उवाच ।।
इत्युक्त्वा शुक्रमाहूय राज्ये तं चाभ्यषेचयत् ।।
आमंत्र्य सरितान्नाथं ब्रह्मांतर्द्धानमन्वगात् ।।2.5.14.३०।।
अथ तद्दर्शनोत्फुल्लनयनस्सागरस्तदा ।।
तमात्मजं समादाय स्वगेहमगमन्मुदा ।। ३१ ।।
अपोषयन्महोपायैस्स्वबालं मुदितात्मकः ।।
सर्वांगसुन्दरं रम्यं महाद्भुतसुतेजसम् ।।३२।।
अथाम्बुधिस्समाहूय कालनेमिं महासुरम् ।।
वृन्दाभिधां सुतां तस्य तद्भार्यार्थमयाचत ।।३३।।
कालनेम्यसुरो वीरोऽसुराणां प्रवरस्सुधीः ।।
साधु येनेम्बुधेर्याञ्चां स्वकर्मनिपुणो मुने ।।३४।।
जलंधराय वीराय सागरप्रभवाय च ।।
ददौ ब्रह्मविधानेन स्वसुतां प्राणवल्लभाम् ।।३५।।
तदोत्सवो महानासीद्विवाहे च तयोस्तदा ।।
सुखं प्रापुर्नदा नद्योऽसुराश्चैवाखिला मुने ।।३६ ।।
समुद्रोऽति सुखं प्राप सुतं दृष्ट्वा हि सस्त्रियम् ।।
दानं ददौ द्विजातिभ्योऽप्यन्येभ्यश्च यथाविधि ।। ३७ ।।
ये देवैर्निर्जिताः पूर्वं दैत्याः पाताल संस्थिताः ।।
ते हि भूमंडलं याता निर्भयास्तमुपाश्रिताः ।। ३८ ।।
ते कालनेमिप्रमुखास्ततोऽसुरास्तस्मै सुतां सिंधुसुताय दत्त्वा ।।
बभूवुरत्यन्तमुदान्विता हि तमाश्रिता देव विनिर्जयाय।।३९।।
स चापि वीरोम्बुधिबालकोऽसौ जलंधराख्योऽसुरवीरवीरः ।।
संप्राप्य भार्यामतिसुन्दरी वशी चकार राज्यं हि कविप्रभावात्।।2.5.14.४०।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे जलं धरवधोपाख्याने जलंधरोत्पत्तिविवाहवर्णनं नाम चतुर्दशोऽध्यायः ।। १४।।

।। सनत्कुमार उवाच ।।
एकदा वारिधिसुतो वृन्दापति रुदारधीः।।
सभार्य्यस्संस्थितो वीरोऽसुरैस्सर्वैः समन्वितः ।।१।।
तत्राजगाम सुप्रीतस्सुवर्चास्त्वथ भार्गवः।।
तेजः पुंजो मूर्त इव भासयन्सकला दिशः ।।२।।
तं दृष्ट्वा गुरुमायान्तमसुरास्तेऽखिला द्रुतम् ।।
प्रणेमुः प्रीतमनसस्सिंधुपुत्रोऽपि सादरम्।।३।।
दत्त्वाशीर्वचनं तेभ्यो भार्गवस्तेजसां निधिः ।।
निषसादासने रम्ये संतस्थुस्तेऽपि पूर्ववत् ।। ४ ।।
अथ सिंध्वात्मजो वीरो दृष्ट्वा प्रीत्या निजां सभाम् ।।
जलंधरः प्रसन्नोऽभूदनष्टवरशासनः ।। ५ ।।
तत्स्थितं छिन्नशिरसं दृष्ट्वा राहुं स दैत्यराट् ।।
पप्रच्छ भार्गवं शीघ्रमिदं सागरनन्दनः ।।६।।
जलंधर उवाच ।।
केनेदं विहितं राहोश्शिरच्छेदनकं प्रभो ।।
तद्ब्रूहि निखिलं वृत्तं यथावत्ततत्त्वतो गुरो ।।७।।
सनत्कुमार उवाच ।।
इत्याकर्ण्य वचस्तस्य सिन्धुपुत्रस्य भार्गवः ।।
स्मृत्वा शिवपदांभोजं प्रत्युवाच यथार्थवत् ।।८।।
शुक्र उवाच।।
जलंधर महावीर सर्वासुरसहायक ।।
शृणु वृत्तांतमखिलं यथावत्कथयामि ते ।।९ ।।
पुराभवद्बलिर्वीरो विरोचनसुतो बली ।।
हिरण्यकशिपोश्चैव प्रपौत्रो धर्मवित्तमः ।।2.5.15.१०।।
पराजितास्सुरास्तेन रमेशं शरणं ययुः ।।
सवासवास्स्ववृत्तांतमाचख्युः स्वार्थसाधकाः।।११।।
तदाज्ञया सुरैः सार्द्धं चक्रुस्संधिमथो सुराः ।।
स्वकार्यसिद्धये तातच्छलकर्मविचक्षणाः ।। १२ ।।
अथामृतार्थे सिंधोश्च मंथनं चक्रुरादरात् ।।
विष्णोस्सहायिनस्ते हि सुरास्सर्वेऽसुरैस्सह।।१३।।
ततो रत्नोपहरणमकार्षुर्दैत्यशत्रवः ।।
जगृहुर्यत्नतो देवाः पपुरप्यमृतं छलात् ।।१४।।
ततः पराभवं चक्रुरसुराणां सहायतः ।।

विष्णोस्सुरास्सचक्रास्तेऽमृतापानाद्बलान्विताः ।।१५।।
शिरश्छेदं चकारासौ पिबतश्चामृतं हरिः ।।
राहोर्देवसभां हि पक्षपाती हरेस्सदा ।। १६ ।।
सनत्कुम्रार उवाच ।।
एवं कविस्तस्य शिरश्छेदं राहोश्शशंस च ।।
अमृतार्थे समुद्रस्य मंथनं देवकारितम् ।। १७ ।।
रत्नोपहरणं चैव दैत्यानां च पराभवम् ।।
देवैरमृतपानं च कृतं सर्वं च विस्तरात् ।।१८।।
तदाकर्ण्य महावीरोम्बुधिबालः प्रतापवान् ।।
चुक्रोध क्रोधरक्ताक्षस्स्वपितुर्मंथनं तदा ।।१९।।
अथ दूतं समाहूय घस्मराभिधमुत्तमम् ।।
सर्वं शशंस चरितं यदाह गुरुरात्मवान् ।। 2.5.15.२० ।।
अथ तं प्रेषयामास स्वदूतं शक्रसन्निधौ।।
संमान्य बहुशः प्रीत्याऽभयं दत्त्वा विशारदम् ।।२१।।
दूतस्त्रिविष्टपं तस्य जगामारमलं सुधीः ।।
घस्मरोंऽबुधिबालस्य सर्वदेवसमन्वितम् ।।२२।।
तत्र गत्वा स दूतस्तु सुधर्मां प्राप्य सत्वरम् ।।
गर्वादखर्वमौलिर्हि देवेन्द्रं वाक्यमब्रवीत् ।। २३ ।।
घस्मर उवाच ।।
जलंधरोऽब्धि तनयस्सर्वदैत्यजनेश्वरः ।।
सुप्रतापी महावीरस्स्वयं कविसहायवान् ।। २४ ।।
दूतोऽहं तस्य वीरस्य घस्मराख्यो न घस्मरः ।।
प्रेषितस्तेन वीरेण त्वत्सकाशमिहागतः ।।२५।।
अव्याहताज्ञस्वर्वत्र जलंधर उदग्रधीः ।।
निर्जिताखिलदैत्यारिस्स यदाह शृणुष्व तत् ।। २६ ।।
जलंधर उवाच ।।
कस्मात्त्वया मम पिता मथितस्सागरोऽद्रिणा ।।
नीतानि सर्वरत्नानि पितुर्मे देवताधम ।। २७ ।।
उचितं न कृतं तेऽद्य तानि शीघ्रं प्रयच्छ मे ।।
ममायाहि विचार्येत्थं शरणं दैवतैस्सह ।। २८ ।।
अन्यथा ते भयं भूरि भविष्यति सुराधम ।।
राज्यविध्वंसनं चैव सत्यमेतद्ब्रवीम्यहम् ।।२९।।
सनत्कुमार उवाच ।।

इति दूतवचः श्रुत्वा विस्मितस्त्रिदशाधिपः ।।
उवाच तं स्मरन्निन्द्रो भयरोषसमन्वितः ।। 2.5.15.३० ।।
अद्रयो मद्भयात्त्रस्तास्स्वकुक्षिस्था यतः कृताः ।।
अन्येऽपि मद्द्विषस्तेन रक्षिता दितिजाः पुरा ।।३१।।
तस्मात्तद्रत्नजातं तु मया सर्वं हृतं किल ।।
न तिष्ठति मम द्रोही सुखं सत्यं ब्रवीम्यहम् ।।३२।।
शंखोप्येव पुरा दैत्यो मां द्विषन्सागरात्मजः ।।
अभवन्मूढचित्तस्तु साधुसंगात्समुज्झित।।३३।।
ममानुजेन हरिणा निहतस्य हि पापधीः ।।
हिंसकस्साधुसंधस्य पापिष्ठस्सागरोदरे ।।३४।।
तद्गच्छ दूत शीघ्रं त्वं कथयस्वास्य तत्त्वतः ।।
अब्धिपुत्रस्य सर्वं हि सिंधोर्मंथनकारणम् ।।३५।।
सनत्कुमार उवाच ।।
इत्थं विसर्जितो दूतो घस्मराख्यस्सुबुद्धिमान् ।।
तदेन्द्रेणागमत्तूर्णं यत्र वीरो जलंधरः ।।३६।।
तदिदं वचनं दैत्यराजो हि तेन धीमता ।।
कथितो निखिलं शक्रप्रोक्तं दूतेन वै तदा ।।३७।।
तन्निशम्य ततो दैत्यो रोषात्प्रस्फुरिताधरः ।।
उद्योगमकरोत्तूर्णं सर्वदेवजिगीषया ।।३८।।
तदोद्योगेऽसुरेन्द्रस्य दिग्भ्यः पातालतस्तथा ।।
दितिजाः प्रत्यपद्यंत कोटिशःकोटिशस्तथा ।।३९।।
अथ शुंभनिशुंभाद्यै बलाधिपतिकोटिभिः ।।
निर्जगाम महावीरः सिन्धुपुत्रः प्रतापवान् ।।2.5.15.४०।।
प्राप त्रिविष्टपं सद्यः सर्वसैन्यसमावृतः ।।
दध्मौ शंखं जलधिजो नेदुर्वीराश्च सर्वतः ।।४१।।
गत्वा त्रिविष्टपं दैत्यो नन्दनाधिष्ठितोऽभवत् ।।
सर्व सैन्यं समावृत्य कुर्वाणः सिंहवद्रवम् ।।४२।।
पुरमावृत्य तिष्ठत्तद्दृष्ट्वा सैन्यबलं महत्।।
निर्ययुस्त्वमरावत्या देवा युद्धाय दंशिताः ।।।।४३।।
ततस्समभवद्युद्धं देवदानवसेनयोः ।।
मुसलैः परिघैर्बाणैर्गदापरशुशक्तिभिः ।।४४।।
तेऽन्योन्यं समधावेतां जघ्नतुश्च परस्परम् ।।
क्षणेनाभवतां सेने रुधिरौघपरिप्लुते ।। ४५ ।।

पतितैः पात्यमानैश्च गजाश्वरथपत्तिभिः ।।
व्यराजत रणे भूमिस्संध्याभ्रपटलैरिव ।। ४६ ।।
तत्र युद्धे मृतान्दैत्यान्भार्गवस्तानजीवयत् ।।
विद्ययामृतजीविन्या मंत्रितैस्तोयबिन्दुभिः ।। ४७ ।।
देवानपि तथा युद्धे तत्राजीवयदंगिराः ।।
दिव्यौषधैस्समानीय द्रोणाद्रेस्स पुनःपुनः ।। ४८ ।।
दृष्टवान्स तथा युद्धे पुनरेव समुत्थितान् ।।
जलंधरः क्रोधवशो भार्गवं वाक्यमब्रवीत् ।।४९।।
जलंधर उवाच ।।
मया देवा हता युद्धे उत्तिष्ठंति कथं पुनः ।।
ततः संजीविनी विद्या नैवान्यत्रेति वै श्रुता ।। 2.5.15.५० ।।
सनत्कुमार उवाच।।
इत्याकर्ण्य वचस्तस्य सिन्धुपुत्रस्य भार्गवः ।।
प्रत्युवाच प्रसन्नात्मा गुरुश्शुक्रो जलंधरम् ।। ५१ ।।
शुक्र उवाच ।।
दिव्यौषधीस्समानीय द्रोणाद्रेरंगिरास्सुरान् ।।
जीवयत्येष वै तात सत्यं जानीहि मे वचः ।। ५२ ।।
जयमिच्छसि चेत्तात शृणु मे वचनं शुभम् ।।
ततः सोऽरं भुजाभ्यां त्वं द्रोणमब्धावुपाहर ।। ५३ ।।
।।सनत्कुमार उवाच ।।
इत्युक्तस्स तु दैत्येन्द्रो गुरुणा भार्गवेण ह ।।
द्रुतं जगाम यत्रासावास्ते चैवाद्रिराट् च सः ।।५४।।
भुजाभ्यां तरसा दैत्यो नीत्वा द्रोणं च तं तदा।।
प्राक्षिपत्सागरे तूर्णं चित्रं न हरतेजसि ।।५५।।
पुनरायान्महावीरस्सिन्धुपुत्रो महाहवम्।।
जघानास्त्रैश्च विविधैस्सुरान्कृत्वा बलं महत् ।। ५६ ।।
अथ देवान्हतान्दृष्ट्वा द्रोणाद्रिमगमद्गुरुः ।।
तावत्तत्र गिरीद्रं तं न ददर्श सुरार्चितः ।। ५७ ।।
ज्ञात्वा दैत्यहृतं द्रोणं धिषणो भयविह्वलः ।।
आगत्य देवान्प्रोवाच जीवो व्याकुलमानसः ।।५८।।
गुरुरुवाच ।।
पलायध्वं सुरास्सर्वे द्रोणो नास्ति गिरिर्महान् ।।
ध्रुवं ध्वस्तश्च दैत्येन पाथोधितनयेन हि।।५९।।

जलंधरो महादैत्यो नायं जेतुं क्षमो यतः ।।
रुद्रांशसंभवो ह्येष सर्वामरविमर्दनः ।। 2.5.15.६० ।।
मया ज्ञातः प्रभावोऽस्य यथोत्पन्नः स्वयं सुराः ।।
शिवापमानकृच्छक्रचेष्टितं स्मरताखिलम् ।।६१।।
सनत्कुमार उवाच ।।
श्रुत्वा तद्वचनं देवास्सुराचार्यप्रकीर्तितम्।।
जयाशां त्यक्तवंतस्ते भयविह्वलितास्तथा ।।६२।।
दैत्यराजेन तेनातिहन्यमानास्समंततः ।।
धैर्यं त्यक्त्वा पलायंत दिशो दश सवासवाः ।। ६३ ।।
देवान्विद्रावितान्दृष्ट्वा दैत्यस्सागरनंदनः ।।
शंखभेरी जयरवैः प्रविवेशामरावतीम्।।६४।।
प्रविष्टे नगरीं दैत्ये देवाः शक्रपुरोगमाः ।।
सुवर्णाद्रिगुहां प्राप्ता न्यवसन्दैत्यतापिताः।।६५।।
तदैव सर्वेष्वसुरोऽधिकारेष्विन्द्रादिकानां विनिवेश्य सम्यक्।।
शुंभादिकान्दैत्यवरान् पृथक्पृथक्स्वयं सुवर्णादिगुहां व्यगान्मुने।।६६।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखण्डे जलंधरवधोपाख्याने देवजलंधरयुद्धवर्णनं नाम पंचदशोऽध्यायः।।१५।।

।। सनत्कुमार उवाच ।।
पुनर्दैत्यं समायांतं दृष्ट्वा देवास्सवासवाः ।।
भयात्प्रकंपितास्सर्वे सहैवादुद्रुवुर्द्रुतम् ।।१।।
वैकुंठं प्रययुस्सर्वे पुरस्कृत्य प्रजापतिम् ।।
तुष्टुवुस्ते सुरा नत्वा सप्रजापतयोऽखिलाः ।।२।।
देवा ऊचुः ।।
हृषीकेश महाबाहो भगवन् मधुसूदन ।।
नमस्ते देवदेवेश सर्वदैत्यविनाशक।।३।।
मत्स्यरूपाय ते विष्णो वेदान्नीतवते नमः ।।
सत्यव्रतेन सद्राज्ञा प्रलयाब्धिविहारिणे।।४।।

कुर्वाणानां सुराणां च मथनायोद्यमं भृशम्।।
बिभ्रते मंदरगिरिं कूर्मरूपाय ते नमः।।५।।
नमस्ते भगवन्नाथ क्रतवे सूकरात्मने।।
वसुंधरां जनाधारां मूद्धतो बिभ्रते नमः ।।६।।
वामनाय नमस्तुभ्यमुप्रेन्द्राख्याय विष्णवे ।।
विप्ररूपेण दैत्येन्द्रं बलिं छलयते विभो ।।७।।
नमः परशुरामाय क्षत्रनिःक्षत्रकारिणे ।।
मातुर्हितकृते तुभ्यं कुपितायासतां द्रुहे।।८।।
रामाय लोकरामाय मर्यादापुरुषाय ते।।
रावणांतकरायाशु सीतायाः पतये नमः ।।९।।
नमस्ते ज्ञानगूढाय कृष्णाय परमात्मन ।।
राधाविहारशीलाय नानालीलाकराय च ।।2.5.16.१०।।
नमस्ते गूढदेहाय वेदनिंदाकराय च ।।
योगाचार्याय जैनाय वौद्धरूपाय मापते।।११।।
नमस्ते कल्किरूपाय म्लेच्छानामंतकारिणे।।
अनन्तशक्तिरूपाय सद्धर्मस्थापनाय च ।।१२
नमस्ते कपिलरूपाय देवहूत्यै महात्मने ।।
वदते सांख्ययोगं च सांख्याचार्याय वै प्रभो ।।१३।।
नमः परमहंसाय ज्ञानं संवदते परम् ।।
विधात्रे ज्ञानरूपाय येनात्मा संप्रसीदति ।। १४ ।।
वेदव्यासाय वेदानां विभागं कुर्वते नमः ।।
हिताय सर्वलोकानां पुराणरचनाय च ।। १५ ।।

एवं मत्स्यादितनुभिर्भक्तकार्योद्यताय ते ।।
सर्गस्थितिध्वंसकर्त्रे नमस्ते ब्रह्मणे प्रभो ।।१६।।
आर्तिहंत्रे स्वदासानां सुखदाय शुभाय च ।।
पीताम्बराय हरये तार्क्ष्ययानाय ते नमः।।
सर्वक्रियायैककर्त्रे शरण्याय नमोनमः ।।१७।।
दैत्यसंतापितामर्त्य दुःखादिध्वंसवज्रक ।।
शेषतल्पशयायार्कचन्द्रनेत्राय ते नमः ।।१८।।
कृपासिन्धो रमानाथ पाहि नश्शरणागतान् ।।
जलंधरेण देवाश्च स्वर्गात्सर्वे निराकृताः ।।१९।।
सूर्यो निस्सारितः स्थानाच्चन्द्रो वह्निस्तथैव च ।।
पातालान्नागराजश्च धर्मराजो निराकृतः ।। 2.5.16.२० ।।
विचरंति यथा मर्त्याश्शोभंते नैव ते सुराः ।।
शरणं ते वयं प्राप्ता वधस्तस्य विचिंत्यताम् ।।२१।।
।। सनत्कुमार उवाच ।।
इति दीनवचश्श्रुत्वा देवानां मधुसूदनः ।।
जगाद करुणासिन्धुर्मे घनिर्ह्लादया गिरा ।।२२।।
।। विष्णुरुवाच ।।
भयं त्यजत हे देवा गमिष्याम्यहमाहवम्।।
जलंधरेण दैत्येन करिष्यामि पराक्रमम् ।।२३।।
इत्युक्त्वा सहसोत्थाय दैत्यारिः खिन्नमानसः ।।
आरोहद्गरुडं वेगात्कृपया भक्तवत्सलः ।। २४ ।।
गच्छन्तं वल्लभं दृष्ट्वा देवैस्सार्द्धं समुद्रजा ।।
सांजलिर्बाष्पनयना लक्ष्मीर्वचनमब्रवीत् ।।२५।।
लक्ष्म्युवाच।।
अहं ते वल्लभा नाथ भक्ता यदि च सर्वदा।।
तत्कथं ते मम भ्राता युद्धे वध्यः कृपानिधे ।।२६।।
विष्णुरुवाच ।।
जलंधरेण दैत्येन करिष्यामि पराक्रमम्।।
तैस्संस्तुतो गमिष्यामि युद्धाय त्वरितान्वितः ।।२७।।
रुद्रांशसंभवत्वाच्च ब्रह्मणो वचनादपि ।।
प्रीत्या च तव नैवायं मम वध्यो जलंधरः।।२८।।
सनत्कुमार उवाच ।।
इत्युक्त्वा गरुडारूढश्शंखचक्रगदासिभृत्।।

विष्णुर्वेगाद्ययौ योद्धुं देवैश्शक्रादिभिस्सह।।२९।।
द्रुतं स प्राप तत्रैव यत्र दैत्यो जलंधरः।।
कुर्वन् सिंहरवं देवैर्ज्वलद्भिर्विष्णुतेजसा।।2.5.16.३०।।
अथारुणानुजजवपक्षवातप्रपीडिताः ।।
वात्याविवर्तिता दैत्या बभ्रमुः खे यथा घनाः ।।३१।।
ततो जलंधरो दृष्ट्वा दैत्यान् वात्याप्रपीडितान्।।
उद्धृत्य वचनं क्रोधादद्रुतं विष्णुं समभ्यगात्।।३२।।
एतस्मिन्नंतरे देवाश्चक्रुर्युद्धं प्रहर्षिताः ।।
तेजसा च हरेः पुष्टा महाबलसमन्विताः ।।३३।।
युद्धोद्यतं समालोक्य देवसैन्यमुपस्थितम्।।
दैत्यानाज्ञापयामास समरे चातिदुर्मदान् ।।३४।।
जलंधर उवाच ।।
भोभो दैत्यवरा यूयं युद्धं कुरुत दुस्तरम्।।
शक्राद्यैरमरैरद्य प्रबलैः कातरैस्सदा।।३५।।
मौर्यास्तु लक्षसंख्याता धौम्रा हि शतसंख्यकाः।।
असुराः कोटिसंख्याताः कालकेयास्तथैव च।।३६।।
कालकानां दौर्हृदानां कंकानां लक्षसंख्यया ।।
अन्येऽपि स्वबलैर्युक्ता विनिर्यांतु ममाज्ञया।।३७।।
सर्वे सज्जा विनिर्यात बहुसेनाभिसंयुताः ।।
नानाशस्त्रास्त्रसंयुक्ता निर्भयाः गतसंशयाः ।। ३८ ।।
भोभो शुंभनिशुंभौ च देवान्समरकातरान् ।।
क्षणेन सुमहावीर्यौ तुच्छान्नाशयतं युवाम् ।। ३९ ।।
सनत्कुमार उवाच ।।
दैत्या जलंधराज्ञप्ता इत्थं युद्धविशारदाः।।
युयुधुस्ते सुरास्सर्वे चतुरंगबलान्विताः।।2.5.16.४०।।
गदाभिस्तीक्ष्णबाणैश्च शूलपट्टिशतोमरैः ।।
केचित्परशुशूलैश्च निजघ्नुस्ते परस्परम् ।। ४१ ।।
नानायुधैश्च परैस्तत्र निजघ्नुस्ते बलान्विता ।।
देवास्तथा महावीरा हृषीकेशबलान्विताः ।।
युयुधुस्तीक्ष्णबाणाश्च क्षिपंतस्सिंहवद्रवाः ।। ४२ ।।
केचिद्बाणैस्तु तीक्ष्णैश्च केचिन्मुसलतोमरैः ।।
केचित्परशुशूलैश्च निजघ्नुस्ते परस्परम् ।।४३।।
इत्थं सुराणां दैत्यानां संग्रामस्समभून्महान्।।

अत्युल्बणो मुनीनां हि सिद्धानां भय कारकः ।। ४४ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे देवयुद्धवर्णनं नाम षोडशोऽध्यायः ।।
१६ ।।

सनत्कुमार उवाच ।।
अथ दैत्या महावीर्याश्शूलैः परशुपट्टिशैः ।।
निजघ्नुस्सर्वदेवांश्च भयव्याकुलमानसान् ।। १ ।।
दैत्यायुधैः समाविद्धदेहा देवास्सवासवाः ।।
रणाद्विदुद्रुवुस्सर्वे भयव्याकुलमानसाः ।।२ ।।
पलायनपरान्दृष्ट्वा हृषीकेशस्सुरानथ ।।
विष्णुर्वै गरुडारूढो योद्धुमभ्याययौ द्रुतम् ।। ३
सुदर्शनेन चक्रेण सर्वतः प्रस्फुरन्नुचा ।।
सुशोभितकराब्जश्च रेजे भक्ताभयंकरः ।।८।।
शंखखड्गगदाशार्ङ्गधारी क्रोधसमन्वितः ।।
कठोरास्त्रो महावीरस्सर्वयुद्धविशारदः ।।५।।
धनुषं शार्ङ्गनामानं विस्फूर्य्य विननाद ह।।
तस्य नादेन त्रैलोक्यं पूरितं महता मुने ।।६।।
शार्ङ्गनिस्सृतबाणैश्च दितिजानां शिरांसि वै।।
चकर्त्त भगवान् विष्णुः कोटिशो रुट् समाकुलः ।।७।।
अथारुणानुजजवपक्षवातप्रपीडिताः ।।
वात्याधिवर्त्तिता दैत्या बभ्रमुः खे यथा घनाः ।। ८ ।।
ततो जलंधरो दृष्ट्वा दैत्यान्वात्याप्रपीडितान् ।।
चुक्रोधाति महादैत्यो देववृन्दभयंकरः ।।९ ।।
मर्द्दयंतं च तं दृष्ट्वा दैत्यान् प्रस्फुरिताधरः ।।
योद्धुमभ्याययौ वीरो वेगेन हरिणा सह ।। 2.5.17.१० ।।
स चकार महानादं देवासुरभयंकरम् ।।
दैत्यानामधिपः कर्णा विदीर्णाः श्रवणात्ततः ।। ११ ।।
भयंङ्करेण दैत्यस्य नादेन पूरितं तदा ।।
जलंधरस्य महता चकम्पे सकलं जगत् ।। १२ ।।
ततस्समभवद्युद्धं विष्णुदैत्येन्द्रयोर्महत् ।।
आकाशं कुर्वतोर्बाणैस्तदा निरवकाशवत् ।। १३ ।।
तयोश्च तेन युद्धेन परस्परमभून्मुने ।।
देवासुरर्षिसिद्धानां भीकरेणातिविस्मयः ।। १४ ।।
विष्णुर्दैत्यस्य बाणौघैर्ध्वजं छत्रं धनुश्शरान् ।।
चिच्छेद तं च हृदये बाणेनैकेन ताडयन् ।। १५ ।।
ततो दैत्यस्समुत्पत्य गदापाणिस्त्वरान्वितः ।।
आहत्य गरुडं मूर्ध्नि पातयामास भूतले ।। १६ ।।

विष्णुं जघान शूलेन तीक्ष्णेन प्रस्फुरद्रुचा ।।
हृदये क्रोधसंयुक्तो दैत्यः प्रस्फुरिताधरः ।। १७ ।।
विष्णुर्गदां च खड्गेन चिच्छेद प्रहसन्निव ।।
तं विव्याध शरैस्तीक्ष्णैश्शार्ङ्गं विस्फूर्य दैत्यहा ।।१८।।
विष्णुर्जलंधरं दैत्यं भयदेन शरेण ह ।।
क्रोधाविष्टोऽतितीक्ष्णेन जघानाशु सुरारिहा ।। १९ ।।
आगतं तस्य तं बाणं दृष्ट्वा दैत्यो महाबलः ।।
छित्त्वा बाणेन विष्णुं च जघान हृदये द्रुतम् ।। 2.5.17.२० ।।
केशवोऽपि महाबाहुं विक्षिप्तमसुरेण तम्।।
शरं तिलप्रमाणेन च्छित्त्वा वीरो ननाद ह ।। २१ ।।
पुनर्बाण समाधत्त धनुषि क्रोधवेपितः ।।
महाबलोऽथ बाणेन चिच्छेद स शिलीमुखम् ।। २२ ।।
वासुदेवः पुनर्बाणं नाशाय विबुधद्विषः।।
क्रोधेनाधत्त धनुषि सिंहवद्विननाद ह ।।२३।।
जलंधरोऽथ दैत्येन्द्रः कोपच्छिन्नाधरो बली ।।
शरेण श्वेन शार्ङ्गाख्यं धनुश्चिच्छेद वैष्णवम् ।।२४।।
पुनर्बाणैस्सुतीक्ष्णैश्च जघान मधुसूदनम् ।।
उग्रवीर्यो महावीरो देवानां भयकारकः ।।२५।।
स च्छिन्नधन्वा भगवान्केशवो लोकरक्ष कः ।।
जलंधरस्य नाशाय चिक्षेप स्वगदां पराम्।।२६।।
सा गदा हरिणा क्षिप्ता ज्वलज्ज्वलनसन्निभा।।
अमोघगतिका शीघ्रं तस्य देहे ललाग ह।।२७।।
तया हतो महादैत्यो न चचालापि किंचन।।
जलंधरो मदोन्मत्तः पुष्पमालाहतो यथा।।२८।।
ततो जलंधरः क्रोधी देवत्रासकरोऽक्षिपत् ।।
त्रिशूलमनलाकारं हरये रणदुर्म्मदः।।२९।।
अथ विष्णुस्तत्त्रिशूलं चिच्छेद तरसा द्रुतम्।।
नंदकाख्येन खड्गेन स्मृत्वा शिवपदाम्बुजम् ।।2.5.17.३०।।
छिन्ने त्रिशूले दैत्येन्द्र उत्प्लुत्य सहसा द्रुतम् ।।
आगत्य हृदये विष्णुं जघान दृढमुष्टिना।।३१।।
सोपि विष्णुर्महावीरोऽविगणय्य च तद्व्यथाम।।
जलंधरं च हृदये जघान दृढमुष्टिना।।३२।।
ततस्तौ बाहुयुद्धेन युयुधाते महाबलौ।।

बाहुभिर्मुष्टिभिश्चैव जानुभिर्नादयन्महीम्।।३३।।
एवं हि सुचिरं युद्धं कृत्वा तेनासुरेण वै।।
विस्मितोऽभून्मुनिश्रेष्ठ हृदि ग्लानिमवाप ह ।।३४।।
अथ प्रसन्नो भगवान्मायी मायाविदां वरः ।।
उवाच दैत्यराजानं मेघगंभीरया गिरा ।।३५।।
विष्णुरुवाच ।।
भोभो दैत्यवरश्रेष्ठ धन्यस्त्वं रणदुर्मदः ।।
महायुधवरैर्यत्त्वं न भीतो हि महाप्रभुः ।।३६।।
एभिरेवायुधैरुग्रैर्दैत्या हि बहवो हताः ।।
महाजौ दुर्मदा वीराश्छिन्नदेहा मृतिं गताः ।। ३७ ।।
युद्धेन ते महादैत्य प्रसन्नोऽस्मि महान्भवान् ।।
न दृष्टस्त्वत्समो वीरस्त्रैलोक्ये सचराचरे ।। ३८ ।।
वरं वरय दैत्येन्द्र प्रीतोऽस्मि तव विक्रमात् ।।
अदेयमपि ते दद्मि यत्ते मनसि वर्तते ।। ३९ ।।
।। सनत्कुमार उवाच ।।
इत्याकर्ण्य वचस्तस्य विष्णोर्मायाविनो हरेः ।।
प्रत्युवाच महाबुद्धिर्दैत्यराजो जलंधरः ।।2.5.17.४०।।
जलंधर उवाच ।।
यदि भावुक तुष्टोऽसि वरमे तन्ददस्व मे ।।
मद्भगिन्या मया सार्धं मद्गेहे सगणो वस ।। ४१ ।।
सनत्कुमार उवाच ।। ।।
तदाकर्ण्य वचस्तस्य महादैत्यस्य खिन्नधीः।।
तथास्त्विति च देवेशो जगाद भगवान् हरिः ।।४२।।
उवास स ततो विष्णुस्सर्वदेवगणैस्सह।।
जलंधरं नाम पुरमागत्य रमया सह ।। ४३ ।।
अथो जलंधरो दैत्यस्स्वभगिन्या च विष्णुना ।।
उवास स्वालयं प्राप्तो हर्षाकुलितमानसः ।। ४४ ।।
जलंधरोऽथ देवानामधिकारेषु दानवान् ।।
स्थापयित्वा सहर्षस्सन्पुनरागान्महीतलम् ।।४५।।
देवगंधर्वसिद्धेषु यत्किंचिद्रत्नसंचि तम् ।।
तदात्मवशगं कृत्वाऽतिष्ठत्सागरनंदनः ।। ४६ ।।
पातालभवने दैत्यं निशुंभं सुमहाबलम् ।।
स्थापयित्वा स शेषादीनानय द्भूतलं बली ।। ४७ ।।

देवगंधर्वसिद्धौघान् सर्पराक्षसमानुषान् ।।
स्वपुरे नागरान्कृत्वा शशास भुवनत्रयम्।। ४८ ।।
एवं जलंधरः कृत्वा देवान्स्ववशवर्तिनः ।।
धर्मेण पालयामास प्रजाः पुत्रानिवौरसान् ।। ४९ ।।
न कश्चिद्व्याधितो नैव दुःखितो न कृशस्तथा।।
न दीनो दृश्यते तस्मिन्धर्माद्राज्यं प्रशासति ।। 2.5.17.५० ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखण्डे जलंधरोपाख्याने विष्णुजलंधरयुद्धवर्णनं नाम सप्तदशोऽध्यायः।।१७।।

सनत्कुमार उवाच।।
एवं शासति धर्मेण महीं तस्मिन्महासुरे।।
बभूवुर्दुःखिनो देवा भ्रातृभावान्मुनीश्वर ।।१।।
दुःखितास्ते सुरास्सर्वे शिवं शरणमाययुः ।।
मनसा शंकरं देवदेवं सर्वप्रभुंप्रभुम्।।२।।
तुष्टुवुर्वाग्भिरिष्टाभिर्भगवंतं महेश्वरम् ।।
निवृत्तये स्वदुःखस्य सर्वदं भक्तवत्सलम् ।। ३ ।।
आहूय स महादेवो भक्तानां सर्वकामदः।।।।
नारदं प्रेरयामास देवकार्यचिकीर्षया ।। ४ ।।
अथ देवमुनिर्ज्ञानी शंभुभक्तस्सतां गतिः ।।
शिवाज्ञया ययौ दैत्यपुरे देवान्स नारदः ।। ५ ।।
व्याकुलास्ते सुरास्सर्वे वासवाद्या द्रुतं मुनिम् ।।
आगच्छंतं समालोक्य समुत्तस्थुर्हि नारदम् ।। ६ ।।
ददुस्त आसनं नत्त्वा मुनये प्रीतिपूर्वकम् ।।
नारदाय सुराश्शक्रमुखा उत्कंठितानना: ।।७।।
सुखासीनं मुनिवरमासने सुप्रणम्य तम् ।।
पुनः प्रोचुस्सुरा दीना वासवाद्या मुनीश्वरम् ।।८।।
देवा ऊचुः ।।
भोभो मुनिवरश्रेष्ठ दुःखं शृणु कृपाकर ।।
श्रुत्वा तन्नाशय क्षिप्रं प्रभुस्त्वं शंकरप्रियः ।।९।।
जलंधरेण दैत्येन सुरा विद्राविता भृशम्।।
स्वस्थानाद्भर्तृभावाच्च दुःखिता वयमाकुलाः ।।2.5.18.१०।।
स्वस्थानादुष्णरश्मिश्च चन्द्रो निस्सारितस्तथा ।।
वह्निश्च धर्मराजश्च लोकपालास्तथेतरे ।। ११ ।।
सुबलिष्ठेन वै तेन सर्वे देवाः प्रपीडिताः ।।
दुःखं प्राप्ता वयं चातिशरणं त्वां समागताः ।।१२।।
संग्रामे स हृषीकेशं स्ववशं कृतवान् बली ।।
जलंधरो महादैत्यः सर्वामरविमर्दकः ।। १३ ।।
तस्य वश्यो वराधीनोऽवात्सीत्तत्सदने हरिः ।।
सलक्ष्म्या सहितो विष्णुर्यो नस्सर्वार्थसाधकः ।। १४ ।।
जलंधरविनाशाय यत्नं कुरु महामते ।।
त्वं नो दैववशात्प्राप्तस्सदा सर्वार्थसाधकः ।। १५ ।।
सनत्कुमार उवाच ।।

इत्याकर्ण्य वचस्तेषाममराणां स नारदः ।।
आश्वास्य मुनिशार्दूलस्तानुवाच कृपाकरः ।। १६ ।।
नारद उवाच ।।
जानेऽहं वै सुरा यूयं दैत्यराजपराजिताः।।
दुःख प्राप्ताः पीडिताश्च स्थानान्निस्सारिताः खलुः ।। १७ ।।
स्वशक्त्या भवतां स्वार्थं करिष्ये नात्र संशयः।।
अनुकूलोऽहमिव वो दुःखं प्राप्ता यतो ऽमराः ।।१८।।
सनत्कुमार उवाच ।।
एवमुक्त्वा मुनिश्रेष्ठ द्रष्टुं दानववल्लभम् ।।
आश्वास्य सकलान्देवाञ्जलंधरसभां ययौ ।।१९।।
अथागतं मुनिश्रेष्ठं दृष्ट्वा देवो जलंधरः ।।
उत्थाय परया भक्त्या ददौ श्रेष्ठासनं वरम् ।। 2.5.18.२० ।।
स तं संपूज्य विधिवद्दानवेन्द्रोऽति विस्मितः ।।
सुप्रहस्य तदा वाक्यं जगाद मुनिसत्तमम् ।।२१।।
जलंधर उवाच ।।
कुत आगम्यते ब्रह्मन्किं च दृष्टं त्वया क्वचित्।।
यदर्थमिह आयातस्तदाज्ञापय मां मुने ।। २२ ।।
सनत्कुमार उवाच ।।
इत्याकर्ण्य वचस्तस्य दैत्येन्द्रस्य महामुनिः ।।
प्रत्युवाच प्रसन्नात्मा नारदो हि जलंधरम् ।। २३ ।।
नारद उवाच ।।
सर्वदानवदैत्येन्द्र जलंधर महामते ।।
धन्यस्त्वं सर्वलोकेश रत्नभोक्ता त्वमेव हि ।।२४।।
मदागमनहेतुं वै शृणु दैत्येन्द्रसत्तम ।।
यदर्थमिह चायातस्त्वहं वक्ष्येखिलं हि तत् ।।२५।।
गतः कैलासशिखरं दैत्येन्द्राहं यदृच्छया ।।
योजनायुतविस्तीर्णं कल्पद्रुममहावनम् ।। २६ ।।
कामधेनुशताकीर्णं चिंतामणिसुदीपितम् ।।
सर्वरुक्ममयं दिव्यं सर्वत्राद्भुतशोभितम् ।। २७ ।।
तत्रोमया सहासीनं दृष्टवानस्मि शंकरम् ।।
सर्वाङ्गसुन्दरं गौरं त्रिनेत्रं चन्द्रशेखरम् ।।२८।।
तं दृष्ट्वा महदाश्चर्यं वितर्को मेऽभवत्तदा।।
क्वापीदृशी भवेद्वृद्धिस्त्रैलोक्ये वा न वेति च।।२९।।

तावत्तवापि दैत्येन्द्र समृद्धिस्संस्मृता मया।।
तद्विलोकनकामोऽहं त्वत्सांनिध्यमिहा गतः ।।2.5.18.३०।।
सनत्कुमार उवाच ।।
इति नारदतः श्रुत्वा स दैत्येन्द्रो जलंधरः ।।
स्वसमृद्धिं समग्रां वै दर्शयामास सादरम् ।।३१।।
दृष्ट्वा स नारदो ज्ञानी देवकार्यसुसाधकः ।।
प्रभुप्रेरणया प्राह दैत्येन्द्रं तं जलंधरम् ।।३२।।
नारद् उवाच ।।
तवास्ति सुसमृद्धिर्हि वरवीर खिलाधुना ।।
त्रैलोक्यस्य पतिस्त्वं हि चित्रं किं चात्र संभवम् ।। ३३ ।।
मणयो रत्नपुंजाश्च गजाद्याश्च समृद्धयः ।।
ते गृहेऽद्य विभांतीह यानि रत्नानि तान्यपि ।।३४।।
गजरत्नं त्वयानीतं शक्रस्यैरावतस्तथा ।।
अश्वरत्नं महावीर सूर्यस्योच्चैःश्रवा हयः ।। ३५।।
कल्पवृक्षस्त्वयानीतो निधयो धनदस्य च ।।
हंसयुक्तविमानं च त्वयानीतं हि वेधसः ।। ३६ ।।
इत्येवं वररत्नानि दिवि पृथ्व्यां रसातले ।।
यानि दैत्येन्द्र ते भांति गृहे तानि समस्ततः ।। ३७ ।।
त्वत्समृद्धिमिमां पश्यन्सम्पूर्णां विविधामहम् ।।
प्रसन्नोऽस्मि महावीर गजाश्वादिसुशोभिताम् ।। ३८ ।।
जायारत्नं महाश्रेष्ठं जलंधर न ते गृहे ।।
तदानेतुं विशेषेण स्त्रीरत्नं वै त्वमर्हसि ।।३९।।
यस्य गेहे सुरत्नानि सर्वाणि हि जलंधर ।।
जायारत्नं न चेत्तानि न शोभंते वृथा ध्रुवम् ।। 2.5.18.४० ।।
सनत्कुमार उवाच ।।
इत्येवं वचनं श्रुत्वा नारदस्य महात्मनः ।।
उवाच दैत्यराजो हि मदनाकुलमानसः ।।४१।।
जलंधर उवाच ।।
भो भो नारद देवर्षे नमस्तेस्तु महाप्रभो ।।
जायारत्नवरं कुत्र वर्तते तद्वदाधुना ।।४२।।
ब्रह्मांडे यत्र कुत्रापि तद्रत्नं यदि वर्त्तते ।।
तदानेष्ये ततो ब्रह्मन्सत्यं सत्यं न संशयः ।।४३।।
नारद उवाच।।

कैलासे ह्यतिरम्ये च वर्वद्धिं सुसमाकुले ।।
योगिरूपधरश्शंभुरस्ति तत्र दिगम्बरः।।४४।।
तस्य भार्या सुरम्या हि सर्वलक्षणलक्षिता।।
सर्वांगसुन्दरी नाम्ना पार्वतीति मनोहरा।।४५।।
तदीदृशं रूपमनन्यसंगतं दृष्टं न कुत्रापि कुतूहलाढ्यम् ।।
अत्यद्भुतं मोहनकृत्सुयोगिनां सुदर्शनीयं परमर्द्धिकारि ।।४६।।
स्वचित्ते कल्पयाम्यद्य शिवादन्यस्समृद्धिवान् ।।
जायारत्नान्विताद्वीर त्रिलोक्या न जलंधर ।।४७।।
यस्या लावण्यजलधौ निमग्नश्चतुराननः ।।
स्वधैर्य्यं मुमुचे पूर्वं तया कान्योपमीयते ।। ४८ ।।
गतरागोऽपि हि यया मदनारिस्स्वलीलया ।।
निजतंत्रोऽपि यतस्स स्वात्म वशगः कृतः ।। ४९ ।।
यथा स्त्रीरत्नसंभोक्तुस्समृद्धिस्तस्य साभवत् ।।
तथा न तव दैत्येन्द्र सर्वरत्नाधिपस्य च ।। 2.5.18.५० ।।
सनत्कुमार उवाच ।।
इत्युक्त्वा स तु देवर्षिर्नारदो लोकविश्रुतः।।
ययौ विहायसा देवोपकारकरणोद्यतः ।।५१।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखण्डे जलंधरवधोपाख्याने देवर्षिजलंधरसंवादो नामाष्टदशोऽध्यायः ।।१८।।

व्यास उवाच ।।
सनत्कुमार सर्वज्ञ नारदे हि गते दिवि ।।
दैत्यराट् किमकार्षीत्स तन्मे वद सुविस्तरात् ।। १ ।।
सनत्कुमार उवाच ।।
तमामंत्र्य गते दैत्यं नारदे दिवि दैत्यराट् ।।
तद्रूपश्रवणादासीदनंगज्वरपीडितः ।।२।।
अथो जलंधरो दैत्यः कालाधीनः प्रनष्टधीः।।
दूतमाह्वाय यामास सैंहिकेयं विमोहितः ।। ३ ।।
आगतं तं समालोक्य कामाक्रांतमनास्स हि ।।
सुसंबोध्य समाचष्ट सिंधुपुत्रो जलंधरः ।।४।।
जलंधर उवाच ।।
भोभो दूतवरश्रेष्ठ सर्वकार्यप्रसाधक ।।
सैंहिकेय महाप्राज्ञ कैलासं गच्छ पर्वतम् ।। ५ ।।
तत्रास्ति योगी शंभ्वाख्य स्तपस्वी च जटाधरः ।।
भस्मभूषितसर्वाङ्गो विरक्तो विजितेन्द्रियः।।५।
तत्र गत्वेति वक्तव्यं योगिनं दूत शंकरम् ।।
जटाधरं विरक्तं तं निर्भयेन हृदा त्वया ।। ७ ।।
हे योगिंस्ते दयासिन्धो जायारत्नेन किं भवेत् ।।
भूतप्रेतपिशाचादिसेवितेन वनौकसा ।। ८ ।।
मन्नाथे भुवने योगिन्नोचिता गतिरीदृशी ।।
जायारत्नमतस्त्वं मे देहि रत्नभुजे निजम् ।।९।।
यानियानि सुरत्नानि त्रैलोक्ये तानि संति मे ।।
मदधीनं जगत्सर्वं विद्धि त्वं सचराचरम् ।।2.5.19.१०।।
इन्द्रस्य गजरत्नं चोच्चैःश्रवोरत्नमुत्तमम् ।।
बलाद्गृहीतं सहसा पारिजा ततरुस्तथा।।११।।
विमानं हंससंयुक्तमंगणे मम तिष्ठति ।।
रत्नभूतं महादिव्यमुत्तमं वेधसोद्धृतम् ।। १२ ।।
महापद्मादिकं दिव्यं निधिरत्नं स्वदस्य च ।।
छत्रं मे वारुणं गेहे कांचनस्रावि तिष्ठति ।।१३।।
किञ्जल्किनी महामाला सर्वदाऽम्लानपंकजा ।।
मत्पितुस्सा ममैवास्ति पाशश्च कंपतेस्तथा ।।१४।।
मृत्योरुत्क्रांतिदा शक्तिर्मया नीता बलाद्वरा।।
ददौ मह्यं शुचिर्दिव्ये शुचिशौचे च वाससी ।।।१५।।

एवं योगीन्द्र रत्नानि सर्वाणि विलसंति मे ।।
अतस्त्वमपि मे देहि स्वस्त्रीरत्नं जटाधर ।। १६ ।। ।।
सनत्कुमार उवाच ।।
इति श्रुत्वा वचस्तस्य नन्दिना स प्रवेशितः।।
जगामोग्रसभां राहुर्विस्मयोद्भुतलोचनः।।१७।।
तत्र गत्वा शिवं साक्षाद्देवदेवं महाप्रभुम्।।
स्वतेजोध्वस्ततमसं भस्मलेपविराजितम्।।१८।।
महाराजोपचारे विलसंतं महाद्भुतम्।।
सर्वाङ्गसुन्दरं दिव्यभूषणैर्भूषितं हरम्।।१९।।
प्रणनाम च तं गर्वात्तत्तेजः क्रांतविग्रहः।।
निकटं गतवाञ्छंभोस्स दूतो राहुसंज्ञकः।।2.5.19.२०।।
अथो तदग्र आसीनो वक्तुकामो हि सैंहिकः।।
त्र्यंबकं स तदा संज्ञाप्रेरितो वाक्यमब्रवीत् ।।२१।।
दैत्यपन्नगसेव्यस्य त्रैलोक्याधिपतेस्सदा ।।
दूतोऽहं प्रेषितस्तेन त्वत्सकाशमिहागतः ।।२२।।
।। राहुरुवाच ।।
जलंधरोब्धितनयस्सर्वदैत्यजनेश्वरः ।।
त्रैलोक्यस्येश्वरस्सोथाभवत्सर्वाधिनायकः ।।२३।।
स दैत्यराजो बलवान्देवानामंतकोपमः ।।
योगिनं त्वां समुद्दिश्य स यदाह शृणुष्व तत् ।। २४ ।।
महादिव्यप्रभावस्य तस्य दैत्यपतेः प्रभोः ।।
सर्वरत्नेश्वरस्य त्वमाज्ञां शृणु वृषध्वज ।। २५ ।।
श्मशानवासिनो नित्यमस्थिमालाधरस्य च ।।
दिगंबरस्य ते भार्या कथं हैमवती शुभम् ।।२६।।
अहं रत्नाधिनाथोस्मि सा च स्त्रीरत्नसंज्ञिता ।।
तस्मान्ममैव सा योग्या नैव भिक्षाशिनस्तव ।।२७।।
मम वश्यास्त्रयो लोका भुंजेऽहं मखभागकान् ।।
यानि संति त्रिलोकेस्मिन्रत्नानि मम सद्मनि ।। २८ ।।
वयं रत्नभुजस्त्वं तु योगी खलु दिगम्बरः ।।
स्वस्त्रीरत्नं देहि मह्यं राज्ञस्सुखकराः प्रजाः ।।२९।।
सनत्कुमार उवाच ।।
वदत्येवं तथा राहौ भ्रूमध्याच्छूलपाणिनः ।।
अभवत्पुरुषो रौद्रस्तीव्राशनिसमस्वनः ।। 2.5.19.३० ।।

सिंहास्यप्रचलजिह्वस्सज्ज्वालनयनो महान् ।।
ऊर्द्ध्वकेशश्शुष्कतनुर्नृसिंह इव चापरः ।। ३१ ।।
महातनुर्महाबाहुस्तालजंघो भयंकरः ।।
अभिदुद्राव वेगेन राहुं स पुरुषो द्रुतम् ।।३२।।
स तं खादितु मायान्तं दृष्ट्वा राहुर्भयातुरः ।।
अधावदात वेगेन बहिस्तस्य च दधार तम् ।।३३।।
राहुरुवाच ।।
देवदेव महेशान पाहि मां शरणा गतम् ।।
सुराऽसुरैस्सदा वन्द्यः परमैश्वर्यवान् प्रभुः ।।३४।।
ब्राह्मणं मां महादेव खादितुं समुपागतः ।।
पुरुषोयं तवेशान सेवकोतिभयंकरः ।। ३५ ।।
एतस्माद्रक्ष देवेश शरणागतवत्सलः ।।
न खादेत यथायं मां नमस्तेऽस्तु मुहुर्मुहुः ।। ३६ ।।
सनत्कुमार उवाच ।।
महादेवो वचः श्रुत्वा ब्राह्मणस्य तदा मुने ।।
अब्रवीत्स्वगणं तं वै दीनानाथप्रियः प्रभुः ।। ३७ ।।
महादेव उवाच ।।
प्रभुं च ब्राह्मणं दूतं राह्वाख्यं शरणागतम् ।।
शरण्या रक्षणीया हि न दण्ड्या गणसत्तम ।।३८।।
सनत्कुमार उवाच ।।
इत्युक्तौ गिरिजेशेन सगणः करुणात्मना ।।
राहुं तत्याज सहसा ब्राह्मणेति श्रुताक्षरः ।। ३९ ।।
राहुं त्यक्त्वाम्बरे सोथ पुरुषो दीनया गिरा ।।
शिवोपकंठमागत्य महादेवं व्यजिज्ञपत् ।। 2.5.19.४० ।।
पुरुष उवाच ।।
देवदेव महादेव करुणाकर शंकर ।।
त्याजितं मम भक्ष्यं ते शरणागतवत्सलः ।। ४१ ।।
क्षुधा मां बाधते स्वामिन्क्षुत्क्षामश्चास्मि सर्वथा ।।
किं भक्ष्यं मम देवेश तदाज्ञापय मां प्रभो ।। ४२ ।।
सनत्कुमार उवाच ।।
इत्याकर्ण्य वचस्तस्य पुरुषस्य महाप्रभुः ।।
प्रत्युवाचाद्भुतोतिः स कौतुकी स्वहितंकरः ।। ४३ ।।
महेश्वर उवाच ।।

बुभुक्षा यदि तेऽतीव क्षुधा त्वां बाधते यदि ।।
संभक्षयात्मनश्शीघ्रं मांसं त्वं हस्तपादयोः ।। ४४ ।।
सनत्कुमार उवाच ।।
शिवेनैवमाज्ञप्तश्चखाद पुरुषस्स्वकम् ।।
हस्तपादोद्भवं मांसं शिरश्शेषोऽ भवद्यथा ।। ४५ ।।
दृष्ट्वा शिरोवशेषं तु सुप्रसन्नस्सदाशिवः ।।
पुरुषं भीमकर्माणं तमुवाच सविस्मयः ।। ४६ ।।
शिव उवाच ।।
हे महागण धन्यस्त्वं मदाज्ञाप्रतिपालकः ।।
संतुष्टश्चास्मि तेऽतीव कर्मणानेन सत्तम ।। ४७ ।।
त्वं कीर्तिमुखसंज्ञो हि भव मद्द्वारकस्सदा ।।
महागणो महावीरस्सर्वदुष्टभयंकरः ।।४८।।
मत्प्रियस्त्वं मदर्चायां सदा पूज्योऽहि मज्जनैः ।।
त्वदर्चां ये न कुर्वंति नैव ते मत्प्रियंकराः ।। ४९ ।।
सनत्कुमार उवाच ।।
इति शंभोर्वरं प्राप्य पुरुषः प्रजहर्ष सः ।।
तदाप्रभृति देवेश द्वारे कीर्तिमुखः स्थितः ।।2.5.19.५०।।
पूजनीयो विशेषेण स गणश्शिवपूजने ।।
नार्चयंतीह ये पूर्वं तेषामर्चा वृथा भवेत् ।।५१।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखण्डे जलंधरवधोपाख्याने दूतसंवादो नाम एकोनविंशोऽध्यायः।।१९।।

व्यास उवाच ।।
सनत्कुमार सर्वज्ञ कथा ते श्राविताद्भुता ।।
महाप्रभोश्शंकरस्य यत्र लीला च पावनी ।।१।।
इदानीं ब्रूहि सुप्रीत्या कृपां कृत्वा ममो परि ।।
राहुर्मुक्तः कुत्र गतः पुरुषेण महामुने ।।२।।
सूत उवाच।।
इत्याकर्ण्य वचस्तस्य व्यासस्यामितमेधसः ।।
प्रत्युवाच प्रसन्नात्मा ब्रह्मपुत्रो महामुनिः ।।३।।
सनत्कुमार उवाच ।।
राहुर्विमुक्तो यस्तेन सोपि तद्वर्वरस्थले ।।
अतस्स वर्वरो भूत इति भूमौ प्रथां गतः ।।४।।
ततः स मन्यमानस्स्वं पुनर्जनिमथानतः ।।
गतगर्वो जगामाथ जलंधरपुरं शनैः ।।५।।
जलंधराय सोऽभ्येत्य सर्वमीशविचेष्टितम् ।।
कथयामास तद्व्यासाद्व्यास दैत्येश्वराय वै ।। ६ ।।
सनत्कुमार उवाच ।।
जलंधरस्तु तच्छ्रुत्वा कोपाकुलितविग्रहः ।।
बभूव बलवान्सिन्धुपुत्रो दैत्येन्द्रसत्तमः ।। ७ ।।
ततः कोपपराधीनमानसो दैत्यसत्तमः ।।
उद्योगं सवसैन्यानां दैत्यानामादिदेश ह ।। ८ ।।
।। जलंधर उवाच ।।
निर्गच्छंत्वखिला दैत्याः कालनेमिमुखाः खलु ।।
तथा शुंभनिशुम्भाद्या वीरास्स्वबलसंयुताः ।। ९ ।।
कोटिर्वीरकुलोत्पन्नाः कंबुवंश्याश्च दौर्हृदाः ।।
कालकाः कालकेयाश्च मौर्या धौम्रास्तथैव च ।। 2.5.20.१० ।।
इत्याज्ञाप्यासुरपतिस्सिंधुपुत्रो प्रतापवान् ।।
निर्जगामाशु दैत्यानां कोटिभिः परिवारितः ।। ११ ।।
ततस्तस्याग्रतश्शुक्रो राहुश्छिन्नशिरोऽभवत् ।।
मुकुटश्चापतद्भूमौ वेगात्प्रस्खलितस्तदा ।। १२ ।।
व्यराजत नभः पूर्णं प्रावृषीव यथा घनैः ।।
जाता अशकुना भूरि महानिद्रावि सूचकाः ।। १३ ।।
तस्योद्योगं तथा दृष्ट्वा गीर्वाणास्ते सवासवाः ।।
अलक्षितास्तदा जग्मुः कैलासं शंकरालयम् ।। १४ ।।

तत्र गत्वा शिवं दृष्ट्वा सुप्रणम्य सवासवाः ।।
देवास्सर्वे नतस्कंधाः करौ बद्ध्वा च तुष्टुवुः ।।१५।।
देवा ऊचुः ।।
देवदेव महादेव करुणाकर शंकर ।।
नमस्तेस्तु महेशान पाहि नश्शरणागतान् ।।१६।।
विह्वला वयमत्युग्रं जलंधरकृतात्प्रभो ।।
उपद्रवात्सदेवेन्द्राः स्थानभ्रष्टाः क्षितिस्थिताः।।१७।।
न जानासि कथं स्वामिन्देवापत्तिमिमां प्रभो ।।
तस्मान्नो रक्षणार्थाय जहि सागरनन्दनम् ।।१८।।
अस्माकं रक्षणार्थाय यत्पूर्वं गरुडध्वजः ।।
नियोजितस्त्वया नाथ न क्षमस्सोऽद्य रक्षितुम् ।।१९।।
तदधीनो गृहे तस्य तिष्ठत्यद्य मया सह ।।
वयं च तत्र तिष्ठामस्तदाज्ञावशगास्सुराः ।।2.5.20.२०।।
अलक्षिता वयं चात्रागताश्शंभो त्वदंतिकम् ।।
स आयाति त्वया कर्तुं रणं सिंधुसुतो बली ।। २१ ।।
अतस्स्वामिन्रणे त्वं तमविलंबं जलंधरम् ।।
हंतुमर्हसि सर्वज्ञ पाहि नश्शरणागतान् ।। २२ ।।
सनत्कुमार उवाच ।।
इत्युक्त्वा ते सुरास्सर्वे प्रभुं नत्वा सवासवाः ।।
पादौ निरीक्ष्य संतस्थुर्महेशस्य विनम्रकाः ।। २३ ।।
।। सनत्कुमार उवाच ।।
इति देववचः श्रुत्वा प्रहस्य वृषभध्वजः ।।
द्रुतं विष्णुं समाहूय वचनं चेदमब्रवीत् ।।२४।।
ईश्वर उवाच ।।
हृषीकेश महाविष्णो देवाश्चात्र समागताः ।।
जलंधरकृतापीडाश्शरणं मेऽतिविह्वलाः ।।२५।।
जलंधरः कथं विष्णो संगरे न हत स्त्वया ।।
तद्गृहं चापि यातोऽसि त्यक्त्वा वैकुण्ठमात्मनः ।।२६।।
मया नियोजितस्त्वं हि साधुसंरक्षणाय च ।।
निग्रहाय खलानां च स्वतंत्रेण विहारिणा ।।२७।।
सनत्कुमार उवाच ।।
इत्याकर्ण्य महेशस्य वचनं गरुडध्वजः ।।
प्रत्युवाच विनीतात्मा नतकस्साञ्जलिर्हरिः ।। २८ ।।

विष्णुरुवाच ।।
तवांशसंभवत्वाच्च भ्रातृत्वाच्च तथा श्रियः ।।
मया न निहतः संख्ये त्वमेनं जहि दानवम् ।। २९।।
महाबलो महावीरो जेयस्सर्वदिवौकसाम् ।।
अन्येषां चापि देवेश सत्यमेतद्ब्रवीम्यहम् ।। 2.5.20.३० ।।
मया कृतो रणस्तेन चिरं देवान्वितेन वै ।।
मदुपायो न प्रवृत्तस्तस्मिन्दानवपुंगवे ।। ३१ ।।
तत्पराक्रमतस्तुष्टो वरं ब्रूहीत्यहं खलु ।।
इति मद्वचनं श्रुत्वा स वव्रे वरमुत्तमम् ।। ३२ ।।
मद्भगिन्या मया सार्द्धं मद्गेहे ससुरो वस ।।
मदधीनो महाविष्णो इत्यहं तद्गृहं गतः ।। ३३ ।।
सनत्कुमार उवाच।।
इति विष्णोर्वचश्श्रुत्वा शकरस्स महेश्वरः ।।
विहस्योवाच सुप्रीतस्सदयो भक्तवत्सलः ।।३४।।
महेश्वर उवाच ।।
हे विष्णो सुरवर्य त्वं शृणु मद्वाक्यमादरात् ।।
जलंधरं महादैत्यं हनिष्यामि न संशयः ।। ३५ ।।
स्वस्थानं गच्छ निर्भीतो देवा गच्छंत्वपि ध्रुवम् ।।
निर्भया वीतसंदेहा हतं मत्वाऽसुराधिपम् ।। ३६ ।।
सनत्कुमार उवाच ।।
इति श्रुत्वा महेशस्य वचनं स रमापतिः ।।
सनिर्जरो जगामाशु स्वस्थानं गतसंशयः ।।३७।।
एतस्मिन्नंतरे व्यास स दैत्येन्द्रोऽतिविक्रमः ।।
सन्नद्धैरसुरैस्सार्द्धं शैलप्रांतं ययौ बली ।।३८।।
कैलासमवरुध्याथ महत्या सेनया युतः ।।
संतस्थौ कालसंकाशः कुर्वन्सिंहरवं महान् ।। ३९ ।।
अथ कोलाहलं श्रुत्वा दैत्यनादसमुद्भवम् ।।
चुक्रोधातिमहेशानो महालीलः खलांतकः ।। 2.5.20.४०
समादिदेश संख्याय स्वगणान्स महाबलान् ।।
नंद्यादिकान्महादेवो महोतिः कौतुकी हरः ।। ४१ ।।
नन्दीभमुखसेनानीमुखास्सर्वे शिवाज्ञया ।।
गणाश्च समनह्यंत युद्धाया तित्वरान्विताः ।। ४२ ।।
अवतेरुर्गणास्सर्वे कैलासात्क्रोधदुर्मदाः ।।

वल्गतो रणशब्दांश्च महावीरा रणाय हि ।। ४३ ।।
ततस्समभवद्युद्धं कैलासोपत्यकासु वै ।।
प्रमथाधिपदैत्यानां घोरं शस्त्रास्त्रसंकुलम् ।। ४४ ।।
भेरीमृदंगशंखौघैर्निस्वानैर्वीरहर्षणैः ।।
गजाश्वरथशब्दैश्च नादिता भूर्व्यकंपत ।। ४५ ।।
शक्तितोमरबाणौघैर्मुसलैः पाशपट्टिशैः ।।
व्यराजत नभः पूर्णं मुक्ताभिरिव संवृतम् ।।४६।।
निहतैरिव नागाश्वैः पत्तिभिर्भूर्व्यराजत ।।
वज्राहतैः पर्वतेन्द्रैः पूर्वमासीत्सुसंवृता ।। ४७ ।।
प्रमथाहतदैत्यौघैर्दैत्याहतगणैस्तथा ।।
वसासृङ्मांसपंकाढ्या भूरगम्याभवत्तदा ।।४८।।
प्रमथाहतदैत्यौघान्भार्गवस्समजीवयत् ।।
युद्धे पुनः पुनश्चैव मृतसंजीवनी बलात् ।।४९।।
दृष्ट्वा व्याकुलितांस्तांस्तु गणास्सर्वे भयार्दिताः ।।
शशंसुर्देवदेवाय सर्वे शुक्रविचेष्टितम् ।।2.5.20.५०।।
तच्छ्रुत्वा भगवान्रुद्रश्चकार क्रोधमुल्बणम् ।।
भयंकरोऽतिरौद्रश्च बभूव प्रज्वलन्दिशः ।।५१।।
अथ रुद्रमुखात्कृत्या बभूवातीवभीषणा ।।
तालजंघोदरी वक्त्रा स्तनापीडितभूरुहा ।। ५२ ।।
सा युद्धभूमिं तरसा ससाद मुनिसत्तम ।।
विचचार महाभीमा भक्षयंती महासुरान् ।। ५३ ।।
अथ सा रणमध्ये हि जगाम गतभीर्द्रुतम् ।।
यत्रास्ते संवृतो दैत्यवरेन्द्रैस्स हि भार्गवः ।।५४।।
स्वतेजसा नभो व्याप्य भूमिं कृत्वा च सा मुने ।।
भार्गवं स्वभगे धृत्वा जगामांतर्हिता नभः ।।५५।।
विद्रुतं भार्गवं दृष्ट्वा दैत्यसैन्यगणास्तथा ।।
प्रम्लानवदना युद्धान्निर्जग्मुर्युद्धदुर्मदाः ।। ५६ ।।
अथोऽभज्यत दैत्यानां सेना गणभयार्दिता ।।
वायुवेगहता यद्वत्प्रकीर्णा तृणसंहतिः ।।५७।।
भग्नां गणभयाद्दैत्यसेनां दृष्ट्वातिमर्षिताः ।।
निशुंभशुंभौ सेनान्यौ कालनेमिश्च चुक्रुधुः ।।५८।।
त्रयस्ते वरयामासुर्गणसेनां महाबलाः ।।
मुंचंतश्शरवर्षाणि प्रावृषीव बलाहकाः ।।५९।।

ततो दैत्यशरौघास्ते शलभानामिव व्रजाः ।।
रुरुधुः खं दिशस्सर्वा गणसेनामकंपयन् ।। 2.5.20.६० ।।
गणाश्शरशतैर्भिन्ना रुधिरासारवर्षिणः ।।
वसंतकिंशुकाभासा न प्राजानन्हि किंचन ।। ६१ ।।
ततः प्रभग्नं स्वबलं विलोक्य नन्द्यादिलंबोदरकार्त्तिकेयाः ।।
त्वरान्विता दैत्यवरान्प्रसह्य निवारयामासुरमर्षणास्ते ।।६२।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे जलंधरवधोपाख्याने सामान्यगणासुरयुद्धवर्णनं नाम विंशोऽध्यायः ।। २० ।।

सनत्कुमार उवाच ।।
ते गणाधिपतीन्दृष्ट्वा नन्दीभमुखषण्मुखान्।।
अमर्षादभ्यधावंत द्वंद्वयुद्धाय दानवाः।।१।।
नन्दिनं कालनेमिश्च शुंभो लंबोदरं तथा ।।
निशुंभः षण्मुखं देवमभ्यधावत शंकितः ।।२।।
निशुंभः कार्तिकेयस्य मयूरं पंचभिश्शरैः ।।
हृदि विव्याध वेगेन मूर्छितस्स पपात ह ।।३।।
ततः शक्तिधरः क्रुद्धो बाणैः पंचभिरेव च ।।
विव्याध स्यंदने तस्य हयान्यन्तारमेव च ।।४।।
शरेणान्येन तीक्ष्णेन निशुंभं देववैरिणम् ।।
जघान तरसा वीरो जगर्ज रणदुर्मदः ।।५।।
असुरोऽपि निशुंभाख्यो महावीरोऽतिवीर्यवान् ।।
जघान कार्तिकेयं तं गर्जंतं स्वेषुणा रणे ।।६।।
ततश्शक्तिं कार्तिकेयो यावजग्राह रोषतः ।।
तावन्निशुंभो वेगेन स्वशक्त्या तमपातयत् ।।७।।
एवं बभूव तत्रैव कार्तिकेयनिशुंभयोः ।।
आहवो हि महान्व्यास वीरशब्दं प्रगर्जतोः ।।८।।
ततो नन्दीश्वरो बाणैः कालनेमिमविध्यत ।।
सप्तभिश्च हयान्केतुं रथं सारथिमाच्छिनत् ।।९।।
कालनेमिश्च संकुद्धो धनुश्चिच्छेद नंदिनः ।।
स्वशरासननिर्मुक्तैर्महातीक्ष्णैश्शिलीमुखैः ।। 2.5.21.१० ।।
अथ नन्दीश्वरो वीरः कालनेमिं महासुरम् ।।
तमपास्य च शूलेन वक्षस्यभ्यहनद्दृढम् ।।११।।
स शूलभिन्नहृदयो हताश्वो हतसारथिः ।।
अद्रेः शिखरमुत्पाट्य नन्दिनं समताडयत् ।। १२ ।।
अथ शुंभो गणेशश्च रथमूषक वाहनौ ।।
युध्यमानौ शरव्रातैः परस्परमविध्यताम् ।। १३ ।।
गणेशस्तु तदा शुंभं हृदि विव्याध पत्रिणा ।।
सारथिं च त्रिभिर्बाणैः पातयामास भूतले ।। १४ ।।
ततोऽतिक्रुद्धश्शुंभोऽपि बाणदृष्ट्या गणाधिपम् ।।
मूषकं च त्रिभिर्विद्ध्वा ननाद जलदस्वनः ।। १५ ।।
मूषकश्शरभिन्नाङ्गश्चचाल दृढवेदनः ।।
लम्बोदरश्च पतितः पदातिरभवत्स हि ।। १६ ।।

ततो लम्बोदरश्शुंभं हत्वा परशुना हृदि ।।
अपातयत्तदा भूमौ मूषकं चारुरोह सः ।। १७ ।।
समरायोद्यतश्चाभूत्पुनर्गजमुखो विभुः ।।
प्रहस्य जघ्नतुः क्रोधात्तोत्रेणैव महाद्विपम् ।। १८ ।।
कालनेमिर्निशुंभश्च ह्युभौ लंबोदरं शरैः ।।
युगपच्चखनतुः क्रोधादाशीविषसमैर्द्रुतम् ।। १९ ।।
तं पीड्यमानमालोक्य वीरभद्रो महाबलः ।।
अभ्यधावत वेगेन कोटिभूतयुतस्तथा ।। 2.5.21.२० ।।
कूष्मांडा भैरवाश्चापि वेताला योगिनीगणाः ।।
पिशाचा डाकिनीसंघा गणाश्चापि समं ययुः ।।२१।।
ततः किलकिला शब्दैस्सिंहनादैश्सघर्घरैः ।।
विनादिता डमरुकैः पृथिवी समकंपत ।।२२।।
ततो भूताः प्रधावंतो भक्षयंति स्म दानवान् ।।
उत्पत्य पातयंति स्म ननृतुश्च रणांगणे ।।२३।।
एतस्मिन्नंतरे व्यासाभूतां नन्दीगुहश्च तौ।।
उत्थितावाप्तसंज्ञौ हि जगर्जतुरलं रणे ।।२४।।
स नन्दी कार्तिकेयश्च समायातौ त्वरान्वितौ।।
जघ्नतुश्च रणे दैत्यान्निरंतरशरव्रजैः।।
छिन्नैर्भिन्नैर्हतैर्दैत्यैः पतितैर्भक्षितैस्तथा ।।
व्याकुला साभवत्सेना विषण्णवदना तदा।।२६।।
एवं नन्दी कार्तिकेयो विकटश्च प्रतापवान् ।।
वीरभद्रो गणाश्चान्ये जगर्जुस्समरेऽधिकम्।।२७।।
निशुंभशुंभौ सेनान्यौ सिन्धुपुत्रस्य तौ तथा ।।
कालनेमिर्महादैत्योऽसुराश्चान्ये पराजिताः ।। २८ ।।
प्रविध्वस्तां ततस्सेनां दृष्ट्वा सागरनन्दनः ।।
रथेनातिपताकेन गणानभिययौ बली ।। २९ ।।
ततः पराजिता दैत्या अप्यभूवन्महोत्सवाः ।।
जगर्जुरधिकं व्यास समरायोद्यतास्तदा ।। 2.5.21.३० ।।
सर्वे रुद्रगणाश्चापि जगर्जुर्जयशालिनः ।।
नन्दिकार्तिकदंत्यास्यवीरभद्रादिका मुने ।। ३१ ।।
हस्त्यश्वरथसंह्लादश्शंखभेरीरवस्तथा ।।
अभवत्सिंहनादश्च सेनयोरुभयोस्तथा ।। ३२ ।।
जलंधरशरव्रातैर्नीहारपटलैरिव ।।

द्यावापृथिव्योराच्छन्नमंतरं समपद्यत ।।३३।।
शैलादिं पंचभिर्विद्ध्वा गणेशं पंचभिश्शरैः ।।
वीरभद्रं च विंशत्या ननाद जलदस्वनः ।। ३४ ।।
कार्तिकेयस्ततो दैत्यं शक्त्या विव्याध सत्वरम् ।।
जलंधरं महावीरो रुद्रपुत्रो ननाद च ।। ३५ ।।
स पूर्णनयनो दैत्यः शक्तिनिर्भिन्नदेहकः ।।
पपात भूमौ त्वरितमुदतिष्ठन्महाबलः ।। ३६ ।।
ततः क्रोधपरीतात्मा कार्तिकेयं जलंधरः ।।
गदया ताडयामास हृदये दैत्यपुंगवः ।।३७।।
गदाप्रभावं सफलं दर्शयन्शंकरात्मजः ।।
विधिदत्तवराद्व्यास स तूर्णं भूतलेऽपतत् ।। ३८ ।।
तथैव नंदी ह्यपतद्भूतले गदया हतः ।।
महावीरोऽपि रिपुहा किंचिद्व्याकुलमानसः ।। ३९ ।।
ततो गणेश्वरः क्रुद्धस्स्मृत्वा शिवपदाम्बुजम् ।।
संप्राप्यातिबलो दैत्य गदां परशुनाच्छिनत् ।।2.5.21.४०।।
वीरभद्रस्त्रिभिर्बाणैर्हृदि विव्याध दानवम् ।।
सप्तभिश्च हयान्केतुं धनुश्छत्रं च चिच्छिदे ।।४१।।
ततोऽतिक्रुद्धो दैत्येन्द्रश्शक्तिमुद्यम्य दारुणाम् ।।
गणेशं पातयामास रथमन्यं समारुहत् ।।४२।।
अभ्यगादथ वेगेन स दैत्येन्द्रो महाबलः ।।
विगणय्य हृदा तं वै वीरभद्रं रुषान्वितः ।।४३।।
वीरभद्रं जघानाशु तीक्ष्णेनाशीविषेण तम् ।।
ननाद च महावीरो दैत्यराजो जलंधरः ।। ४४ ।।
वीरभद्रोऽपि संकुद्धस्सितधारेण चेषुणा ।।
चिच्छेद तच्छरं चैव विव्याध महेषुणा ।।४५।।
ततस्तौ सूर्यसंकाशौ युयुधाते परस्परम् ।।
नानाशस्त्रैस्तथास्त्रैश्च चिरं वीरवरोत्तमौ ।। ४६ ।।
वीरभद्रस्ततस्तस्य हयान्बाणैरपातयत् ।।
धनुश्चिच्छेद रथिनः पताकां चापि वेगतः ।। ४७ ।।
अथो स दैत्यराजो हि पुप्लुवे परिघायुधः ।।
वीरभद्रोपकठं स द्रुतमाप महाबलः ।। ४८ ।।
परिघेनातिमहता वीरभद्रं जघान ह ।।
सबलोऽब्धितनयो मूर्ध्नि वीरो जगर्ज च ।। ४९ ।।

परिघेनातिमहता भिन्नमूर्द्धा गणाधिपः ।।
वीरभद्रः पपातोर्व्यां मुमोच रुधिरं बहु ।।2.5.21.५०।।
पतितं वीरभद्रं तु दृष्ट्वा रुद्रगणा भयात् ।।
अपागच्छन्रणं हित्वा क्रोशमाना महेश्वरम् ।। ५१ ।।
अथ कोलाहलं श्रुत्वा गणानां चन्द्रशेखरः ।।
निजपार्श्वस्थितान् वीरानपृच्छद्गणसत्तमान् ।। ५२ ।।
शंकर उवाच ।।
किमर्थं मद्गणानां हि महाकोलाहलोऽभवत् ।।
विचार्यतां महावीराश्शांतिः कार्या मया ध्रुवम् ।।५३।।
यावत्स देवेशो गणान्पप्रच्छ सादरम् ।।
तावद्गणवरास्ते हि समायाताः प्रभुं प्रति ।। ५४ ।।
तान्दृष्ट्वा विकलान्रुद्रः पप्रच्छ इति कुशलं प्रभुः ।।
यथावत्ते गणा वृत्तं समाचख्युश्च विस्तरात् ।। ५५।।
तच्छ्रुत्वा भगवानुद्रो महालीलाकरः प्रभुः ।।
अभयं दत्तवांस्तेभ्यो महोत्साहं प्रवर्द्धयन् ।।५६।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे जलंधरोपाख्याने विशे षयुद्धवर्णनं नामैकविंशतितमोऽध्यायः ।। २१ ।।

सनत्कुमार उवाच ।।
अथ वीरगणै रुद्रो रौद्ररूपो महाप्रभुः ।।
अभ्यगादृवृषभारूढस्संग्रामं प्रहसन्निव ।। १ ।।
रुद्रमायांतमालोक्य सिंहनादैर्गणाः पुनः ।।
निवृत्ताः संगरे रौद्रा ये हि पूर्वं पराजिताः ।। २ ।।
वीर शब्दं च कुर्वन्तस्तेऽप्यन्ये शांकरा गणाः ।।
सोत्सवास्सायुधा दैत्यान्निजघ्नुश्शरवृष्टिभिः ।। ३ ।।
दैत्या हि भीषणं रुद्रं सर्वे दृष्ट्वा विदुद्रुवुः ।।
शांकरं पुरुषं दृष्ट्वा पातकानीव तद्भयात् ।। ४ ।।
अथो जलंधरो दैत्यान्निवृत्तान्प्रेक्ष्य संगरे ।।
अभ्यधावत्स चंडीशं मुंचन्बाणान्सहस्रशः ।। ५ ।।
निशुंभशुंभप्रमुखा दैत्येन्द्राश्च सहस्रशः ।।
अभिजग्मुश्शिवं वेगाद्रोषात्संदष्टदच्छदाः ।। ६ ।।
कालनेमिस्तथा वीरः खड्गरोमा बलाहकः ।।
घस्मरश्च प्रचंडश्चापरे चापि शिवं ययुः ।। ७ ।।
बाणैस्संछादयामासुर्द्रुतं रुद्रगणांश्च ते ।।
अंगानि चिच्छिदुर्वीराः शुंभाद्या निखिला मुने ।।८।।
बाणांधकारसंछन्नं दृष्ट्वा गणबलं हरः ।।
तद्बाणजालमाच्छिद्य बाणैराववृते नभः ।। ९ ।।
दैत्यांश्च बाणवात्याभिः पीडितानकरोत्तदा ।।
प्रचंडबाणजालोघैरपातयत भूतले ।।2.5.22.१०।।
खड्गरोमशिरः कायात्तथा परशुनाच्छिनत् ।।
बलाहकस्य च शिरः खट्वांगेनाकरोद्द्विधा ।।११।।
स बद्ध्वा घस्मरं दैत्यं पाशेनाभ्यहनद्भुवि ।।
महावीर प्रचंडं च चकर्त्त विशिखेन ह ।। १२ ।।
वृषभेण हताः केचित्केचिद्बाणैर्निपातिता ।।
न शेकुरसुराः स्थातुं गजा सिंहार्दिता इव ।।१३।।
ततः क्रोधपरीतात्मा दैत्यान्धिक्कृतवान्रणे ।।
शुंभादिकान्महादैत्यः प्रहसन्प्राह धैर्यवान्।।१४।।
जलंधर उवाच ।।
किं व उच्चरितैर्मातुर्धावद्भिः पृष्ठतो हतैः ।।
न हि भीतवधः श्लाघ्यः स्वर्गदः शूरमानिनाम् ।।१५।।
यदि वः प्रधने श्रदा सारो वा क्षुल्लका हृदि ।।

अग्रे तिष्ठत मात्रं मे न चेद्ग्राम्यसुखे स्पृहा।। १६ ।।
रणे मृत्युर्वरश्चास्ति सर्वकामफलप्रदः ।।
यशःप्रदो विशेषेण मोक्षदोऽपि प्रकीर्त्तितः ।।१७।।
सूर्यस्य मंडलं भित्त्वा यायाद्वै परमं पदम् ।।
परिव्राट् परमज्ञानी रणे यत्संमुखे हतः ।।१८।।
मृत्योर्भयं न कर्तव्यं कदाचित्कुत्रचिद्बुधैः।।
अनिर्वार्यो यतो ह्येष उपायैर्निखिलैरपि ।।१९।।
मृत्युर्जन्मवतां वीरा देहेन सह जायते।।
अद्य वाब्दशतात् वा मृत्युर्वै प्राणिनां ध्रुवः ।।2.5.22.२०।।
तन्मृत्युभयमुत्सार्य युध्यध्वं समरे मुदा ।।
सर्वथा परमानन्द इहामुत्राप्यसंशयः ।।२१।।
सनत्कुमार उवाच ।।
इत्युक्त्वा बोधयामास स्ववीरान्बहुशस्स हि।।
धैर्यं दधुर्न ते भीता पलायंत रणाद्द्रुतम् ।।२२।।
अथ दृष्ट्वा स्वसैन्यं तत्पलायनपरायणम् ।।
चुक्रोधाति महावीरस्सिंधुपुत्रो जलंधरः ।।२३।।
ततः क्रोधपरीतात्मा क्रोधाद्रुद्रं जलंधरः।।
आह्वापयामास रणे तीव्राशनिसमस्वनः ।। २४ ।।
।। जलंधर उवाच ।।
युद्ध्यस्वाद्य मया सार्द्धं किमेभिर्निहतैस्तव ।।
यच्च किञ्चिद्बलं तेऽस्ति तद्दर्शय जटाधर ।।२५।।
सनत्कुमार उवाच ।।
इत्युक्त्वा बाण सप्तत्या जघान वृषभध्वजम् ।।
जलंधरो महादैत्यश्शंभुमक्लिष्टकारिणम् ।। २६ ।।
तानप्राप्तान्महादेवो जलंधरशरान्द्रुतम्।।
निजैर्हि निशितैर्बाणैश्चिच्छेद प्रहसन्निव।।२७।।
ततो हयान्ध्वजं छत्रं धनुश्चिच्छेद सप्तभिः ।।
जलंधरस्य दैत्यस्य न तच्चित्रं हरे मुने ।। २८ ।।
स च्छिन्नधन्वा विरथः पाथोधितनयोऽसुरः ।।
अभ्यधावच्छिवं क्रुद्धो गदामुद्यम्य वेगवान्।। २९ ।।
प्रभुर्गदां च तत्क्षिप्तां सहसैव महेश्वरः ।।
पाराशर्यं महालीलो द्रुतं बाणैर्द्विधाकरोत् ।।2.5.22.३०।।
तथापि मुष्टिमुद्यम्य महाक्रुद्धो महासुरः ।।

अभ्युद्ययौ महावेगादद्रुतं तं तज्जिघांसया।।३१।।
तावदेवेश्वरेणाशु बाणोघैस्स जलंधरः ।।
अक्लिष्टकर्मकारेण क्रोशमात्रमपाकृतः ।।३२।।
ततो जलंधरो दैत्यो रुद्रं मत्वा बलाधिकम् ।।
ससर्ज मायां गांधर्वीमद्भुतां रुद्रमोहिनीम्।।३३।।
तस्य मायाप्रभावात्तु गंधर्वाप्सरसां गणाः ।।
आविर्भूता अनेके च रुद्रमोहनहेतवे।।३४।।
ततो जगुश्च ननृतुर्गंधर्वाप्सरसां गणाः।।
तालवेणुमृदंगांश्च वादयन्तिस्म चापरे ।।३५।।
तद्दृष्ट्वा महदाश्चर्यं गणै रुद्रो विमोहितः ।।
पतितान्यपि शस्त्राणि करेभ्यो न विवेद सः ।।३६।।
एकाग्रीभूतमालोक्य रुद्रं दैत्यो जलंधरः।।
कामतस्स जगामाशु यत्र गौरी स्थिताऽभवत्।। ३७ ।।
युद्धे शुंभनिशुंभाख्यौ स्थापयित्वा महाबलौ ।।
दशदोर्दण्डपंचास्यस्त्रिनेत्रश्च जटाधरः ।।३८।।
महावृषभमारूढस्सर्वथा रुद्रसंनिभः ।।
आसुर्य्या मायया व्यास स बभूव जलंधरः ।।३९।।
अथ रुद्रं समायातमालोक्य भववल्लभा ।।
अभ्याययौ सखीमध्यात्तद्दर्शनपथेऽभवत् ।।2.5.22.४०।।
यावद्ददर्श चार्वंगी पार्वतीं दनुजेश्वरः ।।
तावत्स वीर्यं मुमुचे जडांगश्चाभवत्तदा।। ४१ ।।
अथ ज्ञात्वा तदा गौरी दानवं भयविह्वला ।।
जगामांतर्हिता वेगात्सा तदोत्तरमानसम्।।४२।।
तामदृश्य ततो दैत्यः क्षणाद्विद्युल्लतामिव।।
जवेनागात्पुनर्योद्धुं यत्र देवो महेश्वरः ।।४३।।
पार्वत्यपि महाविष्णुं सस्मार मनसा तदा ।।
तावद्ददर्श तं देवं सोपविष्टं समीपगम् ।।४४।।
तं दृष्ट्वा पार्वती विष्णुं जगन्माता शिवप्रिया ।।
प्रसन्नमनसोवाच प्रणमंतं कृतांजलिम् ।।४५।।
पार्वत्युवाच ।।
विष्णो जलंधरो दैत्यः कृतवान्परमाद्भुतम् ।।
तत्किं न विदितं तेऽस्ति चेष्टितं तस्य दुर्मतेः ।। ४६ ।।
तच्छ्रुत्वा जगदम्बाया वचनं गरुडध्वजः ।।

प्रत्युवाच शिवां नत्वा सांजलिर्नम्रकंधरः ।। ४७ ।।
।। श्रीभगवानुवाच ।।
भवत्याः कृपया देवि तद्वृत्तं विदितं मया ।।
यदाज्ञापय मां मातस्तत्कुर्य्यां त्वदनुज्ञया ।।४८।।
सनत्कुमार उचाच ।।
तच्छ्रुत्वा विष्णुवचनं पुनरप्याह पार्वती ।।
हृषीकेशं जगन्माता धर्मनीतिं सुशिक्षयन् ।। ४९ ।।
पार्वत्युवाच ।।
तेनैव दर्शितः पन्था बुध्यस्व त्वं तथैव हि ।।
तत्स्त्रीपातिव्रतं धर्मं भ्रष्टं कुरु मदाज्ञया ।।2.5.22.५०।।
नान्यथा स महादैत्यो भवेद्वध्यो रमेश्वर।।
पातिव्रतसमो नान्यो धर्मोऽस्ति पृथिवीतले ।। ५१ ।।
सनत्कुमार उवाच ।।
इत्यनुज्ञां समाकर्ण्य शिरसाधाय तां हरिः ।।
छल कर्त्तुं जगामाशु पुनर्जालंधरं पुरम् ।। ५२ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायांपञ्चमे युद्धखंडे जलंधरवधोपाख्याने
जलंधरयुद्धवर्णनंनाम द्वाविंशोऽध्यायः ।। २२ ।।

व्यास उवाच।।
सनत्कुमार सर्वज्ञ वद त्वं वदतां वर।।
किमकार्षीद्धरिस्तत्र धर्मं तत्याज सा कथम् ।। १ ।।
सनत्कुमार उपाच ।।
विष्णुर्जालंधरं गत्वा दैत्यस्य पुटभेदनम् ।।
पातिव्रत्यस्य भंगाय वृन्दायाश्चा करोन्मतिम् ।। ।। २ ।।
वृन्दां स दर्शयामास स्वप्नं मायाविनां वरः ।।
स्वयं तन्नगरोद्यानमास्थितोऽद्भुतविग्रहः ।। ३ ।।
अथ वृन्दा तदा देवी तत्पत्नी निशि सुव्रता।।
हरेर्मायाप्रभावात्तु दुस्स्वप्नं सा ददर्श ह ।।४।।
स्वप्नमध्ये हि सा विष्णुमायया प्रददर्श ह ।।
भर्त्तारं महिषारूढं तैलाभ्यक्तं दिगंबरम् ।। ५ ।।
कृष्णप्रसूनभूषाढ्यं क्रव्यादगणसेवितम् ।।
दक्षिणाशां गतं मुंडं तमसा च वृतं तदा ।।६।।
स्वपुरं सागरे मग्नं सहसैवात्मना सह ।।
इत्यादि बहुदुस्स्वप्नान्निशांते सा ददर्श ह ।।७।।
ततः प्रबुध्य सा बाला तं स्वप्नं स्वं विचिन्वती ।।
ददर्शोदितमादित्यं सच्छिद्रं निःप्रभं मुहुः ।।८।।
तदनिष्टमिदं ज्ञात्वा रुदंती भयविह्वला ।।
कुत्रचिन्नाप सा शर्म गोपुराट्टालभूमिषु ।।९।।
ततस्सखीद्वययुता नगरोद्यानमागमत् ।।
तत्रापि सा गता बाला न प्राप कुत्रचित्सुखम् ।।2.5.23.१०।।
ततो जलंधरस्त्री सा निर्विण्णोद्विग्नमानसा ।।
वनाद्वनांतरं याता नैव वेदात्मना तदा ।।११।।
भ्रमती सा ततो बाला ददर्शातीव भीषणौ ।।
राक्षसौ सिंहवदनौ दृष्ट्वा दशनभासुरौ ।। १२ ।।
तौ दृष्ट्वा विह्वलातीव पलायनपरा तदा ।।
ददर्श तापसं शांतं सशिष्यं मौनमास्थितम् ।। १३ ।।
ततस्तत्कंठमासाद्य निजां बाहुलतां भयात् ।।
मुने मां रक्ष शरणमागतास्मीत्यभाषत ।। १४ ।।
मुनिस्तां विह्वलां दृष्ट्वा राक्षसानुगतां तदा ।।
हुंकारेणैव तौ घोरौ चकार विमुखौ द्रुतम् ।। १५ ।।
तद्धुंकारभयत्रस्तौ दृष्ट्वा तौ विमुखौ गतौ ।।

विस्मितातीव दैत्येन्द्रपत्नी साभून्मुने हृदि ।।१६।।
ततस्सा मुनिनाथं तं भयान्मुक्ता कृतांजलिः ।।
प्रणम्य दंडवद्भूमौ वृन्दा वचनमब्रवीत् ।। १७ ।।
वृन्दोवाच ।।
मुनिनाथ दयासिन्धो परपीडानिवारक ।।
रक्षिताहं त्वया घोराद्भयादस्मात्ख लोद्भवात् ।। १८ ।।
समर्थस्सर्वथा त्वं हि सर्वज्ञोऽपि कृपानिधे ।।
किंचिद्विज्ञप्तुमिच्छामि कृपया तन्निशामय ।। १९ ।।
जलंधरो हि मद्भर्ता रुद्रं योद्धुं गतः प्रभो ।।
स तत्रास्ते कथं युद्धे तन्मे कथय सुव्रत ।।2.5.23.२०।।
सनत्कुमार उवाच ।।
मुनिस्तद्वाक्यमाकर्ण्य मौनकपटमास्थितः ।।
कर्त्तुं स्वार्थं विधानज्ञः कृपयोर्द्ध्वमवैक्षत ।।२१।।
तावत्कपीशावायातौ तं प्रणम्याग्रतः स्थितौ ।।
ततस्तद्भ्रूलतासंज्ञानियुक्तौ गगनं गतौ ।। २२ ।।
नीत्वा क्षणार्द्धमागत्य पुनस्तस्याग्रतः स्थितौ ।।
तस्यैव कं कबंधं च हस्तावास्तां मुनीश्वर ।। २३ ।।
शिरः कबंधं हस्तौ तौ दृष्ट्वाब्धितनयस्य सा ।।
पपात मूर्छिता भूमौ भर्तृव्यसनदुःखिता ।। २४ ।।
।। वृन्दोवाच ।।
यः पुरा सुखसंवादैर्विनोदयसि मां प्रभो ।।
स कथं न वदस्यद्य वल्लभां मामनागसम् ।। २५ ।।
येन देवास्सगंधर्वा निर्जिता विष्णुना सह ।।
कथं स तापसेनाद्य त्रैलोक्यविजयी हत ।। २५ ।।
नांगीकृतं हि मे वाक्यं रुद्रतत्त्वमजानता ।।
परं ब्रह्म शिवश्चेति वदंत्या दैत्यसत्तम ।।२७।।
ततस्त्वं हि मया ज्ञातस्तव सेवाप्रभावतः ।।
गर्वितेन त्वया नैव कुसंगवशगेन हि ।।२८।।
इत्थंप्रभाष्य बहुधा स्वधर्मस्था च तत्प्रिया।।
विललाप विचित्रं सा हृदयेन विदूयता ।।२९।।
ततस्सा धैर्यमालंब्य दुःखोच्छ्रवा सान्विमुंचती ।।
उवाच मुनिवर्यं तं सुप्रणम्य कृतांजलिः ।।2.5.23.३०।।
वृन्दोवाच ।। ।।

कृपानिधे मुनिश्रेष्ठ परोपकरणादर ।।
मयि कृत्वा कृपां साधो जीवयैनं मम प्रभुम् ।। ३१ ।।
यत्त्वमस्य पुनश्शक्तो जीवनाय मतो मम ।।
अतस्संजीवयैनं मे प्राणनाथं मुनीश्वर ।। ३२ ।।
सनत्कुमार उवाच ।।
इत्युक्त्वा दैत्यपत्नी सा पतिव्रत्यपरायणाः ।।
पादयोः पतिता तस्य दुःखश्वासान् विमुञ्चती ।।३३।।
मुनिरुवाच ।।
नायं जीवयितुं शक्तो रुद्रेण निहतो युधि ।।
रुद्रेण निहता युद्धे न जीवन्ति कदाचन ।।३४।।
तथापि कृपयाविष्ट एनं संजीवयाम्यहम् ।।
रक्ष्याश्शरणगाश्चेति जानन्धर्मं सनातनम् ।।३५।
।। सनत्कुमार उवाच ।।
इत्युक्त्वा स मुनिस्तस्या जीवयित्वा पतिं मुने ।।
अंतर्दधे ततो विष्णुस्सर्वमायाविनां वरः।।३६।।
द्रुतं स जीवितस्तेनोत्थितः सागरनन्दनः।।
वृन्दामालिंग्य तद्वक्त्रं चुचुंब प्रीतमानसः ।३७।।
अथ वृन्दापि भर्तारं दृष्ट्वा हर्षितमानसा ।।
जहौ शोकं च निखिलं स्वप्नवद्धृद्यमन्यत ।।३८।।
अथ प्रसन्नहृदया सा हि संजातहृच्छया ।।
रेमे तद्वनमध्यस्था तद्युक्ता बहुवासरान् ।। ३९ ।।
कदाचित्सुरतस्यांते दृष्ट्वा विष्णुं तमेव हि ।।
निर्भर्त्स्य क्रोधसंयुक्ता वृन्दा वचनमब्रवीत् ।।2.5.23.४०।।
वृन्दोवाच।।
धिक् तदेवं हरे शीलं परदाराभिगामिनः ।।
ज्ञातोऽसि त्वं मया सम्यङ्मायी प्रत्यक्षतापसः।।४१।।
सनत्कुमार उवाच ।।
इत्युक्त्वा क्रोधमापन्ना दर्शयंती स्वतेजसम् ।।
शशाप केशवं व्यास पातिव्रत्यरता च सा।।४२।।
रे महाधम दैत्यारे परधर्मविदूषक ।।
गृह्णीष्व शठ मद्दत्तं शापं सर्वविषोल्बणम् ।।४३।।
यौ त्वया मायया ख्यातौ स्वकीयौ दर्शितौ मम।।
तावेव राक्षसौ भूत्वा भार्यां तव हरिष्यतः।।४४।।

त्वं चापि भार्यादुःखार्तो वने कपिसहायवान्।।
भ्रम सर्पेश्वरेणायं यस्ते शिष्यत्वमागतः४५।।
सनत्कुमार उवाच।।
इत्युक्त्वा सा तदा वृन्दा प्रविशद्धव्यवाहनम्।।
विष्णुना वार्यमाणापि तस्मितासक्तचेतसा४६।।
तस्मिन्नवसरे देवा ब्रह्माद्या निखिला मुने ।।
आगता खे समं दारैः सद्गतिं वै दिद्दक्षवः ।।४७।।
अथ दैत्येन्द्रपत्न्यास्तु तज्ज्योतिः परमं महत्।।
पश्यतां सर्वदेवानामलोकमगमद्द्रुतम्।।४८।।
शिवातनौ विलीनं तद्वृन्दातेजो बभूव ह ।।
आसीज्जयजयारावः खस्थितामर पंक्तिषु।।४९।।
एवं वृन्दा महाराज्ञी कालनेमिसुतोत्तमा।।
पातिव्रत्यप्रभावाच्च मुक्तिं प्राप परां मुने ।।2.5.23.५०।।
ततो हरिस्तामनुसंस्मन्मुहुर्वृन्दाचिताभस्मरजोवगुंठितः ।।
तत्रैव तस्थौ सुरसिद्धसंघकैः प्रबोध्यमानोपि ययौ न शांतिम् ।। ५१ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे जलंधरवधोपाख्याने
वृन्दापतिव्रतभंगदेहत्यागवर्णनं नाम त्रयोविंशोऽध्यायः ।। २३ ।।

।। व्यास उवाच ।।
विधेः श्रेष्ठसुत प्राज्ञः कथेयं श्राविताद्भुता ।।
ततश्च किमभूदाजौ कथं दैत्यो हतो वद ।।१।।
सनत्कुमार उवाच।।
अदृश्य गिरिजां तत्र दैत्येन्द्रे रणमागते ।।
गांधर्वे च विलीने हि चैतन्योऽभूद्वृषध्वजः ।।२।।
अंतर्धानगतां मायां दृष्ट्वा बुद्धो हि शंकरः ।।
चुक्रोधातीव संहारी लौकिकीं गतिमाश्रितः ।। ३ ।।
ततश्शिवो विस्मितमानसः पुनर्जगाम युद्धाय जलंधरं रुषा ।।
स चापि दैत्यः पुनरागतं शिवं दृष्ट्वा शरोघैस्समवाकिरद्रणे ।। ४ ।।
क्षिप्तं प्रभुस्तं शरजालमुग्रं जलंधरेणातिबलीयसा हरः ।।
प्रचिच्छेद शरैर्वरैर्निजैर्नचित्रमत्र त्रिभवप्रहंतुः ।।५।।
ततो जलंधरो दृष्ट्वा रुद्रमद्भुतविक्रमम् ।।
चकार मायया गौरीं त्र्यम्बकं मोहयन्निव ।। ६ ।।
रथोपरि गतां बद्धां रुदंतीं पार्वतीं शिवः ।।
निशुंभ शुंभदैत्यैश्च बध्यमानां ददर्श सः ।। ७ ।।
गौरीं तथाविधां दृष्ट्वा लौकिकीं दर्शयन्गतिम् ।।
बभूव प्राकृत इव शिवोप्युद्विग्नमानसः ।।८।।
अवाङ्मुखस्थितस्तूष्णीं नानालीलाविशारदः।।
शिथिलांगो विषण्णात्मा विस्मृत्य स्वपराक्रमम्।।९।।
ततो जलंधरो वेगात्त्रिभिर्विव्याध सायकैः।।
आपुंखमग्नैस्तं रुद्रं शिरस्युरसि चोदरे ।।2.5.24.१०।।
ततो रुद्रो महालीलो ज्ञानतत्त्वः क्षणात्प्रभुः ।।
रौद्ररूपधरो जातो ज्वालामालातिभीषणः ।। ११ ।।
तस्यातीव महारौद्ररूपं दृष्ट्वा महासुराः ।।
न शेकुः प्रमुखे स्थातुं भेजिरे ते दिशो दश ।।१२।।
निशुंभशुंभावपि यौ विख्यातौ वीरसत्तमौ ।।
आपे तौ शेकतुर्नैव रणे स्थातुं मुनीश्वर ।।१३।।
जलंधरकृता मायांतर्हिताभूच्च तत्क्षणम् ।।
हाहाकारो महानासीत्संग्रामे सर्वतोमुखे ।।१४।।
ततश्शापं ददौ रुद्रस्तयोश्शुंभनिशुंभयोः ।।
पलायमानौ तौ दृष्ट्वा धिक्कृत्य क्रोधसंयुतः ।।१५।।
रुद्र उवाच ।।

युवां दुष्टावतिखलावपराधकरौ मम ।।
पार्वतीदंडदातारौ रणादस्मात्पराङ्मुखौ ।।१६।।
पराङ्मुखो न हंतव्य इति वध्यौ न मे युवाम् ।।
मम युद्धादतिक्रांतौ गौर्य्या वध्यौ भविष्यतः ।। १७ ।।
एवं वदति गौरीशे सिन्धुपुत्रो जलंधरः ।।
चुक्रोधातीव रुद्राय ज्वलज्ज्वलनसन्निभः ।।१८।।
रुद्रे रणे महावेगादव्वर्ष निशिताञ्छरान्।।
बाणांधकारसंछन्नं तथा भूमितलं ह्यभूत् ।। १९ ।।
यावद्रुद्रः प्रचिच्छेद तस्य बाणगणान्द्रुतम् ।।
तावत्सपरिघेणाशु जघान वृषभं बली ।।2.5.24.२०।।
वृषस्तेन प्रहारेण परवृत्तो रणांगणात् ।।
रुद्रेण कृश्यमाणोऽपि न तस्थौ रणभूमिषु ।। २१ ।।
अथ लोके महारुद्रस्स्वीयं तेजोऽतिदुस्सहम् ।।
दर्शयामास सर्वस्मै सत्यमेतन्मुनीश्वर ।। २२ ।।
ततः परमसंक्रुद्धो रुद्रो रौद्रवपुर्धरः ।।
प्रलयानलवद्घोरो बभूव सहसा प्रभुः ।। २३ ।।
दृष्ट्वा पुरः स्थितं दैत्यं मेघकूटमिव स्थितम् ।।
अवध्यत्वमपि श्रुत्वाप्यन्यैरभ्युद्यतोऽभवत् ।।२४।।
ब्रह्मणो वचनं रक्षन्रक्षको जगतां प्रभुः ।।
हृदानुग्रहमातन्वंस्तद्वधाय मनो दधत् ।।२५।।
कोपं कृत्वा परं शूली पादांगुष्ठेन लीलया।।
महांभसि चकाराशु रथांगं रौद्रमद्भुतम्।।२६।।
कृत्वार्णवांभसि शितं भगवान्रथांगं स्मृत्वा जगत्त्रयमनेन हतं पुरारिः ।।
दक्षान्धकांतकपुरत्रययज्ञहंता लोकत्रयांतककरः प्रहसन्नुवाच ।।२७।।
महारुद्र उवाच ।।
पादेन निर्मितं चक्रं जलंधर महाम्भसि ।।
बलवान्यदि चोद्धर्त्तुं तिष्ठ योद्धुं न चान्यथा ।।२८।।
सनत्कुमार उवाच ।।
तस्य तद्वचनं श्रुत्वा क्रोधेनादीप्तलोचनः।।
प्रदहन्निव चक्षुर्भ्यां प्राहालोक्य स शंकरम्।।२९।।
जलंधर उवाच।।
रेखामुद्धृत्य हत्वा च सगणं त्वां हि शंकर ।।
हत्वा लोकान्सुरैस्सार्द्धं स्वभागं गरुडो यथा ।।2.5.24.३०।।

हंतुं चराचरं सर्वं समर्थोऽहं सवासवम् ।।
को महेश्वर मद्बाणैरभेद्यो भुवनत्रये।।।।
बालभावेन भगवांतपसैव विनिर्जितः ।।
ब्रह्मा बलिष्ठः स्थाने मे मुनिभिस्सुरपुंगवैः ।।३२।।
दग्धं क्षणेन सकलं त्रैलोक्यं सचराचरम् ।।
तपसा किं त्वया रुद्र निर्जितो भगवानपि ।। ३३ ।।
इन्द्राग्नियमवित्तेशवायुवारीश्वरादयः ।।
न सेहिरे यथा नागा गंधं पक्षिपतेरिव ।। ३४ ।।
न लब्धं दिवि भूमौ च वाहनं मम शंकर ।।
समस्तान्पर्वतान्प्राप्य धर्षिताश्च गणेश्वराः ।।३५।।
गिरीन्द्रो मन्दरः श्रीमान्नीलो मेरुस्सुशोभनः ।।
धर्षितो बाहुदण्डेन कण्डा उत्सर्पणाय मे ।।३६।।
गंगा निरुद्धा बाहुभ्यां लीलार्थं हिमवद्गिरौ ।।
अरोणां मम भृत्यैश्च जयो लब्धो दिवौकसात् ।। ३७ ।।
वडवाया मुखं बद्धं गृहीत्वा तां करेण तु ।।
तत्क्षणादेव सकलमेकार्णवमभूत्तदा ।। ३८ ।।
ऐरावतादयो नागाः क्षिप्ताः सिन्धुजलोपरि ।।
सरथो भगवानिन्द्रः क्षिप्तश्च शतयोजनम् ।। ३९ ।।
गरुडोऽपि मया बद्धो नागपाशेन विष्णुना ।।
उर्वश्याद्या मयानीता नार्यः कारागृहांतरम् ।।2.5.24.४०।।
मां न जानासि रुद्र त्वं त्रैलोक्यजयकारिणाम् ।।
जलंधरं महादैत्यं सिंधुपुत्रं महाबलम् ।। ४१ ।।
सनत्कुमार उवाच ।।
इत्युक्त्वाथ महादेवं तदा वारिधिनन्दनः ।।
न चचाल न सस्मार निहतान्दानवान्युधि ।।४२।।
दुर्मदेनाविनीतेन दोर्भ्यामास्फोट्य दोर्बलात् ।।
तिरस्कृतो महादेवो वचनैः कटुकाक्षरैः ।।४३।।
तच्छ्रुत्वा दैत्यवचनममंगलमतीरितम् ।।
विजहास महादेवाः परमं क्रोधमादधे।।४४।।
सुदर्शनाख्यं यच्चक्रं पदांगुष्ठविनिर्मितम्।।
जग्राह तत्करे रुद्रस्तेन हंतुं समुद्यतः ।। ४५ ।।
सुदर्शनाख्यं तच्चक्रं चिक्षेप भगवान्हरः ।।
कोटिसूर्यप्रतीकाशं प्रलयानलसन्निभम् ।। ४६ ।।

प्रदहद्रोदसी वेगात्तदासाद्य जलंधरम् ।।
जहार तच्छिरो वेगान्महदायतलोचनम् ।। ४७ ।।
रथात्कायः पपातोर्व्यां नादयन्वसुधातलम् ।।
शिरश्चाप्यब्धिपुत्रस्य हाहाकारो महानभूत् ।। ४८ ।।
द्विधा पपात तद्देहो ह्यंजनाद्रिरिवाचलः ।।
कुलिशेन यथा वारांनिधौ गिरिवरो द्विधा ।। ४९ ।।
तस्य रौद्रेण रक्तेन सम्पूर्णमभवज्जगत् ।।
ततस्समस्ता पृथिवी विकृताभून्मुनीश्वर ।। 2.5.24.५० ।।
तद्रक्तमखिलं रुद्रनियोगान्मांसमेव च ।।
महारौरवमासाद्य रक्तकुंडमभूदिह ।। ५१ ।।
तत्तेजो निर्गतं देहाद्रुद्रे च लयमागमत् ।।
वृन्दादेहोद्भवं यद्वद्गौर्य्यां हि विलयं गतम् ।।५२।।
जलंधरं हतं दृष्ट्वा देवगन्धर्वपन्नगाः ।।
अभवन्सुप्रसन्नाश्च साधु देवेति चाब्रुवन् ।। ५३ ।।
सर्वे प्रसन्नतां याता देवसिद्धमुनीश्वराः ।।
पुष्पवृष्टिं प्रकुर्वाणास्तद्यशो जगुरुच्चकैः ।। ५४ ।।
देवांगना महामोदान्ननृतुः प्रेमविह्वलाः ।।
कलस्वराः कलपदं किन्नरैस्सह संजगुः ।।५५।।
दिशः प्रसेदुस्सर्वाश्च हते वृन्दापतौ मुने ।।
ववुः पुण्यास्सुखस्पर्शा वायवस्त्रिविधा अपि ।। ५६ ।।
चन्द्रमाः शीततां यातो रविस्तेपे सुतेजसा ।।
अग्नयो जज्वलुश्शांता बभूव विकृतं नभः ।। ५७ ।।
एवं त्रैलोक्यमखिलं स्वास्थ्यमापाधिकं मुने ।।
हतेऽब्धितनये तस्मिन्हरेणानतमूर्तिना ।। ५८ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखण्डे जलंधरवर्णनं नाम चतुर्विंशोऽध्यायः ।। २४ ।।

।। सनत्कुमार उवाच ।।
अथ ब्रह्मादयो देवा मुनयश्चाखिलास्तथा ।।
तुष्टुवुर्देवदेवेशं वाग्भिरिष्टाभिरानताः ।।१।।
देवा ऊचुः ।।
देवदेव महादेव शरणागतवत्सल ।।
साधुसौख्यप्रदस्त्वं हि सर्वदा भक्तदुःखहा ।।२।।
त्वं महाद्भुतसल्लीलो भक्तिगम्यो दुरासदः ।।
दुराराध्योऽसतां नाथ प्रसन्नस्सर्वदा भव ।।३।
वेदोऽपि महिमानं ते न जानाति हि तत्त्वतः ।।
यथामति महात्मानस्सर्वे गायंति सद्यशः ।।४।।
माहात्म्यमतिगूढं ते सहस्रवदनादयः ।।
सदा गायंति सुप्रीत्या पुनंति स्वगिरं हि ते ।। ५ ।।
कृपया तव देवेश ब्रह्मज्ञानी भवेज्जडः ।।
भक्तिगम्यस्सदा त्वं वा इति वेदा ब्रुवंति हि ।। ६ ।।
त्वं वै दीनदयालुश्च सर्वत्र व्यापकस्सदा ।।
आविर्भवसि सद्भक्त्या निर्विकारस्सतां गतिः ।। ७ ।।
भक्त्यैव ते महेशान बहवस्सिद्धिमागताः ।।
इह सर्वसुखं भुक्त्वा दुःखिता निर्विकारतः ।। ८ ।
पुरा यदुपतिर्भक्तो दाशार्हस्सिद्धिमागतः।।
कलावती च तत्पत्नी भक्त्यैव परमां प्रभो।।९।।
तथा मित्रसहो राजा मदयंती च तत्प्रिया।।
भक्त्यैव तव देवेश कैवल्यं परमं ययौ ।। 2.5.25.१० ।।
सौमिनी नाम तनया कैकेयाग्रभुवस्तथा ।।
तव भक्त्या सुखं प्राप परं सद्योगिदुर्लभम् ।।११।।
विमर्षणो नृपवरस्सप्तजन्मावधि प्रभो ।।
भुक्त्वा भोगांश्च विविधांस्त्वद्भक्त्या प्राप सद्गतिम् ।।१२।।
चन्द्रसेनो नृपवरस्त्वद्भक्त्या सर्वभोगभुक् ।।
दुःखमुक्तः सुखं प्राप परमत्र परत्र च ।।१३।।
गोपीपुत्रः श्रीकरस्ते भक्त्या भुक्त्वेह सद्गतिम् ।
परं सुखं महावीरशिष्यः प्राप परत्र वै ।। १४ ।।
त्वं सत्यरथभूजानेर्दुःखहर्ता गतिप्रदः ।।
धर्मगुप्तं राजपुत्रमतार्षीस्सुखिनं त्विह ।। ।। १५ ।।
तथा शुचिव्रतं विप्रमदरिद्रं महाप्रभो ।।

त्वद्भक्तिवर्तिनं मात्रा ज्ञानिनं कृपयाऽकरोः ।।१६।।
चित्रवर्मा नृपवरस्त्वद्भक्त्या प्राप सद्गतिम् ।।
इह लोके सदा भुक्त्वा भोगानमरदुर्लभान् ।। १७ ।।
चन्द्रांगदो राजपुत्रस्सीमंतिन्या स्त्रिया सह ।।
विहाय सकलं दुःखं सुखी प्राप महागतिम् ।। १८ ।।
द्विजो मंदरनामापि वेश्यागामी खलोऽधमः ।।
त्वद्भक्तः शिव संपूज्य तया सह गतिं गतः ।।१९।।
भद्रायुस्ते नृपसुतस्सुखमाप गतव्यथः ।।
त्वद्भक्तकृपया मात्रा गतिं च परमां प्रभो ।।2.5.25.२०।।
सर्वस्त्रीभोगनिरतो दुर्जनस्तव सेवया ।।
विमुक्तोऽभूदपि सदा भक्ष्यभोजी महेश्वर।। २१ ।।
शंबरश्शंकरे भक्तश्चिताभस्मधरस्सदा ।।
नियमाद्भस्मनश्शंभो स्वस्त्रिया ते पुरं गतः ।। २२ ।।
भद्रसेनस्य तनयस्तथा मंत्रिसुतः प्रभो ।।
सुधर्मशुभकर्माणौ सदा रुद्राक्षधारिणौ ।। २३ ।।
त्वत्कृपातश्च तौ मुक्तावास्तां भुक्तेह सत्सुखम् ।।
पूर्वजन्मनि यौ कीशकुक्कुटौ रुद्रभूषणौ ।।२४।।
पिंगला च महानन्दा वेश्ये द्वे तव भक्तितः ।।
सद्गतिं प्रापतुर्नाथ भक्तोद्धारपरायण ।।२५।।
शारदा विप्रतनया बालवैधव्यमागता ।।
तव भक्तेः प्रभावात्तु पुत्रसौभा ग्यवत्यभूत् ।। २६ ।।
बिन्दुगो द्विजमात्रो हि वेश्याभोगी च तत्प्रिया ।।
वंचुका त्वद्यशः श्रुत्वा परमां गतिमाययौ ।। २७ ।।
इत्यादि बहवस्सिद्धिं गता जीवास्तव प्रभो ।।
भक्तिभावान्महेशान दीनबन्धो कृपालय ।। २८ ।।
त्वं परः प्रकृतेर्ब्रह्म पुरुषात्परमेश्वर ।।
निर्गुणस्त्रिगुणाधारो ब्रह्मविष्णुहरात्मकः ।। २९ ।।
नानाकर्मकरो नित्यं निर्विकारोऽखिलेश्वरः ।।
वयं ब्रह्मादयस्सर्वे तव दासा महेश्वर ।। 2.5.25.३० ।।
प्रसन्नो भव देवेश रक्षास्मान्सर्वदा शिव ।।
त्वत्प्रजाश्च वयं नाथ सदा त्वच्छरणं गताः ।। ३१ ।।
सनत्कुमार उवाच ।।
इति स्तुत्वा च ते देवा ब्रह्माद्यास्समुनीश्वराः ।।

तूष्णीं बभूवुर्हि तदा शिवांघ्रिद्वन्द्वचेतसः ।। ३२ ।।
अथ शंभुर्महेशानः श्रुत्वा देवस्तुतिं शुभाम्।।
दत्त्वा वरान्वरान्सद्यस्तत्रैवांतर्दधे प्रभुः ।। ३३ ।।
देवास्सर्वेऽपि मुदिता ब्रह्माद्या हतशत्रवः ।।
स्वं स्वं धाम ययुः प्रीता गायंतः शिवसद्यशः ।। ३४ ।।
इदं परममाख्यानं जलंधरविमर्दनम् ।।
महेशचरितं पुण्यं महाघौघविनाशनम् ।। ३५ ।।
देवस्तुतिरियं पुण्या सर्वपापप्रणाशिनी ।।
सर्वसौख्यप्रदा नित्यं महेशानंददायिनी ।। ३६ ।।
यः पठेत्पाठयेद्वापि समाख्यानमिदं द्वयम् ।।
भुक्त्वेह परं सौख्यं गाणपत्यमवाप्नुयात् ।। ३७ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखण्डे जलंधरवधोपाख्याने देवस्तुतिवर्णनं नाम पंचविंशोऽध्यायः ।। २५ ।।

व्यास उवाच ।।
ब्रह्मपुत्र नमस्तेऽस्तु धन्यस्त्वं शैवसत्तम ।।
यच्छ्राविता महादिव्या कथेयं शांकरी शुभा ।। १ ।।
इदानीं ब्रूहि सुप्रीत्या चरितं वैष्णवं मुने ।।
स वृन्दां मोहयित्वा तु किमकार्षीत्कुतो गतः ।। २ ।।
।। सनत्कुमार उवाच ।।
शृणु व्यास महाप्राज्ञ शैवप्रवर सत्तम ।।
वैष्णवं चरितं शंभुचरिताढ्यं सुनिर्मलम् ।। ३ ।।
मौनीभूतेषु देवेषु ब्रह्मादिषु महेश्वरः ।।
सुप्रसन्नोऽवदच्छंभुश्शरणागत वत्सलः ।। ४ ।।
शंभुरुवाच ।।
ब्रह्मन्देववरास्सर्वे भवदर्थे मया हतः ।।
जलंधरो मदंशोपि सत्यं सत्यं वदाम्यहम् ।। ५ ।।
सुखमापुर्न वा तातास्सत्यं ब्रूतामराः खलु ।।
भवत्कृते हि मे लीला निर्विकारस्य सर्वदा ।। ६ ।।
सनत्कुमार उवाच ।।
अथ ब्रह्मादयो देवा हर्षादुत्फुल्ललोचनाः ।।
प्रणम्य शिरसा रुद्रं शशंसुर्विष्णुचेष्टितम् ।। ७ ।।
।। देवा ऊचुः ।।
महादेव त्वया देवा रक्षिता श्शत्रुजाद्भयात् ।।
किंचिदन्यत्समुद्भूतं तत्र किं करवामहै ।। ८ ।।
वृन्दां विमोहिता नाथ विष्णुना हि प्रयत्नतः ।।
भस्मीभूता द्रुतं वह्नौ परमां गतिमागता ।। ९ ।।
वृन्दालावण्यसंभ्रांतो विष्णुस्तिष्ठति मोहितः ।।
तच्चिताभस्म संधारी तव मायाविमोहितः ।। 2.5.26.१० ।।
स सिद्धमुनिसंघैश्च बोधितोऽस्माभिरादरात् ।।
न बुध्यते हरिस्सोथ तव मायाविमोहितः ।। ११ ।।
कृपां कुरु महेशान विष्णुं बोधय बोधय ।।
त्वदधीनमिदं सर्वं प्राकृतं सचराचरम् ।। १२ ।।
सनत्कुमार उवाच ।।
इत्याकर्ण्य महेशो हि वचनं त्रिदिवौकसाम् ।।
प्रत्युवाच महालीलस्स्वच्छन्दस्तान्कृतांजलीन् ।। १३ ।।
महेश उवाच ।।

हे ब्रह्मन्हे सुरास्सर्वे मद्वाक्यं शृणुतादरात् ।।
मोहिनी सर्वलोकानां मम माया दुरत्यया ।।१४।।
तदधीनं जगत्सर्वं यद्देवासुरमानुषम् ।।
तयैव मोहितो विष्णुः कामाधीनोऽभवद्धरिः ।। १५ ।।
उमाख्या सा महादेवी त्रिदेवजननी परा ।।
मूलप्रकृतिराख्याता सुरामा गिरिजात्मिका ।।१६।।
गच्छध्वं शरणा देवा विष्णुमोहापनुत्तये ।।
शरण्यां मोहिनीमायां शिवाख्यां सर्वकामदाम् ।। १७।।
स्तुतिं कुरुत तस्याश्च मच्छक्तेस्तोषकारिणीम् ।।
सुप्रसन्ना यदि च सा सर्वकार्यं करिष्यति ।।१८।।
सनत्कुमार उवाच ।।
इत्युक्त्वा तान्सुराञ्शंभुः पञ्चास्यो भगवान्हरः ।।
अंतर्दधे द्रुतं व्यास सर्वैश्च स्वगणैस्सह ।।१९।।
देवाश्च शासनाच्छंभोर्ब्रह्माद्या हि सवासवा ।।
मनसा तुष्टुवुर्मूलप्रकृतिं भक्तवत्सलाम्।।2.5.26.२०।।
देवा ऊचुः ।।
यदुद्भवास्सत्त्वरजस्तमोगुणाः सर्गस्थितिध्वंसविधान कारका ।।
यदिच्छया विश्वमिदं भवाभवौ तनोति मूलप्रकृतिं नताः स्म ताम् ।।२१।।
पाहि त्रयोविंशगुणान्सुशब्दिताञ्जगत्यशेषे समधिष्ठिता परा ।।
यद्रूपकर्माणिजगत्त्रयोऽपि ते विदुर्न मूलप्रकृतिं नताः स्म ताम् ।।२२।।
यद्भक्तियुक्ताः पुरुषास्तु नित्यं दारिद्र्यमोहात्ययसंभवादीन् ।।
न प्राप्नुवंत्येव हि भक्तवत्सलां सदैव मूलप्रकृतिं नताः स्म ताम्।।२३।।
कुरु कार्यं महादेवि देवानां नः परेश्वरि ।।
विष्णुमोहं ह शिवे दुर्गे देवि नमोऽस्तु ते ।।२४।।
जलंधरस्य शंभोश्च रणे कैलासवासिनः ।।
प्रवृत्ते तद्वधार्थाय गौरीशासनतश्शिवे ।। २५ ।।
वृन्दा विमोहिता देवि विष्णुना हि प्रयत्नतः ।।
स्ववृषात्त्याजिता वह्नौ भस्मीभूता गतिं गता ।।२६।।
जलंधरो हतो युद्धे तद्भयान्मो चिता वयम् ।।
गिरिशेन कृपां कृत्वा भक्तानुग्रहकारिणा ।। २७ ।।
तदाज्ञया वयं सर्वे शरणं ते समागताः ।।
त्वं हि शंभुर्युवां देवि भक्तोद्धारपरायणौ ।। २८ ।।
वृन्दालावण्यसंभ्रातो विष्णुस्तिष्ठति तत्र वै ।।

तच्चिताभस्मसंधारी ज्ञानभ्रष्टो विमोहितः ।।२९।।
संसिद्धसुरसंघैश्च बोधितोऽपि महेश्वरि ।।
न बुध्यते हरिस्सोथ तव मायाविमोहितः ।।2.5.26.३०।।
कृपां कुरु महादेवि हरिं बोधय बोधय ।
यथा स्वलोकं पायात्स सुचित्तस्सुरकार्यकृत् ।। ३१ ।।
इति स्तुवंतस्ते देवास्तेजोमंडलमास्थितम् ।।
ददृशुर्गगने तत्र ज्वालाव्याप्ता दिगंतरम्।। ३२ ।।
तन्मध्याद्भारतीं सर्वे ब्रह्माद्याश्च सवासवाः ।।
अमराश्शुश्रुवुर्व्यास कामदां व्योमचारिणीम् ।।३३ ।।
आकाशवाण्युवाच ।।
अहमेव त्रिधा भिन्ना तिष्ठामि त्रिविधैर्गुणैः ।।
गौरी लक्ष्मीः सुरा ज्योती रजस्सत्त्वतमोगुणैः ।। ३४ ।
तत्र गच्छत यूयं वै तासामंतिक आदरात्।।
मदाज्ञया प्रसन्नास्ता विधास्यंते तदीप्सितम् ।।३५।।
सनत्कुमार उवाच।।
शृण्वतामिति तां वाचमंतर्द्धानमगान्महः ।।
देवानां विस्मयोत्फुल्लनेत्राणां तत्तदा मुने।।३६।।
ततस्सर्वेऽपि ते देवाः श्रुत्वा तद्वाक्यमादरात्।।
गौरीं लक्ष्मीं सुरां चैव नेमुस्तद्वाक्यचोदिताः।।३७।।
तुष्टुवुश्च महाभक्त्या देवीस्तास्सकलास्सुराः।।
नानाविधाभिर्वाग्भिस्ते ब्रह्माद्या नतमस्तकाः ।।३८।।
ततोऽरं व्यास देव्यस्ता आविर्भूताश्च तत्पुरः ।।
महाद्भुतैस्स्वतेजोभिर्भासयंत्यो दिगंतरम् ।।३९।।
अथ ता अमरा दृष्ट्वा सुप्रसन्नेन चेतसा।।
प्रणम्य तुष्टुवुर्भक्त्या स्वकार्यं च न्यवेदयन्।।2.5.26.४०।।
ततश्चैतास्सुरान्दृष्ट्वा प्रणतान्भक्तवत्सलः ।।
बीजानि प्रददुस्तेभ्यो वाक्यमूचुश्च सादरम् ।।४१।।
देव्य ऊचुः।।
इमानि तत्र बीजानि विष्णुर्यत्रावतिष्ठति।।
निर्वपध्वं ततः कार्यं भवतां सिद्धिमेष्यति ।।४२।।
सनत्कुमार उवाच ।।
इत्युक्त्वा तास्ततो देव्योंतर्हिता अभवन्मुने।।
रुद्रविष्णुविधीनां हि शक्तयस्त्रिगुणात्मिकाः ।।४३।।

ततस्तुष्टाः सुरास्सर्वे ब्रह्माद्याश्च सवासवाः ।।
तानि बीजानि संगृह्य ययुर्यत्र हरिः स्थितः।।४४।।
वृन्दाचिताभूमितले चिक्षिपुस्तानि ते सुराः।।
स्मृत्वा तास्संस्थितास्तत्र शिवशक्त्यंशका मुने।।४५।।
निक्षिप्तेभ्यश्च बीजेभ्यो वनस्पत्यस्त्रयोऽभवन्।।
धात्री च मालती चैव तुलसी च मुनीश्वर ।। ४६ ।।
धात्र्युद्भवा स्मृता धात्री माभवा मालती स्मृता ।।
गौरीभवा च तुलसी तमस्सत्त्वरजोगुणाः ।।४७।।
विष्णुर्वनस्पतीर्दृष्ट्वा तदा स्त्रीरूपिणीर्मुने ।।
उदतिष्ठत्तदा तासु रागातिशयविभ्रमात् ।। ४८ ।।
दृष्ट्वा स याचते मोहात्कामासक्तेन चेतसा ।।
तं चापि तुलसी धात्री रागेणैवावलोकताम् ।। ४९ ।।
यच्च बीजं पुरा लक्ष्म्या माययैव समर्पितम् ।।
तस्मात्तदुद्भवा नारी तस्मिन्नीर्ष्यापराभवत्।।2.5.26.५०।।
अतस्सा बर्बरीत्याख्यामवापातीव गर्हिताम् ।।
धात्रीतुलस्यौ तद्रागात्तस्य प्रीतिप्रदे सदा ।।५१।।
ततो विस्मृतदुःखोऽसौ विष्णुस्ताभ्यां सहैव तु ।।
वैकुंठमगमत्तुष्टस्सर्वदेवैर्नमस्कृतः ।।
कार्तिके मासि विप्रेन्द्र धात्री च तुलसी सदा ।।
सर्वदेवप्रियाज्ञेया विष्णोश्चैव विशेषतः ।।५३।।
तत्रापि तुलसी धन्यातीव श्रेष्ठा महामुने ।।
त्यक्त्वा गणेशं सर्वेषां प्रीतिदा सर्वकामदा ।।५४।।
वैकुण्ठस्थं हरिं दृष्ट्वा ब्रह्मेन्द्राद्याश्च तेऽमराः।।
नत्वा स्तुत्वा महाविष्णुं स्वस्वधामानि वै ययुः ।।५५।।
वैकुण्ठोऽपि स्वलोकस्थो भ्रष्टमोहस्सुबोधवान्।।
सुखी चाभून्मुनिश्रेष्ठ पूर्ववत्संस्मरञ्छिवम् ।।५६।।
इत्याख्यानमघोघघ्नं सर्वकामप्रदं नृणाम् ।।
सर्व कामविकारघ्नं सर्वविज्ञानवर्द्धनम्।।५७।।
य इदं हि पठेन्नित्यं पाठयेद्वापि भक्तिमन्।।
शृणुयाच्छ्रावयेद्वापि स याति परमां गतिम् ।।५८।।
पठित्वा य इदं धीमानाख्यानं परमोत्तमम्।।
संग्रामं प्रविशेद्वीरो विजयी स्यान्न संशयः।।५९।।
विप्राणां ब्रह्मविद्यादं सत्रियाणां जयप्रदम्।।

वैश्यानां सर्वधनदं शूद्राणां सुखदं त्विदम्।।2.5.26.६०।।
शंभुभक्तिप्रदं व्यास सर्वेषां पापनाशनम्।।
इहलोके परत्रापि सदा सद्गतिदायकम्।।६१।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखण्डे
जलंधरवधानंतरदेवीस्तुतिविष्णुमोहविध्वंसवर्णनं नाम षड्विंशोऽध्यायः ।।२६।।

सनत्कुमार उवाच।।
अथान्यच्छंभुचरितं प्रेमतः शृणु वै मुने।।
यस्य श्रवणमात्रेण शिवभक्तिर्दृढा भवेत्।।१।।
शंखचूडाभिधो वीरो दानवो देवकंटकः।।
यथा शिवेन निहतो रणमूर्ध्नि त्रिशूलतः ।।२।।
तच्छंभुचरितं दिव्यं पवित्रं पापनाशनम् ।।
शृणु व्यास सुसंप्रीत्या वच्मि सुस्नेहतस्तव ।।३।।
मरीचेस्तनयो धातुः पुत्रो यः कश्यपो मुनिः ।।
स धर्मिष्ठस्सृष्टिकर्त्ता विध्याज्ञप्तः प्रजापतिः ।। ४ ।।
दक्षः प्रीत्या ददौ तस्मै निजकन्यास्त्रयोदश।।
तासां प्रसूतिः प्रसभं न कथ्या बहुविस्तृताः ।।५।।
यत्र देवादिनिखिलं चराचरमभूज्जगत्।।
विस्तरात्ततप्रवक्तुं च कः क्षमोऽस्ति त्रिलोकके।।६।।
प्रस्तुतं शृणु वृत्तांतं शंभुलीलान्वितं च यत् ।।
तदेव कथयाम्यद्य शृणु भक्तिप्र वर्द्धनम् ।।७।।
तासु कश्यपत्नीषु दनुस्त्वेका वरांगना ।।
महारूपवती साध्वी पतिसौभाग्यवर्द्धिता ।। ८ ।।
आसंस्तस्या दनोः पुत्रा बहवो बलवत्तराः ।।
तेषां नामानि नोच्यंते विस्तारभयतो मुने ।। ९ ।।
तेष्वेको विप्रचित्तिस्तु महाबलपराक्रमः ।।
तत्पुत्रो धार्मिको दंभो विष्णुभक्तो जितेन्द्रियः ।।2.5.27.१०।।
नासीत्तत्तनयो वीरस्ततश्चिंतापरोऽभवत्।।
शुक्राचार्यं गुरुं कृत्वा कृष्णमंत्रमवाप्य च।।११।।
तपश्चकार परमं पुष्करे लक्षवर्षकम् ।।
कृष्णमंत्रं जजापैव दृढं बद्धासनं चिरम्।।१२।।
तपः प्रकुर्वतस्तस्य मूर्ध्नो निस्सृत्य प्रज्व लत् ।।
विससार च सर्वत्र तत्तेजो हि सुदुस्सहम् ।। १३ ।।
तेन तप्तास्सुरास्सर्वे मुनयो मनवस्तथा ।।
सुनासीरं पुरस्कृत्य ब्रह्माणं शरणं ययुः ।। १४ ।।
प्रणम्य च विधातारं दातारं सर्वसंपदाम् ।।
तुष्टुवुर्विकलाः प्रोचुः स्ववृत्तांतं विशेषतः ।। १५ ।।
तदाकर्ण्य विधातापि वैकुंठं तैर्ययौ सह ।।
तदेव विज्ञापयितुं निखिलेन हि विष्णवे ।। १६ ।।

तत्र गत्वा त्रिलोकेशं विष्णुं रक्षाकरं परम् ।।
प्रणम्य तुष्टुवुस्सर्वे करौ बद्ध्वा विनम्रकाः ।। १७ ।।
देवा ऊचुः ।।
देवदेव न जानीमो जातं किं कारणं त्विह ।।
संतप्तास्स कला जातास्तेजसा केन तद्वद ।। १८ ।।
तप्तात्मनां त्वमविता दीनबंधोऽनुजीविनाम् ।।
रक्षरक्ष रमानाथ शरण्यश्शरणागतान् ।।१९।।
।। सनत्कुमार उवाच ।।
इति श्रुत्वा वचो विष्णुर्ब्रह्मादीनां दिवौकसाम् ।।
उवाच विहसन्प्रेम्णा शरणागतवत्सलः ।। 2.5.27.२० ।।
।। विष्णुरुवाच ।।
सुस्वस्था भवताव्यग्रा न भयं कुरुतामराः ।।
नोपप्लवा भविष्यन्ते लयकालो न विद्यते ।। २१ ।।
दानवो दंभनामा हि मद्भक्तः कुरुते तपः ।।
पुत्रार्थी शमयिष्यामि तमहं वरदानतः ।। २२ ।।
सनत्कुमार उवाच ।।
इत्युक्तास्ते सुरास्सर्वे धैर्यमालंब्य वै मुने ।।
ययुर्ब्रह्मादयस्सुस्थास्स्वस्वधामानि सर्वशः ।। २३ ।।
अच्युतोऽपि वरं दातुं पुष्करं संजगाम ह ।।
तपश्चरति यत्रासौ दंभनामा हि दानवः ।। २४ ।।
तत्र गत्वा वरं ब्रूहीत्युवाच परिसांत्वयन् ।।
गिरा सूनृतया भक्तं जपंतं स्वमनुं हरिः ।। २५ ।।
तच्छ्रुत्वा वचनं विष्णोर्दृष्ट्वा तं च पुरः स्थितम् ।।
प्रणनाम महाभक्त्या तुष्ट्वाव च पुनः पुनः ।। २६ ।।
दंभ उवाच ।।
देवदेव नमस्तेऽस्तु पुंडरीकविलोचन ।।
रमानाथ त्रिलोकेश कृपा कुरु ममोपरि ।। २७ ।।
स्वभक्तं तनयं देहि महाबल पराक्रमम् ।।
त्रिलोकजयिनं वीरमजेयं च दिवौकसाम् ।। २८ ।।
सनत्कुमार उवाच ।।
इत्युक्तो दानवेन्द्रेण तं वरं प्रददौ हरिः ।।
निवर्त्य चोग्रतपसस्ततस्सोंतरधान्मुने ।। २९ ।।
गते हरौ दानवेन्द्रः कृत्वा तस्यै दिशे नमः ।।

जगाम स्वगृहं सिद्धतदाः पूर्ण मनोरथः ।। 2.5.27.३० ।।
कालेनाल्पेन तत्पत्नी सगर्भा भाग्यवत्यभूत् ।।
रराज तेजासात्यंतं रोचयंती गृहांतरम् ।। ३१ ।।
सुदामानाम गोपो यो कृष्णस्य पार्षदाग्रणीः ।।
तस्या गर्भे विवेशासौ राधाशप्तश्च यन्मुने ।।३२।।
असूत समये साध्वी सुप्रभं तनयं ततः ।।
जातकं सुचकारासौ पिताहूय मुनीन्बहून्।।३३।।
उत्सवस्सुमहानासीत्तस्मिञ्जाते द्विजोत्तम ।।
नाम चक्रे पिता तस्य शंख चूडेति सद्दिने ।।३४।।
पितुर्गेहे स ववृधे शुक्लपक्षे यथा शशी ।।
शैशवेभ्यस्तविद्यस्तु स बभूव सुदीप्तिमान्।। ३५ ।।
स बालक्रीडया नित्यं पित्रोर्हर्षं ततान ह ।।
प्रियो बभूव सर्वेषां कुलजानां विशेषतः ।।३६।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे शंखचूडोत्पत्तिवर्णनं नाम सप्तविंशोऽध्यायः।।२७।।

सनत्कुमार उवाच।।
ततश्च शंखचूडोऽसौ जैगीषव्योपदेशतः ।।
ततश्चकार सुप्रीत्या ब्रह्मणः पुष्करे चिरम् ।।१।।
गुरुदत्तां ब्रह्मविद्यां जजाप नियतेन्द्रियः।।
स एकाग्रमना भूत्वा करणानि निगृह्य च ।।२।।
तपंतं पुष्करे तं वै शंखचूडं च दानवम् ।।
वरं दातुं जगामाशु ब्रह्मालोकगुरुर्विभुः ।।३।।
वरं ब्रूहीति प्रोवाच दानवेन्द्रं विधिस्तदा।।
स दृष्ट्वा तं ननामाति नम्रस्तुष्टाव सद्गिरा ।। ४ ।।
वरं ययाचे ब्रह्माणमजेयत्वं दिवौकसाम्।।
तथेत्याह विधिस्तं वै सुप्रसन्नेन चेतसा ।।५।।
श्रीकृष्णकवचं दिव्यं जगन्मंगलमंगलम्।।
दत्तवाञ्शंखचूडाय सर्वत्र विजयप्रदम् ।।६।।
बदरीं संप्रयाहि त्वं तुलस्या सह तत्र वै ।।
विवाहं कुरु तत्रैव सा तपस्यति कामतः ।। ७ ।।
धर्मध्वजसुता सेति संदिदेश च तं विधिः ।।
अन्तर्धानं जगामाशु पश्यतस्तस्य तत्क्षणात् ।।८।।
ततस्स शंखचूडो हि तपःसिद्धोऽतिपुष्करे ।।
गले बबंध कवचं जगन्मंगलमंगलम् ।।९।।
आज्ञया ब्राह्मणस्सोऽपि तपःसिद्धमनोरथः।।
समाययौ प्रहृष्टास्यस्तूर्णं बदरिकाश्रमम्।। 2.5.28.१० ।।
यदृच्छयाऽऽगतस्तत्र शंखचूडश्च दानवः।।
तपश्चरन्ती तुलसी यत्र धर्मध्वजात्मजा ।।११।।
सुरूपा सुस्मिता तन्वी शुभभूषणभूषिता।।
सकटाक्षं ददर्शासौ तमेव पुरुषं परम्।।१२।।
दृष्ट्वा तां ललिता रम्यां सुशीलां सुन्दरीं सतीम् ।।
उवास तत्समीपे तु मधुरं तामुवाच सः।।१३।।
शंखचूड उवाच ।।
का त्वं कस्य सुता त्वं हि किं करोषि स्थितात्र किम् ।।
मौनीभूता किंकरं मां संभावितुमिहार्हसि ।। १४ ।।
सनत्कुमार उवाच।।
इत्येवं वचनं श्रुत्वा सकामं तमुवाच सा ।। १५ ।।
तुलस्युवाच ।।

धर्मध्वजसुताहं च तपस्यामि तपस्विनी।।
तपोवने च तिष्ठामि कस्त्वं गच्छ यथासुखम्।।१६।।
नारीजातिर्मोहिनी च ब्रह्मादीनां विषोपमा ।।
निन्द्या दोषकरी माया शृंखला ह्यनुशायिनाम् ।।१७।।
सनत्कुमार उवाच ।।
इत्युक्त्वा तुलसी तं च सरसं विरराम ह ।।
दृष्ट्वा तां सस्मितां सोपि प्रवक्तुमुपचक्रमे ।। १८ ।।
शंखचूड उवाच ।।
त्वया यत्कथितं देवि न च सर्वमलीककम् ।।
किञ्चित्सत्यमलीकं च किंचिन्मत्तो निशामय ।। १९ ।।
पतिव्रताः स्त्रियो याश्च तासां मध्ये त्वमग्रणीः ।।
न चाहं पापदृक्कामी तथा त्वं नेति धीर्मम ।।2.5.28.२०।।
आगच्छामि त्वत्समीपमाज्ञया ब्रह्मणोऽधुना।।
गांधर्वेण विवाहेन त्वां ग्रहीष्यामि शोभने ।। २१ ।।
शंखचूडोऽहमेवास्मि देवविद्रावकारकः ।।
मां न जानासि किं भद्रे न श्रुतोऽहं कदाचन ।।२२।।
दनुवंश्यो विशेषेण मन्द पुत्रश्च दानवः ।।
सुदामा नाम गोपोहं पार्षदश्च हरेः पुरा ।। २३ ।।
अधुना दानवेन्द्रोऽहं राधिकायाश्च शापतः ।।
जातिस्मरोऽहं जानामि सर्वं कृष्णप्रभावतः ।। २४ ।।
।। सनत्कुमार उवाच ।।
एवमुक्त्वा शंखचूडो विरराम च तत्पुरः।।
दानवेंद्रेण सेत्युक्ता वचनं सत्यमादरात् ।।
सस्मितं तुलसी तुष्टा प्रवक्तुमुपचक्रमे ।।२५।।
तुलस्युवाच ।।
त्वयाहमधुना ।। सत्त्वविचारेण पराजिता।।
स धन्यः पुरुषो लोके न स्त्रिया यः पराजितः ।।२६।।
सत्क्रियोप्यशुचिर्नित्यं स पुमान्यः स्त्रिया जितः ।।
निन्दंति पितरो देवा मानवास्सकलाश्च तम् ।। २७ ।।
शुध्येद्विप्रो दशाहेन जातके मृतसूतके ।।
क्षत्रियो द्वादशाहेन वैश्यः पञ्चदशाहतः ।। २८ ।।
शूद्रो मासेन शुध्येत्तु हीति वेदानुशासनम् ।।
न शुचिः स्त्रीजितः क्वापि चितादाहं विना पुमान् ।। २९ ।।

न गृह्णतीच्छया तस्मात्पितरः पिण्डतर्पणम् ।।
न गृह्णन्ति सुरास्तेन दत्तं पुष्पफलादिकम् ।।2.5.28.३०।।
तस्य किं ज्ञानसुतपो जपहोम प्रपूजनैः ।।
विद्यया दानतः किं वा स्त्रीभिर्यस्य मनो हृतम् ।। ३१ ।।
विद्याप्रभावज्ञानार्थं मया त्वं च परीक्षितः ।।
कृत्वा कांतपरीक्षां वै वृणुयात्कामिनी वरम् ।। ३२ ।।
सनत्कुमार उवाच ।।
इत्येवं प्रवदंत्यां तु तुलस्यां तत्क्षणे विधिः ।।
तत्राजगाम संसृष्टा प्रोवाच वचनं ततः ।। ३३ ।।
ब्रह्मोवाच ।।
किं करोषि शंखचूड संवादमनया सह ।।
गांधर्वेण विवाहेन त्वमस्या ग्रहणं कुरु ।। ३४ ।।
त्वं वै पुरुषरत्नं च स्त्रीरत्नं च त्वियं सती ।।
विदग्धाया विदग्धेन संगमो गुणवान् भवेत् ।। ३५ ।।
निर्विरोधं सुखं राजन् को वा त्यजति दुर्लभम् ।।
योऽविरोधसुखत्यागी स पशुर्नात्र संशयः ।। ३६ ।।
किं त्वं परीक्षसे कांतमीदृशं गुणिनं सति ।।
देवानामसुराणां च दानवानां विमर्दकम् ।। ३७ ।।
अनेन सार्द्धं सुचिरं विहारं कुरु सर्वदा ।।
स्थानेस्थाने यथेच्छं च सर्वलोकेषु सुन्दरि ।। ३८ ।।
अंते प्राप्स्यति गोलोके श्रीकृष्णं पुनरेव सः ।।
चतुर्भुजं च वैकुण्ठे मृते तस्मिंस्त्वमाप्स्यसि।।३९।।
सनत्कुमार उवाच।।
इत्येवमाशिषं दत्त्वा स्वालयं तु ययौ विधिः।।
गांधर्वेण विवाहेन जगृहे तां च दानवः।।2.5.28.४०।।
एवं विवाह्य तुलसीं पितुः स्थानं जगाम ह।।
स रेमे रमया सार्द्धं वासगेहे मनोरमे।।४१।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखण्डे शंखचूडतपःकरणविवाहवर्णनं नामाष्टविंशोऽध्यायः।।२८।।

सनत्कुमार उवाच ।।
स्वगेहमागते तस्मिञ्शंखचूडे विवाहिते।।
तपः कृत्वा वरं प्राप्य मुमुदुर्दानवादयः ।। १ ।।
स्वलोकादाशु निर्गत्य गुरुणा स्वेन संयुताः ।।
सर्वे सुरास्संमिलितास्समाजग्मुस्तदंतिकम्।।२।।
प्रणम्य तं सविनयं संस्तुत्य विविधादरात् ।।
स्थितास्तत्रैव सुप्रीत्या मत्वा तेजस्विनं विभुम्।।३।।
सोपि दम्भात्मजो दृष्ट्वा गतं कुल गुरुं च तम् ।।
प्रणनाम महाभक्त्या साष्टांगं परमादरात् ।। ४ ।।
अथ शुक्रः कुलाचार्यो दृष्ट्वाशिषमनुत्तमम् ।।
वृत्तांतं कथयामास देवदानवयोस्तदा ।। ५ ।।
स्वाभाविकं च तद्वैरमसुराणां पराभवम् ।।
विजयं निर्जराणां च जीवसाहाय्यमेव च ।।६।।
ततस्स सम्मतं कृत्वा सुरैस्सर्वैस्समुत्सवम् ।।
दानवाद्यसुराणां तमधिपं विदधे गुरुः ।।७।।
तदा समुत्सवो जातोऽसुराणां मुदितात्मनाम् ।।
उपायनानि सुप्रीत्या ददुस्तस्मै च तेऽखिलाः ।। ६ ।।
अथ दम्भात्मजो वीरश्शंखचूडः प्रतापवान्।।
राज्याभिषेकमासाद्य स रेजे सुरराट् तदा ।। ९ ।।
स सेनां महतीं कर्षन्दैत्यदानवरक्षसाम् ।।
रथमास्थाय तरसा जेतुं शक्रपुरीं ययौ ।।2.5.29.१०।।
गच्छन्स दानवेन्द्रस्तु तेषां सेवनकुर्वताम् ।।
विरेजे शशिवद्भानां ग्रहाणां ग्रहराडिव ।। ११ ।।
आगच्छंतं शङ्खचूडमाकर्ण्याखण्डलस्स्वराट् ।।
निखिलैरमरैस्सार्द्धं तेन योद्धुं समुद्यतः ।। १२ ।।
तदाऽसुरैस्सुराणां च संग्रामस्तुमुलो ह्यभूत् ।।
वीराऽऽनन्दकरः क्लीबभयदो रोमहर्षणः ।। १३ ।।
महान्कोलाहलो जातो वीराणां गर्जतां रणे ।।
वाद्यध्वनिस्तथा चाऽऽसीत्तत्र वीरत्ववर्द्धिनी ।। १४ ।।
देवाः प्रकुप्य युयुधुरसुरैर्बलवत्तराः ।।
पराजयं च संप्रापुरसुरा दुद्रुवुर्भयात् ।। १५।।
पलायमानास्तान्दृष्ट्वा शंखचूडस्स्वयं प्रभुः ।।
युयुधे निर्जरैस्साकं सिंहनादं प्रगर्ज्य च ।। १६ ।।

तरसा सहसा चक्रे कदनं त्रिदिवौकसाम् ।।
प्रदुद्रुवुस्सुरास्सर्वे तत्सुतेजो न सेहिरे ।। १७ ।।
यत्र तत्र स्थिता दीना गिरीणां कंदरासु च ।।
तदधीना न स्वतंत्रा निष्प्रभाः सागरा यथा ।। १८।।
सोपि दंभात्मजश्शूरो दानवेन्द्रः प्रतापवान् ।।
सुराधिकारान्संजह्रे सर्वाँल्लोकान्विजित्य च ।।१९।।
त्रैलोक्यं स्ववशंचक्रे यज्ञभागांश्च कृत्स्नशः ।।
स्वयमिन्द्रो बभूवापि शासितं निखिलं जगत् ।।2.5.29.२०।।
कौबेरमैन्दवं सौर्यमाग्नेयं याम्यमेव च ।।
कारयामास वायव्यमधिकारं स्वशक्तितः ।।२१।।
देवानामसुराणां च दानवानां च रक्षसाम् ।।
गंधर्वाणां च नागानां किन्नराणां रसौकसाम् ।। २२ ।।
त्रिलोकस्य परेषां च सकलानामधीश्वरः ।।
स बभूव महावीरश्शंखचूडो महाबली ।। २३ ।।
एवं स बुभुजे राज्यं राजराजेश्वरो महान् ।।
सर्वेषां भुवनानां च शंखचूडश्चिरं समाः ।। २४ ।।
तस्य राज्ये न दुर्भिक्षं न मारी नाऽशुभग्रहाः ।।
आधयो व्याधयो नैव सुखिन्यश्च प्रजाः सदा ।।२५।।
अकृष्टपच्या पृथिवी ददौ सस्यान्यनेकशः ।।
ओषध्यो विविधाश्चासन्सफलास्सरसाः सदा ।।२६।।
मण्याकराश्च नितरां रत्नखन्यश्च सागराः।।
सदा पुष्पफला वृक्षा नद्यस्तु सलिलावहाः ।। २७ ।।
देवान् विनाखिला जीवास्सुखिनो निर्विकारकाः ।।
स्वस्वधर्मा स्थितास्सर्वे चतुर्वर्णाश्रमाः परे ।।२८।।
तस्मिच्छासति त्रैलोक्ये न कश्चिद् दुःखितोऽभवत् ।।
भ्रातृवैरत्वमाश्रित्य केवलं दुःखिनोऽमराः।।२९।।
स शंखचूडः प्रबलः कृष्णस्य परमस्सखा ।।
कृष्णभक्तिरतस्साधुस्सदा गोलोकवासिनः ।। 2.5.29.३० ।।
पूर्वशापप्रभावेण दानवीं योनिमाश्रितः ।।
न दानवमतिस्सोभूद्दानवत्वेऽपि वै मुने ।। ३१ ।।
ततस्सुरगणास्सर्वे हृतराज्या पराजिताः ।।
संमंत्र्य सर्षयस्तात प्रययुर्ब्रह्मणस्सभाम् ।। ३२ ।।
तत्र दृष्ट्वा विधातारं नत्वा स्तुत्वा विशेषतः ।।

ब्रह्मणे कथयामासुस्सर्वं वृत्तांतमाकुलाः ।। ३३ ।।
ब्रह्मा तदा समाश्वास्य सुरान् सर्वान्मुनीनपि ।।
तैश्च सार्द्धं ययौ लोके वैकुण्ठं सुखदं सताम् ।। ३४ ।।
ददर्श तत्र लक्ष्मीशं ब्रह्मा देवगणैस्सह ।।
किरीटिनं कुंडलिनं वनमालाविभूषितम् ।। ३५ ।।
शंखचक्रगदापद्मधरं देवं चतुर्भुजम् ।।
सनंदनाद्यैः सिद्धैश्च सेवितं पीतवाससम् ।। ३६ ।।
दृष्ट्वा विष्णुं सुरास्सर्वे ब्रह्माद्यास्समुनीश्वराः ।।
प्रणम्य तुष्टुवुर्भक्त्या बद्धाञ्जलिकरा विभुम् ।।३७।।
देवा ऊचु ।।
देवदेव जगन्नाथ वैकुंठाधिपते प्रभो ।।
रक्षास्माञ्शरणापन्नाञ्छ्रीहरे त्रिजगद्गुरो ।। ३८ ।।
त्वमेव जगतां पाता त्रिलोकेशाच्युत प्रभो ।।
लक्ष्मीनिवास गोविन्द भक्तप्राण नमोऽस्तु ते ।। ३९ ।।
इति स्तुत्वा सुरास्सर्वे रुरुदुः पुरतो हरेः ।।
तच्छ्रुत्वा भगवान्विष्णुर्ब्रह्माणमिदमब्रवीत् ।। 2.5.29.४० ।।
विष्णुरुवाच ।।
किमर्थमागतोसि त्वं वैकुंठं योगिदुर्लभम् ।।
किं कष्टं ते समुद्भूतं तत्त्वं वद ममाग्रतः ।। ४१ ।।
सनत्कुमार उवाच ।।
इति श्रुत्वा हरेर्वाक्यं प्रणम्य च मुहुर्मुहुः ।।
बद्धाञ्जलिपुटो भूत्वा विन यानतकन्धरः ।। ४२ ।।
वृत्तांतं कथयामास शंखचूडकृतं तदा ।।
देवकष्टसमाख्यानं पुरो विष्णोः परात्मनः ।। ४३ ।।
हरिस्तद्वचनं श्रुत्वा सर्वतसर्वभाववित् ।।
प्रहस्योवाच भगवांस्तद्रहस्यं विधिं प्रति ।।४४ ।।
श्रीभगवानुवाच ।।
शंखचूडस्य वृत्तांतं सर्वं जानामि पद्मज ।।
मद्भक्तस्य च गोपस्य महातेजस्विनः पुरा ।।४५।।
शृणुतस्सर्ववृत्तान्तमितिहासं पुरातनम् ।।
संदेहो नैव कर्तव्यश्शं करिष्यति शङ्करः ।।४६।।
सर्वोपरि च यस्यास्ति शिवलोकः परात्परः ।।
यत्र संराजते शंभुः परब्रह्म परमेश्वरः ।।४७।।

प्रकृतेः पुरुषस्यापि योधिष्ठाता त्रिशक्तिधृक् ।।
निर्गुणस्सगुणस्सोपि परं ज्योतिः स्वरूपवान् ।।४८।।
यस्यांगजास्तु वै ब्रह्मंस्त्रयस्सृष्ट्यादिकारकाः ।।
सत्त्वादिगुणसंपन्ना विष्णुब्रह्महराभिधाः ।।४९।।
स एव परमात्मा हि विहरत्युमया सह ।।
यत्र मायाविनिर्मुक्तो नित्यानित्य प्रकल्पकः ।।2.5.29.५०।।
तत्समीपे च गोलोको गोशाला शंकरस्य वै ।।
तस्येच्छया च मद्रूपः कृष्णो वसति तत्र ह ।। ५१ ।।
तद्गवां रक्षणार्थाय तेनाज्ञप्तस्सदा सुखी।।
तत्संप्राप्तसुखस्सोपि संक्रीडति विहारवित्।।५२।।
तस्य नारी समाख्याता राधेति जगदम्बिका।।
प्रकृतेः परमा मूर्तिः पंचमी सुविहारिणी ।।५३।।
बहुगोपाश्च गोप्यश्च तत्र संति तदंगजाः ।।
सुविहारपरा नित्यं राधाकृष्णानुवर्तिनः ।।५४।।
स एव लीलया शंभोरिदानीं मोहितोऽनया ।।
संप्राप्तो दानवीं योनिं मुधा शापात्स्वदुःखदाम् ।। ५५ ।।
रुद्रशूलेन तन्मृत्यु कृष्णेन विहितः पुरा।।
ततस्स्वदेहमुत्सृज्य पार्षदस्स भविष्यति ।।५६।।
इति विज्ञाय देवेश न भयं कर्तुमर्हसि।।
शंकर शरणं यावस्स सद्यश्शंविधास्यति ।। ५७ ।।
अहं त्वं चामरास्सर्वे तिष्ठंतीह विसाध्वसाः ।।५८ ।।
सनत्कुमार उवाच ।।
इत्युक्त्वा सविधिर्विष्णुः शिवलोकं जगाम ह ।।
संस्मरन्मनसा शंभुं सर्वेशं भक्तवत्सलम् ।। ५९ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे शंखचूडवधोपाख्याने शंखचूडराज्यकरणवर्णनपूर्वक तत्पूर्वभववृत्तचरित्रवर्णनं नामैकोनत्रिंशोऽध्यायः ।। २९ ।।

सनत्कुमार उवाच ।।
गत्वा तदैव स विधिस्तदा व्यास रमेश्वरः।।
शिवलोकं महादिव्यं निराधारमभौतिकम्।। १ ।।
साह्लादोभ्यन्तरं विष्णुर्जगाम मुदिताननः ।।
नानारत्नपरिक्षिप्तं विलसंतं महोज्ज्वलम्।। २ ।।
संप्राप्य प्रथमद्वारं विचित्रं गणसेवितम् ।।
शोभितं परया लक्ष्म्या महोच्चमतिसुन्दरम् ।। ३ ।।
ददर्श द्वारपालांश्च रत्नसिंहासनस्थितान् ।।
शोभिताञ्श्वेतवस्त्रैश्च रत्नभूषणभूषितान् ।। ४ ।।
पञ्चवक्त्रत्रिनयनान्गौरसुन्दरविग्रहान् ।।
त्रिशूलादिधरान्वीरान्भस्मरुद्राक्षशोभितान् ।। ५ ।।
सब्रह्मापि रमेशश्च तान् प्रणम्य विनम्रकः ।।
कथयामास वृत्तान्तं प्रभुसंदर्शनार्थकम् ।। ६ ।।
तदाज्ञां च ददुस्तस्मै प्रविवेश तदाज्ञया ।।
परं द्वारं महारम्यं विचित्रं परम प्रभम् ।।७।।
प्रभूपकंठगत्यर्थं वृत्तांतं संन्यवेदयत् ।।
तद्द्वारपाय चाज्ञप्तस्तेनान्यं प्रविवेश ह ।।८।।
एवं पंचदशद्वारान्प्रविश्य कमलोद्भवः ।।
महाद्वारं गतस्तत्र नन्दिनं प्रददर्श ह ।।९।।
सम्यङ्नत्वा च तं स्तुत्वा पूर्ववत्तेन नन्दिना।।
आज्ञप्तश्च शनैर्विष्णुर्विवेशाभ्यंतरं मुदा ।।2.5.30.१०।।
ददर्श गत्वा तत्रोच्चैस्सभां शंभोस्समुत्प्रभाम् ।।
तां पार्षदैः परिवृतां लसद्देहैस्सुभूषिताम् ।। ११ ।।
महेश्वरस्य रूपैश्च दिग्भुजैश्शुभकांतिभिः ।।
पञ्चवक्त्रैस्त्रिनयनैश्शितिकंठमहोज्ज्वलैः ।। १२ ।।
सद्रत्नयुक्तरुद्राक्षभस्माभरणभूषितैः ।।
नवेन्दुमंडलाकारां चतुरस्रां मनोहराम् ।। १३ ।।
मणीन्द्रहारनिर्माणहीरसारसुशोभिताम् ।।
अमूल्यरत्नरचितां पद्मपत्रैश्च शोभिताम् ।। १४ ।।
माणिक्यजालमालाभिर्नानाचित्रविचित्रिताम् ।।
पद्मरागेन्द्ररचितामद्भुतां शंकरेच्छया ।। १५ ।।
सोपानशतकैर्युक्तां स्यमंतकविनिर्मितैः ।।
स्वर्णसूत्रग्रन्थियुक्तैश्चारुचन्दनपल्लवैः ।। १६ ।।

इन्द्रनीलमणिस्तंभैर्वेष्टितां सुमनोहराम् ।।
सुसंस्कृतां च सर्वत्र वासितां गंधवायुना ।। १७ ।।
सहस्रयोजनायामां सुपूर्णां बहुकिंकरैः ।।
ददर्श शंकरं सांबं तत्र विष्णुस्सुरेश्वरः ।। १८ ।।
वसंतं मध्यदेशे च यथेन्दुतारकावृतम् ।।
अमूल्यरत्ननिर्माणचित्रसिंहासनस्थितम् ।। १९ ।।
किरीटिनं कुंडलिनं रत्नमालाविभूषितम् ।।
भस्मोद्धूलितसर्वाङ्गं बिभ्रतं केलिपंकजम् ।। 2.5.30.२० ।।
पुरतो गीतनृत्यश्च पश्यंतं सस्मितं मुदा ।। २१ ।।
शांतं प्रसन्नमनसमुमाकांतं महोल्लसम् ।।
देव्या प्रदत्त ताम्बूलं भुक्तवंतं सुवासितम् ।। २२ ।।
गणैश्च परया भक्त्या सेवितं श्वेतचामरैः ।।
स्तूयमानं च सिद्धैश्च भक्तिनम्रात्मकंधरैः ।। २३ ।।
गुणातीतं परेशानं त्रिदेवजनकं विभुम् ।।
निर्विकल्पं निराकारं साकारं स्वेच्छया शिवम् ।। २४ ।।
अमायमजमाद्यञ्च मायाधीशं परात्परम् ।।
प्रकृतेः पुरुषस्यापि परमं स्वप्रभुं सदा ।। २५ ।।
एवं विशिष्टं तं दृष्ट्वा परिपूर्णतमं समम् ।।
विष्णुर्ब्रह्मा तुष्टुवतुः प्रणम्य सुकृतांजली ।। २६ ।।
विष्णुविधी ऊचतुः ।।
देवदेव महादेव परब्रह्माखिलेश्वर ।।
त्रिगुणातीत निर्व्यग्र त्रिदेवजनक प्रभो ।। २७ ।।
वयं ते शरणापन्ना रक्षस्मान्दुखितान्विभो ।।
शंखचूडार्दितान्क्लिष्टान्सन्नाथान्परमेश्वर ।। २८ ।।
अयं योऽधिष्ठितो लोको गोलोक इति स स्मृतः ।।
अधिष्ठाता तस्य विभुः कृष्णोऽयं त्वदधिष्ठितः ।। २९ ।।
पार्षदप्रवरस्तस्य सुदामा दैवयंत्रितः ।।
राधाशप्तो बभूवाथ शंखचूडश्च दानवः ।। 2.5.30.३० ।।
तेन निस्सारिताः शंभो पीड्यमानाः समंततः ।।
हृताधिकारस्त्रिदशा विचरंति महीतले ।। ३१ ।।
त्वां विना न स वध्यश्च सर्वेषां त्रिदिवौकसाम् ।।
तं घातय महेशान लोकानां सुखमावह ।। ३२ ।।
त्वमेव निर्गुणस्सत्योऽनंतोऽनंतपराक्रमः ।।

सगुणश्च सन्निवेशः प्रकृतेः पुरुषात्परः ।। ३३ ।।
रजसा सृष्टिसमये त्वं ब्रह्मा सृष्टिकृत्प्रभो ।।
सत्त्वेन पालने विष्णुस्त्रिभुवावन कारकः ।। ३४ ।।
तमसा प्रलये रुद्रो जगत्संहारकारकः ।।
निस्त्रैगुण्ये शिवाख्यातस्तुर्य्यो ज्योतिः स्वरूपकः ।। ३५ ।।
त्वं दीक्षया च गोलोके त्वं गवां परिपालकः।।
त्वद्गोशालामध्यगश्च कृष्णः क्रीडत्यहर्निशम् ।। ३६।।
त्वं सर्वकारणं स्वामी विधि विष्ण्वीश्वरः परम् ।।
निर्विकारी सदा साक्षी परमात्मा परेश्वरः ।। ३७ ।।
दीनानाथसहायी च दीनानां प्रतिपालकः ।।
दीनबंधुस्त्रिलोकेशश्शरणागतवत्सलः ।। ३८ ।।
अस्मानुद्धर गौरीश प्रसीद परमेश्वरः ।।
त्वदधीना वयं नाथ यदिच्छसि तथा कुरु ।। ३९ ।।
सनत्कुमार उवाच ।।
इत्युक्त्वा तौ सुरौ व्यास हरिर्ब्रह्मा च वै तदा।।
विरेमतुः शिवं नत्वा करौ बद्ध्वा विनीतकौ।।2.5.30.४०।।
इति श्रीशिव महापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे शंखचूडवधे देवदेवस्तुतिर्नाम त्रिंशोऽध्यायः ।। ३० ।।

सनत्कुमार उवाच ।।
अथाकर्ण्य वचश्शंभुर्हरिविध्योस्सुदीनयोः ।।
उवाच विहसन्वाण्या मेघनादगभीरया ।।१।।
शिव उवाच ।।
हे हरे वत्स हे ब्रह्मंस्त्यजतं सर्वशो भयम् ।।
शंखचूडोद्भवं भद्रं सम्भविष्यत्यसंशयम् ।। २ ।।
शंखचूडस्य वृत्तांतं सर्वं जानामि तत्त्वतः ।।
कृष्णभक्तस्य गोपस्य सुदाम्नश्च पुरा प्रभो।।३।।
मदाज्ञया हृषीकेशो कृष्णरूपं विधाय च ।।
गोशालायां स्थितो रम्ये गोलोके मदधिष्ठिते।।४।।
स्वतंत्रोहमिति स्वं स मोहं मत्वा गतः पुरा ।।
क्रीडास्समकरोद्बह्वीस्स्वैरवर्तीव मोहितः ।।५।।
तं दृष्ट्वा मोहमत्युग्रं तस्याहं मायया स्वया ।।
तेषां संहृत्य सद्बुद्धिं शापं दापितवान् किल ।।६।।
इत्थं कृत्वा स्वलीलां तां मायां संहृतवानहम् ।।
ज्ञानयुक्तास्तदा ते तु मुक्तमोहास्सुबुद्धयः ।। ।।७।।
समीपमागतास्ते मे दीनीभूय प्रणम्य माम् ।।
अकुर्वन्सुनुतिं भक्त्या करौ बद्ध्वा विनम्रकाः।।८।।
वृत्तांतमवदन्सर्वं लज्जाकुलितमानसाः ।।
ऊचुर्मत्पुरतो दीना रक्षरक्षेति वै गिरः ।।९।।
तदा त्वहं भवस्तेषां संतुष्टः प्रोक्तवान् वचः।।
भयं त्यजत हे कृष्ण यूयं सर्वे मदाज्ञया ।।2.5.31.१०।।
रक्षकोऽहं सदा प्रीत्या सुभद्रं वो भविष्यति।।
मदिच्छयाऽखिलं जातमिदं सर्वं न संशयः ।। ११ ।।
स्वस्थानं गच्छ त्वं सार्द्धं राधया पार्षदेन च ।।
दानवस्तु भवेत्सोयं भारतेऽत्र न संशयः ।।१२।।
शापोद्धारं करिष्येऽहं युवयोस्समये खलु ।।
मदुक्तमिति संधार्य शिरसा राधया सह ।।१३।।
श्रीकृष्णोऽमोददत्यंतं स्वस्थानमगमत्सुधीः ।।
न्यष्ठातां सभयं तत्र मदाराधनतत्परौ।।१४।।
मत्वाखिलं मदधीनमस्वतन्त्रं निजं च वै।।
स सुदामाऽभवद्राधाशापतो दानवेश्वरः।।१५।।
शङ्खचूडाभिधो देवद्रोही धर्मविचक्षणः ।।

क्लिश्नाति सुबलात्कृत्स्नं सदा देवगणं कुधीः ।।१६।। मन्मायामोहितस्सोतिदुष्टमंत्रिसहा यवान् ।।
तद्भयं त्यजताश्वेव मयि शास्तरि वै सति ।। १७ ।।
सनत्कुमार उवाच ।।
इत्यूचिवाञ्शिवो यावद्धरिब्रह्मपुरः कथाम् ।।
अभवत्तावदन्यच्च चरितं तन्मुने शृणु।।१८।।
तस्मिन्नेवांतरे कृष्णो राधया पार्षदैः सह।।
सद्गोपैराययौ शंभुमनुकूलयितुं प्रभुम्।।१९।।
प्रभुं प्रणम्य सद्भक्त्या मिलित्वा हरिमादरात् ।।
संमतो विधिना प्रीत्या संतस्थौ शिवशासनात्।।2.5.31.२०।।
ततः शंभुं पुनर्नत्वा तुष्टाव विहिताञ्जलिः ।।
श्रीकृष्णो मोहनिर्मुक्तो ज्ञात्वा तत्त्वं शिवस्य हि ।। २१ ।।
श्रीकृष्ण उवाच ।।
देवदेव महादेव परब्रह्म सतांगते ।।
क्षमस्व चापराधं मे प्रसीद परमेश्वर ।। २२ ।।
त्वत्तः शर्व च सर्वं च त्वयि सर्वं महेश्वर ।।
सर्वं त्वं निखिलाधीश प्रसीद परमेश्वर ।।२३।।
त्वं ज्योतिः परमं साक्षात्सर्वव्यापी सनातनः ।।
त्वया नाथेन गौरीश सनाथास्सकला वयम् ।।२४।।
सर्वोपरि निजं मत्वा विहरन्मोहमाश्रितः ।।
तत्फलं प्राप्तवानस्मि शापं प्राप्तस्सवामकः ।।२५।।
पार्षदप्रवरो यो मे सुदामा नाम गोपकः।।
स राधाशापतः स्वामिन्दानवीं योनिमाश्रितः ।। २६ ।।
अस्मानुद्धर दुर्ग्गेश प्रसीद परमेश्वर ।।
शापोद्धारं कुरुष्वाद्य पाहि नश्शरणागतान्।।२७।।
इत्युक्त्वा विररामैव श्रीकृष्णो राधया सह।।
प्रसन्नोऽभूच्छिवस्तत्र शरणागतवत्सलः।।२८
श्रीशिव उवाच ।।
हे कृष्ण गोपिकानाथ भयं त्यज सुखी भव ।।
मयानुगृह्णता तात सर्वमाचरितं त्विदम् ।।२९।।
संभविष्यति ते भद्रं गच्छ स्वस्थानमुत्तमम् ।।
स्थातव्यं स्वाधिकारे च सावधानतया सदा ।। 2.5.31.३० ।।
विहरस्व यथाकामं मां विज्ञाय परात्परम् ।।
स्वकार्यं कुरु निर्व्यग्रं राधया पार्षदैः खलु ।।३१।।

वाराहप्रवरे कल्पे तरुण्या राधया सह ।।
शापप्रभावं भुक्त्वा वै पुनरायास्यति स्वकम्।।३२
सुदामा पार्षदो यो हि तव कृष्ण प्रियप्रियः ।।
दानवीं योनिमाश्रित्येदानीं क्लिश्नाति वै जगत्।।३३।।
शापप्रभावाद्राधाया देवशत्रुश्च दानवः ।।
शङ्खचूडाभिधस्सोऽति दैत्यपक्षी सुरदुहः ।। ३४ ।।
तेन निस्सारिता देवास्सेन्द्रा नित्यं प्रपीडिताः ।।
हृताधिकारा विकृतास्सर्वे याता दिशो दश ।।३५।।
ब्रह्माच्युतौ तदर्थे ही हागतौ शरणं मम ।।
तेषां क्लेशविनिर्मोक्षं करिष्ये नात्र संशयः ।।३६।।
सनत्कुमार उवाच ।।
इत्युक्त्वा शंकरः कृष्णं पुनः प्रोवाच सादरम्।।
हरिं विधिं समाभाष्य वचनं क्लेशनाशनम् ।।३७।।
शिव उवाच ।।
हे हरे हे विधे प्रीत्या ममेदं वचनं शृणु ।।
गच्छतं त्वरितं तातौ देवानंदाय निर्भयम् ।। ३८ ।।
कैलासवासिनं रुद्रं मद्रूपं पूर्णमुत्तमम् ।।
देवकार्यार्थमुद्भूतं पृथगाकृतिधारिणम् ।। ३९ ।।
एतदर्थे हि मद्रूपः परिपूर्णतमः प्रभुः ।।
कैलासे भक्तवशतस्संतिष्ठति गिरौ हरे ।। 2.5.31.४० ।।
मत्तस्त्वत्तो न भेदोऽस्ति युवयोस्सेव्य एव सः ।।
चराचराणां सर्वेषां सुरादीनां च सर्वदा ।। ४१ ।।
आवयोभेदकर्ता यस्स नरो नरकं व्रजेत् ।।
इहापि प्राप्नुयात्कृष्टं पुत्रपौत्रविवर्जितः ।। ४२ ।।
इत्युक्तवंतं दुर्गेशं प्रणम्य च मुहुर्मुहुः ।।
राधया सहितः कृष्णः स्वस्थानं सगणो ययौ ।। ४३ ।।
हरिर्ब्रह्मा च तौ व्यास सानन्दौ गतसाध्वसौ ।।
मुहुर्मुहुः प्रणम्येशं वैकुंठं ययतुर्द्रुतम् ।। ४४ ।।
तत्रागत्याखिलं वृत्तं देवेभ्यो विनिवेद्य तौ ।।
तानादाय ब्रह्मविष्णू कैलासं ययतुर्गिरिम् ।। ४५ ।।
तत्र दृष्ट्वा महेशानं पार्वतीवल्लभं प्रभुम् ।।
दीनरक्षात्तदेहं च सगुणं देवनायकम् ।। ४६ ।।
तुष्टुवुः पूर्ववत्सर्वे भक्त्या गद्गदया गिरा ।।

करौ बद्ध्वा नतस्कंधा विनयेन समन्विताः ।। ४७ ।।
देवा ऊचुः ।।
देवदेव महादेव गिरिजानाथ शंकर ।।
वयं त्वां शरणापन्ना रक्ष देवान्भयाकुलान् ।। ४८ ।।
शंखचूडदानवेन्द्रं जहि देवनिषूदनम् ।।
तेन विक्लाविता देवाः संग्रामे च पराजिताः ।।४९।।
हृताधिकाराः कुतले विचरंति यथा नराः ।।
देवलोको हि दुर्दृश्यस्तेषामासीच्च तद्भयात् ।। 2.5.31.५० ।।
दीनोद्धर कृपासिन्धो देवानुद्धर संकटात् ।।
शक्रं भयान्महेशानहत्वा तं दानवाधिपम् ।। ५१ ।।
इति श्रुत्वा वचश्शंभुर्देवानां भक्तवत्सलः ।।
उवाच विहसन् वाण्या मेघनादगभीरया ।। ५२ ।।
श्रीशंकर उवाच ।।
हे हरे हे विधे देवाः स्वस्थानं गच्छत धुवम् ।।
शंखचूडं वधिष्यामि सगणं नात्र संशयः ।।५३।।
सनत्कुमार उवाच ।।
इत्याकर्ण्य महेशस्य वचः पीयूषसंनिभम् ।।
ते सर्वे प्रमुदा ह्यासन्नष्टं मत्वा च दानवम् ।। ५४ ।।
हरिर्जगाम वैकुंठं सत्यलोके विधिस्तदा ।।
प्रणिपत्य महेशं च सुराद्याः स्वपदं ययुः ।। ५५ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखण्डे शंखचूडवधे शिवोपदेशो नामैकत्रिंशोऽध्यायः ।। ३१ ।।

सनत्कुमार उवाच ।।

अथेशानो महारुद्रो दुष्टकालस्सतांगतिः ।।

शंखचूडवधं चित्ते निश्चिकाय सुरेच्छया ।। १ ।।

दूतं कृत्वा चित्ररथं गंधर्वेश्वरमीप्सितम् ।।

शीघ्रं प्रस्थापयामास शंखचूडांतिके मुदा ।। २ ।।

सर्वेश्वराज्ञया दूतो ययौ तन्नगरं च सः ।।

महेन्द्रनगरोत्कृष्टं कुबेरभवनाधिकम्।। ३ ।।

गत्वा ददर्श तन्मध्ये शंखचूडालयं वरम् ।।

राजितं द्वादशैर्द्वारैर्द्वारपालसमन्वितम् ।।४।।

स दृष्ट्वा पुष्पदन्तस्तु वरं द्वारं ददर्श सः।।

कथयामास वृत्तांतं द्वारपालाय निर्भयः ।। ५।।

अतिक्रम्य च तद्द्वारं जगामाभ्यंतरे मुदा।।

अतीव सुन्दरं रम्यं विस्तीर्णं समलंकृतम्।।६।।

स गत्वा शंखचूडं तं ददर्श दनुजाधिपम् ।।

वीरमंडल मध्यस्थं रत्नसिंहासनस्थितम् ।।७।।

दानवेन्द्रैः परिवृतं सेवितं च त्रिकोटिभिः ।।

शतः कोटिभिरन्यैश्च भ्रमद्भिश्शस्त्रपाणिभिः ।।८।।

एवंभूतं च तं दृष्ट्वा पुष्पदंतस्सविस्मयः ।।

उवाच रणवृत्तांतं यदुक्तं शंकरेण च ।। ९ ।।

पुष्पदंत उवाच ।।

राजेन्द्र शिवदूतोऽहं पुष्पदंताभिधः प्रभो ।।

यदुक्तं शंकरेणैव तच्छृणु त्वं ब्रवीमि ते ।। 2.5.१० ।।

शिव उवाच

राज्यं देहि च देवानामधिकारं हि सांप्रतम् ।।

नोचेत्कुरु रणं सार्द्धं परेण च मया सताम् ।। ११ ।।

देवा मां शरणापन्ना देवेशं शंकरं सताम् ।।

अहं क्रुद्धो महारुद्रस्त्वां वधिष्याम्यसंशयम् ।। १२ ।।

हरोऽस्मि सर्वदेवेभ्यो ह्यभयं दत्तवानहम्।।

खलदंडधरोऽहं वै शरणागतवत्सलः ।। १३ ।।

राज्यं दास्यसि किं वा त्वं करिष्यसि रणं च किम् ।।

तत्त्वं ब्रूहि द्वयोरेकं दानवेन्द्र विचार्य वै ।। १४ ।।

पुष्पदंत उवाच ।।

इत्युक्तं यन्महेशेन तुभ्यं तन्मे निवेदितम् ।।

वितथं शंभुवाक्यं न कदापि दनुजाधिप ।। १५ ।।

अहं स्वस्वामिनं गंतुमिच्छामि त्वरितं हरम् ।।

गत्वा वक्ष्यामि किं शंभोस्तथा त्वं वद मामिह ।। १६ ।।

।। सनत्कुमार उवाच

इत्थं च पुष्पदंतस्य शिवदूतस्य सत्पतेः ।।

आकर्ण्य वचनं राजा हसित्वा तमुवाच सः ।। १७ ।।

शंखचूड उवाच ।।

राज्यं दास्ये न देवेभ्यो वीरभोग्या वसुंधरा ।।

रणं दास्यामि ते रुद्र देवानां पक्षपातिने ।।१८।।

यस्योपरि प्रयायी स्यात्स वीरो भुवेनऽधमः।

अतः पूर्वमहं रुद्र त्वां गमिष्याम्यसंशयम्।।१९।।

प्रभात आगमिष्यामि वीरयात्रा विचारतः ।।

त्वं गच्छाचक्ष्व रुद्राय हीदृशं वचनं मम ।। 2.5.२० ।। ।।

इति श्रुत्वा शंखचूडवचनं सुप्रहस्य सः ।।

उवाच दानवेन्द्रं स शंभुदूतस्तु गर्वितम् ।।२१।।

अन्येषामपि राजेन्द्र गणानां शंकरस्य च ।।

न स्थातुं संमुखे योग्यः किं पुनस्तस्य संमुखम् ।।२२।।

स त्वं देहि च देवानामधिकाराणि सर्वशः ।।

त्वमरे गच्छ पातालं यदि जीवितुमिच्छसि।।२३।।

सामान्यममरं तं नो विद्धि दानवसत्तम।।

शंकरः परमात्मा हि सर्वेषामीश्वरेश्वरः।।२४।।

इन्द्राद्यास्सकला देवा यस्याज्ञावर्तिनस्सदा।।

सप्रजापतयस्सिद्धा मुनयश्चाप्यहीश्वराः ।।२५।।

हरेर्विधेश्च स स्वामी निर्गुणस्सगुणस्स हि ।।
यस्य भ्रूभंगमात्रेण सर्वेषां प्रलयो भवेत् ।।२६।।
शिवस्य पूर्णरूपश्च लोकसंहारकारकः।।
सतां गतिर्दुष्टहंता निर्विकारः परात्परः ।।२७।।
ब्रह्मणोधिपतिस्सोऽपि हरेरपि महेश्वरः।।
अवमान्या न वै तस्य शासना दानवर्षभ।।२८।।
किं बहूक्तेन राजेन्द्र मनसा संविचार्य च ।।
रुद्रं विद्धि महेशानं परं ब्रह्म चिदात्मकम् ।।२९।।
देहि राज्यं हि देवानामधिकारांश्च सर्वशः ।।
एवं ते कुशलं तात भविष्यत्यन्यथा भयम् ।2.5.३०।
सन्त्कुमार उवाच।।
इति श्रुत्वा दानवेंद्रः शंखचूडः प्रतापवान् ।।
उवाच शिवदूतं तं भवितव्यविमोहितः।।३१।।
शंखचूड उवाच ।।
स्वतो राज्यं न दास्यामि नाधिकारान् विनिश्चयात् ।।
विना युद्धं महेशेन सत्यमेतद्ब्रवीम्यहम् ।। ३२ ।।
कालाधीनं जगत्सर्वं विज्ञेयं सचराचरम्।।
कालाद्भवति सर्वं हि विनश्यति च कालतः।।३३।।
त्वं गच्छ शंकरं रुद्रं मयोक्तं वद तत्त्वत।।
स च युक्तं करोत्वेवं बहुवार्तां कुरुष्व नो ।। ३४ ।।
सनत्कुमार उवाच।।
इत्युक्त्वा शिवदूतोऽसौ जगाम स्वामिनं निजम् ।।
यथार्थं कथयामास पुष्पदंतश्च सन्मुने ।। ३५ ।।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखण्डे शंखचूडवधे दूतगमनं नाम द्वात्रिंशोऽध्यायः ।। ३२ ।।

सनत्कुमार उवाच ।।
तस्य तद्वाक्यमाकर्ण्य सुरराट् ततः ।।
सक्रोधः प्राह गिरिशो वीरभद्रादिकान्गणान् ।। १ ।।
रुद्र उवाच ।।
हे वीरभद्र हे नंदिन्क्षेत्रपालष्टभैरवाः ।।
सर्वे गणाश्च सन्नद्धास्सायुधा बलशालिनः ।। २ ।।
कुमाराभ्यां सहैवाद्य निर्गच्छंतु ममाज्ञया।।
स्वसेनया भद्रकाली निर्गच्छतु रणाय च।।
शंखचूडवधार्थाय निर्गच्छाम्यद्य सत्वरम् ।।।। ३ ।।
सनत्कुमार उवाच ।।
इत्याज्ञाप्य महेशानो निर्ययौ सैन्यसंयुतः ।।
सर्वे वीरगणास्तस्यानु ययुस्संप्रहर्षिताः ।। ४ ।।
एतस्मिन्नंतरे स्कंदगणेशौ सर्वसैन्यपौ ।।
यततुर्मुदितौ नद्धौ सायुधौ च शिवांतिके ।।५।।
वीरभद्रश्च नन्दी च महाकालस्सुभद्रकः ।।
विशालाक्षश्च बाणश्च पिंगलाक्षो विकंपनः ।। ६ ।। ।।
विरूपो विकृतिश्चैव मणिभद्रश्च बाष्कलः ।।
कपिलाख्यो दीर्घदंष्ट्रो विकरस्ताम्रलोचनः ।। ७ ।।
कालंकरो बलीभद्रः कालजिह्वः कुटीचरः ।।
बलोन्मत्तो रणश्लाघ्यो दुर्जयो दुर्गमस्तथा ।।८।।
इत्यादयो गणेशानास्सैन्यानां पतयो वराः ।।
तेषां च गणनां वच्मि सावधानतया शृणु ।। ९ ।।
शंखकर्णः कोटिगणैर्युतः परविमर्दकः ।।
दशभिः केकराक्षश्च विकृतोऽष्टाभिरेव च ।। 2.5.33.१० ।।
चतुष्षष्ट्या विशाखश्च नवभिः पारियात्रिकः ।।
षड्भिस्सर्वान्तकः श्रीमांस्त थैव विकृताननः ।। ११ ।।
जालको हि द्वादशभिः कोटिभिर्गणपुंगवः ।।
सप्तभिस्समदः श्रीमान्दुन्दुभोऽष्टाभिरेव च ।। १२ ।।
पंचभिश्च करालाक्षः षड्भिस्संदारको वरः ।।
कोटिकोटिभिरेवेह कंदुकः कुंडकस्तथा ।। १३ ।।
विष्टंभोऽष्टाभिरेवेह गणपस्सर्वस त्तमः ।।
पिप्पलश्च सहस्रेण संनादश्च तथाविधः ।।१४।।
आवेशनस्तथाष्टाभिस्त्वष्टभिश्चन्द्रतापनः ।।

महाकेशः सहस्रेण कोटीनां गणपो वृतः ।। १५ ।।
कुंडी द्वादशभिर्वीरस्तथा पर्वतकश्शुभः ।।
कालश्च कालकश्चैव महाकालश्शतेन वै ।। १६ ।।
अग्निकश्शत कोट्या च कोट्याग्निमुख एव च ।।
आदित्यो ह्यर्द्धकोट्या च तथा चैवं घनावहः ।। १७ ।।
सनाहश्च शतेनैव कुमुदः कोटिभिस्तथा ।।
अमोघः कोकिलश्चैव शतकोट्या सुमंत्रकः ।। १८ ।।
काकपादः कोटिषष्ट्या षष्ट्या संतानकस्तथा ।।
महाबलश्च नवभिः पञ्चभिर्मधुपिंगल ।। १९ ।।
नीलो नवत्या देवेशः पूर्णभद्रस्तथैव च ।।
कोटीनां चैव सप्तानां चतुर्वक्त्रो महाबलः ।। 2.5.33.२० ।।
कोटिकोटिसहस्राणां शतैर्विंशतिभिस्तथा ।।
तत्राजग्मुस्तथा वीरास्ते सर्वे संगरोत्सवे ।। २१ ।।
भूतकोटिसहस्रेण प्रमथैर्कोटिभि स्त्रिभिः ।।
वीरभद्रश्चतुष्षष्ट्या लोमजानां त्रिकोटिभिः ।।२२।।
काष्ठारूढश्चतुःषष्ट्या सुकेशो वृषभस्तथा ।।
विरूपाक्षश्च भगवांश्चतुष्षष्ट्या सनातनः ।। २३ ।।
तालकेतुः षडास्यश्च पंचास्यश्च प्रतापवान् ।।
संवर्तकस्तथा चैत्रो लंकुलीशस्स्वयं प्रभुः ।। २४ ।।
लोकांतकश्च दीप्तात्मा तथा दैत्यांतकः प्रभुः ।।
देवो भृङ्गीरिटिः श्रीमान्देवदेवप्रियस्तथा ।।२५।।
अशनिर्भानुकश्चैव चतुः षष्ट्या सहस्रशः ।।
कंकालः कालकः कालो नन्दी सर्वान्तकस्तथा ।।२६।।
एते चान्ये च गणपा असंख्याता महाबलाः।।
युद्धार्थं निर्ययुः प्रीत्या शंखचूडेन निर्भयाः ।। २७ ।।
सर्वे सहस्रहस्ताश्च जटामुकुटधारिणः ।।
चन्द्ररेखावतंसाश्च नीलकंठास्त्रिलोचनाः ।।२८।।
रुद्राक्षाभरणास्सर्वे तथा सद्भस्मधारिणः ।।
हारकुंडलकेयूरमुकुटाद्यैरलंकृताः ।। २९ ।।
ब्रह्मेन्द्रविष्णुसंकाशा अणिमादिगुणैर्वृताः ।।
सूर्यकोटिप्रतीकाशाः प्रवीणा युद्धकर्मणि ।।2.5.33.३०।।
पृथिवीचारिणः केचित्केचित्पातालचारिणः ।।
केचिद्व्योमचराः केचित्सप्तस्वर्गचरा मुने ।। ३१ ।।

किं बहूक्तेन देवर्षे सर्वलोकनिवासिनः ।।
ययुश्शिवगणास्सर्वे युद्धार्थं दानवैस्सह ।।३२।।
अष्टौ च भैरवा रौद्रा रुद्रा श्चैकादशाशु ये।।
वसवोऽष्टौ वासवश्चादित्या द्वादश ते द्रुतम्।।३३।।
हुताशनश्च चन्द्रश्च विश्वकर्माश्विनौ च तौ ।।
कुबेरश्च यमश्चैव निर्ऋतिर्नलकूबरः ।। ३४ ।।
वायुश्च वरुणश्चैव बुधश्च मंगलश्च वै ।।
ग्रहाश्चान्ये महेशेन कामदेवश्च वीर्यवान् ।। ३१ ।।
उग्रदंष्ट्रश्चोग्रदण्डः कोरटः कोटभस्तथा ।।
स्वयं शतभुजा देवी भद्रकाली महेश्वरी ।। ३६ ।।
रत्नेन्द्रसारनिर्माणविमानोपरि संस्थिता।। ।
रक्तवस्त्रपरीधाना रक्तमाल्यानुलेपना ।।३७।।
नृत्यंती च हसंती च गायंती सुस्वरं मुदा ।।
अभयं ददती स्वेभ्यो भयं चारिभ्य एव सा।।३८।।
बिभ्रती विकटां जिह्वां सुलोलां योजनायताम् ।।
शंखचक्रगदापद्मखड्गचर्मधनुश्शरान्।। ३९ ।।
खर्परं वर्तुलाकारं गंभीरं योजनायतम्।।
त्रिशूलं गगनस्पर्शिं शक्तिं च योजनायताम् ।। 2.5.33.४० ।।
मुद्गरं मुसलं वक्त्रं खड्गं फलकमुल्बणम् ।।
वैष्णवास्त्रं वारुणास्त्रं वायव्यं नागपाशकम् ।।४१।।
नारायणास्त्रं गांधर्वं ब्रह्मास्त्रं गारुडं तथा ।।
पार्जन्यं च पाशुपतं जृंभणास्त्रं च पार्वतम्।।४२।।
महावीरं च सौरं च कालकालं महानलम् ।।
महेश्वरास्त्रं याम्यं च दंडं संमोहनं तथा ।। ४३ ।।
समर्थमस्त्रकं दिव्यं दिव्यास्त्रं शतकं परम्।।
बिभ्रती च करैस्सर्वैरन्यान्यपि च सा तदा ।। ४४ ।।
आगत्य तस्थौ सा तत्र योगिनीनां त्रिकोटिभिः ।।
सार्द्धं च डाकिनीनां वै विकटानां त्रिकोटिभिः ।। ४५ ।।
भूतप्रेतपिशाचाश्च कूष्माण्डा ब्रह्मराक्षसाः ।।
वेताला राक्षसाश्चैव यक्षाश्चैव सकिन्नराः ।।४६।।
तश्चैवाभिवृतः स्कंदः प्रणम्य चन्द्रशेखरम् ।।
पितुः पार्श्वे सहायो यः समुवास तदाज्ञया ।। ४७ ।।
अथ शम्भुस्समानीय स्वसैन्यं सकलं तदा।।

युद्धार्थमगमद्रुद्रश्शंङ्खचूडेन निर्भयः ।। ४८ ।।
चन्द्रभागानदीतीरे वटमूले मनोहरे ।।
तत्र तस्थौ महादेवो देवनिस्ता रहेतवे ।। ४९ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखण्डे शङ्खचूडवधे महादेवयुद्धयात्रावर्णनं नाम त्रय स्त्रिंशत्तमोऽध्यायः ।। ३३ ।।

व्यास उवाच ।।
विधितात महाबुद्धे मुने जीव चिरं समाः ।।
कथितं सुमहच्चित्रं चरितं चन्द्रमौलिनः ।।१।।
शिवदूते गते तत्र शङ्खचूडश्च दानवः ।।
किं चकार प्रतापी स तत्त्वं वद सुविस्तरम् ।। २ ।।
सनत्कुमार उवाच ।।
अथ दूते गते तत्र शंखचूडः प्रतापवान् ।।
उवाच तुलसीं वार्तां गत्वाभ्यंतरमेव ताम् ।। ३ ।।
शङ्खचूड उवाच ।।
शम्भुदूतमुखाद्देवि युद्धायाहं समुद्यतः ।।
तेन गच्छाम्यहं योद्धुं शासनं कुरु मे ध्रुवम् ।। ४ ।।
इत्येवमुक्त्वा स ज्ञानी नानाबोधनतः प्रियाम्।।
क्रीडां चकार हर्षेण तमनादृत्य शंकरम् ।। ५ ।।
तौ दम्पती चिक्रीडाते निमग्नौ सुखसागरे ।।
नानाकामकलाभिश्च निशि चाटुशुतैरपि ।। ६ ।।
ब्राह्मे मुहूर्त उत्थाय प्रातःकृत्यं विधाय च ।।
नित्यकार्यं च कृत्वादौ ददौ दानमनंतकम् ।। ७ ।।
पुत्रं कृत्वा च राजेन्द्रं सर्वेषु दान वेषु च ।।
पुत्रे समर्प्य भार्यां च स राज्यं सर्वसंपदम् ।। ८ ।।
प्रियामाश्वासयामास स राजा रुदतीं पुनः ।।
निषेधतीं च गमनं नाना वार्तां प्रकथ्य च ।। ९ ।
निजसेनापतिं वीरं समाहूय समादृतः ।।
आदिदेश स सनद्धस्संग्रामं कर्तुऽमुद्यतः ।। 2.5.34.१० ।।
शंखचूड उवाच।।
अद्य सेनापते वीरास्सर्वे समरशालिनः ।।
संनद्धाखिलकर्माणो निर्गच्छंतु रणाय च ।। ११ ।।
दैत्याश्च दानवाः शूरा षडशीतिरुदा युधाः ।।
कंकानां बलिनां शीघ्रं सेना निर्यांतु निर्भयाः ।। १२ ।।
पञ्चाशदसुराणां हि निर्गच्छंतु कुलानि वै ।।
कोटिवीर्याणि युद्धार्थं शम्भुना देवपक्षिणा ।। १३ ।।
संनद्धानि च धौम्राणां कुलानि च शतं द्रुतम् ।।
निर्गच्छंतु रणार्थं हि शम्भुना मम शासनात् ।। १४ ।।
कालकेयाश्च मौर्याश्च दौर्हृदाः कालकास्तथा ।।

सज्जा निर्यान्तु युद्धाय रुद्रेण मम शासनात् ।। १५ ।।
सनत्कुमार उवाच ।।
इत्याज्ञाप्यासुरपतिर्दानवेन्द्रो महाबलः ।।
निर्जगाम महासैन्यः सहस्रैबहुभिर्वृतः ।। १६ ।।
तस्य सेनापतिश्चैव युद्धशास्त्रविशारदः ।।
महारथो महावीरो रथिनां प्रवरो रणे ।। १७ ।।
त्रिलक्षाक्षौहिणीयुक्तो मांडल्यं च चकार ह ।।
बहिर्बभूव शिबिराद्रणे वीरभयङ्करः ।।१८।।
रत्नेन्द्रं सारनिर्माणं विमानमभिरुह्य सः ।।
गुरुवर्गं पुरस्कृत्य रणार्थं प्रययौ किल।।।।।।
पुष्पभद्रानदीतीरे यत्राक्षयवटः शुभः ।।
सिद्धाश्रमे च सिद्धानां सिद्धिक्षेत्रं सुसिद्धिदम्।।2.5.34.२०।।
कपिलस्य ततः स्थानं पुण्यक्षेत्रे च भारते ।।
पश्चिमोदधिपूर्वे च मलयस्य हि पश्चिमे।।२१।।
श्रीशैलोत्तरभागे च गंधमादनदक्षिणे ।।
पंचयोजनविस्तीर्णं दैर्घ्ये शतगुणस्तथा।।२२।।
शुद्धस्फटिकसंकाशा भारते च सुपुण्यदा।।
पुष्पभद्रा नदी रम्या जलपूर्णा सरस्वती।।२३।
लवणोदधिप्रिया भार्या शश्वत्सौभाग्यसं युता ।।
सरस्वतीसंश्रिता च निर्गता सा हिमालयात् ।।२४।।
गोमंतं वामतः कृत्वा प्रविष्टा पश्चिमोदधौ ।।
तत्र गत्वा शंखचूडः शिव सेनां ददर्श ह ।।२५।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे शंखचूडयात्रावर्णनं नाम चतुस्त्रिंशोऽध्यायः ।। ३४ ।।

सनत्कुमार उवाच ।।
तत्र स्थित्वा दानवेन्द्रो महान्तं दानवेश्वरम् ।।
दूतं कृत्वा महाविज्ञं प्रेषयामास शंकरम् ।। १ ।।
स तत्र गत्वा दूतश्च चन्द्रभालं ददर्श ह ।।
वटमूले समासीनं सूर्यकोटिसमप्रभम् ।।२।।
कृत्वा योगासनं दृष्ट्या मुद्रायुक्तं च सस्मितम् ।।
शुद्धस्फटिकसंकाशं ज्वलंतं ब्रह्मतेजस ।। ३ ।।
त्रिशूलपट्टिशधरं व्याघ्रचर्मांबरावृतम् ।।
भक्तमृत्युहरं शांतं गौरीकान्तं त्रिलोचनम् ।। ४ ।।
तपसां फलदातारं कर्त्तारं सर्वसंपदाम् ।।
आशुतोषं प्रसन्नास्य भक्तानुग्रहकारकम् ।।५।।
विश्वनाथं विश्वबीजं विश्वरूपं च विश्वजम् ।।
विश्वंभरं विश्वकरं विश्वसंहारकारणम् ।।६।।
कारणं कारणानां च नरकार्णवतारणम् ।।
ज्ञानप्रदं ज्ञानबीजं ज्ञानानन्दं सनातनम् ।।७।।
अवरुह्य रथाद् दूतस्तं दृष्ट्वा दानवेश्वरः।।
शंकरं सकुमारं च शिरसा प्रणनाम सः।।८।।
वामतो भद्रकाली च स्कंदं तत्पुरतः स्थितम् ।।
लोकाशिषं ददौ तस्मै काली स्कंदश्च शंकरः ।।९।।
अथासौ शंखचूडस्य दूतः परमशास्त्रवित् ।।
उवाच शंकरं नत्वा करौ बद्ध्वा शुभं वचः।।2.5.35.१०।।
।। दूत उवाच ।।
शंखचूडस्य दूतोऽहं त्वत्सकाशमिहागतः ।।
वर्तते ते किमिच्छाद्य तत्त्वं ब्रूहि महेश्वर ।। ११ ।।
सनत्कुमार उवाच।।
इति श्रुत्वा च वचनं शंखचूडस्य शंकरः ।।
प्रसन्नात्मा महादेवो भगवांस्तमुवाच ह।।१२।।
महादेव उवाच ।।
शृणु दूत महाप्राज्ञ वचो मम सुखावहम् ।।
कथनीयमिदं तस्मै निर्विवादं विचार्य च ।।१३।।
विधाता जगतां ब्रह्मा पिता धर्मस्य धर्मवित् ।।
मरीचिस्तस्य पुत्रश्च कश्यपस्तत्सुतः स्मृतः ।। १४ ।।
दक्षः प्रीत्या ददौ तस्मै निजकन्यास्त्रयोदश ।।

तास्वेका च दनुस्साध्वी तत्सौभाग्यविवर्द्धिनी ।।१५।।
चत्वारस्ते दनोः पुत्रा दानवास्तेजसोल्बणाः ।।
तेष्वेको विप्रचित्तिस्तु महाबलपराक्रमः ।।१६।।
तत्पुत्रो धार्मिको दंभो दानवेन्द्रो महामतिः ।।
तस्य त्वं तनयः श्रेष्ठो धर्मात्मा दानवेश्वरः।।१७।।
पुरा त्वं पाषर्दो गोपो गोपेष्वेव च धार्मिकः ।।
अधुना राधिकाशापाज्जातस्त्वं दानवेश्वरः ।।१८।।
दानवीं योनिमायातस्तत्त्वतो न हि दानवः ।।
निजवृतं पुरा ज्ञात्वा देववैरं त्यजाधुना ।। १९ ।।
द्रोहं न कुरु तैस्सार्द्धं स्वपदं भुंक्ष्व सादरम् ।।
नाधिकं सविकारं च कुरु राज्यं विचार्य च ।। 2.5.35.२० ।।
देहि राज्यं च देवानां मत्प्रीतिं रक्ष दानव ।।
निजराज्ये सुखं तिष्ठ तिष्ठंतु स्वपदे सुराः ।। २१ ।।
अलं भूतविरोधेन देवद्रोहेण किं पुनः ।।
कुलीनाश्शुद्धकर्माणः सर्वे कश्यपवंशजाः ।। २२ ।।
यानि कानि च पापानि ब्रह्महत्या दिकानि च ।।
ज्ञातिद्रोहजपापस्य कलां नार्हति षोडशीम् ।। २३ ।।
सनत्कुमार उवाच ।।
इत्यादिबहुवार्त्तां च श्रुतिस्मृतिपरां शुभाम् ।।
प्रोवाच शंकरस्तस्मै बोधयन् ज्ञानमुत्तमम् ।। २४ ।।
शिक्षितश्शंखचूडेन स दूतस्तर्कवित्तम ।।
उवाच वचनं नम्रो भवितव्यविमोहितः ।। २५ ।।
दूत उवाच ।।
त्वया यत्कथितं देव नान्यथा तत्तथा वचः ।।
तथ्यं किंचिद्यथार्थं च श्रूयतां मे निवेदनम् ।। २६ ।।
ज्ञातिद्रोहे महत्पापं त्वयोक्तमधुना च यत् ।।
तत्किमीशासुराणां च न सुराणां वद प्रभो ।।२७।।
सर्वेषामिति चेत्तद्वै तदा वच्मि विचार्य च ।।
निर्णयं ब्रूहि तत्राद्य कुरु संदेहभंजनम् ।। २८ ।।
मधुकैटभयोर्दैत्यवरयोः प्रलयार्णवे ।।
शिरश्छेदं चकारासौ कस्माच्चक्री महेश्वर ।। २९ ।।
त्रिपुरैस्सह संयुद्धं भस्मत्वकरणं कुतः ।।
भवाञ्चकार गिरिश सुरपक्षीति विश्रुतम् ।। 2.5.35.३० ।।

गृहीत्वा तस्य सर्वस्वं कुतः प्रस्थापितो बलिः ।।
सुतलादि समुद्धर्तुं तद्द्वारे च गदाधरः ।। ३१ ।।
सभ्रातृको हिरण्याक्षः कथं देवैश्च हिंसितः ।।
शुंभादयोऽसुराश्चैव कथं देवैर्निपातिताः ।। ३२ ।।
पुरा समुद्रमथने पीयूषं भक्षितं सुरैः ।।
क्लेशभाजो वयं तत्र ते सर्वे फलभोगिनः।।३३।।
क्रीडाभांडमिदं विश्वं कालस्य परमात्मनः।।
स ददाति यदा यस्मै तस्यै तस्यैश्वर्यं भवे त्तदा ।।३४।।
देवदानवयोर्वैरं शश्वनैमित्तिकं सदा ।।
पराजयो जयस्तेषां कालाधीनः क्रमेण च ।। ३५ ।।
तवानयोर्विरोधे च गमनं निष्फलं भवेत् ।।
समसंबंधिनां तद्वै रोचते नेश्वरस्य ते ।। ३६ ।।
सुरासुराणां सर्वेषामीश्वरस्य महात्मनः ।।
इयं ते रहिता लज्जा स्पर्द्धास्माभिस्सहाधुना ।। ३७ ।।
यतोधिका चैव कीर्तिर्हानिश्चैव पराजये ।।
तवैतद्विपरीतं च मनसा संविचार्य ताम् ।।३८।।
सनत्कुमार उवाच ।।
इत्येतद्वचनं श्रुत्वा संप्रहस्य त्रिलोचनः।।
यथोचितं च मधुरमुवाच दानवेश्वरम् ।।३९।।
महेश उवाच ।।
वयं भक्तपराधीना न स्वतंत्राः कदापि हि ।।
तदिच्छया तत्कर्माणो न कस्यापि च पक्षिणः ।।2.5.35.४०।।
पुरा विधिप्रार्थनया युद्धमादौ हरेरपि ।।
मधुकैटभयोर्दैत्यवरयोः प्रलयार्णवे ।। ४१ ।।
देवप्रार्थनया तेन हिरण्यकशिपोः पुरा ।।
प्रह्लादार्थं वधोऽकारि भक्तानां हितकारिणा ।।४२।।
त्रिपुरैस्सह संयुद्धं भस्मत्वकरणं ततः ।।
देवप्रार्थनयाकारि मयापि च पुरा श्रुतम् ।। ४३ ।।
सर्वेश्वर्यास्सर्वमातुर्देवप्रार्थनया पुरा ।।
आसीच्छुंभादिभिर्युद्धं वधस्तेषां तया कृतः ।। ४४ ।।
अद्यापि त्रिदशास्सर्वे ब्रह्माणं शरणं ययुः ।।
स सदेवो हरिर्मां च देवश्शरणमागतः ।। ४५ ।।
हरिब्रह्मादिकानां च प्रार्थनावशतोप्यहम् ।।

सुराणामीश्वरो दूत युद्धार्थमगमं खलु ।। ४६ ।।
पार्षदप्रवरस्त्वं हि कृष्णस्य च महात्मनः ।।
ये ये हताश्च दैतेया नहि केपि त्वया समाः ।। ४७ ।।
का लज्जा महती राजन् मम युद्धे त्वया सह ।।
देवकार्यार्थमीशोहं विनयेन च प्रेषितः ।। ४८ ।।
गच्छ त्वं शंखचूडे वै कथनीयं च मे वचः ।।
स च युक्तं करोत्वत्र सुरकार्यं करोम्यहम् ।। ४९ ।।
इत्युक्त्वा शंकरस्तत्र विरराम महेश्वरः ।।
उत्तस्थौ शंखचूडस्य दूतोऽगच्छत्तदंतिकम् ।।2.5.35.५०।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे शंखचूडवधे शिवदूतसंवादो नाम पंचत्रिंशोऽध्यायः ।। ३५ ।।

सनत्कुमार उवाच ।।
स दूतस्तत्र गत्वा च शिववाक्यं जगाद ह ।।
सविस्तरं यथार्थं च निश्चयं तस्य तत्त्वतः ।। १ ।।
तच्छ्रुत्वा शंखचूडोऽसौ दानवेन्द्रः प्रतापवान् ।।
अंगीचकार सुप्रीत्या रणमेव स दानवः ।। २ ।।
समारुरोह यानं च सहामात्यैश्च सत्वरः।। ।।
आदिदेश स्वसैन्यं च युद्धार्थं शंकरेण च ।। ३ ।।
शिवस्स्वसैन्यं देवांश्च प्रेरयामास सत्वरः ।।
स्वयमप्यखिलेशोपि सन्नद्धोभूच्च लीलया ।। ४ ।।
युद्धारंभो बभूवाशु नेदुर्वाद्यानि भूरिशः ।।
कोलाहलश्च संजातो वीरशब्दस्तथैव च ।। ५ ।।
देवदानवयोर्युद्धं स्परमभून्मुने ।।
धर्मतो युयुधे तत्र देवदानवयोर्गणः ।। ६ ।।
स्वयं महेन्द्रो युयुधे सार्धं च वृषपर्वणा ।।
भास्करो युयुधे विप्रचित्तिना सह धर्मतः ।। ७ ।।
दंभेन सह विष्णुश्च चकार परमं रणम् ।।
कालासुरेण कालश्च गोकर्णेन हुताशनः ।। ८ ।।
कुबेरः कालकेयेन विश्वकर्मा मयेन च ।।
भयंकरेण मृत्युश्च संहारेण यमस्तथा ।। ९ ।।
कालम्बिकेन वरुणश्चंचलेन समीरणः ।।
बुधश्च घटपृष्ठेन रक्ताक्षेण शनैश्चरः ।। 2.5.36.१० ।।
जयन्तो रत्नसारेण वसवो वर्चसां गणैः ।।
अश्विनौ दीप्तिमद्भ्यां च धूम्रेण नलकूबरः।।११।।
धुरंधरेण धर्मश्च गणकाक्षेण मंगलः ।।
शोभाकरेण वैश्वानः पिपिटेन च मन्मथः।।१२।।
गोकामुखेन चूर्णेन खड्गनाम्नाऽसुरेण च ।।
धूम्रेण संहलेनापि विश्वेन च प्रतापिना ।।१३।।
पलाशेन द्वादशाऽर्का युयुधुर्धर्मतः परे ।।
असुरैरमरास्सार्द्धं शिवसाहाय्यशालिनः ।। १४ ।।
एकादश महारुद्राश्चैकादशभयंकरैः।।
असुरैर्युयुधुर्वीरैर्मैहाबलपराक्रमैः ।।१५।।
महामणिश्च युयुधे चोग्रचंडादिभिस्सह ।।
राहुणा सह चन्द्रश्च जीवः शुक्रेण धर्मतः ।। १६ ।।

नन्दीश्वरादयस्सर्वे दानवप्रवरैस्सह ।।
युयुधुश्च महायुद्धे नोक्ता विस्तरतः पृथक् ।। १७ ।।
वटमूले तदा शंभुस्तस्थौ काल्याः सुतेन च ।।
सर्वे च युयुधुस्सैन्यसमूहास्सततं मुने ।।१८।।
रत्नसिंहासने रम्ये कोटिदानवसंयुतः ।।
उवास शंखचूडश्च रत्नभूषणभूषितः ।। १९ ।।
महायुद्धो बभूवाथ देवासुरविमर्दनः ।।
नानायुधानि दिव्यानि चलंतिस्म महामृधे ।। 2.5.36.२० ।।
गदर्ष्टिपट्टिशाश्चक्रभुशुंडिप्रासमुद्गराः ।।
निस्त्रिंशभल्लपरिघाः शक्त्युन्मुखपरश्वधाः ।। २१ ।।
शरतोमरखड्गाश्च शतघ्न्यश्च सहस्रशः ।।
भिंदिपालादयश्चान्ये वीरहस्तेषु शोभिताः ।। २२ ।।
शिरांसि चिच्छिदुश्चैभिर्वीरास्तत्र महो त्सवाः ।।
वीराणामुभयोश्चैव सैन्ययोर्गर्जतो रणे ।। २३ ।।
गजास्तुरंगा बहवः स्यन्दनाश्च पदातयः ।।
सारोहवाहा विविधास्तत्रासन् सुविखंडिताः ।। २४ ।।
निकृत्तबाहूरुकरकटिकर्णयुगांघ्रयः ।।
संछिन्नध्वजबाणासितनुत्र वरभूषणाः ।।२५।।
समुद्धतकिरीटैश्च शिरोभिस्सह कुंडलैः ।।
संरंभनष्टैरास्तीर्णा बभौ भूः करभोरुभिः ।। २६ ।।
महाभुजैस्साभरणैस्संछिन्नैस्सायुधैस्तथा ।।
अंगैरन्यैश्च सहसा पटलैर्वा ससारघैः ।। २७ ।।
मृधे भटाः प्रधावंतः कबंधान् स्वशिरोक्षिभिः ।।
पश्यंतस्तत्र चोत्पेतुरुद्यतायुधसद्भुजैः ।।२८।।
वल्गंतोऽतितरां वीरा युयुधुश्च परस्परम् ।।
शस्त्रास्त्रैर्विविधैस्तत्र महाबलपराक्रमाः ।। २९ ।।
केचित्स्वर्णमुखैर्बाणैर्विनिहत्य भटान्मृधे ।।
व्यनदन् वीरसन्नादं सतोया इव तोयदाः ।। 2.5.36.३० ।।
सर्वतश्शरकूटेन वीरस्सरथसारथिम् ।।
वीरं संछादयामास प्रावृट्सूर्यमिवांबुदः ।। ३१ ।।
अन्योन्यमभिसंसृत्य युयुधुर्द्वन्द्वयोधिनः ।।
आह्वयंतो विशंतोऽग्रे क्षिपंतो मर्मभिर्मिथः ।। ३२ ।।
सर्वतो वीरसंघाश्च नानाबाहुध्वजायुधाः ।।

व्यदृश्यंत महासंख्ये कुर्वंतः सिंहसंरवम् ।।३३ ।।
महारवान्स्वशंखांश्च विदध्मुर्वै पृथक् पृथक्।।
वल्गनं चक्रिरे तत्र महावीराः प्रहर्षिताः ।।३४।।
एवं चिरतरं कालं देवदानवयोर्महत् ।।
बभूव युद्धं विकटं करालं वीरहर्षदम् ।।३५।।
महाप्रभोश्च लीलेयं शंकरस्य परात्मनः।।
यया समीहितं सर्वं सदेवासुरमानुषम्।।३६।।।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे शंखचूडवधे परस्परयुद्धवर्णनं नाम षट्त्रिंशोऽध्यायः ।। ३६।।

सनत्कुमार उवाच ।।
तदा देवगणास्सर्वे दानवैश्च पराजिताः ।।
दुद्रुवुर्भयभीताश्च शस्त्रास्त्रक्षतविग्रहाः ।।१।।
ते परावृत्य विश्वेशं शंकरं शरणं ययुः ।।
त्राहि त्राहीति सर्वेशेत्यू चुर्विह्वलया गिरा।२।।
दृष्ट्वा पराजयं तेषां देवादीनां स शंकरः ।।
सभयं वचनं श्रुत्वा कोपमुच्चैश्चकार ह।।३।।
निरीक्ष्य स कृपादृष्ट्या देवेभ्यश्चाभयं ददौ ।।
बलं च स्वगणानां वै वर्द्धयामास तेजसा ।। ४ ।।
शिवाज्ञप्तस्तदा स्कन्दो दानवानां गणैस्सह ।।
युयुधे निर्भयस्संख्ये महावीरो हरात्मजः ।। ५ ।।
कृत्वा क्रोधं वीरशब्दं देवो यस्तारकांतकः ।।
अक्षौहिणीनां शतकं समरे स जघान ह ।। ६ ।।
रुधिरं पातयामास काली कमललोचना ।।
तेषां शिरांसि संछिद्य बभक्ष सहसा च सा ।।७।।
पपौ रक्तानि तेषां च दानवानां समं ततः ।।
युद्धं चकार विविधं सुरदानवभीषणम् ।।८।।
शतलक्षं गजेन्द्राणां शतलक्षं नृणां तथा ।।
समादायैकहस्तेन मुखे चिक्षेप लीलया ।।९ ।।
कबंधानां सहस्रं च सन्ननर्त रणे बहु ।।
महान् कोलाहलो जातः क्लीबानां च भयंकरः ।।2.5.37.१०।।
पुनः स्कंदः प्रकुप्योच्चैः शरवर्षाञ्चकार ह ।।
पातयामास क्षयतः कोटिशोऽसुरनायकान् ।।११।।
दानवाः शरजालेन स्कन्दस्य क्षतविग्रहाः ।।
भीताः प्रदुद्रुवुस्सर्वे शेषा मरणतस्तदा ।। १२ ।।
वृषपर्वा विप्रचित्तिर्दंडश्चापि विकंपनः ।।
स्कंदेन युयुधुस्सार्द्धं तेन सर्वे क्रमेण च ।।१३।।
महामारी च युयुधे न बभूव पराङ्मुखी ।।
बभूवुस्ते क्षतांगाश्च स्कंदशक्तिप्रपीडिताः ।। १४ ।।
महामारीस्कंदयोश्च विजयोभूत्तदा मुने ।।
नेदुर्दुंदुभयस्स्वर्गे पुष्पवृष्टिः पपात ह ।। १५ ।।
स्कंदस्य समरं दृष्ट्वा महारौद्रं तमद्भुतम् ।।
दानवानां क्षयकरं यथाप्रकृतिकल्पकम् ।।१६।।

महामारीकृतं तच्चोपद्रवं क्षयहेतुकम्।।
चुकोपातीव सहसा सनद्धोभूत्स्वयं तदा ।। १७।।
वरं विमानमारुह्य नानाशस्त्रास्त्रसंयुतम्।।
अभयं सर्ववीराणां नानारत्नपरिच्छदम्।।१८।।
महावीरैश्शंखचूडो जगाम रथमध्यतः ।।
धनुर्विकृष्य कर्णान्तं चकार शरवर्षणम् ।।१९।।
तस्य सा शरवृष्टिश्च दुर्निवार्य्या भयंकरी ।।
महाघोरांधकारश्च वधस्थाने बभूव ह ।।2.5.37.२०।।
देवाः प्रदुद्रुवुः सर्वे येऽन्ये नन्दीश्वरादयः ।।
एक एव कार्त्तिकेयस्तस्थौ समरमूर्द्धनि ।।२१।।
पर्वतानां च सर्पाणां नागानां शाखिनां तथा ।।
राजा चकार वृष्टिं च दुर्निवार्या भयंकरीम् ।। २२ ।।
तद्दृष्ट्या प्रहतः स्कन्दो बभूव शिवनन्दनः ।।
नीहारेण च सांद्रेण संवृतौ भास्करौ यथा ।।२३।।
नानाविधां स्वमायां च चकार मयदर्शिताम् ।।
तां नाविदन् सुराः केपि गणाश्च मुनिसत्तम ।।२४।।
तदैव शङ्खचूडश्च महामायी महाबलः ।।
शरेणैकेन दिव्येन धनुश्चिच्छेद तस्य वै ।।२५।।
बभंज तद्रथं दिव्यं चिच्छेद रथपीडकान् ।।
मयूरं जर्जरीभूतं दिव्यास्त्रेण चकार सः ।।२६।।
शक्तिं चिक्षेप सूर्याभां तस्य वक्षसि घातिनीम् ।।
मूर्च्छामवाप सहसा तत्प्रहारेण स क्षणम् ।।२७।।
पुनश्च चेतनां प्राप्य कार्तिकः परवीरहा ।।
रत्नेन्द्रसारनिर्माणमारुरोह स्ववाहनम् ।। २८ ।।
स्मृत्वा पादौ महेशस्य साम्बिकस्य च षण्मुखः ।।
शस्त्रास्त्राणि गृहीत्वैव चकार रणमुल्बणम्।। २९ ।।
सर्प्पांश्च पर्वतांश्चैव वृक्षांश्च प्रस्तरांस्तथा ।।
सर्वांश्चिच्छेद कोपेन दिव्या स्त्रेण शिवात्मजः ।।2.5.37.३०।।
वह्निं निवारयामास पार्जन्येन शरेण ह ।।
रथं धनुश्च चिच्छेद शंखचूडस्य लीलया ।।३१।।
सन्नाहं सर्ववाहांश्च किरीटं मुकुटोज्ज्वलम् ।।
वीरशब्दं चकारासौ जगर्ज च पुनः पुनः ।।३२।।
चिक्षेप शक्तिं सूर्याभां दानवेन्द्रस्य वक्षसि ।।।

तत्प्रहारेण संप्राप मूर्च्छां दीर्घतमेन च ।।३३।।
मुहूर्तमात्रं तत्क्लेशं विनीय स महाबलः ।।
चेतनां प्राप्य चोत्तस्थौ जगर्ज हरिवर्च सः ।।३४।।
शक्त्या जघान तं चापि कार्तिकेयं महाबलम् ।।
स पपात महीपृष्ठेऽमोघां कुर्वन्विधिप्रदाम् ।।३५।।
काली गृहीत्वा तं क्रोडे निनाय शिवसन्निधौ ।।
ज्ञानेन तं शिवश्चापि जीवयामास लीलया।।३६।।
ददौ बलमनंतं च समुत्तस्थौ प्रतापवान् ।।
गमनाय मतिं चक्रे पुनस्तत्र शिवात्मजः ।।३७।।
एतस्मिन्नंतरे वीरो वीरभद्रो महाबलः ।।
शंखचूडेन युयुधे समरे बलशालिना ।।३८।।
ववर्ष समरेऽस्त्राणि यानियानि च दानवः ।।
चिच्छेद लीलया वीरस्तानितानि निजैश्शरैः ।।३९।।
दिव्यान्यस्त्राणि शतशो मुमुचे दानवेश्वरः ।।
तानि चिच्छेद तं बाणैर्वीरभद्रः प्रतापवान् ।। 2.5.37.४० ।।
अथातीव चुकोपोच्चैश्शंखचूडः प्रतापवान् ।।
शक्त्या जघानोरसि तं स चकंपे पपात कौ ।। ४१ ।।
क्षणेन चेतनां प्राप्य समुत्तस्थौ गणेश्वरः ।।
जग्राह च धनुर्भूयो वीरभद्रो गणाग्रणीः ।।४२।।
एतस्मिन्नंतरे काली जगाम समरं पुनः ।।
भक्षितुं दानवान् स्वांश्च रक्षितुं कार्तिकेच्छया।। ४३ ।।
वीरास्तामनुजग्मुश्च ते च नन्दीश्वरादयः ।।
सर्वे देवाश्च गंधर्वा यक्षा रक्षांसि पन्नगाः ।। ४४ ।।
वाद्यभांडाश्च बहुशश्शतशो मधुवाहकाः ।।
पुनः समुद्यताश्चासन् वीरा उभयतोऽखिलाः ।। ४५ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसहितायां पञ्चमे युद्धखंडे शंखचूडवधे ससैन्यशंखचूडयुद्धवर्णनं नाम सप्तत्रिंशोऽध्यायः ।। ३७ ।।

सनत्कुमार उवाच ।।
सा च गत्वा हि संग्रामं सिंहनादं चकार ह ।।
देव्याश्च तेन नादेन मूर्च्छामापुश्च दानवाः ।। १ ।।
अट्टाट्टहासमशिवं चकार च पुनः पुनः ।।
तदा पपौ च माध्वीकं ननर्त रणमूर्द्धनि ।। २ ।।
उग्रदंष्ट्रा चोग्रदंडा कोटवी च पपौ मधु ।।
अन्याश्च देव्यस्तत्राजौ ननृतुर्मधु संपपुः ।।३।।
महान् कोलाहलो जातो गणदेवदले तदा।।
जहृषुर्बहुगर्जंतस्सर्वे सुरगणादयः ।। ४ ।।
दृष्ट्वा कालीं शंखचूडश्शीघ्रमाजौ समाययौ ।।
दानवाश्च भयं प्राप्ता राजा तेभ्योऽभयं ददौ ।।५।।
काली चिक्षेप वह्निं च प्रलयाग्निशिखोपमम्।।
राजा जघान तं शीघ्रं वैष्णवांकितलीलया ।। ६ ।।
नारायणास्त्रं सा देवी चिक्षेप तदुपर्यरम् ।।
वृद्धिं जगाम तच्छस्त्रं दृष्ट्वा वामं च दानवम् ।।७।।
तं दृष्ट्वा शंखचूडश्च प्रलयाग्निशिखोपमम्।।
पपात दंडवद्भूमौ प्रणनाम पुनःपुनः।।८।।
निवृत्तिं प्राप तच्छस्त्रं दृष्ट्वा नम्रं च दानवम् ।।
ब्रह्मास्त्रमथ सा देवी चिक्षेप मंत्रपूर्वकम् ।। ९ ।।
तं दृष्ट्वा प्रज्ज्वलंतं च प्रणम्य भुवि संस्थितः ।।
ब्रह्मास्त्रेण दानवेन्द्रो विनिवारं चकार ह ।। 2.5.38.१० ।।
अथ क्रुद्धो दानवेन्द्रो धनुराकृष्य रंहसा ।।
चिक्षेप दिव्यान्यस्त्राणि देव्यै वै मंत्रपूर्वकम् ।। ११ ।।
आहारं समरे चक्रे प्रसार्य मुखमायतम् ।।
जगर्ज साट्टहासं च दानवा भयमाययुः ।। १२ ।।
काल्यै चिक्षेप शक्तिं स शतयोजनमायताम् ।।
देवी दिव्यास्त्रजालेन शतखंडं चकार सा ।। १३ ।।
स च वैष्णवमस्त्रं च चिक्षेप चंडिकोपरि ।।
माहेश्वरेण काली च विनिवारं चकार सा ।।१४।।
एवं चिरतरं युद्धमन्योन्यं संबभूव ह।।
प्रेक्षका अभवन्सर्वे देवाश्च दानवा अपि।।१५।।
अथ कुद्धा महादेवी काली कालसमा रणे।।
जग्राह मन्त्रपूतं च शरं पाशुपतं रुषा ।। १६।।

क्षेपात्पूर्वं तन्निषेद्धुं वाग्बभूवाशरीरिणी।।
न क्षिपास्त्रमिदं देवि शंखचूडाय वै रुषा।।१७।।
मृत्युः पाशुपतान्नास्त्यमोघादपि च चंडिके।।
शंखचूडस्य वीरस्योपायमन्यं विचारय।।१८।।
इत्याकर्ण्य भद्रकाली न चिक्षेप तदस्त्रकम् ।।
शतलक्षं दानवानां जघास लीलया क्षुधा ।।१९।।
अत्तुं जगाम वेगेन शंखचूडं भयंकरी।।
दिव्यास्त्रेण च रौद्रेण वारयामास दानवः ।।2.5.38.२०।।
अथ क्रुद्धो दानवेन्द्रः खड्गं चिक्षेप सत्वरम् ।।
ग्रीष्मसूर्योपमं तीक्ष्णधारमत्यंतभीकरम् ।। २१ ।।
सा काली तं समालोक्यायांतं प्रज्वलितं रुषा ।।
प्रसार्य मुखमाहारं चक्रे तस्य च पश्यतः ।।२२।।
दिव्यान्यस्त्राणि चान्यानि चिच्छेद दानवेश्वरः ।।
प्राप्तानि पूर्वतश्चक्रे शतखंडानि तानि च ।।२३।।
पुनरत्तुं महादेवी वेगतस्तं जगाम ह ।।
सर्वसिद्धेश्वरः श्रीमानंतर्धानं चकार सः ।।२४।।
वेगेन मुष्टिना काली तमदृष्ट्वा च दानवम् ।।
बभंज च रथं तस्य जघान किल सारथिम् ।।२५।।
अथागत्य द्रुतं मायी चक्रं चिक्षेप वेगतः ।।
भद्रकाल्यै शंखचूडः प्रलयाग्निशिखो पमम् ।।२६।।
सा देवी तं तदा चक्रं वामहस्तेन लीलया ।।
जग्राह स्वमुखेनैवाहारं चक्रे रुषा द्रुतम् ।।२७।।
मुष्ट्या जघान तं देवी महाकोपेन वेगतः ।।
बभ्राम दानवेन्द्रोपि क्षणं मूर्च्छामवाप सः ।।२८।।
क्षणेन चेतनां प्राप्य स चोत्तस्थौ प्रतापवान्।।
न चक्रे बाहु युद्धं च मातृबुद्ध्या तया सह ।।२९।।
गृहीत्वा दानवं देवी भ्रामयित्वा पुनःपुनः ।।
ऊर्द्ध्वं च प्रापयामास महाकोपेन वेगतः ।।2.5.38.३०।।
उत्पपात च वेगेन शंखचूडः प्रतापवान् ।।
निपत्य च समुत्तस्था प्रणम्य भद्रकालिकाम् ।।३१।।
रत्नेन्द्रसारनिर्माणविमानं सुमनो हरम् ।।
आरुरोह स हृष्टात्मा न भ्रान्तोपि महारणे ।। ३२ ।।
दानवानां हि क्षतजं सा पपौ कालिका क्षुधा ।।

एतस्मिन्नंतरे तत्र वाग्वभूवाशरीरिणी ।। ३३ ।।
लक्षं च दानवेन्द्राणामवशिष्टं रणेऽधुना ।।
उद्धतं गुञ्जतां सार्द्धं ततस्त्वं भुंक्ष्व चेश्वरि ।। ३४ ।।
संग्रामे दानवेन्द्रं च हंतुं न कुरु मानसम् ।।
अवध्योयं शंखचूडस्तव देवीति निश्चयम् ।।३५।।
तच्छ्रुत्वा वचनं देवी निःसृतं व्योममंडलात्।।
दानवानां बहूनां च मांसं च रुधिरं तथा ।।३६।।
भुक्त्वा पीत्वा भद्रकाली शंकरांतिकमाययौ ।।
उवाच रणवृत्तांतं पौर्वापर्येण सक्रमम् ।।३७।।
इति श्रीशिवमहापुराणे द्वि० रुद्रसं०पं०युद्धखंडे शंखचूडवधे कालीयुद्धवर्णनं नामाष्टत्रिंशोऽध्यायः ।।
३८।।

व्यास उवाच ।।
श्रुत्वा काल्युक्तमीशानो किं चकार किमुक्तवान् ।।
तत्त्वं वद महाप्राज्ञ परं कौतूहलं मम।।१।।
सनत्कुमार उवाच।।
काल्युक्तं वचनं श्रुत्वा शंकरः परमेश्वरः ।।
महालीलाकरश्शंभुर्जहासाश्वासयञ्च ताम्।।२।।
व्योमवाणीं समाकर्ण्य तत्त्वज्ञानविशारदः।।
ययौ स्वयं च समरे स्वगणैस्सह शंकरः ।।३।।
महावृषभमारूढो वीरभद्रादिसंयुतः ।।
भैरवैः क्षेत्रपालैश्च स्वसमानैस्समन्वितः ।।४।।
रणं प्राप्तो महेशश्च वीररूपं विधाय च ।।
विरराजाधिकं तत्र रुद्रो मूर्त इवांतकः।।५।।
शंखचूडश्शिवं दृष्ट्वा विमानादवरुह्य सः ।।
ननाम परया भक्त्या शिरसा दंडवद्भुवि ।।६।।
तं प्रणम्य तु योगेन विमानमारुरोह सः ।।
तूर्णं चकार सन्नाहं धनुर्जग्राह सेषुकम् ।।७।।
शिवदानवयोर्युद्धं शतमब्दं बभूव ह ।।
बाणवर्षमिवोग्रं तद्वर्षतोर्मोघयोस्तदा।।८।।
शंखचूडो महावीरश्शरांश्चिक्षेप दारुणान्।।
चिच्छेद शंकरस्तान्वै लीलया स्वशरोत्करैः ।।९।।
तदंगेषु च शस्त्रोघैस्ताडयामास कोपतः।।
महारुद्रो विरूपाक्षो दुष्टदण्डस्सतां गति।।2.5.39.१०।।
दानवो निशितं खड्गं चर्म चादाय वेगवान्।।
वृषं जघान शिरसि शिवस्य वरवाहनम्।।११।।
ताडिते वाहने रुद्रस्तं क्षुरप्रेण लीलया ।।
खड्गं चिच्छेद तस्याशु चर्म चापि महोज्ज्वलम्।।१२।।
छिन्नेऽसौ चर्मणि तदा शक्तिं चिक्षेप सोऽसुरः।।
द्विधा चक्रे स्वबाणेन हरस्तां संमुखागताम् ।। १३ ।।
कोपाध्मातश्शंखचूडश्चक्रं चिक्षेप दानवः ।।
मुष्टिपातेन तच्चाप्यचूर्णयत्सहसा हरः ।।१४।।
गदामाविध्य तरसा संचिक्षेप हरं प्रति ।।
शंभुना सापि सहसा भिन्ना भस्मत्वमागता ।। १५।।
ततः परशुमादाय हस्तेन दानवेश्वरः ।।

धावति स्म हरं वेगाच्छंखचूडः क्रुधाकुलः ।। १६ ।।
समाहृत्य स्वबाणौघैरपातयत शंकरः ।।
द्रुतं परशुहस्तं तं भूतले लीलयासुरम् ।।१७।।
ततः क्षणेन संप्राप्य संज्ञामारुह्य सद्रथम् ।।
धृतदिव्यायुधशरो बभौ व्याप्याखिलं नभः ।। १८ ।।
आयांतं तं निरीक्ष्यैव डमरुध्वनि मादरात् ।।
चकार ज्यारवं चापि धनुषो दुस्सहं हर ।।१९।।
पूरयामास ककुभः शृंगनादेन च प्रभुः ।।
स्वयं जगर्ज गिरिशस्त्रासयन्नसुरांस्तदा ।। 2.5.39.२० ।।
त्याजितेभ महागर्वैर्महानादैर्वृषेश्वरः ।।
पूरयामास सहसा खं गां वसुदिशस्तथा।।२१।।
महाकालस्समुत्पत्या ताडयद्गां तथा नभः ।।
कराभ्यां तन्निनादेन क्षिप्ता आसन्पुरारवाः।।२२।।
अट्टाट्टहासमशिवं क्षेत्रपालश्चकार ह ।।
भैरवोऽपि महानादं स चकार महाहवे ।।२३।।
महाकोलाहलो जातो रणमध्ये भयंकरः।।
वीरशब्दो बभूवाथ गणमध्ये समंततः।।२४।।
संत्रेसुर्दानवास्सर्वे तैश्शब्दैर्भयदैः खरैः।।
चुकोपातीव तच्छ्रुत्वा दानवेन्द्रो महाबलः ।।२५।।
तिष्ठतिष्ठेति दुष्टात्मन्व्याजहार यदा हरः ।।
देवैर्गणैश्च तैः शीघ्रमुक्तं जय जयेति च।। २६ ।।
अथागत्य स दंभस्य तनयस्सुप्रतापवान् ।।
शक्तिं चिक्षेप रुद्राय ज्वालामालातिभीषणाम् ।।२७।।
वह्निकूटप्रभा यांती क्षेत्रपालेन सत्वरम् ।।
निरस्तागत्य साजौ वै मुखोत्पन्नमहोल्कया।।२८।।
पुनः प्रववृते युद्धं शिवदानवयोर्महत् ।।
चकंपे धरणी द्यौश्च सनगाब्धिजलाशया।।२९।।
दांभिमुक्ताच्छराञ्शंभुश्शरांस्तत्प्रहितान्स च।।
सहस्रशश्शरैरुग्रैश्चिच्छेद शतशस्तदा ।।2.5.39.३०।।
ततश्शंभुस्त्रिशूलेन संक्रुद्धस्तं जघान ह ।।
तत्प्रहारमसह्याशु कौ पपात स मूर्च्छितः ।।३१।।
ततः क्षणेन संप्राप संज्ञां स च तदासुरः ।।
आजघान शरै रुद्रं तान्सर्वानात्तकार्मुकः ।।३२।।

बाहूनागयुतं कृत्वा छादयामास शंकरम् ।।
चक्रायुतेन सहसा शंखचूडः प्रतापवान्।।३३।।
ततो दुर्गापतिः क्रुद्धो रुद्रो दुर्गार्तिनाशनः ।।
तानि चक्राणि चिच्छेद स्वशरैरुत्तमै द्रुतम्।।३४।।
ततो वेगेन सहसा गदामादाय दानवः ।।
अभ्यधावत वै हंतुं बहुसेनावृतो हरम् ।।३५।।
गदां चिच्छेद तस्याश्वापततः सोऽसिना हरः ।।
शितधारेण संक्रुद्धो दुष्टगर्वापहारकः ।।३६।।
छिन्नायां स्वगदायां च चुकोपातीव दानवः ।।
शूलं जग्राह तेजस्वी परेषां दुस्सहं ज्वलत्।।३७।।
सुदर्शनं शूलहस्तमायांते दानवेश्वरम् ।।
स्वत्रिशूलेन विव्याध हृदि तं वेगतो हरः ।। ३८ ।।
त्रिशूलभिन्नहृदयान्निष्क्रांतः पुरुषः परः ।।
तिष्ठतिष्ठेति चोवाच शंखचूडस्य वीर्यवान् ।।३९।।
निष्क्रामतो हि तस्याशु प्रहस्य स्वनवत्ततः ।।
चिच्छेद च शिरो भीम मसिनासोऽपतद्भुवि ।। 2.5.39.४० ।।
ततः काली चखादोग्रं दंष्ट्राक्षुण्णशिरोधरान् ।।
असुरांस्तान् बहून् क्रोधात् प्रसार्य स्वमुखं तदा।। ४१ ।।
क्षेत्रपालश्चखादान्यान्बहून्दैत्यान्क्रुधाकुलः ।।
केचिन्नेशुर्भैरवास्त्रच्छिन्ना भिन्नास्तथापरे ।। ४२ ।।
वीरभद्रोऽपरान्धीमान्बहून् क्रोधादनाशयत् ।।
नन्दीश्वरो जघानान्यान्बहूनमरमर्दकान् ।। ४३ ।।
एवं बहुगणा वीरास्तदा संनह्य कोपतः ।।
व्यनाशयन्बहून्दैत्यानसुरान् देव मर्दकान् ।। ४४ ।।
इत्थं बहुतरं तत्र तस्य सैन्यं ननाश तत् ।।
विद्रुताश्चापरे वीरा बहवो भयकातराः ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे शंखचूडसैन्यवधवर्णनं नाम नवत्रिंशोऽध्यायः ।। ३९ ।।

सनत्कुमार उवाच ।।
स्वबलं निहतं दृष्ट्वा मुख्यं बहुतरं ततः ।।
तथा वीरान् प्राणसमान् चुकोपातीव दानवः ।। १ ।।
उवाच वचनं शंभुं तिष्ठाम्याजौ स्थिरो भव।।
किमेतैर्निहतैर्मद्य संमुखे समरं कुरु ।। २ ।।
इत्युक्त्वा दानवेन्द्रोसौ सन्नद्धस्समरे मुने ।।
अगच्छन्निश्चयं कृत्वाऽभिमुखं शंकरस्य च ।। ३ ।।
दिव्यान्यस्त्राणि चिक्षेप महारुद्राय दानवः ।।
चकार शरवृष्टिञ्च तोयवृष्टिं यथा घनः ।। ४ ।।
मायाश्चकार विविधा अदृश्या भयदर्शिताः ।।
अप्रतर्क्याः सुरगणैर्निखिलैरपिः सत्तमैः ।।५।।
ता दृष्ट्वा शंकरस्तत्र चिक्षे पास्त्रं च लीलया ।।
माहेश्वरं महादिव्यं सर्वमायाविनाशनम् ।। ६ ।।
तेजसा तस्य तन्माया नष्टाश्चासन् द्रुतं तदा ।।
दिव्यान्यस्त्राणि तान्येव निस्तेजांस्यभवन्नपि ।। ७ ।।
अथ युद्धे महेशानस्तद्वधाय महाबलः ।।
शूलं जग्राह सहसा दुर्निवार्यं सुतेजसाम् ।। ८ ।।
तदैव तन्निषेद्धुं च वाग्बभूवाशरीरिणी ।।
क्षिप शूलं न चेदानीं प्रार्थनां शृणु शंकर ।। ९ ।।
सर्वथा त्वं समर्थो हि क्षणाद् ब्रह्माण्डनाशने ।।
किमेकदानवस्येश शङ्खचूडस्य सांप्रतम् ।। 2.5.40.१० ।।
तथापि वेदमर्यादा न नाश्या स्वामिना त्वया ।।
तां शृणुष्व महादेव सफलं कुरु सत्यतः ।। ११ ।।
यावदस्य करेऽत्युग्रं कवचं परमं हरेः ।।
यावत्सतीत्वमस्त्येव सत्या अस्य हि योषितः ।। १२ ।।
तावदस्य जरामृत्युश्शंखचूडस्य शंकर ।।
नास्तीत्यवितथं नाथ विधेहि ब्रह्मणो वचः ।। १३ ।।
इत्याकर्ण्य नभोवाणीं तथेत्युक्ते हरे तदा ।।
हरेच्छयागतो विष्णुस्तं दिदेश सतां गतिः ।। १४ ।।
वृद्धब्राह्मणवेषेण विष्णुर्मायाविनां वरः ।।
शङ्खचूडोपकंठं च गत्वोवाच स तं तदा ।। १५ ।।
वृद्धब्राह्मण उवाच।।
देहि भिक्षां दानवेन्द्र मह्यं प्राप्ताय सांप्रतम् ।। १६ ।।

नेदानीं कथयिष्यामि प्रकटं दीनवत्सलम् ।।
पश्चात्त्वां कथयिष्यामि पुनस्सत्यं करिष्यसि ।। १७ ।।
ओमित्युवाच राजेन्द्रः प्रसन्नवदनेक्षणः ।।
कवचार्थी जनश्चाहमित्युवाचेति सच्छलात् ।। १८ ।।
तच्छ्रुत्वा दानवेन्द्रोसौ ब्रह्मण्यः सत्यवाग्विभुः ।।
तद्ददौ कवचं दिव्यं विप्राय प्राणसंमतम् ।।१९।।
मायायेत्थं तु कवचं तस्माज्जग्राह वै हरिः ।।
शङ्खचूडस्य रूपेण जगाम तुलसीं प्रति ।। 2.5.40.२० ।।
गत्वा तत्र हरिस्तस्या योनौ मायाविशारदः ।।
वीर्याधानं चकाराशु देवकार्यार्थमीश्वरः ।। २१ ।।
एतस्मिन्नंतरे शंभुमीरयन् स्ववचः प्रभुः ।।
शंखचूडवधार्थाय शूलं जग्राह प्रज्वलत् ।।२२।।
तच्छूलं विजयं नाम शङ्करस्य परमात्मनः ।।
सञ्चकाशे दिशस्सर्वा रोदसी संप्रकाशयन् ।। २३।।
कोटिमध्याह्नमार्तंडप्रलयाग्निशिखोपमम्।।
दुर्निवार्यं च दुर्द्धर्षमव्यर्थं वैरिघातकम् ।।२४।।
तेजसां चक्रमत्युग्रं सर्वशस्त्रास्त्रसायकम्।।
सुरासुराणां सर्वेषां दुस्सहं च भयंकरम् ।।२५।।
संहर्तुं सर्वब्रह्माडमवलंब्य च लीलया ।।
संस्थितं परमं तत्र एकत्रीभूय विज्वलत्।। ।। २६ ।।
धनुस्सहस्रं दीर्घेण प्रस्थेन शतहस्तकम्।।
जीवब्रह्मास्वरूपं च नित्यरूपमनिर्मितम् ।।२७।।
विभ्रमद् व्योम्नि तच्छूलं शंख चूडोपरि क्षणात् ।।
चकार भस्म तच्छीघ्रं निपत्य शिवशासनात् ।। २८ ।।
अथ शूलं महेशस्य द्रुतमावृत्य शंकरम।।
ययौ विहायसा विप्रमनोयायि स्वकार्यकृत् ।।२९।।
नेदुर्दुंदुभयस्स्वर्गे जगुर्गंधर्वकिन्नराः ।।
तुष्टुवुर्मुनयो देवा ननृतुश्चाप्सरोगणाः ।।2.5.40.३०।।
बभूव पुष्पवृष्टिश्च शिवस्योपरि संततम् ।।
प्रशशंस हरिर्ब्रह्मा शक्राद्या मुनयस्तथा ।। ३१ ।।
शंखचूडो दानवेन्द्रः शिवस्य कृपया तदा ।।
शाप मुक्तो बभूवाथ पूर्वरूपमवाप ह ।। ३२ ।।
अस्थिभिश्शंखचूडस्य शंखजातिर्बभूव ह ।।

प्रशस्तं शंखतोयं च सर्वेषां शंकरं विना ।। ३३ ।।
विशेषेण हरेर्लक्ष्म्याः शंखतोयं महाप्रियम् ।।
संबंधिनां च तस्यापि न हरस्य महामुने ।। ३४ ।।
तमित्थं शंकरो हत्वा शिवलोकं जगाम सः।।
सुप्रहृष्टो वृषारूढः सोमस्कन्दगणैर्वृतः।।३५।।
हरिर्जगाम वैकुंठं कृष्णस्स्ववस्थो बभूव ह।।
सुरास्स्वविषयं प्रापुः परमानन्दसंयुताः।।३६।।
जगत्स्वास्थ्यमतीवाप सर्वनिर्विघ्नमापकम्।।
निर्मलं चाभवद्व्योम क्षितिस्सर्वा सुमंगला ।।३७।।
इति प्रोक्तं महेशस्य चरितं प्रमुदावहम्।।
सर्वदुःखहरं श्रीदं सर्वकामप्रपूरकम्।।३८।।
धन्यं यशस्यमायुष्यं सर्वविघ्ननिवारणम्।।
भुक्तिदं मुक्तिदं चैव सर्वकामफलप्रदम्।।३९।।
य इदं शृणुयान्नित्यं चरितं शशिमौलिनः।।
श्रावयेद्वा पठेद्वापि पाठयेद्वा सुधीर्नरः।।2.5.40.४०।।
धनं धान्यं सुतं सौख्यं लभेतात्र न संशयः।।
सर्वान्कामानवाप्नोति शिवभक्तिं विशेषतः।।४१।।
इदमाख्यानमतुलं सर्वोपद्रवनाशनम्।।
परमज्ञानजननं शिवभक्तिविवर्द्धनम्।।४२।।
ब्राह्मणो ब्रह्मवर्चस्वी क्षत्रियो विजयी भवेत्।।
धनाढ्यो वैश्यजश्शूद्रश्शृण्वन् सत्तमतामियात्।।४३।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखडे शंखचूडवधोपाख्यानं नाम चत्वारिंशोऽध्यायः ।।४०।।

व्यास उवाच ।।
नारायणश्च भगवान् वीर्याधानं चकार ह ।।
तुलस्याः केन यत्नेन योनौ तद्वक्तुमर्हसि ।। १ ।।
सनत्कुमार उवाच ।।
नारायणो हि देवानां कार्यकर्ता सतां गतिः ।।
शंखचूडस्य रूपेण रेमे तद्रमया सह ।।२।।
तदेव शृणु विष्णोश्च चरितं प्रमुदावहम्।।
शिवशासनकर्तुश्च मातुश्च जगतां हरेः।।३।।
रणमध्ये व्योमवचः श्रुत्वा देवेन शंभुना।।
प्रेरितश्शंखचूडस्य गृहीत्वा कवचं परम्।।४।।
विप्ररूपेण त्वरितं मायया निजया हरिः।।
जगाम शंखचूडस्य रूपेण तुलसीगृहम् ।।५।।
दुन्दुभिं वादयामास तुलसी द्वारसन्निधौ ।।
जयशब्दं च तत्रैव बोधयामास सुन्दरीम्।।६।।
तच्छ्रुत्वा चैव सा साध्वी परमानन्दसंयुता।।
राजमार्गं गवाक्षेण ददर्श परमादरात्।।७।।
ब्राह्मणेभ्यो धनं दत्त्वा कारयामास मंगलम्।।
द्रुतं चकार शृंगारं ज्ञात्वाऽऽयातं निजं पतिम् ।।८।।
अवरुह्य रथाद्विष्णुस्तद्देव्याभवनं ययौ ।।
शंखचूडस्वरूपः स मायावी देवकार्यकृत् ।। ९ ।।
दृष्ट्वा तं च पुरः प्राप्तं स्वकांतं सा मुदान्विता ।।
तत्पादौ क्षालयामास ननाम च रुरोद च ।। 2.5.41.१० ।।
रत्नसिंहासने रम्ये वासयामास मंगलम् ।।
ताम्बूलं च ददौ तस्मै कर्पूरादिसुवासितम् ।। ११ ।।
अद्य मे सफलं जन्म जीवनं संबभूव ह ।।
रणे गतं च प्राणेशं पश्यंत्याश्च पुनर्गृहे।।१२।।
इत्युक्त्वा सकटाक्षं सा निरीक्ष्य सस्मितं मुदा ।।
पप्रच्छ रणवृत्तांतं कांतं मधुरया गिरा ।।१३।।
तुलस्युवाच ।।
असंख्यविश्वसंहर्ता स देवप्रवरः प्रभुः ।।
यस्याज्ञावर्त्तिनो देवा विष्णुब्रह्मादयस्सदा ।। १४ ।।
त्रिदेवजनकस्सोत्र त्रिगुणात्मा च निर्गुणः ।।
भक्तेच्छया च सगुणो हरिब्रह्मप्रवर्तकः ।।१५।।

कुबेरस्य प्रार्थनया गुणरूपधरो हरः ।।
कैलासवासी गणपः परब्रह्म सतां गतिः ।। १६ ।।
यस्यैकपलमात्रेण कोटिब्रह्मांडसंक्षयः ।।
विष्णुब्रह्मादयोऽतीता बहवः क्षणमात्रतः ।।१७।।
कर्तुं सार्द्धं च तेनैव समरं त्वं गतः प्रभो ।।
कथं बभूव संग्रामस्तेन देवसहायिना ।।१८।।
कुशली त्वमिहायातस्तं जित्वा परमेश्वरम् ।।
कथं बभूव विजयस्तव ब्रूहि तदेव मे ।।१९।।
श्रुत्वेत्थं तुलसीवाक्यं स विहस्य रमापतिः ।।
शंखचूडरूपधरस्तामुवाचामृतं वचः ।।2.5.41.२०।।
भगवानुवाच ।।
यदाहं रणभूमौ च जगाम समरप्रियः ।।
कोलाहलो महान् जातः प्रवृत्तोऽभून्महारणः ।। २१ ।।
देवदानवयोर्युद्धं संबभूव जयैषिणोः ।।
दैत्याः पराजितास्तत्र निर्जरैर्बलगर्वितैः ।। २२ ।।
तदाहं समरं तत्राकार्षं देवैर्बलोत्कटैः ।।
पराजिताश्च ते देवाश्शंकरं शरणं ययुः ।।२३।।
रुद्रोऽपि तत्सहायार्थमाजगाम रणं प्रति।।
तेनाहं वै चिरं कालमयौत्संबलदर्पित ।।२४।।
आवयोस्समरः कान्ते पूर्णमब्दं बभूव ह ।।
नाशो बभूव सर्वेषामसुराणां च कामिनि ।।२५।।
प्रीतिं च कारयामास ब्रह्मा च स्वयमावयोः ।।
देवानामधिकाराश्च प्रदत्ता ब्रह्मशासनात् ।।२६।।
मयागतं स्वभवनं शिवलोकं शिवो गतः ।।
सर्वस्वास्थ्यमतीवाप दूरीभूतो ह्युपद्रवः ।।२७।।
सनत्कुमार उवाच ।।
इत्युक्त्वा जगतां नाथः शयनं च चकार ह ।।
रेमे रमापतिस्तत्र रमया स तया मुदा ।।२८।।
सा साध्वी सुखसंभावकर्षणस्य व्यतिक्रमात् ।।
सर्वं वितर्कयामास कस्त्वमेवेत्युवाच सा ।। २९ ।।
तुलस्युवाच ।।
को वा त्वं वद मामाशु भुक्ताहं मायया त्वया ।।
दूरीकृतं यत्सतीत्वमथ त्वां वै शपाम्यहम्।।2.5.41.३०।।

सनत्कुमार उवाच ।।
तुलसीवचनं श्रुत्वा हरिश्शापभयेन च।।
दधार लीलया ब्रह्मन्स्वमूर्तिं सुमनोहराम्।।३१।।
तद्दृष्ट्वा तुलसीरूपं ज्ञात्वा विष्णुं तु चिह्नतः ।।
पातिव्रत्यपरित्यागात् क्रुद्धा सा तमुवाच ह ।।३२।।
तुलस्युवाच ।।
हे विष्णो ते दया नास्ति पाषाणसदृशं मनः ।।
पतिधर्मस्य भंगेन मम स्वामी हतः खलु ।।३३।।
पाषाणसदृशस्त्वं च दयाहीनो यतः खलः ।।
तस्मात्पाषाणरूपस्त्वं मच्छापेन भवाधुना ।। ३४ ।।
ये वदंति दयासिन्धुं त्वां भ्रांतास्ते न संशयः ।।
भक्तो विनापराधेन परार्थे च कथं हतः ।।३५।।
सनत्कुमार उवाच।।
इत्युक्त्वा तुलसी सा वै शंखचूडप्रिया सती ।।
भृशं रुरोद शोकार्ता विललाप भृशं मुहुः।।३६।।
ततस्तां रुदतीं दृष्ट्वा स विष्णुः परमेश्वरः ।।
सस्मार शंकरं देवं येन संमोहितं जगत् ।।३७।।
ततः प्रादुर्बभूवाथ शंकरो भक्तवत्सलः ।।
हरिणा प्रणतश्चासीत्संनुतो विनयेन सः ।। ३८ ।।
शोकाकुलं हरिं दृष्ट्वा विलपंतीं च तत्प्रियाम् ।।
नयेन बोधयामास तं तां कृपणवत्सलाम् ।। ३९ ।।
शंकर उवाच ।।
मा रोदीस्तुलसि त्वं हि भुंक्ते कर्मफलं जनः ।।
सुखदुःखदो न कोप्यस्ति संसारे कर्मसागरे ।। 2.5.41.४० ।।
प्रस्तुतं शृणु निर्दुःखं शृणोति सुमना हरिः ।।
द्वयोस्सुखकरं यत्तद्ब्रवीमि सुखहेतवे ।। ४१ ।।
तपस्त्वया कृतं भद्रे तस्यैव तपसः फलम् ।।
तदन्यथा कथं स्याद्वै जातं त्वयि तथा च तत् ।। ४२ ।।
इदं शरीरं त्यक्त्वा च दिव्यदेहं विधाय च।।
रमस्व हरिणा नित्यं रमया सदृशी भव ।।४३।।
तवेयं तनुरुत्सृष्टा नदीरूपा भवेदिह ।।
भारते पुण्यरूपा सा गण्डकीति च विश्रुता ।।४४।।
कियत्कालं महादेवि देवपूजनसाधने ।।

प्रधानरूपा तुलसी भविष्यति वरेण मे ।। ४५ ।।
स्वर्गे मर्त्ये च पाताले तिष्ठ त्वं हरिसन्निधौ ।।
भव त्वं तुलसीवृक्षो वरा पुष्पेषु सुन्दरी ।। ४६ ।।
वृक्षाधिष्ठातृदेवी त्वं वैकुंठे दिव्यरूपिणी ।।
सार्द्धं रहसि हरिणा नित्यं क्रीडां करिष्यसि ।।४७।।
नद्यधिष्ठातृदेवी या भारते बहु पुण्यदा ।।
लवणोदस्य पत्नी सा हर्यंशस्य भविष्यसि ।।४८।।
हरिर्वै शैलरूपी च गंडकी तीरसंनिधौ ।।
संकरिष्यत्यधिष्ठानं भारते तव शापतः ।। ४९ ।।
तत्र कोट्यश्च कीटाश्च तीक्ष्णदंष्ट्रा भयंकराः ।।
तच्छित्त्वा कुहरे चक्रं करिष्यंति तदीयकम् ।।2.5.41.५०।।
शालग्रामशिला सा हि तद्भेदादतिपुण्यदा।।
लक्ष्मीनारायणाख्यादिश्चक्रभेदाद्भविष्यति ।।५१।।
शालग्रामशिला विष्णो तुलस्यास्तव संगमः ।।
सदा सादृश्यरूपा या बहुपुण्यविवर्द्धिनी ।। ५२ ।।
तुलसीपत्रविच्छेदं शालग्रामे करोति यः ।।
तस्य जन्मान्तरे भद्रे स्त्रीविच्छेदो भविष्यति ।। ५३ ।।
तुलसीपत्रविच्छेदं शंखं हित्वा करोति यः ।।
भार्याहीनो भवेत्सोपि रोगी स्यात्सप्तजन्मसु ।। ५४ ।।
शालग्रामश्च तुलसी शंखं चैकत्र एव हि ।।
यो रक्षति महाज्ञानी स भवेच्छ्रीहरिप्रियः ।। ५५ ।।
त्वं प्रियः शंखचूडस्य चैकमन्वन्तरावधि ।।
शंखेन सार्द्धं त्वद्भेदः केवलं दुःखदस्तव ।। ५६ ।।
सनत्कुमार उवाच ।।
इत्युक्त्वा शंकरस्तत्र माहात्म्यमूचिवांस्तदा ।।
शालग्रामशिलायाश्च तुलस्या बहुपुण्यदम् ।। ५७ ।।
ततश्चांतर्हितो भूत्वा मोदयित्वा हरिं च ताम् ।।
जगाम् स्वालयं शंभुः शर्मदो हि सदा सताम् ।। ५८ ।।
इति श्रुत्वा वचश्शंभोः प्रसन्ना तु तुलस्यभूत् ।।
तद्देहं च परित्यज्य दिव्यरूपा बभूव ह ।। ५९ ।।
प्रजगाम तया सार्द्धं वैकुंठं कमलापतिः ।।
सद्यस्तद्देहजाता च बभूव गंडकी नदी ।। 2.5.41.६० ।।
शैलोभूदच्युतस्सोऽपि तत्तीरे पुण्यदो नृणाम् ।।

कुर्वंति तत्र कीटाश्च छिद्रं बहुविधं मुने ।। ६१ ।।
जले पतंति यास्तत्र शिलास्तास्त्वतिपुण्यदाः ।।
स्थलस्था पिंगला ज्ञेयाश्चोपतापाय चैव हि ।। ६२ ।।
इत्येवं कथितं सर्वं तव प्रश्नानुसारतः ।।
चरितं पुण्यदं शंभोः सर्वकामप्रदं नृणाम् ।। ६३ ।।
आख्यानमिदमाख्यातं विष्णुमाहात्म्यमिश्रितम् ।।
भुक्तिमुक्तिप्रदं पुण्यं किं भूयः श्रोतुमिच्छसि ।। ६४ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे शंखचूडव धोपाख्याने तुलसीशापवर्णनं नामैकचत्वारिंशोऽध्यायः ।। ४१ ।।

नारद उवाच ।।
शंखचूडवधं श्रुत्वा चरितं शशिमौलिनः ।।
अयं तृप्तोऽस्मि नो त्वत्तोऽमृतं पीत्वा यथा जनः ।। १ ।।
ब्रह्मन्यच्चरितं तस्य महेशस्य महात्मनः ।।
मायामाश्रित्य सल्लीलां कुर्वतो भक्तमोददाम् ।। २ ।।
ब्रह्मोवाच ।।
जलंधरवधं श्रुत्वा व्यासस्सत्यवतीसुतः ।।
अप्राक्षीदिममेवार्थं ब्रह्मपुत्रं मुनीश्वरम् ।। ३ ।।
सनत्कुमारः प्रोवाच व्यासं सत्यवतीसुतम् ।।
सुप्रशंस्य महेशस्य चरितं मंगलायनम् ।। ४ ।।
सनत्कुमार उवाच ।।
शृणु व्यास महेशस्य चरितं मंगलायनम् ।।
यथान्धको गाणपत्यं प्राप शंभोः परात्मनः ।। ५ ।।
कृत्वा परमसंग्रामं तेन पूर्वं मुनीश्वर ।।
प्रसाद्य तं महेशानं सत्त्वभावात्पुनः पुनः ।। ६ ।।
माहात्म्यमद्भुतं शंभोश्शरणागतरक्षिणः ।।
सुभक्तवत्सलस्यैव नानालीलाविहारिणः ।। ७ ।।
माहात्म्यमेतद्वृषभध्वजस्य श्रुत्वा मुनिर्गंधवतीसुतो हि ।।
वचो महार्थं प्रणिपत्य भक्त्या ह्युवाच तं ब्रह्मसुतं मुनींद्रम् ।। ८ ।।
व्यास उवाच ।।
को ह्यंधको वै भगवन्मुनीश कस्यान्वये वीर्यवतः पृथिव्याम् ।।
जातो महात्मा बलवान् प्रधानः किमात्मकः कस्य सुतोंऽधकश्च ।। ९ ।।
एतत्समस्तं सरहस्यमद्य ब्रवीहि मे ब्रह्मसुतप्रसादात् ।।
स्कंदान्मया वै विदितं हि सम्यक् महेशपुत्रादमितावबोधात् ।। 2.5.42.१० ।।
गाणपत्यं कथं प्राप शंभोः परमतेजसः ।।
सोंधको धन्य एवाति यो वभूव गणेश्वरः ।। ११ ।।
।। ब्रह्मोवाच ।।
व्यासस्य चैतद्वचनं निशम्य प्रोवाच स ब्रह्मसुतस्तदानीम् ।।
महेश्वरोतीः परमाप्तलक्ष्मीस्संश्रोतुकामं जनकं शुकस्य ।।१२।।
सनत्कुमार उवाच ।।
पुराऽऽगतो भक्तकृपाकरोऽसौ कैलासतश्शैलसुता गणाढ्यः ।।
विहर्तुकामः किल काशिका वै स्वशैलतो निर्जरचक्रवती ।। १३ ।।
स राजधानीं च विधाय तस्यां चक्रं परोतीः सुखदा जनानाम् ।।

तद्रक्षकं भैरवनामवीरं कृत्वा समं शैलजयाहि बह्वीः।।१४।।
स एकदा मंदरनामधेयं गतो नगे तद्वरसुप्रभावात् ।।
तत्रापि मानागणवीरमुख्यैश्शिवासमेतो विजहार भूरि।।१५।।
पूर्वे दिशो मन्दर शैलसंस्था कपर्द्दिनश्चंडपराकमस्य।।
चक्रे ततो नेत्रनिमीलनं तु सा पार्वती नर्मयुतं सलीलम्।।१६।।
प्रवालहेमाब्जधृतप्रभाभ्यां कराम्बुजाभ्यां निमिमील नेत्रे।।
हरस्य नेत्रेषु निमीलितेषु क्षणेन जातः सुमहांधकारः।।१७।।
तत्स्पर्शयोगाच्च महेश्वरस्य करौ च तस्याः स्खलितं मदांभः।।
शंभोर्ललाटे क्षणवह्निनतप्तो विनिर्गतो भूरिजलस्य बिन्दुः।।१८।।
गर्भो बभूवाथ करालवक्त्रो भयंकरः क्रोधपरः कृतघ्नः।।
अन्धो विरूपी जटिलश्च कृष्णो नरेतरो वैकृतिकस्सुरोमा।।१९।। गायन्हसन्प्ररुदन्नृत्यमानो
विलेलिहानो घरघोरघोषः।।
जातेन तेनाद्भुतदर्शनेन गौरीं भवोऽसौ स्मितपूर्वमाह।।2.5.42.२०।।
श्रीमहेश उवाच।।
निमील्य नेत्राणि कृतं च कर्म बिभेषि साऽस्माद्दयिते कथं त्वम् ।।
गौरी हरात्तद्वचनं निशम्य विहस्यमाना प्रमुमोच नेत्रे ।।२१।।
जाते प्रकाशे सति घोररूपो जातोंधकारादपि नेत्रहीनः ।।
तादृग्विधं तं च निरीक्ष्य भूतं पप्रच्छ गौरी पुरुषं महेशम् ।। २२ ।।
गौर्य्युवाच ।।
कोयं विरूपो भगवन्हि जातो नावग्रतो घोरभयंकरश्च ।।
वदस्व सत्यं मम किं निमित्तं सृष्टोऽथ वा केन च कस्य पुत्रः ।। २३ ।।
सनत्कुमार उवाच ।।
श्रुत्वा हरस्तद्वचनं प्रियाया लीलाकरस्सृष्टिकृतोंऽधरूपाम् ।।
लीलाकरायास्त्रिजगज्जनन्या विहस्य किंचिद्भगवानुवाच ।।२४।।
महेश उवाच ।।
शृण्वंबिके ह्यद्भुतवृत्तकारे उत्पन्न एषोऽद्भुतचण्डवीर्यः ।।
निमीलिते चक्षुषि मे भवत्या स स्वेदजो मेंधकनामधेयः ।।२५।।
त्वं चास्य कर्तास्ययथानुरूपं त्वया ससख्या दयया गणेभ्यः ।।
स रक्षितव्यस्त्व यि तं हि वैकं विचार्य बुद्ध्या करणीयमार्ये ।। २६ ।।
सनत्कुमार उवाच ।।
गौरी ततो भृत्यवचो निशम्य कारुण्यभावात्सहिता सखीभिः ।।
नानाप्रकारैर्बहुभिर्ह्युपायैश्चकार रक्षां स्वसुतस्य यद्वत् ।।२७।।
कालेऽथ तस्मिन्शिशिरे प्रयातो हिरण्यनेत्रस्त्वथ पुत्रकामः।।

स्वज्येष्ठबंधोस्तनयप्रतानं संवीक्ष्य चासीत्प्रियया नियुक्तः।।२८।।
अरण्यमाश्रित्य तपश्चकारासुरस्तदा कश्यपजस्सुतार्थम् ।।
काष्ठोपमोऽसौ जितरोषदोषस्संदर्शनार्थं तु महेश्वरस्य ।। २९ ।।
तुष्टः पिनाकी तपसास्य सम्यग्वरप्रदानाय ययौ द्विजेन्द्र ।।
तत्स्थानमासाद्य वृषध्वजोऽसौ जगाद दैत्यप्रवरं महेशः ।। 2.5.42.३० ।।
महेश उवाच ।।
हे दैत्यनाथ कुरु नेन्द्रियसंघपातं किमर्थमेतद्व्रतमाश्रितं ते ।।
प्रब्रूहि कामं वरदो भवोऽहं यदिच्छसि त्वं सकलं ददामि ।। ३१ ।।
सनत्कुमार उवाच ।।
सरस्यमाकर्ण्य महेशवाक्यं ह्यतिप्रसन्नः कनकाक्षदैत्यः ।।
कृतांजलिर्नम्रशिरा उवाच स्तुत्या च नत्वा विविधं गिरीशम् ।। ३२ ।।
।। हिरण्याक्ष उवाच ।।
पुत्रस्तु मे चन्द्रललाट नास्ति सुवीर्यवान्दैत्यकुलानुरूपी ।।
तदर्थमेतद्व्रतमास्थितोऽहं तं देहि देवेश सुवीर्यवंतम्।।३३।।
यस्माच्च मद्भ्रातुरनंतवीर्याः प्रह्लादपूर्वा अपि पंचपुत्राः ।।
ममेह नास्तीति गतान्वयोऽहं को मामकं राज्यमिदं बुभूषेत् ।। ३४।। ।।
राज्यं परस्य स्वबलेन हृत्वा भुंक्तेऽथवा स्वं पितुरेव दृष्टम् ।।
च प्रोच्यते पुत्र इह त्वमुत्र पुत्री स तेनापिभवेत्पितासौ ।। ३५ ।।
ऊर्द्ध्वं गतिः पुत्रवतां निरुक्ता मनीषिभिर्धर्मभृतां वरिष्ठैः ।।
सर्वाणि भूतानि तदर्थमेवमतः प्रवर्तेत पशून् स्वतेजसः ।। ३६ ।।
निरन्वयस्याथ न संति लोकास्तदर्थमिच्छंति जनाः सुरेभ्यः ।।
सदा समाराध्य सुरात्रिपंकजं याचंत इत्थं सुतमेकमेव ।। ३७ ।।
सनत्कुमार उवाच ।।
एतद्भवस्तद्वचनं निशम्य कृपाकरो दैत्यनृपस्य तुष्टः।।
तमाह दैत्यातप नास्ति पुत्रस्त्वद्वीर्यजः किंतु ददामि पुत्रम् ।।३८।।
ममात्मजं त्वंधकनामधेयं त्वत्तुल्यवीर्यं त्वपराजितं च ।।
वृणीष्व पुत्रं सकलं विहाय दुःखं प्रतीच्छस्व सुतं त्वमेव ।।३९।।
सनत्कुमार उवाच ।।
इत्येवमुक्त्वा प्रददौ स तस्मै हिरण्यनेत्राय सुतं प्रसन्नः ।।
हरस्तु गौर्य्या सहितो महात्मा भूतादिनाथस्त्रिपुरारिरुग्रः ।। 2.5.42.४० ।।
नतो हरात्प्राप्य सुतं स दैत्यः प्रदक्षिणीकृत्य यथाक्रमेण ।।
स्तोत्रैरनेकैरभिपूज्य रुद्रं तुष्टस्स्वराज्यं गतवान्महात्मा ।।४१
ततस्तु पुत्रं गिरिशादवाप्य रसातलं चंडपराक्रमस्तु ।।

इमां धरित्रीमनयत्स्वदेशं दैत्यो विजित्वा त्रिदशानशेषान् ।। ४२ ।।
ततस्तु देवेर्मुनिभिश्च सिद्धैः सर्वात्मकं यज्ञमयं करालम् ।।
वाराहमाश्रित्य वपुः प्रधानमाराधितो विष्णुरनंतवीर्यः ।। ४३ ।।
घोणाप्रहारैर्विविधैर्धरित्रीं विदार्य पातालतलं प्रविश्य ।।
तुंडेन दैत्याञ्शतशो विचूर्ण्य दंष्ट्राभिरग्र्याभि अखंडिताभिः ।।४४।।
पादप्रहारैरशनिप्रकाशैरुन्मथ्य सैन्यानि निशाचराणाम् ।।
मार्तंडकोटिप्रतिमेन पश्चात्सुदर्शनेनाद्भुतचंडतेजाः ।। ४५ ।।
हिरण्यनेत्रस्य शिरो ज्वलंतं चिच्छेद दैत्यांश्च ददाह दुष्टान् ।।
ततः प्रहृष्टो दितिजेन्द्रराजं स्वमंधकं तत्र स चाभ्यषिंचत् ।। ४६ ।।
स्वस्थानमागत्य ततो धरित्रीं दृष्ट्वांकुरेणोद्धरतः प्रहृष्टः ।।
भूमिं च पातालतलान्महात्मा पुपोष भागं त्वथ पूर्वकं तु।।४७।।
देवैस्समस्तैर्मुनिभिःप्रहृष्टै रभिषुतः पद्मभुवा च तेन ।।
ययौ स्वलोकं हरिरुग्रकायो वराहरूपस्तु सुकार्यकर्ता ।। ४८ ।।
हिरण्यनेत्रेऽथ हतेऽसुरेशे वराहरूपेण सुरेण देवाः ।।
देवास्समस्ता मुनयश्च सर्वे परे च जीवास्सुखिनो बभूवुः ।। ४९ ।। ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे हिरण्याक्षवधो नाम द्विचत्वारिंशोऽध्यायः ।। ४२ ।।

व्यास उवाच ।।
सनत्कुमार सर्वज्ञ हते तस्मिन्सुरद्रुहि ।।
किमकार्षीत्ततस्तस्य ज्येष्ठभ्राता महासुरः ।।१।।
कुतूहलमिति श्रोतुं ममाऽतीह मुनीश्वर ।।
तच्छ्रावय कृपां कृत्वा ब्रह्मपुत्र नमोस्तु ते ।। २ ।।
ब्रह्मोवाच ।।
इत्याकर्ण्य वचस्तस्य व्यासस्य स मुनीश्वरः ।।
सनत्कुमारः प्रोवाच स्मृत्वा शिवपदाम्बुजम् ।।३।।
।। सनत्कुमार उवाच ।।
भ्रातर्येवं विनिहते हरिणा क्रोडमूर्तिना ।।
हिरण्यकशिपुर्व्यास पर्यतप्यद्रुषा शुचा।।४।।
ततः प्रजानां कदनं विधातुं कदनप्रियान् ।।
निर्दिदेशाऽसुरान्वीरान्हरि वैरप्रियो हि सः ।।५।।
अथ ते भर्तृसंदेशमादाय शिरसाऽसुराः।।
देवप्रजानां कदनं विदधुः कदनप्रियाः ।।६।।
ततो विप्रकृते लोकेऽसुरैस्तेर्दुष्टमानसैः।।
दिवं देवाः परित्यज्य भुवि चेरुरलक्षिताः ।।७।।
हिरण्यकशिपुर्भ्रातुस्संपरेतस्य दुःखितः ।।
कृत्वा करोदकादीनि तत्कलत्राद्यसांत्वयत् ।। ८ ।।
ततस्स दैत्यराजेन्द्रो ह्यजेयमजरामरम् ।।
आत्मानमप्र तिद्वंद्वमेकराज्यं व्यधित्सत ।। ९ ।।
स तेपे मंदरद्रोण्यां तपः परमदारुणम् ।।
ऊर्द्ध्वबाहुर्नभोदृष्टिः षादांगुष्ठाश्रितावनिः ।।2.5.43.१०।।
तस्मिंस्तपस्तप्यमाने देवास्सर्वे बलान्विताः ।।
दैत्यान्सर्वान्विनिर्जित्य स्वानि स्थानानि भेजिरे ।। ११ ।।
तस्य मूर्द्ध्नस्समुद्भूतः सधूमोग्निस्तपोमयः ।।
तिर्यगूर्द्ध्वमधोलोकानतपद्विष्वगीरितः ।। १२ ।।
तेन तप्ता दिवं त्यक्त्वा ब्रह्मलोकं ययुस्सुराः।।
धात्रे विज्ञापयामासुस्तत्तपोविकृताननाः ।। १३ ।।
अथ विज्ञापितो देवैर्व्यास तैरात्मभूर्विधिः।।
परीतो भृगुदक्षाद्यैर्ययौ दैत्येश्वराश्रमम् १।।
प्रताप्य लोकानखिलांस्ततोऽसौ समागतं पद्मभवं ददर्श ।।
वरं हि दातुं तमुवाच धाता वरं वृणीष्वेति पितामहोपि ।।

निशम्य वाचं मधुरां विधातुर्वचोऽब्रवीदेव ममूढबुद्धिः ।। १५ ।।
हिरण्यकशिपुरुवाच ।।
मृत्योर्भयं मे भगवन्प्रजेश पितामहाभून्न कदापि देव ।।
शास्त्रास्त्रपाशाशनिशुष्कवृक्षगिरीन्द्रतोयाग्निरिपुप्रहारैः ।। १६ ।।
देवैश्च दैत्यैर्मुनिभिश्च सिद्धैस्त्वत्सृष्टजीवैर्बहुवाक्यतः किम् ।।
स्वर्गे धरण्यां दिवसे निशायां नैवोर्द्ध्वतो नाप्यधतः प्रजेश ।। १७ ।।
सनत्कुमार उवाच ।।
तस्यैतदीदृग्वचनं निशम्य दैत्येन्द्र तुष्टोऽस्मि लभस्व सर्वम् ।।
प्रणम्य विष्णुं मनसा तमाह दयान्वितोऽसाविति पद्मयोनिः ।। १८ ।।
अलं तपस्ते परिपूर्ण कामस्समाः सहस्राणि च षण्णवत्य ।।
उत्तिष्ठ राज्यं कुरु दानवानां श्रुत्वा गिरं तत्सुमुखो बभूव ।। १९ ।।
राज्याभिषिक्तः प्रपितामहेन त्रैलोक्यनाशाय मतिं चकार ।।
उत्साद्य धर्मान् सकलान्प्रमत्तो जित्वाहवे सोपि सुरान्समस्तान् ।। ।। 2.5.43.२० ।।
ततो भयादिंद्रमुखाश्च देवाः पितामहाज्ञां समवाप्य सर्वे ।।
उपद्रुता दैत्यवरेण जाताः क्षीरोदधिं यत्र हरिस्तु शेते ।। २१ ।।
आराधयामासुरतीव विष्णुं स्तुत्वा वचोभित्सुखदं हि मत्वा ।।
निवेदयामासुरथो प्रसन्नं दुःखं स्वकीयं सकलं हि तेते ।। २२ ।।
श्रुत्वा तदीयं सकलं हि दुःखं तुष्टो रमेशः प्रददौ वरांस्तु ।।
उत्थाय तस्माच्छयनादुपेन्द्रो निजानुरूपैर्विविधैर्वचोभिः ।। २३ ।।
आश्वास्य देवानखिलान्मुनीन्वा उवाच वैश्वानरतुल्यतेजाः ।।
दैत्यं हनिष्ये प्रसभं सुरेशाः प्रयात धामानि निजानि तुष्टाः।। २४ ।।
श्रुत्वा रमेशस्य वचस्सुरेशाः शक्रादिकास्ते निखिलाः सुतुष्टाः।।
ययुः स्वधामानि हिरण्यनेत्रानुजं च मत्वा निहतं मुनीश ।। २५ ।।
आश्रित्य रूपं जटिलं करालं दंष्ट्रायुधं तीक्ष्णनखं सुनासम् ।।
सैंहं च नारं सुविदारितास्यं मार्तंडकोटिप्रतिमं सुघोरम् ।। २६ ।।
युगांतकालाग्निसमप्रभावं जगन्मयं किं बहुभिर्वचोभिः ।।
अस्तं रवौसोऽपि हि गच्छतीशो गतोऽसुराणां नगरीं महात्मा ।। २७ ।।
कृत्वा च युद्धं प्रबलैस्स दैत्यैर्हत्वाथ तान्दैत्यगणान्गृहीत्वा ।।
बभ्राम तत्राद्रुतविक्रमश्च बभंज तांस्तानसुरान्नृसिंहः ।। २८ ।
दृष्टस्स दैत्यैरतुलप्रभावस्ते रेभिरे ते हि तथैव सर्वे ।।
सिंहं च तं सर्वमयं निरीक्ष्य प्रह्लादनामा दितिजेन्द्रपुत्रः ।।
उवाच राजानमयं मृगेन्द्रो जगन्मयः किं समुपागतश्च ।। २९ ।।
प्रह्लाद उवाच।।

एष प्रविष्टो भगवाननंतो नृसिंहमात्रो नगरं त्वदंतः ।।
निवृत्य युद्धाच्छ रणं प्रयाहि पश्यामि सिंहस्य करालमूर्त्तिम् ।।2.5.43.३०।।
यस्मान्न योद्धा भुवनत्रयेऽपि कुरुष्व राज्यं विनमन्मृगेन्द्रम् ।।
श्रुत्वा स्वपुत्रस्य वचो दुरात्मा तमाह भीतोऽसि किमत्र पुत्र ।।३१।।
उक्त्वेति पुत्रं दितिजाधिनाथो दैत्यर्षभान्वीरवरान्स राजा ।।
गृह्णंतु वै सिंहममुं भवंतो वीरा विरूपभ्रुकुटीक्षणं तु ।। ३२ ।।
तस्याज्ञया दैत्यवरास्ततस्ते ग्रहीतुकामा विविशुर्मृगेन्द्रम् ।।
क्षणेन दग्धाश्शलभा इवाग्निं रूपाभिलाषात्प्रविविक्षवो वै ।।३३।।
दैत्येषु दग्धेष्वपि दैत्यराजश्चकार युद्धं स मृगाधिपेन ।।
शस्त्रैस्समग्रैरखिलैस्तथास्त्रैश्श क्त्यर्ष्टिपाशांकुशपावकाद्यैः ।। ३४ ।।
संयुध्यतोरेव तयोर्जगाम ब्राह्मं दिनं व्यास हि शस्त्रपाण्योः ।।
प्रवीरयोर्वीररवेण गर्जतोः परस्परं क्रोधसुयुक्तचेतसोः ।।३५।।
ततः स दैत्यस्सहसा बहूंश्च कृत्वा भुजाञ्छस्त्रयुतान्निरीक्ष्य।।
नृसिंहरूपं प्रययौ मृगेन्द्र संयुध्यमानं सहसा समंतात् ।। ३६ ।।
ततस्सुयुद्धं त्वतिदुस्सहं तु शस्त्रैस्समस्तैश्च तथाखिलास्त्रैः ।।
कृत्वा महादैत्यवरो नृसिंहं क्षयं गतैश्शूल धरोऽभ्युपायात् ।।३७।।
ततो गृहीतस्स मृगाधिपेन भुजैरनेकैर्गिरिसारवद्भि ।।
निधाय जानौ स भुजांतरेषु नखांकुरैर्दानवमर्मभिद्भिः ।। ३. ।।
नखास्त्रहृत्पद्ममसृग्विमिश्रमुत्पाद्य जीवाद्विगतः क्षणेन ।।
त्यक्तस्तदानीं स तु काष्ठभूतः पुनः पुनश्चूर्णितसर्वगात्रः ।।३९।।
तस्मिन्हते देवरिपौ प्रसन्नः प्रह्लादमामंत्र्य कृतप्रणामम् ।।
राज्येऽभिषिच्याद्भुतवीर्यविष्णुस्ततः प्रयातो गतिमप्रतर्क्याम् ।। 2.5.43.४० ।।
ततोऽतिहृष्टास्सकलास्सुरेशाः प्रणम्य विष्णुं दिशि विप्र तस्याम् ।।
ययुः स्वधामानि पितामहाद्याः कृतस्वकार्यं भगवंतमीड्यम् ।। ४१ ।।
प्रवर्णितं त्वंधकजन्म रुद्राद्धिरण्यनेत्रस्य मृतिर्वराहात् ।।
नृसिंहतस्तत्सहजस्य नाशः प्रह्लादराज्याप्तिरिति प्रसंगात् ।। ४२ ।।
शृणु त्विदानीं द्विजवर्य मत्तोंधकप्रभावं भवकृत्यलब्धम् ।।
हरेण युद्धं खलु तस्य पश्चाद्गणाधिपत्यं गिरिशस्य तस्य।। ४३ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे गणाधिपत्यप्राप्त्यंधकजन्म
हिरण्यनेत्रहिरण्यकशिपुवधवर्णनं नाम त्रिचत्वारिंशोऽध्यायः ।। ४३ ।।

सनत्कुमार उवाच ।।
ततो हिरण्याक्षसुतः कदाचित्संश्रावितो नर्मयुतैर्मदांधैः।।
तैर्भ्रातृभिस्संप्रयुतो विहारे किमंध राज्येन तवाद्य कार्यम् ।। १ ।।
हिरण्यनेत्रस्तु बभूव मूढः कलिप्रियं नेत्रविहीनमेव ।।
यो लब्धवांस्त्वां विकृतं विरूपं घोरैस्तपोभिर्गिरिशं प्रसाद्य ।। २ ।।
स त्वं न भागी खलु राज्यकस्य किमन्यजातोऽपि लभेत राज्यम् ।।
विचार्यतां तद्भवतैव नूनं वयं तु तद्भागिन एव सत्यम् ।। ३ ।।
सनत्कुमार उवाच ।।
तेषां तु वाक्यानि निशम्य तानि विचार्य बुद्ध्या स्वयमेव दीनः ।।
ताञ्छांतयित्वा विविधैर्वचोभिर्गतस्त्वरण्यं निशि निर्जनं तु ।। ४ ।।
वर्षायुतं तत्र तपश्चचार जजाप जाप्यं विधृतैकपादः ।।
आहारहीनो नियमोर्द्ध्वबाहुः कर्त्तुं न शक्यं हि सुरा सुरैर्यत् ।। ५ ।।
प्रजाल्य वह्निं स्म जुहोति गात्रमांसं सरक्तं खलु वर्षमात्रम् ।।
तीक्ष्णेन शस्त्रेण निकृत्य देहात्समंत्रकं प्रत्यहमेव हुत्वा ।। ६ ।।
स्नाय्वस्थिशेषं कुणपं तदासौ क्षयं गतं शोणितमेव सर्वम् ।।
यदास्य मांसानि न संति देहं प्रक्षेप्तुकामस्तु हुताशनाय ।। ७ ।।
ततः स दृष्टस्त्रिदशालयैर्जनैः सुविस्मितैर्भीतियुतैस्समस्तैः ।।
अथामरैश्शीघ्रतरं प्रसादितो बभूव धाता नुतिभिर्नुतो हि ।। ८ ।।
निवारयित्वाथ पितामहस्तं ह्युवाच तं चाद्यवरं वृणीष्व ।।
यस्याप्तिकामस्तव सर्वलोके सुदुर्लभं दानव तं गृहाण ।।९।।
स पद्मयोनेस्तु वचो निशम्य प्रोवाच दीनः प्रणतस्तु दैत्यः ।।
यैर्निष्ठुरैर्मे प्रहृतं तु राज्यं प्रह्लादमुख्या मम संतु भृत्याः ।। 2.5.44.१० ।।
अंधस्य दिव्यं हि तथास्तु चक्षुरिन्द्रादयो मे करदा भवंतु।।
मृत्युस्तु माभून्मम देवदैत्यगंधर्वयक्षोरगमानुषेभ्यः ।।११।।
नारायणाद्वा दितिजेन्द्रशत्रोस्सर्वाज्जनात्सर्वमयाच्च शर्वात्।।
श्रुत्वा वचस्तस्य सुदारुणं तत्सुशंकितः पद्मभवस्तमाह ।।१२।।
ब्रह्मोवाच ।।
दैत्येन्द्र सर्वं भविता तदेतद्विनाशहेतुं च गृहाण किंचित् ।।
यस्मान्न जातो न जनिष्यते वा यो न प्रविष्टो मुखमंतकस्य ।।१३।।
अत्यन्तदीर्घं खलु जीवितं तु भवादृशास्सत्पुरुषास्त्यजंतु।।
एतद्वचस्सानुनयं निशम्य पितामहात्प्राह पुनस्तस्य दैत्यः ।।१४।।
अंधक उवाच।।
कालत्रये याश्च भवंति नार्यः श्रेष्ठाश्च मध्याश्च तथा कनिष्ठाः ।।

तासां च मध्ये खलु रत्नभूता ममापि नित्यं जननीव काचित् ।। १५ ।।
कायेन वाचा मनसाप्यगम्या नारी नृलोकस्य च दुर्लभाय ।।
तां कामयानस्य ममास्तु नाशो दैत्येन्द्रभावाद्भगवान्स्वयंभूः ।।१६।।
वाक्यं तदाकर्ण्य स पद्मयोनिः सुविस्मितश्शंकरपादपद्मम् ।।
सस्मार संप्राप्य निर्देशमाशु शंभोस्तु तं प्राह ततोंधकं वै ।। १७।।
ब्रह्मोवाच।।
यत्कांक्षसे दैत्यवरास्तु ते वै सर्वं भवत्येव वचस्सकामम्।।
उत्तिष्ठ दैत्येन्द्र लभस्व कामं सदैव वीरैस्तु कुरुष्व युद्धम्।।१८।।
श्रुत्वा तदेतद्वचनं मुनीश विधातुराशु प्रणिपत्य भक्त्या ।।
लोकेश्वरं हाटकनेत्रपुत्रः स्नाय्वस्थिशेषस्तु तमाह देवम्।।१९।।
अंधक उवाच ।।
कथं विभो वैरिबलं प्रविश्य ह्यनेन देहेन करोमि युद्धम् ।।
स्नाय्वस्थिशेषं कुरु मांसपुष्टं करेण पुण्ये न च मां स्पृशाद्य ।। 2.5.44.२० ।।
।। सनत्कुमार उवाच ।।
श्रुत्वा वचस्तस्य स पद्मयोनिः करेण संस्पृश्य च तच्छरीरम् ।।
गतस्सुरेन्द्रैस्सहितः स्वधाम संपूज्यमानो मुनिसिद्धसंघैः ।।२१।।
संस्पृष्टमात्रस्स च दैत्यराजस्संपूर्णदेहो बलवान्बभूव ।।
संजातनेत्रस्सुभगो बभूव हृष्टस्स्वमेव नगरं विवेश ।। २२ ।।
उत्सृज्य राज्यं सकलं च तस्मै प्रह्लादमुख्यास्त्वथ दानवेन्द्राः ।।
तमागतं लब्धवरं च मत्वा भृत्या बभूवुर्वश गास्तु तस्य ।।२३।।
ततोन्धकः स्वर्गमगाद्विजेतुं सेनाभियुक्तस्सहभृत्यवर्गः ।।
विजित्य लेखान्प्रधने समस्तान्करप्रदं वज्रधरं चकार ।। २४ ।।
नागान्सुपर्णान्वरराक्षसांश्च गंधर्वयक्षानपि मानुषांस्तु ।।
गिरीन्द्रवृक्षान्समरेषु सर्वांश्चतुष्पदः सिंहमुखान्विजिग्ये ।।२५।।
त्रैलोक्यमेतद्धि चराचरं वै वशं चकारात्मनि संनियोज्य ।।
स ??कूलानि सुदर्शनानि नारीसहस्राणि बहूनि गत्वा ।। २६।।
रसातले चैव तथा धरायां त्रिविष्टपे याः प्रमदाः सुरूपाः ।।
ताभिर्युतोऽन्येषु सपर्वतेषु रराम रम्येषु नदीतटेषु ।। २७ ।।
क्रीडायमानस्स तु मध्यवर्ती तासां प्रहर्षादथ दानवेन्द्रः ।।
तत्पीतशिष्टानि पिबन्प्रवृत्त्यै दिव्यानि पेयानि सुमानुषाणि ।। २८ ।।
अन्यानि दिव्यानि तु यद्रसानि फलानि मूलानि सुगंधवंति ।।
संप्राप्य यानानि सुवाहनानि मयेन सृष्टानि गृहोत्तमानि ।। २९ ।।
पुष्पार्घधूपान्नविलेपनैश्च सुशोभितान्यद्भुतदर्शनैश्च ।।

संक्रीडमानस्य गतानि तस्य वर्षायुतानीह तथांधकस्य ।। 2.5.44.३० ।।
जानाति किंचिन्न शुभं परत्र यदात्मनस्सौख्यकरं भवेद्धि ।।
सदान्धको दैत्यवरस्स मूढो मदांधबुद्धिः कृतदुष्टसंगः ।। ३१ ।।
ततः प्रमत्तस्तु सुतान्प्रधानान्कुतर्कवादैरभिभूय सर्वान् ।।
चचार दैत्यैस्सहितो महात्मा विनाशयन्वैदिकसर्वधर्मान्।। ३२ ।।
वेदान्द्विजान्वित्त मदाभिभूतो न मन्यते स्माप्यमरान्गुरूंश्च ।।
रेमे तथा दैवगतो हतायुः स्वस्यैरहोभिर्गमयन्वयश्च ।। ३३ ।।
ततः कदाचिद्गतवान्ससैन्यो बहुप्रयाता पृथिवीतलेऽस्मिन् ।।
अनेकसंख्या अपि वर्षकोट्यः प्रहर्षितो मंदरपर्वतं तु ।। ३४ ।।
स्वर्णोपमां तत्र निरीक्ष्य शोभां बभ्राम सैन्यैस्सह मानमत्तः ।।
क्रीडार्थमासाद्य च तं गिरीन्द्रं मतिं स वासाय चकार मोहात् ।। ३५ ।।
शुभं दृढं तत्र पुरं स कृत्वा मुदास्थितो दैत्यपतिः प्रभावात् ।।
निवेशयामास पुनः क्रमेण अत्यद्भुतं मन्दरशैलसानौ ।।३६।।
दुर्योधनो वैधसहस्तिसंज्ञौ तन्मंत्रिणौ दानवसत्तमस्य ।।
ते वै कदाचिद्गिरिसुस्थले हि नारीं सुरूपां ददृशुस्त्रयोऽपि ।।३७।।
ते शीघ्रगा दैत्यवरास्तु हर्षाद्द्रुतं महादैत्यपतिं समेत्य ।।
ऊचुर्यथादृष्टमतीव प्रीत्या तथान्धकं वीरवरं हि सर्वे ।।३८।।
मंत्रिणः ऊचुः ।।
गुहांतरे ध्याननिमीलिताक्षो दैत्येन्द्र कश्चिन्मुनिरत्र दृष्टः ।।
रूदान्वितश्चन्द्रकलार्द्धचूडः कटिस्थले बद्धगजेन्द्रकृत्तिः ।। ३९ ।।
नागेन्द्रभोगावृतसर्वगात्रः कपालमालाभरणो जटालः ।।
स शूलहस्तश्शरतूणधारी महाधनुष्मान्विवृताक्षसूत्रः ।। 2.5.44.४० ।।
खड्गी त्रिशूली लकुटी कपर्दी चतुर्भुजो गौरतराकृतिर्हि ।।
भस्मानुलिप्तो विलसत्सुतेजास्तपस्विवर्योऽद्भुतसर्ववेशः ।। ४१ ।।
तस्याविदूरे पुरुषश्च दृष्टस्स वानरो घोरमुखःकरालः ।।
सर्वायुधो रूक्षकरश्च रक्षन्स्थितो जरद्गोवृषभश्च शुक्लः ।।४२।।
तस्योपविष्टस्य तपस्विनोपि सुचारुरूपा तरुणी मनोज्ञा ।।
नारी शुभा पार्श्वगता हि तस्य दृष्टा च काचिद्भुवि रत्नभूता ।।४३।।
प्रवालमुक्तामणि हेमरत्नवस्त्रावृता माल्यशुभोपगूढा ।।
सा येन दृष्टा स च दृष्टिमान्स्याद् दृष्टेन चान्येन किमत्र कार्यम् ।।४४।।
मान्या महेशस्य च दिव्यनारी भार्य्या मुनेः पुण्यवतः प्रिया सा ।।
योग्या हि द्रष्टुं भवतश्च सम्यगानाय्य दैत्येन्द्र सुरत्नभोक्तः ।। ४५ ।।
।। सनत्कुमार उवाच ।।

श्रुत्वेति तेषां वचनानि तानि कामातुरो घूर्णितसर्वगात्रः ।।
विसर्जयामास मुनैस्सकाशं दुर्योधनादीन्सहसा स दैत्यः।।४६।।
आसाद्य ते तं मुनिमप्रमेयं बृहद्व्रतं मंत्रिवरा हि तस्य ।।
सुराजनीतिप्रवणा मुनीश प्रणम्य तं दैत्यनिदेशमाहुः ।।४७।।
मंत्रिण ऊचुः।।
हिरण्यनेत्रस्य सुतो महात्मा दैत्याधिराजोऽन्धकनामधेयः ।।
त्रैलोक्यनाथो भवकृन्निदेशादिहोपविष्टोऽद्य विहारशाली ।। ४८ ।।
तन्मंत्रिणो वै वयमंगवीरास्तवोपकंठं च समागताः स्मः ।।
तत्प्रेषितास्त्वां यदुवाच तद्वै शृणुष्व संदत्तमनास्तपस्विन् ।।४९।।
त्वं कस्य पुत्रोऽसि किमर्थमत्र सुखोपविष्टो मुनिवर्य धीमन् ।।
कस्येयमीदृक्तरुणी सुरूपा देया शुभा दैत्यपतेर्मुनीन्द्र ।। 2.5.44.५० ।।
क्वेदं शरीरं तव भस्मदिग्धं कपालमालाभरणं विरूपम् ।।
तूणीरसत्कार्मुकबाणखड्गभुशुंडिशूलाशनितोमराणि ।। ५१ ।।
क्व जाह्नवी पुण्यतमा जटाग्रे क्वायं शशी वा कुणपास्थिखण्डम् ।।
विषानलो दीर्घमुखः क्व सर्पः क्व संगमः पीनपयोधरायाः ।।५२।।
जरद्गवारोहणमप्रशस्तं क्षमावतस्तस्य न दर्शनं च ।।
संध्याप्रणामः क्वचिदेष धर्मः क्व भोजनं लोकविरुद्धमेतत् ।। ५३ ।।
प्रयच्छ नारीं सम सान्त्वपूर्वं स्त्रिया तपः किं कुरुषे विमूढ ।।
अयुक्तमेतत्त्वयि नानुरूपं यस्मादहं रत्नपतिस्त्रिलोके ।। ५४ ।।
विमुंच शस्त्राणि मयाद्य चोक्तः कुरुष्व पश्चात्तव एव शुद्धम् ।।
उल्लंघ्य मच्छासनमप्रधृष्यं विमोक्ष्यसे सर्वमिदं शरीरम् ।। ५५ ।।
मत्वांधकं दुष्टमतिं प्रधानो महेश्वरो लौकिकभावशीलः ।।
प्रोवाच दैत्यं स्मितपूर्वमेवमाकर्ण्य सर्वं त्वथ दूतवाक्यम्।।५६।।
शिव उवाच ।।
यद्यस्मि रुद्रस्तव किं मया स्यात्किमर्थमेवं वदसीति मिथ्या ।।
शृणु प्रभावं मम दैत्यनाथ न्याय्यं न वक्तुं वचनं त्वयैवम् ।। ५७ ।।
नाहं क्वचित्स्वं पितरं स्मरामि गुहांतरे घोरमनन्यचीर्णम् ।।
एतद्व्रतं पशुपातं चरामि न मातरं त्वज्ञतमो विरूपः ।। ५८ ।।
अमूलमेतन्मयि तु प्रसिद्धं सुदुस्त्यजं सर्वमिदं ममास्ति ।।
भार्या ममेयं तरुणी सुरूपा सर्वंसहा सर्वगतस्य सिद्धिः ।।५९।।
एतर्हि यद्यद्रुचितं तवास्ति गृहाण तद्वै खलु राक्षस त्वम् ।।
एतावदुक्त्वा विरराम शंभुस्तपस्विवेषः पुरतस्तु तेषाम् ।।2.5.44.६०।।
सनत्कुमार उवाच ।।

गंभीरमेतद्वचनं निशम्य ते दानवास्तं प्रणिपत्य मूर्ध्ना ।।
जग्मुस्ततो दैत्यवरस्य सूनुं त्रैलोक्यनाशाय कृतप्रतिज्ञम् ।। ६१ ।।
बभाषिरे दैत्यपतिं प्रमत्तं प्रणम्य राजानमदीनसत्त्वाः ।।
ते तत्र सर्वे जयशब्दपूर्वं रुद्रेण यत्तत्स्मितपूर्वमुक्तम् ।।६२।।
मंत्रिण उचुः ।।
निशाचरश्चंचलशौर्यधैर्यः क्व दानवः कृपणस्सत्त्वहीनः ।।
क्रूरः कृतघ्नश्च सदैव पापी क्व दानवः सूर्यसुताद्बिभेति ।।६३।।
राजत्वमुक्तोऽखिलदैत्यनाथस्तपस्विना तन्मुनिना विहस्य ।।
मत्वा स्वबुद्ध्या तृणवत्त्रिलोकं महौजसा वीरवरेण नूनम् ।। ६४ ।।
क्वाहं च शस्त्राणि च दारुणानि मृत्योश्च संत्रासकरं क्व युद्ध ।।
क्व वीरको वानरवक्त्रतुल्यो निशाचरो जरसा जर्जरांगः ।। ६५ ।।
क्वायं स्वरूपः क्व च मंदभाग्यो बलं त्वदीयं क्व च वीरुधो वा ।।
शक्तोऽपि चेत्त्वं प्रयतस्व युद्धं कर्तुं तदा ह्येहि कुरुष्व किंचित् ।। ६६ ।।
वज्राशनेस्तुल्यमिहास्ति शस्त्रं भवादृशां नाशकरं च घोरम् ।।
क्व ते शरीरं मृदुपद्मतुल्यं विचार्य चैवं कुरु रोचते यत् ।।६७।।
मंत्रिण ऊचुः ।।
इत्येवमादीनि वचांसि भद्रं तपस्विनोक्तानि च दानवेश।।
युक्तं न ते तेन सहात्र युद्धं त्वामाह राजन्स्मयमान एव।।६८।।
विवस्तुशून्यैर्बहुभिः प्रलापैरस्माभिरुक्तैर्यदि बुध्यसे त्वम् ।।
तपोभियुक्तेन तपस्विना वै स्मर्तासि पश्चान्मुनिवाक्यमेतत् ।। ६९ ।।
।। सनत्कुमार उवाच ।। ।।
ततस्स तेषां वचनं निशम्य जज्वाल रोषेण स मंदबुद्धिः ।।
आज्यावसिक्तस्त्विव कृष्णवर्त्मा सत्यं हितं तत्कुटिलं सुतीक्ष्णम् ।। 2.5.44.७० ।।
गृहीतखड्गो वरदानमत्तः प्रचंडवातानुकृतिं च कुर्वन् ।।
गंतुं च तत्र स्मरबाणविद्धस्समुद्यतोऽभूद्विप रीतदेवः ।। ७१ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे अंधकगाणपत्यलाभोपाख्याने दूतसंवादो नाम चतुश्चत्वारिंशोऽध्यायः ।। ४४ ।।

सनत्कुमार उवाच ।।
गतस्ततो मत्तगजेन्द्रगामी पीत्वा सुरां घूर्णितलोचनश्च ।।
महानुभावो बहुसैन्ययुक्तः प्रचंडवीरो वरवीरयायी ।। १।।
ददर्श दैत्यः स्मरबाणविद्धो गुहां ततो वीरकरुद्धमार्गाम् ।।
स्निग्धं यथा वीक्ष्य पतंगसंज्ञः दशाप्रदीपं च कृमिर्ह्युपेत्य ।।२।।
तथा प्रदर्श्याशु पुनः पुनश्च संपीड्यमानोपि स वीरकेण ।।
बभूव कामाग्निसुदग्धदेहोंऽधको महादैत्यपतिः स मूढः ।।३।।
पाषाणवृक्षाशनितोयवह्निभुजंगशस्त्रास्त्रविभीषिकाभिः ।।
संपीडितोऽसौ न पुनः प्रपीड्यः पृष्टश्च कस्त्वं समुपागतोसि ।। ४ ।।
निशम्य तद्गां स्वमतं स तस्मै चकार युद्धं स तु वीरकेण ।।
मुहूर्तमाश्चर्यवदप्रमेयं संख्ये जितो वीरतरेण दैत्यः ।। ५ ।।
ततस्तु संग्रामशिरो विहाय क्षुत्क्षामकंठस्तृषितो गतोऽभूत् ।।
चूर्णीकृते खड्गवरे च खिन्ने पलायमानो गतविस्मयः सः ।। ६ ।।
चक्रुस्तदाजिं सह वीरकेण प्रह्लादमुख्या दितिजप्रधानाः ।।
लज्जांकुशाकृष्टधियो बभूवुस्सुदारुणाः शस्त्रशतैरनेकैः ।।७।।
विरोचनस्तत्र चकार युद्धं बलिश्च बाणश्च सहस्रबाहुः ।।
भजिः कुजंभस्त्वथ शंबरश्च वृत्रादयश्चाप्यथ वीर्यवंतः ।। ८ ।।
ते युद्ध्यमाना विजिताः समंताद्द्विधाकृता वै गणवीरकेण ।।
शेषे हतानां बहुदानवानामुक्तं जयत्येव हि सिद्धसंघैः ।। ९ ।।
भेरुंडजानाभिनयप्रवृत्ते मेदोवसामांससुपूयमध्ये ।।
क्रव्यादसंघातसमाकुले तु भयंकरे शोणितकर्दमे तु ।। 2.5.45.१० ।।
भग्नैस्तु दैत्यैर्भगवान् पिनाकी व्रतं महापाशुपतं सुघोरम् ।।
प्रियेः मया यत्कृतपूर्वमासीद्दाक्षायणीं प्राह सुसांत्वयित्वा ।। ११ ।।
शिव उवाच ।।
तस्माद्बलं यन्मम तत्प्रणष्टं मर्त्यैरमर्त्यस्य यतः प्रपातः ।।
पुण्यक्षयाही ग्रह एव जातो दिवानिशं देवि तव प्रसंगात् ।। १२ ।।
उत्पाद्य दिव्यं परमाद्भुतं तु पुनर्वरं घोरतरं च गत्वा ।।
तस्माद्व्रतं घोरतरं चरामि सुनिर्भयः सुन्दरि वै विशोका ।। १३ ।।
सनत्कुमार उवाच ।।
एतावदुक्त्वा वचनं महात्मा उपाद्य घोषं शनकैश्चकार ।।
स तत्र गत्वा व्रतमुग्रदीप्तो गतो वनं पुण्यतमं सुघोरम् ।। १४ ।।
चर्तुं हि शक्यं तु सुरासुरैर्यत्र तादृशं वर्षसहस्रमात्रम् ।।
सा पार्वती मंदरपर्वतस्था प्रतीक्ष्यमाणागमनं भवस्य ।। १५ ।।

पतिव्रता शीलगुणोपपन्ना एकाकिनी नित्यमथो विभीता ।।
गुहांतरे दुःखपरा बभूव संरक्षिता सा सुतवीरकेण ।। १६ ।।
ततस्स दैत्यो वरदानमत्तस्तैर्योधमुख्यैस्सहितो गुहां ताम् ।।
विभिन्नधैर्यः पुनराजगाम शिलीमुखैर्मारसमुद्भवैश्च ।। १७ ।।
अत्यद्भुतं तत्र चकार युद्धं हित्वा तदा भोजनपाननिद्राः ।।
रात्रिं दिवं पंचशतानि पंच क्रुद्धस्स सैन्यैस्सह वीरकेण ।। १८ ।।
खड्गैस्सकुंतैस्सह भिंदिपालर्गदाभुशुंडीभिरथो प्रकांडैः ।।
शिलीमुखैरर्द्धशशीभिरुग्रैर्वितस्तिभिः कूर्ममुखैर्ज्वलद्भिः ।। १९ ।।
नाराचमुख्यै निशितैश्च शूलैः परश्वधैस्तोमरमुद्गरैश्च ।।
खड्गैर्गुडैः पर्वतपादपैश्च दिव्यैरथास्त्रैररपि दैत्यसंघैः ।। 2.5.45.२० ।।
न दीधितिर्भिन्नतनुः पपात द्वारं गुहाया पिहितं समस्तम् ।।
तैरायुधैर्दैत्यभुजप्रयुक्तैर्गुहामुखे मूर्छित एव पश्चात् ।। २१ ।।
आच्छादितं वीरकमस्त्रजालैर्दैत्यैश्च सर्वैस्तु मुहूर्तमात्रम् ।।
अपावृतं कर्तुमशक्यमासीन्निरीक्ष्य देवी दितिजान् सुघोरान् ।। २२ ।।
भयेन सस्मार पितामहं तु देवी सखीभिस्सहिता च विष्णुम् ।।
सैन्यं च मद्वीरवरस्य सर्वं सस्मारयामास गुहांतरस्था ।।२३।।
ब्रह्मा तया संस्मृतमात्र एव स्त्रीरूपधारी भगवांश्च विष्णुः ।।
इन्द्रश्च सर्वैः सह सैन्यकैश्च स्त्रीरूपमास्थाय समागतास्ते ।। २४ ।।
भूत्वा स्त्रियस्ते विविशुस्तदानीं मुनीन्द्रसंघाश्च महानुभावाः ।।
सिद्धाश्च नागास्त्वथ गुह्यकाश्च गुहांतरं पर्वतराजपुत्र्याः ।। २५ ।।
यस्मात्सुराज्य सनसंस्थितानामंतः पुरे संगमनं विरुद्धम् ।।
ततस्सहस्राणि नितंबिनीनामनंतसंख्यान्यपि दर्शयंत्यः ।। २६ ।।
रूपाणि दिव्यानि महाद्भुतानि गौर्ये गुहायां तु सवीरकार्यैः ।।
स्त्रियः प्रहृष्टा गिरिराजकन्या गुहांतरं पर्वतराजपुत्र्या ।। २७ ।।
स्त्रीभिस्सहस्रैश्च शतैरनेकैर्नेदुश्च कल्पांतरमेघघोषाः ।।
भेर्य्यश्च संग्रामजयप्रदास्तु ध्मातास्सुशंखाः सुनितम्बिनीभिः ।। २८ ।।
मूर्छां विहायाद्भुत चंडवीर्यस्स वीरको वै पुरतः स्थितस्तु ।।
प्रगृह्य शस्त्राणि महारथानां तैरेव शस्त्रैर्दितिजं जघान ।। २९ ।।
ब्राह्मी ततो दंड करा विरुद्धा गौरी तदा क्रोधपरीतचेताः ।।
नारायणी शंखगदासुचक्रधनुर्द्धरा पूरितबाहुदंडा।। 2.5.45.३० ।।
विनिर्ययौ लांगलदण्डहस्ता व्योमालका कांचनतुल्यवर्णा ।।
धारासहस्राकुलमुग्रवेगं बैडौजसी वज्रकरा तदानीम् ।। ३१ ।।
सहस्रनेत्रा युधि सुस्थिरा च सदुर्जया दैत्यशतैरधृष्या ।।

वैश्वानरी शक्तिरसौम्यवक्त्रा याम्या च दंडोद्यतपाणिरुग्रा ।।३२।।
सुतीक्ष्णखड्गोद्यतपाणिरूपा समाययौ नैर्ऋति घोरचापा ।।
तोयालिका वारणपाशहस्ता विनिर्गता युद्धमभीप्समाना ।। ३३ ।।
प्रचंडवातप्रभवा च देवी क्षुधावपुस्त्वंकुशपाणि रेव ।।
कल्पान्तवह्निप्रतिमां गदां च पाणौ गृहीत्वा धनदोद्भवा च ।।३४।।
याक्षेश्वरी तीक्ष्णमुखा विरूपा नखायुधा नागभयंकरी च ।।
एतास्तथान्याश्शतशो हि देव्यः सुनिर्गताः संकुलयुद्धभूमिम् ।।३५।।
दृष्ट्वा च तत्सैन्यमनंतपारं विवर्णवर्णाश्च सुविस्मिताश्च ।।
समाकुलास्संचकिताभयाद्वै देव्यो बभूबुर्हृददीनसत्त्वाः।।३६।।
चक्रुस्समाधाय मनस्समस्तास्ता देववध्वो विधिशक्तिमुख्याः।।
सुसंमत त्वेन गिरीशपुत्र्याः सेनापतिर्वीरसुघोरवीर्यः।।३७।।
चक्रुर्महायुद्धमभूतपूर्वं निधाय बुद्धौ दितिजाः प्रधानाः।।
निवर्तनं मृत्युमथात्मनश्च नारीभिरन्ये वरदानसत्त्वाः ।।३८।।
अत्यद्भुतं तत्र चकार युद्धं गौरी तदानीं सहिता सखीभिः ।।
कृत्वा रणे चाद्भुतबुद्धिशौण्डं सेनापतिं वीरकघोरवीर्यम्।।३९।।
हिरण्यनेत्रात्मज एव भूपश्चक्रे महाव्यूहमरं सुकर्मा।।
संभाव्य विष्णुं च निरीक्ष्य याम्यां सुदारुणं तद्गिलनामधेयम् ।।2.5.45.४०।।
मुखं करालं विधिसेवयास्य तस्मिन् कृते भगवानाजगाम ।।
कल्पान्तघोरार्कसहस्रकांतिकीर्णञ्च वै कुपितः कृत्ति वासाः ।।४१।।
गते ततो वर्षसहस्रमात्रे तमागतं प्रेक्ष्य महेश्वरं च ।।
चक्रुर्महायुद्धमतीवमात्रं नार्यः प्रहृष्टास्सह वीरकेण ।। ४२ ।।
प्रणम्य गौरी गिरिशं च मूर्ध्ना संदर्शयन् भर्तुरतीव शौर्यमम् ।।
गौरी प्रयुद्धं च चकार हृष्टा हरस्ततः पर्वतराजपुत्रीम्।।४३।।
कंठे गृहीत्वा तु गुहां प्रविष्टो रमासहस्राणि विसर्जितानि ।।
गौरी च सन्मानशतैः प्रपूज्य गुहामुखे वीरकमेव स्थापयन्।।४४।।
ततो न गौरीं गिरिशं च दृष्ट्वाऽसुरेश्वरो नीतिविचक्षणो हि ।।
द्रुतं स्वदूतं विधसाख्यमेव स प्रेषयामास शिवोपकंठम् ।।४५।।
तैस्तैः प्रहारैरपि जर्ज रांगस्तस्मिन् रणे देवगणेरितैर्यः ।।
जगाद वाक्यं तु सगर्वमुग्रं प्रविश्य शंभुं प्रणिपत्य मूर्ध्ना ।। ४६ ।।
दूत उवाच ।।
संप्रेषितोहं विविशे गुहांतु हयषौऽन्धकस्त्वां समुवाच वाक्यम् ।।
नार्या न कार्यं तव किंचिदस्तिविमुच नारीं तरुणीं सुरूपाम् ।। ४७ ।।
प्रायोभवास्तापसस्तज्जुषस्व क्षांतं मया यत्कमनीयमन्तः ।।

मुनिर्विरोधव्य इति प्रचिंत्य न त्वं मुनिस्तापस किं तु शत्रुः ।।४८।।
अतीव?? दैत्येषु महाविरोधी युध्यस्व वेगेन मया प्रमथ्य ।।
नयामि पातालतलानुरूपं यमक्षयं तापस धूर्त हि त्वाम् ।।४९।।
सनत्कुमार उवाच ।।
एतद्वचो दूतमुखान्निशम्य कपालमाली तमुवाच कोपात् ।।
ज्वलन्विषादेन महांस्त्रिनेत्रस्सतां गतिर्दुष्टमदप्रहर्ता ।।2.5.45.५०।।
शिव उवाच ।।
व्यक्तं वचस्ते तदतीव चोग्रं प्रोक्तं हि तत्त्वं त्वरितं प्रयाहि ।।
कुरुष्व युद्धं हि मया प्रसह्य यदि प्रशक्तोसि बलेन हि त्वम् ।।५१।।
यः स्यादशक्तो भुवि तस्य कोर्थो दारैर्धनैर्वा सुमनोहरैश्च ।।
आयांतु दैत्याश्च बलेन मत्ता विचार्यमेवं तु कृतं मयै तत् ।। ५२ ।।
शरीरयात्रापि कुतस्त्वशक्तेः कुर्वन्तु यद्यद्विहितं तु तेषाम् ।।
ममापि यद्यत्करणीयमस्ति तत्तत्त्करिष्यामि न संश योत्र ।।५३।।
सनत्कुमार उवाच ।।
एतद्वचस्तद्विधसोपि तस्माच्छ्रुत्वा हरान्निर्गत एव हृष्टः ।।
प्रागात्ततो गर्जितहुंकृतानि कुर्वंस्ततोदैत्यपतेस्सकाशम् ।।५४।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखण्डे युद्धप्रारंभदूतसम्वादवर्णनंनाम पञ्चचत्वारिंशोऽध्यायः ।।४५।।

सनत्कुमार उवाच ।।
तस्यैंगितज्ञश्च स दैत्यराजो गदां गृहीत्वा त्वरितस्ससैन्यः ।।
कृत्वाथ साऽग्रे गिलनामधेयं सुदारुणं देववरैरभेद्यम्।।१।।
गुहामुखं प्राप्य महेश्वरस्य बिभेद शस्त्रैरशनिप्रकाशैः।।
अन्ये ततो वीरकमेव शस्त्रैरवाकिरञ्छैल सुतां तथान्ये ।। २ ।।
द्वारं हि केचिद्रुचिरं बभंजुः पुष्पाणि पत्राणि विनाशयेयुः ।।
फलानि मूलानि जलं च हृद्यमुद्यानमार्गानपि खंडयेयुः ।। ३ ।।
विलोडयेयुर्मुदिताश्च केचिच्छृंगाणि शैलस्य च भानुमंति ।।
ततो हरस्सस्मृतवान्स्वसैन्यं समाह्वयन्कुपितः शूलपाणिः।।४।।
भूतानि चान्यानि सुदारुणानि देवान्ससैन्यान्सह विष्णुमुख्यान्।।
आहूतमात्रानुगणास्ससैन्या रथैर्गजैर्वाजिवृषैश्च गोभिः ।। ५ ।।
उष्ट्रैः खरैः पक्षिवरैश्च सिंहैस्ते सर्वदेवाः सहभूतसंघैः ।।
व्याघ्रैमृगैस्सूकरसारसैश्च समीनमत्स्यैश्शिशुमारमुख्यैः ।। ६ ।।
अन्यैश्च नाना विधजीवसंघैर्विशीर्णदंशाः स्फुटितैस्स्मशानैः ।।
भुजंगमैः प्रेतशतैः पिशाचैर्दिव्यैर्विमानैः कमलाकरैश्च ।। ७ ।।
नदीनदैः पर्वतवाहनैश्च समागताः प्रांजलयः प्रणम्य ।।
कपर्दिनं तस्थुरदीनसत्त्वास्सेनापतिं वीरकमेव कृत्वा ।। ८ ।।
विसर्जयामास रणाय देवान्विश्रांतवाहानथ तत्पिनाकी ।।
युद्धे स्थिरं लब्धजयं प्रधानं संप्रेषितास्ते तु महेश्वरेण ।। ९ ।।
चक्रुर्युगांतप्रतिमं च युद्धं मर्य्यादहीनं सगिलेन सर्वे ।।
दैत्येन्द्रसैन्येन सदैव घोरं क्रोधान्निगीर्णास्त्रिदशास्तु संख्ये ।। 2.5.46.१० ।।
तस्मिन्क्षणे युध्यमानाश्च सर्वे ब्रह्मेन्द्रविष्ण्वर्कशशांकमुख्याः।।
आसन्निगीर्णा विधसेन तेन सैन्ये निगीर्णेऽस्ति तु वीरको हि ।।११।।
विहाय संग्रामशिरोगुहां तां प्रविश्य शर्वं प्रणिपत्य मूर्ध्ना ।।
प्रोवाच दुःखाभिहतः स्मरारिं सुवीरको वाग्मिवरोऽथ वृत्तम् ।।१२।।
निगीर्णैते सैन्यं विधसदितिजेनाद्य भगवन्निगीर्णोऽसौ विष्णुस्त्रिभुवनगुरुर्दैत्यदलनः ।।
निगीर्णौ चन्द्रार्कौद्रुहिणमघवानौ च वरदौ निगीर्णास्ते सर्वे यमवरुणवाताश्च धनदः ।। १३ ।।
स्थितोस्म्येकः प्रह्वः किमिह करणीयं भवतु मे अजेयो दैत्येन्द्रः प्रमुदितमना दैत्यसहितः ।। १४ ।।
अजेयं त्वां प्राप्तः प्रतिभयमना मारुतगतिस्स्वयं विष्णुर्देवः कनककशिपुं कश्यपसुतम् ।।
नखैस्तीक्ष्णैर्भक्त्या तदपिभगवञ्छिष्टवशगः प्रवृत्तस्त्रैलोक्य विधमतु मलं व्यात्तवदनः ।। १५ ।।
वसिष्ठाद्यैश्शप्तो भुवनपतिभिस्सप्तमुनिभिस्तथाभूते भूयस्त्वमिति सुचिरं दैत्यसहितः ।। १६ ।।
ततस्तेनोक्तास्ते प्रणयवचनैरात्मनि हितैः कदास्माद्वै घोराद्भवति मम मोक्षो मुनिवराः।।
यतः क्रुद्धैरुक्तो विधसहरणाद्युद्धसमये ततो घोरैर्बाणैर्विदलितमुखे मुष्टिभिरलम् ।।१७।।

बदर्याख्यारण्ये ननु हरिगृहापुण्यवसतौ निसंस्तभ्यात्मानं विगतकलुषो यास्यसि परम् ।।
ततस्तेषां वाक्यात्प्रतिदिनमसौ दैत्यगिलनः क्षुधार्तस्संग्रामाद्भ्रमति पुनरामोदमुदितः ।।१८।।
तमस्त्वेदं घोरं जगदुदितयोस्सूर्यशशिनोर्यथाशुक्रस्तुभ्यं परमरिपुरत्यंतविकरः ।
हतान्देवैर्दैत्यान्पुनरमृतविद्यास्तुतिपदैस्सवीर्यान्संदृष्टान्व्रणशतवियुक्तान्प्रकुरुते।।१९।।
वरं प्राणास्त्याज्यास्तव मम तु संग्रामसमये भवान्साक्षीभूतः क्षणमपि वृतः कार्यकरणे ।।2.5.46.२०।।

सनत्कुमार उवाच ।।
इतीदं सत्पुत्रात्प्रमथपतिराकर्ण्य कुपितश्चिरं ध्यात्वा चक्रे त्रिभुवनपतिः प्रागनुपमम् ।।
प्रगायत्सामाख्यं दिनकरकराकारवपुषा प्रहासात्तन्नाम्ना तदनु निहतं तेन च तमः।।२१।।
प्रकाशेस्मिंल्लोके पुनरपि महायुद्धमकरोद्रणे दैत्यैस्सार्द्धं विकृतवदनैर्वीरकमुनिः।।
शिलाचूर्णं भुक्त्वा प्रवरमुनिना यस्तु जनितस्स कृत्वा संग्रामं पुरमपि पुरा यश्च जितवान्।।२२।।
महारुद्रस्सद्यः स खलु दितिजेनातिगिलितस्ततश्चासौ नन्दी निशितशरशूलासिसहितः ।।
प्रधानो योधानां मुनिवरशतानामपि महान्निवासो विद्यानां शमदममहाधैर्यसहितः।।२३।।
निरीक्ष्यैवं पश्चाद्वृषभवरमारुह्य भगवान्कपर्द्दी युद्धार्थी विधसदितिजं सम्मुखमुखः।।
जपन्दिव्यं मन्त्रं निगलनविधानोद्गिलनकं स्थितस्सज्जं कृत्वा धनुरशनिकल्पानपि शरान्।।२४।।
ततौ निष्कांतोऽसौ विधसवदनाद्वीरकमुनिर्गृहीत्वा तत्सर्वे स्वबलमतुलं विष्णुसहितः।।
समुद्गीर्णास्सर्वे कमलजबलारीन्दुदिनपाः प्रहृष्टं तसैन्यं पुनरपि महायुद्धमकरोत् ।।२५।।
जिते तस्मिञ्छुक्रस्तदनु दितिजान्युद्धविहतान् यदा विद्यावीर्यात्पुनरपि सजीवान्प्रकुरुते ।।
तदा बद्ध्वानीतः पशुरिव गणैभूतपतये निगीर्णस्तेनासौ त्रिपुररिपुणा दानवगुरुः।।२६।।
विनष्टे शुक्राख्यो सुररिपुनिवासस्तदखिलो जितो ध्वस्तो भग्नो भृशमपि सुरैश्चापि दलितम्।।
प्रभूतैर्भूतौघैर्दितिजकुणपग्रासरसिकैस्सरुंडैर्नृत्यद्भिर्निशितशरशक्त्युद्धृतकरैः ।।२७।।
प्रमत्तैर्वेतालैस्सुदृढकरतुंडैरपि खगैवृकैर्नानाभेदैश्शवकुणपपूर्णास्यकवलैः।।
विकीर्णे संग्रामे कनककशिपोर्वंशजनकश्चिरं युद्धं कृत्वा हरिहरमहेन्द्रैश्च विजितः ।।२८।।
प्रविष्टे पाताले गिरिजलधिरंध्राण्यपि तथा ततस्सैन्ये क्षीणे दितिजवृषभश्चांधकवरः ।।
प्रकोपे देवानां कदनदवरो विश्वदलनो गदाघातैर्घोरैर्विदलितमदश्चापि हरिणा ।। २९ ।।
न वै यस्सग्रामं त्यजति वरलब्धः किलः यत स्तदा ताडैर्घोरैस्त्रिदशपतिना पीडिततनुः ।।
ततश्शस्त्रास्त्रौघैस्तरुगिरिजलैश्चाशु विबुधाञ्जिगायोच्चैर्गर्जन्प्रमथपतिमाहूय शनकैः ।।2.5.46.३०।।

स्थितो युद्धं कुर्वन्व्रणपतितशस्त्रैर्बहुविधैः परिक्षीणैस्सर्वैस्तदनु गिरिजा रुद्रमतुदत् ।।
तथा वृक्षैस्सर्पैरशनिनिवहैः शस्त्रप टलैर्विरूपैर्मायाभिः कपटरचनाशम्बरशतैः ।। ३१ ।।
विजेतुं शैलेशं कुहकमपरं तत्र कृतवान्महासत्त्वो वीरस्त्रिपुररिपुतुल्यश्च मतिमान् ।।
न वध्यो देवानां वरशतमनोन्मादविवशः प्रभूतैश्शस्त्रास्त्रैस्सपदि दितिजो जर्जरतनुः ।।३२।।
तदीयाद्विष्यन्दात्क्षिति तलगतैरन्धकगणैरतिव्याप्तघोरं विकृतवदनं स्वात्मसदृशम्।।
दधत्कल्पांताग्निप्रतिमवपुषा भूतपतिना त्रिशूले नोद्भिन्नस्त्रिपुररिपुणा दारुणतरम् ।। ३३ ।।

यदा सैन्यासैन्यं पशुपतिहतादन्यदभवद्व्रणोत्थैरत्युष्णैः पिशितनिसृतैर्बिन्दुभिरलम् ।।
तदा विष्णुर्योगा त्प्रमथपतिमाहूय मतिमान् चकारोग्रं रूपं विकृतवदनं स्त्रैणमजितम्।।३४।।
करालं संशुष्कं बहुभुजलताक्रांतकुपितो विनिष्क्रांतः कर्णाद्व्रणशिरसि शंभोश्च भगवान् ।।३५।।
रणस्था सा देवी चरणयुगलालंकृतमही स्तुता देवैस्सर्वैस्मदनु भगवान् प्रेरितमतिः ।।
क्षुधार्ता तत्सैन्यं दितिजनिसृतं तच्च रुधिरं पपौ सात्युष्णं तद्व्रणशिरसि सृक्कर्दममलम् ।। ३६ ।।
ततस्त्वेको दैत्यस्तदपि युयुधे शुष्करुधिरस्तलाघातैर्घोरैशनिसदृशैर्जानुचरणैः ।।
नखैर्वज्राकारैर्मुखभुजशिरोभिश्च गिरिशं स्मरन् क्षात्रं धर्मं स्वकुल विहितं शाश्वतमजम् ।।३७।।
रणे शांतः पश्चात्प्रमथपतिना भिन्नहृदयस्त्रिशूले सप्रोतो नभसि विधृतस्स्थाणुसदृशः ।।
अधःकायश्शुष्कस्नपनकिरणैर्जीर्णतनुमाञ्जलासारेर्मेघैः पवनसहितैः क्लेदितवपुः।।३८।।
विशीर्णस्तिग्मांशोस्तुहिनशकलाकारशकलस्तथाभूतः प्राणांस्तदपि न जहौ दैत्य वृषभः ।।
तदा तुष्टश्शंभुः परमकरुणावारिधिरसौ ददौ तस्मै प्रीत्या गणपतिपदं तेन विनुतः ।।३९।
ततो युद्धस्यांते भुवनपतयस्सार्थ रमणैस्तवैर्नानाभेदैः प्रमथपतिमभ्यर्च्य विधिवत् ।।
हरिब्रह्माद्यास्ते परमनुतिभिस्स्तुष्टुवुरलं नतस्कंधाः प्रीता जयजय गिरं प्रोच्य सुखिताः।। 2.5.46.४० ।।
हरस्तैस्तैस्सार्द्धं गिरिवरगुहायां प्रमुदितो विसृज्यैकानंशान् विविधबलिना पूज्यसुनगान् ।।
चकाराज्ञां क्रीडां गिरिवर सुतां प्राप्य मुदितां तथा पुत्रं घोराद्विधसवदनान्मुक्तमनघम् ।।४१।।
इति श्रीशिवमहा पुराणे द्वितीयायां रुद्रसंहितायां पंचमे युद्धखण्डे अंधकवधोपाख्याने अन्धकयुद्धवर्णनं नाम षट्चत्वारिंशोऽध्यायः ।। ४६ ।।

व्यास उवाच ।।
तस्मिन्महति संग्रामे दारुणे लोमहर्षणे ।।
शुक्रो दैत्यपतिर्विद्वान्भक्षितस्त्रिपुरारिणा ।। १ ।।
इति श्रुतं समासान्मे तत्पुनर्ब्रूहि विस्तरात।।
किं चकार महायोगी जठरस्थः पिनाकिनः ।।२।।
न ददाह कथं शभोश्शुक्रं तं जठरानलः ।।
कल्पान्तदहनः कालो दीप्ततेजाश्च भार्गवः ।।३।।
विनिष्क्रांतः कथं धीमाच्छंभोर्जठरपंजरात् ।।
कथमाराधयामास कियत्कालं स भार्गवः ।।४।।
अथ च लब्धवान्विद्यां तां मृत्युशमनीं पराम्।।
का सा विद्या परा तात यथा मृत्युर्हि वार्यते ।।५।।
लेभेन्धको गाणपत्यं कथं शूला द्विनिर्गतः ।।
देवदेवस्य वै शंभोर्मुनेर्लीलाविहारिणः ।।६ ।।
एतत्सर्वमशेषेण महाधीमन् कृपां कुरु ।।
शिवलीलामृतं तात शृण्वत कथयस्व मे ।।७।।
ब्रह्मोवाच ।।
इति तस्य वचः श्रुत्वा व्यासस्यामिततेजसः ।।
सनत्कुमारः प्रोवाच स्मृत्वा शिवपदांबुजम् ।।८।।
सनत्कुमार उवाच ।।
शृणु व्यास महाबुद्धे शिवलीलामृतं परम् ।।
धन्यस्त्वं शैवमुख्योसि ममानन्दकरः स्वतः ।। ९ ।।
प्रवर्तमाने समरे शंकरांधकयोस्तयोः ।।
अनिर्भेद्यपविव्यूहगिरिव्यूहाधिनाथयोः।।2.5.47.१०।।
पुरा जयो बभूवापि दैत्यानां बलशालिनाम्।।
शिवप्रभा वादभवत्प्रमथानां मुने जयः ।।११।।
तच्छुत्वासीद्विषण्णो हि महादैत्योंधकासुरः।।
कथं स्यान्मे जय इति विचारणपरोऽभवत्।।१२।।
अपसृत्य ततो युद्धादंधकः परबुद्धिमान् ।।
द्रुतमभ्यगमद्वीर एकलश्शुक्रसन्निधिम् ।।१३।।
प्रणम्य स्वगुरुं काव्यमवरुह्य रथाच्च सः ।।
बभाषेदं विचार्याथ सांजलिर्नीतिवित्तमः ।।१४।।
अंधक उवाच ।।
भगवंस्त्वामुपाश्रित्य गुरोर्भावं वहामहे ।।

पराजिता भवामो नो सर्वदा जयशालिनः ।। १५ ।।
त्वत्प्रभावात्सदा देवान्समस्तान्सानुगान्वयम् ।।
मन्यामहे हरोषेन्द्रमुखानपि हि कत्तृणान् ।।१६।।
अस्मत्तो बिभ्यति सुरास्तदा भवदनुग्रहात् ।।
गजा इव हरिभ्यश्च तार्क्ष्येभ्य इव पन्नगाः ।। १७ ।।
अनिर्भेद्यं पविव्यूहं विविशुर्दैत्य दानवाः ।।
प्रमथानीकमखिलं विधूय त्वदनुग्रहात् ।। १८ ।।
वयं त्वच्छरणा भूत्वा सदा गा इव निश्चलाः ।।
स्थित्वा चरामो निश्शंकमाजावपि हि भार्गव ।। १९ ।।
रक्षरक्षाभितो विप्र प्रव्रज्य शरणागतान् ।।
असुराञ्छत्रुभिर्वीरैरर्दितांश्च मृतानपि ।। 2.5.47.२० ।।
प्रथमैर्भीमविक्रांतैः क्रांतान्मृत्युप्रमाथिभिः ।।
सूदितान्पतितान्पश्य हुंडादीन्मद्गणान्वरान् ।।२१ ।।
यः पीत्वा कणधूमं वै सहस्रं शरदां पुरा ।।
त्वया प्राप्ता वरा विद्या तस्याः कालोयमागतः ।। २२ ।।
अद्य विद्याफलं तत्ते सर्वे पश्यंतु भार्गव ।।
प्रमथा असुरान्सर्वान् कृपया जीवयिष्यतः ।। २३ ।।
सनत्कुमार उवाच ।।
इत्थमन्धकवाक्यं स श्रुत्वा धीरो हि भार्गवः ।।
तदा विचारयामास दूयमानेन चेतसा ।। २४ ।।
किं कर्तव्यं मयाद्यापि क्षेमं मे स्यात्कथं त्विति ।।
सन्निपातविधिर्जीवः सर्वथानुचितो मम ।। २५ ।।
विधेयं शंकरात्प्राप्ता तद्गुणान् प्रति योजये ।।
तद्रणे मर्दितान्वीरः प्रमथैश्शंकरानुगैः ।। २६ ।।
शरणागतधर्मोथ प्रवरस्सर्वतो हृदा।।
विचार्य शुक्रेण धिया तद्वाणी स्वीकृता तदा ।। २७ ।।
किंचित्स्मितं तदा कृत्वा सोऽब्रवीद्दानवाधिपम् ।।
भार्गवश्शिवपादाब्जं सप्पा?? स्वस्थेन चेतसा ।। २८ ।।
शुक्र उवाच ।।
यत्त्वया भाषितं तात तत्सर्वं तथ्यमेव हि ।।
एतद्विद्योपार्जनं हि दानवार्थं कृतं?? मया ।। २९ ।।
दुस्सहं कणधूमं वै पीत्वा वर्षसहस्रकम् ।।
विद्येयमीश्वरात्प्राप्ता बंधूनां सुखदा सदा ।। 2.5.47.३० ।।

प्रमथैर्मथितान्दैत्यान्रणेहं विद्ययानया ।।
उत्थापयिष्ये म्लानानि शस्यानि जलभुग्यथा।। ३१ ।।
निर्व्रणान्नीरुजः स्वस्थान्सुप्त्वेव पुन रुत्थितान् ।।
मुहूर्तेस्मिंश्च द्रष्टासि दैत्यांस्तानुत्थितान्निजान् ।। ३२ ।।
सनत्कुमार उवाच ।।
इत्युक्त्वा सोधकं शुक्रो विद्यामावर्तयत्क विः ।।
एकैकं दैत्यमुद्दिश्य स्मृत्वा विद्येशमादरात् ।। ३३ ।।
विद्यावर्तनमात्रेण ते सर्वे दैत्यदानवाः ।।
उत्तस्थुर्युगपद्वीरास्सुप्ता इव धृतायुधाः ।। ३४ ।।
सदाभ्यस्ता यथा वेदास्समरे वा यथाम्बुदा ।।
श्रदयार्थास्तथा दत्ता ब्राह्मणेभ्यो यथापदि।। ३५ ।।
उज्जीवितांस्तु तान्दृष्ट्वा हुंडादींश्च महासुरान् ।।
विनेदुरसुराः सर्वे जलपूर्णा इवांबुदाः ।। ३६ ।।
रणोद्यताः पुनश्चासन्गर्जंतो विकटान्रवान् ।।
प्रमथैस्सह निर्भीता महाबलपराक्रमाः ।। ३७ ।।
शुक्रेणोज्जीवितान्दृष्ट्वा प्रमथा दैत्यदानवान् ।।
विसिष्मिरे ततस्सर्वे नंद्याद्या युद्धदुर्मदाः ।। ३८ ।।
विज्ञाप्यमेवं कर्मैतद्देवेशे शंकरेऽखिलम् ।।
विचार्य बुद्धिमंतश्च ह्येवं तेऽन्योन्यमब्रुवन् ।।३९।।
आश्चर्यरूपे प्रमथेश्वराणां तस्मिंस्तथा वर्तति युद्धयज्ञे ।।
अमर्षितो भार्गवकर्म दृष्ट्वा शिलादपुत्रोऽभ्यगमन्महेशम्।।2.5.47.४०।।
जयेति चोक्त्वा जययोनिमुग्रमुवाच नंदी कनकावदातम् ।।
गणेश्वराणां रणकर्म देव देवैश्च सेन्द्रैरपि दुष्करं सत् ।।४१।।
तद्भार्गवेणाद्य कृतं वृथा नस्संजीवतांस्तान्हि मृतान्विपक्षान्।।
आवर्त्य विद्यां मृतजीवदात्रीमेकेकमुद्दिश्य सहेलमीश ।।४२।।
तुहुंडहुंडादिककुंभजंभविपा कपाकादिमहासुरेन्द्राः ।।
यमालयादद्य पुनर्निवृत्ता विद्रावयंतः प्रमथांश्चरंति ।।४३।।
यदि ह्यसौ दैत्यवरान्निरस्तान्संजीवयेदत्र पुनः पुनस्तान्।।
जयः कुतो नो भविता महेश गणेश्वराणां कुत एव शांतिः ।।४४।।
।। सनत्कुमार उवाच ।।
इत्येवमुक्तः प्रमथेश्वरेण स नंदिना वै प्रमथेश्वरेशः ।।
उवाच देवः प्रहसंस्तदानीं तं नंदिनं सर्वगणेशराजम् ।। ४५ ।।
शिव उवाच ।।

नन्दिन्प्रयाहि त्वरितोऽति मात्रं द्विजेन्द्रवर्यं दितिनन्दनानाम् ।।
मध्यात्समुद्धृत्य तथा नयाशु श्येनो यथा लावकमंडजातम् ।। ४६ ।।
सनत्कुमार उवाच ।।
स एवमुक्तो वृषभध्वजेन ननाद नंदी वृषसिंहनादः ।।
जगाम तूर्णं च विगाह्य सेनां यत्राभवद्भार्गववंशदीपः ।। ४७ ।।
तं रक्ष्यमाणं दितिजैस्समस्तैः पाशासिवृक्षोपलशैलहस्तैः ।।
विक्षोभ्य दैत्यान्बलवाञ्जहार काव्यं स नन्दी शरभो यथेभम् ।।४८।।
स्रस्तांबरं विच्युतभूषणं च विमुक्तकेशं बलिना गृहीतम् ।।
विमोचयिष्यंत इवानुजग्मुः सुरारयस्सिंहरवांस्त्यजंतः ।। ४९ ।।
दंभोलि शूलासिपरश्वधानामुद्दंडचक्रोपलकंपनानाम् ।।
नंदीश्वरस्योपरि दानवेन्द्रा वर्षं ववर्षुर्जलदा इवोग्रम् ।। 2.5.47.५० ।।
तं भार्गवं प्राप्य गणाधिराजो मुखाग्निना शस्त्रशतानि दग्ध्वा ।।
आयात्प्रवृद्धेऽसुरदेवयुद्धे भवस्य पार्श्वे व्यथितारिपक्षः ।। ५१ ।।
अयं स शुक्रो भगवन्नितीदं निवेदयामास भवाय शीघ्रम् ।।
जग्राह शुक्रं स च देवदेवो यथोपहारं शुचिना प्रदत्तम् ।। ५२ ।।
न किंचिदुक्त्वा स हि भूतगोप्ता चिक्षेप वक्त्रे फलवत्कवीन्द्रम् ।।
हाहारवस्तैरसुरैस्समस्तैरुच्चैर्विमुक्तो हहहेति भूरि ।। ५३ ।।
इति श्रीशिव महापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे अंधकयुद्धे शुक्रनिगीर्णनवर्णनं नाम सप्तचत्वारिंशोऽध्यायः ।। ४७ ।।

व्यास उवाच ।।
शुक्रे निगीर्णे रुद्रेण किमकार्षुश्च दानवाः ।।
अंधकेशा महावीरा वद तत्त्वं महामुने ।। १ ।।
सनत्कुमार उवाच ।।
काव्ये निगीर्णे गिरिजेश्वरेण दैत्या जयाशारहिता बभूवुः ।।
हस्तैर्विमुक्ता इव वारणेन्द्राः शृंगैर्विहीना इव गोवृषाश्च ।।२।।
शिरो विहीना इव देवसंघा द्विजा यथा चाध्ययनेन हीनाः ।।
निरुद्यमास्सत्त्वगणा यथा वै यथोद्यमा भाग्यविवर्जिताश्च ।। ३ ।।
पत्या विहीनाश्च यथैव योषा यथा विपक्षाः खलु मार्गणौघाः ।।
आयूंषि हीनानि यथैव पुण्यैर्व्रतैर्विहीनानि यथा श्रुतानि ।।४।।
विना यथा वैभवशक्तिमेकां भवंति हीनास्स्वफलैः क्रियौघाः ।।
यथा विशूराः खलु क्षत्रियाश्च सत्यं विना धर्मगणो यथैव ।। ९ ।।
नन्दिना चा हृते शुक्रे गिलिते च विषादिना ।।
विषादमगमन्दैत्या यतमानरणोत्सवाः ।। ६ ।।
तान् वीक्ष्य विगतोत्साहानंधकः प्रत्यभाषत ।।
दैत्यांस्तुहुंडाहुंडदीन्महाधीरपराक्रमः ।। ७ ।।
अंधक उवाच ।।
कविं विक्रम्य नयता नन्दिना वंचिता वयम् ।।
तनूर्विना कृताः प्राणास्सर्वेषामद्य नो ननु ।। ८ ।।
धैर्यं वीर्यं गतिः कीर्तिस्सत्त्वं तेजः पराक्रमः ।।
युगपन्नो हृतं सर्वमेकस्मिन् भार्गवे हृते ।। ९ ।।
धिगस्मान् कुलपूज्यो यैरेकोपि कुलसत्तमः।।
गुरुस्सर्वसमर्थश्च त्राता त्रातो न चापदि।।2.5.48.१०।।
तद्यूयमविलंब्येह युध्यध्वमरिभिस्सह।।
वीरैस्तैः प्रमथैवीराः स्मृत्वा गुरुपदांबुजम् ।।१ १।।
गुरोः काव्यस्य सुखदौ स्मृत्वा चरणपंकजौ ।।
सूदयिष्याम्यहं सर्वान् प्रमथान् सह नन्दिना ।।१२।।
अद्यैतान् विवशान् हत्वा सहदेवैस्सवासवैः ।।
भार्गवं मोचयिष्यामि जीवं योगीव कर्मतः ।। १३ ।।
स चापि योगी योगेन यदि नाम स्वयं प्रभुः ।।
शरीरात्तस्य निर्गच्छेदस्माकं शेषपालिता ।।१४।।
सनत्कुमार उवाच ।।
इत्यन्धकवचः श्रुत्वा दानवा मेघनिस्स्वनाः ।।

प्रमथान् निर्दयाः प्राहुर्मर्तव्ये कृतनिश्चयाः ।। १५।।
सत्यायुषि न नो जातु शक्तास्स्युः प्रमथा बलात् ।।
असत्यायुपि किं गत्वा त्यक्त्वा स्वामिनमाहवे ।।१६।।
ये स्वामिनं विहायातो बहुमानधना जनाः ।।
यांति ते यांति नियतमंधतामिस्रमालयम् ।। १७ ।।
अयशस्तमसा ख्यातिं मलिनीकृत्य भूरिशः ।।
इहामुत्रापि सुखिनो न स्युर्भग्ना रणाजिरे ।। १८ ।।
किं दानै किं तपोभिश्च किं तीर्थपरिमज्जनैः ।।
धारातीर्थे यदि स्नानं पुनर्भवमलापहे ।।१९।।
संप्रधार्येति तद्वाक्यं दैत्यास्ते दनुजास्तथा ।।
ममंथुः प्रमथानाजौ रणभेरीं निनाद्य च ।। 2.5.48.२० ।।
तत्र बाणासिवज्रौघैः कठिनैश्च शिलामयैः ।।
भुशुण्डिभिंदिपालैश्च शक्ति भल्लपरश्वधैः ।।२१।।
खट्वांगैः पट्टिशैश्शूलैर्लकुटैर्मुसलैरलम् ।।
परस्परमभिघ्नंतः प्रचक्रुः कदनं महत्।।२२।।
कार्मुकाणां विकृष्टानां पततां च पतत्त्रिणाम् ।।
भिंदिपालभुशुंडीनां क्ष्वेडितानां रवोऽभवत् ।।२३।।
रणतूर्य्यनिनादैश्च गजानां बहुबृंहितैः ।।
हेषारवैर्हयानां च महान्कोलाहलोऽभवत् ।।२४।।
अस्तिस्वनैरवापूरि द्यावाभूम्योर्यदंतरम् ।।
अभीरूणां च भीरूणां महारोमोद्गमोऽभवत् ।।२५।।
गजवाजिमहारावस्फुटशब्दग्रहाणि च ।।
भग्नध्वजपताकानि क्षीणप्रहरणानि च ।।२६।।
रुधिरोद्गारचित्राणि व्यश्वहस्तिरथानि च ।।
पिपासितानि सैन्यानि मुमूर्च्छुरुभयत्र वै ।।२७।।
अथ ते प्रमथा वीरा नंदिप्रभृतयस्तदा ।।
बलेन जघ्नुरसुरान्सर्वान्प्रापुर्जयं मुने ।।२८।।
दृष्ट्वा सैन्यं च प्रमथैर्भज्यमानमितस्ततः ।।
दुद्राव रथमास्थाय स्वयमेवांधको गणान् ।। २९ ।।
शरावारप्रयुक्तैस्तैर्वज्रपातैर्नगा इव ।।
प्रमथा नेशिरे चास्त्रैर्निस्तोया इव तोयदाः ।।2.5.48.३०।।
यांतमायांतमालोक्य दूरस्थं निकटस्थितम् ।।
प्रत्येकं रोमसंख्याभिर्विव्याधेषुभिरन्धकः ।।३१।।

दृष्ट्वा सैन्यं भज्यमानमंधकेन बलीयसा ।।
स्कंदो विनायको नंदी सोमनंद्यादयः परे ।।३२।।
प्रमथा प्रबला वीराश्शंकरस्य गणा निजाः ।।
चुक्रुधुस्समरं चक्रुर्विचित्रं च महाबलाः ।। ३३ ।।
विनायकेन स्कंदेन नंदिना सोमनंदिना ।।
वीरेण नैगमेयेन वैशाखेन बलीयसा।।३४।।
इत्याद्यैस्तु गणैरुग्रैरंधकोप्यधकीकृतः।।
त्रिशूलशक्तिबाणौघधारासंपातपातिभिः ।। ३५ ।।
ततः कोलाहलो जातः प्रमथासुरसैन्ययोः।।
तेन शब्देन महता शुक्रश्शंभूदरे स्थ्ग्तिः।।३६।।
छिद्रान्वेषी भ्रमन्सोथ विनिकेतो यथानिलः।।
सप्तलोकान्सपातालान्रुद्रदेहे व्यलोकयत् ।। ३७ ।।
ब्रह्मनारायणेन्द्राणां सादित्याप्सरसां तथा ।।
भुवनानि विचित्राणि युद्धं च प्रमथासुरम् ।।३८।।
स वर्षाणां शतं कुक्षौ भवस्य परितो भ्रमन् ।।
न तस्य ददृशे रन्ध्रं शुचे रंध्रं खलो यथा ।। ३९ ।।
शांभवेनाथ योगेन शुक्ररूपेण भार्गवः ।।
इमं मंत्रवरं जप्त्वा शंभोर्जठरपंजरात् ।। 2.5.48.४० ।।
निष्क्रांतं लिंगमार्गेण प्रणनाम ततश्शिवम् ।।
गौर्य्या गृहीतः पुत्रार्थं तदविघ्नेश्वरीकृतः ।। ४१ ।।
अथ काव्यं विनिष्क्रातं शुक्रमार्गेण भार्गवम् ।।
दृष्ट्वोवाच महेशानो विहस्य करुणानिधिः ।। ४२ ।।
महेश्वर उवाच ।।
शुक्रवन्निस्सृतो यस्माल्लिंगान्मे भृगुनन्दन ।।
कर्मणा तेन शुक्लत्वं मम पुत्रोसि गम्यताम् ।। ४३ ।।
सनत्कुमार उवाच ।।
इत्येवमुक्तो देवेन शुक्रोर्कसदृशद्युतिः ।।
प्रणनाम शिवं भूयस्तुष्टाव विहितांजलिः ।। ४४ ।।
शुक्र उवाच ।।
अनंतपादस्त्वमनंतमूर्तिरनंतमूर्द्धांतकरश्शिवश्च ।।
अनंतबाहुः कथमीदृशं त्वां स्तोष्ये ह नुत्यं प्रणिपत्य मूर्ध्ना ।। ४५ ।।
त्वमष्टमूर्तिस्त्वमनंतमूर्तिस्त्वमिष्टदस्सर्वसुरासुराणाम् ।।
अनिष्टदृष्टश्च विमर्दकश्च स्तोष्ये ह नुत्यं कथमीदृशं त्वाम् ।। ४६ ।।

सनत्कुमार उवाच ।।
इति स्तुत्वा शिवं शुक्रः पुनर्नत्वा शिवाज्ञया ।।
विवेश दानवानीकं मेघमालां यथा शशी ।। ४७ ।।
निगीर्णनमिति प्रोक्तं शंकरेण कवे रणे ।।
शृणु मंत्रं च तं जप्तो यश्शंभोः कविनोदरे ।। ४८ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्र संहितायां पञ्चमे युद्धखंडे शुक्रनिगीर्णनं नामाष्टचत्वारिंशोऽध्यायः ।।४८।।

सनत्कुमार उवाच ।।
ॐ नमस्ते देवेशाय सुरासुरनम स्कृताय भूतभव्यमहादेवाय हरितपिगललोचनाय बलाय बुद्धिरूपिणे वैयाघ्रवसनच्छदायारणेयाय त्रैलोक्यप्रभवे ईश्वराय हराय हरितनेत्राय युगान्तकरणायानलायगणेशायलोकपालाय महाभुजायमहाहस्ताय शूलिने महादंष्ट्रिणे कालाय महेश्वरायअव्ययाय कालरूपिणे नीलग्रीवाय महोदराय गणाध्यक्षाय सर्वात्मने सर्वभावनाय सर्वगाय मृत्युहंत्रे पारियात्रसुव्रताय ब्रह्मचारिणे वेदान्त गाय तपोंतगाय पशुपतये व्यंगाय शूलपाणये वृषकेतवे हरये जटिने शिखंडिने लकुटिने महायशसे भूतेश्वराय गुहावासिने वीणा पणवतालंबते अमराय दर्शनीयाय बालसूर्यनिभाय श्मशानवासिने भगवते उमापतये अरिन्दमाय भगस्याक्षिपातिने पूष्णोर्दशननाशनाय कूरकर्तकाय पाशहस्ताय प्रलयकालाय उल्कामुखायाग्निकेतवे मुनये दीप्ताय विशांपतये उन्नयते जनकाय चतुर्थकाय लोक सत्तमाय वामदेवाय वाग्दाक्षिण्याय वामतो भिक्षवे भिक्षुरूपिणे जटिने स्वयंजटिलाय शक्रहस्तप्रतिस्तंभकाय वसूनां स्तंभाय क्रतवे क्रतुकराय कालाय मेधाविने मधुकराय चलाय वानस्पत्याय वाजसनेति समाश्रमपूजिताय जगद्धात्रे जगत्कर्त्रे पुरुषाय शाश्वताय ध्रुवाय धर्माध्यक्षाय त्रिवर्त्मने भूतभावनाय त्रिनेत्राय बहुरूपाय सूर्यायुतसमप्रभाय देवाय सर्वतूर्यनिनादिने सर्वबाधाविमोचनाय बंधनाय सर्वधारिणे धर्म्मोत्तमाय पुष्पदंतायापि भागाय मुखाय सर्वहराय हिरण्यश्रवसे द्वारिणे भीमाय भीमपराक्रमाय ॐनमो नमः ।।
सनत्कुमार उवाच ।।
इमं मन्त्रवरं जप्त्वा शुक्रो जठरपंजरात् ।।
निष्क्रान्तो लिंगमार्गेण शंभोश्शुक्रमिवोत्कटम् ।।१।।
गौर्या गृहीतः पुत्रार्थं विश्वेशेन ततः कृतः ।।
अजरश्चामरः श्रीमान्द्वितीय इव शंकरः ।। २ ।।
त्रिभिर्वर्षसहस्रैस्तु?? समतीतैर्महीतले ।।
महेश्वरात्पुनर्जातः शुक्रो वेदनिधिर्मुनिः ।। ३ ।।
ददर्श शूले संशुष्कं ध्यायंतं परमेश्वरम् ।।
अंधकं धैर्यसद्वन्य??दानवेशं तपस्विनम् ।। ४ ।।
महादेवं विरूपाक्षं चन्द्रार्द्धकृतशेखरम् ।।
अमृतं शाश्वतं स्थाणुं नीलकंठं पिनाकिनम् ।। ५ ।।
वृषभाक्षं महाज्ञेयं पुरुषं सर्वकामदम् ।।
कामारिं कामदहनं कामरूपं कपर्दिनम् ।। ६ ।।
विरूपं गिरिशं भीमं स्रग्विणं रक्तवाससम् ।।
योगिनं कालदहनं त्रिपुरघ्नं कपालिनम् ।। ७ ।।
गूढव्रतं गुप्तमंत्रं गंभीरं भावगोचरम् ।।
अणिमादिगुणाधारत्रिलोक्यैश्वर्य्यदायकम्।।८।।
वीरं वीरहणं घोरं विरूपं मांसलं पटुम् ।।

महामांसादमुन्मत्तं भैरवं वै महेश्वरम् ।। ९ ।।
त्रैलोक्यद्रावणं लुब्धं लुब्धकं यज्ञसूदनम् ।।
कृत्तिकानां सुतैर्युक्तमुन्मत्तकृत्तिवाससम् ।। 2.5.49.१० ।।
गजकृत्तिपरीधानं क्षुब्धं भुजगभूषणम् ।।
दद्यालंबं च वेतालं घोरं शाकिनिपूजितम् ।। ११ ।।
अघोरं घोरदैत्यघ्नं घोरघोषं वनस्पतिम् ।।
भस्मांगं जटिलं शुद्धं भेरुंडशतसेवितम् ।। १२ ।।
भूतेश्वरं भूतनाथं पञ्चभूताश्रितं खगम् ।।
क्रोधितं निष्ठुरं चण्डं चण्डीशं चण्डिकाप्रियम् ।।१३।।
चण्डं तुंगं गरुत्मंतं नित्यमासवभोजनम् ।।
लेलिहानं महारौद्रं मृत्युं मृत्योरगोचरम् ।।१४।।
मृत्योर्मृत्युं महासेनं श्मशानारण्यवासिनम् ।।
रागं विरागं रागांधं वीतरागशताचितम् ।।१५।।
सत्त्वं रजस्तमोधर्ममधर्मं वासवानुजम् ।।
सत्यं त्वसत्यं सद्रूपमसद्रूपमहेतुकम् ।। १६।।
अर्द्धनारीश्वरं भानुं भानुकोटिशतप्रभम् ।।
यज्ञं यज्ञपतिं रुद्रमीशानं वरदं शिवम् ।। १७।।
अष्टोत्तरशतं ह्येतन्मूर्तीनां परमात्मनः ।।
शिवस्य दानवो ध्यायन्मुक्तस्तस्मान्महाभयात् ।। १८ ।।
दिव्येनामृतवर्षेण सोऽभिषिक्तः कपर्दिना ।।
तुष्टेन मोचितं तस्माच्छूलाग्राදवरोपितः ।। १९।।
उक्तश्चाथ महादैत्यो महेशानेन सोंऽधकः ।।
असुरस्सांत्वपूर्वं यत्कृतं सर्वं महात्मना ।।2.5.49.२० ।।
ईश्वर उवाच ।।
भो भो दैत्येन्द्रतुष्टोऽस्मि दमेन नियमेन च ।।
शौर्येण तव धैर्येण वरं वरय सुव्रत ।।२१।।
आराधितस्त्वया नित्यं सर्वनिर्धूतकल्मषः ।।
वरदोऽहं वरार्हस्त्वं महादैत्येन्द्रसत्तम ।।२२।।
प्राणसंधारणादस्ति यच्च पुण्यफलं तव ।।
त्रिभिर्वर्षसहस्रैस्तु तेनास्तु तव निर्वृतिः ।। २३ ।।
सनत्कुमार उवाच ।।
एतच्छ्रुत्वांधकः प्राह वेपमानः कृतांजलिः ।।
भूमौ जानुद्वयं कृत्वा भगवंतमुमापतिम् ।।२४।।

अंधक उवाच ।।
भगवन्यन्मयोक्तोऽसि दीनोदीनः परात्परः ।।
हर्षगद्गदया वाचा मया पूर्वं रणाजिरे ।।२५।।
यद्यत्कृतं विमूढत्वात्कर्म लोकेषु गर्हितम् ।।
अजानता त्वां तत्सर्वं प्रभो मनसि मा कृथाः ।। २६ ।।
पार्वत्यामपि दुष्टं यत्कामदोषात्कृतं मया ।।
क्षम्यतां मे महादेव कृपणो दुःखितो भृशम् ।।२७।।
दुःखितस्य दया कार्या कृपणस्य विशेषतः ।।
दीनस्य भक्तियुक्तस्य भवता नित्यमेव हि ।।२८।।
सोहं दीनो भक्तियुक्त आगतश्शरणं तव ।।
रक्षा मयि विधातव्या रचितोऽयं मयांजलिः ।। २९ ।।
इयं देवी जगन्माता परितुष्टा ममोपरि ।।
क्रोधं विहाय सकलं प्रसन्ना मां निरीक्षताम् ।।2.5.49.३०।।
क्वास्याः क्रोधः क्व कृपणो दैत्योऽहं चन्द्रशेखर।।
तत्सोढा नाहमर्द्धेन्दुचूड शंभो महेश्वर ।। ३१ ।।
क्व भवान्परमोदारः क्व चाहं विवशीकृतः ।।
कामक्रोधादिभिर्दोषैर्जरसा मृत्युना तथा ।।३२।।
अयं ते वीरकः पुत्रो युद्धशौंडो महाबलः ।।
कृपणं मां समालक्ष्य मा मन्युवशमन्वगाः ।।३३।।
तुषारहारशीतांशुशंखकुन्देन्दुवर्ण भाक् ।।
पश्येयं पार्वतीं नित्यं मातरं गुरुगौरवात् ।।३४।।
नित्यं भवद्भ्यां भक्तस्तु निर्वैरो दैवतैः सह ।।
निवसेयं गणैस्सार्द्धं शांता त्मा योगचिंतकः ।। ३५।।
मा स्मरेयं पुनर्जातं विरुद्धं दानवोद्भवम् ।।
त्वत्कृपातो महेशान देह्येतद्वरमुत्तमम् ।।३६।।
सनत्कुमार उवाच ।।
एतावदुक्त्वा वचनं दैत्येन्द्रो मौनमास्थितः ।।
ध्यायंस्त्रिलोचनं देवं पार्वतीं प्रेक्ष्य मातरम् ।।३७।।
ततो दृष्टस्तु रुद्रेण प्रसन्नेनैव चक्षुषा ।।
स्मृतवान्पूर्ववृत्तांतमात्मनो जन्म चाद्भुतम् ।। ३८ ।।
तस्मिन्स्मृते च वृत्तांते ततः पूर्णमनोरथः ।।
प्रणम्य मातापितरौ कृतकृत्योऽभवत्ततः ।।३९।।
पार्वत्या मूर्ध्न्युपाघ्रातश्शंकरेण च धीमता ।।

तथाऽभिलषितं लेभे तुष्टाद्बालेन्दुशेखरात् ।।2.5.49.४० ।।
एतद्वस्सर्वमाख्यातमन्धकस्य पुरातनम् ।।
गाणपत्यं महादेवप्रसादात्परसौख्यदम् ।।४१।।
मृत्युंजयश्च कथितो मंत्रो मृत्युविनाशनः ।।
पठितव्यः प्रयत्नेन सर्वकामफलप्रदः ।।४२।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखण्डे अंधकगण जीवितप्राप्तिवर्णनं नामैकोनपञ्चाशत्तमोऽध्यायः ।।४९।।

सनत्कुमार उवाच।।
शृणु व्यास यथा प्राप्ता मृत्युप्रशमनी परा ।।
विद्या काव्येन मुनिना शिवान्मृत्युञ्जयाभिधात् ।।१ ।।
पुरासौ भृगुदायादो गत्वा वाराणसीं पुरीम्।।
बहुकालं तपस्तेपे ध्यायन्विश्वेश्वरं प्रभुम्।।२।।
स्थापयामास तत्रैव लिंगं शंभोः परात्मनः ।।
कूपं चकार सद्रम्यं वेदव्यास तदग्रतः ।।३।।
पंचामृतैर्द्रोणमितैर्लक्षकृत्वः प्रयत्नतः ।।
स्नापयामास देवेशं सुगंधस्नपनैर्बहु।।४।।
सहस्रकृत्वो देवेशं चन्दनैर्यक्षकर्दमैः।।
समालिलिंप सुप्रीत्या सुगन्धोद्वर्त्तनान्यनु।।५।।
राजचंपकधत्तूरैः करवीरकुशेशयैः ।।
मालतीकर्णिकारैश्च कदंबैर्बकुलोत्पलैः ।।६।।
मल्लिकाशतपत्रीभिस्सिंधुवारैस्सकिंशुकः ।।
बन्धूकपुष्पैः पुन्नागैर्नागकेशरकेशरैः ।।७।।
नवमल्लीचिबिलिकैः कुंदैस्समुचुकुन्दकैः ।।
मन्दारैर्बिल्वपत्रैश्च द्रोणैर्मरुबकैर्वृकैः ।।
ग्रन्थिपर्णैर्दमनकैः सुरम्यैश्चूतपल्लवैः ।।८।।
तुलसीदेवगंधारीबृहत्पत्रीकुशांकुरैः ।।
नद्यावर्तैरगस्त्यैश्च सशालैर्देवदारुभिः ।। ९ ।।
कांचनारैः कुरबकैर्दूर्वांकुरकुरुंटकैः।।
प्रत्येकमेभिः कुसुमैः पल्लवैरपरैरपि ।। 2.5.50.१ ०।।
पत्रैः सहस्रपत्रैश्च रम्यैर्नानाविधैश्शुभैः ।।
सावधानेन सुप्रीत्या स समानर्च शंकरम् ।। ११ ।।
गीतनृत्योपहारैश्च संस्तुतः स्तुतिभिर्बहु ।।
नाम्नां सहस्रैरन्यैश्च स्तोत्रैस्तुष्टाव शंकरम् ।। १२।।
सहस्रं पञ्चशरदामित्थं शुक्रो महेश्वरम्।।
नानाप्रकारविधिना महेशं स समर्चयत् ।। १ ३।।
यदा देवं नानुलोके मनागपि वरोन्मुखम् ।।
तदान्यं नियमं घोरं जग्राहातीव दुस्सहम् ।।१४।।
प्रक्षाल्य चेतसोऽत्यंतं चांचल्याख्यं महामलम् ।।
भावनावार्भिरसकृदिंद्रियैस्सहितस्य च ।।१५।।
निर्मलीकृत्य तच्चेतो रत्नं दत्त्वा पिनाकिने ।।

प्रययौ कणधूमौघं सहस्रं शरदां कविः ।।१६।।
काव्यमित्थं तपो घोरं कुर्वन्तं दृढमानसम् ।।
प्रससाद स तं वीक्ष्य भार्गवाय महेश्वरः ।।१७।।
तस्माल्लिंगाद्विनिर्गत्य सहस्रार्काधिकद्युतिः ।।
उवाच तं विरूपाक्षस्साक्षाद्दाक्षायणीपतिः ।।१८।।
महेश्वर उवाच ।।
तपोनिधे महाभाग भृगुपुत्र महामुने ।।
तपसानेन ते नित्यं प्रसन्नोऽहं विशेषतः ।। १९ ।।
मनोभिलषितं सर्वं वरं वरय भार्गव ।।
प्रीत्या दास्येऽखिलान्कामान्नादेयं विद्यते तव ।। 2.5.50.२० ।।
सनत्कुमार उवाच ।।
निशम्येति वचश्शंभोर्महासुखकरं वरम् ।।
स बभूव कविस्तुष्टो निमग्नस्सुखवारिधौ ।। २१ ।।
उद्यदानंदसंदोह रोमांचाचितविग्रहः ।।
प्रणनाम मुदा शंभुमंभो जनयनो द्विजः ।।२२।।
तुष्टावाष्टतनुं तुष्टः प्रफुल्लनयनाचलः।।
मौलावंजलिमाधाय वदञ्जयजयेति च ।। २३।।
भार्गव उवाच ।।
त्वं भाभिराभिरभिभूय तमस्समस्तमस्तं नयस्यभिमतानि निशाचराणाम्।।
देदीप्यसे दिवमणे गगने हिताय लोकत्रयस्य जगदीश्वर तन्नमस्ते ।। २४ ।।
लोकेऽतिवेलमतिवेलमहामहोभिर्निर्भासि कौ च गगनेऽखिललोकनेत्रः ।।
विद्राविताखिलतमास्सुतमो हिमांशो पीयूष पूरपरिपूरितः तन्नमस्ते ।। २५ ।।
त्वं पावने पथि सदागतिरप्युपास्यः कस्त्वां विना भुवनजीवन जीवतीह ।।
स्तब्धप्रभंजनविवर्द्धि तसर्वजंतोः संतोषिता हि कुलसर्वगः वै नमस्ते ।।२६।।
विश्वेकपावक न तावकपावकैकशक्तेर्ऋते मृतवतामृतदिव्यकार्यम् ।।
प्राणिष्यदो जगदहो जगदंतरात्मंस्त्वं पावकः प्रतिपदं शमदो नमस्ते।।२७।।
पानीयरूप परमेश जगत्पवित्र चित्रविचित्रसुचरित्रकरोऽसि नूनम्।।
विश्वं पवित्रममलं किल विश्वनाथ पानीयगाहनत एतदतो नतोऽस्मि।।२८।।
आकाशरूपबहिरंतरुतावकाशदानाद्विकस्वरमिहेश्वर विश्वमेतत् ।।
त्वत्तस्सदा सदय संश्वसिति स्वभावात्संकोचमेति भक्तोऽस्मि नतस्ततस्त्वाम्।।२९।।
विश्वंभरात्मक बिभर्षि विभोत्र विश्वं को विश्वनाथ भवतोऽन्यतमस्तमोरिः ।।
स त्वं विनाशय तमो तम चाहिभूषस्तव्यात्परः परपरं प्रणतस्ततस्त्वाम् ।।2.5.50.३०।।
आत्मस्वरूप तव रूपपरंपराभिराभिस्ततं हर चराचररूपमेतत्।।

सर्वांतरात्मनिलयप्रतिरूपरूप नित्यं नतोऽस्मि परमात्मजनोऽष्टमूर्ते।।३१।।
इत्यष्टमूर्तिभिरिमाभिरबंधबंधो युक्तौ करोषि खलु विश्वजनीनमूर्ते।।
एतत्ततं सुविततं प्रणतप्रणीत सर्वार्थसार्थपरमार्थ ततो नतोऽस्मि ।।३२।।
सनत्कुमार उवाच ।।
अष्टमूर्त्यष्टकेनेत्थं परिष्टुत्येति भार्गवः ।।
भर्गं भूमिमिलन्मौलिः प्रणनाम पुनःपुनः ।। ३३ ।।
इति स्तुतो महादेवो भार्गवेणातितेजसा ।।
उत्थाय भूमेर्बाहुभ्यां धृत्वा तं प्रणतं द्विजम्।।३४।।
उवाच श्लक्ष्णया वाचा मेघनादगभीरया ।।
सुप्रीत्या दशनज्योत्स्ना प्रद्योतितदिंगतरः ।।३५।।
महादेव उवाच ।।
विप्रवर्य कवे तात मम भक्तोऽसि पावनः ।।
अनेनात्युग्रतपसा स्वजन्याचरितेन च ।। ३६ ।।
लिंगस्थापनपुण्येन लिंगस्याराधनेन च ।।
दत्तचित्तोपहारेण शुचिना निश्चलेन च ।। ३७ ।।
अविमुक्तमहाक्षेत्रपवित्राचरणेन च ।।
त्वां सुताभ्यां प्रपश्यामि तवादेयं न किंचन ।।३८।।
अनेनैव शरीरेण ममोदरदरीगतः ।।
मद्वरेन्द्रियमार्गेण पुत्रजन्मत्वमेष्यसि ।। ३९ ।।
यच्छाम्यहं वरं तेऽद्य दुष्प्राप्यं पार्षदैरपि ।।
हरेर्हिरण्यगर्भाच्च प्रायशोहं जुगोप यम् ।।।2.5.50.४० ।।
मृतसंजीवनी नाम विद्या या मम निर्मला ।।
तपोबलेन महता मयैव परिनिर्मिता ।।४ १ ।।
त्वां तां तु प्रापयाम्यद्य मंत्ररूपां महाशुचे।।
योग्यता तेऽस्ति विद्यायास्तस्याश्शुचि तपोनिधे ।। ४२ ।।
यंयमुद्दिश्य नियतमेतामावर्तयिष्यसि ।।
विद्यां विद्येश्वरश्रेष्ठं सत्यं प्राणि ष्यति धुवम् ।। ४३ ।।
अत्यर्कमत्यग्निं च ते तेजो व्योम्नि च तारकम् ।।
देदीप्यमानं भविता ग्रहाणां प्रवरो भव ।। ४४ ।।
अपि च त्वां करिष्यंति यात्रां नार्यो नरोऽपि वा ।।
तेषां त्वद्दृष्टिपातेन सर्वकार्यं प्रणश्यति ।। ४९ ।।
तवोदये भविष्यंति विवाहादीनि सुव्रत ।।
सर्वाणि धर्मकार्याणि फलवंति नृणामिह ।। ४६ ।।

सर्वाश्च तिथयो नन्दास्तव संयोगतश्शुभाः ।।
तव भक्ता भविष्यंति बहुशुक्रा बहु प्रजाः ।।४७।।
त्वयेदं स्थापितं लिंगं शुक्रेशमिति संज्ञितम् ।।
येऽर्चयिष्यंति भनुजास्तेषां सिद्धिर्भविष्यति ।।४८।।
आवर्षं प्रतिघस्नां ये नक्तव्रतपरायणाः ।।
त्वद्दिने शुक्रकूपे ये कृतसर्वोदकक्रियाः ।।४९।।
शुक्रेशमर्चयिष्यंति शृणु तेषां तु यत्फलम् ।।
अबंध्यशुक्रास्ते मर्त्याः पुत्रवंतोऽतिरेतसः ।। 2.5.50.५० ।।
पुंस्त्वसौभाग्यसंपन्ना भविष्यंति न संशयः ।।
उपेतविद्यास्ते सर्वे जनास्स्युः सुखभागिनः ।।५१।।
इति दत्त्वा वरान्देवस्तत्र लिंगे लयं ययौ ।।
भार्गवोऽपि निजं धाम प्राप संतुष्टमानसः ।। ५२।।
इति ते कथितं व्यास यथा प्राप्ता तपोबलात् ।।
मृत्युंजयाभिधा विद्या किमन्यच्छ्रोतुमिच्छसि ।। ५३ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे मृतसंजीविनीविद्याप्राप्तिवर्णनं नाम पञ्चाशत्तमोऽध्यायः ।। ५० ।।

व्यास उवाच।।
सनत्कुमार सर्वज्ञ श्राविता सुकथाद्भुता।।
भवतानुग्रहात्प्रीत्या शम्भ्वनुग्रहनिर्भरा ।। १ ।।
इदानीं श्रोतुमिच्छामि चरितं शशिमौलिनः ।।
गाणपत्यं ददौ प्रीत्या यथा बाणासुराय वै ।। २ ।।
सनत्कुमार उवाच ।।
शृणु व्यासादरात्तां वै कथां शंभोः परात्मनः ।।
गाणपत्यं यथा प्रीत्या ददौ बाणा सुराय हि ।। ३ ।।
अत्रैव सुचरित्रं च शंकरस्य महाप्रभोः ।।
कृष्णेन समरोप्यत्र शंभोर्बाणानुगृह्णतः ।। ४ ।।
अत्रानुरूपं शृणु मे शिवलीलान्वितं परम् ।।
इतिहासं महापुण्यं मनःश्रोत्रसुखावहम् ।। ५ ।।
ब्रह्मपुत्रो मरीचिर्यो मुनिरासीन्महामतिः ।।
मानसस्सर्वपुत्रेषु ज्येष्ठः श्रेष्ठः प्रजापतिः ।। ६ ।।
तस्य पुत्रो महात्मासीत्कश्यपो मुनिसत्तमः।।
सृष्टिप्रवृद्धकोऽत्यंतं पितुर्भक्तो विधेरपि ।।७।।
स्वस्य त्रयोदशमितादक्षकन्या स्सुशीलिकाः ।।
कश्यपस्य मुनेर्व्यास पत्न्यश्चासन्पतिव्रताः ।।८।।
तत्र ज्येष्ठा दितिश्चासीद्दैत्यास्तत्तनयास्स्मृताः ।।
अन्यासां च सुता जाता देवाद्यास्सचराचराः ।। ९ ।।
ज्येष्ठायाः प्रथमौ पुत्रौ दितेश्चास्तां महाबलौ ।।
हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षोऽनुजस्ततः ।।2.5.51.१०।।
हिरण्यकशिपोः पुत्राश्चत्वारो दैत्यसत्तमाः।।
ह्लादानुह्लादसंह्लादा प्रह्लादश्चेत्यनुक्रमात्।।११।।
प्रह्लादस्तत्र हि महान्विष्णुभक्तो जितेन्द्रियः ।।
यं नाशितुं न शक्तास्तेऽभवन्दैत्याश्च केपि ह ।। १२ ।।
विरोचनः सुतस्तस्य महा दातृवरोऽभवत् ।।
शक्राय स्वशिरो योऽदाद्याचमानाय विप्रतः ।। १३ ।।
तस्य पुत्रो बलिश्चासीन्महादानी शिवप्रियः ।।
येन वामनरूपाय हरयेऽदायि मेदिनी ।। १४ ।।
तस्यौरसः सुतो बाणश्शिवभक्तो बभूव ह ।।
मान्यो वदान्यो धीमांश्च सत्यसंधस्स हस्रदः ।। १५ ।।
शोणिताख्ये पुरे स्थित्वा स राज्यमकरोत्पुरा ।।

त्रैलोक्यं च बलाञ्ज्जित्वा तन्नाथानसुरेश्वरः ।। १६ ।। ।।
तस्य बाणासुरस्यैव शिवभक्तस्य चामराः ।।
शंकरस्य प्रसादेन किंकरा इव तेऽभवन् ।।१७।।
तस्य राज्येऽमरान्हित्वा नाभवन्दुःखिताः प्रजाः ।।
सापत्न्यादुःखितास्ते हि परधर्मप्रवर्तिनः।।१८।।
सहस्रबाहुवाद्येन स कदाचिन्महासुरः।।
तांडवेन हि नृत्येनातोषयत्तं महेश्वरम् ।। १९ ।।
तेन नृत्येन संतुष्टस्सुप्रसन्नो बभूव ह ।।
ददर्श कृपया दृष्ट्या शंकरो भक्तवत्सलः ।। 2.5.51.२० ।।
भगवान्सर्वलोकेश्शशरण्यो भक्तकामदः ।।
वरेण च्छंदयामास बालेयं तं महासुरम् ।।२१।।
शंकर उवाच।।
बालेयः स महादैत्यो बाणो भक्तवरस्सुधीः।।
प्रणम्य शंकरं भक्त्या नुनाव परमेश्वरम् ।।२२।।
बाणासुर उवाच ।।
देवदेव महादेव शरणागतवत्सल ।।
संतुष्टोऽसि महेशान ममोपरि विभो यदि ।। २३ ।।
मद्रक्षको भव सदा मदुपस्थः पुराधिपः ।।
सर्वथा प्रीतिकृन्मे हि ससुतस्सगणः प्रभो ।। २४ ।।
सनत्कुमार उवाच ।।
बलिपुत्रस्स वै बाणो मोहितश्शिवमायया ।।
मुक्तिप्रदं महेशानं दुराराध्यमपि ध्रुवम् ।। २५ ।।
स भक्तवत्सलः शंभुर्दत्त्वा तस्मै वरांश्च तान् ।।
तत्रोवास तथा प्रीत्या सगणस्ससुतः प्रभुः ।। २६ ।।
स कदाचिद्बाणपुरे चक्रे देवासुरैस्सह ।।
नदीतीरे हरः क्रीडां रम्ये शोणितकाह्वये ।। २७ ।।
ननृतुर्जहसुश्चापि गंधर्वासरसस्तथा ।।
जेयुः प्रणेमुर्मुनय आनर्चुस्तुष्टुवुश्च तम् ।।२८।।
ववल्गुः प्रथमास्सर्वे ऋषयो जुहुवुस्तथा ।।
आययुः सिद्धसंघाश्च ददृशुश्शांकरी रतिम् ।। २९ ।।
कुतर्किका विनेशुश्च म्लेच्छाश्च परिपंथिनः ।।
मातरोभिमुखास्तस्थुर्विनेशुश्च विभीषिका ।। 2.5.51.३० ।।
रुद्रसद्भावभक्तानां भवदोषाश्च विस्तृताः ।।

तस्मिन्दृष्टे प्रजास्सर्वाः सुप्रीतिं परमां ययुः ।। ३१ ।।
ववल्गुर्मुनयस्सिद्धाः स्त्रीणां दृष्ट्वा विचेष्टितम् ।।
पुपुषुश्चापि ऋतवस्स्वप्रभावं तु तत्र च ।।३२।।
ववुर्वाताश्च मृदवः पुष्पकेसरधूसराः ।।
चुकूजुः पक्षिसंघाश्च शाखिनां मधुलम्पटाः ।।३३।।
पुष्पभारावनद्धानां रारट्येरंश्च कोकिलाः ।।
मधुरं कामजननं वनेषूपवनेषु च ।।३४।।
ततः क्रीडाविहारे तु मत्तो बालेन्दुशेखरः ।।
अनिर्जितेन कामेन दृष्टाः प्रोवाच नन्दिनम् ।।३५।।
चन्द्रशेखर उवाच ।।
वामामानय गौरीं त्वं कैलासात्कृतमंडनाम् ।।
शीघ्रमस्माद्वनाद्गत्वा ह्युक्त्वाऽकृष्णामिहानय ।। ३६ ।।
सनत्कुमार उवाच ।।
स तथेति प्रतिज्ञाय गत्वा तत्राह पार्वतीम् ।।
सुप्रणम्य रहो दूतश्शंकरस्य कृतांजलिः ।। ३७ ।।
।। नन्दीश्वर उवाच ।।
द्रष्टुमिच्छति देवि त्वां देवदेवो महेश्वरः ।।
स्ववल्लभां रूपकृतां मयोक्तं तन्निदेशतः ।। ३८ ।।
सनत्कुमार उवाच।।
ततस्तद्वचनाद्गौरी मंडनं कर्तुमादरात् ।।
उद्यताभून्मुनिश्रेष्ठ पतिव्रतपरायणा ।। ३९ ।।
आगच्छामि प्रभुं गच्छ वद तं त्वं ममाज्ञया ।।
आजगाम ततो नंदी रुद्रासन्नं मनोगतिः ।।2.5.51.४०।।
पुनराह ततो रुद्रो नन्दिनं परविभ्रमः।।
पुनर्गच्छ ततस्तात क्षिप्रमा नय पार्वतीम् ।।४१।।
बाढमुक्त्वा स तां गत्वा गौरीमाह सुलोचनाम् ।।
द्रष्टुमिच्छति ते भर्ता कृतवेषां मनोरमाम् ।।४२।।
शंकरो बहुधा देवि विहर्तुं संप्रतीक्षते ।।
एवं पतौ सुकामार्ते गम्यतां गिरिनंदिनि ।। ४३ ।।
क्सरोभिस्समग्राभिरन्योन्यमभिमंत्रितम् ।।
लब्धभावो यथा सद्यः पार्वत्या दर्शनोत्सुकः ।। ४४ ।।
अयं पिनाकी कामारिः वृणुयाद्यां नितंबिनीम् ।।
सर्वासां दिव्यनारीणां राज्ञी भवति वै धुवम् ।। ४५ ।।

वीक्षणं गौरिरूपेण क्रीडयेन्मन्मथैर्गणैः ।।
कामोऽयं हंति कामारिमूचुरन्योन्यमादताः ।। ४६ ।।
स्प्रष्टुं शक्नोति या काचिद्दते दाक्षायणी स्त्रियम् ।।
सा गच्छेत्तत्र निश्शंकं मोहयेत्पार्वतीपतिम् ।। ४७ ।।
कूष्मांडतनया तत्र शंकरं स्प्रष्टुमुत्सहे ।।
अहं गौरीसुरूपेण चित्रलेखा वचोऽब्रवीत् ।। ४८ ।।
चित्रलेखोवाच ।।
यदधान्मोहिनीरूपं केशवो मोह नेच्छया ।।
पुरा तद्वैष्णवं योगमाश्रित्य परमार्थतः ।। ४९ ।।
उर्वश्याश्च ततो दृष्ट्वा रूपस्य परिवर्तनम् ।।
कालीरूपं घृताची तु विश्वाची चांडिकं वपुः ।। 2.5.51.५० ।।
सावित्रिरूपं रंभा च गायत्रं मेनका तथा ।।
सहजन्या जयारूपं वैजयं पुंजिकस्थली ।। ५१ ।।
मातृणामप्यनुक्तानामनुक्ताश्चाप्सरोवराः ।।
रत्नाद्रूपाणि ताश्चक्रुस्स्वविद्यासंयुता अनु ।।५२।।
ततस्तासां तु रूपाणि दृष्ट्वा कुंभां डनंदिनी ।।
वैष्णवादात्मयोगाच्च विज्ञातार्था व्यडंबयत् ।। ५३ ।।
ऊषा बाणासुरसुता दिव्ययोगविशारदा ।।
चकार रूपं पार्वत्या दिव्यमत्यद्भुतं शुभम् ।। ५४ ।।
महारक्ताब्जसंकाशं चरणं चोक्तमप्रभम् ।।
दिव्यलक्षणसंयुक्तं मनोऽभीष्टार्थदायकम् ।। ५५ ।।
तस्या रमणसंकल्पं विज्ञाय गिरिजा ततः ।।
उवाच सर्वविज्ञाना सर्वान्तर्यामिनी शिवा ।। ५६ ।।
गिरिजोवाच ।।
यतो मम स्वरूपं वै धृतभूषे सखि त्वया ।।
सकामत्वेन समये संप्राप्ते सति मानिनि ।।५७।।
अस्मिंस्तु कार्तिके मासि ऋतुधर्मास्तु माधवे ।।
द्वादश्यां शुक्लपक्षे तु यस्तु घोरे निशागमे ।। ५८ ।।
कृतोपवासां त्वां भोक्ता सुप्तामंतःपुरे नरः ।।
स ते भर्त्ता कृतो देवैस्तेन सार्द्धं रमिष्यसि ।। ५९ ।।
आबाल्याद्विष्णुभक्तासि यतोऽनिशमतंद्रिता ।।
एवमस्त्विवति सा प्राह मनसा लज्जितानना ।। 2.5.51.६० ।।
अथ सा पार्वती देवी कृतकौतुकमण्डना ।।

रुद्रसंनिधिमागत्य चिक्रीडे तेन शंभुना ।। ६१ ।।
ततो रतांते भगवान्रुद्रश्चादर्शनं ययौ ।।
सदारः सगणश्चापि सहितो दैवतैर्मुने ।। ६२ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे ऊषा चरित्रवर्णनं शिवशिवाविवाहवर्णनं नामैकपंचाशत्तमोऽध्यायः ।। ५१ ।।

सनत्कुमार उवाच ।।
शृणुष्वान्यच्चरित्रं च शिवस्य परमात्मनः ।।
भक्तवात्सल्यसंगर्भि परमानन्ददायकम् ।। १ ।।
पुरा बाणासुरो नाम दैवदोषाच्च गर्वितः ।।
कृत्वा तांडवनृत्यं च तोषयामास शंकरम्।।२।।
ज्ञात्वा संतुष्टमनसं पार्वतीवल्लभं शिवम् ।।
उवाच चासुरो बाणो नतस्कन्धः कृतांजलिः।।३।।
बाण उवाच।।
देवदेव महादेव सर्वदेवशिरोमणे ।।
त्वत्प्रसादाद्बली चाहं शृणु मे परमं वचः ।। ४ ।।
दोस्सहस्रं त्वया दत्तं परं भाराय मेऽभवेत् ।।
त्रिलोक्यां प्रतियोद्धारं न लभे त्वदृते समम् ।।५।।
हे देव किमनेनापि सहस्रेण करोम्यहम् ।।
बाहूनां गिरितुल्यानां विना युद्धं वृषध्वज ।।६।।
कडूंत्या निभृतैर्दोर्भिर्युयुत्सुर्दिग्गजानहम् ।।
पुराण्याचूर्णयन्नद्रीन्भीतास्तेपि प्रदुद्रुवुः।।७।।
मया यमः कृतो योद्धा वह्निश्च कृतको महान्।।
वरुणश्चापि गोपालो गवां पालयिता तथा।।८।।
गजाध्यक्षः कुबेरस्तु सैरन्ध्री चापि निर्ऋतिः।।
जितश्चाखंडलो लोके करदायी सदा कृतः ।।९।।
युद्धस्यागमनं ब्रूहि यत्रैते बाहवो मम ।।
शत्रुहस्तप्रयुक्तश्च शस्त्रास्त्रैर्जर्जरीकृताः।।2.5.52.१०।।
पतंतु शत्रुहस्ताद्वा पातयन्तु सहस्रधा ।।
एतन्मनोरथं मे हि पूर्णं कुरु महेश्वर ।।११।।
सनत्कुमार उवाच ।।
तच्छ्रुत्वा कुपितो रुद्रस्त्वट्टहासं महाद्भुतम्।।
कृत्वाऽब्रवीन्महामन्युर्भक्तबाधाऽपहारकः ।।१२।।
रुद्र उवाच ।।
धिग्धिक्त्वां सर्वतो गर्विन्सर्वदैत्यकुलाधम ।।
बलिपुत्रस्य भक्तस्य नोचितं वच ईदृशम् ।।१३।।
दर्पस्यास्य प्रशमनं लप्स्यसे चाशु दारुणम् ।।
महायुद्धमकस्मात्वै बलिना मत्समेन हि ।।१४।।
तत्र ते गिरिसंकाशा बाहवोऽनलकाष्ठवत् ।।

छिन्ना भूमौ पतिष्यंति शस्त्रास्त्रैः कदलीकृताः।।१५।।
यदेष मानुषशिरो मयूरसहितो ध्वजः।।
विद्यते तव दुष्टात्मंस्तस्य स्यात्पतनं यदा ।। १६ ।।
स्थापितस्यायुधागारे विना वातकृतं भयम् ।।
तदा युद्धं महाघोरं संप्राप्तमिति चेतसि ।।१७।।
निधाय घोरं संग्रामं गच्छेथाः सर्वसैन्यवान् ।।
सांप्रतं गच्छ तद्वेश्म यतस्तद्विद्यते शिवः।।१८।।
तथा तान्स्वमहोत्पातांस्तत्र द्रष्टासि दुर्मते ।।
इत्युक्त्वा विररामाथ गर्वहृद्भक्तवत्सलः ।।१९।।
सनत्कुमार उवाच ।।
तच्छ्रुत्वा रुद्रमभ्यर्च्य दिव्यैरजंलिकुड्मलैः।।
प्रणम्य च महादेवं बाणश्च स्वगृहं गतः ।। 2.5.52.२० ।।
कुंभाण्डाय यथावृत्तं पृष्टः प्रोवाच हर्षितः ।।
पर्यैक्षिष्टासुरो बाणस्तं योगं ह्युत्सुकस्सदा ।। २१ ।।
अथ दैवात्कदाचित्स स्वयं भग्नं ध्वजं च तम् ।।
दृष्ट्वा तत्रासुरो बाणो हृष्टो युद्धाय निर्ययौ ।। २२ ।।
स स्वसैन्यं समाहूय संयुक्तः साष्टभिर्गणैः ।।
इष्टिं सांग्रामिकां कृत्वा दृष्ट्वा सांग्रामिकं मधु ।। २३ ।।
ककुभां मंगलं सर्वं संप्रेक्ष्य प्रस्थितोऽभवत् ।।
महोत्साहो महावीरो बलिपुत्रो महारथः ।। २४ ।।
इति हृत्कमले कृत्वा कः कस्मादागमिष्यति ।।
योद्धा रणप्रियो यस्तु नानाशस्त्रास्त्रपारगः ।। २५ ।।
यस्तु बाहुसहस्रं मे छिनत्त्वनलकाष्ठवत् ।।
तथा शस्त्रैर्महातीक्ष्णैश्छिनद्मि शतशस्त्विह ।। २६ ।।
एतस्मिन्नंतरे कालः संप्राप्तश्शंकरेण हि ।।
यत्र सा बाणदुहिता सुजाता कृतमंगला ।।२७।।
माधवं माधवे मासि पूजयित्वा महानिशि ।।
सुप्ता चांतः पुरे गुप्ते स्त्रीभावमुपलंभिता ।। २८ ।।
गौर्या संप्रेषितेनापि व्याकृष्टा दिव्यमायया ।।
कृष्णात्मजात्मजेनाथ रुदंती सा ह्यनाथवत् ।। २९ ।।
स चापि तां बलाद्भुक्त्वा पार्वत्याः सखिभिः पुनः ।।
नीतस्तु दिव्ययोगेन द्वारकां निमिषांतरात् ।। 2.5.52.३० ।।
मृदिता सा तदोत्थाय रुदंती विविधा गिरः ।।

सखीभ्यः कथयित्वा तु देहत्यागे कृतक्षणा ।।३१।।
सख्या कृतात्मनो दोषं सा व्यास स्मारिता पुनः।।
सर्वं तत्पूर्ववृत्तांतं ततो दृष्ट्वा च सा भवत्।।३२।।
अब्रवीच्चित्रलेखां च ततो मधुरया गिरा ।।
ऊषा बाणस्य तनया कुंभांडतनयां मुने ।।३३।।
ऊषोवाच ।।
सखि यद्येष मे भर्ता पार्वत्या विहितः पुरा ।।
केनोपायेन ते गुप्तः प्राप्यते विधिवन्मया ।। ३४ ।।
कस्मिन्कुले स वा जातो मम येन हृतं मनः ।।
इत्युषावचनं श्रुत्वा सखी प्रोवाच तां तदा ।। ३५ ।।
चित्रलेखोवाच ।।
त्वया स्वप्ने च यो दृष्टः पुरुषो देवि तं कथम् ।।
अहं संमानयिष्यामि न विज्ञातस्तु यो मम ।।३६।।
दैत्यकन्या तदुक्ते तु रागांधा मरणोत्सुका ।।
रक्षिता च तया सख्या प्रथमे दिवसे ततः ।।३७।।
पुनः प्रोवाच सोषा वै चित्रलेखा महामतिः ।।
कुंभांडस्य सुता बाणतनयां मुनिसत्तम ।३८।।
चित्रलेखोवाच ।।
व्यसनं तेऽपकर्षामि त्रिलोक्यां यदि भाष्यते।।
समानेष्ये नरं यस्ते मनोहर्ता तमादिश ।।३९।।
सनत्कुमार उवाच ।।
इत्युक्त्वा वस्त्रपुटके देवान्दैत्यांश्च दानवान् ।।
गन्धर्वसिद्धनागांश्च यक्षादींश्च तथालिखत् ।। 2.5.52.४० ।।
तथा नरांस्तेषु वृष्णीञ्शूरमानकदुंदुभिम् ।।
व्यलिखद्रामकृष्णौ च प्रद्युम्नं नरसत्तमम् ।। ४१ ।।
अनिरुद्धं विलिखितं प्राद्युम्निं वीक्ष्य लज्जिता ।।
आसीदवाङ्मुखी चोषा हृदये हर्षपूरिता ।। ४२ ।।
ऊषा प्रोवाच चौरोऽसौ मया प्राप्तस्तु यो निशि ।।
पुरुषः सखि येनाशु चेतोरत्नं हृतं मम।।४३।।
यस्य संस्पर्शनादेव मोहिताहं तथाभवम् ।।
तमहं ज्ञातुमिच्छामि वद सर्वं च भामिनि ।। ४४ ।।
कस्यायमन्वये जातो नाम किं चास्य विद्यते ।।
इत्युक्ता साब्रवीन्नाम योगिनी तस्य चान्वयम् ।। ४५ ।।

सर्वमाकर्ण्य सा तस्य कुलादि मुनिसत्तम ।।
उत्सुका बाणतनया बभाषे सा तु कामिनी ।। ४६ ।।
ऊषोवाच ।।
उपायं रचय प्रीत्या तत्प्राप्त्यै सखि तत्क्षणात् ।।
येनोपायेन तं कांतं लभेयं प्राणवल्लभम् ।। ४७ ।।
यं विनाहं क्षणं नैकं सखि जीवितुमुत्सहे ।।
तमानयेह सद्यत्नात्सुखिनीं कुरु मां सखि ।। ४८ ।।
सनत्कुमार उवाच ।।
इत्युक्ता सा तथा बाणात्मजया मंत्रिकन्यका ।।
विस्मिताभून्मुनिश्रेष्ठ सुविचारपराऽभवत् ।। ४९ ।।
ततस्सखीं समाभाष्य चित्रलेखा मनोजवा ।।
बुद्ध्वा तं कृष्णपौत्रं सा द्वारकां गंतुमुद्यता ।। 2.5.52.५० ।।
ज्येष्ठकृष्णचतुर्दश्यां तृतीये तु गतेऽहनि ।।
आप्रभातान्मुहूर्ते तु संप्राप्ता द्वारकां पुरीम् ।। ५१ ।।
एकेन क्षणमात्रेण नभसा दिव्ययोगिनी ।।
ततश्चांतःपुरोद्याने प्राद्युम्निर्ददृशे तया ।। ५२ ।।
क्रीडन्नारीजनैस्सार्द्धं प्रपिबन्माधवी मधु ।।
सर्वांगसुन्दरः श्यामः सुस्मितो नवयौवनः ।। ५३ ।।
ततः खट्वां समारूढमंधकारपटेन सा ।।
आच्छादयित्वा योगेन तामसेन च माधवम् ।। ५४ ।।
ततस्सा मूर्ध्नि तां खट्वां गृहीत्वा निमिषांतरात् ।।
संप्राप्ता शोणितपुरं यत्र सा बाणनंदिनी ।। ५५ ।।
कामार्ता विविधान्भावाञ्चकारोन्मत्तमानसा ।।
आनीतमथ तं दृष्ट्वा तदा भीता च साभवत् ।। ५६ ।।
अंतःपुरे सुगुप्ते च नवे तस्मिन्समागमे ।।
यावत्क्रीडितुमारब्धं तावज्ज्ञातं च तत्क्षणात् ।। ५७ ।।
अंतःपुरद्वारगतैर्वेत्रजर्जरपाणिभिः ।।
इंगितैरनुमानैश्च कन्यादौःशील्यमाचरन् ।। ५८ ।।
स चापि दृष्टस्तैस्तत्र नरो दिव्यवपुर्धरः ।।
तरुणो दर्शनीयस्तु साहसी समरप्रियः ।। ५९ ।।
तं दृष्ट्वा सर्वमाचख्युर्बाणाय बलिसूनवे ।।
पुरुषास्ते महावीराः कन्यान्तःपुररक्षकाः ।। 2.5.52.६० ।।
द्वारपाला ऊचुः ।।

देव कश्चिन्न जानीते गुप्तश्चांतःपुरे बलात् ।।
स कस्तु तव कन्यां वै स्वयंग्राहादधर्षयत् ।। ६१ ।।
दानवेन्द्र महाबाहो पश्यपश्यैनमत्र च ।।
यद्युक्तं स्यात्तत्कुरुष्व न दुष्टा वयमित्युत ।। ६२ ।।
सनत्कुमार उवाच ।।
तेषां तद्वचनं श्रुत्वा दानवेन्द्रो महाबलः ।।
विस्मितोभून्मुनिश्रेष्ठ कन्यायाः श्रुतदूषणः ।। ६३ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहि तायां पंचमे युद्धखण्डे ऊषाचरित्रवर्णनं नाम द्विपञ्चाशत्तमोऽध्यायः ।। ५२ ।।

सनत्कुमार उवाच ।।
अथ बाणासुरः क्रुद्धस्तत्र गत्वा ददर्श तम् ।।
दिव्यलीलात्तवपुषं प्रथमे वयसि स्थितम् ।। १ ।।
तं दृष्ट्वा विस्मितं वाक्यं किं कारणमथाब्रवीत् ।।
बाणः क्रोध परीतात्मा युधि शौंडो हसन्निव ।।२।।
अहो मनुष्यो रूपाढ्यस्साहसी धैर्यवानिति ।।
कोयमागतकालश्च दुष्टभाग्यो विमूढधीः।।३।।
येन मे कुलचारित्रं दूषितं दुहिता हिता ।।
तं मारयध्वं कुपिताश्शीघ्रं शस्त्रैस्सुदारुणैः ।। ४ ।।
दुराचारं च तं बद्ध्वा घोरे कारा गृहे ततः ।।
रक्षध्वं विकटे वीरा बहुकालं विशेषतः ।। ५ ।।
न जाने कोयमभयः को वा घोरपराक्रमः ।।
विचार्येति महाबुद्धिस्सं दिग्धोऽभूच्छरासुरः ।। ६ ।।
ततो दैत्येन सैन्यं तु दशसाहस्रकं शनैः ।।
वधाय तस्य वीरस्य व्यादिष्टं पापबुद्धिना ।। ७ ।।
तदादिष्टास्तु ते वीराः सर्वतोन्तःपुरं द्रुतम् ।।
छादयामासुरत्युग्राश्छिंदि भिंदीति वादिनः ।। ८ ।।
शत्रुसैन्यं ततो दृष्ट्वा गर्जमानः स यादवः ।।
अंतःपुरं द्वारगतं परिघं गृह्य चातुलम् ।। ९ ।।
निष्क्रांतो भवनात्तस्माद्वज्रहस्त इवांतकः ।।
तेन तान्किंकरान् हत्वा पुनश्चांतःपुरं ययौ ।। 2.5.53.१० ।।
एवं दशसहस्राणि सैन्यानि मुनिसत्तम ।।
जघान रोषरक्ताक्षो वर्द्धितश्शिवतेजसा ।। ११ ।।
लक्षे हतेऽथ योधानां ततो बाणासुरो रुषा ।।
कुभांडं स गृहीत्वा तु युद्धे शौंडं समाह्वयत् ।। १२ ।।
अनिरुद्धं महाबुद्धिं द्वन्द्वयुद्धे महा हवे ।।
प्राद्युम्निं रक्षितं शैवतेजसा प्रज्वलत्तनुम् ।। १३ ।।
ततो दशसहस्राणि तुरगाणां रथोत्तमान् ।।
युद्धप्राप्तेन खड्गेन दैत्येन्द्रस्य जघान सः ।। १४ ।।
तद्वधाय ततश्शक्तिं कालवैश्वानरोपमाम् ।।
अनिरुद्धो गृहीत्वा तां तया तं निजघान हि ।। १५ ।।
रथोपस्थे ततो बाणस्तेन शक्त्याहतो दृढम् ।।
स साश्वस्तत्क्षणं वीरस्तत्रैवांतरधीयत ।। १६ ।।

तस्मिंस्त्वदर्शनं प्राप्ते प्राद्युम्निरपराजितम् ।।
आलोक्य ककुभस्सर्वास्तस्थौ गिरिरिवाचलः ।। १७ ।।
अदृश्यमानस्तु तदा कूटयोधस्स दानवः ।।
नानाशस्त्रसहस्रैस्तं जघान हि पुनः पुनः ।। १८।।
छद्मनां नागपाशैस्तं बबंध स महाबलः ।।
बलिपुत्रो महावीरश्शिवभक्तश्शरासुरः ।।१९।।
तं बद्ध्वा पंजरांतःस्थं कृत्वा युद्धादुपारमत्।।
उवाच बाणः संकुद्धस्सूतपुत्रं महाबलम् ।।2.5.53.२० ।।
बाणासुर उवाच।।
सूतपुत्र शिरश्छिंधि पुरुषस्यास्य वै लघु ।।
येन मे दूषितं पूतं बलाद्दुष्टेन सत्कुलम् ।। २१ ।।
छित्वा तु सर्वगात्राणि राक्षसेभ्यः प्रयच्छ भोः ।।
अथास्य रक्तमांसानि क्रव्यादा अपि भुंजताम् ।।२२।।
अगाधे तृणसंकीर्णे कूपे पातकिनं जहि ।।
किं बहूक्त्या सूतपुत्र मारणीयो हि सर्वथा ।।२३।।
सनत्कु मार उवाच।।
तस्य तद्वचनं श्रुत्वा धर्मबुद्धिर्निशाचरः ।।
कुंभांडस्त्वब्रवीद्वाक्यं बाणं सन्मंत्रिसत्तमम् ।।२४।।
कुंभांड उवाच ।।
नैतत्कर्तुं समुचितं कर्म देव विचार्यताम्।।
अस्मिन्हते हतो ह्यात्मा भवेदिति मतिर्मम।।२५।।
अयं तु दृश्यते देव तुल्यो विष्णोः पराक्रमैः।।
वर्धितश्चन्द्र चूडस्य त्वद्दुष्टस्य सुतेचसा ।।२६।।
अथ चन्द्रललाटस्य साहसेन समत्स्वयम् ।।
इमामवस्थां प्राप्तोसि पौरुषे संव्यवस्थितः ।।२७।।
अयं शिवप्रसादाद्वै कृष्णपौत्रो महाबलः ।।
अस्मांस्तृणोपमान् वेत्ति दष्टोपि भुजगैर्बलात् ।। २८ ।।
सनत्कुमार उवाच ।।
एतद्वाक्यं तु बाणाय कथयित्वा स दानवः ।।
अनिरुद्धमुवाचेदं राजनीतिविदुत्तमः ।। २९ ।।
कुंभांड उवाच ।।
कोसि कस्यासि रे वीर सत्यं वद ममाग्रतः ।।
केन वा त्वमिहानीतो दुराचार नराधम ।।2.5.53.३०।।

दैत्येन्द्रं स्तुहि वीरं त्वं नमस्कुरु कृताजलिः ।।
जितोस्मीति वचो दीनं कथयित्वा पुनःपुनः ।। ३१ ।।
एवं कृते तु मोक्षस्स्यादन्यथा बंधनादि च ।।
तच्छ्रुत्वा वचनं तस्य प्रतिवाक्यमुवाच सः ।।३२।।
अनिरुद्ध उवाच ।।
दैत्याऽधमसखे करपिंडोपजीवक ।।
निशाचर दुराचार शत्रुधर्मं न वेत्सि भोः ।।३३।।
दैन्यं पलायनं चाथ शूरस्य मरणाधिकम्।।
विरुद्धं चोपशल्यं च भवेदिति मतिर्मम ।।३४।।
क्षत्रियस्य रणे श्रेयो मरणं सन्मुखे सदा ।।
न वीरमानिनो भूमौ दीनस्येव कृतांजलिः ।। ३५ ।।
सनत्कुमार उवाच ।।
इत्यादि वीरवाक्यानि बहूनि स जगाद तम् ।।
तदाकर्ण्य सबाणोऽसौ विस्मितोऽभूच्चुकोप च ।। ३६ ।।
तदोवाच नभोवाणी बाणस्याश्वासनाय हि ।।
शृण्वतां सर्ववीराणामनिरुद्धस्य मंत्रिणः ।। ३७ ।।
व्योमवाण्युवाच ।।
भो भो बाण महावीर न क्रोधं कर्तुमर्हसि ।।
बलिपुत्रोसि सुमते शिवभक्त विचार्यताम् ।। ३८ ।।
शिवस्सर्वेश्वरस्साक्षी कर्मणां परमेश्वरः ।।
तदधीनमिदं सर्वं जगद्वै सचराचरम् ।।३९।।
स एव कर्ता भर्ता च संहर्ता जगतां सदा।।
रजस्सत्त्वतमोधारी विधिविष्णुहरात्मकः ।।2.5.53.४०।।
सर्वस्यांतर्गतः स्वामी प्रेरकस्सर्वतः परः ।।
निर्विकार्यव्ययो नित्यो मायाधीशोपि निर्गुणः ।।४१।।
तस्येच्छयाऽबलो ज्ञेयो बली बलि वरात्मज ।।
इति विज्ञाय मनसि स्वस्थो भव महामते ।।४२।।
गर्वापहारी भगवान्ना नालीलाविशारदः।।
नाशयिष्यति ते गर्वमिदानीं भक्तवत्सलः ।।४३।।
सनत्कुमार उवाच।।
इत्याभाष्य नभोवाणी विरराम महामुने ।।
बाणासुरस्तद्वचनादनिरुद्धं न जघ्निवान् ।। ।। ४४ ।।
किं तु स्वान्तःपुरं गत्वा पपौ पानमनुत्तमम् ।।

मद्वाक्यं च विसस्मार विजहार विरुद्धधीः ।। ४५ ।।
ततोनिरुद्धो बद्धस्तु नागभोगैर्विषोल्बणैः ।।
प्रिययाऽतृप्तचेतास्तु दुर्गां सस्मार तत्क्षणात् ।। ४६ ।।
अनिरुद्ध उवाच ।।
शरण्ये देवि बद्धोस्मि दह्यमानस्तु पन्नगैः ।।
आगच्छ मे कुरु त्राणं यशोदे चंडरोषिणि ।। ४७ ।।
शिवभक्ते महादेवि सृष्टिस्थित्यंतकारिणी ।।
त्वां विना रक्षको नान्यस्तस्माद्रक्ष शिवे हि माम् ।। ४८ ।।
सनत्कुमार उवाच।।
तेनेत्थं तोषिता तत्र काली भिन्नांजनप्रभा ।।
ज्येष्ठकृष्णचतुर्दश्यां संप्राप्तासीन्महानिशि ।।४९।।
गुरुभिर्मुष्टिनिर्घातैर्दारयामास पंजरम् ।।
शरांस्तान्भस्मसात्कृत्वा सर्परूपान्भयानकान् ।। 2.5.53.५० ।।
मोचयित्वा निरुद्धं तु ततश्चांतःपुरं ततः ।।
प्रवेशयित्वा दुर्गा तु तत्रैवादर्शनं गता ।।५१।।
इत्थं देव्याः प्रसादात्तु शिवशक्तेर्मुनीश्वर ।।
कृच्छ्रमुक्तोनिरुद्धोभूत्सुखी चैव गतव्यथः ।।५२।।
अथ लब्धजयो भूत्वानिरुद्धश्शिवशक्तितः।।
प्राद्युम्निर्बाणतनयां प्रियां प्राप्य मुमोद च।।५३।।
पूर्ववद्विजहारासौ? तया स्वप्रियया सुखी।।
पीतपानस्सुरक्ताक्षस्स बाणसुतया ततः।।५४।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे ऊषाचरित्रे अनिरुद्धोषाविहारवर्णनंनाम त्रिपंचाशत्तमो ऽध्याय ।। ५३ ।।

व्यास उवाच ।।
अनिरुद्धे हृते पौत्रे कृष्णस्य मुनिसत्तम ।।
कुंभांडसुतया कृष्णः किमकार्षीद्धि तद्वद ।। १ ।।
सनत्कुमार उवाच ।।
ततो गतेऽनिरुद्धे तु तत्स्त्रीणां रोदनस्वनम् ।।
श्रुत्वा च व्यथितः कृष्णो बभूव मुनिसत्तम ।।२ ।।
अपश्यतां चानिरुद्धं तद्बंधूनां हरेस्तथा ।।
चत्वारो वार्षिका मासा व्यतीयुरनुशोचताम् ।। ३ ।।
नारदात्तदुपाकर्ण्य वार्तां बद्धस्य कर्म च ।।
आसन्सुव्यथितास्सर्वे वृष्णयः कृष्णदेवताः ।।४।।!
कृष्णस्तद्वृत्तमखिलं श्रुत्वा युद्धाय चादरात् ।।
जगाम शोणितपुरं तार्क्ष्यमाहूय तत्क्षणात् ।। ५ ।।
प्रद्युम्नो युयुधानश्च गतस्सांबोथ सारणः ।।
नंदोपनंदभद्राद्या रामकृष्णानुवर्तिनः ।। ६ ।।
अक्षौहिणीभिर्द्वादशभिस्समेतासर्वतो दिशम् ।।
रुरुधुर्बाणनगरं समंतात्सात्वतर्षभाः ।। ७ ।।
भज्यमानपुरोद्यानप्राकाराट्टालगोपुरम् ।।
वीक्ष्यमाणो रुषाविष्टस्तुल्यसैन्योभिनिर्ययौ ।।८।।
बाणार्थे भगवान् रुद्रस्ससुतः प्रमथैर्वृतः ।।
आरुह्य नन्दिवृषभं युद्धं कर्तुं समाययौ ।। ९ ।।
आसीत्सुतुमुलं युद्धमद्भुतं लोमहर्षणम् ।।
कृष्णादिकानां तैस्तत्र रुद्राद्यैर्बाणरक्षकैः ।।2.5.54.१०।।
कृष्णशंकरयोरासीत्प्रद्युम्नगुहयोरपि।।
कूष्मांडकूपकर्णाभ्यां बलेन सह संयुगः ।।११।।
सांबस्य बाणपुत्रेण बाणेन सह सात्यकेः ।।
नन्दिना गरुडस्यापि परेषां च परैरपि ।।१२।।
ब्रह्मादयस्सुराधीशा मुनयः सिद्धचारणाः ।।
गंधर्वाऽप्सरसो यानैर्विमानैर्द्रष्टुमागमन् ।।१३।।
प्रमथैर्विविधाकारै रेवत्यंतैः सुदारुणम् ।।
युद्धं बभूव विप्रेन्द्र तेषां च यदुवंशिनाम् ।।१४।।
भ्रात्रा रामेण सहितः प्रद्युम्नेन च धीमता।।
कृष्णश्चकार समरमतुलं प्रमथैस्सह।।१५।।
तत्राग्निनाऽभवद्युद्धं यमेन वरुणेन च ।।

विमुखेन त्रिपादेन ज्वरेण च गुहेन च।।१६।।
प्रमथैर्विविधाकारैस्तेषामन्यं तदारुणम् ।।
युद्धं बभूव विकटं वृष्णीनां रोमहर्षणम् ।।१७।।
विभीषिकाभिर्बह्वीभिः कोटरीभिः पदेपदे ।।
निर्ल्लज्जाभिश्च नारीभिः प्रबलाभिरदूरतः ।। १८ ।।
शंकरानुचराञ्शौरिर्भूतप्रमथगुह्यकान् ।।
द्रावयामास तीक्ष्णाग्रैः शरैः शार्ङ्गधनुश्च्युतैः ।। १९ ।।
एवं प्रद्युम्नप्रमुखा वीरा युद्धमहोत्सवाः ।।
चक्रुर्युद्धं महाघोरं शत्रुसैन्यं विनाशयन् ।। 2.5.54.२० ।।
विशीर्यमाणं स्वबलं दृष्ट्वा रुद्रोत्यमर्षणः।।
क्रोधं चकार सुमहन्ननाद च महोल्बणम् ।। २१ ।।
तच्छ्रुत्वा शंकरगणा विनेदुर्युयुधुश्च ते ।।
मर्दयन्प्रतियोद्धारं वर्द्धिताश्शंभुतेजसा ।।२२।।
पृथग्विधानि चायुक्तं शार्ङ्गास्त्राणि पिनाकिने ।।
प्रत्यक्षैश्शमयामास शूलपाणिरविस्मितः ।।२३।।
ब्रह्मास्त्रस्य च ब्रह्मास्त्रं वायव्यस्य च पार्वतम् ।।
आग्नेयस्य च पार्जन्यं नैजं नारायणस्य च ।।२४।।
कृष्णसैन्यं विदुद्राव प्रतिवीरेण निर्जितम् ।।
न तस्थौ समरे व्यास पूर्णरुद्रसुतेजसा ।।२५।।
विद्राविते स्वसैन्ये तु श्रीकृष्णश्च परंतपः ।।
स्वं ज्वरं शीतलाख्यं हि व्यसृजद्दारुणं मुने ।।२६।।
विद्राविते कृष्णसैन्ये कृष्णस्य शीतलज्वरः ।।
अभ्यपद्यत तं रुद्रं मुने दशदिशो दहन् ।।२७।।
महेश्वरोथऽ तं दृष्ट्वायांतं स्वं विसृजज्ज्वरम्।।
माहेश्वरो वैष्णवश्च युयुधाते ज्वरावुभौ ।।२८।।
वैष्णवोऽथ समाक्रदन्माहेश्वरबलार्दितः ।।
अलब्ध्वा भयमन्यत्र तुष्टाव वृषभध्वजम् ।। २९ ।।
अथ प्रसन्नो भगवान्विष्णुज्वरनुतो हरः ।।
विष्णुशीतज्वरं प्राह शरणागतवत्सलः ।। 2.5.54.३० ।।
महेश्वर उवाच ।।
शीतज्वर प्रसन्नोऽहं व्येतु ते मज्ज्वराद्भयम् ।।
यो नौ स्मरति संवादं तस्य न स्याज्ज्वराद्भयम् ।। ३१ ।।
सनत्कुमार उवाच ।।

इत्युक्तो रुद्रमानम्य गतो नारायणज्वरः ।।
तं दृष्ट्वा चरितं कृष्णो विसिस्माय भयान्वितः ।।३२।।
स्कन्द प्रद्युम्नबाणौघैरर्द्यमानोऽथ कोपितः ।।
जघान शक्त्या प्रद्युम्नं दैत्यसंघात्यमर्षणः ।।३३।।
स्कंदप्राप्तिहतस्तत्र प्रद्युम्नः प्रबलोपि हि।।
असृग्विमुंचन्गात्रेभ्यो बलेनापाक्रमद्रणात् ।। ३४ ।।
कुंभांडकूपकर्णाभ्यां नानास्त्रैश्च समाहतः ।।
दुद्राव बलभद्रोपि न तस्थेपि रणे बली ।। ३५ ।।
कृत्वा सहस्रं कायानां पीत्वा तोयं महार्णवात् ।।
गरुडो नाशयत्यर्थाऽऽवर्तैर्मेघार्णवांबुभिः ।।३६।।
अथ क्रुद्धो महेशस्य वाहनो वृषभो बली ।।
वेगेन महतारं वै शृंगाभ्यां निजघान तम् ।। ३७ ।।
शृंगघातविशीर्णांगो गरुडोऽतीव विस्मितः ।।
विदुद्राव रणात्तूर्णं विहाय च जनार्दनम् ।। ३८ ।।
एवं जाते चरित्रं तु भगवान्देवकीसुतः ।।
उवाच सारथिं शीघ्रं रुद्रतेजोतिविस्मितः ।। ३९ ।।
श्रीकृष्ण उवाच ।।
हे सूत शृणु मद्वाक्यं रथं मे वाहय द्रुतम् ।।
महादेवसमीपस्थो यथा स्यां गदितुं वचः ।।2.5.54.४०।।
सनत्कुमार उवाच ।।
इत्युक्तो हरिणा सूतो दारुकस्स्वगुणाग्रणीः ।।
द्रुतं तं वाहयामास रथं रुद्रसमीपतः ।। ४१ ।।
अथ विज्ञापयामास नतो भूत्वा कृतांजलिः ।।
श्रीकृष्णः शंकरं भक्त्या प्रपन्नो भक्तवत्सलम् ।। ४२ ।।
श्रीकृष्ण उवाच ।।
देवदेव महादेव शरणागतवत्सल ।।
नमामि त्वाऽनंतशक्तिं सर्वात्मानं परेश्वरम् ।। ४३ ।।
विश्वोत्पत्तिस्थाननाशहेतुं सज्ज्ञप्ति मात्रकम् ।।
ब्रह्मलिंगं परं शांतं केवलं परमेश्वरम् ।। ४४ ।।
कालो दैवं कर्म जीवस्स्वभावो द्रव्यमेव च ।।
क्षेत्रं च प्राण आत्मा च विकारस्तत्समूहकः ।। ४५ ।।
बीजरोहप्रवाहस्तु त्वन्मायैषा जगत्प्रभो ।।
तन्निबंधं प्रपद्येह त्वामहं परमेश्वरम् ।। ४६ ।।

नाना भावैर्लीलयैव स्वीकृतैर्निर्जरादिकान् ।।
नूनं बिभर्षि लोकेशो हंस्युन्मार्गान्स्वभावतः ।।४७।।
त्वं हि ब्रह्म परं ज्योतिर्गूढं ब्रह्मणि वाङ्मये ।।
यं पश्यंत्यमलात्मानमाकाशमिव केवलम् ।। ४८ ।।
त्वमेव चाद्यः पुरुषोऽद्वितीयस्तुर्य आत्मदृक् ।।
ईशो हेतुरहेतुश्च सविकारः प्रतीयसे ।। ४९ ।।
स्वमायया सर्वगुणप्रसिद्ध्यै भगवन्प्रभो ।।
सर्वान्वितः प्रभिन्नश्च सर्वतस्त्वं महेश्वर ।। 2.5.54.५० ।।
यथैव सूर्योऽपिहितश्छायारूपाणि च प्रभो ।।
स्वच्छायया संचकास्ति ह्ययं परमदृग्भवान् ।। ५१ ।।
गुणेनापिहितोपि त्वं गुणे व गुणान् विभो ।।
स्वप्रदीपश्चकास्सि त्वं भूमन् गिरिश शंकर ।। ५२ ।।
त्वन्मायामोहितधियः पुत्रदारगृहादिषु ।।
उन्मज्जंति निमज्जंति प्रसक्ता वृजिनार्णवे ।। ५३ ।।
दैवदत्तमिमं लब्ध्वा नृलोकमजितेन्द्रियः ।।
यो नाद्रियेत त्वत्पादौ स शोच्यो ह्यात्मवंचकः ।। ५४ ।।
त्वदाज्ञयाहं भगवान्बाणदोश्छेत्तुमागतः ।।
त्वयैव शप्तो बाणोऽयं गर्वितो गर्वहारिणा । ५५ ।।
निवर्त्तस्व रणा द्देव त्वच्छापो न वृथा भवेत् ।।
आज्ञां देहि प्रभो मे त्वं बाणस्य भुजकृंतने ।। ५६ ।।
सनत्कुमार उवाच ।।
इत्याकर्ण्य वचश्शंभुः श्रीकृष्णस्य मुनीश्वर ।।
प्रत्युवाच प्रसन्नात्मा कृष्णस्तुत्या महेश्वरः ।। ५७ ।।
महेश्वर उवाच ।।
सत्यमुक्तं त्वया तात मया शप्तो हि दैत्यराट् ।।
मदाज्ञया भवान्प्राप्तो बाणदोर्दंडकृंतने ।। ५८ ।।
किं करोमि रमानाथ भक्ताधीनस्सदा हरे ।।
पश्यतो मे कथं वीर स्याद्बाणभुजकृंतनम् ।। ५९ ।।
अतस्त्वं जृंभणास्त्रेण मां जंभय मदाज्ञया ।।
ततस्त्वं कुरु कार्यं स्वं यथेष्टं च सुखी भव ।। 2.5.54.६० ।।
सनत्कुमार उवाच ।।
इत्युक्तश्शंकरेणाथ शार्ङ्गपाणिस्तु विस्मितः ।।
स्वरणस्थानमागत्य मुमोद स मुनीश्वरः ।। ६१ ।।

जृंभणास्त्रं मुमोचाथ संधाय धनुषि द्रुतम् ।।
पिनाकपाणये व्यास नानास्त्रकुशलो हरिः ।। ६२ ।।
मोहयित्वा तु गिरिशं जृंभणास्त्रेण जृंभितम् ।।
बाणस्य पृतनां शौरिर्जघानासिगदर्ष्टिभिः ।। ६३ ।।
इति शिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे बाणाऽसुररुद्रकृष्णादियुद्धवर्णनं नाम चतुःपंचाशत्तमोऽध्यायः ।। ५४ ।।

व्यास उवाच ।।
सनत्कुमार सर्वज्ञ ब्रह्मपुत्र नमोस्तु ते ।।
अद्भुतेयं कथा तात श्राविता मे त्वया मुने ।। १ ।।
जृंभिते जृंभणास्त्रेण हरिणा समरे हरे ।।
हते बाणबले बाणः किमकार्षीच्च तद्वद ।। २ ।।
सूत उवाच ।।
इत्याकर्ण्य वचस्तस्य व्यासस्यामिततेजसः ।।
प्रत्युवाच प्रसन्नात्मा ब्रह्मपुत्रो मुनीश्वरः ।।।६।।
सनत्कुमार उवाच।।
शृणु व्यास महाप्राज्ञ कथां च परमाद्भुताम् ।।
कृष्णशंकरयोस्तात लोकलीलानुसारिणोः।।४।।
शयिते लीलया रुद्रे सपुत्रे सगणे सति ।।
बाणो विनिर्गतो युद्धं कर्तुं कृष्णेन दैत्यराट् ।। ५ ।।
कुंभांडसंगृहीताश्वो नानाशस्त्रास्त्रधृक् ततः ।।
चकार युद्धमतुलं बलिपुत्रो महाबलः ।। ६ ।।
दृष्ट्वा निजबलं नष्टं स दैत्येन्द्रोऽत्यमर्षितः ।।
चकार युद्धमतुलं बलि पुत्रो महाबलः ।।७।।
श्रीकृष्णोपि महावीरो गिरिशाप्तमहाबलः ।।
उच्चैर्जगर्ज तत्राजौ बाणं मत्वा तृणोपमम् ।। ८ ।।
धनुष्टंकारयामास शार्ङ्गाख्यं निजमद्भुतम् ।।
त्रासयन्बाणसैन्यं तदवशिष्टं मुनीश्वर ।। ९ ।।
तेन नादेन महता धनुष्टंकारजेन हि ।।
द्यावाभूम्योरंतरं वै व्याप्तमासीदनंतरम् ।। 2.5.55.१० ।।
चिक्षेप विविधान्बाणान्बाणाय कुपितो हरिः ।।
कर्णान्तं तद्विकृष्याथ तीक्ष्णानाशीविषोपमान् ।। ११ ।।
आयातांस्तान्निरीक्ष्याऽथ स बाणो बलिनन्दनः ।।
अप्राप्तानेव चिच्छेद स्वशरैस्स्वधनुश्च्युतैः।। १२ ।।
पुनर्जगर्ज स विभुर्बाणो वैरिगणार्दनः ।।
तत्रसुर्वृष्णयस्सर्वे कृष्णात्मानो विचेतसः ।। १३ ।।
स्मृत्वा शिवपदाम्भोजं चिक्षेप निजसायकान्।।
स कृष्णायातिशूराय महागर्वो बलेस्सुतः ।।१४।।
कृष्णोपि तानसंप्राप्तानच्छिनत्सशरैर्द्रुतम् ।।
स्मृत्वा शिवपदाम्भोजममरारि महाबलः ।। १५ ।।

रामादयो वृष्णयश्च स्वंस्वं योद्धारमाहवे ।।
निजघ्नुर्बलिनस्सर्वे कृत्वा क्रोधं समाकुलाः ।। १६ ।।
इत्थं चिरतरं तत्र बलिनोश्च द्वयोरपि ।।
बभूव तुमुलं युद्धं शृण्वतां विस्मयावहम् ।। १७ ।।
तस्मिन्नवसरे तत्र क्रोधं कृत्वाऽतिपक्षिराट् ।।
बाणासुरबलं सर्वं पक्षाघातैरमर्दयत् ।। १८ ।।
मर्दितं स्वबलं दृष्ट्वा मर्दयंतं च तं बली ।।
चुकोपाति बलेः पुत्रः शैवराड् दितिजेश्वरः ।। १९ ।।
स्मृत्वा शिवपदाम्भोजं सहस्रभुजवान्द्रुतम् ।।
महत्पराक्रमं चक्रे वैरिणां दुस्सहं स वै ।। 2.5.55.२० ।।
चिक्षेप युगपद्बाणानमितांस्तत्र वीरहा ।।
कृष्णादिसर्वयदुषु गरुडे च पृथक्पृथक् ।। २१ ।।
जघानैकेन गरुडं कृष्णमेकेन पत्रिणा ।।
बलमेकेन च मुने परानपि तथा बली ।। २२ ।।
ततः कृष्णो महावीर्यो विष्णुरूपस्सुरारिहा ।।
चुकोपातिरणे तस्मिञ्जगर्ज च महेश्वरः ।। २३ ।।
जघान बाणं तरसा शार्ङ्गनिस्सृतसच्छरैः ।।
अति तद्बलमत्युग्रं युगपत्स्मृतशंकरः ।। २४ ।।
चिच्छेद तद्धनुश्शीघ्रं छत्रादिकमना कुलः ।।
हयांश्च पातयामास हत्वा तान्स्वशरैर्हरिः ।। २५ ।।
बाणोऽपि च महावीरो जगर्जाति प्रकुप्य ह ।।
कृष्णं जघान गदया सोऽपतद्धरणीतले ।। २६ ।।
उत्थायारं ततः कृष्णो युयुधे तेन शत्रुणा ।।
शिवभक्तेन देवर्षे लोकलीलाऽनुसारतः ।। २७ ।।
एवं द्वयोश्चिरं काल बभूव सुमहान्रणः ।।
शिवरूपो हरिः कृष्णः स च शैवोत्तमो बली ।। २८ ।।
कृष्णोऽथ कृत्वा समरं चिरं बाणेन वीर्यवान्।।
शिवाऽऽज्ञया प्राप्तबलश्चुकोपाति मुनीश्वरः ।।२९।।
ततस्सुदर्शनेनाशु कृष्णो बाणभुजान्बहून् ।।
चिच्छेद भगवाञ्शंभु शासनात्परवीरहा ।। 2.5.55.३० ।।
अवशिष्टा भुजास्तस्य चत्वारोऽतीव सुन्दराः ।।
गतव्यथो बभूवाशु शंकरस्य प्रसादतः ।। ३१ ।।
गतस्मृतिर्यदा बाण शिरश्छेत्तुं समुद्यतः ।।

कृष्णो वीरत्वमापन्नस्तदा रुद्रस्समुत्थितः ।। ३२ ।।
रुद्र उवाच ।।
भगवन्देवकीपुत्र यदाज्ञप्तं मया पुरा ।।
तत्कृतं च त्वया विप्र मदाज्ञाकारिणा सदा ।। ३३ ।।
मा बाणस्य शिरश्छिंधि संहरस्व सुदर्शनम् ।।
मदाज्ञया चक्रमिदं स्यान्मोघं मज्जने सदा ।। ३४ ।।
दत्तं मया पुरा तुभ्यमनिवार्यं रणे तव ।।
चक्रं जयं च गोविन्द निवर्तस्व रणात्ततः ।। ३५ ।।
दधीचे रावणे वीरे तारकादिपुरेष्वपि ।।
विना मदाज्ञां लक्ष्मीश रथाङ्गं नामुचः पुरा ।। ३६ ।।
त्वं तु योगीश्वरस्साक्षात्परमात्मा जनार्दन ।।
विचार्यतां स्वमनसा सर्वभूतहिते रतः ।। ३७ ।।
वरमस्य मया दत्तं न मृत्युर्भयमस्ति वै ।।
तन्मे वचस्सदा सत्यं परितुष्टोस्म्यहं तव ।।३८।।
पुराऽयं गर्वितो मत्तो युद्धं देहीति मेऽब्रवीत् ।।
भुजान्कण्डूयमानस्तु विस्मृतात्मगतिर्हरे ।। ३९ ।।
तदाहमशपं तं वै भुजच्छेत्ताऽऽगमिष्यति ।।
अचिरेणातिकालेन गतगर्वो भविष्यसि ।। 2.5.55.४० ।।
मदाज्ञया हरिः प्राप्तो भुजच्छेत्ता तवाऽथ वै ।।
निवर्तस्व रणाद्गच्छ स्वगृहं सवधूवरः ।। ४१ ।।
इत्युक्तः स तयोर्मैत्रीं कारयित्वा महेश्वरः ।।
तमनुज्ञाप्य सगणः सपुत्रः स्वालयं ययौ ।। ४२ ।।
।। सनत्कुमार उवाच ।।
इत्याकर्ण्य वचश्शंभोस्संहृत्य च सुदर्शनम् ।।
अक्षतांगस्तु विजयी तत्कृष्णोंतःपुरं ययौ ।। ४३ ।।
अनिरुद्धं समाश्वास्य सहितं भार्यया पुनः ।।
जग्राह रत्नसंघातं बाणदत्तमनेकशः ।। ४४ ।।
तत्सखीं चित्रलेखां च गृहीत्वा परयोगिनीम् ।।
प्रसन्नोऽभूत्ततः कृष्णः कृतकार्यः शिवाज्ञया ।। ४५ ।।
हृदा प्रणम्य गिरिशमामंत्र्य च बलेस्तुतम् ।।
परिवारसमेतस्तु जगाम स्वपुरीं हरिः ।। ४६ ।।
पथि जित्वा च वरुणं विरुद्धं तमनेकधा ।।
द्वारकां च पुरीं प्राप्तस्समुत्सवसमन्वितः ।। ४७ ।।

विसर्जयित्वा गरुडं सखीन्वीक्ष्योपहस्य च ।।
द्वारकायां ततो दृष्ट्वा कामचारी चचार ह ।। ४८ ।। ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पंचमे युद्धखंडे बाणभुजकृंतनगर्वापहारवर्णनं नाम पञ्चपञ्चाशत्तमोध्यायः ।। ५५ ।।

।। नारद उवाच ।।
कृष्णे गते द्वारकायाम निरुद्धेन भार्यया ।।
अकार्षीत्किं ततो बाणस्तत्त्वं वद महामुने ।।१।।
सनत्कुमार उवाच।।
कृष्णे गते द्वारकायामनिरुद्धेन भार्यया ।।
दुःखितोऽभूत्ततो बाणस्स्वाज्ञानं संस्मरन्हृदा ।।२।।
ततो नन्दीशिवगणो बाणं प्रोवाच दुःखितम् ।।
दैत्यं शोणितदिग्धांगमनुता पसमन्वितम् ।।३।।
।। नन्दीश्वर उवाच ।।
बाण शंकरसद्भक्त मानुतापं कुरुष्व भोः ।।
भक्तानुकंपी शंभुर्वै भक्तवत्सलनामधृक्।।४।।
तदिच्छया च यज्जातं तज्जातमिति चेतसा ।।
मन्यस्व भक्तशार्दूल शिवं स्मर पुनःपुनः।।५।।
मन आद्ये समाधाय कुरु नित्यं महो त्सवम् ।।
भक्तानुकंपनश्चाऽस्य शंकरस्य पुनःपुनः।।६।।
नन्दिवाक्यात्ततो बाणो द्विषा शीर्षकमात्रकः।।
शिवस्थानं जगामाशु धृत्वा धैर्यं महामनाः ।।७।।
गत्वा तत्र प्रभुं नत्वा रुरोदातीव विह्वलः ।।
गतगर्वव्रजो बाणः प्रेमाकुलितमानसः।।८।।
संस्तुवन्विविधैः स्तोत्रै स्संनमन्नुतितस्तथा ।।
यथोचितं पादघातं कुर्वन्विक्षेपयन्करान् ।। ९ ।।
ननर्त तांडवं मुख्यं प्रत्यालीढादिशोभितम् ।।
स्थानकैर्विविधाकारैरालीढप्रमुखैरपि ।। 2.5.56.१० ।।
सुखवादसहस्राणि भ्रूक्षेपसहितान्यपि ।।
शिरःकम्पसहस्राणि प्राप्तानीकः सहस्रशः ।।११।। ।।
वारीश्च विविधाकारा दर्शयित्वा शनैश्शनः ।।
तथा शोणितधाराभिस्सिञ्चयित्वा महीतलम्।।१२।।
रुद्रं प्रसादयामास शूलिनं चन्द्र शेखरम् ।।
बाणासुरो महाभक्तो विस्मृतात्मगतिर्नतः।।१३।।
ततो नृत्यं महत्कृत्वा भगवान्भक्तवत्सलः ।।
उवाच बाणं संहृष्टो नृत्य गीतप्रियो हरः ।। १४ ।।
रुद्र उवाच ।।
बाण तात बलेः पुत्र संतुष्टो नर्तनेन ते ।।

वरं गृहाण दैत्येन्द्र यत्ते मनसि वर्तते ।। १५ ।।
सनत्कुमार उवाच ।।
इत्याकर्ण्य वचश्शंम्भोर्दैत्येन्द्रेण तदा मुने ।।
बाणेन संवृणीतोऽभूद्वरस्तु व्रणरोपणे ।।१६।।
बाहुयुद्धस्य चोद्ध त्तिर्गाणपत्यमथाक्षयम् ।।
उषापुत्रस्य राज्यं तु तस्मिञ्शोणितकाह्वये।।१७।।
निर्वैरता च विबुधैर्विष्णुना च विशेषतः।।
न पुनर्दैत्यता दुष्टा रजसा तमसा युता ।। १८
शंभुभक्तिर्विशेषेण निर्विकारा सदा मुने ।।
शिवभक्तेषु च स्नेहो दया सर्वेषु जंतुषु ।। १९ ।। १९।
कृत्वा वराञ्शंभोर्बलिपुत्रो महाऽसुरः।।
प्रेम्णाऽश्रुनयनो रुद्रं तुष्टाव सुकृतांजलिः।।2.5.56.२०।। ।।
बाण उवाच।।
देवदेव महादेव शरणा गतवत्सल ।।
त्वां नमामि महेशान दीनबन्धो दयानिधे ।।२१।।
कृता मयि कृपातीव कृपासागर शंकर ।।
गर्वोपहारितस्सर्वः प्रसन्नेन मम प्रभो ।।२२।।
त्वं ब्रह्म परमात्मा हि सर्वव्याप्यखिलेश्वरः ।।
ब्रह्मांडतनुरुग्रेशो विराट् सर्वान्वितः परः ।।२३।।
नाभिर्नभोऽग्निर्वदनमंबु रेतो दिशः श्रुतिः ।।
द्यौश्शीर्षमंघ्रिरुर्वी ते मनश्चन्द्रस्तव प्रभो ।। २४ ।।
दृगर्को जठरं वार्द्धिर्भुजेंद्रो धिषणा विधिः ।।
प्रजापतिर्विसर्गश्च धर्मो हि हृदयं तव।।२५।।
रोमाण्यौषधयो नाथ केशा जलमुचस्तव।।
गुणास्त्रयस्त्रिनेत्राणि सर्वात्मा पुरुषो भवान्।।२६।।
ब्राह्मणं ते मुखं प्राहुर्बाहुं क्षत्रियमेव च ।।
ऊरुजं वैश्यमाहुस्ते पादजं शूद्रमेव च ।। २७ ।।
त्वमेव सर्वदोपास्यस्सर्वैर्जीवैर्महेश्वर ।।
त्वां भजन्परमां मुक्तिं लभते पुरुषो ध्रुवम् ।। २८ ।।
यस्त्वां विसृजते मर्त्य आत्मानं प्रियमीश्वरम् ।।
विपर्ययेन्द्रियार्थार्थं विषमत्त्यमृतं त्यजन् ।।२९।।
विष्णुर्ब्रह्माऽथ विबुधा मुनयश्चामलाशयाः ।।
सर्वात्मना प्रपन्नास्त्वां शंकरं प्रियमीश्वरम् ।।2.5.56.३०।।

सनत्कुमार उवाच ।।
इत्युक्त्वा बलिपुत्रस्तु विरराम शरासुरः ।।
प्रेमप्रफुल्लितांगश्च प्रणम्य स महेश्वरम् ।। ३१ ।।
इति श्रुत्वा स्वभक्तस्य बाणस्य भगवान्भवः ।।
सर्वं लभिष्यसीत्युक्त्वा तत्रैवांतरधीयत ।। ३२ ।।
ततश्शंभोः प्रसादेन महाकालत्वमागतः ।।
रुद्रस्यानुचरो बाणो महाप्रमुदितोऽभवत् ।। ३३ ।।
इति किल शरनाम्नः शंकरस्यापि वृत्तं सकलगुरु जनानां सद्गुरोश्शूलपाणेः ।। कथितमिह वरिष्ठं श्रोत्ररम्यैर्वचोभिस्सकलभुवनमध्ये क्रीडमानस्य नित्यम् ।। ३४ ।। इति श्रीशिवमहापुराणे द्विती यायां रुद्रसंहितायां पं० युद्धखंडे बाणासुरगणपत्वप्राप्तिवर्णनं नाम षट्पंचाशत्तमोऽध्यायः ।। ५६ ।।

सनत्कुमार उवाच ।।
शृणु व्यास महाप्रेम्णा चरितं शशिमौलिनः ।।
यथाऽवधीत्त्रिशूलेन दानवेन्द्रं गजासुरम् ।।१।।
दानवे निहते देव्या समरे महिषासुरे ।।
देवानां च हितार्थाय पुरा देवाः सुखं ययुः ।। २ ।।
तस्य पुत्रो महावीरो मुनीश्वर गजासुरः ।।
पितुर्वधं हि संस्मृत्य कृतं देव्या सुरार्थनात् ।। ३ ।।
स तद्वैरमनुस्मृत्य तपोर्थं गतवान्वने ।।
समुद्दिश्य विधिं प्रीत्या ततापं परमं तपः ।। ४ ।।
अवध्योहं भविष्यामि स्त्रीपुंसैः कामनिर्जितः ।।
संविचार्येति मनसाऽभूत्तपोरतमानसः ।।५।।
स तेपे हिमवद्द्रोण्यां तपः परमदारु णम् ।।
ऊर्द्ध्वबाहुर्नभोदृष्टिः पादांगुष्ठाश्रितावनिः ।। ६ ।।
जटाभारैस्स वै रेजे प्रलयार्क इवांशुभिः ।।
महिषासुरपुत्रोऽसौ गजासुर उदारधीः ।। ७ ।।
तस्य मूर्ध्नः समुद्भूतस्सधूमोग्निस्तपोमयः ।।
तिर्यगूर्ध्वमधोलोकास्तापयन्विष्वगीरितः ।। ८ ।।
चुक्षुभुर्नद्युदन्वंतश्चाग्नेर्मूर्द्धसमुद्भवात् ।।
निपेतुस्सग्रहास्तारा जज्वलुश्च दिशो दश ।। ९ ।।
तेन तप्तास्तुरास्सर्वे दिवं त्यक्त्वा सवासवाः ।।
ब्रह्मलोकं ययुर्विज्ञापयामासुश्चचाल भूः ।।2.5.57.१०।।
देवा ऊचुः ।।
विधे गजासुरतपस्तप्ता वयमथाकुलाः ।।
न शक्नुमो दिवि स्थातुमतस्ते शरणं गताः ।। ११ ।।
विधेह्युपशमं तस्य चान्याञ्जीवयितुं कृपा ।।
लोका नंक्ष्यत्यन्यथा हि सत्यंसत्यं ब्रुवामहे ।।१२।।
इति विज्ञापितो देवैर्वासवाद्यैस्स आत्मभूः ।।
भृगुदक्षादिभिर्ब्रह्मा ययौ दैत्यवराश्रमम् ।। १३ ।।
तपंतं तपसा लोका न्यथाऽभ्रापिहितं दिवि ।।
विलक्ष्य विस्मितः प्राह विहसन्सृष्टिकारकः ।। १४ ।।
ब्रह्मोवाच ।।
उत्तिष्ठोत्तिष्ठ दैत्येन्द्र तपस्सिद्धोसि माहिषे ।।
प्राप्तोऽहं वरदस्तात वरं वृणु यथेप्सितम्।।१५।।

सनत्कुमार उवाच ।।
उत्थायोत्थाय दैत्येन्द्र ईक्षमाणो दृशा विभुम्।।
गिरा गद्गदया प्रीतोऽगृणाद्देवं स माहिषिः ।।।३५।
गजासुर उवाच ।।
नमस्ते देवदेवेश यदि दास्यसि मे वरम्।।
अवध्योऽहं भवेयं वै स्त्रीपुंसैः कामनिर्जितैः ।।१७।।
महाबलो महावीर्योऽजेयो देवादिभिस्सदा ।।
सर्वेषां लोकपालानां निखिलर्द्धिसुभुग्विभो ।।१८।।
सनत्कुमार उवाच ।।
एवं वृतश्शतधृतिर्दानवेन स तेन वै ।।
प्रादात्तत्तपसा प्रीतो वरं तस्य सुदुर्लभम् ।।१९।।
एवं लब्धवरो दैत्यो माहिषिश्च गजासुरः ।।
सुप्रसन्नमनास्सोऽथ स्वधाम प्रत्यपद्यत ।।2.5.57.२० ।।
स विजित्य दिशस्सर्वा लोकांश्च त्रीन्महासुरः ।।
देवासुरमनुष्येन्द्रान्गंधर्वगरुडोरगान् ।। २१ ।।
इत्यादीन्निखिलाञ्जित्वा वशमानीय विश्वजित् ।।
जहार लोकपालानां स्थानानि सह तेजसा ।। २२ ।।
देवोद्यानश्रिया जुष्टमध्यास्ते स्म त्रिविष्टपम् ।।
महेन्द्रभवनं साक्षान्निर्मितं विश्वकर्मणा ।। २३ ।।
तस्मिन्महेन्द्रस्य गृहे महाबलो महामना निर्जितलोक एकराट्।।
रेमेऽभिवंद्यांघ्रियुगः सुरादिभिः प्रतापितैरूर्जितचंडशासनः।।२४।।
स इत्थं निर्जितककुबेकराड् विषयान्प्रियान् ।।
यथोपजोषं भुंजानो नातृप्यदजितेन्द्रियः ।। २५ ।।
एवमैश्वर्यमत्तस्य दृप्तस्योच्छास्त्रवर्तिनः ।।
काले व्यतीते महति पापबुद्धिरभूत्ततः ।। २६ ।।
महिषासुरपुत्रोऽसौ संचिक्लेश द्विजान्वरान् ।।
तापसान्नितरां पृथ्व्यां दानवस्सुखमर्दनः ।। २७ ।।
सुरान्नरांश्च प्रमथान्सर्वाञ्चिक्लेश दुर्मतिः ।।
धर्मान्वितान्विशेषेण पूर्ववैरमनुस्मरन् ।। २८ ।।
एकस्मिन्समये तात दानवोऽसौ महाबलः ।।
अगच्छद्राजधानीं व शंकरस्य गजासुरः ।। २९ ।।
समागतेऽसुरेन्द्रे हि महान्कलकलो मुने ।।
त्रातत्रातेति तत्रासीदानंदनवासिनाम् ।। 2.5.57.३० ।।

महिषाऽसुरपुत्रोऽसौ यदा पुर्यां समागतः ।।
प्रमथन्प्रमथान्सर्वान्निजवीर्यमदोद्धतः।।३१।।
तस्मिन्नवसरे देवाश्शक्राद्यास्तत्पराजिताः ।।
शिवस्य शरणं जग्मुर्नत्वा तुष्टुवुरादरात् ।। ३२ ।।
न्यवेदयन्दानवस्य तस्य काश्यां समागमम् ।।
क्लेशाधिक्यं तत्रत्यानां तन्नाथानां विशेषतः ।। ३३ ।।
देवा ऊचुः ।।
देवदेव महादेव तव पुर्यां गतोसुरः ।।
कष्टं दत्ते त्वज्जनानां तं जहि त्वं कृपानिधे ।। ३४ ।।
यत्रयत्र धरायां च चरणं प्रमिणोति हि ।।
अचलां सचलां तत्र करोति निज भारतः ।। ३५ ।।
ऊरुवेगेन तरवः पतंति शिखरैस्सह ।।
यस्य दोर्दंडघातेन चूर्णा स्युश्च शिलोच्चयाः ।। ३६ ।।
यस्य मौलिजसंघर्षाद्घना व्योम त्यजंत्यपि ।।
नीलिमानं न चाद्यापि जह्युस्तत्केशसंगजम् ।। ३७ ।।
यस्य विश्वाससंभारैरुत्तरंगा महाब्धयः ।।
नद्योप्यमन्दकल्लोला भवंति तिमिभिस्सह ।। ३८ ।।
योजनानां सहस्राणि नव यस्य समुच्छ्रयः ।।
तावानेव हि विस्तारस्तनोर्मायाविनोऽस्य हि ।। ३९ ।।
यन्नेत्रयोः पिंगलिमा तथा तरलिमा पुनः ।।
विद्युताः नोह्यतेऽद्यापि सोऽयं स्माऽऽयाति सत्वरम् ।। 2.5.57.४० ।।
यां यां दिशं समभ्येति सोयं दुस्सह दानवः ।।
अवध्योऽहं भवामीति स्त्रीपुंसैः कामनिर्जितैः ।। ४१ ।।
इत्येवं चेष्टितं तस्य दानवस्य निवेदितम् ।।
रक्षस्व भक्तान्देवेश काशीरक्षणतत्पर ।। ४२ ।।
सनत्कुमार उवाच ।।
इति संप्रार्थितो देवैर्भक्तरक्षणतत्परः ।।
तत्राऽऽजगाम सोरं तद्वधकामनया हरः ।। ४३ ।।
आगतं तं समालोक्य शंकरं भक्तवत्सलम् ।।
त्रिशूलहस्तं गर्जंतं जगर्ज स गजासुरः ।। ४४ ।।
ततस्तयोर्महानासीत्समरो दारुणोऽद्भुतः ।।
नानास्त्रशस्त्रसंपातैर्वीरारावं प्रकुर्वतोः ।। ४५ ।।
गजासुरोतितेजस्वी महाबलपराक्रमः ।।

विव्याध गिरिशं बाणैस्तीक्ष्णैर्दानवघातिनम् ।। ४६ ।।
अथ रुद्रो रौद्रतनुः स्वशरैरतिदारुणैः ।।
तच्छरांश्चिच्छिदे तूर्णमप्राप्तांस्तिलशो मुने ।। ४७ ।।
ततो गजासुरः क्रुद्धोऽभ्यधावत्तं महेश्वरम् ।।
खड्गहस्तः प्रगर्ज्योच्चैर्हतोसीत्यद्य वै मया ।। ४८ ।।
ततस्त्रिशूलहेतिस्तमायांतं दैत्यपुंगवम् ।।
विज्ञायावध्यमन्येन शूलेनाभिजघान तम् ।। ।। ४९ ।।
प्रोतस्तेन त्रिशूलेन स च दैत्यो गजासुरः ।।
छत्रीकृतमिवात्मानं मन्यमाना जगौ हरम् ।। 2.5.57.५० ।।
गजासुर उवाच ।।
देवदेव महादेव तव भक्तोऽस्मि सर्वथा ।।
जाने त्वां त्रिदिवेशानं त्रिशूलिन्स्मरहारिणम् ।। ५१ ।।
तव हस्ते मम वधो महाश्रेयस्करो मतः ।।
अंधकारे महेशान त्रिपुरांतक सर्वग ।। ५२ ।।
किंचिद्विज्ञप्तुमिच्छामि तच्छृणुष्व कृपाकर ।।
सत्यं ब्रवीमि नासत्यं मृत्युंजय विचारय।५३।।
त्वमेको जगतां वंद्यो विश्वस्योपरि संस्थितः ।।
कालेन सर्वैर्मर्तव्यं श्रेयसे मृत्युरीदृशः ।।५४।।
सनत्कुमार उवाच ।।
इत्याकर्ण्य वचस्तस्य शंकरः करुणानिधिः ।।
प्रहस्य प्रत्युवाचेशो माहिषेयं गजासुरम्।।५५।।
ईश्वर उवाच ।।
महापराक्रमनिधे दानवोत्तम सन्मते ।।
गजासुर प्रसन्नोस्मि स्वानकूलं वरं वृणु ।।५६।।
सनत्कुमार उवाच ।।
इत्याकर्ण्य महेशस्य वचनं वरदस्य हि ।।
प्रत्युवाच प्रसन्नात्मा दानवेन्द्रो गजासुरः।।५७।।
गजासुर उवाच ।।
यदि प्रसन्नो दिग्वासस्तदा दित्यं वसान मे।।
इमां कृत्तिं महेशान त्वत्त्रिशूलाग्निपाविताम् ।।५८।।
स्वप्रमाणां सुखस्पर्शां रणांगणपणीकृताम् ।।
दर्शनीयां महादिव्यां सर्वदैव सुखावहाम् ।।५९।।
इष्टगंधिस्सदैवास्तु सदैवास्त्वतिकोमला ।।

सदैव निर्मला चास्तु सदैवास्त्वतिमंडनाम् ।।2.5.57.६०।।
महातपोनलज्वालां प्राप्यापि सुचिरं विभो ।।
न दग्धा कृत्तिरेषा मे पुण्यगंधनिधेस्ततः ।। ६१ ।।
यदि पुण्यवती नैषा मम कृत्ति दिगंबर ।।
तदा त्वदंगसंगोस्याः कथं जातो रणांगणे ।।६२।।
अन्यं च मे वरं देहि यदि तुष्टोऽसि शंकर ।।
नामास्तु कृत्तिवासास्ते प्रारभ्याद्यतनं दिनम् ।।६३।।
सनत्कुमार उवाच ।।
श्रुत्वेति स वचस्तस्य शंकरो भक्तवत्सलः।।
तथेत्युवाच सुप्रीतो महिषासुरजं च तम् ।।६४।।
पुनः प्रोवाच प्रीतात्मा दानवं तं गजासुरम् ।।
भक्तप्रियो महेशानो भक्तिनिर्मलमानसम्।।६५।।
ईश्वर उवाच।।
इदं पुण्यं शरीरं ते क्षेत्रेऽस्मिन्मुक्तिसाधने।।
मम लिंगं भवत्वत्र सर्वेषां मुक्तिदायकम् ।।६६।।
कृत्तिवासेश्वरं नाम महापातकनाशनम्।।
सर्वेषामेव लिंगानां शिरोभूतं विमुक्तिदम्।।६७।।
कथयित्वेति देवेशस्तत्कृतिं परिगृह्य च।।
गजासुरस्य महतीं प्रावृणोद्धि दिगंबरः।।६८।।
महामहोत्सवो जातस्तस्मिन्नह्नि मुनीश्वर।।
हर्षमापुर्जनास्सर्वे काशीस्थाः प्रमथास्तथा।।६९।।
हरि ब्रह्मादयो देवा हर्षनिर्भरमानसाः।।
तुष्टुवुस्तं महेशानं नत्वा सांजलयस्ततः।।2.5.57.७०।।
हते तस्मिन्दानवेशे माहिषे हि गजासुरे।।
स्वस्थानं भेजिरे देवा जगत्स्वास्थ्यमवाप च ।।७१।।
इत्युक्तं चरितं शंभोर्भक्तवात्सल्यसूचकम् ।।
स्वर्ग्यं यशस्यमायुष्यं धनधान्यप्रवर्द्धनम् ।। ७२ ।।
य इदं शृणुयात्प्रीत्या श्रावयेद्वा शुचिव्रतः ।।
स भुक्त्वा च महासौख्यं लभेतांते परं सुखम् ।। ७३ ।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे गजासुरवधो नाम सप्तपंचाशत्तमोऽध्यायः ।। ५७ ।।

सनत्कुमार उवाच ।।
शृणु व्यास प्रवक्ष्यामि चरितं शशिमौलिनः ।।
यथा दुंदुभिनिर्ह्लादमवधीद्दितिजं हरः ।। १ ।।
हिरण्याक्षे हते दैत्ये दितिपुत्रे महाबले ।।
विष्णुदेवेन कालेन प्राप दुखं पहद्दितिः? ।।२ ।।
दैत्यो दुंदुभिनिर्ह्लादो दुष्टः प्रह्लादमातुलः ।।
सांत्वयामास तां वाग्भिर्दुःखितां देवदुःखदः ।।३।।
अथ दैत्यस्स मायावी दितिमाश्वास्य दैत्यराट् ।।
देवाः कथं सुजेयाः स्युरित्युपायमर्चिंतयत् ।। ४ ।।
देवैश्च घातितो वीरो हिरण्याक्षो महासुरः ।।
विष्णुना च सह भ्रात्रा सच्छलैर्देत्यवैरिभिः ।। ५ ।।
किंबलाश्च किमाहारा किमाधारा हि निर्जराः ।।
मया कथं सुजेयास्स्युरित्युपायमचिंतयत् ।। ६ ।।
विचार्य बहुशो दैत्यस्तत्त्वं विज्ञाय निश्चितम् ।।
अवश्यमग्रजन्मानो हेतवोऽत्र विचारतः ।। ७ ।।
ब्राह्मणान्हंतुमसकृदन्वधावत वै ततः ।।
दैत्यो दुन्दुभिनिर्ह्लादो देववैरी महाखलः ।।८।।
यतः क्रतुभुजो देवाः क्रतवो वेदसंभवाः।।
ते वेदा ब्राह्मणाधारास्ततो देवबलं द्विजाः।।९।।
निश्चितं ब्राह्मणाधारास्सर्वे वेदास्सवासवाः।।
गीर्वाणा ब्राह्मणबला नात्र कार्या विचारणा ।।2.5.58.१०।।
ब्राह्मणा यदि नष्टास्स्युर्वेदा नष्टास्ततस्त्वयम्।।
अतस्तेषु प्रणष्टेषु विनष्टाः सततं सुराः।।११।।
यज्ञेषु नाशं गच्छत्सु हताहारास्ततस्सुराः।।
निर्बलास्सुखजय्याः स्युर्निर्जितेषु सुरेष्वथ।१२।।
अहमेव भविष्यामि मान्यस्त्रिजगतीपतिः ।।
अहरिष्यामि देवा नामक्षयास्सर्वसंपदः ।। १३ ।।
निर्वेक्ष्यामि सुखान्येव राज्ये निहतकंटके ।।
इति निश्चित्य दुर्बुद्धिः पुनश्चिंतितवान्खलः ।।१४।।
द्विजाः क्व संति भूयांसो ब्रह्मतेजोतिबृंहिता।।
श्रुत्यध्यनसंपन्नास्तपोबलसमन्विताः।।१५।।
भूयसां ब्राह्मणानां तु स्थानं वाराणसी खलु ।।
तामादावुपसंहृत्य यायां तीर्थांतरं ततः ।।१६।।

यत्र यत्र हि तीर्थेषु यत्र यत्राश्रमेषु च ।।
संति सर्वेऽग्रजन्मानस्ते मयाद्यास्समंततः ।। १७ ।।
इति दुंदुभिनिर्ह्रादो मतिं कृत्वा कुलोचिताम् ।।
प्राप्यापि काशीं दुर्वृत्तो मायावी न्यवधीद्द्विजान् ।। १८ ।।
समित्कुशान्समादातुं यत्र यांति द्विजोत्तमाः ।।
अरण्ये तत्र तान्सर्वान्स भक्षयति दुर्मतिः ।। १९ ।।
यथा कोऽपि न वेत्त्येवं तथाऽच्छन्नोऽभवत्पुनः ।।
वने वनेचरो भूत्वा यादोरूपो जलाशये ।।2.5.58.२०।।
अदृश्यरूपी मायावी देवानामप्यगोचरः ।।
दिवा ध्यानपरस्तिष्ठेन्मुनिवन्मुनिमध्यगः ।। २१ ।।
प्रवेशमुटजानां च निर्गमं हि विलोकयन् ।।
यामिन्यां व्याघ्ररूपेणाभक्षयद्ब्राह्मणान्बहून् ।। २२ ।।
निश्शंकम्भक्षयत्येवं न त्यजत्यपि कीकशम् ।।
इत्थं निपातितास्तेन विप्रा दुष्टेन भूरिशः ।। २३ ।।
एकदा शिवरात्रौ तु भक्तस्त्वेको निजोटजे ।।
सपर्यां देवदेवस्य कृत्वा ध्यानस्थितोऽभवत् ।। २४ ।।
स च दुंदुभिनिर्ह्रादो दैत्येन्द्रो बलदर्पितः ।।
व्याघ्ररूपं समास्थाय तमादातुं मतिं दधे ।। २५ ।।
तं भक्तं ध्यानमापन्नं दृढचित्तं शिवेक्षणे ।।
कृतास्त्रमन्त्रविन्यासं तं क्रांतुमशकन्न सः ।। २६ ।।
अथ सर्वं गतश्शम्भुर्ज्ञात्वा तस्याशयं हरः ।।
दैत्यस्य दुष्टरूपस्य वधाय विदधे धियम् ।। २७ ।।
यावदादित्सति व्याघ्रस्तावदाविरभूद्धरः ।।
जगद्रक्षामणिस्त्र्यक्षो भक्तरक्षणदक्षधीः ।। २८ ।।
रुद्रमायांतमालोक्य तद्भक्तार्चितलिंगतः ।।
दैत्यस्तेनैव रूपेण ववृधे भूधरोपमः ।। २९ ।।
सावज्ञमथ सर्वज्ञं यावत्पश्यति दानवः ।।
तावदायातमादाय कक्षायंत्रे न्यपीडयत् ।। 2.5.58.३० ।।
पंचास्यस्त्वथ पंचास्यं मुष्ट्या मूर्द्धन्यताडयत।।
भक्तवत्सलनामासौ वज्रादपि कठोरया।।३१।।
स तेन मुष्टिघातेन कक्षानिष्पेषणेन च ।।
अत्यार्तमारटद्व्याघ्रो रोदसीं पूरयन्मृतः ।। ३२ ।।
तेन नादेन महता संप्रवेपितमानसाः ।।

तपोधनास्समाजग्मुर्निशि शब्दानुसारतः ।।३३।।
अत्रेश्वरं समालोक्य कक्षीकृतमृगेश्वरम् ।।
तुष्टुवुः प्रणतास्सर्वे शर्वं जयजयाक्षरैः ।।३४।।
ब्राह्मणा ऊचुः ।।
परित्राताः परित्राताः प्रत्यूहाद्दारुणादितः ।।
अनुग्रहं कुरुष्वेश तिष्ठात्रैव जगद्गुरो ।।३५।।
अनेनैव स्वरूपेण व्याघ्रेश इति नामतः ।।
कुरु रक्षां महादेव ज्येष्ठस्थानस्य सर्वदा ।।३६।।
अन्येभ्यो ह्युपसर्गेभ्यो रक्ष नस्तीर्थवासिनः ।।
दुष्टानष्टास्य? गौरीश भक्तेभ्यो देहि चाभयम् ।। ।। ३७ ।।
सनत्कुमार उवाच ।।
इत्याकर्ण्य वचस्तेषां भक्तानां चन्द्रशेखरः ।।
तथेत्युक्त्वा पुनः प्राह स भक्तान्भक्तवत्सलः ।। ३८ ।
महेश्वर उवाच ।।
यो मामनेन रूपेण द्रक्ष्यति श्रद्धयात्र वै ।।
तस्योपसर्गसंधानं पातयिष्याम्यसंशयम् ।। ३९ ।।
मच्चरित्रमिदं श्रुत्वा स्मृत्वा लिंगमिदं हृदि ।।
संग्रामे प्रविशन्मर्त्यो जयमाप्नोत्यसंशयम् ।।2.5.58.४०।।
एतस्मिन्नंतरे देवास्समाजग्मुस्सवासवाः ।
जयेति शब्दं कुर्वंतो महोत्सवपुरस्सरम् ।। ४१ ।।
प्रणम्य शंकरं प्रेम्णा सर्वे सांजलयस्सुराः ।।
नतस्कंधाः सुवाग्भिस्ते तुष्टुवुर्भक्तवत्सलम् ।। ४२ ।।
देवा ऊचुः ।।
जय शंकर देवेश प्रणतार्तिहर प्रभो ।।
एतद्दुंदुभिनिर्ह्रादवधात्त्राता वयं सुराः ।। ४३ ।।
सदा रक्षा प्रकर्तव्या भक्तानां भक्तवत्सल ।।
वध्याः खलाश्च देवेश त्वया सर्वेश्वर प्रभो ।। ४४ ।।
इत्याकर्ण्य वचस्तेषां सुराणां परमेश्वरः ।।
तथेत्युक्त्वा प्रसन्नात्मा तस्मिंल्लिंगे लयं ययौ ।। ४५ ।।
सविस्मयास्ततो देवास्स्वंस्वं धाम ययुर्मुदा ।।
तेऽपि विप्रा महाहर्षात्पुनर्याता यथागतम् ।। ४६ ।।
इदं चरित्रं परम व्याघ्रेश्वरसमुद्भवम् ।।
शृणुयाच्छ्रावयेद्वापि पठेद्वा पाठयेत्तथा ।। ४७ ।।

सर्वान्कामानवाप्नोति नरस्स्वमनसेसितान् ।।
परत्र लभते मोक्षं सर्वदुःखविवर्जितः ।।४८।।
इदमाख्यानमतुलं शिवलीला मृताक्षरम्।।
स्वर्ग्यं यशस्यमायुष्यं पुत्रपौत्रप्रवर्द्धनम् ।।४९।।
परं भक्तिप्रदं धन्यं शिवप्रीतिकरं शिवम्।।
परमज्ञानदं रम्यं विकारहरणं परम् ।। 2.5.58.५० ।।
इति श्रीशिवमहापुराणे द्वि० रुद्रसंहितायां पञ्च० युद्धखण्डे दुंदुभिनिर्ह्राददैत्यवधवर्णनं नामाष्टपञ्चाशत्तमोऽध्यायः ।। ५८ ।।

सनत्कुमार उवाच ।।
शृणु व्यास सुसंप्रीत्या चरितं परमेशितुः ।।
यथावधीत्स्वप्रियया दैत्यमुद्दिश्य संज्ञया ।। १ ।।
आस्तां पुरा महादैत्यो विदलोत्पलसंज्ञकौ ।।
अपुंवध्यौ महावीरौ सुदृप्तौ वरतो विधेः ।।२।।
तृणीकृतत्रिजगती पुरुषाभ्यां स्वदोर्ब लात् ।।
ताभ्यां सर्वे सुरा ब्रह्मन् दैत्याभ्यां निर्जिता रणे ।।३।।
ताभ्यां पराजिता देवा विधेस्ते शरणं गताः ।।
नत्वा तं विधिवत्सर्वे कथयामासुरादरात ।। ४ ।।
इति ब्रह्मा ह्यवोचत्तान् देव्या वध्यौ च तौ ध्रुवम् ।।
धैर्य्यं कुरुत संस्मृत्य सशिवं शिवमादरात् ।। ५ ।।
भक्तवत्सलनामासौ सशिवश्शंकरश्शिवः ।।
शं करिष्यत्यदीर्घेण कालेन परमेश्वरः ।। ६ ।।
सनत्कुमार उवाच ।।
इत्युक्त्वा तांस्ततो ब्रह्मा तूष्णीमासीच्छिवं स्मरन् ।।
तेपि देवा मुदं प्राप्य स्वंस्वं धाम ययुस्तदा ।।७।।
अथ नारददेवर्षिश्शिवप्रेरणया तदा ।।
गत्वा तदीयभवनं शिवासौंदर्यमाजगौ ।।८।।
श्रुत्वा तद्वचनं दैत्यावास्तां मायाविमोहितौ ।।
देवीं परिजिहीर्षू तौ विषमेषु प्रपीडितौ ।।९।।
विचारयामासतुस्तौ कदा कुत्र शिवा च सा ।।
भविष्यति विधेः प्राप्तोदयान्नाविति सर्वदा ।। 2.5.59.१० ।।
एकस्मिन्समये शंभुर्विजहार सुलीलया ।।
कौतुकेनैव चिक्रीडे शिवा कन्दुकलीलया ।। ११ ।।
सखीभिस्सह सुप्रीत्या कौतुकाच्छिवसन्निधौ ।।१२।।
उदंचंत्यंचदंगानां लाघवं परितन्वती ।।
निश्वासामोदमुदितभ्रमराकुलितेक्षणा ।।१३।।
भ्रश्यद्धम्मिल्लसन्माल्यस्वपुरीकृतभूमिका ।।
स्विद्यत्कपोलपत्रालीस्रवदंबुकणोज्ज्वला ।। १४ ।।
स्फुटच्चोलांशुकपथतिर्यदंगप्रभावृता ।।
उल्लसत्कंदुकास्फालातिश्रोणितकराम्बुजा ।। १५ ।।
कंदुकानुगसद्दृष्टिनर्तितभ्रूलतांचला ।।
मृडानी किल खेलंती ददृशे जगदम्बिका ।। १६ ।।

अंतरिक्षचराभ्यां च दितिजाभ्यां कटा क्षिता ।।
क्रोडीकृताभ्यामिव वै समुपस्थितमृत्युना ।।१७।।
विदलोत्पलसंज्ञाभ्यां दृप्ताभ्यां वरतो विधेः ।।
तृणीकृतत्रिजगती पुरुषाभ्यां स्वदोर्बलात् ।। १८ ।।
देवीं तां संजिहीर्षतौ विषमेषु प्रपीडितौ ।।
दिव उत्तेरतुः क्षिप्रं मायां स्वीकृत्य शांबरीम् ।। १९ ।।
धृत्वा पारिषदीं मायामायातावंबिकांतिकम् ।।
तावत्यंतं सुदुर्वृत्तावतिचंचलमानसौ ।।2.5.59.२०।।
अथ दुष्टनिहंत्रा वै सावज्ञेन हरेण तौ ।।
विज्ञातौ च क्षणादास्तां चांचल्याल्लोचनोद्भवात् ।। २१ ।।
कटाक्षिताथ देवेन दुर्गा दुर्गतिघातिनी ।।
दैत्याविमामिति गणौ नेति सर्वस्वरूपिणा ।। २२ ।।
अथ सा नेत्रसंज्ञां स्वस्वामिनस्तां बुबोध ह ।।
महाकौतुकिनस्तात शंकरस्य परेशितुः ।।२३।।
ततो विज्ञाय संज्ञां तां सर्वज्ञार्द्धशरीरिणी ।।
तेनैव कंदुकेनाथ युगपन्निर्जघान तौ ।।२४।।
महाबलौ महादेव्या कंदुकेन समाहतौ ।।
परिभ्रम्य परिभ्रम्य तौ दुष्टौ विनिपेततुः ।। २५ ।।
वृन्तादिव फले पक्वे तालेनानिललोलिते ।।
दंभोलिना परिहते शृंगे इव महागिरेः ।।२६।।
तौ निपात्य महादैत्यावकार्यकरणोद्यतौ ।।
ततः परिणतिं यातो लिंगरूपेण कंदुकः।।२७।।
कंदुकेश्वरसंज्ञां च तल्लिंगमभवत्तदा।।
ज्येष्ठेश्वरसमीपे तु सर्वदुष्टनिवारणम्।।२८।।
एतस्मिन्नेव समये हरिब्रह्मादयस्सुराः ।।
शिवाविर्भावमाज्ञाय ऋषयश्च समाययुः।।२९।।
अथ सर्वे सुराश्शम्भोर्वरान्प्राप्य तदाज्ञया।।
स्वधामानि ययुः प्रीतास्तथा काशीनिवासिनः।।2.5.59.३०।।
सांबिकं शंकरं दृष्ट्वा कृतांजलिपुटाश्च ते।।
प्रणम्य तुष्टुवुर्भक्त्या वाग्भिरिष्टाभिरादरात् ।।३१।।
सांबिकोऽपि शिवो व्यास क्रीडित्वा सुविहारवित्।।
जगाम स्वालयं प्रीतस्सगणो भक्तवत्सलः ।।३२।।
कंदुकेश्वरलिंगं च काश्यां दुष्टनिबर्हणम्।।

भुक्तिमुक्तिप्रदं सर्वकामदं सर्वदा सताम् ।।।३३।।
इदमाख्यानमतुलं शृणुयाद्यो मुदान्वितः ।।
श्रावयेद्वा पठेद्यश्च तस्य दुःखभयं कुतः ।। ३४ ।।
इह सर्वसुखं भुक्त्वा नानाविधमनुत्तमम् ।।
परत्र लभते दिव्यां गतिं वै देवदुर्लभाम् ।। ३५ ।।
इति तं वर्णितं तात चरितं परमाद्भुतम् ।।
शिवयोर्भक्तवात्सल्यसूचकं शिवदं सताम् ।। ३६ ।।
ब्रह्मोवाच ।।
इत्युक्त्वामंत्र्य तं व्यासं तन्नुतो मद्वरात्मजः ।।
ययौ विहायसा काशीं चरितं शशिमौलिनः ।।३७।।
युद्धखंडमिदं प्रोक्तं मया ते मुनिसत्तम ।।
रौद्रीयसंहितामध्ये सर्वकामफलप्रदम् ।।३८।।
इयं हि संहिता रौद्री सम्पूर्णा वर्णिता मया ।।
सदाशिवप्रियतरा भुक्तिमुक्तिफलप्रदा ।।३९।।
इमां यश्च पठेन्नित्यं शत्रुबाधानिवारिकाम् ।।
सर्वान्कामानवाप्नोति ततो मुक्तिं लभेत ना ।।2.5.59.४०।।
सूत उवाच ।।
इति ब्रह्मसुतश्श्रुत्वा पित्रा शिवयशः परम् ।।
शतनामाप्य शंभोश्च कृतार्थोऽभूच्छिवानुगः ।।४१।।
ब्रह्मनारदसम्वादः सम्पूर्णः कथितो मया ।।
शिवस्सर्वप्रधानो हि किं भूयश्श्रोतुमिच्छसि ।।४२।।
इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखंडे विदलोत्पलदैत्यवधवर्णनं नामैकोनषष्टितमोऽध्यायः ।। ५९ ।।
समाप्तोयं युद्धखण्डः ।।
समाप्तेयं द्वितीया रुद्रसंहिता ।। २ ।।

श्रीगणेशाय नमः ।।

अथ तृतीया शतरुद्रसंहिता प्रारभ्यते।।

वन्दे महानन्दमनन्तलीलम्महेश्वरं सर्व्वविभुम्महान्तम्।।

गौरीप्रियं कार्तिकविघ्नराजसमुद्भवं शंकरमादिदेवम् ।।१।।

शौनक उवाच ।।

व्यासशिष्यमहाभाग सूत ज्ञानदयानिधे ।।

वद शंभ्ववतारांश्च यैरकार्षीत्सतां शिवम् ।।१।।

सूत उवाच ।।

मुने शौनक सद्भक्त्या दत्तचित्तो जितेन्द्रियः ।।

अवताराञ्छिवस्याहं वच्मि ते मुनये शृणु ।।२।।

एतत्पृष्टः पुरा नन्दी शिवमूर्तिस्सतां गतिः ।।

सनत्कुमारेण मुने तमुवाच शिवं स्मरन् ।।३।।

नन्दीश्वर उवाच ।।

असंख्याता हि कल्पेषु विभोः सर्व्वेश्वरस्य वै।।

अवतारास्तथापीह वच्म्यहं तान्यथामति ।। ४ ।।

एकोनविंशकः कल्पो विज्ञेयः श्वेत लोहितः ।।

सद्योजातावतारस्तु प्रथमः परिकीर्तितः ।।५।।

तस्मिंस्तत्परमं ब्रह्म ध्यायतो ब्रह्मणस्तथा।।

उत्पन्नस्तु शिखायुक्तः कुमारः श्वेतलोहितः ।। ६ ।।

तं दृष्ट्वा पुरुषं ब्रह्मा ब्रह्मरूपिणमीश्वरम् ।।

ज्ञात्वा ध्यात्वा स हृदये ववन्दे प्रयताञ्जलिः। ७ ।। ।

सद्योजातं शिवं बुद्ध्वा जहर्ष भुवनेश्वरः ।।

मुहुर्मुहुश्च सद्बुद्ध्या परं तं समचिन्तयत्।।८।।

ततोऽस्य ध्यायतः श्वेताः प्रादुर्भूता यशस्विनः ।।

कुमाराः परविज्ञानपरब्रह्मस्वरूपिणः ।।९।।

सुनन्दो नन्दनश्चैव विश्वनन्दोपनन्दनौ ।।

शिष्यास्तस्य महात्मानो यैस्तद्ब्रह्म समावृतम्।।3.1.१०।।

सद्योजातश्च वै शम्भुर्ददौ ज्ञानं च वेधसे ।।
सर्गशक्तिमपि प्रीत्या प्रसन्नः परमेश्वरः ।।११।। (इति सद्योजाताव तारः१)
ततो विंशतिमः कल्पो रक्तो नाम प्रकीर्तितः ।।
ब्रह्मा यत्र महातेजा रक्तवर्णमधारयत् ।।१२।।
ध्यायतः पुत्रकामस्य प्रादुर्भू तो विधेस्सुतः ।।
रक्तमाल्याम्बरधरो रक्ताक्षो रक्तभूषणः।।१३।।
स तं दृष्ट्वा महात्मानं कुमारं ध्यानमाश्रितः।।
वामदेवं शिवं ज्ञात्वा प्रणनाम कृतांजलिः ।। १४ ।।
ततस्तस्य सुता ह्यासंश्चत्वारो रक्तवाससः ।।
विरजाश्च विवाहश्च विशोको विश्वभावनः ।। १५ ।।
वामदेवः स वै शम्भुर्ददौ ज्ञानं च वेधसे ।।
सर्गशक्तिमपि प्रीत्या प्रसन्नः परमेश्वरः ।। १६ ।। (इति वामदेवावतारः २)
एकविंशतिमः कल्पः पीतवासा इति स्मृतः ।।
ब्रह्मा यत्र महाभागः पीतवासा बभूव ह ।।१७।।
ध्यायतः पुत्रकामस्य विधेर्जातः कुमारकः।।
पीतवस्त्रादिक प्रौढो महातेजा महाभुजः।।१८।।
तं दृष्ट्वा ध्यानसंयुक्तं ज्ञात्वा तत्पुरुषं शिवम्।।
प्रणनाम ततो बुद्ध्या गायत्रीं शांकरीं विधिः।।१९।।
जपित्वा तु महादेवीं सर्वलोकनमस्कृताम्।।
प्रसन्नस्तु महादेवो ध्यानयुक्तेन चेतसा।।3.1.२०।।
ततोऽस्य पार्श्वतो दिव्याः प्रादुर्भूताः कुमारकाः ।।
पीतवस्त्रा हि सकला योगमार्गप्रवर्तकाः ।।२१।। (इतितत्पुरुषावतारः ३)
ततस्तस्मिन्गते कल्पे पीतवर्णे स्वयंभुवः।
पुनरन्यः प्रवृत्तस्तु कल्पो नाम्ना शिवस्तु स ।।२२।।
एकार्णवे संव्यतीते दिव्यवर्षसहस्रके ।।
स्रष्टुकामः प्रजा ब्रह्मा चिन्तयामास दुःखितः ।।२३।।
ततोऽपश्यन्महातेजा प्रादुर्भूतं कुमारकम्।।
कृष्णवर्णं महावीर्यं दीप्यमानं स्वतेजसा।।२४।।

धृतकृष्णाम्बरोष्णीषं कृष्णयज्ञोपवीतिनम्।।

कृष्णेन मौलिनायुक्तं कृष्णस्नानानुलेपनम्।।२५।।

स तं दृष्ट्वा महात्मानमघोरं घोरविक्रमम् ।।

ववन्दे देवदेवेशमद्भुतं कृष्णपिंगलम् ।।२६।।

अघोरं तु ततो ब्रह्मा ब्रह्मरूपं व्यचिंतयत् ।।

तुष्टाव वाग्भिरिष्टाभिर्भक्तवत्सलमव्ययम् ।। २७ ।।

अथास्य पार्श्वतः कृष्णाः कृष्णस्नानानुलेपनाः।।

चत्वारस्तु महात्मानः संबभूवुः कुमारकाः।।२८।।

कृष्ण कृष्णशिखश्चैव कृष्णा स्यः कृष्णकण्ठधृक् ।।

इति तेऽव्यक्तनामानः शिवरूपाः सुतेजसः ।।२९।।

एवंभूता महात्मानो ब्रह्मणः सृष्टिहेतवे ।।

योगं प्रवर्त्तया मासुर्घोराख्यं महदद्भुतम् ।। 3.1.३० ।। (इत्यघोरावतारश्चतुर्थः ४)

अथान्यो ब्रह्मणः कल्पः प्रावर्त्तत मुनीश्वराः ।।

विश्वरूप इति ख्यातो नामतः परमाद्भुतः।।३१।।

ब्रह्मणः पुत्रकामस्य ध्यायतो मनसा शिवम् ।।

प्रादुर्भूता महानादा विश्वरूपा सरस्वती ।।३२।।

तथाविधः स भगवानीशानः परमेश्वरः ।।

शुद्धस्फटिकसंकाशः सर्वाभरणभूषितः ।। ३३ ।।

तं दृष्ट्वा प्रणनामासौ ब्रह्मेशानमजं विभुम् ।।

सर्वगं सर्वदं सर्वं सुरूपं रूपवर्जितम् ।।३४।।

ईशानोऽपि तथादिश्य सन्मार्गं ब्रह्मणे विभुः ।।

सशक्तिः कल्पयांचक्रे स बालांश्चतुरः शुभान् ।। ३५ ।।

जटीमुण्डी शिखण्डी च अर्द्धमुण्डश्च जज्ञिरे ।।

योगेनादिश्य सद्धर्मं कृत्वा योगगतिं गताः ।।३६।। ( इतीशानावतारः पञ्चमः ५)

एवं संक्षेपतः प्रोक्तः सद्यादीनां समुद्भवः ।।

सनत्कुमार सर्वज्ञ लोकानां हितकाम्यया ।।३७।।

अथ तेषां महाप्राज्ञ व्यवहारं यथायथम् ।।

त्रिलोकहितकारं हि सर्वं ब्रह्माण्डसंस्थितम्।।३८।।

ईशानः पुरुषो घोरो वामसंज्ञस्तथैव च ।।

ब्रह्मसंज्ञो महेशस्य मूर्तयः पंच विश्रुताः ।।३९।।

ईशानः शिवरूपश्च गरीयान्प्रथमः स्मृतः ।।

भोक्तारं प्रकृतेः साक्षात्क्षेत्रज्ञमधितिष्ठति ।।3.1.४०।।

शैवस्तत्पुरुषाख्यश्च स्वरूपो हि द्वितीयकः ।।

गुणाश्रयात्मकं भोग्यं सर्वज्ञमधितिष्ठति ।।४१।।

धर्माय स्वांगसंयुक्तं बुद्धितत्त्वं पिनाकिनः ।।

अघोराख्यस्वरूपो यस्तिष्ठत्यंतस्तृतीयकः ।।४२।।

वामदेवाह्वयो रूपश्चतुर्थः शङ्करस्य हि ।।

अहंकृतेरधिष्ठानो बहुकार्यकरः सदा ।। ४३ ।।

ईशानाह्वस्वरूपो हि शंकरस्येश्वरः सदा ।।

श्रोत्रस्य वचसश्चापि विभोर्व्योम्नस्तथैव च ।। ४४ ।।

त्वक्पाणिस्पर्शवायूनामीश्वरं रूपमैश्वरम् ।।

पुरुषाख्यं विचारज्ञा मतिमन्तः प्रचक्षते ।। ४५ ।।

वपुषश्च रसस्यापि रूपस्याग्नेस्तथैव च ।।

अघोराख्यमधिष्ठानं रूपमाहुर्मनीषिणः ।।४६।।

रशनायाश्च पायोश्च रसस्यापां तथैव च ।।

ईश्वरं वामदेवाख्यं स्वरूपं शांकरं स्मृतम् ।।४७।।

प्राणस्य चैवोपस्थस्य गंधस्य च भुवस्तथा ।।

सद्योजाताह्वयं रूपमीश्वरं शांकरं विदुः ।।४८।।

इमे स्वरूपाः शंभोर्हि वन्दनीयाः प्रयत्नतः ।।

श्रेयोर्थिभिर्नरैर्नित्यं श्रेयसामेकहेतवः।।४९।।

यः पठेच्छृणुयाद्वापि सद्यादीनां समुद्भवम्।।

स भुक्त्वा सकलान्कामान्प्रयाति परमां गतिम् ।। 3.1.

इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां शिवस्य पञ्चब्रह्मावतारवर्णनं नाम प्रथमोऽध्यायः ।।१।।

।। नन्दीश्वर उवाच ।।

शृणु तात महेशस्यावतारान्परमान्प्रभो ।।

सर्वकार्यकराँल्लोके सर्वस्य सुखदान्मुने ।।१।।

तस्य शंभोः परेशस्य मूर्त्यष्टकमयं जगत् ।।

तस्मिन्व्याप्य स्थितं विश्वं सूत्रे मणिगणा इव ।।२।।

शर्वो भवस्तथा रुद्र उग्रो भीमः पशो पतिः ।।

ईशानश्च महादेवो मूर्तयश्चाष्ट विश्रुताः ।। ३ ।।

भूम्यंभोग्निमरुद्व्योमक्षेत्रज्ञार्कनिशाकराः ।।

अधिष्ठिताश्च शर्वाद्यैरष्टरूपैः शिवस्य हि ।।४।।

धत्ते चराचरं विश्वं रूपं विश्वंभरात्मकम् ।।

शंकरस्य महेशस्य शास्त्रस्यैवेति निश्चयः ।। ५ ।।

संजीवनं समस्तस्य जगतः सलिलात्मकम् ।।

भव इत्युच्यते रूपं भवस्य परमात्मनः ।।६।।

बहिरंतर्जगद्विश्वं बिभर्ति स्पन्दतेस्य यम् ।।

उग्र इत्युच्यते सद्भी रूपमुग्रस्य सत्प्रभो ।।७।।

सर्वावकाशदं सर्वव्यापकं गगनात्मकम् ।।

रूपं भीमस्य भीमाख्यं भूपवृन्दस्व भेदकम् ।। ८ ।।

सर्वात्मनामधिष्ठानं सर्वक्षेत्रनिवासकम् ।।

रूपं पशुपतेर्ज्ञेयं पशुपाशनिकृन्तनम् ।।९।।

सन्दीपयञ्जगत्सर्वं दिवाकरसमाह्वयम् ।।

ईशानाख्यं महेशस्य रूपं दिवि विसर्पति ।।3.2.१०।।

आप्याययति यो विश्वममृतांशुर्निशाकरः ।।

महादेवस्य तद्रूपं महादेवस्य चाह्वयम् ।। ११ ।।

आत्मा तस्याष्टमं रूपं शिवस्य परमात्मनः ।।

व्यापिकेतरमूर्तीनां विश्वं तस्माच्छिवात्मकम् ।। १२ ।।

शाखाः पुष्यन्ति वृक्षस्य वृक्षमूलस्य सेचनात् ।।

तद्वदस्य वपुर्विश्वं पुष्यते च शिवार्चनात ।।१३।।

यथेह पुत्रपौत्रादेः प्रीत्या प्रीतो भवेत्पिता ।।

तथा विश्वस्य सम्प्रीत्या प्रीतो भवति शंकरः ।। १४ ।।

क्रियते यस्य कस्यापि देहिनो यदि निग्रहः ।।

अष्टमूर्तेरनिष्टं तत्कृतमेव न संशयः ।। १५ ।।

अष्टमूर्त्यात्मना विश्वमधिष्ठायास्थितं शिवम् ।।

भजस्व सर्वभावेन रुद्रं परमकारणम् ।। १६ ।।

इति प्रोक्ताः स्वरूपास्ते विधिपुत्राष्टविश्रुताः ।।
सर्वोपकारनिरताः सेव्याः श्रेयोर्थिभिर्नरैः ।। १७ ।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां शिवाष्टमूर्त्तिवर्णनं नाम द्वितीयोऽध्यायः ।। २ ।।

नन्दीश्वर उवाच
शृणु तात महाप्राज्ञ विधिकामप्रपूरकम् ।।
अर्द्धनारीनराख्यं हि शिवरूपमनुत्तमम् ।। १ ।।
यदा सृष्टाः प्रजा सर्वाः न व्यवर्द्धंत वेधसा ।।
तदा चिंताकुलोऽभूत्स तेन दुःखेन दुखितः ।। २ ।।
नभोवाणी तदाभूद्वै सृष्टिं मिथुनजां कुरु ।।
तच्छ्रुत्वा मैथुनीं सृष्टिं ब्रह्मा कर्तुममन्यत ।। ३ ।।
नारीणां कुलमीशानान्निर्गतं न पुरा यतः ।।
ततो मैथुनजां सृष्टिं कर्तुं शेके न पद्मभूः ।। ४ ।।
प्रभावेण विना शंभोर्न जायेरन्निमाः प्रजाः ।।
एवं संचिन्तयन्ब्रह्मा तपः कर्त्तुं प्रचक्रमे ।। ५ ।।
शिवया परया शक्त्या संयुक्तं परमेश्वरम् ।।
संचिंत्य हृदये प्रीत्या तेपे स परमं तपः।।६।।
तीव्रेण तपसा तस्य संयुक्तस्य स्वयंभुवः ।।
अचिरेणैव कालेन तुतोष स शिवो द्रुतम् ।।७।।
ततः पूर्णचिदीशस्य मूर्तिमाविश्य कामदाम्।।
अर्द्धनारीनरो भूत्वा ततो ब्रह्मान्तिकं हरः ।।८।।
तं दृष्ट्वा शंकरं देवं शक्त्या प्ररमयान्वितम् ।।
प्रणम्य दण्डवद्ब्रह्मा स तुष्टाव कृताञ्जलिः ।।९।।
अथ देवो महादेवो वाचा मेघगभीरया।।
संभवाय सुसंप्रीतो विश्वकर्त्ता महेश्वरः ।।3.3.१०।।
ईश्वर उवाच।।
वत्सवत्स महाभाग मम पुत्र पितामह ।।
ज्ञातवानस्मि सर्व तत्तत्त्वतस्ते मनोरथ।।११।।
प्रजानामेव वृद्ध्यर्थं तपस्तप्तं त्वयाधुना ।।
तपसा तेन तुष्टोऽस्मि ददामि च तवेप्सितम् ।।१२।।
इत्युक्त्वा परमोदारं स्वभावमधुरं वचः।।
पृथक्चकार वपुषो भागाद्देवीं शिवां शिवः ।।१३।।
तां दृष्ट्वा परमां शक्तिं पृथग्भूतां शिवागताम्।।
प्रणिपत्य विनीतात्मा प्रार्थयामास तां विधिः ।।१४।।
ब्रह्मोवाच ।।
देवदेवेन सृष्टोहमादौ त्वत्पतिना शिवे ।।
प्रजाः सर्वा नियुक्ताश्च शंभुना परमात्मना ।। १५ ।।

मनसा निर्मिताः सर्वे शिवे देवादयो मया ।।
न वृद्धिमुपगच्छंति सृज्यमानाः पुनःपुनः ।। १६ ।।
मिथुनप्रभवामेव कृत्वा सृष्टिमतः परम् ।।
संवर्द्धयितुमिच्छामि सर्वा एव मम प्रजाः ।। १७ ।।
न निर्गतं पुरा त्वत्तो नारीणां कुलमव्ययम् ।।
तेन नारीकुलं श्रेष्ठं मम शक्तिर्न विद्यते ।। १८ ।।
सर्वासामेव शक्तीनां त्वत्तः खलु समुद्भवः ।।
तस्मात्त्वं परमां शक्तिं प्रार्थयाम्यखिलेश्वरीम् ।। १९ ।।
शिवे नारीकुलं स्रष्टुं शक्तिं देहि नमोऽस्तु ते ।।
चराचरं जगद्विद्धि हेतोर्मातः शिवं प्रिये ।। ३.३.२० ।।
अन्यं त्वत्तः प्रार्थयामि वरं च वरदेश्वरि ।।
देहि मे तं कृपां कृत्वा जगन्मातर्नमोऽस्तु ते ।। २१ ।।
चराचरविवृद्ध्यर्थमीशेनैकेन सर्वगे ।।
दक्षस्य मम पुत्रस्य पुत्री भव भवाम्बिके ।। २२ ।।
एवं संयाचिता देवी ब्रह्मणा परमेश्वरी ।।
तथास्त्विति वचः प्रोच्य तच्छक्तिं विधये ददौ ।। २३ ।।
तस्माद्धि सा शिवा देवी शिवशक्तिर्जगन्मयी ।।
शक्तिमेकां भ्रुवोर्मध्यात्ससर्जात्मसमप्रभाम् ।। २४ ।।
तामाह प्रहसन्प्रेक्ष्य शक्तिं देववरो हरः ।।
कृपासिन्धुर्महेशानो लीलाकारी भवाम्बिकाम् ।। २५ ।।
शिव उवाच ।।
तपसाराधिता देवि ब्रह्मणा परमेष्ठिना ।।
प्रसन्ना भव सुप्रीत्या कुरु तस्याखिलेप्सितम् ।। २६ ।।
तामाज्ञां परमेशस्य शिरसा प्रतिगृह्य सा ।।
ब्रह्मणो वचनाद्देवी दक्षस्य दुहिताभवत् ।।२७।।
दत्त्वैवमतुलां शक्तिं ब्रह्मणो सा शिवा मुने ।।
विवेश देहं शंभोर्हि शंभुश्चान्तर्दधे प्रभुः ।। २८ ।।
तदाप्रभृति लोकेऽस्मिन्स्त्रिया भागः प्रकल्पितः ।।
आनन्दं प्राप स विधिः सृष्टिर्जाता च मैथुनी ।। २९ ।।
एतत्ते कथितं तात शिवरूपं महोत्तमम् ।।
अर्द्धनारीनरार्द्धं हि महामंगलदं सताम् ।।३.३.३०।।
एतदाख्यानमनघं यः पठ्च्छृणुयादपि ।।
स भुक्त्वा सकलान्भोगान्प्रयाति परमां गतिम् ।।३१।।

इति श्रीशिवमहापुराणे तृतीयायां रुद्रसंहितायां शिवस्यार्द्धनारीनरावतारवर्णनं नाम तृतीयोऽध्यायः ।। ३ ।।

नन्दीश्वर उवाच ।।
सनत्कुमार सर्वज्ञ चरितं शांकरं मुदा ।।
रुद्रेण कथितं प्रीत्या ब्रह्मणे सुखदं सदा ।। १ ।।
शिव उवाच ।।
सप्तमे चैव वाराहे कल्पे मन्वन्तराभिधे ।।
कल्पेश्वरोऽथ भगवान्सर्वं लोकप्रकाशनः ।। २ ।।
मनोर्वैवस्वतस्यैव ते प्रपुत्रो भविष्यति।।
तदा चतुर्युगाश्चैव तस्मिन्मन्वन्तरे विधे ।।३।।
अनुग्रहार्थं लोकानां ब्राह्मणानां हिताय च।।
उत्पश्यामि विधे ब्रह्मन्द्वापराख्ययुगान्तिके ।। ४ ।।
युगप्रवृत्त्या च तदा तस्मिंश्च प्रथमे युगे ।।
द्वापरे प्रथमे ब्रह्मन्यदा व्यासः स्वयंप्रभुः ।।५।।
तदाहं ब्राह्मणार्थाय कलौ तस्मिन्युगान्तिके।।
भविष्यामि शिवायुक्तः श्वेतो नाम महामुनिः ।।६।।
हिमवच्छिखरे रम्ये छागले पर्वतोत्तमे।।
तदा शिष्याः शिखायुक्ता भविष्यन्ति विधे मम ।।७।।
श्वेतः श्वेतशिखश्चैव श्वेताश्वः श्वेतलोहितः ।।
चत्वारो ध्यानयोगात्ते गमिष्यन्ति पुरं मम।।८।।
ततो भक्ता भविष्यन्ति ज्ञात्वा मां तत्त्वतोऽव्ययम्।।
जन्ममृत्युजराहीनाः परब्रह्मसमाधयः ।। ९ ।।
द्रष्टुं शक्यो नरैर्नाहमृते ध्यानात्पितामह ।।
दानधर्मादिभिर्वत्स साधनैः कर्महेतुभिः ।।3.4.१०।।
द्वितीये द्वापरे व्यासः सत्यो नाम प्रजापतिः ।।
यदा तदा भविष्यामि सुतारो नामतः कलौ ।। ११ ।।
तत्रापि मे भविष्यन्ति शिष्या वेदविदो द्विजाः ।।
दुन्दुभिः शतरूपश्च हृषीकः केतुमांस्तथा ।।१२।।
चत्वारो ध्यानयोगात्ते गमिष्यन्ति पुरं मम ।।
ततो मुक्ता भविष्यन्ति ज्ञात्वा मां तत्त्वतोऽव्ययम् ।। १३ ।।
तृतीये द्वापरे चैव यदा व्यासस्तु भार्गवः ।।
तदाप्यहं भविष्यामि दमनस्तु पुरान्तिके ।।१४।।
तत्रापि च भविष्यन्ति चत्वारो मम पुत्रकाः ।।
विशोकश्च विशेषश्च विपापः पापनाशनः ।। १५ ।।
शिष्यैः साहाय्यं व्यासस्य करिष्ये चतुरानन ।।

निवृत्तिमार्गं सुदृढं वर्त्तयिष्ये कलाविह ।।१६।।
चतुर्थे द्वापरे चैव यदा व्यासोंऽगिराः स्मृतः ।।
तदाप्यहं भविष्यामि सुहोत्रो नाम नामतः ।।१७।।
तत्रापि मम ते पुत्राश्चत्वारो योगसाधकाः ।।
भविष्यंति महात्मानस्तन्नामानि ब्रुवे विधे।।१८।।
सुमुखो दुर्मुखश्चैव दुदर्भो दुरतिक्रमः ।।
शिष्यैः साहाय्यं व्यासस्य करिष्येऽहं तदा विधे ।। १९ ।।
पञ्चमे द्वापरे चैव व्यासस्तु सविता स्मृतः ।।
तदा योगी भविष्यामि कंको नाम महातपाः ।।3.4.२०।।
तत्रापि मम ते पुत्राश्चत्वारो योगसाधकाः ।।
भविष्यन्ति महात्मानस्तन्नामानि शृणुष्व मे ।। २१ ।।
सनकः सनातनश्चैव प्रभुर्यश्च सनन्दनः ।।
विभुः सनत्कुमारश्च निर्मलो निरहंकृतिः ।।२२।।
तत्रापि कंकनामाहं साहाय्यं सवितुर्विधे ।।
व्यासस्य हि करिष्यामि निवृत्तिपथवर्द्धकः ।। २३ ।।
परिवर्ते पुनः षष्ठे द्वापरे लोककारकः ।।
कर्ता वेदविभागस्य मृत्युर्व्यासो भविष्यति ।।२४।।
तदाऽप्यहं भविष्यामि लोकाक्षिर्नाम नामतः ।।
व्यासस्य सुसाहा य्यार्थं निवृत्तिपथवर्द्धनः ।। २५ ।।
तत्रापि शिष्याश्चत्वारो भविष्यन्ति दृढव्रताः ।।
सुधामा विरजाश्चैव संजयो विजयस्तथा ।। २६ ।।
सप्तमे परिवर्ते तु यदा व्यासः शतक्रतुः ।।
तदाप्यहं भविष्यामि जैगीषव्यो विभुर्विधे ।। २७ ।।
योगं संद्रढयिष्यामि महायोगविचक्षणः ।।
काश्यां गुहान्तरे संस्थो दिव्यदेशे कुशास्तरिः ।। २८ ।।
साहाय्यं च करिष्यामि व्यासस्य हि शतक्रतोः ।।
उद्धरिष्यामि भक्तांश्च संसारभयतो विधे ।।२९।।
तत्रापि मम चत्वारो भविष्यन्ति सुता युगे ।।
सारस्वतश्च योगीशो मेघवाहः सुवाहनः ।।3.4.३०।।
अष्टमे परिवर्ते हि वसिष्ठो मुनिसत्तमः ।।
कर्त्ता वेदविभागस्य वेदव्यासो भविष्यति ।।३१।।
तत्राप्यहं भविष्यामि नामतो दधिवाहनः ।।
व्यासस्य हि करिष्यामि साहाय्यं योगवित्तम ।। ३२ ।।

कपिलश्चासुरिः पञ्चशिखः शाल्वलपूर्वकः ।।
चत्वारो योगिनः पुत्रा भविष्यन्ति समा मम ।। ३३ ।।
नवमे परिवर्ते तु तस्मिन्नेव युगे विधे ।।
भविष्यति मुनिश्रेष्ठो व्यासः सारस्वताह्वयः ।।३४।।
व्यासस्य ध्यायतस्तस्य निवृत्तिपथवृद्धये ।।
तदाप्यहं भविष्यामि ऋषभो नामतः स्मृतः ।।३५।।
पराशरश्च गर्गश्च भार्गवो गिरिशस्तथा ।।
चत्वारस्तत्र शिष्या मे भविष्यन्ति सुयोगिनः ।।३६।।
तैः साकं द्रढयिष्यामि योगमार्गं प्रजापते ।।
करिष्यामि साहाय्यं वै वेदव्यासस्य सन्मुने ।।३७।।
तेन रूपेण भक्तानां बहूनां दुःखिनां विधे ।।
उद्धारं भवतोऽहं वै करिष्यामि दयाकरः ।। ३८ ।।
सोऽवतारो विधे मे हि ऋषभाख्यस्सुयोगकृत् ।।
सारस्वतव्यासमनः कर्त्ता नानोतिकारकः ।।३९।।
अवतारेण मे येन भद्रायुर्नृपबालकः ।।
जीवितो हि मृतः क्ष्वेडदोषतो जनकोज्झितः ।।3.4.४०।।
प्राप्तेऽथ षोडशे वर्षे तस्य राजशिशोः पुनः ।।
ययौ तद्वेश्म सहसा ऋषभः स मदात्मकः ।। ४१।।
पूजितस्तेन स मुनिः सद्रूपश्च कृपानिधिः ।।
उपादिदेश तद्धर्मान्राज्ययोगान्प्रजापते ।।४२।।
ततः स कवचं दिव्यं शंखं खड्गं च भास्वरम् ।।
ददौ तस्मै प्रसन्नात्मा सर्वशत्रुविनाशनम् ।।४३।।
तदङ्ग भस्मनामृश्य कृपया दीनवत्सलः ।।
स द्वादशसहस्रस्य गजानां च बलं ददौ ।।४४।।
इति भद्रायुषं सम्यगनुश्वास्य समातृकम्।।
ययौ स्वैरगतस्तस्यां पूजितस्त्वृषभः प्रभुः ।। ४५ ।।
भद्रायुरपि राजर्षिर्जित्वा रिपुगणान्विधे ।।
राज्यं चकार धर्मेण विवाह्य कीर्त्तिमालिनीम् ।। ४६ ।।
इत्थं प्रभावं ऋषभोऽवतारः शङ्करस्य मे ।।
सतां गतिर्दीनबन्धुर्नवमः कथितस्तव ।। ४७ ।।
ऋषभस्य चरित्रं हि परमं पावनं महत् ।।
स्वर्ग्यं यशस्यमायुष्यं श्रोतव्यं च प्रयत्नतः ।। ४८ ।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायामृषभचरित्रवर्णनं नाम चतुर्थोऽध्यायः ।। ४ ।।

।। शिव उवाच ।।
दशमे द्वापरे व्यासस्त्रिधामा नामतो मुनि ।।
हिमवच्छिखरे रम्ये भृगुतुंगे नगोत्तमे ।। १ ।।
तत्रापि मम पुत्राश्च भृग्वाद्याः श्रुतिसंमिताः ।।
बलबन्धुर्नरामित्रः केतुशृंगस्तपोधनः ।।२।।
एकादशे द्वापरे तु व्यासश्च त्रिवृतो यदा ।।
गंगाद्वारे कलौ नाम्ना तपोऽहं भविता तदा।।३।।
लम्बोदरश्च लम्बाक्षः केशलम्वः प्रलम्बकः ।।
तत्रापि पुत्राश्चत्वारो भविष्यन्ति दृढव्रताः ।। ४ ।।
द्वादशे परिवर्त्ते तु शततेजाश्च वेदकृत् ।।
तत्राप्यहं भविष्यामि द्वापरान्ते कलाविह ।। ५ ।।
हेमकंचुकमासाद्य नाम्ना ह्यत्रिः परिप्लुतः ।।
व्यासस्यैव साहाय्यार्थं निवृत्तिपथरोषणः ।। ६ ।।
सर्वज्ञः समबुद्धिश्च साध्यः शर्वसुयोगिनः ।।
तत्रेति पुत्राश्चत्वारो भविष्यन्ति महामुने।।७।।
त्रयोदशे युगे तस्मिन्धर्मो नारायणः सदा ।।
व्यासस्तदाहं भविता बलिर्नाम महामुनिः ।।८।।
बालखिल्याश्रमे गंधमादने पर्वतोत्तमे ।।
सुधामा काश्यपश्चैव वसिष्ठो विरजाः शुभाः ।।९।।
यदा व्यासस्तु रक्षाख्यः पर्याये तु चतुर्दशे ।।
वंश आङ्गिरसे तत्र भविताहं च गौतमः ।। 3.5.१० ।।
तत्रापि मम ते पुत्रा भविष्यन्ति कलौ तदा ।।
अत्रिर्दवशदश्चैव श्रवणोथ श्रविष्कटः ।।११।।
व्यासः पञ्चदशे त्रय्यारुणिर्वै द्वापरे यदा ।।
तदाहं भविता वेदशिरा वेदशिरस्तथा ।।१२।।
महावीर्यं तदस्त्रं च वेदशीर्षश्च पर्वतः ।।
हिमवत्पृष्ठमासाद्य सरस्वत्यास्तथोत्तरे ।।१३।।
तत्रापि मम चत्वारो भविष्यन्ति सुता दृढाः ।।
कुणिश्च कुणिबाहुश्च कुशरीरः कुनेत्रकः ।।१४।।
व्यासो युगे षोडशे तु यदा देवो भविष्यति ।।
तदा योगप्रदानाय गोकर्णो भविता ह्यहम् ।। १५ ।।
तत्रैव च सुपुण्यं च गोकर्णं नाम तद्वनम्।।
तत्रापि योगिनः पुत्र भविष्यंतित्यम्बुसंमिताः ।।१६।।

काश्यपोप्युशनाश्चैव च्यवनोऽथ बृहस्पतिः ।।
तेपि तेनैव मार्गेण गमिष्यन्ति शिवालयम् ।।१७।।
परिवर्त्ते सप्तदशे व्यासो देवकृतंजयः ।।
गुहावासीति नाम्नाहं हिमवच्छिखरे शुभे ।। १८ ।।
महालये महोत्तुंगे शिवक्षेत्रं हिमाल यम् ।।
उतथ्यो वामदेवश्च महायोगो महाबलः ।। १९ ।।
परिवर्त्तेऽष्टादशे तु यदा व्यास ऋतंजयः ।।
शिखाण्डीनामतोहं तद्धिमवच्छिखरे शुभे ।। 3.5.२० ।।
सिद्धक्षेत्रे महापुण्ये शिखण्डी नाम पर्वतः ।।
शिखण्डिनो वनं वापि यत्र सिद्धनिषेवितम् ।। २१ ।।
वाचःश्रवा रुचीकश्च स्यावास्यश्च यतीश्वरः ।।
एते पुत्रा भविष्यन्ति तत्रापि च तपोधनाः ।। २२ ।।
एकोनविंशे व्यासस्तु भरद्वाजो महामुनिः ।।
तदाप्यहं भविष्यामि जटी माली च नामतः ।। २३ ।।
हिमवच्छिखरे तत्र पुत्रा मेऽम्बुधिसंहिताः ।।
हिरण्यनामा कौशल्यो लोकाक्षी प्रधिमिस्तथा ।। २४ ।।
परिवर्त्ते विंशतिमे भविता व्यास गौतमः ।।
तत्राट्टहासनामाहमट्टहासप्रिया नराः ।। २५ ।।
तत्रैव हिमवत्पृष्ठे अट्टहासो महागिरिः ।।
देवमानुषयक्षेन्द्रसिद्धचारणसेवितः ।। २६ ।।
तत्रापि मम ते पुत्रा भवि ष्यन्ति सुयोगिनः।।
सुमन्तुर्बबरिर्विद्वान् कबंधः कुशिकन्धरः।।२७।।
एकविंशे युगे तस्मिन् व्यासो वाचःश्रवा यदा।।
तदाहं दारुको नाम तस्माद्दारुवनं शुभम् ।। २८ ।।
तत्रापि मम ते पुत्रा भविष्यन्ति सुयोगिनः ।।
प्लक्षो दार्भायणिश्चैव केतुमान् गौतमस्तथा ।। २९ ।।
द्वाविंशे परिवर्ते तु व्यासः शुष्मायणो यदा ।।
तदाप्यहं भविष्यामि वाराणस्यां महामुनिः ।। 3.5.३० ।।
नाम्ना वै लांगली भीमो यत्र देवाः सवासवाः ।।
द्रक्ष्यंति मां कलौ तस्मिन्भवं चैव हलायुधम् ।। ३१ ।।
तत्रापि मम ते पुत्रा भविष्यंति सुधार्मिकाः ।।
भल्लवी मधुपिंगश्च श्वेतकेतुस्तथैव च ।। ३२ ।।
परिवर्ते त्रयोविंशे तृणबिन्दुर्यदा मुनिः ।।

श्वेतो नाम तदाहं वै गिरौ कालंजरे शुभे ।। ३३ ।।
तत्रापि मम ते पुत्रा भविष्यन्ति तपस्विनः ।।
उशिको बृहदश्वश्च देवलः कविरेव च ।। ३४ ।।
परिवर्ते चतुर्विंशे व्यासो यक्षो यदा विभुः ।।
शूली नाम महायोगी तद्युगे नैमिषे तदा ।। ३५ ।।
तत्रापि मम ते शिष्या भविष्यन्ति तपस्विनः ।।
शालिहोत्रोऽग्निवेशश्च युवनाश्वः शरद्वसुः ।। ३६ ।।
पंचविंशे यदा व्यासः शक्तिर्नाम्ना भविष्यति ।।
तदाप्यहं महायोगी दण्डी मुण्डीश्वरः प्रभुः ।। ३७ ।।
तत्रापि मम ते शिष्या भविष्यन्ति तपस्विनः ।।
छगलः कुण्डकर्णश्च कुम्भाण्डश्च प्रवाहकः ।। ३८ ।।
व्यासः पराशरो यर्हि षड्विंशे भविताप्यहम् ।।
पुरं भद्रवटं प्राप्य सहिष्णुर्नाम नामतः ।।३९।।
तत्रापि मम ते शिष्या भविष्यन्ति तपस्विनः ।।
उलूको विद्युतश्चैव शम्बूको ह्याश्वलायनः ।।3.5.४०।।
सप्तविंशे यदा व्यासो जातूकर्ण्यो भविष्यति ।।
प्रभासतीर्थमाश्रित्य सोमशर्मा तदाप्यहम् ।। ४१ ।।
तत्रापि मम ते शिष्या भविष्यंति तपस्विनः ।।
अक्षपादः कुमारश्चोलूको वत्सस्तथैव च ।। ४२ ।।
अष्टाविंशे द्वापरे तु पराशरसुतो हरिः।।
यदा व्यासो भविष्यामि नाम्ना द्वैपायनः प्रभुः।।४३।।
तदा षष्ठेन चांशेन कृष्णः पुरुषसत्तमः ।।
वसुदेवसुतः श्रेष्ठो वासुदेवो भविष्यति।।४४।।
तदाप्यहं भविष्यामि योगात्मा योगमायया ।।
लोकविस्मापनार्थाय ब्रह्मचारिशरीरकः ।।४५।।
श्मशाने मृतमुत्सृज्य दृष्ट्वा कायमनामयम्।।
ब्राह्मणानां हितार्थाय प्रविष्टो योगमायया ।।४६।।
दिव्यां मेरुगुहां पुण्यां त्वया सार्द्धं च विष्णुना।।
भविष्यामि तदा ब्रह्मँल्लकुली नामनामतः ।।४७।।
कायावतार इत्येवं सिद्धक्षेत्रं परं तदा।।
भविष्यति सुविख्यातं यावद्भूमिर्धरिष्यति ।। ४८ ।।
तत्रापि मम ते शिष्या भविष्यन्ति तपस्विनः ।।
कुशिकश्चैव गर्गश्च मित्रः कौरुष्य एव च ।। ४९ ।।

योगिनो ब्राह्मणा वेदपारगा ऊर्द्ध्वरेतसः ।।
प्राप्य माहेश्वरं योगं गमिष्यंति शिवं पुरम् ।।3.5.५०।।
वैवस्वतेऽन्तरे सम्यक् प्रोक्ता हि परमात्मना ।।
योगेश्वरावताराश्च सर्वावर्तेषु सुव्रताः।।५१।।
व्यासाश्चैवाष्टविंशत्का द्वापरेद्वापरे विभो।।
योगेश्वरावतारश्च प्रारंभे च कलौ कलौ ।।५२।।
योगेश्वरावताराणां योगमार्गप्रवर्द्धकाः ।।
महाशैवाश्च चत्वारः शिष्याः प्रत्येकमव्यया ।।५३।।
एते पाशुपताः शिष्या भस्मोद्धूलितविग्रहाः ।।
रुद्राक्षमालाभरणास्त्रिपुण्ड्रांकितमस्तकाः ।। ५४ ।।
शिष्या धर्मरताः सर्वे वेदवेदांगपारगाः ।।
लिंगार्चनरता नित्यं बाह्याभ्यन्तरतः स्थिताः ।।५५।।
भक्त्या मयि च योगेन ध्याननिष्ठा जितेन्द्रियाः ।।
संख्यया द्वादशाधिक्य शतं च गणिता बुधैः ।। ५६ ।।
इत्येतद्वै मया प्रोक्तमवतारेषु लक्षणम् ।।
मन्वादिकृष्णपर्यन्तमष्टाविंशद्युगक्रमात् ।। ५७ ।।
तत्र श्रुतिसमूहानां विधानं ब्रह्मलक्षणम् ।।
भविष्यति तदा कल्पे कृष्णद्वैपायनो यदा ।। ५८ ।।
इत्येवमुक्त्वा ब्रह्माणमनुगृह्य महेश्वरः ।।
पुनः संप्रेक्ष्य देवेशस्तत्रैवान्तरधीयत ।। ५९ ।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां शिवावतारोपाख्यान एकोनविंशतिशिवावतारवर्णनं नाम पञ्चमोऽध्यायः ।। ५ ।। इति द्विचत्वारिंशावताराः ।। ४२ ।।

अथ नन्दीश्वरावतारमाह ।।
सनत्कुमार उवाच ।।
भवान्कथमनुप्राप्तो महादेवांशजः शिवम् ।।
श्रोतुमिच्छामि तत्सर्वं वक्तुमर्हसि मे प्रभो ।। १ ।।
नन्दीश्वर उवाच ।।
सनत्कुमार सर्वज्ञ सावधानतया शृणु ।।
यथाहं च शिवं प्राप्तो महादेवांशजो मुने ।। २ ।।
प्रजाकामः शिलादोऽभूदुक्तः पितृभिरादरात् ।।
तदुद्धर्तुमना भक्त्या समुद्धारमभीप्सुभिः ।। ३ ।।
अधोदृष्टिः सुधर्मात्मा शिलादो नाम वीर्यवान् ।।
तस्यासीन्मुनिकैर्वृत्तिः शिवलोके च सोगमत् ।। ४ ।।
शक्रमुद्दिश्य स मुनिस्तपस्तेपे सुदुः सहम् ।।
निश्चलात्मा शिलादाख्यो बहुकालं दृढव्रतः ।। ५ ।।
तपतस्तस्य तपसा संतुष्टोऽभूच्छतक्रतुः ।।
जगाम च वरं दातुं सर्वदेवप्रभुस्तदा ।। ६ ।।
शिलादमाह सुप्रीत्या शक्रस्तुष्टोऽस्मि तेऽनघ ।।
तेन त्वं मुनिशार्दूल वरयस्व वरानिति ।। ७ ।।
ततः प्रणम्य देवेशं स्तुत्वा स्तुतिभिरादरात् ।।
शिलादो मुनिशार्दूलस्तमाह सुकृताञ्जलिः ।।८।।
शिलाद उवाच ।।
शतक्रतो सुरेशान सन्तुष्टो यदि मे प्रभो।।
अयोनिजं मृत्युहीनं पुत्रमिच्छामि सुव्रतम्।।९।।
शक्र उवाच।।
पुत्रं दास्यामि पुत्रार्थिन्योनिजं मृत्युसंयुतम् ।।
अन्यथा ते न दास्यामि मृत्युहीना न सन्ति वै ।।3.6.१०।।
न दास्यामि सुतं तेऽहं मृत्युहीनमयोनिजम् ।।
हरिर्विधिश्च भगवान्किमुतान्यो महामुने ।।११।।
तावपि त्रिपुरार्यंगसम्भावौ मरणान्वितौ ।।
तयोरप्यायुषा मानं कथितं निगमे पृथक् ।।१२।।
तस्मादयोनिजे पुत्रे मृत्युहीने प्रयत्नतः ।।
परित्यजाशां विप्रेन्द्र गृहाणात्मक्षमं सुतम्।।१३।।
किन्तु देवेश्वरो रुद्रः प्रसीदति महेश्वरः ।।
सुदुर्लभो मृत्युहीनस्तव पुत्रो ह्ययोनिजः ।। १४ ।।

अहं च विष्णुर्भगवान्द्रुहिणश्च महामुने ।।
अयोनिजं मृत्युहीनं पुत्रं दातुं न शक्नुमः ।। १५ ।।
आराधय महादेवं तत्पुत्रविनिकाम्यया ।।
सर्वेश्वरो महाशक्तः स ते पुत्रं प्रदास्यति ।। १६ ।।
नन्दीश्वर उवाच ।।
एवं व्याहृत्य विप्रेन्द्रमनुगृह्य च तं घृणी।।
देवैर्वृतः सुरेशानस्स्वलोकं समगान्मुने ।। १७ ।।
गते तस्मिंश्च वरदे सहस्राक्षे शिलाशनः ।।
आराधयन्महादेवं तपसातोषयद्भवम्।।१८।।
अथ तस्यैवमनिशन्तत्परस्य द्विजस्त वै ।।
दिव्यम्वर्षसहस्रं तु गतं क्षणमिवाद्भुतम् ।।१९।।
वल्मीकेन वृतांगश्च लक्षकोटगणैर्मुनिः ।।
सूचीमुखैश्चान्यै रक्तभुग्भिश्च सर्वतः ।।3.6.२०।।
निर्मांसरुधिर त्वग्वै बिले तस्मिन्नवस्थितः ।।
अस्थिशेषोभवत्पश्चाच्छिलादो मुनिसत्तमः ।। २१ ।।
तुष्टः प्रभुस्तदा तस्मै दर्शयामास स्वां तनुम् ।।
दिव्यां दिव्यगुणैर्युक्तामलभ्यां वामबुद्धिभिः ।।२२।।
दिव्यवर्षसहस्रेण तप्यमानाय शूलधृक् ।।
सर्वदेवाधिपस्तस्मै वरदोस्मीत्यभाषत ।।२३।।
महासमाधिसंलीनस्स शिलादो महामुनिः ।।
नाशृणोत्तद्गिरं शम्भोर्भक्त्यधीनरतस्य वै।।२४।।
यदा स्पृष्टो मुनिस्तेन करेण त्रिपुरारिणा ।।
तदैव मुनिशार्दूल उत्ससर्ज? तपःक्रमम् ।।२५।।
अथोन्मील्य मुनिर्नेत्रे सोमं शंभुं विलोकयन् ।।
द्रुतं प्रणम्य स मुदा पादयोर्न्यपतन्मुने।।२६।।
हर्षगद्गदया वाचा नतस्कंधः कृताञ्जलिः।।
प्रसन्नात्मा शिलादस्स तुष्टाव परमेश्वरम् ।।२७।।
ततः प्रसन्नो भगवान्देवदेवस्त्रिलोचनः।।
वरदोऽस्मीति तम्प्राह शिलादं मुनिपुंगवम्।।२८।।
तपसानेन किं कार्यं भवते हि महा मते।।
ददामि पुत्रं सर्वज्ञं सर्वशास्त्रार्थपारगम्।।२९।।
ततः प्रणम्य देवेशं तच्छ्रुत्वा च शिलाशनः।।
हर्षगद्गदया वाचोवाच सोमविभूषणम् ।।3.6.३०।।

शिलाद उवाच ।।
महेश यदि तुष्टोऽसि यदि वा वरदश्च मे ।।
इच्छामि त्वत्समं पुत्रं मृत्युहीनमयोनिजम् ।।३१।।
नंदीश्वर उवाच ।।
एवमुक्तस्ततो देवस्त्र्यम्बकस्तेन शङ्करः ।।
प्रत्युवाच प्रसन्नात्मा शिलादं मुनिसत्तमम्।।३२।।
।। शिव उवाच ।।
पूर्वमाराधितो विप्र ब्रह्मणाहं तपोधन ।।
तपसा चावतारार्थं मुनिभिश्च सुरोत्तमैः।।३३।।
तव पुत्रो भविष्यामि नन्दी नाम्ना त्वयोनिजः ।।
पिता भविष्यसि मम पितुर्वै जगतां मुने ।। ३४ ।।
नन्दीश्वर उवाच ।।
एवमुक्त्वा मुनिं प्रेक्ष्य प्रणिपत्यास्थितं घृणी ।।
सोमस्तूर्णं तमादिश्य तत्रैवान्तर्दधे हरः ।।३५।।
गते तस्मिन्महादेवे स शिलादो महामुनिः।।
स्वमाश्रयमुपागम्य ऋषिभ्योऽकथयत्ततः ।।३६।।
कियता चैव कालेन तदासौ जनकः स मे।।
यज्ञांगणं चकर्षाशु यज्ञार्थं यज्ञवित्तमः।।३७।।
ततः क्षणादहं शंभोस्तनुजस्तस्य चाज्ञया।।
स जातः पूर्व्वमेवाहं युगान्ताग्निसमप्रभः ।। ३८ ।।
अवर्षंस्तदा पुष्करावर्तकाद्या जगुः खेचराः किन्नराः सिद्धसाध्या ।।
शिलादात्मजत्वं गते मय्यृषीन्द्रास्समन्ताच्च वृष्टिं व्यधुः कौसुमीं ते।।३९।।
अथ ब्रह्मादयो देवा देवपत्न्यश्च सर्वशः ।।
तत्राजग्मुश्च सुप्रीत्या हरिश्चैव शिवोऽम्बिका।।3.6.४०।।
तदोत्सवो महानासीन्ननृतुश्चाप्सरोगणाः ।।
आदृत्य मां तथा लिंगं तुष्टुवुर्हर्षिताश्च ते।।४१।।
सुप्रशस्य शिलादं तं स्तुत्वा च सुस्तवैः शिवौ।।
सर्वे जग्मुश्च धामानि शिवावप्यखिलेश्वरौ।।४२।।
शिलादोऽपि च मां दृष्ट्वा कालसूर्य्यानलप्रभम्।।
त्र्यक्षं चतुर्भुजं बालं जटामुकुटधारिणम् ।।४३।।
त्रिशूलाद्यायुधं दीप्तं सर्वथा रुद्ररूपिणम्।।
महानन्दभरः प्रीत्या प्रणम्यं प्रणनाम च ।। ४४ ।।
शिलाद उवाच ।।

त्वयाहं नन्दितो यस्मान्नन्दी नाम्ना सुरेश्वर ।।
तस्मात्त्वां देवमानन्दं नमामि जगदीश्वरम् ।। ४५ ।।
नन्दीश्वर उवाच ।।
मया सह पिता हृष्टः सुप्रणम्य महेश्वरम् ।।
उटजं स्वं जगामाशु निधिं लब्ध्वेव निर्धनः ।।४६।।
यदा गतोहमुटजं शिलादस्य महामुने ।।
तदाहं तादृशं रूपं त्यक्त्वा मानुष्यमास्थितः।।४७।।
मानुष्यमास्थितं दृष्ट्वा पिता मे लोकपूजितः ।।
विललापातिदुःखार्त्तः स्वजनैश्च समावृतः ।।४७।।
जातकर्मादिकान्येव सर्वाण्यपि चकार मे ।।
शालंकायनपुत्रो वै शिलादः पुत्रवत्सलः ।। ४९ ।।
वेदानध्यापयामास सांगोपांगानशेषतः ।।
शास्त्राण्यन्यान्यपि तथा पञ्चवर्षे पिता च माम् ।।3.6.५०।।
सम्पूर्णे सप्तमे वर्षे मित्रावरुणसंज्ञकौ ।।
मुनी तस्याश्रमं प्राप्तौ द्रष्टुं मां चाज्ञया विभोः ।।५१।।
सत्कृतौ मुनिना तेन सूपविष्टो महामुनी ।।
ऊचतुश्च महात्मानौ मां निरीक्ष्य मुहुर्मुहुः।।५२।।
मित्रावरुणावूचतुः।।
तात नंदीस्तवाल्पायुः सर्वशास्त्रार्थपारगः।।
न दृष्टमेव चापश्यं ह्यायुर्वर्षादतः परम् ।। ५३ ।।
विप्रयोरित्युक्तवतोः शिलादः पुत्रवत्सलः ।।
तमालिङ्ग्य च दुःखार्त्तो रुरोदातीव विस्वरम् ।। ५४ ।।
मृतवत्पतितं दृष्ट्वा पितरं च पितामहम् ।।
प्रत्यवोचत्प्रसन्नात्मा स्मृत्वा शिवपदाम्बुजम् ।। ५५ ।।
केन त्वं तात दुःखेन वेपमानश्च रोदिषि ।।
दुःखं ते कुत उत्पन्नं ज्ञातुमिच्छामि तत्त्वतः ।। ५६ ।।
।। पितोवाच ।।
तवाल्पमृत्युदुःखेन दुःखितोऽतीव पुत्रक ।।
को मे दुःखं हरतु वै शरणं प्रयामि हि ।।५७।।
।। पुत्र उवाच ।।
देवो वा दानवो वापि यमः कालोथ वापि हि।।
ऋध्येयुर्यद्यपि ह्येते मामन्येपि जनास्तथा ।। ५८ ।।
अथापि चाल्पमृत्युर्मे न भविष्यति मां तुदः ।।

सत्यं ब्रवीमि जनकं शपथन्ते करोम्यहम्।।५९।।
।। पितोवाच ।।
किं तपः किं परिज्ञानं को योगश्च प्रभुश्च ते ।।
येन त्वं दारुणं दुःखं वञ्चयिष्यसि पुत्र मे ।।3.6.६०।।
।। पुत्र उवाच ।।
न तात तपसा मृत्युं वंचयिष्ये न विद्यया।।
महादेवस्य भजनान्मृत्युं जेष्यामि नान्यथा ।।६१।।
।। नन्दीश्वर उवाच ।।
इत्युक्त्वाहं पितुः पादौ प्रणम्य शिरसा मुने ।।
प्रदक्षिणीकृत्य च तमगच्छं वनमुत्तमम्।।६२।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां नन्दिकेशावतारवर्णनं नाम षष्ठोऽध्यायः ।।६।।

।। नन्दिकेश्वर उवाच ।।
तत्र गत्वा मुनेऽहं वै स्थित्वैकान्तस्थले सुधीः ।।
अतपं तप उग्रं सन्मुनीनामपि दुष्करम् ।।१।।
हृत्पुण्डरीकसुषिरे ध्यात्वा देवं त्रियम्बकम् ।।
त्र्यक्षं दशभुजं शान्तं पञ्चवक्त्रं सदा शिवम् ।। २ ।।
रुद्रजाप्यमकार्षं वै परमध्यानमास्थितः ।।
सरितश्चोत्तरे पुण्ये ह्येकचित्तः समाहितः ।।३।।
तस्मिञ्जाप्येऽथ संप्रीतः स्थितं मां परमेश्वरः ।।
तुष्टोऽब्रवीन्महादेवः सोमः सोमार्द्धभूषणः ।।४।।
शिव उवाच।।
शैलादे वरदोहं ते तपसानेन तोषितः ।।
साधु तप्तं त्वया धीमन् ब्रूहि यत्ते मनोगतम् ।।५।।
स एवमुक्तो देवेन शिरसा पादयोर्नतः।।
अस्तवं परमेशानं जराशोकविनाशनम्।।६।।
अथ मां नन्दिनं शम्भुर्भक्त्या परामया युतम् ।।
अश्रुपूर्णेक्षणं सम्यक् पादयोः शिरसा नतम् ।।७।।
उत्थाय परमेशानः पस्पर्श परमार्तिहा।।
कराभ्यां संमुखाभ्यान्तु संगृह्य वृषभध्वजः ।।८।।
निरीक्ष्य गणपांश्चैव देवीं हिमवतः सुताम् ।।
उवाच मां कृपादृष्ट्या समीक्ष्य जगताम्पतिः ।। ९ ।।
वत्स नन्दिन्महाप्राज्ञ मृत्योर्भीतिः कुतस्तव ।।
मयैव प्रेषितौ विप्रौ मत्समस्त्वं न संशयः ।।3.7.१०।।
अमरो जरया त्यक्तोऽदुःखी गणपतिः सदा ।।
अव्ययश्चाक्षयश्चेष्टः स पिता स सुहृज्जनः ।। ११ ।।
मद्बलः पार्श्वगो नित्यं ममेष्टो भवितानिशम् ।।
न जरा जन्म मृत्युर्वै मत्प्रसादाद्भविष्यति ।। १२ ।।
नन्दीश्वर उवाच ।।
एवमुक्त्वा शिरोमालां कुशेशयमयीं निजाम्।।
समुन्मुच्य बबन्धाशु मम कण्ठे कृपानिधिः।।१३।।
तयाहं मालया विप्र शुभया कण्ठसक्तया।।।
त्र्यक्षो दशभुजश्चासं द्वितीय इव शङ्कर।।१४।।
तत एव समादाय हस्तेन परमेश्वरः।।
उवाच ब्रूहि किं तेऽद्य ददामि वरमुत्तमम्।।१५।।

ततो जटाश्रितं वारि गृहीत्वा हार निर्मलम् ।।
उक्त्वा नन्दी भवेतीह विससर्ज वृषध्वजः ।। १६ ।।
ततः पञ्चमिता नद्यः प्रावर्तत शुभावहाः।।
सुतोयाश्च महावेगा दिव्य रूपा च सुन्दरी ।।१७।।
जटोदका त्रिस्रोताश्च वृषध्वनिरितीव हि।।
स्वर्णोदका जम्बुनदी पञ्चनद्यः प्रकीर्तिताः ।।१८।।
एतत्पञ्चनदं नाम शिवपृष्ठतमं शुभम्।।
जपेश्वरसमीपे तु पवित्रं परमं मुने ।। १९ ।।
यः पञ्चनदमासाद्य स्नात्वा जप्त्वेश्वरेश्वरम्।।
पूजयेच्छिवसायुज्यं प्रयात्येव न संशयः ।।3.7.२०।।
अथ शम्भुरुवाचोमामभिषिञ्चामि नन्दिनम्।
गणेन्द्रं व्याहरिष्यामि किं वा त्वं मन्यसेऽव्यये ।। २१ ।।
उमोवाच ।।
दातुमर्हसि देवेश नन्दिने परमेश्वर ।।
महाप्रियतमो नाथ शैलादिस्तनयो मम ।। २२ ।।
नन्दीश्वर उवाच ।।
ततस्स शङ्करः स्वीयान्सस्मार गणपान्वरान् ।।
स्वतन्त्रः परमेशानस्सर्वदो भक्तवत्सलः ।।२३।।
स्मरणादेव रुद्रस्य सम्प्राप्ताश्च गणेश्वराः ।।
असङ्ख्याता महामोदाश्शङ्कराकृतयोऽखिलाः ।। २४ ।।
ते गणेशाश्शिवं देवीं प्रणम्याहुः शुभं वचः ।।
ते प्रणम्य करौ बद्ध्वा नतस्कन्धा महाबलाः ।। २५ ।।
गणेशा ऊचुः ।।
किमर्थं च स्मृता देव ह्याज्ञापय महाप्रभो ।।
किङ्करान्नः समायातांस्त्रिपुरार्दन कामद ।।२६।।
किं सागराञ्शोषयामो यमं वा सह किंकरैः ।।
हन्मो मृत्युं महामृत्युं विशेषं वृद्धपद्मजम् ।। २७ ।।
बद्ध्वेन्द्रं सह देवैश्च विष्णुं वा पार्षदैः सह।।
आनयामः सुसंकुद्धान्दैत्यान्वा दानवैः सह ।। २८ ।।
कस्याद्य व्यसनं घोरं करिष्यामस्तवाज्ञया ।।
कस्य वाद्योत्सवो देव सर्वकामसमृद्धये ।। २९ ।।
नन्दीश्वर उवाच ।।
इत्याकर्ण्य वचस्तेषां गणानां वीरवादिनाम् ।।

उवाच तान्स प्रशंस्य गणेशान्परमेश्वरः ।।3.7.३०।।
शिव उवाच।।
नन्दीश्वरोयं पुत्रो मे सर्वेषामीश्वरेश्वरः।।
प्रियो गणामग्रणीस्सर्वैः क्रियतां वचनं मम।।३१।।
सर्वे प्रीत्याभिषिञ्चध्वं मद्गणानां गतिम्पतिम् ।।
अद्यप्रभृति युष्माकमयं नन्दीश्वरः प्रभुः ।।३२।।
नन्दीश्वर उवाच ।।
एवमुक्ताः शङ्करेण गणपास्सर्व्वे एव ते ।।
एवमस्त्विवति सम्प्रोच्य सम्भारानाहरँस्ततः ।। ३३ ।।
ततो देवाश्च सेन्द्राश्च नारायणमुखास्तथा ।।
मुनयः सर्वतो लोका आजग्मुर्मुदिताननाः ।। ३४ ।।
पितामहोपि भगवन्नियोगाच्छङ्करस्य वै ।।
चकार नंदिनस्सर्व्वमभिषेकं समाहितः ।। ३५ ।।
ततो विष्णुस्ततश्शक्रो लोकपालास्तथैव च ।।
ऋषयस्तुष्टुवुश्चैव पितामहपुरोगमाः ।। ३६ ।।
स्तुतिमत्सु ततस्तेषु विष्णुः सर्वजगत्पतिः ।।
शिरस्यञ्जलिमाधाय तुष्टाव च समाहितः ।। ३७ ।।
प्राञ्जलिः प्रणतो भूत्वा जयशब्दं चकार च ।।
ततो गणाधिपास्सर्व्वे ततो देवास्ततोऽसुराः ।। ३८ ।।
एवं स्तुतश्चाभिषिक्तो देवैस्स ब्रह्मकैस्तदा ।।
नन्दीश्वरोहं विप्रेन्द्र नियोगात्प रमेशितुः ।। ३९ ।।
उद्वाहश्च कृतस्तत्र नियोगात्परमेष्ठिनः ।।
महोत्सवयुतः प्रीत्या विष्णुब्रह्मादिभिर्मम ।। 3.7.४० ।।
मरुतां च सुता देवी सुयशास्तु मनोहरा ।।
पत्नी सा मेऽभवद्दिव्या मनोनयननन्दिनी ।। ४१ ।।
लब्धं शशिप्रभं छत्रं तया तत्र विभूषितम् ।।
चामरैश्चामरासक्तहस्ताग्रैः स्त्रीगणैर्युतम् ।।४२।।
सिंहासनं च परमं तया चाधिष्ठितं मया।।
अलंकृतो महालक्ष्म्या मुकुटाद्यैस्सुभूषणैः ।।४३।।
लब्धो हारश्च परमो देव्याः कण्ठगतस्तथा ।।
वृषेन्द्रश्च शितो नागस्सिंहस्सिंहध्वजस्तथा ।। ४४ ।।
रथश्च हेमहारश्च चन्द्रबिंबसमः शुभः ।।
अन्यान्यपि च वस्तूनि लब्धानि हि मया मुने ।। ४५।।

एवं कृतविवाहोऽहं तया पत्न्या महामुने ।।
पादौ ववन्दे शम्भोश्च शिवाया ब्रह्मणो हरेः ।।४६।।
तथाविधं त्रिलोकेशस्सपत्नीकं च माम्प्रभुः ।।
प्रोवाच परया प्रीत्या स शिवो भक्तवत्सलः ।।४७।।
ईश्वर उवाच ।।
शृणु सत्पुत्र तातस्त्वं सुयशेयन्तव प्रिया ।।
ददामि ते वरम्प्रीत्या यत्ते मनसि वाञ्छितम् ।।४८।।
सदाहन्तव नन्दीश सन्तुष्टोऽस्मि गणेश्वर ।।
देव्या च सहितो वत्स शृणु मे परमं वचः ।। ४९ ।।
सदेष्टश्च विशिष्टश्च परमैश्वर्य्यसंयुतः।।
महायोगी महेष्वासः स पिता स पितामहः ।। 3.7.५० ।।
अजेयस्सर्वजेता च सदा पूज्यो महाबलः ।।
अहं यत्र भवांस्तत्र यत्र त्वं तत्र चाप्यहम् ।। ५१ ।।
अयं च ते पिता पुत्र परमैश्वर्य्यसंयुतः ।।
भविष्यति गणाध्यक्षो मम भक्तो महाबलः ।।५२।।
पितामहोऽपि ते वत्स तथास्तु नियमा इमे ।।
मत्समीपं गमिष्यन्ति मया दत्तवरास्तथा ।।५३।।
नन्दीश्वर उवाच।।
ततो देवी महाभागा नन्दिनं वरदाब्रवीत्।।
वरं ब्रूहीति माम्पुत्र सर्व्वान्कामान्यथेसितान् ।। ५४ ।।
तच्छ्रुत्वा वचनं देव्याः प्रावोचत्साञ्जलिस्तदा।।
भक्तिर्भवतु मे देवि पादयोस्ते सदा वरा ।। ५५ ।।
श्रुत्वा मम वचो देवी ह्येवमस्त्विवति साब्रवीत्।।
सुयशां ताञ्च सुप्रीत्या नन्दिप्रियतमां शिवाम् ।।५६।।
देव्युवाच ।।
वत्से वरं यथेष्टं हि त्रिनेत्रा जन्मवर्जिता ।।
पुत्रपौत्रैस्तु भक्तिर्मे तथा च भर्तुरेव हि ।। ५७ ।।
नन्द्युवाच ।।
तदा ब्रह्मा च विष्णुश्च सर्व्वे देवगणाश्च वै ।।
ताभ्यां वरान्ददुः प्रीत्या सुप्रसन्नाश्शिवाज्ञया।।५८।।
सान्वयं मां गृहीत्वेशस्ततस्सम्बन्धिबान्धवैः।।
आरुह्य वृषमीशानो गतो देव्या निजं गृहम्।।५९।।
विष्ण्वादयः सुरास्सर्व्वे प्रशंसन्तो ह्यमी तदा।।

स्वधामानि ययुः प्रीत्या संस्तुवन्तः शिवं शिवम् ।। 3.7.६० ।।
इति ते कथितो वत्स स्वावतारो महामुने ।।
सदानन्दकरः पुंसां शिवभक्तिप्रवर्द्धनः ।। ६१ ।।
य इदन्नन्दिनो जन्म वरदानन्तथा मम ।।
अभिषेकं विवाहं च शृणुयाच्छ्रावयेत्तथा ।। ६२ ।।
पठेद्वा पाठयेद्वापि श्रद्धावान्भक्तिसंयुतः ।।
इह सर्व्वसुखम्भुक्त्वा परत्र लभते गतिम् ।।६३।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां नन्दिकेश्वरावताराभिषेकविवाह वर्णनं नाम सप्तमोऽध्यायः।।७।।इति त्रिचत्वारिंशोवतारः ।।४३।।

अथ भैरवावतारमाह ।।
नन्दीश्वर उवाच।।
सनत्कुमार सर्व्वज्ञ शृणु त्वं भैरवीं कथाम् ।।
यस्याः श्रवणमात्रेण शैवी भक्तिर्दृढा भवेत् ।। १ ।।
भैरवः पूर्णरूपो हि शंकरस्य परात्मनः ।।
मूढास्तं वै न जानन्ति मोहिताश्शिवमायया ।।२।।
सनत्कुमार नो वेत्ति महिमानं महेशितुः।।
चतुर्भुजोऽपि विष्णुर्वै चतुर्व्वक्त्रोऽपि वै विधिः ।। ।।३।।
चित्रमत्र न किञ्चिद्वै दुर्ज्ञेया खलु शाम्भवी ।।
तया संमोहितास्सर्वे नार्चयन्त्यपि तम्परम् ।। ४ ।।
वेद चेद्यदि वात्मानं स एव परमेश्वरः ।।
तदा विहन्ति ते सर्व्वे स्वेच्छया न हि केऽपि तम्।।५।।
सर्व्वगोऽपि महेशानो नेक्ष्यते मूढबुद्धिभिः।।
देववद् बुध्यते लोके योऽतीतो मनसां गिराम् ।।६।।
अत्रेतिहासं वक्ष्येऽहं परमर्षे पुरातनम् ।।
शृणु तं श्रद्धया तात परमं ज्ञानकारणम् ।। ७ ।।
मेरुशृङ्गेऽद्भुते रम्ये स्थितम्ब्रह्माणमीश्वरम्।।
जग्मुर्देवर्षयः सर्व्वे सुतत्त्वं ज्ञातुमिच्छया ।।८।।
तत्रागत्य विधिन्नत्वा पप्रच्छुस्ते महादरात् ।।
कृताञ्जलिपुटास्सर्वे नतस्कन्धा मुनीश्वराः ।।९।।
देवर्षय ऊचुः।।
देवदेव प्रजानाथ सृष्टिकृल्लोकनायक ।।
तत्त्वतो वद चास्मभ्यं किमेकं तत्त्वमव्ययम् ।। 3.8.१० ।।
नन्दीश्वर उवाच ।।
स मायया महेशस्य मोहितः पद्मसम्भवः ।।
अविज्ञाय परम्भावं संभावं प्रत्युवाच ह ।।११।।
ब्रह्मोवाच ।।
हे सुरा ऋषयः सर्व्वे सुमत्या शृणुतादरात् ।।
वच्म्यहं परमं तत्त्वमव्ययं वै यथार्थतः ।। १२ ।।
जगद्योनिरहं धाता स्वयम्भूरज ईश्वरः ।।
अनादिभागहं ब्रह्म ह्येक आत्मा निरञ्जनः।।१३।।
प्रवर्तको हि जगतामहमेव निवर्त्तकः ।।
संवर्तको मदधिको नान्यः कश्चित्सुरोत्तमाः ।। १४ ।।

नन्दीश्वर उवाच ।।
तस्यैवं वदतो धातुर्विष्णुस्तत्र स्थितो मुने ।।
प्रोवाच प्रहसन्वाक्यं संक्रुद्धो मोहितोऽजया ।।१५।।
न चैतदुचिता ब्रह्मन्योगयुक्तस्य मूर्खता।।
अविज्ञाय परं तत्त्वं वृथैतत्ते निगद्यते।।१६।।
कर्ता वै सर्वलोकानां परमात्मा परः पुमान्।।
यज्ञो नारायणो देवो मायाधीशः परा गतिः।।१७।।
ममाज्ञया त्वया ब्रह्मन्सृष्टिरेषा विधी यते ।।
जगतां जीवनं नैव मामनादृत्य चेश्वरम् ।।१८।।
एवं त्रिप्रकृतौ मोहात्परस्परजयैषिणौ ।।
प्रोचतुर्निगमांश्चात्र प्रमाणे सर्वथा तनौ ।।१९।।
प्रष्टव्यास्ते विशेषेण स्थिता मूर्तिधराश्च ते ।।
पप्रच्छतुः प्रमाणज्ञानित्युक्त्वा चतुरोऽपि तान्।।3.8.२०।।
विधिविष्णू ऊचतुः।।
वेदाः प्रमाणं सर्व्वत्र प्रतिष्ठा परमामिताः।।
यूयं वदत विश्रब्धं किमेकं तत्त्वमव्ययम्।।२१।।
नन्दीश्वर उवाच।।
इत्याकर्ण्य तयोर्वाचं पुनस्ते हि ऋगादयः।।
अवदंस्तत्त्वतः सर्व्वे संस्मरतो परं प्रभुम्।।२२।।
यदि मान्या वयन्देवौ सृष्टिस्थितिकरौ विभू।।
तदा प्रमाणं वक्ष्यामो भवत्सन्देहभेदकम् ।।२३।।
नन्दीश्वर उवाच।।
श्रुत्युक्तविधिमाकर्ण्य प्रोचतुस्तौ सुरौ श्रुतीः।।
युष्मदुक्तं प्रमाणं नौ किन्तत्त्वं सम्यगुच्यताम्।।२४।।
ऋग्वेद उवाच।।
यदन्तस्स्थानि भूतानि यतस्सर्व्वम्प्रवर्त्तते।।
यदाहुः परमन्तत्त्वं स रुद्रस्त्वेक एव हि ।। २५ ।।
यजुर्वेद उवाच ।।
यो यज्ञैरखिलैरीशो योगेन च समिज्यते ।।
येन प्रमाणं खलु नस्स एकः सर्व्वदृक् छिवः ।।२६।।
सामवेद उवाच ।।
येनेदम्भ्रम्यते विश्वं योगिभिर्यो विचिन्त्यते ।।
यद्भासा भासते विश्वं स एकस्त्र्यम्बकः परः ।।२७।।

अथर्ववेद उवाच ।।
यं प्रपश्यन्ति देवेशम्भक्त्यनुग्रहिणो जनाः ।।
तमाहुरेकं कैवल्यं शंकरं दुःखतः परम् ।। २८ ।।
नन्दीश्वर उवाच ।।
श्रुत्युक्तमिदमाकर्ण्यातीवमायाविमोहितौ ।।
स्मित्वाहतुर्विधिहरी निगमांस्तान्विचेतनौ ।। २९ ।।
विधिहरी ऊचतुः ।।
हे वेदाः किमिदं यूयम्भाषन्ते गतचेतनाः ।।
किञ्जातं वोऽद्य सर्व्वं हि नष्टं सुवयुनं परम् ।। 3.8.३० ।।
कथम्प्रमथनाथोऽसौ रममाणो निरन्तरम् ।।
दिगम्बरः पीतवर्णो शिवया धूलिधूसरः ।। ३१ ।।
विरूपवेषो जटिलो वृषगो व्यालभूषणः ।।
परं ब्रह्मत्वमापन्नः क्व च तत्संगवर्जितम् ।। ३२ ।।
इत्युदीरितमाकर्ण्य प्रणवः सर्वगस्तयोः ।।
अमूर्तो मूर्तिमान्प्रीत्या जृम्भमाण उवाच तौ ।। ३३ ।।
प्रणव उवाच ।।
न हीशो भगवाञ्छक्त्या ह्यात्मनो व्यतिरिक्तया ।।
कदाचिद्रमते रुद्रो लीलारूपधरो हरः ।।३४।।
असौ हि परमेशानस्स्वयंज्योतिस्सनातनः ।।
आनन्दरूपा तस्यैषा शक्तिर्नागन्तुकी शिवा ।। ३५ ।।
नन्दीश्वर उवाच ।।
इत्येवमुक्तोऽपि तदा विधेर्विष्णोश्च वै तदा ।।
नाज्ञानमगमन्नाशं श्रीकण्ठस्यैव मायया ।। ३६ ।।
प्रादुरासीत्ततो ज्योतिरुभयोरन्तरे महत् ।।
पूरयन्निजया भासा द्यावाभूम्योर्यदन्तरम् ।। ३७ ।।
ज्योतिर्मण्डलमध्यस्थो ददृशे पुरुषाकृतिः ।।
विधिक्रतुभ्यां तत्रैव महाद्भुततनुर्मुने ।। ३८ ।।
प्रजज्वालाथ कोपेन ब्रह्मणः पञ्चमं शिरः ।।
आवयोरन्तरे कोऽसौ बिभृयात्पुरुषाकृतिम् ।।३९।।
विधिः संभावयेद्यावत्तावत्स त्रिविलोचनः ।।
दृष्टः क्षणेन च महापुरुषो नीललोहितः ।। 3.8.४० ।।
त्रिशूलपाणिर्भालाक्षो नागोडुपविभूषणः ।।
हिरण्यगर्भस्तं दृष्ट्वा विहसन्प्राह मोहितः ।। ४१६ ।।

ब्रह्मोवाच ।।
नीललोहित जाने त्वां मा भैषीश्चन्द्रशेखर ।।
भालस्थलान्मम पुरा रुद्रः प्रादुरभूद्भवान् ।। ४२ ।।
रोदनाद्रुद्रनामापि योजितोऽसि मया पुरा ।।
मामेव शरणं याहि पुत्र रक्षाङ्करोमि ते ।। ४३ ।।
।। नन्दीश्वर उवाच ।।
अथेश्वरः पद्मयोनेः श्रुत्वा गर्ववतीं गिरम् ।।
चुकोपातीव च तदा कुर्वन्निव लयम्मुने ।। ४४ ।।
स कोपतस्समुत्पाद्य पुरुषं भैरवं क्वचित् ।।
प्रज्वलन्तं सुमहसा प्रीत्या च परमेश्वरः ।।४५।।
ईश्वर उवाच ।।
प्राक्च पंकजजन्मासौ शास्यस्ते कालभैरव ।।
कालवद्राजसे साक्षात्कालराजस्ततो भवान् ।। ४६ ।।
विश्वं भर्तुं समर्थोसि भीषणाद्भैरवः स्मृतः ।।
त्वत्तो भेष्यति कालोऽपि ततस्त्वं कालभैरवः ।। ४७ ।।
आमर्दयिष्यति भवान्रुष्टो दुष्टात्मनो यतः ।।
आमर्दक इति ख्यातिं ततस्सर्वत्र यास्यसि ।।४८।।
यतः पापानि भक्तानां भक्षयिष्यसि तत्क्षणात् ।।
पापभक्षण इत्येव तव नाम भविष्यति ।।४९।।
या मे मुक्तिपुरी काशी सर्व्वाभ्योऽहि गरीयसी ।।
आधिपत्यं च तस्यास्ते कालराज सदैव हि ।।3.8.५०।।
तत्र ये पातकिनरास्तेषां शास्ता त्वमेव हि ।।
शुभाशुभं च तत्कर्म चित्रगुप्तो लिखिष्यति ।।५१।।
नन्दीश्वर उवाच ।।
एतान्वरान्प्रगृह्याथ तत्क्षणात्कालभैरवः ।।
वामांगुलिनखाग्रेण चकर्त च विधेश्शिरः ।। ५२।।
यदंगमपराध्नोति कार्यं तस्यैव शासनम् ।।
अतो येन कृता निन्दा तच्छिन्नम्पञ्चमं शिरः ।।५३।।
अथ च्छिन्नं विधिशिरो दृष्ट्वा भीततरो हरिः ।।
शातरुद्रियमन्त्रैश्च भक्त्या तुष्टाव शङ्करम् ।।५४।।
भीतो हिरण्यगर्भोऽपि जजाप शतरुद्रियम् ।।
इत्थं तौ गतगर्वौ हि संजातौ तत्क्षणान्मुने ।।९९।।
परब्रह्म शिवः साक्षात्सच्चिदानन्दलक्षणः ।।

परमात्मा गुणातीत इति ज्ञानमवापतुः ।। ५६ ।।
सनत्कुमार सर्वज्ञ शृणु मे परमं शुभम् ।।
यावद्गर्वो भवेत्तावज्ज्ञानगुप्तिर्विशेषतः ।। ५७ ।।
त्यक्त्वाभि मानं पुरुषो जानाति परमेश्वरम् ।।
गर्विणं हन्ति विश्वेशो जातो गर्वापहारकः ।।५८।।
अथ विष्णुविधी ज्ञात्वा विगर्वौ परमेश्वरः।।
प्रसन्नोऽभून्महादेवोऽकरोत्तावभयौ प्रभुः ।।५९।।
आश्वास्य तौ महादेवः प्रीतः प्रणतवत्सलः ।।
प्राह स्वां मूर्तिमपरां भैरवन्तं कपर्दिनम् ।।3.8.६०।।
महादेव उवाच ।।
त्वया मान्यो विष्णुरसौ तथा शतधृतिः स्वयम् ।।
कपालम्वैधसम्वापि नीललोहित धारय ।। ।।६१।।
ब्रह्महत्यापनोदाय व्रतं लोकाय दर्शय ।।
चर त्वं सततं भिक्षां कपालव्रतमाश्रितः ।।६२।।
इत्युक्त्वा पश्यतस्तस्य तेजोरूपः शिवोऽब्रवीत् ।।
उत्पाद्य चैकां कन्यान्तु ब्रह्महत्याभिविश्रुताम् ।। ६३ ।।
यावद्वाराणसीन्दिव्याम्पुरीमेषां गमिष्यति ।।
तावत्त्वं भीषणे कालमनुगच्छोग्ररूपिणम् ।। ६४ ।।
सर्वत्र ते प्रवेशोऽस्ति त्यक्त्वा वाराणसीं पुरीम् ।।
वाराणसीं यदा गच्छेत्तन्मुक्तां भव तत्क्षणात् ।। ६५ ।।
नन्दीश्वर उवाच ।।
नियोज्य तामिति तदा ब्रह्महत्यां च ताम्प्रभुः ।।
महाद्भुतश्च स शिवोऽप्यन्तर्धानमगात्ततः ।। ६६ ।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां भैरवावतारवर्णनं नामाष्टमोऽध्यायः ।। ८ ।।

नन्दीश्वर उवाच ।।
सनत्कुमार सर्वज्ञ भैरवीमपरां कथाम् ।।
शृणु प्रीत्या महादोषसंहर्त्रीम्भक्तिवर्द्धिनीम् ।। १ ।।
तत्सान्निध्यं भैरवोऽपि कालोऽभूत्कालकालनः ।।
स देवदेववाक्येन बिभ्रत्कापालिकं व्रतम् ।। २ ।।
कपालपाणिर्विश्वात्मा चचार भुवनत्रयम् ।।
नात्याक्षीच्चापि तं देवं ब्रह्महत्यापि दारुणा ।। ३ ।।
प्रतितीर्थं भ्रमन्वापि विमुक्तो ब्रह्महत्यया ।।
अतः कामारिमहिमा सर्वोपि ह्यवगम्यताम् ।। ४ ।।
प्रमथैः सेव्यमानोऽपि ह्येकदा विहरन्हरः ।।
कापालिको ययौ स्वैरी नारायणनिकेतनम् ।। ५ ।।
अथायान्तं महाकालं त्रिनेत्रं सर्पकुण्डलम् ।।
महादेवांशसम्भूतं पूर्णाकारं च भैरवम् ।। ६ ।।
पपात दण्डवद्भूमौ तं दृष्ट्वा गरुडध्वजः ।।
देवाश्च मुनयश्चैव देवनार्य्यः समन्ततः ।। ७ ।।
अथ विष्णुः प्रणम्यैनं प्रयातः कमलापतिः ।।
शिरस्यञ्जलिमाधाय तुष्टाव विविधैः स्तवः ।। ८ ।।
सानन्दोऽथ हरिः प्राह प्रसन्नात्मा महामुने ।।
क्षीरोदमथनोद्भूतां पद्मां पद्मालयां मुदा ।। ९ ।।
विष्णुरुवाच ।।
प्रिये पश्याब्जनयने धन्यासि सुभगेऽनघे ।।
धन्योऽहं देवि सुश्रोणि यत्पश्यावो जगत्पतिम् ।।3.9.१०।।
अयन्धाता विधाता च लोकानां प्रभुरीश्वरः ।।
अनादिः शरणः शान्तः पुरः षड्विंशसंमितः ।। ११ ।।
सर्वज्ञः सर्वयोगीशस्सर्वभूतैकनायकः ।।
सर्वभूतान्तरात्मायं सर्वेषां सर्वदः सदा ।।१२।।
ये विनिद्रा विनिश्वासाः शान्ता ध्यानपरायणाः ।। ।
धिया पश्यंति हृदये सोयं पद्मे समीक्षताम् ।। १३ ।।
यं विदुर्व्वेदतत्त्वज्ञा योगिनो यतमानसाः ।।
अरूपो रूपवान्भूत्वा सोऽयमायाति सर्वगः ।। १४ ।।
अहो विचित्रं देवस्य चेष्टितम्परमेष्ठिनः ।।
यस्याख्यां ब्रुवतो नित्यं न देहः सोऽपि देहभृत् ।। १५ ।।
तं दृष्ट्वा न पुनर्जन्म लभ्यते मानवैर्भुवि ।।

सोयमायाति भगवांस्त्र्यम्बकश्शशिभूषणः ।।१६।।
पुण्डरीकदलायामे धन्ये मेऽद्य विलोचने ।।
यद्दृश्यते महादेवो ह्याभ्यां लक्ष्मि महेश्वरः ।। १७ ।।
धिग्धिक्पदन्तु देवानां परं दृष्ट्वा न शंकरम् ।।
लभ्यते यत्र निर्वाणं सर्व दुःखान्तकृत्तु यत् ।। १८ ।।
देवत्वादशुभं किञ्चिद्देवलोके न विद्यते ।।
दृष्ट्वापि सर्वे देवेशं यन्मुक्तिन्न लभामहे ।। १९ ।।
एवमुक्त्वा हृषीकेशस्संप्रहृष्टतनूरुहः ।।
प्रणिपत्य महादेवमिदमाह वृषध्वजम् ।। 3.9.२० ।।
विष्णुरुवाच ।।
किमिदन्देवदेवेन सर्वज्ञेन त्वया विभो ।।
क्रियते जगतां धात्रा सर्वपापहराव्यय ।।२१।।
क्रीडेयन्तव देवेश त्रिलोचन महामते ।।
किङ्कारणं विरूपाक्ष चेष्टितन्ते स्मरार्दन ।। २२ ।।
किमर्थं भगवञ्छम्भो भिक्षाञ्चरसि शक्तिप ।।
संशयो मे जगन्नाथ एष त्रैलोक्यराज्यद ।। २३ ।।
।। नन्दीश्वर उवाच ।।
एवमुक्तस्ततः शम्भुर्विष्णुना भैरवो हरः ।।
प्रत्युवाचाद्भुतोतिस्स विष्णुं हि विहसन्प्रभुः ।। २४ ।।
।। भैरव उवाच ।।
ब्रह्मणस्तु शिरश्छिन्नमंगुल्याग्रनखेन ह ।।
तदघम्प्रतिहन्तुं हि चराम्येतद्व्रतं शुभम् ।। २५ ।।
नन्दीश्वर उवाच ।।
एवमुक्तो महेशेन भैरवेण रमापतिः ।।
स्मृत्वा किंचिन्नतशिराः पुनरेवमजिज्ञपत् ।। २६ ।।
।। विष्णुरुवाच ।।
यथेच्छसि तथा क्रीड सर्वविघ्नोपनोदक ।।
मायया मां महादेव नाच्छादयितुमर्हसि ।। २७ ।।
नाभीकमलकोशात्तु कोटिशः कमलासनाः।।
कल्पे कल्पे पुरा ह्यान्सत्यं योगबलाद्विभो।।२८।।
त्यज मायामिमान्देव दुस्तरामकृतात्मभिः ।।
ब्रह्मादयो महादेव मायया तव मोहिताः ।।२९।।
यथावदनुगच्छामि चेष्टितन्ते शिवापते ।।

तवैवानुग्रहाच्छम्भो सर्वेश्वर सतांगते ।। 3.9.३० ।।
संहारकाले संप्राप्ते सदेवान्निखिलान्मुनीन् ।।
लोकान्वर्णाश्रमवतो हरिष्यसि यदा हर ।। ३१ ।।
तदा कृते महादेव पापं ब्रह्मवधादिकम्।।
पारतन्त्र्यं न ते शम्भो स्वैरं क्रीडत्यतो भवान्।।३२।।
अर्घीव ब्रह्मणो ह्यस्थ्नां स्रक्कण्ठे तव भासते।।
तथाद्यनुगता शम्भो ब्रह्महत्या तवानघ।।३३।।
कृत्वापि सुमहत्पापं यस्त्वां स्मरति मानवः ।।
आधारं जगतामीश तस्य पापं विलीयते ।।३४।।
यथा तमो न तिष्ठेत सन्निधावंशुमालिनः ।।
तथैव तव यो भक्तः पापन्तस्य व्रजेत्क्षयम्।।३५।।
यश्चिन्तयति पुण्यात्मा तव पादाम्बुजद्वयम्।।
ब्रह्महत्याकृतमपि पापन्तस्य व्रजेत्क्षयम् ।।३६।।
तव नामानुरक्ता वाग्यस्य पुंसो जगत्पते ।।
अप्यद्रिकूटतुलितं नैनस्तमनुबाधते ।। ३७ ।।
परमात्मन्परन्धाम स्वेच्छाभिधृतविग्रह ।।
कुतूहलं तवेशेदं कृपणाधीनतेश्वर ।। ३८ ।।
अद्य धन्योऽस्मि देवेश यत्र पश्यंति योगिनः ।।
पश्यामि तं जगन्मूर्त्ति परमेश्वरमव्ययम् ।।३९।।
अद्य मे परमो लाभस्त्वद्य मे मंगलं परम् ।।
तं दृष्ट्वामृत तृप्तस्य तृणं स्वर्गापवर्गकम्।। 3.9.४० ।।
इत्थं वदति गोविंदे विमला पद्मया तया।।
मनोरथवती नाम भिक्षा पात्रे समर्पिता।।४१।।
भिक्षाटनाय देवोऽपि निरगात्परया मुदा।।
अन्यत्रापि महादेवो भैरवश्चात्तविग्रहः ।।४२।।
दृष्ट्वानुयायिनीं तान्तु समाहूय जनार्दनः ।।
संप्रार्थयद्ब्रह्महत्यां विमुंच त्वं त्रिशूलिनम् ।। ४३ ।।
।। ब्रह्महत्योवाच ।।
अनेनापि मिषेणाहं संसेव्यामुं वृषध्वजम् ।।
आत्मानम्पावयिष्यामि त्वपुनर्भवदर्शनम् ।। ४४ ।।
नन्दीश्वर उवाच ।।
सा तत्याज न तत्पार्श्वं व्याहृतापि मुरारिणा ।।
तमूचेऽथ हरिं शंभुः स्मेरास्यो भैरवो वचः ।। ४५ ।।

भैरव उवाच ।।
त्वद्वाक्पीयूषपानेन तृप्तोऽस्मि बहुमानद ।।
स्वभावोऽयं हि साधूनां यत्त्वं वदसि मापते ।। ४६ ।।
वरं वृणीष्व गोविंद वरदोऽस्मि तवानघ ।।
अग्रणीर्मम भक्तानां त्वं हरे निर्विकारवान् ।। ४७ ।।
नो माद्यन्ति तथा भैक्ष्यैर्भिक्षवोऽप्यतिसंस्कृतैः।।
यथा मानसुधापानैर्ननु भिक्षाटनज्वराः ।। ४८ ।।
नन्दीश्वर उवाच ।।
इत्याकर्ण्य वचः शंभो भैरवस्य परात्मनः ।।
सुप्रसन्नतरो भूत्वा समवोचन्महेश्वरम् ।। ४९ ।।
विष्णुरुवाच ।।
एष एव वरः श्लाघ्यो यदहं देक्ताधिपम् ।।
पश्यामि त्वान्देवदेव मनोवाणी पथातिगम् ।। ३.१.५० ।।
अदभ्रेयं सुधादृष्टिरनया मे महोत्सवः ।।
अयत्ननिधिलाभोयं वीक्षणं हर ते सताम् ।। ५१ ।।
अवियोगोऽस्तु मे देव त्वदंघ्रियुगलेन वै ।।
एष एव वरः शंभो नान्यं कश्चिद् वृणे वरम् ।। ५२ ।।
श्रीभैरवी उवाच ।।
एवम्भवतु ते तात यत्त्वयोक्तं महामते ।।
सर्वेषामपि देवानां वरदस्त्वं भविष्यसि ।। ५३ ।।
नन्दीश्वर उवाच ।।
अनुगृह्येति दैत्यारि कैंद्राद्रिभुवनेचरम् ।।
भेजे विमुक्तनगरीं नाम्ना वाराणसीं पुरीम् ।। ५४ ।।
क्षेत्रे प्रविष्टमात्रेऽथ भैरवे भीषणाकृतौ ।।
हाहेत्युक्त्वा ब्रह्महत्या पातालं चाविशत्तदा ।। ९५ ।।
कपालं ब्राह्मणः सद्यो भैरवस्य करांबुजात् ।।
पपात भुवि तत्तीर्थमभूत्कापालमोचनम् ।। ५६ ।।
कपालं ब्रह्मणो रुद्रस्सर्वेषामेव पश्यताम् ।।
हस्तात्पतन्तमालोक्य ननर्त परया मुदा ।।५७।।
विधेः कपालं नामुंचत्करमत्यन्तदुस्सहम् ।।
परस्य भ्रमतः क्वापि तत्काश्यां क्षणतोऽपतत् ।। ५८ ।।
शूलिनो ब्रह्मणो हत्या नापैति स्म च या क्वचित् ।।
सा काश्यां क्षणतो नष्टा तस्मात्सेव्या हि काशिका ।। ५९ ।।

कपालमोचनं काश्यां यः स्मरेत्तीर्थमुत्तमम्।।
इहान्यत्रापि यत्पापं क्षिप्रं तस्य प्रणश्यति ।। ३.९.६० ।।
आगत्य तीर्थप्रवरे स्नानं कृत्वा विधानतः ।।
तर्पयित्वा पितृन्देवान्मुच्यते ब्रह्महत्यया ।।६१।।
कपालमोचनं तीर्थं पुरस्कृत्वा तु भैरवः ।।
तत्रैव तस्थौ भक्तानां भक्षयन्नघसन्ततिम् ।।६२।।
कृष्णाष्टम्यान्तु मार्गस्य मासस्य परमेश्वरः ।।
आविर्बभूव सल्लीलो भैरवात्मा सताम्प्रियः ।।६३।।
मार्गशीर्षासिताष्टम्यां कालभैरवसन्निधौ ।।
उपोष्य जागरं कुर्वन्महापापैः प्रमुच्यते ।। ६४ ।।
अन्यत्रापि नरो भक्त्या तद्व्रतं यः करिष्यति ।।
स जागरं महापापैर्मुक्तो यास्यति सद्गतिम् ।। ६५ ।।
अनेकजन्मनियुतैर्यत्कृतं जन्तुभिस्त्वघम् ।।
तत्सर्वं विलयं याति कालभैरवदर्शनात् ।।६६।।
कालभैरवभक्तानां पातकानि करोति यः ।।
स मूढो दुःखितो भूत्वा पुनर्दुर्गतिमाप्नुयात् ।।६७।।
विश्वेश्वरेऽपि ये भक्ता नो भक्ताः कालभैरवे ।।
ते लभन्ते महादुःखं काश्यां चैव विशेषतः ।। ६८ ।।
वाराणस्यामुषित्वा यो भैरवं न भजेन्नरः ।।
तस्य पापानि वर्द्धन्ते शुक्लपक्षे यथा शशी ।। ६९ ।।
कालराजं न यः काश्यां प्रतिभूताष्टमीकुजम् ।।
भजेत्तस्य क्षयं पुण्यं कृष्णपक्षे यथा शशी।। ३.९.७० ।।
श्रुत्वाख्यानमिदम्पुण्यम्ब्रह्महत्यापनोदकम् ।।
भैरवोत्पत्तिसंज्ञं च सर्वपापैः प्रमुच्यते ।। ७१ ।।
बन्धनागारसंस्थोऽपि प्राप्तोऽपि विपदम्पराम् ।।
प्रादुर्भावं भैरवस्य श्रुत्वा मुच्येत सङ्कटात्।।७२।।
इति श्रीशिवमहापुराणे तृतीयायांशत रुद्रसंहितायां भैरवावतारलीलावर्णनं नाम नवमोऽध्यायः ।।९।।

नंदीश्वर उवाच ।।
विध्वंसी दक्षयज्ञस्य वीरभद्राह्वयः प्रभो ।।
अवतारश्च विज्ञेयः शिवस्य परमात्मनः ।।१।।
सतीचरित्रे कथितं चरितं तस्य कृत्स्नशः ।।
श्रुतं त्वयापि बहुधा नातः प्रोक्तं सुविस्तरात्।।२।।
अतः परं मुनिश्रेष्ठ भवत्स्नेहाद्ब्रवीमि तत्।।
शार्दूलाख्यावतारं च शङ्करस्य प्रभोः शृणु।।३।।
सदाशिवेन देवानां हितार्थं रूपमद्भुतम्।।
शारभं च धृतन्दिव्यं ज्वलज्ज्वालासमप्रभम् ।।४।।
शिवावतारा अमिता सद्भक्तहितकारकाः ।।
सङ्ख्या न शक्यते कर्तुं तेषां च मुनिसत्तमाः ।।५।।
आकाशस्य च ताराणां रेणुकानां क्षितेस्तथा ।।
आसाराणां च वृद्धेन बहुकल्पैः कदापि हि ।।६।।
सङ्ख्या विशक्यते कर्तुं सुप्राज्ञैर्बहुजन्मभिः ।।
शिवावताराणां नैव सत्यं जानीहि मद्वचः ।। ७।।
तथापि च यथाबुद्ध्या कथयामि कथाश्रुतम्।।
चरित्रं शारभं दिव्यं परमैश्वर्य्यसूचकम् ।। ८ ।।
जयश्च विजयश्चैव भवद्भिः शापितौ यदा ।।
तदा दितिसुतौ द्वौ तावभूतां कश्यपान्मुने ।। ९ ।।
हिरण्यकशिपुश्चाद्यो हिरण्याक्षोऽनुजो बली ।।
देवर्षिपार्षदौ जातौ तौ द्वावपि दितेस्सुतौ ।। 3.10.१० ।।
पृथ्व्युद्धारे विधात्रा व प्रार्थितो हि पुरा प्रभुः ।।
हिरण्याक्षं जघानासौ विष्णुर्वाराहरूपधृक् ।।१ १।।
तं श्रुत्वा भ्रातरं वीरं निहतं प्राणसन्निभम् ।।
चुकोप हरयेऽतीव हिरण्यकशिपुर्मुने ।। १२ ।।
वर्षाणामयुतं तप्त्वा ब्रह्मणो वरमाप सः ।।
न कश्चिन्मारयेन्मां वै त्वत्सृष्टाविति तुष्टतः ।। १३ ।।
शोणिताख्यपुरं गत्वा देवानाहूय सर्वतः ।।
त्रिलोकीं स्ववशे कृत्वा चक्रे राज्यमकण्टकम् ।। १४ ।।
देवर्षिकदनं चक्रे सर्वधर्म विलोपकः ।।
द्विजपीडाकरः पापी हिरण्यकशिपुर्मुने ।। १५ ।।
प्रह्लादेन स्वपुत्रेण हरिभक्तेन दैत्यराट् ।।
यदा विद्वेषमकरोद्धरिर्वैरं विशेषतः ।। १६ ।।

सभास्तम्भात्तदा विष्णुरभूदाविर्द्रुतम्मुने ।।
सन्ध्यायां क्रोधमापन्नो नृसिंहवपुषा ततः ।। १७ ।।
सर्वथा मुनिशार्दूल करालं नृहरेर्व्वपुः ।।
प्रजज्वालातिभयदं त्रासयन्दैत्यसत्तमान् ।। १८ ।।
नृसिंहेन तदा दैत्या निहताश्चैव तत्क्षणम् ।।
हिरण्यकशिपुश्चाथ युद्धञ्चक्रे सुदारुणम् ।। १९ ।।
महायुद्धं तयोरासीन्मुहूर्त्तम्मुनिसत्तमाः ।।
विकरालं च भयदं सर्वेषां रोमहर्षणम् ।। 3.10.२० ।।
सायं चकर्ष देवेशो देहल्यां दैत्यपुङ्गवम् ।।
व्योम्नि देवेषु पश्यत्सु नृसिंहश्च रमेश्वरः ।। २१ ।।
अथोत्संगे च तं कृत्वा नखैस्तदुदरन्द्रुतम् ।।
विदार्य मारयामास पश्यतां त्रिदिवौकसाम् ।। २२ ।।
हते हिरण्यकशिपौ नृसिंहे नैव विष्णुना।।
जगत्स्वास्थ्यन्तदा लेभे न वै देवाविशेषतः ।।२३।।
देवदुन्दुभयो नेदुः प्रह्लादो विस्मयं गतः।।
लक्ष्मीश्च विस्मयं प्राप्ता रूपं दृष्ट्वाऽद्भुतं हरेः ।।२४।।
हतो यद्यपि दैत्येन्द्रस्तथापि न पुरं सुखम् ।।
ययुर्देवा नृसिंहस्य ज्वाला सा न निवर्तिता ।। २५ ।।
तया च व्याकुलं जातं सर्वं चैव जगत्पुनः ।।
देवाश्च दुःखमापन्नाः किम्भविष्यति वा पुनः ।।२६।।
इत्येवं च वदन्तस्ते भयाद्दूरमुपस्थि ताः ।।
नृसिंहक्रोधजज्वालाव्याकुलाः पद्मभूमुखाः ।। २७ ।।
प्रह्लादं प्रेषयामासुस्तच्छान्त्यै निकटं हरेः ।।
सर्वान्मिलित्वा प्रह्लादः प्रार्थितो गतवांस्तदा ।।२८।।
उरसाऽऽलिंगयामास तं नृसिंहः कृपानिधिः ।।
हृदयं शीतलं जातं रुड्ज्वाला न निवर्त्तिता ।। २९ ।।
तथापि न निवृता रुड्ज्वाला नरहरेर्यदा ।।
इष्टं प्राप्तास्ततो देवाश्शंकर शरणं ययुः ।। 3.10.३० ।।
तत्र गत्वा सुरास्सर्वे ब्रह्माद्या मुनय स्तथा ।।
शंकरं स्तवयामासुर्लोकानां सुखहेतवे ।। ३१ ।।
देवा ऊचुः ।।
देवदेव महादेव शरणागतवत्सल ।।
पाहि नः शरणापन्ना न्सर्वान्देवाञ्जगन्ति च ।। ३२ ।।

नमस्तेऽस्तु नमस्तेऽस्तु नमस्तेऽस्तु सदाशिव ।।
पूर्वं दुःखं यदा जातं तदा ते रक्षिता वयम् ।।३३।।
समुद्रो मथितश्चैव रत्नानां च विभागशः ।।
कृते देवैस्तदा शंभो गृहीतं गरलन्त्वया ।। ३४ ।।
रक्षिताः स्म तदा नाथ नीलकण्ठ इति श्रुतः ।।
विषं पास्यसि नो चेत्त्वं भस्मीभूतास्तदाखिलाः ।। ३५ ।।
प्रसिद्धं च यदा यस्य दुःखं च जायते प्रभो ।।
तदा त्वन्नाममात्रेण सर्वदुःखं विलीयते ।। ३६ ।।
इदानीं नृहरिज्वालापीडितान्नस्सदाशिव ।।
तां त्वं शमयितुं देव शक्तोऽसीति सुनिश्चितम् ।। ३७ ।।
नन्दीश्वर उवाच ।।
इति स्तुतस्तदा देवैश्शंकरो भक्तवत्सलः ।।
प्रत्युवाच प्रसन्नात्माऽभयन्दत्त्वा परप्रभुः ।। ३८ ।।
शंकर उवाच ।।
स्वस्थानं गच्छत सुरास्सर्व्वे ब्रह्मादयोऽभयाः ।।
शमयिष्यामि यद्दुःखं सर्वथा हि व्रतम्मम ।। ३९ ।।
गतो मच्छरणं यस्तु तस्य दुःखं क्षयं गतम् ।।
मत्प्रियः शरणापन्नः प्राणेभ्योऽपि न संशयः ।।3.10.४०।।
नन्दीश्वर उवाच।।
इति श्रुत्वा तदा देवा ह्यानन्दम्परमं गताः ।।
यथागतं तथा जग्मुस्स्मरन्तश्शंकरं मुदा ।। ४१ ।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां शार्दूलावतारे नृसिंहचरितवर्णनं नाम दशमोऽध्यायः ।। १० ।।

नंदीश्वर उवाच ।।
एवमभ्यर्थितो देवैर्मतिं चक्रे कृपा लयः ।।
महातेजो नृसिंहाख्यं संहर्त्तुं परमेश्वरः ।। १ ।।
तदूर्द्ध्वं स्मृतवान्रुद्रो वीरभद्रम्महाबलम् ।।
आत्मनो भैरवं रूपं प्राह प्रलयकारकम् ।। २ ।।
आजगाम ततस्सद्यो गणानामग्रणीर्हसन् ।।
साट्टहासैर्गणवरैरुत्पतद्भिरितस्ततः ।। ३ ।।
नृसिंहरूपैरत्युग्रैः कोटिभिः परिवारितः ।।
माद्यद्भिरभितो वीरैर्नृत्यद्भिश्च मुदान्वितैः ।। ४ ।।
क्रीडद्भिश्च महावीरैर्ब्रह्माद्यैः कन्दुकैरिव ।।
अदृष्टपूर्वैरन्यैश्च वेष्टितो वीरवन्दितः ।।५।।
कल्पान्तज्वलनज्वालो विलसल्लोचनत्रयः ।।
अशस्त्रो हि जटाजूटी ज्वलद्बालेन्दुमण्डितः ।।६।।
बालेन्दुवलया कारतीक्ष्णदंष्ट्रांकुरद्वयः ।।
आखण्डलधनुःखण्डसंनिभभ्रूलतान्वितः ।।७।।
महाप्रचण्डहुङ्कारबधिरीकृतदिङ्मुखः ।।
नीलमेघाञ्जन श्यामो भीषणः श्मश्रुलोद्भुतः ।। ८ ।।
वाद्यखण्डमखण्डाभ्यां भ्रामयंस्त्रिशिखं मुहुः ।।
वीरभद्रोऽपि भगवान्वरशक्तिविजृम्भितः ।। ९ ।।
स्वयं विज्ञापयामास किमत्र स्मृतिकारणम् ।।
आज्ञापय जगत्स्वामिन् प्रसादः क्रियताम्मयि ।। 3.11.१० ।।
नन्दीश्वर उवाच ।।
इत्याकर्ण्य महेशानो वीरभद्रोक्तमादरात् ।।
विलोक्य वचनम्प्रीत्या प्रोवाच खल दण्डधृक् ।। ११ ।।
।। शंकर उवाच ।।
अकाले भयमुत्पन्नं देवानामपि भैरवम् ।।
ज्वलितस्य नृसिंहाग्निश्शमयैनं दुरासदम् ।।१२।।
सान्त्वयन्बोधयादौ तं तेन किन्नोपशाम्यति ।।
ततो मत्परमं भावं भैरवं सम्प्रदर्शय ।। १३ ।।
सूक्ष्मं संहृत्य सूक्ष्मेण स्थूलं स्थूलेन तेजसा ।।
वक्त्रमानाय कृत्तिं च वीरभद्र ममाज्ञया ।। १४ ।।
नन्दीश्वर उवाच ।।
इत्यादिष्टो गणाध्यक्षो प्रशान्तं वपुरास्थितः।।

जगाम रंहसा तत्र यत्रास्ते नरकेसरी ।। १५ ।।
ततस्तम्बोधयामास वीरभद्रो हरो हरिम् ।।
उवाच वाक्यमीशानः पितापुत्रमिवौरसम् ।। १६ ।।
वीरभद्र उवाच ।।
जगत्सुखाय भगवन्नवतीर्णोसि माधव ।।
स्थित्यर्थं त्वं प्रयुक्तोऽसि परेशः परमेष्ठिना ।।१७।।
जन्तुचक्रं भगवता प्रच्छिन्नं मत्स्यरूपिणा ।।
पुच्छेनैव समाबध्य भ्रमन्नेकार्णवे पुरा।।१८।।
बिभर्षि कर्मरूपेण वाराहेणोद्धृता मही ।।
अनेन हरिरूपेण हिरण्यकशिपुर्हतः ।।१९।।
वामनेन बलिर्बद्धस्त्वया विक्रमता पुनः ।।
त्वमेव सर्व्वभूतानां प्रभवः प्रभुरव्ययः ।।3.11.२०।।
यदायदा हि लोकस्य दुःखं किञ्चित्प्रजायते ।।
तदातदावतीर्णस्त्वं करिष्यसि निरामयम्।।२१।।
नाधिकस्त्वत्समोऽप्यस्ति हरे शिवपरायणः ।।
त्वया वेदाश्च धर्माश्च शुभमार्गे प्रतिष्ठिताः ।।२२।।
यदर्थमवतारोऽयं निहतस्स हि दानवः ।।
हिरण्यकशिपुश्चैव प्रह्लादोऽपि सुरक्षितः ।।२३।।
अतीव घोरं भगवन्नरसिंहवपुस्तव ।।
उपसंहर विश्वात्मंस्त्वमेव मम सन्निधौ ।।२४।।
नन्दीश्वर उवाच ।।
इत्युक्तो वीरभद्रेण नृसिंहः शान्तया गिरा ।।
ततोऽधिकं महाघोरं कोपञ्चक्रे महामदः ।। २५ ।।
उवाच च महाघोरं कठिनं वचनन्तदा ।।
वीरभद्रम्महावीरं दंष्ट्राभिर्भीषयन्मुने ।। २६ ।।
नृसिंह उवाच ।।
आगतोसि यतस्तत्र गच्छ त्वम्मा हितं वद ।।
इदानीं संहरिष्यामि जगदेतच्चराचरम् ।। २७ ।।
संहर्तुर्न हि संहारः स्वतो वा परतोऽपि वा ।।
शासितम्मम सर्व्वत्र शास्ता कोऽपि न विद्यते ।।२८।।
मत्प्रसादेन सकलमभयं हि प्रवर्त्तते ।।
अहं हि सर्वशक्तीनां प्रवर्तकनिवर्तकः ।। २९ ।।
यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।।

तत्तद्विद्धि गणाध्यक्ष मम तेजोविजृम्भितम् ।। 3.11.३० ।।
देवतापरमार्थज्ञं मामेव परमम्विदुः ।।
मदंशाश्शक्तिसम्पन्ना ब्रह्मशक्रादयस्सुराः ।।३१।।
मन्नाभिकमलाज्जातः पुरा ब्रह्मा जगत्करः ।।
सर्वाधिकस्स्वतन्त्रश्च कर्ता हर्ताखिलेश्वरः ।।३२।।
इदन्तु मत्परं तेजः किं पुनः श्रोतुमिच्छसि ।।
अतो मां शरणम्प्राप्य गच्छ त्वं विगतज्वरः ।। ३३ ।।
अवेहि परमं भावमिदम्भूतं गणेश्वर ।।
मामकं सकलं विश्वं सदेवासुरमानुषम् ।।३४।।
कालोऽस्म्यहं लोकविनाशहेतुर्लोकान्समाहर्तुमहम्प्रवृत्तः ।।
मृत्योर्मृत्युं विद्धि मां वीरभद्र जीवन्त्येते मत्प्रसादेन देवाः ।३५।।
नन्दीश्वर उवाच ।। ।।
साहङ्कारं वचः श्रुत्वा हरेरमितविक्रमः ।।
विहस्योवाच सावज्ञन्ततो विस्फुरिताधरः ।। ३६ ।
वीरभद्र उवाच ।।
किन्न जानासि विश्वेशं संहर्तारम्पिनाकिनम् ।।
असद्वादो विवादश्च विनाशस्त्वयि केवलः ।। ३७ ।।
तवान्योन्यावताराणि कानि शेषाणि साम्प्रतम् ।।
कृतानि येन केनैव कथाशेषो भविष्यति ।। ३८ ।।
दोषं तं वद येन त्वमवस्थामीदृशी गतः ।।
तेन संहारदक्षेण दक्षिणाशेषमेष्यसि ।।३९ ।।
प्रकृतिस्त्वं पुमान्रुद्रस्त्वयि वीर्य्यं समाहितम् ।।
त्वन्नाभिपङ्कजाज्जातः पञ्च वक्त्रः पितामहः ।। 3.11.४० ।।
जगत्त्रयीसर्जनार्थं शंकरं नीललोहितम् ।।
ललाटेऽचिन्तयत्सोयन्तपस्युग्रे च संस्थितः ।। ४१ ।।
तल्ललाटादभूच्छम्भुः सृष्ट्यर्थे तेन भूषणम् ।।
अतोऽहं देवदेवस्य तस्य भैरवरूपिणः ।। ४२ ।।
त्वत्संहारे नियुक्तोऽस्मि विनयेन बलेन च ।।
देवदेवेन रुद्रेण सकलप्रभुणा हरे ।। ४३ ।।
एकं रक्षो विदार्यैव तच्छक्तिकलया युतः ।।
अहंकारावलेपेन गर्जसि त्वमतन्द्रितः ।। ४४ ।।
उपकारो हि साधूनां सुखाय किल संमतः ।।
उपकारो ह्यसाधूनामपकाराय केवलम् ।। ४५ ।।

यन्नृसिंह महेशानं पुनर्भूतं तु मन्यसे ।।
तर्ह्यज्ञानी महागर्वी विकारी सर्वथा भवान् ।। ४६ ।।
न त्वं स्रष्टा न संहर्ता भर्तापि न नृसिंहक ।।
परतन्त्रो विमूढात्मा न स्वतन्त्रो हि कुत्रचित् ।। ४७ ।।
कुलालचक्रवच्छक्त्या प्रेरितोसि पिनाकिना ।।
नानावतारकर्ता त्वं तदधीनस्सदा हरे ।। ४८ ।।
अद्यापि तव निक्षिप्तं कपालं कूर्मरूपिणः ।।
हर हारलतामध्ये दग्धः कश्चिन्न बध्यते ।। ४९ ।।
विस्मृतिः किं तदंशेन दंष्ट्रोत्पातनपीडितम् ।।
वाराहविघ्नहस्तेऽद्य याक्रोशन्तारकारिणा ।। 3.11.५० ।।
दग्धोसि पश्य शूलाग्रे विष्वक्सेनच्छलाद्भवान् ।।
दक्षयज्ञे शिरश्छिन्नं मया तेजःस्वरूपिणा ।। ५१ ।।
अद्यापि तव पुत्रस्य ब्रह्मणः पञ्चमं शिरः ।।
छिन्नं न सज्जितं भूयो हरे तद्विस्मृतन्त्वया ।।५२।।
निर्जितस्त्वं दधीचेन संग्रामे समरुद्गणः ।।
कण्डूयमाने शिरसि कथं तद्विस्मृतन्त्वया ।। ५३ ।।
चक्रं विक्रमतो यस्य चक्रपाणे तव प्रियम् ।।
कुतः प्राप्तं कृतं केन त्वया तदपि विस्मृतम् ।। ५४ ।।
ये मया सकला लोका गृहीतास्त्वं पयोनिधौ ।।
निद्रापरवशश्शेषे स कथं सात्त्विको भवान् ।।५५।।
त्वदादिस्तम्बपर्यन्तं रुद्रशक्तिविजृम्भितम् ।।
शक्तिमानभितस्त्वं च ह्यनलात्त्वं विमोहितः ।।५६।।
तत्तेजसो हि माहात्म्यं पुमान्द्र ष्टुन्न हि क्षमः ।।
अस्थूला ये प्रपश्यन्ति तद्विष्णोः परमम्पदम् ।।५७।।
द्यावापृथिव्या इन्द्राग्नेर्यमस्य वरुणस्य च ।।
ध्वान्तोदरे शशांके च जनित्वा परमेश्वरः ।। ५८ ।।
कालोसि त्वं महाकालः कालकालो महेश्वर ।।
अतस्त्वमुग्रकलया मृत्योर्मृत्युर्भविष्यसि ।। ५९ ।।
स्थिरोद्य त्वक्षरो वीरो वीरो विश्वावकः प्रभुः ।।
उपहन्ता ज्वरं भीमो मृगः पक्षी हिरण्मयः ।। 3.11.६० ।।
शास्ता शेषस्य जगतस्तत्त्वं नैव चतुर्मुखः ।।
नान्ये च केवलं शम्भुस्सर्वशास्ता न संशयः ।६१।।
इत्थं सर्वं समालोक्य संहारात्मानमात्मना ।।

न विनष्टन्त्वमात्मानं कुरु हे नृहरेऽबुध ।।६२।।
नो चेदिदानीं क्रोधस्य महाभैरवरूपिणः ।।
वज्राशनिरिव स्थाणौ त्वयि मृत्युः पतिष्यति ।। ६३ ।।
नन्दीश्वर उवाच।।
इत्युक्त्वा वीरभद्रोपि विररामाकुतोभयः ।।
दृष्ट्वा नृसिंहाभिप्रायं क्रोधमूर्त्तिश्शिवस्य सः ।। ६४ ।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां शरभावतारवर्णनं नामैकादशोऽध्यायः ।। ११ ।।

सनत्कुमार उवाच ।।
नन्दीश्वर महाप्राज्ञ विज्ञातन्तदनन्तरम् ।।
ममोपरि कृपां कृत्वा प्रीत्या त्वन्तद्वदाधुना ।। १।।
नन्दीश्वर उवाच।।
इत्युक्तो वीरभद्रेण नृसिंहः क्रोधविह्वलः ।।
निनदन्ननु वेगेन तं ग्रहीतुम्प्रचक्रमे ।।२।।
अत्रान्तरे महाघोरं प्रत्यक्षभयकारणम् ।।
गगनव्यापि दुर्धर्षं शैवतेजस्समुद्भवम् ।।३।।
वीरभद्रस्य तद्रूमदृश्यन्तु ततः क्षणात् ।।
तद्वै हिरण्मयं सौम्यं न सौरन्नाग्निसम्भवम् ।।४।।
न तडिच्चन्द्रसदृशमनौपम्यम्महेश्वरम् ।।
तदा तेजांसि सर्वाणि तस्मिँल्लीनानि शंकरे ।।५।।
न तद्व्योम महत्तेजो व्यक्तान्तश्चाभवत्ततः ।।
रुद्रसाधारणं चैव चिह्नितं विकृताकृति ।।६।।
ततस्संहाररूपेण सुव्यक्तं परमेश्वरः ।।
पश्यतां सर्वदेवानां जयशब्दादिमंगलैः ।।७।।
सहस्रबाहुर्जटिलश्चन्द्रार्द्धकृतशेखरः ।।
समृद्धोग्रशरीरेण पक्षाभ्याञ्चञ्चुना द्विजः ।।८।।
अतितीक्ष्णो महादंष्ट्रो वज्रतुल्यनखायुधः ।।
कण्ठे कालो महाबाहुश्चतुष्पाद्वह्निसन्निभः ।।९।।
युगान्तोद्यतजीमूतभीमगम्भीरनिस्वनः।।
महाकुपितकृत्याग्निव्यावृत्तनयनत्रयः।।3.12.१०।।
स्पष्टदंष्ट्राधरोष्ठश्च हुंकारसंयुतो हरः ।।
ईदृग्विधस्वरूपश्च ह्युग्र आविर्बभूव ह ।।११।।
अरिस्तद्दर्शनादेव विनष्टबलविक्रमः ।।
बिभ्रद्धाम सहस्रांशोरधः खद्योतविभ्रमम् ।। १२ ।।
अथ विभ्रम्य पक्षाभ्यां नाभिपादान्विदारयन् ।।
पादान्बबंध पुच्छेन बाहुभ्याम्बाहु मण्डलम् ।।१३।।
भिन्दन्नुरसि बाहुभ्यान्निजग्राह हरो हरिम् ।।
ततो जगाम गगनन्देवैस्सह महर्षिभिः ।।१४।।
सहसैवाभयाद्विष्णुं स हि श्येन इवोरगम् ।।
उत्क्षिप्योत्क्षिप्य संगृह्य निपात्य च निपात्य च ।। १५ ।।
उड्डीयोड्डीय भगवान्पक्षघातविमोहितम् ।।

हरीं हरस्तं वृषभं विवेशानन्त ईश्वरः ।।१६।।
अनुयान्तं सुरास्सर्वे नमोवाक्येन तुष्टुवुः ।।
प्रणेमुस्सादरं प्रीत्या ब्रह्माद्याश्च मुनीश्वराः ।। १७ ।।
नीयमानः परवशो दीनवक्त्रः कृताञ्जलिः ।।
तुष्टाव परमेशानं हरिस्तं ललिताक्षरैः ।। १८ ।।
नाम्नामष्टशतेनैव स्तुत्वा ताम्मृडमेव च ।।
पुनश्च प्रार्थयामास नृसिंहः शरभेश्वरम् ।। १९।।
यदायदा ममाज्ञेयं मतिस्स्याद्गर्वदूषिता ।।
तदातदाऽपनेतव्या त्वयैव परमेश्वर ।।3.12.२०।। ।।
नन्दीश्वर उवाच।।
एवं विज्ञापयन्प्रीत्या शङ्करं नरकेसरी।।
नत्वाऽशक्तोऽभवद्विष्णु जीवितान्त पराजितः ।।२१।।
तद्वक्त्रं शेषगात्रान्तं कृत्वा सर्वस्वविग्रहम्।।
शक्तियुक्तं तदीयांगं वीरभद्रः क्षणात्ततः ।।२२।।
नन्दीश्वर उवाच।।
अथ ब्रह्मादयो देवाश्शारभं रूपमास्थितम्।।
तुष्टुवुः शंकरं देवं सर्वलोकैकशंकरम् ।।२३।।
।। देवा ऊचुः ।।
ब्रह्मविष्ण्विन्द्रचन्द्रादिसुराः सर्वे महर्षयः ।।
दितिजाद्याः सम्प्रसूतास्त्वत्तस्सर्वे महेश्वर ।।२४।।
ब्रह्मविष्णुमहेन्द्राश्च सूर्याद्यानसुरान्सुराम् ।।
त्वं वै सृजसि पास्यत्सि त्वमेव सकलेश्वरः ।।२५।।
यतो हरसि संसारं हर इत्युच्यते बुधैः।।
निगृहीतो हरिर्यस्माद्धर इत्युच्यते बुधैः।।२६।।
यतो बिभर्षि सकलं विभज्य तनुमष्टधा।।
अतोऽस्मान्पाहि भगवन् सुरादानैरभीप्सितैः।।२७।।
त्वं महापुरुषः शम्भुः सर्वेशस्सुरनायकः ।।
निःस्वात्मा निर्विकारात्मा परब्रह्म सतां गतिः।।२८।।
दीनबन्धुर्दया सिन्धुऽरद्भुतोतिः परात्मदृक्।।
प्राज्ञो विराट्विभुस्सत्यः सच्चिदानन्दलक्षणः।।२९।।
।। नन्दीश्वर उवाच ।।
इत्याकर्ण्य वचः शम्भुर्देवानां परमेश्वरः ।।
उवाच तान् सुरान्देवमहर्षींश्च पुरातनान् ।। 3.12.३० ।।

यथा जलं जले क्षिप्तं क्षीरे क्षीरं घृते घृतम् ।।
एक एव तदा विष्णुः शिवे लीनो न चान्यथा ।। ३१ ।।
एको विष्णुर्नृसिंहात्मा सदर्पश्च महाबलः ।।
जगत्संहारकरणे प्रवृत्तो नरकेसरी ।। ३२ ।।
प्रार्थनीयो नमस्तस्मै मद्भक्तैस्सिद्धिकारिभिः ।।
मद्भक्तप्रवरश्चैव मद्भक्तवर दायकः ।। ३३ ।।
नन्दीश्वर उवाच ।।
एतावदुक्त्वा भगवान् पक्षिराजो महाबलः ।।
पश्यतां सर्वदेवानान्तत्रैवान्तरधीयत ।। ३४ ।।
वीरभद्रोऽपि भगवान्गणाध्यक्षो महाबलः ।।
नृसिंहकृत्तिं निष्कृष्य समादाय ययौ गिरिम् ।। ३५ ।।
नृसिंहकृत्तिवसनस्तदाप्रभृति शंकरः ।।
तद्वक्त्रं मुण्डमालायां नायकत्वेन कल्पितम् ।। ३६ ।।
ततो देवा निरातङ्का कीर्त्तयन्तः कथामिमाम् ।।
विस्मयोत्फुल्लनयना जग्मुः सर्वे यथागतम् ।। ३७ ।।
य इदम्परमाख्यानं पुण्यं वेदरसान्वितम् ।।
पठति शृणुयाच्चैव सर्व्वान्कामानवाप्नुयात् ।। ३८ ।।
धन्यं यशस्यमायुष्यमारोग्यम्पुष्टिवर्द्धनम् ।।
सर्वविघ्नप्रशमनं सर्वव्याधिविनाशनम् ।। ३९ ।।
दुःखप्रशमनं वाञ्छासिद्धिदं मंगलालयम् ।।
अपमृत्युहरं बुद्धिप्रदं शत्रुविनाशनम् ।।3.12.४०।।
इदन्तु शरभाकारं परं रूपम्पिनाकिनः ।।
प्रकाशनीयं भक्तेषु शंकरस्य चरेषु वै ।। ४१ ।।
तैरेव पठितव्यं च श्रोतव्यं च शिवात्मभिः ।।
नवधा भक्तिदं दिव्यमन्तःकरणबुद्धिदम् ।।४२।।
शिवोत्सवेषु सर्वेषु चतुर्दश्यष्टमीषु च ।।
पठेत्प्रतिष्ठाकाले तु शिवसन्निधिकारणम् ।। ४३ ।।
चौरव्याघ्रनृसिंहात्मकृत राजभयेषु च ।।
अन्येषूत्पातभूकम्पदस्य्वादिपांसुवृष्टिषु ।। ४४ ।।
उल्कापाते महावाते विनावृष्ट्यतिवृष्टिषु ।।
पठेद्यः प्रयतो विद्वाञ् शिवभक्तो दृढव्रतः ।। ४५ ।।
यः पठेच्छृणुयाद्वापि निष्कामो व्रतमैश्वरम् ।।
रुद्रलोकं समासाद्य रुद्रस्यानुचरो भवेत् ।। ४६ ।।

रुद्रलोकमनुप्राप्य रुद्रेण सह मोदते ।।
ततस्सायुज्यमाप्नोति शिवस्य कृपया मुने ।। ४७ ।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां शरभावतारवर्णनं नाम द्वादशोऽध्यायः ।। १२ ।।

( अथ गृहपत्यवतारकथा ।।)

नन्दीश्वर उवाच ।।

शृणु ब्रह्मसुत प्रीत्या चरितं शशिमौलिनः ।।

सोऽवतीर्णो यथा प्रीत्या विश्वानरगृहे शिवः ।। १ ।।

नाम्ना गृहपतिः सोऽभूदग्निलोकपतिर्मुने ।।

अग्निरूपस्तेजसश्च सर्व्वात्मा परमः प्रभुः ।। २ ।।

नर्मदायास्तटे रम्ये पुरे नर्मपुरे पुरा ।।

पुरारिभक्तः पुण्यात्मा भवद्विश्वानरो मुनिः ।। ३ ।।

ब्रह्मचर्य्याश्रमे निष्ठो ब्रह्मयज्ञरतस्सदा ।।

शाण्डिल्यगोत्रः शुचिमान्ब्रह्मतेजो निधिर्व्वशी ।। ४ ।।

विज्ञाताखिलशास्त्रार्थस्सदाचाररतस्सदा ।।

शैवाचारप्रवीणोऽति लौकिकाचारविद्वरः ।। ५ ।।

चित्ते विचार्य्य गृहिणीगुणान्विश्वानरः शुभान् ।।

उदुवाह विधानेन स्वोचितां कालकन्यकाम् ।। ६ ।।

अग्निशुश्रूषणरतः पञ्चयज्ञपरायणः ।।

षट्कर्मनिरतो नित्यं देवपित्रतिथिप्रियः ।। ७ ।।

एवम्बहुतिथे काले गते तस्याग्रजन्मनः ।।

भार्य्या शुचिष्मती नाम भर्तारम्प्राह सुव्रता ।। ८ ।।

नाथ भोगा मया सर्वे भुक्ता वै त्वत्प्रसादतः ।।

स्त्रीणां समुचिता ये स्युस्त्वां समेत्य मुदावहाः ।। ९ ।।

एवम्मे प्रार्थितन्नाथ चिराय हृदि संस्थितम् ।।

गृहस्थानां समुचितं त्वमेतद्दातुमर्हसि ।। 3.13.१० ।।

विश्वानर उवाच ।।।

किमदेयं हि सुश्रोणि तव प्रियहितैषिणी ।।

तत्प्रार्थय महाभागे प्रयच्छाम्यविलम्बितम् ।। ११ ।।

महेशितुः प्रसादेन मम किञ्चिन्न दुर्लभम् ।।

इहामुत्र च कल्याणि सर्वकल्याणकारिणः ।। १२ ।।

नन्दीश्वर उवाच ।।

इत्याकर्ण्य वचः पत्युस्तस्य सा पतिदेवता ।।

उवाच हृष्यद्वदना करौ बद्ध्वा विनीतिका ।। १३ ।।

शुचिष्मत्युवाच ।।

वरयोग्यास्मि चेन्नाथ यदि देयो वरो मम ।।

महेशसदृशम्पुत्रन्देहि नान्यं वरं वृणे ।। १४ ।।

।। नन्दीश्वर उवाच ।।

इति तस्या वचः श्रुत्वा ब्राह्मणस्स शुचिव्रतः ।।

क्षणं समाधिमाधाय हृद्येतत्समचिन्तयत् ।। १५ ।।

अहो किं मे तया तन्व्या प्रार्थितं ह्यतिदुर्लभम् ।।

मनोरथपथाद्दूरमस्तु वा स हि सर्व्वकृत् ।। १६ ।।

तेनैवास्या मुखे स्थित्वा वाक्स्वरूपेण शम्भुना ।।

व्याहृतं कोऽन्यथा कर्त्तुमु त्सहेत भवेदिदम् ।। १७ ।।

नन्दीश्वर उवाच ।।

इति सञ्चिंत्य स मुनिर्विश्वानर उदारधीः ।।

ततः प्रोवाच ताम्पत्नीमेकपत्नीव्रते स्थितः ।। १८ ।।

नन्दीश्वर उवाच ।।

इत्थमाश्वास्य ताम्पत्नीञ्जगाम तपसे मुनिः ।।

यत्र विश्वेश्वरः साक्षात्काशीनाथोऽधि तिष्ठति ।। १९ ।।

प्राप्य वाराणसीं तूर्णं दृष्ट्वा ताम्मणिकर्णिकाम् ।।

तत्याज तापत्रितयमपि जन्मशतार्जितम् ।। 3.13.२० ।।

दृष्ट्वा सर्वाणि लिंगानि विश्वेशप्रमुखानि च ।।

स्नात्वा सर्वेषु कुण्डेषु वापीकूपसरस्सु च ।। २१ ।।

नत्वा विनायकान्सर्वान्गौरीं शर्वां प्रणम्य च ।।

सम्पूज्य कालराजञ्च भैरवम्पापभक्षणम् ।। २२ ।।

दण्डनायकमुख्यांश्च गणान्स्तुत्वा प्रयत्नतः ।।

आदिकेशवमुख्यांश्च केशवम्परितोष्य च ।। २३ ।।

लोकार्कमुखसूर्यांश्च प्रणम्य स पुनःपुनः ।।

कृत्वा च पिण्डदानानि सर्वतीर्थेष्वतन्द्रितः ।। २४ ।।
सहस्रभोजनाद्यैश्च मुनीन्विप्रान्प्रतर्प्य च ।।
महापूजोपचारैश्च लिंगान्यभ्यर्च्य भक्तितः ।। २५ ।।
असकृच्चिन्तयामास किं लिंगं क्षिप्रसिद्धिदम् ।।
यत्र निश्चलतामेति तपस्तनयकाम्यया ।। २६ ।।
क्षणं विचार्य्य स मुनिरिति विश्वानरस्सुधीः ।।
क्षिप्रम्पुत्रप्रदं लिंगं वीरेशम्प्रशशंस ह ।। ।। २७ ।।
असंख्यातास्सहस्राणि सिद्धाः सिद्धिं गतास्ततः ।।
सिद्धलिंगमिति ख्यातन्तस्माद्वीरेश्वरम्परम् ।। २८ ।।
वीरेश्वरम्महालिंगमब्दमभ्यर्च्य भक्तितः ।।
आयुर्मनोरथं सर्वं पुत्रादिकमनेकशः ।। २९ ।।
अहमप्यत्र वीरेशं समाराध्य त्रिकालतः ।।
आशु पुत्रमवाप्स्यामि यथाभिलषितं स्त्रिया ।। 3.13.३० ।।
नन्दीश्वर उवाच ।।
इति कृत्वा मतिन्धीरो विप्रो विश्वानरः कृती ।।
चन्द्रकूपजले स्नात्वा जग्राह नियमं व्रती ।। ३१ ।।
एकाहारोऽभवन्मासं मासं नक्ताशनोऽभवत् ।।
अयाचिताशनो मासम्मासन्त्यक्ताशनः पुनः ।। ३२ ।।
पयोव्रतोऽभवन्मासम्मासम्मासं शाक फलाशनः ।।
मासम्मुष्टितिलाहारो मासं पानीयभोजनः ।। ३३ ।।
पञ्चगव्याशनो मासम्मासञ्चान्द्रायणव्रती ।।
मासं कुशाग्रजलभुग्मासं श्वसनभक्षणः ।। ३४ ।।
एवमब्दमितं कालन्तताप स तपोऽद्भुतम् ।।
त्रिकालमर्चयद्भक्त्या वीरेशं लिङ्गमुत्तमम् ।। ३५ ।।
अथ त्रयोदशे मासि स्नात्वा त्रिपथगाम्भसि ।।
प्रत्यूष एव वीरेशं यावदायाति स द्विजः ।। ३६ ।।
तावद्विलोकयाञ्चक्रे मध्ये लिंगन्तपोधनः ।।
विभूतिभूषणम्बालमष्टवर्षाकृतिं शिशुम् ।। ३७ ।।

आकर्णायतनेत्रञ्च सुरक्तदशनच्छदम् ।।
चारुपिंगजटामौलि न्नग्नप्रहसिताननम् ।। ३८ ।।
शैशवोचितनेपथ्यधारिणञ्चितिधारिणम् ।।
पठन्तं श्रुतिसूक्तानि हसन्तं च स्वलीलया ।। ३९ ।।
तमालोक्य मुदम्प्राप्य रोमकञ्चुकितो मुनिः ।।
प्रोच्चचार हृदालापान्नमोस्त्विवति पुनः पुनः ।। 3.13.४० ।।
अभिलाषप्रदैः पद्यैरष्टभिर्बालरूपिणम् ।।
तुष्टाव परमानन्दं शंभुं विश्वानरः कृती ।। ४१ ।।
।। विश्वानर उवाच ।।
एकम्ब्रह्मैवाद्वितीयं समस्तं सत्यंसत्यं नेह नानास्ति किञ्चित्।।
एको रुद्रो न द्वितीयोऽवतस्थे तस्मादेकन्त्वाम्प्रपद्ये महेशम्।।४२।।
कर्ता हर्त्ता त्वं हि सर्वस्य शम्भो नानारूपेष्वेकरूपोऽप्यरूपः।।
यद्वत्प्रत्यग्धर्म एकोऽप्यनेकस्तस्मान्नान्यन्त्वां विनेशम्प्रपद्ये।।४३।।
रज्जो सर्पश्शुक्तिकायां च रौप्यं नैरः पूरस्तन्मृगाख्ये मरीचौ ।।
यद्यत्सद्वद्विष्वगेव प्रपञ्चो यस्मिञ्ज्ञाते तम्प्रपद्ये महेशम् ।।४४।।
तोये शैत्यं दाहकत्वं च वह्नौ तापो भानौ शीतभानौ प्रसादः।।
पुष्पे गन्धो दुग्धमध्येऽपि सर्पिर्यत्तच्छंभो त्वं ततस्त्वाम्प्रपद्ये।।४५।।
शब्दं गृह्णास्यश्रवास्त्वं हि जिघ्रस्यप्राणस्त्वं त्र्यंघ्रिरायासि दूरात् ।।
त्र्यक्षः पश्येस्त्वं रसज्ञोऽप्यजिह्वः कस्त्वां सम्यग्वेत्त्यतस्त्वाम्प्रपद्ये ।।४६।।
नो वेद त्वामीश साक्षाद्धि वेदो नो वा विष्णुर्नो विधाताखिलस्य।।
नो योगीन्द्रानेन्द्रमुख्याश्च देवा भक्तो वेदस्त्वामतस्त्वाम्प्रपद्ये।।४७।।
नो ते गोत्रं नो सजन्मापि नाशो नो वा रूपं नैव शीलन्न देशः ।।
इत्थम्भूतोऽपीश्वरस्त्वं त्रिलोक्यास्सर्वान्कामान्पूरयेस्त्वं भजे त्वाम् ।। ४८ ।।
त्वत्तस्सर्वं त्वं हि सर्वं स्मरारे त्वं गौरीशस्त्वं च नग्नोऽतिशान्तः ।।
त्वं वै वृद्धस्त्वं युवा त्वं च बालस्तत्त्वं यत्किं नान्यतस्त्वां नतोऽहम्।।४९ ।।
नन्दीश्वर उवाच ।।
स्तुत्वेति विप्रो निपपात भूमौ संबद्धपाणिर्भवतीह यावत्।।
तावत्स बालोऽरिबलवृद्धवृद्धः प्रोवाच भूदेवमतीव हृष्टः ।। 3.13.५० ।।

बाल उवाच ।।
विश्वानर मुनिश्रेष्ठ भूदेवाहं त्वयाद्य वै।।
तोषितस्सुप्रसन्नात्मा वृणीष्व वरमुत्तमम् ।। ५१ ।।
तत उत्थाय हृष्टात्मा सुनिर्विश्वानरः कृती।।
प्रत्यब्रवीन्मुनिश्रेष्ठः शंकरम्बालरूपिणम् ।।५२।।
विश्वानर उवाच ।।
महेश्वर किमज्ञातं सर्वज्ञस्य तव प्रभो ।।
सर्वान्तरात्मा भगवाच्छर्वस्सर्व्वप्रदो भवान् ।। ५३ ।।
याच्ञाम्प्रति नियुक्तम्मां किं ब्रूषे दैन्यकारिणीम् ।।
इति ज्ञात्वा महेशान यथेच्छसि तथा कुरु ।। ५४ ।।
नन्दीश्वर उवाच ।।
इति श्रुत्वा वचस्तस्य देवो विश्वानरस्य हि ।।
शुचिश्शुचिव्रतस्याथ शुचिस्मित्वाब्रवीच्छिशुः ।। ५५ ।।
त्वया शुचे शुचिष्मत्यां योऽभिलाषः कृतो हृदि ।।
अचिरेणैव कालेन स भविष्यत्यसंशयम् ।। ५६ ।।
तव पुत्रत्वमेष्यामि शुचिष्मत्यां महामते।।
ख्यातो गृहपतिर्नाम्ना शुचिस्सर्व्वामरप्रियः ।।५७।।
अभिलाषाष्टकं पुण्यं स्तोत्रमेतत्त्वयेरितम् ।।
अब्दत्रिकालपठनात्कामदं शिवसन्निधौ ।। ५८ ।।
एतत्स्तोत्रप्रपठनं पुत्रपौत्रधनप्रदम् ।।
सर्व्वशान्तिकरश्चापि सर्व्वापत्तिविनाशनम् ।। ५९ ।।
स्वर्गापवर्गसम्पत्तिकारकन्नात्र संशयः ।।
सर्व्वस्तोत्रसमं ह्येतत्सर्व्वकामप्रदं सदा ।। 3.13.६० ।।
प्रातरुत्थाय सुस्नातो लिंगमभ्यर्च्य शाम्भवम् ।।
वर्षं जपन्निदं स्तोत्रमपुत्रः पुत्रवान्भवेत् ।। ६१ ।।
अभिलाषाष्टकमिदन्न देयं यस्य कस्यचित् ।।
गोपनीयं प्रयत्नेन महावन्ध्याप्रसूतिकृत् ।। ६२ ।।
स्त्रिया वा पुरुषेणापि नियमाल्लिंगसन्निधौ ।।

अब्दजप्तमिदं स्तोत्रम्पुत्रदन्नात्र संशयः ।। ६३ ।।

नन्दीश्वर उवाच ।।

इत्युक्त्वान्तर्दधे शम्भुर्बालरूपः सतां गतिः।।

सोऽपि विश्वानरो विप्रो हृष्टात्मा स्वगृहं ययौ।।६४।।

इति श्रीशिवमहापुराणे तृतीयायां रुद्रसंहितायां गृहपत्यवतावर्णनंनाम त्रयोदशोऽध्यायः ।।१३।।

नन्दीश्वर उवाच।।
स विप्रो गृहमागत्य महाहर्षसमन्वितः।।
प्रियायै कथयामास तद्वृत्तान्तमशेषतः।।१।।
तच्छ्रुत्वा विप्रपत्नी सा मुदम्प्राप शुचिष्मती।।
अतीव प्रेमसंयुक्ता प्रशशंस विधिन्निजम् २।।
अथ कालेन तद्योषिदन्तर्वत्नी बभूव ह ।।
विधिवद्विहिते तेन गर्भाधानाख्यकर्मणि ।।३।।
ततः पुंसवनन्तेन स्यन्दनात्प्राग्विपश्चिता ।।
गृह्योक्तविधिना सम्यक्कृतम्पुंस्त्वविवृद्धये ।।४।।
सीमन्तोऽथाष्टमे मासे गर्भरूपसमृद्धिकृत् ।।
सुखप्रसवसिद्धौ च तेनाकरि कृपाविदा ।। ५ ।।
अथातश्शुभतारासु ताराधिपवराननः ।।
केन्द्रे गुरौ शुभे लग्ने सुग्रहेषु युगेषु च ।। ६ ।।
अरिष्टदीपनिर्वाणस्सर्वारिष्टविनाशकृत्।।
तनयो नाम तस्यान्तु शुचिष्मत्याम्बभूव ह ।।७।।
शर्वस्समस्तसुखदो भूर्भुवः स्वर्न्निवासिनाम् ।।
गन्धवाहनवाहाश्च दिग्वधूर्मुखवाससः ।।८।।
इष्टगन्धप्रसूनौघैर्ववृषुस्ते घनाघनाः ।।
देवदुन्दुभयो नेदुः प्रसेदुस्सर्व्वतो दिशः ।।९।।
परितस्सरितस्स्वच्छा भूतानां मानसैस्सह ।।
तमोऽताम्यत्तु नितरां रजोऽपि विरजोऽभवत्।। 3.14.१० ।।
सत्त्वास्सत्त्वसमायुक्ताः सुधावृष्टिर्बभूव वै ।।
कल्याणी सर्वथा वाणी प्राणिनः प्रियवत्यभूत् ।।११।।
रंभामुख्या अप्सरसो मङ्गलद्रव्यपाणयः ।।
विद्याधर्यश्च किन्नर्य्यस्तथा मर्य्यस्सहस्रशः ।।१२।।
गन्धर्वोरगयक्षाणां सुमानियः शुभस्वराः ।।
गायन्त्यो मंगलं गीतन्तत्राजग्मुरनेकशः।।१३।।
मारीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः।।
वसिष्ठः कश्यपोऽगस्त्यो विभाण्डो माण्डवीसुतः ।।१४।।
लोमशो रोमचरणो भरद्वाजोऽथ गौतमः ।।
भृगुस्तु गालवो गर्गो जातूकर्ण्यः पराशरः ।। १५ ।।
आपस्तम्बो याज्ञवल्क्यो दक्षवाल्मीकिमुद्गलाः ।।
शातातपश्च लिखितश्शिलादः शंख उञ्छभुक् ।।१६।।

जमदग्निश्च संवर्तो मतंगो भरतोंशुमान् ।।
व्यासः कात्यायनः कुत्सः शौनकस्तु श्रुतश्शुकः ।। १७ ।।
ऋष्यशृङ्गोऽथ दुर्व्वासाश्शुचिर्नारद तुम्बुरुः ।।
उत्तंको वामदेवश्च पवनोऽसितदेवलौ ।।१८।।
सालंकायनहारीतौ विश्वामित्रोऽथ भार्गवः ।।
मृकण्डस्सह पुत्रेण पर्व्वतो दारुकस्तथा।।१९।।
धौम्योपमन्युवत्साद्या मुनयो मुनिकन्यकाः।।
तच्छान्त्यर्थं समाजग्मुर्धन्यं विश्वानराश्रमम्।।3.14.२०।।
ब्रह्मा बृहस्पतियुतो देवो गरुडवाहनः ।।
नन्दिभृङ्गि समायुक्तो गौर्य्या सह वृषध्वजः ।।२१।।
महेन्द्रमुख्या गीर्वाणा नागाः पातालवासिनः ।।
रत्नान्यादाय बहुशस्ससरित्का महाब्धयः ।।२२।।
स्थावरा जंगमं रूपं धृत्वा यातास्सहस्रशः ।।
महामहोत्सवे तस्मिन्बभूवाकालकौमुदी ।। २३ ।।
जातकर्म स्वयं तस्य कृतवान्विधिरानतः ।।
श्रुतिं विचार्य्य तद्रूपन्नाम्ना गृहपतिस्त्वयम् ।।२४।।
इति नाम ददौ तस्मै देयमेकादशेऽहनि ।।
नामकर्मविधानेन तदर्थश्रुतिमुच्चरन् ।। २५ ।।
चतुर्निगममन्त्रोक्तैराशीर्भिरभिनन्द्य च ।।
समयाद्धंसमारुह्य सर्वेषाञ्च पितामहः ।।२६।।
कृत्वा बालोचितां रक्षां लौकिकीं गतिमाश्रितः ।।
आरुह्य यानं स्वन्धाम हरोऽपि हरिणा ययौ ।। २७ ।।
अहो रूपमहो तेजस्त्वहो सर्वांगलक्षणम् ।।
अहो शुचिष्मती भाग्यमाविरासीत्स्वयं हरः ।। २८ ।।
अथवा किमिदं चित्रं शर्वभक्तजनेष्वहो।।
स्वयमाविरभूद्रुद्रो ययो रुद्रस्तदर्चितः ।।२९।।
इति स्तुवन्तस्तेन्योन्यं सम्प्रहृष्टतनूरुहः ।।
विश्वानरं समापृच्छ्य जग्मुः सर्वे यथागतम्।।3.14.३०।।
अतः पुत्रं समीहन्ते गृहस्थाश्रमवासिनः।।
पुत्रेण लोकाञ्जयति श्रुतिरेषा सनातनी।।३१।।
अपुत्रस्य गृहं शून्यमपुत्रस्यार्जनं वृथा।।
अपुत्रस्य तपश्छिन्नं नो पवित्रत्यपुत्रतः।।३२।।
न पुत्रात्परमो लाभो न पुत्रात्परमं सुखम् ।।

न पुत्रात्परमं मित्रम्परत्रेह च कुत्रचित् ।। ३३ ।।
निष्क्रमोऽथ चतुर्थेऽस्य मासि पित्रा कृतो गृहात् ।।
अन्नप्राशनमब्दार्द्धे चूडार्द्धे चार्थवत्कृता।।३४।।
कर्णवेधन्ततः कृत्वा श्रवणर्क्षे स कर्मवित्।।
ब्रह्मतेजोभिवृद्ध्यर्थं पञ्चमेऽब्दे व्रतन्ददौ।।३५।।
उपाकर्मं ततः कृत्वा वेदानध्यापयत्सुधीः ।।
अब्दं वेदान्स विधिनाऽध्यैष्ट सांगपदक्रमान् ।। ३६ ।।
विद्याजातं समस्तं च साक्षिमात्रं गुरोमुखात् ।।
विनयादिगुणानाविष्कुर्वञ्जग्राह शक्तिमान् ।। ३७ ।।
ततोऽथ नवमे वर्षे पित्रोश्शुश्रूषणे रतम् ।।
वैश्वानरं गृहपतिं द्रष्टुमायाच्च नारदः ।। ३८ ।।
विश्वानरोटजम्प्राप्य देवर्षिस्तं तु कौतुकी ।।
अपृच्छत्कुशलन्तत्र गृहीतार्धासनः क्रमात् ।। ३९ ।।
ततः सर्वं च तद्भाग्यं पुत्रधर्मं च सम्मुखे ।।
वैश्वानरं समवदत्स्मृत्वा शिवपदाम्बुजम् ।।3.14.४०।।
नन्दीश्वर उवाच ।।
इत्युक्तो मुनिना बालः पित्रोराज्ञामवाप्य सः ।।
प्रणम्य नारदं श्रीमान् भक्त्या प्रह्व उपाविशत ।।४१।।
वैश्वानर समभ्येहि ममोत्संगे निषीद भोः ।।
लक्षणानि परीक्षेऽहं पाणिन्दर्शय दक्षिणम्।।४२।।
ततो दृष्ट्वा तु सर्वं हि तालुजिह्वादि नारदः ।।
विश्वानरं समवदच्छिवप्रेरणया सुधीः ।।४३।।
नारद उवाच ।।
विश्वानर मुने वच्मि शृणु पुत्रांकमादरात्।।
सर्वांगस्वंकवान्पुत्रो महालक्षणवानयम्।।४४।।
किन्तु सर्वगुणोपेतं सर्वलक्षणलक्षितम् ।।
सम्पूर्णनिर्मलकलं पालयेद्विधुवद्विधिः ।। ४५ ।।
तस्मात्सर्वप्रयत्नेन रक्षणीयस्त्वसौ शिशु ।।
गुणोऽपि दोषतां याति वक्रीभूते विधातरि ।।४६।।
शंकेऽस्य द्वादशे मासि प्रत्यूहो विद्युदग्नितः ।।
इत्युक्त्वा नारदोऽगच्छद्देवलोकं यथागतम् ।।४७।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां गृहपत्यवतारोपाख्याने गृहपत्यवतारवर्णनंनाम चतुर्दशोऽध्यायः ।।१४।।

नन्दीश्वर उवाच।।
विश्वानरस्सपत्नीकस्तच्छ्रुत्वा नारदेरितम्।।
तदेवम्मन्यमानोभूद्वज्रपातं सुदारुणम् ।।१।।
हा हतोस्मीति वचसा हृदयं समताडयत् ।।
मूर्च्छामवाप महतीं पुत्रशोकसमाकुलः ।। २ ।।
शुचिष्मत्यपि दुःखार्त्ता रुरोदातीव दुस्सहम् ।।
अतिस्वरेण हारावैरत्यन्तं व्याकुलेन्द्रिया ।।३।।
श्रुत्वार्त्तनादमिति विश्वनरोपि मोहं हित्वोत्थितः किमिति किंत्विति किं किमेतत्।।
उच्चैर्वदन् गृहपतिः क्व स मे बहिस्थः प्राणोन्तरात्मनिलयस्सकलेंद्रियेशः ।। ४ ।।
ततो दृष्ट्वा स पितरौ बहुशोकसमावृतौ ।।
स्मित्वोवाच गृहपस्सबालश्शंकरांशजः ।।५।।
गृहपतिरुवाच ।।
हे मातस्तात किं जातं कारणन्तद्वदाधुना ।।
किमर्थं रुदितोऽत्यर्थं त्रासस्तादृक्कुतो हि वाम् ।। ६ ।।
न मां कृतवपुस्त्राणम्भवच्चरणरेणुभिः ।।
कालः कलयितुं शक्तो वराकीं चिञ्चलाल्पिका ।।७।।
प्रतिज्ञां शृणुतान्तातौ यदि वान्तनयो ह्यहम् ।।
करिष्येहं तथा येन मृत्युस्त्रस्तो भविष्यति ।। ८ ।।
मृत्युंजयं समाराध्य गर्वज्ञं सर्वदं सताम् ।।
जपिष्यामि महाकालं सत्यं तातौ वदाम्यहम्।।९।।
नन्दीश्वर उवाच ।।
इति श्रुत्वा वचस्तस्य जारितौ द्विजदम्पती।।
अकालमृतवर्षौघैर्गततापौ तदोचतुः ।।3.15.१०।।
द्विजदम्पती ऊचतुः ।।
पुनर्ब्रूहि पुनर्ब्रूहि कीदृक्कीदृक् पुनर्वद ।।
कालः कलयितुन्नालं वराकी चञ्चलास्ति का।।११।।
आवयोस्तापनाशाय महोपायस्त्वयेरितः ।।
मृत्युंजयाख्यदेवस्य समाराधनलक्षणः।।१२।।
तद्वच्च शरणं शम्भोर्नातः परतरं हि तत्।।
मनोरथपथातीत कारिणः पापहारिणः ।।१३।।
किन्न श्रुतन्त्वया तात श्वेतकेतुं यथा पुरा ।।
पाशितं कालपाशेन ररक्ष त्रिपुरान्तकः ।। १४ ।।
शिलादतनयं मृत्युग्रस्तमष्टाब्दमात्रकम् ।।

शिवो निजजनञ्चक्रे नन्दिनं विश्वनंदिनम् ।। १५ ।।
क्षीरोदमथनोद्भूतं प्रलयानलसन्निभम् ।।
पीत्वा हलाहलं घोरमरक्षद्भुवनत्रयम् ।। १६ ।।
जलंधरं महादर्पं हृतत्रैलोक्यसम्पदम् ।।
रुचिरांगुष्ठरेखोत्थ चक्रेण निजघान यः ।। १७ ।।
य एकेषु निपातोत्थज्वलनैस्त्रिपुरम्पुरा ।।
त्रैलोक्यैश्वर्यसम्मूढं शोषयामास भानुना ।। १८ ।।
कामं दृष्टिनिपातेन त्रैलोक्यविजयोर्जितम् ।।
निनायानंगपदवीं वीक्ष्यमाणेष्वजादिषु ।।१९।।
तम्ब्रह्मादयैककर्तारम्मेघवाहनमच्युतम् ।।
प्रयाहि पुत्र शरणं विश्वरक्षामणिं शिवम् ।।3.15.२०।।
नन्दीश्वर उवाच ।।
पित्रोरनुज्ञाम्प्राप्येति प्रणम्य चरणौ तयोः ।।
प्रादक्षिण्यमुपावृत्य बह्वाश्वास्य विनिर्ययौ ।। २१ ।।
सम्प्राप्य काशीं दुष्प्रापाम्ब्रह्मनारायणादिभिः ।।
महासंवर्त्तसन्तापहन्त्रीं विश्वेशपालिताम् ।। २२ ।।
स्वर्धुन्या हारयष्ट्येव राजिता कण्ठभूमिषु ।।
विचित्रगुणशालिन्या हरपत्न्या विराजिताम् ।।२३।।
तत्र प्राप्य स विप्रेशः प्राग्ययौ मणिकर्णिकाम् ।।
तत्र स्नात्वा विधानेन दृष्ट्वा विश्वेश्वरम्प्रभुम् ।।२४।।
साञ्जलिर्नतशीर्षोऽसौ महानन्दान्वितस्सुधीः ।।
त्रैलोक्यप्राणसन्त्राणकारिणम्प्रणनाम ह ।। २५ ।।
आलोक्यालोक्य तल्लिंगं तुतोष हृदये मुहुः ।।
परमानंदकंदाढ्यं स्फुटमेतन्न संशयः ।। २६ ।।
अहो न मत्तो धन्योस्ति त्रैलोक्ये सचराचरे ।।
यदद्राक्षिषमद्याहं श्रीमद्विश्वेश्वरं विभुम् ।। २७ ।।
मम भाग्योदयायैव नारदेन महर्षिणा ।।
पुरागत्य तथोक्तं यत्कृतकृत्योस्म्यहन्ततः ।। २८ ।।
नन्दीश्वर उवाच ।।
इत्यानन्दामृतरसैर्विधाय स हि पारणम् ।।
ततश्शुभेह्नि संस्थाप्य लिंगं सर्व्वहितप्रदम् ।। २९ ।।
जग्राह नियमान्घोरान् दुष्करानकृतात्मभिः ।।
अष्टोत्तरशतैः कुम्भैः पूर्णैर्गंगाम्भसा शुभैः ।। 3.15.३० ।।

संस्नाप्य वाससा पूतः पूतात्मा प्रत्यहं शिवम् ।।
नीलोत्पलमयीम्मालां समर्पयति सोऽन्वहम् ।। ३१ ।।
अष्टाधिकसहस्रैस्तु सुमनोभिर्विनिर्मिताम् ।।
स पक्षे वाथ वा मासे कन्दमूलफलाशनः ।। ३२ ।।
शीर्णपर्णाशनैर्धीरः षण्मासं सम्बभूव सः ।।
षण्मासं वायुभक्षोऽभूत्षण्मासं जल बिन्दुभुक् ।। ३३ ।।
एवं वर्षवयस्तस्य व्यतिक्रान्तं महात्मनः ।।
शिवैकमनसो विप्रास्तप्यमानस्य नारद ।। ३४ ।।
जन्मतो द्वादशे वर्षे तद्वचो नारदेरितम् ।।
सत्यं करिष्यन्निव तमभ्यगात्कुलिशायुधः ।। ३५ ।।
उवाच च वरं ब्रूहि दद्मि त्वन्मनसि स्थितम् ।।
अहं शतक्रतुर्विप्र प्रसन्नोस्मि शुभव्रतैः ।। ।।। ३६ ।।
नन्दीश्वर उवाच ।।
इत्याकर्ण्य महेन्द्रस्य वाक्यम्मुनिकुमारकः ।।
उवाच मधुरन्धीरः कीर्तयन्मधुराक्षरम् ।। ३७ ।।
गृहपतिरुवाच ।।
मघवन् वृत्रशत्रो त्वां जाने कुलिशपाणिनम् ।।
नाहं वृणे वरन्त्वत्तश्शंकरो वरदोऽस्ति मे ।। ३८ ।।
इन्द्र उवाच ।।
न मत्तश्शङ्करस्त्वन्यो देवदेवोऽस्म्यहं शिशो ।।
विहाय बालिशत्वं त्वं वरं याचस्व मा चिरम् ।।३९।।
गृहपतिरुवाच ।।
गच्छाहल्यापतेऽसाधो गोत्रारे पाकशासन ।।
न प्रार्थये पशुपतेरन्यं देवान्तरं स्फुटम् ।। 3.15.४० ।।
नन्दीश्वर उवाच ।।
इति तस्य वचः श्रुत्वा क्रोध संरक्तलोचनः ।।
उद्यम्य कुलिशं घोरम्भीषयामास बालकम् ।। ४१ ।।
स दृष्ट्वा बालको वज्रं विद्युज्ज्वाला समाकुलम् ।।
स्मरन्नारद वाक्यं च मुमूर्च्छ भयविह्वलः ।। ४२ ।।
अथ गौरीपतिश्शम्भुराविरासीत्तपोनुदः ।।
उत्तिष्ठोत्तिष्ठ भद्रन्ते स्पर्शैस्संजीवयन्निव ।। ४३ ।।
उन्मील्य नेत्रकमले सुप्ते इव दिनक्षये ।।
अपश्यदग्रे चोत्थाय शम्भुमर्कशताधिकम् ।।४४।।

भाले लोचनमालोक्य कण्ठे कालं वृषध्वजम्।।
वामाङ्गसन्निविष्टाद्रितनयं चन्द्रशेखरम्।।४५।।
कपर्द्देन विराजन्तं त्रिशूलाजगवायुधम्।।
स्फुरत्कर्पूरगौरांगं परिणद्ध गजाजिनम्।।४६।।
परिज्ञाय महादेवं गुरुवाक्यत आगमात्।।
हर्षबाष्पाकुलासन्नकण्ठरोमाञ्चकञ्चुकः ।।४७।।
क्षणं च गिरिवत्तस्थौ चित्रकूटत्रिपुत्रकः ।।
यथा तथा सुसम्पन्नो विस्मृत्यात्मानमेव च।।४८।।
न स्तोतुं न नमस्कर्तुं किञ्चिद्विज्ञप्तिमेव च ।।
यदा स न शशाकालं तदा स्मित्वाह शङ्करः ।। ४९ ।।
ईश्वर उवाच ।।
शिशो गृहपते शक्राद्वज्रोद्यतकरादहो ।।
ज्ञात भीतोऽसि मा भैषीर्जिज्ञासा ते मया कृता ।। 3.15.५० ।।
मम भक्तस्य नो शक्रो न वज्रं चान्तकोऽपि च ।।
प्रभवेदिन्द्ररूपेण मयैव त्वम्विभीषितः ।।५१।।
वरन्ददामि ते भद्र त्वमग्निपदभाग्भव ।।
सर्वेषामेव देवानां वरदस्त्वं भविष्यसि ।।५२।।
सर्वेषामेव भूतानां त्वमग्नेऽन्तश्चरो भव।।
धर्मराजेन्द्रयोर्मध्ये दिगीशो राज्यमाप्नुहि।।५३।।
त्वयेदं स्थापितं लिंगं तव नाम्ना भविष्यति।।
अग्नीश्वर इति ख्यातं सर्वतेजोविबृंहणम् ।।५४।।
अग्नीश्वरस्य भक्तानां न भयं विद्युदग्निभिः ।।
अग्निमांद्यभयं नैव नाकालमरणं क्वचित् ।। ५५ ।।
अग्नीश्वरं समभ्यर्च्य काश्यां सर्वसमृद्धिदम् ।।
अन्यत्रापि मृतो दैवाद्वह्निलोके महीयते ।।५६।।
नन्दीश्वर उवाच ।।
इत्युक्तानीय तद्बन्धून्पित्रोश्च परिपश्यतोः।।
दिक्पतित्वेऽभिषिच्याग्निं तत्र लिंगे शिवोऽविशत् ।।५७।।
इत्थमग्न्यवतारस्ते वर्णितो मे जनार्दनः ।।
नाम्ना गृहपतिस्तात शंकरस्य परात्मनः ।।५८।।
चित्रहोत्रपुरी रम्या सुखदार्चिष्मती वरा ।।
जातवेदसि ये भक्ता ते तत्र निवसन्ति वै ।। ५९ ।।
अग्निप्रवेशं ये कुर्य्युर्दृढसत्त्वा जितेन्द्रियाः ।।

स्त्रियो वा सत्त्वसम्पन्नास्ते सर्वेप्यग्नितेजसः ।।3.15.६०।।
अग्निहोत्ररता विप्राः स्थापिता ब्रह्मचारिणः ।।
पश्चानिवर्त्तिनोऽप्येवमग्निलोकेग्निवर्चसः ।।६१।।
शीते शीतापनुत्त्यै यस्त्वेधोभारान्प्रयच्छति ।।
कुर्य्यादग्नीष्टिकां वाथ स वसेदग्निसन्निधौ ।। ६२ ।।
अनाथस्याग्निसंस्कारं यः कुर्य्याच्छ्रद्धयान्वितः ।।
अशक्तः प्रेरयेदन्यं सोग्निलोके महीयते ।। ६३ ।।
अग्निरेको द्विजातीनां निश्श्रेयसकरः परः ।।
गुरुर्देवो व्रतं तीर्थं सर्वमग्निर्विनिश्चितम् ।। ६४ ।।
अपावनानि सर्वाणि वह्निसंसर्गतः क्षणात् ।।
पावनानि भवन्त्येव तस्माद्यः पावकः स्मृतः।।६५।।
अन्तरात्मा ह्ययं साक्षान्निश्चयो ह्याशुशुक्षणिः ।।
मांसग्रासान्पचेत्कुक्षौ स्त्रीणां नो मांसपेशिकाम् ।।६६।।
तैजसी शाम्भवी मूर्त्तिः प्रत्यक्षा दहनात्मिका ।।
कर्त्री हर्त्री पालयित्री विनैतां किं विलोक्यते ।।६७।।
चित्रभानुरयं साक्षान्नेत्रन्त्रिभुवनेशितुः ।।
अन्धे तमोमये लोके विनैनं कः प्रकाशनः ।। ६८ ।।
धूपप्रदीपनैवेद्यपयोदधिघृतैक्षवम् ।।
एतद्भुक्तं निषेवन्ते सर्वे दिवि दिवौकसः ।।६९।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां गृहपत्यवतारवर्णनं नाम पञ्चदशोऽध्यायः ।। १५ ।।

नन्दीश्वर उवाच ।।
यक्षेश्वरावतारं च शृणु शंभोर्मुनीश्वर ।।
गर्विणं गर्वहन्तारं सताम्भक्तिविवर्द्धनम् ।। १ ।।
पुरा देवाश्च दैत्याश्च पीयूषार्थम्महाबलाः ।।
क्षीरोदधिं ममन्थुस्ते सुकृत स्वार्थ सन्धयः ।। २ ।।
मथ्यमानेऽमृते पूर्वं क्षीराब्धेस्सुरदानवैः ।।
अग्नेः समुत्थितं तस्माद्विषं कालानलप्रभम् ।। ३ ।।
तं दृष्ट्वा निखिला देवा दैत्याश्च भयविह्वलाः ।।
विद्रुत्य तरसा तात शंभोस्ते शरणं ययुः ।। ४ ।।
दृष्ट्वा तं शंकरं सर्वे सर्वदेवशिखामणिम् ।।
प्रणम्य तुष्टुवुर्भक्त्या साच्युता नतमस्तकाः ।। ५ ।।
ततः प्रसन्नो भगवाच्छङ्करो भक्तवत्सलः ।।
पपौ विषं महाघोरं सुरासुरगणार्दनम् ।। ६ ।।
पतिं तं विषमं कण्ठे निदधे विषमुल्बणम् ।।
रेजेतेनाति स विभुर्नीलकण्ठो बभूव ह ।। ७ ।।
ततः सुरा सुरगणा ममन्थुः पुनरेव तम् ।।
विषदाहविनिर्मुक्ताः शिवानुग्रहतोऽखिलाः ।। ८ ।।
तातो बहूनि रत्नानि निस्सृतानि ततो मुने ।।
अमृतं च पदार्थं हि सुरदानवयोर्मुने ।। ९ ।।
तत्पपुः केवलन्देवा नासुराः कृपया हरेः ।।
ततो बभूव सुमहद्रत्नं तेषां मिथोऽकदम् ।। 3.16.१० ।।
द्वन्द्वयुद्धम्बभूवाथ देवदानवयोर्मुने ।।
तत्र राहुभयाच्चन्द्रो विदुद्राव तदर्दितः ।। ११ ।।
जगाम सदनं शंभोः शरणम्भय विह्वलः ।।
सुप्रणम्य च तुष्टाव पाहिपाहीति संवदन् ।। १२ ।।
ततस्सतामभयदः शंकरो भक्तवत्सलः ।।
दध्रे शिरसि चन्द्रं स विभुश्शरणमागतम् ।। १३ ।।
अथागतस्तदा राहुस्तुष्टाव सुप्रणम्य तम् ।।
शंकरं सकलाधीशं वाग्भिरिष्टाभिरादरात् ।। १४ ।।
शंभुस्तन्मतमाज्ञाय तच्छिरांस्यच्युतेन ह ।।
पुरा छिन्नानि वै केतुसंज्ञानि निदधे गले ।। १५।।
ततो युद्धेऽसुराः सर्वे देवैश्चैव पराजिताः ।।
पीत्वाऽमृतं सुरास्सर्व्वे जयम्प्रापुर्महाबलाः ।। १६।।

विष्णुप्रभृतयः सर्व्वे बभूवुश्चातिगर्विताः ।।
बलानि चांकुरंतोन्तश्शिवमायाविमोहिताः ।। १७।।
ततस्स शंकरो देवः सर्वाधीशोथ गर्वहा ।।
यक्षो भूत्वा जगामाशु यत्र देवाः स्थिता मुने ।। १८।।
सर्वान्दृष्ट्वाच्युतमुखान्देवान्यक्षपतिस्स वै ।।
महागर्वाढ्यमनसा महेशाः प्राह गर्वहा ।। १९।।
यक्षेश्वर उवाच ।।
किमर्थं संस्थिता यूयमत्र सर्वे सुरा मिथः ।।
किमु काष्ठाखिलम्ब्रूत कारणं मेनुपृच्छते ।।3.16.२०।।
देवा ऊचुः ।।
अभूदत्र महान्देव रणः परमदारुणः ।।
असुरा नाशितास्सर्वेऽवशिष्टा विद्रुता गताः ।।२१।।
वयं सर्वे महावीरा दैत्यघ्ना बलवत्तराः ।।
अग्रेस्माकं कियन्तस्ते दैत्य क्षुद्रबलास्सदा ।। २२ ।।
नन्दीश्वर उवाच ।।
इति श्रुत्वा वचस्तेषां सुराणां गर्वगर्भितम् ।।
गर्वहासौ महादेवो यक्षरूपो वचोऽब्रवीत् ।। २३ ।।
यक्षेश्वर उवाच ।।
हे सुरा निखिला यूयं मद्वचश्शृणुतादरात् ।।
यथार्थं वच्मि नासत्यं सर्वगर्वापहारकम् ।। २४ ।।
गर्व्वमेनं न कुरुत कर्त्ता हर्त्ताऽपरः प्रभुः ।।
विस्मृताश्च महेशानं कथयध्वम्वृथाबलाः ।। २५ ।।
युष्माकञ्चेत्स हि मदो जानतां स्वबलम्महत् ।।
मत्स्थापितं तृणमिदं छिन्त स्वास्त्रैश्च तैस्सुराः ।। २६ ।।
नन्दीश्वर उवाच ।।
इत्युक्त्वैकतृणन्तेषां निचिक्षेप पुरस्ततः ।।
जह्रे सर्वमदं यक्षरूप ईशस्सतांगतिः ।।२७।।
अथ सर्वे सुरा विष्णुप्रमुखा वीरमानिनः ।।
कृत्वा स्वपौरुषन्तत्र स्वायुधानि विचिक्षिपुः ।।२८।।
तत्रासन् विफलान्याशु तान्यस्त्राणि दिवौकसाम् ।।
शिवप्रभावतस्तेषां मूढगर्वापहारिणः ।। २९ ।।
अथासीत्तु नभोवाणी देवविस्मयहारिणी ।।
यक्षोऽयं शंकरो देवाः सर्वगर्वापहारकः ।।3.16.३०।।

कर्ता हर्त्ता तथा भर्त्ताऽयमेव परमेश्वरः ।।
एतद्बलेन वलिनो जीवाः सर्वेऽन्यथा न हि ।। ३१ ।।
अस्य मायाप्रभावाद्वै मोहिताः स्वप्रभुं शिवम् ।।
मदतो बुबुधु नैवाद्यापि बोधतनुम्प्रभुम् ।। ३२ ।।
नन्दीश्वर उवाच ।।
इति श्रुत्वा नभोवाणीं बुबुधुस्ते गतस्मयाः ।।
यक्षेश्वरम्प्रणेमुश्च तुष्टुवुश्च तमीश्वरम् ।। ३३ ।।
देवा ऊचुः ।।
देवदेव महादेव सर्वगर्वापहारक।।
यक्षेश्वरमहालील माया तेत्यद्भुता प्रभो।।३४।।
मोहिता माययाद्यापि तव यक्षस्वरूपिणः ।।
सगर्वमभिभाषन्तस्त्वत्पुरो हि पृथङ्मयाः।।३५।।
इदानीं ज्ञानमायातन्तवैव कृपया प्रभो।।
कर्ता हर्ता च भर्ता च त्वमेवान्यो न शंकर ।।३६।।
त्वमेव सर्वशक्तीनां सर्वेषां हि प्रवर्तकः ।।
निवर्तकश्च सर्वेशः परमात्माव्ययोऽद्वयः ।। ३७ ।।
यक्षेश्वरस्वरूपेण सर्वेषां नो मदो हृतः ।।
इतो मन्यामहे तत्तेनुग्रहो हि कृपालुना ।। ३८ ।।
अथो स यक्षनाथोऽनुगृह्य वै सकलान् सुरान् ।।
विबोध्य विविधैर्वाक्यैस्तत्रैवान्तरधीयत ।। ३९ ।।
इत्थं स वर्णितः शम्भोरवतारः सुखावहः ।।
यक्षेश्वराख्यस्सुखदस्सतान्तुष्टोऽभयंकरः ।। 3.16.४० ।।
इदमाख्यानममलं सर्वगर्वापहारकम् ।।
सतां सुशान्तिदन्नित्यं भुक्तिमुक्तिप्रदं नृणाम् ।। ४१ ।।
य इदं शृणुयाद्भक्त्या श्रावयेद्वा सुधीः पुमान् ।।
सर्वकामानवाप्नोति ततश्च लभते गतिम् ।।४२।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां यक्षेश्वरावतारवर्णनं नाम षोडशोध्यायः ।। १६।।

शृण्वथो गिरिशस्याद्यावतारान् दशसंख्यकान् ।।
महाकलमुखान् भक्त्योपासनाकाण्डसेवितान् ।। १ ।।
तत्राद्यो हि महाकालो भुक्तिमुक्तिप्रदस्सताम् ।।
शक्तिस्तत्र महाकाली भक्तेप्सितफलप्रदा ।।२।।
तारनामा द्वितीयश्च तारा शक्तिस्तथैव सा ।।
भुक्तिमुक्तिप्रदौ चोभौ स्वसेवकसुखप्रदौ ।।३।।
भुवनेशो हि बालाह्वस्तृतीयः परिकीर्तितः ।।
भुवनेशी शिवा तत्र बालाह्वा सुखदा सताम् ।। ४ ।।
श्रीविद्येशः षोडशाह्वः श्रीर्विद्या षोडशी शिवा ।।
चतुर्थो भक्त सुखदो भुक्तिमुक्तिफलप्रदः ।। ५ ।।
पञ्चमो भैरवः ख्यातः सर्वदा भक्तकामदः ।।
भैरवी गिरिजा तत्र सदुपासककामदा ।। ६ ।।
छिन्नमस्तकनामासौ शिवः षष्ठः प्रकीर्तितः ।।
भक्तकामप्रदा चैव गिरिजा छिन्नमस्तका ।। ७ ।।
धूमवान् सप्तमः शम्भुस्सर्वकामफलप्रदः ।।
धूमवती शिवा तत्र सदुपासककामदा ।। ८ ।।
शिवावतारः सुखदो ह्यष्टमो बगलामुखः ।।
शक्तिस्तत्र महानन्दा विख्याता बगलामुखी ।। ९ ।।
शिवावतारो मातङ्गो नवमः परिकीर्तितः ।।
मातंगी तत्र शर्वाणी सर्वकामफलप्रदा ।। 3.17.१० ।।
दशमः कमलः शम्भुर्भुक्तिमुक्तिफलप्रदः ।।
कमला गिरिजा तत्र स्वभक्तपरिपालिनी ।। ११ ।।
एते दशमिताः शैवा अवतारास्सुखप्रदाः ।।
भुक्तिमुक्तिप्रदाश्चैव भक्तानां सर्वदास्सताम् ।। १२।।
एते दशावतारा हि शंकरस्य महात्मनः ।।
नानासुखप्रदा नित्यं सेवतां निर्विकारतः ।। १ ३।।
एतद्दशावताराणां माहात्म्यं वर्णितं मुने ।।
सर्वकामप्रदं ज्ञेयं तंत्रशास्त्रादिगर्भितम् ।। १४।।
एतासामादिशक्तीनामद्भुतो महिमा मुने ।।
सर्वकामप्रदो ज्ञेयस्तत्रंशास्त्रादिगर्भितः ।। १५।।
शत्रुमारणकार्य्यादौ तत्तच्छक्तिः परा मता ।।
खल दण्डकरी नित्यम्ब्रह्मतेजोविवर्द्धिनी।। १६।।
इत्युक्तास्ते मया ब्रह्मन्नवतारा महेशितुः।।

सशक्तिका दशमिता महाकालमुखाश्शुभाः।। १७।।
शैवपर्वसु सर्वेषु योऽधीते भक्तितत्परः ।।
एतदाख्यानममलं सोतिशम्भुप्रियो भवेत् ।। १८।।
ब्रह्मणो ब्रह्मवर्चस्वी क्षत्रियो विजयी भवेत ।।
धनाधिपो हि वैश्यः स्याच्छूद्रः सुखमवाप्नुयात् ।। १९।।
शांकरा निजधर्मस्थाः शृण्वन्तश्चरितन्त्विदम्।।
सुखिनः स्युर्विशेषेण शिवभक्ता भवन्तु च ।।3.17.२०।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां शिवदशावतारवर्णनं नाम सप्तदशोऽध्यायः ।।१७।

नन्दीश्वर उवाच।।
एकादशवतारान्वै शृण्वथो शांकरान्वरान् ।।
याञ्छ्रुत्वा न हि बाध्येत बाधासत्यादिसम्भवा ।।१।।
पुरा सर्वे सुराश्शक्रमुखा दैत्यपराजिताः ।।
त्यक्त्वामरावतीम्भीत्याऽपलायन्त निजाम्पुरीम् ।। २ ।।
दैत्यप्रपीडिता देवा जग्मुस्ते कश्यपा न्तिकम् ।।
बद्ध्वा करान्नतस्कन्धाः प्रणेमुस्तं सुविह्वलम् ।। ३ ।।
सुनुत्वा तं सुरास्सर्व्वे कृत्वा विज्ञप्तिमादरात् ।।
सर्वं निवेदयामा स्स्वदुःखन्तत्पराजयम् ।।४।।
ततस्स कश्यपस्तात तत्पिता शिवसक्तधीः ।।
तदाकर्ण्यामराकं वै दुखितोभून्न चाधिकम् ।। ५ ।।
तानाश्वास्य मुनिस्सोऽथ धैर्यमाधाय शान्तधीः ।।
काशीं जगाम सुप्रीत्या विश्वेश्वरपुरीम्मुने ।।६।।
गंगाम्भसि ततः स्नात्वा कृत्वा तं विधिमादरात् ।।
विश्वेश्वरं समानर्च साम्बं सर्वेश्वरम्प्रभुम् ।।७।।
शिवलिंगं सुसंस्थाप्य चकार विपुलन्तपः ।।
शम्भुमुद्दिश्य सुप्रीत्या देवानां हितकाम्यया ।।८।।
महान्कालो व्यतीयाय तपतस्तस्य वै मुनेः ।।
शिवपादाम्बुजासक्तमनसो धैर्य्यशालिनः ।।९।।
अथ प्रादुरभूच्छम्भुर्वरन्दातुन्तदर्षये ।।
स्वपदासक्तमनसे दीनबन्धुस्सतांगतिः ।। 3.18.१० ।।
वरम्ब्रूहीति चोवाच सुप्रसन्नो महेश्वरः ।।
कश्यपं मुनिशार्दूलं स्वभक्तं भक्तवत्सलः ।। १ १।।
दृष्ट्वाथ तं महेशानं स प्रणम्य कृताञ्जलिः ।।
तुष्टाव कश्यपो हृष्टो देवतातः प्रस न्नधीः ।। १२।।
कश्यप उवाच ।।
देवदेव महेशान शरणागतवत्सल ।।
सर्वेश्वरः परात्मा त्वं ध्यानगम्योद्वयोऽव्ययः ।। १३।।
बलनिग्रह कर्ता त्वं महेश्वर सतां गतिः ।।
दीनबन्धुर्दयासिन्धुर्भक्तरक्षणदक्षधीः ।। १४।।
एते सुरास्त्वदीया हि त्वद्भक्ताश्च विशेषतः ।।
दैत्यैः पराजिताश्चाथ पाहि तान्दुःखितान् प्रभो ।। १५।।
असमर्थो रमेशोपि दुःखदस्ते मुहुर्मुहुः ।।

अतः सुरा मच्छरणा वेदयन्तोऽसुखं च तत् ।। १६।।
तदर्थं देवदेवेश देवदुःखविनाशकः ।।
तत्पूरितुं तपोनिष्ठां प्रसन्नार्थं तवासदम् ।। १७।।
शरणं ते प्रपन्नोऽस्मि सर्वथाहं महेश्वर ।।
कामं मे पूरय स्वामिन्देवदुःखं विनाशय ।। १८।।
पुत्रदुःखैश्च देवेश दुःखितोऽहं विशेषतः ।।
सुखिनं कुरु मामीश सहाय स्त्वन्दिवौकसाम् ।। १९।।
भूत्वा मम सुतो नाथ देवा यक्षाः पराजिताः ।।
दैत्यैर्महाबलैश्शम्भो सुरानन्दप्रदो भव ।।3.18.२०।।
सदैवास्तु महेशान सर्वलेखसहायकः ।।
यथा दैत्यकृता बाधा न बाधेत सुरान्प्रभो ।। २१ ।।
नंदीश्वर उवाच ।।
इत्युक्तस्स तु सर्वेशस्तथेति प्रोच्य शंकरः ।।
पश्यतस्तस्य भगवांस्तत्रैवांतर्दधे हरः ।।२२।।
कश्यपोऽपि महाहृष्टः स्वस्थानमगमदद्भुतम् ।।
देवेशः कथयामास सर्ववृत्तान्तमादरात् ।। २३ ।।
ततस्स शंकरश्शर्वस्सत्यं कर्तुं स्वकं वचः ।।
सुरभ्यां कश्यपाज्जज्ञे एकादशस्वरूपवान् ।। २४ ।।
महोत्सवस्तदासीद्वे सर्वं शिवमयं त्वभूत् ।।
आसन्हृष्टाः सुराश्चाथ मुनिना कश्यपेन च ।। २५ ।।
कपाली १ पिंगलो २ भीमो ३ विरूपाक्षो ४ विलोहितः ५ ।।
शास्ताऽ ६ जपाद ७ हिर्बुध्न्य ८ श्शंभु ९ श्चण्डो १० भवस्तथा ११ ।। २६ ।।
एकादशैते रुद्रास्तु सुरभतिनयाः स्मृताः ।।
देवकार्य्यार्थमुत्पन्नाश्शिवरूपास्सुखास्पदम् ।। २७ ।।
ते रुद्राः काश्यपा वीरा महाबलपराक्रमाः ।।
दैत्याञ्जघ्नुश्च संग्रामे देवसाहाय्यकारिणः ।। २८ ।।
तद्रुद्रकृपया देवा दैत्याञ्जित्वा च निर्भयाः ।।
चक्रु- स्वराज्यं सर्वे ते शक्राद्यास्स्वस्थमानसाः ।। २९ ।।
अद्यापि ते महारुद्रास्सर्वे शिवस्वरूपकाः ।।
देवानां रक्षणार्थाय विराजन्ते सदा दिवि ।। 3.18.३० ।।
ऐशान्याम्पुरि ते वासं चक्रिरे भक्तवत्सलाः ।।
विरमन्ते सदा तत्र नानालीलाविशारदाः ।। ३१ ।।
तेषामनुचरा रुद्राः कोटिशः परिकीर्तिताः ।।

सर्वत्र संस्थितास्तत्र त्रिलोकेष्वभिभागशः ।। ३२ ।।
इति ते वर्णितास्तातावताराश्शंकरस्य वै ।।
एकादशमिता रुद्रास्सर्वलोकसुखावहाः ।। ३३ ।।
इदमाख्यानममलं सर्वपापप्रणाशकम् ।।
धन्यं यशस्यमायुष्यं सर्वकामप्रदायकम् ।। ३४ ।।
य इदं शृणुयात्तात श्रावयेद्वै समाहितः ।।
इह सर्वसुखम्भुक्त्वा ततो मुक्तिं लभेत सः ।। ३५ ।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां एकादशावतारवर्णनं नामाष्टादशोऽध्यायः ।। १८ ।।

नन्दीश्वर उवाच ।।
अथान्यच्चरितं शम्भो श्शृणु प्रीत्या महामुने ।।
यथा बभूव दुर्वासाश्शंकरो धर्महेतवे ।। १ ।।
ब्रह्मपुत्रो वभूवातितपस्वी ब्रह्मवित्प्रभुः ।।
अनसूयापति र्धीमान्ब्रह्माज्ञाप्रतिपालकः ।। २ ।।
सुनिर्देशाद्ब्रह्मणो हि सस्त्रीकः पुत्रकाम्यया ।।
स त्र्यक्षकुलनामानं ययौ च तपसे गिरिम् ।। ३ ।।
प्राणानायम्य विधिवन्निर्विन्ध्यातटिनीतटे ।।
तपश्चचार सुमहदद्वन्द्वोऽब्दशतम्मुनिः ।। ४ ।।
य एक ईश्वरः कश्चिदविकारो महाप्रभुः ।।
स मे पुत्रवरं दद्यादिति निश्चितमानसः ।। ५ ।।
बहुकालो व्यतीयाय तस्मिंस्तपति सत्तपः ।।
आविर्बभूव तत्कात्तु शुचिर्ज्वाला महीयसी ।। ६ ।।
तया सन्निखिला लोका दग्धप्राया मुनीश्वराः ।।
तथा सुरर्षयः सर्वे पीडिता वासवादयः ।। ७ ।।
अथ सर्वे वासवाद्या सुराश्च मुनयो मुने ।।
ब्रह्मस्थानं ययुश्शीघ्रं तज्ज्वालातिप्रपीडिताः ।। ८ ।।
नत्वा नुत्वा विधिन्देवास्तत्स्वदुःखन्न्यवेदयन् ।।
ब्रह्मा सह सुरैस्तात विष्णुलोकं ययावरम् ।।९।।
तत्र गत्वा रमानाथं नत्वा नुत्वा विधिस्सुरैः ।।
स्वदुःखन्तत्समाचख्यौ विष्णवेऽनन्तकं मुने ।। 3.19.१० ।।
विष्णुश्च विधिना देवै रुद्रस्थानं ययौ द्रुतम् ।।
हरं प्रणम्य तत्रेत्य तुष्टाव परमेश्वरम् ।। १ १।।
स्तुत्वा बहुतया विष्णुं स्वदुःखं च न्यवेदयत् ।।
शर्वं ज्वालासमुद्भूतमत्रेश्च तपसः परम् ।।१२।।
अथ तत्र समेस्तास्तु ब्रह्मविष्णुमहेश्वराः ।।
मुने संमन्त्रयाञ्चक्रुरन्योन्यं जगतां हितम् ।। १३ ।।
तदा ब्रह्मादयो देवास्त्रयस्ते वरदर्षभाः ।।
जग्मुस्तदाश्रमं शीघ्रं वरन्दातुन्तदर्षये ।। १४ ।।
स्वचिह्नचिह्नितांस्तान्स दृष्ट्वात्रिर्मुनिसत्तमः ।।
प्रणनाम च तुष्टाव वाग्भिरिष्टाभिरादरात् ।। १५ ।।
ततस्स विस्मितो विप्रस्तानुवाच कृताञ्जलिः ।।
ब्रह्मपुत्रो विनीतात्मा ब्रह्मविष्णुहराभिधान् ।। १६ ।।

अत्रिरुवाच ।।
हे ब्रह्मन् हे हरे रुद्र पूज्यास्त्रिजगताम्मताः ।।
प्रभवश्चेश्वराः सृष्टिरक्षासंहारकारकाः ।। १७ ।।
एक एव मया ध्यात ईश्वरः पुत्रहेतवे ।।
यः कश्चिदीश्वरः ख्यातो जगतां स्वस्त्रिया सह ।। १८ ।।
यूयं त्रयस्तुराः कस्मादागता वरदर्षभाः ।।
एतन्मे संशयं छित्त्वा ततो दत्तेप्सितं वरम् ।। १९ ।।
इति श्रुत्वा वचस्तस्य प्रत्यूचुस्ते सुरास्त्रयः ।।
यादृक्कृतस्ते संकल्पस्तथैवाभून्मुनीश्वर ।।3.19.२० ।।
वयं त्रयो भवेशानास्समाना वरदर्षभाः ।।
अस्मदंशभवास्तस्माद्भविष्यन्ति सुतास्त्रयः ।। २१ ।।
विदिता भुवने सर्वे पित्रोः कीर्तिविवर्द्धनाः ।।
इत्युक्तास्ते त्रयो देवास्स्वधामानि ययुर्मुदा ।। २२ ।।
वरं लब्ध्वा मुनिस्सोऽथ जगाम स्वाश्रमं मुदा ।।
युतोऽनुसूयया प्रीतो ब्रह्मानंदप्रदो मुने ।। २३ ।।
अथ ब्रह्मा हरिश्शम्भुरवतेरुः स्त्रियां ततः ।।
पुत्ररूपैः प्रसन्नात्मनानालीला प्रकाशकाः ।। २४ ।।
विधेरंशाद्विधुर्जज्ञेऽनसूयायां मुनीश्वरात् ।।
आविर्बभूवोदधितः शिप्तो देवेस्स एव हि ।। २५ ।।
विष्णोरंशात्स्त्रियान्तस्यामत्रेर्दत्तो व्यजायत ।।
संन्यासपद्धतिर्येन वर्द्धिता परमा मुने ।। २६ ।।
दुर्वासा मुनिशार्दूलः शिवांशान्मुनिसत्तमः ।।
जज्ञे तस्यां स्त्रियामत्रेर्वरधर्मप्रवर्तकः ।। २७ ।।
भूत्वा रुद्रश्च दुर्वासा ब्रह्मतेजोविवर्द्धनः ।।
चक्रे धर्मपरीक्षाञ्च बहूनां स दयापरः ।। २८ ।।
सूर्यवंशे समुत्पन्नो योऽम्बरीषो नृपोऽभवत् ।।
तत्परीक्षामकार्षीत्स तां शृणु त्वं मुनीश्वर। ।। २९ ।।
सोऽम्बरीषो नृपवरः सप्तद्वीपरसापतिः ।।
नियमं हि चकारासावेकादश्या व्रते दृढम् ।। 3.19.३० ।।
एकादश्या व्रतं कृत्वा द्वादश्यां चैव पारणाम् ।।
करिष्यामीति सुदृढसंकल्पस्तु नराधिपः ।।३१।।
ज्ञात्वा तन्नियमन्तस्य दुर्वासा मुनिसत्तमः।।
तदन्तिकं गतश्शिष्यैर्बहुभिश्शंकरांशजः ।।३२।।

पारणे द्वादशीं स्वल्पां ज्ञात्वा यावत्स भोजनम् ।।
कर्त्तुं व्यवसितस्तावदागतं स न्यमन्त्रयत् ।। ३३ ।।
ततः स्नानार्थमगमद्दुर्वासाः शिष्यसंयुतः ।।
विलम्बं कृतवांस्तत्र परीक्षार्थं मुनिर्बहु ।।३४।।
धर्मविघ्नं तदा ज्ञात्वा स नृपः शास्त्रशासनात् ।।
जलम्प्राश्यास्थितस्तत्र तदागमनकांक्षया ।।३५।।
एतस्मिन्नन्तरे तत्र दुर्वासा मुनिरागतः ।।
कृताशनं नृपं ज्ञात्वा परीक्षार्थं धृताकृतिः ।। ३६ ।।
चुक्रोधाति नृपे तस्मिन्परीक्षार्थं वृषस्य सः ।।
प्रोवाच वचनन्तूग्रं स मुनिश्शंकरांशजः ।। ३७ ।।
दुर्वासा उवाच ।।
मां निमन्त्र्य नृपाभोज्य जलं पीतन्त्वयाधम ।।
दर्शयामि फलं तस्य दुष्टदण्डधरो ह्यहम् ।।३८।।
इत्युक्त्वा क्रोधताम्राक्षो नृपं दग्धुं समुद्यतः ।।
समुत्तस्थौ द्रुतं चक्रं तत्स्थं रक्षार्थमैश्वरम् ।।३९।।
प्रजज्वालाति तं चक्रं मुनिं दग्धुं सुदर्शनम्।।
शिवरूपं तमज्ञात्वा शिवमायाविमोहितम्।।3.19.४०।।
एतस्मिन्नन्तरे व्योमवाण्युवाचाशरीरिणी।।
अम्बरीषम्महात्मानं ब्रह्मभक्तं च वैष्णवम्।।४१।।
व्योमवाण्युवाच।।
सुदर्शनमिदं चक्रं हरये शम्भुनार्पितम्।।
शांतं कुरु प्रज्वलितमद्य दुर्वाससे नृप।।४२।।
दुर्वासायं शिवः साक्षात्स चक्रं हरयेऽर्पितम् ।।
एवं साधारणमुनिं न जानीहि नृपोत्तम ।।४३।।
तव धर्मपरीक्षार्थमागतोऽयं मुनीश्वरः ।।
शरणं याहि तस्याशु भविष्यत्यन्यथा लयः ।।४४।।
नन्दीश्वर उवाच ।।
इत्युक्त्वा च नभोवाणी विरराम मुनीश्वर ।।
अस्तावीत्स हरांशं तमम्बरीषोऽपि चादरात् ।। ४५ ।।
अम्बरीष उवाच।।
यद्यस्ति दत्तमिष्टं च स्वधर्मो वा स्वनुष्ठितः ।।
कुलं नो विप्रदैवं चेद्धरेरस्त्रं प्रशाम्यतु ।। ४६ ।।
यदि नो भगवान्प्रीतो मद्भक्तो भक्तवत्सलः ।।

सुदर्शनमिदं चास्त्रं प्रशाम्यतु विशेषतः ।। ४७ ।।
नन्दीश्वर उवाच ।।
इति स्तुवति रुद्राग्रे शैवं चक्रं सुदर्शनम् ।।
अशाम्यत्सर्वथा ज्ञात्वा तं शिवांशं सुलब्धधीः ।।४८।।
अथाम्बरीषस्स नृपः प्रणनाम च तं मुनिम् ।।
शिवावतारं संज्ञाय स्वपरीक्षार्थमागतम् ।।४९।।
सुप्रसन्नो बभूवाथ स मुनिः शंकरांशजः।।
भुक्त्वा तस्मै वरं दत्त्वा स्वाभीष्टं स्वालयं ययौ ।। 3.19.५० ।।
अम्बरीषपरीक्षायां दुर्वासश्चरितम्मुने ।।
प्रोक्तामन्यच्चरित्रन्त्वं शृणु तस्य मुनीश्वर ।। ५१ ।।
पुनर्दाशरथेश्चक्रे परीक्षां नियमेन वै ।।
मुनिरूपेण कालेन यः कृतो नियमो मुने ।। ५२ ।।
तदैव मुनिना तेन सौमित्रिः प्रेषितो हठात् ।।
तन्तत्याज द्रुतं रामो बन्धुं पणवशान्मुने ।। ५३ ।।
सा कथा विहिता लोके मुनिभिर्बहुधोदिता ।।
नातो मे विस्तरात्प्रोक्ता ज्ञाता यत्सर्वधा बुधैः ।। ५४ ।।
नियमं सुदृढं दृष्ट्वा सुप्रसन्नोऽभवन्मुनिः ।।
दुर्वासास्सुप्रसन्नात्मा वरन्तस्मै प्रदत्तवान् ।। ५५ ।।
श्रीकृष्णनियमस्यापि परीक्षां स चकार ह ।।
तां शृणु त्वं मुनिश्रेष्ठ कथयामि कथां च ताम् ।। ५६ ।।
ब्रह्मप्रार्थनया विष्णुर्वसुदेवसुतोऽभवत् ।।
धराभारावतारार्थं साधूनां रक्षणाय च।।५७।।
हत्वा दुष्टान्महापापान् ब्रह्मद्रोहकरान्मलान् ।।
ररक्ष निखिलान्साधून्ब्राह्मणान्कृष्णनामभाक् ।। ५८ ।।
ब्रह्मभक्तिं चकाराति स कृष्णो वसुदेवजः ।।
नित्यं हि भोजयामास सुरसान्ब्राह्मणान्बहून् ।। ५९ ।।
ब्रह्मभक्तो विशेषेण कृष्णश्चेति प्रथामगात ।।
संद्रष्टुकामस्स मुनिः कृष्णान्तिकमगान्मुने ।। 3.19.६० ।।
रुक्मणीसहितं कृष्णं सन्नं? कृत्वा रथे स्वयम् ।।
संयोज्य संस्थितो वाहं सुप्रसन्न उवाह तम् ।।६१।।
मुनी रथात्समुत्तीर्य दृष्ट्वा तां दृढताम्पराम् ।।
तस्मै भूत्वा सुप्रसन्नो वज्राङ्गत्ववरन्ददौ ।।६२।।
द्युनद्यामेकदा स्नानं कुर्वन्नग्नो बभूव ह ।।

लज्जितोभून्मुनिश्रेष्ठो दुर्वासाः कौतुकी मुने ।।६३।।
तज्ज्ञात्वा द्रौपदी स्नानं कुर्वती तत्र चादरात्।।
तल्लज्जां छादयामास भिन्नस्वाञ्चलदानतः ।। ६४ ।।
तदादाय प्रवाहेनागतं स्वनिकटं मुनिः ।।
तेनाच्छाद्य स्वगुह्यं च तस्यै तुष्टो बभूव सः ।। ६५ ।।
द्रौपद्यै च वरम्प्रादात्तदञ्चलविवर्द्धनम् ।।
पाण्डवान्सुखिनश्चक्रे द्रौपदी तद्वरात्पुनः ।।६६।।
हंसडिम्भौ नृपौ कौचित्सावमानकरौ खलौ ।।
दत्त्वा निदेशं च हरेर्नाशयामास स प्रभुः ।। ६७ ।।
ब्रह्मतेजोविशेषेण स्थापयामास भूतले ।।
संन्यासपद्धतिञ्चैव यथाशास्त्र विधिक्रमम् ।।६८।।
बहूनुद्धारयामास सूपदेशं विबोध्य च ।।
ज्ञानं दत्त्वा विशेषेण बहून्मुक्तांश्चकार सः।।६९।।
इत्थं चक्रे स दुर्वासा विचित्रं चरितम्बहु।।
धन्यं यशस्यमायुष्यं शृण्वतस्सर्वकामदम् ।।3.19.७० ।।
य इदं शृणुयाद्भक्त्या दुर्वासश्चरितम्मुदा।।
श्रावयेद्वा परां यश्च स सुखीह परत्र च ।।७१।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां दुर्वासश्चरित्रवर्णनं नामैकोनविंशोऽध्यायः।।१९।।

नन्दीश्वर उवाच।।
अतः परं श्रुणु प्रीत्या हनुमच्चरितम्मुने।।
यथा चकाराशु हरो लीलास्तद्रूपतो वराः ।।१।।
चकार सुहितं प्रीत्या रामस्य परमेश्वराः ।।
तत्सर्वं चरितं विप्र शृणु सर्वसुखावहम् ।। २ ।।।
एकस्मिन्समये शम्भुरद्भुतोतिकरः प्रभुः ।।
ददर्श मोहिनीरूपं विष्णोस्स हि वसद्गुणः? ।। ३ ।।
चक्रे स्वं क्षुभितं शम्भुः कामबाणहतो यथा ।।
स्वम्वीर्यम्पातयामास रामकार्यार्थमीश्वरः ।।४।।
तद्वीर्यं स्थापयामासुः पत्रे सप्तर्षयश्च ते ।।
प्रेरिता मनसा तेन रामकार्यार्थ मादरात ।।५।।
तैर्गौतमसुतायां तद्वीर्यं शम्भोर्महर्षिभिः।।
कर्णद्वारा तथांजन्यां रामकार्यार्थमाहितम् ।।६।।
ततश्च समये तस्माद्धनूमा निति नामभाक् ।।
शम्भुर्जज्ञे कपितनुर्महाबलपराक्रमः ।।७।।
हनूमान्स कपीशानः शिशुरेव महाबलः ।।
रविबिम्बं बभक्षाशु ज्ञात्वा लघुफलम्प्रगे ।।८।।
देवप्रार्थनया तं सोऽत्यजज्ज्ञात्वा महाबलम् ।।
शिवावतारं च प्राप वरान्दत्तान्सुरर्षिभिः ।। ९ ।।
स्वजनन्यन्तिकम्प्रागादथ सोतिप्रहर्षितः ।।
हनूमान्सर्वमाचख्यौ तस्यै तद्वृत्तमादरात्।।3.20.१०।।
तदाज्ञया ततो धीरस्सर्वविद्यामयत्नतः ।।
सूर्यात्पपाठ स कपिर्गत्वा नित्यं तदान्तिकम्।।११।।
सूर्याज्ञया तदंशत्य सुग्रीवस्यान्तिकं ययौ।।
मातुराज्ञामनुप्राप्य रुद्रांशः कपिसत्तमः ।।१२।।
ज्येष्ठभ्रात्रा वालिना हि स्वस्त्रीभोक्त्रा तिरस्कृतः ।।
ऋष्यमृकगिरौ तेन न्यवसत्स हनूमता ।। १३ ।।
ततोऽभूत्स सुकण्ठस्य मन्त्री कपिवरस्सुधीः ।।
सर्वथा सुहितं चक्रे सुग्रीवस्य हरांशजः ।। १४ ।।
तत्रागतेन सभ्रात्रा हृतभार्येण दुःखिना ।।
कारयामास रामेण तस्य सख्यं सुखावहम् ।।१५।।
घातयामास रामश्च वालिनं कपिकुञ्जरम् ।।
भ्रातृपत्न्याश्च भोक्तारं पापिनम्वीरमानिनम् ।। १६ ।।

ततो रामाऽऽज्ञया तात हनूमान्वानरेश्वरः ।।
स सीतान्वेषणञ्चक्रे बहुभिर्वानरैस्सुधीः ।। १७ ।।
ज्ञात्वा लङ्कागतां सीतां गतस्तत्र कपीश्वरः ।।
द्रुतमुल्लंघ्य सिंधुन्तमनिस्तीर्य्यं परैस्स वै ।। १८ ।।
चक्रेऽद्भुतचरित्रं स तत्र विक्रमसंयुतम् ।।
अभिज्ञानन्ददौ प्रीत्या सीतायै स्वप्रभोर्वरम् ।। १९ ।।
सीताशोकं जहाराशु स वीरः कपिनायकः ।।
श्रावयित्वा रामवृत्तं तत्प्राणावनकारकम् ।। 3.20.२० ।।
तदभिज्ञानमादाय निवृत्तो रामसन्निधिम्।।
रावणाऽऽराममाहत्य जघान बहुराक्षसान्।।२१।।
तदेव रावणसुतं हत्वा सबहुराक्षसम् ।।
स महोपद्रवं चक्रे महोतिस्तत्र निर्भयः ।।२२।।
यदा दग्धो रावणेनावगुंठ्य वसनानि च ।।
तैलाभ्यक्तानि सुदृढं महाबलवता मुने।।२३।। ।।
उत्प्लुत्योत्प्लुत्य च तदा महादेवांशजः कपिः ।।
ददाह लंकां निखिलां कृत्वा व्याजन्तमेव हि ।। २४ ।।
दग्ध्वा लंकां वंचयित्वा विभीषणगृहं ततः ।।
अपतद्वारिधौ वीरस्ततस्स कपिकुञ्जरः ।।२५।।
स्वपुच्छ तत्र निर्वाप्य प्राप तस्य परन्तटम् ।।
अखिन्नस्स ययौ रामसन्निधिं गिरिशांशजः ।।२६।।
अविलंबेन सुजवो हनूमान् कपिसत्तमः ।।
रामोपकण्ठमागत्य ददौ सीताशिरोमणिम् ।। २७ ।।
ततस्तदाज्ञया वीरस्सिन्धौ सेतुमबन्धयत् ।।
वानरस्स समानीय बहून्गिरिवरान्बली ।।२८।।
गत्वा तत्र ततो रामस्तर्तुकामो यथा ततः ।।
शिवलिंगं समानर्च प्रतिष्ठाप्य जयेप्सया ।। २९ ।।
तद्वरात्स जयं प्राप्य वरं तीर्त्वोदधिं ततः ।।
लंकामावृत्य कपिभी रणं चक्रे स राक्षसैः ।। 3.20.३० ।।
जघानाथासुरान्वीरो रामसैन्यं ररक्ष सः ।।
शक्ति क्षतं लक्ष्मणं च संजीविन्या ह्यजीवयत् ।। ३१ ।।
सर्वथा सुखिनं चक्रे सरामं लक्ष्मणं हि सः ।।
सर्वसैन्यं ररक्षासौ महादेवात्मजः प्रभुः ।।३२।।
रावणं परिवाराढ्यं नाशयामास विश्रमः ।।

सुखीचकार देवान्स महाबलग्रहः कपि।।३३।।
महीरावणसंज्ञं स हत्वा रामं सलक्ष्मणम् ।।
तत्स्थानादानयामास स्वस्थानम्परिपाल्य च ।।३४ ।।
रामकार्यं चकाराशु सर्वथा कपिपुंगवः ।।
असुरान्नमयामास नानालीलां चकार च ।। ३५ ।।
स्थापयामास भूलोके रामभक्तिं कपीश्वरः।।
स्वयं भक्तवरो भूत्वा सीतारामसुखप्रदः।।३६।।
लक्ष्मणप्राणदाता च सर्वदेवमदापहः ।।
रुद्रावतारो भगवान्भक्तोद्धारकरस्स वै ।।३७।।
हनुमान्स महावीरो रामकार्यकरस्सदा।।
रामदूताभिधो लोके दैत्यघ्नो भक्तवत्सलः।।३८।।
इति ते कथितं तात हनुमच्चरितम्वरम्।।
धन्यं यशस्यमायुष्यं सर्वकामफलप्रदम्।।३९।।
य इदं शृणुयाद्भक्त्या श्रावयेद्वा समाहितः।।
स भुक्त्वेहाखिलान्कामानन्ते मोक्षं लभेत्परम् ।।3.20.४०।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां हनुमदवतारचरित्रवर्णनं नाम विंशोऽध्यायः ।।२०।।

।।नन्दीश्वर उवाच ।।
अथ प्रीत्या शृणु मुनेऽवतारं परमं प्रभोः ।।
शंकरस्यात्मभूपुत्र शृण्वतां सर्वकामदम् ।।१।।
एकदा मुनिशार्दूल गिरिजाशंकरावुभौ ।।
विहर्तुकामौ संजातौ स्वेच्छया परमेश्वरौ ।।२।।
भैरवं द्वारपालं च कृत्वाभ्यन्तरमागतौ ।।
नानासखिगणैः प्रीत्या सेवितौ नरशीलितौ ।।३।।
चिरं विहृत्य तत्र द्वौ स्वतन्त्रौ परमेश्वरौ ।।
बभूवतुः प्रसन्नो तौ नानालीलाकरौ मुने ।।४।।
अथोन्मत्ताकृतिर्देवी स्वतन्त्रा लीलया शिवा ।।
आगता द्वारि तद्रूपा प्रभोराज्ञामवाप सा।।५।।
तां देवीं भैरवस्सोथ नारीदृष्ट्या विलोक्य च ।।
निषिषेध बहिर्गन्तुं तद्रूपेण विमोहितः ।। ६ ।।
नारीदृष्ट्या सुदृष्टा सा भैरवेण यदा मुने ।।
क्रुद्धाऽभवच्छिवा देवी तं शशाप तदांबिका ।। ७ ।।
।। शिवोवाच ।।
नारीदृष्ट्या पश्यसि त्वं यतो मां पुरुषाधम ।।
अतो भव धरायां हि मानुषस्त्वं च भैरव ।। ८ ।।
नन्दीश्वर उवाच ।।
इत्थं यदाऽभवच्छप्तो भैरवश्शिवया मुने ।।
हाहाकारो महानासीद्दुःखमाप स लीलया ।। ९ ।।
ततश्च शंकरः शीघ्रं तमागत्य मुनीश्वर ।।
अश्वासयद्भैरवं हि नानाऽनुनयकोविदः ।। 3.21.१० ।।
तच्छापाद्भैरवस्सोथ क्षितावववतरन्मुने ।।
मनुष्ययोन्यां वैतालसंज्ञकश्शंकरेच्छया ।। ११ ।।
तत्स्नेहतः शिवः सोपि क्षितावववतरद्विभुः ।।
शिवया सह सल्लीलो लौकिकीङ्गतिमाश्रितः ।। १२ ।।
महेशाह्वः शिवश्चासीच्छारदा गिरिजा मुने ।।
सुलीलां चक्रतुः प्रीत्या नाना लीला विशारदौ ।। १३ ।।
इति ते कथितं तात महेशचरितं वरम् ।।
धन्यं यशस्यमायुष्यं सर्वकामफलप्रदम् ।। १४ ।।
य इदं शृणुयाद्भक्त्या श्रावयेद्वा समाहितः ।।

स भुक्त्वेहाखिलान्भोगानन्ते मोक्षमवाप्नुयात् ।। १५ ।।

इति श्रीशिव महापुराणे तृतीयायां शतरुद्रसंहितायां महेशावतारवर्णनं नामैकविंशोध्यायः।।२१।।

नन्दीश्वर उवाच ।।
शृणु ब्रह्मसुत प्राज्ञ वृषेशाख्यं मुनीश्वर ।।
शिवावतारं सल्लीलं हरिगर्वहरं वरम् ।। १ ।।
पुरा देवासुराः सर्वे जरामृत्युभयार्दिताः ।।
परस्परं च संधाय रत्नान्यादित्सवोऽभवन् ।। २ ।।
ततः सुराऽसुराः सर्वे क्षीरोदं सागरोत्तमम् ।।
उद्यता मथितुं तं च बभूवुर्मुनि नन्दन ।। ३ ।।
आसञ्छुचिस्मितास्सर्वे केनेदं मन्थनं भवेत् ।।
स्वकार्यसिद्धये तस्य ब्रह्मन्निति सुरासुराः ।। ४ ।।
तदा नभोगता वाणी मेघगम्भीरनिस्वना ।।
उवाच देवान्दैत्यांश्च श्वासयन्तीश्वराज्ञया ।। ५ ।।
नभोवाण्युवाच ।।
हे देवा असुराश्चैव मन्थध्वं क्षीरसागरम् ।।
भवताम्बलबुद्धिर्हि भविष्यति न संशयः ।। ६ ।।
मन्दरं चैव मन्थानं रज्जुं कुरुत वासुकिम् ।।
मिथस्सर्वे मिलित्वा तु मंथनं कुरुतादरात् ।। ७ ।।
नन्दीश्वर उवाच ।।
नभोगता तदा वाणीं निशम्याथ सुरासुरः ।।
उद्योगं चक्रिरे सर्वे तत्कर्तुं मुनिसत्तम ।। ८ ।।
सुसन्धायाखिलास्ते वै मन्दरम्पर्वतोत्तमम् ।।
कनकाभं च सरलं नानाशोभार्चितं ययुः ।। ९ ।।
सुप्रसाद्य गिरीशं तं तदाज्ञप्ताः सुरासुराः ।।
बलादुत्पाटयामासुर्नेतुकामाः पयोऽर्णवम् ।। 3.22.१० ।।
भुजैरुत्पाट्य ते सर्व्वे जग्मुः क्षीरार्णव पुरे ।।
अशक्ता अभवंस्तत्र तमानेतुं हतौजसः ।। ११ ।।
तद्भुजैस्स परिभ्रष्टः पतितो मंदरो गिरिः ।।
सहसातिगुरुस्सद्यो देवदैत्योपरि ध्रुवम्।।१२।।
एवम्भग्नोद्यमा भग्नाः सम्बभूवुस्सुरासुरा।।
चेतनाः प्राप्य च ततस्तुष्टुवुर्जगदीश्वरम् ।।१३।।
तदिच्छयोद्यतास्सर्वे पुनरुत्थाय तं गिरिम्।।
निचिक्षिपुर्जले नीत्वा क्षीरोदस्योत्तरे तटे ।। १४ ।।
ततस्सुरासुरगणा रज्जुं कृत्वा च वासुकिम् ।।
रत्नान्यादातुकामास्ते ममंथुः क्षीरसागरम् ।। १५ ।।

क्षीरोदे मथ्यमाने तु श्रीस्स्वर्लोकमहेश्वरी ।।
समुद्भूता समुद्राच्च भृगुपुत्री हरिप्रिया ।।१६।।
धन्वन्तरिः शशांकश्च पारिजातो महाद्रुमः ।।
उच्चैश्श्रवाश्च तुरगो गज ऐरावतस्तथा ।।१७।।
सुरा हरिधनु श्शङ्खो गावः कामदुघास्ततः ।।
कौस्तुभाख्यो मणिश्चैव तथा पीयूषमेव च ।।१८।।
पुनश्च मथ्यमाने तु कालकूटं महाविषम् ।।
युगान्तानलभ जातं सुरासुरभयावहम ।। १९ ।।
पीयूषजन्मकाले तु बिन्दवो ये बहिर्गताः ।।
तेभ्यः कान्ता समुद्भूता बह्वयो ह्यद्भुतदर्शनाः ।।3.22.२०।।
शरत्पूर्णेन्दुवदनास्तडित्सूर्य्यानलप्रभाः ।।
हारकेयूरकटकैर्दिव्यरत्नैरलङ्कृताः ।।२१।।
लावण्यामृततोयेन तास्सिंचन्त्यो दिशो दश ।।
जगदुन्मादयन्त्येव भ्रूभङ्गायतवीक्षणाः ।। २२ ।।
कोटिशस्तास्समुत्पन्नास्त्वमृतात्कामनिस्सृताः ।।
ततोऽमृतं समुत्पन्नं जरामृत्युनिवारणम् ।। २३ ।।
लक्ष्मीं शंखं कौस्तुभं च खड्गं जग्राह केशवः ।।
जग्राहार्को हयं दिव्यमुच्चैःश्रवसमादरात् ।। २४ ।।
पारिजातं तरुवरमैरावतमिभेश्वरम् ।।
शचीपतिश्च जग्राह निर्जरेशो महादरात ।। २५ ।।
कालकूटं शशांकं च देवत्राणाय शंकरः ।।
स्वकण्ठे धृतवाञ्छम्भुस्स्वेच्छया भक्तवत्सलः ।। २६ ।।
दैत्यास्सुराख्यां रमणीमीश्वराज्ञाविमोहिताः ।।
जगृहुः सकला व्यास सर्वे धन्वन्तरिं जनाः।।२७।।
जगृहुर्मुनयस्सर्वे कामधेनुम्मुनीश्वराः ।।
सामान्यतस्त्रियस्ताश्च स्थिता आसन्विमोहिताः ।।२८।।
अमृतार्थं महायुद्धं संबभूव जयैषिणाम्।।
सुराणामसुराणां च मिथः संक्षुब्धचेतसाम् ।।२९।।
हृतं सोमं च दैतेयैर्बलाद्देवान्विजित्य च ।।
बलिप्रभृतिभिर्व्यास युगान्ताग्न्यर्कसुप्रभैः ।। 3.22.३० ।।
देवाश्शंकरमापन्ना विह्वलाश्शिवमायया ।।
सर्वे शक्रादयस्तात दैतेयैरर्दिता बलात् ।। ३१ ।।
ततस्तदमृतं यत्नात्स्त्रीस्वरूपेण मायया ।।

शिवाज्ञया रमेशेन दैत्येभ्यश्च हृतम्मुने ।।३२।।
अपाययत्सुरांस्तांश्च मोहिनीस्त्रीस्वरूपधृक् ।।
मोहयित्वा सुरान्सर्वान्हरिर्मायाविनां वरः।।३३।।
गत्वा निकटमेतस्या ऊचिरे दैत्यपुंगवाः ।।
पाययस्व सुधामेतां मा भूद्भेदोऽत्र पंक्तिषु।।३४।।
एतदुक्त्वा ददुस्तस्मै विष्णवे छलरूपिणे ।।
ते दैत्या दानवाः सर्वे शिवमायाविमोहिताः ।।३५।।
एतस्मिन्नन्तरे दृष्ट्वा स्त्रियो दानवपुंगवाः ।।
अनयन्नमृतोद्भूता यथास्थानं यथासुखम् ।।३६।।
तासाम्पुराणि दिव्यानि स्वर्गाच्छगुणान्यपि।।
घोरैर्यन्त्रैस्सुगुप्तानि मयमायाकृतानि च।।३७।।
सुरक्षितानि सर्वाणि कृत्वा युद्धाय निर्ययुः।।
अस्पृष्टवक्षसो दैत्याः कृत्वा समयमेव हि।।३८।।
न स्पृशामः स्त्रियश्चेमा यदि देवैर्विनिर्जिताः ।।
इत्युक्त्वा ते महावीरा दैत्यास्सर्वे युयुत्सवः ।।३९।।
सिंहनादन्ततश्चक्रुश्शंखान्दध्मुः पृथक्पृथक्।।
पूरयन्त इवाकाशं तर्पयन्तो बलाहकान्।।3.22.४०।।
युद्धं बभूव देवानामसुरैस्सह भीकरम् ।।
देवासुराख्यमतुलं प्रसिद्धं भुवनत्रये।।४१।।
जयं प्रापुस्सुरास्सर्वे विष्णुना परिरक्षिताः।।
दैत्याः पलायितास्तत्र हताः सामरविष्णुना ।।४२।।
दैत्याः संमोहिता देवैर्विष्णुना च महात्मना ।।
हतावशिष्टाः पातालं विविशुर्विवराणि च ।।४३।।
अनुवव्राज तान्विष्णुश्चक्रपाणिर्महाबलः ।।
पातालं परमं गत्वा संस्थितान्भीतभीतवत् ।। ४४ ।।
एतस्मिन्नन्तरे विष्णु ददर्शामृतसम्भवाः ।।
कान्ताः पूर्णेन्दुवदना दिव्यलावण्यगर्विताः ।। ४५ ।।
संमोहितः कामबाणैर्लेभे तत्रैव निर्वृतिम् ।।
ताभिश्च वरनारीभिः क्रीडमानो बभूव ह ।। ४६ ।।
ताभ्य पुत्रानजनयद्विष्णुर्वरपराक्रमान् ।।
महीं सर्वां कंपयतो नानायुद्धविशारदान् ।। ४७ ।।
ततो वै हरिपुत्रास्ते महाबलपराक्रमाः ।।
महोपद्रवमाचेरुस्स्वर्गे भुवि च दुःखदम् ।। ४८ ।।

लोकोपद्रवमालक्ष्य निर्जरा मुनयोऽथ वै ।।
चक्रुर्निवेदनन्तेषां ब्रह्मणे प्रणिपत्य च ।। ४९ ।।
तच्छ्रुत्वादाय तान्ब्रह्मा ययौ कैलासपर्वतम् ।।
तत्र दृष्ट्वा शिवं देवैः प्रणनाम पुनः पुनः ।। 3.22.५० ।।
तुष्टाव विविधैस्तोत्रैर्नत स्कन्धः कृताञ्जलिः ।।
जय देव महादेव सर्वस्वामिन्निति ब्रुवन् ।। ५१ ।।
ब्रह्मोवाच ।।
देवदेव महादेव लोकान्रक्षाखिलान्प्रभो ।।
उपद्रुतान्विष्णुपुत्रैः पातालस्थैर्विकारिभिः ।। ५२।।
नारीष्वमृतभूतासु संसक्तात्मा हरिर्विभो ।।
पाताले तिष्ठतीदानीं रमते हि विकारवान् ।। ५३ ।।
नन्दीश्वर उवाच ।।
इत्थं बहुस्तुतः शम्भुर्ब्रह्मणा सर्षिनिर्जरैः ।।
लोकसंरक्षणार्थाय विष्णोरानयनाय च ।। ५४ ।।
ततस्स भगवाञ्छम्भुः कृपासिंधुर्महेश्वरः ।।
तदुपद्रवमाज्ञाय वृषरूपो बभूव ह।।५५।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां विष्णूपद्रववृषावतारवर्णनं नाम द्वाविंशोऽध्यायः ।। २२ ।।

नन्दीश्वर उवाच ।।
ततो वृषभरूपेण गर्जमानः पिनाकधृक् ।।
प्रविष्टो विवरं तत्र निनदन्भैरवान्रवान् ।। १ ।।
निपेस्तुतस्य निनदैः पुराणि नगराणि च ।।
प्रकम्पो हि बभूवाथ सर्वेषां पुरवासिनाम् ।। २ ।।
ततो वृषो हरेः पुत्रान्संग्रामोद्यतकार्मुकान् ।।
शिवमायाविमूढात्ममहाबलपराक्रमान् ।। ३ ।।
हरिपुत्रास्ततस्तेऽथ प्राकुप्यन्मुनिसत्तम ।।
प्रदुद्रुवुः प्रगर्ज्योच्चैर्वीराश्शंकरसन्मुखम् ।। ४ ।।
आयातांस्तान्हरेः पुत्रान्रुद्रो वृषभरूपधृक् ।।
प्राकुप्यद्विष्णुपुत्रांश्च खुरैश्शृंगैर्व्यदारयत् ।। ५ ।।
विदारितांगा रुद्रेण सर्वे हरिसुताश्च ते ।।
नष्टा द्रुतं सन्बभूवुर्गतप्राणा विचेतसः ।। ६ ।।
हतेषु तेषु पुत्रेषु विष्णुर्बलवतां वरः ।।
निष्क्रम्याथ प्रणम्योच्चैर्ययौ शीघ्रं हरान्तिकम् ।। ७ ।।
दृष्ट्वा रुद्रं प्रव्रजंतं हतविष्णुसुतं वृषम्।।
शरैस्सन्ताडयामास दिव्यैरस्त्रैश्च केशवः।। ८।।
ततः क्रुद्धो महादेवो वृषरूपी मदाबलः ।।
अस्त्राणि तानि विष्णोश्च जग्रास गिरिगोचरः ।।९।।
अथ कृत्वा महाकोपं वृषात्मा स महेश्वरः ।।
विननाद महाघोरं कम्पयंस्त्रिजगन्मुने ।।3.23.१०।।
तत विष्णोश्च तरसा खुरैश्शृंगैर्व्यदारयत् ।।
विष्णुं क्रोधाकुलं मूढमजानन्तं निजं हरिम्।।११।।
ततस्स शिथिलात्मा हि व्यथितांगो बभूव ह।।
तत्प्रहारमसह्याशु हरिर्मायाविमोहितः।।१२।।
गतगर्वोहरिश्चैव विचेता गतचेतनः।।
ज्ञातवान्परमेशानं विहरन्तं वृषात्मना।।१३।।
अथ विज्ञाय गौरीशमागतं वृषरूपतः ।।
प्राह गम्भीरया वाचा नतस्कन्धः कृताञ्जलिः ।।१४।।
हरिरुवाच ।।
देवदेव महादेव करुणासागर प्रभो।।
मायया ते महेशान मोहितोहं विमूढधीः ।।१५।।
कृतं युद्धं त्वयेशेन स्वनाथेन मया प्रभो ।।

कृपां कृत्वा मयि स्वामिन्सोऽपराधो हि सह्यताम् ।। १६ ।।
नन्दीश्वर उवाच ।।
तस्य तद्वचनं श्रुत्वा हरेर्दीनतया मुने ।।
भगवाञ्छंकरः प्राह रमेशं भक्तवत्सलः ।।१७।।
हे विष्णो हे महाबुद्धे कथं मां ज्ञातवान्न हि ।।
युद्धं कृतं कृतस्तेऽद्य ज्ञानं सर्व्वं च विस्मृतम्।।१८।।
आत्मानं किन्न जानासि मदधीनपराक्रमम् ।।
त्वया नात्र रतिः कार्या निवर्तस्व कुचारतः ।। १९ ।।
कामाधीनं कथं ज्ञानं स्त्रीषु सक्तो विहारकृत् ।।
नोचितन्तव देवेश स्मरणं विश्वतारणम्।।3.23.२०।।
तच्छ्रुत्वा शम्भुवचनं विज्ञानप्रदमादरात्।।
व्रीड्यन्स्वमनसा विष्णुः प्राह वाचं महेश्वरम्।।२१।।
विष्णुरुवाच।
ममात्र विद्यते चक्रं तद्गृहीत्वे तदादरात्।।
गमिष्यामि स्वलोकन्तन्त्वदाज्ञापरिपालकः ।।२२।।
नन्दीश्वर उवाच ।।
तदाकर्ण्य महेशानो वचनं वैष्णवं हरः ।।
प्रत्युवाच वृषात्मा हि वृषरक्षः पुनर्हरिम् ।।२३।।
न विलम्बः प्रकर्त्तव्यो गन्तव्यमित आशु ते।।
मच्छासनाद्धरे लोके चक्रमत्रैव तिष्ठताम्।।२४।।
सन्तानादित्यसंस्थानाच्छिवत्ववचनादपि।।
अहं घोरतरं तस्माच्चक्रमन्यद्ददामि ते ।। २५ ।।
नन्दीश्वर उवाच ।।
एतदुक्त्वा हरोऽलेखीद्दिव्यं कालानलप्रभम् ।।
परं चक्रं प्रदीप्तं हि सर्वदुष्टविनाशनम् ।। २६ ।।
विष्णवे प्रददौ चक्रं घोरार्कायुतसुप्रभम् ।।
सर्वामरमुनीन्द्राणां रक्षकाय महात्मने ।। २७ ।।
लब्ध्वा सुदर्शनं चान्यञ्चक्रं परमदीप्तिमित् ।।
उवाच विबुधांस्तत्र विष्णुर्बुद्धिमतां वरः ।। २८ ।।
सर्वदेववरा यूयं मद्वाक्यं शृणुतादरात् ।।
कर्तव्यन्तत्तथा शीघ्रं ततश्शं वो भविष्यति ।।२९।।
दिव्या वरांगनास्सन्ति पाताले यौवनान्विताः।।
ताभिः सार्द्धं महाक्रीडां यः करोतु करोतु सः।।3.23.३०।।

तच्छ्रुत्वा केशवाद्वाक्यं शूरास्त्रिदशयोनयः ।।
प्रवेष्टुकामाः पातालम्बभूवुर्विष्णुना सह ।।३१।।
विचारमथ विज्ञाय तन्तदा भगवान्हर ।।
क्रोधाच्छापन्ददौ घोरं देवयोन्यष्टकस्य च ।। ३२ ।।
हर उवाच ।।
वर्जयित्वा मुनिं शान्तं दानवान्वा मदंशजम् ।।
इदं यः प्रविशेत्स्थानं तस्य स्यान्निधनं क्षणात् ।।३३।।
श्रुत्वा वाक्यमिदं घोरं मनुष्यहितवर्धनम् ।।
प्रत्याख्यातास्तु रुद्रेण देवास्स्वगृहमा ययुः ।। ३४ ।।
एवं स्त्रीलः परो विष्णुश्शिवेन प्रतिशासितः ।।
स्वर्लोकमगमद्व्यास स्वास्थ्यं प्राप जगच्च तत् ।। ३५ ।।
वृषेश्वरोऽपि भगवाच्छंकरो भक्तवत्सलः ।।
इत्थं कृत्वा देवकार्यं जगाम स्वगिरीश्वरम् ।। ३६ ।।
वृषेश्वरावतारस्तु वर्णितश्शंकरस्य च ।।
विष्णुमोहहरश्शर्वस्त्रैलोक्यसुखकारकः ।। ३७ ।।
पवित्रमिदमाख्यानं शत्रुबाधाहरम्परम् ।।
स्वर्ग्यं यशस्यमायुष्यं भुक्तिमुक्तिप्रदं सताम् ।। ३८ ।।
य इदं शृणुयाद्भक्त्या श्रावयेद्वै समाहितः ।।
स भुक्त्वा सकलान्कामानन्ते मोक्ष मवाप्नुयात् ।।
तथा पठिति यो हीदं पाठयेत्सुधियो नरान् ।।३९।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसहितायां वृषेश्वरसंज्ञकशिवावतारवर्णनं नाम त्रयोविंशोऽध्यायः ।।२३।।

नन्दीश्वर उवाच।।
पिप्पलादाख्यपरममवतारं महेशितुः ।।
शृणु प्राज्ञ महाप्रीत्या भक्तिवर्धनमुत्तमम्।।१।।
यः पुरा गदितो विप्रो दधीचिर्मुनिसत्तमः ।।
महाशैवस्सुप्रतापी च्यावनिर्भृगुवंशजः।।२।।
क्षुवेण सह संग्रामे येन विष्णुः पराजितः।।
सनिर्जरोऽथ संशप्तो महेश्वरसहायिना।।३।।
तस्य पत्नी महाभागा सुवर्चा नामनामतः।।
महापतिव्रता साध्वी यया शप्ता दिवौकसः ।।४।।
तस्मात्तस्यां महादेवो नानालीलाविशारदः ।।
प्रादुर्बभूव तेजस्वी पिप्पलादेति नामतः ।।५।।
सूत उवाच ।।
इत्याकर्ण्य मुनिश्रेष्ठो नन्दीश्वरवचोऽद्भुतम्।।
सनत्कुमारः प्रोवाच नतस्कन्धः कृताञ्जलिः ।।६।।
सनत्कुमार उवाच ।।
नन्दीश्वर महाप्राज्ञ साक्षाद्रुद्रस्वरूपधृक् ।।
धन्यस्त्वं सद्गुरुस्तात श्रावितेयं कथाद्भुता ।।७।।
क्षुवेण सह संग्रामे श्रुतो विष्णुपुरा जयः ।।
ब्रह्मणा मे पुरा तात तच्छापश्च शिलादज ।।८।।
अधुना श्रोतुमिच्छामि देवशापं सुवर्चया।।
दत्तं पश्चात्पिप्पलादचरितं मङ्गलायनम् ।।९।।
सूत उवाच ।।
इति श्रुत्वाथ शैलादिर्विधिपुत्रवचश्शुभम् ।।
प्रत्युवाच प्रसन्नात्मा स्मृत्वा शिवपदाम्बुजम्।।3.24.१०।।
नन्दीश्वर उवाच ।।
एकदा निर्जरास्सर्वे वासवाद्या मुनीश्वर ।।
वृत्रासुरसहायैश्च दैत्यैरासन्पराजिताः ।।११।।
स्वानि स्वानि वरास्त्रा णि दधीचस्याश्रमेऽखिलाः ।।
निक्षिप्य सहसा सद्योऽभवन्देवाः पराजिताः ।। १२ ।।
तदा सर्वे सुरास्सेन्द्रा वध्यमानास्तथर्षयः।।
ब्रह्मलोकगताश्शीघ्रं प्रोचुः स्वं व्यसनं च तत् ।।१३।।
तच्छ्रुत्वा देववचनं ब्रह्मा लोकपितामहः ।।
सर्वं शशंस तत्त्वेन त्वष्टुश्चैव चिकीर्षितम् ।। १४ ।।

भवद्वधार्थं जनितस्त्वष्ट्रायं तपसा सुराः ।।
वृत्रो नाम महातेजाः सर्वदैत्याधिपो महान् ।। १५ ।।
अथ प्रयत्नः क्रियतां भवेदस्य वधो यथा ।।
तत्रोपायं शृणु प्राज्ञ धर्महेतोर्वदामि ते ।।१६।।
महामुनिर्दधीचिर्यस्स तपस्वी जितेन्द्रियः ।।
लेभे शिवं समाराध्य वज्रास्थित्ववरम्पुरा ।।१७।।
तस्यास्थीन्येव याचध्वं स दास्यति न संशय ।।
निर्माय तैर्दण्डवज्रं वृत्रं जहि न संशयः ।।१८।।
नन्दीश्वर उवाच।।
तच्छ्रुत्वा ब्रह्मवचनं शक्रो गुरुसमन्वितः।।
आगच्छत्सामरः सद्यो दधीच्याश्रममुत्तमम् ।। १९ ।।
दृष्ट्वा तत्र मुनिं शक्रः सुवर्चान्वितमादरात् ।।
ननाम साञ्जलिर्नम्रः सगुरुः सामरश्च तम् ।।3.24.२०।।
तदभिप्रायमाज्ञाय स मुनिर्बुधसत्तमः ।।
स्वपत्नीं प्रेषयामास सुवर्चां स्वाश्रमान्तरम् ।।२१।।
ततस्स देवराजश्च सामरः स्वार्थसाधकः ।।
अर्थशास्त्रपरो भूत्वा मुनीशं वाक्यमब्रवीत् ।। २२ ।।
शक्र उवाच ।।
त्वष्ट्रा विप्रकृताः सर्वे वयन्देवास्तथर्षयः ।।
शरण्यं त्वां महाशैवं दातारं शरणं गताः ।। २३ ।।
स्वास्थीनि देहि नो विप्र महावज्रमयानि हि ।।
अस्थ्ना ते स्वपविं कृत्वा हनिष्यामि सुरद्रुहम् ।। २४ ।।
इत्युक्तस्तेन स मुनिः परोपकरणे रतः ।।
ध्यात्वा शिवं स्वनाथं हि विससर्ज कलेवरम् ।। २५।।
ब्रह्मलोकं गतस्सद्यस्स मुनिर्ध्वस्तबन्धनः ।।
पुष्पवृष्टिरभूत्तत्र सर्वे विस्मयमागताः ।।२६।।
अथ गां सुरभिं शक्र आहूयाशु ह्यलेहयत् ।।
अस्त्रनिर्मितये त्वाष्ट्रं निदि देश तदस्थिभिः ।। २७ ।।
विश्वकर्मा तदाज्ञप्तश्चक्लृपेऽस्त्राणि कृत्स्नशः ।।
तदस्थिभिर्वज्रमयस्सुदृढैश्शिववर्चसा ।। २८ ।।
वंशोद्भवं वज्रं शरो ब्रह्मशिरस्तथा।।
अन्यास्थिभिर्बहूनि स्वपराण्यस्त्राणि निर्ममे ।।२९।।
तमिन्द्रो वज्रमुद्यम्य वर्द्धितः शिववर्चसा ।।

वृत्रमभ्यद्रवत्क्रुद्धो मुने रुद्र इवान्तकम् ।।3.24.३०।।
ततः शक्रस्सुसन्नद्धस्तेन वज्रेण स द्रुतम् ।।
उच्चकर्त शिरो वार्त्रं गिरिशृंगमिवौजसा ।। ३१ ।।
तदा समुत्सवस्तात बभूव त्रिदिवौकसाम्।।
तुष्टुवुर्निर्जराश्शक्रम्पेतुः कुसुमवृष्टयः ।।३२।।
इति ते कथितन्तात प्रसंगाच्चरि तन्त्विदम्।।
पिप्पलादावतारम्भे शृणु शम्भोर्महादरात्।।३३।।
सुवर्चा सा मुनेः पत्नी दधीचस्य महात्मनः ।।
ययौ स्वमाश्रमाभ्यन्तस्तदाज्ञप्ता पतिव्रता ।।३४।।
आगत्य तत्र सा दृष्ट्वा न पतिं स्वन्तपस्विनी ।।
गृहकार्यं च सा कृत्वाखिलम्पतिनिदेशतः ।। ३५ ।।
आजगाम पुनस्तत्र पश्यन्ती बह्वशोभनम् ।।
देवांश्च तान्मुनिश्रेष्ठ सुवर्चा विस्मिताभवत्।।३६।।
ज्ञात्वा च तत्सर्वमिदं सुराणां कृत्यं तदानीञ्च चुकोप साध्वी ।।
ददौ तदा शापमतीव रुष्टा तेषां सुवर्चा ऋषिवर्यभार्या ।।३७।।
सुवर्चोवाच ।।
अहो सुरा द्रुष्टतराश्च सर्वे स्वकार्यदक्षा ह्यबुधाश्च लुब्धाः ।।
तस्माच्च सर्वे पशवो भवन्तु सेन्द्राश्च मेऽद्यप्रभृतीत्युवाच ।।३८।।
एवं शापन्ददौ तेषां सुराणां सः तपस्विनी ।।
सशक्राणां च सर्वेषां सुवर्चा मुनिकामिनी ।।३९।।
अनुगन्तुम्पतेर्लोकमथेच्छत्सा पतिव्रता।।
चितां चक्र समेधोभिः सुपवित्रैर्मनस्विनी ।। 3.24.४० ।।
ततो नभोगिरा प्राह सुवर्चान्ताम्मुनिप्रियाम् ।।
आश्वासयन्ती गिरिशप्रेरिता सुखदायिनी ।। ४१ ।।
आकाशवाण्युवाच ।।
साहसं न कुरु प्राज्ञे शृणु मे परमं वचः ।।
मुनितेजस्त्वदुदरे तदुत्पादय यत्नतः ।।४२।।
ततः स्वाभीष्टचरणन्देवि कर्तुन्त्वमर्हसि ।।
सगर्भा न दहेद्गात्रमिति ब्रह्मनिदेशनम् ।।४३।।
नन्दीश्वर उवाच ।।
इत्युक्त्वा सा नभोवाणी विरराम मुनीश्वर ।।
तां श्रुत्वा सा मुनेः पत्नी विस्मिताभूत्क्षणं च सा।।४४।।
सुवर्चा सा महासाध्वी पतिलोकमभीप्सती।।

उपविश्याश्मना भूयः सोदरं विददार ह।।४५।।
निर्गतो जठरात्तस्या गर्भो मुनिवरस्य सः।।
महादिव्यतनुर्दीप्तो भासयंश्च दिशोदश।।४६।।
साक्षाद्रुद्रावतारोऽसौ दधीच वरतेजसः।।
प्रादुर्भूतस्स्वयन्तात स्वलीलाकरणे क्षमः।।४७।
तन्दृष्ट्वा स्वसुतन्दिव्यं स्वरूपम्मुनिकामिनी।।
सुवर्चाज्ञाय मनसा साक्षाद्रुद्रावतारकम्।।४८।।
प्रहृष्टाभून्महासाध्वी प्रणम्याशु नुनाव सा।।
स्वहृदि स्थापयामास तत्स्वरूपम्मुनीश्वर।।४९।।
सुवर्चा तनयं तं च प्रहस्य विमलेक्षणा।।
जननी प्राह सुप्रीत्या पतिलोकमभीप्सती ।। 3.24.५० ।।
सुवर्चोवाच।।
हे तात परमेशान चिरन्तिष्ठास्य सन्निधौ ।।
अश्वत्थस्य महाभाग सर्वेषां सुखदो भवेः।।५१।।
मामाज्ञापय सुप्रीत्या पतिलोकाय चाधुना ।।
तत्रस्थाहं च पतिना त्वां ध्याये रुद्ररूपिणम्।।५२।।
नन्दीश्वर उवाच ।।
इत्येवं सा बभाषेऽथ सुवर्चा तनयम्प्रति ।।
पतिमन्वगमत्साध्वी परमेण समाधिना ।। ९३ ।।
एवन्दधीचपत्नी सा पतिना संगता मुने ।।
शिवलोकं समासाद्य सिषेवे शङ्करम्मुदा ।।५४ ।।
एतस्मिन्नन्तरे देवास्सेन्द्राश्च मुनिभिस्सह ।।
तत्राजग्मुस्त्वरा तात आहूता इव हर्षिताः ।। ५५ ।।
हरिर्ब्रह्मा च सुप्रीत्यावतीर्णं शंकरं भुवि ।।
सुवर्चायां दधीचाद्वा ययतुस्स्वगणैस्सह ।।५६।।
तत्र दृष्ट्वावतीर्णन्तं मुनिपुत्रत्वमागतम् ।।
रुद्रं सर्वे प्रणेमुश्च तुष्टुवुर्बद्धपाणयः ।। ५७।।
तदोत्सवो महानासीद्देवानां मुनिसत्तम ।।
नेदुर्दुन्दुभयस्तत्र नर्तक्यो ननृतुर्मुदा ।।५८।।
जगुर्गन्धर्वपुत्राश्च किन्नरा वाद्यवादकाः ।।
वादयामासुरमराः पुष्प वृष्टिं च चक्रिरे ।।५९।।
पिप्पलस्य शर्वपितुर्विलसन्तं सुतं च तम्।।
संस्कृत्य विधिवत्सर्वे विष्ण्वाद्यास्तुष्टुवुः पुनः ।। 3.24.६० ।

पिप्पलादेति तन्नाम चक्रे ब्रह्मा प्रसन्नधीः ।।
प्रसन्नो भव देवेश इत्यूचे हरिणा सुरैः ।। ६१ ।।
इत्युक्त्वा तमनुज्ञाय ब्रह्मा विष्णुस्सुरास्तथा ।।
स्वंस्वं धाम ययुस्सर्वे विधाय च महोत्सवम् ।। ६२ ।।
अथ रुद्रः पिप्पलादोऽश्वत्थमूले महाप्रभुः ।।
तताप सुचिरं कालं लोकानां हितकाम्यया।।६३।।
इत्थं सुतपतस्तस्य पिप्पलादस्य सम्मुखे।।
महाकालो व्यतीयाय लोकचर्यानुसारिणः ।।६४।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां पिप्पलादावतारवर्णनं नाम चतुर्विंशोऽध्यायः ।। २४ ।।

नन्दीश्वर उवाच ।।
अथ लोके व्यवस्थाय धर्मस्य स्थापनेच्छया ।।
महालीलां चकारेशस्तामहो सन्मुने शृणु ।। १ ।।
एकदा पुष्पभद्रायां स्नातुं गच्छन्मुनीश्वरः ।।
ददर्श पद्मां युवतीं शिवांशां सुमनोहराम् ।।२।।
तल्लिप्सुस्तत्पितुः स्थानमनरण्यस्य भूपतेः ।।
जगाम भुवनाचारी लोकतत्त्वविचक्षणः ।। ३ ।।
राजा नराणां तं दृष्ट्वा प्रणम्य च भयाकुलः ।।
मधुपर्कादिकं दत्त्वा पूजयामास भक्तितः ।। ४ ।।
स्नेहात्सर्वं गृहीत्वा स ययाचे कन्यकां मुनिः ।।
मौनी बभूव नृपतिः किंचिन्निर्वक्तुमक्षमः ।। ५ ।।
मुनिः प्रोवाच नृपतिं कन्यां मे देहि भक्तितः ।।
अन्यथा भस्मसात्सर्वं करिष्येहं त्वया सह ।।६।।
अथो बभूवुराच्छन्नाः सर्वे राजजनास्तदा ।।
तेजसा पिप्पलादस्य दाधीचस्य महामुने ।। ७ ।।
अथ राजा महाभीतो विलप्य च मुहुर्मुहुः ।।
कन्यामलंकृताम्पद्मां वृद्धाय मुनये ददौ ।। ८ ।।
पद्मां विवाह्य स मुनिश्शिवांशाम्भूपतेः सुताम् ।।
पिप्पलादो गृहीत्वा तां मुदितः स्वाश्रमं ययौ ।। ९ ।।
तत्र गत्वा मुनिवरो वयसा जर्जरोधिकः ।।
उवाच नार्या स तया तपस्वीनातिलम्पटः ।।3.25.१०।।
अथोऽनरण्यकन्या सा सिषेवे भक्तितो मुनिम् ।।
कर्मणा मनसा वाचा लक्ष्मीर्नारायणं यथा ।। ११।।
इत्थं स पिप्पलादो हि शिवांशो मुनिसत्तमः ।।
रेमे तया युवत्या च युवाभूय स्वलीलया ।। १२ ।।
दश पुत्रा महात्मानो बभूवुस्सुतपस्विनः ।।
मुनेः पितुस्समाः सर्वे पद्मायाः सुखवर्द्धनाः ।।१३।।
एवं लीलावतारो हि शंकरस्य महाप्रभोः ।।
पिप्पलादो मुनिवरो नानालीलाकरः प्रभुः ।। १४ ।।
येन दत्तो वरः प्रीत्या लोकेभ्यो हि दयालुना ।।
दृष्ट्वा लोके शनेः पीडां सर्वेषामनिवारिणीम् ।। १५ ।।
षोडशाब्दावधि नृणां जन्मतो न भवेच्च सा ।।
तथा च शिवभक्तानां सत्यमेतद्धि मे वचः ।। १६ ।।

अथानादृत्य मद्वाक्यं कुर्यात्पीडां शनिः क्वचित् ।।
तेषां नृणां तदा स स्याद्भस्मसान्न हि संशयः ।। १७ ।।
इति तद्भयतस्तात विकृतोपि शनैश्चरः ।।
तेषां न कुरुते पीडां कदाचिद्ग्रहसत्तमः ।। १८ ।।
इति लीलामनुष्यस्य पिप्पलादस्य सन्मुने ।।
कथितं सुचरित्रन्ते सर्वकामफलप्रदम् ।। १९ ।।
गाधिश्च कौशिकश्चैव पिप्पलादो महामुनिः ।।
शनैश्चरकृतां पीडां नाशयन्ति स्मृतास्त्रयः ।। 3.25.२० ।।
पिप्पलादस्य चरितं पद्माचरितसंयुतम् ।।
यः पठेच्छृणुयाद्वापि सुभक्त्या भुवि मानवः ।। २१ ।।
शनिपीडाविनाशार्थमेतच्चरितमुत्तमम् ।।
यः पठेच्छृणुयाद्वापि सर्वान्कामानवाप्नुयात् ।। २२ ।।
धन्यो मुनिवरो ज्ञानी महाशैवः सताम्प्रियः ।।
अस्य पुत्रो महेशानः पिप्पलादाख्य आत्मवान् ।। २३ ।।
इदमाख्यानमनघं स्वर्ग्यं कुग्रहपोषहृत् ।।
सर्वकामप्रदन्तात शिवभक्तिविवर्द्धनम् ।। २४ ।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां पिप्पलादावतारचरितवर्णनं नाम पंचविंशोऽध्यायः ।। २५ ।।

नन्दीश्वर उवाच ।।
शृणु तात प्रवक्ष्यामि शिवस्य परमात्मनः ।।
अवतारं परमानन्दं वैश्यनाथाह्वयं मुने ।। १ ।।
नन्दिग्रामे पुरा काचिन्महानन्देति विश्रुता ।।
बभूव वारवनिता शिवभक्ता सुसुन्दरी ।। २ ।।
महाविभवसम्पन्ना सुधनाढ्या महोज्ज्वला ।।
नानारत्नपरिच्छिन्न शृङ्गाररसनिर्भरा ।। ३ ।।
सर्वसंगीत विद्यासु निपुणातिमनोहरा ।।
तस्या गेयेन हृष्यन्ति राज्यो राजान एव च ।। ४ ।।
समानर्च सदा साम्बं सा वेश्या शंकरं मुदा ।।
शिवनामजपासक्ता भस्मरुद्राक्षभूषणा ।।५।।
शिवं सम्पूज्य सा नित्यं सेवन्ती जगदीश्वरम् ।।
ननर्त परया भक्त्या गायन्ती शिवसद्यशः ।। ६ ।।
रुद्राक्षैर्भूषयित्वैकं मर्कटं चैव कुक्कुटम् ।।
करतालैश्च गीतैश्च सदा नर्तयति स्म सा ।। ७ ।।
नृत्यमानौ च तौ दृष्ट्वा शिवभक्तिरता च सा ।।
वेश्या स्म विहसत्युच्चैः प्रेम्णा सर्वसखीयुता ।। ८ ।।
रुद्राक्षैः कृतकेयूरकर्णा भरणमण्डनः ।।
मर्कटः शिक्षया तस्याः पुरो नृत्यति बालवत् ।। ९ ।।
शिखासंबद्धरुद्राक्षः कुक्कुटः कपिना सह ।।
नित्यं ननर्त नृत्यज्ञः पश्यतां हितमावहन् ।। 3.26.१० ।।
एवं सा कुर्वती वेश्या कौतुकम्परमादरात् ।।
शिवभक्तिरता नित्यं महानन्दभराऽभवत् ।।। ।। ११ ।।
शिवभक्तिं प्रकुर्वन्त्या वेश्याया मुनिसत्तम ।।
बहुकालो व्यतीयाय तस्याः परमसौख्यतः ।। १२ ।।
एकदा च गृहे तस्या वैश्यो भूत्वा शिवस्स्वयम् ।।
परीक्षितुं च तद्भावमाजगाम शुभो व्रती ।। १३ ।।
त्रिपुण्ड्रविलसद्भालो रुद्राक्षाभरणः कृती ।।
शिवनामजपासक्तो जटिलः शैववेषभृत् ।। १४ ।।
स बिभ्रद्भस्मनिचयं प्रकोष्ठे वरकंकणम् ।।
महारत्नपरिस्तीर्णं राजते परकौतुकी ।। १५ ।।
तमागतं सुसंपूज्य सा वेश्या परया मुदा ।।
स्वस्थाने सादरं वैश्यं सुन्दरी हि न्यवेशयत् ।। ।। १६ ।।

तत्प्रकोष्ठे वरं वीक्ष्य कंकणं सुमनोहरम् ।।
तस्मिञ्जातस्पृहा सा च तं प्रोवाच सुविस्मिता ।। १७ ।।
महानन्दोवाच ।।
महारत्नमयश्चायं कंकणस्त्वत्करे स्थितः ।।
मनो हरति मे सद्यो दिव्यस्त्रीभूषणोचितः ।। १८ ।।
नन्दीश्वर उवाच ।।
इति तां नवरत्नाढ्ये सस्पृहां करभूषणे ।।
वीक्ष्योदारमतिर्वैश्यः सस्मितं समभाषत ।। १९ ।।
वैश्यनाथ उवाच ।।
अस्मिन्रत्नवरे दिव्ये सस्पृहं यदि ते मनः ।।
त्वमेवाधत्स्व सुप्रीत्या मौल्यमस्य ददासि किम् ।। 3.26.२० ।।
वेश्योवाच ।।
वयं हि स्वैरचारिण्यो वेश्यास्तु न पतिव्रताः ।।
अस्मत्कुलोचितो धर्मो व्यभिचारो न संशयः ।। २१ ।।
यद्येतदखिलं चित्तं गृह्णाति करभूषणम् ।।
दिनत्रयमहोरात्रं पत्नी तव भवाम्यहम् ।। २२ ।।
वैश्य उवाच ।।
तथास्तु यदि ते सत्यं वचनं वीरवल्लभे ।।
ददामि रत्नवलयं त्रिरात्रं भव मे वधूः ।। २३ ।।
एतस्मिन्व्यवहारे तु प्रमाणं शशिभास्करौ ।।
त्रिवारं सत्यमित्युक्त्वा हृदयं मे स्पृश प्रिये ।। २४ ।।
वेश्योवाच ।।
दिनत्रयमहोरात्रं पत्नी भूत्वा तव प्रभो ।।
सहधर्मं चरामीति सत्यंसत्यं न संशयः ।। २५ ।।
नन्दीश्वर उवाच ।।
इत्युक्त्वा हि महानन्दा त्रिवारं शशिभास्करौ।।
प्रमाणीकृत्य सुप्रीत्या सा तद्धृदयमस्पृशत् ।।२६।।
अथ तस्यै स वैश्यस्तु प्रदत्त्वा रत्नकंकणम्।।
लिंगं रत्नमयं तस्य हस्ते दत्त्वेदमब्रवीत्।।२७।।
वैश्यनाथ उवाच।।
इदं रत्नमयं लिंगं शैवं मत्प्राणदवल्ल भम् ।।
रक्षणीयं त्वया कान्ते गोपनीयं प्रयत्नतः ।।२८।।
नन्दीश्वर उवाच।।

एवमस्त्विति सा प्रोच्य लिंगमादाय रत्नजम् ।।
नाट्यमण्डपिका मध्ये निधाय प्राविशद्गृहम् ।। २९ ।।
सा तेन संगता रात्रौ वैश्येन विटधर्मिणा ।।
सुखं सुष्वाप पर्यंके मृदुतल्पोपशो भिते ।। 3.26.३० ।।
ततो निशीथसमये मुने वैश्यपतीच्छया ।।
अकस्मादुत्थिता वाणी नृत्यमण्डपिकान्तरे ।। ३१ ।।
महाप्रज्वलितो वह्निः सुसमीरसहायवान् ।।
नाट्यमण्डपिकां तात तामेव सहसावृणोत् ।। ३२ ।।
मण्डपे दह्यमाने तु सहसोत्थाय संभ्रमात्।।
मर्कटं मोचयामास सा वेश्या तत्र बन्धनात् ।।३३।।
स मर्कटो मुक्तबन्धः कुक्कुटेन सहामुना ।।
भिया दूरं हि दुद्राव विधूयाग्निकणान्बहून् ।। ३४ ।।
स्तम्भेन सह निर्दग्धं तल्लिंगं शकलीकृतम्।।
दृष्ट्वा वेश्या स वैश्यश्च दुरंतं दुःखमापतुः ।।३५।।
दृष्ट्वा ह्यात्मसमं लिंगं दग्धं वैश्यपतिस्तदा।।
ज्ञातुन्तद्भावमन्तःस्थम्मरणाय मतिन्दधे ।। ३६ ।।
निविश्येतितरां खेदाद्वैश्यस्तामाह दुःखिताम् ।।
नानालीलो महेशानः कौतुकान्नरदेहवान् ।। ३७ ।।
वैश्यपतिरुवाच ।।
शिवलिंगे तु निर्भिन्ने दग्धे महत्प्राणवल्लभे ।।
सत्यं वच्मि न सन्देहो नाहं जीवितुमुत्सहे ।। ३८ ।।
चितां कारय मे भद्रे स्वभृत्यैस्त्वं वरैर्लघु ।।
शिवे मनस्समावेश्य प्रवेक्ष्यामि हुताशनम् ।। ३९ ।।
यदि ब्रह्मेन्द्रविष्ण्वाद्या वारयेयुः समेत्य माम् ।।
तथाप्यस्मिन् क्षणे भद्रे प्रविशामि त्यजाम्यसून् ।। 3.26.४० ।।
नन्दीश्वर उवाच ।।
तमेवं दृढनिर्बन्धं सा विज्ञाय सुदुःखिता ।।
स्वभृत्यैः कारयामास चितां स्वभवनाद्बहिः ।। ४१ ।।
ततस्स वैश्यश्शिव एक एव प्रदक्षिणीकृत्य समिद्धमग्निम् ।।
विवेश पश्यत्सु नरेषु धीरः सुकौतुकी संगतिभावमिच्छुः ।। ४२ ।।
दृष्ट्वा सा तद्गतिं वेश्या महानन्दातिविस्मिता ।।
अनुतापं च युवती प्रपेदे मुनिसत्तम ।।४३।।
अथ सा दुःखिता वेश्या स्मृत्वा धर्मं सुनिर्मलम् ।।

सर्वान्बंधुजनान्वीक्ष्य बभाषे करुणं वचः ।।४४।।
महानन्दोवाच।।
रत्नकंकणमादाय मया सत्यमुदाहृतम् ।।
दिनत्रयमहं पत्नी वैश्यस्यामुष्य संमता ।। ४५ ।।
कर्मणा मत्कृतेनायं मृतो वैश्यः शिवव्रती ।।
तस्मादहं प्रवेक्ष्यामि सहानेन हुताशनम् ।। ४६ ।।
स्वधर्मचारिणी त्यक्तमाचार्य्यैं सत्यवादिभिः ।।
एवं कृते मम प्रीत्या सत्यं मयि न नश्यतु ।।४७।।
सत्याश्रयः परो धर्म सत्येन परमा गतिः ।।
सत्येन स्वर्ग मोक्षौ च सत्ये सर्वं प्रतिष्ठितम् ।।४८।।
नन्दीश्वर उवाच ।।
इति सा दृढनिर्वन्धा वार्यमाणापि बन्धुभिः ।।
सत्यलोकपरा नारी प्राणांस्त्यक्तुं मनो दधे ।। ४९ ।।
सर्वस्वं द्विजमुख्येभ्यो दत्त्वा ध्यात्वा सदाशिवम् ।।
तमग्निं त्रिः परिक्रम्य प्रवेशाभिमुखी ह्यभूत् ।। 3.26.५० ।।
तां पतन्तीं समिद्धेग्नौ स्वपदार्पितमानसाम् ।।
वारयामास विश्वात्मा प्रादुर्भूतः स वै शिवः ।। ५१ ।।
सा तं विलोक्याखिलदेवदेवन्त्रिलोचनं चन्द्रकलावतंसम् ।।
शशांकसूर्यानलकोटिभासं स्तब्धेव भीतेव तथैव तस्थौ ।। ५२ ।।
तां विह्वलां सुवित्रस्वां वेपमानां जडीकृताम् ।।
समाश्वास्य गलद्बाष्पां करौ धृत्वाऽब्रवीद्वचः ।। ५३ ।।
शिव उवाच ।।
सत्यं धर्मं च धैर्यं च भक्तिं च मयि निश्चलाम् ।।
परीक्षितुं त्वत्सकाशं वैश्यो भूत्वाहमागतः ।।५४।।
मा ययाग्निं समुद्दीप्य दग्धन्ते नाट्यमण्डपम् ।।
दग्धं कृत्वा रत्नलिंगं प्रविष्टोहं हुताशनम् ।।५५।।
सा त्वं सत्यमनुस्मृत्य प्रविष्टाग्निं मया सहा।।
अतस्ते संप्रदास्यामि भोगांस्त्रिदशदुर्लभान् ।।५६।।
यद्यदिच्छसि सुश्रोणि तदेव हि ददामि ते।।
त्वद्भक्त्याहं प्रसन्नोस्मि तवादेयं न विद्यते ।।५७।।
नन्दीश्वर उवाच ।।
इति ब्रुवति गौरीशे शंकरे भक्तवत्सले ।।
महानन्दा च सा वेश्या शंकरम्प्रत्यभाषत ।।५८।।

वेश्योवाच ।।
न मे वाञ्छास्ति भोगेषु भूमौ स्वर्गे रसातले ।।
तव पादाम्बुजस्पर्शादन्यत्किंचिन्न कामये ।।५९।।
ये मे भृत्याश्च दास्यश्च ये चान्ये मम बान्धवाः ।।
सर्वे त्वद्दर्शनपरास्त्वयि सन्न्यस्तवृत्तयः ।।3.26.६०।।
सर्वानेतान्मया सार्द्धं निनीयात्मपरम्पदम् ।।
पुनर्जन्मभयं घोरं विमोचय नमोऽस्तु ते ।। ६१ ।।
नन्दीश्वर उवाच ।।
ततस्स तस्या वचनम्प्रतिनन्द्य महेश्वरः ।।
ताः सर्वाश्च तया सार्धं निनाय स्वम्परम्पदम् ।।६२।।
वैश्यनाथावतारस्ते वर्णितः परमो मया ।।
महानन्दासुखकरो भक्तानन्दप्रदस्सदा।।६३।।
इदं चरित्रं परमं पवित्रं सतां च सर्वप्रदमाशु दिव्यम् ।।
शिवावतारस्य विशाम्पतेर्महानन्दामहासौख्यकरं विचित्रम् ।।६४।।
इदं यः शृणुयाद्भक्त्या श्रावयेद्वा समाहितः ।।
च्यवते न स्वधर्मात्स परत्र लभते गतिम् ।।६५।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां वैश्यनाथाह्वयशिवावतारवर्णनं नाम षड्विंशोऽध्यायः ।। २६ ।। ( ७६)

नन्दीश्वर उवाच ।।
शृणु तात प्रवक्ष्यामि शिवस्य परमात्मनः ।।
द्विजेश्वरावतारं च सशिवं सुखदं सताम् ।। १ ।।
यः पूर्वं वर्णितस्तात भद्रायुर्नृपसत्तमः ।।
यस्मिन्नृषभरूपेणानुग्रहं कृतवाञ्छिवः ।।२।।
तद्धर्मस्य परीक्षार्थं पुनराविर्बभूव सः।।
द्विजेश्वरस्वरूपेण तदेव कथयाम्यहम् ।। ३ ।।
ऋषभस्य प्रभावेण शत्रूञ्जित्वा रणे प्रभुः ।।
प्राप्तसिंहासनस्तात भद्रायुः संबभूव ह ।।४।।
चन्द्रांगदस्य तनया सीमन्तिन्याः शुभांगजा ।।
पत्नी तस्याभवद्ब्रह्मन्सुसाध्वी कीर्तिमालिनी।।५।।
स भद्रायुः कदाचित्स्वप्रियया गहनं वनम् ।
प्राविशत्संविहारार्थं वसन्तसमये मुने ।।६।।
अथ तस्मिन्वने रम्ये विजहार स भूपतिः ।।
शरणागतपालिन्या तमास्यप्रियया सह ।।७।।
अथ तद्धर्मदृढतां प्रतीक्षन्परमेश्वरः ।।
लीलां चकार तत्रैव शिवया सह शङ्करः ।।८।।
शिवा शिवश्च भूत्वोभौ तद्वने द्विजदम्पती।।
व्याघ्रं मायामयं कृत्वाविर्भूतौ निजलीलया।।९।।
अथाविदूरे तस्यैव द्रवन्तौ भयविह्वलौ ।।
अन्वीयमानौ व्याघ्रेण रुदन्तौ तौ बभूवतुः ।। 3.27.१० ।।
अथ विद्धौ च तौ तात भद्रायुः स महीपतिः ।।
ददर्श क्रन्दमानौ हि शरण्यः क्षत्रियर्षभः ।।११।।
अथ तौ मुनिशार्दूलः स्वमायाद्विजदम्पती ।।
भद्रायुषं महाराजमूचतुर्भयविह्वलौ ।। १२ ।।
द्विजदम्पती ऊचतुः ।।
पाहि पाहि महाराज नावुभौ धर्मवित्तम ।।
एष आयाति शार्दूलो जग्धुमावां महाप्रभो ।। १३ ।।
एष हिंस्रः कालसमः सर्वप्राणिभयङ्करः ।।
यावन्न खादति प्राप्य तावन्नौ रक्ष धर्मवित् ।। १४ ।।
नन्दीश्वर उवाच ।।
इत्थमाक्रन्दितं श्रुत्वा तयोश्च नृपतीश्वरः ।।
अति शीघ्रं महावीरः स यावद्धनुराददे ।।१५।।

तावदभ्येत्य शार्दूलस्त्वरमाणोतिमायिकः ।।
स तस्य द्विजवर्य्यस्य मध्ये जग्राह तां वधूम् ।।१६।।
हे नाथनाथ हे कान्त हा शम्भो हा जगद्गुरो ।।
इति रोरूयमाणां तां व्याघ्रो जग्रास भीषणः ।।१७।।
तावत्स राजा निशितैर्भल्लैर्व्याघ्रमताडयत् ।।
न स तैर्विव्यथे किंचिद्गिरीन्द्र इव वृष्टिभिः ।।१८।।
स शार्दूलो महासत्त्वो राज्ञः स्वैरकृतव्यथः ।।
बलादाकृष्य तां नारीमपाक्रमत सत्वरः ।। १९।।
व्याघ्रेणापहृतां नारीं वीक्ष्य विप्रोतिविस्मितः ।।
लौकिकीं गतिमाश्रित्य रुरोदाति मुहुर्मुहुः ।।3.27.२०।।
रुदित्वा चिरकालं च स विप्रो माययेश्वरः ।।
भद्रायुषं महीपालं प्रोवाच मदहारकः ।। २१ ।।
द्विजेश्वर उवाच ।।
राजन्क ते महास्त्राणि क्व ते त्राणं महद्धनुः ।।
क्व ते द्वादशसाहस्रमहानागायुतम्बलम् ।। २२ ।।
किन्ते खड्गेन शङ्खेन किं ते मंत्रास्त्रविद्यया ।।
किं सत्त्वेन महास्त्राणां किं प्रभावेण भूयसा ।। २३ ।।
तत्सर्वं विफलं जातं यच्चान्यत्त्वयि तिष्ठति।।
यस्त्वं वनौकसां घातं न निवारयितुं क्षमः ।।२४।।
क्षत्रस्यायं परो धर्मो क्षताच्च परिरक्षणम् ।।
तस्मिन्कुलोचिते धर्मे नष्टे त्वज्जीवितेन किम् ।।२५।।
आर्तानां शरणाप्तानां त्राणं कुर्वन्ति पार्थिवाः ।।
प्राणैरर्थैश्च धर्मज्ञास्तद्विना च मृतोपमा ।। २६ ।।
आर्तत्राणविहीनानां जीवितान्मरणं वरम्।।
धनिनान्पानहीनानां गार्हस्थ्याद्भिक्षुता वरम्।।२७।।
वरं विषाशनं प्राज्ञैर्वरमग्निप्रवेशनम्।।
कृपणानामनाथानां दीनानामपरक्षणात् ।। ।। २८ ।।
नन्दीश्वर उवाच ।।
इत्थं विलपितं तस्य स्ववीर्य्यस्य च गर्हणम्।।
निशम्य नृपतिः शोकादात्मन्येवमचिन्तयत् ।। २९ ।।
अहो मे पौरुषं नष्टमद्य देवविपर्ययात् ।।
अद्य कीर्तिश्च मे नष्टा पातकम्प्राप्तमुत्कटम् ।।3.27.३०।।
धर्मः कुलोचितो नष्टो मन्दभाग्यस्य दुर्मतेः ।।

नूनं मे सम्पदो राज्यमायुष्यं क्षयमेष्यति ।। ३१ ।।
अद्य चैनं द्विजन्मानं हतदारं शुचार्दितम् ।।
हतशोकं करिष्यामि दत्त्वा प्राणानतिप्रियान् ।।३२।।
इति निश्चित्य मनसा स भद्रायुर्नृपोत्तमः ।।
पतित्वा पादयोस्तस्य बभाषे परिसान्त्वयन्।। ३३ ।।
भद्रायुरुवाच ।।
कृपां कृत्वा मयि ब्रह्मन् क्षत्रबन्धौ हतौजसि ।।
शोकन्त्यज महाप्राज्ञ दास्याम्यद्य तु वाञ्छितम् ।। ३४ ।।
इदं राज्यमियं राज्ञी ममेदञ्च कलेवरम् ।।
त्वदधीनमिदं सर्वं किन्तेऽभिलषितं वरम् ।। ३५ ।।
ब्राह्मण उवाच ।।
किमादर्शेन चान्धस्य किं गृहेर्भैक्ष्यजीविनः ।।
किम्पुस्तकेन मूढस्य निस्त्रीकस्य धनेन किम्।।३६।।
अतोऽहं हतपत्नीको भुक्तभोगो न कर्हिचित्।।
इमान्तवाग्रमहिषीं कामये दीयतामिति ।।३७।। भ० उ० ।।
दाता रसान्तवित्तस्य राज्यस्य गजवाजिनाम्।।
आत्मदेहस्य यस्यापि कलत्रस्य न कर्हिचित् ।।३८।।
परदारोपभोगेन यत्पापं समुपार्जितम् ।।
न तत्क्षालयितुं शक्यं प्रायश्चित्तशतैरपि ।।३९।।
ब्राह्मण उवाच ।।
आस्तां ब्रह्मवधं घोरमपि मद्यनिषेवणम् ।।
तपसा विधमिष्यामि किं पुनः पारदारिकम् ।।3.27.४०।।
तस्मात्प्रयच्छ भार्यां स्वामियां कामो न मेऽपरः ।।
अरक्षणाद्भयार्तानां गन्तासि निरयन्ध्रुवम् ।। ४१ ।।
नन्दीश्वर उवाच ।।
इति विप्रगिरा भीतश्चिन्तयामास पार्थिवः ।।
अरक्षणान्महापापं पत्नीदानन्ततो वरम् ।। ४२ ।।
अतः पत्नीं द्विजाग्र्याय दत्त्वा निर्मुक्तकिल्विषः ।।
सद्यो वह्निं प्रवेक्ष्यामि कीर्तिश्च विदिता भवेत् ।। ४३ ।।
इति निश्चित्य मनसा समुज्ज्वाल्य हुताशनम् ।।
तमाहूय द्विजं चक्रे पत्नीदानं सहोदकम् ।। ४४ ।।
स्वयं स्नातः शुचिर्भूत्वा प्रणम्य विबुधेश्वरान् ।।
तमग्निं त्रिः परिक्रम्य शिवं दध्यौ समाहितः।।४५।।

तमथाग्निं पतिष्यन्तं स्वपदासक्तचेतसम् ।।
प्रत्यषेधत विश्वेशः प्रादुर्भूतो द्विजेश्वरः ।।४६।।
तमीश्वरं पञ्चमुखं त्रिनेत्रं पिनाकिनं चन्द्रकलावतंसम् ।।
प्रलम्बपिंगासुजटाकलापं मध्याह्नसद्भास्करकोटितेजसम् ।। ४७ ।।
मृणालगौरं गजचर्मवाससं गंगातरङ्गोक्षितमौलिदेशकम् ।।
नागेन्द्रहारावलिकण्ठभूषणं किरीटकाच्यंगदकंकणोज्ज्वलम् ।। ४८ ।।
शूलासिखट्वांगकुठारचर्ममृगाभयाष्टांगपिनाकहस्तम् ।।
वृषोपरिस्थं शितिकण्ठभूषणं प्रोद्भूतमग्रे स नृपो ददर्श ।। ४९ ।।
ततोम्बराद्द्रुतं पेतुर्द्दिव्याः कुसुमवृष्टयः ।।
प्रणेदुर्देवतूर्य्याणि देव्यश्च ननृतुर्जगुः ।। 3.27.५० ।।
तत्राजग्मुः स्तूयमाना हरिर्ब्रह्मा तथासुराः ।।
इन्द्रादयो नारदाद्या मुनयश्चापरेऽपि च।।५१।।
तदोत्सवो महानासीत्तत्र भक्तिप्रवर्धनः।।
सति पश्यति भूपाले भक्तिनम्रीकृताञ्जलौ ।। ५२ ।।
तद्दर्शनानन्दविजृम्भिताशयः प्रवृद्धवाष्पाम्बुविलिप्तगात्रः ।।
प्रहृष्टरोमा स हि गद्गदाक्षरस्तुष्टाव गीर्भिर्मुकुलीकृतांजलिः ।। ५३ ।।
ततस्स भगवान्राज्ञा संस्तुतः परमेश्वरः ।।
प्रसन्नः सह पार्वत्या तमुवाच दयानिधिः ।। ५४ ।।
राजंस्ते परितुष्टोहं भक्त्या त्वद्धर्मतोऽधिकम् ।।
वरं ब्रूहि सपत्नीकम्प्रयच्छामि न संशयः ।। ५५ ।।
तव भावपरीक्षार्थं द्विजो भूत्वाहमागतः।।
व्याघ्रेण या परिग्रस्ता साक्षाद्देवी शिवा हि सा ।।५६।।
व्याघ्रो मायामयो यस्ते शरैरक्षत विग्रहः ।।
धीरतान्द्रष्टुकामस्ते पत्नी याचितवानहम् ।। ५७ ।।
नन्दीश्वर उवाच ।।
इत्याकर्ण्य प्रभोर्वाक्यं स भद्रायुर्महीपतिः ।।
पुन प्रणम्य संस्तूय स्वामिनं नतकोऽब्रवीत्।।५८।।
भद्रायुरुवाच ।। एक एव वरो नाथ यद्भवान्परमेश्वरः।।
भवतापप्रतप्तस्य मम प्रत्यक्षतां गतः ।। ५९ ।।
यद्ददासि पुनर्नाथ वरं स्वकृपया प्रभो ।।
वृणेहं परमं त्यक्तो वरं हि वरदर्षभात् ।। 3.27.६० ।।
वज्रबाहुः पिता मे हि सप त्नीको महेश्वर ।।
सपत्नीकस्त्वहं नाथ सदा त्वत्पादसेवकः ।।६१।।

वैश्यः पद्माकरो नाम तत्पुत्रस्सनयाभिधः।।
सर्वानेतान्महेशान सदा त्वं पार्श्वगान्कुरु ।। ६२ ।।
नन्दीश्वर उवाच ।।
अथ राज्ञी च तत्पत्नी प्रमत्ता कीर्तिमालिनी ।।
भक्त्या प्रसाद्य गिरिशं ययाचे वरमुत्तमम् ।। ६३ ।।
सत्युवाच ।।
चन्द्रांगदो मम पिता माता सीमन्तिनी च मे ।।
तयोर्याचे महादेव त्वत्पाश्वे सन्निधिं मुदा ।। ६४ ।।
नन्दीश्वर उवाच ।।
एवमस्त्विवति गौरीशः प्रसन्नो भक्तवत्सलः।।
तयोः कामवरन्दत्त्वा क्षणादन्तर्हितोऽभवत् ।।६५।।
भद्रायुरपि सुप्रीत्या प्रसादम्प्राप्य शूलिनः ।।
सहितः कीर्तिमालिन्या बुभुजे विषयान्बहून् ।।६६।।
कृत्वा वर्षायुतराज्यमव्याहतपराक्रमः।।
राज्यं विक्षिप्य तनये जगाम शिवसन्निधिम्।।६७।।
चन्द्रांगदोपि राजेन्द्रो राज्ञी सीमन्तिनी च सा।।
भक्त्या संपूज्य गिरिशं जग्मतुः शाम्भवं पदम् ।। ६८ ।।
द्विजेश्वरावतारस्ते वर्णितः परमो मया ।।
महेश्वरस्य भद्रायुपरमानन्ददः प्रभो ।।६९।।
इदं चरित्रं परमं पवित्रं शिवावतारस्य पवित्रकीर्त्तेः ।।
द्विजेशसंज्ञस्य महाद्भुतं हि शृण्वन्पठञ्शम्भुपदम्प्रयाति।। 3.27.७० ।।
य इदं शृणुयान्नित्यं श्रावयेद्वा समाहितः।।
न श्चोतति स्वधर्मात्स परत्र लभते गतिम् ।।७१।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां द्विजेशनाम शिवावतारवर्णनं नाम सप्तविंशोऽध्यायः ।। २७ ।। ( ७७)

नन्दीश्वर उवाच ।।
शृणु प्राज्ञ प्रवक्ष्यामि शिवस्य परमात्मनः ।।
अवतारं पुरानन्दं यातिनाथाह्वयं मुने ।।१।।
अर्बुदाचलसंज्ञे तु पर्वते भिल्लवंशजः ।।
आहुकश्च तदभ्याशे वसतिस्म मुनीश्वर ।। २ ।।
तत्पत्नी ह्याहुका नाम बभूव किल सुव्रता ।।
उभावपि महाशैवावास्तान्तौ शिवपूजकौ ।।३।।
कस्मिंश्चित्समये भिल्लः शिवभक्तिरतः सदा ।।
आहारार्थं स्वपत्न्याश्च सुदूरं स गतो मुने ।।४।।
एतस्मिन्नन्तरे तत्र गेहे भिल्लस्य शङ्करः।।
भूत्वा यतिवपुः सायं परीक्षार्थं समाययौ ।।५।।
तस्मिन्नवसरे तत्राजगाम स गृहाधिपः ।।
पूजनं च यतीशस्य चकार प्रेमतः सुधीः ।।६।।
तद्भावस्य परीक्षार्थं यतिरूपस्स शंकरः।।
महालीलातरः प्रीत्या भीतं प्रोवाच दीनगीः ।।७।।
यतिनाथ उवाच ।।
अद्य स्थलं निवासार्थं देहि मे प्रातरेव हि ।।
यास्यामि सर्वथा भिल्ल स्वस्ति स्यात्तव सर्वदा ।।८।।
भिल्ल उवाच ।।
त्यम्प्रोक्तं त्वया स्वामिञ्शृणु मद्वचनं च ते ।।
अति स्वल्पं स्थलं मे हि स्यान्निवासः कथन्तव।।९।।
नन्दीश्वर उवाच ।।
इत्युक्तस्स यतिस्तेन गमनाय मतिन्दधे ।।
तावद्भिल्ल्या वचः प्रोक्तं स्वामिनं संविचार्य्य वै ।।3.28.१०।।
भिल्ल्युवाच।।
स्वामिन्देहि यतेःस्थानं विमुखं कुरु मातिथिम् ।।
गृहधर्मं विचार्य्य त्वमन्यथा धर्मसंक्षयः ।। ११ ।।
स्थीयतान्ते गृहाभ्यंतः सुखेन यतिना सह ।।
अहं बहिः स्थितिं कुर्य्यामायुधानि बृहन्त्यपि।।१२।।
नन्दीश्वर उवाच।।
तस्यास्तद्वचनं श्रुत्वा भिल्ल्या धर्मान्वितं शिवम् ।।
स्वपत्न्या मनसा तेन भिल्लेन च विचारितम् ।।१३।।
स्त्रियं बहिश्च निष्कास्य कथं स्थेयं मया बहे ।।

यतेरन्यत्र गमनमधर्म्मकरमात्मनः ।। १४ ।।
द्वयमप्युचितं नैव सर्वथा गृहमेधिनः ।।
यद्भावि तद्भवेदेव मया स्थेयं गृहाद्बहिः ।।१५।।
इत्याग्रहन्तदा कृत्वा गृहान्तः स्थाय तौ मुदा ।।
स्वायुधानि च संस्थाप्य भिल्लोऽतिष्ठद्गृहाद्बहिः ।। १६ ।।
रात्रौ तम्पशवः क्रूरा हिंसकाः समपीडयन् ।।
तेनापि च यथाशक्ति कृतो यत्नो महांस्तदा ।।१७।।
एवं यत्नं प्रकुर्वाण स भिल्लो बलवानपि ।।
प्रारब्धात्प्रेरितैर्हिंस्रैर्बलादासीच्च भक्षितः ।।१८।।
प्रातरुत्थाय स यतिर्दृष्ट्वा हिंस्रैश्च भक्षितम् ।।
भिल्लं वने चरंतं वै दुःखितोऽभूदतीव हि ।१९।।
दुखितं तं यतिन्दृष्ट्वा भिल्ली सा दुःखितापि हि ।।
धैर्यात्स्वदुःखं संहृत्य वचनं चेदमब्रवीत् ।। 3.28.२० ।।
भिल्ल्युवाच ।।
किमर्थं क्रियते दुःखं भद्रं जातं यतेऽधुना ।।
धन्योयं कृतकृत्यश्च यज्जातो मृत्युरीदृशः ।। २१ ।।
अहं चैनं गमिष्यामि भस्म भूत्वानले यते ।।
चितां कारय सुप्रीत्या स्त्रीणां धर्मः सनातनः ।। २२ ।।
इति तद्वचनं श्रुत्वा हितं मत्वा स्वयं यतिः ।।
चितां व्यरचयत्सा हि प्रविवेश स्वधर्मतः ।। २३ ।।
एतस्मिन्नन्तरे साक्षात्पुरः प्रादुरभूच्छिवः ।।
धन्ये धन्ये इति प्रीत्या प्रशंसस्तां हरोऽब्रवीत् ।। २४ ।।
हर उवाच ।।
वरं ब्रूहि प्रसन्नोस्मि त्वदाचरणतोऽनघे ।।
तवादेयं न वै किंचिद्वश्योऽहं ते विशेषतः ।।२५।।
नन्दीश्वर उवाच ।।
तच्छ्रुत्वा शम्भुवचनं परमानन्ददायकम् ।।
सुखं प्राप्तं विशेषेण न किंचित्स्मरणं ययौ।।२६।।
तस्यास्तद्गतिमालक्ष्य सुप्रसन्नो हरोऽभवत् ।।
उवाच च पुनः शम्भुर्वरं ब्रूहीति ताम्प्रभुः ।। २७।।
शिव उवाच ।।
अयं यतिश्च मद्रूपो हंसरूपो भविष्यति ।।
परजन्मनि वां प्रीत्या संयोग कारयिष्यति ।। २८ ।

भिल्लश्च वीरसेनस्य नैषधे नगरे वरे ।।
महान्पुत्रो नलो नाम भविष्यति न संशयः ।। २९ ।।
त्वं सुता भीमराजस्य वैदर्भे नगरेऽनघे।।
दमयन्ती च विख्याता भविष्यसि गुणान्विता ।। 3.28.३० ।।
युवां चोभौ मिलित्वा च राजभोगं सुविस्तरम् ।।
भुक्त्वा मुक्तिं च योगीन्द्रेर्लप्स्येथे दुर्लभां ध्रुवम् ।। ३१ ।।
नन्दीश्वर उवाच ।।
इत्युक्त्वा च स्वयं शम्भुर्लिङ्गरूपोऽभवत्तदा ।।
तस्मान्न चलितो धर्मादचलेश इति स्मृतः ।। ३२ ।।
स भिल्ल आहुकश्चापि वीरसेनसुतोऽभवत् ।।
नैषधे नगरे तात नलनामा महानृपः ।।३३।।
आहुका सा महाभिल्ली भीमस्य तनयाऽभवत् ।।
वैदर्भे नगरे राज्ञो दमयन्तीति विश्रुता ।। ३४ ।।
यतिनाथाह्वयस्सोपि हंसरूपोऽभवच्छिवः ।।
विवाहं कारयामास दमयन्त्या नलेन वै ।। ३५ ।।
पूर्वसत्काररूपेण महापुण्येन शंकरः ।।
हंसरूपं विधायैव ताभ्यां सुखमदात्प्रभुः ।। ३६ ।।
शिवो हंसावतारो हि नानावार्ताविचक्षणः ।।
दमयन्त्या नलस्यापि परमानन्ददायकः ।। ३७ ।।
इदं चरितं परमं पवित्रं शिवावतारस्य पवित्रकीर्तेः ।।
यतीशसंज्ञस्य महाद्भुतं हि हंसाह्वयस्यापि विमुक्तिदं हि ।। ३८ ।।
यतीशब्रह्महंसाख्यावतारचरितं शुभम् ।।
शृणुयाच्छ्रावयेद्यो हि स लभेत परां गतिम्।।३९।।
इदमाख्यानमनघं सर्वकामफलप्रदम् ।।
स्वर्ग्यं यशस्यमायुष्यं भक्तिवर्धनमुत्तमम्।।3.28.४०।।
श्रुत्वैतच्चचरितं शम्भोर्यतिहंसस्वरूपयोः ।।
इह सर्वसुखम्भुक्त्वा सोऽन्ते शिवपुरं व्रजेत् ।। ४१ ।।
इति श्रीशिवमहापुराणे तृ० शतरुद्रसंहि० यतिनाथब्रह्महंसाह्वयशिवावतारचरितवर्णनं नामाष्टाविंशोऽध्यायः ।। २८ ।।

नन्दीश्वर उवाच ।।
सनत्कुमार शम्भोस्त्ववतारं परमं शृणु ।।
नभगज्ञानदं कृष्णदर्शनाह्वयमुत्तमम् ।। १ ।।
इक्ष्वाकुप्रमुखा आसन्श्राद्धदेवसुताश्च ये ।।
नभगस्तत्र नवमो नाभगस्तत्सुतः स्मृतः ।। २ ।।
अम्बरीषस्सुतस्तस्य विष्णुभक्तो बभूव सः ।।
यस्योपरि प्रसन्नोभूद्दुर्वासा ब्रह्मभक्तितः ।। ३ ।।
पितामहोऽम्बरीषस्य नभगो यः प्रकीर्तितः ।।
तच्चरितं शृणु मुने यस्मै ज्ञानमदाच्छिवः ।।४।।
नभगो मनुपुत्रस्तु पठनार्थं सुबुद्धि मान् ।।
चक्रे गुरुकुले वासं बहुकालं जितेन्द्रियः ।। ५ ।।
एतस्मिन्समये ते वा इक्ष्वाकुप्रमुखास्सुताः ।।
तस्मै भागमकल्प्यैव भेजुर्भागान्निजान्क्रमात् ।। ६ ।
स्वंस्वं भागं गृहीत्वा ते बुभुजू राज्यमुत्तमम् ।।
अविषादं महाभागा पित्रादेशात्सुबुद्धयः ।। ७ ।।
स पश्चादागतस्तत्र ब्रह्मचारी गुरुस्थलात् ।।
नभगोऽधीत्य सर्वाश्च सांगोपांगाः श्रुतीः क्रमात् ।। ८ ।।
भ्रातृन्विलोक्य नभगो विभक्तान्सकलान्निजान् ।।
दायार्थी प्राह तान्स्नेहादिक्ष्वाकुप्रमुखान्मुने ।।९।।
नभग उवाच ।।
भ्रातरोभक्तकं मह्यं दायं कृत्वा यथातथम् ।।
सर्वे विभक्तास्सुप्रीत्या स्वदायार्थागताय च ।।3.29.१०।।
तदा विस्मृतमस्माभिरिदानीं पितरं तव ।।
विभजामो वयं भागं तं गृहाण न संशयः ।।११।।
तच्छ्रुत्वा भ्रातृवचनं नभगः परविस्मृतः ।।
तदोपकण्ठमागत्य पितरं समभाषत ।। १२ ।।
नभग उवाच ।।
हे तात भ्रातरः सर्वे त्यक्त्वा मां न्यभजंश्च ते ।।
पठनार्थं गतश्चाहं ब्रह्मचारी गुरोः कुले।।१३।।
तत आगत्य मे पृष्टा दायदानार्थमादरात्।।
ते त्वामूचुर्विभागं मे तदर्थमहमागतः ।।१४।।
नन्दीश्वर उवाच ।।
तदाकर्ण्य वचस्तस्य पिता तं प्राह विस्मितः।।

आश्वास्य श्राद्धदेवस्स सत्यधर्मरतं मुने ।।१५।।
मनुरुवाच ।।
तदुक्तं माद्दथास्तात प्रतारणकरं हि तत् ।।
न ह्यहं परमं दायं सर्वथा भोगसाधनम् ।। १६ ।।
तथापि दायभावेन दत्तोऽहं तैः प्रतारिभिः ।।
तव वै जीवनोपाय वदामि शृणु तत्त्वतः ।। १७ ।।
सत्रमांगिरसा विप्राः कुर्वंत्यद्य सुमेधसः ।।
तत्र कर्मणि मुह्यन्ति षष्ठं षष्ठमहः प्रति ।।१८।।
तत्र त्वं गच्छ नभग तान् सुशंस महाकवे ।।
सूक्ते द्वे वैश्वदेवे हि सत्रं शुद्धं हि तद्भवेत् ।।१९।।
तत्कर्मणि समाप्ते हि स्वयान्तो ब्राह्मणाश्च ते ।।
धनं दास्यन्ति ते तुष्टास्स्वसत्रपरिशेषितम् ।।3.29.२०।।
नन्दीश्वर उवाच ।।
तदाकर्ण्य पितुर्वाक्यं नभगः सत्यसारवान् ।।
जगाम तत्र सुप्रीत्या यत्र तत्सत्रमुत्तमम् ।। २१ ।।
तदाहः कर्मणि मुने सत्रे तस्मिन्स मानवः ।।
सूक्ते द्वे वैश्वदेवे हि प्रोवाच स्पष्टतस्सुधीः ।। २२ ।।
समाप्ते कर्मणि ततो विप्रा आंगिरसाश्च ते ।।
तस्मै दत्त्वा ययुः स्वर्गं स्वंस्वं सत्रावशेषितम् ।। २३ ।।
तत्तदा स्वीकरिष्यंतं सुसत्रपरिशेषितम् ।।
विज्ञाय गिरिशः सद्य आविर्भूत सदूतिकृत् ।। २४ ।।
सर्वांगसुन्दरः श्रीमान्पुरुषः कृष्णदर्शनः ।।
भावं समीक्षितुं भागं दातुं ज्ञानं परं च तत् ।। २५ ।।
अथो स शंकरः शम्भुः परीक्षाकर ईश्वरः ।।
उवाचोत्तरतोऽभ्येत्य नभगं तं हि मानवम् ।। २६ ।।
ईश्वर उवाच ।।
कस्त्वं गृह्णासि पुरुष ममेदं वास्तुकं वसु ।।
प्रेषितः केन तत्सर्वं सत्यं वद ममाग्रतः ।। २७ ।।
नन्दीश्वर उवाच ।।
तच्छुत्वा तद्वचस्तात मानवो नभगः कवि ।।
प्रत्युवाच विनीतात्मा पुरुषं कृष्णदर्शनम् ।। २८ ।।
नभगः उवाच ।।
ममेदमृषिभिर्दत्तं वसु यज्ञगतं खलु ।।

कथं वारयसे मां त्वं गृह्णतं कृष्णदर्शनम् ।। २९ ।।
नन्दीश्वर उवाच ।।
आकर्ण्य नाभगं वाक्यमिदं सत्यमुदीरितम् ।।
प्रत्युवाच प्रसन्नात्मा पुरुषः कृष्णदर्शनः ।। 3.29.३० ।।
कृष्णदर्शन उवाच ।।
विवादेऽस्मिन्हि नौ तात प्रमाणं जनकस्तव ।।
याहि तम्पृच्छ स ब्रूयात्तत्प्रमाणन्तु सत्यतः ।। ३१ ।।
नन्दीश्वर उवाच ।।
तदाकर्ण्य वचस्तस्य नभगो मानवः कविः ।।
आगच्छत्पितरं प्रीत्या तदुक्तं पृष्टवान्मुने ।। ३२ ।।
पुत्रोदितं समाकर्ण्य श्राद्धदेवस्स वै मनुः ।।
स्मृत्वा शिवपदाम्भोजं प्राप्तस्मृतिरुवाच तम् ।। ३३ ।।
मनुरुवाच ।।
हे तात शृणु मद्वाक्यं स देवः पुरुषः शिवः ।।
तस्यैव सकलं वस्तु यज्ञप्राप्तं विशेषतः ।। ३४ ।।
अध्वरोर्वरितं वस्तु रुद्रभागः प्रकीर्तितः ।।
इत्यपि प्राज्ञवादो हि क्वचिज्जातस्तदिच्छया ।। ३५ ।।
स देव ईश्वरः सर्वं वस्त्वर्हति न संशयः ।।
यज्ञावशिष्टं किमुत परे तस्येच्छया विभोः ।। ३६ ।।
अनुग्रहार्थमायातस्तव तद्रूपतः प्रभुः ।।
तत्र त्वं गच्छ नभग प्रसन्नं कुरु सत्यतः ।। ३७।।
क्षमापय स्वापराधं सुप्रणम्य स्तुतिं कुरु ।।
सर्वप्रभुस्स एवेशो यज्ञाधीशोऽखिलेश्वरः ।। ३८ ।।
विष्णुब्रह्मादयो देवाः सिद्धास्सर्वर्षयोऽपि हि ।।
तदनुग्रहतस्तात समर्थः सर्वकर्मणि ।। ३९ ।।
किम्बहूक्त्यात्मजश्रेष्ठ गच्छ तत्राशु माचिरम् ।।
प्रसादय महादेवं सर्वथा सकलेश्वरम् ।। 3.29.४० ।।
नन्दीश्वर उवाच ।।
इत्युक्त्वा स मनुः श्राद्धदेवश्च तनयं द्रुतम् ।।
प्रेषयामास निकटं शम्भोस्सोऽपि समेत्य तम् ।। ४१ ।।
नभगश्च प्रणम्याशु साञ्जलिर्नतमस्तकः ।।
प्रोवाच सुप्रसन्नात्मा विनयेन महामतिः ।। ४२ ।।
नभग उवाच ।।

इदं तवेश सर्वं हि वस्तु त्रिभुवने हि यत् ।।
इत्याह मे पिता नूनं किमुताध्वरशेषितम् ।। ४३ ।।
अजानता मया नाथ यदुक्तन्तद्वचो भ्रमात् ।।
अपराधन्त्वं क्षमस्व शिरसा त्वां प्रसादये ।। ४४ ।।
इत्युक्त्वा नभगस्सोतिदीनधीस्तु कृताञ्जलिः ।।
तुष्टाव तं महेशानं कृष्णदर्शनमानतः ।। ४५ ।।
श्राद्धदेवोऽपि शुद्धात्मा नतकस्साञ्जलिस्सुधीः ।।
तुष्टाव तं प्रभुं नत्वा स्वापराधं क्षमापयत् ।। ४६ ।।
एतस्मिन्नन्तरे तत्र विष्णुर्ब्रह्माखिलः सुधीः ।।
वासवाद्याः समाजग्मुः सिद्धाश्च मुनयोऽपि हि ।। ४७ ।।
महोत्सवं प्रकुर्वन्तः सुकृतालयोऽखिलाः ।।
तुष्टुवुर्नतका भक्त्या सुप्रणम्य पृथक्पृथक् ।।४८।।
अथ रुद्रः प्रसन्नात्मा कृपादृष्ट्या विलोक्य तान्।।
उवाच नभगं प्रीत्या सस्मितं कृष्णदर्शनः ।। ४९ ।।
कृष्णदर्शन उवाच ।।
यत्ते पितावदद्धर्म्यं वाक्यन्तत्तु तथैव हि ।।
त्वयापि सत्यमुक्तं तत्साधुस्त्वन्नात्र संशयः ।।3.29.५०।।
अतोऽहं सुप्रसन्नोऽस्मि सर्वथा सुव्रतेन ते ।।
ददामि कृपया ते हि ज्ञानम्ब्रह्म सनातनम् ।। ५१ ।।
महाज्ञानी भव त्वं हि सविप्रो नभगं द्रुतम् ।।
गृहाण वस्त्विदं सर्वं मद्दत्तं कृपयाधुना ।। ५२ ।।
इह सर्वसुखं भुङ्क्ष्व निर्विकारं महामते ।।
सुगतिं प्राप्स्यसि त्वं हि सविप्रः कृपया मम ।। ५३ ।।
नन्दीश्वर उवाच ।।
इत्युक्त्वा तात भगवान्स रुद्रः सत्यवत्सलः ।।
सर्वेषाम्पश्यतान्तेषान्तत्रैवान्तर्दधे हरः ।। ५४ ।।
विष्णुर्ब्रह्मापि देवाद्यास्सर्वे ते मुनिसत्तम ।।
स्वंस्वं धाम ययुः प्रीत्या तस्यै नत्वा दिशे मुदा ।। ५५ ।।
सपुत्रः श्राद्धदेवोऽपि स्वस्थानमगमन्मुदा ।।
भुक्त्वा भोगान्सुविपुलान्सोऽन्ते शिवपुर ययौ ।। ५६ ।।
इत्थन्ते कीर्तितो ब्रह्मन्नवतारः शिवस्य हि ।।
कृष्णदर्शननामा वै नभगानन्ददायकः ।।५७।।
इदमाख्यानमनघं भुक्तिमुक्तिप्रदं सताम् ।।

पठतां शृण्वतां वापि सर्व कामफलप्रदम् ।। ५८ ।।
य एतच्चरितम्प्रातस्सायं च स्मरते सुधीः ।।
कविर्भवति मन्त्रज्ञो गतिमन्ते लभेत्पराम् ।। ५९ ।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां नन्दीश्वरसनत्कुमारसंवादे
कृष्णदर्शनशिवावतारवर्णनंनामैकोनत्रिंशोऽध्यायः।।२९।।

नन्दीश्वर उवाच ।।
शृणु त्वं ब्रह्मपुत्राद्यावतारं परमेशितुः ।।
अवधूतेश्वराह्वं वै शक्रगर्वापहारकम् ।। १ ।।
शक्रः पुरा हि सगुरुः सर्वदेवसमन्वितः ।।
दर्शनं कर्तुमीशस्य कैलासमगमन्मुने ।। २ ।।
अथ गुर्विन्द्रयोर्ज्ञात्वागमनं शंकरस्तयोः ।।
परीक्षितुं च तद्भावं स्वदर्शनरतात्मनोः ।। ३ ।।
अवधूतस्वरूपोऽभून्नानालीलाकरः प्रभुः ।।
दिगंबरो महाभीमो ज्वलदग्निसमप्रभः ।। .४ ।।
सोऽवधूतस्वरूपो हि मार्गमारुद्ध्य सद्गतिः ।।
लंबमानपटः शंभुरतिष्ठच्छोभिताकृतिः ।।५।।
अथ तौ गुरुशक्रौ च गच्छन्तौ शिव सन्निधिम् ।।
अद्राष्टांपुरुषं भीमं मार्गमध्येऽद्भुताकृतिम् ।।६।।
अथ शक्रो मुनेऽपृच्छत्स्वाधिकारेण दुर्मदः ।।
पुरुषं तं स्वमार्गान्तः स्थितमज्ञाय शंकरम् ।।७।।
शक्र उवाच ।।
कस्त्वं दिगंबराकारावधूतः कुत आगतः ।।
किन्नाम तव विख्यातं तत्त्वतो वद मेऽचिरम् ।।८।।
स्वस्थाने संस्थितः शंभुः किम्वान्यत्र गतोऽधुना ।।
दर्शनार्थं हि तस्याहं गच्छामि सगुरुस्सुरैः ।। ९ ।।
नन्दीश्वर उवाच ।।
शक्रेणेत्थं स पृष्टश्च किंचिन्नोवाच पूरुषः ।।
लीलागृहीतदेहस्स शङ्करो मदहा प्रभुः ।। 3.30.१० ।।
शक्रः पुनरपृच्छत्तं नोवाच स दिगंबरः ।।
अविज्ञातगतिश्शम्भुर्महाकौतुककारकः ।। ११ ।।
पुनः पुरन्दरोऽपृच्छत्त्रैलोक्याधिपतिस्स्वराट् ।।
तूष्णीमास महायोगी महालीलाकरस्स वै ।। १२ ।।
इत्थं पुनः पुनः पृष्टः शक्रेण स दिगम्बरः ।।
नोवाच किंचिद्भगवाञ्शक्रदर्प्पजिघांसया ।। १३ ।।
अथ चुक्रोध देवेशस्त्रैलोक्यैश्वर्य्यगर्वितः ।।
उवाच वचनं क्रोधात्तं निर्भर्त्स्य जटाधरम् ।। १४ ।।
इन्द्र उवाच ।।
पृच्छमानोऽपि रे मूढ नोत्तरं दत्तवानसि ।।

अतस्त्वां हन्मि वज्रेण कस्ते त्रातास्ति दुर्मते ।। १५ ।।
इत्युदीर्य्य ततो वज्री संनिरीक्ष्य क्रुधा हि तम् ।।
हन्तुन्दिगम्बरं वज्रमुद्यतं स चकार ह ।। १६ ।।
वज्रहस्तं च तं दृष्ट्वा शक्रं शीघ्रं सदाशिवः ।।
चकार स्तम्भनं तस्य वज्रपातस्य शंकरः ।। १७ ।।
ततः स पुरुषः कुद्धः करालाक्षो भयंकरः ।।
द्रुतमेव प्रजज्वाल तेजसा प्रदहन्निव ।। १८ ।।
बाहुप्रतिष्टम्भभुवा मन्युनान्तश्शचीपतिः ।।
समदह्यत भोगीव मंत्ररुद्धपराक्रमः ।।१९।।
दृष्ट्वा वृहस्पतिस्त्वेनम्प्रज्वलन्तं स्वतेजसा ।।
पुरुषं तं धियामास प्रणनाम हरं द्रुतम्।। ३.३०.२० ।।
कृताञ्जलिपुटो भूत्वा ततो गुरुरुदारधीः ।।
दण्डवत्कौ पुनर्नत्वा प्रभुं तुष्टाव भक्तितः ।। २१ ।।
गुरुरुवाच ।।
देवदेव महादेव शरणागतवत्सल ।।
प्रसन्नो भव गौरीश सर्वेश्वर नमोऽस्तु ते ।। २२ ।।
मायया मोहितास्सर्वे ब्रह्मविष्ण्वादयोपि ते ।।
त्वां न जानन्ति तत्त्वेन जानन्ति त्वदनुग्रहात् ।। २३ ।।
नन्दीश्वर उवाच ।।
बृहस्पतिरिति स्तुत्वा स तदा शंकरम्प्रभुम् ।।
पादयोः पातयामास तस्येशस्य पुरन्दरम् ।। २४ ।।
ततस्तात सुराचार्य्यः कृताञ्जलिरुदारधीः ।।
बृहस्पतिरुवाचेदं प्रश्रयावनतः सुधीः।।२५।।
बृहस्पतिरुवाच।।
दीननाथ महादेव प्रणतन्तव पादयोः ।।
समुद्धर च मां तत्त्वं क्रोधं न प्रणयं कुरु।।२६।।
तुष्टो भव महादेव पाहीन्द्रं शरणागतम् ।।
वह्निरेष समायाति भालनेत्रसमुद्भवः ।। २७ ।।
।। नन्दीश्वर उवाच ।।
इत्याकर्ण्य गुरोर्वाक्यमवधूताकृतिः प्रभुः ।।
उवाच करुणासिंधुर्विहसन्स सदूतिकृत् ।। २८ ।।
अवधूत उवाच ।।
क्रोधाच्च निस्सृतन्तेजो धारयामि स्वनेत्रतः ।।

कथं हि कंचुकीं सर्पस्संधत्ते चोज्झितां पुनः ।। २९ ।।
नन्दीश्वर उवाच ।।
इति श्रुत्वा वचस्तस्य शंकरस्य बृहस्पतिः ।।
उवाच साञ्जलिर्भूयो भयव्याकुलमानसः ।। 3.30.३० ।।
।। बृहस्पतिरुवाच ।।
हे देव भगवन्भक्ता अनुकम्प्याः सदैव हि ।।
भक्तवत्सलनामेति स्वं सत्यं कुरु शंकर ।।३१।।
क्षेप्तुमन्यत्र देवेश स्वतेजोऽत्युग्रमर्हसि ।।
उद्धर्ता सर्वभक्तानां समुद्धर पुरन्दरम् ।। ३२ ।।
नन्दीश्वर उवाच ।।
इत्युक्तो गुरुणा रुद्रो भक्तवत्सलनामभाक् ।।
प्रत्युवाच प्रसन्नात्मा सुरेज्यम्प्रणतार्तिहा ।।३३।।
रुद्र उवाच ।।
प्रीतस्तेहं सुराचार्य्य ददामि वरमुत्तमम् ।।
इन्द्रस्य जीवदानेन जीवेति त्वं प्रथाम्व्रज ।। ३४ ।।
समुद्भूतोऽनलो योयं भालनेत्रात्सुरा सहः ।।
एनन्त्यक्ष्याम्यहं दूरे यथेन्द्रं नैव पीडयेत् ।। ३५ ।।
।। नन्दीश्वर उवाच ।।
इत्युक्त्वा स करे धृत्वा स्वतेजोऽनलमद्भुतम् ।।
भालनेत्रसमुद्भूतं प्राक्षिपल्लवणाम्भसि ।। ३६ ।।
अथो शिवस्य तत्तेजो भालनेत्रसमुद्भवम् ।।
क्षिप्तं च लवणाम्भोधौ सद्यो बालो बभूव ह ।। ३७ ।।
स जलन्धरनामाभूत्सिन्धुपुत्रोऽसुरेश्वरः ।।
तं जघान महेशानो देवप्रार्थनया प्रभुः ।।३८।।
इत्थं कृत्वा सुचरितं शंकरो लोकशंकरः ।।
अवधूतस्वरूपेण ततश्चान्तर्हितोऽभवत् ।। ३९ ।।
बभूवुः सकला देवाः सुखिनश्चातिनिर्भयाः ।।
गुरुशक्रौ भयान्मुक्तौ जग्मतुः सुखमुत्तमम्।। 3.30.४० ।।
यदर्थे गमनोद्युक्तौ दर्शनं प्राप्य तस्य तौ।।
कृतार्थौ गुरुशक्रौ हि स्वस्थानं जग्मतुर्मुदा।।४१।।
अवधूतेश्वराह्वोऽवतारस्ते कथितो मया।।
परमेशस्य परमानन्ददः खलदण्डदः।।४२।।
इदमाख्यानमनघं यशस्यं स्वर्ग्यमेव च ।।

भुक्तिमुक्तिप्रदं दिव्यं सर्वकामफलप्रदम् ।। ४३ ।।
य इदं शृणुयान्नित्यं श्रावयेद्वा समाहितः ।।
इह सर्वसुखं भुक्त्वा सोन्ते शिवगतिं लभेत् ।। ४४ ।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां नन्दी श्वरसनत्कुमारसंवादे
अवधूतेश्वरशिवावतारचरित्रवर्णनं नाम त्रिंशोऽध्यायः ।। ३० ।।

नन्दीश्वर उवाच ।।
अथ वक्ष्ये मुनिश्रेष्ठ शम्भोः शृण्ववतारकम् ।।
स्वभक्तदयया विप्र नारीसन्देहभंजकम् ।। १ ।।
आसीत्सत्यरथो नाम्ना विदर्भविषये नृपः ।।
धर्म्मात्मा सत्यशीलश्च महाशैवजनप्रियः ।। २ ।।
तस्य राज्ञस्सुधर्मेण महीं पालयतो मुने ।।
महान्कालो व्यतीयाय सुखेन शिवधर्म्मतः ।।३।।
कदाचित्तस्य राज्ञस्तु शाल्वैश्च पुररोधिभिः ।।
महान्रणो बभूवाथ बहुसैन्यैर्बलोद्धतैः ।।४।।
स विदर्भनृपः कृत्वा सार्धं तैर्दारुणं रणम् ।।
प्रनष्टोरुबलः शाल्वैर्निहतो दैवयोगतः ।। ५ ।।
तस्मिन्नृपे हते युद्धे शाल्वैस्तु भयविह्वलाः ।।
सैनिका हतशेषाश्च मन्त्रिभिस्सह दुद्रुवुः ।। ६ ।।
अथ तस्य महाराज्ञी रात्रौ स्वपुरतो मुने ।।
संरुद्धा रिपुभिर्यत्नादन्तर्वत्नी बहिर्ययौ ।। ७ ।।
निर्गता शोकसंतप्ता सा राजमहिषी शनैः।।
प्राचीं दिशं ययौ दूरं स्मरन्तीशपदाम्बुजम्।।८।।
अथ प्रभाते सा राज्ञी ददर्श विमलं सरः।।
अतीता दूरमध्वानं दयया शङ्करस्य हि ।।९।।
तत्रागत्य प्रिया राज्ञस्संतप्ता सुकुमारिणी।।
निवासार्थं सरस्तीरे छायावृक्षमुपाश्रयत् ।। ।।3.31.१०।।
तत्र दैववशाद्राज्ञी मुहूर्त्ते सद्गुणान्विते ।।
असूत तनयं दिव्यं सर्वलक्षणलक्षितम् ।।११।।
अथ तज्जननी दैवात्तृषितातित नृपाङ्गना ।।
सरोवतीर्णा पानार्थं ग्रस्ता ग्राहेण पाथसि ।। १२ ।।
स सुतो जातमात्रस्तु क्षुत्पिपासार्द्दितो भृशम्।।
रुरोद च सरस्तीरे विनष्ट पितृमातृकः ।।१३।।
तस्मिन्वने क्रन्दमाने जातमात्रे सुते मुने ।।
कृपान्वितो महेशोऽभूदन्तर्यामी स रक्षक. ।।१४।।
प्रेरिता मनसा काचिदीशेन त्रासहारिणा।।
अकस्मादागता तत्र भ्रमन्ती भैक्ष्यजीविनी।।१५।।
सा त्वेकहायनं बालं वहन्ती विधवा निजम्।।
अनाथमेकं क्रंदन्तं शिशुन्तत्र ददर्श ह ।।१६।।

सा दृष्ट्वा तत्र तम्बालं वने निर्मनुजे मुने ।।
विस्मितातिं द्विजस्त्री सा चिचिन्तं हृदये बहु ।।१७।।
अहो सुमहदाश्चर्य्यमिदं दृष्टम्मयाधुना ।।
असंभाव्यमकथ्यं च सर्वथा मनसा गिरा ।। १८ ।।
अच्छिन्ननाभिनालोयं रसायां केवलं शिशुः ।।
शेते मातृविहीनश्च क्रन्दंस्तेजस्विनां वरः ।।१९।।
अस्य पित्रादयः केऽपि न सन्तीह सहायिनः।
कारणं किं बभूवाथ ह्यहो दैवबलं महत् ।। 3.31.२० ।।
न जाने कस्य पुत्रोऽयमस्य ज्ञातात्र कोपि न ।।
यतः पृच्छाम्यस्य जन्य जाता च करुणा मयि ।। २१।।
इच्छाम्येनं पोषितुं हि बालमौरसपुत्रवत् ।।
संप्रष्टुं नोत्सहेऽज्ञात्वा कुलजन्मादि चास्य वै ।। २२ ।।
नन्दीश्वर उवाच ।।
इति संचिन्त्यमानायां तस्यां विप्रवरस्त्रियाम् ।।
कृपां चकार महतीं शंकरो भक्तवत्सल।।२३।।
दध्रे भिक्षुस्वरूपं हि महालीलो महेश्वरः।।
सर्वथा भक्तसुखदो निरुपाधिः स्वयं सदा ।।२४।।
तत्राजगाम सहसा स भिक्षुः परमेश्वरः ।।
यत्रास्ति संदेहवती द्विजस्त्री ज्ञातुमिच्छती ।। २५ ।।
भिक्षुवर्य्यस्वरूपोऽसावविज्ञातगतिः प्रभुः ।।
तामाह विप्रवनितां विहस्य करुणानिधिः ।। २६ ।।
भिक्षुवर्य्य उवाच ।।
सन्देहं कुरु नो चित्ते विप्रभामिनि मा खिद ।।
रक्षैनम्बालकं प्रीत्या सुपवित्रं स्वपुत्रकम् ।। २७ ।।
अनेन शिशुना श्रेयः प्राप्स्यसे न चिरात्परम् ।।
पुष्णीहि सर्वथा ह्येनं महातेजस्विनं शिशुम् ।।२८।।
नन्दीश्वर उवाच।।
इत्युक्तवन्तं तं भिक्षुस्वरूपं करुणानिधिम् ।।
सा विप्रवनिता शम्भुं प्रीत्या पप्रच्छ सादरम् ।। २९ ।।
विप्रवनितोवाच ।।
त्वदाज्ञयैनं बालं हि रक्षिष्यामि स्वपुत्रवत्।।
पौक्ष्यामि नात्र सन्देहो मद्भाग्यात्त्वमिहागतः ।।3.31.३०।।
तथापि ज्ञातुमिच्छामि विशेषेण तु तत्त्वतः ।।

कोयं कस्य सुतश्चायं कस्त्वमत्र समागतः ।। ।। ३१ ।।
मुहुर्मम समायाति ज्ञानं भिक्षुवर प्रभो ।।
त्वं शिवः करुणासिन्धुस्त्वद्भक्तोयं शिशुः पुरा ।। ३२ ।।
केनचित्कर्मदोषेण सम्प्राप्तोयं दशामिमाम् ।।
तद्भुक्त्वा परमं श्रेयः प्राप्स्यते त्वदनुग्रहात् ।। ३३ ।।
त्वन्माययैव साहं वै मार्गभ्रष्टा विमोहिता ।।
आगता प्रेषिता त्वत्तो ह्यस्य रक्षणहेतुतः ।। ३४ ।।
।। नन्दीश्वर उवाच ।।
इति तद्दर्शनप्राप्तविज्ञानां विप्रकामिनीम् ।।
ज्ञातुकामां विशेषेण प्रोचे भिक्षुतनुश्शिवः ।। ३५ ।।
।। भिक्षुवर्य्य उवाच ।।
शृणु प्रीत्या विप्रपत्नि बालस्यास्य पुरेहितम् ।।
सर्वमन्यस्य सुप्रीत्या वक्ष्यते तत्त्वतोऽनघे ।। ३६ ।।
सुतो विदर्भराजस्य शिवभक्तस्य धीमतः ।।
अयं सत्यरथस्यैव स्वधर्मनिरतस्य हि ।।३७।।
शृणु सत्यरथो राजा हतः शाल्वे रणे परैः ।।
तत्पत्नी निशि सुव्यग्रा निर्ययौ स्वगृहाद्द्रुतम् ।। ३८ ।।
असूत तनयं चैनं समायाता प्रगेऽत्र हि ।।
सरोवतीर्णा तृषया ग्रस्ता ग्राहेण दैवतः ।। ३९ ।।
नन्दीश्वर उवाच ।।
इति तस्य समुत्पत्तिं तत्पितुः संगरे मृतिम् ।।
तन्मातृमरणं ग्राहात्सर्वं तस्य न्यवेदयत्।।3.31.४०।।
अथ सा ब्रह्माणी सा हि विस्मितताति मुनीश्वर ।।
पुनः पप्रच्छ तं भिक्षुं ज्ञानिनं सिद्धरूपकम् ।।४१।।
ब्राह्मण्युवाच ।।
स राजोऽस्य पिता भिक्षो वरभोगान्तरेव हि ।।
कस्माच्छाल्वैस्स्वरिपुभिस्स्वल्पेहैश्च विघातितः ।। ४२ ।।
कस्मादस्य शिशोर्माता ग्राहेणाशु सुभक्षिता ।।
यस्मादनाथोयं जातो विबन्धुश्चैव जन्मतः ।। ४३ ।।
कस्मात्सुतो ममापीह सुदरिद्रो हि भिक्षुकः ।।
भवेत्कथं सुखं भिक्षो पुत्रयोरनयोर्वद ।।४४।।
नन्दीश्वर उवाच ।।
इति तस्या वचः श्रुत्वा स भिक्षुः परमेश्वरः ।।

विप्रपत्न्याः प्रसन्नात्मा प्रोवाच विहसंश्च ताम्।।४५।।
भिक्षुवर्य्य उवाच ।।
विप्रपत्नि विशेषेण सर्वप्रश्नान्वदामि ते ।।
शृणु त्वं सावधानेन चरित्रमिदमुत्तमम्।।४६।।
अमुष्य बालस्य पिता स विदर्भमहीपतिः ।।
पूर्वजन्मनि पाण्ड्योऽसौ बभूव नृपसत्तमः ।।४७।।
स शैवनृपतिर्धर्मात्पालयन्निखिला महीम् ।।
स्वप्रजां रंजयामास सर्वोपद्रवनाशनः ।।४८।।
कदाचित्स हि सर्वेशं प्रदोषे पर्यपूजयत्।।
त्रयोदश्यां निराहारो दिवानक्तव्रती शिवम् ।।४९।।
तस्य पूजयतः शम्भुं प्रदोषे गिरिशं रते ।।
महाञ्छब्दो बभूवाथ विकटस्सर्वथा पुरे ।।3.31.५०।।
तमाकर्ण्य रवं सोऽथ राजा त्यक्तशिवार्चनः।।
रिप्वागमनशंकातो निर्ययौ भवनाद्बहिः ।।५१।।
एतस्मिन्नेव काले तु तस्यामात्यो महाबली ।।
गृहीतशस्त्रसामन्तो राजान्तिकमुपाययौ ।।५२।।
तन्दृष्ट्वा शत्रुसामन्तं महाक्रोधेन विह्वलः ।।
अविचार्य वृषन्तस्य शिरश्छेदमकारयत्।। ५३।।
असमाप्ये शपूजान्तामशुचिर्नष्टधीर्नृपः ।।
रात्रौ चकार सुप्रीत्या भोजनन्नष्टमंगलः।।५४।।
विदर्भे सोभवद्राजा जन्मनीह शिवव्रती।।
शिवार्चनान्तरायेण परैर्भोगांन्तरे हतः ।। ९५ ।।
तत्पुत्रो यः पूर्वभवे सोऽस्मिञ्जन्मनि तत्सुतः ।।
अहमेव हतैश्वर्य्यः शिवपूजा व्यतिक्रमात् ।।५६।।
अस्य माता पूर्वभवे सपत्नीं छद्मनाहरत्।।
भक्षिता तेन पापेन ग्राहेणाऽस्मिन्भवे हि सा।।५७।।
एषा प्रवृत्तिरेतेषां भवत्यै परिकीर्तिता ।।
अनर्चिता शिवा भक्त्या प्राप्नुवन्ति दरिद्रताम् ।।५९।
एष ते तनयः पूर्वजन्मनि ब्राह्मणोत्तमः।।
प्रतिग्रहैर्वयो निन्ये न यज्ञाद्यैस्सुकर्मभिः ।।५९।।
अतो दारिद्र्यमापन्नः पुत्रस्ते द्विजभामिनि ।।
तद्दोषपरिहारार्थं शरणं शंकरं व्रज ।। 3.31.६० ।।
एताभ्यां खलु बालाभ्यां शिवपूजाविधीयताम् ।।

उपवीतानन्तरं हि शिवः श्रेयः करिष्यति ।। ६१ ।।
नन्दीश्वर उवाच ।।
इति तामुपदिश्याथ भिक्षुवर्ण्यतनुः शिवः ।।
स्वरूपं दर्शयामास परमं भक्तवत्सलः ।। ६२ ।।
अथ सा विप्रवनिता ज्ञात्वा तं शंकरम्प्रभुम्।।
सुप्रणम्य हि तुष्टाव प्रेम्णा गद्गदया गिरा ।।६३।।
ततस्स भगवाञ्च्छम्भुर्धृतभिक्षुतनुर्द्रुतम् ।।
पश्यन्त्या विप्रपन्त्यास्तु तत्रैवान्तरधीयत ।।६४।।
अथ तस्मिन् गते भिक्षौ विश्रब्धा ब्राह्मणी च सा।।
तमर्भकं समादाय सस्वपुत्रा गृहं ययौ ।।६५ ।।
एकचक्राह्वये रम्ये ग्राम्ये कृत निकेतना ।।
स्वपुत्रं राजपुत्रं च वरान्नैश्च व्यवर्द्धयत् ।। ६६ ।।
ब्राह्मणै कृतसंस्कारौ कृतोपनयनौ च तौ ।।
ववृधाते स्वगेहे च शिवपूजनतत्परौ ।।६७।।
तौ शाण्डिल्यमुनेस्तात निदेशान्नियम स्थितौ।।
प्रदोषे चक्रतुः शम्भोः पूजां कृत्वा व्रतं शुभम्।। ६८ ।।
कदाचिद्द्विजपुत्रेण विनाऽसौ राजनन्दनः ।।
नद्यां स्नातुं गतः प्राप निधानकलशं वरम् ।।६९।।
एवं पूजयतोः शम्भुं राजद्विजकुमारयोः ।।
सुखेनैव व्यतीयाय तयोर्मासचतुष्टयम् ।।3.31.७०।।
एवमर्चयतोः शम्भुं भूयोपि परया मुदा ।।
सम्वत्सरो व्यतीयाय तस्मिन्नेव तयोर्गृहे ।। ७१ ।।
सम्वत्सरे व्यतिक्रान्ते स राजतनयो मुने ।।
गत्वा वनान्ते विप्रेण शिवस्यानुग्रहाद्विभोः ।। ७२ ।।
अकस्मादागतां तत्र दत्तां तज्जनकेन ह ।।
विवाह्य गन्धर्वसुतां चक्रे राज्यमकण्टकम् ।। ७३ ।।
या विप्रवनिता पूर्वंतमपुष्णात्स्वपुत्रवत्।।
सैव माताभवत्तस्य स भ्राता द्विजनन्दनः ।। ७४ ।।
इत्थमाराध्य देवेशं धर्मगुप्ताह्वयस्स वै ।।
विदर्भ विषये राज्या तया भोगं चकार ह ।।७४।।।
भिक्षुवर्य्यावतारस्ते वर्णितश्च मयाधुना ।।
शिवस्य धर्मगुप्ताह्व नृपबालसुखप्रदः ।। ७६ ।।
एतदाख्यानमनघं पवित्रं पावनं महत् ।।

धर्मार्थकाममोक्षाणां साधनं सर्वकामदम् ।। ७७ ।।
य एतच्छृणुयान्नित्यं श्रावयेद्वा समाहितः।।
स भुक्त्वेहाखिलान्कामान्सोन्ते शिवपुरम्व्रजेत् ।।७८।
इति श्री शिवमहापुराणे तृती०शतरुद्रसंहितायां भिक्षुवर्य्याह्वशिवावता रचरित्रवर्णनंनामैकत्रिंशोऽध्यायः ।।३१।।

शृणु तात प्रवक्ष्यामि शिवस्य परमात्मनः।।
सुरेश्वरावतारस्ते धौम्याग्रज हितावहम् ।।१।।
व्याघ्रपादसुतो धीमानुपमन्युस्सताम्प्रियः ।।
जन्मान्तरेण संसिद्धः प्राप्तो मुनिकुमारताम्।। २ ।।
उवास मातुलगृहे स मात्रा शिशुरे व हि ।।
उपमन्युर्व्याघ्रपादिस्स्याद्धरिद्रश्च दैवतः।। ३ ।।
कदाचित्क्षीरमत्यल्पम्पीतवान्मातुलाश्रमे।।
ययाचे मातरम्प्रीत्या बहुशो दुग्ध लालसः ।।४।।
तच्छ्रुत्वा पुत्रवचनं तन्माता च तपस्विनी।।
सांतः प्रविश्याथ तदा शुभोपायमरीरचत् ।। ५।।
उञ्छवृत्त्यर्जितान्बीजान्पिष्ट्वालोड्य जलेन तान् ।।
उपलाल्य सुतन्तस्मै सा ददौ कृत्रिमम्पयः ।।६।।
पीत्वा च कृत्रिमं दुग्धं मात्रा दत्तं स बालकः ।।
नैतत्क्षीरमिति प्राह मातरं चारुदत्पुनः।।७।।
श्रुत्वा सुतस्य रुदितं प्राह सा दुःखिता सुतम।।
संमार्ज्य नेत्रे पुत्रस्य कराभ्यां कमलाकृतिः ।।८।।
मातोवाच।।क्षीरमत्र कुतोऽस्माकं वने निवसतां सदा।।
प्रसादेन विना शम्भोः पयः प्राप्तिर्भवेन्नहि।।९।।
पूर्वजन्मनि यत्कृत्यं शिवमु द्दिश्य हे सुत।।
तदेव लभ्यते नूनन्नात्र कार्या विचारणा।।
इति मातृवचश्श्रुन्वा व्याघ्रपादिस्स बालकः।।3.32.१०।
प्रत्युवाच विशोकात्मा मातरं मातृवत्सलः ।।११।।
शोकेनालमिमं मातः शंभुर्यद्यस्ति शङ्करः।।
त्यज शोकं महाभागे सर्वं भद्रम्भविष्यति।।१२।।
शृणु मातर्वचो मेऽयमहादेवोऽस्ति चेत्क्वचित्।।
चिराद्वा ह्यचिराद्वापि क्षीरोदं साधयाम्यहम्।।१३।।
नन्दीश्वर उवाच।।
इत्युक्त्वा स शिशुः प्रीत्या शिवं मेऽस्त्वित्युदीर्य्य च ।।
विसृज्य तां सुप्रणम्य तपः कर्त्तुं प्रचक्रमे।१४।।
हिमवत्पर्वतगतः वायुभक्षस्समाहितः ।।
अष्टेष्टकाभिः प्रासादं कृत्वा लिंगं च मृन्मयम् ।।१५।।
तत्रावाहय शिवं साम्बं भक्त्या पञ्चाक्षरेण ह ।।
पत्रपुष्पादिभिर्वन्यैस्समानर्च शिशुः स वै ।। १६ ।।

ध्यात्वा शिवं च तं साम्बं जपन्पञ्चाक्षरम्मनुम् ।।
समभ्यर्च्य चिरं कालं चचार परमन्तपः ।। १७ ।।
तपसा तस्य बालस्य ह्युपमन्योर्महात्मनः ।।
चराचरं च भुवनं प्रदीपितमभून्मुने ।।१८ ।।
एतस्मिन्नन्तरे शंभुर्विष्ण्वाद्यैः प्रार्थितः प्रभुः ।।
परीक्षितुं च तद्भक्तिं शक्ररूपोऽभवत्तदा।।१९।।
शिवा शचीस्वरूपाभूद्गणाः सर्वेऽभवन्सुराः।।
ऐरावतगजो नन्दी सर्वमेव च तन्मयम् ।।3.32.२०।।।
ततः साम्बः शिवः शक्रस्वरूपस्सगणो द्रुतम्।।
जगामानुग्रहं कर्तुमुपमन्योस्तदाश्रमम् ।।
परीक्षितुं च तद्भक्तिं शक्ररूपधरो हरः ।।
प्राह गंभीरया वाचा बालकन्तं मुनीश्वर ।। २२।।
सुरेश्वर उवाच।।
तुष्टोऽस्मि ते वरं ब्रूहि तपसानेन सुव्रत ।।
ददामि चेच्छितान्कामान्सर्वान्नात्रास्ति संशयः ।।२३।।
एवमुक्तः स वै तेन शक्ररूपेण शम्भुना ।।
वरयामि शिवे भक्तिमित्युवाच कृताञ्जलि ।। २४ ।।
तन्निशम्य हरिः प्राह मां न जानासि लेखपम् ।।
त्रैलोक्याधिपतिं शक्रं सर्वदेवनमस्कृतम् ।। २५।।
मद्भक्तो भव विप्रर्षे मामेवार्चय सर्वदा ।।
ददामि सर्वं भद्रन्ते त्यज रुद्रं च निर्गुणम्।।२६।।
रुद्रेण निर्गुणेनालं किन्ते कार्यं भविष्यति ।।
देवजातिबहिर्भूतो यः पिशाचत्वमागतः।।२७।।
नन्दीश्वर उवाच।।
तच्छ्रुत्वा स मुनेः पुत्रो जपन्पञ्चाक्षरम्मनुम् ।।
मन्यमानो धर्मविघ्नम्प्राह तं कर्तुमागतम् ।।२८।।
उपमन्युरुवाच ।।
त्वयैवं कथितं सर्वं भवनिन्दा रतेन वैः।।
प्रसंगाद्देवदेवस्य निर्गुणत्वं पिशाचता ।। २९ ।।
त्वं न जानासि वै रुद्रं सर्वदेवेश्वरेश्वरम् ।।
ब्रह्मविष्णुमहेशानां जनकम्प्रकृतेः परम्।।3.32.३०।।
सदसद्व्यक्तमव्यक्तं यमाहुर्ब्रह्मवादिनः ।।
नित्यमेकमनेकं च वरं तस्माद्वृणोम्यहम् ।।३१।।

हेतुवादविनिर्मुक्तं सांख्ययोगार्थदम्परम्।।
यमुशन्ति हि तत्त्वज्ञा वरन्तस्माद्वृणोम्यहम् ।। ३२ ।।
नास्ति शम्भोः परन्तत्त्वं सर्वकारणकारणात्।।
ब्रह्मविष्ण्वादि देवानां श्रेष्ठाद्गणपराद्विभोः ।। ३३ ।।
नाहं वृणे वरं त्वत्तो न विष्णोर्ब्रह्मणोऽपि वा ।।
नान्यस्मादमराद्वापि शङ्करो वरदोऽस्तु मे।३४।।
बहुनात्र किमुक्तेन वच्मि तत्त्वं मतं स्वकम् ।।
न प्रार्थये पशुपतेरन्यं देवादिकं स्फुटम् ।।३५।।।
मद्भावं शृणु गोत्रारे मयाद्यानुमितन्त्विदम् ।।
भवान्तरे कृतं पापं श्रुता निन्दा भवस्य चेत् ।। ३६ ।।
श्रुत्वा निन्दाम्भवस्याथ तत्क्षणादेव संत्यजेत् ।।
स्वदेहं तन्निहत्याशु शिवलोकं स गच्छति ।। ३७ ।।
आस्तां तावन्ममेच्छेयं क्षीरम्प्रति सुराधम ।।
निहत्य त्वां शिवास्त्रेण त्यजाम्येतत्कलेवरम्।। ३८ ।।
नन्दीश्वर उवाच ।।
एवमुक्त्वोपमन्युस्तं मर्तुं व्यवसितः स्वयम् ।।
क्षीरे वाच्छामपि त्यक्त्वा निहन्तुं शक्रमुद्यतः ।।३९।।
भस्मादाय तदाधारादघोस्त्राभिमन्त्रितम् ।।
विसृज्य शक्रमुद्दिश्य ननाद स मुनिस्तदा ।। 3.32.४० ।।
स्मृत्वा स्वेष्टपदद्वन्द्वं स्वदेहं दग्धुमुद्यतः ।।
आग्नेयीं धारणां बिभ्रदुपमन्युरवस्थितः ।। ४१ ।।
एवं व्यवसिते विप्रे भगवाञ्छक्ररूपवान् ।।
वारयामास सौम्येन धारणान्तस्य योगिनः ।। ४२ ।।
तद्विसृष्टमघोरास्त्रं नन्दीश्वरनियो गतः ।।
जगृहे मन्यतः क्षिप्तं नन्दी शंकरवल्लभम्।। ४३।।
स्वरूपमेव भगवानास्थाय परमेश्वरः ।।
दर्शयामास विप्राय बालेन्दु कृतशेखरम् ।। ४४ ।।
क्षीरार्णवसहस्रं च दध्यादेवर्णवन्तथा ।।
भक्ष्यभोज्यार्णवन्तस्मै दर्शयामास स प्रभुः ।। ४५ ।।
एवं स ददृशे शम्भुदेव्या सार्द्धं वृषोपरि।।
गणेश्वरैस्त्रिशूलाद्यैर्दिव्यास्त्रैरपि संवृतः ।। ४६ ।।
दिवि दुन्दुभयो नेदु पुष्पवृष्टिः पपात ह ।।
विष्णुब्रह्मेन्द्रप्रमुखैर्देवैश्छन्ना दिशो दश ।। ४७ ।।

अथोपमन्युरानन्दसमुद्रोर्मिभिरावृतः ।।
पपात दण्डवद्भूमौ भक्तिनम्रेण चेतसा ।।४८।।
एतस्मिन्समये तत्र सस्मितो भगवान्भवः ।।
एह्येहीति समाहूय मूर्ध्न्याघ्राय ददौ वरान् ।। ४९ ।।
शिव उवाच ।।
वत्सोपमन्यो तुष्टोऽस्मि त्वदाचरणतो वरात् ।।
दृढभक्तोऽसि विप्रर्षे मया जिज्ञासितोऽधुना ।। 3.32.५० ।।
भक्ष्यभोगान्यथाकामं बान्धवैर्भुंक्ष्व सर्वदा ।।
सुखी भव सदा दुःखनिर्मुक्तो भक्तिमान्मम।। ९१ ।।
उपमन्यो महाभाग तवाम्बैषा हि पार्वती ।।
मया पुत्रीकृतो ह्यद्य कुमारत्वं सनातनम् ।। ५२ ।।
दुग्धदध्याज्यमधुनामर्णवाश्च सहस्रशः ।।
भक्ष्यभोज्यादिवस्तूनामर्णवाश्चाखिला स्तथा ।। ५३ ।।
तुभ्यं दत्ता मया प्रीत्या त्वं गृहणीष्व महामुने ।।
अमरत्वन्तथा दक्ष गाणपत्यं च शाश्वतम् ।। ५४ ।।
पिताहन्ते महादेवो माता ते जगदम्बिका।।
वरान्वरय सुप्रीत्या मनोभिलषितान्परान्।।५५।।
अजरश्चामरश्चैव भव त्वं दुःखवर्जित।।
यशस्वी वरतेजस्वी दित्त्वज्ञानी महाप्रभुः ।।५६।।
अथ शम्भुः प्रसन्नात्मा स्मृत्वा तस्य तपो महत् ।।
पुनर्दश वरान्दिव्यान्मुनये हयूपमन्यवे ।।५७।।
व्रतं पाशुपतं ज्ञानं व्रतयोगं च तत्त्वतः ।।
ददौ तस्मै प्रवक्तृत्वं पाटवं च निजं पदम्।।५८।।
एवन्दत्त्वा महादेवः कराभ्यामुपगृह्य तम्।।
मूर्ध्न्याघ्राय सुतस्तेऽयमिति देव्यै न्यवेदयत्।।५९।।
देवी च शृण्वती प्रीत्या मूर्ध्निदेशे कराम्बुजम्।।
विन्यस्य प्रददौ तस्मै कुमारपदमक्षयम् ।।3.32.६०।।
क्षीराब्धिमपि साकारं क्षीरस्वादुकरोदधिः ।।
उपास्थाय ददौ तस्मै पिण्डीभूतमनश्वरम्।।६१।।
योगैश्वर्य्यं सदा तुष्टम्ब्रह्मविद्यामनश्वराम् ।।
समृद्धिं परमान्तस्मै ददौ सन्तुष्टमानसः।।६२।।
सोऽपि लब्ध्वा वरान्दिव्यान्कुमारत्वं च सर्वदा।।
तस्माच्छिवाच्च तस्याश्च शिवाया मुदितोऽभवत् ।। ६३ ।।

ततः प्रसन्नचेतस्कः सुप्रणम्य कृताञ्जलिः ।।
ययाचे स वरं प्रीत्या देवदेवान्महे श्वरात् ।। ६४ ।।
उपमन्युरुवाच ।।
प्रसीद देवदेवेश प्रसीद परमेश्वर ।।
स्वभक्तिन्देहि परमां दिव्यामव्यभिचारिणीम् ।। ६५ ।।
श्रद्धान्देहि महादेव स्वसंबन्धिषु मे सदा।।
स्वदास्यं परमं स्नेहं स्वसान्निध्यं च सर्वदा ।।६६ ।।
नन्दीश्वर उवाच ।।
एवमुक्त्वा प्रसन्नात्मा हर्षगद्गदया गिरा ।।
तुष्टाव स महादेवमुपमन्युर्द्विजोत्तमः ।। ६७।।
एवमुक्तश्शिवस्तेन सर्वेषां शृण्वताम्प्रभुः ।।
प्रत्युवाच प्रसन्नात्मोपमन्युं सकलेश्वरः ।। ६८ ।।
शिव उवाच ।।
वत्सोपमन्यो धन्यस्त्वं मम भक्तो विशेषतः ।।
सर्वन्दत्तम्मया ते हि यद्वृ क्तम्भवतानघ ।।६९।।
अजरश्चामरश्च त्वं सर्वदा दुःखवर्जित।।
सर्वपूज्यो निर्विकारी भक्तानाम्प्रवरो भव ।।3.32.७०।।
अक्षया बान्धवाश्चैव कुलं गोत्रं च ते सदा ।।
भविष्यति द्विजश्रेष्ठ मयि भक्तिश्च शाश्वती ।।७१।।
सान्निध्यं चाश्रये नित्यं करिष्यामि मुने तव ।।
तिष्ठ वत्स यथा कामं नोत्कण्ठां च करिष्यसि ।। ७२ ।।
नन्दीश्वर उवाच ।।
एवमुक्त्वा स भगवांस्तस्मै दत्त्वा वरान्वरान् ।।
सांबश्च सगणस्सद्यस्तत्रैवान्तर्दधे प्रभुः ।।७३ ।।
उपमन्युः प्रसन्नात्मा प्राप्य शम्भोर्वरान्वरान् ।।
जगाम जननीस्थानं मात्रे सर्वम वर्णयत् ।। ।। ७४ ।।
तच्छ्रुत्वा तस्य जननी महाहर्षमवाप सा ।।
सर्वपूज्वोऽभवत्सोऽपि सुखं प्रापाधिकं सदा ।। ७५ ।।
इत्थन्ते वर्णितस्तात शिवस्य परमात्मनः ।।
सुरेश्वरावतारो हि सर्वदा सुखदः सताम् ।।७६।।
इदमाख्यानमनघं सर्वकामफलप्रदम् ।।
स्वर्ग्यं यशस्यमायुष्यं भुक्तिमुक्तिप्रदं सताम् ।।७७।।
य एतच्छृणुयाद्भक्त्या श्रावयेद्वा समाहितः ।।

इह सर्वसुखं भुक्त्वा सोऽन्ते शिवगतिं लभेत् ।। ७८ ।। ।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां सुरेश्वराख्यशिवावतारचरितवर्णनं नाम द्वात्रिंशो ध्यायः ।।३२।। (८३)

नन्दीश्वर उवाच।।
सनत्कुमार सुप्रीत्या शिवस्य परमात्मनः ।।
अवतारं शृणु विभोर्जटिलाह्वं सुपावनम्। ।।१।।
पुरा सती दक्षकन्या त्यक्त्वा देहं पितुर्मखे ।।
स्वपित्राऽनादृता जज्ञे मेनायां हिमभूधरात्।।२।।
सा गत्वा गहनेऽरण्ये तेपे सुवि मलं तपः ।।
शंकरम्पतिमिच्छन्ती सखीभ्यां संयुता शिवा।।
तत्तपःसुपरीक्षार्थं सप्तर्षीन्प्रैषयच्छिवः।।
तपःस्थानं तु पार्वत्या नानालीलाविशारदः ।।४।।
ते गत्वा तत्र मुनयः परीक्षां चक्रुरादरात् ।।
तस्याः सुयत्नतो नैव समर्था ह्यभवंश्च ते ।।५।।।
तत्रागत्य शिवं नत्वा वृत्तान्तं च निवेद्य तत्।।
तदाज्ञां समनुप्राप्य स्वर्लोकं जग्मुरादरात् ।।६।।
गतेषु मुनिषु स्वस्थानं शंकरः स्वयम्।।
परीक्षितुं शिवावृत्तमैच्छत्सूतिकरः प्रभुः।।७।।
सुप्रसन्नस्तपस्वीच्छाशमनादयमीश्वरः।।
ब्रह्मचर्य्यस्वरूपोऽभूत्तदाद्भुततरः प्रभुः।।८।
अतीव स्थविरो विप्रदेहधारी स्वतेजसा।।
प्रज्वलन्मनसा हृष्टो दण्डी छत्री महोज्जलः।९।।
धृत्वैवं जटिलं रूपं जगाम गिरिजावनम्।।
अतिप्रीतियुतः शम्भुश्शङ्करो भक्तवत्सलः।।3.33.१०।।
तत्रापश्यस्त्थितान्देवीं सखीभिः परिवारिताम्।।
वेदिकोपरि शुद्धान्तां शिवामिव विधोः कलाम् ।।११।।
शंभुर्निरीक्ष्य तान्देवीं ब्रह्मचारिस्वरूपवान्।।
उपकण्ठं ययौ प्रीत्या चोत्सुकी भक्तवत्सलः।।१२।।
आगतं सा तदा दृष्ट्वा ब्राह्मणं तेजसाद्भुतम्।।
अंगेषु लोमशं शान्तं दण्डचर्मसमन्वितम् ।।१३।।
ब्रह्मचर्य्यधरं वृद्धं जटिलं सकमण्डलुम्।।
अपूजयत्परप्रीत्या सर्वपूजोपहारकैः।।१४।।
ततस्ता पार्वतीदेवी पूजितं परया मुदा ।।
कुशलं पर्यपृच्छत्तं ब्रह्मचारिणमादरात् ।।१५।।
ब्रह्मचारिस्वरूपेण कस्त्वं हि कुत आगतः।।
इदं् वनं भासयसि वद वेदविदां वर।। १६।।

नन्दीश्वर उवाच।।
इति पृष्टस्तु पार्वत्या ब्रह्मचारी स वै द्विजः ।।
प्रत्युवाच द्रुतम्प्रीत्या शिवाभावपरीक्षया ।। १७ ।।
ब्रह्मचार्य्युवाच ।।
अहमिच्छाभिगामी च ब्रह्मचारी द्विजोस्मि वै ।।
तपस्वी सुखदोऽन्येषामुपकारी न संशयः ।।१८।।
नन्दीश्वर उवाच ।।
इत्युक्त्वा ब्रह्मचारी स शंकरो भक्तवत्सलः ।। ।
तस्थिवानुपकण्ठं स गोपायन्रूपमात्मनः ।। १९ ।।
ब्रह्मचार्य्युवाच ।।
किम्ब्रवीमि महादेवि कथनीयन्न विद्यते ।।
महानर्थकरं वृत्तं दृश्यते विकृतं महत् ।।3.33.२०।।
नवे वयसि सद्भोगसाधने सुखकारणे ।।
महोपचारसद्भोगैर्वृथैव त्वं तपस्यसि।।२।।
का त्वं कस्यासि तनया किमर्थं विजने वने ।।
तपश्चरसि दुर्धर्षं मुनिभिः प्रयतात्मभिः ।। २२ ।।
नन्दीश्वर उवाच ।।
इति तद्वचनं श्रुत्वा प्रहस्य परमेश्वरी ।।
उवाच वचनं प्रीत्या ब्रह्मचारिणमुत्तमम्।।२३।।
पार्वत्युवाच ।।
शृणु विप्र ब्रह्मचारिन्मदवृत्तमखिलं मुने।।
जन्म मे भारते वर्षे साम्प्रतं हिमवद्गृहे ।। २४ ।।
पूर्वं दक्षगृहे जन्म सती शङ्करकामिनी ।।
योगेन त्यक्तदेहाहं तातेन पतिनिन्दिना ।। २५ ।।
अत्र जन्मनि संप्राप्य सुपुण्येन शिवो द्विज ।।
मां त्यक्त्वा भस्मसात्कृत्वा मन्मथं स जगाम ह।।२६।।
प्रयाते शङ्करे तापाद्व्रीडिताहं पितुर्गृहात् ।।
आगच्छमत्र तपसे गुरुवाक्येन संयता ।।२७।।
मनसा वचसा साक्षात्कर्मणा पतिभावतः ।।
सत्यम्ब्रवीमि नोऽसत्यं संवृतः शङ्करो मया ।। २८ ।।
जानामि दुर्लभं वस्तु कथम्प्राप्यं मया भवेत् ।।
तथापि मनसौत्सुक्यात्तप्यते मे तपोऽधुना।।२९।।
हित्वेन्द्रप्रमुखान्देवान्विष्णुम्ब्रह्माणमप्यहम्।।

पतिम्पिनाकपाणिं वै प्राप्तुमिच्छामि सत्यतः।।3.33.३०।।
नन्दीश्वर उवाच ।।
इत्येवं वचनं श्रुत्वा पार्वत्या हि सुनिश्चितम्।।
मुने स जटिलो रुद्रो विहसन्वाक्यमब्रवीत् ।।३१।।
जटिल उवाच ।।
हिमाचलसुते देवि का बुद्धिः स्वीकृता त्वया ।।
रुद्रार्थं विबुधान्हित्वा करोषि विपुलन्तपः ।।३२।।
जानाम्यहं च तं रुद्रं शृणु त्वम्प्रवदामि ते।।
वृषध्वजस्स रुद्रो हि विकृतात्मा जटाधरः।।३३।।
एकाकी च सदा नित्यं विरागी च विशेषतः ।।
तस्मात्त्वं तेन रुद्रेण मनो योक्तुं न चार्हसि ।।३४।।
सर्वं विरुद्धं रूपादि तव देवि हरस्य च।
मह्यं न रोचते ह्येतद्यदीच्छसि तथा कुरु ।।३५।।
नन्दीश्वर उवाच।।
इत्युक्त्वा च पुना रुद्रो ब्रह्मचारिस्वरूपवान्।।
निनिन्द बहुधात्मानं तदग्रे तां परीक्षितुम्।।३६।।
तच्छ्रुत्वा पार्वती देवी विप्रवाक्यं दुरासदम्।।
प्रत्युवाच महाक्रुद्धा शिवनिन्दापरं च तम्।।३७।।
एतावद्धि मया ज्ञातं कश्चिद्धन्यो भविष्यति ।।
परन्तु सकलं ज्ञातमवध्यो दृश्यतेऽधुना ।।३८।।
ब्रह्मचारिस्वरूपेण कश्चित्त्वं धूर्त आगतः ।।
शिवनिन्दा कृता मूढ त्वया मन्युरभून्मम ।।३९।।
शिवं त्वं च न जानासि शिवात्त्वं हि बहिर्मुखः ।।
त्वत्पूजा च कृता यन्मे तस्मात्तापयुताऽभवम् ।।3.33.४०।।
शिवनिन्दां करोतीह तत्त्वमज्ञाय यः पुमान्।।
आजन्मसंचितं पुण्यं तस्य भस्मीभवत्युत ।।४१।।
शिवविद्वेषिणं स्पृष्ट्वा प्रायश्चित्तं समाचरेत् ।।४२।।
रे रे दुष्ट त्वया प्रोक्तमहं जानामि शंकरम्।।
निश्चयेन न विज्ञातः शिव एव परः प्रभुः ।।४३।।
यथा तथा भवेद्रुद्रो मायया बहुरूपवान् ।।
ममाभीष्टप्रदोऽत्यन्तं निर्विकारः सताम्प्रियः ।। ४४ ।।
नन्दीश्वर उवाच ।।
इत्युक्त्वा तं शिवा देवी शिवतत्त्वं जगाद सा ।।

यत्र ब्रह्मतया रुद्रः कथ्यते निर्गुणोऽव्ययः ।।४५।।
तदाकर्ण्य वचो देव्या ब्रह्मचारी स वै द्विजः।।
पुनर्वचनमादातुं यावदेव प्रचक्रमे ।।४६।।
प्रोवाच गिरिजा तावत्स्वसखीं विजयान्द्रुतम् ।।
शिवासक्तमनोवृत्तिः शिवनिन्दापराङ्मुखी।।४७।। ।।
गिरिजोवाच।।
वारणीयः प्रयत्नेन सख्ययं हि द्विजाधमः ।।
पुनर्वक्तुमनाश्चायं शिवनिन्दां करिष्यति ।।४८।।
न केवलं भवेत्पापं निन्दाकर्तुः शिवस्य हि ।।
यो वै शृणोति तन्निन्दां पापभाक्स भवेदिह ।।४९।।
शिवनिन्दाकरो वध्यस्सर्वथा शिवकिंकरैः।।
ब्राह्मणश्चेत्स वै त्याज्यो गन्तव्यं तत्स्थलाद्द्रुतम्।।3.33.५०।।
अयन्दुष्टः पुनर्निंदां करिष्यति शिवस्य हि ।।
ब्राह्मणत्वादवध्यश्च त्याज्योऽदृश्यश्च सर्वथा ।। ५१ ।।
स्थलमेतदद्रुतं हित्वा यास्यामोऽन्यत्र मा चिरम् ।।
यथा संभाषणं न स्यादनेनाविदुषा पुनः ।। ९२ ।।
।। नन्दीश्वर उवाच ।।
इत्युक्त्वा चोमया यावत्पदमुत्क्षिप्यते मुने ।।
असौ तावच्छिवः साक्षादाललम्बे पटं स्वयम्।।५३।।
कृत्वा स्वरूपं दिव्यं च शिवाध्यानं यथा तथा।।
दर्शयित्वा शिवायै तामुवाचावाङ्मुखी शिवः ।।५४।।
शिव उवाच।।
कुत्र त्वं यासि मां हित्वा न त्वन्त्याज्या मया शिवे।।
मया परीक्षितासि त्वं दृढभक्तासि मेऽनघे ।।५५।।
ब्रह्मचारिस्वरूपेण भावमिच्छुस्त्वदीयकम्।।
तवोपकण्ठमागत्य प्रावोचं विविधं वचः।।५६।।
प्रसन्नोस्मि दृढं भक्त्या शिवे तव विशेषतः।।
चित्तेप्सितं वरं ब्रूहि नादेयं विद्यते तव।।५७।।
अद्यप्रभृति ते दासस्तपोभिः प्रेमनिर्भरे।।
कृतोऽस्मि तव सौन्दर्य्यात्क्षण एको युगायते।।५८।।
त्यज्यतां च त्वया लज्जा मम पत्नी सनातनी ।।
एहि प्रिये त्वया साकं द्रुतं यामि स्वकं गिरिम्।।५९।।
इत्युक्तवति देवेशे शिवाति मुदमाप सा ।।

तपोदुःखन्तु यत्सर्वं तज्जहौ द्रुतमेव हि ।।3.33.६ ०।।
ततः प्रहृष्टा सा दृष्ट्वा दिव्यरूपं शिवस्य तत्।।
प्रत्युवाच प्रभुं प्रीत्या लज्जयाधो मुखी शिवा ।। ६१ ।।
शिवोवाच ।।
यदि प्रसन्नो देवेश करोषि च कृपां मयि ।।
पतिर्मे भव देवेश इत्युक्तश्शिवया शिवः ।। ६२ ।।
गृहीत्वा विधिवत्पाणिं कैलासं स तया ययौ ।।
पतिं तं गिरिजा प्राप्य देवकार्यं चकार सा ।।६३।।
इति प्रोक्तस्तु ते तात ब्रह्मचारि स्वरूपकः ।।
शिवावतारो हि मया शिवाभावपरीक्षकः ।। ६४ ।।
इदमाख्यानमनघं परमं व्याहृतं मया ।।
य एतच्छृणुयात्प्रीत्या सुखी गतिमाप्नुयात् ।।६५।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां ब्रह्मचारिशिवावतारवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ।।३३।। इति चतुरशीतिरवताराः ( ८४)

नन्दीश्वर उवाच ।।
सनत्कुमार सर्वज्ञ शिवस्य परमात्मनः ।।
अवतारं शृणु विभोस्सुनर्तकनटाह्वयम्।।१।।
यदा हि कालिका देवी पार्वती हिमवत्सुता ।।
तेपे तपस्तुविमलं वनं गत्वा शिवाप्तये ।।२।।
तदा शिवः प्रसन्नो भूत्तस्यास्सुतपसो मुने ।।
तद्वृत्तसुपरीक्षार्थं वरं दातुम्मुदा ययौ ।।३।।
स्वरूपन्दर्शयामास तस्यै सुप्रीतमानसः ।।
वरम्ब्रूहीति चोवाच तां शिवां शंकरो मुने ।।४।।
तच्छ्रुत्वा शम्भुवचनं दृष्ट्वा तद्रूपमुत्तमम् ।।
सुजहर्ष शिवातीव प्राह तं सुप्रणम्य सा ।।५।।
पार्वत्युवाच ।।
यदि प्रसन्नो देवेश मह्यं देयो वरो यदि ।।
पतिर्भव ममेशान कृपां कुरु ममोपरि ।।६।।
पितुर्गृहे मया सम्यग्गम्यते त्वदनुज्ञया ।।
गन्तव्यम्भवता नाथ मत्पितुः पार्श्वतः प्रभो ।।७।।
याचस्व मान्ततो भिक्षुः ख्यापयंश्च यशः शुभम् ।।
पितुर्मे सफलं सर्वं कुरु प्रीत्या गृहा श्रमम्।।८।।
ततो यथोक्तविधिना कर्तुमर्हसि भो प्रभो ।।
विवाहं त्वं महेशान देवानां कार्य्यसिद्धये ।।९।।
कामं मे पूरय विभो निर्विकारो भवान्सदा ।।
भक्तवत्सलनामा हि तव भक्तास्म्यमहं सदा ।। 3.34.१० ।।
नन्दीश्वर उवाच ।।
इत्युक्तस्स तया शंभुर्महेशो भक्तवत्सलः ।।
तथास्त्विवति वचः प्रोच्यान्तर्हितस्स्वगिरिं ययौ।। ११ ।।
पार्वत्यपि ततः प्रीत्या स्वसखीभ्यां वयोन्विता ।।
जगाम स्वपितुर्गेहं रूपं कृत्वा तु सार्थकम्।।१२।।
पार्वत्यागमनं श्रुत्वा मेनया स हिमाचलः ।।
परिवारयुतो द्रष्टुं स्वसुतां तां ययौ मुदा।।१३।।
दृष्ट्वा तां सुप्रसन्नास्यामानयामासतुर्गृहम् ।।
कारयामासतुः प्रीत्या महानन्दी महोत्सवम्।। १४ ।।.
धनन्ददौ द्विजादिभ्यो मेनागिरिवरस्तथा ।।
मंगलं कारयामास सवेदध्वनिमादरात् ।।१५।।

ततः स्वकन्यया सार्द्धमुवास प्रांगणे मुदा ।।
मेना च हिमवाञ्छैलः स्नातुं गंगां जगाम सः ।।१६।।
एतस्मिन्नन्तरे शम्भुः सुलीलो भक्तवत्सलः।।
सुनर्तकनटो भूत्वा मेनकासन्निधिं ययौ।।१७।।
शृंगं वामे करे धृत्वा दक्षिणे डमरुन्तथा।।
पृष्ठे कन्थां रक्तवासा नृत्यगानविशारदः ।। १८ ।।
ततस्तु नटरूपोऽसौ मेनकाप्रांगणे मुदा ।।
चक्रे स नृत्यं विविधं गानञ्चाति। मनोहरम् ।।१९।।
शृंगञ्च डमरुन्तत्र वादयामास सुध्वनिम् ।।
महोतिं विविधाम्प्रीत्या स चकार मनोहराम् ।।3.34.२०।।
तन्द्रष्टुं नागरास्सर्वे पुरुषाश्च स्त्रियस्तथा ।।
आजग्मुस्सहसा तत्र बाला वृद्धा अपि ध्रुवम्।।२१।।
श्रुत्वा संगीतं तन्दृष्ट्वा सुनृत्यं च मनोहरम्।।
सहसा मुर्मुहुः सर्वे मेनापि च तदा मुने ।।२२।।
ततो मेनाशु रत्नानि स्वर्णपात्रस्थितानि च ।।
तस्मै दातुं ययौ प्रीत्या तदूतिप्री तमानसा ।। २३ ।।
तानि न स्वीचकारासौ भिक्षां चेते शिवां च ताम् ।।
पुनस्तु नृत्यं गानं च कौतुकात्कर्तुमुद्यतः ।। २४ ।।
मेना तद्वचनं श्रुत्वा चुकोपाति सुविस्मिता ।।
भिक्षुकम्भर्त्सयामास बहिष्कर्तुमियेष सा ।। २५ ।।
एतस्मिन्नन्तरे तत्र गंगातो गिरिराड्ययौ ।।
ददर्श पुरतो भिक्षुं प्रांगणस्थं नराकृतिम् ।। २६ ।।
श्रुत्वा मेनामुखाद्वृत्तन्तत्सर्वं सुचुकोप सः ।।
आज्ञां चकारानुचरान्बहिः कर्तुं च भिक्षुकम् ।। २७ ।।
महाग्निमिव दुःस्पर्शं प्रज्वलन्तं सुतेजसम् ।।
न शशाक बहिः कर्तुं कोऽपि तं मुनिसत्तम ।। २८ ।।
ततः स भिक्षुकस्तात नानालीलाविशारदः ।।
दर्शयामास शैलाय स्वप्रभावमनन्तकम् ।। २९ ।।
शैलो ददर्श तन्तत्र विष्णुरूपधरन्द्रुतम् ।।
ततो ब्रह्मस्वरूपं च सूर्य्यरूपं ततः क्षणात् ।। 3.34.३० ।।
ततो ददर्श तं तात रुद्ररूपं महाद्भुतम् ।।
पार्वती सहितं रम्यं विहसन्तं सुतेजसम् ।। ३१ ।।
एवं सुबहुरूपाणि तस्य तत्र ददर्श सः ।।

सुविस्मितो बभूवाशु परमानन्दसंप्लुतः ।। ३२ ।।
अथासौ भिक्षुवर्यो हि तस्मात्तस्याश्च सूतिकृत् ।।
भिक्षां ययाचे दुर्गान्तान्नान्यज्जग्राह किञ्चन ।। ३३ ।।
ततश्चान्तर्दधे भिक्षुस्वरूपः परमेश्वरः ।।
स्वालयं स जगामाशु दुर्गावाक्यप्रणोदितः ।। ३४ ।।
तदा बभूव सुज्ञानं मेनाशैलेशयोरपि ।।
आवां शिवो वञ्चयित्वा गतवान्स्वालयं विभुः ।।३५।।
अस्मै देया स्वकन्येयं पार्वती सुतप स्विनी ।।
एवं विचार्य च तयोः शिवेभक्तिरभूत्परा ।। ३६ ।।
अतो रुद्रो महोतीश्च कृत्वा भक्तमुदावहम् ।।
विवाहं कृतवान्प्रीत्या पार्वत्या स विधानतः ।।३७।।
इति प्रोक्तस्तु ते तात सुनर्तकनटाह्वयः ।।
शिवावतारो हि मया शिवावाक्यप्रपूरकः ।। ३८ ।।
इदमाख्यानमनघं परमं व्याहृतम्मया।।
य एतच्छृणुयात्प्रीत्या स सुखी गतिमाप्नुयात् ।।३९।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां सुनर्तकनटाह्वशिवावतारवर्णनंनाम चतुस्त्रिंशोध्यायः ।।३४।।

नन्दीश्वर उवाच ।।
सनत्कुमार सर्वज्ञ शिवस्य परमात्मनः।।
अवतारं शृणु विभोस्साधुवेषद्विजाह्वयम् ।। १ ।।
मेनाहिमालयोर्भक्तिं शिवे ज्ञात्वा महोत्तमाम् ।।
चिन्तामापुस्तुरास्सर्वे मन्त्रयामासुरादरात् ।। २ ।।
एकान्तभक्त्या शैलश्चेत्कन्यां दास्यति शम्भवे ।।
ध्रुवं निर्वाणतां सद्यः सम्प्राप्स्यति शिवस्य वै ।। ३ ।।
अनन्तरत्नाधारोऽसौ चेत्प्रयास्यति मोक्षताम् ।।
रत्नगर्भाभिधा भूमिर्मिथ्यैव भविता ध्रुवम् ।।४।।
अस्थिरत्वम्परित्यज्य दिव्यरूपं विधाय सः ।।
कन्यां शूलभृते दत्त्वा शिवालोकं गमिष्यति ।। ५ ।।
महादेवस्य सारूप्यं प्राप्य शम्भोरनुग्रहात् ।।
तत्र भुक्त्वा महाभोगांस्ततो मोक्षमवाप्स्यति ।। ६ ।।
इत्यालोच्य सुरास्सर्वे जग्मुर्गुरुगृहं मुने ।।
चक्रुर्निवेदनं गत्वा गुरवे स्वार्थसाधकाः ।। ७ ।।
देवा ऊचुः ।।
गुरो हिमालयगृहं गच्छास्मत्कार्य्यसिद्धये ।।
कृत्वा निंदां महेशस्य गिरिभक्तिं निवारय ।। ८ ।।
स्वश्रद्धया सुतां दत्त्वा शिवाय स गिरिर्गुरो ।।
लभेत मुक्तिमत्रैव धरण्यां स हि तिष्ठतु ।। ९ ।।
इति देववचः श्रुत्वा प्रोवाच च विचार्य्य तान् ।। 3.35.१० ।।
गुरुरुवाच ।।
कश्चिन्मध्ये च युष्माकं गच्छेच्छैलान्तिकं सुराः ।।
सम्पादयेत्स्वाभिमतमहं तत्कर्तुमक्षमः ।। ११ ।।
अथवा गच्छत सुरा ब्रह्मलोकं सवासवाः ।।
तस्मै वृत्तं कथय स्वं स वः कार्यं करिष्यति ।। १२ ।।
।। नन्दीश्वर उवाच ।।
तच्छ्रुत्वा ते समालोच्य जग्मुर्विधिसभां सुराः ।।
सर्वं निवेदयामासुस्तद्वृत्तं पुरतो विधेः ।। १३ ।।
अवोचत्तान्विधिः श्रुत्वा तद्वचः सुविचिंत्य वै ।।
नाहं करिष्ये तन्निंदां दुःखदां कहरां सदा।।१४।।
सुरा गच्छत कैलासं संतोषयत शङ्करम्।।
प्रस्थापयत तं देवं हिमालयगृहं प्रति ।।१५।।

स गच्छेदथ शैलेशमात्मनिन्दां करोतु वै।।
परनिन्दा विनाशाय स्वनिन्दा यशसे मता ।।१६।।
नन्दीश्वर उवाच ।।
ततस्ते प्रययुः शीघ्रं कैलासं निखिलास्सुराः।।
सुप्रणम्य शिवं भक्त्या तदद्भुतं निखिला जगुः ।। १७ ।।
तच्छ्रुत्वा देववचनं स्वीचकार महेश्वरः ।।
देवान्सुयापयामास तानाश्वास्य विहस्य सः ।। १८।।
ततः स भगवाञ्छम्भुर्महेशो भक्तवत्सलः ।।
गन्तुमैच्छच्छैलमूलं मायेशो न विकारवान् ।।१९।।
दण्डी छत्री दिब्यवासा बिभ्रत्तिलकमुज्ज्वलम्।।
करे स्फटिकमालां च शालग्रामं गले दधत् ।।3.35.२०।।
जपन्नाम हरेर्भक्त्या साधुवेषधरो द्विजः।।
हिमाचलं जगामाशु बन्धुवर्गैस्समन्वितम् ।। २१ ।।
तं च दृष्ट्वा समुत्तस्थौ सगणोऽपि हिमालयः ।।
ननाम दण्डवद्भूमौ साष्टाङ्गं विधिपूर्वकम् ।। २२ ।।
ततः पप्रच्छ शैलेशस्तं द्विजं को भवानिति ।।
उवाच शीघ्रं विप्रेन्द्रस्स योग्यद्रिम्महादरात् ।। २३ ।।
साधुद्विज उवाच ।।
साधु द्विजाह्वः शैलाहं वैष्णवः परमार्थदृक् ।।
परोपकारी सर्वज्ञः सर्वगामी गुरोर्बलात्।।२४।।
मया ज्ञातं स्वविज्ञानात्स्वस्थाने शैलसत्तम।।
तच्छृणु प्रीतितो वच्मि हित्वा दम्भन्तवांतिकम् ।।२५।।
शङ्कराय सुतान्दातुन्त्वमिच्छसि निजोद्भवाम् ।।
इमाम्पद्मासमां रम्यामज्ञातकुलशीलिने ।।२६।।
इयं मतिस्ते शैलेन्द्र न युक्ता मङ्गलप्रदा ।।
निबोध ज्ञानिनां श्रेष्ठ नारायणकुलोद्भव ।।२७।।
पश्य शैलाधिपत्वं च न तस्यैकोऽस्ति बान्धवः ।।
बान्धवान्स्वान्प्रयत्नेन पृच्छ मेनां च स्वप्रियाम् ।।२८।।
सर्वान्संपृच्छ यत्नेन मेनादीन्पा र्वती विना ।।
रोगिणे नौषधं शैल कुपथ्यं रोचते सदा।।२९।।
न ते पात्रानुरूपश्च पार्वतीदानकर्म्मणि ।।
महाजनः स्मेरमुखः श्रुति मात्राद्भविष्यति ।। 3.35.३० ।।
निराश्रयस्सदासङ्गो विरूपो निगुर्णोऽव्ययः ।।

स्मशानवासी विकटो व्यालग्राही दिगम्बरः ।। ३१ ।।
विभूतिभूषणो व्यालवरावेष्टितमस्तकः ।।
सर्वाश्रमपरिभ्रष्टस्त्वविज्ञातगतिस्सदा ।। ३२ ।।
ब्रह्मोवाच ।।
इत्याद्युक्त्वा वचस्तथ्यं शिवनिन्दापरं स हि ।।
जगाम स्वालयं शीघ्रन्नाना लीलाकरः शिवः ।।३३।।
तच्छ्रुत्वा विप्रवचनमभूताञ्च तनू तयोः ।।
विपरीतानर्थपरे किं करिष्यावहे ध्रुवम् ।। ३४ ।।
ततो रुद्रो महोतिं च कृत्वा भक्तमुदावहाम् ।।
विवाहयित्वा गिरिजां देवकार्य्यं चकार सः ।। ३५ ।।
इति प्रोक्तस्तु ते तात साधुवेषो द्विजाह्वयः ।।
शिवावतारो हि मया देवकार्य्यकरः प्रभो ।।३६।।
इदमाख्यानमनघं स्वर्ग्यमायुष्यमुत्तमम् ।।
यः पठेच्छृणुयाद्वापि स सुखी गतिमाप्नुयात्।।३७।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां साधुद्विजशिवावतारवर्णनं नाम पञ्चत्रिंशोऽध्यायः ।। ३५ ।। षडशीत्यवताराः ( ८६)

नन्दीश्वर उवाच ।।
सनत्कुमार सर्वज्ञ शिवस्य परमात्मनः ।।
अवतारं शृणु विभोरश्वत्थामाह्वयं परम् ।। १ ।।
बृहस्पतेर्महाबुद्धेर्देवर्षेरंशतो मुने ।।
भरद्वाजात्समुत्पन्नो द्रोणोऽयोनिज आत्मवान् ।। २ ।।
धनुर्भृतां वरः शूरो विप्रर्षिस्सर्वशास्त्रवित् ।।
बृहत्कीर्तिर्महातेजा यः सर्वास्त्रविदुत्तमः ।। ३ ।।
धनुर्वेदे च वेदे च निष्णातं यं विदुर्बुधाः।।
वरिष्ठं चित्रकर्माणं द्रोणं स्वकुलवर्धनम् ।।४।।
कौरवाणां स आचर्य्यं आसीत्स्वबलतो द्विज ।।
महारथिषु विख्यातः षट्सु कौरवमध्यतः ।।५।।
साहाय्यार्थं कौरवाणां स तेपे विपुलन्तपः ।।
शिवमुद्दिश्य पुत्रार्थं द्रोणाचार्य्यो द्विजोत्तमः ।।६।।
ततः प्रसन्नो भगवाच्छंकरो भक्तवत्सलः।।
आविर्बभूव पुरतो द्रोणस्य मुनिसत्तम।।७।।
तन्दृष्ट्वा स द्विजो द्रोणस्तुष्टावाशु प्रणम्य तम् ।।
महाप्रसन्नहृदयो नतकस्सुकृताञ्जलिः ।।८।।
तस्य स्तुत्या च तपसा सन्तुष्टः शंकर प्रभुः।।
वरम्ब्रूहीति चोवाच द्रोणन्तं भक्तवत्सलः।।९।।
तच्छ्रुत्वा शम्भुवचनं द्रोणः प्राहाथ सन्नतः।।
स्वांशजन्तनयन्देहि सर्वाजेयम्महाबलम्।।3.36.१०।।
तच्छ्रुत्वा द्रोणवचनं शम्भुः प्रोचे तथास्त्विति ।।
अभूदन्तर्हितस्तात कौतुकी सुखकृन्मुने ।।११।।
द्रोणोऽपगच्छत्स्वन्धाम महाहृष्टो गतभ्रमः ।।
स्वपत्न्यै कथयामास तद्वृतं सकलं मुदा ।। १२ ।।
अथावसरमासाद्य रुद्रः सर्वान्तकः प्रभुः ।।
स्वांशेन तनयो जज्ञे द्रोणस्य स महाबलः।।। १३ ।।
अश्वत्थामेति विख्यातस्तस्य बभूव क्षितौ मुने ।।
प्रवीरः कंजपत्राक्षश्शत्रुपक्षक्षयङ्करः ।। १४ ।।
यो भारते रणे ख्यातः पितुराज्ञामवाप्य च ।।
सहायकृद्बभूवात कौरवाणां महाबलः ।। १५ ।।
यमाश्रित्य महावीरं कौरवास्सुम हाबलाः ।।
भीष्मादयो बभूवुस्तेऽजेया अपि दिवौकसाम् ।। १६ ।।

यद्भयात्पाण्डवास्सर्वे कौरवाञ्जेतुमक्षमाः ।।
आसन्नष्टामहावीरा अपि सर्वे च कोविदाः ।। १७ ।।
कृष्णोपदेशतश्शम्भोस्तपः कृत्वातिदारुणम् ।।
प्राप्य चास्त्रं शम्भुवराज्जिग्ये तानर्जुनस्ततः ।।१८।।
अश्वत्थामा महावीरो महादेवांशजो मुने ।।
तदापि तद्भक्तिवशः स्वप्रतापमदर्शयत् ।। १९ ।।
विनाश्य पाण्डवसुताञ्छिक्षितानपि यत्नतः ।।
कृष्णादिभिर्महावीरैरनिवार्य्यबलः परैः ।। 3.36.२० ।।
पुत्रशोकेन विकलमापतन्तं तमर्जुनम् ।।
रथेनाच्युतवंतं हि दृष्ट्वा स च पराद्रवत् ।। २१ ।।
अस्त्रं ब्रह्मशिरो नाम तदुपर्य्यसृजत्स हि ।।
ततः प्रादुरभूत्तेजः प्रचण्डं सर्वतो दिशम् ।।२२ ।।
प्राणापदमभिप्रेक्ष्य सोर्जुनः क्लेशसंयुतः ।।
उवाच कृष्णं विक्लान्तो नष्टतेजा महाभयः ।।२३।।
अर्जुन उवाच ।।
किमिदं स्वित्कुतो वेति कृष्ण कृष्ण न वेद्म्यहम् ।।
सर्वतोमुखमायाति तेजश्चेदं सुदुस्सहम् ।।२४।।
नन्दीश्वर उवाच ।।
श्रुत्वार्जुनवचश्चेदं स कृष्णश्शैवसत्तमः ।।
दध्यौ शिवं सदारं च प्रत्याहार्जुनमादरात् ।।२५।।
कृष्ण उवाच ।।
वेत्थेदन्द्रोणपुत्रस्य ब्राह्ममस्त्रं महोल्बणम् ।।
न ह्यस्यान्यतमं किञ्चिदस्त्रं प्रत्यवकर्शनम्।।२६।।
शिवं स्मर द्रुतं शम्भुं स्वप्रभुम्भक्तरक्षकम् ।।
येन दत्तं हि ते स्वास्त्रं सर्वकार्य्यकरम्परम् ।।२७।।
जह्यस्त्रतेज उन्नद्धन्त्वन्तच्छैवास्त्रतेजसा ।।
इत्युक्त्वा च स्वयं कृष्णश्शिवन्दध्यौ तदर्थकः ।।२८।।
तच्छ्रुत्वा कृष्णवचनं पार्थस्स्मृत्वा शिवं हृदि ।।
स्पृष्ट्वापस्तं
प्रणम्याशु चिक्षेपास्त्रन्ततो मुने ।।२९।।
यद्यप्यस्त्रं ब्रह्मशिरस्त्वमोघञ्चाप्रतिक्रियम् ।।
शैवास्त्रतेजसा सद्यस्समशाम्यन्महामुने ।।3.36.३०।।
मंस्था मा ह्येतदाश्चर्य्यं सर्वचित्रमये शिवे ।।

यस्स्वशक्त्याखिलं विश्वं सृजत्यवति हन्त्यजः ।। ३१ ।।
अश्वत्थामा ततो ज्ञात्वा वृत्तमेतच्छिवांशजः ।।
शैवन्न विव्यथे किञ्चिच्छिवेच्छातुष्टधीर्मुने ।। ३२ ।।
अथ द्रौणिरिदं विश्वं कृत्स्नं कर्तुमपाण्डवम्।।
उत्तरागर्भगं बालं नाशितुम्मन आदधे ।।३३।।
ब्रह्मास्त्रमनिवार्य्यं तदन्यैरस्त्रैर्महाप्रभम् ।।
उत्तरागर्भमुद्दिश्य चिक्षेप स महाप्रभुः ।। ३४ ।।
ततश्च सोत्तरा जिष्णुवधूर्विकलमानसा ।।
कृष्णन्तुष्टाव लक्ष्मीशन्दह्यमाना तदस्त्रतः ।। ३५ ।।
ततः कृष्णः शिवं ध्यात्वा हृदा नुत्वा प्रणम्य च ।।
अपाण्डवमिदं कर्तुं द्रौणेरस्त्रमबुध्यत ।। ३६ ।।
स्वरक्षार्थेन्द्रदत्तेन तदस्त्रेण सुवर्चसा ।।
सुदर्शनेन तस्याश्च व्यधाद्रक्षां शिवाज्ञया ।। ३७ ।।
स्वरूपं शंकरादेशात्कृतं शैववरेण ह ।।
कृष्णेन चरितं ज्ञात्वा विमनस्कः शनैरभूत् ।। ३८ ।।
ततस्स कृष्णः प्रीतात्मा पाण्डवान्सकलानपि ।।
अपातयत्तदंघ्योस्तु तुष्टये तस्य शैवराट् ।। ३९ ।।
अथ द्रौणिः प्रसन्नात्मा पाण्डवान्कृष्णमेव च ।।
नानावरान्ददौ प्रीत्या सोऽश्वत्थामानुगृह्य च ।। 3.36.४० ।।
इत्थं महेश्वरस्तात चक्रे लीलाम्पराम्प्रभुः ।।
अवतीर्य्य क्षितौ द्रौणिरूपेण मुनिसत्तम ।। ४१ ।।
शिवावतारोऽश्वत्थामा महाबलपराक्रमः ।।
त्रैलोक्यमुखदोऽद्यापि वर्तते जाह्नवीतटे ।। ४२ ।।
अश्वत्थामावतारस्ते वर्णितश्शंकर प्रभोः ।।
सर्वसिद्धिकरश्चापि भक्ताभीष्टफलप्रदः ।। ४३ ।।
य इदं शृणुयाद्भक्त्या कीर्तयेद्वा समाहितः ।।
स सिद्धिम्प्राप्नुयादिष्टामन्ते शिवपुरं व्रजेत् ।। ४४ ।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायामश्वत्थामशिवावतारवर्णनं नाम षट्त्रिंशोऽध्यायः ।।
३६।।

नन्दीश्वर उवाच ।।
शृणु प्राज्ञ किराताख्यमवतारम्पिनाकिनः ।।
मूकं च हतवान्प्रीतो योऽर्जुनाय वरन्ददौ ।।१।।
सुयोधनजितास्ते वै पाण्डवाः प्रवराश्च ते।।
द्रौपद्या च तया साध्व्या द्वैताख्यं वनमाययुः ।। २ ।।
तत्रैव सूर्य्यदत्तां वै स्थालीं चाश्रित्य ते तदा ।।
कालं च वाहयामासुस्सुखेन किल पाण्डवाः ।। ३ ।।
छलार्थं प्रेरितस्तेन दुर्वासा मुनिपुङ्गवः ।।
सुयोधनेन विप्रेन्द्र पाण्डवान्तिकमादरात् ।। ४ ।।
छात्रैः स्वैर्वायुतैस्सार्द्धं ययाचे तत्र तान्मुदा ।।
भोज्यं चित्तेप्सितं वै स तेभ्यश्चैव समागतः ।।५।।
स्वीकृत्य पाण्डवैस्तैस्तैः स्नानार्थं प्रेषितास्तदा ।।
दुर्वासःप्रमुखाश्चैव मुनयश्च तपस्विनः ।।६।।
अथ ते पाण्डवाः सर्वे अन्नाभावान्मुनीश्वर ।।
दुःखिताश्च तदा प्राणांस्त्यक्तुं चित्ते समादधुः ।।७।।
द्रौपद्या च स्मृतः कृष्ण आगतस्तत्क्षणादपि ।।
शाकं च भक्षयित्वा तु तेषां तृप्तिं समादधत्।।८।।
दुर्वासाश्च तदा शिष्यांस्तृप्ताञ्ज्ञात्वा ययौ पुनः ।।
पाण्डवाः कृच्छ्रनिर्मुक्ताः कृष्णस्य कृपया तदा ।।९।।
अथ ते पाण्डवाः कृष्णं पप्रच्छुः किम्भविष्यति ।।
बलवाञ्छत्रुरुत्पन्नः किं कार्य्यन्तद्वद प्रभो ।।3.37.१०।।
नन्दीश्वर उवाच ।।
इति पृष्ठस्तदा तैस्तु श्रीकृष्णः पाण्डवैर्मुने ।।
स्मृत्वा शिवपदाम्भोजौ पाण्डवानिदमब्रवीत् ।। ११ ।।
श्रीकृष्ण उवाच ।।
श्रूयतां पाण्डवाः श्रेष्ठाः श्रुत्वा कर्तव्यमेव हि ।।
मद्वृत्तान्तं विशेषेण शिवसेवासमन्वितम् ।।१२।।
द्वारकां च मया गत्वा शत्रूणां विजिगीषया।।
विचार्य्य चोपदेशांश्च उपमन्योर्महात्मनः ।। १३ ।।
मया ह्याराधितः शम्भुः प्रसन्नः परमेश्वरः ।।
बटुके पर्वतश्रेष्ठे सप्तमासं सुसेवितः ।। १४ ।।
इष्टान्कामानदान्मह्यं विश्वेशश्च स्वयं स्थितः ।।
तत्प्रभावान्मया सर्वसामर्थ्यं लब्धमुत्तमम् ।।१५।।

इदानीं सेव्यते देवो भुक्तिमुक्ति फलप्रदः ।।
यूयं सेवत तं शम्भुमपि सर्वसुखावहम् ।।१६।।
नन्दीश्वर उवाच ।।
इत्युक्त्वान्तर्दधे कृष्ण आश्वास्याथ च पाण्डवान् ।।
द्वारकामगमच्छीघ्रं स्मरच्छिवपदाम्बुजम् ।। १७ ।।
पाण्डवा अथ भिल्लं च प्रेषयामासुरोजसा ।।
गुणानां च परीक्षार्थं तस्य दुर्योधनस्य च।। १८ ।।
सोपि सर्वं च तत्रत्यन्दुर्योधनगुणोदयम् ।।
समीचीनं च तज्ज्ञात्वापुनः प्राप प्रभून्प्रति।। १९ ।।
तदुक्तन्ते निशम्यैवं दुखम्प्रापुर्मुनीश्वर ।।
परस्परं समूचुस्ते पाण्डवा अतिदुःखिताः ।।3.37.२०।।
किङ्कर्तव्यं क्व गन्तव्यमस्माभिरधुना युधि।।
समर्था अपि वै सर्वे सत्यपाशेन यन्त्रिताः ।।२१।।
नन्दीश्वर उवाच ।।
एतस्मिन्समये व्यासो भस्मभूषितमस्तकः ।।
रुद्राक्षाभरणश्चायाज्जटाजूटविभूषितः ।।२२।।
पञ्चाक्षरं जपन्मंत्रं शिवप्रेमसमाकुलः ।।
तेजसां च स्वयंराशिस्साक्षाद्धर्म इवापरः ।।२३।।
तन्दृष्ट्वा ते तदा प्रीता उत्थाय पुरतः स्थिताः ।।
दत्त्वासनं तदा तस्मै कुशाजिनसुशोभितम् ।।२४।।
तत्रोपविष्टं तं व्यासं पूजयन्ति स्म हर्षिताः।।
स्तुतिं च विविधां कृत्वा धन्याः स्म इति वादिनः ।। २५ ।।
तपश्चैव सुसन्तप्तं दानानि विविधानि च ।।
तत्सर्वं सफलं जातं तृप्तास्ते दर्शनात्प्रभो ।।२६।।
दुःखं च दूरतो जातन्दर्शनात्ते पितामह ।।
दुष्टैश्चैव महादुःखं दत्तं नः क्रूरकर्मभिः ।।२७ ।।
श्रीमतान्दर्शने जाते दुःखं चैव गमिष्यति ।।
कदाचिन्न गतं तत्र निश्चयोयं विचारितः ।। २८ ।।
महतामाश्रमे प्राप्ते समर्थे सर्वकर्मणि ।।
यदि दुःखं न गच्छेतु दैवमेवात्र कारणम्।। २९ ।।
निश्चयेनैव गच्छेतु दारिद्यं दुःखकारणम् ।।
महतां च स्वभावोयं कल्पवृक्षसमो मतः ।। 3.37.३० ।।
तद्गुणानेव गणयेन्महतो वस्तुमात्रतः ।।

आश्रयस्य वशादेव पुंसो वै जायते प्रभो ।।३१।।
लघुत्वं च महत्त्वं च नात्र कार्य्या विचारणा ।।
उत्तमानां स्वभावोयं यद्दीनप्रतिपालनम् ।। ३२ ।।
रंकस्य लक्षणं लोके ह्यतिश्रेयस्करं मतम् ।।
पुरोऽस्य परयत्नो वै सुजनानां च सेवनम् ।। ३३ ।।
अतः परं च भाग्यं वै दोषश्चैव न दीयताम् ।।
एतस्मात्कारणात्स्वामिंस्त्वयि दृष्टो शुभन्तदा ।। ३४ ।।
त्वदागमनमात्रेण सन्तुष्टानि मनांसि नः ।।
दिशोपदेशं येनाशु दुःखं नष्टम्भवेच्च नः ।।३५।।
नन्दीश्वर उवाच ।।
इत्येतद्वचनं श्रुत्वा पाण्डवानां महामुनिः ।।
प्रसन्नमानसो भूत्वा व्यासश्चैवाब्रवीदिदम् ।।३६ ।।
हे पाण्डवाश्च यूयं वै न कष्टं कर्तुमर्हथ ।।
धन्याः स्थ कृतकृत्याः स्थ सत्यं नैव विलोपितम्।।३७।।
सुजनानां स्वभावोयं प्राणान्तेऽपि सुशोभनः ।।
धर्मं त्यजन्ति नैवात्र सत्यं सफलभाजनम् ।। ३८ ।।
अस्माकं चैव यूयं च ते चापि समताङ्गताः ।।
तथापि पक्षपातो वै धर्मिष्ठानां मतो बुधैः ।। ३९ ।।
धृतराष्ट्रेन दुष्टेन प्रथमं च ह्यचक्षुषा ।।
धर्मस्त्यक्तः स्वयं लोभाद्युष्माकं राज्यमाहृतम् ।।3.37.४०।।
तस्य यूयं च ते चापि पुत्रा एव न संशयः।।
पितर्य्युपरते बाला अनुकंप्या महात्मनः ।।४१।।
पश्चात्पुत्रश्च तेनैव वारितो न कदाचन ।।
अनर्थो नैव जायेत यच्चैवं च कृतन्तदा।।४२।।
अतः परं च यज्जातं तज्जातं नान्यथाभवेत् ।।
अयन्दुष्टो भवन्तश्च धर्मिष्ठाः सत्यवादिनः ।।४३।।
तस्मादन्ते च तस्यैवाशुभं हि भविता धुवम् ।।
यच्चैव वापितं बीजं तत्प्ररोहो भवेदिह ।। ४४ ।।
तस्माद्दुःखं न कर्तव्यं भवद्भिः सर्वथा ध्रुवम् ।।
भविष्यति शुभं वो हि नात्र कार्य्या विचारणा ।।४५।।
।। नन्दीश्वर उवाच।।
इत्युक्त्वा पाण्डवाः सर्वे तेन व्यासेन प्रीणिताः।।
युधिष्ठिरमुखास्ते च पुनरेवाब्रुवन्वचः ।।४६।।

पाण्डवा ऊचुः ।।
सत्यमुक्तन्त्वया नाथ दुष्टैर्दुःखं निरंतरम् ।।
दुष्टात्मभिर्वने चापि दीयते हि मुहुर्मुहुः ।।४७।।
तन्नाशयाशुभम्मेद्य किंचिद्देयं शुभं विभो ।।
कृष्णेन कथितं पूर्वमाराध्यश्शङ्करस्सदा ।। ४८ ।।
प्रमादश्च कृतोऽस्माभिस्तद्वचश्शिथिलीकृतम्।।
स देवमार्गस्तु पुनरिदानीमुपदिश्यताम् ।।४९।।
नन्दीश्वर उवाच।।
इत्येतद्वचनं श्रुत्वा व्यासो हर्षसमन्वितः ।।
उवाच पाण्डवान्प्रीत्या स्मृत्वा शिवपदांबुजम् ।। 3.37.५० ।।
व्यास उवाच ।।
श्रूयतां वचनं मेद्य पांडवा धर्मबुद्धयः ।।
सत्यमुक्तं तु कृष्णेन मया संसेव्यते शिवः ।।५१ ।।
भवद्भिः सेव्यतां प्रीत्या सुखं स्यादतुलं सदा ।।
सर्वदुःखं भवत्येव शिवाऽसेवात एव हि ।। ५२ ।।
।। नंदीश्वर उवाच ।।
अथ पंचसु तेष्वेव विचार्य्य शिवपूजने ।।
अर्जुनं योग्यमुच्चार्य व्यासो मुनिवरस्तथा ।। ५३ ।।
तपःस्थानं विचार्य्यैवं ततस्स मुनिसत्तमः ।।
पाण्डवान्धर्मसन्निष्ठान्पुनरेवाब्रवीदिदम् ।। ५४ ।।
।। व्यास उवाच ।।
श्रूयताम्पाण्डवास्सर्वे कथयामि हितं सदा ।।
शिवं सर्वं परं दृष्ट्वा परं ब्रह्म सताङ्गतिम् ।।५५।।
ब्रह्मादित्रिपरार्द्धान्तं यत्किंचिद्दृश्यते जगत् ।।
तत्सर्वं शिवरूपं च पूज्यन्ध्येयं च तत्पुनः ।। ५६ ।।
सर्वेषां चैव सेष्योसौ शङ्करस्सर्वदुःखहा ।।
शिवः स्वल्पेन कालेन संप्रसीदति भक्तितः ।।५७।।
सुप्रसन्नो महेशो हि भक्तेभ्यः सकलप्रदः ।।
भुक्तिं मुक्तिमिहामुत्र यच्छतीति सुनिश्चितम् ।। ५८ ।।
तस्मात्सेव्यस्सदा शम्भुर्भुक्तिमुक्तिफलेप्सुभिः ।।
पुरुषश्शङ्करः साक्षाद्दुष्टहन्ता सतांगतिः ।।५९।।
परन्तु प्रथमं शक्रविद्यां दृढमना जपेत् ।।
क्षत्रियस्य पराख्यस्य चेदमेव समाहितम् ।।3.37.६०।।

अतोर्जुनश्च प्रथमं शक्रविद्यां जपेद्दृढः ।।
करिष्यति परीक्षाम्प्राक् संतुष्टस्तद्भविष्यति ।। ६१ ।।
सुप्रसन्नश्च विघ्नानि संहरिष्यति सर्वदा ।।
पुनश्चैवं शिवस्यैव वरं मन्त्रं प्रदास्यति ।। ६२ ।।
नन्दीश्वर उवाच ।।
इत्युक्त्वार्जुनमाहूयोपेन्द्रविद्यामुपादिशत् ।।
स्नात्वा च प्राङ्मुखो भूत्वा जग्राहार्जुन उग्रधीः ।। ६३ ।।
पार्थिवस्य विधानं च तस्मै मुनिवरो ददौ ।।
प्रत्युवाच च तं व्यासो धनंजयमुदारधीः ।। ६४ ।।
व्यास उवाच ।।
इतो गच्छाधुना पार्थ इन्द्रकीले सुशोभने ।।
जाह्नव्याश्च समीपे वै स्थित्वा सम्यक् तपः कुरु ।। ६५ ।।
अदृश्या चैव विद्या स्यात्सदा ते हितकारिणी ।।
इत्याशिषन्ददौ तस्मै ततः प्रोवाच तान्मुनिः ।। ६६ ।।
धर्म्ममास्थाय सर्वे वै तिष्ठन्तु नृपसत्तमाः ।।
सिद्धिः स्यात्सर्वथा श्रेष्ठा नात्र कार्या विचारणा ।। ६७ ।।
नन्दीश्वर उवाच ।।
इति दत्त्वाशिषन्तेभ्यः पाण्डवेभ्यो मुनीश्वरः ।।
स्मृत्वा शिवपदाम्भोजं व्यासश्चान्तर्दधे क्षणात् ।। ६८ ।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां किरातावतारवर्णनप्रसंगेऽर्जुनाय व्यासोपदेशवर्णनं नाम सप्तत्रिंशोऽध्यायः ।।३७।।

नन्दीश्वर उवाच ।।
अर्जुनोपि तदा तत्र दीप्यमानो व्यदृश्यत ।।
मन्त्रेण शिवरूपेण तेजश्चातुलमावहत् ।। १ ।।
ते सर्वे चार्जुनन्दृष्ट्वा पाण्डवा निश्चयं गताः ।।
जयोऽस्माकं ध्रुवञ्जातन्तेजश्च विपुलं यतः ।।२ ।।
इदङ्कार्य्यन्त्वया साध्यन्नान्येन च कदाचन ।।
व्यासस्य वचनाद्भाति सफलं कुरु जीवितम्।। ३ ।।
इति प्रोच्यार्जुनन्ते वै विरहौत्सुक्यकातराः ।।
अनिच्छन्तोपि तत्रैव प्रेषयामासुरादरात्।। ४ ।।
द्रौपदी दुःखसंयुक्ता नेत्राश्रूणि निरुध्य च ।।
प्रेषयन्ती शुभं वाक्यन्तदोवाच पतिव्रता।।५।।
द्रौपद्युवाच ।।
व्यासोपदिष्टं यद्राजंस्त्वया कार्यं प्रयत्नतः ।।
शुभप्रदोऽस्तु ते पन्थाश्शंकरश्शंकरोस्तु वै ।।६।।
ते सर्वे चावसंस्तत्र विसृज्यार्जुनमादरात् ।।
अत्यन्तदुःखमापन्ना मिलित्वा पञ्च एव च ।।७।।
स्थितास्तत्र वदन्ति स्म श्रूयतामृषिसत्तम।।
दुःखेपि प्रियसंगो वै न दुःखाय प्रजायते।।८।।
वियोगे द्विगुणन्तस्य दुःखम्भवति नित्यशः ।।।
तत्र धैर्य्यधरस्यापि कथन्धैर्य्यम्भवेदिह ।। ९।।
नन्दीश्वर उवाच ।।
कुर्वतस्त्वेव तदा दुःखम्पाण्डवेषु मुनीश्वरः ।।
कृपासिंधुश्च स व्यास ऋषिवर्य्यस्समागत ।।3.38.१०।।
तन्तदा पाण्डवास्ते वै नत्वा सम्पूज्य चादरात् ।।
दत्त्वासनं हि दुःखाढ्याः करौ बद्ध्वा वचोऽब्रुवन् ।। ११ ।।
पाण्डवा ऊचुः ।।
श्रूयतामृषभश्रेष्ठ दुःखदग्धा वयम्प्रभो ।।
दर्शनन्तेऽद्य सम्प्राप्य ह्यानन्दं प्राप्नुमो मुने ।।१२।।
कियत्कालं वसात्रैव दुःखनाशाय नः प्रभो ।।
दर्शनात्तव विप्रर्षेस्सर्वं दुःखं विलीयते ।।१३।।
नन्दीश्वर उवाच।।
इत्युक्तस्स ऋषिश्रेष्ठो न्यवसत्तत्सुखाय वै ।।
कथाभिर्विविधाभिश्च तद्दुःखं नोदयंस्तदा ।। १४ ।।

वार्तायां क्रियमाणायान्तेन व्यासेन सन्मुने ।।
सुप्रणम्य विनीतात्मा धर्मराजोऽब्रवीदिदम् ।।१५।।
धर्मराज उवाच ।।
शृणु त्वं हि ऋषिश्रेष्ठ दुःखशान्तिर्मता मम ।।
पृच्छामि त्वां महाप्राज्ञ कथनीयन्त्वया प्रभो।।१६।।
ईदृशं चैव दुःखं च पुरा प्राप्तश्च कश्चन।।
वयमेव परं दुःखं प्राप्ता वै नैव कश्चन।।१७।।
व्यास उवाच ।।
राज्ञस्तु नलनाम्नो वै निषधाधिपतेः पुरा ।।
भवद्दुःखाधिकं दुःखं जातन्तस्य महात्मनः ।।१८।।
हरिश्चन्द्रस्य नृपतेर्जातं दुःखम्महत्तरम् ।।
अकथ्यन्तद्विशेषेण परशोकावहन्तथा ।। १९ ।।
दुःखम्तथैव विज्ञेयं रामस्याप्यथ पाण्डव ।।
यच्छ्रुत्वा स्त्रीनराणां च भवेन्मोहो महत्तरः ।। ३.३८.२० ।।
तस्माद्वर्णयितुन्नैव शक्यते हि मया पुनः ।।
शरीरं दुःखराशिं च मत्वा त्याज्यन्त्वयाधुना ।। २१ ।।
येनेदञ्च धृतन्तेन व्याप्तमेव न संशयः ।।
प्रथमम्मातृगर्भे वै जन्म दुःखस्य कारणम् ।।२२।।
कौमारेऽपि महादुःखं बाललीलानुसारि यत् ।।
ततोपि यौवने कामान्भुन्जानो दुःखरूपिणः ।।२३।।
गतागतैर्दिनानां हि कार्यभारैरनेकशः ।।
आयुश्च क्षीयते नित्यं न जानाति ह तत्पुनः ।।२४।।
अन्ते च मरणं चैव महादुःखमतः परम् ।।
नानानरकपीडाश्च भुज्यंतेज्ञैर्नरैस्सदा ।।२५।।
तस्मादिदमसत्यं च त्वन्तु सत्यं समाचर ।।
येनैव तुष्यते शम्भुस्तथा कार्यं नरेण च ।।२६।।
नन्दीश्वर उवाच ।।
एवं विविधवार्ताभिः कालनिर्यापणन्तदा ।।
चक्रुस्ते भ्रातरः सर्वे मनोरथपथैः पुनः ।।२७।।
अर्जुनोपि स्वयं गच्छन्दुर्गाद्रिषु दृढव्रतः ।।
यक्षं लब्ध्वा च तेनैव दस्यून्निघ्नन्ननेकशः ।।२८।।
मनसा हर्षसंयुक्तो जगामाचलमुत्तमम् ।।
तत्र गत्वा च गंगायास्समीपं सुन्दरं स्थलम् ।।२९।।

अशोककाननं यत्र तिष्ठति स्वर्ग उत्तमः ।।
तत्र तस्थौ स्वयं स्नात्वा नत्वा च गुरुमुत्तमम् ।। 3.38.३० ।।
यथोपदिष्टं वेषादि तथा चैवाकरोत्स्वयम् ।।
इन्द्रियाण्यपकृष्यादौ मनसा संस्थितोऽभवत् ।।३१।।
पुनश्च पार्थिवं कृत्वा सुन्दरं समसूत्रकम् ।।
तदग्रे प्रणिदध्यौ स तेजोराशिमनुत्तमम् ।।३२।।
त्रिकालं चैव सुस्नातः पूजनं विविधं तदा ।।
चकारोपासनन्तत्र हरस्य च पुनः पुनः ।।३३।।
तस्यैव शिरसस्तेजो निस्सृतन्तच्चरास्तदा ।।
दृष्ट्वा भयं समापन्नाः प्रविष्टश्च कदा ह्ययम्।।३४।।
पुनस्ते च विचार्यैवं कथनीयं बिडौजसे।।
इत्युक्त्वा तु गतास्ते वै शक्रस्यान्तिकमञ्जसा ।। ३५ ।।
चरा ऊचुः ।।
देवो वाऽथ ऋषिश्चैव सूर्यो वाथ विभावसुः ।।
तपश्चरति देवेश न जानीमो वने च तम् ।। ३६ ।।
तस्यैव तेजसा दग्धा आगतास्तव सन्निधौ ।।
निवेदितञ्चरित्रं तत्क्रियतामुचितन्तु यत् ।। ३७ ।।
नन्दीश्वर उवाच।।
इत्युक्तस्तैश्चरैस्सर्वं ज्ञात्वा पुत्रचिकीर्षितम् ।।
सगोत्रपान्विसृज्यैव तत्र गन्तुं मनो दधे ।। ३८ ।।
स वृद्धब्राह्मणो भूत्वा ब्रह्मचारी शचीपतिः ।।
जगाम तत्र विप्रेन्द्र परीक्षार्थं हि तस्य वै ।।३९।।
तमागतन्तदा दृष्ट्वाकार्षीत्पूजाश्च पाण्डवः।।
स्थितोग्रे च स्तुतिं कृत्वा क्वायातोसि वदाधुना ।। 3.38.४० ।।
इत्युक्तस्तेन देवेशो धैर्य्यार्थन्तस्य प्रीतितः ।।
परीक्षागर्वितं वाक्यं पाण्डवन्तं ततोऽब्रवीत् ।। ४१।।
ब्राह्मण उवाच ।।
नवे वयसि वै तात किन्तपस्यसि साम्प्रतम् ।।
मुक्त्यर्थं वा जयार्थं किं सर्वथैतत्तपस्तव ।।४२।।
नन्दीश्वर उवाच।।
इति पृष्टस्तदा तेन सर्वं संवेदितम्पुनः ।।
तच्छ्रुत्वा स पुनर्वाक्यमुवाच ब्राह्मणस्तदा ।।४३।
ब्राह्मण उवाच ।।

युक्तं न क्रियते वीर सुखं प्राप्तुं च यत्तपः ।।
क्षात्रधर्मेण क्रियते मुक्त्यर्थं कुरुसत्तम ।।४४।।
इन्द्रस्तु सुखदाता वै मुक्तिदाता भवेन्न हि ।।
तस्मात्त्वं सर्वथा श्रेष्ठ कर्तुमर्हसि सत्तपः।।
नन्दीश्वर उवाच।।
इदन्तद्वचनं श्रुत्वा क्रोधं चक्रेऽर्जुनस्तदा।।
प्रत्युवाच विनीतात्मा तदनादृत्य सुव्रतः।४६।।
अर्जुन उवाच ।।
राज्यार्थं न च मुक्त्यर्थ किमर्थं भाषसे त्विदम् ।।
व्यासस्य वचनेनैव क्रियते तप ईदृशम् ।।४७।।
इतो गच्छ ब्रह्मचारिन्मा पातयितुमिच्छसि ।।
प्रयोजनं किमत्रास्ति तव वै ब्रह्मचारिणः।।४८।।
नन्दीश्वर उवाच।।
इत्युक्तः स प्रसन्नोभूत्सुन्दरं रूपमद्भुतम् ।।
स्वोपस्करणसंयुक्तं दर्शयामास वै निजम्।।४९।।
शक्ररूपन्तदा दृष्ट्वा लज्जितश्चार्जुनस्तदा।।
स इन्द्रस्तं समाश्वास्य पुनरेव वचोब्रवीत् ।। ३.३८.५० ।।
इंद्र उवाच ।।
वरं वृणीष्व हे तात धनंजय महामते ।।
यदिच्छसि मनोभीष्टन्नादेयं विद्यते तव ।। ५१ ।।
तच्छ्रुत्वा शक्रवचनम्प्रत्युवाचार्जुनस्तदा ।।
विजयन्देहि मे तात शत्रुक्लिष्टस्य सर्वथा ।। ५२ ।।
शक्र उवाच ।।
बलिष्ठाश्शत्रवस्ते च दुर्योधनपुरःसराः ।।
द्रोणो भीमश्च कर्णश्च सर्वे ते दुर्जया ध्रुवम् ।। ५३ ।।
अश्वत्थामा द्रोणपुत्रो रौद्रोंशो दुर्जयोऽति सः ।।
मया साध्या भवेयुस्ते सर्वथा स्वहितं शृणु ।।५४।।
एतद्वीर जपं कर्तुं न शक्तः कश्चनाधुना ।।
वर्तते हि शिवोवर्यस्तस्माच्छम्भोर्जयोऽ धुना ।। ५५ ।।
शंकरः सर्वलोकेशश्चराचरपतिः स्वराट् ।।
सर्वं कर्तुं समर्थोस्ति भुक्तिमुक्तिफलप्रदः ।।५६।।
अहं मन्ये च ब्रह्माद्या विष्णुः सर्ववरप्रदः ।।
अन्ये जिगीषवो ये च ते सर्वे शिवपूजकाः।।५७।।

अद्यप्रभृति तन्मन्त्रं हित्वा भक्त्या शिवं भज ।।
पार्थिवेन विधानेन ध्यानेनैव शिवस्य च ।।५८।।
उपचारैरनेकैश्च सर्वभावेन भारत ।।
सिद्धिः स्यादचला तेद्य नात्र कार्या विचारणा।।५९।।
नन्दीश्वर उवाच ।।
इत्युक्त्वा च चरान्सर्वान्समाहूयाब्रवीदिदम् ।।
सावधानेन वै स्थेयमेतत्संरक्षणे सदा ।। ३.३८.६० ।।
प्रबोध्य स्वचरानिन्द्रोऽर्जुनसंरक्षणादिकम् ।।
वात्सल्यपूर्णहृदयः पुनरूचे कपिध्वजम् ।।६१।।
इन्द्र उवाच।।
राज्यं त्वया प्रमादाद्वै न कर्तव्यं कदाचन ।।
श्रेयसे भद्र विद्येयं भवेत्तव परन्तप।।६२।।
धैर्यं धार्यं साधकेन सर्वथा रक्षकः शिवः।।
संपत्तीश्च फलन्तुल्यं दास्यते नात्र संशयः ।। ६३ ।।
नन्दीश्वर उवाच ।।
इति दत्त्वा वरन्तस्य भारतस्य सुरेश्वरः ।।
स्मरञ्छिवपदाम्भोजञ्जगाम भवनं स्वकम् ।। ६४ ।।
अर्जुनोपि महावीरस्सुप्रणम्य सुरेश्वरम् ।।
तपस्तेपे संयतात्मा शिवमुद्दिश्य तद्विधम् ।।६५।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां किरातावतारवर्णनप्रसंगेऽर्जुनतपोवर्णनं नामाष्टत्रिंशोऽध्यायः ।।३८।।

नन्दीश्वर उवाच।।
स्नानं स विधिवत्कृत्वा न्यासादि विधिवत्तथा ।।
ध्यानं शिवस्य सद्भक्त्या व्यासोक्तं यत्तथाऽकरोत् ।।१।।
एकपादतलेनैव तिष्ठन्मुनिवरो यथा ।।
सूर्य्ये दृष्टिं निबध्यैकां मंत्रमावर्तयन्स्थितः ।।२।।
तपस्तेपेति संप्रीत्या संस्मरन्मनसा शिवम् ।।
पंचाक्षरं मनुं शंभोर्जपन्सर्वो त्तमोत्तमम् ।। ३ ।।
तपसस्तेज एवासीद्यथा देवा विसिस्मियुः ।।
पुनश्चैव शिवं याताः प्रत्यूचुस्ते समाहिताः ।। ४ ।।
देवा ऊचुः ।।
नरेणैकेन सर्वेश त्वदर्थे तप आहितम्।।
यदिच्छति नरस्सोयं किन्न यच्छति तत्प्रभो ।।५।।
नन्दीश्वर उवाच ।।
इत्युक्त्वा तु स्तुतिं चकुर्विविधान्ते तदा सुराः ।।
तत्पादयोर्दृशः कृत्वा तत्र तस्थुः स्थिराधयः ।।६।।
शिवस्तु तद्वचः श्रुत्वा महाप्रभुरुदारघीः ।।
सुविहस्य प्रसन्नात्मा सुरान्वचनमब्रवीत् ।।७।।
शिव उवाच ।।
स्वस्थानं गच्छत सुराः सर्वे सत्यन्न संशयः
सर्वथाहं करिष्यामि कार्यं वो नात्र संशय ।।८।।
नंदीश्वर उवाच ।।
तच्छ्रुत्वा शंभुवचनन्निश्चयं परमं गताः ।।
परावृत्य गताः सर्वे स्वस्वथानं ते हि निर्जराः ।। ९ ।।
एतस्मिन्नंतरे दैत्यो मूकनामागतस्तदा ।।
सौकरं रूपमास्थाय प्रेषितश्च दुरात्मना ।। ३.३९.१० ।।
दुर्योधनेन विप्रेंद्र मायिना चार्जुनं तदा ।।
यत्रार्जुनस्थितश्चासीत्तेन मार्गेण वै तदा ।।११।।
शृङ्गाणि पर्वतस्यैव च्छिन्दन्वृक्षाननेकशः ।।
शब्दं च विविधं कुर्व न्नतिवेगेन संयुतः ।। १२ ।।
अजुनोपि च तं दृष्ट्वा मूकनामासुरं तदा ।।
स्मृत्वा शिवपदांभोजं विचारे तत्परोऽभवत् ।। १३ ।।
अर्जुन उवाच ।।
कोयं वा कुत आयाति क्रूरकर्मा च दृश्यते ।।

ममानिष्टं ध्रुवं कर्तुं समागच्छत्यसंशयम् ।। १४ ।।
ममैवं मन आयाति शत्रुरेव न संशयः ।।
मया विनिहताः पूर्वमनेके दैत्यदानवाः ।। १५ ।।
तदीयः कश्चिदायाति वैरं साधयितुम्पुनः ।।
अथवा च सखा कश्चिद्दुर्योधनहितावहः ।। १६ ।।
यस्मिन्दृष्टे प्रसीदेत्स्वं मनः स हितकृद्ध्रुवम्।।
यस्मिन्दृष्टे तदेव स्यादाकुलं शत्रुरेव सः ।। १७ ।।
आचारः कुलमाख्याति वपुराख्याति भोजनम् ।।
वचनं श्रुतमाख्याति स्नेहमाख्याति लोचनम् ।। १८ ।।
आकारेण तथा गत्या चेष्टया भाषितैरपि ।।
नेत्रवक्त्रविकाराभ्यां ज्ञायतेऽन्तर्हितं मनः ।। १९ ।।
उज्ज्वलं सरसञ्चैव वक्रमारक्त कन्तथा ।।
नेत्रं चतुर्विधं प्रोक्तं तस्य भावं पृथग्बुधाः ।। ३.३९.२० ।।
उज्ज्वलं मित्रसंयोगे सरसम्पुत्रदर्शने ।।
वक्रं च कामिनीयोगे आरक्तं शत्रुदर्शने ।। २१ ।।
अस्मिन्मम तु सर्वाणि कलुषानीन्द्रियाणि च ।।
अयं शत्रुर्भवेदेव मारणीयो न संशयः ।। २२ ।।
गुरोश्च वचनं मेद्य वर्तते दुःखदस्त्वया ।।
हन्तव्यः सर्वथा राजन्नात्र कार्या विचारणा ।। २३ ।।
एतदर्थं त्वायुधानि मम चैव न संशयः ।।
विचार्य्येति च तत्रैव बाणं संस्थाय संस्थितः ।।२४।।
एतस्मिन्नन्तरे तत्र रक्षार्थं ह्यर्जुनस्य वै ।।
तद्भक्तेश्च परीक्षार्थं शंकरो भक्तवत्सलः।।२५।।
विदग्धभिल्लरूपं हि गणैः सार्धं महाद्भुतम् ।।
तस्य दैत्यस्य नाशार्थं द्रुतं कृत्वा समागतः ।। २६ ।।
बद्धकच्छश्च वस्त्रीभिर्वद्धेशानध्वजस्तदा ।।
शरीरे श्वेतरेखाश्च धनुर्बाणयुतः स्वयम् ।। २७ ।।
बाणानान्तूणकं पृष्ठे धृत्वा वै स जगाम ह ।।
गणश्चैव तथा जातो भिल्लराजोऽभवच्छिवः ।।२८।।
शब्दांश्च विविधान्कृत्वा निर्ययौ वाहिनीपतिः ।।
सूकरस्य ससाराथ शब्दश्च प्रदिशो दश ।।२९।।
वनेचरेण शब्देन व्याकुलश्चार्जुनस्तदा ।।
पर्वताद्याश्च तैश्शब्दैस्ते सर्वे व्याकुलास्तदा ।।३.३९.३०।।

अहो किन्नु भवेदेष शिवः शुभकरस्त्विह।।
मया चैव श्रुतम्पूर्वं कृष्णेन कथितम्पुनः ।।३१।।
व्यासेन कथितं चैवं स्मृत्वा देवै स्तथा पुनः ।।
शिवः शुभकरः प्रोक्तः शिवः सुखकरस्तथा ।।३२।।
मुक्तिदश्च स्वयं प्रोक्तो मुक्तिदानान्न संशयः ।।
तन्नामस्मरणात्पुंसां कल्याणं जायते धुवम् ।। ३३ ।।
भजतां सर्वभावेन दुःखं स्वप्नेऽपि नो भवेत्।।
यदा कदाचिज्जायेत तदा कर्मसमुद्भवम् ।। ३४ ।।
तदेतद्बह्वपि ज्ञेयं नूनमल्पं न संशयः ।।
प्रारब्धस्याथ वा दोषो नूनं ज्ञेयो विशेषतः ।। ३५ ।।
अथ वा बहु चाल्पं हि भोग्यं निस्तीर्य शंकरः ।।
कदाचिदिच्छया तस्य दूरीकुर्य्यान्न संशयः ।। ।।३६।।
विषं चैवामृतं कुर्यादमृतं विषमेव वा ।।
यदिच्छति करोत्येव समर्थः किन्निषिध्यते ।।३७।।
इत्थं विचार्य्यमाणेऽपि भक्तैरन्यैः पुरातनैः ।।
भाविभिश्च सदा भक्तैरिहानीय मनः स्थिरम् ।।३८।।
लक्ष्मीर्गच्छेच्चावतिष्ठेन्मरणं निकटे पुरः ।।
निन्दां वाथ प्रकुर्वन्तु स्तुतिं वा दुःखसंक्षयम् ।। ३९ ।।
जयते पुण्यपापाभ्यां शंकरस्सुखदः सदा ।।
कदाचिच्च परीक्षार्थं दुःखं यच्छति वै शिवः ।।३.३९.४०।।
अंते च सुखदः प्रोक्तो दयालुत्वान्न संशयः ।।
यथा चैव सुवर्णं च शोधि तं शुद्धतां व्रजेत् ।। ४१ ।।
एवं चैवं मया पूर्वं श्रुतं मुनिमुखात्तथा।।
अतस्तद्भजनेनैव लप्स्येऽहं सुखमुत्तमम् ।। ४२ ।।
इत्येवन्तु विचारं स करोति यावदेव हि ।।
तावच्च सूकरः प्राप्तो बाणसंमोचनावधिः ।।४३।।
शिवोपि पृष्ठतो लग्नो ह्यायातः शूकरस्य हि ।।
तयोर्मध्ये तदा सोयं दृश्यते शृंगमद्भुतम् ।।४४।।
तस्य प्रोक्तं च माहात्म्यं शिवः शीघ्रतरं गतः।।
अर्जुनस्य च रक्षार्थं शंकरो भक्तव त्सलः ।।४५।।
एतस्मिन्समये ताभ्यां कृतं बाणविमोचनम् ।।
शिवबाणस्तु पुच्छे वै ह्यर्जुनस्य मुखे तथा।।४६।।
शिवस्य पुच्छतो गत्वा मुखान्निस्सृत्य शीघ्रतः ।।

भूमौ विलीनः संयातस्तस्य वै पुच्छतो गतः।।४७।।
पपात पार्श्वतश्चैव बाणश्चैवार्जुनस्य च।।
सूकरस्तत्क्षणं दैत्यो मृतो भूमौ पपात ह ।।४८।।
देवा हर्षं परम्प्रापुः पुष्पवृष्टिं च चक्रिरे ।।
जयपूर्व स्तुतिकराः प्रणम्य च पुनःपुनः।।४९।।
शिवस्तुष्टमना आसीदर्जुनः सुखमागतः।।
दैत्यस्य च तदा दृष्ट्वा क्रररूपं च तौ तदा।।३.३९.५०।।
अर्जुनस्तु विशेषेण सुखिना प्राह चेतसा।।
अहो दैत्यवरश्चायं रूपं तु परमाद्भुतम् ।।५१।।
कृत्वागतो मद्वधार्थं शिवेनाहं सुरक्षितः ।।
ईश्वरेण ममाद्यैव बुद्धिर्दत्ता न संशयः।।५२।।
विचार्य्येत्यर्जुनस्तत्र जगौ शिवशिवेति च ।।
प्रणनाम शिवं भूयस्तुष्टाव च पुनः पुनः ।। ५३ ।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां किरातावतारवर्णने
मूकदैत्यवधोनामैकोनचत्वारिंशोऽध्यायः ।।३९।।

नन्दीश्वर उवाच ।।
सनत्कुमार सर्वज्ञ शृणु लीलाम्परात्मनः ।।
भक्तवात्सल्यसंयुक्तां तद्दृढत्वविदर्भिताम् ।।१।।
शिवोप्यथ स्वभृत्यं वै प्रेषयामास स द्रुतम् ।।
बाणार्थे च तदा तत्रार्जुनोपि समगात्ततः ।। २ ।।
एकस्मिन् समये प्राप्तौ बाणार्थं तद्गणार्जुनौ ।।
अर्जुनस्तं पराभत्स्र्य स्वबाणं चाग्रहीत्तदा।।३।।
गण प्रोवाच तं तत्र किमर्थं गृह्यते शरः ।।
बाणश्चैवास्मदीयो वै मुच्यतां ऋषिसत्तम ।। ४ ।।
इत्युक्तस्तेन भिल्लस्य गणेन मुनिसत्तमः।।
सोर्जुनः शंकरं स्मृत्वा वचनं च तमब्रवीत् ।। ५ ।।
अर्जुन उवाच ।।
अज्ञात्वा किंच वदसि मूर्खोसि त्वं वनेचर ।।
बाणश्च मोचितो मेऽद्य त्वदीयश्च कथं पुनः ।।६।।
रेखारूपं च पिच्छानि मन्नामांकित एव च ।।
त्वदीयश्च कथं जातः स्वभावो दुस्त्यजस्तव ।।७।।
।। नन्दीश्वर उवाच ।।
इत्येवन्तद्वचः श्रुत्वा विहस्य स गणेश्वरः ।।
अर्जुनं ऋषिरूपं तं भिल्लो वाक्यमुपाददे ।। ८ ।।
तापस श्रूयतां रे त्वं न तपः क्रियते त्वया ।।
वेषतश्च तपस्वी त्वं न यथार्थं छलायते ।। ९ ।।
तपस्वी च कथं मिथ्या भाषते कुरुते नरः ।।
नैकाकिनं च मां त्वं च जानीहि वाहिनीपतिम् ।। 3.40.१० ।।
बहुभिर्वनभिल्लैश्च युक्तः स्वामी स आसत ।।
समर्थस्सर्वथा कर्तुं विग्रहानुग्रहौ पुनः ।। ११ ।।
वर्तते तस्य वाणीयं यो नीतश्च त्वयाधुना ।।
अयं बाणश्च ते पार्श्वे न स्थास्यति कदाचन ।। १२ ।।
तपःफलं कथं त्वं च हातुमिच्छसि तापस ।।
चौर्य्याच्छलार्द्यमानाच्च विस्मयात्सत्य भञ्जनात् ।।१३।।
तपसा क्षीयते सत्यमेतदेव मया श्रुतम् ।।
तस्माच्च तपसस्तेद्य भविष्यति फलं कुतः ।।१४।।
तस्माच्च मुच्यते बाणात्कृतघ्नस्त्वं भविष्यसि ।।
ममैव स्वामिनो बाणस्तवार्थे मोचितो ध्रुवम् ।। १५ ।।

शत्रुश्च मारितस्तेन पुनर्बाणश्च रक्षितः ।।
अत्यन्तं च कृतघ्नोसि तपोशुभकरस्तथा ।। १६ ।।
सत्यं न भाषसे त्वं च किमतः सिद्धिमिच्छसि ।।
प्रयोजनं चेद्बाणेन स्वामी च याच्यतां मम ।। १७ ।।
ईदृशांश्च बहून्बाणांस्तदा दातुं क्षमः स्वयम् ।।
राजा च वर्तते मेऽद्य किं त्वेवं याच्यते त्वया।।१८।।
उपकारं परित्यज्य ह्यपकारं समीहसे।।
नैतद्युक्तं त्वयाद्यैव क्रियते त्यज चापलम् ।। १९ ।।
नन्दीश्वर उवाच ।।
इत्येवं वचनन्तस्य श्रुत्वा पार्थोर्जुनस्तदा ।।
क्रोधं कृत्वा शिवं स्मृत्वा मितं वाक्यमथाब्रवीत्।। ३.४०.२० ।।
।। अर्जुन उवाच ।।
शृणु भिल्ल प्रवक्ष्यामि न सत्यं तव भाषणम् ।।
यथा जातिस्तथा त्वां च जानामि हि वनेचर ।। २१ ।।
अहं राजा भवांश्चौरः कथं युद्धप्रयुक्तता ।।
युद्धं मे सबलैः कार्यं नाधमैर्हि कदाचन ।। २२ ।।
तस्मात्ते च तथा स्वामी भविष्यति भवादृशः ।।
दातारश्च वयं प्रोक्ताश्चौरा यूयं वनेचराः ।। २३ ।।
कथं याच्यो मया भिल्लराज एवं च साम्प्रतम् ।।
त्वमेव याचसे नैव बाणं मां किं वनेचरः ।। २४ ।।
ददामि ते तथा बाणान्सन्ति मे बहवो ध्रुवम् ।।
राजा च ग्रहणं चैव न दास्यति तथा भवेत् ।। २५ ।।
किम्पुनश्च तथा बाणान्प्रयच्छामि वनेचर ।।
यदि मे या चिकीर्षा स्यात्कथं नागम्यतेऽधुना ।। २६ ।।
यथागच्छतु ते भर्ता किमर्थं भाषतेऽधुना ।।
आगत्य च मया सार्द्धं जित्वा युद्धे च माम्पुनः ।। २७ ।।
नीत्वा बाणमिमं भिल्ल स्वामी ते वाहिनीपतिः।।
निजालयं सुखं यातु विलंबः क्रियते कथम्।।२८।।
नन्दीश्वर उवाच।।
महेश्वरकृपाप्राप्तसद्बलस्यार्जुनस्य हि।।
इत्येतद्वचनं श्रुत्वा भिल्लो वाक्यमथाब्रवीत्।।२९।।
भिल्ल उवाच।।
अज्ञोसि त्वं ऋषिर्नासि मरणं त्वीहसे कथम्।।

देहि बाणं सुखन्तिष्ठ त्वन्यथा क्लेशभाग्भवेः ।।3.40.३०।।
नन्दीश्वर उवाच ।।
इत्युक्तस्तेन भिल्लेन शिवसच्छक्तिशोभिना ।।
गणेन पाण्डवस्तं च प्राह स्मृत्वा च शङ्करम् ।। ३१ ।।
अर्जुन उवाच।।
मद्वाक्यन्तत्त्वतो भिल्ल शृणु त्वं च वनेचर।।
आगमिष्यति ते स्वामी दर्शयिष्ये फलन्तदा ।।३२।।
न शोभते त्वया युद्धं करिष्ये स्वामिना तव।।
उपहासकरं ज्ञेयं युद्धं सिंहसृगालयोः ।।३३।।
श्रुतं च मद्वचस्तेऽद्य द्रक्ष्यसि त्वं महाबलम् ।।
गच्छ स्वस्वामिनं भिल्ल यथेच्छसि तथा कुरु ।। ३४ ।।
नन्दीश्वर उवाच ।।
इत्युक्तस्तु गतस्तत्र भिल्लः पार्थेन वै मुने ।।
शिवावतारो यत्रास्ते किरातो वाहिनीपतिः ।।३५।।
अथार्जुनस्य वचनं भिल्लनाथाय विस्तरात्।।
सर्वं निवेदयामास तस्यै भिल्लपरात्मने ।।३६।।
स किरातेश्वरः श्रुत्वा तद्वचो हर्षमागतः।।
आजगाम स्वसैन्येन शंकरो भिल्लरूपधृक् ।। ३७ ।।
अर्जुनश्च तदा सेनां किरातस्य च पाण्डवः।।
दृष्ट्वा गृहीत्वा सशरन्धनुः सन्मुख आययौ ।।३८।।
अथो किरातश्च पुनः प्रेषयामास तं चरम्।।
तन्मुखेन जगौ वाक्यम्भारताय महात्मने ।। ३९ ।।
किरात उवाच ।।
पश्य सैन्यं तपस्विस्त्वं मुञ्च बाणं व्रजाधुना ।।
मरणं स्वल्पकार्यार्थं कथमिच्छसि साम्प्रतम्।।3.40.४०।।
भ्रातरस्तव दुःखार्त्ताः कलत्रं च ततः परम् ।।
पृथिवी हस्ततस्तेद्य यास्यतीति मतिर्मम ।।४१।।
।। नन्दीश्वर उवाच ।।
इत्युक्तं परमेशेन पार्थदार्ढ्यपरीक्षया ।।
सर्वथार्जुनरक्षार्थं धृतरूपेण शंभुना ।। ४२ ।।
इत्युक्तस्तु तदागत्य सगणश्शंकरश्च तत् ।।
विस्तराद्वृत्तमखिलमर्जुनाय न्यवेदयत् ।।४३।।
तच्छ्रुत्वा तु पुनः प्राह प्रार्थस्तं दूतमागतम् ।।

वाहिनीपतये वाच्यम्विपरीतम्भविष्यति ।।४४।।
यद्यहं चैव ते बाणं यच्छामि च मदीयकम् ।।
कुलस्य दूषणं चाहं भविष्यामि न संशयः ।। ४५ ।।
भ्रातरश्चैव दुखार्ताः भवन्तु च तथा ध्रुवम् ।।
विद्याश्च निष्फलाः स्युस्तास्तस्मादागच्छ वै ध्रुवम् ।। ४६ ।।
सिंहश्चैव शृगालाद्वा भीतो नैव मया श्रुतः ।।
तथा वनेचराद्राजा न बिभेति कदाचन ।। ४७ ।।
नन्दीश्वर उवाच ।।
इत्युक्तस्तं पुनर्गत्वा स्वामिनं पाण्डवेन सः ।।
सर्वं निवेदयामास तदुक्तं हि विशेषतः ।। ४८ ।।
अथ सोपि किराताह्वो महादेवस्ससैन्यकः ।।
तच्छ्रुत्वा सैन्यसंयुक्तो ह्यर्जुनं चागमत्तदा ।।४९।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायाम किरातावतारवर्णने भिल्लार्जुनसंवादोनाम चत्वारिंशोऽध्यायः ।।४०।।

तमागतन्ततो दृष्ट्वा ध्यानं कृत्वा शिवस्य सः ।।
गत्वा तत्रार्जुनस्तेन युद्धं चक्रे सुदारुणम् ।।१।।
गणैश्च विविधैस्तीक्ष्णैरायुधैस्तं न्यपीडयत् ।।
तैस्तदा पीडितः पार्थः सस्मार स्वामिनं शिवम् ।।२।।
अर्जुनश्च तदा तेषां बाणावलिमथाच्छिनत् ।।
यदायुद्धं च तैः क्षिप्तं ततः शर्वं परामृशत् ।।३।।
पीडितास्ते गणास्तेन ययुश्चैव दिशो दश ।।
गणेशा वारितास्ते च नाजग्मुस्स्वामिनम्प्रति ।।४।।
शिवश्चैवार्जुनश्चैव युयुधाते परस्परम् ।।
नानाविधैश्चायुधैर्हि महाबलपराक्रमौ ।।५।।
शिवोऽपि मनसा नूनं दयां कृत्वार्जुनं ह्यगात् ।।
अर्जुनश्च दृढं तत्र प्रहारं कृतवांस्तदा ।। ६ ।।
आयुधानि शिवस्सो वै ह्यर्जुनस्याच्छिनत्तदा ।।
कवचानि च सर्वाणि शरीरं केवलं स्थितम्।। ७ ।।
तदार्जुनः शिवं स्मृत्वा मल्लयुद्धं चकार सः ।।
वाहिनीपतिना तेन भयात्क्लिष्टोपि धैर्यवान् ।।८।।
तद्युद्धेन मही सर्वा चकंपे ससमुद्रका ।।
देवा दुःखं समापन्नः किं भविष्यति वा पुनः ।।९।।
एतस्मिन्नंतरे देवः शिवो गगनमास्थितः ।।
युद्धं चकार तत्रस्थस्सोर्जुनश्च तथाऽकरोत्।।3.41.१०।।
उड्डीयोड्डीय तौ युद्धं चक्रतुर्देवपार्थिवौ।।
देवाश्च विस्मयं प्रापू रणं दृष्ट्वा तदाद्भुतम् ।।११।।
अथार्जुनोत्तरे ज्ञात्वा स्मृत्वा शिवपदांबुजम्।।
दधार पादयोस्तं वै तद्ध्यानादाप्तसद्बलः ।।१२।।
धृत्वा पादौ तदा तस्य भ्रामयामास सोर्जुनः ।।
विजहास महादेवो भक्तवत्सल ऊतिकृत् ।।१३।।
दातुं स्वदासतां तस्मै भक्तवश्यतया मुने ।।
शिवेनैव कृतं ह्येतच्चरितन्नान्यथा भवेत् ।।१४।।
पश्चाद्विहस्य तत्रैव शंकरो रूपम द्भुतम् ।।
दर्शयामास सहसा भक्तवश्यतया शुभम् ।। १५ ।।
यथोक्तं वेदशास्त्रेषु पुराणे पुरुषोत्तमम्।।
व्यासोपदिष्टं ध्यानाय तस्य यत्सर्वसिद्धिदम् ।। १६ ।।
तद्दृष्ट्वा सुंदरं रूपं ध्यानप्राप्तं शिवस्य तु ।।

बभूव विस्मितोतीव ह्यर्जुनो लज्जितः स्वयम् ।। १७ ।।
अहो शिवश्शिवस्सोय यो मे प्रभुतया वृतः ।।
त्रिलोकेशः स्वयं साक्षाद्धा कृतं किं मयाऽधुना ।। १८।।
प्रभोर्बलवती माया मायिनामपि मोहिनी ।।
किं कृतं रूपमाच्छाद्य प्रभुणा छलितो ह्यहम् ।। १९ ।।
धियेति संविचार्य्यैव साञ्जलिर्नतमस्तकः ।।
प्रणनाम प्रभुं प्रीत्या तदोवाच स खिन्नधीः ।।3.41.२०।।
अर्जुन उवाच ।। देवदेव महादेव करुणाकर शंकर।।
ममापराधः सर्वेश क्षन्तव्यश्च त्वया पुनः ।।२१।।
किं कृतं रूपमाच्छाद्य च्छलितोऽस्मि त्वयाधुना ।।
धिङ् मां समरकर्तारं स्वामिना भवता प्रभो।।२२।।
नन्दीश्वर उवाच।।
इत्येवं पाण्डवस्सोथ पश्चात्तापमवाप सः ।।
पादयोर्निपपाताशु शंकरस्य महाप्रभोः ।।२३।।
अथेश्वरः प्रसन्नात्मा प्रत्युवाचार्जुनं च तम् ।।
समाश्वास्येति बहुशो महेशो भक्तवत्सलः ।। २४ ।।
शंकर उवाच ।।
न खिद्य पार्थ भक्तोसि मम त्वं हि विशेषतः।।
परीक्षार्थं मया तेऽद्य कृतमेवं शुचञ्जहि ।। २५ ।।
नंदीश्वर उवाच ।।
इत्युक्त्वा तं स्वहस्ताभ्यामुत्थाप्य प्रभुरर्जुनम् ।।
विलज्जं कारयामास गणैश्च स्वामिनो गणैः ।। २६ ।।
पुनश्शिवोऽर्जुनम्प्राह पाण्डवं वीरसम्मतम् ।।
हर्षयन् सर्वथा प्रीत्या शंकरो भक्तवत्सलः ।। २७।।
शिव उवाच ।।
हे पार्थ पाण्डवश्रेष्ठ प्रसन्नोस्मि वरं वृणु ।।
प्रहारैस्ताडनैस्तेऽद्य पूजनम्मानितम्मया ।। २८ ।।
इच्छया च कृतं मेऽद्य नापराधस्तवाधुना ।।
नादेयं विद्यते तुभ्यं यदिच्छसि वृणीष्व तत्।।२९।।
ते शत्रुषु यशोराज्यस्थापनाय शुभं कृतम् ।।
एतद्दुःखं न कर्तव्यं वैक्लव्यं च त्यजाखिलम् ।।3.41.३०।।

नन्दीश्वर उवाच ।।
इत्युक्तस्त्वर्जुनस्तेन प्रभुणा शंकरेण सः।।

उवाच शंकरं भक्त्या सावधानतया स्थितः ।।३१।।
अर्जुन उवाच ।।
भक्तप्रियस्य शम्भोस्ते सुप्रभो किं समीहितम्।।
वर्णनीयं मया देव कृपालुस्त्वं सदाशिव ।। ३२ ।।
इत्युक्त्वा संस्तुतिं तस्य शंकरस्य महाप्रभोः ।।
चकार पाण्डवस्सोथ सद्भक्तिं वेदसंमताम् ।।३३।।
अर्जुन उवाच।।
नमस्ते देवदेवाय नमः कैलासवासिने ।।
सदाशिव नमस्तुभ्यं पञ्चवक्त्राय ते नमः ।।३४।।
कपर्दिने नमस्तुभ्यन्त्रिनेत्राय नमोऽस्तु ते।।
मनः प्रसन्नरूपाय सहस्रवदनाय च ।। ३५ ।।
नीलकंठ नमस्तेस्तु सद्योजाताय वै नमः ।।
वृषध्वज नमस्तेस्तु वामांगगिरिजाय च।।३६।।
दशदोष नमस्तुभ्यन्नमस्ते परमात्मने ।।
डमरुकपालहस्ताय नमस्ते मुण्डमालिने ।। ३७ ।।
शुद्धस्फटिकसंकाशशुद्धकर्पूरवर्ष्मणे ।।
पिनाकपाणये तुभ्यन्त्रिशूलवरधारिणे ।।३८।।
व्याघ्रचर्मोत्तरीयाय गजाम्बरविधारिणे ।।
नागांगाय नमस्तुभ्यं गंगाधर नमोस्तु ते।। ३९ ।।
सुपादाय नमस्तेऽस्तु आरक्तचरणाय च ।।
नन्द्यादिगणसेव्याय गणेशाय च ते नमः ।। 3.41.४० ।।
नमो गणेशरूपाय कार्तिकेयानुगाय च ।।
भक्तिदाय च भक्तानां मुक्तिदाय नमोनमः ।। ४१ ।।
अगुणाय नमस्तेस्तु सगुणाय नमोनमः ।।
अरूपाय सरूपाय सकलायाकलाय च ।। ४२ ।।
नमः किरातरूपाय मदनुग्रहकारिणे ।।
युद्धप्रियाय वीराणां नानालीलानुकारिणे ।। ४३ ।।
यत्किंचिद्दृश्यते रूपन्तत्तेजस्तावकं स्मृतम् ।।
चिद्रूपस्त्वं त्रिलोकेषु रमसेन्वयभेदतः ।। ४४ ।।
गुणानान्ते न संख्यास्ति यथा भूरजसामिह ।।
आकाशे तारकाणां हि कणानां वृष्ट्यपामपि।।४५।।
न ते गुणास्तु संख्यातुं वेदा वै सम्भवन्ति हि ।।
मन्दबुद्धिरहं नाथ वर्णयामि कथम्पुनः ।।४६।।

सोसि योसि नमस्तेऽस्तु कृपां कर्तुमिहार्हसि।।
दासोहं ते महेशान स्वामी त्वं मे महेश्वर।।४७।।
नन्दीश्वर उवाच ।।
इति श्रुत्वा वचस्तस्य पुनः प्रोवाच शंकर ।।
सुप्रसन्नतरो भूत्वा विहसन्प्रभुरर्जुनम् ।।४८।।
शंकर उवाच।।
वचसा किम्बहूक्तेन शृणुष्व वचनम्मम ।।
शीघ्रं वृणु वरम्पुत्र सर्वन्तच्च ददामि ते ।।४९।।
नन्दीश्वर उवाच।।
इत्युक्तश्चार्जुनस्तेन प्रणिपत्य सदाशिवम् ।।
साञ्जलिर्नतकः प्रेम्णा प्रोवाच गद्गदाक्षरम् ।। 3.41.५० ।।
अर्जुन उवाच ।।
किं ब्रूयां त्वं च सर्वेषामन्तर्यामितया स्थितः ।।
तथापि वर्णितं मेऽद्य श्रूयतां च त्वया विभो ।।५१।।
शत्रूणां संकटं यच्च तद्गतन्दर्शनात्तव।।
ऐहिकीं च परां सिद्धिम्प्राप्नुयां वै तथा कुरु ।। ५२ ।।
नन्दीश्वर उवाच ।।
इत्युक्त्वा तं नमस्कृत्य शंकरम्भक्तवत्सलम् ।।
नतस्कन्धोऽर्जुनस्तत्र बद्धाञ्जलिरुपस्थितः ।। ५३ ।।
शिवोपि च तथाभूतञ्ज्ञात्वा पाण्डवमर्जुनम् ।।
निजभक्तवरं स्वामी महातुष्टो बभूव ह ।। ५४ ।।
अस्त्रम्पाशुपतं स्वीयन्दुर्जयं सर्वदाखिलैः ।।
ददौ तस्मै महेशानो वचनश्चेदमब्रवीत् ।। ५५ ।।
शिव उवाच ।।
स्वं महास्त्रम्मया दत्तन्दुर्जयस्त्वम्भविष्यति ।।
अनेन सर्वशत्रूणां जयकृत्यमवाप्नुहि ।। ५६ ।।
कृष्णं च कथयिष्यामि साहाय्यन्ते करिष्यति ।।
स वै ममात्मभूतश्च मद्भक्तः कार्य्यकारकः ।। ५७ ।।
मत्प्रभावान्भारत त्वं राज्यन्निकण्टकं कुरु ।।
धर्म्यान्नानाविधान्भ्रात्रा कारय त्वं च सर्वदा ।। ५८ ।।
नन्दीश्वर उवाच ।।
इत्युक्त्वा निजहस्तं च धृत्वा शिरसि तस्य सः ।।
पूजितो ह्यर्जुनेनाशु शंकरोन्तरधीयत ।। ५९ ।।

अथार्जुनः प्रसन्नात्मा प्राप्यास्त्रं च वरं प्रभोः ।।
जगाम स्वाश्रमे मुख्यं स्मरन्भक्त्या गुरुं शिवम् ।। 3.41.६० ।।
सर्व्वे ते भ्रातरः प्रीतास्तन्वः प्राणमिवागतम् ।।
मिलित्वा तं सुखं प्रापुर्द्रौपदी चाति सुव्रता ।। ६१ ।।
शिवं परं च सन्तुष्टम्पाण्डवाः सर्व एव हि ।।
नातृप्यन्सर्ववृत्तान्तं श्रुत्वा हर्षमुपागताः ।। ६२ ।।
आश्रमे पुष्पवृष्टिश्च चन्दनेन समन्विता ।।
पपात सुकरार्थं च तेषाञ्चैव महात्मनाम् ।।६३।।
धन्यं च शंकरं चैव नमस्कृत्य शिवम्मुदा ।।
अवधिं चागतं ज्ञात्वा जयश्चैव भविष्यति ।। ६४ ।।
एतस्मिन्नन्तरे कृष्णश्श्रुत्वार्जुनमथागतम्।।
मेलनाय समायातश्श्रुत्वा सुखमुपागतः ।।६५।।
अतश्चैव मयाख्यातः शंकरः सर्वदुःखहा ।।
स सेव्यते मया नित्यं भवद्भिरपि सेव्यताम् ।। ६६ ।।
इत्युक्तस्ते किराताह्वोवतारश्शंकस्य वै ।।
तं श्रुत्वा श्रावयन्वापि सर्वान्कामानवाप्नुयात्।।६७।।
इत्यष्टाशीत्यवताराः (८८)
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां किरातेश्वरावतारवर्णनं नामैकचत्वारिंशोऽध्यायः ।। ४१।।

नन्दीश्वर उवाच ।।
अवताराञ्छृणु विभोर्द्वादशप्रमितान्परान् ।।
ज्योतिर्लिङ्गस्वरूपान्वै नानोति कारकान्मुने ।। १ ।।
सौराष्ट्रे सोमनाथश्च श्रीशैले मल्लिकार्जुनः ।।
उज्जयिन्यां महाकाल ओंकारे चामरेश्वरः ।।२।।
केदारो हिमव त्पृष्टे डाकिन्याम्भीमशंकरः ।।
वाराणस्यां च विश्वेशस्त्र्यम्बको गौतमीतटे ।। ३ ।।
वैद्यनाथश्चिताभूमौ नागेशो दारुकावने ।।
सेतुबन्धे च रामेशो घुश्मेशश्च शिवालये ।।४।।
अवतारद्वादशकमेतच्छम्भोः परात्मनः ।।
सर्वानन्दकरं पुंसान्दर्शनात्स्पर्शनान्मुने।।५।।
तत्राद्यस्सोमनाथो हि चन्द्रदुःखक्षयंकरः।।
क्षयकुष्ठादिरोगाणां नाशकः पूजनान्मुने ।।६।।
शिवावतारस्सोमेशो लिंगरूपेण संस्थितः।।
सौराष्ट्रे शुभदेशे च शशिना पूजितः पुरा ।।७।।
चंद्रकुण्डं च तत्रैव सर्वपापविनाशकम् ।।
तत्र स्नात्वा नरो धीमान्सर्वरोगैः प्रमुच्यते।। ८ ।।
सोमेश्वरं महालिंगं शिवस्य परमात्मकम्।।
दृष्ट्वा प्रमुच्यते पापाद्भुक्तिं मुक्तिं च विन्दति ।। ९ ।।
मल्लिकार्जुनसंज्ञश्चावतारश्शंकरस्य वै ।।
द्वितीयः श्रीगिरौ तात भक्ताभीष्टफलप्रदः ।। 3.42.१० ।।
संस्तुतो लिंगरूपेण सुतदर्शनहेतुतः ।।
गतस्तत्र महाप्रीत्या स शिवः स्वगिरेर्मुने ।।११।।
ज्योतिर्लिंगं द्वितीयन्तद्दर्शनात्पूजनान्मुने ।।
महासुखकरं चान्ते मुक्तिदन्नात्र संशयः ।।१२।।
महाकालाभिधस्तातावतारश्शंकरस्य वै ।।
उज्जयिन्यां नगर्य्यां च बभूव स्वजनावनः ।। १३ ।।
दूषणाख्यासुरं यस्तु वेदधर्मप्रमर्दकम् ।।।
उज्जयिन्यां गतं विप्रद्वेषिणं सर्वनाशनम् ।। १४ ।।
वेदविप्रसुतध्यातो हुङ्कारेणैव स द्रुतम् ।।
भस्मसात्कृतवांस्तं च रत्नमाल निवासिनम् ।। १५ ।।
तं हत्वा स महाकालो ज्योतिर्लिंगस्वरूपतः ।।
देवैस्स प्रार्थितोऽतिष्ठत्स्वभक्तपरिपालकः ।। १६ ।। ।

महाकालाह्वयं लिंगं दृष्ट्वाभ्यर्च्य प्रयत्नतः ।।
सर्वान्कामानवाप्नोति लभते परतो गतिम् ।। १७ ।।
ओङ्कारः परमेशानो धृतः शम्भो परात्मनः ।।
अवतारश्चतुर्थो हि भक्ताभीष्टफलप्रदः ।। १८ ।।
विधिना स्थापितो भक्त्या स्वलिंगात्पार्थिवान्मुने ।।
प्रादुर्भूतो महादेवो विन्ध्यकामप्रपूरकः ।। १९ ।।
देवैस्संप्रार्थितस्तत्र द्विधारूपेण संस्थितः ।।
भुक्तिमुक्तिप्रदो लिंगरूपो वै शक्तवत्सल ।। 3.42.२० ।।
प्रणवे चैव चोंकारनामासील्लिंगमुत्तमम् ।।
परमेश्वरनामासीत्पार्थिवश्च मुनीश्वर ।।२१।।
भक्ताभीष्टप्रदो ज्ञेयो योपि दृष्टोर्चितो मुने ।।
ज्योतिर्लिंगे महादिव्ये वर्णिते ते महामुने।।२२।।
केदारेशोवतारस्तु पंचमः परमश्शिवः ।।
ज्योतिर्लिंगस्वरूपेण केदारे संस्थितस्य च ।। २३ ।।
नरनारायणाख्यौ याववतारौ हरेर्मुने ।।
तत्प्रार्थितश्शिवस्तत्स्थैः केदारे हिमभूधरे ।। २४ ।।
ताभ्यां च पूजितो नित्यं केदारेश्वरसंज्ञकः ।।
भक्ताभीष्टप्रदः शम्भुर्दर्शनादर्चनादपि ।।२५।।
अस्य खण्डस्य स स्वामी सर्वेशोपि विशेषतः ।।
सर्वकामप्रदस्तात सोवतारश्शिवस्य वै ।।२६।।
भीमशंकरसंज्ञस्तु षष्ठः शम्भोर्महाप्रभोः ।।
अवतारो महालीलो भीमासुरविनाशनः ।।२७।।
सुदक्षिणाभिधम्भक्तङ्कामरूपेश्वरन्नृपम्।।
यो ररक्षाद्भुतं हत्वासुरन्तं भक्तदुःखदम् ।।२८।।
भीमशङ्करनामा स डाकिन्यां संस्थितस्स्वयम् ।।
ज्योतिर्लिंगस्वरूपेण प्रार्थितस्तेन शंकरः ।।२९।।
विश्वेश्वरावतारस्तु काश्यां जातो हि सप्तमः ।।
सर्वब्रह्माण्डरूपश्च भुक्तिमुक्तिप्रदो मुने ।। 3.42.३० ।।
पूजितस्सर्वदेवैश्च भक्त्या विष्णवादिभिस्सदा ।।
कैलासपतिना चापि भैरवेणापि नित्यशः ।। ३१ ।।
ज्योतिर्लिंगस्वरूपेण संस्थितस्तत्र मुक्तिदः ।।
स्वयं सिद्धस्वरूपो हि तथा स्वपुरि स प्रभुः ।। ३२ ।।
काशीविश्वेशयोर्भक्त्या तन्नामजपकारकाः ।।

निर्लिप्ताः कर्मभिर्न्नित्यं केवल्यपदभागिनः ।। ३३ ।।
त्र्यंबकाख्योऽवतारो यः सोष्टमो गौतमीतटे ।।
प्रार्थितो गौतमेनाविर्बभूव शशिमौलिनः ।।३४।।
गौतमस्य प्रार्थनया ज्योतिर्लिंग स्वरूपतः ।।
स्थितस्तत्राचलः प्रीत्या तन्मुनेः प्रीतिकाम्यया।।३५।।
तस्य सन्दर्शनात्स्पर्शाद्दर्शनाच्च महेशितुः ।।
सर्वे कामाः प्रसिध्यन्ति ततो मुक्तिर्भवेदहो ।।३६।।
शिवानुग्रहतस्तत्र गंगा नाम्ना तु गौतमी ।।
संस्थिता गौतमप्रीत्या पावनी शंकरप्रिया ।। ३७।।
वैद्यनाथावतारो हि नवमस्तत्र कीर्तितः ।।
आविर्भूतो रावणार्थं बहुलीलाकरः प्रभुः।।३८।।
तदानयनरूपं हि व्याजं कृत्वा महेश्वरः ।।
ज्योतिर्लिंगस्वरूपेण चिताभूमौ प्रतिष्ठितः ।।३९।।
वैद्यनाथेश्वरो नाम्ना प्रसिद्धोभूज्जगत्त्रये ।।
दर्शनात्पूजनाद्भक्त्या भुक्तिमुक्तिप्रदः स हि ।।3.42.४०।।
वैद्यनाथेश्वरशिवमाहात्म्यमनुशासनम् ।।
पठतां शृण्वतां चापि भुक्तिमुक्तिप्रदं मुने ।। ४१ ।।
नागेश्वरावतारस्तु दशमः परिकीर्तितः ।।
आविर्भूतः स्वभक्तार्थं दुष्टानां दण्डदस्सदा ।।४२।।
हत्वा दारुकनामानं राक्षसन्धर्मघातकम् ।।
स्वभक्तं वैश्यनाथं च प्रारक्षत्सुप्रियाभिधम् ।।४३।।
लोकानामुपकारार्थं ज्योतिर्लिंगस्वरूपधृक्।।
सन्तस्थौ सांबिकश्शम्भुर्बहुलीलाकरः परः ।। ४४ ।।
तद्दृष्ट्वा शिवलिंगन्तु मुने नागेश्वराभिधम् ।।
विनश्यन्ति द्रुतं चार्च्य महापातकराशयः ।।४५।।
रामेश्वरावतारस्तु शिवस्यैकादशः स्मृतः ।।
रामचन्द्रप्रियकरो रामसंस्थापितो मुने ।। ४६।।
ददौ जयवरं प्रीत्या यो रामाय सुतोषितः ।।
आविर्भूतस्य लिंगस्तु शंकरो भक्तवत्सलः ।।४७।।
रामेण प्रार्थितोऽत्यर्थं ज्योतिर्लिंगस्वरूपतः ।।
सन्तस्थौ सेतुबन्धे च रामसंसेवितो मुने ।। ४८ ।।
रामेश्वरस्य महिमाद्भुतोऽभूद्भुवि चातुलः ।।
भुक्तिमुक्तिप्रदश्चैव सर्वदा भक्तकामदः।।४९।।

तं च गंगाजलेनैव स्नापयिष्यति यो नरः ।।
रामेश्वरं च सद्भक्त्या स जीवन्मुक्त एव हि ।। 3.42.५० ।।
इह भुक्त्वाखिलान्भोगान्देवतादुर्ल्लभानपि।।
अतः प्राप्य परं ज्ञानं कैवल्यं मोक्षमाप्नुयात् ।। ५१ ।।
घुश्मेश्वरावतारस्तु द्वादशश्शंकरस्य हि ।।
नानालीलाकरो घुश्मानन्ददो भक्तवत्सलः।।५२ ।।
दक्षिणस्यान्दिशि मुने देवशैलसमीपतः ।।
आविर्बभूव सरसि घुश्माप्रियकरः प्रभुः ।।५३।।
सुदेहयमारितं घुश्मापुत्रं साकल्यतो मुने ।।
तुष्टस्तद्भक्तितश्शम्भुर्योरक्षद्भक्तवत्सलः ।।५४।।
तत्प्रार्थितस्स वै शम्भुस्तडागे तत्र कामदाः।।
ज्योतिर्लिंग स्वरूपेण तस्थौ घुश्मेश्वराभिधः ।।५५।
तन्दृष्ट्वा शिवलिंगन्तु समभ्यर्च्य च भक्तितः।।
इह सर्वसुखम्भुक्त्वा ततो मुक्तिं च विन्दति।।५६।।
इति ते हि समाख्याता ज्योतिर्लिंगावली मया।।
द्वादशप्रमिता दिव्या भुक्तिमुक्तिप्रदायिनी।।५७।।
एतां ज्योतिर्लिंगकथां यः पठेच्छृणुयादपि।।
मुच्यते सर्वपापेभ्यो भुक्तिं मुक्तिं च विन्दति।।५८।।
शतरुद्राभिदा चेयम्वर्णिता संहिता मया।।
शतावतारसत्कीर्तिस्सर्वकामफलप्रदा।।५९।।
इमां यः पठते नित्यं शृणुयाद्वा समाहितः ।।
सर्वान्कामानवाप्नोति ततो मुक्तिं लभेद्ध्रुवम् ।।3.42.६०।।
इति श्रीशिवमहापुराणे तृतीयायां शतरुद्रसंहितायां सनत्कुमार .नन्दीश्वरसंवादे द्वादशज्योतिर्लिंगावतारवर्णनं नाम द्विचत्वारिंशोध्यायः ।। ४२ ।।
समाप्तेयं तृतीया शतरुद्रसंहिता ।।

।। श्रीगणेशाय नम. ।।

अथ चतुर्थी कोटिरुद्रसंहिता प्रारभ्यते ।।

यो धत्ते निजमाययैव भुवनाकारं विकारोज्झितो

यस्याहुः करुणाकटाक्षविभवौ स्वर्गापवर्ग्गाभिधौ ।।

प्रत्यग्बोधसुखाद्वयं हृदि सदा पश्यन्ति यं योगिनस्तस्मै

शैलसुताञ्जितार्द्धवपुषे शश्वन्नमस्तेजसे ।। १ ।।

कृपाललितवीक्षणं स्मितमनोज्ञवक्त्राम्बुजं शशांककलयोज्ज्वलं शमितघोरतापत्रयम् ।।

करोतु किमपि स्फुरत्परमसौख्यसच्चिद्वपुर्धराधरसुताभुजोद्वलयितं महो मंगलम् ।।२।।

ऋषय ऊचुः ।।

सम्यगुक्तं त्वया सूत लोकानां हितकाम्यया ।।

शिवावतारमाहात्म्यं नानाख्यानसमन्वितम् ।। ३ ।।

पुनश्च कथ्यतां तात शिवमाहात्म्यमुत्तमम् ।।

लिंगसम्बन्धि सुप्रीत्या धन्यस्त्वं शैवसत्तमः ।। ४ ।।

शृण्वन्तस्त्वन्मुखाम्भोजान्न तृप्तास्स्मो वयं प्रभो ।।

शैवं यशोऽमृतं रम्यं तदेव पुनरुच्यताम्। ।। ५ ।।

पृथिव्यां यानि यानि लिंगानि तीर्थेतीर्थे शुभानि हि ।।

अन्यत्र वा स्थले यानि प्रसिद्धानि स्थितानि वै ।। ६ ।।

तानि तानि च दिव्यानि लिंगानि परमेशितुः ।।

व्यासशिष्य समाचक्ष्व लोकानां हितकाम्यया ।।७।।

सूत उवाच ।।

साधुपृष्टमृषिश्रेष्ठ लोकानां हितकाम्यया।।

कथयामि भवत्स्नेहात्तानि संक्षेपतो द्विजाः ।। ८ ।।

सर्वेषां शिवलिंगानां मुने संख्या न विद्यते ।।

सर्वं लिंगमयी भूमिः सर्वलिंगमयं जगत् ।। ९ ।।

लिंगमयानि तीर्थानि सर्वं लिंगे प्रतिष्ठितम् ।।

संख्या न विद्यते तेषां तानि किंचिद्ब्रवीम्यहम् ।।4.1.१०।।

यत्किंचिद्दृश्यते दृश्यं वर्ण्यते स्मर्यते च यत् ।।

सूत उवाच।।
यथाभवल्लिंगरूपः संपूज्यस्त्रिभवे शिवः।।
तथोक्तं वा द्विजाः प्रीत्या किमन्यच्छ्रोतुमिच्छथ ।।१।।
ऋषय ऊचुः।अन्धकेश्वरलिंगस्य महिमानं वद प्रभो ।।
तथान्यच्छिवलिंगानां प्रीत्या वक्तुमिहार्हसि ।। २ ।।
सूत उवाच ।।
पुराब्धिगर्तमाश्रित्य वसन्दैत्योऽन्धकासुरः ।।
स्ववशं कारयामास त्रैलोक्यं सुरसूदनः ।। ३ ।
तस्माद्गर्ताच्च निस्सृत्य पीडयित्वा पुनः प्रजाः ।।
प्राविशच्च तदा दैत्यस्तं गर्तं सुपराक्रमः ।।४।।
देवाश्च दुःखितः सर्वे शिवं प्रार्थ्य पुनःपुनः ।।
सर्वं निवेदयामासुस्स्वदुःखं च मुनीश्वराः ।।५।।
सूत उवाच ।।
तदाकर्ण्य वचस्तेषां देवानां परमेश्वरः ।।
प्रत्युवाच प्रसन्नात्मा दुष्टहंता सतां गतिः ।। ६ ।।
शिव उवाच ।।
घातयिष्यामि तं दैत्यमन्धकं सुरसूदनम् ।।
सैन्यं च नीयतान्देवा ह्यायामि च गणैस्सह ।। ७ ।।
तस्माद्गर्तादंधके हि देवर्षिद्रुहि भीकरे ।।
निस्सृते च तदा तस्मिन्देवा गर्तमुपाश्रिताः ।।८।।
दैत्याश्च देवताश्चैव युद्धं चक्रुः सुदारुणम् ।।
शिवानुग्रहतो देवाः प्रबलाश्चाभवँस्तदा ।। ९ ।।
देवैश्च पीडितः सोपि यावद्गर्तमुपागतः ।।
तावच्छूलेन संप्रोतः शिवेन परमात्मना ।।4.13.१०।।
तत्रत्यश्च तदा शंभुं ध्यात्वा संप्रार्थयत्तदा ।।
अन्तकाले च त्वां दृष्ट्वा तादृशो भवति क्षणात् ।। ११ ।।
इत्येवं संस्तुतस्सोपि प्रसन्नः शंकरस्तदा ।।
उवाच वचनं तत्र वरं ब्रूहि ददामि ते ।। १२ ।।
इत्येवं वचनं श्रुत्वा स दैत्यः पुनरब्रवीत् ।।
सुप्रणम्य शिवं स्तुत्वा सत्त्वभावमुपाश्रितः ।। १३ ।।
अन्धक उवाच ।।
यदि प्रसन्नो देवेश स्वभक्तिं देहि मे शुभाम् ।।
कृपां कृत्वा विशेषेण संस्थितो भव चेह वै ।। १४ ।।

सूत उवाच ।।
इत्युक्तस्तेन दैत्यं तं तद्गर्ते चाक्षिपद्धरः ।।
स्वयं तत्र स्थितो लिंगरूपोऽसौ लोककाम्यया ।।१५।।
अन्धकेशं च तल्लिंगं नित्यं यः पूजयेन्नरः ।।
षण्मासाज्जायते तस्य वांछासिद्धिर्न संशयः ।। १६ ।।
वृत्त्यर्थं पूजयेल्लिंगं लोकस्य हितकारकम् ।।
षण्मासं यो द्विजश्चैव स वै देवलकः स्मृतः ।। १७ ।।
यथा देवलकश्चैव स भवेदिह वै तदा ।।
देवलकश्च यः प्रोक्तो नाधिकारो द्विजस्य हि ।।१८।।
।। ऋषय ऊचुः ।।
देवलकश्च कः प्रोक्तः किं कार्यं तस्य विद्यते ।।
तत्त्वं वद महाप्राज्ञ लोकानां हितहेतवे ।। १९ ।।
सूत उवाच ।।
दधीचिर्नाम विप्रो यो धर्मिष्ठो वेदपारगः ।।
शिवभक्तिरतो नित्यं शिवशास्त्रपरायणः ।। 4.13.२० ।।
तस्य पुत्रस्तथा ह्यासीत्स्मृतो नाम्ना सुदर्शनः ।।
तस्य भार्या दुकूला च नाम्ना दुष्टकुलोद्भवा ।। २१ ।।
तद्वशे स च भर्तासीत्तस्य पुत्रचतुष्टयम् ।।
सोऽपि नित्यं शिवस्यैव पूजां च स्म करोत्यसौ ।। २२ ।।
दधीचेस्तु तदा ह्यासीद्ग्रामान्तरनिवेशनम् ।।
ज्ञातिसंयोगतश्चैव ज्ञातिभिर्न स मोचितः ।। २३ ।।
कथयित्वा च पुत्रं स शिवभक्तिरतो भव।।
इत्युक्त्वा स गतो मुक्तो दाधीचिश्शैवसत्तमः ।। २४ ।।
सुदर्शनस्तत्पुत्रोऽपि शिवपूजां चकार ह ।।
एवं चिरतरः कालो व्यतीयाय मुनीश्वराः ।। २५ ।।
एवं च शिवरात्रिश्च समायाता कदाचन ।।
तस्यां चोपोषितास्सर्वे स्वयं संयोगतस्तदा ।। २६ ।।
पूजां कृत्वा गतस्सोऽपि सुदर्शन इति स्मृतः ।।
स्त्रीसंगं शिवरात्रौ तुं कृत्वा पुनरिहागतः ।। २७ ।।
न स्नानं तेन च कृतं तद्रात्र्यां शिवपूजनम् ।।
तेन तत्कर्मपाकेन क्रुद्धः प्रोवाच शङ्करः ।। २८ ।।
महेश्वर उवाच ।।
शिवरात्र्यां त्वया दुष्ट सेवनं च स्त्रियाः कृतम् ।।

अस्नातेन मदीया च कृता पूजाविवेकिना ।। २९ ।।
ज्ञात्वा चैवं कृतं यस्मात्तस्मात्त्वं जडतां व्रज।।
ममास्पृश्यो भव त्वं च दूरतो दर्शनं कुरु ।।4.13.३०।।
सूत उवाच ।।
इति शप्तो महेशेन दाधीचिस्स सुदर्शनः ।।
जडत्वं प्राप्तवान्सद्यश्शिवमायाविमोहितः।।३१।।
एतस्मिन्समये विप्रा दधीचिः शैवसत्तमः ।।
ग्रामान्तरात्समायातो वृत्तान्तं श्रुतवाँश्च सः ।। ३२ ।।
शिवेन भर्त्सितः सोऽपि दुःखितोऽभूदतीव हि ।।
रुरोद हा हतोऽश्मीति दुःखेन सुतकर्मणा ।। ३३ ।।
पुनःपुनरुवाचेति स दधीचिस्सतां मतः ।।
अनेनेदं कुपुत्रेण हतं मे कुलमुत्तमम् ।। ३४ ।।
स पुत्रोऽपि हतो भार्यां पुंश्चलीं कृतवान्द्रुतम् ।।
पश्चात्तापमनुप्राप्य स्वपित्रा परिभर्त्सितः ।। ३५ ।।
तत्पित्रा गिरिजा तत्र पूजिता विधिभिर्वरैः ।।
सुयत्नतो महाभक्त्या स्वपुत्रसुखहेतवे ।। ३६ ।।
सुदर्शनोऽपि गिरिजां पूजयामास च स्वयम् ।।
चण्डीपूजनमार्गेण महाभक्त्या शुभैः स्तवैः ।। ३७ ।।
एवं तौ पितृपुत्रौ हि नानोपायैः सुभक्तितः ।।
प्रसन्नां चक्रतुर्देवीं गिरिजां भक्तवत्सलाम् ।। ३८ ।।
तयोः सेवाप्रभावेण प्रसन्ना चण्डिका तदा ।।
सुदर्शनं च पुत्रत्वे चकार गिरिजा मुने ।। ३९ ।।
शिवं प्रसादयामास पुत्रार्थे चण्डिका स्वयम् ।।
क्रुद्धाऽक्रुद्धा पुनश्चण्डी तत्पुत्रस्य प्रसन्नधीः ।। 4.13.४० ।।
अथाज्ञाय प्रसन्नं तं महेशं वृषभध्वजम् ।।
नमस्कृत्य स्वयं तस्य ह्युत्संगे तं न्यवेशयत् ।। ४१ ।
घृतस्नानं ततः कृत्वा पुत्रस्य गिरिजा स्वयम् ।।
त्रिरावृत्तोपवीतं च ग्रन्थिनैकेन संयुतम् ।। ४२ ।।
सुदर्शनाय पुत्राय ददौ प्रीत्या तदाम्बिका ।।
उद्दिश्य शिवगायत्रीं षोडशाक्षरसंयुताम् ।। ४३ ।।
तदोंनमः शिवायेति श्रीशब्द पूर्वकाय च ।।
वारान्षोडश संकल्पपूजां कुर्यादयं बटुः।। ४४ ।।
आस्नानादिप्रणामान्तं पूजयन्वृषभध्वजम् ।।

मंत्रवादित्रपूजाभिस्सर्षीणां सन्निधौ तथा ।। ४५ ।।
नाममंत्राननेकांश्च पाठयामास वै तदा ।।
उवाच सुप्रसन्नात्मा चण्डिका च शिवस्तथा ।। ४६ ।।
मदर्पितं च यत्किंचिद्धनधान्यादिकन्तथा ।।
तत्सर्वं च त्वया ग्राह्यं न दोषाय भविष्यति ।। ४७ ।।
मम कृत्ये भवान्मुख्यो देवीकृत्ये विशेषतः ।।
घृततैलादिकं सर्वं त्वया ग्राह्यं मदर्पितम् ।। ४८ ।।
प्राजापत्यं भवेद्यर्हिं तर्ह्येको हि भवान्भवेत् ।।
तदा पूजा च सम्पूर्णान्यथा सर्वा च निष्फला ।। ४९ ।।
तिलकं वर्तुलं कार्यं स्नानं कार्यं सदा त्वया ।।
शिवसन्ध्या च कर्तव्या गायत्री च तदीयिका ।।4.13.५०।।
मत्सेवां प्रथमं कृत्वा कार्यमन्यत्कुलोचितम् ।।
एवं कृतेऽखिले भद्रं दोषाः क्षान्ता मया तव।।५१।।
।। सूत उवाच ।।
इत्युक्त्वा तस्य पुत्राश्च चत्वारो बटुकास्तदा ।।
अभिषिक्ताश्चतुर्दिक्षु शिवेन परमात्मना ।।५२।।
चण्डी चैवात्मनिकटे पुत्रं स्थाप्य सुदर्शनम् ।।
तत्पुत्रान्प्रेरयामास वरान्दत्त्वा ह्यनेकशः ।। ५३ ।।
देव्युवाच ।।
उभयोर्युवयोर्मध्ये वटुको यो भवेन्मम ।।
तस्य स्याद्विजयो नित्यं नात्र कार्या विचारणा ।। ५४ ।।
भवांश्च पूजितो येन तेनैवाहं प्रपूजिता ।।
कर्तव्यं हि भवद्भिश्च स्वीयं कर्म सदा सुत ।। ५५ ।।
सूत उवाच ।।
एवं तस्मै वरान्दत्तास्सपुत्राय महात्मने ।।
सुदर्शनाय कृपया शिवाभ्यां जगतां कृते ।।५६।।
शिवाभ्यां स्थापिता यस्मात्तस्मात्तं वटुकाः स्मृताः ।।
तपोभ्रष्टाश्च ये जाताः स्मृतास्तस्मात्तपोधमाः ।।५७।।
शिवयोः कृपया सर्वे विस्तारं बहुधा गताः ।।
तेषां च प्रथमा पूजा महापूजा महात्मनः ।।५८।।
तेन यावत्कृता नैव पूजा वै शंकरस्य च ।।
तावत्पूजा न कर्त्तव्या कृता चेन्न शुभापि सा ।। ५९ ।।
शुभं वाप्यशुभं वापि बटुकं न परित्यजेत् ।।

प्राजापत्ये च भोज्ये वै वटुरेको विशिष्यते ।। 4.13.६० ।
शिवयोश्च तथा कार्ये विशेषोऽत्र प्रदृश्यते ।।
तदेव शृणु सुप्राज्ञ यथाहं वच्मि तेऽनघ ।। ६१ ।'
तस्यैव नगरे राज्ञो भद्रस्य नित्यभोजने ।।
प्राजापत्यस्य नियमे ह्यन्धकेशसमीपतः ।।६२।।
यज्जातमद्भुतं वृत्तं शिवानुग्रहकारणात् ।।
श्रूयतां तच्च सुप्रीत्या कथयामि यथाश्रुतम्।।६३।।
ध्वज एकश्च तद्राज्ञे दत्तस्तुष्टेन शंभुना।।
प्रोक्तश्च कृपया राजा देवदेवेन तेन सः।।६४।।
प्रातश्च वर्ध्यतां राजन्ध्वजो रात्रौ पतिष्यति।।
मम त्वेवं च सम्पूर्णे प्राजापत्ये तथा पुनः।।६५।।
अन्यथायं ध्वजो मे हि रात्रावपि स्थिरो भवेत्।।
इत्युक्त्वान्तर्हितश्शंभू राज्ञे तुष्टः कृपानिधिः।।६६।।
तथेति नियमश्चासीत्तस्य राज्ञो महामुने।।
प्राजापत्यं कृतं नित्यं शिवपूजाविधानत ।७७।
स्वयं प्रातर्विवर्द्धेत ध्वजः सायं पतेदिति।।
यदि कार्यं च सम्पूर्णं जातं चैव भवेदिह ।।६८।।
एकस्मिन्समये चात्र बटोः कार्यं पुरा ह्यभूत् ।।
ध्वजः स पतितो वै हि ब्रह्मभोजं विनापि हि ।। ६९।।
दृष्ट्वा तच्च तदा तत्र पृष्टा राज्ञा च पण्डिताः ।।
भुञ्जते ब्राह्मणा ह्यत्र नोत्थितो वै ध्वजस्त्विति।।4.13.७०।।
कथं च पतितः सोऽत्र ब्राह्मणा ब्रूत सत्यतः ।।
ते पृष्टाश्च तदा प्रोचुर्ब्राह्मणाः पण्डितोत्तमाः।।७१।।
ब्रह्मभोजे महाराज वटुको भोजितः पुरा।।
चण्डीपुत्रश्शिवस्तुष्टस्तस्माच्च पतितो ध्वजः।।७२।।
तच्छ्रुत्वा नृपतिस्सोऽथ जनाश्चान्ये ऽपि सर्वशः ।।
अभवन्विस्मितास्तत्र प्रशंसां चक्रिरे ततः ।। ७३ ।।
एवं च महिमा तेषां वर्द्धितः शङ्करेण हि ।।
तस्माच्च वटुकाः श्रेष्ठाः पुरा विद्भिः प्रकीर्तिताः ।। ७४ ।।
शिवपूजा तु तैः पूर्वमुत्तार्य्या नान्यथा पुनः ।।
अन्येषां नाधिकारोऽस्ति शिवस्य वचनादिह ।। ७५ ।।
उत्तारणं च कार्य्यं वै पूजा पूर्णा भवत्विति ।।
एतावदेव तेषां तु शृणु नान्यत्तथैव च ।। ७६ ।।

एतत्सर्वं समाख्यातं यत्पृष्टं च मुनीश्वराः ।।
यच्छ्रुत्वा शिवपूजायाः फलं प्राप्नोति वै नरः ।।७७।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां वटुकोत्पत्तिवर्णनं नाम त्रयोदशोऽध्यायः ।। १३ ।।

ऋषय ऊचुः ।।।
ज्योतिषां चैव लिंगानां माहात्म्यं कथयाधुना ।।
उत्पत्तिं च तथा तेषां ब्रूहि सर्वं यथाश्रुतम् ।। १ ।।
सूत उवाच ।।
शृण्वन्तु विप्रा वक्ष्यामि तन्माहात्म्यं जनिं तथा ।।
संक्षेपतो यथाबुद्धि सद्गुरोश्च मया श्रुतम् ।। २ ।।
एतेषां चैव माहात्म्यं वक्तुं वर्षशतैरपि ।।
शक्यते न मुनिश्रेष्ठास्तथापि कथयामि वः ।। ३ ।।
सोमनाथश्च तेषां वै प्रथमः परिकीर्तितः ।।
तन्माहात्म्यं शृणु मुने प्रथमं सावधानतः ।। ४ ।।
सप्तविंशन्मिताः कन्या दक्षेण च महात्मना ।।
तेन चन्द्रमसे दत्ता अश्विन्याद्या मुनीश्वराः ।।५।।
चन्द्रं च स्वामिनं प्राप्य शोभमाना विशेषतः ।।
चन्द्रोऽपि चैव ताः प्राप्य शोभते स्म निरन्तरम् ।। ६ ।।
हेम्ना चैव मणिर्भाति मणिना हेम चैव हि ।।
एवं च समये तस्य यज्जातं श्रूयतामिति ।। ७ ।।
सर्वास्वपि च पत्नीषु रोहिणीनाम या स्मृता ।।
यथैका सा प्रिया चासीत्तथान्या न कदाचन ।। ८ ।।
अन्याश्च दुःखमापन्नाः पितरं शरणं ययुः ।।
गत्वा तस्मै च यद्दुःखं तथा ताभिर्निवेदितम् ।। ९ ।।
दक्षस्स च तथा श्रुत्वा दुःखं च प्राप्तावांस्तदा ।।
समागत्य द्विजाश्चन्द्रं शान्त्यावोचद्वचस्तदा ।। 4.14.१० ।।
दक्ष उवाच ।।
विमले च कुले त्वं हि समुत्पन्नः कलानिधे ।।
आश्रितेषु च सर्वेषु न्यूनाधिक्यं कथं तव ।। ११ ।।
कृतं चेत्तकृतं तच्च न कर्तव्यं त्वया पुनः ।।
वर्तनं विषमत्वेन नरकप्रदमीरितम् ।। १२ ।।
सूत उवाच ।।
दक्षश्चैव च संप्रार्थ्य चन्द्रं जामातरं स्वयम्।।
जगाम मन्दिरं स्वं वै निश्चयं परमं गतः ।।१३।।
चंद्रोऽपि वचनं तस्य न चकार विमोहितः ।।
शिवमायाप्रभावेण यया संमोहितं जगत् ।। १४ ।।
शुभं भावि यदा यस्य शुभं भवति तस्य वै ।।

अशुभं च यदा भावि कथं तस्य शुभं भवेत् ।। १५।।
चन्द्रोऽपि बलवद्भाविवशान्मेने न तद्वचः ।।
रोहिण्यां च समासक्तो नान्यां मेने कदाचन ।।१६।।
तच्छ्रुत्वा पुनरागत्य स्वयं दुःखसमन्वितः ।।
प्रार्थयामास चन्द्रं स दक्षो दक्षस्सुनीतितः ।। १७ ।।
दक्ष उवाच ।।
श्रूयतां चन्द्र यत्पूर्वं प्रार्थितो बहुधा मया ।।
न मानितं त्वया यस्मात्तस्मात्त्वं च क्षयी भव ।।१८।।
सूत उवाच।।
इत्युक्ते तेन चन्द्रो वै क्षयी जातः क्षणादिह ।।
हाहाकारो महानासीत्तदेन्दौ क्षीणतां गते ।। १९ ।।
देवर्षयस्तदा सर्वे किं कार्य्यं हा कथं भवेत् ।।
इति दुःखं समापन्ना विह्वला ह्यभवन्मुने ।। 4.14.२० ।।
विज्ञापिताश्च चन्द्रेण सर्वे शक्रादयस्सुराः ।।
ऋषयश्च वसिष्ठाद्या ब्रह्माणं शरणं ययु ।।२१।।
गत्वापि तु तदा प्रोचुस्तद्वृत्तं निखिलं मुने ।।
ब्रह्मणे ऋषयो देवा नत्वा नुत्वातिविह्वलाः ।। २२ ।।
ब्रह्मापि तद्वचः श्रुत्वा विस्मयं परमं ययौ ।।
शिवमायां सुप्रशस्य श्रावयंस्तानुवाच ह ।। २३ ।।
ब्रह्मोवाच ।।
अहो कष्टं महज्जातं सर्वलोकस्य दुःखदम् ।।
चन्द्रस्तु सर्वदा दुष्टो दक्षश्च शप्तवानमुम् ।। २४ ।।
सर्वं दुष्टेन चन्द्रेण कृतं कर्माप्यनेकशः ।।
श्रूयतामृषयो देवाश्चन्द्रकृत्यं पुरातनम् ।।२५।।
बृहस्पतेर्गृहं गत्वा तारा दुष्टेन वै हृता ।।
तस्य भार्या पुनश्चैव स दैत्यान्समुपस्थितः ।।२६।।
समाश्रितस्तदा दैत्यान्युद्धं देवैश्चकार ह ।।
मयाऽत्रिणा निषिद्धश्च तस्मै तारां ददौ शशी ।। २५७ ।।
तां च गर्भवतीं दृष्ट्वा न गृह्णामीति सोऽब्रवीत् ।।
अस्माभिर्वारितो जीवः कृच्छ्राज्जग्राह तां तदा ।। २८ ।।
यदि गर्भं जहातीह गृह्णामीत्यब्रवीत्पुनः ।।
गर्भे मया पुनस्तत्र त्याजिते मुनिसत्तमाः ।। २९ ।।
कस्यायं च पुनर्गर्भस्सोमस्येति च साऽब्रवीत् ।।

पश्चात्तेन गृहीता सा मया च वारितेन वै ।। 4.14.३० ।।
एवंविधानि चन्द्रस्य दुश्चारित्राण्यनेकशः ।।
वर्ण्यंते किं पुनस्तानि सोऽद्यापि कुरुते कथम् ।।३१।।
यज्जातं तत्सुसंजातं नान्यथा भवति ध्रुवम् ।।
अतः परमुपायं वो वक्ष्यामि शृणुतादरात् ।। ३२ ।।
प्रभासके शुभे क्षेत्रे व्रजेश्चन्द्रस्सदैवतैः ।।
शिवमाराधयेत्तत्र मृत्युञ्जयविधानतः ।। ३३ ।।
निधायेशं पुरस्तत्र चन्द्रस्तपतु नित्यशः ।।
प्रसन्नश्च शिवः पश्चादक्षयं तं करिष्यति ।।३४।।
सूत उवाच ।।
इति श्रुत्वा वचस्तस्य ब्रह्मणस्ते सुरर्षयः ।।
संनिवृत्याययुस्सर्वे यत्र दक्षविधू ततः ।। ३५ ।।
गृहीत्वा ते ततश्चन्द्रं दक्षं चाश्वास्य निर्जराः ।।
प्रभासे ऋषयश्चक्रुस्तत्र गत्वाखिलाश्च वै ।। ३६ ।।
आवाह्य तीर्थवर्याणि सरस्वत्यादिकानि च ।।
पार्थिवेन तदा पूजां मृत्युञ्जयविधानतः ।।३७।।
ते देवाश्च तदा सर्वे ऋषयो निर्मलाशयाः ।।
स्थाप्य चन्द्रं प्रभासे च स्वंस्वं धाम ययुर्मुदा ।।३८।।
चन्द्रेण च तपस्तप्तं पण्मासं च निरंतरम् ।।
मृत्युंजयेन मंत्रेण पूजितो वृषभध्वजः ।।३९।।
दशकोटिमितं मन्त्रं समावृत्य शशी च तम् ।।।
ध्यात्वा मृत्युञ्जयं मन्त्रं तस्थौ निश्चलमानसः ।। 4.14.४० ।।
तं दृष्ट्वा शंकरो देवः प्रसन्नोऽभूत्ततः प्रभुः ।।
आविर्भूय विधुं प्राह स्वभक्तं भक्तवत्सलः ।।४१।।
शंकर उवाच।।
वरं वृणीष्व भद्रं ते मनसा यत्समीप्सितम्।।
प्रसन्नोऽहं शशिन्सर्वं दास्ये वरमनुत्तमम् ।।४२।।
चंद्र उवाच ।।
यदि प्रसन्नो देवेश किमसाध्यं भवेन्मम ।।
तथापि मे शरीरस्य क्षयं वारय शंकर।।४३।।
क्षंतव्यो मेऽपराधश्च कल्याणं कुरु सर्वदा।।
इत्युक्ते च तदा तेन शिवो वचनमब्रवीत्।।४४।।
शिव उवाच।।

पक्षे च क्षीयतां चन्द्र कला ते च दिनेदिने।।
पुनश्च वर्द्धतां पक्षे सा कला च निरंतरम् ।। ४५ ।।
सूत उवाच ।।
एवं सति तदा देवा हर्षनिर्भरमानसाः ।।
ऋषयश्च तथा सर्वे समाजग्मुर्द्रुतं द्विजाः।।४६।।
आगत्य च तदा सर्वे चन्द्रायाशिषमब्रुवन् ।।
शिवं नत्वा करौ बद्ध्वा प्रार्थयामासुरादरात्।।४७।।
देवाः ऊचुः।।
देवदेव महादेव परमेश नमोऽस्तु ते ।।
उमया सहितश्शंभो स्वामिन्नत्र स्थिरो भव ।। ४८ ।।
सूत उवाच।।
ततश्चन्द्रेण सद्भक्त्या संस्तुतश्शंकरः पुरा ।।
निराकारश्च साकारः पुनश्चैवाभवत्प्रभुः ।। ४९ ।।
प्रसन्नश्च स देवानां क्षेत्रमाहात्म्यहेतवे ।।
चन्द्रस्य यशसे तत्र नाम्ना चन्द्रस्य शंकरः ।। 4.14.५० ।।
सोमेश्वरश्च नामासीद्विख्यातो भुवन त्रये ।।
क्षयकुष्ठादिरोगाणां नाशकः पूजनाद्द्विजाः ।।५१।।
धन्योऽयं कृतकृत्योयं यन्नाम्ना शंकरस्स्वयम्।।
स्थितश्च जगतां नाथः पावयञ्जगतीतलम्।।५२।।
तत्कुंडं तैश्च तत्रैव सर्वैर्देवैः प्रतिष्ठितम्।।
शिवेन ब्रह्मणा तत्र ह्यविभक्तं तु तत्पुनः।।५३।।
चन्द्रकुण्डं प्रसिद्धं च पृथिव्यां पापनाशनम्।।
तत्र स्नाति नरो यस्स सर्वैः पापैः प्रमुच्यते ।। ५४ ।।
रोगास्सर्वे क्षयाद्याश्च ह्यसाध्या ये भवंति वै।।
ते सर्वे च क्षयं यान्ति षण्मासं स्नानमात्रतः ।। ५५ ।।
प्रभासं च परिक्रम्य पृथिवीक्रमसंभवम् ।।
फलं प्राप्नोति शुद्धात्मा मृतः स्वर्गे महीयते ।।५६।।
सोमलिंगं नरो दृष्ट्वा सर्वपापात्प्रमुच्यते ।।
लब्ध्वा फलं मनोभीष्टं मृतस्स्वर्गं समीहते ।। ५७ ।।
यद्यत्फलं समुद्दिश्य कुरुते तीर्थमुत्तमम्।।
तत्तत्फलमवाप्नोति सर्वथा नात्र संशयः।।५८।।
इति ते ऋषयो देवाः फलं दृष्ट्वा तथाविधम् ।।
मुदा शिवं नमस्कृत्य गृहीत्वा चन्द्रमक्षयम् ।। ५९ ।।

परिक्रम्य च तत्तीर्थं प्रशंसन्तश्च ते ययुः ।।
चंद्रश्चापि स्वकीयं च कार्य्यं चक्रे पुरातनम् ।। 4.14.६० ।।
इति सर्वः समाख्यातः सोमेशस्य समुद्भवः ।।
एवं सोमेश्वरं लिंगं समुत्पन्नं मुनीश्वराः ।। ६१ ।।
यः शृणोति तदुत्पत्तिं श्रावयेद्वा परान्नरः ।।
सर्वान्कामानवाप्नोति सर्वपापैः प्रमुच्यते ।। ६२ ।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां सोमनाथज्योतिर्लिंगोत्पत्तिवर्णनं नाम चतुर्दशोऽध्यायः ।। १४ ।।।

।। सूत उवाच ।।
अतः परं प्रवक्ष्यामि मल्लिकार्जुनसंभवम् ।।
यः श्रुत्वा भक्तिमान्धीमान्सर्वपापैः प्रमुच्यते ।। १ ।।
पूर्वं चा कथितं यच्च तत्पुनः कथयाम्यहम् ।।
कुमारचरितं दिव्यं सर्वपापविनाशनम् ।।२।।
यदा पृथ्वीं समाक्रम्य कैलासं पुनरागतः ।।
कुमारस्स शिवापुत्रस्तारकारिर्महाबलः ।। ३ ।।
तदा सुरर्षिरागत्य सर्वं वृत्तं जगाद ह ।।
गणेश्वरविवाहादि भ्रामयंस्तं स्वबुद्धितः ।। ४ ।।
तच्छुत्वा स कुमारो हि प्रणम्य पितरौ च तौ ।।
जगाम पर्वतं क्रौचं पितृभ्यां वारितोऽपि हि ।। ५ ।।
कुमारस्य वियोगेन तन्माता गिरिजा यदा ।।
दुःखितासीत्तदा शंभुस्तामुवाच सुबोधकृत् ।। ६ ।।
कथं प्रिये दुःखितासि न दुःखं कुरु पार्वति ।।
आयास्यति सुतः सुभ्रूस्त्यज्यतां दुःखमुत्कटम् ।। ७ ।।
सा यदा च न तन्मेने पार्वती दुःखिता भृशम् ।।
तदा च प्रेषितास्तत्र शंकरेण सुरर्षयः ।। ८ ।।
देवाश्च ऋषयस्सर्वे सगणा हि मुदान्विताः ।।
कुमारानयनार्थं वै तत्र जग्मुः सुबुद्धयः ।। ९ ।।
तत्र गत्वा च ते सर्वे कुमारं सुप्रणम्य च ।।
विज्ञाप्य बहुधाप्येनं प्रार्थनां चक्रुरादरात् ।। 4.15.१० ।।
देवादिप्रार्थनां तां च शिवाज्ञासंकुलां गुरुः ।।
न मेने स कुमारो हि महाहंकारविह्वलः ।। ११ ।।
ततश्च पुनरावृत्य सर्वे ते हि शिवांतिकम् ।।
स्वंस्वं स्थानं गता नत्वा प्राप्य शंकरशासनम् ।।१२।।
तदा च गिरिजादेवी विरहं पुत्रसंभवम् ।।
शंभुश्च परमं दुःखं प्राप तस्मिन्ननागते ।। १३ ।।
अथो सुदुःखितौ दीनौ लोकाचारकरौ तदा ।।
जग्मतुस्तत्र सुस्नेहात्स्वपुत्रो यत्र संस्थितः ।। १४ ।।
स पुत्रश्च कुमाराख्यः पित्रोरागमनं गिरेः ।।
ज्ञात्वा दूरं गतोऽस्नेहाद्योजनत्रयमेव च ।। १५ ।।
क्रौंचे च पर्वते दूरं गते तस्मिन्स्वपुत्रके ।।
तौ च तत्र समासीनौ ज्यो तीरूपं समाश्रितौ ।। १६ ।।

पुत्रस्नेहातुरौ तौ वै शिवौ पर्वणिपर्वणि ।।
दर्शनार्थं कुमारस्य स्वपुत्रस्य हि गच्छतः ।। १७ ।।
अमावास्यादिने शंभुस्स्वयं गच्छति तत्र ह ।।
पौर्णमासीदिने तत्र पार्वती गच्छति ध्रुवम् ।। १८ ।।
तद्दिनं हि समारभ्य मल्लिकार्जुनसंभवम् ।।
लिंगं चैव शिवस्यैकं प्रसिद्धं भुवनत्रये ।। १९ ।।
तल्लिंगं यः समीक्षेत स सर्वैः किल्बिषैरपि ।।
मुच्यते नात्र सन्देहः सर्वान्कामानवाप्नुयात् ।। 4.15.२० ।।
दुःखं च दूरतो याति सुखमात्यंतिकं लभेत् ।।
जननीगर्भसंभूतं कष्टं नाप्नोति वै पुनः ।। २१ ।।
धनधान्यसमृद्धिश्च प्रतिष्ठारोग्यमेव च ।।
अभीष्टफलसिद्धिश्च जायते नात्र संशयः ।। २२ ।।
ज्योतिर्लिंगं द्वितीयं च प्रोक्तं मल्लिकसंज्ञितम् ।।
दर्शनात्सर्वसुखदं कथितं लोकहेतवे ।।२३ ।।
इति श्रीशिवपुराणे चतुर्थ्यां कोटि रुद्रसंहिताया मल्लिकार्जुनद्वितीयज्योतिर्लिंगवर्णनंनाम पंचदशोऽध्यायः ।। १५ ।।

ऋषय ऊचुः ।।
सूत सर्वं विजानासि वस्तु व्यास प्रसादतः ।।
ज्योतिषां च कथां श्रुत्वा तृप्तिर्नैव प्रजायते ।।१।।
तस्मात्त्वं हि विशेषेण कृपां कृत्वातुलां प्रभो ।।
ज्योतिर्लिंगं तृतीयं च कथय त्वं हि नोऽधुना ।। २ ।।
सूत उवाच ।। ।।
धन्योऽहं कृतकृत्योऽहं श्रीमतां भवतां यदि ।।
गतश्च संगमं विप्रा धन्या वै साधुसंगतिः ।। ३ ।।
अतो मत्वा स्वभाग्यं हि कथयिष्यामि पावनीम् ।।
पापप्रणाशिनीं दिव्यां कथां च शृणुतादरात् ।।४।।
अवंती नगरी रम्या मुक्तिदा सर्वदेहिनाम् ।।
शिवप्रिया महापुण्या वर्तते लोकपावनी ।। ५ ।।
तत्रासीद्ब्राह्मणश्रेष्ठश्शुभकर्मपरायणः ।।
वेदाध्ययनकर्त्ता च वेदकर्मरतस्सदा ।। ६ ।।
अग्न्याधानसमायुक्तश्शिवपूजारतस्सदा ।।
पार्थिवीं प्रत्यहं मूर्तिं पूजयामास वै द्विजः ।। ७ ।।
सर्वकर्मफलं प्राप्य द्विजो वेदप्रियस्सदा।।
सतां गतिं समालेभे सम्यग्ज्ञानपरायणः।।८।।
तत्पुत्रास्तादृशाश्चासंश्चत्वारो मुनिसत्तमाः ।।
शिवपूजारता नित्यं पित्रोरनवमास्सदा ।। ९ ।।
देवप्रियश्च तज्ज्येष्ठः प्रियमेधास्ततः परम्।।
तृतीयस्तु कृतो नाम धर्मवाही च सुव्रतः ।। 4.16.१० ।।
तेषां पुण्यप्रतापाच्च पृथिव्यां सुखमैधत ।।
शुक्लपक्षे यथा चन्द्रो वर्द्धते च निरंतरम् ।।११।।
तथा तेषां गुणास्तत्र वर्द्धन्ते स्म सुखावहाः ।।
ब्रह्मतेजोमयी सा वै नगरी चाभवत्तदा ।।१२।।
एतस्मिन्नन्तरे तत्र यज्जातं वृत्तमुत्तमम्।।
श्रूयतां तद्द्विजश्रेष्ठाः कथयामि यथाश्रुतम् ।।१३।।
पर्वते रत्नमाले च दूषणाख्यो महासुरः ।।
बलवान्दैत्यराजश्च धर्मद्वेषी निरन्तरम् ।।१४।।
ब्रह्मणो वरदानाच्च जगतुच्छीचकार ह।।
देवा पराजितास्तेन स्थानान्निस्सारितास्तथा।।१५।।
पृथिव्यां वेदधर्माश्च स्मृतिधर्माश्च सर्वशः ।।

स्फोटितास्तेन दुष्टेन सिंहेनेव शशा खलु ।। १६ ।।
यावंतो वेदधर्माश्च तावंतो दूरतः कृताः ।।
तीर्थेतीर्थे तथा क्षेत्रे धर्मो नीतश्च दूरतः ।।१७।।
अवंती नगरी रम्या तत्रैका दृश्यते पुनः ।।
इत्थं विचार्य तेनैव यत्कृतं श्रूयतां हि तत् ।। १८ ।।
बहुसैन्यसमायुक्तो दूषणस्स महासुरः ।।
तत्रस्थान्ब्रह्मणान्सर्वानुद्दिश्य समुपाययौ ।। १९ ।।
तत्रागत्य स दैत्येन्द्रश्चतुरो दैत्यसत्तमान् ।।
प्रोवाचाहूय वचनं विप्र द्रोही महाखलः ।। 4.16.२० ।।
दैत्य उवाच ।।
किमेते ब्राह्मणा दुष्टा न कुर्वंति वचो मम ।।
वेदधर्मरता एते सर्वे दंड्या मते मम ।।२१।।
सर्वे देवा मया लोके राजानश्च पराजिताः ।।
वशे किं ब्राह्मणाश्शक्या न कर्तुं दैत्यसत्तमाः ।।२२।।
यदि जीवितुमिच्छा स्यात्तदा धर्मं शिवस्य च ।।
वेदानां परमं धर्मं त्यक्त्वा सुखसुभागिनः ।। २३ ।।
अन्यथा जीवने तेषां संशयश्च भविष्यति ।।
इति सत्यं मया प्रोक्तं तत्कुरुध्वं विशंकिताः ।। २४ ।।
सूत उवाच ।।
इति निश्चित्य ते दैत्याश्चत्वारः पावका इव ।।
चतुर्दिक्षु तदा जाताः प्रलये च यथा पुरा । २५ ।।
ते ब्राह्मणास्तथा श्रुत्वा दैत्यानामुद्यमं तदा ।।
न दुःखं लेभिरे तत्र शिवध्यान परायणाः ।। २६ ।।
धैर्यं समाश्रितास्ते च रेखामात्रं तदा द्विजाः ।।
न चेलुः परमध्यानाद्वराकाः के शिवाग्रतः ।। २७ ।।
एतस्मिन्नन्तरे तैस्तु व्याप्तासीन्नगरी शुभा ।।
लोकाश्च पीडितास्तैस्तु ब्राह्मणान्समुपाययुः ।। २८ ।।
लोका ऊचुः ।।
स्वामिनः किं च कर्त्तव्यं दुष्टाश्च समुपागताः ।।
हिंसिता बहवो लोका आगताश्च समीपतः ।। २९ ।।
सूत उवाच ।।
तेषामिति वचश्श्रुत्वा वेदप्रियसुताश्च ते ।।
समूचुर्ब्राह्मणास्तान्वै विश्वस्ताश्शंकरे सदा ।।4.16.३०।।

ब्राह्मणा ऊचुः ।।
श्रूयतां विद्यते नैव बलं दुष्टभयावहम्।।
न शस्त्राणि तथा संति यच्च ते विमुखाः पुनः ।।३१।।
सामान्यस्यापमानो नो ह्याश्रयस्य भवेदिह ।।
पुनश्च किं समर्थस्य शिवस्येह भविष्यति ।।३२।।
शिवो रक्षां करोत्वद्यासुराणां भयतः प्रभुः ।।
नान्यथा शरणं लोके भक्तवत्सलतश्शिवात् ।।३३।।
सूत उवाच ।।
इति धैर्यं समास्थाय समर्चां पार्थिवस्य च ।।
कृत्वा ते च द्विजाः सम्यक्स्थिता ध्यानपरायणाः ।।
दृष्टा दैत्येन तावच्च ते विप्रास्सबलेन हि ।। ३४ ।।
दूषणेन वचः प्रोक्तं हन्यतां वध्यतामिति ।।
तच्छ्रुतं तैस्तदा नैव दैत्यप्रोक्तं वचो द्विजैः ।।
वेदप्रियसुतैश्शंभोर्ध्यानमार्गपरायणैः ।। ३५ ।।
अथ यावत्स दुष्टात्मा हन्तुमैच्छद्द्विजांश्च तान्।।
तावच्च प्रार्थिवस्थाने गर्त्तं आसीत्सशब्दकः।।३६।।
गर्तात्ततस्समुत्पन्नः शिवो विकटरूपधृक् ।।
महाकाल इति ख्यातो दुष्टहंता सतां गतिः ।।३७।।
महाकालस्समुत्पन्नो दुष्टानां त्वादृशामहम्।।
खल त्वं ब्राह्मणानां हि समीपाद्दूरतो व्रज।।३८।।
इत्युक्त्वा हुंकृतेनैव भस्मसात्कृतवांस्तदा।।
दूषणं च महाकालः शंकरस्सबलं द्रुतम् ।। ३९ ।।
कियत्सैन्यं हतं तेन किंचित्सैन्यं पलायितम्।।
दूषणश्च हतस्तेन शिवेनेह परात्मना ।।4.16.४०।।
सूर्यं दृष्ट्वा यथा याति संक्षयं सर्वशस्तमः ।।
तथैव च शिवं दृष्ट्वा तत्सैन्यं विननाश ह।।४१।।
देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात ह।।
देवास्समाययुस्सर्वे हरिब्रह्मादयस्तथा ।। ४२ ।।
भक्त्या प्रणम्य तं देवं शंकरं लोकशंकरम् ।।
तुष्टुवुर्विविधैः स्तोत्रैः कृतांजलिपुटा द्विजाः ।। ४३ ।।
ब्राह्मणांश्च समाश्वास्य सुप्रसन्नश्शिवस्स्वयम् ।।
वरं ब्रूतेति चोवाच महाकालो महेश्वरः ।।४४।।
तच्छ्रुत्वा ते द्विजास्सर्वे कृताञ्जलिपुटास्तदा ।।

सुप्रणम्य शिवं भक्त्या प्रोचुस्संनतमस्तकाः ।। ४५ ।।
।। द्विजा ऊचुः ।।
महाकाल महादेव दुष्टदण्डकर प्रभो ।।
मुक्तिं प्रयच्छ नश्शंभो संसारांबुधितश्शिव ।। ४६ ।।
अत्रैव लोकरक्षार्थं स्थातव्यं हि त्वया शिव ।।
स्वदर्शकान्नराञ्छम्भो तारय त्वं सदा प्रभो ।। ४७ ।।
सूत उवाच ।।
इत्युक्तस्तैश्शिवस्तत्र तस्थौ गर्ते सुशोभने ।।
भक्तानां चैव रक्षार्थं दत्त्वा तेभ्यश्च सद्गतिम् ।।४८।।
द्विजास्ते मुक्तिमापन्नाश्चतुर्द्दिक्षु शिवास्पदम् ।।
क्रोशमात्रं तदा जातं लिंगरूपिण एव च ।।४९।।
महाकालेश्वरो नाम शिवः ख्यातश्च भूतले ।।
तं दृष्ट्वा न भवेत्स्वप्ने किंचिद्दुःखमपि द्विजाः ।। 4.16.५० ।।
यंयं काममपेक्ष्यैव तल्लिंगं भजते तु यः ।।
तंतं काममवाप्नोति लभेन्मोक्षं परत्र च ।। ५१ ।।
एतत्सर्वं समाख्यातं महाकालस्य सुव्रताः ।।
समुद्भवश्च माहात्म्यं किमन्यच्छ्रोतुमिच्छथ ।। ५२ ।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां महाकालज्योतिर्लिंगमाहात्म्यवर्णनं नाम षोडशोऽध्यायः ।।१६।।

ऋषय ऊचुः ।।
महाकालसमाह्वस्थज्योतिर्लिंगस्य रक्षिणः ।।
भक्तानां महिमानं च पुनर्ब्रूहि महामते ।। १ ।।
सूत उवाच।।
शृणुतादरतो विप्रो भक्तरक्षाविधायिनः ।।
महाकालस्य लिंगस्य माहात्म्यं भक्तिवर्द्धनम् ।। २ ।।
उज्जयिन्यामभूद्राजा चन्द्रसेनाह्वयो महान् ।।
सर्वशास्त्रार्थतत्त्वज्ञश्शिवभक्तो जितेन्द्रियः ।। ३ ।।
तस्याभवत्सखा राज्ञो मणिभद्रो गणो द्विजाः ।।
गिरीशगणमुख्यश्च सर्वलोकनमस्कृतः ।। ४ ।।
एकदा स गणेन्द्रो हि प्रसन्नास्यो महामणिम् ।।
मणिभद्रो ददौ तस्मै चिंतामणिमुदारधीः ।।५।।
स वै मणिः कौस्तुभवद्द्योतमानोर्कसन्निभः ।।
ध्यातो दृष्टः श्रुतो वापि मंगलं यच्छति ध्रुवम् ।। ६ ।।
तस्य कांतितलस्पृष्टं कांस्यं ताम्रमयं त्रपु ।।
पाषाणादिकमन्यद्वा द्रुतं भवति हाटकम् ।। ७ ।।
स तु चिन्तामणिं कंठे बिभ्रद्राजा शिवाश्रयः ।।
चन्द्रसेनो रराजाति देवमध्येव भानुमान् ।।८।।
श्रुत्वा चिन्तामणिग्रीवं चन्द्रसेनं नृपोत्तमम् ।।
निखिलाः क्षितिराजानस्तृष्णाक्षुब्धहृदोऽभवन् ।। ९ ।।
नृपा मत्सरिणस्सर्वे तं मणिं चन्द्रसेनतः ।।
नानोपायैरयाचंत देवलब्धमबुद्धयः ।। 4.17.१० ।।
सर्वेषां भूभृतां याञ्चा चन्द्रसेनेन तेन वै ।।
व्यर्थीकृता महाकालदृढभक्तेन भूसुराः ।। ११ ।।
ते कदर्थीकृतास्सर्वे चन्द्रसेनेन भूभृता ।।
राजानस्सर्वदेशानां संरम्भं चक्रिरे तदा ।।१२।।
अथ ते सर्वराजानश्चतुरंगबलान्विताः ।।
चन्द्रसेनं रणे जेतुं संबभूवुः किलोद्यताः ।। १३ ।।
ते तु सर्वे समेता वै कृतसंकेतसंविदः ।।
उज्जयिन्याश्चतुर्द्वारं रुरुधुर्बहुसैनिकाः ।। १४ ।।
संरुध्यमानां स्वपुरीं दृष्ट्वा निखिल राजभिः ।।
तमेव शरणं राजा महाकालेश्वरं ययौ ।।१५।।
निर्विकल्पो निराहारस्स नृपो दृढनिश्चयः ।।

समानर्च महाकालं दिवा नक्तमनन्यधीः ।। १६ ।।
ततस्स भगवाञ्छंभुर्महाकालः प्रसन्नधीः ।।
तं रक्षितुमुपायं वै चक्रे तं शृणुतादरात् ।। १७ ।।
तदैव समये गोपि काचित्तत्र पुरोत्तमे ।।
चरंती सशिशुर्विप्रा महाकालांतिकं ययौ ।। १८ ।।
पञ्चाब्दवयसं बालं वहन्ती गतभर्तृका ।।
राज्ञा कृतां महाकालपूजां सापश्यदादरात् ।। १९ ।।
सा दृष्ट्वा सुमहाश्चर्यां शिवपूजां च तत्कृताम् ।।
प्रणिपत्य स्वशिविरं पुनरेवाभ्यपद्यत ।। 4.17.२० ।।
तत्सर्वमशेषेण स दृष्ट्वा बल्लवीसुतः ।।
कुतूहलेन तां कर्त्तुं शिवपूजां मनोदधे ।।२१।।
आनीय हृद्यं पाषाणं शून्ये तु शिविरांतरे ।।
अविदूरे स्वशिबिराच्छिवलिगं स भक्तितः ।।२२।। गन्धालंकारवासोभिर्धूपदीपाक्षतादिभिः ।।
विधाय कृत्रिमैर्द्रव्यैर्नैवेद्यं चाप्यकल्पयत् ।। २३ ।।
भूयोभूयस्समभ्यर्च्य पत्रैः पुष्पैर्मनोरमैः ।।
नृत्यं च विविधं कृत्वा प्रणनाम पुनःपुनः ।। २४ ।।
एतस्मिन्समये पुत्रं शिवासक्तसुचेतसम् ।।
प्रणयाद्गोपिका सा तं भोजनाय समाह्वयत्।।२५।।
यदाहूतोऽपि बहुशश्शिवपूजाक्तमानसः ।।
बालश्च भोजनं नैच्छत्तदा तत्र ययौ प्रसूः ।।२६।।
तं विलोक्य शिवस्याग्रे निषण्णं मीलितेक्षणम् ।।
चकर्ष पाणिं संगृह्य कोपेन समताडयत् ।।२७।।
आकृष्टस्ताडितश्चापि नागच्छत्स्वसुतो यदा ।।
तां पूजां नाशयामास क्षिप्त्वा लिंगं च दूरतः ।।२८।।
हाहेति दूयमानं तं निर्भर्त्स्य स्वसुतं च सा ।।
पुनर्विवेश स्वगृहं गोपी क्रोधसमन्विता ।।२९।।
मात्रा विनाशितां पूजां दृष्ट्वा देवस्य शूलिनः ।।
देवदेवेति चुक्रोश निपपात स बालकः ।। 4.17.३० ।।
प्रनष्टसंज्ञः सहसा स बभूव शुचाकुलः ।।
लब्धसंज्ञो मुहूर्तेन चक्षुषी उदमीलयत् ।। ३१ ।।
तदैव जातं शिबिरं महाकालस्य सुन्दरम् ।।
ददर्श स शिशुस्तत्र शिवानुग्रहतोऽचिरात् ।। ३२ ।।
हिरण्मयबृहद्द्वारं कपाटवरतोरणम् ।।

महार्हनीलविमलवज्रवेदीविराजितम् ।। ३३ ।।
संतप्तहेमकलशैर्विचित्रैर्बहुभिर्युतम् ।।
प्रोद्भासितमणिस्तंभैर्बद्धस्फटिकभूतलैः ।। ३४ ।।
तन्मध्ये रत्नलिंगं हि शंकरस्य कृपानिधे ।।
स्वकृतार्चनसंयुक्तमपश्यद्गोपिकासुतः ।। ३५ ।।
स दृष्ट्वा सहसोत्थाय शिशुर्विस्मितमानसः ।।
संनिमग्न इवासीद्वै परमानंदसागरे ।। ३६ ।।
ततः स्तुत्वा स गिरिशं भूयोभूयः प्रणम्य च ।।
सूर्ये चास्तं गते बालो निर्जगाम शिवालयात् ।।३७।।
अथापश्यत्स्वशिबिरं पुरंदरपुरोपमम्।।
सद्यो हिरण्मयीभूतं विचित्रं परमोज्ज्वलम्।।३८।।
सोन्तर्विवेश भवनं सर्वशोभासमन्वितम् ।।
मणिहेमगणाकीर्णं मोदमानो निशामुखे ।। ३९ ।।
तत्रापश्यत्स्वजननीं स्वपंतीं दिव्यलक्षणाम्।।
रत्नालंकारदीप्तांगीं साक्षात्सुरवधूमिव।।4.17.४०।।
अथो स तनयो विप्राश्शिवानुग्रहभाजनम्।।
जवेनोत्थापयामास मातरं सुखविह्वलः ।।४१।।
सोत्थिताद्भुतमालक्ष्यापूर्वं सर्वमिवाभवत् ।।
महानंदसुमग्ना हि सस्वजे स्वसुतं च तम्।।४२।।
श्रुत्वा पुत्रमुखात्सर्वं प्रसादं गिरिजापतेः ।।
प्रभुं विज्ञापयामास यो भजत्यनिशं शिवम् ।।४३।।
स राजा सहसागत्य समाप्तनियमो निशि ।।
ददर्श गोपिकासूनोः प्रभावं शिवतोषणम् ।।४४।।
दृष्ट्वा महीपतिस्सर्वं तत्सामात्यपुरोहितः ।।
आसीन्निमग्नो विधृतिः परमानंदसागरे।।४५।।
प्रेम्णा वाष्पजलं मुञ्चञ्चन्द्रसेनो नृपो हि सः ।।
शिवनामोच्चरन्प्रीत्या परिरेभे तमर्भकम् ।। ४६ ।।
महामहोत्सवस्तत्र प्रबभूवाद्भुतो द्विजाः ।।
महेशकीर्तनं चक्रुस्सर्वे च सुखविह्वलाः ।।४७।।
एवमत्यद्भुताचाराच्छिवमाहात्म्यदर्शनात् ।।
पौराणां सम्भ्रमाच्चैव सा रात्रिः क्षणतामगात् ।। ४८ ।।
अथ प्रभाते युद्धाय पुरं संरुध्य संस्थिताः ।।
राजानश्चारवक्त्रेभ्यश्शुश्रुवुश्चरितं च तत् ।। ४९ ।।

ते समेताश्च राजानः सर्वे येये समागताः ।।
परस्परमिति प्रोचुस्तच्छ्रुत्वा चकित अति ।। 4.17.५० ।।
राजान ऊचुः ।।
अयं राजा चन्द्रसेनश्शिवभक्तोति दुर्जयः ।।
उज्जयिन्या महाकालपुर्याः पतिरनाकुलः ।। ५१ ।।
ईदृशाश्शिशवो यस्य पुर्य्यां संति शिवव्रताः ।।
स राजा चन्द्रसेनस्तु महाशंकरसेवकः ।। ५२ ।।
नूनमस्य विरोधेन शिवः क्रोधं करिष्यति ।।
तत्क्रोधाद्धि वयं सर्वे भविष्यामो विनष्टकाः ।। ५३ ।।
तस्मादनेन राज्ञा वै मिलापः कार्य एव हि ।।
एवं सति महेशानः करिष्यति कृपां पराम् ।। ५४ ।।
सूत उवाच ।।
इति निश्चित्य ते भूपास्त्यक्तवैरास्सदाशयाः ।।
सर्वे बभूवुस्सुप्रीता न्यस्तशस्त्रास्त्रपाणयः ।। ५५ ।।
विविशुस्ते पुरीं रम्यां महाकालस्य भूभृतः ।।
महाकालं समानर्चुश्चंद्रसेनानुमोदिताः ।। ५६ ।।
ततस्ते गोपवनिता गेहं जग्मुर्महीभृतः ।।
प्रसंशंतश्च तद्भाग्यं सर्वे दिव्यमहोदयम् ।। ५७ ।।
ते तत्र चन्द्रसेनेन प्रत्युद्गम्याभिपूजिताः ।।
महार्हविष्टरगताः प्रत्यनंदन्सुविस्मिताः ।।५८ ।।
गोपसूनोः प्रसादात्तत्प्रादुर्भूतं शिवालयम् ।।
संवीक्ष्य शिवलिंगं च शिवे चकुः परां मतिम्।।५९।।
ततस्ते गोपशिशवे प्रीता निखिलभूभुजः ।।
ददुर्बहूनि वस्तूनि तस्मै शिवकृपार्थिनः ।। 4.17.६० ।।
येये सर्वेषु देशेषु गोपास्तिष्ठंति भूरिशः ।।
तेषां तमेव राजानं चक्रिरे सर्वपार्थिवाः ।। ६१ ।।
अथास्मिन्नन्तरे सर्वैस्त्रिदशैरभिपूजितः ।।
प्रादुर्बभूव तेजस्वी हनूमान्वानरेश्वरः ।। ६२ ।।
ते तस्याभिगमादेव राजानो जातसंभ्रमाः ।।
प्रत्युत्थाय नमश्चकुर्भक्तिनम्रात्ममूर्तयः ।। ।। ६३ ।।
तेषां मध्ये समासीनः पूजितः प्लवगेश्वरः ।।
गोपात्मजं तमालिंग्य राज्ञो वीक्ष्येदमब्रवीत् ।। ६४ ।।
हनूमानुवाच ।।

सर्वे शृण्वन्तु भद्रं वो राजानो ये च देहिनः ।।
ऋते शिवं नान्यतमो गतिरस्ति शरीरिणाम् ।। ६५ ।।
एवं गोपसुतो दिष्ट्या शिवपूजां विलोक्य च ।।
अमंत्रेणापि संपूज्य शिवं शिवमवाप्तवान् ।। ६६ ।।
एष भक्तवरश्शंभोर्गोपानां कीर्तिवर्द्धनः ।।
इह भुक्त्वाखिलान्भोगानंते मोक्षमवाप्स्यति ।। ६७ ।।
अस्य वंशेऽष्टमो भावी नन्दो नाम महायशाः ।।
प्राप्स्यते तस्य पुत्रत्वं कृष्णो नारायणस्स्वयम् ।। ६८ ।।
अद्यप्रभृति लोकेस्मिन्नेष गोप कुमारकः ।।
नाम्ना श्रीकर इत्युच्चैर्लोकख्यातिं गमिष्यति ।। ६९ ।।
सूत उवाच ।।
एवमुक्त्वाञ्जनीसूनुः शिवरूपो हरीश्वरः।।
सर्वान्राज्ञश्चन्द्रसेनं कृपादृष्ट्या ददर्श ह।।4.17.७०।।
अथ तस्मै श्रीकराय गोपपुत्राय धीमते।।
उपादिदेश सुप्रीत्या शिवाचारं शिवप्रियम्।।७१।।
हनूमानथ सुप्रीतः सर्वेषां पश्यतां द्विजः।।
चन्द्रसेनं श्रीकरं च तत्रैवान्तरधी यत।।७२।।
तं सर्वे च महीपालास्संहृष्टाः प्रतिपूजिताः।।
चन्द्रसेनं समामंत्र्य प्रतिजग्मुर्यथागतम्।।७३।।
श्रीकरोपि महातेजा उपदिष्टो हनूमता।।
ब्राह्मणैस्सहधर्मज्ञैश्चक्रे शम्भोस्समर्हणम् ।।७४।।
चन्द्रसेनो महाराजः श्रीकरो गोपबालकः।।
उभावपि परप्रीत्या महाकालं च भेजतुः ।। ७५ ।।
कालेन श्रीकरस्सोपि चन्द्रसेनश्च भूपतिः ।।
समाराध्य महाकालं भेजतुः परमं पदम् ।।७६।।
एवंविधो महाकालश्शिवलिंगस्सतां गतिः ।।
सर्वथा दुष्टहंता च शंकरो भक्तवत्सलः ।।७७।।
इदं पवित्रं परमं रहस्यं सर्वसौख्यदम् ।।
आख्यानं कथितं स्वर्ग्यं शिवभक्तिविवर्द्धनम्।।७८।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां महाकालज्योतिर्लिंगमाहात्म्यवर्णनं नाम सप्तदशोऽध्यायः ।।१७।।

ऋषय ऊचुः ।।
त्वया सूत महाभाग श्राविता ह्यद्भुता कथा ।।
महाकालाख्यलिंगस्य निजभक्तसुरक्षिकः।।१।।
ज्योतिर्लिंगं चतुर्थं च कृपया वद वित्तम।।
ॐकारं परमेशस्य सर्वपातकहारिणः।।२।।
सूत उवाच।।
ॐकारे परमेशाख्यं लिंगमासीद्यथा द्विजाः।।
तथा वक्ष्यामि वः प्रीत्या श्रूयतां परमर्षयः।।
कस्मिंश्चित्समये चात्र नारदो भगवान्मुनिः।।
गोकर्णाख्यं शिवं गत्वा सिषेवे परभक्तिमान्।।४।।
ततस्स आगतो विन्ध्यं नगेशं मुनिसत्तमः।।
तत्रैव पूजितस्तेन बहुमानपुरस्सरम्।।५।।
मयि सर्वं विद्यते च न न्यूनं हि कदाचन।।
इति भावं समास्थाय संस्थितो नारदाग्रतः।।६।।
तन्मानं तत्तदा श्रुत्वा नारदो मानहा ततः।।
निश्श्वस्य संस्थितस्तत्र श्रुत्वाविन्ध्योऽब्रवीदिदम् ।।७ ।।
विन्ध्य उवाच ।।
किं न्यूनं च त्वया दृष्टं मयि निश्श्वासकारणम् ।।
तच्छ्रुत्वा नारदो वाक्यमब्रवीत्स महामुनिः ।। ८ ।।
।। नारद उवाच ।।
विद्यते त्वयि सर्वं हि मेरुरुच्चतरः पुनः ।।
देवेष्वपि विभागोऽस्य न तवास्ति कदाचन ।। ९ ।।
।। सूत उवाच ।।
इत्युक्त्वा नारदस्तस्माज्जगाम च यथागतम् ।।
विन्ध्यश्च परितप्तो वै धिग्वै मे जीवितादिकम् ।।4.18.१०।।
विश्वेश्वरं तथा शंभुमाराध्य च तपाम्यहम् ।।
इति निश्चित्य मनसा शंकर शरणं गतः ।। ११ ।।
जगाम तत्र सुप्रीत्या ह्योंकारो यत्र वै स्वयम् ।।
चकार च पुनस्तत्र शिवमूर्तिश्च पार्थिवीम् ।। १२ ।।
आराध्य च तदा शंभुं षण्मासं स निरन्तरम्।।
न चचाल तपस्थानाच्छिवध्यानपरायणः ।।१३।।
एवं विंध्यतपो दृष्ट्वा प्रसन्नः पार्वतीपतिः ।।
स्वरूपं दर्शयामास दुर्ल्लभं योगिनामपि ।। १४ ।।

प्रसन्नस्स तदोवाच ब्रूहि त्वं मनसेप्सितम् ।।
तपसा ते प्रसन्नोस्मि भक्तानामीप्सितप्रदः।।१५।।
विन्ध्य उवाच ।।
यदि प्रसन्नो देवेश बुद्धिं देहि यथेप्सिताम् ।।
स्वकार्यसाधिनीं शंभो त्वं सदा भक्तवत्सलः ।।१६।।
सूत उवाच ।।
तच्छ्रुत्वा भगवाञ्छंभुश्चिचेत हृदये चिरम्।।
परोपतापदं विन्ध्यो वरमिच्छति मूढधीः ।।१७।।
किं करोमि यदेतस्मै वरदानं भवेच्छुभम् ।।
मद्दत्तं परदुःखाय वरदानं यथा नहि ।। १८ ।।
।। सूत उवाच ।।
तथापि दत्तवाञ् शंभुस्तस्मै तद्वरमुत्तमम् ।।
विध्यपर्वतराज त्वं यथेच्छसि तथा कुरु ।। १९ ।।
एवं च समये देवा ऋपयश्चामलाशयाः ।।
संपूज्य शंकरं तत्र स्थातव्यमिति चाब्रुवन्।।4.18.२०।।
तच्छ्रुत्वा देववचनं प्रसन्नः परमेश्वरः।।
तथैव कृतवान्प्रीत्या लोकानां सुखहेतवे ।। २१ ।।
ॐ कारं चैव यल्लिंगमेकं तच्च द्विधा गतम् ।।
प्रणवे चैव ॐकारनामासीत्स सदाशिवः ।। २२ ।।
पार्थिवे चैव यज्जातं तदासीत्परमेश्वरः ।।
भक्ताभीष्टप्रदौ चोभौ भुक्तिमुक्तिप्रदौ द्विजाः ।। २३ ।।
तत्पूजां च तदा चक्रुर्देवाश्च ऋषयस्तथा ।।
प्रापुर्वराननेकांश्च संतोष्य वृषभध्वजम् ।।२४।।
स्वस्वस्थानं ययुर्देवा विन्ध्योपि मुदितोऽधिकम् ।।
कार्य्यं साधितवान्स्वीयं परितापं जहौ द्विजाः ।।२५।।
य एवं पूजयेच्छंभुं मातृगर्भं वसेन्न हि ।।
यदभीष्टफलं तच्च प्राप्नुयान्नात्र संशय ।। २६ ।।
सूत उवाच ।।
एतत्ते सर्वमाख्यातमोंकारप्रभवे फलम् ।।
अतः परं प्रवक्ष्यामि केदारं लिंगमुत्तमम् ।। २७ ।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायामोंकारेश्वरज्योतिर्लिंगमाहात्म्यवर्णनं
नामाष्टादशोऽध्यायः ।। १८।।

सूत उवाच।।
नरनारायणाख्यौ याववतारौ हरेर्द्विजाः ।।
तेपाते भारते खण्डे बदर्याश्रम एव हि।।१।।
ताभ्यां संप्रार्थितश्शंभुः पार्थिवे पूजनाय वै ।।
आयाति नित्यं तल्लिंगे भक्ताधीनतया शिव ।।२।।
एवं पूजयतोश्शंभुं तयोर्विष्ण्ववतारयोः ।।
चिरकालो व्यतीताय शैवयोर्धर्मपुत्रयोः ।।३।।
एकस्मिन्समये तत्र प्रसन्नः परमेश्वरः ।।
प्रत्युवाच प्रसन्नोस्मि वरो मे व्रियतामिति।।४।।
इत्युक्ते च तदा
तेन नरो नारायणस्स्वयम्।।
ऊचतुर्वचनं तत्र लोकानां हितकाम्यया ।। ५ ।। ।।
नरनारायणावूचतुः ।।
यदि प्रसन्नो देवेश यदि देयो वरस्त्वया ।।
स्थीयतां स्वेन रूपेण पूजार्थं शंकरस्स्वयम् ।। ६ ।।
सूत उवाच ।।
इत्युक्तस्तु तदा ताभ्यां केदारे हिमसंश्रये ।।
स्वयं च शंकरस्तस्थौ ज्योतीरूपो महेश्वरः ।।७।।
ताभ्यां च पूजितश्चैव सर्वदुःखभयापहः ।।
लोकानामुपकारार्थं भक्तानां दर्शनाय वै ।।८।।
स्वयं स्थितस्तदा शंभुः केदारेश्वरसंज्ञकः ।।
भक्ताभीष्टप्रदो नित्यं दर्शनादर्चनादपि ।।९।।
देवाश्च पूजयंतीह ऋषयश्च पुरातनाः।।
मनोभीष्ट फलं तेते सुप्रसन्नान्महेश्वरात् ।। 4.19.१० ।।
भवस्य पूजनान्नित्यं बदर्याश्रमवासिनः।।
प्राप्नुवन्ति यतः सोऽसौ भक्ताभी ष्टप्रदः सदा ।।११।।
तद्दिनं हि समारभ्य केदारेश्वर एव च ।।
पूजितो येन भक्त्या वै दुःखं स्वप्नेऽति दुर्लभम् ।।१२।।
यो वै हि पाण्डवान्दृष्ट्वा माहिषं रूपमास्थितः ।।
मायामास्थाय तत्रैव पलायनपरोऽभवत् ।। १३ ।।
धृतश्च पाण्डवैस्तत्र ह्यवाङ्मुखतया स्थितः ।।
पुच्छ चैव धृतं तैस्तु प्रार्थितश्च पुनःपुनः ।। १४ ।।
तद्रूपेण स्थितस्तत्र भक्तवत्सलनामभाक् ।।

नयपाले शिरोभागो गतस्तद्रूपतः स्थितः ।। १५ ।।
स वै व पूजनान्नित्यमाज्ञां चैवाप्यदात्तथा ।।
पूजितश्च स्वयं शंभुस्तत्र तस्थौ वरानदात् ।। १६ ।।
पूजयित्वा गतास्ते तु पाण्डवा मुदितास्तदा ।।
लब्ध्वा चित्तेप्सितं सर्वं विमुक्तास्सर्वदुःखतः ।। १७ ।।
तत्र नित्यं हस्साक्षात्क्षेत्रे केदारसंज्ञके ।।
भारतीभिः प्रजाभिश्च तथैव परिपूज्यते ।। १८ ।।
तत्रत्यं वलयं यो वै ददाति हरवल्लभः ।।
हररूपांतिकं तच्च हररूपसमन्वितम् ।। १९ ।।
तथैव रूपं दृष्ट्वा च सर्वपापैः प्रमुच्यते ।।
जीवन्मुक्तो भवेत्सोपि यो गतो बदरीवने ।। 4.19.२० ।।
दृष्ट्वा रूपं नरस्यैव तथा नारायणस्य हि ।।
केदारेश्वरशंभोश्च मुक्तभागी न संशयः ।। २१ ।।
केदारेशस्य भक्ता ये मार्गस्थास्तस्य वै मृता।।
गतेऽपि मुक्ता भवंत्येव नात्र कार्य्या विचारणा ।।२२।।
गत्वा तत्र प्रीतियुक्तः केदारेशं प्रपूज्य च ।।
तत्रत्यमुदकं पीत्वा पुन र्जन्म न विन्दति ।।२३।।
खण्डेस्मिन्भारते विप्रा नरनारायणेश्वरः ।।
केदारेशः प्रपूज्यश्च सर्वैर्जीवैस्सुभक्तितः ।।२४।।
अस्य खण्डस्य स स्वामी सर्वेशोपि विशेषतः ।।
सर्वकामप्रदश्शंभुः केदाराख्यो न संशय ।। २५ ।।
एतद्वचस्समाख्यातं यत्पृष्टमृषिसत्तमाः ।।
श्रुत्वा पापं हरेत्सर्वं नात्र कार्या विचारणा ।।२६।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां केदारेश्वरज्योतिर्लिंगमा हात्म्यवर्णनं नामैकोनविंशोऽध्यायः ।। १९ ।।

।। सूत उवाच ।।
अतः परं प्रवक्ष्यामि माहात्म्यं भैमशंकरम् ।।
यस्य श्रवणमात्रेण सर्वाभीष्टं लभेन्नरः ।। १ ।।
कामरूपाभिधे देशे शंकरो लोककाम्यया ।।
अवतीर्णः स्वयं साक्षात्कल्याणसुखभाजनम् ।। २ ।।
यदर्थमवतीर्णोसौ शंकरो लोकशंकरः।।
शृणुतादरतस्तच्च कथयामि मुनीश्वराः।।३।।
भीमोनाम महोवीर्यो राक्षसोऽभूत्पुरा द्विजाः।।
दुःखदस्सर्वभूतानां धर्मध्वंसकरस्सदा।।४।।
कुंभकर्णात्समुत्पन्नः कर्कट्यां सुमहाबलः।।
सह्ये च पर्वते सोऽपि मात्रा वासं चकार ह।।५।।
कुंभकर्णे च रामेण हते लोकभयंकरे।।
राक्षसी पुत्रसंयुक्ता सह्येऽतिष्ठत्स्वयं तदा।।६।।
स बाल एकदा भीमः कर्कटीं मातरं द्विजाः।।
पप्रच्छ च खलो लोकदुःखदो भीमविक्रमः।।७।।
भीम उवाच।।
मातर्मे कः पिता कुत्र कथं वैकाकिनी स्थिता।।
ज्ञातुमिच्छामि तत्सर्वं यथार्थं त्वं वदाधुना ।। ८ ।।
सूत उवाच ।।
एवं पृष्टा तदा तेन पुत्रेण राक्षसी च सा।।
उवाच पुत्रं सा दुष्टा श्रूयतां कथयाम्यहम् ।। ९ ।।
कर्कट्युवाच ।।
पिता ते कुम्भकर्णश्च रावणानुज एव च ।।
रामेण मारितस्सोयं भ्रात्रा सह महाबलः ।। 4.20.१० ।।
अत्रागतः कदाचिद्वै कुम्भकर्णस्य राक्षसः ।।
मद्भोगं कृतवांस्तात प्रसह्य बलवान्पुरा ।।११।।
लंकां स गतवान्मां च त्यक्त्वात्रैव महाबलः ।।
मया न दृष्ट्वा सा लंका ह्यत्रैव निवसाम्यहम् ।। १२ ।।
पिता मे कर्कटो नाम माता मे पुष्कसी मता ।।
भर्ता मम विराधो हि रामेण निहतः पुरा ।। १३ ।।
पित्रोः पार्श्वे स्थिता चाहं निहते स्वामिनि प्रिये ।।
पितरौ मे मृतौ चात्र ऋषिणा भस्मसात्कृतौ ।। १४ ।।
भक्षणार्थं गतौ तत्र क्रुद्धेन सुमहात्मना।।

सुतीक्ष्णेन सुतपसाऽगस्त्यशिष्येण वै तदा।।१५।।
साऽहमेकाकिनी जाता दुःखिता पर्वते पुरा।।
निवसामि स्म दुःखार्ता निरालंबा निराश्रया।।१६।।
एतस्मिन्समये ह्यत्र राक्षसो रावणानुजः।।
आगत्य कृतवान्संगं मां विहाय गतो हि सः।।१७।।
ततस्त्वं च समुत्पन्नो महाबलपराक्रमः।।
अवलंब्य पुनस्त्वां च कालक्षेपं करोम्यहम्।।१७।।
सूत उवाच।।
इति श्रुत्वा वचस्तस्या भीमो भीमपराक्रमः।।
कुद्धश्च चिंतयामास किं करोमि हरिं प्रति।।१९।।
पितानेन हतो मे हि तथा मातामहो ह्यपि।।
विराधश्च हतोऽनेन दुःखं बहुतरं कृतम्।।4.20.२० ।।
तत्पुत्रोहं भवेयं चेद्धरिं तं पीडयाम्यहम्।।
इति कृत्वा मतिं भीमस्तपस्तप्तुं महद्ययौ।।२१।।
ब्रह्माणां च समुद्दिश्य वर्षाणां च सहस्रकम् ।।
मनसा ध्यानमाश्रित्य तपश्चक्रे महत्तदा।।२२।।
ऊर्ध्वबाहुश्चैकपादस्सूर्य्ये दृष्टिं दधत्पुरा।।
संस्थितस्स बभूवाथ भीमो राक्षसपुत्रकः ।।२३।।
शिरसस्तस्य संजातं तेजः परमदारुणम् ।।
तेन दग्धास्तदा देवा ब्रह्माणं शरणं ययुः ।। २४ ।।
प्रणम्य वेधसं भक्त्या तुष्टुवुर्विविधैः स्तवैः ।।
दुःखं निवेदयांचकुर्ब्रह्मणे ते सवासवाः ।। २५ ।।
देवा ऊचुः ।।
ब्रह्मन्वै रक्षसस्तेजो लोकान्पीडितुमुद्यतम् ।।
यत्प्राथ्र्यते च दुष्टेन तत्त्वं देहि वरं विधे ।।२६।।
नोचेदद्य वयं दग्धास्तीव्रतत्तेजसा पुनः ।।
यास्यामस्संक्षयं सर्वे तस्मात्तं देहि प्रार्थितम् ।। २७ ।।
सूत उवाच ।।
इति तेषां वचश्श्रुत्वा ब्रह्मा लोकपितामहः ।।
जगाम च वरं दातुं वचनं चेदमब्रवीत् ।। २८ ।।
ब्रह्मोवाच ।।
प्रसन्नोऽस्मि वरं ब्रूहि यत्ते मनसि वर्तते ।।
इति श्रुत्वा विधेर्वाक्यमब्रवीद्राक्षसो हि सः ।। २९ ।।

भीम उवाच ।।
यदि प्रसन्नो देवेश यदि देयो वर स्त्वया ।।
अतुलं च बलं मेऽद्य देहि त्वं कमलासन ।। 4.20.३० ।।
सूत उवाच ।।
इत्युक्त्वा तु नमश्चक्रे ब्रह्मणे स हि राक्षसः ।।
ब्रह्मा चापि तदा तस्मै वरं दत्त्वा गृहं ययौ।।३१।।
राक्षसो गृहमागत्य ब्रह्माप्तातिबलस्तदा ।।
मातरं प्रणिपत्याशु स भीमः प्राह गर्ववान्।।३२।।
भीम उवाच ।।
पश्य मातर्बलं मेऽद्य करोमि प्रलयं महत् ।।
देवानां शक्रमुख्यानां हरेर्वै तत्सहायिनः ।। ३३ ।।
।। सूत उवाच ।।
इत्युक्त्वा प्रथमं भीमो जिग्ये देवान्सवासवान् ।।
स्थानान्निस्सारयामास स्वात्स्वात्तान्भीमविक्रमः ।। ३४ ।।
ततो जिग्ये हरिं युद्धे प्रार्थितं निर्जरैरपि ।।
ततो जेतुं रसां दैत्यः प्रारंभं कृतवान्मुदा ।। ३५ ।।
पुरा सुदक्षिणां तत्र कामरूपेश्वरं प्रभुम् ।।
जेतुं गतस्ततस्तेन युद्धमासीद्भयंकरम् ।। ३६ ।।
भीमोऽथ तं महाराजं प्रभावाद्ब्रह्मणोऽसुरः ।।
जिग्ये वरप्रभावेण महावीरं शिवाश्रयम्।।३७।।
स हि जित्वा ततस्तं च कामरूपेश्वरं प्रभुम् ।।
बबंध ताडयामास भीमो भीमपराक्रमः ।। ३८ ।।
गृहीतं तस्य सर्वस्वं राज्यं सोपस्करं द्विजाः ।।
तेन भीमेन दुष्टेन शिवदासस्य भूपतेः ।। ३९ ।।
राजा चापि सुधर्मिष्ठः प्रियधर्मो हरप्रियः ।।
गृहीतो निगडैस्तेन ह्येकांते स्थापितश्च सः ।। 4.20.४० ।।
तत्र तेन तदा कृत्वा पार्थिवीं मूर्तिमुत्तमाम् ।।
भजनं च शिवस्यैव प्रारब्धी प्रियकाम्यया ।। ४१ ।।
गंगायास्तवनं तेन बहुधा च तदा कृतम् ।।
मानसं स्नानकर्मादि कृत्वा शंकरपूजनम् ।। ४२ ।।
पार्थिवेन विधानेन चकार नृपसत्तमः ।।
तद्ध्यानं च यथा स्याद्वै कृत्वा च विधिपूर्वकम् ।। ४३ ।।
प्रणिपातैस्तथा स्तोत्रैर्मुद्रासन पुरस्सरम् ।।

कृत्वा हि सकलं तच्च स भेजे शंकरं मुदा ।। ४४ ।।
पंचाक्षरमयीं विद्यां जजाप प्रणवान्विताम् ।।
नान्यत्कार्यं स वै कर्तुं लब्धवानन्तरं तदा ।। ४५ ।।
तत्पत्नी च तदा साध्वी दक्षिणा नाम विश्रुता ।।
निधानं पार्थिवं प्रीत्या चकार नृपवल्लभा ।। ४६ ।।
दंपती त्वेकभावेन शंकरं भक्तशंकरम् ।।
भेजाते तत्र तौ नित्यं शिवाराधनतत्परौ ।। ४७ ।।
राक्षसो यज्ञकर्मादि वरदर्प विमोहितः ।।
लोपयामास तत्सर्वं मह्यं वै दीयतामिति ।।४८।।
बहुसैन्यसमायुक्तो राक्षसानां दुरात्मनाम ।।
चकार वसुधां सर्वां स्ववशे चर्षिसत्तमाः ।। ४९ ।।
वेदधर्मं शास्त्रधर्मं स्मृतिधर्मं पुराणजम् ।।
लोपयित्वा च तत्सर्वं बुभुजे स्वयमूर्जितः ।। 4.20.५० ।।
देवाश्च पीडितास्तेन सशक्रा ऋषयस्तथा ।।
अत्यन्तं दुःखमापन्ना लोकान्निस्सारिता द्विजाः ।। ५१ ।।
ते ततो विकलास्सर्वे सवासवसुरर्षयः ।।
ब्रह्मविष्णू पुरोधाय शंकरं शरणं ययुः ।। ५२ ।।
स्तुत्वा स्तोत्रैरनेकैश्च शंकरं लोक शंकरम् ।।
प्रसन्नं कृतवंतस्ते महाकोश्यास्तटे शुभे ।। ५३ ।।
कृत्वा च पार्थिवीं मूर्तिं पूजयित्वा विधानतः ।।
तुष्टुवुर्विविधैः स्तोत्रैर्नमस्कारादिभिः क्रमात् ।। ५४ ।।
एवं स्तुतस्तदा शंभुर्देवानां स्तवनादिभिः ।।
सुप्रसन्नतरो भूत्वा तान्सुरानिदमब्रवीत् ।। ५५ ।।
शिव उवाच ।।
हे हरे हे विधे देवा ऋषयश्चाखिला अहम् ।।
प्रसन्नोस्मि वरं ब्रूत किं कार्यं करवाणि वः ।। ५६ ।।
सूत उवाच ।।
इत्युक्ते च तदा तेन शिवेन वचने द्विजाः ।।
सुप्रणम्य करौ बद्ध्वा देवः ऊचुश्शिवं तदा ।। ५७ ।।
देवा ऊचुः ।।
सर्वं जानासि देवेश सर्वेषां मनसि स्थितम् ।।
अन्तर्यामी च सर्वस्य नाज्ञातं विद्यते तव ।। ५८ ।।
तथापि श्रूयतां नाथ स्वदुःखं ब्रूमहे वयम् ।।

त्वदाज्ञया महादेव कृपादृष्ट्या विलोकय ।। ५९ ।।
राक्षसः कर्कटीपुत्रः कुंभकर्णोद्भवो बली ।।
पीडयत्यनिशं देवान्ब्रह्मदत्तवरोर्जितः ।। 4.20.६० ।।
तमिमं जहि भीमाह्वं राक्षसं दुःखदायकम् ।।
कृपां कुरु महेशान विलंबं न कुरु प्रभो ।। ६१ ।।
सूत उवाच ।।
इत्युक्तस्तु सुरैस्सर्वैश्शंभुर्वै भक्तवत्सलः ।।
वधं तस्य करिष्यामीत्युक्त्वा देवांस्ततोऽब्रवीत् ।। ६२ ।।
शंभुरुवाच ।।
कामरूपेश्वरो राजा मदीयो भक्त उत्तमः ।।
तस्मै ब्रूतेति वै देवाः कार्य्यं शीघ्रं भविष्यति ।। ६३ ।।
सुदक्षिण महाराज काम रूपेश्वर प्रभो ।।
मद्भक्तस्त्वं विशेषेण कुरु मद्भजनं रतेः ।। ६४ ।।
दैत्यं भीमाह्वयं दुष्टं ब्रह्मप्राप्तवरोर्जितम् ।।
हनिष्यामि न संदेहस्त्वत्तिरस्कारकारिणम् ।। ६५ ।।
।। सूत उवाच ।।
अथ ते निर्जरास्सर्वे तत्र गत्वा मुदान्विताः ।।
तस्मै महानृपायोचुर्यदुक्तं शंभुना च तत् ।। ६६ ।।
तमित्युक्त्वा च वै देवा आनंदं परमं गताः ।।
महर्षयश्च ते सर्वे ययुश्शीघ्रं निजाश्रमान् ।। ६७ ।।

इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां भीमेश्वरज्योतिर्लिंगमाहात्म्ये
भीमासुरकृतोपद्रववर्णनं नाम विंशोऽध्यायः ।। २० ।।

।। सूत उवाच ।।
शिवोऽपि च गणैस्सार्द्धं जगाम हितकाम्यया ।।
स्वभक्तनिकटं गुप्तस्तस्थौ रक्षार्थमादरात् ।। १ ।।
एतस्मिन्नन्तरे तत्र कामरूपेश्वरेण च ।।
अत्यंतं ध्यानमारब्धं पार्थिवस्य पुरस्तदा ।। २ ।।
केनचित्तत्र गत्वा च राक्षसाय निवेदितम् ।।
राजा किंचित्करोत्येवं त्वदर्थं ह्याभिचारिकम्।।३।।
सूत उवाच ।।
राक्षसस्स च तच्छ्रुत्वा क्रुद्धस्तद्धननेच्छया ।।
गृहीत्वा करवालं च जगाम नृपतिं प्रति ।। ४ ।।
तद्दृष्ट्वा राक्षसस्तत्र पार्थिवादि स्थितं च यत् ।।
तदर्थं तत्स्वरूपं च दृष्ट्वा किंचित्करोत्यसौ ।। ५ ।।
अत एनं बलाददद्य हन्मि सोपस्करं नृपम् ।।
विचार्येति महाक्रुद्धो राक्षसः प्राह तं नृपम् ।। ६ ।।
भीम उवाच ।।
रेरे पार्थिव दुष्टात्मन्क्रियते किं त्वयाधुना ।।
सत्यं वद न हन्यां त्वामन्यथा हन्मि निश्चितम् ।।७।।
सूत उवाच ।।
इति श्रुत्वा वचस्तस्य कामरूपेश्वरश्च सः ।।
मनसीति चिचिन्ताशु शिवविश्वासपूरितः ।। ८ ।।
भविष्यं यद्भवत्येव नास्ति तस्य निवर्तकः ।।
प्रारब्धाधीनमेवात्र प्रारब्धस्स शिवः स्मृतः ।। ९ ।।
कृपालुश्शंकरश्चात्र पार्थिवे वर्तते ध्रुवम् ।।
मदर्थं न करोतीह कुतः कोयं च राक्षसः ।। 4.21.१० ।।
स्वानुरूपां प्रतिज्ञां स सत्यं चैव करिष्यति ।।
सत्यप्रतिज्ञो भगवाञ्छिवश्चेति श्रुतौ श्रुतः ।। ११ ।।
मम भक्तं यदा कश्चित्पीडयत्यतिदारुणः ।।
तदाहं तस्य रक्षार्थं दुष्टं हन्मि न संशयः ।। १२ ।।
एवं धैर्य्यं समालंब्य ध्यात्वा देवं च शंकरम् ।।
प्रार्थयामास सद्भक्त्या मनसैव रसेश्वरः ।। १३ ।।
त्वदीयोऽस्मि महाराज यथेच्छसि तथा कुरु ।।
सत्यं च वचनं ह्यत्र ब्रवीमि कुरु मे हितम् ।। १४ ।।
एवं मनसि स ध्यात्वा सत्यपाशेन मंत्रितः ।।

प्राह सत्यं वचो राजा राक्षसं चावमानयन् ।। १५ ।।
नृप उवाच ।।
भजामि शंकरं देवं स्वभक्तपरिपालकम् ।।
चराचराणां सर्वेषामीश्वरं निर्विकारकम् ।। १६ ।।
सूत उवाच ।।
इति तस्य वचः श्रुत्वा कामरूपेश्वरस्य सः ।।
क्रोधेन प्रचलद्गात्रो भीमो वचनमब्रवीत् ।। १७ ।।
।। भीम उवाच ।।
शंकरस्ते मया ज्ञातः किं करिष्यति वै मम ।।
यो मे पितृव्यकेनैव स्थापितः किंकरो यथा ।। १८ ।।
तद्बलं हि समाश्रित्य विजेतुं त्वं समीहसे ।।
तर्हि त्वया जितं सर्वं नात्र कार्या विचारणा ।। १९ ।।
यावन्मया न दृष्टो हि शंकरस्त्वत्प्रपालकः ।।
तावत्त्वं स्वामिनं मत्वा सेवसे नान्यथा क्वचित् ।। 4.21.२० ।।
मया दृष्टे च तत्सर्वं स्फुटं स्यात्सर्वथा नृप ।।
तस्मात्त्वं वै शिवस्येदं रूपं दूरतरं कुरु ।। २१ ।।
अन्यथा हि भयं तेऽद्य भविष्यति न संशयः ।।
स्वामिनस्ते करं तीक्ष्णं दास्येऽहं भीमविक्रमः ।। २२ ।।
।। सूत उवाच ।।
इति तद्वचनं श्रुत्वा कामरूपेश्वरो नृपः ।।
दृढं शंकरविश्वासो द्रुतं वाक्यमुवाच तम् ।।२३।।
राजोवाच ।।
अहं च पामरो दुष्टो न मोक्ष्ये शंकरं पुनः ।।
सर्वोत्कृष्टश्च मे स्वामी न मां मुंचति कर्हिचित् ।।२४।।
सूत उवाच ।।
एवं वचस्तदा श्रुत्वा तस्य राज्ञश्शिवात्मनः ।।
तं प्रहस्य द्रुतं भीमो भूपतिं राक्षसोऽब्रवीत् ।। २५ ।।
।। भीम उवाच ।।
मत्तो भिक्षयते नित्यं स किं जानाति स्वाकृतिम् ।।
योगिनां का च निष्ठा वै भक्तानां प्रतिपालने ।।२६।।
इति कृत्वा मतिं त्वं च दूरतो भव सर्वथा।।
अहं च तव स स्वामी युद्धं वै करवावहे ।। २७ ।।
सूत उवाच ।।

इत्युक्तस्य नृपश्रेष्ठश्शंभुभक्तो दृढव्रतः ।।
प्रत्युवाचाभयो भीमं दुःखदं जगतां सदा ।। २८ ।।
राजोवाच ।।
शृणु राक्षस दुष्टात्मन्मया कर्तुं न शक्यते ।।
त्वया विक्रियते तर्हि कुतस्त्वं शक्तिमानसि ।। २९ ।।
सूत उवाच ।।
इत्युक्तस्सैन्यमादाय राजानं परिभर्त्स्य तम् ।।
करालं करवालं च पार्थिवे प्राक्षिपत्तदा ।। 4.21.३० ।।
पश्य त्वं स्वामिनोऽद्यैव बलं भक्तसुखावहम् ।।
इत्युवाच विहस्यैव राक्षसैस्स महाबलः ।। ३१ ।।
करवालः पार्थिवं च यावत्स्पृशति नो द्विजाः ।।
यावच्च पार्थिवात्तस्मादाविरासीत्स्वयं हरः ।। ३२ ।।
पश्य भीमेश्वरोहं च रक्षार्थं प्रकटोऽभवम् ।।
मम पूर्वव्रतं ह्येतद्रक्ष्यो भक्तो मया सदा ।। ३३ ।।
एतस्मात्पश्य मे शीघ्रं बलं भक्तसुखावहम् ।।
इत्युक्त्वा स पिनाकेन करवालो द्विधा कृतः ।। ३४ ।।
पुनश्चैव त्रिशूलं स्वं चिक्षिपे तेन रक्षसा ।।
तच्छूलं शतधा नीतमपि दुष्टस्य शंभुना ।। ३५ ।।
पुनश्शक्तिश्च निःक्षिप्ता तेन शंभूपरि द्विजाः ।।
शंभुना सापि बाणैस्स्वैर्लक्षधा च कृता द्रुतम् ।। ३६ ।।
पट्टिशश्च ततस्तेन निःक्षिप्तो हि शिवोपरि ।।
शिवेन स त्रिशूलेन तिलशश्च कृतं क्षणात् ।।३७।।
ततश्शिवगणानां च राक्षसानां परस्परम् ।।
युद्धमासीत्तदा घोरं पश्यतां दुःखकावहम् ।।३८।।
ततश्च पृथिवी सर्वा व्याकुला चाभवत्क्षणात् ।।
समुद्राश्च तदा सर्वे चुक्षुभुस्समहीधराः ।। ३९ ।।
देवाश्च ऋषयस्सर्वे बभूवुर्विकला अति ।।
ऊचुः परस्परं चेति व्यर्थं वै प्रार्थितश्शिवः ।। 4.21.४० ।।
नारदश्च समागत्य शंकरं दुःखदाहकम् ।।
प्रार्थयामास तत्रैव सांजलिर्नतमस्तकः ।। ४१ ।।
नारद उवाच ।।
क्षम्यतां क्षम्यतां नाथ त्वया विभ्रमकारक ।।
तृणेकश्च कुठारो वै हन्यतां शीघ्रमेव हि ।। ४२ ।।

इति संप्रार्थितश्शंभुः सर्वान्रक्षोगणान्प्रभुः ।।
हुंकारेणैव चास्त्रेण भस्मसात्कृतवांस्तदा ।। ४३ ।।
सर्वे ते राक्षसा दग्धाः शंकरेण क्षणं मुने ।।
बभूवुस्तत्र सर्वेषां देवानां पश्यताद्भुतम्।।४४।।
दावानलगतो वह्निर्यथा च वनमादहेत् ।।
तथा शिवेन क्रुद्धेन राक्षसानां बलं क्षणात्।।४५।।
भीमस्यैव च किं भस्म न ज्ञातं केनचित्तदा ।।
परिवारयुतो दग्धो नाम न श्रूयते क्वचित् ।। ४६ ।।
ततश्शिवस्य कृपया शांतिं प्राप्ता मुनीश्वराः ।।
देवास्सर्वे च शक्राद्यास्स्वास्थ्यं प्रापाखिलं जगत् ।।४७।।
क्रोधज्वाला महेशस्य निस्ससार वनाद्वनम् ।।
राक्षसानां च तद्भस्म सर्वं व्याप्तं वनेऽखिलम् ।। ४८ ।।
ततश्चौषधयो जाता नानाकार्यकरास्तथा ।।
रूपान्तरं ततो नृणां भवेद्वेषांतरं तथा ।।४९।।
भूतप्रेतपिशाचादि दूरतश्च ततो व्रजेत् ।।
तन्न कार्यं च यच्चैव ततो न भवति द्विजाः ।। 4.21.५० ।।
ततः प्रार्थितश्शम्भुर्मुनिभिश्च विशेषतः ।।
स्थातव्यं स्वामिना ह्यत्र लोकानां सुखहेतवे ।। ५१ ।।
अयं वै कुत्सितो देश अयोध्यालोकदुःखदः ।।
भवंतं च तदा दृष्ट्वा कल्याणं संभविष्यति ।। ५२ ।।
भीमशंकरनामा त्वं भविता सर्वसाधकः ।।
एतल्लिंगं सदा पूज्यं सर्वापद्विनिवारकम् ।। ५३ ।।
सूत उवाच।।
इत्येवं प्रार्थितश्शम्भुर्लोकानां हितकारकः ।।
तत्रैवास्थितवान्प्रीत्या स्वतन्त्रो भक्तवत्सलः ।।५४।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां भीमेश्वरज्योतिर्लिङ्गोत्पत्तिमाहात्म्यवर्णनं नामैकविंशोऽध्यायः ।।२१।।

सूत उवाच ।।
अतःपरं प्रवक्ष्यामि श्रूयतामृषिसत्तमाः ।।
विश्वेश्वरस्य माहात्म्यं महापातकनाशनम् ।।१।।
यदिदं दृश्यते किंचिज्जगत्यां वस्तुमात्रकम्।।
चिदानन्द स्वरूपं च निर्विकारं सनातनम् ।। २ ।।
तस्यैव कैवल्यरतेर्द्वितीयेच्छा ततोभवत् ।।
स एव सगुणो जातश्शिव इत्यभिधीयते ।।३।।
स एव हि द्विधा जातः पुंस्त्रीरूपप्रभेदतः ।।
यः पुमान्स शिवः ख्यातः स्त्रीशक्तिस्सा हि कथ्यते ।। ४ ।।
चिदानन्देस्वरूपाभ्यां पुरुषावपि निर्मितौ ।। ५ ।।
अदृष्टाभ्यां तदा ताभ्यां स्वभावान्मुनिसत्तमाः ।।
तावदृष्ट्वा तदा तौ च स्वमातृपितरौ द्विजाः ।।६।।
महासंशयमापन्नौ प्रकृतिः पुरुषश्च तौ ।।
तदा वाणी समुत्पन्ना निर्गुणात्परमात्मनः ।।
तपश्चैव प्रकर्तव्यं ततस्सृष्टिरनुत्तमा ।।७।।
प्रकृतिपुरुषाबूचतुः ।।
तपसस्तु स्थलंनास्ति कुत्रावाभ्यां प्रभोऽधुना।।
स्थित्वा तपः प्रकर्तव्यं तव शासनतश्शिव ।। ८ ।।
ततश्च तेजसस्सारं पंचक्रोशात्मकं शुभम्।।
सर्वोपकरणैर्युक्तं सुंदरं नगरं तथा।।९।।
निर्माय प्रेषितं तत्स्वं निर्गुणेन शिवेन च।।
अंतरिक्षे स्थितं तच्च पुरुषस्य समीपतः।।4.22.१०।।
तदधिष्ठाय हरिणा सृष्टिकामनया ततः ।।
बहुकालं तपस्तप्तं तद्ध्यानमवलंब्य च।।११।।
श्रमेण जलधारश्च विविधाश्चाभवंस्तदा ।।
ताभिर्व्याप्तं च तच्छून्यं नान्यत्किंचिददृश्यत ।।१२।।
ततश्च विष्णुना दृष्टं किमेतद्दृश्यतेऽद्भुतम्।।
इत्याश्चर्यं तदा दृष्ट्वा शिरसः कम्पनं कृतम् ।। १३ ।।
ततश्च पतितः कर्णान्मणिश्च पुरतः प्रभो ।।
तद्बभूव महत्तीर्थं नामतो मणिकर्णिका।।१४।।
जलौघे प्लाव्यमाना सा पंचक्रोशी यदाभवत ।।
निर्गुणेन शिवेनाशु त्रिशूलेन धृता तदा ।। १५ ।।
विष्णुस्तत्रैव सुष्वाप प्रकृत्या स्वस्त्रिया सह ।।

तन्नाभिकमलाज्जातो ब्रह्मा शंकरशासनात् ।। १६ ।।
शिवाज्ञां स समासाद्य सृष्टिचक्रेऽद्भुता तदा ।।
चतुर्द्दशमिता लोका ब्रह्मांडे यत्र निर्मिताः ।।१७।।
योजनानां च पंचाशत्कोटिसंख्याप्रमाणतः।।
ब्रह्मांडस्यैव विस्तारो मुनिभिः परिकीर्तितः।।१८।।
ब्रह्मांडे कर्मणा बद्धा प्राणिनो मां कथं पुनः ।।
प्राप्स्यंतीति विचिन्त्यैतत्पंचक्रोशी विमोचिता ।। १९ ।।
इयं च शुभदा लोके कर्म नाशकरी मता ।।
मोक्षप्रकाशिका काशी ज्ञानदा मम सुप्रिया ।।4.22.२०।।
अविमुक्तं स्वयं लिंगं स्थापितं परमात्मना।।
न कदाचित्त्वया त्याज्यमिदं क्षेत्रं ममांशक ।।२१।।
इत्युक्त्वा च त्रिशूलात्स्वादवतार्य्य हरस्स्वयम् ।।
मोचयामास भुवने मर्त्यलोके हि काशिकाम् ।। २२ ।।
ब्रह्मणश्च दिने सा हि न विनश्यति निश्चितम् ।।
तदा शिवस्त्रिशूलेन दधाति मुनयश्च ताम् ।।२३।।
पुनश्च ब्रह्मणा सृष्टौ कृतायां स्थाप्यते द्विजाः ।।
कर्मणा कर्षणाच्चैव काशीति परिपठ्यते।।२४।।
अविमुक्तेश्वरं लिंगं काश्यां तिष्ठति सर्वदा।।
मुक्तिदातृ च लोकानां महापातकिनामपि ।। २५ ।।
अन्यत्र प्राप्यते मुक्तिस्सारूप्यादिर्मुनीश्वराः ।।
अत्रैव प्राप्यते जीवैः सायुज्या मुक्तिरुत्तमा ।। २६ ।।
येषां क्वापि गतिर्नास्ति तेषां वाराणसी पुरी।।
पंचक्रोशी महापुण्या हत्याकोटिविनाशनी ।।२७।।
अमरा मरणं सर्वे वांछतीह परे च के ।।
भुक्तिमुक्तिप्रदा चैषा सर्वदा शंकरप्रिया ।। २८ ।।
ब्रह्मा च श्लाघते चामूं विष्णुस्सिद्धाश्च योगिनः ।।
मुनयश्च तथैवान्ये त्रिलोकस्था जनाः सदा।।२९।।
काश्याश्च महिमानं वै वक्तुं वर्षशतैरपि।।
शक्नोम्यहं न सर्वं हि यथाशक्ति ब्रुवे ततः ।। 4.22.३० ।।
कैलासस्य पतिर्यो वै ह्यंतस्सत्त्वो बहिस्तमाः ।।
कालाग्निर्नामतः ख्यातो निर्गुणो गुणवान्भवः ।।
प्रणिपातैरनेकैश्च वचनं चेदमब्रवीत् ।।।। ३१ ।।
।। रुद्र उवाच ।।

विश्वेश्वर महेशान त्वदीयोऽस्मि न संशयः ।।
कृपां कुरु महादेव मयि त्वं साम्ब आत्मजे ।। ३२ ।।
स्थातव्यं च सदात्रैव लोकानां हितकाम्यया ।।
तारयस्व जगन्नाथ प्रार्थयामि जगत्पते ।।३३।।
सूत उवाच।।
अविमुक्तेऽपि दान्तात्मा तं संप्रार्थ्य पुनः पुनः ।।
नेत्राश्रूणि प्रमुच्यैव प्रीतः प्रोवाच शंकरम् ।।३४।।
अविमुक्त उवाच ।।
देवदेव महादेव कालामयसुभेषज।।
त्वं त्रिलोकपतिस्सत्यं सेव्यो ब्रह्माच्युतादिभिः ।।३५।।
काश्यां पुर्यां त्वया देव राजधानी प्रगृह्यताम् ।।
मया ध्यानतया स्थेयमचिंत्य सुखहेतवे ।।३६।।
मुक्तिदाता भवानेव कामदश्च न चापरः ।।
तस्मात्त्वमुपकाराय तिष्ठोमासहितस्सदा ।।३७।।
जीवान्भवाब्धेरखिलांस्तारय त्वं सदाशिव ।।
भक्तकार्य्यं कुरु हर प्रार्थयामि पुनःपुनः ।। ३८ ।।
।। सूत उवाच ।।
इत्येवं प्रार्थितस्तेन विश्वनाथेन शंकरः।।
लोकानामुपकारार्थं तस्थौ तत्रापि सर्वराट्।।३९।।
यद्दिनं हि समारभ्य हरः काश्यामुपागतः ।।
तदारभ्य च सा काशी सर्वश्रेष्ठतराभवत् ।। 4.22.४० ।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां विश्वेश्वरमाहात्म्ये काश्यां रुद्रागमनवर्णनंनाम द्वाविंशोऽध्यायः ।। २२ ।।

ऋषय ऊचुः ।।
एवं वाराणसी पुण्या यदि सूत महापुरी ।।
तत्प्रभावं वदास्माकमविमुक्तस्य च प्रभो ।। १ ।।
सूत उवाच।।
वक्ष्ये संक्षेपतस्सम्यग्वाराणस्यास्सुशोभनम् ।।
विश्वेश्वरस्य माहात्म्यं श्रूयतां च मुनीश्वराः ।।२।।
कदाचित्पार्वती देवी शङ्करं परया मुदा ।।
लोककामनयापृच्छन्माहात्म्यमविमुक्तयोः ।।३।।
पार्वत्युवाच ।।
अस्य क्षेत्रस्य माहात्म्यं वक्तुमर्हस्य शेषतः ।।
ममोपरि कृपां कृत्वा लोकानां हितकाम्यया ।। ४ ।।
सूत उवाच ।।
देव्यास्तद्वचनं श्रुत्वा देवदेवो जगत्प्रभुः।।
प्रत्युवाच भवानीं तां जीवानां प्रियहेतवे ।।५।।
परमेश्वर उवाच।।
साधु पृष्टं त्वया भद्रे लोकानां सुखदं शुभम् ।।
कथयामि यथार्थं वै महा त्म्यमविमुक्तयोः ।।६।।
इदं गुह्यतमं क्षेत्रं सदा वाराणसी मम।।
सर्वेषामेव जंतूनां हेतुर्मोक्षस्य सर्वथा ।।७।।
अस्मिन्सिद्धास्सदा क्षेत्रे मदीयं व्रतमाश्रिताः ।।
नानालिंगधरा नित्यं मम लोकाभिकांक्षिणः ।। ८ ।।
अभ्यस्यंति महायोगं जितात्मानो जितेन्द्रियाः ।।
परं पाशुपतं श्रौतं भुक्तिमुक्तिफलप्रदम्।।९।।
रोचते मे सदा वासो वाराणस्यां महेश्वरि।।
हेतुना येन सर्वाणि विहाय शृणु तद्ध्रुवम्।।4.23.१०।।
यो मे भक्तश्च विज्ञानी तावुभौ मुक्तिभागिनौ ।।
तीर्थापेक्षा च न तयोर्विहिता विहिते समौ ।। ११ ।।
जीवन्मुक्तौ तु तौ ज्ञेयौ यत्रकुत्रापि वै मृतौ ।।
प्राप्नुतो मोक्षमाश्वेव मयोक्तं निश्चितं वचः ।। १२ ।।
अत्र तीर्थे विशेषोस्त्यविमुक्ताख्ये परोत्तमे ।।
श्रूयतां तत्त्वया देवि परशक्ते सुचित्तया।।१३।।
सर्वे वर्णा आश्रमाश्च बालयौवनवार्द्धकाः ।।
अस्यां पुर्यां मृताश्चेत्स्युर्मुक्ता एव न संशयः ।।१४।।

अशुचिश्च शुचिर्वापि कन्या परिणता तथा ।।
विधवा वाथ वा वंध्या रजोदोषयुतापि वा ।।१५।।
प्रसूता संस्कृता कापि यादृशी तादृशी द्विजाः ।।
अत्र क्षेत्रे मृता चेत्स्यान्मोक्षभाङ् नात्र संशयः ।।१६।।
स्वेदजश्चांडजो वापि द्युद्भिज्जोऽथ जरायुजः ।
मृतो मोक्षमवाप्नोति यथात्र न तथा क्वचित् ।।१७।।
ज्ञानापेक्षा न चात्रैव भक्त्यपेक्षा न वै पुनः ।।
कर्मापेक्षा न देव्यत्र दानापेक्षा न चैव हि ।। १८ ।।
संस्कृत्यपेक्षा नैवात्र ध्यानापेक्षा न कर्हिचित् ।।
नामापेक्षार्चनापेक्षा सुजातीनां तथात्र न ।। १९ ।।
मम क्षेत्रे मोक्षदे हि यो वा वसति मानवः ।।
यथा तथा मृतः स्याच्चेन्मोक्षमाप्नोति निश्चितम् ।। 4.23.२० ।।
एतन्मम पुरं दिव्यं गुह्याद्गुह्यतरं प्रिये ।।
ब्रह्मादयोऽपि जानंति माहात्म्यं नास्य पार्वति ।। २१ ।।
महत्क्षेत्रमिदं तस्मादविमुक्तमिति स्मृतम् ।।
सर्वेभ्यो नैमिषादिभ्यः परं मोक्षप्रदं मृते ।। २२ ।।
धर्मस्योपनिषत्सत्यं मोक्षस्योपनिषत्समम् ।।
क्षेत्रतीर्थोपनिषदमविमुक्तं विदुर्बुधाः ।। २३ ।।
कामं भुंजन्स्वपन्क्रीडन्कुर्वन्हि विविधाः क्रियाः ।।
अविमुक्ते त्यजन्प्राणाञ्जंतुर्मोक्षाय कल्पते ।। २४ ।।
कृत्वा पापसहस्राणि पिशाचत्वं वरं नृणाम् ।।
न च क्रतुसहस्रत्वं स्वर्गे काशीं पुरीं विना ।। २५ ।।
तस्मात्सर्वप्रयत्नेन सेव्यते काशिका पुरी ।।
अव्यक्तलिंगं मुनिभिर्ध्यायते च सदाशिवः ।। २६ ।।
यद्यत्फलं समुद्दिश्य तपन्त्यत्र नरः प्रिये ।।
तेभ्यश्चाहं प्रय च्छामि सम्यक्तत्तत्फलं ध्रुवम्।।२७।।
सायुज्यमात्मनः पश्चादीप्सितं स्थानमेव च।।
न कुतश्चित्कर्मबंधस्त्यजतामत्र वै तनुम्।।२८।।
ब्रह्मा देवर्षिभिस्सार्द्धं विष्णुर्वापि दिवाकरः ।।
उपासते महात्मानस्सर्वे मामिह चापरे ।। २९ ।।
विषयासक्तचित्तोऽपि त्यक्त धर्मरुचिर्नरः ।।
इह क्षेत्रे मृतो यो वै संसारं न पुनर्विशेत् ।। 4.23.३० ।।
किं पुनर्निर्ममा धीरासत्त्वस्था दंभवर्जिताः ।।

कृतिनश्च निरारंभास्सर्वे ते मयि भाविताः ।। ३१ ।।
जन्मांतरसहस्रेषु जन्म योगी समाप्नुयात् ।।
तदिहैव परं मोक्षं मरणादधिगच्छति ।। ३२ ।।
अत्र लिंगान्यनेकानि भक्तैस्संस्थापितानि हि ।।
सर्वकामप्रदानीह मोक्षदानि च पार्वति ।। ३३ ।।
पंचक्रोशं चतुर्दिक्षु क्षेत्रमेतत्प्रकीर्तितम् ।।
समंताच्च तथा जंतोर्मृतिकालेऽमृतप्रदम् ।। ३४ ।।
अपापश्च मृतो यो वै सद्यो मोक्षं समश्नुते ।।
सपापश्च मृतौ यस्स्यात्कायव्यूहान्समश्नुते ।। ३५ ।।
यातनां सोनुभूयैव पश्चान्मोक्षमवाप्नुयात् ।।
पातकं योऽविमुक्ताख्ये क्षेत्रेऽस्मिन्कुरुते ध्रुवम् ।। ३६ ।।
भैरवीं यातनां प्राप्य वर्षाणामयुते पुनः ।।
ततो मोक्षमवाप्नोति भुक्त्वा पापं च सुन्दरि ।। ।। ३७ ।।
इति ते च समाख्याता पापाचारे च या गतिः ।।
एवं ज्ञात्वा नरस्सम्यक्सेवयेदविमुक्तकम् ।। ३८ ।।
कृतकर्मक्षयो नास्ति कल्पकोटिशतैरपि ।।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ।। ३९ ।।
केवलं चाशुभं कर्म नरकाय भवेदिह ।।
शुभं स्वर्गाय जायेत द्वाभ्यां मानुष्यमीरितम् ।। 4.23.४० ।।
जन्म सम्यगसम्यक् च न्यूनाधिक्ये भवेदिह ।।
उभयोश्च क्षयो मुक्तिर्भवेत्सत्यं हि पार्वति ।। ४१ ।।
कर्म च त्रिविधं प्रोक्तं कर्मकाण्डे महेश्वरि ।।
संचितं क्रियमाणं च प्रारब्धं चेति बंधकृत् ।। ४२ ।।
पूर्वजन्मसमुद्भूतं संचितं समुदाहृतम् ।।
भुज्यते च शरीरेण प्रारब्धं परिकीर्तितम् ।। ४३ ।।
जन्मना यच्च क्रियते कर्म सांप्रतम् ।।
शुभाशुभं च देवेशि क्रियमाणं विदुर्बुधाः ।। ४४ ।।
प्रारब्धकर्मणो भोगात्क्षयश्चैव चान्यथा ।।
उपायेन द्वयोर्नाशः कर्मणोः पूजनादिना ।। ४५ ।।
सर्वेषां कर्मणां नाशो नास्ति काशीं पुरीं विना ।।
सर्वं च सुलभं तीर्थं दुर्ल्लभा काशिका पुरी ।।४६।।
पूर्वजन्मकृतं चेद्वै काशीदर्शनमादरात् ।।
तदा काशीं च संप्राप्य लभेन्मृत्युं न चान्यथा ।।४७।।

काशीं प्राप्य नरो यस्तु गंगायां स्नानमाचरेत् ।।
तदा च क्रियमाणस्य संचितस्यापि संक्षयः ।। ४८ ।।
प्रारब्धं न विना भोगो नश्य तीति सुनिश्चितम् ।।
मृतिश्च तस्य संजाता तदा तस्य क्षयो भवेत् ।। ४९ ।।
पूर्वं चैव कृता काशी पश्चात्पापं समाचरेत् ।।
तद्बीजेन बलवता नीयते काशिका पुनः ।।4.23.५०।।
तदा सर्वाणि पापानि भस्मसाच्च भवंति हि ।।
तस्मात्काशीं नरस्सेवेत्कर्मनिर्मूलनीं ध्रुवम् ।। ।।५१।।
एकोऽपि ब्राह्मणो येन काश्यां संवासितः प्रिये ।।
काशीवासमवाप्यैव ततो मुक्तिं स विंदति ।।५२।।
काश्यां यो वै मृतश्चैव तस्य जन्म पुनर्नहि ।।
समुद्दिश्य प्रयागे च मृतस्य कामनाफले ।। ५३ ।।
संयोगश्च तयोश्चेत्स्यात्काशीजन्यफलं वृथा ।।
यदि न स्यात्तयोर्योगस्तीर्थराजफलं वृथा।।५४।।
तस्मान्मच्छासनाद्विष्णुस्सृष्टिं साक्षाद्धि नूतनाम् ।।
विधाय मनसोद्दिष्टां तत्सिद्धिं यच्छति ध्रुवम् ।। ५५ ।।
सूत उवाच ।।
इत्यादि बहुमाहात्म्यं काश्यां वै मुनिसत्तमाः ।।
तथा विश्वेश्वरस्यापि भुक्तिमुक्तिप्रदं सताम् ।। ५६ ।।
अतः परं प्रवक्ष्यामि माहात्म्यं त्र्यंबकस्य च ।।
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते मानवः क्षणात् ।। ५७ ।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां
काशीविश्वेश्वरज्योतिर्लिङ्गमाहात्म्यवर्णनंनामत्रयोविंशोध्याय. ।। २३।।

सूत उवाच ।।
श्रूयतामृषयः श्रेष्ठाः कथां पापप्रणाशिनीम्।।
कथयामि यथा व्यासात्सद्गुरोश्च श्रुता मया।।१।।
पुरा ऋषिवरश्चासीद्गौतमो नाम विश्रुतः ।।
अहल्या नाम तस्यासीत्पत्नी परमधार्मिकी ।। २ ।।
दक्षिणस्यां दिशि हि यो गिरिर्ब्रह्मेति संज्ञकः ।।
तत्र तेन तपस्तप्तं वर्षाणाम युतं तथा ।। ३ ।।
कदाचिच्च ह्यनावृष्टिरभवत्तत्र सुव्रताः ।।
वर्षाणां च शतं रौद्री लोका दुःखमुपागताः ।। ४ ।।
आर्द्रं च पल्लवं न स्म दृश्यते पृथिवीतले ।।
कुतो जलं विदृश्येत जीवानां प्राणधारकम् ।। ५ ।।
तदा ते मुनयश्चैव मनुष्याः पशवस्तथा ।।
पक्षिणश्च मृगास्तत्र गताश्चैव दिशो दश ।। ६ ।।
तां दृष्ट्वा चर्षयो विप्राः प्राणायामपरायणाः ।।
ध्यानेन च तदा केचित्कालं निन्युस्सुदारुणम् ।। ७ ।।
गौतमोऽपि स्वयं तत्र वरुणार्थे तपश्शुभम् ।।
चकार चैव षण्मासं प्राणायामपरायणः ।। ८ ।।
ततश्च वरुणस्तस्मै वरं दातुं समागताः ।।
प्रसन्नोऽस्मि वरं ब्रूहि ददामि च वचोऽब्रवीत् ।।९।।
ततश्च गौतमस्तं वै वृष्टिं च प्रार्थयत्तदा ।।
ततस्स वरुणस्तं वै प्रत्युवाच मुनिं द्विजाः ।। 4.24.१० ।।
वरुण उवाच ।।
देवाज्ञां च समुल्लंघ्य कथं कुर्यामहं च ताम् ।।
अन्यत्प्रार्थय सुज्ञोऽसि यदहं करवाणि ते ।। ११ ।।
सूत उवाच ।।
इत्येतद्वचनं तस्य वरुणस्य महात्मनः ।।
परोपकारी तच्छ्रुत्वा गोतमो वाक्यमब्रवीत ।। १२ ।।
गौतम उवाच ।।
यदि प्रसन्नो देवेश यदि देयो वरो मम ।।
यदहं प्रार्थयाम्यद्य कर्तव्यं हि त्वया तथा ।। १३ ।।
यतस्त्वं जलराशीशस्तस्माद्देयं जलं मम ।।
अक्षयं सर्वदेवेश दिव्यं नित्यफलप्रदम् ।। १४ ।।
सूत उवाच ।।

इति संप्रार्थितस्तेन वरुणो गौतमेन वै ।।
उवाच वचनं तस्मै गर्तश्च क्रियतां त्वया ।। १५ ।।
इत्युक्ते च कृतस्तेन गर्त्तो हस्तप्रमाणतः ।।
जलेन पूरितस्तेन दिव्येन वरुणेन सः ।। १६ ।।
अथोवाच मुनिं देवो वरुणो हि जलाधिपः ।।
गौतमं मुनिशार्दूलं परोपकृतिशालिनम् ।। १७ ।।
वरुण उवाच ।।
अक्षय्यं च जलं तेऽस्तु तीर्थभूतं महामुने ।।
तव नाम्ना च विख्यातं क्षितावेतद्भविष्यति ।। १८ ।। ।
अत्र दत्तं हुतं तप्तं सुराणां यजनं कृतम् ।।
पितॄणां च कृतं श्राद्धं सर्वमेवाक्षयं भवेत्।।१९।।
सूत उवाच।।
इत्युक्तांतर्द्दधे देवस्स्तुतस्तेन महर्षिणा।।
गौतमोऽपि सुखं प्राप कृत्वान्योपकृतिं मुनिः ।। 4.24.२० ।।
मद्दत्तो ह्याश्रयः पुंसां महत्त्वायोपजायते ।।
महांतस्तत्स्वरूपं च पश्यंति नेतरेऽशुभाः।।२१।।
यादृङ्नरं च सेवेत तादृशं फलमश्नुते।।
महतस्सेवयोच्च त्वं क्षुद्रस्य क्षुद्रतां तथा ।।२२।।
सिंहस्य मंदिरे सेवा मुक्ताफलकरी मता ।।
शृगालमंदिरे सेवा त्वस्थिलाभकरी स्मृता।।२३।।
उत्तमानां स्वभावोयं परदुःखासहिष्णुता ।।
स्वयं दुखं च संप्राप्तं मन्यतेन्यस्य वार्यते।। २४ ।।
वृक्षाश्च हाटकं चैव चंदनं चेक्षुकस्तथा ।।
एते भुवि परार्थे च दक्षा एवं न केचन ।।२५।।
दयालुरमदस्पर्श उपकारी जितेन्द्रियः ।।
एतैश्च पुण्यस्तम्भैस्तु चतुर्भिर्धार्य्यते मही ।।२६।।
ततश्च गौतमस्तत्र जलं प्राप्य सुदुर्लभम् ।।
नित्यनैमित्तिकं कर्म चकार विधिवत्तदा।।२७।।
ततो व्रीहीन्यवांश्चैव नीवारानप्यनेकधा।।
वापयामास तत्रैव हवनार्थं मुनीश्वरः।।२८।।
धान्यानि विविधानीह वृक्षाश्च विविधास्तथा ।।
पुष्पाणि च फलान्येव ह्यासंस्तत्रायनेकशः ।।२९।।
तच्छ्रुत्वा ऋषयश्चान्ये तत्राया तास्सहस्रशः ।।

पशवः पक्षिणश्चान्ये जीवाश्च बहवोऽगमन् ।।4.24.३०।।
तद्वनं सुन्दरं ह्यासीत्पृथिव्यां मंडले परम् ।।
तदक्षयकरायोगादनावृष्टिर्न दुःखदा ।। ३१ ।।
ऋषयोऽपि वने तत्र शुभकर्मपरायणाः ।।
वासं चक्रुरनेके च शिष्यभार्य्यासुतान्विताः।।३२।।
धान्या नि वापयामासुः कालक्रमणहेतवे।।
आनंदस्तद्वने ह्यासीत्प्रभावाद्गौतमस्य च ।। ३३ ।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसं हितायां त्र्यंबकेश्वरमाहात्म्ये गौतमप्रभाववर्णनं नाम चतुर्विंशोऽध्यायः ।। २४ ।।

।। सूत उवाच ।।
कदाचिद्गौतमेनैव जलार्थं प्रेषिता निजाः ।।
शिष्यास्तत्र गता भक्त्या कमंडलुकरा द्विजाः ।।१।।
शिष्याञ्जलसमीपे तु गतान्दृष्ट्वा न्यषेधयन् ।।
जलार्थमगतांस्तत्र चर्षिपत्न्योप्यनेकशः ।। २ ।।
ऋषिपत्न्यो वयं पूर्वं ग्रहीष्यामो विदूरतः ।।
पश्चाच्चैव जलं ग्राह्यमित्येवं पर्यभर्त्सयन्।।३।।
परावृत्य तदा तैश्च ऋषिपत्न्यै निवेदितम् ।।
सा चापि तान्समादाय समाश्वास्य च तैः स्वयम्।। ४ ।।
जलं नीत्वा ददौ तस्मै गौतमाय तपस्विनी ।।
नित्यं निर्वाहयामास जलेन ऋषिसत्तमः ।।५।।
ताश्चैवमृषिपत्न्यस्तु क्रुद्धास्तां पर्यभर्त्सयन् ।।
परावृत्य गतास्सर्वास्तूटजान्कुटिलाशयाः ।। ६ ।।
स्वाम्यग्रे विपरीतं च तद्वृत्तं निखिलं ततः।।
दुष्टाशयाभिः स्त्रीभिश्च ताभिर्वै विनिवेदितम् ।।७।।
अथ तासां वचः श्रुत्वा भाविकर्मवशात्तदा ।।
गौतमाय च संकुद्धाश्चासंस्ते परमर्षयः ।।८।।
विघ्नार्थं गौतमस्यैव नानापूजोपहारकैः।।
गणेशं पूजयामासुस्संकुद्धास्ते कुबुद्धयः ।। ९ ।।
आविर्बभूव च तदा प्रसन्नो हि गणेश्वरः ।।
उवाच वचनं तत्र भक्ताधीनः फलप्रदः ।। 4.25.१० ।।
गणेश उवाच ।।
प्रसन्नोऽस्मि वरं ब्रूत यूयं किं करवाण्यहम् ।।
तदीयं तद्वचः श्रुत्वा ऋषयस्तेऽबुवंस्तदा ।। ११ ।।
ऋषय ऊचुः ।।
त्वया यदि वरो देयो गौतमस्स्वाश्रमाद्बहिः ।।
निष्कास्यं नो ऋषिभिः परिभर्त्स्य तथा कुरु ।। १२ ।।
सूत उवाच ।।
स एवं प्रार्थितस्तैस्तु विहस्य वचनं पुनः ।।
प्रोवाचेभमुखः प्रीत्या बोधयंस्तान्सतां गतिः ।। १३ ।।
गणेश उवाच ।।
श्रूयतामृषयस्सर्वे युक्तं न क्रियतेऽधुना ।।
अपराधं विना तस्मै क्रुध्यतां हानिरेव च ।। १४ ।।

उपस्कृतं पुरा यैस्तु तेभ्यो दुःखं हितं न हि ।।
यदा च दीयते दुःखं तदा नाशो भवेदिह ।। १५ ।।
ईदृशं च तपः कृत्वा साध्यते फलमुत्तमम् ।।
शुभं फलं स्वयं हित्वा साध्यते नाहितं पुनः ।। १६ ।।
सूत उवाच ।।
इत्येवं वचनं श्रुत्वा तस्य ते मुनिसत्तमाः ।।
बुद्धिमोहं तदा प्राप्ता इदमेव वचोऽब्रुवन् ।। १७ ।।
ऋषय ऊचुः ।।
कर्तव्यं हि त्वया स्वामिन्निदमेव न चान्यथा ।।
इत्युक्तस्तु तदा देवो गणेशो वाक्यमब्रवीत् ।। १८ ।।
गणेश उवाच ।।
असाधुस्साधुतां चैव साधुश्चासाधुतां तथा ।।
कदाचिदपि नाप्नोति ब्रह्मोक्तमिति निश्चितम् ।। १९ ।।
यदा च भवतां दुःखं जातं चानशनात्पुरा ।।
तदा सुखं प्रदत्तं वै गौतमेन महर्षिणा ।। 4.25.२० ।।
इदानीं वै भवद्भिश्च तस्मै दुःखं प्रदीयते ।।
नेतद्युक्ततमं लोके सर्वथा सुविचार्यताम् ।।२१।।
स्त्रीबलान्मोहिता यूयं न मे वाक्यं करिष्यथ ।।
एतद्धिततमं तस्य भविष्यति न संशयः ।।२२।।
पुनश्चायमृषिश्रेष्ठो दास्यते वस्सुखं ध्रुवम् ।।
तारणं न च युक्तं स्याद्वरमन्यं वृणीत वै ।। २३ ।।
सूत उवाच ।।
इत्येवं वचनं तेन गणेशेन महात्मना ।।
यद्यप्युक्तमृषिभ्यश्च तदप्येते न मेनिरे ।। २४ ।।
भक्ताधीनतया सोथ शिवपुत्रोब्रवीत्तदा ।।
उदासीनेन मनसा तानृषीन्दुष्टशेमुषीन् ।। २५ ।।
गणेश उवाच ।।
भवद्भिः प्रार्थ्यते यच्च करिष्येऽहं तथा खलु ।।
पश्चाद्भावि भवेदेव इत्युक्त्वांतर्दधे पुनः ।। २६ ।।
गौतमस्स न जानाति मुनीनां वै दुराशयम् ।।
आनन्दमनसा नित्यं पत्न्या कर्म चकार तत् ।। २७ ।।
तदन्तरे च यज्जातं चरितं वरयोगतः ।।
तद्दुष्टर्षिप्रभावात्तु श्रूयतां तन्मुनीश्वराः ।। २८ ।।

गौतमस्य च केदारे तत्रासन्व्रीहयो यवाः ।।
गणेशस्तत्र गौर्भूत्वा जगाम किल दुर्बला ।।२९।।
कंपमाना च सा गत्वा तत्र तद्वरयोगतः ।।
व्रीहीन्संभक्षयामास यवांश्च मुनिसत्तमाः ।।4.25.३०।।
एतस्मिन्नन्तरे दैवाद्गौतमस्तत्र चागतः ।।
स दयालुस्तृणस्तंम्बैर्वारयामास तां तदा ।।३१।।
तृणस्तंबेन सा स्पृष्टा पपात पृथिवीतले ।।
मृता च तत्क्षणादेव तदृषेः पश्यतस्तदा ।।३२ ।।
ऋषयश्छन्नरूपास्ते ऋषिपत्न्यस्तथाशुभाः ।।
ऊचुस्तत्र तदा सर्वे किं कृतं गौतमेन च ।। ३३ ।।
गौतमोऽपि तथाहल्यामाहूयासीत्सुविस्मितः ।।
उवाच दुःखतो विप्रा दूयमानेन चेतसा ।।३४।।
गौतम उवाच ।।
किं जातं च कथं देवि कुपितः परमेश्वरः ।।
किं कर्तव्यं क्व गन्तव्यं हत्या च समुपस्थिता ।। ३५।।
सूत उवाच ।।एतस्मिन्नन्तरे विप्रो गौतमं पर्यभर्त्सयन् ।।
विप्रपत्न्यस्तथाऽहल्यां दुर्वचोभिर्व्यथां ददुः ।। ३६ ।।
दुर्बुद्धयश्च तच्छिष्यास्सुतास्तेषां तथैव च ।।
गौतम परिभर्त्स्यैव प्रत्यूचुर्धिग्वचो मुहुः ।।३७।।
ऋषय ऊचुः ।।
मुखं न दर्शनीयं ते गम्यतां गम्यतामिति ।।
दृष्ट्वा गोघ्नमुखं सद्यस्सचैलं स्नानमाचरेत् ।। ३८ ।।
यावदाश्रममध्ये त्वं तावदेव हविर्भुजः ।।
पितरश्च न गृह्णंति ह्यस्मद्दत्तं हि किञ्चन ।।३९।।
तस्माद्गच्छान्यतस्त्वं च परिवारसमन्वितः ।।
विलम्बं कुरु नैव त्वं धेनुहन्पापकारक ।।4.25.४०।।
सूत उवाच ।।
इत्युक्त्वा ते च तं सर्वे पाषाणैस्समताडयन् ।।
व्यथां ददुरतीवास्मै त्वहल्यां च दुरुक्तिभिः ।।४१।।
ताडितो भर्त्सितो दुष्टैर्गौतमो गिरमब्रवीत् ।।
इतो गच्छामि मुनयो ह्यन्यत्र निवसाम्यहम् ।।४२।।
इत्युक्त्वा गौतमस्तस्मात्स्थानाच्च निर्गतस्तदा।।
गत्वा क्रोशं तदा चक्रे ह्याश्रमं तदनुज्ञया।।४३।।

यावच्चैवाभिशापो वै तावत्कार्य्यं न किंचन।।
न कर्मण्यधिकारोऽस्ति दैवे पित्र्येऽथ वैदिके ।।।४४।।
मासार्धं च ततो नीत्वा मुनीन्संप्रार्थयत्तदा ।।
गौतमो मुनिवर्य्यस्स तेन दुःखेन दुखितः ।।४५।।
गौतम उवाच ।।
अनुकंप्यो भवद्भिश्च कथ्यतां क्रियते मया।।
यथा मदीयं पापं च गच्छत्विति निवेद्यताम् ।।४६।।
सूत उवाच ।।
इत्युक्तास्ते तदा विप्रा नोचुश्चैव परस्परम् ।।
अत्यंतं सेवया पृष्टा मिलिता ह्येकतस्स्थिताः ।।४७।।
गौतमो दूरतः स्थित्वा नत्वा तानृषिसत्तमान्।।
पप्रच्छ विनयाविष्टः किं कार्यं हि मयाधुना ।।४८।।
इत्युक्ते मुनिना तेन गौतमेन महात्मना ।।
मिलितास्सकलास्ते वै मुनयो वाक्यमब्रुवन् ।। ४९ ।।
ऋषय ऊचुः ।।
निष्कृतिं हि विना शुद्धिर्जायते न कदाचन ।।
तस्मात्त्वं देहशुद्ध्यर्थं प्रायश्चित्तं समाचर ।। 4.25.५० ।।
त्रिवारं पृथिवीं सर्वां क्रम पापं प्रकाशयन् ।।
पुनरागत्य चात्रैव चर मासव्रतं तथा ।। ५१ ।।
शतमेकोत्तरं चैव ब्रह्मणोऽस्य गिरेस्तथा ।।
प्रक्रमणं विधायैवं शुद्धिस्ते च भविष्यति ।। ५२ ।।
अथवा त्वं समानीय गंगास्नानं समाचर ।।
पार्थिवानां तथा कोटिं कृत्वा देवं निषेवय ।। ५३ ।।
गंगायां च ततः स्नात्वा पुनश्चैव भविष्यति ।।
पुरा दश तथा चैकं गिरेस्त्वं क्रमणं कुरु ।। ५४ ।।
शत कुंभैस्तथा स्नात्वा पार्थिवं निष्कृतिर्भवेत् ।।
इति तैर्षिभिः प्रोक्तस्तथेत्योमिति तद्वचः ।। ५५ ।।
पार्थिवानां तथा पूजां गिरेः प्रक्रमणं तथा ।।
करिष्यामि मुनिश्रेष्ठा आज्ञया श्रीमतामिह ।। ५६ ।।
इत्युक्त्वा सर्षिवर्यश्च कृत्वा प्रक्रमणं गिरेः ।।
पूजयामास निर्माय पार्थिवान्मुनिसत्तमः ।। ५७ ।।
अहल्या च ततस्साध्वी तच्च सर्वं चकार सा ।।

शिष्याश्च प्रतिशिष्याश्च चक्रुस्सेवां तयोस्तदा ।। ५८ ।।

इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां गौतमव्यवस्थावर्णनं नाम पंचविंशोऽध्यायः ।। २५ ।

सूत उवाच ।।
एवं कृते तु ऋषिणा सस्त्रीकेन द्विजाश्शिवः ।।
आविर्बभूव स शिवः प्रसन्नस्सगणस्तदा ।।१।।
अथ प्रसन्नस्स शिवो वरं ब्रूहि महामुने ।।
प्रसन्नोऽहं सुभक्त्या त इत्युवाच कृपानिधिः ।।२।।
तदा तत्सुंदरं रूपं दृष्ट्वा शंभोर्महात्मनः ।।
प्रणम्य शंकरं भक्त्या स्तुतिं चक्रे मुदान्वितः ।। ३ ।।
स्तुत्वा बहु प्रणम्येशं बद्धाञ्जलिपुटः स्थितः ।।
निष्पापं कुरु मां देवाब्रवीदिति स गौतमः ।।४।।
सूत उवाच ।।
इत्याकर्ण्य वचस्तस्य गौतमस्य महात्मनः ।।
सुप्रसन्नतरो भूत्वा शिवो वाक्यमुपाददे ।।५।।
शिव उवाच ।।
धन्योऽसि कृतकृत्योऽसि निष्पापोऽसि सदा मुने ।।
एतैर्दुष्टैः किल त्वं च च्छलितोऽसि खिलात्मभिः ।। ६ ।।
त्वदीयदर्शनाल्लोका निष्पापाश्च भवंति हि ।।
किं पुनस्त्वं सपापोऽसि मद्भक्तिनिरतस्सदा ।। ७ ।।
उपद्रवस्त्वयि मुने यैः कृतस्तु दुरात्मभिः ।।
ते पापाश्च दुराचारा हत्यावंतस्त एव हि ।।८।।
एतेषां दर्शनादन्ये पापिष्ठाः संभवंतु च ।।
कृतघ्नाश्च तथा जाता नैतेषां निष्कृतिः क्वचित् ।। ९ ।।
सूत उवाच ।।
इत्युक्त्वा शंकरस्तस्मै तेषां दुश्चरितं तदा ।।
बहूवाच प्रभुर्विप्राः सत्कदोऽसत्सु दंडदः ।। 4.26.१० ।।
शर्वोक्तमिति स श्रुत्वा सुविस्मितमना ऋषिः ।।
सुप्रणम्य शिवं भक्त्या सांजलिः पुनरब्रवीत् ।।११।।
गौतम उवाच ।।
ऋषिभिस्तैर्महेशान ह्युपकारः कृतो महान् ।।
यद्येवं न कृतं तैस्तु दर्शनं ते कुतो भवेत् ।। १२ ।।
धन्यास्ते ऋषयो यैस्तु मह्यं शुभतरं कृतम् ।।
तद्दुराचरणादेव मम स्वार्थो महानभूत् ।। १३ ।।
सूत उवाच ।।
इत्येवं तद्वचश्श्रुत्वा सुप्रसन्नो महेश्वरः।।

गौतमं प्रत्युवाचाशु कृपादृष्ट्या विलोक्य च ।। १४ ।।
शिव उवाच ।।
ऋषि धन्योसि विप्रेंद्र ऋषे श्रेष्ठतरोऽसि वै ।।
ज्ञात्वा मां सुप्रसन्नं हि वृणु त्वं वरमुत्तमम् ।।१५ ।।
सूत उवाच ।।
गौतमोऽपि विचार्यैव लोके विश्रुतमित्युत।।
अन्यथा न भवेदेव तस्मादुक्तं समाचरेत्।।१६।।
निश्चित्यैवं मुनिश्रेष्ठो गौतमश्शिवभक्तिमान् ।।
सांजलिर्नतशीर्षो हि शंकरं वाक्यमब्रवीत् ।। १७ ।।
गौतम उवाच ।।
सत्यं नाथ ब्रवीषि त्वं तथापि पंचभिः कृतम् ।।
नान्यथा भवतीत्यत्र यज्जातं जायतां तु तत्।।१८।।
यदि प्रसन्नो देवेश गंगा च दीयतां मम।।
कुरु लोकोपकारं हि नमस्तेऽस्तु नमोऽस्तु ते ।। १९ ।।
सूत उवाच ।।
इत्युक्त्वा वचनं तस्य धृत्वा वै पादपंकजम् ।।
नमश्चकार देवेशं गौतमो लोककाम्यया ।। 4.26.२० ।।
ततस्तु शंकरो देवः पृथिव्याश्च दिवश्च सः ।।
सारं चैव समुद्धृत्य रक्षितं पूर्वमेव तत् । २१ ।।
विवाहे ब्रह्मणा दत्तमवशिष्टं च किंचन ।।
तत्तस्मै दत्तवाञ्च्छंभुर्मुनये भक्तवत्सलः ।। २२ ।।
गंगाजलं तदा तत्र स्त्रीरूपमभवत्परम् ।।
तस्याश्चैव ऋषिश्रेष्ठः स्तुतिं कृत्वा नतिं व्यधात् ।। ।। २३ ।।
गौतम उवाच ।।
धन्यासि कृतकृत्यासि पावितं भुवनं त्वया ।।
मां च पावय गंगे त्वं पततं निरये ध्रुवम् ।। २४ ।।
सूत उवाच ।।
शंभुश्चापि तदोवाच सर्वेषां हितकृच्छृणु ।।
गंगे गौतममेनं त्वं पावयस्व मदाज्ञया ।। २५ ।।
।। सूत उवाच ।।
इति श्रुत्वा वचस्तस्य शंभोश्च गौतमस्य च ।।
उवाचैव शिवं गंगा शिवभक्तिर्हि पावनी ।।२६।।
गंगोवाच ।।

ऋषिं तु पावयित्वाहं परिवारयुतं प्रभो ।।
गमिष्यामि निजस्थानं वचस्सत्यं ब्रवीमि ह ।। २७ ।।
सूत उवाच ।। ।।
इत्युक्तो गंगया तत्र महेशो भक्तवत्सलः ।।
लोकोपकरणार्थाय पुनर्गगां वचोऽब्रवीत् ।। २८ ।।
शिव उवाच ।।
त्वया स्थातव्यमत्रैव व्रजेद्यावत्कलिर्युगः ।।
वैवस्वतो मनुर्देवि ह्यष्टाविंशत्तमो भवेत् ।।२९।।
सूत उवाच।।
इति श्रुत्वा वचस्तस्य स्वामिनश्शंकरस्य तत् ।।
प्रत्युवाच पुनर्गंगा पावनी सा सरिद्वरा ।। 4.26.३० ।।
गंगोवाच ।।
माहात्म्यमधिकं चेत्स्यान्मम स्वामिन्महेश्वर ।।
सर्वेभ्यश्च तदा स्थास्ये धरायां त्रिपुरान्तकः ।।३१।।
किं चान्यच्च शृणु स्वामिन्वपुषा सुन्दरेण ह ।।
तिष्ठ त्वं मत्समीपे वै सगणसांबिकः प्रभो ।।३२।।
सूत उवाच ।।
एवं तस्या वचः श्रुत्वा शंकरो भक्तवत्सलः ।।
लोकोपकरणार्थाय पुनर्गंगां वचोब्रवीत् ।।३३।।
शिव उवाच ।।
धन्यासि श्रूयतां गंगे ह्यहं भिन्नस्त्वया न हि ।।
तथापि स्थीयते ह्यत्र स्थीयतां च त्वयापि हि ।।३४।।
सूत उवाच ।।
इत्येवं वचनं श्रुत्वा स्वामिनः परमेशितुः ।।
प्रसन्नमानसा भूत्वा गंगा च प्रत्यपूजयत् ।।३५।।
एतस्मिन्नंतरे देवा ऋषयश्च पुरातनाः ।।
सुतार्थान्यप्यनेकानि क्षेत्राणि विविधानि च ।। ३६ ।।
आगत्य गौतमं सर्वे गंगां च गिरिशं तथा ।।
जयजयेति भाषंतः पूजयामासुरादरात् ।।३७।।
ततस्ते निर्जरा सर्वे तेषां चक्रुः स्तुतिं मुदा ।।
करान् बद्ध्वा नतस्कंधा हरिब्रह्मादयस्तदा ।।३८।।।
गंगा प्रसन्ना तेभ्यश्च गिरिशश्चोचतुस्तदा।।
वरं ब्रूत सुरश्रेष्ठा दद्वो वः प्रियकाम्यया ।।३९।।

देवा ऊचुः ।।
यदि प्रसन्नो देवेश प्रसन्ना त्वं सरिद्वरे ।।
स्थातव्यमत्र कृपया नः प्रियार्थं तथा नृणाम् ।। 4.26.४० ।।
।। गंगोवाच ।।
यूयं सर्वप्रियार्थं च तिष्ठथात्र न किं पुनः ।।
गौतमं क्षालयित्वाहं गमिष्यामि यथागतम्।।४१।।
भवत्सु मे विशेषोत्र ज्ञेयश्चैव कथं सुराः ।।
तत्प्रमाणं कृतं चेत्स्यात्तदा तिष्ठाम्यसंशयम् ।।४२।।
।। सर्वे ऊचुः ।।
सिंहराशौ यदा स्याद्वै गुरुस्सर्वसुहृत्तमः ।।
तदा वयं च सर्वे त्वागमिष्यामो न संशयः ।। ४३ ।।
एकादश च वर्षाणि लोकानां पातकं त्विह ।।
क्षालितं यद्भवेदेवं मलिनास्स्मः सरिद्वरे ।।४४।।
तस्यैव क्षालनाय त्वायास्यामस्सर्वथा प्रिये ।।
त्वत्सकाशं महादेवि प्रोच्यते सत्यमादरात् ।।४५।।
अनुग्रहाय लोकानामस्माकं प्रियकाम्यया।।
स्थातव्यं शंकरेणापि त्वया चैव सरिद्वरे ।। ४६ ।।
यावत्सिंहे गुरुश्चैव स्थास्यामस्तावदेव हि ।।
त्वयि स्नानं त्रिकालं च शंकरस्य च दर्शनम् ।। ४७ ।।
कृत्वा स्वपापं निखिलं विमोक्ष्यामो न संशयः ।।
स्वदेशांश्च गमिष्यामो भवच्छासनतो वयम् ।।४८।।
सूत उवाच ।।
इत्येवं प्रार्थितस्तैस्तु गौतमेन महर्षिणा ।।
स्थितोऽसौ शंकरः प्रीत्या स्थिता सा च सरिद्वरा ।।४९।।
सा गंगा गौतमी नाम्ना लिंगं त्र्यंबकमीरितम् ।।
ख्याता ख्यातं बभूवाथ महापातकनाशनम् ।।4.26.५०।।
तद्दिनं हि समारभ्य सिंहस्थे च बृहस्पतौ ।।
आयांति सर्वतीर्थानि क्षेत्राणि देवतानि च ।। ५१ ।।
सरांसि पुष्करादीनि गंगाद्यास्सरितस्तथा ।।
वासुदेवादयो देवाः संति वै गोतमीतटे ।। ५२ ।।
यावत्तत्र स्थितानीह तावत्तेषां फलं न हि ।।
स्वप्रदेशे समायातास्तदर्येतेषां फलं भवेत् ।।५३।।
ज्योतिर्लिंगमिदं प्रोक्तं त्र्यंबकं नाम विश्रुतम्।।

स्थितं तटे हि गौतम्या महापातकनाशनम् ।। ५४ ।।
यः पश्येद्भक्तितो ज्योतिर्लिंगं त्र्यंबकनामकम् ।।
पूजयेत्प्रणमेत्स्तुत्वा सर्वपापैः प्रमुच्यते ।। ५५ ।।
ज्योतिर्लिंगं त्र्यंबकं हि पूजितं गौतमेन ह ।।
सर्वकामप्रदं चात्र परत्र परमुक्तिदम् ।। ५६ ।।
इति वश्च समाख्यातं यत्पृष्टोऽहं मुनीश्वराः ।।
किमन्यदिच्छथ श्रोतुं तद् ब्रूयां वो न संशयः ।।५७।।
इति श्री शिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां
त्र्यंबकेश्वरमाहात्म्यवर्णनं नाम षड्विंशोऽध्यायः ।। २६।।

ऋषय ऊचुः ।।
गंगा च जलरूपेण कुतो जाता वद प्रभो ।।
तन्माहात्म्यं विशेषेण कुतो जात वद प्रभो ।।१।।
यैर्विप्रैर्गौतमायेव दुःखं दत्तं दुरात्मभिः ।।
तेषां किंच ततो जातमुच्यतां व्यास सद्गुरो ।। २ ।।
सूत उवाच ।।
एवं संप्रार्थिता गंगा गौतमेन तदा स्वयम् ।।
ब्रह्मणश्च गिरेर्विप्रा द्रुतं तस्मादवातरत् ।। ३ ।।
औदुंबरस्य शाखायास्तत्प्रवाहो विनिस्सृतः ।।
तत्र स्नानं मुदा चक्रे गौतमो विश्रुतो मुनिः ।।४।।
गौतमस्य च ये शिष्या अन्ये चैव महर्षयः ।।
समागताश्च ते तत्र स्नानं चक्रुर्मुदान्विताः ।। ५ ।।
गंगाद्वारं च तन्नाम प्रसिद्धमभवत्तदा ।।
सर्वपापहरं रम्यं दर्शनान्मुनिसत्तमः ।। ६ ।।
गौतमस्पर्द्धिनस्ते च ऋषयस्तत्र चागताः ।।
स्नानार्थं तांश्च सा दृष्ट्वा ह्यंतर्धानं गता द्रुतम् ।।७।।
मामेति गौतमस्तत्र व्याजहार वचो द्रुतम् ।।
मुहुर्मुहुः स्तुवन् गंगां सांजलिर्नतमस्तकः ।। ८ ।।
गौतम उवाच ।।
इमे च श्रीमदांधाश्च साधवो वाप्यसाधवः ।।
एतत्पुण्यप्रभावेण दर्शनं दीयतां त्वया ।।९।।
सूत उवाच।।
ततो वाणी समुत्पन्ना गंगाया व्योममंडलात्।।
तच्छृणुध्वमृषिश्रेष्ठा गंगावचनमुत्तमम् ।।4.27.१०।।
एते दुष्टतमाश्चैव कृतघ्नाः स्वामिद्रोहिणः ।।
जाल्माः पाखंडिनश्चैव द्रष्टुं वर्ज्याश्च सर्वदा ।।११।।
गौतम उवाच ।।
मातश्च श्रूयतामेतन्महता गिर एव च ।।
तस्मात्त्वया च कर्त्तव्यं सत्यं च भगवद्वचः ।।१२।।
अपकारिषु यो लोक उपकारं करोति वै ।।
तेन पूतो भवाम्यत्र भगवद्वचनं त्विदम् ।। १३ ।।
सूत उवाच ।।
इति श्रुत्वा मुनेर्वाक्यं गौतमस्य महात्मनः ।।

पुनर्वाणी समुत्पन्ना गंगाया व्योममंडलात् ।। १४ ।।
कथ्यते हि त्वया सत्यं गौतमर्षे शिवं वचः ।।
तथापि संग्रहार्थं च प्रायश्चितं चरंतु वै ।।१५।।
शतमेकोत्तरं चात्र कार्य्यं प्रक्रमणं गिरेः ।।
भवच्छासनतस्त्वेतैस्त्वदधीनैर्विशेषतः ।। १६ ।।
ततश्चैवाधिकारश्च जायते दुष्टकारिणाम्।।
मद्दर्शने विशेषेण सत्यमुक्तं मया मुने।।१७।।
सूत उवाच।।
इति श्रुत्वा वचस्तस्याश्चक्रुर्वै ते तथाऽखिलाः ।।
संप्रार्थ्य गौतमं दीनाः क्षंतव्यो नोऽपराधकः ।।१८।।
एवं कृते तदा तेन गौतमेन तदाज्ञया ।।
कुशावर्तं नाम चक्रे गङ्गाद्वारादधोगतम् ।।१९।।
ततः प्रादुरभूत्तत्र सा तस्य प्रीतये पुनः ।।
कुशावर्तं च विख्यातं तीर्थमासीत्तदुत्तमम् ।।4.27.२०।।
तत्र स्नातो नरो यस्तु मोक्षाय परिकल्पते ।।
त्यक्त्वा सर्वानघान्सद्यो विज्ञानं प्राप्य दुर्लभम् ।। २१ ।।
गौतमो ऋषयश्चान्ये मिलिताश्च परस्परम् ।।
लज्जितास्ते तदा ये च कृतघ्ना ह्यभवन्पुरा ।।२२।।
ऋषय ऊचुः ।।
अस्माभिरन्यथा सूत श्रुतं तद्वर्णयामहे।।
गौतमस्तान्द्विजान् क्रुद्धश्शशापेति प्रबुध्यताम् ।। २३ ।।
सूत उवाच ।।
द्विजास्तदपि सत्यं वै कल्पभेदसमाश्रयात् ।।
वर्णयामि विशेषेण तां कथामपि सुव्रता ।।२४।।
गौतमोपि ऋषीन्दृष्ट्वा तदा दुर्भिक्षपीडितान् ।।
तपश्चकार सुमहद्वरुणस्य महात्मनः ।। २५ ।।
अक्षय्यं कल्पयामास जलं वरुणदां यया ।।
ततो व्रीहीन्यवांश्चैव वापयामास भूरिशः ।। २६ ।।
एवं परोपकारी स गौतमो मुनिसत्तमाः ।।
आहारं कल्पयामास तेभ्यः स्वतपसो बलात् ।। २७ ।।
कदाचित्तत्स्त्रियो दुष्टा जलार्थमपमानिताः ।।
ऊचु पतिभ्यस्ताः क्रुद्धा गौतमेर्ष्याकरं वचः ।। २८ ।।
ततस्ते भिन्नमतयो गां कृत्वा कृत्रिमां द्विजाः ।।

तद्धान्यभक्षणासक्तां चक्रुस्तां कुटिलाशयाः ।।२९।।
स्वधान्यभक्षणासक्तां गां दृष्ट्वा गौतमस्तदा ।।
तृणेन ताडयामास शनैस्तां संनिवारयन् ।।4.27.३०।।
तृणसंस्पर्शमात्रेण सा भूमौ पतिता च गौः ।।
मृता ह्यभूत्क्षणं विप्रा भाविकर्मवशात्तदा ।। ३१ ।।
गौर्हता गौतमेनेति तदा ते कुटिलाशयाः ।।
एकत्रीभूय तत्रत्यैः सकला ऋषयोऽवदन् ।।३२।।
ततस्स गौतमो भीतो गौर्हतेति बभूव ह ।।
चकार विस्मयं नार्यहल्याशिष्यैश्शिवानुगः ।। ३३ ।।
ततस्स गौतमो ज्ञात्वा तां गां क्रोधसमाकुलः ।।
शशाप तानृषीन् सर्वान् गौतमो मुनिसत्तमः ।।३४।।
गौतम उवाच ।।
यूयं सर्वे दुरात्मानो दुःखदा मे विशेषतः ।।
शिवभक्तस्य सततं स्युर्वेदविमुखास्सदा ।।३५।।
अद्यप्रभृति वेदोक्ते सत्कर्मणि विशेषतः ।।
मा भूयाद्भवतां श्रद्धा शैवमार्गे विमुक्तिदे ।।३६।।
अद्यप्रभृति दुर्मार्गे तत्र श्रद्धा भवेत्तु वः।।
मोक्षमार्गविहीने हि सदा श्रुतिबहिर्मुखे।।३७।।
अद्यप्रभृति भालानि मृल्लिप्तानि भवन्तु वः ।।
स्रसध्वं नरके यूयं भालमृल्लेपनाद्द्विजाः।।३८।।
भवंतो मा भविष्यंतु शिवैक परदैवताः।।
अन्यदेवसमत्वेन जानंतु शिवमद्वयम् ।।३९।। ।
मा भूयाद्भवतां प्रीतिश्शिवपूजादिकर्मणि।।
शिवनिष्ठेषु भक्तेषु शिवपर्वसु सर्वदा।।4.27.४०।।
अद्य दत्ता मया शापा यावंतो दुःखदायकाः।।
तावंतस्संतु भवतां संततावपि सर्वदा।।४१।।
अशैवास्संतु भवतां पुत्रपौत्रादयो द्विजाः।।
पुत्रैस्सहैव तिष्ठंतु भवंतो नरके ध्रुवम्।।४२।।
ततो भवंतु चण्डाला दुःखदारिद्र्यपीडिताः ।।
शठा निन्दाकरास्सर्वे तप्तमुद्रांकितास्सदा ।। ४३ ।।
सूत उवाच ।।
इति शप्त्वा मुनीन् सर्वान् गौतमस्स्वाश्रमं ययौ ।।
शिवभक्तिं चकाराति स बभूव सुपावनः ।। ४४ ।।

ततस्तैः खिन्नहृदया ऋषयस्तेखिला द्विजाः ।।
कांच्यां चक्रुर्निवासं हि शैवधर्मबहिष्कृताः ।। ४५ ।।
तत्पुत्राश्चाभवन्सर्वे शैवधर्मबहिष्कृताः ।।
अग्रे तद्वद्भविष्यंति कलौ बहुजनाः खलाः ।।४६।।
इति प्रोक्तमशेषेण तद्वृत्तं मुनिसत्तमाः ।।
पूर्ववृत्तमपि प्राज्ञाः श्रुतं सर्वैस्तु चादरात् ।।४७।।
इति वश्च समाख्यातो गौतम्याश्च समुद्भवः ।।
माहात्म्यमुत्तमं चैव सर्वपापहरं परम् ।। ४८ ।।
त्र्यंबकस्य च माहात्म्यं ज्योतिर्लिंगस्य कीर्तितम् ।।
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ।। ४९ ।।
अतः परं प्रवक्ष्यामि वैद्यनाथेश्वरस्य हि ।।
ज्योतिर्लिंगस्य माहात्म्यं श्रूयतां पापहारकम् ।। 4.27.५० ।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां त्र्यंबकेश्वरज्योतिर्लिंग माहात्म्यवर्णनं नाम सप्तविंशोध्यायः ।। २७ ।।

सूत उवाच ।।
रावणः राक्षसश्रेष्ठो मानी मानपरायणः ।।
आरराध हरं भक्त्या कैलासे पर्वतोत्तमे।।१।।
आराधितः कियत्कालं न प्रसन्नो हरो यदा।।
तदा चान्यत्तपश्चक्रे प्रासादार्थे शिवस्य सः।।२।।
नतश्चायं हिमवतस्सिद्धिस्थानस्य वै गिरेः।।
पौलस्त्यो रावणश्श्रीमान्दक्षिणे वृक्षखंडके।।३।
भूमौ गर्तं वर कृत्वा तत्राग्निं स्थाप्य स द्विजाः।।
तत्सन्निधौ शिवं स्थाप्य हवनं स चकार ह।।४।।
ग्रीष्मे पंचाग्निमध्यस्थो वर्षासु स्थंडिलेशयः ।।
शीते जलांतरस्थो हि त्रिधा चक्रे तपश्च सः।।५।।
चकारैवं बहुतपो न प्रसन्नस्तदापि हि ।।
परमात्मा महेशानो दुराराध्यो दुरात्मभिः ।। ६ ।।
ततश्शिरांसि छित्त्वा च पूजनं शंकरस्य वै ।।
प्रारब्धं दैत्यपतिना रावणेन महात्मना ।।७।।
एकैकं च शिरश्छिन्नं विधिना शिवपूजने ।।
एवं सत्क्रमतस्तेन च्छिन्नानि नव वै यदा ।। ८ ।।
एकस्मिन्नवशिष्टे तु प्रसन्नश्शंकरस्तदा ।।
आविर्बभूव तत्रैव संतुष्टो भक्तवत्सलः ।।९।।
शिरांसि पूर्ववत्कृत्वा नीरुजानि तथा प्रभुः ।।
मनोरथं ददौ तस्मादतुलं बलमुत्तमम् ।। 4.28.१० ।।
प्रसादं तस्य संप्राप्य रावणस्स च राक्षसः ।।
प्रत्युवाच शिवं शम्भुं नतस्कंधः कृतांजलिः ।।११।।
रावण उवाच ।।
प्रसन्नो भव देवेश लंकां च त्वां नयाम्यहम् ।।
सफलं कुरु मे कामं त्वामहं शरणं गतः ।।१२।।
सूत उवाच ।।
इत्युक्तश्च तदा तेन शंभुर्वै रावणेन सः ।।
प्रत्युवाच विचेतस्कः संकटं परमं गतः ।।१३।।
।। शिव उवाच ।।
श्रूयतां राक्षसश्रेष्ठ वचो मे सारवत्तया ।।
नीयतां स्वगृहे मे हि सद्भक्त्या लिंगमुत्तमम्।।१४।।
भूमौ लिंगं यदा त्वं च स्थापयिष्यसि तत्र वै ।।

स्थास्यत्यत्र न संदेहो यथेच्छसि तथा कुरु।।१५।।
सूत उवाच ।।
इत्युक्तश्शंभुना तेन रावणो राक्षसेश्वरः।
तथेति तत्समादाय जगाम भवनं निजम्।।१६।।
आसीन्मूत्रोत्सर्गकामो मार्गे हि शिवमायया।।
तत्स्तंभितुं न शक्तोभूत्पौलस्त्यो रावणः प्रभुः।।१७।।
दृष्ट्वैकं तत्र वै गोपं प्रार्थ्य लिंगं ददौ च तत्।।
मुहूर्तके ह्यतिक्रांते गोपोभूद्विकलस्तदा।।१८।।
भूमौ संस्थापयामास तद्भारेणातिपीडितः ।।
तत्रैव तत्स्थितं लिंगं वजसारसमुद्भवम् ।।
सर्वकामप्रदं चैव दर्शनात्पापहारकम् ।।१९।।
वैद्यनाथेश्वरं नाम्ना तल्लिंगमभवन्मुने ।।
प्रसिद्धं त्रिषु लोकेषु भुक्तिमुक्तिप्रदं सताम्।।4.28.२०।।
ज्योतिर्लिंगमिदं श्रेष्ठं दर्शनात्पूजनादपि ।।
सर्वपापहरं दिव्यं भुक्तिवर्द्धनमुत्तमम् ।। २१ ।।
तस्मिँलिंगे स्थिते तत्र सर्वलोकहिताय वै ।।
रावणः स्वगृहं गत्वा वरं प्राप्य महोत्तमम् ।।
प्रियायै सर्वमाचख्यौ सुखेनाति महासुरः ।। २२ ।।
तच्छ्रुत्वा सकला देवाश्शक्राद्या मुनयस्तथा ।।
परस्परं समामन्त्र्य शिवासक्तधियोऽमलाः ।। २३ ।।
तस्मिन्काले सुरास्सर्वे हरिब्रह्मादयो मुने ।।
आजग्मुस्तत्र सुप्रीत्या पूजां चक्रुर्विशेषतः ।। २४ ।।
प्रत्यक्षं तं तदा दृष्ट्वा प्रतिष्ठाप्य च ते सुराः ।।
वैद्यनाथेति संप्रोच्य नत्वा नुत्वा दिवं ययुः ।। २५ ।।
ऋषय ऊचुः ।।
तस्मिँल्लिंगे स्थिते तत्र रावणे च गृहं गते ।।
किं कि चरित्रमभूत्तात ततस्तद्वद विस्तरात् ।।२६।।
सूत उवाच ।।
रावणोपि गृहं गत्वा वरं प्राप्य महोत्तमम्।।
प्रियायै सर्वमाचख्यौ मुमोदाति महासुरः ।। २७ ।।
तच्छ्रुत्वा सकलं देवाश्शक्राद्या मुनयस्तथा ।।
परस्परं सुमूचुस्ते समुद्विग्ना मुनीश्वराः ।। २८ ।।
देवादय ऊचुः ।।

रावणोयं दुरात्मा हि देवद्रोही खलः कुधीः ।।
शिवाद्वरं च संप्राप्य दुःखं दास्यति नोऽपि सः ।। २९ ।।
किं कुर्मः क्व च गच्छामः किं भविष्यति वा पुनः ।।
दुष्टश्च दक्षतां प्राप्तः किंकिं नो साधयिष्यति ।।4.28.३०।।
इति दुःखं समापन्नाश्शक्राद्या मुनयस्सुराः।।
नारदं च समाहूय पप्रच्छुर्विकलास्तदा ।।३१।।
देवा ऊचुः ।।
सर्वं कार्य्यं समर्थोसि कर्तुं त्वं मुनिसत्तम ।।
उपायं कुरु देवर्षे देवानां दुःखनाशने ।। ३२ ।।
रावणोयं महादुष्टः किंकि नैव करिष्यति ।।
क्व यास्यामो वयं चात्र दुष्टेनापीडिता वयम् ।। ३३ ।।
नारद उवाच ।।
दुःखं त्यजत भो देवा युक्तिं कृत्वा च याम्यहम् ।।
देवकार्यं करिष्यामि कृपया शंकरस्य वै ।। ३४ ।।
सूत उवाच।।
इत्युक्त्वा स तु देवर्षिरगमद्रावणालयम् ।।
सत्कारं समनुप्राप्य प्रीत्योवाचाखिलं च तत् ।। ३५ ।।
नारद उवाच ।।
राक्षसोत्तम धन्यस्त्वं शैववर्य्यस्तपोमनाः ।।
त्वां दृष्ट्वा च मनो मेद्य प्रसन्नमति रावण ।।३६।।
स्ववृत्तं ब्रूह्यशेषेण शिवाराधनसंभवम्।।
इति पृष्टस्तदा तेन रावणो वाक्यमब्रवीत् ।।३७।।
रावण उवाच ।।
गत्वा मया तु कैलासे तपोर्थं च महामुने ।।
तत्रैव बहुकालं वै तपस्तप्तं सुदारुणम् ।। ३८ ।।
यदा न शंकरस्तुष्टस्ततश्च परिवर्तितम् ।।
आगत्य वृक्षखंडे वै पुनस्तप्तं मया मुने ।। ३९ ।।
ग्रीष्मे पंचाग्निमध्ये तु वर्षासु स्थंडिलेशयः ।।
शीते जलांतरस्थो हि कृतं चैव त्रिधा तपः ।। 4.28.४० ।।
एवं मया कृतं तत्र तपोत्युग्रं मुनीश्वर ।।
तथापि शंकरो मह्यं न प्रसन्नोऽभवन्मनाक् ।। ४१ ।।
तदा मया तु क्रुद्धेन भूमौ गर्तं विधाय च ।।
तत्राग्निं समाधाय पार्थिवं च प्रकल्प्य च ।। ४२ ।।

गंधैश्च चंदनैश्चैव धूपैश्च विविधैस्तदा ।।
नैवेद्यैः पूजितश्शम्भुरारार्तिकविधानतः ।। ४३ ।।
प्रणिपातैः स्तवैः पुण्यैस्तोषितश्शंकरो मया।।
गीतैर्नृत्यैश्च वाद्यैश्च मुखांगुलिसमर्पणैः ।। ४४ ।।
एतैश्च विविधैश्चान्यैरुपायैर्भूरिभिर्मुने ।।
शास्त्रोक्तेन विधानेन पूजितो भगवान् हरः ।।४५।।
न तुष्टः सन्मुखो जातो यदा च भगवान्हरः ।।
तदाहं दुःखितोभूवं तपसोऽप्राप्य सत्फलम् ।।४६।।
धिक् शरीरं बलं चैव धिक् तपः करणं मम ।।
इत्युक्त्वा तु मया तत्र स्थापितेग्नौ हुतं बहु ।।४७।।
पुनश्चेति विचार्यैव त्वक्षाम्यग्नौ निजां तनुम् ।।
संछिन्नानि शिरांस्येव तस्मिन् प्रज्वलिते शुचौ ।।४८।।
सुच्छित्वैकैकशस्तानि कृत्वा शुद्धानि सर्वशः ।।
शंकरायार्पितान्येव नवसंख्यानि वै मया ।। ४९ ।।
यावच्च दशमं छेत्तुं प्रारब्धमृषिसत्तम ।।
तावदाविरभूत्तत्र ज्योतीरूपो हरस्स्वयम् ।।4.28.५०।।
मामेति व्याहरत् प्रीत्या द्रुतं वै भक्तवत्सलः ।।
प्रसन्नश्च वरं ब्रूहि ददामि मनसेप्सितम् ।।५१।।
इत्युक्ते च तदा तेन मया दृष्टो महेश्वरः ।।
प्राणतस्संस्तुतश्चैव करौ बद्ध्वा सुभक्तितः ।। ५२।।
तदा वृतं मयैतच्च देहि मे ह्यतुलं बलम् ।।
यदि प्रसन्नो देवेश दुर्ल्लभं किं भवेन्मम ।। ५३ ।।
शिवेन परितुष्टेन सर्वं दत्तं कृपालुना ।।
मह्यं मनोभिलषितं गिरा प्रोच्य तथास्त्विवति ।। ५४ ।।
अमोघया सुदृष्ट्या वै वैद्यवद्योजितानि मे ।।
शिरांसि संधयित्वा तु दृष्टानि परमात्मना ।। ५५ ।। ।
एवंकृते तदा तत्र शरीरं पूर्ववन्मम ।।
जातं तस्य प्रसादाच्च सर्वं प्राप्तं फलं मया।।५६।।
तदा च प्रार्थितो मे संस्थितोसौ वृषभध्वजः।।
वैद्यनाथेश्वरो नाम्ना प्रसिद्धोभूज्जगत्त्रये ।।५७।।
दर्शनात्पूजनाज्ज्योतिर्लिंगरूपो महेश्वरः ।।
भुक्तिमुक्तिप्रदो लोके सर्वेषां हितकारकः ।। ५८ ।।
ज्योतिर्लिंगमहं तद्वै पूजयित्वा विशेषतः ।।

प्रणिपत्यागतश्चात्र विजेतुं भुवनत्रयम्।। ५९ ।।
सूत उवाच ।।
तदीयं तद्वचः श्रुत्वा देवर्षिर्जातसंभ्रमः ।।
विहस्य च मनस्येव रावणं नारदोऽब्रवीत् ।। 4.28.६० ।।
नारद उवाच ।।
श्रूयतां राक्षसश्रेष्ठ कथयामि हितं तव ।।
त्वया तदेव कर्त्तव्यं मदुक्तं नान्यथा क्वचित् ।।६१।।
त्वयोक्तं यच्छिवेनैव हितं दत्तं ममाधुना ।।
तत्सर्वं च त्वया सत्यं न मन्तव्यं कदाचन ।। ६२ ।।
अयं वै विकृतिं प्राप्तः किं किं नैव ब्रवीति च ।।
सत्यं नैव भवेत्तद्वै कथं ज्ञेयं प्रियोस्ति मे ।। ६३ ।।
इति गत्वा पुनः कार्य्यं कुरु त्वं ह्यहिताय वै।।
कैलासोद्धरणे यत्नः कर्तव्यश्च त्वया पुनः ।। ६४ ।।
यदि चैवोद्धृतश्चायं कैलासो हि भविष्यति ।।
तदैव सफलं सर्वं भविष्यति न संशयः ।।६५।।
पूर्ववत्स्थापयित्वा त्वं पुनरागच्छ वै सुखम् ।।
निश्चयं परमं गत्वा यथेच्छसि तथा कुरु ।।६६।।
सूत उवाच ।।
इत्युक्तस्स हितं मेने रावणो विधिमोहित।।
सत्यं मत्वा मुनेर्वाक्यं कैलासमगमत्तदा ।।६७।।
गत्वा तत्र समुद्धारं चक्रे तस्य गिरेस्स च ।।
तत्रस्थं चैव तत्सर्वं विपर्यस्तं परस्परम्।।६८।।
गिरीशोपि तदा दृष्ट्वा किं जातमिति सोब्रवीत्।।
गिरिजा च तदा शंभुं प्रत्युवाच विहस्य तम् ।।६९।।
गिरिजोवाच।।
सच्छिश्यस्य फलं जातं सम्यग्जातं तु शिष्यतः।।
शान्तात्मने सुवीराय दत्तं यदतुलं बलम् ।।4.28.७०।।
सूत उवाच ।।
गिरिजायाश्च साकूतं वचः श्रुत्वा महेश्वरः ।।
कृतघ्नं रावणं मत्वा शशाप बलदर्पितम् ।। ७१ ।।
महादेव उवाच ।।
रे रे रावण दुर्भक्त मा गर्वं वह दुर्मते ।।
शीघ्रं च तव हस्तानां दर्पघ्नश्च भवेदिह ।। ७२ ।।

सूत उवाव ।।
इति तत्र च यज्जातं नारदः श्रुतवांस्तदा ।।
रावणोपि प्रसन्नात्माऽगात्स्वधाम यथागतम् ।।७३।।
निश्चयं परमं कृत्वा बली बलविमोहितः ।।
जगद्वशं हि कृतवान्रावणः परदर्पहा ।।७४।।
शिवाज्ञया च प्राप्तेन दिव्यास्त्रेण महौजसा।।
रावणस्य प्रति भटो नालं कश्चिदभूत्तदा ।।७५।।
इत्येतच्च समाख्यातं वैद्यनाथेश्वरस्य च ।।
माहात्म्यं शृण्वतां पापं नृणां भवति भस्मसात् ।।७६।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां वैद्यनाथेश्वरज्योतिर्लिंगमाहात्म्यवर्णनं नामाष्टाविंशोऽध्यायः ।। २८ ।।

सूत उवाच ।।
अथातः संप्रवक्ष्यामि नागेशाख्यं परात्मनः ।।
ज्योतीरूपं यथा जातं परमं लिंगमुत्तमम् ।। १ ।।
दारुका राक्षसी काचित्पार्वती वरदर्पिता ।।
दारुकश्च पतिस्तस्या बभूव बलवत्तरः ।। २ ।।
बहुभी राक्षसैस्तत्र चकार कदनं सताम् ।।
यज्ञध्वंसं च लोकानां धर्मध्वंसं तदाकरोत् ।। ३ ।।
पश्चिमे सागरे तस्य वनं सर्वसमृद्धिमत् ।।
योजनानां षोडशभिर्विस्तृतं सर्वतो दिशम् ।। ४ ।।
दारुका स्वविलासार्थं यत्र गच्छति तद्वनम् ।।
भूम्या च तरुभिस्तत्र सर्वोपकरणैर्युतम् ।। ५ ।।।
दारुकायै ददौ देवी तद्वनस्यावलोकनम्।।
प्रयाति तद्वनं सा हि पत्या सह यदृच्छया।।६।।
तत्र स्थित्वा तदा सोपि सर्वेषां च भयं ददौ ।।
दारुको राक्षसः पत्न्या तया दारुकया सह ।।७।।
ते सर्वे पीडिता लोका और्वस्य शरणं ययुः ।।
नत्वा प्रीत्या विशेषेण तमूचुर्नतमस्तकाः ।। ८ ।।
लोका ऊचुः ।।
महर्षे शरणं देहि नो चेद्दुष्टैश्च मारिताः ।।
सर्वं कर्तुं समर्थोसि तेजसा दीप्तिमानसि ।। ९ ।।
पृथ्व्यां न वर्तते कश्चित्त्वां विना शरणं च नः ।।
यामो यस्य समीपे तु स्थित्वा सुखमवाप्नुमः ।। 4.29.१० ।।
त्वां दृष्ट्वा राश्रसास्सर्वे पला यंते विदूरतः ।।
त्वयि शैवं सदा तेजो विभाति ज्वलनो यथा ।। ११ ।।
सूत उवाच ।।
इत्येवं प्रार्थितो लोकैरौर्वो हि मुनिसत्तमः।।
शोचमानः शरण्यश्च रक्षायै हि वचोऽब्रवीत् ।। १२ ।।
और्व उवाच ।।
पृथिव्यां यदि रक्षांसि हिंस्युर्वै प्राणिनस्तदा ।।
स्वयं प्राणैर्वियुज्येयू राक्षसा बलवत्तराः ।। १३ ।।
यदा यज्ञा न हन्येरंस्तदा प्राणैर्वियोजिताः ।।
भवंतु राक्षसास्सर्वे सत्यमेतन्मयोच्यते ।। १४ ।।
सूत उवाच ।।

इत्युक्त्वा वचनं तेभ्यस्समाश्वास्य प्रजाः पुनः ।।
तपश्चकार विविधमौर्वो लोकसुखावहः ।।१५।।
देवास्तदा ते विज्ञाय शापस्य कारणं हि तत् ।।
युद्धाय च समुद्योगं चक्रुर्देवारिभिस्सह ।।१६।।
सर्वैश्चैव प्रयत्नैश्च नानायुधधरास्सुराः।।
सर्वे शक्रादयस्तत्र युद्धार्थं समुपागताः ।।१७।।
तान्दृष्ट्वा राक्षसास्तत्र विचारे तत्पराः पुनः ।।
बभूवुस्तेऽखिला दुष्टा मिथो ये यत्र संस्थिताः । १८ ।।
राक्षसा ऊचुः ।।
किं कर्तव्यं क्व गंतव्यं संकटं समुपागताः ।।
युद्ध्यते म्रियते चैव युद्ध्यते न विहन्यते ।।१९।।
तथैव स्थीयते चेद्वै भक्ष्यते किं परस्परम् ।।
दुःखं हि सर्वथा जातं क एनं विनिवारयेत् ।।4.29.२०।।
सूत उवाच।।
विचार्येति च ते तत्र दारुकाद्याश्च राक्षसाः ।।
उपायं न विजानन्तो दुःखं प्राप्तास्सदा हि वै ।। २१ ।।
दारुका राक्षसी चापि ज्ञात्वा दुःखं समागतम् ।।
भवान्याश्च वरं तञ्च कथयामास सा तदा ।। २२ ।।
दारुकोवाच ।।
मया ह्याराधिता पूर्वं भवपत्नी वरं ददौ ।।
वनं गच्छ निजैः सार्धं यत्र गंतुं त्वमिच्छसि ।। २३ ।।
तद्वरश्च मया प्राप्तः कथं दुःखं विषह्यते ।।
जलं वनं च नीत्वा वै सुखं स्थेयं तु राक्षसैः ।। २४ ।।
भूत उवाच ।।
तस्यास्तद्वचनं श्रुत्वा राक्षस्या हर्षमागताः ।।
उचुस्सर्वे मिथस्ते हि राक्षसा निर्भयास्तदा ।। २५ ।।
धन्येयं कृतकृत्येयं राज्ञ्या वै जीवितास्स्वयम् ।।
नत्वा तस्यै च तत्सर्वं कथयामासुरादरात् ।।२६।।
यदि गंतुं भवेच्छक्तिर्गम्यतां किं विचार्यते।।
तत्र गत्वा जले देवि सुखं स्थास्याम नित्यशः ।।२७।।
एतस्मिन्नंतरे लोका देवैस्सार्द्धं समागताः ।।
युद्धाय विविधैर्दुःखैः पीडिता राक्षसैः पुरा । २८ ।।
पीडिताश्च तदा तस्या भवान्या बलमाश्रिताः ।।

समग्रं नगरं नीत्वा जलस्थलसमन्वितम् ।।२९।।
जयजयेति देव्यास्तु स्तुतिमुच्चार्य राक्षसी ।।
तत उड्डीयनं कृत्वा सपक्षो गिरिराड्यथा ।। 4.29.३० ।।
समुद्रस्य च मध्ये सा संस्थिता निर्भया तदा ।।
सकलैः परिवारैश्च मुमुदेति शिवानुगा ।। ३१ ।।
तत्र सिंधौ च ते स्थित्वा नगरे च विलासिनः ।।
राक्षसाश्च सुखं प्रापुर्निर्भयाश्च विजह्रिरे।।३२।।
राक्षसाश्च पृथिव्यां वै नाजग्मुश्च कदाचन ।।
मुनेश्शापभयादेव बभ्रमुस्ते चले तदा ।। ३३ ।।
नौषु स्थिताञ्जनान्नीत्वा नगरे तत्र तांस्तदा ।।
चिक्षिपुर्बन्धनागारे कांश्चिज्जघ्नुस्तदा हि ते ।।३४।।
यथायथा पुनः पीडां चक्रुस्ते राक्षसास्तदा।।
तत्रस्थिता भवान्याश्च वरदानाच्च निर्भयाः।।३५।।
यथापूर्वं स्थले लोके भयं चासीन्निरन्तरम्।।
तथा भयं जले तेषामासीन्नित्यं मुनीश्वराः।।३६।।
कदाचिद्राक्षसी सा च निस्सृता नगराज्जले।।
रुद्ध्वा मार्गं स्थिता लोकपीडार्थं धरणौ च हि।।३७।।
एतस्मिन्नंतरे तत्र नावो बहुतराः शुभाः।।
आगता बहुधा तत्र सर्वतो लोकसंवृताः।।३८।।
ता नावश्च तदा दृष्ट्वा हर्षं संप्राप्य राक्षसाः।।
द्रुतं गत्वा हि तत्रस्थान्वेगात्संदध्रिरे खलाः।।३९।।
आजग्मुर्नगरं ते च तानादाय महाबलाः।।
चिक्षिपुर्बन्धनागारे बद्ध्वा हि निगडैर्दृढैः।।4.29.४०।।
बद्धास्ते निगडैर्लोका संस्थिता बंधनालये।।
अतीव दुःखमाजग्मुर्भर्त्सितास्ते मुहुर्मुहुः।।४१।।
तेषां मध्ये च योऽधीशस्स वैश्यस्सुप्रियाभिधः।।
शिवप्रियश्शुभाचारश्शैवश्चासीत्सदातनः ।। ४२ ।।
विना च शिवपूजां वै न तिष्ठति कदाचन ।।
सर्वथा शिवधर्मा हि भस्मरुद्राक्षभूषणः ।। ४३ ।।
यदि पूजा न जाता चेन्न भुनक्ति तदा तु सः ।।
अतस्तत्रापि वैश्योऽसौ चकार शिवपूजनम् ।। ४४ ।।
कारागृहगतस्सोपि बहूंश्चाशिक्षयत्तदा ।।
शिवमंत्रं च पूजां च पार्थिवीमृषिसत्तमाः ।। ४५ ।।

ते सर्वे च तदा तत्र शिवपूजां स्वकामदाम् ।।
चक्रिरे विधिवत्तत्र यथादृष्टं यथाश्रुतम् ।। ४६ ।।
केचित्तत्र स्थिता ध्याने बद्ध्वासनमनुत्तमम् ।।
मानसीं शिवपूजां च केचिच्चक्रुर्मुदान्विताः ।। ४७ ।।
तदधीशेन तत्रैव प्रत्यक्षं शिवपूजनम् ।।
कृतं च पार्थिवस्यैव विधानेन मुनीश्वराः ।। ४८ ।।
अन्ये च ये न जानन्ति विधानं स्मरणं परम् ।।
नमश्शिवाय मंत्रेण ध्यायंतश्शंकरं स्थिताः ।। ४९ ।।
सुप्रियो नाम यश्चासीद्वैश्यवर्यश्शिवप्रियः ।।
ध्यायंश्च मनसा तत्र चकार शिवपूजनम् ।। 4.29.५० ।।
यथोक्तरूपी शंभुश्च प्रत्यक्षं सर्वमाददे ।।
सोपि स्वयं न जानाति गृह्यते न शिवेन वै ।। ५१ ।।
एवं च क्रियमाणस्य वैश्यस्य शिवपूजनम् ।।
व्यतीयुस्तत्र षण्मासा निर्विघ्नेन मुनीश्वराः ।। ५२ ।।
अतः परं च यज्जातं चरितं शशिमौलिनः।।
तच्छृणुध्वमृषिश्रेष्ठाः सावधानेन चेतसा।।५३।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्र संहितायां नागेश्वरज्योतिर्लिंगमाहात्म्ये दारुकावनराक्षसोपद्रववर्णनंनामैकोनत्रिंशोऽध्यायः ।।२९।।

सूत उवाच ।।
कदाचित्सेवकस्तस्य राक्षसस्य दुरात्मनः ।।
तदग्रे सुंदरं रूपं शंकरस्य ददर्श ह ।।१।।
तस्मै निवेदितं राज्ञे राक्षसानां यथार्थकम् ।।
सर्वं तच्चरितं तेन सकौतुकमथाद्भुतम् ।। २ ।।
राजापि तत्र चागत्य राक्षसानां स दारुकः ।।
विह्वलस्सबलश्शीघ्रं पर्यपृच्छच्च तं शिवम् ।। ३ ।।
दारुक उवाच ।।
किं ध्यायसि हि वैश्य त्वं सत्यं वद ममाग्रतः ।।
एवं सति न मृत्युस्ते मम वाक्यं च नान्यथा ।। ४ ।।
सूत उवाच ।।
तेनोक्तं च न जानामि तच्छ्रुत्वा कुपितस्य वै ।।
राक्षसान्प्रेरयामास हन्यतां राक्षसा अयम् ।।५।।
तदुक्तास्ते तदा हंतुं नानायुधधरा गताः ।।
द्रुतं तं वैश्यशार्दूलं शंकरासक्तचेतसम् ।।६।।
तानागतांस्तदा दृष्ट्वा भयवित्रस्तलोचनः ।।
शिवं सस्मार सुप्रीत्या तन्नामानि जगौ मुहुः ।। ७ ।।
वैश्यपतिरुवाच ।।
पाहि शंकर देवेश पाहि शंभो शिवेति च ।।
दुष्टादस्मात्त्रिलोकेश खलहन्भक्तवत्सल ।।८।।
सर्वस्वं च भवानद्य मम देव त्वमेव हि ।।
त्वदधीनस्त्वदीयोऽहं त्वत्प्राणस्सर्वदा प्रभो ।। ९ ।।
सूत उवाच ।।
इति संप्रार्थितश्शंभुर्विवरान्निर्गतस्तदा ।।
भवनेनोत्तमेनाथ चतुर्द्वारयुतेन च ।। 4.30.१० ।।
मध्यज्योतिस्स्वरूपं च शिवरूपं तदद्भुतम् ।।
परिवारसमायुक्तं दृष्ट्वा चापूजयत्स वै ।। ११ ।।
पूजितश्च तदा शंभुः प्रसन्नो ह्यभवत्स्वयम् ।।
अस्त्रं पाशुपतं नाम दत्त्वा राक्षसपुंगवान् ।। १२ ।।
जघान सोपकरणांस्तान्सर्वान्सगणान्द्रुतम् ।।
अरक्षच्च स्वभक्तं वै दुष्टहा स हि शंकरः ।।१३।।
सर्वांस्तांश्च तदा हत्वा वरं प्रादाद्वनस्य च ।।
अत्यद्भुतकरश्शंभुस्स्वलीलात्तसुविग्रहः ।।१४।।

अस्मिन्वने सदा वर्णधर्मा वै संभवंतु च ।।
ब्राह्मणक्षत्रियविशां शूद्राणां हि तथैव च ।। १५ ।।
भवत्वत्र मुनिश्रेष्ठास्तामसा न कदाचन ।।
शिवधर्मप्रवक्तारश्शिवधर्मप्रवर्तकाः ।।१६।।
सूत उवाच ।।
एतस्मिन्समये सा वै राक्षसी दारुकाह्वया ।।
देव्याः स्तुतिं चकारासौ पार्वत्या दीनमानसा ।। १७ ।।
प्रसन्ना च तदा देवी किं करोमीत्युवाच हि ।।
साप्युवाच पुनस्तत्र वंशो मे रक्ष्यतां त्वया ।। १८ ।।
रक्षयिष्यामि ते वंशं सत्यं च कथ्यते मया ।।
इत्युक्त्वा च शिवेनैव विग्रहं सा चकार ह ।। १९ ।।
शिवोपि कुपितां देवीं दृष्ट्वा वरवशः प्रभुः ।।
प्रत्युवाचेति सुप्रीत्या यथेच्छसि तथा कुरु ।। 4.30.२० ।।
सूत् उवाच ।।
इति श्रुत्वा वचस्तस्य स्वपतेश्शंकरस्य वै ।।
सुप्रसन्ना विहस्याशु पार्वती वाक्यमब्रवीत् ।। २१ ।।
पार्वत्युवाच ।।
भवदीयं वचस्तथ्यं युगांते संभविष्यति ।।
तावच्च तामसी सृष्टिर्भवत्विति मतं मम ।।२२।।
अन्यथा प्रलयस्स्याद्वै सत्यं मे व्याहृतं शिव ।।
प्रमाणीक्रियतां नाथ त्वदीयास्मि त्वदाश्रया ।।२३।।
इयं च दारुका देवी राक्षसी शक्तिका मम ।।
बलिष्ठा राक्षसीनां च रक्षोराज्यं प्रशास्तु च ।।२४।।
इमा राक्षसपत्न्यस्तु प्रसविष्यंति पुत्रकान् ।।
ते सर्वे मिलिताश्चैव वने वासाय मे मताः ।। २५ ।।
सूत उवाच ।।
इत्येवं वचनं श्रुत्वा पार्वत्यास्स्वस्त्रियाः प्रभुः ।।
प्रसन्नमानसो भूत्वा शंकरो वाक्यमब्रवीत् ।। २६ ।।
शङ्कर उवाच ।।
इति ब्रवीषि त्वं वै चेच्छृणु मद्वचनं प्रिये ।।
स्थास्याम्यस्मिन्वने प्रीत्या भक्तानां पालनाय च ।। २७ ।।
अत्र मे वर्णधर्मस्थो दर्शनं प्रीतिसंयुतम् ।।
करिष्यति च यो वै स चक्रवर्ती भविष्यति ।। २८ ।।

अन्यथा कलिपर्यायेे सत्यस्यादौ नृपेश्वर ।।
महासेनसुतो यो वै वीरसेनेति विश्रुतः ।। २९ ।।
स मे भक्त्यातिविक्रांतो दर्शनं मे करिष्यति ।।
दर्शनं मे स कृत्वैव चक्रवर्ती भविष्यति ।।4.30.३०।।
सूत उवाच ।। ।।
इत्येवं दंपती तौ च कृत्वा हास्यं परस्परम् ।
स्थितौ तत्र स्वयं साक्षान्महत्त्वकारकौ द्विजाः ।। ३१ ।।
ज्योतिर्लिंगस्वरूपो हि नाम्ना नागेश्वरश्शिवः ।।
नागेश्वरी शिवा देवी बभूव च सतां प्रियौ ।। ३५२ ।।
ऋषय ऊचुः ।।
वीरसेनः कथं तत्र यास्यते दारुकावने ।।
कथमर्चिष्यति शिवं त्वं तद्वद महामते ।। ३३ ।।
सूत उवाच ।।
निषधे सुंदरे देशे क्षत्रियाणां कुले च सः ।।
महासेनसुतो वीरसेनश्चैव शिवप्रियः ।। ३४ ।।
पार्थिवेशार्चनं कृत्वा तपः परमदुष्करम् ।।
चकार वीरसेनो वै वर्षाणां द्वादशावधिः ।।३५।।
ततः प्रसन्नो देवेशः प्रत्यक्षं प्राह शंकरः ।।
काष्ठस्य मत्स्यिकां कृत्वा त्रपुधातु विलेपनाम् ।। ३६ ।।
विधाय योगमायां च दास्यामि वीरसेनक ।।
तां गृहीत्वा प्रविश्यैतं नृभिस्सह व्रजाधुना ।। ३७ ।।
ततस्त्वं तत्र गत्वा च विवरे च कृते मया ।।
प्रविश्य च तदा पूजां कृत्वा नागेश्वरस्य च ।।३८।।
ततः पाशुपतं प्राप्य हत्वा च राक्षसीमुखान् ।।
मयि दृष्टे तदा किंचिन्न्यूनं ते न भविष्यति ।।३९।।
पार्वत्याश्च बलं चैव संपूर्णं वै भविष्यति।।
अन्ये च म्लेच्छरूपा ये भविष्यंति वने शुभाः ।। 4.30.४० ।।
सूत उवाच ।।
इत्युक्त्वा शंकरस्तत्र वीरसेनं हि दुःखह ।।
कृत्वा कृपां च महतीं तत्रैवांतर्द्दधे प्रभुः ।।४१।।
इति दत्तवरस्सोऽपि शिवेन परमात्मना ।।
शक्तस्स वै तदा कर्तुं संबभूव न संशयः ।।४२।।
एवं नागेश्वरो देव उत्पन्नो ज्योतिषां पतिः ।।

लिंगरूपस्त्रिलोकस्य सर्वकामप्रदस्सदा ।।४३।।
एतद्यश्शृणुयान्नित्यं नागेशोद्भवमादरात् ।।
सर्वान्कामानियाद्धीमान्महापातकनाशनान् ।।४४।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां नागेश्वरज्योतिर्लिंगोद्भवमाहात्म्यवर्णनं नाम त्रिंशोऽध्यायः ।। ३० ।।

सूत उवाच ।। ।।
अतः परं प्रवक्ष्यामि लिंगं रामेश्वराभिधम् ।।
उत्पन्नं च यथा पूर्वमृषयश्शृणुतादरात् ।। १ ।।
पुरा विष्णुः पृथिव्यां चावततार सतां प्रियः ।। २ ।।
तत्र सीता हृता विप्रा रावणेनोरुमायिना ।।
प्रापिता स्वगृहं सा हि लंकायां जनकात्मजा ।। ३ ।।
अन्वेषणपरस्तस्याः किष्किन्धाख्यां पुरीमगात् ।।
सुग्रीवहितकृद्भूत्वा वालिनं संजघान ह ।। ४ ।।
तत्र स्थित्वा कियत्कालं तदन्वेषणतत्परः ।।
सुग्रीवाद्यैर्लक्ष्मणेन विचारं कृतवान्स वै ।। ५ ।।
कपीन्संप्रेषयामास चतुर्दिक्षु नृपात्मजः ।।
हनुमत्प्रमुखान्रामस्तदन्वेषणहेतवे ।। ६ ।।
अथ ज्ञात्वा गतां लंकां सीतां कपिवराननात् ।।
सीताचूडामणिं प्राप्य मुमुदे सोऽति राघवः ।। ७ ।।
सकपीशस्तदा रामो लक्ष्मणेन युतो द्विजाः ।।
सुग्रीवप्रमुखैः पुण्यैर्वानरैर्बलवत्तरैः ।। ८ ।।
पद्मैरष्टादशाख्यैश्च ययौ तीरं पयोनिधेः ।।
दक्षिणे सागरे यो वै दृश्यते लवणाकरः।।९।।
तत्रागत्य स्वयं रामो वेलायां संस्थितो हि सः ।।
वानरैस्सेव्यमानस्तु लक्ष्मणेन शिवप्रियः ।। 4.31.१० ।।
हा जानकि कुतो याता कदा चेयं मिलिष्यति ।।
अगाधस्सागरश्चैवातार्या सेना च वानरी ।। ११ ।।
राक्षसो गिरिधर्त्ता च महाबलपराक्रमः।।
लंकाख्यो दुर्गमो दुर्ग इंद्रजित्तनयोस्य वै।।१२।।
इत्येवं स विचार्यैव तटे स्थित्वा सलक्ष्मणः।।
आश्वासितो वनौकोभिरंगदादिपुरस्सरैः ।।१३।।
एतस्मिन्नंतरे तत्र राघवश्शैवसत्तमः।।
उवाच भ्रातरं प्रीत्या जलार्थी लक्ष्मणाभिधम् ।। १४ ।।
राम उवाच ।।
भ्रातर्लक्ष्मण वीरेशाहं जलार्थी पिपासितः ।।
तदानय द्रुतं पाथो वानरैः कैश्चिदेव हि ।।१५।।
सूत उवाच ।।
तच्छ्रुत्वा वानरास्तत्र ह्यधावंत दिशो दश ।।

नीत्वा जलं च ते प्रोचुः प्रणिपत्य पुरः स्थिताः ।। १६ ।।
वानरा ऊचुः ।।
जलं च गृह्यतां स्वामिन्नानीतं तत्त्वदाज्ञया।।
महोत्तमं च सुस्वादु शीतलं प्राणतर्पणम्।।१७।।
सूत उवाच।।
सुप्रसन्नतरो भूत्वा कृपादृष्ट्या विलोक्य तान् ।।
तच्छ्रुत्वा रामचन्द्रोऽसौ स्वयं जग्राह तज्जलम्।।१८।।
स शैवस्तज्जलं नीत्वा पातुमारब्धवान्यदा ।।
तदा च स्मरणं जातमित्थमस्य शिवेच्छया ।। १९ ।।
न कृतं दर्शनं शंभोर्गृह्यते च जलं कथम् ।।
स्वस्वामिनः परेशस्य सर्वानंदप्रदस्य वै । 4.31.२० ।।
इत्युक्त्वा च जलं पीतं तदा रघुवरेण च।।
पश्चाच्च पार्थिवीं पूजां चकार रघुनंदनः।।२१।।
आवाहनादिकांश्चैव ह्युपचारान्प्रकल्प्य वै ।
विधिवत्षोडश प्रीत्या देवमानर्च शङ्करम् ।।२२।।
प्रणिपातैस्स्तवैर्दिव्यैश्शिवं संतोष्य यत्नतः।।
प्रार्थयामास सद्भक्त्या स रामश्शंकरं मुदा ।। २३ ।।
राम उवाच ।। ।।
स्वामिञ्छंभो महादेव सर्वदा भक्तवत्सल ।।
पाहि मां शरणापन्नं त्वद्भक्तं दीनमानसम् ।। २४ ।।
एतज्जलमगाधं च वारिधेर्भवतारण ।।
रावणाख्यो महावीरो राक्षसो बलवत्तरः ।।२५।।
वानराणां बलं ह्येतच्चंचलं युद्धसाधनम् ।।
ममकार्यं कथं सिद्धं भविष्यति प्रियाप्तये ।।२६।।
तस्मिन्देव त्वया कार्यं साहाय्यं मम सुव्रत ।।
साहाय्यं ते विना नाथ मम कार्य्यं हि दुर्लभम् ।। २७ ।।
त्वदीयो रावणोऽपीह दुर्ज्जयस्सर्वथाखिलैः ।।
त्वद्दत्तवरदृप्तश्च महावीरस्त्रिलोकजित् ।। २८ ।।
अप्यहं तव दासोऽस्मि त्वदधीनश्च सर्वथा ।।
विचार्येति त्वया कार्यः पक्षपातस्सदाशिव ।। २९ ।।
सूत उवाच ।।
इत्येवं स च संप्रार्थ्य नमस्कृत्य पुनःपुनः ।।
तदा जयजयेत्युच्चैरुद्घोषैश्शंकरेति च ।। 4.31.३० ।।

इति स्तुत्वा शिवं तत्र मंत्रध्यानपरायणः ।।
पुनः पूजां ततः कृत्वा स्वाम्यग्रे स ननर्त ह ।।३१।।
प्रेमी विक्लिन्नहृदयो गल्लनादं यदाकरोत् ।।
तदा च शंकरो देवस्सुप्रसन्नो बभूव ह ।। ३२ ।।
सांगस्सपरिवारश्च ज्योतीरूपो महेश्वरः ।।
यथोक्तरूपममलं कृत्वाविरभवद्द्रुतम्।। ३३।।
ततस्संतुष्टहृदयो रामभक्त्या महेश्वरः ।।
शिवमस्तु वरं ब्रूहि रामेति स तदाब्रवीत् ।। ३४ ।।
तद्रूपं च तदा दृष्ट्वा सर्वे पूतास्ततस्स्वयम् ।।
कृतवान्राघवः पूजां शिवधर्मपरायणः ।। ३५ ।।
स्तुतिं च विविधां कृत्वा प्रणिपत्य शिवं मुदा ।।
जयं च प्रार्थयामास रावणाजौ तदात्मनः ।। ३६ ।।
ततः प्रसन्नहृदयो रामभक्त्या महेश्वरः ।।
जयोस्तु ते महाराज प्रीत्या स पुनरब्रवीत् ।। ३७ ।।
शिवदत्तं जयं प्राप्य ह्यनुज्ञां समवाप्य च ।।
पुनश्च प्रार्थयामास सांजलिर्नतमस्तकः ।। ३८ ।।
।। राम उवाच ।।
त्वया स्थेयमिह स्वामिंल्लोकानां पावनाय च ।।
परेषामुपकारार्थं यदि तुष्टोऽसि शंकर ।। ३९ ।।
।। सूत उवाच ।।
इत्युक्तस्तु शिवस्तत्र लिंगरूपोऽभवत्तदा ।।
रामेश्वरश्च नाम्ना वै प्रसिद्धो जगतीतले ।। 4.31.४० ।।
रामस्तु तत्प्रभावाद्वै सिन्धुमुत्तीर्य चांजसा ।।
रावणादीन्निहत्याशु राक्षसान्प्राप तां प्रियाम् ।।४१।।
रामेश्वरस्य महिमाद्भुतोऽभूद्भुवि चातुलः ।।
भुक्तिमुक्तिप्रदश्चैव सर्वदा भक्तकामदः ।। ४२ ।।
दिव्यगंगाजलेनैव स्नापयिष्यति यश्शिवम् ।।
रामेश्वरं च सद्भक्त्या स जीवन्मुक्त एव हि ।। ४३ ।।
इह भुक्त्वाखिलान्भोगान्देवानां दुर्लभानपि ।।
अंते प्राप्य परं ज्ञानं कैवल्यं प्राप्नुयाद्ध्रुवम् ।। ४४ ।।
इति वश्च समाख्यातं ज्योतिर्लिंगं शिवस्य तु ।।
रामेश्वराभिधं दिव्यं शृण्वतां पापहारकम्।।४५।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंतायां रामेश्वरमाहात्म्यवर्णनं नामैकत्रिंशोऽध्यायः ।। ३१ ।।

।। सूत उवाच ।।
अतः परं च घुश्मेशं ज्योतिर्लिंगमुदाहृतम्।।
तस्यैव च सुमाहात्म्यं श्रूयतामृषिसत्तमः ।।१।।
दक्षिणस्यां दिशि श्रेष्ठो गिरिर्देवेति संज्ञकः ।।
महाशोभान्वितो नित्यं राजतेऽद्भुत दर्शनः ।। २ ।।
तस्यैव निकटे कश्चिद्भारद्वाजकुलोद्भवः ।।
सुधर्मा नाम विप्रश्च न्यवसद्ब्रह्मवित्तमः ।। ३ ।।
तस्य प्रिया सुदेहा च शिवधर्मपरायणः ।।
पतिसेवापरा नित्यं गृहकर्मविचक्षणा ।।४।।
सुधर्मा च द्विजश्रेष्ठो देवतातिथिपूजकः ।।
वेदमार्गपरो नित्यमग्नि सेवापरायणः ।।५।।
त्रिकालसंध्यया युक्तस्सूर्य्यरूपसमद्युतिः ।।
शिष्याणां पाठकश्चैव वेदशास्त्रविचक्षणः ।।६।।
धनवांश्च परो दाता सौजन्यगुणभाजनः ।।
शिवकर्मरतो नित्यं शैवश्शैवजनप्रियः ।। ।।७।।
आयुर्बहु व्यतीयाय तस्य धर्मं प्रकुर्वतः ।।
पुत्रश्च नाभवत्तस्य ऋतुः स्यादफलः स्त्रियाः ।।८।।
तेन दुःखं कृतं नैव वस्तुज्ञानपरेण हि ।।
आत्मनस्तारकश्चात्मा ह्यात्मनः पावनश्च सः ।। ९ ।।
इत्येवं मानसं धृत्वा दुःखं न कृतवान्स्तदा ।।
सुदेहा च तदा दुःखं चकार पुत्रसम्भवम् ।।4.32.१०।।
नित्यं च स्वामिनं सा वै प्रार्थयद्यत्नसाधने ।।
पुत्रोत्पादनहेतोश्च सर्वविद्याविशारदम् ।। ११ ।।
सोऽपि स्त्रियं तदा भर्त्स्य किं पुत्रश्च करिष्यति ।।
का माता कः पिता पुत्रः को बंधुश्च प्रियश्च कः ।। १२ ।।
सर्वं स्वार्थपरं देवि त्रिलोक्यां नात्र संशयः ।।
जानीहि त्वं विशेषेण बुद्ध्या शोकं न वै कुरु ।। १३ ।।
तस्माद्देवि त्वया दुःखं त्यजनीयं सुनिश्चितम् ।।
नित्यं मह्यं त्वया नैव कथनीयं शुभव्रते ।। १४ ।।
एवं तां सन्निवार्य्यैव भगवद्धर्मतत्परः ।।
आसीत्परमसंतुष्टो द्वन्द्वदुःखं समत्यजत् ।। १५।।
कदाचिच्च सुदेहा वै गेहे च सहवासिनः ।।
जगाम प्रियगोष्ठ्यर्थं विवादस्तत्र संगतः ।।१६।।

तत्पत्नी स्त्रीस्वभावाच्च भर्त्सिता सा तया तदा ।।
उक्ता चेति दुरुक्त्या वै सुदेहा विप्रकामिनी।।१७।।
द्विजपत्न्युवाच ।। अपुत्रिणि कथं गर्वं कुरुषे पुत्रिणी ह्यहम् ।।
मद्धनं भोक्ष्यते पुत्रो धनं ते कश्च भोक्ष्यते ।। १८ ।।
नूनं हरिष्यते राजा त्वद्धनं नात्र संशयः ।।
धिग्धिक्त्वां ते धनं धिक्च धिक्ते मानं हि वन्ध्यके ।। १९ ।।
।। सूत उवाच ।।
भर्त्सिता ताभिरिति सा गृहमागत्य दुःखिता ।।
स्वामिने कथयामास तदुक्तं सर्वमादरात् ।। 4.32.२० ।।
ब्राह्मणोऽपि तदा दुःखं न चकार सुबुद्धिमान् ।।
कथितं कथ्यतामेव यद्भावि तद्भवेत्प्रिये ।। २१ ।।
इत्येवं च तदा तेन ह्याश्वस्तापि पुनः पुनः ।।
न तदा सात्यजद्दुःखं ह्याग्रहं कृतवत्यसौ ।। २२ ।।
।सुदेहोवाच ।।
यथा तथा त्वया पुत्रस्समुत्पाद्यः प्रियोऽसि मे ।।
त्यक्षामि ह्यन्यथाहं च देहं देहभृतां वर ।। २३ ।।
सूत उवाच ।।
एवमुक्तं तया श्रुत्वा सुधर्मा ब्राह्मणोत्तमः ।।
शिवं सस्मार मनसा तदाग्रहनिपीडितः।।२४।।
अग्नेरग्रेऽक्षिपत्पुष्पद्वयं विप्रो ह्यतंद्रितः ।।
मनसा दक्षिणं पुष्पं तन्मेने पुत्रकामदम् ।। २५ ।।
एवं कृत्वा पणं पत्नीमुवाच ब्राह्मणस्स च ।।
अनयोर्ग्राह्यमेकं ते पुष्पं पुत्र फलाप्तये ।।२६।।
तया च मनसा धृत्वा पुत्रश्चैव भवेन्मम ।।
तदा च स्वामिना यच्च धृतं पुष्पं समेतु माम् ।। २७ ।।
इत्युक्त्वा च तया तत्र नमस्कृत्य शिवं तदा ।।
नत्वा चाग्निं पुनः प्रार्थ्य गृहीतं पुष्पमेककम् ।। २८ ।।
स्वामिना चिंतितं यच्च तद्गृहीतं तया न हि ।।
सुदेहया विमोहेन शिवेच्छासंभवेन वै।।२९।।
तद्दृष्ट्वा पुरुषश्चैव निश्वासं पर्यमोचयत् ।।
स्मृत्वा शिवपदांभोजमुवाच निजकामिनीम् ।।4.32.३०।।
सुधर्मोवाच ।।
निर्मितं चेश्वरेणैव कथं चैवान्यथा भवेत् ।।

आशां त्यज प्रिये त्वं च परिचर्य्यां कुरु प्रभोः ।।३१।।
इत्युक्त्वा तु स्वयं विप्र आशां परिविहाय च ।।
धर्मकार्यरतस्सोऽभूच्छंकरध्यानतत्परः ।। ३२ ।।
सा सुदेहाग्रहं नैव मुमोचात्मजकाम्यया ।।
प्रत्युवाच पतिं प्रेम्णा सांजलिर्नतमस्तका ।। ३३ ।।
सुदेहोवाच ।।
मयि पुत्रो न चास्त्वन्या पत्नीं कुरु मदाज्ञया ।।
तस्यां नूनं सुतश्चैव भविष्यति न संशयः ।।३४।।
सूत उवाच ।।
तदैव प्रथितो वै स ब्रह्मणश्शैवसत्तमः ।।
उवाच स्वप्रियां तां च सुदेहां धर्म तत्परः ।।३५।।
सुधर्मोवाच ।।
त्वदीयं च मदीयं च सर्वं दुःखं गतं ध्रुवम् ।।
तस्मात्त्वं धर्मविघ्नं च प्रियो मा कुरु सांप्रतम् ।।३६।।
सूत उवाच ।।
इत्येवं वारिता सा च स्वामातुः पुत्रिकां तदा ।।
गृहमानीय भर्तारं वृणु त्वेनामिदं जगौ ।।३७।।
सुधर्मोवाच ।।
इदानीं वदसि त्वं च मत्प्रियेयं ततः पुनः ।।
पुत्रसूश्च यदा स्याद्वै तदा स्पर्द्धां करिष्यसि ।।३८।।
सूत उवाच।।
इत्युक्त्वा तेन पतिना सा सुदेहा च तत्प्रिया ।।
पुनः प्राह करौ बद्ध्वा सुधर्माणं पतिं द्विजाः ।। ३९ ।।
( नाहं स्पर्द्धां भगिन्या वै करिष्ये द्विजसत्तम ।।
उपयच्छस्व पुत्रार्थमिमामाज्ञापयामि च ।।)
इत्येवं प्रार्थितस्सोऽपि सुधर्मा प्रियया तया ।।
घुश्मां तां समुपायंस्त विवाहविधिना द्विजः।।4.32.४०।।
ततस्तां परिणीयाथ प्रार्थयामास तां द्विजः ।।
त्वदीयेयं कनिष्ठा हि सदा पोष्यानघे प्रिये ।।४१।।
उक्तैव स च धर्मात्मा सुधर्मा शैवसत्तमः ।।
यथायोग्यं चकाराशु धर्मसंग्रहमात्मनः ।।४२।।
सा चापि मातृपुत्रीं तां दासीवत्पर्यवर्त्तत ।।
परित्यज्य विरोधं हि पुपोषाहर्निशं प्रिया ।।४३।।

कनिष्ठा चैव या पत्नी स्वस्रनुज्ञामवाप्य च ।।
पार्थिवान्सा चकाराशु श्रियमेकोत्तरं शतम् ।।४४।।
विधानपूर्वकं घुष्मा सोपचारसमन्वितम् ।।
कृत्वा तान्प्राक्षिपत्तत्र तडागे निकटस्थिते ।। ४५ ।।
एवं नित्यं सा चकार शिवपूजां स्वकामदाम् ।।
विसृज्य पुनरावाहय तत्सपर्य्याविधानतः ।। ४६ ।।
कुर्वन्त्या नित्यमेवं हि तस्याश्शंकरपूजनम् ।।
लक्षसंख्याभवत्पूर्णा सर्वकामफलप्रदा ।। ४७ ।।
कृपया शंकरस्यैव तस्याः पुत्रो व्यजायत ।।
सुन्दरस्सुभगश्चैव कल्याणगुणभाजम् ।। ४८ ।।
तं दृष्ट्वा परमप्रीतः स विप्रो धर्मवित्तमः ।।
अनासक्तस्सुखं भेजे ज्ञानधर्मपरायणः ।। ४९ ।।
सुदेहा तावदस्यास्तु स्पर्द्धामुग्रां चकार सा ।।
प्रथमं शीतलं तस्या हृदयं हयसिवत्पुनः ।। 4.32.५० ।।
ततः परं च यज्जातं कुत्सितं कर्म दुःखदम् ।।
सावधानेन मनसा श्रूयतां तन्मुनीश्वरा ।। ५१ ।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां घुश्मेश्वरमाहात्म्ये सुदेहासुधर्मचरितवर्णनं नाम द्वात्रिंशोऽध्यायः ।। ३२ ।।

सूत उवाच ।।
पुत्रं दृष्ट्वा कनिष्ठाया ज्येष्ठा दुःखमुपागता ।।
विरोधं सा चकाराशु न सहंती च तत्सुखम् ।। १ ।।
सर्वे पुत्रप्रसूतिं तां प्रशशंसुर्निरन्तरम् ।।
तया तत्सह्यते न स्म शिशो रूपादिकं तथा ।।२।।
सुप्रियं तनयं तं च पित्रोस्सद्गुणभाजनम् ।।
दृष्ट्वाऽभवत्तदा तस्या हृदयं तप्तमग्निवत् ।।३।।
एतस्मिन्नंतरे विप्राः कन्यां दातुं समागताः ।।
विवाहं तस्य तत्रैव चकार विधिवच्च सः ।।४।।
सुधर्मा घुश्मया सार्द्धमानन्दं परमं गतः ।।
सर्वे संबंधिनस्तस्यां घुश्मायां मानमादधुः ।।५।।
तं दृष्ट्वा सा सुदेहा हि मनसि ज्वलिता तदा ।।
अत्यन्तं दुःखमापन्ना हा हतास्मीति वादिनी ।।६।।
सुधर्म्मा गृहमागत्य वधूं पुत्रं विवाहितम् ।।
उत्साहं दर्शयामास प्रियाभ्यां हर्षयन्निव ।। ७ ।।
अभवद्धर्षिता घुष्मा सुदेहा दुःखमागता ।।
न सहंती सुखं तच्च दुःखं कृत्वापतद्भुवि ।।८।।
घुश्माऽवदद्वधूपुत्रौ त्वदीयौ न मदीयकौ ।।
वधूः पुत्रश्च तां प्रीत्या प्रसूं श्वश्रममन्यत ।। ९ ।।
भर्त्ता प्रियां तां ज्येष्ठां च मेने नैव कनिष्ठिकाम् ।।
तथापि सा तदा ज्येष्ठा स्वान्तर्मलवती ह्यभूत् ।। 4.33.१० ।।
एकस्मिन्दिवसे ज्येष्ठा सा सुदेहा च दुःखिनी ।।
हृदये संचिचिन्तेति दुःखशांतिः कथं भवेत् ।। ११ ।।
सुदेहोवाच ।।
मदीयो हृदयाग्निश्च घुश्मानेत्रजलेन वै ।।
भविष्यति ध्रुवं शांतो नान्यथा दुःखजेन हि ।। १२ ।।
अतोऽहं मारयाम्यद्य तत्पुत्रं प्रियवादिनम् ।।
अग्रे भावि भवेदेवं निश्चयः परमो मम ।।१३।।
सूत उवाच ।।
कदर्य्याणां विचारश्च कृत्याकृत्ये भवेन्नहि।।
कठोरः प्रायशो विप्राः सापत्नो भाव आत्महा ।। १४ ।।
एकस्मिन्दिवसे ज्येष्ठा सुप्तं पुत्रं वधूयुतम् ।।
चिच्छिदे निशि चांगेषु गृहीत्वा छुरिकां च सा ।। १५ ।।

सर्वांगं खण्डयामास रात्रौ घुश्मासुतस्य सा ।।
नीत्वा सरसि तत्रैवाक्षिपद्दृप्ता महाबला ।। १६ ।।
यत्र क्षिप्तानि लिंगानि घुश्मया नित्यमेव हि।।
तत्र क्षिप्त्वा समायाता सुष्वाप सुखमागता।।१७।।
प्रातश्चैव समुत्थाय घुश्मा नित्यं तथाकरोत्।।।
सुधर्मा च स्वयं श्रेष्ठो नित्यकर्म समाचरत् ।।१८।।
एतस्मिन्नंतरे सा च ज्येष्ठा कार्यं गृहस्य वै ।।
चकारानन्दसंयुक्ता सुशांतहृदयानला।।१९।।
प्रातःकाले समुत्थाय वधूश्शय्यां विलोक्य सा।।
रुधिरार्द्रां देहखंडैर्युक्तां दुःखमुपागता ।।4.33.२०।।
श्वश्रूं निवेदयामास पुत्रस्ते च कुतो गतः।।
शय्या च रुधिरार्द्रा वै दृश्यंते देहखंडकाः।।२१।।
हा हतास्मि कृतं केन दुष्टं कर्म शुचिव्रते।।
इत्युच्चार्य रुरोदातिविविधं तत्प्रिया च सा।।२२।।
ज्येष्ठा दुःखं तदापन्ना हा हतास्मि किलेति च ।।
बहिर्दुःखं चकारासौ मनसा हर्षसंयुता।।२३।।
घुश्मा चापि तदा तस्या वध्वा दुखं निशम्य सा।।
न चचाल व्रतात्तस्मान्नित्यपार्थिवपूजनात्।।२४।।
मनश्चैवोत्सुकं नैव जातं तस्या मनागपि।।
भर्तापि च तथैवासीद्यावद्व्रतविधिर्भवेत्।।२५।।
मध्याह्ने पूजनांते च दृष्ट्वा शय्यां भयावहाम्।।
तथापि न तदा किञ्चित्कृतं दुःखं हि घुश्मया।।२६।।
येनैव चार्पितश्चायं स वै रक्षां करिष्यति ।।
भक्तप्रियस्स विख्यातः कालकालस्सतां गतिः ।। २७ ।।
यदि नो रक्षिता शंभुरीश्वरः प्रभुरेकलः ।।
मालाकार इवासौ यान्युङ्क्ते तान्वियुनक्ति च ।। २८ ।।
अद्य मे चिंतया किं स्यादिति तत्त्वं विचार्य सा ।।
न चकार तदा दुःखं शिवे धैर्यं समागता ।।२९।।
पार्थिवांश्च गृहीत्वा सा पूर्ववत्स्वस्थमानसा ।।
शंभोर्नामान्युच्चरंती जगाम सरसस्तटे ।। 4.33.३० ।।।
क्षिप्त्वा च पार्थिवांस्तत्र परावर्त्तत सा यदा ।।
तदा पुत्रस्तडागस्थो दृश्यते स्म तटे तया।।३१।।
पुत्र उवाच ।।

मातरेहि मिलिष्यामि मृतोऽहं जीवितोऽधुना ।।
तव पुण्यप्रभावाद्धि कृपया शंकरस्य वै ।। ३२ ।।
।। सूत उवाच ।।
जीवितं तं सुतं दृष्ट्वा घुष्मा सा तत्प्रसूर्द्विजाः ।।
प्रहृष्ट्वा नाभवत्तत्र दुःखिता न यथा पुरा ।। ३३ ।।
एतस्मिन्समये तत्र स्वाविरासीच्छिवो द्रुतम् ।।
ज्योतिरूपो महेशश्च संतुष्टः प्रत्युवाच ह ।।३४।।
शिव उवाच ।।
प्रसन्नोऽस्मि वरं ब्रूहि दुष्टया मारितो ह्ययम् ।।
एनां च मारयिष्यामि त्रिशूलेन वरानने ।। ३५ ।।
।। सूत उवाच ।।
पुरा तदा वरं वव्रे सुप्रणम्य शिवं नता ।।
रक्षणीया त्वया नाथ सुदेहेयं स्वसा मम ।। ३६ ।।
शिव उवाच ।।
अपकारः कृतस्तस्यामुपकारः कथं त्वया ।।
क्रियते हननीया च सुदेहा दुष्टकारिणी ।। ३७ ।।
घुश्मोवाच ।।
तव दर्शनमात्रेण पातकं नैव तिष्ठति ।।
इदानीं त्वां च वै दृष्ट्वा तत्पापं भस्मतां व्रजेत् ।।३८।।
अपकारेषु यश्चैव ह्युपकारं करोति च ।।
तस्य दर्शनमात्रेण पापं दूरतरं व्रजेत् ।।३९।।
इति श्रुतं मया देव भगवद्वाक्यमद्भुतम् ।।
तस्माच्चैवं कृतं येन क्रियतां च सदाशिव ।।4.33.४०।।
सूत उवाच ।।
इत्युक्तस्तु तया तत्र प्रसन्नोऽत्यभवत्पुनः ।।
महेश्वरः कृपासिंधुः समूचे भक्तवत्सलः।।४१।।
शिव उवाच।।
अन्यद्वरं ब्रूहि घुश्मे ददामि च हितं तव ।।
त्वद्भक्त्या सुप्रसन्नोऽस्मि निर्विकारस्वभावतः ।। ४२ ।।
सूत उवाच ।।
सोवाच तद्वचश्श्रुत्वा यदि देयो वरस्त्वया ।।
लोकानां चैव रक्षार्थमत्र स्थेयं मदाख्यया ।।४३।।
तदोवाच शिवस्तत्र सुप्रसन्नो महेश्वरः ।।

स्थास्येऽत्र तव नाम्नाहं घुश्मेशाख्यस्सुखप्रदः ।। ४४ ।।
घुश्मेशाख्यं सुप्रसिद्धं लिंगं मे जायतां शुभम् ।।
इदं सरस्तु लिंगानामालयं जायतां सदा ।। ४५ ।।
तस्माच्छिवालयं नाम प्रसिद्धं भुवनत्रये ।।
सर्वकामप्रदं ह्येतद्दर्शनात्स्यात्सदा सरः ।।४६।।
तव वंशे शतं चैकं पुरुषावधि सुव्रते ।।
ईदृशाः पुत्रकाः श्रेष्ठा भविष्यंति न संशयः ।। ४७ ।।
सुस्त्रीकास्सुधनाश्चैव स्वायुष्याश्च विचक्षणाः ।।
विद्यावंतो ह्युदाराश्च भुक्तिमुक्तिफलाप्तये ।।४८।।
शतमेकोत्तरं चैव भविष्यंति गुणाधिकाः ।।
ईदृशो वंशविस्तारो भविष्यति सुशोभनः ।।४९।।
सूत उवाच ।।
इत्युक्त्वा च शिवस्तत्र लिंगरूपोऽभवत्तदा ।।
घुश्मेशो नाम विख्यातः सरश्चैव शिवालयम् ।। 4.33.५० ।।
सुधर्मा स च घुश्मा च सुदेहा च समागताः ।।
प्रदक्षिणं शिवस्याशु शतमेकोत्तरं दधुः ।। ५१ ।।
पूजां कृत्वा महेशस्य मिलित्वा च परस्परम् ।।
हित्वा चांतर्मलं तत्र लेभिरे परमं सुखम् ।। ५२ ।।
पुत्रं दृष्ट्वा सुदेहा सा जीवितं लज्जिताभवत् ।।
तौ क्षमाप्याचरद्विप्रा निजपापापहं व्रतम् ।। ५३ ।।
घुश्मेशाख्यमिदं लिंगमित्थं जातं मुनीश्वराः ।।
तं दृष्ट्वा पूजयित्वा हि सुखं संवर्द्धते सदा ।। ५४ ।।
इति वश्च समाख्याता ज्योतिर्लिंगावली मया ।।
द्वादशप्रमिता सर्वकामदा भुक्ति मुक्तिदा ।। ५५ ।।
एतज्ज्योतिर्लिंगकथां यः पठेच्छृणुयादपि ।।
मुच्यते सर्वपापेभ्यो भुक्तिं मुक्तिं च विंदति ।। ५६ ।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसहितायां धुश्मेशज्योतिर्लिंगोत्पत्तिमाहात्म्यवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ।। ३३ ।।

इति द्वादशज्योतिर्लिंगमाहात्म्यं समाप्तम् ।।

व्यास उवाच ।।
इति श्रुत्वा वचस्तस्य सूतस्य च मुनीश्वराः ।।
समूचुस्तं सुप्रशस्य लोकानां हितकाम्यया ।। १ ।।
ऋषय ऊचुः ।।
सूत सर्वं विजानासि ततः पृच्छामहे वयम् ।।
हरीश्वरस्य लिंगस्य महिमानं वद प्रभो ।। २ ।।
चक्रं सुदर्शनं प्राप्तं विष्णुनेति श्रुतं पुरा ।।
तदाराधनतस्तात तत्कथा च विशेषतः ।। ३ ।।
सूत उवाच ।।
श्रूयतां च ऋषिश्रेष्ठा हरीश्वरकथा शुभा ।।
यतस्सुदर्शनं लब्धं विष्णुना शंकरात्पुरा ।। ४ ।।
कस्मिंश्चित्समये दैत्याः संजाता बलवत्तराः ।।
लोकांस्ते पीडयामासुर्धर्मलोपं च चक्रिरे ।। ।। ५ ।।
ते देवाः पीडिता दैत्यैर्महाबलपराक्रमैः ।।
स्वं दुखं कथयामासुर्विष्णुं निर्जररक्षकम् ।। ६ ।।
देवा ऊचुः ।।
कृपां कुरु प्रभो त्वं च दैत्यैस्संपीडिता भृशम् ।।
कुत्र यामश्च किं कुर्मश्शरण्यं त्वां समाश्रिताः ।। ७ ।।
सूत उवाच ।।
इत्येवं वचनं श्रुत्वा देवानां दुःखितात्मनाम् ।।
स्मृत्वा शिवपदांभोजं विष्णुर्वचनमब्रवीत ।। ८ ।।
विष्णुरुवाच ।।
करिष्यामि च वः कार्य्यमाराध्य गिरिशं सुराः ।।
बलिष्ठाश्शत्रवो ह्येते विजेतव्याः प्रयत्नतः ।। ९ ।।
सूत उवाच ।।
इत्युक्तास्ते सुरास्सर्वे विष्णुना प्रभविष्णुना ।।
मत्वा दैत्यान्हतान्दुष्टान्ययुर्धाम स्वकंस्वकम् ।। 4.34.१० ।।
विष्णुरप्यमराणां तु जयार्थमभजच्छिवम्।।
सर्वामराणामधिपं सर्वसाक्षिणमव्ययम् ।।११।।
गत्वा कैलासनिकटे तपस्तेपे हरिस्स्वयम् ।।
कृत्वा कुंडं च संस्थाप्य जातवेदसमग्रतः ।।१२।।
पार्थिवेन विधानेन मंत्रैर्नानाविधैरपि।।
स्तोत्रैश्चैवाप्यनेकैश्च गिरिशं चाभजन्मुदा ।।१३।।

कमलैस्सरसो जातैर्मानसाख्यान्मुनीश्वराः ।।
बद्ध्वा चैवासनं तत्र न चचाल हरिस्स्वयम् ।। १४ ।।
प्रसादावधि चैवात्र स्थेयं वै सर्वथा मया ।।
इत्येवं निश्चयं कृत्वा समानर्च शिवं हरिः।।१५।।
यदा नैव हरस्तुष्टो बभूव हरये द्विजाः ।।
तदा स भगवान्विष्णुर्विचारे तत्परोऽभवत्।।१६।।
विचार्यैवं स्वमनसि सेवनं बहुधा कृतम् ।।
तथापि न हरस्तुष्टो बभूवोतिकरः प्रभुः ।।१७।।
ततस्तु विस्मितो विष्णुर्भक्त्या परमयान्वितः ।। १९ ।।
सहस्रैर्नामभिः प्रीत्या तुष्टाव परमेश्वरम् ।। १८ ।।
प्रत्येकं कमलं तस्मै नाममंत्रमुदीर्य च ।।
पूजयामास वै शंभुं शरणागतवत्सलम् ।। १९ ।।
परीक्षार्थं विष्णुभक्तेस्तदा वै शंकरेण ह ।।
कमलानां सहस्रात्तु हृतमेकं च नीरजम् ।।4.34.२०।।
न ज्ञातं विष्णुना तच्च मायाकारणमद्भुतम् ।।
न्यूनं तच्चापि सञ्ज्ञाय तदन्वेषणतत्परः ।। २१ ।।
बभ्राम सकलां पृथ्वीं तत्प्रीत्यै सुदृढव्रतः ।।
तदप्राप्य विशुद्धात्मा नेत्रमेकमुदाहरत् ।। २२ ।।
तं दृष्ट्वा स प्रसन्नोऽभूच्छंकरस्सर्वदुःखहा ।।
आविर्बभूव तत्रैव जगाद वचनं हरिम् ।। २३ ।।
शिव उवाच ।।
प्रसन्नोऽस्मि हरे तुभ्यं वरं ब्रूहि यथेप्सितम् ।।
मनोऽभिलषितं दद्मि नादेयं विद्यते तव ।। २४ ।।
सूत उवाच ।।
तच्छ्रुत्वा शंभुवचनं केशवः प्रीतमानसः ।।
महाहर्षसमापन्नो ह्यब्रवीत्सांजलिश्शिवम् ।। २५ ।।
विष्णुरुवाच ।।
वाच्यं किं मे त्वदग्रे वै ह्यन्तर्यामी त्वमास्थितः ।।
तथापि कथ्यते नाथ तव शासनगौरवात्।।२६।।
दैत्यैश्च पीडितं विश्वं सुखं नो नस्सदा शिव ।।
दैत्यान्हंतुं मम स्वामिन्स्वायुधं न प्रवर्त्तते।।२७।।
किं करोमि क्व गच्छामि नान्यो मे रक्षकः परः।।
अतोऽहं परमेशान शरणं त्वां समागतः ।।२८।।

सूत उवाच ।।
इत्युक्त्वा च नमस्कृत्य शिवाय परमात्मने।।
स्थितश्चैवाग्रतश्शंभोः स्वयं च पुरुपीडितः।।२९।।
सूत उवाच ।।
इति श्रुत्वा वचो विष्णोर्देवदेवो महेश्वरः ।।
ददौ तस्मै स्वकं चक्रं तेजोराशिं सुदर्शनम्।।4.34.३०।।
तत्प्राप्य भगवान्विष्णुर्दैत्यांस्तान्बलवत्तरान् ।।
जघान तेन चक्रेण द्रुतं सर्वान्विना श्रमम् ।। ३१ ।।
जगत्स्वास्थ्यं परं लेभे बभूवुस्सुखिनस्सुराः ।।
सुप्रीतः स्वायुधं प्राप्य हरिरासीन्महासुखी ।। ३२ ।।
ऋषय ऊचुः ।।
किं तन्नामसहस्रं वै कथय त्वं हि शांकरम् ।।
येन तुष्टो ददौ चक्रं हरये स महेश्वरः ।। ३३ ।।
तन्माहात्म्यम्मम ब्रूहि शिवसंवादपूर्वकम् ।।
कृपालुत्वं च शंभोर्हि विष्णूपरि यथातथम् ।।३४।।
व्यास उवाच ।।
इति तेषां वचश्श्रुत्वा मुनीनां भावितात्मनाम् ।।
स्मृत्वा शिवपदांभोजं सूतो वचनमब्रवीत् ।।३५।।
इति श्रीशिव महापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां विष्णुसुदर्शनचक्रलाभवर्णनं नाम चतुस्त्रिंशोऽध्यायः ।।३४।।

सूत उवाच ।।
श्रूयतामृषयः श्रेष्ठाः कथयामि यथा श्रुतम् ।।
विष्णुना प्रार्थितो येन संतुष्टः परमेश्वरः ।।
तदाहं कथयाम्यद्य पुण्यं नाम सहस्रकम् ।। १ ।।
श्रीविष्णुरुवाच ।।
शिवो हरो मृडो रुद्रः पुष्करः पुष्पलोचनः ।।
अर्थिगम्यः सदाचारः शर्वः शंभुर्महेश्वरः ।। २ ।।
चंद्रापीडश्चंद्रमौलिर्विश्वं विश्वंभरेश्वरः ।।
वेदांतसारसंदोहः कपाली नीललोहितः ।। ३ ।।
ध्यानाधारोऽपरिच्छेद्यो गौरीभर्त्ता गणेश्वरः ।।
अष्टमूर्तिर्विश्वमूर्तिस्त्रिवर्गस्वर्गसाधनः ।। ४ ।।
ज्ञानगम्यो दृढप्रज्ञो देवदेवस्त्रिलोचनः ।।
वामदेवो महादेवः पटुः परिवृढो दृढः ।। ५ ।।
विश्वरूपो विरूपाक्षो वागीशः शुचिसत्तमः ।।
सर्वप्रमाणसंवादी वृषाङ्को वृषवाहनः ।। ६ ।।
ईशः पिनाकी खट्वांगी चित्रवेषश्चिरंतनः ।।
तमोहरो महायोगी गोप्ता ब्रह्मा च धूर्जटिः ।। ७ ।।
कालकालः कृत्तिवासाः सुभगः प्रणवात्मकः ।।
उन्नध्रः पुरुषो जुष्यो दुर्वासाः पुरशासनः ।। ८ ।।
दिव्यायुधः स्कंदगुरुः परमेष्ठीः परात्परः ।।
अनादिमध्यनिधनो गिरीशो गिरिजाधवः ।। ९ ।।
कुबेरबंधुः श्रीकंठो लोकवर्णोत्तमो मृदुः ।।
समाधिवेद्यः कोदंडी नीलकंठः परस्वधीः ।। 4.35.१० ।।
विशालाक्षो मृगव्याधः सुरेशः सूर्यतापनः ।।
धर्मधाम क्षमाक्षेत्रं भगवान्भगनेत्रभित् ।। ११ ।।
उग्रः पशुपतिस्ताक्ष्र्यः प्रियभक्तः परंतपः ।।
दाता दयाकरो दक्षः कर्मंदीः कामशासनः ।। १२ ।।
श्मशाननिलयः सूक्ष्मः श्मशानस्थो महेश्वरः ।।
लोककर्त्ता मृगपतिर्महाकर्त्ता महौषधिः ।।१३।।
उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः।।
नीतिः सुनीतिः शुद्धात्मा सोमः सोमरतः सुखी ।।१४।।
सोमपोऽमृतपः सौम्यो महातेजा महाद्युतिः ।।
तेजोमयोऽमृतमयोऽन्नमयश्च सुधापतिः ।। १५ ।।

अजातशत्रुरालोकः संभाव्यो हव्यवाहनः ।।
लोककरो वेदकरः सूत्रकारः सनातनः ।। १६ ।।
महर्षिकपिलाचार्यो विश्वदीप्तिस्त्रिलोचनः ।।
पिनाकपाणिर्भूदेवः स्वस्तिदः स्वस्तिकृत्सुधीः ।। १७ ।।
धातृधामा धामकरः सर्वगः सर्वगोचरः ।।
ब्रह्मसृग्विश्वसृक्सर्गः कर्णिकारः प्रियः कविः ।। १८ ।।
शाखो विशाखो गोशाखः शिवो भिषगनुत्तमः ।।
गंगाप्लवोदको भव्यः पुष्कलः स्थपतिः स्थिरः ।। १९ ।।
विजितात्मा विधेयात्मा भूतवाहनसारथिः ।।
सगणो गणकायश्च सुकीर्तिच्छिन्नसंशयः।।4.35.२०।।
कामदेवः कामपालो भस्मोद्धूलितविग्रहः ।।
भस्मप्रियो भस्मशायी कामी कांतः कृतागमः ।।२१।।
समावर्तोऽनिवृत्तात्मा धर्मपुंजः सदाशिवः ।।
अकल्मषश्च पुण्यात्मा चतुर्बाहुर्दुरासदः।।२२।।
दुर्लभो दुर्गमो दुर्गः सर्वायुधविशारदः ।।
अध्यात्मयोगनिलयः सुतंतुस्तंतुवर्धनः ।।२३।।
शुभांगो लोकसारंगो जगदीशो जनार्दनः।।
भस्मशुद्धिकरो मेरुरोजस्वी शुद्धविग्रहः ।। २४ ।।
असाध्यः साधुसाध्यश्च भृत्यमर्कटरूपधृक् ।।
हिरण्यरेताः पौराणो रिपुजीवहरो बली ।। २५ ।।
महाह्रदो महागर्तस्सिद्धोवृंदारवंदितः ।।
व्याघ्रचर्मांबरो व्याली महाभूतो महानिधिः ।। २६ ।।
अमृतोऽमृवपुः श्रीमान्पाञ्चजन्यः प्रभंजनः ।।
पंचविंशतितत्त्वस्थः पारिजातः परात्परः ।।२७।।
सुलभस्सुव्रतश्शूरो वाङ्मयैकनिधिर्निधिः ।।
वर्णाश्रमगुरुर्वर्णी शत्रुजिच्छत्रुतापनः ।। २८ ।।
आश्रमः क्षपणः क्षामो ज्ञानवानचलेश्वरः ।।
प्रमाणभूतो दुर्ज्ञेयः सुपर्णो वायुवाहनः ।। ।।२९।।
धनुर्धरो धनुर्वेदो गुणः शशिगुणाकरः।।
सत्यस्सत्यपरोऽदीनो धर्मो गोधर्मशासनः।।4.35.३०।।
अनंतदृष्टिरानंदो दंडो दमयिता दमः ।।
अभिचार्य्यो महामायो विश्वकर्म विशारदः।।३१।।
वीतरागो विनीतात्मा तपस्वीभूतभावनः।।

उन्मत्तवेषः प्रच्छन्नो जितकामोऽजितप्रियः।।३२।।
कल्याणप्रकृतिः कल्पः सर्वलोकप्रजापतिः।।
तरस्वी तारको धीमान्प्रधानः प्रभुरव्ययः ।।३३।।
लोकपालोंऽतर्हितात्मा कल्पादिः कमलेक्षणः ।।
वेदशास्त्रार्थतत्त्वज्ञोऽनियमो नियताश्रयः ।। ३४ ।।
चंद्रः सूर्यः शनिः केतुर्वरांगो विद्रुमच्छविः ।।
भक्तिवश्यः परं ब्रह्म मृगबाणार्पणोऽनघः ।।३५।।
अद्रिरद्र्यालयः कांतः परमात्मा जगद्गुरुः।।
सर्वकर्मालयस्तुष्टो मंगल्यो मंगलावृतः ।। ३६ ।।
महातपा दीर्घतपाः स्थविष्ठ स्थविरो ध्रुवः ।।
अहः संवत्सरो व्याप्तिः प्रमाणं परमं तपः ।। ३७ ।।
संवत्सरकरो मंत्रः प्रत्ययः सर्वतापनः ।।
अजः सर्वेश्वरस्सिद्धो महातेजा महाबलः ।।३८।।
योगी योग्यो महारेता सिद्धिः सर्वादिरग्रहः ।।
वसुर्वसुमनाः सत्यः सर्वपापहरो हरः ।। ३९ ।।
सुकीर्ति शोभनस्स्रग्वी वेदांगो वेदविन्मुनिः ।।
भ्राजिष्णुर्भोजनं भोक्ता लोकनाथो दुराधरः ।। 4.35.४० ।।
अमृतश्शाश्वतश्शांतो बाणहस्तः प्रतापवान् ।।
कमंडलुधरो धन्वी ह्यवाङ्मनसगोचरः ।। ४१ ।।
अतींद्रियो महामायस्सर्ववासश्चतुष्पथः ।।
कालयोगी महानादो महोत्साहो महाबलः ।। ४२ ।।
महाबुद्धिर्महावीर्यो भूतचारी पुरं दरः।।
निशाचरः प्रेतचारी महाशक्तिर्महाद्युतिः ।।४३।।
अनिर्देश्यवपुः श्रीमान्सर्वाचार्यमनोगतिः ।।
बहुश्रुतिर्महामायो नियतात्मा ध्रुवोऽध्रुवः ।। ४४ ।।
तेजस्तेजो द्युतिधरो जनकः सर्वशासकः ।।
नृत्यप्रियो नृत्यनित्यः प्रकाशात्मा प्रकाशकः ।। ४५ ।।
स्पष्टाक्षरो बुधो मंत्रः समानः सारसंप्लवः ।।
युगादिकृद्युगावर्तो गंभीरो वृषवाहनः ।।४६।।
इष्टो विशिष्टः शिष्टेष्टः सुलभः सारशो धनः ।।
तीर्थरूपस्तीर्थनामा तीर्थादृश्यस्तु तीर्थदः ।। ४७ ।।
अपांनिधिरधिष्ठानं विजयो जयकालवित् ।।
प्रतिष्ठितः प्रमाणज्ञो हिरण्यकवचो हरिः ।। ४८ ।।

विमोचनस्सुरगणो विद्येशो बिंदुसंश्रयः ।।
वातरूपोऽमलोन्मायी विकर्ता गहनो गुहः ।। ४९ ।।
करणं कारणं कर्ता सर्वबंधविमोचनः ।।
व्यवसायो व्यवस्थानः स्थानदो जगदादिजः ।। 4.35.५० ।।
गुरुदो ललितोऽभेदो भावात्मात्मनि संस्थितः ।।
वीरेश्वरो वीरभद्रो वीरासनविधिर्गुरुः ।। ५१ ।।
वीरचूडामणिर्वेत्ता चिदानंदो नदीधरः ।।
आज्ञाधारस्त्रिशूली च शिपिविष्टः शिवालयः ।। ५२ ।।
बालखिल्यो महावीरस्तिग्मांशुर्बधिरः खगः ।।
अभिरामः सुशरणः सुब्रह्मण्यः सुधापतिः ।। ५३ ।।
मघवान्कौशिको गोमान्विरामः सर्वसाधनः ।।
ललाटाक्षो विश्वदेहः सारः संसारचक्रभृत् ।। ५४ ।।
अमोघदंडी मध्यस्थो हिरण्यो ब्रह्मवर्चसः ।।
परमार्थः परोमायी शंबरो व्याघ्रलोचनः ।। ९५ ।।
रुचिर्बहुरुचिर्वेद्यो वाचस्पतिरहस्पतिः ।।
रविर्विरोचनः स्कंदः शास्ता वैवस्वतो यमः ।। ५६ ।।
युक्तिरुन्नतकीर्तिश्च सानुरागः पुरंजयः ।।
कैलासाधिपतिः कांतः सविता रविलोचनः ।। ५७ ।।
विश्वोत्तमो वीतभयो विश्वभर्त्ताऽनिवारितः ।।
नित्यो नियतकल्याणः पुण्यश्रवणकीर्त्तनः ।। ५८ ।।
दूरश्रवो विश्वसहो ध्येयो दुःस्वप्ननाशनः ।।
उत्तारणो दुष्कृतिहा विज्ञेयो दुःसहोऽभवः ।। ५९ ।।
अनादिर्भूर्भुवो लक्ष्मीः किरीटी त्रिदशाधिपः ।।
विश्वगोप्ता विश्वकर्त्ता सुवीरो रुचिरांगदः ।। 4.35.६० ।।
जननो जनजन्मादिः प्रीतिमान्नीतिमान्ध्रुवः ।।
वशिष्ठः कश्यपो भानुर्भीमो भीमपराक्रमः।।६१।।
प्रणवः सत्पथाचारो महाकोशो महाधनः ।।
जन्माधिपो महा देवः सकलागमपारगः ।। ६२ ।।
तत्त्वं तत्त्वविदेकात्मा विभुर्विष्णुर्विभूषणः ।।
ऋषिर्ब्राह्मण ऐश्वर्यजन्ममृत्युजरातिगः ।। ६३ ।।
पंचयज्ञसमुत्पत्तिर्विश्वेशो विमलोदयः ।।
आत्मयोनिरनाद्यंतो वत्सलो भक्तलोकधृक् ।। ६४ ।।
गायत्रीवल्लभः प्रांशुर्विश्वावासः प्रभाकरः ।।

शिशुर्गिरिरतः सम्राट् सुषेणः सुरशत्रुहा ।। ६५ ।।
अनेमिरिष्टनेमिश्च मुकुन्दो विगतज्वरः ।।
स्वयंज्योतिर्महाज्योतिस्तनुज्योतिरचंचलः ।। ६६ ।।
पिंगलः कपिलश्मश्रुर्भालनेत्रस्त्रयीतनुः ।।
ज्ञानस्कंदो महानीतिर्विश्वोत्पत्तिरुपप्लवः ।। ६७ ।।
भगो विवस्वानादित्यो गतपारो बृहस्पतिः ।।
कल्याणगुणनामा च पापहा पुण्यदर्शनः ।।६८।।
उदारकीर्तिरुद्योगी सद्योगी सदसत्त्रपः ।।
नक्षत्रमाली नाकेशः स्वाधिष्ठानः षडाश्रयः ।। ६९ ।।
पवित्रः पापहारी च मणिपूरो नभोगतिः ।।
हृत्पुंडरीकमासीनः शक्रः शांतो वृषाकपिः ।। 4.35.७० ।।
उष्णो गृहपतिः कृष्णः समर्थोऽनर्थनाशनः ।।
अधर्मशत्रुरज्ञेयः पुरुहूतः पुरुश्रुतः ।। ७१ ।।
ब्रह्मगर्भो बृहद्गर्भो धर्मधेनुर्धनागमः ।।
जगद्धितैषी सुगतः कुमारः कुशलागमः ।। ७२ ।।
हिरण्यवर्णो ज्योतिष्मान्नानाभूतरतो ध्वनिः ।।
आरोग्यो नमनाध्यक्षो विश्वामित्रो धनेश्वरः ।। ७३ ।।
ब्रह्मज्योतिर्वसुधामा महाज्योतिरनुत्तमः ।।
मातामहो मातरिश्वा नभस्वान्नागहारधृक् ।। ७४ ।।
पुलस्त्यः पुलहोऽगस्त्यो जातूकर्ण्यः पराशरः ।।
निरावरणनिर्वारो वैरंच्यो विष्टरश्रवाः ।। ७५ ।।
आत्मभूरनिरुद्धोऽत्रिर्ज्ञानमूर्तिर्महायशाः ।।
लोकवीराग्रणीर्वीरश्चण्डः सत्यपराक्रमः ।। ७६ ।।
व्यालकल्पो महाकल्पः कल्पवृक्षः कलाधरः।।
अलंकरिष्णुरचलो रोचिष्णुर्विक्रमोन्नतः।।७७।।
आयुः शब्दपतिर्वाग्मी प्लवनश्शिखिसारथिः।।
असंसृष्टोऽतिथिश्शत्रुः प्रमाथी पादपासनः ।।७८।।
वसुश्रवा कव्यवाहः प्रतप्तो विश्वभोजनः ।।
जप्यो जरादिशमनो लोहितश्च तनूनपात्।।७९।।
पृषदश्वो नभोयोनिः सुप्रतीकस्तमिस्रहा ।।
निदाघस्तपनो मेघभक्षः परपुरंजयः ।। 4.35.८० ।।
सुखानिलस्सुनिष्पन्नस्सुरभिश्शिशिरात्मकः ।।
वसंतो माधवो ग्रीष्मो नभस्यो बीजवाहनः ।। ८१ ।।

अंगिरा गुरुरात्रेयो विमलो विश्वपावनः ।।
पावनः पुरजिच्छक्रस्त्रैविद्यो नववारण ।। ८२ ।।
मनोबुद्धिरहंकारः क्षेत्रज्ञः क्षेत्रपालकः ।।
जमदग्निर्बलनिधिर्विगालो विश्वगालवः ।। ८३ ।।
अघोरोऽनुत्तरो यज्ञः श्रेयो निःश्रेयसप्रदः ।।
शैलो गगनकुंदाभो दानवारिररिंदमः ।। ८४ ।।
चामुण्डो जनकश्चारुर्निश्शल्यो लोकशल्यधृक् ।।
चतुर्वेदश्चतुर्भावश्चतुरश्चतुर प्रियः ।।८५।।
आम्नायोऽथ समाम्नायस्तीर्थदेवशिवालयः ।।
बहुरूपो महारूपस्सर्वरूपश्चराचरः ।। ८६ ।।
न्यायनिर्मायको नेयो न्यायगम्यो निरंजनः ।।
सहस्रमूर्द्धा देवेंद्रस्सर्वशस्त्रप्रभंजनः ।। ८७ ।।
मुंडी विरूपो विकृतो दंडी नादी गुणोत्तमः ।।
पिंगलाक्षो हि बह्वयो नीलग्रीवो निरामयः ।।८८।।
सहस्रबाहुस्सर्वेशश्शरण्यस्सर्वलोकधृक्।।
पद्मासनः परं ज्योतिः पारम्पर्य्यफलप्रदः।।८९।।
पद्मगर्भो महागर्भो विश्वगर्भो विचक्षणः ।।
परावरज्ञो वरदो वरेण्यश्च महास्वनः ।। 4.35.९० ।।
देवासुरगुरुर्देवो देवासुरनमस्कृतः ।।
देवासुरमहा मित्रो देवासुरमहेश्वरः ।। ९१ ।।
देवासुरेश्वरो दिव्यो देवासुरमहाश्रयाः ।।
देवदेवोऽनयोऽचिंत्यो देवतात्मात्मसंभवः ।। ९२ ।।।
सद्यो महासुरव्याधो देवसिंहो दिवाकरः।।
विबुधामचरः श्रेष्ठः सर्वदेवोत्तमोत्तम।।९३।।
शिवज्ञानरतः श्रीमाञ्शिखी श्रीपर्वतप्रियः।।
वज्रहस्तस्सिद्धखड्गो नरसिंहनिपातनः ।।९४।।
ब्रह्मचारी लोकचारी धर्मचारी धनाधिपः ।।
नन्दी नंदीश्वरोऽनंतो नग्नव्रतधरश्शुचिः ।। ९५ ।।
लिंगाध्यक्षः सुराध्यक्षो युगाध्यक्षो युगापहः ।।
स्वधामा स्वगतः स्वर्गी स्वरः स्वरमयः स्वनः ।। ९६ ।।
बाणाध्यक्षो बीजकर्ता कर्मकृद्धर्मसंभवः ।।
दंभो लोभोऽथ वै शंभुस्सर्व भूतमहेश्वरः ।।९७।।
श्मशाननिलयस्त्र्यक्षस्स तुरप्रतिमाकृतिः।।

लोकोत्तरस्फुटोलोकः त्र्यंबको नागभूषणः ।।९८।।
अंधकारि मखद्वेषी विष्णुकंधरपातनः ।।
हीनदोषोऽक्षयगुणो दक्षारिः पूषदंतभित्।।९९।।
पूर्णः पूरयिता पुण्यः सुकुमारः सुलोचनः ।।
सन्मार्गमप्रियो धूर्त्तः पुण्यकीर्तिरनामयः ।। 4.35.१०० ।।
मनोजवस्तीर्थकरो जटिलो नियमेश्वरः ।।
जीवितांतकरो नित्यो वसुरेता वसुप्रदः ।। १०१ ।।
सद्गतिः सिद्धिदः सिद्धिः सज्जातिः खलकंटकः।।
कलाधरो महाकालभूतः सत्यपरायणः ।। १०२ ।।
लोकलावण्यकर्ता च लोकोत्तरसुखालयः ।।
चंद्रसंजीवनश्शास्ता लोकग्राहो महाधिपः ।। १०३ ।।
लोकबंधुर्लोकनाथः कृतज्ञः कृतिभूषितः ।।
अनपायोऽक्षरः कांतः सर्वशस्त्रभृतां वरः ।। १०४ ।।
तेजोमयो श्रुतिधरो लोकमानी घृणार्णवः ।।
शुचिस्मितः प्रसन्नात्मा ह्यजेयो दुरतिक्रमः ।। १०५ ।।
ज्योतिर्मयो जगन्नाथो निराकारो जलेश्वरः ।।
तुम्बवीणो महाकायो विशोकश्शोकनाशनः ।।१०६।।
त्रिलोकपस्त्रिलोकेशः सर्वशुद्धिरधोक्षजः ।।
अव्यक्तलक्षणो देवो व्यक्तोऽव्यक्तो विशांपतिः।।१०७।।
परः शिवो वसुर्नासासारो मानधरो यमः ।।
ब्रह्मा विष्णुः प्रजापालो हंसो हंसगतिर्वयः ।।१०८।।
वेधा विधाता धाता च स्रष्टा हर्त्ता चतुर्मुखः ।।
कैलासशिखरावासी सर्वावासी सदागति ।। १०९ ।।
हिरण्यगर्भो द्रुहिणो भूतपालोऽथ भूपतिः ।।
सद्योगी योगविद्योगीवरदो ब्राह्मणप्रिय ।। 4.35.११० ।।
देवप्रियो देवनाथो देवको देवचिंतकः ।।
विषमाक्षो विरूपाक्षो वृषदो वृषवर्धनः ।। १११ ।।
निर्ममो निरहंकारो निर्मोहो निरुपद्रवः।।
दर्पहा दर्पदो दृप्तः सर्वार्थपरिवर्त्तकः ।।११२।।
सहस्रार्चिर्भूतिभूषः स्निग्धाकृतिरदक्षिणः ।।
भूतभव्यभवन्नाथो विभवो भूतिनाशनः ।। ११३ ।।
अर्थोऽनर्थो महाकोश परकार्यैकपंडित ।।
निष्कंटकः कृतानंदो निर्व्याजो व्याजमर्दनः ।।११४।।

सत्त्ववान्सात्त्विकः सत्यः कृतस्नेहः कृतागमः ।।
अकंपितो गुणग्राही नैकात्मानैककर्मकृत्।।११५।।
सुप्रीतः सुखदः सूक्ष्मः सुकरो दक्षिणानिलः ।।
नंदिस्कंदो धरो धुर्यः प्रकटः प्रीतिवर्धनः ।। ११६ ।।
अपराजितः सर्वसहो गोविंदः सत्त्ववाहनः ।।
अधृतः स्वधृतः सिद्धः पूतमूर्तिर्यशोधनः ।।११७।।
वाराहशृंगधृक् शृंगी बलवानेकनायकः ।।
श्रुतिप्रकाशः श्रुतिमाने कबंधुरनेकधृक् ।। ११८ ।।
श्रीवत्सलः शिवारंभः शांतभद्रः समो यशः ।।
भूयशो भूषणो भूतिर्भूतिकृद्भूतभावनः ।।११९।।
अकंपो भक्तिकायस्तु कालहानिः कलाविभुः ।।
सत्यव्रती महात्यागी नित्यशांतिपरायणः ।।4.35.१२०।।
परार्थवृत्तिर्वरदो विरक्तस्तु विशारदः।।
शुभदः शुभकर्ता च शुभनामा शुभः स्वयम् ।। १२१ ।।
अनर्थितो गुणग्राही ह्यकर्ता कनकप्रभः ।।
स्वभावभद्रो मध्यस्थ शत्रुघ्नो विघ्ननाशनः ।।१२२।।
शिखंडी कवची शूली जटी मुंडी च कुंडली ।।
अमृत्युः सर्वदृक् सिंहस्तेजोराशिर्महामणिः ।।१२३ ।।
असंख्येयोऽप्रमेयात्मा वीर्यवान् वीर्यकोविदः ।।
वेद्यश्च वै वियोगात्मा सप्तावरमुनीश्वरः ।। १२४ ।।
अनुत्तमो दुराधर्षो मधुरः प्रियदर्शनः ।।
सुरेश स्मरणः सर्वः शब्दः प्रतपतां वरः ।। १२५ ।।
कालपक्षः कालकालः सुकृती कृतवासुकिः ।।
महेष्वासो महीभर्ता निष्कलंको विशृंखल।।१२६।।
द्युमणिस्तरणिर्धन्यः सिद्धिदः सिद्धिसाधनः ।।
विश्वतस्संवृतस्तु व्यूढोरस्को महाभुजः ।।१२७।।
सर्वयोनिर्निरातंको नरनारायणप्रियः ।।
निर्लेपो यतिसंगात्मा निर्व्यंगो व्यंगनाशनः ।।१२८।।
स्तव्यः स्तवप्रियः स्तोता व्यासमूर्तिर्निरंकुलः ।।
निरवद्यमयोपायो विद्याराशिश्च सत्कृतः ।। १२९ ।।
प्रशांतबुद्धिरक्षुण्णः संग्रहो नित्यसुंदरः ।।
वैयाघ्रधुर्यो धात्रीशः संकल्पः शर्वरीपतिः ।। 4.35.१३० ।।
परमार्थगुरुर्दत्तः सूरिराश्रितवत्सलः ।।

सोमो रसज्ञो रसदः सर्वसत्त्वावलंबनः ।।१३१।।
एवं नाम्नां सहस्रेण तुष्टाव हि हरं हरिः ।।
प्रार्थयामास शम्भुं वै पूजयामास पंकजः ।। १३२ ।।
ततः स कौतुकी शम्भुश्चकार चरितं द्विजाः ।।
महाद्भुतं सुखकरं तदेव शृणुतादरात् ।। १३३ ।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां शिवसहस्रनामवर्णनं नाम पञ्चत्रिंशोध्यायः ।।३५।।

।। सूत उवाच ।।
श्रुत्वा विष्णुकृतं दिव्यं परनामविभूषितम् ।।
सहस्रनामस्वस्तोत्रं प्रसन्नोऽभून्महेश्वरः ।। १ ।।
परीक्षार्थं हरेरीशः कमलेषु महेश्वरः ।।
गोपयामास कमलं तदैकं भुवनेश्वरः ।। २ ।।
पंकजेषु तदा तेषु सहस्रेषु बभूव च ।।
न्यूनमेकं तदा विष्णुर्विह्वलश्शिवपूजने ।। ३ ।।
हृदा विचारितं तेन कुतो वै कमलं गतम् ।।
यातं यातु सुखेनैव मन्नेत्रं कमलं न किम् ।। ४ ।।
ज्ञात्वेति नेत्रमुद्धृत्य सर्वसत्त्वावलम्बनात् ।।
पूजयामास भावेन स्तवयामास तेन च ।। ५ ।।
ततः स्तुतमथो दृष्ट्वा तथाभूतं हरो हरिम् ।।
मा मेति व्याहरन्नेव प्रादुरासीज्जगद्गुरुः ।।६।।
तस्मादवततराशु मण्डलात्पार्थिवस्य च ।।
प्रतिष्ठितस्य हरिणा स्वलिंगस्य महेश्वरः ।।७।।
यथोक्तरूपिणं शम्भुं तेजोराशिसमुत्थितम् ।।
नमस्कृत्य पुरः स्थित्वा स तुष्टाव विशेषतः ।। ८ ।।
तदा प्राह महादेवः प्रसन्नः प्रहसन्निव ।।
सम्प्रेक्ष्य कृपया विष्णुं कृतांजलिपुटं स्थितम् ।। ९ ।।
शङ्कर उवाच।।
ज्ञातं मयेदं सकलं तव चित्तेप्सितं हरे ।।
देवकार्यं विशेषेण देवकार्य्यरतात्मनः ।। 4.36.१० ।।
देवकार्य्यस्य सिद्ध्यर्थं दैत्यनाशाय चाश्रमम् ।।
सुदर्शनाख्यं चक्रं च ददामि तव शोभनम् ।। ११ ।।
यद्रूपं भवता दृष्टं सर्वलोकसुखावहम् ।।
हिताय तव देवेश धृतं भावय तद्ध्रुवम् ।। १२ ।।
रणाजिरे स्मृतं तद्वै देवानां दुःखनाशनम् ।।
इदं चक्रमिदं रूपमिदं नामसहस्रकम् ।। १३ ।।
ये शृण्वन्ति सदा भक्त्या सिद्धि स्यादनपायिनी ।।
कामानां सकलानां च प्रसादान्मम सुव्रत ।।१४।।
सूत उवाच ।।
एवमुक्त्वा ददौ चक्रं सूर्यायुतसमप्रभम् ।।
सुदर्शनं स्वपादोत्थं सर्वशत्रुविनाशनम् ।। १५ ।।

विष्णुश्चापि सुसंस्कृत्य जग्राहोदङ्मुखस्तदा।।
नमस्कृत्य महादेवं विष्णुर्वचनमब्रवीत् ।। १६ ।।
विष्णुरुवाच ।।
शृणु देव मया ध्येयं पठनीयं च किं प्रभो ।।
दुःखानां नाशनार्थं हि वद त्वं लोकशंकर ।। १७ ।।
सूत उवाच ।।
इति पृष्टस्तदा तेन सन्तुष्टस्तु शिवोऽब्रवीत् ।।
प्रसन्नमानसो भूत्वा विष्णुं देवसहायकम् ।। १८ ।।
।। शिव उवाच ।।
रूपं ध्येयं हरे मे हि सर्वानर्थप्रशान्तये ।।
अनेकदुःखनाशार्थं पठ नामसहस्रकम् ।।१९।।
धार्य्यं चक्रं सदा मे हि सवार्भीष्टस्य सिद्धये ।।
त्वया विष्णो प्रयत्नेन सर्वचक्रवरं त्विदम् ।। 4.36.२० ।।
अन्ये च ये पठिष्यन्ति पाठयिष्यन्ति नित्यशः ।।
तेषां दुःखं न स्वप्नेऽपि जायते नात्र संशयः ।। २१ ।।
राज्ञा च संकटे प्राप्ते शतावृत्तिं चरेद्यदा ।।
साङ्गः च विधिसंयुक्तं कल्याणं लभते नरः ।।२२।।
रोगनाशकरं ह्येतद्विद्यावित्तदमुत्तमम् ।।
सर्वकामप्रदं पुण्यं शिवभक्तिप्रदं सदा ।। २३ ।।
यदुद्दिश्य फलं श्रेष्ठं पठिष्यन्ति नरास्त्विह ।।
सप्स्यन्ते नात्र संदेहः फलं तत्सत्यमुत्तमम् ।।२४।।
यश्च प्रातस्समुत्थाय पूजां कृत्वा मदीयिकाम् ।।
पठते मत्समक्षं वै नित्यं सिद्धिर्न दूरतः ।। २५ ।।
ऐहिकीं सिद्धिमाप्नोति निखिलां सर्वकामिकाम् ।।
अन्ते सायुज्यमुक्तिं वै प्राप्नोत्यत्र न संशयः ।। २६ ।।
सूत उवाच ।।
एवमुक्त्वा तदा विष्णुं शंकरः प्रीतमानसः ।।
उपस्पृश्य कराभ्यां तमुवाच गिरिशः पुनः ।।२७।।
।। शिव उवाच ।।
वरदोऽस्मि सुरश्रेष्ठ वरान्वृणु यथेप्सितान् ।।
भक्त्या वशीकृतो नूनं स्तवेनानेन सुव्रतः ।।२८।।
।। सूत उवाच ।।
इत्युक्तो देवदेवेन देवदेवं प्रणम्य तम् ।।

सुप्रसन्नतरो विष्णुस्सांजलिर्वाक्यमब्रवीत् ।। २९ ।।
विष्णुरुवाच ।।
यथेदानीं कृपानाथ क्रियते चान्यतः परा ।।
कार्य्या चैव विशेषेण कृपालुत्वात्त्वया प्रभो ।।4.36.३०।।
त्वयि भक्तिर्महादेव प्रसीद वरमुत्तमम् ।।
नान्यमिच्छामि भक्तानामार्त्तयो नैव यत्प्रभो ।। ३१ ।।
सूत उवाच ।।
तच्छ्रुत्वा वचनं तस्य दया वान्सुतरां भवः ।।
पस्पर्श च तदंगं वै प्राह शीतांशुशेखरः ।।३२।।
शिव उवाच ।।
मयि भक्तिस्सदा ते तु हरे स्यादनपायिनी ।।
सदा वन्द्यश्च पूज्यश्च लोके भव सुरैरपि ।।३३।।
विष्वंभरेति ते नाम सर्वपापहरं परम् ।।
भविष्यति न संदेहो मत्प्रसादात्सुरोत्तम ।। ३४ ।।
।। सूत उवाच ।।
इत्युक्त्वांतर्दधे रुद्रस्सर्वदेवेश्वरः प्रभुः ।।
पश्यतस्तस्य विष्णोस्तु तत्रैव च मुनीश्वराः ।। ३५ ।।
जनार्दनोऽपि भगवान्वचनाच्छङ्करस्य च ।।
प्राप्य चक्रं शुभं तद्वै जहर्षाति स्वचेतसि ।। ३६ ।।
कृत्वा ध्यानं च तच्छम्भोः स्तोत्रमेतन्निरन्तरम् ।।
पपाठाध्यापयामास भक्तेभ्यस्तदुपादिशत्।।३७।।
इति पृष्टं मयाख्यातं शृण्वताम्पापहारकम्।।
अतःपरं च किं श्रेष्ठाः प्रष्टुमिच्छथ वै पुनः।।३८।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां शिवसहस्रनामस्तोत्रफलवर्णनं नाम षट्त्रिंशोध्यायः ।।३६।।

।। ऋषय ऊचुः ।।
सूतसूत महाभाग ज्ञानवानसि सुव्रत ।।
पुनरेव शिवस्य वै चरितं ब्रूहि विस्तरात् ।। १ ।।
पुरातनाश्च राजान ऋषयो देवतास्तथा।।
आराधनञ्च तस्यैव चक्रुर्देववरस्य हि ।। २ ।।
सूत उवाच।।
साधु पृष्टमृषिश्रेष्ठाः श्रूयतां कथयामि वः ।। ।
चरित्रं शांकरं रम्यं शृण्वतां भुक्तिमुक्तिदम् ।। ३ ।।
एतदेव पुरा पृष्टो नारदेन पितामहः ।।
प्रत्युवाच प्रसन्नात्मा नारदं मुनिसत्तमम् ।।। ४ ।।
ब्रह्मोवाच ।।
शृणु नारद सुप्रीत्या शांकरं चरितं वरम्।।
प्रवक्ष्यामि भवत्स्नेहान्महापातकनाशनम् ।।५।।
रमया सहितो विष्णुश्शिवपूजां चकार ह ।।
कृपया परमेशस्य सर्वान्कामानवाप हि ।। ६ ।।
अहं पितामहश्चापि शिवपूजनकारकः ।।
तस्यैव कृपया तात विश्वसृष्टिकरस्सदा ।। ७ ।।
शिवपूजाकरा नित्यं मत्पुत्राः परमर्षयः ।।
अन्ये च ऋषयो ये ते शिवपूजनकारकाः ।। ८ ।। ।।
नारद त्वं विशेषेण शिवपूजनकारकः ।।
सप्तर्षयो वसिष्ठाद्याः शिवपूजनकारकाः।।९।।
अरुंधती मदासाध्वी लोपामुद्रा तथैव च ।।
अहल्या गौतमस्त्री च शिवपूजनकारिकाः।।4.37.१०।।
दुर्वासाः कौशिकश्शक्तिर्दधीचो गौतमस्तथा ।।
कणादो भार्गवो जीवो वैशंपायन एव च ।।११।।
एते च मुनयस्सर्वे शिवपूजाकरा मताः।।
तथा पराशरो व्यासश्शिवपूजारतस्सदा ।।१२।।
उपमन्युर्महाभक्तश्शिवस्य परमात्मनः ।।
याज्ञवल्क्यो महाशैवो जैमिनिर्गर्ग एव च ।।१३।।
शुकश्च शौनकाद्याश्च शङ्करस्य प्रपूजकाः ।।
अन्येऽपि बहवस्सन्ति मुनयो मुनिसत्तमाः ।।१४।।
अदितिर्देवमाता च नित्यं प्रीत्या चकार ह ।।
पार्थिवीं शैवपूजां वै सवधूः प्रेमतत्परा।।१५।।

शक्रादयो लोकपाला वसवश्च सुरास्तथा ।।
महाराजिकदेवाश्च साध्याश्च शिवपूजकाः ।।१६।।
गन्धर्वा किन्नराद्याश्चोपसुराश्शिवपूजकाः ।।
तथाऽसुरा महात्मानश्शिवपूजाकरा मताः ।।१७।।
हिरण्यकशिपुर्दैत्यस्सानुजत्ससुतो मुने।।
शिवपूजाकरो नित्यं विरोचनबली तथा।।१८।।
महाशैव स्मृतो बाणो हिरण्याक्षसुतास्तथा।।
वृषपर्वा दनुस्तात दानवाः शिवपूजकाः ।। १९ ।।
शेषश्च वासुकिश्चैव तक्षकश्च तथा परे ।।
शिवभक्ता महानागा गरुडाद्याश्च पक्षिणः ।।4.37.२०।।
सूर्यचन्द्रावुभौ देवौ पृथ्व्यां वंशप्रवर्त्तकौ।।
शिवसेवारतौ नित्यं सवंश्यौ तौ मुनीश्वर ।।२१।।
मनवश्च तथा चक्रुस्स्वायंभुवपुरस्सराः ।।
शिवपूजां विशेषेण शिववेषधरा मुने ।। २२ ।।
प्रियव्रतश्च तत्पुत्रास्तथा चोत्तानपात्सुतः ।।
तद्वंशाश्चैव राजानश्शिवपूजनकारकाः ।। २३ ।।
ध्रुवश्च ऋषभश्चैव भरतो नव योगिनः ।।
तद्भ्रातरः परे चापि शिवपूजनकारकाः।।२४।।
वैवस्वतसुतास्ताक्ष्र्य इक्ष्वाकुप्रमुखा नृपाः।।
शिवपूजारतात्मानः सर्वदा सुखभोगिनः ।।२५।।
ककुत्स्थश्चापि मांधाता सगरश्शैवसत्तमः।।
मुचुकुन्दो हरिश्चन्द्रः कल्माषांघ्रिस्तथैव च।।२६।।
भगीरथादयो भूपा बहवो नृपसत्तमाः।।
शिवपूजाकरा ज्ञेयाः शिववेषविधायिनः ।।२७।।
खट्वांगश्च महाराजो देवसाहाय्यकारकः ।।
विधितः पार्थिवीम्मूर्तिं शिवस्यापूजयत्सदा ।।२८।।
तत्पुत्रो हि दिलीपश्च शिवपूजनकृत्सदा ।।
रघुस्तत्तनयः शैवः सुप्रीत्याः शिवपूजकः ।। २९ ।।
अजश्शिवार्चकस्तस्य तनयो धर्मयुद्धकृत् ।।
जातो दशरथो भूयो महाराजो विशेषतः ।।4.37.३०।।
पुत्रार्थे पार्थिवी मूर्त्ति शैवी दशरथो हि सः ।।
समानर्च विशेषेण वसि ष्ठस्याज्ञया मुनेः ।।३१।।
पुत्रेष्टिं च चकारासौ पार्थिवो भवभक्तिमान्।।

ऋष्यशृङ्गमुनेराज्ञां संप्राप्य नृपसत्तमः ।। ३२ ।।
कौसल्या तत्प्रिया मूर्त्ति पार्थिवीं शांकरीं मुदा ।।
ऋष्यशृंगसमादिष्टा समानर्च सुताप्तये ।।३३।।
सुमित्रा च शिवं प्रीत्या कैकेयी नृपवल्लभा।।
पूजयामास सत्पुत्रप्राप्तये मुनिसत्तम ।। ३४ ।।
शिवप्रसादतस्ता वै पुत्रान्प्रापुश्शुभंकरान् ।।
महाप्रतापिनो वीरान्सन्मार्गनिरतान्मुने ।।३५।।
ततः शिवाज्ञया तस्मात्तासु राज्ञस्स्वयं हरिः ।।
चतुर्भिश्चैव रूपैश्चाविर्बभूव नृपात्मजः ।। ३६ ।।
कौसल्यायाः सुतो राम सुमित्रायाश्च लक्ष्मण ।।
शत्रुघ्नश्चैव कैकेय्या भरतश्चेति सुव्रताः ।।३७।।
रामस्ससहजो नित्यं पार्थिवं समपूजयत् ।।
भस्म रुद्राक्षधारी च विरजागममास्थितः ।। ३८ ।।
तद्वंशे ये समुत्पन्ना राजानः सानुगा मुने ।।
ते सर्वे पार्थिवं लिंगं शिवस्य समपूजयन् ।।३९।।
सुद्युम्नश्च महाराजश्शैवो मुनिसुतो मुने ।।
शिवशापात्प्रियाहेतोरभून्नारी ससेवकः ।।4.37.४०।।
पार्थिवेशसमर्चातः पुनस्सोऽभूत्पुमान्वरः ।।
मासं स्त्री पुरुषो मासमेवं स्त्रीत्वं न्यवर्त्तत ।। ४१ ।।
ततो राज्यं परित्यज्य शिवधर्मपरायणः ।।
शिववेषधरो भक्त्या दुर्लभं मोक्षमाप्तवान् ।।४२।।
पुरूरवाश्च तत्पुत्रो महाराजस्तु पूजक ।।
शिवस्य देवदेवस्य तत्सुतः शिवपूजकः ।। ४३ ।।
भरतस्तु महापूजां शिवस्यैव सदाकरोत् ।।
नहुषश्च महा शैवः शिवपूजारतो ह्यभूत् ।।४४।।
ययातिः शिवपूजातः सर्वान्कामानवाप्तवान् ।।
अजीजनत्सुतान्पंच शिवधर्मपरायणान् ।।४५।।
तत्सुता यदुमुख्याश्च पंचापि शिवपूजकाः ।।
शिवपूजाप्रभावेण सर्वान्कामांश्च लेभिरे ।। ४६ ।।
अन्येऽपि ये महाभागाः समानर्चुश्शिवं हि ते ।।
तद्वंश्या अन्यवंश्याश्च भुक्तिमुक्तिप्रदं मुने।। ४७ ।।
कृष्णेन च कृतं नित्यं बदरीपर्वतोत्तमे ।।
पूजनं तु शिवस्यैव सप्तमासावधि स्वयम् ।। ४८ ।।

प्रसन्नाद्भगवांस्तस्माद्वरान्दिव्याननेकशः।।
सम्प्राप्य च जगत्सर्वं वशेऽनयत शङ्करात् ।। ४९ ।।
प्रद्युम्नः तत्सुतस्तात शिवपूजाकरस्सदा ।।
अन्ये च कार्ष्णिप्रवरास्साम्बाद्याश्शिवपूजकाः ।। 4.37.५०
जरासंधो महाशैवस्तद्वंश्याश्च नृपास्तथा ।।
निमिश्शैवश्च जनकस्तत्पुत्राश्शिवपूजकाः।।५१।।
नलेन च कृता पूजा वीरसेनसुतेन वै ।।
पूर्वजन्मनि यो भिल्लो वने पान्थसुरक्षकः ।। ५२ ।।
यतिश्च रक्षितस्तेन पुरा हरसमीपतः ।।
स्वयंव्याघ्रादिभी रात्रौ भक्षितश्च मृतो वृषात् ।। ५३ ।।
तेन पुण्यप्रभावेण स भिल्लो हि नलोऽभवत् ।।
चक्रवर्ती महाराजो दमयन्ती प्रियोऽभवत् ।। ५४ ।।
इति ते कथितं तात यत्पृष्टं भवतानघ ।।
शाङ्करं चरितं दिव्यं किमन्यत्प्रष्टुमिच्छसि ।। ५५ ।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसहितायां देवर्षिनृपशैवत्ववर्णनं नाम सप्तत्रिंशोऽध्यायः ।। ३७ ।।

ऋषय ऊचुः ।।
धन्योऽसि कृतकृत्योऽसि जीवितं सफलं तव ।।
यच्छ्रावयसि नस्तात महेश्वरकथां शुभाम् ।। १ ।।
बहुभिश्चर्षिभि स्सूत श्रुतं यद्यपि वस्तु सत् ।।
सन्देहो न मतोऽस्माकं तदेतत्कथयामि ते ।।२।।
केन व्रतेन सन्तुष्टः शिवो यच्छति सत्सुखम् ।।
कुशलश्शिवकृत्ये त्वं तस्मात्पृच्छामहे वयम् ।। ३ ।।
भुक्तिर्मुक्तिश्च लभ्येत भक्तैर्येन व्रतेन वै ।।
तद्वद त्वं विशेषेण व्यासशिष्य नमोऽस्तु ते ।।४।।
सूत उवाच ।।
सम्यक्पृष्टमृषिश्रेष्ठा भवद्भिः करुणात्मभिः ।।
स्मृत्वा शिवपदांभोजं कथयामि यथाश्रुतम् ।। ५ ।।
यथा भवद्भिः पृच्छ्येत तथा पृष्टं हि वेधसा ।।
हरिणा शिवया चैव तथा वै शंकरं प्रति ।। ६ ।।
कस्मिंश्चित्समये तैस्तु पृष्टं च परमात्मने ।।
केन व्रतेन सन्तुष्टो भुक्तिं मुक्तिं च यच्छसि ।। ७ ।।
इति पृष्टस्तदा तैस्तु हरिणा तेन वै तदा ।।
तदहं कथयाम्यद्य शृण्वतां पापहारकम् ।। ८
।। शिव उवाच ।।
भूरि व्रतानि मे सन्ति भुक्तिमुक्तिप्रदानि च ।।
मुख्यानि तत्र ज्ञेयानि दशसंख्यानि तानि वै ।। ९ ।।
दश शैवव्रतान्याहुर्जाबालश्रुतिपारगाः ।।
तानि व्रतानि यत्नेन कार्याण्येव द्विजैस्सदा ।। 4.38.१० ।।
प्रत्यष्टम्यां प्रयत्नेन कर्तव्यं नक्तभोजनम् ।।
कालाष्टम्यां विशेषेण हरे त्याज्यं हि भोजनम् ।। ११ ।।
एकादश्यां सितायां तु त्याज्यं विष्णो हि भोजनम् ।।
असितायां तु भोक्तव्यं नक्तमभ्यर्च्य मां हरे ।। १२ ।।
त्रयोदश्यां सितायां तु कर्तव्यं निशि भोजनम् ।।
असितायां तु भूतायां तत्र कार्यं शिवव्रतैः ।।१३।।
निशि यत्नेन कर्तव्यं भोजनं सोमवासरे ।।
उभयोः पक्षयोर्विष्णो सर्वस्मिञ्छिव तत्परैः ।।१४।।
व्रतेष्वेतेषु सर्वेषु शैवा भोज्याः प्रयत्नतः ।।
यथाशक्ति द्विजश्रेष्ठा व्रतसंपूर्तिहेतवे ।।१५।।

व्रतान्येतानि नियमात्कर्तव्यानि द्विजन्मभिः ।।
व्रतान्येतानि तु त्यक्त्वा जायन्ते तस्करा द्विजाः ।। १६ ।।
मुक्तिमार्गप्रवीणैश्च कर्तव्यं नियमादिति ।।
मुक्तेस्तु प्रापकं चैव चतुष्टयमुदाहृतम् ।। १७ ।।
शिवार्चनं रुद्रजपं उपवासश्शिवालये ।।
वाराणस्यां च मरणं मुक्तिरेषा सनातनी ।। १८ ।।
अष्टमी सोमवारे च कृष्णपक्षे चतुर्दशी।।
शिवतुष्टिकरं चैतन्नात्र कार्या विचारणा।।१९।।
चतुर्ष्वपि बलिष्ठं हि शिवरात्रिव्रतं हरे।।
तस्मात्तदेव कर्तव्यं भुक्तिमुक्तिफलेप्सुभिः।।4.38.२०।।
एतस्माच्च मतादन्यन्नास्ति नृणां हितावहम्।।
एतद्व्रतन्तु सर्वेषां धर्मसाधनमुत्तमम्।।२१।।
निष्कामानां सकामानां सर्वेषां च नृणान्तथा।।
वर्णानामाश्रमाणां च स्त्रीबालानां तथा हरे ।।२२।।
दासानां दासिकानां च देवादीनां तथैव च।।
शरीरिणां च सर्वेषां हितमेतद्व्रतं वरम् ।।२३।।
माघस्य ह्यसिते पक्षे विशिष्टा सातिकीर्तिता ।।
निशीथव्यापिनी ग्राह्या हत्याकोटिविनाशिनी ।।२४।।
तद्दिने चैव यत्कार्यं प्रातरारभ्य केशव ।।
श्रूयतान्तन्मनो दत्त्वा सुप्रीत्या कथयामि ते ।। २५ ।।
प्रातरुत्थाय मेधावी परमानन्दसंयुतः ।।
समाचरेन्नित्यकृत्यं स्नानादिकमतन्द्रितः ।। २६ ।।
शिवालये ततो गत्वा पूजयित्वा यथाविधि ।।
नमस्कृत्य शिवं पश्चात्संकल्पं सम्यगाचरेत् ।। २७ ।।
देवदेव महादेव नीलकण्ठ नमोऽस्तु ते ।।
कर्तुमिच्छाम्यहं देव शिवरात्रिव्रतं तव ।। २८ ।।
तव प्रभावाद्देवेश निर्विघ्नेन भवेदिति ।।
कामाद्याः शत्रवो मां वै पीडां कुर्वन्तु नैव हि।।२९।।
एवं संकल्पमास्थाय पूजाद्रव्यं समाहरेत्।।
सुस्थले चैव यल्लिंगं प्रसिद्धं चागमेषु वै।।4.38.३०।।
रात्रौ तत्र स्वयं गत्वा संपाद्य विधिमुत्तमम्।।
शिवस्य दक्षिणे भागे पश्चिमे वा स्थले शुभे
।।३१।। निधाय चैव तद्द्रव्यं पूजार्थं शिवसन्निधौ ।।

पुनः स्नायात्तदा तत्र विधिपूर्वं नरोत्तमः ।। ३२ ।।
परिधाय शुभं वस्त्रमन्तर्वासश्शुभन्तथा।।
आचम्य च त्रिवारं हि पूजारंभं समाचरेत् ।।३३।।
यस्य मंत्रस्य यद्द्रव्यं तेन पूजां समाचरेत्।।
अमंत्रकं न कर्तव्यं पूजनं तु हरस्य च ।।३४।।
गीतैर्वाद्यैस्तथा नृत्यैर्भक्तिभावसमन्वितः ।।
पूजनं प्रथमे यामे कृत्वा मंत्रं जपेद्बुधः ।।३५।।
पार्थिवं च तदा श्रेष्ठं विदध्यान्मंत्रवान्यदि ।।
कृतनित्यक्रियः पश्चात्पार्थिवं च समर्चयेत् ।।३६।।
प्रथमं पार्थिवं कृत्वा पश्चात्स्थापनमाचरेत् ।।
स्तोत्रैर्नानाविधैर्देवं तोषयेद्वृषभध्वजम् ।।३७।।
माहात्म्यं व्रतसंभूतं पठितव्यं सुधीमता ।।
श्रोतव्यं भक्तवर्येण व्रतसम्पूर्तिकाम्यया ।।३८।।
चतुर्ष्वपि च यामेषु मूर्तीनां च चतुष्टयम् ।।
कृत्वावाहनपूर्वं हि विसर्गावधि वै क्रमात् ।। ३९ ।।
कार्यं जागरणं प्रीत्या महोत्सव समन्वितम् ।।
प्रातः स्नात्वा पुनस्तत्र स्थापयेत्पूजयेच्छिवम् ।।4.38.४०।।
ततः संप्रार्थयेच्छंभुं नतस्कन्धः कृताञ्जलिः ।।
कृतसम्पूर्ण व्रतको नत्वा तं च पुनः पुनः ।। ४१ ।।
नियमो यो महादेव कृतश्चैव त्वदाज्ञया ।।
विसृज्यते मया स्वामिन्व्रतं जातमनुत्तमम् ।। ४२ ।।
व्रतेनानेन देवेश यथाशक्तिकृतेन च ।।
सन्तुष्टो भव शर्वाद्य कृपां कुरु ममोपरि ।। ४३ ।।
पुष्पाञ्जलिं शिवे दत्त्वा दद्याद्दानं यथाविधि ।।
नमस्कृत्य शिवायैव नियमं तं विसर्जयेत् ।। ४४।।
यथाशक्ति द्विजाञ्छैवान्यतिनश्च विशेषतः ।।
भोजयित्वा सुसन्तोष्य स्वयं भोजनमाचरेत् ।। ४५ ।।
यामेयामे यथा पूजा कार्या भक्तवरैर्हरे ।।
शिवरात्रौ विशेषेण तामहं कथयामि ते ।।।४६।।
प्रथमे चैव यामे च स्थापितं पार्थिवं हरे ।।
पूजयेत्परया भक्त्या सूपचारैरनेकशः ।। ४७ ।।
पंचद्रव्यैश्च प्रथमं पूजनीयो हरस्सदा ।।
तस्य तस्य च मन्त्रेण पृथग्द्रव्यं समर्पयेत् ।।४८।।

तच्च द्रव्यं समर्प्यैव जलधारां ददेत वै ।।
पश्चाच्च जलधाराभिर्द्रव्याणुत्तारयेद्बुधः ।। ४९ ।।
शतमष्टोत्तरं मन्त्रं पठित्वा जलधारया ।।
पूजयेच्च शिवं तत्र निर्गुणं गुणरूपिणम् ।। 4.38.५० ।।
गुरुदत्तेन मंत्रेण पूजयेद्वृषभध्जम्।।
अन्यथा नाममंत्रेण पूजयेद्वै सदाशिवम् ।।५१।।
चन्दनेन विचित्रेण तण्डुलैश्चाप्यखण्डितैः ।।
कृष्णैश्चैव तिलैः पूजा कार्या शंभोः परात्मनः ।।५२।।
पुष्पैश्च शतपत्रैश्च करवीरैस्तथा पुनः ।।
अष्टभिर्नाममंत्रैश्चार्पयेत्पुष्पाणि शंकरे ।। ५३ ।।
भवः शर्वस्तथा रुद्रः पुनः पशुपतिस्तथा ।।
उग्रो महांस्तथा भीम ईशान इति तानि वै ।। ५४ ।।
श्रीपूर्वैश्च चतुर्थ्यंतैर्नामभिः पूजयेच्छिवम् ।।
पश्चाद्धूपं च दीपं च नैवेद्यं च ततः परम् ।। ५५ ।।
आद्ये यामे च नैवेद्यं पक्वान्नं कारयेद्बुधः ।।
अर्घं च श्रीफलं दत्त्वा ताम्बूलं च निवेदयेत् ।। ५६ ।।
नमस्कारं ततो ध्यानं जपः प्रोक्तो गुरोर्मनोः ।।
अन्यथा पंचवर्णेन तोषयेत्तेन शंकरम् ।। ५७ ।।
धेनुमुद्रां प्रदर्श्याथ सुजलैस्तर्पणं चरेत् ।।
पंचब्राह्मणभोजं च कल्पयेद्वै यथाबलम् ।। ५८ ।।
महोत्सवश्च कर्तव्यो यावद्यामो भवेदिह ।।
ततः पूजाफलं तस्मै निवेद्य च विसर्जयेत् ।।५९।।
पुनर्द्वितीये यामे च संकल्पं सुसमा चरेत् ।।
अथवैकदैव संकल्प्य कुर्यात्पूजां तथाविधाम् ।।4.38.६०।।
द्रव्यैः पूर्वैस्तथा पूजां कृत्वा धारां समर्पयेत्।।
पूर्वतो द्विगुणं मंत्रं समुच्चार्यार्चयेच्छिवम् ।। ६१ ।।
पूर्वैस्तिलयवैश्चाथ कमलैः पूजयेच्छिवम् ।।
बिल्वपत्रैर्विशेषेण पूजयेत्परमेश्वरम् ।।६२।।
अर्घ्यं च बीजपूरेण नैवेद्यं पायसन्तथा ।।
मंत्रावृत्तिस्तु द्विगुणा पूर्वतोऽपि जनार्दन ।। ६३ ।।
ततश्च ब्राह्मणानां हि भोज्यो संकल्पमाचरेत् ।।
अन्यत्सर्वं तथा कुर्याद्यावच्च द्वितयावधि ।।६४।।
यामे प्राप्ते तृतीये च पूर्ववत्पूजनं चरेत्।।

यवस्थाने च गोधूमाः पुष्पाण्यर्कभवानि च ।।६५।।
धूपैश्च विविधैस्तत्र दीपैर्नानाविधैरपि ।।
नैवेद्यापूपकैर्विष्णो शाकैर्नानाविधैरपि ।। ६६ ।।
कृत्वैव चाथ कर्पूरैरारार्तिक विधिं चरेत ।
अर्घ्यं सदाडिमं दद्याद्द्विगुणं जपमाचरेत् ।। ६७ ।।
ततश्च ब्रह्मभोजस्य संकल्पं च सदक्षिणम्।।
उत्सवं पूर्ववत्कुर्या द्यावद्यामावधिर्भवेत् ।। ६८ ।।
यामे चतुर्थे संप्राते कुर्यात्तस्य विसर्जनम् ।।
प्रयोगादि पुनः कृत्वा पूजां विधिवदाचरेत् ।।६९।।
माषैः प्रियंगुभिर्मुद्गैस्सप्तधान्यैस्तथाथवा ।।
शंखीपुष्पैर्बिल्वपत्रैः पूजयेत्परमेश्वरम् ।। 4.38.७० ।।
नैवेद्यं तत्र दद्याद्वै मधुरैर्विविधैरपि।।
अथवा चैव माषान्नैस्तोषयेच्च सदाशिवम् ।।७१।।
अर्घं दद्यात्कदल्याश्च फलेनैवाथवा हरे ।।
विविधैश्च फलैश्चैव दद्यादर्घ्यं शिवाय च ।। ७२ ।।
पूर्वतो द्विगुणं कुर्यान्मंत्रजापं नरोत्तमः ।।
संकल्पं ब्रह्मभोजस्य यथाशक्ति चरेद्बुधः ।।७३।।
गीतैर्वाद्यैस्तथा नृत्यैर्नयेत्कालं च भक्तितः ।।
महोत्सवैर्भक्तजनैर्यावत्स्यादरुणोदयः ।। ७४ ।।
उदये च तथा जाते पुनस्स्नात्वार्चयेच्छिवम्।।
नानापूजोपहारैश्च स्वाभिषेकमथाचरेत् ।।७५।।
नानाविधानि दानानि भोज्यं च विविधन्तथा ।।
ब्राह्मणानां यतीनां च कर्तव्यं यामसंख्यया ।। ७६ ।।
शंकराय नमस्कृत्य पुष्पाञ्जलिमथाचरेत् ।।
प्रार्थयेत्सुस्तुतिं कृत्वा मन्त्रैरेतैर्विचक्षणः ।। ७७ ।।
तावकस्त्वद्गतप्राणस्त्वच्चित्तोऽहं सदा मृड ।।
कृपानिधे इति ज्ञात्वा यथा योग्यं तथा कुरु ।। ७८ ।।
अज्ञानाद्यदि वा ज्ञानाज्जपपूजादिकं मया ।।
कृपानिधित्वाज्ज्ञात्वैव भूतनाथ प्रसीद मे ।।७९।।
अनेनैवोपवासेन यज्जातं फलमेव च ।।
तेनैव प्रीयतां देवः शंकरः सुखदायकः।।4.38.८०।।
कुले मम महादेव भजनं तेऽस्तु सर्वदा ।।
माभूत्तस्य कुले जन्म यत्र त्वं नहि देवता ।।८१।।

पुष्पांजलिं समर्प्यैवं तिलकाशिष एव च।।
गृह्णीयाद्ब्राह्मणेभ्यश्च ततश्शंभुं विसर्जयेत् ।।८२।।
एवं व्रतं कृतं येन तस्माद्दूरो हरो न हि ।।
न शक्यते फलं वक्तुं नादेयं विद्यते मम ।। ८३ ।।
अनायासतया चेद्वै कृतं व्रतमिदम्परम् ।।
तस्य वै मुक्तिबीजं च जातं नात्र विचारणा ।।८४।।
प्रतिमासं व्रतं चैव कर्तव्यं भक्तितो नरैः ।।
उद्यापनविधिं पश्चात्कृत्वा सांगफलं लभेत् ।।८५।।
व्रतस्य करणान्नूनं शिवोऽहं सर्वदुःखहा ।।
दद्मि भुक्तिं च मुक्तिं च सर्वं वै वाञ्छितं फलम् ।।८६।।
सूत उवाच ।।
इति शिववचनं निशम्य विष्णुर्हिततरमद्भुतमाजगाम धाम ।।
तदनु व्रतमुत्तमं जनेषु समचरदात्महितेषु चैतदेव ।। ८७ ।।
कदाचिन्नारदायाथ शिवरात्रिव्रतन्त्विदम् ।।
भुक्तिमुक्तिप्रदं दिव्यं कथयामास केशवः ।। ८८ ।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां व्याधेश्वरमाहात्म्ये
शिवरात्रिव्रतमहिमनिरूपणंनामाष्टत्रिंशोऽध्यायः।३८।।

ऋषय उचुः।।
उद्यापनविधिं ब्रूहि शिवरात्रिव्रतस्य च।।
यत्कृत्वा शंकरस्साक्षात्प्रसन्नो भवति धुवम्।।१।।
सूत उवाच।।
श्रूयतामृषयो भक्त्या तदुद्यापनमादरात्।।
यस्यानुष्ठानतः पूर्णं व्रतं भवति तद्ध्रुवम्।।२।।
चतुर्दशाब्दं कर्तव्यं शिवरात्रिव्रतं शुभम्।।
एकभक्तं त्रयोदश्यां चतुर्दश्यामुपोषणम्।।३।।
शिवरात्रिदिने प्राप्ते नित्यं संपाद्य वै विधिम्।।
शिवालयं ततो गत्वा पूजां कृत्वा यथाविधि।।४।।
ततश्च कारयेद्दिव्यं मण्डलं तत्र यत्नतः।।
गौरीतिलकनाम्ना वै प्रसिद्धं भुवनत्रये।५।।
तन्मध्ये लेखयेद्दिव्यं लिंगतो भद्रमण्डलम्।।
अथवा सर्वतोभद्रं मण्डपान्तः प्रकल्पयेत् ।।६।।
कुंभास्तत्र प्रकर्तव्याः प्राजापत्यविसंज्ञया।।
सवस्त्रास्सफलास्तत्र दक्षिणासहिताः शुभाः ।।७।।
मण्डलस्य च पार्श्वे वै स्थापनीयाः प्रयत्नतः ।।
मध्ये चैकश्च संस्थाप्यः सौवर्णो वापरो घटः ।। ८ ।।
तत्रोमासहितां शंभुमूर्तिन्निर्माय हाटकीम् ।।
पलेन वा तदर्द्धेन यथाशक्त्याथवा व्रती ।। ९ ।।
निधाय वामभागे तु शिवामूर्त्तिमतन्द्रितः ।।
मदीयां दक्षिणे भागे कृत्वा रात्रौ प्रपूजयेत् ।। 4.39.१० ।।
आचार्यं वरयेत्तत्र चर्त्विग्भिस्सहितं शुचिम् ।।
अनुज्ञातश्च तैर्भक्त्या शिवपूजां समाचरेत् ।। ११ ।।
रात्रौ जागरणं कुर्यात्पूजां यामोद्भवां चरन्।।
रात्रिमाक्रमयेत्सर्वां गीतनृत्यादिना व्रती ।। १२ ।।
एवं सम्पूज्य विधिवत्संतोष्य प्रातरेव च ।।
पुनः पूजां ततः कृत्वा होमं कुर्याद्यथाविधि ।। १३ ।।
यथाशक्ति विधानं च प्राजापत्यं समाचरेत् ।।
ब्राह्मणान्भोजयेत्प्रीत्या दद्याद्दानानि भक्तितः ।। १४ ।।
ऋत्विजश्च सपत्नीकान्वस्त्रालङ्कारभूषणैः ।।
अलङ्कृत्य विधानेन दद्याद्दानं पृथक्पृथक् ।। १५ ।।
गां सवत्सां विधानेन यथोपस्करसंयुताम् ।।

उक्त्वाचार्याय वै दद्याच्छिवो मे प्रीयतामिति ।। १६ ।।
तत्तस्सकुम्भां तन्मूर्तिं सवस्त्रां वृषभे स्थिताम् ।।
सर्वालंकारसहितामाचार्याय निवेदयेत् ।। १७ ।।
ततः संप्रार्थयेद्देवं महेशानं महाप्रभुम्।।
कृतांजलिर्नतस्कन्धस्सुप्रीत्या गद्गदाक्षरः ।।१८।।
देवदेव महादेव शरणागतवत्सल ।।
व्रतेनानेन देवेश कृपां कुरु ममोपरि ।। १९ ।।
मया भक्त्यनुसारेण व्रतमेतत्कृतं शिवा ।।
न्यूनं सम्पूर्णतां यातु प्रसादात्तव शङ्कर ।।4.39.२०।।
अज्ञानाद्यदि वा ज्ञानाज्जपपूजादिकं मया ।।
कृतं तदस्तु कृपया सफलं तव शङ्कर ।।२१।।
एवं पुष्पांजलिं दत्त्वा शिवाय परमात्मने ।।
नमस्कारं ततः कुर्यात्प्रार्थनां पुनरेव च ।। २२ ।।
एवं व्रतं कृतं येन न्यूनं तस्य न विद्यते ।।
मनोभीष्टां ततः सिद्धिं लभते नात्र संशयः ।। २३ ।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटित्त्वसंहितायां शिवरात्रिव्रतोद्यापनं नामैकोनचत्वारिंशोऽध्यायः ।। ३९ ।।

ऋषय ऊचुः ।।
सूत ते वचनं श्रुत्वा परानन्दं वयं गताः ।।
विस्तरात्कथय प्रीत्या तदेव व्रतमुत्तमम् ।। १ ।।
कृतं पुरा तु केनेह सूतैतद्व्रतमुत्तमम् ।।
कृत्वाप्यज्ञानतश्चैव प्राप्तं किं फलमुत्तमम् ।। २ ।।
।। सूत उवाच ।।
श्रूयतामृषयस्सर्वे कथयामि पुरातनम्।।
इतिहासं निषादस्य सर्वपापप्रणाशनम् ।। ३ ।।
पुरा कश्चिद्वने भिल्लो नाम्ना ह्यासीद्गुरुद्रुहः।।
कुटुम्बी बलवान्क्रूरः क्रूरकर्मपरायणः ।।४।।
निरन्तरं वने गत्वा मृगान्हन्ति स्म नित्यशः ।।
चौर्य्यं च विविधं तत्र करोति स्म वने वसन् ।।५ ।।
बाल्यादारभ्य तेनेह कृतं किंचिच्छुभं नहि ।।
महान्कालो व्यतीयाय वने तस्य दुरात्मनः ।। ६ ।।
कदाचिच्छिवरात्रिश्च प्राप्तासीत्तत्र शोभना ।।
न दुरात्मा स्म जानाति महद्वननिवासकृत् ।। ७ ।।
एतस्मिन्समये भिल्लो मात्रा पित्रा स्त्रिया तथा।।
प्रार्थितश्च क्षुधाऽविष्टैर्भक्ष्यं देहि वनेचर।।८।।
इति संप्रार्थितः सोऽपि धनुरादाय सत्वरम्।।
जगाम मृगहिंसार्थं बभ्राम सकलं वनम्।।९।।
दैवयोगात्तदा तेन न प्राप्तं किंचिदेव हि।।
अस्तप्राप्तस्तदा सूर्यस्स वै दुःखमुपागतः।।4.40.१०।।
किं कर्तव्यं क्व गंतव्यं न प्राप्तं मेऽद्य किंचन।।
बालाश्च ये गृहे तेषां किं पित्रोश्च भविष्यति ।। ११ ।।
मदीयं वै कलत्रं च तस्याः किंचिद्भविष्यति।।
किंचिद्गृहीत्वा हि मया गंतव्यं नान्यथा भवेत्।।१२।।
इत्थं विचार्य स व्याधो जलाशय समीपगः।।
जलावतरणं यत्र तत्र गत्वा स्वयं स्थितः ।।१३।।
अवश्यमत्र कश्चिद्वै जीवश्चैवागमिष्यति।।
तं हत्वा स्वगृहं प्रीत्या यास्यामि कृतकार्यकः ।।१४।।
इति मत्वा स वै वृक्षमेकं बिल्वेतिसंज्ञकम्।।
समारुह्य स्थितस्तत्र जलमादाय भिल्लकः ।।१५।।
कदा यास्यति कश्चिद्वै कदा हन्यामहं पुनः।।

इति बुद्धिं समास्थाय स्थितोऽसौ क्षुत्तृषान्वितः ।। १६ ।।
तद्रात्रौ प्रथमे यामे मृगी त्वेका समागता ।।
तृषार्ता चकिता सा च प्रोत्फालं कुर्वती तदा ।। १७ ।।
तां दृष्ट्वा च तदा तेन तद्वधार्थमथो शरः ।।
संहृष्टेन द्रुतं विष्णो धनुषि स्वे हि संदधे ।। १८ ।।
इत्येवं कुर्वतस्तस्य जलं बिल्वदलानि च ।।
पतितानि ह्यधस्तत्र शिवलिंगमभूत्ततः ।।१९।।
यामस्य प्रथमस्यैव पूजा जाता शिवस्य च ।।
तन्महिम्ना हि तस्यैव पातकं गलितन्तदा ।।4.40.२०।।
तत्रत्यं चैव तच्छब्दं श्रुत्वा सा हरिणी भिया ।।
व्याधं दृष्ट्वा व्याकुला हि वचनं चेदमब्रवीत्।।२१।।
।।मृग्युवाच ।।
किं कर्तुमिच्छसि व्याध सत्यं वद ममाग्रतः ।।
तच्छुत्वा हरिणीवाक्यं व्याधो वचनमब्रवीत् ।।२२।।
।।व्याध उवाच।।
कुटुम्बं क्षुधितं मेऽद्य हत्वा त्वां तर्पयाम्यहम्।।
दारुणं तद्वचश्श्रुत्वा दृष्ट्वा तं दुर्द्धरं खलम्।।२३।।
किं करोमि क्व गच्छामि ह्युपायं रचयाम्यहम् ।।
इत्थं विचार्यं सा तत्र वचनं चेदमब्रवीत् ।। २४ ।।
।। मृग्युवाच ।।
मन्मांसेन सुखं ते स्याद्देहस्यानर्थकारिणः ।।
अधिकं किं महत्पुण्यं धन्याहं नात्र संशयः ।। २५ ।।
उपकारकरस्यैव यत्पुण्यं जायते त्विह ।।
तत्पुण्यं शक्यते नैव वक्तुं वर्षशतैरपि ।। २५ ।।
परं तु शिशवो मेऽद्य वर्तते स्वाश्रमेऽखिलाः ।।
भगिन्यै तान्समर्प्यैव प्रायास्ये स्वामिनेऽथ वा ।। २७ ।।
न मे मिथ्यावचस्त्वं हि विजानीहि वनेचर ।।
आयास्येह पुनश्चेह समीपं ते न संशयः ।।२८।।
स्थिता सत्येन धरणी सत्येनैव च वारिधिः ।।
सत्येन जलधाराश्च सत्ये सर्वम्प्रतिष्ठितम् ।।२९।।
।। सूत उवाच ।।
इत्युक्तोऽपि तया व्याधो न मेने तद्वचो यदा।।
तदा सुविस्मिता भीता वचनं साब्रवीत्पुनः ।। 4.40.३० ।।

मृग्युवाच ।।
शृणु व्याध प्रवक्ष्यामि शपथं हि करोम्यहम् ।।
आगच्छेयं यथा ते न समीपं स्वगृहाद्गता ।। ३१ ।।
ब्राह्मणो वेदविक्रेता सन्ध्याहीनस्त्रिकालकम्।।
स्त्रियस्स्वस्वामिनो ह्याज्ञां समुल्लंघ्य क्रियान्विताः ।। ३२ ।।
कृतघ्ने चैव यत्पापं तत्पापं विमुखे हरे ।।
द्रोहिणश्चैव यत्पापं तत्पापं धर्मलंघने ।।३३।।
विश्वासघातके तच्च तथा वै छलकर्तरि ।।
तेन पापेन लिम्पामि यद्यहं नागमे पुनः ।। ३४ ।।
इत्याद्यनेकशपथान्मृगी कृत्वा स्थिता यदा ।।
तदा व्याधस्य विश्वस्य गच्छेति गृहमब्रवीत् ।। ३५ ।।
मृगी हृष्टाजलं पीत्वा गता स्वाश्रममण्डलम् ।।
तावच्च प्रथमो यामस्तस्य निद्रां विना गतः ।।३६।।
तदीया भगिनी या वै मृगी च परिभाविता ।।
तस्या मार्गं विचिन्वन्ती ह्याजगाम जलार्थिनी ।।३७।।
तां दृष्ट्वा च स्वयं भिल्लोऽकार्षीद्बाणस्य कर्षणम् ।।
पूर्ववज्जलपत्राणि पतितानि शिवोपरि ।।३८।।
यामस्य च द्वितीयस्य तेन शंभोर्महात्मनः ।।
पूजा जाता प्रसंगेन व्याधस्य सुखदायिनी ।। ३९ ।।
मृगी सा प्राह तं दृष्ट्वा किं करोषि वनेचर ।।
पूर्ववत्कथितं तेन तच्छ्रुत्वाह मृगी पुनः ।।4.40.४०।।
मृग्युवाच ।।
धन्याहं श्रूयतां व्याध सफलं देहधारणम् ।।
अनित्येन शरीरेण ह्युपकारो भविष्यति ।।४१।।
परन्तु मम बालाश्च गृहे तिष्ठन्ति चार्भकाः ।।
भर्त्रे तांश्च समर्प्यैव ह्यागमिष्याम्यहं पुनः ।।४२।।
व्याध उवाच ।।
त्वया चोक्तं न मन्येहं हन्मि त्वां नात्र संशयः ।।
तच्छ्रुत्वा हरिणी प्राह शपथं कुर्वती हरे ।। ४३ ।।
मृग्युवाच ।।
शृणु व्याध प्रवक्ष्यामि नागच्छेयं पुनर्यदि ।।
वाचा विचलितो यस्तु सुकृतं तेन हारितम् ।। ४४ ।।
परिणीता स्त्रियं हित्वा गच्छत्यन्यां च यः पुमान् ।।

वेदधर्मं समुल्लंघ्य कल्पितेन च यो व्रजेत् ।। ४५ ।।
विष्णुभक्तिसमायुक्तः शिवनिन्दां करोति यः ।।
पित्रोः क्षयाहमासाद्य शून्यं चैवाक्रमेदिह ।। ४६ ।।
कृत्वा च पारतापं हि करोति वचनं पुनः ।।
तेन पापेन लिंपामि नागच्छेयं पुनर्यदि ।। ४७ ।।
सूत उवाच ।।।
इत्युक्तश्च तया व्याधो गच्छेत्याह मृगीं च सः ।।
सा मृगी च जलं पीत्वा हृष्टाऽगच्छत्स्वमाश्रमम् ।। ४८ ।।
तावद्द्वितीयो यामो वै तस्य निद्रां विना गतः ।।
एतस्मिन्समये तत्र प्राप्ते यामे तृतीयके ।। ४९ ।।
ज्ञात्वा विलंबं चकितस्तदन्वेषणतत्परः ।।।
तद्यामे मृगमद्राक्षीज्जलमार्गगतं ततः।।4.40.५०।।
पुष्टं मृगं च तं दृष्ट्वा हृष्टो वनचरस्स वै ।।
शरं धनुषि संधाय हन्तुं तं हि प्रचक्रमे ।।५१।।
तदैवं कुर्वतस्तस्य बिल्वपत्राणि कानिचित् ।।
तत्प्रारब्धवशाद्विष्णो पतितानि शिवोपरि ।। ५२ ।।
तेन तृतीययामस्य तद्रात्रौ तस्य भाग्यतः ।।
पूजा जाता शिवस्यैव कृपालुत्वं प्रदर्शितम् ।।५३।।
श्रुत्वा तत्र च तं शब्दं किं करोषीति प्राह सः ।।
कुटुम्बार्थमहं हन्मि त्वां व्याधश्चेति सोब्रवीत् ।। ५४ ।।
तच्छ्रुत्वा व्याधवचनं हरिणो हृष्टमानसः ।।
द्रुतमेव च तं व्याधं वचनं चेदमब्रवीत् ।। ५५ ।।
हरिण उवाच ।।
धन्योहं पुष्टिमानद्य भवत्तृप्तिर्भविष्यति ।।
यस्यांगं नोपकाराय तस्य सर्वं वृथा गतम् ।। ५६ ।।
यो वै सामर्थ्ययुक्तश्च नोपकारं करोति वै ।।
तत्सामर्थ्यं भवेद्व्यर्थं परत्र नरकं व्रजेत् ।। ५७ ।।
परन्तु बालकान् स्वांश्च समर्प्य जननीं शिशून् ।।
आश्वास्याप्यथ तान् सर्वानागमिष्याम्यहं पुनः ।। ५८ ।।
इत्युक्तस्तेन स व्याधो विस्मितोतीव चेतसि ।।
मनाक् शुद्धमनानष्टपापपुंजो वचोऽब्रवीत् ।। ५९ ।।
व्याध उवाच ।।
ये ये समागताश्चात्र तेते सर्वे त्वया यथा ।।

कथयित्वा गता ह्यत्र नायान्त्यद्यापि वंचकाः ।। 4.40.६० ।।
त्वं चापि संकटे प्राप्तो व्यलीकं च गमिष्यसि ।।
मम सञ्जीवनं चाद्य भविष्यति कथं मृग ।। ६१ ।।
मृग उवाच ।।
शृणु व्याध प्रवक्ष्यामि नानृतं विद्यते मयि ।।
सत्येन सर्वं ब्रह्माण्डं तिष्ठत्येव चराचरम् ।।६२।।
यस्य वाणी व्यलीका हि तत्पुण्यं गलितं क्षणात् ।।
तथापि शृणु वै सत्यां प्रतिज्ञां मम भिल्लक ।। ६३ ।।
सन्ध्यायां मैथुने घस्रे शिवरात्र्यां च भोजने ।।
कूटसाक्ष्ये न्यासहारे संध्याहीने द्विजे तथा ।। ६४ ।।
शिवहीनं मुखं यस्य नोपकर्ता क्षमोऽपि सन् ।।
पर्वणि श्रीफलस्यैव त्रोटनेऽभक्ष्यभक्षणे ।। ६५ ।।
असंपूज्य शिवं भस्मरहितश्चान्नभुक् च यः ।।
एतेषां पातकं मे स्यान्नागच्छेयं पुनर्यदि ।। ६६ ।।
शिव उवाच ।।
इति श्रुत्वा वचस्तस्य गच्छ शीघ्रं समाव्रज ।।
स व्याधेनैवमुक्तस्तु जलं पीत्वा गतो मृगः ।। ६७ ।।
ते सर्वे मिलितास्तत्र स्वाश्रमे कृतसुप्रणाः ।।
वृत्तांतं चैव तं सर्वं श्रुत्वा सम्यक् परस्परम्।।६८।।
गन्तव्यं निश्चयेनेति सत्यपाशेन यंत्रिताः ।।
आश्वास्य बालकांस्तत्र गन्तुमुत्कण्ठितास्तदा ।। ६९ ।।
मृगी ज्येष्ठा च या तत्र स्वामिनं वाक्यमब्रवीत् ।।
त्वां विना बालका ह्यत्र कथं स्थास्यंति वै मृग ।। 4.40.७० ।।
प्रथमं तु मया तत्र प्रतिज्ञा च कृता प्रभो ।।
तस्मान्मया च गन्तव्यं भवद्भ्यां स्थीयतामिह ।। ७१ ।।
इति तद्वचनं श्रुत्वा कनिष्ठा वाक्यमब्रवीत् ।।
अहं त्वत्सेविका चाद्य गच्छामि स्थीयतां त्वया।।७२।।
तच्छ्रुत्वा च मृगः प्राह गम्यते तत्र वै मया ।।
भवत्यौ तिष्ठतां चात्र मातृतः शिशुरक्षणम्।।७३।।
तत्स्वामिवचनं श्रुत्वा मेनाते तन्न धर्मतः ।।
प्रोचुः प्रीत्या स्वभर्तारं वैधव्ये जीवितं च धिक् ।।७४।।
बालानाश्वास्य तांस्तत्र समर्प्य सहवासिनः ।।
गतास्ते सर्व एवाशु यत्रास्ते व्याधसत्तमः ।। ७५ ।।

ते बाला अपि सर्वे वै विलोक्यानुसमागताः ।।
एतेषां या गतिः स्याद्वै ह्यस्माकं सा भवत्विति ।। ७६ ।।
तान् दृष्ट्वा हर्षितो व्याधो बाणं धनुषि संदधे ।।
पुनश्च जलपत्राणि पतितानि शिवोपरि ।। ७७ ।।
तेन जाता चतुर्थस्य पूजा यामस्य वै शुभा ।।
तस्य पापन्तदा सर्वं भस्मसादभवत् क्षणात् ।। ७८ ।।
मृगी मृगी मृगश्चोचुश्शीघ्रं वै व्याधसत्तम ।।
अस्माकं सार्थकं देहं कुरु त्वं हि कृपां कुरु ।। ७९ ।।
।। शिव उवाच ।।
इति तेषां वचश्श्रुत्वा व्याधो विस्मयमागतः ।।
शिवपूजाप्रभावेण ज्ञानं दुर्लभमाप्तवान् ।। 4.40.८० ।।
एते धन्या मृगाश्चैव ज्ञानहीनास्सुसंमताः ।।
स्वीयेनैव शरीरेण परोपकरणे रताः ।।८१।।
मानुष्यं जन्म संप्राप्य साधितं किं मयाधुना ।।
परकायं च संपीड्य शरीरं पोषितं मया ।। ८२ ।।
कुटुम्बं पोषितं नित्यं कृत्वा पापान्यनेकशः ।।
एवं पापानि हा कृत्वा का गतिर्मे भविष्यति ।। २३ ।।
कां वा गतिं गमिष्यामि पातकं जन्मतः कृतम् ।।
इदानीं चिंतयाम्येवं धिग्धिक् च जीवनं मम ।। ८४ ।।
इति ज्ञानं समापन्नो बाणं संवारयंस्तदा ।।
गम्यतां च मृगश्रेष्ठा धन्याः स्थ इति चाब्रवीत् ।। ८५ ।।
शिव उवाच ।।
इत्युक्ते च तदा तेन प्रसन्नश्शंकरस्तदा ।।
पूजितं च स्वरूपं हि दर्शयामास संमतम् ।।८६।।
संस्पृश्य कृपया शंभुस्तं व्याधं प्रीतितोऽब्रवीत् ।।
वरं ब्रूहि प्रसन्नोऽस्मि व्रतेनानेन भिल्लक ।। ८७ ।।
व्याधोऽपि शिवरूपं च दृष्ट्वा मुक्तोऽभवत्क्षणात्।।
पपात शिवपादाग्रे सर्वं प्राप्तमिति बुवन् ।।८८।।
शिवोऽपि सुप्रन्नात्मा नाम दत्वा गुहेति च ।।
विलोक्य तं कृपादृष्ट्या तस्मै दिव्यान्वरानदात् ।।।८९।।
शिव उवाच ।।
शृणु व्याधाद्य भोगांस्त्वं भुंक्ष्व दिव्यान्यथेप्सितान् ।।
राजधानीं समाश्रित्य शृंगवेरपुरे पराम् ।।4.40.९०।।

अनपाया वंशवृद्धिश्श्लाघनीयः सुरैरपि ।।
गृहे रामस्तव व्याध समायास्यति निश्चितम् ।।९१।।
करिष्यति त्वया मैत्री मद्भक्तस्नेहकारकः ।।
मत्सेवासक्तचेतास्त्वं मुक्तिं यास्यसि दुर्लभाम् ।।९२।।
एतस्मिन्नंतरे ते तु कृत्वा शंकरदर्शनम् ।।
सर्वे प्रणम्य सन्मुक्तिं मृगयोनेः प्रपेदिरे ।। ९३ ।।
विमानं च समारुह्य दिव्यदेहा गतास्तदा ।।
शिवदर्शनमात्रेण शापान्मुक्ता दिवं गताः ।। ९४ ।।
व्याधेश्वरः शिवो जातः पर्वते ह्यर्बुदाचले ।।
दर्शनात्पूजनात्सद्यो भुक्तिमुक्तिप्रदायकः ।।९५।।
व्याधोपि तद्दिनान्नूनं भोगान्स सुरसत्तम ।।
भुक्त्वा रामकृपां प्राप्य शिवसायुज्यमाप्तवान् ।। ९६ ।।
अज्ञानात्स व्रतञ्चैतत्कृत्वा सायुज्यमाप्तवान् ।।
किं पुनर्भक्तिसंपन्ना यान्ति तन्मयतां शुभाम्।।९७।।
विचार्य्य सर्वशास्त्राणि धर्मांश्चैवाप्यनेकशः।।
शिवरात्रिव्रतमिदं सर्वोत्कृष्टं प्रकीर्तितम्।।९८।।
व्रतानि विविधान्यत्र तीर्थानि विविधानि च ।।
दानानि च विचित्राणि मखाश्च विविधास्तथा ।।९९।।
तपांसि विविधान्येव जपाश्चैवाप्य नेकशः ।।
नैतेन समतां यान्ति शिवरात्रिव्रतेन च ।।4.40.१००।।
तस्माच्छुभतरं चैतत्कर्तव्यं हितमीप्सुभिः ।।
शिवरात्रिव्रतन्दिव्यं भुक्ति मुक्तिप्रदं सदा ।। १०१ ।।
एतत्सर्वं समाख्यातं शिवरात्रिव्रतं शुभम् ।।
व्रतराजेति विख्यातं किमन्यच्छ्रोतुमिच्छसि ।। १०२ ।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां व्याधेश्वरमाहात्म्ये शिवरात्रिव्रतमाहात्म्यवर्णनं नाम चत्वारिंशोऽध्यायः ।। ४०।।

ऋषय ऊचुः ।।
मुक्तिर्नाम त्वया प्रोक्ता तस्यां किं नु भवेदिह ।।
अवस्था कीदृशी तत्र भवेदिति वदस्व नः ।। १ ।।
सूत उवाच ।।।
मुक्तिश्चतुर्विधा प्रोक्ता श्रूयतां कथयामि वः ।।
संसारक्लेशसंहर्त्री परमानन्ददायिनी ।। २ ।।
सारूप्या चैव सालोक्या सान्निध्या च तथा परा ।।
सायुज्या च चतुर्थी सा व्रतेनानेन या भवेत् ।।३।।
मुक्तेर्दाता मुनिश्रेष्ठाः केवलं शिव उच्यते।।
ब्रह्माद्या न हि ते ज्ञेया केवलं च त्रिवर्गदाः ।।४।।
ब्रह्माद्यास्त्रिगुणाधीशाश्शिवस्त्रिगुणतः परः ।।
निर्विकारी परब्रह्म तुर्यः प्रकृतितः परः ।।५।।
ज्ञानरूपोऽव्ययः साक्षी ज्ञानगम्योऽद्वयस्स्वयम् ।।
कैवल्यमुक्तिदस्सोऽत्र त्रिवर्गस्य प्रदोऽपि हि ।।६।।
कैवल्याख्या पंचमी च दुर्लभा सर्वथा नृणाम् ।।
तल्लक्षणं प्रवक्ष्यामि श्रूयतामृषिसत्तमाः ।। ७ ।।
उत्पद्यते यतः सर्वं येनैतत्पाल्यते जगत् ।।
यस्मिंश्च लीयते तद्धि येन सर्वमिदं ततम् ।। ८ ।।
तदेव शिवरूपं हि पठ्यते च मुनीश्वराः ।।
सकलं निष्कलं चेति द्विविधं वेदवर्णितम् ।। ९ ।।
विष्णुना तच्च न ज्ञातं ब्रह्मणा न च तत्तथा ।।
कुमाराद्यैश्च न ज्ञातं न ज्ञातं नारदेन वै ।।4.41.१०।।
शुकेन व्यास पुत्रेण व्यासेन च मुनीश्वरैः।
तत्पूर्वैश्चाखिलैर्देवैर्वेदैः शास्त्रैस्तथा न हि।।११।।
सत्यं ज्ञानमनंतं च सच्चिदानन्दसंज्ञितम्।।
निर्गुणो निरुपाधिश्चाव्ययः शुद्धो निरंजनः ।।१२।।
न रक्तो नैव पीतश्च न श्वेतो नील एव च ।।
न ह्रस्वो न च दीर्घश्च न स्थूलस्सूक्ष्म एव च।।१३।।
यतो वाचो निवर्तंते अप्राप्य मनसा सह।।
तदेव परमं प्रोक्तं ब्रह्मैव शिवसंज्ञकम्।।१४।।
आकाशं व्यापकं यद्वत्तथैव व्यापकन्त्विदम्।।
मायातीतं परात्मानं द्वन्द्वातीतं विमत्सरम् ।।१५।।
तत्प्राप्तिश्च भवेदत्र शिवज्ञानोदयाद्ध्रुवम् ।।

भजनाद्वा शिवस्यैव सूक्ष्ममत्या सतां द्विजाः ।।१६।।
ज्ञानं तु दुष्करं लोके भजनं सुकरं मतम् ।।
तस्माच्छिवं च भजत मुक्त्यर्थमपि सत्तमाः ।। १७ ।।
शिवो हि भजनाधीनो ज्ञानात्मा मोक्षदः परः ।।
भक्त्यैव बहवः सिद्धा मुक्तिं प्रापुः परां मुदा ।।१८।।
ज्ञानमाता शंभुभक्तिर्मुक्तिभुक्तिप्रदा सदा ।।
सुलभा यत्प्रसादाद्धि सत्प्रेमांकुर लक्षणा ।। १९ ।।
सा भक्तिर्विविधा ज्ञेया सगुणा निर्गुणा द्विजाः ।।
वैधी स्वाभाविकी याया वरा सासा स्मृता परा ।। 4.41.२० ।।
नैष्ठिक्यनैष्ठिकीभेदाद्विविधैव हि कीर्तिता।।
षड्विधा नैष्ठिकी भेदाद्द्वितीयैकविधा स्मृता ।।२१।।
विहिताविहिताभेदात्तामनेकां विदुर्बुधाः ।।
तयोर्बहुविधत्वाच्च विस्तारो न हि वर्ण्यते ।।२२।।
ते नवांगे उभे ज्ञेये श्रवणादिकभेदतः ।।
सुदुष्करे तत्प्रसादं विना च सुकरे ततः ।। २३ ।।
भक्तिज्ञाने न भिन्ने हि शंभुना वर्णिते द्विजाः ।।
तस्माद्भेदो न कर्तव्यस्तत्कर्तुस्सर्वदा सुखम् ।। २४ ।।
विज्ञानं न भवत्येव द्विजा भक्तिविरोधिनः ।।
शंभुभक्तिकरस्यैव भवेज्ज्ञानोदयो द्रुतम् ।।२५।।
तस्माद्भक्तिर्महेशस्य साधनीया मुनीश्वराः ।।
तयैव निखिलं सिद्धं भविष्यति न संशयः ।। २६ ।।
इति पृष्टं भवद्भिर्यत्तदेव कथितं मया ।।
तच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ।। २७ ।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां मुक्तिनिरूपणं नामैकचत्वारिंशोऽध्यायः ।। ४१ ।।

ऋषय ऊचुः ।।
शिवः को वा हरिः को वा रुद्रः को वा विधिश्च कः ।।
एतेषु निर्गुणः को वा ह्येतं नश्छिन्धि संशयम् ।। १ ।।
सूत उवाच ।।
यच्चादौ हि समुत्पन्नं निर्गुणात्परमात्मनः ।।
तदेव शिवसंज्ञं हि वेदवेदांतिनो विदुः ।। २ ।।
तस्मात्प्रकृतिरुत्पन्ना पुरुषेण समन्विता ।।
ताभ्यान्तपः कृतं तत्र मूलस्थे च जले सुधीः ।। ३ ।।
पञ्चकोशीति विख्याता काशी सर्वातिवल्लभा ।।
व्याप्तं च सकलं ह्येतत्तज्जलं विश्वतो गतम् ।। ४ ।।
संभाव्य मायया युक्तस्तत्र सुप्तो हरिस्स वै ।।
नारायणेति विख्यातः प्रकृतिर्नारायणी मता ।। ५ ।।
तन्नाभिकमले यो वै जातस्स च पितामहः ।।
तेनैव तपसा दृष्टस्स वै विष्णुरुदाहृतः ।।६।
उभयोर्वादशमने यद्रूपं स दर्शितं बुधाः ।।
महादेवेति विख्यातं निर्गुणेन शिवेन हि ।। ७ ।।
तेन प्रोक्तमहं शम्भुर्भविष्यामि कभालतः ।।
रुद्रो नाम स विख्यातो लोकानुग्रहकारकः ।। ८ ।।
ध्यानार्थं चैव सर्वेषामरूपो रूपवानभूत् ।।
स एव च शिवस्साक्षाद्भक्तवात्सल्यकारकः ।। ९ ।।
शिवे त्रिगुणसम्भिन्ने रुद्रे तु गुणधामनि ।।
वस्तुतो न हि भेदोऽस्ति स्वर्णे तद्भूषणे यथा ।। 4.42.१० ।।
समानरूपकर्माणौ समभक्तगतिप्रदौ ।।
समानाखिलसंसेव्यौ नानालीलाविहारिणौ ।।११।।
सर्वथा शिवरूपो हि रुद्रो रौद्रपराक्रमः।।
उत्पन्नो भक्तकार्यार्थं हरिब्रह्मसहायकृत् ।।१२।।
अन्ये च ये समुत्पन्ना यथानुक्रमतो लयम् ।।
यांति नैव तथा रुद्रः शिवे रुद्रो विलीयते ।। ४३ ।।
ते वै रुद्रं मिलित्वा तु प्रयान्ति प्रकृता इमे ।।
इमान्रुद्रो मिलित्वा तु न याति श्रुतिशासनम् ।।१४।।
सर्वे रुद्रं भजन्त्येव रुद्रः कञ्चिद्भजेन्न हि ।।
स्वात्मना भक्तवात्सल्याद्भजत्येव कदाचन ।। १५ ।।
अन्यं भजन्ति ये नित्यं तस्मिंस्ते लीनतां गताः ।।

तेनैव रुद्रं ते प्राप्ताः कालेन महता बुधाः ।। १६ ।।
रुद्रभक्तास्तु ये केचित्तत्क्षणं शिवतां गताः ।।
अन्यापेक्षा न वै तेषां श्रुतिरेषा सनातनी ।। १७ ।।
अज्ञानं विविधं ह्येतद्विज्ञानं विविधं न हि ।।
तत्प्रकारमहं वक्ष्ये शृणुतादरतो द्विजाः ।।१८।।
ब्रह्मादि तृणपर्यंतं यत्किंचिद्दृश्यते त्विह ।।
तत्सर्वं शिव एवास्ति मिथ्या नानात्वकल्पना ।। १९ ।।
सृष्टेः पूर्वं शिवः प्रोक्तः सृष्टेर्मध्ये शिवस्तथा।।
सृष्टेरन्ते शिवः प्रोक्तस्सर्वशून्ये तदा शिवः ।।4.42.२०।।
तस्माच्चतुर्गुणः प्रोक्तः शिव एव मुनीश्वराः।।
स एव सगुणो ज्ञेयः शक्तिमत्त्वाद्द्विधापि सः ।।२१।।
येनैव विष्णवे दत्तास्सर्वे वेदास्सनातनाः ।।
वर्णा मात्रा ह्यनैकाश्च ध्यानं स्वस्य च पूजनम् ।।२२।।
ईशानः सर्वविद्यानां श्रुतिरेषा सनातनी ।।
वेदकर्ता वेदपतिस्तस्माच्छंभुरुदाहृतः ।।२३।।
स एव शंकरः साक्षात्सर्वानुग्रहकारकः ।।
कर्ता भर्ता च हर्ता च साक्षी निर्गुण एव सः।।२४।।
अन्येषां कालमानं च कालस्य कलना न हि ।।
महाकालस्स्वयं साक्षान्महाकालीसमाश्रितः ।।२५।।
तथा च ब्राह्मणा रुद्रं तथा कालीं प्रचक्षते।।
सर्वं ताभ्यान्ततः प्राप्तमिच्छया सत्यलीलया।।२६।।
न तस्योत्पादकः कश्चिद्भर्ता हर्ता न तस्य हि ।।
स्वयं सर्वस्य हेतुस्ते कार्यभूताच्युतादयः ।। २७ ।।
स्वयं च कारणं कार्यं स्वस्य नैव कदाचन ।।
एकोव्यनेकतां यातोप्यनेकोप्येकतां व्रजेत् ।।२८।।
एकं बीजं बहिर्भूत्वा पुनर्बीजं च जायते ।।
बहुत्वे च स्वयं सर्वं शिवरूपी महेश्वरः ।। २९ ।।
एतत्परं शिवज्ञानं तत्त्वतस्तदुदाहृतम् ।।
जानाति ज्ञानवानेव नान्यः कश्चिदृषीश्वराः ।। 4.42.३० ।।
मुनय ऊचुः ।।
ज्ञानं सलक्षणं ब्रूहि यज्ज्ञात्वा शिवताम्व्रजेत् ।।
कथं शिवश्च तत्सर्वं सर्वं वा शिव एव च ।। ३१ ।।
व्यास उवाच ।।

एतदाकर्ण्य वचनं सूतः पौराणिकोत्तमः ।।
स्मृत्वा शिवपदाम्भोजं मुनींस्तानब्रवीद्वचः ।।३२।।
इति श्रीशिवमहापुराणे चतुर्थ्यां कोटिरुद्रसंहितायां सगुणनिर्गुणभेदवर्णनं नाम द्विचत्वारिंशोऽध्यायः ।।४२।।

सूत उवाच ।।
श्रूयतामृषयः सर्वे शिवज्ञानं यथा श्रुतम्।।
कथयामि महागुह्यं पर मुक्तिस्वरूपकम् ।। १ ।।
कनारदकुमाराणां व्यासस्य कपिलस्य च ।।
एतेषां च समाजे तैर्निश्चित्य समुदाहृतम्।।२।।
इति ज्ञानं सदा ज्ञेयं सर्वं शिवमयं जगत् ।।
शिवः सर्वमयो ज्ञेयस्सर्वज्ञेन विपश्चिता ।।३।।
आब्रह्मतृणपर्यन्तं यत्किंचिद्दृश्यते जगत् ।।
तत्सर्वं शिव एवास्ति स देवः शिव उच्यते।।४।।
यदेच्छा तस्य जायेत तदा च क्रियते त्विदम् ।।
सर्वं स एव जानाति तं न जानाति कश्चन ।।५।।
रचयित्वा स्वयं तच्च प्रविश्य दूरतः स्थितः।।
न तत्र च प्रविष्टोसौ निर्लिप्तश्चित्स्वरूपवान् ।।६।।
यथा च ज्योतिषश्चैव जलादौ प्रतिबिंबता ।।
वस्तुतो न प्रवेशो वै तथैव च शिवः स्वयम्।।७।।
वस्तुतस्तु स्वयं सर्वं क्रमो हि भासते शुभः।।
अज्ञानं च मतेर्भेदो नास्त्यन्यच्च द्वयम्पुनः।।८।।
दर्शनेषु च सर्वेषु मतिभेदः प्रदर्श्यते।।
परं वेदान्तिनो नित्यमद्वैतं प्रतिचक्षते।।९।।
स्वस्याप्यंशस्य जीवांशो ह्यविद्यामोहितो वशः।।
अन्योऽहमिति जानाति तया मुक्तो भवेच्छिवः।।4.43.१०।।
सर्वं व्याप्य शिवः साक्षाद् व्यापकः सर्वजन्तुषु।।
चेतनाचेतनेशोपि सर्वत्र शंकरस्स्वयम् ।।११।।
उपायं यः करोत्यस्य दर्शनार्थं विचक्षणः।।
वेदान्तमार्गमाश्रित्य तद्दर्शनफलं लभेत्।।१२।।
यथाग्निर्व्यापकश्चैव काष्ठेकाष्ठे च तिष्ठति।।
यो वै मंथति तत्काष्ठं स वै पश्यत्यसंशयम्।।१३।।
भक्त्यादिसाधनानीह यः करोति विचक्षणः।।
स वै पश्यत्यवश्यं हि तं शिवं नात्र संशयः ।।१४।।
शिवःशिवःशिवश्चैव नान्यदस्तीति किंचन।।
भ्रान्त्या नानास्वरूपो हि भासते शङ्करस्सदा ।।१५।।
यथा समुद्रो मृच्चैव सुवर्णमथवा पुनः ।।
उपाधितो हि नानात्वं लभते शंकरस्तथा ।। १६ ।।

कार्यकारणयोर्भेदो वस्तुतो न प्रवर्तते ।।
केवलं भ्रान्तिबुद्ध्यैव तदाभावे स नश्यति ।। १७ ।।
तदा बीजात्प्ररोहश्च नानात्वं हि प्रकाशयेत् ।।
अन्ते च बीजमेव स्यात्तत्प्ररोहश्च नश्यति ।। १८ ।।
ज्ञानी च बीजमेव स्यात्प्ररोहो विकृतीर्मता ।।
तन्निवृत्तौ पुनर्ज्ञानी नात्र कार्या विचारणा ।। १९ ।।
सर्वं शिवः शिवं सर्वं नास्ति भेदश्च कश्चन ।।
कथं च विविधं पश्यत्येकत्वं च कथं पुनः ।। 4.43.२० ।।
यथैकं चैव सूर्याख्यं ज्योतिर्नानाविधं जनैः ।।
जलादौ च विशेषेण दृश्यते तत्तथैव सः ।। २१ ।।
सर्वत्र व्यापकश्चैव स्पर्शत्वं न विबध्यते ।।
तथैव व्यापको देवो बध्यते न क्वचित्स वै ।। २२ ।।
साहंकारस्तथा जीवस्तन्मुक्तः शंकरः स्वयम् ।।
जीवस्तुच्छः कर्मभोगो निर्लिप्तः शंकरो महान् ।। २३ ।।
यथैकं च सुवर्णादि मिलितं रजतादिना ।।।४
अल्पमूल्यं प्रजायेत तथा जीवोऽप्यहंयुतः ।। २४ ।।
यथैव हि सुर्वणादि क्षारादेः शोधितं शुभम्।।
पूर्ववन्मूल्यतां याति तथा जीवोऽपि संस्कृतेः ।।२५।।
प्रथमं सद्गुरुं प्राप्य भक्तिभाव समन्वितः ।।
शिवबुद्ध्या करोत्युच्चैः पूजनं स्मरणादिकम् ।। २६ ।।
तद्बुध्या देहतो याति सर्वपापादिको मलः ।।
तदाऽज्ञानं च नश्येत ज्ञानवाञ्जायते यदा ।। २७ ।।
तदाहंकारनिर्मुक्तो जीवो निर्मलबुद्धिमान् ।।
शङ्करस्य प्रसादेन प्रयाति शङ्करताम्पुनः ।।२८।।
यथाऽऽदर्शस्वरूपे च स्वीयरूपं प्रदृश्यते ।।
तथा सर्वत्रगं शम्भु पश्यतीति सुनिश्चितम् ।।२९।।
जीवन्मुक्तस्य एवासौ देहः शीर्णे शिवे मिलेत् ।।
प्रारब्धवशगो देहस्तद्भिन्नो ज्ञानवान् मतः ।। 4.43.३० ।।
शुभं लब्ध्वा न हृष्येत कुप्येल्लब्ध्वाऽशुभं न हि ।।
द्वंद्वेषु समता यस्य ज्ञानवानुच्यते हि सः ।। ३१ ।।
आत्मयोगेन तत्त्वानामथवा च विवेकतः ।।
यथा शरीरतो यायाच्छरीरं मुक्तिमिच्छतः ।। ३२ ।।
सदाशिवो विलीयेत मुक्तो विरहमेव च ।।

ज्ञानमूलन्तथाध्यात्म्यं तस्य भक्तिश्शिवस्य च ।। ३३ ।।
भक्तेश्च प्रेम संप्रोक्तं प्रेम्णश्च श्रवणन्तथा ।।
श्रवणाच्चापि सत्संगस्सत्संगाच्च गुरुर्बुधः ।।३४।।
सम्पन्ने च तथा ज्ञाने मुक्तो भवति निश्चितम् ।।
इति चेज्ज्ञानवान्यो वै शंभुमेव सदा भजेत् ।।३५।।
अनन्यया च भक्त्या वै युक्तः शम्भुं भजेत्पुनः ।।
अन्ते च मुक्तिमायाति नात्र कार्या विचारणा ।।३६।।
अतोऽधिको न देवोऽस्ति मुक्तिप्राप्त्यै च शंकरात्।।
शरणं प्राप्य यश्चैव संसाराद्विनिवर्तते ।। ३७ ।।
इति मे विविधं वाक्यमृषीणां च समागतैः ।।
निश्चित्य कथितं विप्रा धिया धार्यं प्रयत्नतः ।। ३८ ।।
प्रथमं विष्णवे दत्तं शंभुना लिंगसन्मुखे ।।
विष्णुना ब्रह्मणे दत्तं ब्रह्मणा सनकादिषु ।। ३९ ।।
नारदाय ततः प्रोक्तं तज्ज्ञानं सनकादिभिः ।।
व्यासाय नारदेनोक्तं तेन मह्यं कृपालुना ।। 4.43.४० ।।
मया चैव भवद्भ्यश्च भवद्भिर्लोकहेतवे ।।
स्थापनीयं प्रयत्नेन शिवप्राप्तिकरं च तत् ।। ४१ ।।
इति वश्च समाख्यातं यत्पृष्टोऽहं मुनीश्वराः ।।
गोपनीयं प्रयत्नेन किमन्यच्छ्रोतुमिच्छथ ।। ४२ ।।
व्यास उवाच ।।
एतच्छ्रुत्वा तु ऋषय आनन्दं परमं गताः ।।
हर्षगद्गदया वाचा नत्वा ते तुष्टुवुर्मुहुः ।। ४३
ऋषय ऊचुः ।।
व्यासशिष्य नमस्तेऽस्तु धन्यस्त्वं शैवसत्तमः ।।
श्रावितं नः परं वस्तु शैवं ज्ञानमनुत्तमम् ।।४४।।
अस्माकं चेतसो भ्रान्तिर्गता हि कृपया तव ।।
सन्तुष्टाश्शिवसज्ज्ञानं प्राप्य त्वत्तो विमुक्तिदम् ।।४५।।
सूत उवाच ।।
नास्तिकाय न वक्तव्यमश्रद्धाय शठाय च।।
अभक्ताय महेशस्य न चाशुश्रुषवे द्विजाः।।४६।।
इतिहासपुराणानि वेदाच्छास्त्राणि चासकृत् ।।
विचार्य्योद्धृत्य तत्सारं मह्यं व्यासेन भाषितम् ।। ४७ ।।
एतच्छ्रुत्वा ह्येकवारं भवेत्पापं हि भस्मसात् ।।

अभक्तो भक्तिमाप्नोति भक्तस्य भक्तिवर्द्धनम्।।४८।।
पुनश्श्रुते च सद्भक्तिर्मुक्तिस्स्याच्च श्रुते पुनः।।
तस्मात्पुनःपुनश्श्राव्यं भुक्तिमुक्तिफलेप्सुभिः।।४९।।
आवृत्तयः पंच कार्याः समुद्दिश्य फलं परम्।।
तत्प्राप्नोति न सन्देहो व्यासस्य वचनं त्विदम्।।4.43.५०।।
न दुर्लभं हि तस्यैव येनेदं श्रुतमुत्तमम् ।।
पंचकृत्वस्तदावृत्त्या लभ्यते शिवदर्शनम्।।५१।।
पुरातनाश्च राजानो विप्रा वैश्याश्च सत्तमाः ।।
इदं श्रुत्वा पंचकृत्वो धिया सिद्धिं परां गताः ।। ५२ ।।
श्रोष्यत्यद्यापि यश्चेदं मानवो भक्तितत्परः ।।
विज्ञानं शिवसंज्ञं वै भुक्तिं मुक्तिं लभेच्च सः ।। ५३ ।।
।। व्यास उवाच ।।
इति तद्वचनं श्रुत्वा परमानन्दमागताः ।।
समानर्चुश्च ते भूतं नानावस्तुभिरादरात ।।५४।।
नमस्कारैः स्तवैश्चैव स्वस्तिवाचनपूर्वकम्।।
आशीर्भिर्वर्द्धयामासुः संतुष्टाश्छिन्नसंशयाः ।। ५५ ।।
परस्परं च संतुष्टाः सूतस्ते च सुबुद्धयः ।।
शंभुं देवं परं मत्वा नमंति स्म भजंति च ।। ५६ ।।
एतच्छिवसुविज्ञानं शिवस्यातिप्रियं महत् ।।
भुक्तिमुक्तिप्रदं दिव्यं शिवभक्तिविवर्द्धनम् ।।५७।।
इयं हि संहिता पुण्या कोटिरुद्राह्वया परा।।
चतुर्थी शिव पुराणस्य कथिता मे मुदावहा ।।५८।।
एतां यः शृणुयाद्भक्त्या श्रावयेद्वा समाहितः ।।
स भुक्त्वेहाखिलान्भोगानंते परगतिं लभेत् ।। ।। ५९ ।।
इति श्रीशिवमहापुराणे चतुर्विंशतिसाहस्र्यां वैयासिक्यां संहितायां तदन्तर्गतायां चतुर्थ्यां कोटिरुद्रसंहितायां ज्ञाननिरूपणं नाम त्रिचत्वारिंशोऽध्यायः ।। ४३ ।।

।। समाप्तेयं शिवमहापुराणान्तर्गतकोटिरुद्रसंहिता चतुर्थी ।। ।। ।। ।।

श्रीगणेशाय नमः ।।

श्रीगौरीशंकराभ्यां नमः ।।

अथ पञ्चम्युमासंहिता प्रारभ्यते ।।

यो धत्ते भुवनानि सप्त गुणवान्स्रष्टा रजस्संश्रयस्संहर्ता तमसान्वितो गुणवतीं मायामतीत्य स्थितः ।।

सत्यानन्दमनन्तबोधममलं ब्रह्मादिसंज्ञास्पदं नित्यं सत्त्वसमन्वयादधिगतं पूर्णं शिवं धीमहि ।।१।।

ऋषय ऊचुः ।।

सूतसूत महाप्राज्ञ व्यासशिष्यन मोऽस्तु ते ।।

चतुर्थी कोटिरुद्राख्या श्राविता संहिता त्वया ।। २ ।।

अथोमासंहितान्तःस्थ नानाख्यानसमन्वितम् ।।

ब्रूहि शंभोश्चरित्रं वै साम्बस्य परमात्मनः ।।३।।

सूत उवाच ।।

महर्षयश्शौनकाद्याः शृणुत प्रेमतः शुभम् ।।

शांकरं चरितं दिव्यं भुक्तिमुक्तिप्रदं परम् ।। ४ ।।

इतीदृशं पुण्यप्रश्नं पृष्टवान्मुनिसत्तमः ।।

व्यासस्सनत्कुमारं वै शैवं सच्चरितं जगौ ।। ५ ।।

।। सनत्कुमार उवाच ।।

वासुदेवाय यत्प्रोक्तमुपमन्युमहर्षिणा ।।

तदुच्यते मया व्यास चरितं हि महेशितुः ।। ६ ।।

पुरा पुत्रार्थमगमत्कैलासं शंकरालयम् ।।

वसुदेवसुतः कृष्णस्तपस्तप्तुं शिवस्य हि ।। ७ ।।

अत्रोपमन्युं संदृष्ट्वा तपंतं शृंग उत्तमे ।।

प्रणम्य भक्त्या स मुनिं पर्यपृच्छत्कृताञ्जलिः ।। ८ ।।

श्रीकृष्ण उवाच ।।

उपमन्यो महाप्राज्ञ शैवप्रवर सन्मते ।।

पुत्रार्थमगमं तप्तुं तपोऽत्र गिरिशस्य हि ।। ९ ।।

ब्रूहि शंकरमाहात्म्यं सदानन्दकरं मुने ।।

यच्छ्रुत्वा भक्तितः कुर्य्यां तप ऐश्वरमुत्तमम् ।। 5.1.१० ।।

।। सनत्कुमार उवाच ।।

इति श्रुत्वा वचस्तस्य वासुदेवस्य धीमतः ।।

प्रत्युवाच प्रसन्नात्मा ह्युपमन्युस्स्मरञ्छिवम् ।। ११ ।।

।। उपमन्युरुवाच ।।

शृणु कृष्ण महाशैव महिमानं महेशितुः ।।

यमद्राक्षमहं शंभोर्भक्तिवर्द्धनमुत्तमम् ।। १२ ।।

तपःस्थोऽहं समद्राक्षं शंकरं च तदायुधान् ।।

परिवारं समस्तं च विष्ण्वादीनमरादिकान् ।। १३ ।।

त्रिभिरंशैश्शोभमानमजस्रसुखमव्ययम्।।

एकपादं महादंष्ट्रं सज्वालकवलैर्मुखैः ।।१४।।

द्विसहस्रमयूखानां ज्योतिषाऽतिविराजितम् ।।

सर्वास्त्रप्रवराबाधमनेकाक्षं सहस्रपात् ।। १५ ।।

यश्च कल्पान्तसमये विश्वं संहरति ध्रुवम् ।।

नावध्यो यस्य च भवेत्त्रैलौक्ये सचराचरे ।। १६ ।।

महेश्वरभुजोत्सृष्टं त्रैलोक्यं सचराचरम् ।।

निर्ददाह द्रुतं कृत्स्नं निमेषार्द्धान्न संशयः ।। १७ ।।

तपःस्थो रुद्रपार्श्वस्थं दृष्टवानहमव्यम् ।।

गुह्यमस्त्रं परं चास्य न तुल्यमधिकं क्वचित् ।।१८।।

यत्तच्छूलमिति ख्यातं सर्वलोकेषु शूलिनः ।।

विजयाभिधमत्युग्रं सर्वशस्त्रास्त्रनाशकम् ।।१९।।

दारयेद्यन्महीं कृत्स्नां शोषयेद्यन्महोदधिम् ।।

पातयेदखिलं ज्योतिश्चक्रं यन्नात्र संशयः ।।5.1.२०।।

यौवनाश्वो हतो येन मांधाता सबलः पुरा ।।

चक्रवर्ती महातेजास्त्रैलोक्यविजयो नृपः ।।२१।।

दर्पाविष्टो हैहयश्च निः क्षिप्तो लवणासुरः ।।

शत्रुघ्नं नृपतिं युद्धे समाहूय समंततः ।।२२।।

तस्मिन्दैत्ये विनष्टे तु रुद्रहस्ते गतं तु यत्।।

तच्छूलमिति तीक्ष्णाग्रं संत्रासजननं महत् ।।२३।।

त्रिशिखां भृकुटीं कृत्वा तर्जयंतमिव स्थितम् ।।
विधूम्रानलसंकाशं बालसूर्यमिवोदितम् ।।२४।।
सूर्य्य हस्तमनिर्द्देश्यं पाशहस्तमिवांतकम्।।
परशुं तीक्ष्णधारं च सर्पाद्यैश्च विभूषितम्।।२५।।
कल्पान्तदहनाकारं तथा पुरुषविग्रहम्।।
यत्तद्भार्गवरामस्य क्षत्रियान्तकरं रणे ।।२६।।
रामो यद्बलमाश्रित्य शिवदत्तश्च वै पुरा ।।
त्रिःसप्तकृत्वो नक्षत्रं ददाह हृषितो मुनिः ।। २७ ।।
सुदर्शनं तथा चक्रं सहस्रवदनं विभुम् ।।
द्विसहस्रभुजं देवमद्राक्षं पुरुषाकृतिम् ।। २८ ।।
द्विसहस्रेक्षणं दीप्तं सहस्रचरणाकुलम् ।।
कोटिसूर्यप्रतीकाशं त्रैलोक्यदहनक्षमम् ।। २९ ।।
वज्रं महोज्ज्वलं तीक्ष्णं शतपर्वप्रनुत्तमम् ।।
महाधनुः पिनाकं च सतूणीरं महाद्युतिम् ।।5.1.३०।।
शक्तिं खड्गं च पाशं च महादीप्तं समांकुशम् ।।
गदां च महतीं दिव्यामन्यान्यस्त्राणि दृष्टवान् ।।३१।।
तथा च लोकपालानामस्त्राण्येतानि यानि च ।।
अद्राक्षं तानि सर्वाणि भगवद्रुद्रपार्श्वतः ।। ३२ ।।
सव्यदेशे तु देवस्य ब्रह्मा लोकपितामहः ।।
विमानं दिव्यमास्थाय हंसयुक्तं मनोनुगम् ।। ३३ ।।
वामपार्श्वे तु तस्यैव शंखचक्रगदाधरः ।।
वैनतेयं समास्थाय तथा नारायणः स्थितः ।। ३४ ।।
स्वायंभुवाद्या मनवो भृग्वाद्या ऋषयस्तथा ।।
शक्राद्या देवताश्चैव सर्व एव समं ययुः ।।३५।।
स्कंदश्शक्तिं समादाय मयूरस्थस्सघंटकः ।।
देव्यास्समीपे संतस्थौ द्वितीय इव पावकः ।। ३६ ।।
नंदी शूलं समादाय भवाग्रे समवस्थितः ।।
सर्वभूतगणाश्चैवं मातरो विविधाः स्थिताः ।। ३७ ।।

तेऽभिवाद्य महेशानं परिवार्य्य समंततः ।।
अस्तुवन्विविधैः स्तोत्रैर्महादेवं तदा सुराः ।।३८।।
यत्किंचित्तु जगत्यस्मिन्दृश्यते श्रूयतेऽथवा ।।
तत्सर्वं भगवत्पार्श्वे निरीक्ष्याहं सुविस्मितः ।।३९।।
सुमहद्धैर्य्यमालंब्य प्रांजलिर्विविधैः स्तवैः।।
परमानन्दसंमग्नोऽभूवं कृष्णाहमद्ध्वरे।।5.1.४०।।
संमुखे शंकरं दृष्ट्वा बाष्पगद्गदया गिरा ।।
अपूजयं सुविधिवदहं श्रद्धासमन्वितः।।४१।।
भगवानथ सुप्रीतश्शंकरः परमेश्वरः ।।
वाण्या मधुरया प्रीत्या मामाह प्रहसन्निव।।४२।।
न विचालयितुं शक्यो मया विप्र पुनः पुनः ।।
परीक्षितोसि भद्रं ते भवान्भक्त्यान्वितो दृढः।।४३।।
तस्मात्ते परितुष्टोऽस्मि वरं वरय सुव्रत ।।
दुर्लभं सर्वदेवेषु नादेयं विद्यते तव ।। ४४ ।।
स चाहं तद्वचः श्रुत्वा शंभोः सत्प्रेमसंयुतम्।।
देवं तं प्रांजलिर्भूत्वाऽब्रुवं भक्तानुकंपिनम् ।। ४५ ।।
।। उपमन्युरुवाच ।।
भगवन्यदि तुष्टोऽसि यदि भक्तिः स्थिरा मयि ।।
तेन सत्येन मे ज्ञानं त्रिकालविषयं भवेत् ।। ४६ ।।
प्रयच्छ भक्तिं विपुलां त्वयि चाव्यभिचारिणीम् ।।
सान्वयस्यापि नित्यं मे भूरि क्षीरौदनं भवेत् ।। ४७ ।।
ममास्तु तव सान्निध्यं नित्यं चैवाश्रमे विभो ।।
तव भक्तेषु सख्यं स्यादन्योन्येषु सदा भवेत् ।। ४८ ।।
एवमुक्तो मया शंभुर्विहस्य परमेश्वरः ।।
कृपादृष्ट्या निरीक्ष्याशु मां स प्राह यदूद्वह ।। ४९ ।।
।। श्रीशिव उवाच ।।
उपमन्यो मुने तात वर्ज्जितस्त्वं भविष्यसि ।।
जरामरणजैर्दोषैस्सर्वकामान्वितो भव ।। 5.1.५० ।।

मुनीनां पूजनीयश्च यशोधनसमन्वितः ।।
शीलरूपगुणैश्वर्यं मत्प्रसादात्पदेपदे ।। ५१ ।।
क्षीरोदसागरस्यैव सान्निध्यं पयसां निधेः ।।
तत्र ते भविता नित्यं यत्रयत्रेच्छसे मुने ।। ५२ ।।
अमृतात्मकं तु तत्क्षीरं यावत्संयाम्यते ततः ।।
इमं वैवस्वतं कल्पं पश्यसे बन्धुभिस्सह।।५३।।
त्वद्गोत्रं चाक्षयं चास्तु मत्प्रसादात्सदैव हि ।।
सान्निध्यमाश्रमे तेऽहं करिष्यामि महामुने ।। ५४ ।।
मद्भक्तिस्तु स्थिरा चास्तु सदा दास्यामि दर्शनम् ।।
स्मृतश्च भवता वत्स प्रियस्त्वं सर्वथा मम ।। ५५ ।।
यथाकामसुखं तिष्ठ नोत्कण्ठां कर्तुमर्हसि ।।
सर्वं प्रपूर्णतां यातु चिंतितं नात्र संशयः ।। ५६ ।।
उपमन्युरुवाच।।
एवमुक्त्वा स भगवान्सूर्य्यकोटिसमप्रभः।।
ममेशानो वरान्दत्त्वा तत्रैवान्तरधीयत।।५७।।
एवं दृष्टो मया कृष्ण परिवारसमन्वितः ।।
शंकरः परमेशानो भक्तिमुक्तिप्रदायकः।।५८।।
शंभुना परमेशेन यदुक्तं तेन धीमता।।
तदवाप्तं च मे सर्वं देवदेवसमाधिना।।५९।।
प्रत्यक्षं चैव तै जातान्गन्धर्वाप्सरसस्तथा।।
ऋषीन्विद्याधरांश्चैव पश्य सिद्धान्व्यवस्थितान्।।5.1.६०।।
पश्य वृक्षान्मनोरम्यान्स्निग्धपत्रान्सुगंधिनः।।
सर्वर्तुकुसुमैर्युक्तान्सदापुष्पफलन्वितान्।।६१।।
सर्वमेतन्महाबाहो शंकरस्य महात्मनः ।।
प्रसादाद्देवदेवस्य विश्वं भावसमन्वितम।।६२।।
ममास्ति त्वखिलं ज्ञानं प्रसादाच्छूलपाणिनः ।।
भूतं भव्यं भविष्यं च सर्वं जानामि तत्त्वतः ।। ६३ ।।
तमहं दृष्टवान्देवमपि देवाः सुरेश्वराः ।।

यं न पश्यंत्यनाराध्य कोऽन्यो धन्यतरो मया ।। ६४ ।।

षड्विंशकमिति ख्यातं परं तत्त्वं सनातनम् ।।

एवं ध्यायंति विद्वांसौ महत्परममक्षरम् ।। ६५ ।।

सर्व तत्त्वविधानज्ञः सर्वतत्त्वार्थदर्शनः ।।

स एव भगवान्देवः प्रधानपुरुषेश्वरः ।।६६।।

यो निजाद्दक्षिणात्पार्श्वाद्ब्रह्माणं लोककारणम्।।

वामादप्यसृजद्विष्णुं लोकरक्षार्थमीश्वरः ।।६७।।

कल्पान्ते चैव संप्राप्तेऽसृजद्रुद्रं हृदः प्रभुः ।।

ततस्समहरत्कृत्स्नं जगत्स्थावरजंगमम् ।। ६८।।

युगांते सर्वभूतानि संवर्तक इवानलः ।।

कालो भूत्वा महादेवो ग्रसमानस्स तिष्ठति ।।६९।।

सर्वज्ञस्सर्वभूतात्मा सवर्भूतभवोद्भवः ।।

आस्ते सर्वगतो देवो दृश्यस्सर्वैश्च दैवतैः ।।5.1.७०।।

अतस्त्वं पुत्रलाभाय समाराधय शंकरम् ।।

शीघ्रं प्रसन्नो भविता शिवस्ते भक्तवत्सलः ।। ७१ ।।

इति श्रीशिवमहापुराणे पंचम्यामुमासंहितायां कृष्णोपमन्युसंवादे स्वगतिवर्णनं नाम प्रथमोऽध्यायः ।। १ ।।

सनत्कुमार उवाच ।।
इत्याकर्ण्य मुनेर्वाक्यमुपमन्योर्महात्मनः ।।
जातभक्तिर्महादेवे कृष्णः प्रोवाच तं मुनिम् ।। १ ।।
।। श्रीकृष्ण उवाच ।।
उपमन्यो मुने तात कृपां कुरु ममोपरि ।।
ये ये शिवं समाराध्य कामानापुश्च तान्वद ।। २ ।।
सनत्कुमार उवाच ।।
इत्याकर्ण्योपमन्युस्स मुनिश्शैववरो महान् ।।
कृष्णवाक्यं सुप्रशस्य प्रत्युवाच कृपानिधिः ।। ३ ।।
उपमन्युरुवाच।।
यैर्यैर्भवाराधनतः प्राप्तो हृत्काम एव हि ।।
तांस्तान्भक्तान्प्रवक्ष्यामि शृणु त्वं वै यदूद्वह ।। ४ ।।
शर्वात्सर्वामरैश्वर्य्यं हिरण्यकशिपुः पुरा ।।
वर्षाणां दशलक्षाणि सोऽलभच्चन्द्रशेखरात् ।। ५ ।।
तस्याऽथ पुत्रप्रवरो नन्दनो नाम विश्रुतः ।।
स च शर्ववरादिन्द्रं वर्षायुतमधोनयत्।।६।।
विष्णुचक्रं च तद्घोरं वज्रमाखण्डलस्य च ।।
शीर्णं पुराऽभवत्कृष्ण तदंगेषु महाहवे ।। ७ ।।
न शस्त्राणि वहंत्यंगे धर्मतस्तस्य धीमतः ।।
ग्रहस्यातिबलस्याजौ चक्रवज्रमुखान्यपि ।।८।।
अर्द्यमानाश्च विबुधा ग्रहेण सुबलीयसा ।।
देवदत्तवरा जघ्नुरसुरेन्द्रास्सुरान्भृशम् ।।९।।
तुष्टो विद्युत्प्रभस्यापि त्रैलोक्येश्वरता मदात् ।।
शतवर्षसहस्राणि सर्वलोकेश्वरो भवः ।। 5.2.१० ।।
तथा पुत्रसहस्राणामयुतं च ददौ शिवः ।।
मम चानुचरो नित्यं भविष्यस्यब्रवीदिति ।।११।।
कुशद्वीपे शुभं राज्यमददाद्भगवान्भवः ।।
स तस्मै शङ्करः प्रीत्या वासुदेव प्रहृष्टधीः ।।१२।।
धात्रा सृष्टश्शतमखो दैत्यो वर्षशतं पुरा ।।
तपः कृत्वा सहस्रं तु पुत्राणामलभद्भवात् ।। १३ ।।
याज्ञवल्क्य इति ख्यातो गीतो वेदेषु वै मुनिः।।
आराध्य स महादेवं प्राप्तवाञ्ज्ञानमुत्तमम् ।।१४।।
वेदव्यासस्तु यो नाम्ना प्राप्तवानतुलं यशः।।

सोऽपि शंकरमाराध्य त्रिकालज्ञानमाप्तवान्।।१५।।
इन्द्रेण वालखिल्यास्ते परिभूतास्तु शङ्करात् ।।
लेभिरे सोमहर्तारं गरुडं सर्वदुर्जयम् ।।१६।।
आपः प्रनष्टाः सर्वाश्च पूर्वरोषात्कपर्द्दिनः ।।
शर्वं समकपालेन देवैरिष्ट्वा प्रवर्तितम् ।। १७।।
अत्रेर्भार्य्या चानसूया त्रीणि वर्षशतानि च ।।
मुशलेषु निराहारा सुप्त्वा शर्वात्ततस्सुतान् ।। १८ ।।
दत्तात्रेयं मुनिं लेभे चन्द्रं दुर्वाससं तथा ।।
गंगां प्रवर्तयामास चित्रकूटे पतिव्रता ।। १९ ।।
विकर्णश्च महादेवं तथा भक्तसुखावहम् ।।
प्रसाद्य महतीं सिद्धिमाप्तवान्मधुसूदन ।। 5.2.२० ।।
चित्रसेनो नृपश्शंभुं प्रसाद्य दृढभक्तिमान् ।।
समस्तनृपभीतिभ्योऽभयं प्रापातुलं च कम् ।।२१।।
श्रीकरो गोपिकासूनुर्नृपपूजाविलोकनात् ।।
जातभक्तिर्महादेवे परमां सिद्धिमाप्तवान् ।। २२ ।।
चित्राङ्गदो नृपसुतस्सीमन्तिन्याः पतिर्हरे ।।
शिवानुग्रहतो मग्नो यमुनायां मृतो न हि।।२३।।
स च तक्षालयं गत्वा तन्मैत्रीं प्राप्य सुव्रतः ।।
आयातः स्वगृहं प्रीतो नानाधनसमन्वितः ।।२४।।
सीमंतिनी प्रिया तस्य सोमव्रतपरायणा।।
शिवानुग्रहतः कृष्ण लेभे सौभाग्यमुत्तमम् ।। २५ ।।
तत्प्रभावाद्व्रते तस्मिन्नेको द्विजसुतः पुरा ।।
कश्चित्स्त्रीत्वं गतो लोभात्कृतदाराकृतिश्छलात् ।।२६।।
चंचुका पुंश्चली दुष्टा गोकर्णे द्विजतः पुरा ।।
श्रुत्वा धर्मकथां शंभोर्भक्त्या प्राप परां गतिम् ।। २७ ।।
स्वस्त्र्यनुग्रहतः पापी बिंदुगो चंचुकापतिः ।।
श्रुत्वा शिवपुराणं स सद्गतिं प्राप शांकरीम् ।। २८ ।।
पिंगला गणिका ख्याता मदराह्वो द्विजाधमः ।।
शैवमृषभमभ्यर्च्य लेभाते सद्गतिं च तौ ।। २९ ।।
महानन्दाभिधा कश्चिद्वेश्या शिवपदादृता ।।
दृढात्पणात्सुप्रसाद्य शिवं लेभे च सद्गतिम् ।। 5.2.३० ।।
कैकेयी द्विजबालाः च सादराह्वा शिवव्रता ।।
परमं हि सुखं प्राप शिवेशव्रतधारणात् ।। ३१ ।।

विमर्षणश्च नृपतिश्शिवभक्तिं विधाय वै ।।
गतिं लेभे परां कृष्ण शिवानुग्रहतः पुरा ।। ३२ ।।
दुर्जनश्च नृपः पापी बहुस्त्रीलंपटः खलः ।।
शिवभक्त्या शिवं प्राप निर्लिप्तः सर्वकर्मसु ।। ३३ ।।
सस्त्रीकश्शबरो नाम्ना शंकरश्च शिवव्रती ।।
चिताभस्मरतो भक्त्या लेभे तद्गतिमुत्तमाम् ।। ३४ ।।
सौमिनी नाम चाण्डाली संपूज्याज्ञानतो हि सा ।।
लेभे शैवीं गतिं कृष्ण शंकरानुग्रहात्परात् ।। ३५ ।।
महाकालाभिधो व्याधो किरातः परहिंसकः ।।
समभ्यर्च्य शिवं भक्त्या लेभे सद्गतिमुत्तमाम् ।। ३६ ।।
दुर्वासा मुनिशार्दूलश्शिवानुग्रहतः पुरा ।।
तस्तार स्वमतं लोके शिवभक्तिं विमुक्तिदाम्।।३७।।
कौशिकश्च समाराध्य शंकरं लोक शंकरम् ।।
ब्राह्मणोऽभूत्क्षत्रियश्च द्वितीय इव पद्मभूः ।।३८।।
शिवमभ्यर्च्य सद्भक्त्या विरंचिश्शैवसत्तमः ।।
अभूत्सर्गकरः कृष्ण सर्वलोकपितामहः ।।३९।।
मार्कण्डेयो मुनिवरश्चिरंजीवी महाप्रभुः।।
शिवभक्तवरः श्रीमाञ्शिवानुग्रहतो हरे ।।5.2.४०।।
देवेन्द्रो हि महाशैवस्त्रैलोक्यं बुभुजे पुरा।।
शिवानुग्रहतः कृष्ण सर्वदेवाधिपः प्रभुः ।।४१।।
बलिपुत्रो महाशैवश्शिवानुग्रहतो वशी।।
बाणो बभूव ब्रह्माण्डनायकस्सकलेश्वरः ।।४२।।
हरिश्शक्तिश्च सद्भक्त्या दधीचश्च महेश्वरः ।।
शिवानुग्रहतोऽभूवंस्तथा रामो हि शांकरः ।।४३।।
कणादो भार्गवश्चैव गुरुर्गौतम एव च ।।
शिवभक्त्या बभूवुस्ते महाप्रभव ईश्वरा ।। ४४ ।।
शाकल्यश्शंसितात्मा च नववर्षशातान्यपि ।।
भवमाराधयामास मनोयज्ञेन माधव।।४५।।
तुतोष भगवानाह ग्रंथकर्ता भविष्यसि।।
वत्साक्षय्या च ते कीर्तिस्त्रैलोक्ये प्रभविष्यति।।४६।।
अक्षयं च कुलं तेऽस्तु महर्षिभिरलंकृतम् ।।
भविष्यसि ऋषिश्रेष्ठ सूत्रकर्ता ततस्ततः।।४७।।
इत्येवं शंकरात्प्राप वरं मुनिवरस्स वै ।।

त्रैलोक्ये विततश्चासीत्पूज्यश्च यदुनन्दन ।।४८।।
सावर्णिरिति विख्यात ऋषिरासीत्कृते युगे ।।
इह तेन तपस्तप्तं षष्टिवर्षशतानि च ।। ४९ ।।
तमाह भगवान्रुद्रस्साक्षात्तुष्टोस्मि तेऽनघ ।।
ग्रंथकृल्लोकविख्यातो भवितास्यजरामरः ।। 5.2.५० ।।
एवंविधो महादेवः पुण्यपूर्वतरैस्ततः ।।
समर्च्चितश्शुभान्कामान्प्रददाति यथेप्सितान् ।। ५१ ।।
एकेनैव मुखेनाहं वक्तुं भगवतो गुणाः ।।
ये संति तान्न शक्नोमि ह्यपि वर्षशतैरपि ।। ५२ ।।
इति श्रीशिवमहापुराणे पंचम्यामुमासंहितायां सनत्कुमारव्याससंवादे उपमन्यूपदेशो नाम द्वितीयोऽध्यायः ।। २ ।।

।। सनत्कुमार उवाच ।।
एतच्छ्रुत्वा वचस्तस्य सोब्रवीत्तं महामुनिम्।।
विस्मयं परमं गत्वोपमन्युं शांतमानसम् ।। १ ।।
वासुदेव उवाच ।।
धन्यस्त्वमसि विप्रेन्द्र कस्त्वां स्तोतुमलं कृती ।।
यस्य देवादिदेवस्ते सान्निध्यं कुरुते श्रमे ।। २ ।।
दर्शनं मुनिशार्दूल दद्यात्स भगवाञ्छिवः ।।
अपि तावन्ममाप्येवं प्रसादं वा करोत्वसौ । ३ ।।
उपमन्युरुवाच ।।
अचिरेणैव कालेन महादेवं न संशयः ।।
तस्यैव कृपया त्वं वै द्रक्ष्यसे पुरुषोत्तम ।। ४ ।।
षोडशे मासि सुवरान् प्राप्स्यसि त्वं महेश्वरात् ।।
सपत्नीकात्कथं नो दास्यते देवो वरान्हरे ।।५।।
पूज्योसि दैवतैस्सर्वैः श्लाघनीयस्सदा गुणैः ।।
जाप्यं तेऽहं प्रवक्ष्यामि श्रद्दधानाय चाच्युत ।। ६ ।।
तेन जपप्रभावेण सत्यं द्रक्ष्यसि शंकरम् ।।
आत्मतुल्यबलं पुत्रं लभिष्यसि महेश्वरात् ।। ७ ।।
जपो नमश्शिवायेति मंत्रराजमिमं हरे ।।
सर्वकामप्रदं दिव्यं भुक्तिमुक्तिप्रदायकम् ।। ८ ।।
।। सनत्कुमार उवाच ।।
एवं कथयतस्तस्य महादेवाश्रिताः कथाः ।।
दिनान्यष्टौ प्रयातानि मुहूर्तमिव तापस ।।९।।
नवमे तु दिने प्राप्ते मुनिना स च दीक्षितः ।।
मंत्रमध्यापितं शार्वमाथर्वशिरसं महत् ।। 5.3.१० ।।
जटी मुण्डी च सद्योऽसौ बभूव सुसमाहितः ।।
पादांगुष्ठोद्धृततनुस्तेपे चोर्द्ध्वभुजस्तथा ।। ११ ।।
संप्राप्ते षोडशे मासि संतुष्टः परमेश्वरः ।।
पार्वत्या सहितश्शंभुर्ददौ कृष्णाय दर्शनम् ।। १२ ।।
पार्वत्या सहितं देवं त्रिनेत्रं चन्द्रशेखरम् ।।
ब्रह्माद्यैस्स्तूयमानं तु पूजितं सिद्धकोटिभिः ।। १३ ।।
दिव्यमाल्याम्बरधरं भक्तिनम्रैस्सुरासुरैः ।।
प्रणतं च विशेषेण नानाभूषणभूषितम् ।। १४ ।।
सर्वाश्चर्यमयं कांतं महेशमजमव्ययम् ।।

नानागणान्वितं तुष्टं पुत्राभ्यां संयुतं प्रभुम् ।। १५ ।।
श्रीकृष्णः प्रांजलिर्दृष्ट्वा विस्मयोत्फुल्ललोचनः ।।
ईदृशं शंकरं प्रीतः प्रणनाम महोत्सवः ।। १६ ।।
नानाविधैः स्तुतिपदैर्वाङ्मयेनार्चयत्तदा ।।
सहस्रनाम्ना देवेशं तुष्टाव नतकंधरः ।। १७ ।।
ततो देवास्सगंधर्वा विद्याधरमहोरगाः ।।
मुमुचुः पुष्पवृष्टिं च साधुवादान्मनोनुगान् ।। १८ ।।
पार्वत्याश्च मुखं दृष्ट्वा भगवान्भक्तवत्सलः ।।
उवाच केशवं तुष्टो रुद्रश्चाथ बिडौजसा ।। १९ ।।
श्रीमहादेव उवाच ।।
कृष्णं जानामि भक्तं त्वां मयि नित्यं दृढव्रतम् ।।
वृणीष्व त्वं वरान्मत्तः पुण्यांस्त्रैलोक्यदुर्लभान् ।। 5.3.२० ।।
।। सनत्कुमार उवाच ।।
तस्य तद्वचनं श्रुत्वा कृष्णः प्रांजलिरादरात् ।।
प्राह सर्वेश्वरं शम्भुं सुप्रणम्य पुनः पुनः ।। २१ ।।
।। कृष्ण उवाच ।।
देवदेव महादेव याचेऽहं ह्युत्तमान्वरान् ।।
त्वत्तोऽष्टप्रमितान्नाथ त्वयोद्दिष्टान्महेश्वर ।। २२ ।।
तव धर्म्मे मतिर्नित्यं यशश्चाप्रचलं महत् ।।
त्वत्सामीप्यं स्थिरा भक्तिस्त्वयि नित्यं ममास्त्विति ।। २३ ।।
पुत्राणि च दशाद्यानां पुत्राणां मम संतु वै ।।
वध्याश्च रिपवस्सर्वे संग्रामे बलदर्पिताः ।। २४ ।।
अपमानो भवेन्नैव क्वचिन्मे शत्रुतः प्रभो ।।
योगिनामपि सर्वेषां भवेयमतिवल्लभः ।।२५।।
इत्यष्टौ सुवरान्देहि देवदेव नमोऽस्तु ते ।।
सर्वेश्वरस्त्वमेवासि मत्प्रभुश्च विशेषतः ।। २६ ।।
सनत्कुमार उवाच ।।
तस्य तद्वचनं श्रुत्वा तमाह भगवान्भवः ।।
सर्वं भविष्यतीत्येवं पुनस्स प्राह शूलधृक् ।। २७ ।।
साम्बो नाम महावीर्यः पुत्रस्ते भविता बली।।
घोरसंवर्तकादित्यश्शप्तो मुनिभिरेव च ।।२८।।
मानुषो भवितासीति स ते पुत्रो भवि ष्यति ।।
यद्यच्च प्रार्थितं किंचित्तत्सर्वं च लभस्व वै ।। २९ ।।

सनत्कुमार उवाच ।।
एवं लब्ध्वा वरान्सर्वाञ्छ्रीकृष्णः परमेश्वरात् ।।
नानाविधाभिर्बह्वीभिस्स्तुतिभिस्समतोषयत् ।।5.3.३०।।
तमाहाथ शिवा तुष्टा पार्वती भक्तवत्सला।।
वासुदेवं महात्मानं शंभुभक्तं तपस्विनम् ।। ३१ ।।
।। पार्वत्युवाच ।।
वासुदेव महाबुद्धे कृष्ण तुष्टास्मि तेऽनघ ।।
गृहाण मत्तश्च वरान्मनोज्ञान्भुवि दुर्लभान् ।।३२।।
सनत्कुमार उवाच ।।
इत्याकर्ण्य वचस्तस्याः पार्वत्यास्स यदूद्वहः ।।
उवाच सुप्रसन्नात्मा भक्तियुक्तेन चेतसा ।। ३३ ।।
श्रीकृष्ण उवाच ।।
देवि त्वं परितुष्टासि चेद्ददासि वरान्हि मे ।।
तपसाऽनेन सत्येन ब्राह्मणान्प्रति मास्मभूत् ।।३४।।
द्वेषः कदाचिद्भद्रं पूजयेयं द्विजान्सदा ।।
तुष्टौ च मातापितरौ भवेतां मम सर्वदा ।।३५।।
सर्वभूतेष्वानुकूल्यं भजेयं यत्र तत्रगः।।
कुले प्रभृति रुचिता ममास्तु तव दर्शनात् ।।३६।।
तर्पयेयं सुरेन्द्रादीन्देवान् यज्ञशतेन तु ।।
यतीनामतिथीनां च सहस्राण्यथ सर्वदा ।। ३७ ।। ।
भोजयेयं सदा गेहे श्रद्धापूतं तु भोजनम् ।।
बांधवैस्सह प्रीतिस्तु नित्यमस्तु सुनिर्वृतिः ।। ३८ ।।
देवि भार्य्यासहस्राणां भवेयं प्राणवल्लभः ।।
अक्षीणा काम्यता तासु प्रसादात्तव शांकरि ।। ३९ ।।
आसां च पितरो लोके भवेयुः सत्यावादिनः ।।
इत्याद्याः सुवरास्संतु प्रसादात्तव पार्वति ।। 5.3.४० ।।
।। सनत्कुमार उवाच ।।
तस्य तद्वचनं श्रुत्वा देवी तं चाह विस्मिता ।।
एवमस्त्विवति भद्रं ते शाश्वती सर्वकामदा ।। ४१ ।।
तस्मिंस्तांश्च वरान्दत्त्वा पार्वतीपरमेश्वरौ ।।
तत्रैवांतश्च दधतुः कृत्वा कृष्णस्य सत्कृपाम् ।। ४२ ।।
कृष्णः कृतार्थमात्मानममन्यत मुनीश्वरः ।।
उपमन्योर्मुनराशु प्रापाश्रममनुत्तमम् ।। ४३ ।।

प्रणम्य शिरसा तत्र तं मुनिं केशिहा ततः ।।
तया वृत्तं च तस्मै तत्समाचष्टोपमन्यवे ।।४४।।
स च तं प्राह कोऽन्यस्स्याच्छर्वाद्देवाज्जनार्द्दन ।।
महादानपतिर्लोके क्रोधे वाऽतीव दुस्सहः । ४५ ।।
ज्ञाने तपसि वा शौर्य्ये स्थैर्य्ये वा पद एव च ।।
शृणु शंभोस्तु गोविन्द देवैश्वर्य्यं महायशाः ।। ४६ ।।
तच्छ्रुत्वा श्रद्धया युक्तोऽभवच्छंभोस्तु भक्तिमान् ।।
पप्रच्छ शिवमाहात्म्यं स तं प्राह मुनीश्वरः ।। ४७ ।।
उपमन्युरुवाच ।।
भगवाञ्शंकरः पूर्वं ब्रह्मलोके महात्मना ।।
स्तुतो नामसहस्रेण दण्डिना ब्रह्मयोगिना ।। ४८ ।।
सांख्याः पठंति तद्गीतं विस्तीर्णं च निघंटवत्।।
दुर्ज्ञानं मानुषाणां तु स्तोत्रं तत्सर्वकामदम् ।।४९।।
स्मरन्नित्यं शंकरं त्वं गच्छ कृष्ण गृहं सुखी ।।
भविष्यसि सदा तात शिवभक्तगणाग्रणीः ।। 5.3.५० ।।
इत्युक्तस्तं नमस्कृत्य वासुदेवो मुनीश्वरम् ।।
मनसा संस्मरञ्शंभुं केशवो द्वारकां ययौ ।। ५१ ।।
सनत्कुमार उवाच ।।
एवं कृष्णस्समाराध्य शंकरं लोकशंकरम् ।।
कृतार्थोऽभून्मुनिश्रेष्ठ सर्वाजेयोऽभवत्तथा ।। ५२ ।।
तथा दाशरथी रामश्शिवमाराध्य भक्तितः ।।
कृतार्थोऽभून्मुनिश्रेष्ठ विजयी सर्वतोऽभवत् ।। ५३ ।।
तपस्तप्त्वाऽतिविपुलं पुरा रामो गिरौ मुने।।
शिवाद्धनुश्शरं चापं ज्ञानं वै परमुत्तमम् ।।५४।।
रावणं सगणं हत्वा सेतुं बद्ध्वांभसांनिधौ।।
सीतां प्राप्य गृहं यातो बुभुजे निखिलां महीम्।।५५।।
तथा च भार्गवो रामो ह्याराध्य तपसा विभुम्।।
निरीक्ष्य दुःखितश्शर्वात्पितरं क्षत्रियैर्हतम् ।।५६ ।।
तीक्ष्णं स परशुं लेभे निर्ददाह च तेन तान् ।।
त्रिस्सप्तकृत्वः क्षत्रांश्च प्रसन्नात्परमेश्वरात् ।।५७।।
अजेयश्चामरश्चैव सोऽद्यापि तपसांनिधिः ।।
लिंगार्चनरतो नित्यं दृश्यते सिद्धचारणैः ।। ५८ ।।
महेन्द्रपर्वते रामः स्थितस्तपसि तिष्ठति ।।

कल्पांते पुनरेवासावृषिस्थानमवाप्स्यति ।।५९।।
असितस्यानुजः पूर्वं पीडया कृतवांस्तपः ।।
मूलग्राहेण विश्वस्य देवलो नाम तापसः ।। 5.3.६० ।।
पुरन्दरेण शप्तस्तु तपस्वी यश्च सुस्थिरम् ।।
अधर्म्यं धर्ममल मल्लिंगमारध्य कामदम् ।। ६१ ।।
चाक्षुषस्य मनोः पुत्रो मृगोऽभूत्तु मरुस्थले ।।
वसिष्ठशापाद्गृत्समदो दण्डकारण्य एकलः ।।६२।।
हृदये संस्मन्भक्त्या प्रवणेन युतं शिवम् ।।
तस्मान्मृत्युमुखाकारो गणो मृगमुखोऽभवत् ।। ६३ ।।
अजरामरतां नीतस्तीर्त्वा शापं पुनश्च सः ।।
शंकरेण कृतः प्रीत्या नित्यं लम्बोदरानुगः ।। ६४ ।।
गार्ग्याय प्रददौ शर्वो मोक्षं च भुवि दुर्लभम् ।।
कामचारी महाक्षेत्रं कालज्ञानं महर्द्धिमत्।।६५।।
चतुष्पादं सरस्वत्याः पारंगत्वं च शाश्वतम् ।।
न तुल्यं च सहस्रं तु पुत्राणां प्रददौ शिवः ।।६६।।
वेदव्यासं तु योगीन्द्रं पुत्रं तुष्टः पिनाक धृक् ।।
पराशराय च ददौ जरामृत्युविवर्जितम् ।।६७।।
मांडव्यश्शंकरणैव जीवं दत्त्वा विसर्जितः।।
वर्षाणां दश लक्षाणि शूलाग्रा दवरोपितः ।। ६८ ।।
दरिद्रो ब्राह्मणः कश्चिन्निक्षिप्य गुरुवेश्मनि ।।
पुत्रं तु गालवं यश्च पूर्वमासीद्गृहाश्रमी ।। ६९ ।।
गुप्तो वा मुनिशालायां भिक्षुरायाति तद्गृहम् ।।
भार्य्यामुवाच यः कश्चिदवश्यं निर्धनो यतः।।5.3.७०।।
स तु वाच्यो भवत्या च न दृश्यंत इति प्रियः ।।
अतिथेरागतस्यापि किं दास्यामि गृहे वसन् ।। ७१ ।।
कदाचिदतिथिः कश्चित्क्षुत्तृषाक्षामतर्षितः ।।
तामुवाच स भर्ता ते क्व गतश्चेति तं च सा ।। ७२ ।।
प्राह भर्ता मदीयस्तु सांप्रतं न च दृश्यते ।।
स ऋषिस्तामुवाचेदं ज्ञात्वा दिव्येन चक्षुषा ।। ७३ ।।
गृहस्थितः प्रतिच्छन्नस्तत्रैव स मृतो द्विजः ।।
विश्वामित्रस्यनुज्ञातस्तत्पुत्रो गालवस्तथा ।। ७४ ।।
गृहमागत्य मातुस्स श्रुत्वा शापं सुदारुणम् ।।
आराध्य शंकरं देवं पूजां कृत्वा तु शांभवीम् ।। ७५ ।।

गृहादसौ विनिष्क्रांतस्संस्मरञ्शंकरं हृदा।।
अथ तं तनयं दृष्ट्वा पिता तं प्राह साञ्जलिम् ।। ७६ ।।
महादेवप्रसादाच्च कृतकृत्योऽस्मि कृत्यतः ।।
धनवान्पुत्रवांश्चैव मृतोऽहं जीवितः पुनः ।। ७७ ।।
इति वः कथितमशेषं नाहं शक्तः समासतो व्यासात् ।।
वक्तुं शंभोश्च गुणाञ्शेषस्यापि न मुखानि स्युः ।।७८।।
इति श्रीशिवमहापुराणे पंचम्यामुमासंहितायां कृष्णादिशिवभक्तोद्धारण शिवमाहात्म्यवर्णनंनाम तृतीयोऽध्यायः ।। ३ ।।

मुनय ऊचुः ।।
ताततात महाभाग धन्यस्त्वं हि महामते ।।
अद्भुतेयं कथा शंभोः श्राविता परभक्तिदा ।।१।।
पुनर्ब्रूहि कथां शंभोर्व्यास प्रश्नानुसारतः ।।
सर्वज्ञस्त्वं व्यासशिष्यः शिवतत्त्वविचक्षणः ।। २ ।।
सूत उवाच ।।
एवमेव गुरुर्व्यासः पृष्टवान्मेऽजसंभवम् ।।
सनत्कुमारं सर्वज्ञं शिवभक्तं मुनीश्वरम् ।।३।।
व्यास उवाच ।।
सनत्कुमार सर्वज्ञ श्रावितेयं शुभा कथा ।।
शंकरस्य महेशस्य नानालीलाविहारिणः ।।४।।
पुनर्ब्रूहि महादेव महिमानं विशेषतः ।।
श्रद्धा च महती श्रोतुं मम तात प्रवर्द्धते ।।५।।
महिम्ना येन शंभोस्तु येये लोके विमोहिताः ।।
मायया ज्ञानमाहृत्य नानालीलाविहारिणः ।। ६ ।।
।। सनत्कुमार उवाच ।।
शृणु व्यास महाबुद्धे शांकरीं सुखदां कथाम् ।।
तस्याः श्रवणमात्रेण शिवे भक्तिः प्रजायते ।।७।।
शिवस्सर्वेश्वरो देवस्सर्वात्मा सर्वदर्शनः ।।
महिम्ना तस्य सर्वं हि व्याप्तं च सकलं जगत्।।८।।
शिवस्यैव परा मूर्तिर्ब्रह्मविष्णवीश्वरात्मिका ।।
सर्वभूतात्मभूताख्या त्रिलिंगा लिंगरूपिणी।।९।।
देवानां योनयश्चाष्टौ मानुषी नवमी च या।।
तिरश्चां योनयः पंच भवंत्येवं चतुर्द्दश।।5.4.१०।।
भूता वा वर्तमाना वा भविष्याश्चैव सर्वश।।
शिवात्सर्वे प्रवर्तंते लीयंते वृद्धिमागताः।। ११।।
ब्रह्मेन्द्रोपेन्द्रचन्द्राणां देवदानवभोगिनाम्।।
गंधर्वाणां मनुष्याणामन्येषां वापि सर्वशः।।१२।।
बंधुर्मित्रमथाचार्य्यो रक्षन्नेताऽर्थवान्गुरुः।।
कल्पद्रुमोऽथ वा भ्राता पिता माता शिवो मतः।।१३।।
शिवस्सर्वमयः पुंसां स्वयं वेद्यः परात्परः।।
वक्तुं न शक्यते यश्च परं चानु परं च यत्।।१४।।
तन्माया परमा दिव्या सर्वत्र व्यापिनी मुने।।

तदधीनं जगत्सर्वं सदेवासुरमानुषम्।।१५।।
कामेन स्वसहायेन प्रबलेन मनोभुवा।।
सर्वः प्रधर्षितो वीरो विष्ण्वादिः प्रबलोऽपि हि ।।१६ ।।
शिवमायाप्रभावेणाभूद्धरिः काममोहितः ।।
परस्त्रीधर्षणं चक्रे बहुवारं मुनीश्वर ।।१७।।
इन्द्रस्त्रिदशपो भूत्वा गौतमस्त्रीविमोहितः ।।
पापं चकार दुष्टात्मा शापं प्राप मुनेस्तदा ।। १८ ।।
पावकोऽपि जगच्छ्रेष्ठो मोहितश्शिवमायया ।।
कामाधीनः कृतो गर्वात्ततस्तेनैव चोद्धृतः ।। १९ ।।
जगत्प्राणोऽपि गर्वेण मोहितश्शिवमायया ।।
कामेन निर्जितो व्यासश्चक्रेऽन्यस्त्रीरतिं पुरा ।। 5.4.२० ।।
चण्डरश्मिस्तु मार्तण्डो मोहितश्शिवमायया ।।
कामाकुलो बभूवाशु दृष्ट्वाश्वीं हयरूपधृक् ।।२१।।
चन्द्रश्च मोहितश्शम्भोर्मायया कामसंकुलः ।।
गुरुपत्नीं जहाराथ युतस्तेनैव चोद्धृतः ।। २२ ।।
पूर्वं तु मित्रावरुणौ घोरे तपसि संस्थितौ ।।
मोहितौ तावपि मुनी शिवमायाविमोहितौ ।। २३ ।।
उर्वशीं तरुणीं दृष्ट्वा कामुको संबभूवतुः ।
मित्रः कुम्भे जहौ रेतो वरुणोऽपि तथा जले ।। २४ ।।
ततः कुम्भात्समुत्पन्नो वसिष्ठो मित्रसंभवः ।।
अगस्त्यो वरुणाज्जातो वडवाग्निसमद्युतिः ।।२५।।
दक्षश्च मोहितश्शंभोर्मायया ब्रह्मणस्सुतः ।।
भ्रातृभिस्स भगिन्यां वै भोक्तुकामोऽभवत्पुरा ।। २६ ।।
ब्रह्मा च बहुवारं हि मोहितश्शिवमायया ।।
अभवद्भोक्तुकामश्च स्वसुतायां परासु च ।। २७ ।।
च्यवनोऽपि महायोगी मोहितश्शिवमायया ।।
सुकन्यया विजह्रे स कामासक्तो बभूव ह ।।२८।।
कश्यपः शिवमायातो मोहितः कामसंकुलः ।।
ययाचे कन्यकां मोहाद्धन्वनो नृपतेः पुरा ।। २९ ।।
गरुडः शांडिलीं कन्यां नेतुकामस्सुमोहितः ।।
विज्ञातस्तु तया सद्यो दग्धपक्षो बभूव ह ।।5.4.३०।।
विभांडको मुनिर्नारीं दृष्ट्वा कामवशं गतः।।
ऋष्यशृङ्गः सुतस्तस्य मृग्यां जातश्शिवाज्ञया।।३१।।

गौतमश्च मुनिश्शंभोर्मायामोहितमानसः।।
दृष्ट्वा शारद्वतीं नग्नां रराम क्षुभितस्तया ।। ३२ ।।
रेतः स्कन्नं दधार स्वं द्रोण्यां चैव स तापसः ।।
तस्माच्च कलशाज्जातो द्रोणश्शस्त्रभृतां वरः।।३३।।
पराशरो महायोगी मोहितश्शिवमायया ।।
मत्स्योदर्या च चिक्रीडे कुमार्या दाशकन्यया ।। ३४ ।।
विश्वमित्रो बभूवाथ मोहितश्शिवमायया ।।
रेमे मेनकया व्यास वने कामवशं गतः ।।३५।।
वसिष्ठेन विरोधं तु कृतवान्नष्टचेतनः ।।
पुनः शिवप्रासादाच्च ब्राह्मणोऽभूत्स एव वै ।। ३६ ।।
रावणो वैश्रवाः कामी बभूव शिवमायया ।।
सीतां जह्रे कुबुद्धिस्तु मोहितो मृत्युमाप च ।।३७।।
बृहस्पतिर्मुनिवरो मोहितश्शिवमायया ।।
भ्रातृपत्न्या वशी रेमे भरद्वाजस्ततोऽभवत् ।।३८।।
इति मायाप्रभावो हि शंकरस्य महात्मनः ।।
वर्णितस्ते मया व्यास किमन्यच्छ्रोतुमिच्छसि ।।३९।।
इति श्रीशिवमहापुराणे पंचम्यामुमासंहितायां शिवमायाप्रभाववर्णनं नाम चतुर्थो ऽध्यायः ।।४।।

व्यास उवाच ।।
ये पापनिरता जीवा महानरकहेतवः ।।
भगवंस्तान्समाचक्ष्व ब्रह्मपुत्र नमोऽस्तु ते ।।१।।
सनत्कुमार उवाच ।।
ये पापनिरता जीवा महानरकहेतवः ।।
ते समासेन कथ्यंते सावधानतया शृणु ।।२।।
परस्त्रीद्रव्यसंकल्पश्चेतसाऽनिष्टचिंतनम् ।।
अकार्याभिनिवेशश्च चतुर्द्धा कर्म मानसम् ।। ३ ।। तु. महाभारतम् अनुशासन १३.२
अविबद्धप्रलापत्वमसत्यं चाप्रियं च यत् ।।
परोक्षतश्च पैशुन्यं चतुर्द्धा कर्म वाचिकम् ।। ४ ।।
अभक्ष्यभक्षणं हिंसा मिथ्याकार्य्य निवेशनम् ।।
परस्वानामुपादानं चतुर्द्धा कर्म कायिकम् ।। ५ ।।
इत्येतद्वा दशविधं कर्म प्रोक्तं त्रिसाधनम् ।।
अस्य भेदान्पुनर्वक्ष्ये येषां फलमनंतकम् ।। ६ ।।
ये द्विषंति महादेवं संसारार्णवतारकम् ।।
सुमहत्पातकं तेषां निरयार्णवगामिनाम् ।। ७ ।।
ये शिवज्ञानवक्तारं निन्दंति च तपस्विनम् ।।
गुरून्पितॄनथोन्मत्तास्ते यांति निरयार्णवम् ।।८।।
शिवनिन्दा गुरोर्निन्दा शिवज्ञानस्य दूषणम् ।।
देवद्रव्यापहरणं द्विजद्रव्यविनाशनम् ।। ९ ।।
हरंति ये च संमूढाश्शिवज्ञानस्य पुस्तकम् ।।
महांति पातकान्याहुरनन्तफलदानि षट् ।।5.5.१०।।
नाभिनन्दंति ये दृष्ट्वा शिवपूजां प्रकल्पिताम् ।।
न नमंत्यर्चितं दृष्ट्वा शिवलिंगं स्तुवंति न ।। ११ ।।
यथेष्टचेष्टा निश्शंकास्संतिष्ठंते रमंति च ।।
उपचारविनिर्मुक्ताश्शिवाग्रे गुरुसन्निधौ ।।१२।।
स्थानसंस्कारपूजां च ये न कुर्वंति पर्वसु ।।
विधिवद्वा गुरूणां च कर्म्मयोगव्यवस्थिताः ।। १३ ।।
ये त्यजंति शिवाचारं शिवभक्तान्द्विषंति च ।।
असंपूज्य शिवज्ञानं येऽधीयंते लिखंति च ।। १४ ।।
अन्यायतः प्रयच्छंति शृण्वन्त्युच्चारयंति च ।।
विक्रीडंति च लोभेन कुज्ञाननियमेन च ।। १५ ।।
असंस्कृतप्रदेशेषु यथेष्टं स्वापयंति च ।।

शिवज्ञानकथाऽऽक्षेपं यः कृत्वान्यत्प्रभाषते ।। १६ ।।
न ब्रवीति च यः सत्यं न प्रदानं करोति च ।।
अशुचिर्वाऽशुचिस्थाने यः प्रवक्ति शृणोति च ।। १७ ।।
गुरुपूजामकृत्वैव यश्शास्त्रं श्रोतुमिच्छति ।।
न करोति च शुश्रूषामाज्ञां च भक्तिभावतः ।। १८ ।।
नाभिनन्दंति तद्वाक्यमुत्तरं च प्रयच्छति ।।
गुरुकर्मण्यसाध्यं यत्तदुपेक्षां करोति च ।। १९ ।।
गुरुमार्त्तमशक्तं च विदेशं प्रस्थितं तथा ।।
वैरिभिः परिभूतं वा यस्संत्यजति पापकृत् ।। 5.5.२० ।।
तद्भार्य्यापुत्रमित्रेषु यश्चावज्ञां करोति च ।।
एवं सुवाचकस्यापि गुरोर्धर्मानुदर्शिनः ।। २१ ।।
एतानि खलु सर्वाणि कर्माणि मुनिसत्तम ।।
सुमहत्पातकान्याहुश्शिवनिन्दासमानि च ।। २२ ।।
ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः ।।
महापातकिनस्त्वेते तत्संयोगी च पंचमः ।।२३।।
क्रोधाल्लोभाद्भयाद्द्वेषाद्ब्राह्मणस्य वधे तु यः ।।
मर्मांतिकं महादोषमुक्त्वा स ब्रह्महा भवेत् ।।२४।।
ब्राह्मणं यः समाहूय दत्त्वा यश्चाददाति च ।।
निर्द्दोषं दूषयेद्यस्तु स नरो ब्रह्महा भवेत् ।। २५ ।।
यश्च विद्याभिमानेन निस्तेजयति सुद्विजम् ।।
उदासीनं सभामध्ये ब्रह्महा स प्रकीर्तितः ।। २६ ।।
मिथ्यागुणैर्य आत्मानं नयत्युत्कर्षतां बलात् ।।
गुणानपि निरुद्वास्य स च वै ब्रह्महा भवेत् ।।२७।।
गवां वृषाभिभूतानां द्विजानां गुरुपूर्वकम् ।।
यस्समाचरते विप्र तमाहुर्ब्रह्मघातकम् ।।२८।।
देवद्विजगवां भूमिं प्रदत्तां हरते तु यः ।।
प्रनष्टामपि कालेन तमाहुर्ब्रह्मघातकम् ।। ।। २९ ।।
देवद्विजस्वहरणमन्यायेनार्जितं तु यत् ।।
ब्रह्महत्यासमं ज्ञेयं पातकं नात्र संशयः ।। 5.5.३० ।।
अधीत्य यो द्विजो वेदं ब्रह्मज्ञानं शिवात्मकम् ।।
यदि त्यजति यो मूढः सुरापानस्य तत्समम् ।। ३१ ।।
यत्किंचिद्धि व्रतं गृह्य नियमं यजनं तथा ।।
संत्यागः पञ्चयज्ञानां सुरापानस्य तत्समम् ।।३२।।

पितृमातृपरित्यागः कूटसाक्ष्यं द्विजानृतम् ।।
आमिषं शिवभक्तानामभक्ष्यस्य च भक्षणम् ।।३३।।
वने निरपराधानां प्राणिनां चापघातनम् ।।
द्विजार्थं प्रक्षिपेत्साधुर्न धर्मार्थं नियोजयेत् ।। ३४ ।।
गवां मार्गे वने ग्रामे यैश्चैवाग्निः प्रदीयते ।।
इति पापानि घोराणि ब्रह्महत्यासमानि च ।। ३५ ।।
दीनसर्वस्वहरणं नरस्त्रीगजवाजिनाम् ।।
गोभूरजतवस्त्राणामौषधीनां रसस्य च ।।३६।।
चन्दनागरुकर्पूरकस्तूरीपट्टवाससाम्।।
विक्रयस्त्वविपत्तौ यः कृतो ज्ञानाद् द्विजातिभिः ।। ३७ ।।
हस्तन्यासापहरणं रुक्मस्तेयसमं स्मृतम् ।।
कन्यानां वरयोग्यानामदानं सदृशे वरे ।।३८।।
पुत्रमित्रकलत्रेषु गमनं भगिनीषु च ।।
कुमारीसाहसं घोरमद्यपस्त्रीनिषेवणम् ।। ३९ ।।
सवर्णायाश्च गमनं गुरुभार्य्यासमं स्मृतम् ।।
महापापानि चोक्तानि शृणु त्वमुपपातकम् ।।5.5.४०।।
इति श्रीशिवमहापुराणे पंचम्यामुमासंहितायां महापातकवर्णनं नाम पंचमोऽध्यायः ।।५।।

सनत्कुमार उवाच ।।
द्विजद्रव्यापहरणमपि दायव्यतिक्रमः ।।
अतिमानोऽतिकोपश्च दांभिकत्वं कृतघ्नता।।१।।'
अत्यंतविषयासक्तिः कार्पण्यं साधुमत्सरः ।।
परदाराभिगमनं साधुकन्यासुदूषणम् ।। २ ।।
परिवित्तिः परिवेत्ता च यया च परिविद्यते ।।
तयोर्दानं च कन्यायास्तयोरेव च याजनम् ।। ३ ।।
शिवाश्रमतरूणां च पुष्पारामविनाशनम् ।।
यः पीडामाश्रमस्थानामाचरेदल्पिकामपि ।। ४ ।।
सभृत्यपरिवारस्य पशुधान्यधनस्य च ।।
कुप्यधान्यपशुस्तेयमपां व्यापावनं तथा ।। ५ ।।
यज्ञारामतडागानां दारापत्यस्य विक्रयम् ।।
तीर्थयात्रोपवासानां व्रतोपनयकर्म्मिणाम् ।। ६ ।।
स्त्रीधनान्युपजीवंति स्त्रीभिरप्यन्तनिर्जिताः ।।
अरक्षणं च नारीणां मायया स्त्रीनिषेवणम् ।। ७ ।।
कालागताप्रदानं च धान्यवृद्ध्युपसेवनम् ।।
निंदिताच्च धनादानं पण्यानां कूट जीवनम् ।। ८ ।।
विषमारण्यपत्राणां सततं वृषवाहनम् ।।
उच्चाटनाभिचारं च धान्यादानं भिषक्क्रिया ।।९।।
जिह्वाकामोपभोगार्थं यस्यारंभः सुकर्मसु ।।
मूलेनख्यापको नित्यं वेदज्ञानादिकं च यत् ।।5.6.१०।।
ब्राह्म्यादिव्रतसंत्यागश्चान्याचारनिषेवणम् ।।
असच्छास्त्राधिगमनं शुष्कतर्कावलम्बनम् ।। ११ ।।
देवाग्निगुरुसाधूनां निन्दया ब्राह्मणस्य च ।।
प्रत्यक्षं वा परोक्षं वा राज्ञां मण्डलिनामपि ।। १२ ।।
उत्सन्नपितृदेवेज्या स्वकर्म्मत्यागिनश्च ये ।।
दुःशीला नास्तिकाः पापास्सदा वाऽसत्यवादिनः ।। १३ ।।
पर्वकाले दिवा वाप्सु वियोनौ पशुयोनिषु ।।
रजस्वलाया योनौ च मैथुनं यः समाचरेत् ।।१४।।
स्त्रीपुत्रमित्रसंप्राप्तावाशाच्छेदकराश्च ये ।।
जनस्याप्रिय वक्तारः क्रूरा समयवेदिनः ।। १५ ।।
भेत्ता तडागकूपानां संक्रयाणां रसस्य च ।।
एकपंक्तिस्थितानां च पाकभेदं करोति यः ।। १६ ।।।

इत्येतैः स्त्रीनराः पापैरुपपातकिनः स्मृताः ।।
युक्ता एभिस्तथान्येऽपि शृणु तांस्तु ब्रवीमि ते ।।१७।।
ये गोब्राह्मणकन्यानां स्वामिमित्रतपस्विनाम् ।।
विनाशयंति कार्य्याणि ते नरा नारकाः स्मृताः ।। १८ ।।
परस्त्रियाभितप्यंते ये परद्रव्यसूचकाः ।।
परद्रव्यहरा नित्यं तौलमिथ्यानुसारकाः ।।१९।।
द्विजदुःखकरा ये च प्रहारं चोद्धरंति ये ।।
सेवन्ते तु द्विजाश्शूद्रां सुरां बध्नंति कामतः ।।5.6.२०।।
ये पापनिरताः क्रूराः येऽपि हिंसाप्रिया नराः।।
वृत्त्यर्थं येऽपि कुर्वंति दानयज्ञादिकाः क्रियाः।।२१।।
गोष्ठाग्निजलरथ्यासु तरुच्छाया नगेषु च।।
त्यजंति ये पुरीषाद्यानारामायतनेषु च।।२२।
लज्जाश्रमप्रासादेषु मयपानरताश्च ये।।
कृतकेलिभुजंगाश्च रन्ध्रान्वेषणतत्पराः।।२३।।
वंशेष्टका शिलाकाष्ठैः शृङ्गैश्शंकुभिरेव च।।
ये मार्गमनुरुंधंति परसीमां हरंति ये।।२४।।
कूटशासनकर्तारः कूटकर्मक्रियारताः।।
कूटपाकान्नवस्त्राणां कूटसंव्यवहारिणः।।२५।।
धनुषः शस्त्रशल्यानां कर्ता यः क्रयविक्रयी।।
निर्द्दयोऽतीवभृत्येषु पशूनां दमनश्च यः।।२६।।
मिथ्या प्रवदतो वाच आकर्णयति यश्शनैः।।
स्वामिमित्रगुरुद्रोही मायावी चपलश्शठः।।२७।।
ये भार्य्यापुत्रमित्राणि बालवृद्धकृशातुरान्।।
भृत्यानतिथिबंधूंश्च त्यक्त्वाश्नंति बुभुक्षितान् ।।२८।।
यः स्वयं मिष्टमश्नाति विप्रेभ्यो न प्रयच्छति ।।
वृथापाकस्स विज्ञेयो ब्रह्मवादिषु गर्हितः ।। २९ ।।
नियमान्स्वयमादाय ये त्यजंत्यजितेन्द्रियाः ।।
प्रव्रज्यावासिता ये च हरस्यास्यप्रभेदकाः ।। 5.6.३० ।।
ये ताडयंति गां क्रूरा दमयंते मुहुर्मुहुः ।।
दुर्बलान्ये न पुष्णंति सततं ये त्यजंति च ।। ३१ ।।
पीडयंत्यतिभारेणाऽसहंतं वाहयंति च ।।
योजयन्नकृताहारान्न विमुंचंति संयतान् ।। ३२ ।।
ये भारक्षतरोगार्तान्गोवृषांश्च क्षुधातुरान् ।।

न पालयंति यत्नेन गोघ्नास्ते नारकास्स्मृताः ।। ३३ ।।
वृषाणां वृषणान्ये च पापिष्ठा गालयंति च ।।
वाहयंति च गां वंध्यां महानारकिनो नराः ।। ३४ ।।
आशया समनुप्राप्तान्क्षुत्तृष्णाश्रमकर्शितान् ।।
अतिथींश्च तथानाथान्स्वतन्त्रा गृहमागतान् ।। ३५ ।।
अन्नाभिलाषान्दीनान्वा बालवृद्धकृशातुरान् ।।
नानुकंपंति ये मूढास्ते यांति नरकार्णवम् ।। ३६ ।।
गृहेष्वर्था निवर्तन्ते स्मशानादपि बांधवाः ।।
सुकृतं दुष्कृतं चैव गच्छंतमनुगच्छति ।। ३७ ।।
अजाविको माहिषिकस्सामुद्रो वृषलीपतिः ।।
शूद्रवत्क्षत्रवृत्तिश्च नारकी स्याद् द्विजाधमः ।। ३८ ।।
शिल्पिनः कारवो वैद्या हेमकारा नृपध्वजाः ।।
भृतका कूटसंयुक्ताः सर्वे ते नारकाः स्मृताः ।। ३९ ।।
यश्चोचितमतिक्रम्य स्वेच्छयै वाहरेत्करम् ।।
नरके पच्यते सोऽपि योपि दण्डरुचिर्नरः ।। 5.6.४० ।।
उत्कोचकै रुचिक्रीतैस्तस्करैश्च प्रपीड्यते ।।
यस्य राज्ञः प्रजा राष्ट्रे पच्यते नरकेषु सः ।। ४१ ।।
ये द्विजाः परिगृह्णंति नृपस्यान्यायवर्तिनः ।।
ते प्रयांति तु घोरेषु नरकेषु न संशयः ।।४२।।
अन्यायात्समुपादाय द्विजेभ्यो यः प्रयच्छति ।।
प्रजाभ्यः पच्यते सोऽपि नरकेषु नृपो यथा ।।४३।।
पारदारिकचौराणां चंडानां विद्यते त्वघम् ।।
परदाररतस्यापि राज्ञो भवति नित्यशः ।। ४४ ।।
अचौरं चौरवत्पश्येच्चौरं वाचौररूपिणम् ।।
अविचार्य नृपस्तस्माद्घातयन्नरकं व्रजेत् ।। ४५ ।।
घृततैलान्नपानानि मधुमांससुरासवम् ।।
गुडेक्षुशाकदुग्धानि दधिमूलफलानि च ।। ४६ ।।
तृणं काष्ठं पत्रपुष्पमौषधं चात्मभोजनम् ।।
उपानत्छत्रशकटमासनं च कमंडलुम् ।। ४७ ।।
ताम्रसीसत्रपुः शस्त्रं शंखाद्यं च जलोद्भवम्।।
वैद्यं च वैणवं चान्यद्गृहोपस्करणानि च ।।४८।।
और्ण्णकार्पासकौशेयपट्टसूत्रोद्भवानि च ।।
स्थूलसूक्ष्माणि वस्त्राणि ये लोभाद्धि हरंति च ।। ४९ ।।

एवमादीनि चान्यानि द्रव्याणि विविधानि च ।।
नरकेषु ध्रुवं यान्ति चापहृत्याल्पकानि च ।। 5.6.५० ।।
तद्वा यद्वा परद्रव्यमपि सर्षपमात्रकम् ।।
अपहृत्य नरा यांति नरकं नात्र संशयः ।।५१।।
एवमाद्यैर्नरः पापैरुत्क्रांतिसमनंतरम्।।
शरीरयातनार्थाय सर्वाकारमवाप्नुयात् ।। ५२ ।।
यमलोकं व्रजंत्येते शरीरेण यमाज्ञया ।।
यमदूतैर्महाघोरैर्नीयमानास्सुदुःखिताः ।। ५३ ।।
देवतिर्यङ्मनुष्याणामधर्मनिरतात्मनाम् ।।
धर्मराजः स्मृतश्शास्ता सुघोरैर्विविधैर्वधैः ।।५४।।
नियमाचारयुक्तानां प्रमादात्स्खलितात्मनाम् ।।
प्रायश्चित्तैर्गुरुश्शास्ता न बुधैरिष्यते यमः ।। ५५ ।।
पारदारिकचौराणामन्यायव्यवहारिणाम् ।।
नृपतिश्शासकः प्रोक्तः प्रच्छन्नानां स धर्म्मराट् ।। ५६ ।।
तस्मात्कृतस्य पापस्य प्रायश्चित्तं समाचरेत् ।।
नाभुक्तस्यान्यथानाशः कल्पकोटिशतैरपि ।।५७।।
यः करोति स्वयं कर्म्म कारयेच्चानुमोदयेत् ।।
कायेन मनसा वाचा तस्य पापगतिः फलम् ।।५८।।
इति श्रीशिवमहापुराणे पञ्चम्या मुमासंहितायां पापभेदवर्णनं नाम षष्ठोऽध्यायः ।। ६ ।।

सनत्कुमार उवाच ।।
अथ पापैर्नरा यांति यमलोकं चतुर्विधैः ।।
संत्रासजननं घोरं विवशास्सर्वदेहिनः ।।१।।
गर्भस्थैर्जायमानैश्च बालैस्तरुणमध्यमैः ।।
स्त्रीपुन्नपुंसकैर्जीवैर्ज्ञातव्यं सर्वजंतुषु।।२।।
शुभाशुभफलं चात्र देहिनां संविचार्यते ।।
चित्रगुप्तादिभिस्सर्वैर्वसिष्ठप्रमुखैस्तथा ।। ३ ।।
न केचित्प्राणिनस्संति ये न यांति यमक्षयम् ।।
अवश्यं हि कृतं कर्म भोक्तव्यं तद्विचार्य्यताम् ।। ४ ।।
तत्र ये शुभकर्माणस्सौम्यचित्ता दयान्विताः ।।
ते नरा यांति सौम्येन पूर्वं यमनिकेतनम् ।।५।।
ये पुनः पापकर्म्माणः पापा दानविवर्जिताः ।।
ते घोरेण पथा यांति दक्षिणेन यमालयम् ।।६।।
षडशीतिसहस्राणि योजनानामतीत्य तत् ।।
वैवस्वतपुरं ज्ञेयं नानारूपमवस्थितम् ।। ७ ।।
समीपस्थमिवाभाति नराणां पुण्यकर्मणाम्।।
पापिनामतिदूरस्थं पथा रौद्रेण गच्छताम् ।।८।।
तीक्ष्णकंटकयुक्तेन शर्कराविचितेन च ।।
क्षुरधारानिभैस्तीक्ष्णैः पाषाणै रचितेन च।।९।।
क्वचित्पंकेन महता उरुतोकैश्च पातकैः ।।
लोहसूचीनिभैर्दर्भैस्सम्पन्नेन पथा क्वचित्।।5.7.१०।।
तटप्रायातिविषमैः पर्वतैर्वृक्षसंकुलैः ।।
प्रतप्तांगारयुक्तेन यांति मार्गेण दुःखिताः ।।११।।
क्वचिद्विषमगर्तैश्च क्वचिल्लोष्टैस्सुदुष्करैः ।।
सुतप्तवालुकाभिश्च तथा तीक्ष्णैश्च शंकुभिः।।१२।।
अनेक शाखाविततैर्व्याप्तं वंशवनैः क्वचित्।।
कष्टेन तमसा मार्गे नानालम्बेन कुत्रचित्।।१३।।
अयश्शृंगाटकैस्तीक्ष्णैः क्वचिद्दावाग्निना पुनः ।।
क्वचित्तप्तशिलाभिश्च क्वचिद्व्याप्तं हिमेन च ।।१४।।
क्वचिद्वालुकया व्याप्तमाकंठांतः प्रवेशया ।।
क्वचिद्दुष्टाम्बुना व्याप्तं क्वचिच्च करिषाग्निना ।। १५ ।। क्वचित्सिंहैर्वृकैर्व्याघ्रैर्मशकैश्च सुदारुणैः ।।
क्वचिन्महाजलौकाभिः क्वचिच्चाजगरैस्तथा।।१६।।
मक्षिकाभिश्च रौद्राभिः क्वचित्सर्पैर्विषोल्बणैः ।।

मत्तमातंगयूथैश्च बलोन्मत्तैः प्रमाथिभिः ।। १७ ।।
पंथानमुल्लिखद्भिश्च सूकरैस्तीक्ष्णदंष्ट्रिभिः।।
तीक्ष्णशृंगैश्च महिषैस्सर्वभूतैश्च श्वापदैः ।। १८ ।।
डाकिनीभिश्च रौद्राभिर्विकरालैश्च राक्षसैः ।।
व्याधिभिश्च महाघोरैः पीड्यमाना व्रजंति हि ।।१९।।
महाधूलिविमिश्रेण महाचण्डेन वायुना ।।
महापाषाणवर्षेण हन्यमाना निराश्रयाः ।। 5.7.२० ।।
क्वचिद्विद्युत्प्रपातेन दह्यमाना व्रजन्ति च ।।
महता बाणवर्षेण विध्यमानाश्च सर्वतः ।। २१ ।।
पतद्भिर्वज्रपातैश्च उल्कापातैश्च दारुणैः ।।
प्रदीप्तांगारवर्षेण दह्यमानाश्च संति हि ।।२२।।
महता पांसुवर्षेण पूर्यमाणा रुदंति च।।
महामेघरवैर्घोरैस्त्रस्यंते च मुहुर्मुहुः।।२३।।
निशितायुधवर्षेण भिद्यमानाश्च सर्वतः ।।
महाक्षाराम्बुधाराभिस्सिच्यमाना व्रजंति च ।। २४ ।।
महीशीतेन मरुता रूक्षेण परुषेण च ।।
समंताद्बाध्यमानाश्च शुष्यंते संकुचन्ति च ।। २५ ।।
इत्थं मार्गेण रौद्रेण पाथेयरहितेन च ।।
निरालम्बेन दुर्गेण निर्जलेन समंततः ।। २६ ।।
विषमेणैव महता निर्जनापाश्रयेण च ।।
तमोरूपेण कष्टेन सर्वदुष्टाश्रयेण च।।२७।।
नीयंते देहिनस्सर्वे ये मूढाः पापकर्मिणः ।।
यमदूतैर्महाघोरैस्तदाज्ञाकारिभिर्बलात् ।। २८ ।।
एकाकिनः पराधीना मित्रबन्धुविवर्जिताः ।।
शोचंतस्स्वानि कर्म्माणि रुदंतश्च मुहुर्मुहुः ।। २९ ।।
प्रेता भूत्वा विवस्त्राश्च शुष्ककंठौष्ठतालुकाः ।।
असौम्या भयभीताश्च दह्यमानाः क्षुधान्विताः ।।5.7.३०।।
बद्धाश्शृंखलया केचिदुत्ता नपादका नराः ।।
कृष्यंते कृष्यमाणाश्च यमदूतैर्बलोत्कटैः ।। ३१ ।।
उरसाधोमुखाश्चान्ये घृष्यमाणास्सुदुःखिताः ।।
केशपाशनि बंधेन संस्कृष्यंते च रज्जुना ।। ३२ ।।
ललाटे चांकुशेनान्ये भिन्ना दुष्यंति देहिनः ।।
उत्तानाः कंटकपथा क्वचिदंगारवर्त्मना ।। ३३ ।।

पश्चाद्बाहुनिबद्धाश्च जठरेण प्रपीडिताः ।।
पूरिताश्शृंखलाभिश्च हस्तयोश्च सुकीलिताः ।। ४४ ।।
ग्रीवापाशेन कृष्यंते प्रयांत्यन्ये सुदुःखिताः ।।
जिह्वांकुशप्रवेशेन रज्ज्वाकृष्यन्त एव ते ।। ३५ ।।
नासाभेदेन रज्ज्वा च त्वाकृश्यन्ते तथापरे ।।
भिन्नाः कपोलयो रज्ज्वाकृष्यंतेऽन्ये तथौष्ठयोः ।। ३६ ।।
छिन्नाग्रपादहस्ताश्च च्छिन्नकर्णोष्ठनासिकाः ।।
संछिन्नशिश्नवृषणाः छिन्नभिन्नांगसंधयः ।। ३७ ।।
आभिद्यमानाः कुंतैश्च भिद्यमानाश्च सायकैः ।।
इतश्चेतश्च धावंतः क्रंदमाना निराश्रयाः ।। ३८ ।।
मुद्गरैर्लोहदण्डैश्च हन्यमाना मुहुर्मुहुः ।।
कंटकैर्विविधैर्घोरैर्ज्वलनार्कसमप्रभैः ।।३९।।
भिन्दिपालैर्विभियंते स्रवतः पूयशोणितम् ।।
शकृता कृमिदिग्धाश्च नीयंते विवशा नराः ।। 5.7.४० ।।
याचमानाश्च सलिलमन्नं वापि बुभुक्षिताः ।।
छायां प्रार्थयमानाश्च शीतार्ताश्चानलं पुनः ।।४१।।
दानहीनाः प्रयांत्येवं प्रार्थयंतस्सुखं नराः ।।
गृहीतदान पाथेयास्सुखं यांति यमालयम् ।। ४२ ।।
एवं न्यायेन कष्टेन प्राप्ताः प्रेतपुरं यदा ।।
प्रज्ञापितास्ततो दूतैर्निवेश्यंते यमाग्रतः ।। ।। ४३ ।।
तत्र ये शुभकर्म्माणस्तांस्तु सम्मानयेद्यमः ।।
स्वागतासनदानेन पाद्यार्घ्येण प्रियेण च ।।४४।।
धन्या यूयं महात्मानो निगमोदितकारिणः ।।
यैश्च दिव्यसुखार्थाय भवद्भिस्सुकृतं कृतम् ।।४५।।
दिव्यं विमानमारुह्य दिव्यस्त्रीभोगभूषितम् ।।
स्वर्गं गच्छध्वममलं सर्वकामसमन्वितम्।।४६।।
तत्र भुक्त्वा महाभोगानंते पुण्यस्य संक्षयात् ।।
यत्किंचिदल्पमशुभं पुनस्तदिह भोक्ष्यथ।।४७।।
धर्म्मात्मानो नरा ये च मित्रभूत्वा इवात्मनः ।।
सौम्यं सुखं प्रपश्यंति धर्मराजत्वमेव च ।।४८।।
ये पुनः क्रूरकर्म्माणस्ते पश्यंति भयानकम् ।।
दंष्ट्राकरालवदनं भृकुटीकुटिलेक्षणम् ।।४९।।
ऊर्ध्वकेशं महाश्मश्रुमूर्ध्वप्रस्फुरिताधरम् ।।

अष्टादशभुजं क्रुद्धं नीलांजनचयोपमम्।।5.7.५०।।
सर्वायुधोद्धतकरं सर्वदण्डेन तर्जयन् ।।
महामहिषमारूढं दीप्ताग्निसमलोचनम्।।५१।।
रक्तमाल्यांबरधरं महामेरुमिवोच्छ्रितम्।।
प्रलयाम्बुदनिर्घोषं पिबन्निव महोदधिम् ।। ।।५२।।
ग्रसंतमिव शैलेन्द्रमुद्गिरंतमिवानलम् ।।
मृत्युश्चैव समीपस्थः कालानलसमप्रभुः ।।५३।।
कालश्चांजनसंकाशः कृतांतश्च भयानकः ।।
मारीचोग्रमहामारी कालरात्रिश्च दारुणा ।।५४।।
विविधा व्याधयः कुष्ठा नानारूपा भयावहाः ।।
शक्तिशूलांकुशधराः पाशचक्रासिपाणयः ।।५५।।
वजतुंडधरा रुद्रा क्षुरतूणधनुर्द्धराः।।
नानायुधधरास्सर्वे महावीरा भयंकराः।।५६।।
असंख्याता महावीराः कालाञ्जनसमप्रभाः ।।
सर्वायुधोद्यतकरा यमदूता भयानकाः ।। ५७ ।।
अनेन परिचारेण वृतं तं घोरदर्शनम् ।।
यमं पश्यंति पापिष्ठाश्चित्रगुप्तं च भीषणम् ।। ५८ ।।
निर्भर्त्सयति चात्यंतं यमस्तान्पापकर्म्मणः ।।
चित्रगुप्तश्च भगवान्धर्म्मवाक्यैः प्रबोधयेत् ।। ५९ ।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां नरकलोकमार्गयमदूतस्वरूपवर्णनं नाम सप्तमोऽध्यायः ।। ७ ।।

चित्रगुप्त उवाच ।।
भो भो दुष्कृतकर्म्मणः पर द्रव्यापहारकाः ।।
गर्विता रूपवीर्येण परदारावमर्द्दकाः ।।१।।
यस्त्वयं क्रियते कर्म तदिदं भुज्यते पुनः ।।
तत्किमात्मोपघातार्थं भवद्भिर्दुष्कृतं कृतम् ।। २ ।।
इदानीं किं प्रलप्यध्वे पीड्यमानास्स्वकर्मभिः ।।
भुज्यंतां स्वानि कर्म्माणि नास्ति दोषो हि कस्यचित् ।। ३ ।।
सनत्कुमार उवाच ।।
एवं ते पृथिवीपालास्संप्राप्तास्तत्समीपतः ।।
स्वकीयैः कर्म्मभिर्घोरैर्दुष्कर्म्मबलदर्पिणः ।। ४ ।।
तानपि क्रोधसंयुक्तश्चित्रगुप्तो महाप्रभुः ।।
संशिक्षयति धर्मज्ञो यमराजानुशिक्षया ।। ५ ।।
चित्रगुप्त उवाच।।
भो भो नृपा दुराचाराः प्रजा विध्वंसकारिणः ।।
अल्पकालस्य राज्यस्य कृते किं दुष्कृतं कृतम् ।। ६ ।।
राज्यभोगेन मोहेन बलादन्यायतः प्रजाः ।।
यद्दण्डिताः फलं तस्य भुज्यतामधुना नृपाः ।।७।।
क्व तद्राज्यं कलत्रं च यदर्थमशुभं कृतम् ।।
तत्सर्वं संपरित्यज्य यूयमेकाकिनः स्थिताः ।।८।।
पश्यामि तद्बलं नष्टं येन विध्वंसिताः प्रजाः ।।
यमदूतैर्योज्यमाना अधुना कीदृशं भवेत् ।। ९ ।।
सनत्कुमार उवाच ।।
एवं बहुविधैर्वाक्यैरुपलब्धा यमेन ते ।।
स्वानि कर्माणि शोचंति तूष्णीं तिष्ठंति पार्थिवाः ।।5.8.१०।।
इति कर्म्म समुद्दिश्य नृपाणां धर्म्मराड्यमः।।
तत्पापपंकशुद्ध्यर्थमिदं दूतान्ब्रवीति च ।। ११ ।।
यमराज उवाच ।।
भोभोश्चण्ड महाचंड गृहीत्वा नृपतीन्बलात् ।।
नियमेन विशुद्यध्वं क्रमेण नरकाग्निषु ।।१२।।
सनत्कुमार उवाच ।।
ततश्शीघ्रं समादाय नृपान्संगृह्य पादयोः।।
भ्रामयित्वा तु वेगेन निक्षिप्योर्ध्वं प्रगृह्य च ।।।
सर्वप्रायेण महतातीव तप्ते शिलातले।।

आस्फालयंति तरसा वज्रेणेव महाद्रुमान्।।१४।।
ततस्सरक्तं श्रोत्रेण स्रवते जर्जरीकृतः।।
निस्संज्ञस्स सदा देही निश्चेष्टस्संप्रजायते।।१५।।
ततस्स वायुना स्पृष्टस्सतैरुज्जीवितः पुनः।।
ततः पापविशुद्ध्यर्थं क्षिपंति नरकार्णवे।।१६।।
अष्टाविंशतिसंख्याभिः क्षित्यधस्सप्तकोटयः।।
सप्तमस्य तलस्यांते घोरे तमसि संस्थितः।।१७।।
घोराख्या प्रथमा कोटिः सुघोरा तदधः स्थिता ।।
अतिघोरा महाघोरा घोररूपा च पंचमी ।।१८।।
षष्ठी तलातलाख्या च सप्तमी च भयानका।।
अष्टमी कालरात्रिश्च नवमी च भयोत्कटा।।१९।।
दशमी तदधश्चण्डा महाचण्डा ततोऽप्यधः ।।
चण्डकोलाहला चान्या प्रचण्डा चण्डनायिका ।। 5.8.२० ।।
पद्मा पद्मावती भीता भीमा भीषणनायिका ।।
कराला विकराला च वज्राविंशतिमा स्मृता ।।२१।।
त्रिकोणा पञ्चकोणा च सुदीर्घा चाखिलार्तिदा।।
समा भीमबला भोग्रा दीप्तप्रायेति चान्तिमी।।२२।।
इति ते नामतः प्रोक्ता घोरा नरककोटयः।।
अष्टाविंशतिरेवैताः पापानां यातनात्मिकाः।।२३।।
तासां क्रमेण विज्ञेयाः पंच पञ्चैव नायकाः।।
प्रत्येकं सर्वकोटीनां नामतस्संनिबोधत ।।२४।।
रौरवः प्रथमस्तेषां रुवंते यत्र देहिनः ।।
महारौरवपीडाभिर्महांतोऽपि रुदंति च ।। २५ ।।
ततश्शीतं तथा चोष्णं पंचाद्या नायकास्स्मृताः ।।
सुघोरस्तु महातीक्ष्णस्तथा संजीवनः स्मृतः ।।२६।।
महातमो विलोमश्च विलोपश्चापि कंटक।।
तीव्रवेगः करालश्च विकरालः प्रकंपनः ।।२७।।
महावक्रश्च कालश्च कालसूत्रः प्रगर्जनः ।।
सूचीमुखस्सुनेतिश्च खादकस्सुप्रपीडनः ।। २८ ।।
कुम्भीपाकसुपाकौ च क्रकचश्चातिदारुणः ।।
अंगारराशिभवनं मेरुरसृक्प्रहितस्ततः ।।२९।।
तीक्ष्णतुण्डश्च शकुनिर्महासंवर्तकः क्रतुः।।
तप्तजंतुः पंकलेपः प्रतिमांसस्त्रपूद्भवः।।5.8.३०।।

उच्छ्वासस्सुनिरुच्छ्वासो सुदीर्घः कूटशाल्मलिः।।
दुरिष्टस्सुमहावादः प्रवादस्सुप्रतापनः ।।३१।।
ततो मेघो वृषः शाल्मस्सिंहव्याघ्रगजाननाः।।
श्वसूकराजमहिषघूककोकवृकाननाः।।३२।।
ग्राहकुंभीननक्राख्या स्सर्पकूर्माख्यवायसाः।।
गृध्रोलूकहलोकाख्याः शार्दूलक्रथकर्कटाः।।३३।।
मंडूकाः पूतिवक्त्राश्च रक्ताक्षः पूतिमृत्तिकाः।।
कणधूम्रस्तथाग्निश्च कृमिगन्धिवपुस्तथा ।।३४।।
अग्नीध्रश्चाप्रतिष्ठश्च रुधिराभश्श्वभोजनः ।।
लाला भेक्षांत्रभक्षौ च सर्वभक्षः सुदारुणः।।३५।।
कंटकस्सुविशालश्च विकटः कटपूतनः।।
अंबरीषः कटाहश्च कष्टा वैतरणी नदी।।३६।।
सुतप्तलोहशयन एकपादः प्रपूरणः ।।
असितालवनं घोरमस्थिभंगः सुपूरणः।।३७।।
विलातसोऽसुयंत्रोऽपि कूटपाशः प्रमर्दनः ।।
महाचूर्णो सुचूर्णोऽपि तप्तलोहमयं तथा ।।३८।।
पर्वतः क्षुरधारा च तथा यमलपर्वतः ।।
मूत्रविष्ठाश्रुकूपश्च क्षारकूपश्च शीतलः ।।३९।।
मुसलोलूखलं यन्त्रं शिलाशकटलांगलम्।।
तालपत्रासिगहनं महाशकटमण्डपम्।।5.8.४०।।
संमोहमस्थिभंगश्च तप्तश्चलमयो गुडम्।।
बहुदुखं महाक्लेशः कश्मलं समलं मलात् ।।४१।।
हालाहलो विरूपश्च स्वरूपश्च यमानुगः ।। ,
एकपादस्त्रिपादश्च तीव्रश्चाचीवरं तमः ।। ४२ ।।
अष्टाविंशतिरित्येते क्रमशः पंचपंचकम् ।।
कोटीनामानुपूर्व्येण पंच पंचैव नायकाः ।।।४३।।
रौरवाय प्रबोध्यंते नरकाणां शतं स्मृतम्।।
चत्वारिंशच्छतं प्रोक्तं महानरकमण्डलम् ।। ४४ ।।
इति ते व्यास संप्रोक्ता नरकस्य स्थितिर्मया ।।
प्रसंख्यानाच्च वैराग्यं शृणु पापगतिं च ताम् ।। ४५ ।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां नरकलोकवर्णनं नामाष्टमोऽध्यायः ।। ८

।। सनत्कुमार उवाच ।।
एषु पापाः प्रपच्यंते शोष्यंते नरकाग्निषु ।।
यातनाभिर्विचित्राभिरास्वकर्म्मक्षयाद्भृशम् ।।१।।
स्वमलप्रक्षयाद्यद्वदग्नौ धास्यंति धातवः ।।
तत्र पापक्षयात्पापा नराः कर्मानुरूपतः ।।२।।
सुगाढं हस्तयोर्बद्ध्वा ततश्शृंखलया नराः ।।
महावृक्षाग्रशाखासु लम्ब्यन्ते यमकिंकरैः ।। ३ ।।
ततस्ते सर्वयत्नेन क्षिप्ता दोलंति किंकरैः ।।
दोलंतश्चातिवेगेन विसंज्ञा यांति योजनम् ।। ४ ।।
अंतरिक्षस्थितानां च लोहभारशतं पुनः ।।
पादयोर्बध्यते तेषां यमदूतैर्महाबलैः ।। ५ ।।
तेन भारेण महता प्रभृशं ताडिता नराः ।।
ध्यायंति स्वानि कर्माणि तूष्णीं तिष्ठन्ति निश्चलाः ।। ६ ।।
ततोंऽकुशैरग्निवर्णैर्लोह दण्डैश्च दारुणैः ।।
हन्यंते किंकरैर्घोरैस्समन्तात्पापकर्म्मिणः ।।७।।
ततः क्षारेण दीप्तेन वह्नेरपि विशेषतः ।।
समंततः प्रलिप्यंते तीव्रेण तु पुनः पुनः ।। ८ ।।
द्रुतेनात्यंतलिप्तेन कृत्तांगा जर्जरीकृताः ।।
पुनर्विदार्य्य चांगानि शिरसः प्रभृति क्रमात् ।।९।।
वृताकवत्प्रपच्यंते तप्तलोहकटाहकैः।।
विष्ठापूर्णे तथा कूपे कृमीणां निचये पुनः ।।5.9.१०।।
मेदोऽसृक्पूयपूर्णायां वाप्यां क्षिप्यंति ते पुनः ।।
भक्ष्यंते कृमिभिस्तीक्ष्णैर्लोहतुंडैश्च वायसैः।।११।।
श्वभिर्द्दंशैर्वृकैर्व्याघ्रैरौद्रैश्च विकृताननैः ।।
पच्यंते मत्स्यवच्चापि प्रदीप्तांगारराशिषु ।।१२।।
भिन्नाः शूलैस्तु तीक्ष्णैश्च नराः पापेन कर्म्मणा ।।
तैलयन्त्रेषु चाक्रम्य घोरैः कर्म्मभिरात्मनः।।१३।।
तिला इव प्रपीड्यंते चक्राख्ये जनपिंडकाः ।।
भ्रज्यंते चातपे तप्ते लोहभाण्डेष्वनेकधा ।।१४।।
तैलपूर्णकटाहेषु सुतप्तेषु पुनःपुनः।।
बहुधा पच्यते जिह्वा प्रपीड्योरसि पादयोः ।। १५ ।।
यातनाश्च महत्योऽत्र शरीरस्याति सर्वतः ।।
निश्शेषनरकेष्वेवं क्रमंति क्रमशो नराः ।। १६ ।।

नरकेषु च सर्वेषु विचित्रा यमयातना।।
याम्यैश्च दीयते व्यास सर्वांगेषु सुकष्टदा ।।१७।।
ज्वलदंगारमादाय मुखमापूर्य्य ताड्यते ।।
ततः क्षारेण दीप्तेन ताम्रेण च पुनःपुनः ।। १८ ।।
घृतेनात्यन्ततप्तेन तदा तैलेन तन्मुखम् ।।
इतस्ततः पीडयित्वा भृशमापूर्य्य हन्यते ।।१९।।
विष्ठाभिः कृमिभिश्चापि पूर्यमाणाः क्वचित्क्वचित् ।।
परिष्वजंति चात्युग्रां प्रदीप्तां लोहशाल्मलीम्।।5.9.२०।।
हन्यंते पृष्ठदेशे च पुनर्दीप्तैर्महाघनैः ।।
दन्तुरेणादिकंठेन क्रकचेन बलीसया।।२१।।
शिरःप्रभृति पीड्यंते घोरैः कर्मभिरात्मजैः ।।
खाद्यंते च स्वमांसानि पीयते शोणितं स्वकम्।।२२।।
अन्नं पानं न दत्तं यैस्सर्वदा स्वात्मपोषकैः।।
इक्षुवत्ते प्रपीड्यंते जर्जरीकृत्य मुद्गरैः ।।२३।।
असितालवने घोरे छिद्यन्ते खण्डशस्ततः ।।
सूचीभिर्भिन्नसर्वाङ्गास्तप्तशूलाग्ररोपिताः।।२४।।
संचाल्यमाना बहुशः क्लिश्यंते न म्रियन्ति च ।।
तथा च तच्छरीराणि सुखदुःखसहानि च ।।२५।।
देहादुत्पाट्य मांसानि भिद्यंते स्वैश्च मुद्गरैः।।
दंतुराकृतिभिर्घोरैर्यमदूतैर्बलोत्कटैः ।।२६।।
निरुच्छवासे निरुछवासास्तिष्ठंति नरके चिरम् ।।
उत्ताड्यंते तथोछवासे वालुकासदने नराः।।२७।।
रौरवे रोदमानाश्च पीड्यंते विविधै वधैः ।।
महारौरवपीडाभिर्महांतोऽपि रुदंति च ।। २८ ।।
पत्सु वक्त्रे गुदे मुंडे नेत्रयोश्चैव मस्तके ।।
निहन्यंते घनैस्तीक्ष्णैस्सुतप्तैर्लोह शंकुभिः ।।२९।।
सुतप्तावालुकायां तु प्रयोज्यंते मुहुर्मुहुः ।।
जंतुपंके भृशं तप्ते क्षिप्ताः क्रन्दंति विस्वरम् ।।5.9.३०।।
कुंभीपाकेषु च तथा तप्ततैलेषु वै मुने।।
पापिनः कूरकर्म्माणोऽसह्येषु सर्वथा पुनः।।३१।।
लालाभक्षेषु पापास्ते पात्यंते दुःखदेषु वै ।।
नानास्थानेषु पच्यंते नरकेषु पुनःपुनः ।।३२।।
सूचीमुखे महाक्लेशे नरके पात्यते नरः ।।

पापी पुण्यविहीनश्च ताड्यते यमकिंकरैः ।।३३।।
लौहकुम्भे विनिःक्षिप्ताः श्वसन्तश्च शनैःशनैः ।।
महाग्निना प्रपच्यंते स्वपापैरेव मानवाः।।३४।।
दृढं रज्ज्वादिभिर्बद्ध्वा प्रपीड्यंते शिलासु च ।।
क्षिप्यंते चान्धकूपेषु दश्यंते भ्रमरैर्भृशम् ।।३५।।
कृमिभिर्भिन्नसर्वांगाश्शतशो जर्जरीकृताः ।।
सुतीक्ष्णक्षारकूपेषु क्षिप्यंते तदनंतरम् ।। ३६ ।।
महाज्वालेऽत्र नरके पापाः क्रन्दंति दुःखिताः ।।
इतश्चेतश्च धावंति दह्यमानास्तदर्चिषा ।। ३७ ।।
पृष्ठे चानीय तुण्डाभ्यां विन्यस्त स्कंधयोजिते ।।
तयोर्मध्येन वाकृष्य बाहुपृष्ठेन गाढतः ।।३८।।
बद्ध्वा परस्परं सर्वे सुभृशं पापरज्जुभिः ।।
बद्धपिंडास्तु दृश्यंते महा ज्वाले तु यातनाः ।। ३९ ।।
रज्जुभिर्वेष्टिताश्चैव प्रलिप्ताः कर्द्दमेन च ।।
करीषतुषवह्नौ च पच्यंते न म्रियंति च ।। 5.9.४० ।।
सुतीक्ष्णं चरितास्ते हि कर्कशासु शिलासु च ।।
आस्फाल्य शतशः पापाः पच्यंते तृणवत्ततः।।४१।।
शरीराभ्यंतरगतैः प्रभूतैः कृमिभिर्नराः ।।
भक्ष्यंते तीक्ष्णवदनैरात्मदेहक्षयाद्भृशम् ।।४२।।
कृमीणां निचये क्षिप्ताः पूयमांसास्थिराशिषु।।
तिष्ठंत्युद्विग्नहृदयाः पर्वताभ्यां निपीडिताः ।।४३।।
तप्तेन वज्रलेपेन शरीरमनुलिप्यते ।।
अधोमुखोर्ध्वपादाश्च तातप्यंते स्म वह्निना ।। ४४ ।।
वदनांतः प्रविन्यस्तां सुप्रतप्तामयोगदाम् ।।
ते खादन्ति पराधीनास्तैस्ताड्यंते समुद्गरैः ।।४५।।
इत्थं व्यास कुकर्म्माणो नरकेषु पचंति हि।।
वर्णयामि विवर्णत्वं तेषां तत्त्वाय कर्म्मिणाम्।।४६।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां सामान्यतो नरकगतिवर्णनंनाम नवमोऽध्यायः।।९।।

सनत्कुमार उवाच ।।
मिथ्यागमं प्रवृत्तस्तु द्विजिह्वाख्ये च गच्छति ।।
जिह्वार्द्धकोशविस्तीर्णहलैस्तीक्ष्णः प्रपीड्यते।।१।।
निर्भर्त्सयति यः क्रूरो मातरं पितरं गुरुम् ।।
विष्ठाभिः कृमिमिश्राभिर्मुखमापूर्य्य हन्यते ।।२।।
ये शिवायतनारामवापीकूपतडागकान्।।
विद्रवंति द्विजस्थानं नरास्तत्र रमंति च ।।३।।
कामायोद्वर्तनाभ्यंग स्नानपानाम्बुभोजनम् ।।
क्रीडनं मैथुनं द्यूतमाचरन्ति मदोद्धता।।४।।
पेचिरे विविधैर्घोरैरिक्षुयंत्रादिपीडनैः ।।
निरयाग्निषु पच्यंते यावदाभूतसंप्लवम्।।५।।
तेन तेनैव रूपेण ताड्यते पारदारिकाः ।।
गाढमालिंग्य ते नारीं सुतप्तां लोहनिर्मिताम् ।। ६ ।।
पूर्वाकाराश्च पुरुषाः प्रज्वलन्ति समंततः ।।
दुश्चारिणीं स्त्रियं गाढमालिंगंति रुदंति च ।। ७ ।।
ये शृण्वंति सतां निंदां तेषां कर्णप्रपूरणम् ।।
अग्निवर्णैरयःकीलैस्तप्तैस्ताम्रादिनिर्मितैः ।।६।।
त्रपुसीसारकूटाद्भिः क्षीरेण च पुनःपुनः।।
सुतप्ततीक्ष्णतैलेन वज्रलेपेन वा पुनः ।।९।।
क्रमादापूर्य्यकर्णांस्तु नरकेषु च यातनाः ।।
अनुक्रमेण सर्वेषु भवंत्येताः समंततः ।।5.10.१०।।
सर्वेन्द्रियाणामप्येवं क्रमात्पापेन यातनाः ।।
भवंति घोराः प्रत्येकं शरीरेण कृतेन च ।। ११ ।।
स्पर्शदोषेण ये मूढास्स्पृशंति च परस्त्रियम् ।।
तेषां करोऽग्निवर्णाभिः पांशुभिः पूर्य्यते भृशम् ।। १२ ।।
तेषां क्षारादिभिस्सर्वैश्शरीरमनुलिप्यते ।।
यातनाश्च महाकष्टास्सर्वेषु नरकेषु च ।। १३ ।।
कुर्वन्ति पित्रोर्भृकुटिं करनेत्राणि ये नरा ।।
वक्त्राणि तेषां सांतानि कीर्य्यंते शंकुभिर्दृढम् ।। १४ ।।
यैरिन्द्रियैर्नरा ये च कुर्वन्ति परस्त्रियम् ।।
इन्द्रियाणि च तेषां वै विकुर्वंति तथैव च ।। १५ ।।
परदारांश्च पश्यन्ति लुब्धास्स्तब्धेन चक्षुषा ।।
सूचीभिश्चाग्निवर्णाभिस्तेषां नेत्रप्रपूरणम् ।। १६ ।।

क्षाराद्यैश्च क्रमात्सर्वा इहैव यमयातनाः ।।
भवंति मुनिशार्दूल सत्यंसत्यं न संशयः ।। १७ ।।
देवाग्निगुरुविप्रेभ्यश्चानिवेद्य प्रभुंजते ।।
लोहकीलशतैस्तप्तैस्तज्जिह्वास्यं च पूर्य्यते ।। १८ ।।
ये देवारामपुष्पाणि लोभात्संगृह्य पाणिना ।।
जिघ्रंति च नरा भूयः शिरसा धारयंति च ।। १९ ।।
आपूर्य्यते शिरस्तेषां तप्तैर्लोहस्य शंकुभिः ।।
नासिका वातिबहुलैस्ततः क्षारादिभिर्भृशम् ।।5.10.२०।।
ये निंदन्ति महात्मानं वाचकं धर्म्मदेशिकम् ।।
देवाग्निगुरुभक्तांश्च धर्मशास्त्रं च शाश्वतम् ।। २१ ।।
तेषामुरसि कण्ठे च जिह्वायां दंतसन्धिषु ।।
तालुन्योष्ठे नासिकायां मूर्ध्नि सर्वाङ्गसन्धिषु ।। २२ ।।
अग्निवर्णास्तु तप्ताश्च त्रिशाखा लोहशंकवः ।।
आखिद्यंते च बहुशः स्थानेष्वेतेषु मुद्गरैः ।। २३ ।।
ततः क्षारेण दीप्तेन पूर्यते हि समं ततः ।।
यातनाश्च महत्यो वै शरीरस्याति सर्वतः ।। २४ ।।
अशेषनरकेष्वेव क्रमंति क्रमशः पुनः ।।
ये गृह्णन्ति परद्रव्यं पद्भ्यां विप्रं स्पृशंति च ।। २५ ।।
शिवोपकरणं गां च ज्ञानादिलिखितं च यत् ।।
हस्तपादादिभिस्तेषामापूर्य्यंते समंततः ।। २६ ।।
नरकेषु च सर्वेषु विचित्रा देहयातनाः ।।
भवंति बहुशः कष्टाः पाणिपादसमुद्भवाः ।। २७ ।।
शिवायतनपर्य्यंते देवारामेषु कुत्रचित्।।
समुत्सृजंति ये पापाः पुरीषं मूत्रमेव च।।२८।।
तेषां शिश्नं सवृषणं चूर्ण्यते लोहमुद्गरैः।।
सूचीभिरग्निवर्णाभिस्कथा त्वापूर्य्यते पुनः ।।२९।।
ततः क्षारेण महता तीव्रेण च पुनः पुनः ।।
द्रुतेन पूर्यते गाढं गुदे शिश्ने च देहिनः ।।5.10.३० ।।
मनस्सर्वेन्द्रियाणां च यस्मा द्दुःखं प्रजायते ।।
धने सत्यपि ये दानं न प्रयच्छंति तृष्णया ।। ३१ ।।
अतिथिं चावमन्यते काले प्राप्ते गृहाश्रमे ।।
तस्मात्ते दुष्कृतं प्राप्य गच्छंति निरयेऽशुचौ ।। ३२ ।।
येऽन्नं दत्त्वा हि भुंजंति न श्वभ्यस्सह वायसैः ।।

तेषां च विवृतं वक्त्रं कीलकद्वयताडितम्।।३३।।
कृमिभिः प्राणिभिश्चोग्रैर्लोहतुण्डैश्च वायसैः ।।
उपद्रवैर्बहुविधैरुग्रैरंतः प्रपीड्यते ।। ३४ ।।
श्यामश्च शबलश्चैव यममार्गानुरोधकौ ।।
यौ स्तस्ताभ्यां प्रयच्छामि तौ गृहणीतामिमं बलिम् ।।३५।।
ये वा वरुणवायव्या याम्या नैर्ऋत्यवायसाः ।।
वायसा पुण्यकर्माणस्ते प्रगृहणंतु मे बलिम् ।। ३६ ।।
शिवामभ्यर्च्य यत्नेन हुत्वाग्नौ विधिपूर्वकम् ।।
शैवैर्मन्त्रैर्बलिं ये च ददंते न च ते यमम् ।। ३७ ।।
पश्यंति त्रिदिवं यांति तस्माद्दद्याद्दिनेदिने।।
मण्डलं चतुरस्रं तु कृत्वा गंधादिवासितम् ।।३८।।
धन्वन्तर्यर्थमीशान्यां प्राच्यामिन्द्राय निःक्षिपेत् ।।
याम्यां यमाय वारुण्यां सुदक्षोमाय दक्षिणे ।।३९।।
पितृभ्यस्तु विनिक्षिप्य प्राच्यामर्यमणे ततः ।।
धातुश्चैव विधातुश्च द्वारदेशे विनिःक्षिपेत् ।।5.10.४० ।।
श्वभ्यश्च श्वपतिभ्यश्च वयोभ्यो विक्षिपेद्भुवि ।।
देवैः पितृमनुष्यैश्च प्रेतैर्भूतैस्सगुह्यकै ।।४१ ।।
वयोभिः कृमिकीटैश्च गृहस्थश्चोपजीव्यते ।।
स्वाहाकारः स्वधाकारो वषट्कारस्तृतीयकः ।।४२।।
हंतकारस्तथैवान्यो धेन्वा स्तनचतुष्टयम्।।
स्वाहाकारं स्तनं देवास्स्वधां च पितरस्तथा।।४३।।
वषट्कारं तथैवान्ये देवा भूतेश्वरास्तथा ।।
हंतकारं मनुष्याश्च पिबंति सततं स्त नम् ।। ४४ ।।
यस्त्वेतां मानवो धेनुं श्रद्धया ह्यनुपूर्विकाम् ।।
करोति सततं काले साग्नित्वायोपकल्प्यते ।। ४५ ।।
यस्तां जहाति वा स्वस्थस्तामिस्रे स तु मज्जति ।।
तस्माद्दत्त्वा बलिं तेभ्यो द्वारस्थश्चिंतयेत्क्षणम् ।।४६।।
क्षुधार्तमतिथिं सम्यगेकग्रामनिवासिनम् ।।
भोजयेत्तं शुभान्नेन यथाशक्त्यात्मभोजनात् ।।४७।।
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।।
स तस्मै दुष्कृतं दत्त्वा पुण्यमा दाय गच्छति ।।४८।।
ततोऽन्नं प्रियमेवाश्नन्नरः शृंखलवान्पुनः ।।
जिह्वावेगेन विद्धोत्र चिरं कालं स तिष्ठति ।।४९।।

यतस्तं मांसमुद्धत्य तिलमात्रप्रमाणतः ।।
खादितुं दीयते तेषां भित्त्वा चैव तु शोणितम् ।।5.10.५० ।।
निश्शेषतः कशाभिस्तु पीड्यते क्रमशः पुनः ।।
बुभुक्षयातिकष्टं हि तथायाति पिपासया ।। ५१ ।।
एवमाद्या महाघोरा यातनाः पापकर्मणाम् ।।
अंते यत्प्रतिपन्नं हि तत्संक्षेपेण संशृणु ।। ५२ ।।
यः करोति महापापं धर्म्मं चरति वै लघु ।।
धर्म्मं गुरुतरं वापि तथावस्थे तयोः शृणु ।।५३।।
सुकृतस्य फलं नोक्तं गुरुपा पप्रभावतः ।।
न मिनोति सुखं तत्र भोगैर्बहुभिरन्वितः ।। ५४ ।।
तथोद्विग्नोतिसंतप्तो न भक्ष्यैर्मन्यते सुखम् ।।
अभावादग्रतोऽन्यस्य प्रतिकल्पं दिनेदिने ।।५५।।
पुमान्यो गुरुधर्म्माऽपि सोपवासो यथा गृही ।।
वित्तवान्न विजानाति पीडां नियमसंस्थितः ।। ५६ ।।
तानि पापानि घोराणि संति यैश्च नरो भुवि ।।
शतधा भेदमाप्नोति गिरिर्वज्रहतो यथा ।। ५७ ।। ।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां नरकगतिभोगवर्णनं नाम दशमोऽध्यायः ।। १० ।।

।। व्यास उवाच ।। ।।
कृतपापा नरा यांति दुःखेन महतान्विताः ।।
यममार्गे सुखं यैश्च तान्धर्मान्वद मे प्रभो ।। १ ।।
।। सनत्कुमार उवाच ।।
अवश्यं हि कृतं कर्म भोक्तव्यमविचारतः ।।
शुभाशुभमथो वक्ष्ये तान्धर्म्मान्सुखदायकान् ।२।।
अत्र ये शुभकर्म्माणः सौम्यचित्ता दयान्विताः ।।
सुखेन ते नरा यांति यममार्गं भयावहम् ।। ३ ।।
यः प्रदद्याद् द्विजेन्द्राणामुपानत्काष्ठपादुके ।।
स नरोऽश्वेन महता सुखं याति यमालयम् ।। ४ ।। ।।
छत्रदानेन गच्छंति यथा छत्रेण देहिनः ।।
शिबिकायाः प्रदानेन तद्रथेन सुखं व्रजेत् ।। ५ ।।
शय्यासनप्रदानेन सुखं याति सुविश्रमम् ।।
आरामच्छायाकर्तारो मार्गे वा वृक्षरोपकाः ।।
व्रजन्ति यमलोकं च आतपेऽति गतक्लमाः ।।६।।
यांति पुष्पगयानेन पुष्पारामकरा नराः ।।
देवायतनकर्तारः क्रीडंति च गृहोदरे ।। ७।।
कर्तारश्च तथा ये च यतीनामाश्रमस्य च ।।
अनाथमण्डपानां तु क्रीडंति च गृहोदरे ।। ८ ।।
देवाग्निगुरुविप्राणां मातापित्रोश्च पूजकाः ।।
पूज्यमाना नरा यांति कामुकेन यथासुखम् ।। ९ ।।
द्योतयंतो दिशस्सर्वा यांति दीपप्रदायिनः ।।
प्रतिश्रयप्रदानेन सुखं यांति निरामयाः ।। 5.11.१० ।।
विश्राम्यमाणा गच्छंति गुरुशुश्रूषका नराः ।।
आतोद्यविप्रदातारस्सुखं यांति स्वके गृहे ।। ११ ।।
सर्वकामसमृद्धेन यथा गच्छंति गोप्रदाः ।।
अत्र दत्तान्नपानानि 'तान्याप्नोति नरः पथि ।। १२ ।।
पादशौचप्रदानेन सजलेन पथा व्रजेत् ।।
पादाभ्यंगं च यः कुर्यादश्वपृष्ठेन गच्छति ।। १३ ।।
पादशौचं तथाभ्यंगं दीपमन्नं प्रतिश्रयम् ।।
यो ददाति सदा व्यास नोपसर्पति तं यमः ।। १४ ।।
हेमरत्नप्रदानेन याति दुर्गाणि निस्तरन् ।।
रौप्यानडुत्स्रग्दानेन यमलोकं सुखेन सः ।। १५ ।।

इत्येवमादिभिर्दानैस्सुखं यांति यमालयम् ।।
स्वर्गे तु विविधान्भोगान्प्राप्नुवंति सदा नराः ।। १६ ।।
सर्वेषामेव दानानामन्नदानं परं स्मृतम् ।।
सद्यः प्रीतिकरं हृद्यं बलबुद्धिविवर्धनम् ।।१७।।
नान्नदानसमं दानं विद्यते मुनिसत्तम ।।
अन्नाद्भवंति भूतानि तदभावे म्रियंति च ।।१८।।
रक्तं मांसं वसा शुक्रं क्रमादन्नात्प्रवर्धते ।।
शुक्राद्भवंति भूतानि तस्मादन्नमयं जगत् ।। १९ ।।
हेमरत्नाश्वनागेन्द्रैर्नारीस्रक्चंदनादिभिः ।।
समस्तैरपि संप्राप्तैर्न रमंति बुभुक्षिताः ।।5.11.२०।।
गर्भस्था जायमानाश्च बालवृद्धाश्च मध्यमाः ।।
आहारमभिकांक्षंति देवदानवराक्षसाः।।२१।।
क्षुधा निश्शेषरोगाणां व्याधिः श्रेष्ठतमः स्मृतः ।।
स चान्नौषधिलेपेन नश्यतीह न संशयः ।। २२ ।।
नास्ति क्षुधासमं दुःखं नास्ति रोगः क्षुधासमः ।।
नास्त्यरोगसमं सौख्यं नास्ति क्रोधसमो रिपुः ।।२३।।
अतएव महत्पुण्यमन्नदाने प्रकीर्तितम्।।
तथा क्षुधाग्निना तप्ता म्रियंते सर्वदेहिनः।।२४।।
अन्नदः प्राणदः प्रोक्तः प्राणदश्चापि सर्वदः।।
तस्मादन्नप्रदानेन सर्वदानफलं लभेत् ।।२५।।
यस्यान्नपानपुष्टाङ्गः कुरुते पुण्यसंचयम्।।
अन्नप्रदातुस्तस्यार्द्धं कर्तुश्चार्द्धं न संशयः ।। २६ ।।
त्रैलोक्ये यानि रत्नानि भोगस्त्रीवाहनानि च ।।
अन्नदानप्रदस्सर्वमिहामुत्र च तल्लभेत् ।। २७ ।।
धर्म्मार्थकाममोक्षाणां देहः परमसाधनम् ।।
तस्मादन्नेन पानेन पालयेद्देहमात्मनः ।। २८ ।।
अन्नमेव प्रशंसंति सर्वमेव प्रतिष्ठितम् ।।
अन्नेन सदृशं दानं न भूतं न भविष्यति ।। २९ ।।
अन्नेन धार्य्यते सर्वं विश्वं जगदिदं मुने ।।
अन्नमूर्जस्करं लोके प्राणा ह्यन्ने प्रतिष्ठिताः ।। 5.11.३० ।।
दातव्यं भिक्षवे चान्नं ब्राह्मणाय महात्मने ।।
कुटुंबं पीडयित्वापि ह्यात्मनो भूतिमिच्छता ।।३१।।
विददाति निधिश्रेष्ठं यो दद्यादन्नमर्थिने।।

ब्राह्मणायार्तरूपाय पारलौकिकमात्मनः ।।३२।।
अर्चयेद्भूतिमन्विच्छन्काले द्विजमुपस्थितम् ।।
श्रांतमध्वनि वृत्त्यर्थं गृहस्थो गृहमागतम् ।। ।। ३३ ।।
अन्नदः पूजयेद्व्यासः सुशीलस्तु विमत्सरः ।।
क्रोधमुत्पतितं हित्वा दिवि चेह महत्सुखम् ।।३४।।
नाभिनिंदेदधिगतं न प्रणुद्यात्कथंचन ।।
अपि श्वपाके शुनि वा नान्नदानं प्रणश्यति।।३५।। ।
श्रांतायादृष्टपूर्वाय ह्यन्नमध्वनि वर्तते ।।
यो दद्यादपरिक्लिष्टं स समृद्धिमवाप्नुयात ।।३६।।
पितृन्देवांस्तथा विप्रानतिथींश्च महामुने ।।
यो नरः प्रीणयत्यन्नैस्तस्य पुण्यफलं महत् ।। ३७ ।।
अन्नं पानं च शूद्रेऽपि ब्राह्मणे च विशिष्यते ।।
न पृच्छेद्गोत्रचरणं स्वाध्यायं देशमेव च ।। ३८ ।।
भिक्षितो ब्राह्मणेनेह दद्यादन्नं च यः पुमान् ।।
स याति परमं स्वर्गं यावदाभूतसंप्लवम् ।।३९।।
अन्नदस्य च वृक्षाश्च सर्वकामफलान्विताः ।।
भवंतीह यथा विप्रा हर्षयुक्तास्त्रिविष्टपे ।।5.11.४०।।
अन्नदानेन ये लोकास्स्वर्गे विरचिता मुने ।।
अन्नदातुर्महादिव्यास्ताञ्छृणुष्व महामुने ।। ४१ ।।
भवनानि प्रकाशंते दिवि तेषां महात्मनाम् ।।
नानासंस्थानरूपाणि नाना कामान्वितानि च ।। ४२ ।।
सर्वकामफलाश्चापि वृक्षा भवनसंस्थिताः ।।
हेमवाप्यः शुभाः कूपा दीर्घिकाश्चैव सर्वशः।।४३।।
घोषयंति च पानानि शुभान्यथ सहस्रशः ।।
भक्ष्यभोज्यमयाश्शैला वासांस्याभरणानि च ।। ४४ ।।
क्षीरं स्रवंत्यस्सरितस्तथैवाज्यस्य पर्वताः ।।
प्रासादाः पाण्डुराभासाश्शय्याश्च कनकोज्ज्वलाः ।।४५।।
तानन्नदाश्च गच्छंति तस्मादन्नप्रदो भवेत् ।।
यदीच्छेदात्मनो भव्यमिह लोके परत्र च ।। ४६ ।।
एते लोकाः पुण्यकृतामन्नदानां महाप्रभाः ।।
तस्मादन्नं विशेषेण दातव्यं मानवैर्ध्रुवम् ।। ४७ ।।
अन्नं प्रजापतिस्साक्षादन्नं विष्णुस्स्वयं हरः ।।
तस्मादन्नसमं दानं न भूतं न भविष्यति ।। ४८ ।।

कृत्वापि सुमहत्पापं यः पश्चादन्नदो भवेत् ।।
विमुक्तस्सर्वपापेभ्यस्स्वर्गलोकं स गच्छति ।। ४९ ।।
अन्नपानाश्वगोवस्त्रशय्याच्छत्रासनानि च ।।
प्रेतलोके प्रशस्तानि दानान्यष्टौ विशेषतः ।। 5.11.५० ।।
एवं दानविशेषेण धर्मराजपुरं नरः ।।
यस्माद्याति विमानेन तस्माद्दानं समाचरेत् ।। ५१ ।।
एतदाख्यानमनघमन्नदानप्रभावतः ।।
यः पठेत्पाठयेदन्यान्स समृद्धः प्रजायते ।। ५२ ।।
शृणुयाच्छ्रावयेच्छ्राद्धे ब्राह्मणान्यो महामुने ।।।
अक्षय्यमन्नदानं च पितृणामुपतिष्ठति।।५३।।
इति श्रीशिवमहापुराणे पंचम्यामुमासंहितायामन्नदानमाहात्म्यवर्णनं नामैकादशोऽध्यायः। ।। ११ ।।

।। सनत्कुमार उवाच ।।
पानीयदानं परमं दानानामुत्तमं सदा ।।
सर्वेषां जीवपुंजानां तर्पणं जीवनं स्मृतम् ।। १ ।।
प्रपादानमतः कुर्यात्सुस्नेहादनिवारितम् ।।
जलाश्रयविनिर्माणं महानन्दकरं भवेत् ।।२।।
इह लोके परे वापि सत्यं सत्यं न संशयः।।
तस्माद्वापीश्च कूपांश्च तडागान्कारयेन्नरः ।।३।।
अर्द्धं पापस्य हरति पुरुषस्य विकर्मणः ।।
कूपः प्रवृत्तपानीयः सुप्रवृत्तस्य नित्यशः ।। ४ ।।
सर्वं तारयते वंशं यस्य खाते जलाशये ।।
गावः पिबंति विप्राश्च साधवश्च नरास्सदा ।। ५ ।।
निदाघकाले पानीयं यस्य तिष्ठत्यवारितम् ।।
सुदुर्गं विषमं कृच्छ्रं न कदाचिदवाप्यते ।। ६ ।।
तडागानां च वक्ष्यामि कृतानां ये गुणाः स्मृता ।।
त्रिषु लोकेषु सर्वत्र पूजितो यस्तडागवान् ।। ७ ।।
अथवा मित्रसदने मैत्रं मित्रार्तिवर्जितम् ।।
कीर्तिसंजननं श्रेष्ठं तडागानां निवेशनम् ।।८।।
धर्मस्यार्थस्य कामस्य फलमाहुर्मनीषिणः ।।
तडागं सुकृते येन तस्य पुण्यमनन्तकम् ।। ९ ।।
चतुर्विधानां भूतानां तडागः परमाश्रयः ।।
तडागादीनि सर्वाणि दिशन्ति श्रियमुत्तमाम् ।। 5.12.१० ।।
देवा मनुष्या गन्धर्वाः पितरो नागराक्षसाः ।।
स्थावराणि च भूतानि संश्रयंति जलाशयम् ।। ११ ।।
प्रावृट्तौ तडागे तु सलिलं यस्य तिष्ठति ।।
अग्निहोत्रफलं तस्य भवतीत्याह चात्मभूः ।। १२ ।।
शरत्काले तु सलिलं तडागे यस्य तिष्ठति ।।
गोसहस्रफलं तस्य भवेन्नैवात्र संशयः ।। १३ ।।
हेमन्ते शिशिरे चैव सलिलं यस्य तिष्ठति ।।
स वै बहुसुवर्णस्य यज्ञस्य लभते फलम् ।। १४ ।।
वसंते च तथा ग्रीष्मे सलिलं यस्य तिष्ठति ।।
अतिरात्राश्वमेधानां फलमाहुर्मनीषिणः ।। १५ ।।
मुने व्यासाथ वृक्षाणां रोपणे च गुणाञ्छृणु ।।
प्रोक्तं जलाशयफलं जीवप्रीणनमुत्तमम् ।।।१६।।

अतीतानागतान्सर्वान्पितृवंशांस्तु तारयेत् ।।
कांतारे वृक्षरोपी यस्तस्माद्वृक्षांस्तु रोपयेत् ।।१७।।
तत्र पुत्रा भवंत्येते पादपा नात्र संशयः ।।
परं लोकं गतस्सोऽपि लोकानाप्नोति चाक्षयान् ।। १८ ।।
पुष्पैस्सुरगणान्सर्वान्फलैश्चापि तथा पितॄन् ।।
छायया चातिथीन्सर्वान्पूजयंति महीरुहाः ।। १९ ।।
किन्नरोरगरक्षांसि देवगंधर्वमानवाः ।।
तथैवर्षिगणाश्चैव संश्रयंति महीरुहान् ।।5.12.२०।।
पुष्पिताः फलवंतश्च तर्पयंतीह मानवान् ।।
इह लोके परे चैव पुत्रास्ते धर्मतः स्मृताः ।। २१ ।।
तडागकृद्वृक्षरोपी चेष्टयज्ञश्च यो द्विजः ।।
एते स्वर्गान्न हीयंते ये चान्ये सत्यवादिनः ।।२२।।
सत्यमेव परं ब्रह्म सत्यमेव परं तपः ।।
सत्यमेव परो यज्ञस्सत्यमेव परं श्रुतम् ।।२३।।
सत्यं सुप्तेषु जागर्ति सत्यं च परमं पदम् ।।
सत्येनैव धृता पृथ्वी सत्ये सर्वं प्रतिष्ठितम् ।।२४।।
ततो यज्ञश्च पुण्यं च देवर्षिपितृपूजने ।।
आपो विद्या च ते सर्वे सर्वं सत्ये प्रतिष्ठितम् ।।२५।।
सत्यं यज्ञस्तपो दानं मंत्रा देवी सरस्वती।।
ब्रह्मचर्य्यं तथा सत्यमोंकारस्सत्यमेव च ।।२६।।
सत्येन वायुरभ्येति सत्येन तपते रविः ।।
सत्येनाग्निर्निर्दहति स्वर्गस्सत्येन तिष्ठति ।।२७।।
पालनं सर्ववेदानां सर्वतीर्थावगाहनम् ।।
सत्येन वहते लोके सर्वमाप्नोत्यसंशयम्।।२८।।
अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।।
लक्षाणि क्रतवश्चैव सत्यमेव विशिष्यते ।। २९ ।।
सत्येन देवाः पितरो मानवोरगराक्षसाः ।।
प्रीयंते सत्यतस्सर्वे लोकाश्च सचराचराः ।। ।। 5.12.३० ।।
सत्यमाहुः परं धर्मं सत्यमाहुः परं पदम् ।।
सत्यमाहुः परं ब्रह्म तस्मात्सत्यं सदा वदेत् ।। ३१ ।।
मुनयस्सत्यनिरतास्तपस्तप्त्वा सुदुश्चरम् ।।
सत्यधर्मरतास्सिद्धास्ततस्स्वर्गं च ते गताः ।।३२।।
अप्सरोगणसंविष्टैर्विमानैःपरिमातृभिः ।।

वक्तव्यं च सदा सत्यं न सत्याद्विद्यते परम् ।।३३।।
अगाधे विपुले सिद्धे सत्यतीर्थे शुचिह्रदे ।।
स्नातव्यं मनसा युक्तं स्थानं तत्परमं स्मृतम् ।।३४।।
आत्मार्थे वा परार्थे वा पुत्रार्थे वापि मानवाः ।।
अनृतं ये न भाषंते ते नरास्स्वर्गगामिनः ।।३५।।
वेदा यज्ञास्तथा मंत्रास्संति विप्रेषु नित्यशः ।।
नोभांत्यपि ह्यसत्येषु तस्मात्सत्यं समाचरेत् ।। ३६ ।।
।। व्यास उवाच ।।
तपसो मे फलं ब्रूहि पुनरेव विशेषतः ।।
सर्वेषां चैव वर्णानां ब्राह्मणानां तपोधन ।। ३७ ।।
सनत्कुमार उवाच ।।
प्रवक्ष्यामि तपोऽध्यायं सर्व कामार्थसाधकम् ।।
सुदुश्चरं द्विजातीनां तन्मे निगदतः शृणु ।। ३८ ।।
तपो हि परमं प्रोक्तं तपसा विद्यते फलम् ।।
तपोरता हि ये नित्यं मोदंते सह दैवतैः ।। ३९ ।।
तपसा प्राप्यते स्वर्गस्तपसा प्राप्यते यशः ।।
तपसा प्राप्यते कामस्तपस्सर्वार्थसाधनम् ।। 5.12.४० ।।
तपसा मोक्षमाप्नोति तपसा विंदते महत् ।।
ज्ञानविज्ञानसंपत्तिः सौभाग्यं रूपमेव च ।। ४१ ।।
नानाविधानि वस्तूनि तपसा लभते नरः ।।
तपसा लभते सर्वं मनसा यद्यदिच्छति ।। ४२ ।।
नातप्ततपसो यांति ब्रह्मलोकं कदाचन ।।
नातप्ततपसां प्राप्यश्शंकरः परमेश्वरः ।।४३।।
यत्कार्यं किंचिदास्थाय पुरुषस्तपते तपः ।।
तत्सर्वं समवाप्नोति परत्रेह च मानवः ।।४४।।
सुरापः पारदारी च ब्रह्महा गुरुतल्पगः ।।
तपसा तरते सर्वं सर्वतश्च विमुंचति।।४५।।
अपि सर्वेश्वरः स्थाणुर्विष्णु श्चैव सनातनः ।।
ब्रह्मा हुताशनः शक्रो ये चान्ये तपसान्विताः ।।४६।।
अष्टाशीतिसहस्राणि मुनीनामूर्द्ध्वरेतसाम् ।।
तपसा दिवि मोदंते समेता दैवतैस्सह ।।४७।।
तपसा लभ्यते राज्यं स च शक्रस्सुरेश्वरः ।।
तपसाऽपालयत्सर्वमहन्यहनि वृत्रहा ।।४८।।

सूर्य्याचन्द्रमसौ देवौ सर्वलोकहिते रतौ ।।
तपसैव प्रकाशंते नक्षत्राणि ग्रहास्तथा ।।४९।।
न चास्ति तत्सुखं लोके यद्विना तपसा किल।।
तपसैव सुखं सर्वमिति वेदविदो विदुः ।। 5.12.५० ।।
ज्ञानं विज्ञानमारोग्यं रूपवत्त्वं तथैव च ।।
सौभाग्यं चैव तपसा प्राप्यते सर्वदा सुखम् ।। ५१ ।।
तपसा सृज्यते विश्वं ब्रह्मा विश्वं विनाश्रमम् ।।
पाति विष्णुर्हरोऽप्यत्ति धत्ते शेषोऽखिलां महीम् ।। ५२ ।।
विश्वामित्रो गाधिसुतस्तपसैव महामुने ।।
क्षत्रियोऽथाभवद्विप्रः प्रसिद्धं त्रिभवेत्विदम् ।। ५३ ।।
इत्युक्तं ते महाप्राज्ञ तपोमाहात्म्यमुत्तमम् ।।
शृण्वध्ययनमाहात्म्यं तपसोऽधिकमुत्तमम् ।। ५४ ।।
इति श्रीशिवमहापुराणे पंचम्यामुमासंहितायां तपोमाहात्म्यवर्णनं नाम द्वादशोऽध्यायः ।। १२ ।।

।। सनत्कुमार उवाच ।।
तपस्तपति योऽरण्ये वन्यमूलफलाशनः ।।
योऽधीते ऋचमेकां हि फलं स्यात्तत्समं मुने ।। १ ।।
श्रुतेरध्ययनात्पुण्यं यदाप्नोति द्विजोत्तमः ।।
तदध्यापनतश्चापि द्विगुणं फलमश्नुते ।। २ ।।
जगद्यथा निरालोकं जायतेऽशशिभास्करम् ।।
विना तथा पुराणं ह्यध्येयमस्मान्मुने सदा ।।३।।
तप्यमानं सदाज्ञानान्निरये योऽपि शास्त्रतः ।।
सम्बोधयति लोकं तं तस्मात्पूज्यः पुराणगः ।। ४ ।।
सर्वेषां चैव पात्राणां मध्ये श्रेष्ठः पुराणवित् ।।
पतनात्त्रायते यस्मात्तस्मात्पात्रमुदाहृतम् ।। ५ ।।
मर्त्यबुद्धिर्न कर्तव्या पुराणज्ञे कदाचन ।।
पुराणज्ञस्सर्ववेत्ता ब्रह्मा विष्णुर्हरो गुरुः ।। ६ ।।
धनं धान्यं हिरण्यं च वासांसि विविधानि च ।।
देयं पुराणविज्ञाय परत्रेह च शर्म्मणे ।।७।।
यो ददाति महाप्रीत्या पुराणज्ञाय सज्जनः ।।
पात्राय शुभवस्तूनि स याति परमां गतिम्।।८।।
महीं गां वा स्यंदनांश्च गजानश्वांश्च शोभनान् ।।
यः प्रयच्छति पात्राय तस्य पुण्यफलं शृणु ।। ९ ।।
अक्षयान्सर्वकामांश्च परत्रेह च जन्मनि ।।
अश्वमेधमखस्यापि स फलं लभते पुमान् ।।5.13.१०।।
मही ददाति यस्तस्मै कृष्टां फलवतीं शुभाम् ।।
स तारयति वै वंश्यान्दश पूर्वान्दशापरान् ।।११।।
इह भुक्त्वाखिलान्कामानंते दिव्यशरीरवान् ।।
विमानेन च दिव्येन शिवलोकं स गच्छति ।।१२।।
न यज्ञैस्तुष्टिमायांति देवाः प्रोक्षणकैरपि ।।
बलिभिः पुष्पपूजाभिर्यथा पुस्तकवाचनैः ।। १३ ।।
शंभोरायतने यस्तु कारयेद्धर्मपुस्तकम् ।।
विष्णोरर्कस्य कस्यापि शृणु तस्यापि तत्फलम् ।।१४।।
राजसूयाश्वमेधानां फलमाप्नोति मानवः ।।
सूर्यलोकं च भित्त्वाशु ब्रह्मलोकं स गच्छति ।। १५ ।।
स्थित्वा कल्पशतान्यत्र राजा भवति भूतले ।।
भुंक्ते निष्कंटकं भोगान्नात्र कार्या विचारणा ।।१६।।

अश्वमेधसहस्रस्य यत्फलं समुदाहृतम् ।।
तत्फलं समावाप्नोति देवाग्रे यो जपं चरेत् ।। १७ ।।
इतिहासपुराणाभ्यां शम्भोरायतने शुभे ।।
नान्यत्प्रीतिकरं शंभोस्तथान्येषां दिवौकसाम् ।। १८ ।।
तस्मात्सर्वप्रयत्नेन कार्यं पुस्तकवाचनम् ।।
तथास्य श्रवणं प्रेम्णा सर्वकामफलप्रदम् ।।१९।।
पुराणश्रवणाच्छंभोर्निष्पापो जायते नरः ।।
भुक्त्वा भोगान्सुविपुलाञ्छिवलोकमवाप्नुयात् ।।5.13.२०।।
राजसूयेन यत्पुण्यमग्निष्टोमशतेन च ।।
तत्पुण्यं लभते शंभोः कथाश्रवणमात्रतः ।। २१ ।।
सर्वतीर्थावगाहेन गां कोटिप्रदानतः ।।
तत् फलं लभते शंभोः कथाश्रवणतो मुने ।। २२ ।।
ये शृण्वंति कथां शंभोस्सदा भुवनपावनीम् ।।
ते मनुष्या न मंतव्या रुद्रा एव न संशयः ।। २३ ।।
शृण्वतां शिवसत्कीर्तिं सतां कीर्तयतां च ताम् ।।
पदाम्बुजरजांस्येव तीर्थानि मुनयो विदुः ।।२४।।
गंतुं निःश्रेयसं स्थानं येऽभिवांछन्ति देहिनः ।।
कथां पौराणिकीं शैवीं भक्त्या शृण्वंतु ते सदा ।।२५।।
कथां पौराणिकीं श्रोतुं यद्यशक्तस्सदा भवेत् ।।
नियतात्मा प्रतिदिनं शृणुयाद्वा मुहूर्तकम् ।।२६।।
यदि प्रतिदिनं श्रोतुमशक्तो मानवो भवेत् ।।
पुण्यमासादिषु मुने शृणुयाच्छांकरीं कथाम् ।।२७।।
शैवीं कथां हि शृण्वानः पुरुषो हि मुनीश्वर ।।
स निस्तरति संसारं दग्ध्वा कर्ममहाटवीम् ।।२८।।
कथां शैवीं मुहूर्तं वा तदर्द्धं क्षणं च वा ।।
ये शृण्वxति नरा भक्त्या न तेषां दुर्गतिर्भवेत् ।।२९।।
यत्पुण्यं सर्वदानेषु सर्वयज्ञेषु वा मुने ।।
शंभोः पुराणश्रवणात्तत्फलं निश्चलं भवेत् ।।5.13.३०।।
विशेषतः कलौ व्यास पुराणश्रवणादृते ।।
परो धर्मो न पुंसां हि मुक्तिध्यानपरः स्मृतः ।।३१।।
पुराणश्रवणं शम्भोर्नामसंकीर्तनं तथा ।।
कल्पद्रुमफलं रम्यं मनुष्याणां न संशयः ।। ३२ ।।
कलौ दुर्मेधसां पुंसां धर्माचारोज्झितात्मनाम् ।।

हिताय विदधे शम्भुः पुराणाख्यं सुधारसम् ।।३३।।
एकोऽजरामरस्याद्वै पिबन्नेवामृतं पुमान् ।।
शम्भोः कथामृतापानात्कुलमेवाजरामरम् ।।३४।।
या गतिः पुण्यशीलानां यज्वनां च तपस्विनाम् ।।
सा गतिस्सहसा तात पुराणश्रवणात्खलु ।।३५।।
ज्ञानवाप्तिर्यदा न स्याद्योगशास्त्राणि यत्नतः ।।
अध्येतव्यानि पौराणं शास्त्रं श्रोतव्यमेव च।।३६।।
पापं संक्षीयते नित्यं धर्म्मश्चैव विवर्द्धते।।
पुराणश्रवणाज्ज्ञानी न संसारं प्रपद्यते।।३७।।
अतएव पुराणानि श्रोतव्यानि प्रयत्नतः ।।
धर्मार्थकामलाभाय मोक्षमार्गाप्तये तथा ।। ३८ ।।
यज्ञैर्दानैस्तपोभिस्तु यत्फलं तीर्थसेवया ।।
तत्फलम समवाप्नोति पुराणश्रवणान्नरः ।।३९।।
न भवेयुः पुराणानि धर्ममार्गे क्षणानि तु ।।
यद्यत्र यद्व्रती स्थाता चात्र पारत्रकी कथाम्।।5.13.४०।।
षड्विंशतिपुराणानां मध्येऽप्येकं शृणोति यः ।।
पठेद्वा भक्तियुक्तस्तु स मुक्तो नात्र संशयः।।४१।।
अन्यो न दृष्टस्सुखदो हि मार्गः पुराणमार्गो हि सदा वरिष्ठः ।।
शास्त्रं विना सर्वमिदं न भाति सूर्य्येण हीना इव जीवलोकाः।।४२।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां पुराणमाहात्म्यवर्णनंनाम त्रयोदशोऽध्यायः ।।१३।।

सनत्कुमार उवाच ।।
शस्तानि घोरदानानि महादानानि नित्यशः।।
पात्रेभ्यस्तु प्रदेयानि आत्मानं तारयंति च।।१।।
हिरण्यदानं गोदानं भूमिदानं द्विजोत्तम।।
गृह्णंतो वै पवित्राणि तारयंति स्वमेव तम् ।।२।।
सुवर्णदानं गोदानं पृथिवीदानमेव च।।
एतानि श्रेष्ठदानानि कृत्वा पापैः प्रमुच्यते।।३।।
तुलादानानि शस्तानि गावः पृथ्वी सरस्वती ।।
द्वे तु तुल्यबले शस्ते ह्यधिका च सरस्वती।।४।।
नित्य ह्यनुडुहो गावच्छत्रं वस्त्रमुपानहौ ।।
देयानि याचमानेभ्यः पानमन्नं तथैव च ।।५।।
संकल्पविहितोयोऽर्थो ब्राह्मणेभ्यः प्रदीयते ।।
अर्थिभ्योऽपीडितेभ्यश्च मनस्वी तेन जायते ।। ६ ।।
कनकं च तिला नागाः कन्या दासी गृहं रथः ।।
मणयः कपिला गावो महादानानि वै दश ।। ७ ।।
गृहीत्वैतानि सर्वाणि ब्राह्मणो ज्ञानवित्सदा ।।
वदान्यांस्तारयेत्सद्यो ह्यात्मानं च न संशयः ।।८।।
सुवर्णं ये प्रयच्छंति नराश्शुद्धेन चेतसा ।।
देवतास्तं प्रयच्छंति समंतादिति मे श्रुवम् ।। ९ ।।
अग्निर्हि देवतास्सर्वाः सुवर्णं च हुताशनः ।।
तस्मात्सुवर्णं दत्त्वा च दत्तास्स्युस्सर्वदेवताः ।। 5.14.१० ।।
पृथ्वीदानं महाश्रेष्ठं सर्वकामफलप्रदम् ।।
सौवर्णं च विशेषेण यत्कृतं पृथुना पुरा ।। ११ ।।
दीयमानां प्रपश्यंति पृथ्वीं रुक्मसमन्विताम् ।।
सर्वपापविनिर्मुक्तास्ते यांति परमां गतिम् ।। १२ ।।
अथान्यच्च प्रवक्ष्यामि दानं सर्वोत्तमं मुने ।।
कांतारं यन्न पश्यंति यमस्य बहुदुःखदम् ।। १३ ।।
कुर्यात्कांतारदानं हि विधिना शुद्धमानसः ।।
न्यायार्जितेन द्रव्येण वित्तशाठ्यविवर्जितः ।।१४।।
तिलप्रस्थमयीं कृत्वा धेनुं सर्वगुणान्विताम् ।।
धेनुवत्सं सुवर्णं च सुदिव्यं सर्वलक्षणम् ।।१५।।
पद्ममष्टदलं कृत्वा कुंकुमाक्ताक्षतैश्शुभैः ।।
पूजयेत्तत्र रुद्रादीन्सर्वान्देवान्सुभक्तितः ।।१६।।

एवं संपूज्य तां दद्याद्ब्राह्मणाय स्वशक्तितः ।।
सरत्नां सहिरण्यां च सर्वाभरणभूषिताम् ।।१७।।
ततो नक्तं समश्नीयाद्दीपान्दद्यात्तु विस्तरात् ।।
कार्तिक्यामिति कर्तव्यं पूर्णिमायां प्रयत्नतः ।। १८ ।।
एवं यः कुरुते सम्यग्विधानेन स्वशक्तितः ।।
यममार्गभयं घोरं नरकं च न पश्यति ।। १९ ।।
कृत्वा पापान्यशेषाणि सबंधुस्ससुहृज्जनः ।।
दिवि संक्रीडते व्यास यावदिन्द्राश्चतुर्दश ।। 5.14.२० ।।
विधितो गोश्च दानं वै सर्वोत्तममिह स्मृतम् ।।
न तेन सदृशं व्यास परं दानं प्रकीर्तितम् ।।२१।।
प्रयच्छते यः कपिलां सवत्सां स्वर्णशृंगिकाम् ।।
कांस्यपात्रां रौप्यखुरां सर्वलक्षणलक्षिताम् ।। २२ ।।
तैस्तैर्गुणैः कामदुघा भूत्वा सा गौरुपैति तम्।।
प्रदातारं नरं व्यास परत्रेह च जन्मनि ।।२३।।
यद्यदिष्टतमं लोके यदस्ति दयितं गृहे।।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता।।२४।।
तुलापुरुषदानं हि दानानां दानमुत्तमम्।।
तुलासंरोहणं कार्यं यदीच्छेच्छ्रेय आत्मनः।।२५।।
यत्कृत्वा मुच्यते पापैर्वधबंधकृतोद्भवैः ।।
तुलादानं महत्पुण्यं सर्वपापक्षयंकरम् ।।२६।।
कृत्वा पापान्यशेषाणि तुलादानं करोति यः।।
सर्वैस्तु पातकैर्मुक्तः स दिवं यात्यसंशयम्।।२७।।
पापं कृतं यद्दिवसे निशायां द्विसंध्ययोर्मध्यदिने निशांते।।
कालत्रये कायमनोवचोभिस्तुलापुमान्वै तदपाकरोति।।२८।।
बालेन वृद्धेन मया हि यूना विजानता ज्ञानपरेण पापम्।।
तत्सर्वमेवाशु कृतं मदीयं तुलापुमान्वै हरतु स्मरारिः।।२९।।
पात्रे प्रयुक्तं द्रविणं मयाऽद्य प्रमाणपूर्णं निहितं तुलायाम्।।
तेनैव सार्धं तु ममावशेषं कृताकृतं यत्सुकृतं समेतु ।।5.14.३०।।
सनत्कुमार उवाच ।।
एवमुच्चार्य्य तं दद्यात् द्विजेभ्यः सर्वदा हितः ।।
नैकस्यापि प्रदातव्यं न निस्तारस्ततो भवेत् ।। ३१ ।।
ददात्येवं तु यो व्यास तुलापुरुषमुत्तमम् ।।

हत्वा पापं दिव्यं तिष्ठेद्यावदिन्द्राश्चतुर्द्दश ।। ३२ ।।

इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां सामान्यदानवर्णनं नाम चतुर्दशोऽध्यायः ।। १४ ।।

व्यास उवाच ।।
येनैकेन हि दत्तेन सर्वेषां प्राप्यते फलम् ।।
दानानां तन्ममाख्या हि मानुषाणां हितार्थतः।।१।।
सनत्कुमार उवाच।।
शृणु कालेः प्रदत्ताद्वै फलं विंदंति मानवाः।।
एकस्मादपि सर्वेषां दानानां तद्वदामि ते ।। २ ।।
दानानामुत्तमं दानं ब्रह्माण्डं खलु मानवैः ।।
दातव्यं मुक्तिकामैस्तु संसारोत्तारणाय वै ।। ३ ।।
ब्रह्मांडे सकलं दत्तं यत्फलं लभते नरः ।।
तदेकभावादाप्नोति सप्तलोकाधिपो भवेत् ।। ४ ।।
यावच्चन्द्रदिवाकरौ नभसि वै यावत्स्थिरा मेदिनी
तावत्सोऽपि नरः स्वबांधवयुतस्स्ववर्गौकसामोकसि।।
सर्वेष्वेव मनोनुगेषु ककुभिर्ब्रह्माण्डदः क्रीडते
पश्चाद्याति पदं सुदुर्लभतरं देवैर्मुदे माधवम् ।। ५ ।।
व्यास उवाच ।।
भगवन्ब्रूहि ब्राह्माण्डं यत्प्रमाणं यदात्मकम् ।।
यदाधारं यथाभूतं येन मे प्रत्ययो भवेत् ।। ६ ।।
सनत्कुमार उवाच ।।
मुने शृणु प्रवक्ष्यामि यदुत्सेधं तु विस्तरम् ।।
ब्रह्माण्डं तत्तु संक्षेपाच्छ्रुत्वा पापात्प्रमुच्यते ।।७।।
यत्तत्कारणमव्यक्तं व्यक्तं शिवमनामयम् ।।
तस्मात्संजायते ब्रह्मा द्विधाभूताद्धि कालतः ।।८।।
ब्राह्माण्डं सृजति ब्रह्मा चतुर्द्दशभवात्मकम् ।।
तद्वच्मि क्रमतस्तात समासाच्छृणु यत्नतः ।।९।।
पातालानि तु सप्तैव भुवनानि तथोर्द्ध्वतः ।।
उच्छ्रायो द्विगुणस्तस्य जलमध्ये स्थितस्य च ।। 5.15.१० ।।
तस्याधारः स्थितो नागस्स च विष्णुः प्रकीर्तितः ।।
ब्रह्मणो वचसो हेतोर्बिभर्ति सकलं त्विदम् ।। ११ ।।
शेषस्यास्य गुणान् वक्तुं न शक्ता देवदानवाः ।।
योनंतः पठ्यते सिद्धैर्देवर्षिगणपूजितः ।। १२ ।।
शिरःसाहस्रयुक्तस्स सर्वा विद्योतयन्दिशः ।।
फणामणिसहस्रेण स्वस्तिकामलभूषणः ।। १३ ।।
मदाघूर्णितनेत्रोऽसौ साग्निश्श्वेत इवाचलः ।।

स्रग्वी किरीटी ह्याभाति यस्सदैवैक कुंडलः ।। १४ ।।
सायं गंगाप्रवाहेण श्वेतशैलोपशोभितः ।।
नीलवासा मदोद्रिक्तः कैलासाद्रिरिवापरः ।। १५ ।।
लांगलासक्तहस्ताग्रो बिभ्रन्मुसलमुत्तमम्।।
योऽर्च्यते नागकन्याभिस्स्वर्णवर्णाभिरादरात् ।।१६।।
संकर्षणात्मको रुद्रो विषानलशिखोज्ज्वलः ।।
कल्पांते निष्क्रमन्ते यद्वक्त्रेभ्योऽग्निशिखा मुहुः ।।
दग्ध्वा जगत्त्रयं शान्ता भवंतीत्यनुशुश्रुम ।। १७ ।।
आस्ते पातालमूलस्थस्स शेषः क्षितिमण्डलम् ।।
बिभ्रत्स्वपृष्ठे भूतेशश्शेषोऽशेषगुणार्चितः ।।१८।।
तस्य वीर्यप्रभावश्च साकांक्षैस्त्रिदशैरपि ।।
न हि वर्णयितुं शक्यः स्वरूपं ज्ञातुमेव वा ।। १९ ।।
आस्ते कुसुममालेव फणामणिशिलारुणा ।।
यस्यैषा सकला पृथ्वी कस्तद्वीर्यं वदिष्यति ।।5.15.२०।।
यदा विजृम्भतेऽनंतो मदाघूर्णितलोचनः ।।
तदा चलति भूरेषा साद्रितोयाधिकानना ।।२१।।
दशसाहस्रमेकैकं पातालं मुनि सत्तम ।।
अतलं वितलं चैव सुतलं च रसातलम् ।। २२ ।।
तलं तलातलं चाग्र्यं पातालं सप्तमं मतम् ।।
भूमेरधस्सप्त लोका इमे ज्ञेया विचक्षणैः।।२३।।
उच्छ्रायो द्विगुणश्चैषां सर्वेषां रत्नभूमयः ।।
रत्नवन्तोऽथ प्रासादा भूमयो हेमसंभवाः।।२४।।
तेषु दानवदैतेया नागानां जातयस्तथा ।।
निवसंति महानागा राक्षसा दैत्यसंभवाः ।।२५।।
प्राह स्वर्गसदोमध्ये पातालानीति नारदः ।।
स्वर्लोकादति रम्याणि तेभ्योऽसावागतो दिवि।।२६।।
नानाभूषणभूषासु मणयो यत्र सुप्रभाः ।।
आह्लादकानि शुभ्राणि पातालं केन तत्समम्।।२७।।
पाताले कस्य न प्रीतिरितश्चेतश्च शोभितम् ।।
देवदानवकन्याभिर्विमुक्तस्याभिजायते ।। २८ ।।
दिवार्करश्मयो यत्र न भवंति विधो निशि ।।
न शीतमातपो यत्र मणितेजोऽत्र केवलम् ।। २९ ।।
भक्ष्यभोज्यान्नपानानि भुज्यंते मुदितैर्भृशम् ।।

यत्र न जायते कालो गतोऽपि मुनिसत्तम ।।5.15.३०।।
पुंस्कोकिलरुतं यत्र पद्मानि कमलाकराः ।।
नद्यस्सरांसि रम्याणि ह्यन्योन्यविचराणि च ।।३१।।
भूषणान्यतिशुभ्राणि गंधाढ्यं चानुलेपनम् ।।
वीणावेणुमृदंगानां स्वना गेयानि च द्विज।।३२।।
दैत्योरगैश्च भुज्यंते पाताले वै सुखानि च ।।
तपसा समवाप्नोति दानवैस्सिद्धमानवैः।।३३।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां ब्रह्माण्डकथने पाताललोकवर्णनं नाम पंचदशोऽध्यायः।।१५।।

सनत्कुमार उवाच।।
तेषां मूर्द्धोपरिष्टाद्वै नरकांस्ताञ्छृणुष्व च।।
मत्तो मुनिवरश्रेष्ठ पच्यंते यत्र पापिनः ।।१।।
रौरवश्शूकरो रोधस्तालो विवसनस्तथा ।।
महाज्वालस्तप्तकुंभो लवणोपि विलोहितः।।२।।
वैतरणी पूयवहा कृमिणः कृमिभोजनः ।।
असिपत्रवनं घोरं लालाभक्षश्च दारुणः ।। ३ ।।
तथा पूयवहः प्रायो बहिर्ज्वालो ह्यधश्शिराः ।।
संदंशः कालसूत्रश्च तमश्चावीचिरो धनः ।। ४ ।।
श्वभोजनोऽथ रुष्टश्च महारौरवशाल्मली ।।
इत्याद्या बहवस्तत्र नरका दुःखदायकाः ।। ५ ।।
पच्यंते तेषु पुरुषाः पापकर्मरतास्तु ये ।।
क्रमाद्वक्ष्ये तु तान् व्यास सावधानतया शृणु ।। ६ ।।
कूटसाक्ष्यं तु यो वक्ति विना विप्रान् सुरांश्च गाः ।।
सदाऽनृतं वदेद्यस्तु स नरो याति रौरवम्।। ७ ।।
भ्रूणहा स्वर्णहर्ता च गोरोधी विश्वघातकः ।।
सुरापो ब्रह्महंता च परद्रव्यापहारकः ।। ८ ।।
यस्तत्संगी स वै याति मृतो व्यास गुरोर्वधात् ।।
ततः कुंभे स्वसुर्मातुर्गोश्चैव दुहितुस्तथा ।। ९ ।।
साध्व्या विक्रयकृच्चाथ वार्द्धकी केशविक्रयी ।।
तप्तलोहेषु पच्यंते यश्च भक्तं परित्यजेत् ।। 5.16.१० ।।
अवमंता गुरूणां यः पश्चाद्भोक्ता नराधमः ।।
देवदूषयिता चैव देवविक्रयिकश्च यः ।। ११ ।।
अगम्यगामी यश्चांते याति सप्तबलं द्विज ।।
चौरो गोघ्नो हि पतितो मर्यादादूषकस्तथा ।। १२ ।।।
देवद्विजपितृद्वेष्टा रत्नदूषयिता च यः ।।
स याति कृमिभक्षं वै कृमीनत्ति दुरिष्टकृत् ।।१३।।
पितृदेवसुरान् यस्तु पर्यश्नाति नराधमः।।
लालाभक्षं स यात्यज्ञो यश्शस्त्रकूटकृन्नरः ।।१४।।
यश्चांत्यजेन संसेव्यो ह्यसद्ग्राही तु यो द्विजः ।।
अयाज्ययाजकश्चैव तथैवाभक्ष्य भक्षकः।। १५ ।।
रुधिरौघे पतंत्येते सोमविक्रयिणश्च ये।।
मधुहा ग्रामहा याति क्रूरां वैतरणीं नदीम् ।। १६ ।।

नवयौवनमत्ताश्च मर्यादाभेदिनश्च ये ।।
ते कृत्यं यांत्यशौचाश्च कुलकाजीविनश्च ये ।। १७ ।।
असिपत्रवनं याति वृक्षच्छेदी वृथैव यः।।
क्षुरभ्रका मृगव्याधा वह्निज्वाले पतंति ते ।। १८ ।।
भ्रष्टाचारो हि यो विप्रः क्षत्रियो वैश्य एव च ।।
यात्यंते द्विज तत्रैव यः श्वपाकेषु वह्निदः ।। १९ ।।
व्रतस्य लोपका ये च स्वाश्रमाद्विच्युताश्च ये।।
संदंशयातनामध्ये पतंति भृशदारुणे।।5.16.२०।।
वीर्यं स्वप्नेषु स्कंदेयुर्ये नरा ब्रह्मचारिणः।।
पुत्रा नाध्यापिता यैश्च ते पतंति श्वभोजने ।। २१ ।।
एते चान्ये च नरकाः शतशोऽथ सहस्रशः ।।
येषु दुष्कृतकर्माणः पच्यते यातनागताः ।। २२ ।।
तथैव पापान्येतानि तथान्यानि सहस्रशः ।।
भुज्यंते यानि पुरुषैर्नरकांतरगोचरैः ।।२३।।
वर्णाश्रमविरुद्धं च कर्म कुर्वंति ये नराः।।
कर्मणा मनसा वाचा निरये तु पतंति ते।।२४।।
अधश्शिरोभिर्दृश्यंते नारका दिवि दैवतैः।।
देवानधोमुखान्सर्वानधः पश्यंति नारकाः ।।२५।।
स्थावराः कृमिपाकाश्च पक्षिणः पशवो मृगाः ।।
धार्मिकास्त्रिदशास्तद्वन्मोक्षिणश्च यथाक्रमम्।।२६।।
यावंतो जंतवस्स्वर्गे तावंतो नरकौकसः ।।
पापकृद्याति नरकं प्रायश्चित्तपराङ्मुखः ।।२७।।
गुरूणि गुरुभिश्चैव लघूनि लघुभिस्तथा ।।
प्रायश्चित्तानि कालेय मनुस्स्वायम्भुवोऽब्रवीत्।।२८।।
यानि तेषामशेषाणां कर्माण्युक्तानि तेषु वै।।
प्रायश्चित्तमशेषेण हरानुस्मरणं परम् ।।२९।।
प्रायश्चित्तं तु यस्यैव पापं पुंसः प्रजायते।।
कृते पापेऽनुतापोऽपि शिवसंस्मरणं परम्।।5.16.३०।।
माहेश्वरमवाप्नोति मध्याह्नादिषु संस्मरन्।।
प्रातर्निशि च संध्यायां क्षीणपापो भवेन्नरः।।३१।।
मुक्तिं प्रयाति स्वर्गं वा समस्तक्लेशसंक्षयम।।
शिवस्य स्मरणादेव तस्य शंभोरुमापतेः ।। ३२ ।।
पापन्तरायो विप्रेन्द्र जपहोमार्चनादि च ।।

भवत्येव न कुत्रापि त्रैलोक्ये मुनिसत्तम ।। ३३ ।।
महेश्वरे मतिर्यस्य जपहोमार्चनादिपु ।।
यत्पुण्यं तत्कृतं तेन देवेन्द्रत्वादिकं फलम् ।।३४।।
पुमान्न नरकं याति यः स्मरन्भक्तितो मुने ।।
अहर्निशं शिवं तस्मात्स क्षीणाशेषपातकः ।। ३५ ।।
नरकस्वर्गसंज्ञाये पापपुण्ये द्विजोत्तम ।।
ययोस्त्वेकं तु दुःखायान्यत्सुखायोद्भवाय च ।।३६।।
तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ।।
तत्स्याद्दुःखात्मकं नास्ति न च किंचित्सुखात्मकम् ।।३७।।
मनसः परिणामोऽयं सुखदुःखोपलक्षणः ।।
ज्ञानमेव परं ब्रह्म ज्ञानं तत्त्वाय कल्पते ।। ३८ ।।
ज्ञानात्मकमिदं विश्वं सकलं सचराचरम् ।।
परविज्ञानतः किंचिद्विद्यते न परं मुने ।। ३९ ।।
एवमेतन्मयाख्यातं सर्वं नरकमण्डलम् ।।
अत ऊर्ध्वं प्रवक्ष्यामि सांप्रतं मंडलं भुवः ।।5.16.४०।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां ब्रह्माण्डवर्णने नरकोद्धारवर्णनं नाम षोडशोऽध्यायः ।।
१६ ।।

सनत्कुमार उवाच ।।
पाराशर्य्य सुसंक्षेपाच्छृणु त्वं वदतो मम ।।
मण्डलं च भुवस्सम्यक् सप्तद्वीपादिसंयुतम् ।। १ ।।
जंबू प्लक्षश्शाल्मलिश्च कुशः क्रौञ्चश्च शाककः ।।
पुष्पकस्सप्तमस्सर्वे समुद्रैस्सप्तभिर्वृताः ।। २ ।।
लवणेक्षुरसौ सर्पि**र्दधि**दुग्धजलाशयाः।।
जम्बुद्वीपस्समस्तानामेतेषां मध्यतः स्थितः ।। ३ ।।
तस्यापि मेरुः कालेयमध्ये कनकपर्वतः ।।
प्रविष्टः षोडशाधस्ताद्योजनैस्तस्य चोच्छ्रयः ।।४।।
चतुरशीतिमानैस्तैर्द्वात्रिंशन्मूर्ध्नि विस्तृतः ।।
भूमिपृष्ठस्थशैलोऽयं विस्तरस्तस्य सर्वतः ।।५।।
मूले षोडशसाहस्रः कर्णिकाकार संस्थितः ।।
हिमवान् हेमकूटश्च निषधश्चास्य दक्षिणे ।।६।।
नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः ।।
दशसाहस्रिकं ह्येते रत्नवंतोऽरुणप्रभाः ।।७।।
सहस्रयोजनोत्सेधास्तावद्विस्तारिणश्च ते।।
भारतं प्रथमं वर्षं ततः किंपुरुषं स्मृतम्।।८।।
हरिवर्षं ततो ऽन्यद्वै मेरोर्दक्षिणतो मुने ।।
रम्यकं चोत्तरे पार्श्वे तस्यांशे तु हिरण्मयम्।।९।।
उत्तरे कुरवश्चैव यथा वै भारतं तथा।।
नवसाहस्रमेकैकमेतेषां मुनिसत्तम ।। 5.17.१० ।।
इलावृतं तु तन्मध्ये तन्मध्ये मेरुरुच्छ्रितः ।।
मेरोश्चतुर्द्दिशं तत्र नवसाहस्रमुच्छ्रितम् ।। ११ ।।
इलावृतमृषिश्रेष्ठ चत्वारश्चात्र पर्वताः ।।
विष्कंभा रचिता मेरोर्योजिताः पुनरुच्छ्रिताः ।। १२ ।।
पूर्वे हि मन्दरो नाम दक्षिणे गन्धमादनः ।।
विपुलः पश्चिमे भागे सुपार्श्वश्चोत्तरे स्थितः ।।१३।।
कदंबो जंबुवृक्षश्च पिप्पलो वट एव च ।।
एकादशशतायामाः पादपा गिरिकेतवः ।। १४ ।।
जम्बूद्वीपस्य नाम्नो वै हेतुं शृणु महामुने ।।
विराजंते महावृक्षास्तत्स्वभावं वदामि ते ।। १५ ।।
महागज प्रमाणानि जम्ब्वास्तस्याः फलानि च ।।
पतंति भूभृतः पृष्ठे शीर्य्यमाणानि सर्वतः ।। १६ ।।

रसेन तेषां विख्याता जम्बूनदीति वै ।।
परितो वर्तते तत्र पीयते तन्निवासिभिः ।। १७ ।।
न स्वेदो न च दौर्गंध्यं न जरा चेन्द्रियग्रहः ।।
तस्यास्तटे स्थितानान्तु जनानां तन्न जायते ।।१८।।
तीरमृत्स्नां च सम्प्राप्य मुखवायुविशोषिताम् ।।
जाम्बूनदाख्यं भवति सुवर्णं सिद्धभूषणम्।। १९ ।।
भद्राश्वं पूर्वतो मेरोः केतुमालं च पश्चिमे ।।
वर्षे द्वे तु मुनिश्रेष्ठ तयोर्मध्य इलावृतम् ।। 5.17.२० ।।
वनं चैत्ररथं पूर्वे दक्षिणे गन्धमादनः ।।
विभ्राजं पश्चिमे तद्वदुत्तरे नन्दनं स्मृतम् ।। २१ ।।
अरुणोदं महाभद्रं शीतोदं मानसं स्मृतम् ।।
सरांस्येतानि चत्वारि देवभोग्यानि सर्वशः ।। २२ ।।
शीतांजनः कुरुंगश्च कुररो माल्यवांस्तथा ।।
चैकैकप्रमुखा मेरोः पूर्वतः केसराचलाः।।२३।।
त्रिकूटश्शिशिरश्चैव पतंगो रुचकस्तथा।।
निषधः कपिलायाश्च दक्षिणे केसराचलाः।।२४।।
**सिनी** वासः कुसुंभश्च कपिलो नारदस्तथा ।।
नागादयश्च गिरयः पश्चिमे केसराचलाः।२५।।
शंखचूडोऽथ ऋषभो हंसो नाम महीधरः।।
कालंजराद्याश्च तथा उत्तरे केसराचलाः।।२६।।
मेरोरुपरि मध्ये हि शातकौंभं विधेः पुरम्।।
चतुर्द्दशसहस्राणि योजनानि च संख्यया ।।२७।।
अष्टानां लोकपालानां परितस्तदनुक्रमात्।।
यथादिशं यथारूपं पुरोऽष्टावुपकल्पिताः ।। २८ ।।
तस्यां च ब्रह्मणः पुर्य्यां पातयित्वेन्दुमण्डलम् ।।
विष्णुपादविनिष्क्रांता गंगा पतति वै नदी ।। २९ ।।
सीता चालकनंदा च चक्षुर्भद्रा च वै क्रमात् ।।
सा तत्र पतिता दिक्षु चतुर्द्धा प्रत्यपद्यत ।। 5.17.३० ।।
सीता पूर्वेण शैलं हि नन्दा चैव तु दक्षिणे ।।
सा चक्षुः पश्चिमे चैव भद्रा चोत्तरतो व्रजेत् ।। ३१ ।।
गिरीनतीत्य सकलांश्चतुर्द्दिक्षु महांबुधिम् ।।
सा ययौ प्रयता सूता गंगा त्रिपथगामिनी ।। ३२ ।।
सुनीलनिषधौ यौ तौ माल्यवद्गन्धमादनौ ।।

तेषां मध्यगतो मेरुः कर्णिकाकारसंस्थितः ।। ३३ ।।
भारतः केतुमालश्च भद्राश्वः कुरवस्तथा ।।
पत्राणि लोकपद्मस्य मर्यादालोकपर्वताः ।।३४।।
जठरं देवकूटश्च आयामे दक्षिणोत्तरे ।।
गन्धमादनकैलासौ पूर्वपश्चिमतो गतौ ।। ३५ ।।
पूर्वपश्चिमतो मेरोर्निषधो नीलपर्वतः ।।
दक्षिणोत्तरमायातौ कर्णिकांतर्व्यवस्थितौ ।। ३६ ।।
जठराद्याः स्थिता मेरोर्येषां द्वौ द्वौ व्यवस्थितौ ।।
केसराः पर्वता एते श्वेताद्याः सुमनोरमाः ।।३७।।
शैलानामुत्तरे द्रोण्यस्सिद्धचारणसेविताः।।
सुरम्याणि तथा तासु काननानि पुराणि च ।।३८।।
सर्वेषां चैव देवानां यक्षगंधर्वरक्षसाम् ।।
क्रीडंति देवदैतेयाश्शैलप्रायेष्वहर्निशम् ।। ३९ ।।
धर्मिणामालया ह्येते भौमास्स्वर्गाः प्रकीर्तिताः ।।
न तेषु पापकर्तारो यांति पश्यंति कुत्रचित् ।। 5.17.४० ।।
यानि किंपुरुषादीनि वर्षाण्यष्टौ महामुने ।।
न तेषु शोको नापत्त्यो नोद्वेगः क्षुद्भयादिकम् ।। ४१ ।।
स्वस्थाः प्रजा निरातंकास्सर्वदुःखविवर्जिताः ।।
दशद्वादशवर्षाणां सहस्राणि स्थिरायुषः ।। ४२ ।।
कृतत्रेतादिकाश्चैव भौमान्यंभांसि सर्वतः ।।
न तेषु वर्षते देवस्तेषु स्थानेषु कल्पना ।। ४३ ।।
सप्तस्वेतेषु नद्यश्च सुजातास्स्वर्णवा लुकाः ।।
शतशस्संति क्षुद्राश्च तासु क्रीडारता जनाः ।।४४।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां ब्रह्माण्डकथने जम्बूद्वीपवर्षवर्णनं नाम सप्तदशोध्यायः ।। १७ ।।

सनत्कुमार उवाच ।।
वक्ष्येऽहं भारतं वर्षं हिमाद्रेश्चैव दक्षिणे ।।
उत्तरे तु समुद्रस्य भारती यत्र संसृतिः ।।१।।
नवयोजनसाहस्रो विस्तारोऽस्य महामुने ।।
स्वर्गापवर्गयोः कर्मभूमिरेषा स्मृता बुधैः ।।२।।
यतस्संप्राप्यते पुंभिस्स्वर्गो नरक एव च ।।
भारतस्यापि वर्षस्य नव भेदान्ब्रवीमि ते ।। ३ ।।
इंद्रद्युम्नः कसेरुश्च ताम्रवर्णो गभस्तिमान् ।।
नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः ।। ४ ।।
अयं तु नवमस्तेषां द्वीपस्सागरसंभृतः ।।
योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरः ।। ५ ।।
पूर्वे किराता यस्य स्युर्दक्षिणे यवनाः स्थिताः ।।
पश्चिमे च तथा ज्ञेया उत्तरे हि तपस्विनः ।। ६ ।।
ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च भूयशः।।
इज्या युद्धपणा सेवा वर्तयन्तो व्यवस्थिताः ।।७।।
महेंद्रो मलयस्सह्यः सुदामा चर्क्षपर्वतः।।
विंध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः।८।
वेदस्मृतिपुराणाद्याः पारियात्रोद्भवा मुने।।
सर्वपापहरा ज्ञेया दर्शनात्स्पर्शनादपि।९।
नर्मदा सुरसाद्याश्च सप्तान्याश्च सहस्रशः।।
विंध्योद्भवा महानद्यस्सर्वपापहराश्शुभाः।5.18.१०।
गोदावरी भीमरथी तापीप्रमुखनिम्नगाः।।
गिरेर्विनिर्गता ऋक्षात्सद्यः पापभयापहाः ।।११।।
सह्यपादोद्भवा नद्यः कृष्णावेण्यादिकास्तथा ।।
कृतमाला ताम्रपर्णी प्रमुखा मलयोद्भवाः ।।१२।।
त्रियामा चर्षिकुल्याद्या महेन्द्रप्रभवा स्मृताः ।।
ऋषिकुल्या कुमार्य्याद्याः शुक्तिमत्पादसंभवाः।।१३।।
नानाजनपदास्तेषु मंडलेषु वसन्ति वै ।।
आसां पिबंति पानीयं सरत्सु विविधेषु च।।१४।।
चत्वारि भारते वर्षे युगान्यासन्महामुने ।।
कृतादीनि न चान्येषु द्वीपेषु प्रभवंति हि।।१५।।
दानानि चात्र दीयंते सुकृतैश्चात्र याज्ञिकैः ।।
तपस्तपंति यतयः परलोकार्थमादरात् ।।१६।।

यतो हि कर्मभूरेषा जम्बूद्वीपे महामुने ।।
अत्रापि भारतं श्रेष्ठमतोऽन्या भोगभूमयः ।।१७।।
कदाचिल्लभते मर्त्यस्सहस्रैर्मुनिसत्तम ।।
अत्र जन्मसहस्राणां मानुष्यं पुण्यसंचयैः ।।१८।।।
स्वर्गापवर्गास्पदमार्गभूते धन्यास्तु ते भारतभूमिभागे ।।
गायंति देवाः किल गीतकानि भवंति भूयः पुरुषास्सुरास्ते।।१९।।
अवाप्य मानुष्यमयं कदाचिद्विहृत्य शंभोः परमात्मरूपे ।।
फलानि सर्वाणि तु कर्मजानि यास्याम्यहं तत्तनुतां हि तस्य।।5.18.२०।।
आप्स्यंति धन्याः खलु ते मनुष्याः सुखैर्युताः कर्मणि सन्निविष्टाः ।।
जनुर्हि येषां खलु भारतेऽस्ति ते स्वर्गमोक्षोभयलाभवन्तः।।२१।।
लक्षयोजनविस्तारस्समस्तपरिमण्डलः ।।
जम्बूद्वीपो मया ख्यातः क्षारोदधिसुसंवृतः ।।२२।।
संवेष्ट्य क्षारमुदधिं शतसाहस्रसम्मितम् ।।
ततो हि द्विगुणो ब्रह्मन्प्लक्षद्वीपः प्रकीर्तितः ।।२३।।
गोमंतश्चैव चन्द्रश्च नारदो दर्दुरस्तथा ।।
सोमकस्सुमनाश्शैलो वैभ्राजश्चैव सत्तमः ।।२४।।
वर्षाचलेषु रम्येषु सहितास्सततं प्रजाः ।।
वसंति देवगंधर्वा वर्षेष्वेतेषु नित्यशः ।।२५।।
नाधयो व्याधयो वापि जनानां तत्र कुत्रचित् ।।
दश वर्षसहस्राणि तत्र जीवंति मानवाः ।।२६ ।।
अनुतप्ता शिखी चैव पापघ्नी त्रिदिवा कृपा ।।
अमृता सुकृता चैव सप्तैवात्र च निम्नगाः ।। २७ ।।
क्षुद्रनद्यस्तथा शैलास्तत्र संति सहस्रशः ।।
ताः पिबंति सुसंहृष्टा नदीर्जनपदास्तु ते ।। २८ ।।।
न तत्रापि युगावस्था यथास्थानेषु सप्तसु ।।
त्रेतायुगसमः कालस्सर्वदैव महामुने ।।२९।।
विप्रक्षत्रियवैश्यास्ते शूद्राश्च मुनिसत्तम ।।।
कल्पवृक्षसमानस्तु तन्मध्ये सुमहातरुः ।। 5.18.३० ।।
प्लक्षस्तन्नामसंज्ञो वै प्लक्षद्वीपो द्विजोत्तम ।।
इज्यते तत्र भगवाञ्छंकरो लोकशंकरः ।।३१।।
हरिश्च भगवान्ब्रह्मा यन्त्रैर्मन्त्रैश्च वैदिकैः।।
संक्षेपेण तथा भूयश्शाल्मलिं त्वं निशामय ।। ३२ ।।
सप्तवर्षाणि तत्रैव तेषां नामानि मे शृणु ।।

श्वेतोऽथ हरितश्चैव जीमूतो रोहितस्तथा ।। ३३ ।।
वैकलो मानसश्चैव सुप्रभस्सप्तमो मुने ।।
शाल्मलेन तु वृक्षेण द्वीपः शाल्मलिसंज्ञकः ।। ३४ ।।
द्विगुणेन समुद्रेण सततं संवृतः स्थितः ।।
वर्षाभिव्यंजका नद्यस्तासां नामानि मे शृणु ।। ३५ ।।
शुक्ला रक्ता हिरण्या च चन्द्रा शुभ्रा विमोचना ।।
निवृत्तिः सप्तमी तासां पुण्यतोया सुशीतलाः ।। ३६ ।।
सप्तैव तानि वर्षाणि चतुर्वर्णायुतानि च ।।
भगवन्तं सदा शंभुं यजंते विविधैर्मखैः ।। ३७ ।।
देवानां तत्र सान्निध्यमतीव सुमनोरमे ।।
एष द्वीपस्समुद्रेण सुरोदेन समावृतः ।। ३८ ।।
द्विगुणेन कुशद्वीपः समंताद्बाह्यतः स्थितः ।।
वसंति तत्र दैतेया मनुजैस्सह दानवाः ।। ३९ ।।
तथैव देवगन्धर्वा यक्षाः किंपुरुषादयः ।।
वर्णास्तत्रैव चत्वारो निजानुष्ठानतत्पराः ।। 5.18.४० ।।
तत्रैव च कुशद्वीपे ब्रह्माणं च जनार्द्दनम् ।।
यजंति च तथेशानं सर्वकामफलप्रदम् ।। ४१ ।।
कुशेशयो हरिश्चैव द्युतिमान्पुष्पवांस्तथा ।।
मणिद्रुमो हेमशैलस्सप्तमो मन्दराचलः ।। ४२ ।।
नद्यश्च सप्त तासां तु नामानि शृणु तत्त्वतः ।।
धूतपापा शिवा चैव पवित्रा संमितिस्तथा ।। ४३ ।।
विद्या दंभा मही चान्या सर्वपापहरास्त्विमाः ।।
अन्यास्सहस्रशस्संति शुभापो हेमवालुकाः ।। ४४ ।।
कुशद्वीपे कुशस्तम्बो घृतोदेन समावृतः ।।
क्रौञ्चद्वीपो महाभाग श्रूयतां चापरो महान् ।। ४५ ।।
द्विगुणेन समुद्रेण दधिमंडेन चावृतः ।।
वर्षाचला महाबुद्धे तेषां नामानि मे शृणु ।। ४६ ।।
क्रौञ्चश्च वामनश्चैव तृतीयश्चांधकारकः ।।
दिवावृतिर्मनश्चैव पुण्डरीकश्च दुन्दुभिः ।। ४७ ।।
निवसंति निरातंका वर्षशैलेषु तेषु वै ।।
सर्वसौवर्णरम्येषु सुहृद्देवगणैः प्रजाः ।। ४८ ।।
ब्राह्मणाः क्षत्त्रिया वैश्याश्शूद्राश्चानुक्रमोदिताः ।।
संति तत्र महानद्यस्सप्तान्यास्तु सहस्रशः ।।४९।।

गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा ।।
शांतिश्च पुंडरीका च याः पिबन्ति पयश्शुभम् ।।5.18.५०।।
भगवान्पूज्यते तत्र योगरुद्रस्वरूपवान् ।।
दधिमण्डोदकश्चापि शाकद्वीपेन संवृतः।।५१।।
द्विगुणेनाद्रयस्सप्त तेषां नामानि मे शृणु।।
पूर्वे तत्रोदयगिरिर्जलधारः परे यतः ।। ५२ ।।
पृष्ठतोऽस्तगिरिश्चैव ह्यविकेशश्च केसरी ।।
शाकस्तत्र महावृक्षस्सिद्धगंधर्वसेवितः ।।५३।।
तत्र पुण्या जनपदाश्चातुर्वर्ण्यसमन्विताः ।।
नद्यश्चात्र महापुण्यास्सर्वपापभयापहाः ।।५४।।
सुकुमारी कुमारी च नलिनी वेणुका तथा ।।
इक्षुश्च रेणुका चैव गभस्तिस्सप्तमी तथा ।।५५।।
अन्यास्सहस्रशस्तत्र क्षुद्रनद्यो महामुने ।।
महीधरास्तथा संति शतशोऽथ सहस्रशः ।। ५६ ।।
धर्महानिर्न तेष्वस्ति स्वर्गादागत्य मानवाः ।।
वर्षेषु तेषु पृथिवीं विहरन्ति परस्परम् ।।५७।।
शाकद्वीपे तु वै सूर्य्यः प्रीत्या जनपदैस्सदा ।।
यथोक्तैरिज्यते सम्यक्कर्मभिर्नियतात्मभिः ।। ५८ ।।
क्षीरोदेनावृतस्सोऽपि द्विगुणेन समंततः ।।
क्षीराब्धिस्सर्वतो व्यास पुष्कराख्येन संवृतः ।। ५९ ।।
द्विगुणेन महावर्षस्तत्र ख्यातोऽत्र मानसः।।
योजनानां सहस्राणि पंचैवोर्ध्वसमुच्छ्रितः ।। 5.18.६० ।।
तानि चैव तु लक्षाणि सर्वतो वलयाकृति।।
पुष्करद्वीपवलयो मध्येन विभजंति च।।६१।
तेनैव वलया कारा द्वीपवर्षसमाकृतिः।।
दशवर्षसहस्राणि तत्र जीवंति मानवाः।।६२।।
निरामया वीतशोका रागद्वेषविवर्जिताः।।
अधर्मो न मतस्तेषां न बंधवधकौ मुने ।। ६३ ।।
सत्यानृते न तस्यास्तां सदैव वसतिस्सदा ।।
तुल्यवेषास्तु मनुजा हेमवर्णैकरूपिणः ।। ६४ ।।
वर्षश्चायं तु कालेय भौम स्वर्गोपमो मतः ।।
सर्वस्य सुखदः काले जरारोगविवर्जितः ।। ६५ ।।
पुष्करे धातकीखण्डे महावीते महामुने ।।।

न्यग्रोधं पुष्करद्वीपे ब्रह्मणः स्थानमुत्तमम् ।।६६।।
तस्मिन्निवसते ब्रह्मा पूज्यमानस्सुरासुरैः।।
स्वादूदकेनांबुधिना पुष्करः परिवेष्टितः।। ।। ६७ ।।
एवं द्वीपास्समुद्रैस्तु सप्त सप्तभिरावृताः ।।
द्वीपाश्चैव समुद्राश्च समाना द्विगुणैः परैः ।। ६८ ।।
उक्तातिरिक्तता तेषां समुद्रेषु समानि वै ।।
पयांसि सर्वदाऽल्पत्वं **जायते** न कदाचन।६९।।
स्थालीस्थमग्निसंयोगादधःस्थं मुनिसत्तमः ।।
तथेन्दुवृद्धौ सलिलमूर्द्ध्वगं भवति ध्रुवम् ।।5.18.७०।।
उदयास्तमनेत्विंदोर्वर्द्धंत्यापो ह्रसन्ति च ।।
अतो न्यूनातिरिक्ताश्च पक्षयोः शुक्लकृष्णयोः ।। ७१ ।।
अपां वृद्धिक्षयौ दृष्टौ शतशस्तु दशोत्तरम्।।
समुद्राणां मुनिश्रेष्ठो सर्वेषां कथितं तव।।७२।।
भोजनं पुष्करद्वीपे प्रजास्सर्वाः सदैव हि ।।
खंडस्य कुर्वते विप्र तत्र स्वयमुपस्थितम् ।।७३।।
स्वांगदो यस्य पुरतो नास्ति लोकस्य संस्थितिः।।
द्विगुणा हिरण्मयी भूमिस्सर्वजंतुविवर्जिता।।७४।।
लोकालोकस्ततश्शैलस्सहस्राण्यचलो हि सः।।
उच्छ्रयेण हि तावंति योजनायुतविस्तृतः ।।७५।।।
तमश्चांडकटाहेन सेयमुर्वी महामुने ।।
पंचाशत्कोटिविस्तारा सद्वीपा समहीधरा ।।७६।।
आधारभूता सर्वेषां सर्वभूतगुणाधिका।।
सेयं धात्री च कालेय सर्वेषां जगतामिला।।७७।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां ब्रह्माण्डकथने सप्तदीपवर्णनं नामाष्टादशोऽध्यायः।।
१८।।

सनत्कुमार उवाच ।।
रविचन्द्रमसोर्यावन्मयूखा भासयंति हि।।
तावत्प्रमाणा पृथिवी भूलोकस्स तु गीयते ।।१।।
भूमेर्योजनलक्षे तु संस्थितं रविमण्डलम् ।।
योजनानां सहस्राणि सदैव परिसंख्यया।।२।।
शशिनस्तु प्रमाणाय जगतः परिचक्षते।।
रवेरूर्ध्वं शशी तस्थौ लक्षयोजनसंख्यया।।३।।
ग्रहाणां मण्डलं कृत्स्नं शशेरुपरि संस्थितम्।।
सनक्षत्रं सहस्राणि दशैव परितोपरि ।।४।।
बुधस्तस्मादथो काव्यस्तस्माद्भौमस्य मण्डलम्।।
बृहस्पतिस्तदूर्ध्वं तु तस्योपरि शनैश्चरः।।५।।
सप्तर्षिमण्डलं तस्माल्लक्षेणैकेन संस्थितम् ।।
ऋषिभ्य तु सहस्राणां शतादूर्ध्वं ध्रुवः स्थितः ।।६।।
मेढीभूतस्स यस्तस्य ज्योतिश्चक्रस्य वै ध्रुवः।।
भूर्भुवःस्वरिति ज्ञेयं भुव ऊर्ध्वं ध्रुवादवाक्।।७।।
एकयोजनकोटिस्तु यत्र ते कल्पवासिनः।।
ध्रुवादूर्ध्वं महर्लोकस्सप्तैते ब्रह्मणस्सुताः।।८।।
सनकश्च सनन्दश्च तृतीयश्च सनातनः।।
कपिलश्चासुरिश्चैव वोढुः पंचशिखस्तथा।।९।।
उपरिष्टात्ततश्शुक्रो द्विलक्षाभ्यंतरे स्थितः।।
द्विलक्षयोजनं तस्मादधः सोमसुतः स्मृतः ।।5.19.१०।।
द्विलक्षयोजनं तस्मादूर्ध्वं भौमस्स्थितो मुने।।
द्विलक्षयोजनं तस्मादूर्ध्वं जीवः स्थितो गुरु ।।११।।
द्विलक्षयोजनं जीवादूर्ध्वं सौरिर्व्यवस्थितः ।।
एते सप्तग्रहाः प्रोक्तास्स्वस्वराशिव्यवस्थिता ।। १२ ।।
रुद्रलक्षैर्योजनतस्सप्तोर्ध्वमृषयः स्थिताः ।।
विश्वलक्षैर्योजनतो ध्रुवस्थितिरुदाहृता ।। १३ ।।
चतुर्गुणोत्तरे चार्द्धे जनलोकात्तपः स्मृतम् ।।
वैराजा यत्र देवा वै स्थिता दाहविवर्जिताः ।। १४ ।।
षड्गुणेन तपोलोकात्सत्यलोको व्यवस्थितः ।।
ब्रह्मलोकः स विज्ञेयो वसंत्यमलचेतसः ।।१५।।
सत्यधर्मरताश्चैव ज्ञानिनो ब्रह्मचारिणः।।
यद्गामिनोऽथ भूलोकान्निवसंति हि मानवाः ।।१६।।

भुवर्लोके तु संसिद्धा मुनयो देवरूपिणः ।।
स्वर्गलोके सुरादित्या मरुतो वसवोऽश्विनौ ।। १७ ।।
विश्वेदेवास्तथा रुद्रास्साध्या नागाः खगादयः ।।
नवग्रहास्ततस्तत्र ऋषयो वीतकल्मषाः ।।१८।।
एते सप्त महालोकाः कालेय कथितास्तव ।।
पातालानि च सप्तैव ब्रह्माण्डस्य च विस्तरः ।। १९ ।।
दधिवृक्षफलं यद्वद्वृत्तिश्चोर्ध्वमधस्तथा ।।
एतदंडकटाहेन सर्वतो वै समावृतम् ।।5.19.२०।।
दशगुणेन पयसा सर्वतस्तत्समावृतम् ।।
वह्निना वायुना चापि नभसा तमसा तथा ।।२१।।
भूतादिनापि महता दिग्गुणोत्तरवेष्टितः ।।
महांतं च समावृत्य प्रधानं पुरुषः स्थितः ।।२२।।
अनंतस्य न तस्यास्ति संख्यापि परमात्मनः ।।
तेनानंत इति ख्यातः प्रमाणं नास्ति वै यतः ।।२३।।
हेतुभूतस्समस्तस्य प्रकृतिस्सा परा मुने ।।
अंडानां तु सहस्राणां सहस्राण्ययुतानि च ।। २४ ।।
ईदृशानां प्रभूतानि तस्मादव्यक्तजन्मनः ।।
दारुण्यग्निस्तिले तैलं पयस्सु च यथा घृतम् ।। २५ ।।
तथासौ परमात्मा वै सर्वं व्याप्यात्मवेदनः ।।
आदिबीजात्प्रसुवते ततस्तेभ्यः परेण्डजाः ।।२६।।
तेभ्यः पुत्रास्तथान्येषां बीजान्यन्यानि वै ततः ।।
महदादयो विशेषांतास्तद्भवंति सुरादयः।।२७।।
बीजाद्वृक्षप्ररोहेण यथा नापचयस्तरोः ।।
सूर्य्यकांतमणेः सूर्य्याद्यद्वद्वह्निः प्रजायते ।।२८।।
तद्वत्संजायते सृष्टिः शिव**स्तत्रः** न कामयेत् ।।
शिवशक्तिसमायोगे देवाद्याः प्रभवंति हि ।।२९।।
तथा स्वकर्मणैकेन प्ररोहमुपयांति वै ।।
ब्रह्मा विष्णुश्च रुद्राश्च स शिवः परिगीयते ।।5.19.३०।।
तस्मादुद्धरते सर्वं यस्मिंश्च लयमेष्यति ।।
कर्ता क्रियाणां सर्वासां स शिवः परिगीयते ।।३१।।
व्यास उवाच ।।
सनत्कुमार सर्वज्ञ छिंधि मे संशयं महत् ।।
सन्ति लोका हि ब्रह्मांडादुपरिष्टान्न वा मुने ।।३२।।

सनत्कुमार उवाच ।।
ब्रह्मांडादुपरिष्टाच्च संति लोका मुनीश्वर ।।
ताञ्छृणु त्वं विशेषेण वच्मि तेऽहं समागतः ।। ३३ ।।
विधिलोकात्परो लोको वैकुंठ इति विश्रुतः ।।
विराजते महादीप्त्या यत्र विष्णुः प्रतिष्ठितः ।। ३४ ।।
तस्योपरिष्टात्कौमारो लोको हि परमाद्भुतः ।।
सेनानीः शंभुतनयो राजते यत्र सुप्रभः ।।३५।।
ततः परमुमालोको महादिव्यो विरा जते।।
यत्र शक्तिर्विभात्येका त्रिदेवजननी शिवा ।।३६।।
परात्परा हि प्रकृती रजस्सत्त्वतमोमयी।।
निर्गुणा च स्वयं देवी निर्विकारा शिवात्मिका ।।३७।।
तस्योपरिष्टाद्विज्ञेयश्शिवलोकस्सनातनः ।।
अविनाशी महादिव्यो महाशोभान्वितस्सदा ।।३८।।
विराजते परं ब्रह्म यत्र शंभुर्महेश्वरः ।।
त्रिदेवजनकस्वामी सर्वेषां त्रिगुणात्परः ।। ३९ ।।
तत ऊर्ध्वं न लोकाश्च गोलोकस्तत्समीपतः ।।
गोमातरस्सुशीलाख्यास्तत्र संति शिवप्रिया ।। 5.19.४० ।।
तत्पालः कृष्णनामा हि राजते शंकराज्ञया ।।
प्रतिष्ठितश्शिवेनैव शक्त्या स्वच्छन्दचारिणा ।।४१।।
शिवलोकोऽद्भुतो व्यास निराधारो मनोहरः ।।
अतिनिर्वचनीयश्च नानावस्तुविराजितः ।। ४२ ।।
शिवस्तु तदधिष्ठाता सर्वदेवशिरोमणिः ।।
विष्णुब्रह्महरैस्सेव्यः परमात्मा निरञ्जनः।।४३।।
इति ते कथिता तात सर्वब्रह्मांडसंस्थितिः ।।
तदूर्ध्वं लोकसंस्थानं किमन्यच्छ्रोतुमिच्छसि।।४४।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां लोकवर्णनंनामैकोनविंशोऽध्यायः।।१९।।।

।। व्यास उवाच ।।
सनत्कुमार सर्वज्ञ तत्प्राप्तिं वद सत्तम ।।
यद्गत्वा न निवर्तंते शिवभक्तियुता नराः ।। १ ।।
।। सनत्कुमार उवाच ।।
पराशरसुत व्यास शृणु प्रीत्या शुभां गतिम् ।।
व्रतं हि शुद्धभक्तानां तथा शुद्धं तपस्विनाम् ।।२।।
ये शिवं शुद्धकर्माणस्सुशुद्धतपसान्विताः ।।
समर्चयन्ति तं नित्यं वन्द्यास्ते सर्वथान्वहम् ।।३।।
नातप्ततपसो यांति शिवलोकमनामयम् ।।
शिवानुग्रहसद्धेतुस्तप एव महामुने।।४।।
तपसा दिवि मोदन्ते प्रत्यक्षं देवतागणाः।।
ऋषयो मुनयश्चैव सत्यं जानीह मद्वचः ।।५।।
सुदुर्द्धरं दुरासाध्यं सुधुरं दुरतिक्रमम्।।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ।। ६ ।।
सुस्थितस्तपसि ब्रह्मा नित्यं विष्णुर्हरस्तथा।।
देवा देव्योऽखिलाः प्राप्तास्तपसा दुर्लभं फलम् ।।७।।
येन येन हि भावेन स्थित्वा यत्क्रियते तपः ।।
ततस्संप्राप्यतेऽसौ तैरिह लोके न संशयः ।। ८ ।।
सात्त्विकं राजसं चैव तामसं त्रिविधं स्मृतम् ।।
विज्ञेयं हि तपो व्यास सर्वसाधनसाधनम्।।९।।
सात्त्विकं दैवतानां हि यतीनामूर्द्ध्वरेतसाम् ।।
राजसं दानवानां हि मनुष्याणां तथैव च ।।
तामसं राक्षसानां हि नराणां क्रूरकर्मणाम् ।।5.20.१०।।
त्रिविधं तत्फलं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः ।।
जपो ध्यानं तु देवानामर्चनं भक्तितश्शुभम्।।११।।
सात्त्विकं तद्धि निर्दिष्टमशेषफलसाधकम् ।।
इह लोके परे चैव मनोभिप्रेतसाधनम् ।। १२ ।।
कामनाफलमुद्दिश्य राजसं तप उच्यते ।।
निजदेहं सुसंपीड्य देहशोषकदुस्सहैः ।। १३ ।।
तपस्तामसमुद्दिष्टं मनोभिप्रेतसाधनम् ।। १४ ।।
उत्तमं सात्त्विकं विद्याद्धर्मबुद्धिश्च निश्चला ।।
स्नानं पूजा जपो होमः शुद्धशौचमहिंसनम् ।।१५।।
व्रतोपवासचर्या च मौनमिन्द्रियनिग्रहः ।।

धीर्विद्या सत्यमक्रोधो दानं क्षांतिर्दमो दया ।।१६।।
वापीकूपतडागादेः प्रसादस्य च कल्पना ।।
कृच्छ्रं चांद्रायणं यज्ञस्सुतीर्थान्याश्रमाः पुनः ।। १७ ।।
धर्मस्थानानि चैतानि सुखदानि मनीषिणाम् ।।
सुधर्मः परमो व्यासः शिवभक्तेश्च कारणम् ।।१८।।
संक्रातिविषुवद्योगो नादमुक्ते नियुज्यताम्।।
ध्यानं त्रिकालिकं ज्योतिरुन्मनीभावधारणा ।।१९।।
रेचकः पूरकः कुम्भः प्राणायामस्त्रिधा स्मृतः ।।
नाडीसंचारविज्ञानं प्रत्याहारनिरोधनम् ।।5.20.२०।।
तुरीयं तदधो बुद्धिरणिमाद्यष्टसंयुतम्।।
पूर्वोत्तमं समुद्दिष्टं परज्ञानप्रसाधनम्।।२१।।
काष्ठावस्था मृतावस्था हरितावेति कीर्तिताः।।
नानोपलब्धयो ह्येतास्सर्वपापप्रणाशनाः ।।२२।।
नारी शय्या तथा पानं वस्त्रधूपविलेपनम्।।
ताम्बूलभक्षणं पंच राजैश्वर्य्यविभूतयः ।।२३।।
हेमभारस्तथा ताम्रं गृहाश्च रत्नधेनवः।।
पांडित्यं वेदशास्त्राणां गीतनृत्यविभूषणम्।ा२४।।
शंखवीणामृदंगाश्च गजेन्द्रश्छत्रचामरे।।
भोगरूपाणि चैतानि एभिश्शक्तोऽनुरज्यते ।। २५ ।।
आदर्शवन्मुनेस्नेहैस्तिलवत्स निपीड्यते।।
अरं गच्छेति चाप्येनं कुरुते ज्ञानमोहितः।।२६।।
जानन्नपीह संसारे भ्रमते घटियंत्रवत्।।
सर्वयोनिषु दुःखार्तस्स्थावरेषु चरेषु च।।२७।।
एवं योनिषु सर्वासु प्रतिक्रम्य भ्रमेण त।।
कालांतरवशाद्याति मानुष्यमतिदुर्लभम् ।। २८ ।।
व्युत्क्रमेणापि मानुष्यं प्राप्यते पुण्यगौरवात् ।।
विचित्रा गतयः प्रोक्ताः कर्मणां गुरुलाघवात्।।२९।।
मानुष्यं च समासाद्य स्वर्गमोक्षप्रसाधनम् ।।
नाचरत्यात्मनः श्रेयस्स मृतश्शोचते चिरम् ।।5.20.३०।।
देवासुराणां सर्वेषां मानुष्यं चाति दुर्लभं ।।
तत्संप्राप्य तथा कुर्यान्न गच्छेन्नरकं यथा ।। ३१ ।।
स्वर्गापवर्गलाभाय यदि नास्ति समुद्यमः ।।
दुर्लभं प्राप्य मानुष्यं वृथा तज्जन्म कीर्तितम् ।। ३२ ।।

सर्वस्य मूलं मानुष्यं चतुर्वर्गस्य कीर्तितम् ।।
संप्राप्य धर्मतो व्यास तद्यत्तादनुपालयेत्।।३३।।
धर्ममूलं हि मानुष्यं लब्ध्वा सर्वार्थसाधकम् ।।
यदि लाभाय यत्नः स्यान्मूलं रक्षेत्स्वयं ततः ।।३४।।
मानुष्येऽपि च विप्रत्वं यः प्राप्य खलु दुर्लभम् ।।
नाचरत्यात्मनः श्रेयः कोऽन्यस्तस्मादचेतनः ।। ३५ ।।
द्वीपानामेव सर्वेषां कर्मभूमिरियमुच्यते ।।
इतस्स्वर्गश्च मोक्षश्च प्राप्यते समुपार्जितः ।। ३६ ।।
देशेऽस्मिन्भारते वर्षे प्राप्य मानुष्यमध्रुवम् ।।
न कुर्यादात्मनः श्रेयस्तेनात्मा खलु वंचितः।।३७।।
कर्मभूमिरियं विप्र फलभूमिरसौ स्मृता ।।
इह यत्क्रियते कर्म स्वर्गे तदनुभुज्यते।।३८।।
यावत्स्वास्थ्यं शरीरस्य तावद्धर्मं समाचरेत्।।
अस्वस्थश्चोदितोऽप्यन्यैर्न किंचित्कर्तुमुत्सहेत् ।। ३९ ।।
अध्रुवेण शरीरेण ध्रुवं यो न प्रसाधयेत् ।।
ध्रुवं तस्य परिभ्रष्टमध्रुवं नष्टमेव च ।। 5.20.४० ।।
आयुषः खंडखंडानि निपतंति तदग्रतः ।।
अहोरात्रोपदेशेन किमर्थं नावबुध्यते ।। ४१ ।।
यदा न ज्ञायते मृत्युः कदा कस्य भविष्यति ।।
आकस्मिके हि मरणे धृतिं विंदति कस्तथा ।। ४२ ।।
परित्यज्य यदा सर्वमेकाकी यास्यति ध्रुवम् ।।
न ददाति कदा कस्मात्पाथेयार्थमिदं धनम् ।। ४३ ।।
गृहीतदानपाथेयः सुखं याति यमालयम् ।।
अन्यथा क्लिश्यते जंतुः पाथेयरहिते पथि ।।४४।।
येषां कालेय पुण्यानि परिपूर्णानि सर्वतः।।
गच्छतां स्वर्गदेशं हि तेषां लाभः पदेपदे ।।४५।।
इति ज्ञात्वा नरः पुण्यं कुर्यात्पापं विवर्जयेत् ।।
पुण्येन याति देवत्वमपुण्यो नरकं व्रजेत् ।। ४६ ।।
ये मनागपि देवेशं प्रपन्नाश्शरणं शिवम् ।।
तेऽपि घोरं न पश्यंति यमं न नरकं तथा।।४७।।
किंतु पापैर्महामोहैः किंचित्काले शिवाज्ञया ।।
वसंति तत्र मानुष्यास्ततो यांति शिवास्पदम् ।।४८।।
ये पुनस्सर्वभावेन प्रतिपन्ना महेश्वरम् ।।

न ते लिम्पंति पापेन पद्मपत्रमिवाम्भसा ।। ४९ ।।
उक्तं शिवेति यैर्नाम तथा हरहरेति च।।
न तेषां नरकाद्भीतिर्यमाद्धि मुनिसत्तम ।।5.20.५०।।
परलोकस्य पाथेयं मोक्षोपायमनामयम् ।।
पुण्यसंघैकनिलयं शिव इत्यक्षरद्वयम् ।। ५१ ।।
शिवनामैव संसारमहारोगेकशामकम् ।।
नान्यत्संसाररोगस्य शामकं दृश्यते मया ।। ५२ ।।
ब्रह्महत्यासहस्राणि पुरा कृत्वा तु पुल्कसः ।।
शिवेति नाम विमलं श्रुत्वा मोक्षं गतः पुरा ।। ५३ ।।
तस्माद्विवर्द्धयेद्भक्तिमीश्वरे सततं बुधः।।
शिवभक्त्या महाप्राज्ञ भुक्तिं मुक्तिं च विंदति।।५४।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां मनुविशेषकथनं नाम विंशोऽध्यायः ।। २० ।।

।। व्यास उवाच ।।
ब्राह्मणत्वं हि दुष्प्राप्यं निसर्गाद्ब्राह्मणो भवेत् ।।
ईश्वरस्य मुखात्क्षत्रं बाहुभ्यामूरुतो विशः ।। १ ।।
पद्भ्यां शूद्रस्समुत्पन्न इति तस्य मुखाच्छ्रुतिः ।।
किमु स्थितिमधःस्थानादाप्नुवन्ति ह्यतो वद ।। २ ।।
सनत्कुमार उवाच ।।
दुष्कृतेन तु कालेय स्थानाद्भ्रश्यन्ति मानवाः ।।
श्रेष्ठं स्थानं समासाद्य तस्माद्रक्षेत पण्डितः ।। ३ ।।
यस्तु विप्रत्वमुत्सृज्य क्षत्रयोन्यां प्रसूयते ।।
ब्राह्मण्यात्स परिभ्रष्टः क्षत्रियत्वं निषेवते ।।४।।
अधर्मसेवनान्मूढस्तथैव परिवर्तते ।।
जन्मान्तरसहस्राणि तमस्याविशते यतः ।।५।।
तस्मात्प्राप्य परं स्थानं प्रमाद्यन्न तु नाशयेत् ।।
स्वस्थानं सर्वदा रक्षेत्प्राप्यापि विपदो नरः ।। ६ ।।
ब्राह्मणत्वं शुभं प्राप्य ब्राह्मण्यं योऽवमन्यते ।।
भोज्याभोज्यं न जानाति स पुमान्क्षत्रियो भवेत् ।। ७ ।।
कर्मणा येन मेधावी शूद्रो वैश्यो हि जायते ।।
तत्ते वक्ष्यामि निखिलं येन वर्णोत्तमो भवेत् ।। ८ ।।
शूद्रकर्म यथोद्दिष्टं शूद्रो भूत्वा समाचरेत् ।।
यथावत्परिचर्य्यां तु त्रिषु वर्णेषु नित्यदा ।। ९ ।।
कुरुते कामयानस्तु शूद्रोऽपि वैश्यतां व्रजेत् ।।
यो योजयेद्धनैर्वैश्यो जुह्वानश्च यथाविधि ।। 5.21.१० ।।
अग्निहोत्रमुपादाय शेषान्न कृतभोजनः ।।
स वैश्यः क्षत्रियकुले जायते नात्र संशयः ।। ११ ।।।
क्षत्त्रियो जायते यज्ञैसंस्कृतैरात्तदक्षिणैः ।।
अधीते स्वर्गमन्विच्छंस्त्रेताग्निशरणं सदा ।। १२ ।।
आर्द्रहस्तपदो नित्यं क्षितिं धर्मेण पालयेत् ।।
ॠतुकालाभिगामी च स्वभार्य्याधर्मतत्परः ।।१३।।
सर्वातिथ्यं त्रिवर्गस्य भूतेभ्यो दीयतामिति ।।
गोब्राह्मणात्मनोऽर्थं हि संग्रामाभिहतो भवेत् ।।१४।।
तेनाग्निमन्त्रपूतात्मा क्षत्त्रियो ब्राह्मणो भवेत् ।।
विधितो ब्राह्मणो भूत्वा याजकस्तु प्रजायते ।। १५ ।
स्वकर्मनिरतो नित्यं सत्यवादी जितेन्द्रियः।।

प्राप्यते विपुलस्स्वर्गो देवानामपि वल्लभः।।१६।।
ब्रह्मणत्वं हि दुष्प्राप्यं कृच्छ्रेण साध्यते नरैः ।।
ब्राह्मण्यात्सकलं प्राप्य मोक्षश्चापि मुनीश्वर ।। १७ ।।
तस्मात्सर्वप्रयत्नेन ब्राह्मणो धर्मतत्परः ।।
साधनं सर्ववर्गस्य रक्षेद्ब्राह्मण्यमुत्तमम् ।। १८ ।।
व्यास उवाच ।।
संग्रामस्येह माहात्म्यं त्वयोक्तं मुनिसत्तम ।।
एतदिच्छाम्यहं श्रोतुं ब्रूहि त्वं वदतां वर ।। १९ ।।
सनत्कुमार उवाच ।।
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः ।।
न तत्फलमवाप्नोति संग्रामे यदवाप्नुयात् ।। 5.21.२० ।।
इति तत्त्वविदः प्राहुर्यज्ञकर्मविदस्सदा ।।
तस्मात्तत्ते प्रवक्ष्यामि यत्फलं शस्त्रजीविनाम्।।२१।।
धर्मलाभोऽर्थलाभश्च यशोलाभस्तथैव च ।।
यश्शूरो वांछते युद्धं विमृन्दन्परवाहिनीम् ।। २२ ।।
तस्य धर्मार्थ कामाश्च यज्ञश्चैव सदक्षिणः ।।
परं ह्यभिमुखं दत्त्वा तद्यानं योऽधिरोहति ।। २३ ।।
विष्णुलोके स जायेत यश्च युद्धेऽपराजितः ।।
अश्वमेधानवाप्नोति चतुरो न मृतस्स चेत्।। २४ ।।
यस्तु शस्त्रमनुत्सृज्य म्रियते वाहिनी मुखे ।।
सम्मुखो वर्तते शूरस्स स्वर्गान्न निवर्तते ।। २५ ।।
राजा वा राजपुत्रो वा सेनापतिरथापि वा ।।
हतक्षात्रेण यः शूरस्तस्य लोकोऽक्षयो भवेत् ।। २६ ।।
यावंति तस्य रोमाणि भिद्यन्तेऽस्त्रैर्महाहवे ।।
तावतो लभते लोकान्सर्वकामदुघाऽक्षयान् ।।२७।।
वीरासनं वीरशय्या वीरस्थानस्थितिस्स्थिरा ।।
सर्वदा भवति व्यास इह लोके परत्र च ।। २८ ।।।
गवार्थे ब्राह्मणार्थे च स्थानस्वाम्यर्थमेव च ।।
ये मृतास्ते सुखं यांति यथा सुकृतिनस्तथा ।। २९ ।।
यः कश्चिद्ब्राह्मणं हत्वा पश्चात्प्राणान्परित्यजेत् ।।
तत्रासौ स्वपतेर्युद्धे स स्वर्गान्न निवर्तते।।5.21.३०।।
क्रव्यादैर्दतिभिश्चैव हतस्य गतिरुत्तमा ।।
द्विजगोस्वामिनामर्थे भवेद्विपुलदाक्षया।।३१।।

शक्नोत्विह समर्थश्च यष्टुं क्रतुशतैरपि।।
आत्मदेहपरित्यागः कर्तुं युधि सुदुष्करः .।।३२।।
युद्धं पुण्यतमं स्वर्ग्यं रूपज्ञं सर्वतोमुखम् ।।
सर्वेषामेव वर्णानां क्षत्रियस्य विशेषतः ।।३३।।
भृशं चैव प्रवक्ष्यामि युद्धधर्मं सनातनम् ।।
यादृशाय प्रहर्तव्यं यादृशं परिवर्जयेत्।।३४।।
आततायिनमायांतमपि वेदांतगं द्विजम्।।
जिघांसंतं जिघांसेत्तु न तेन ब्रह्महा भवेत्।।३५।।
हंतव्योऽपि न हंतव्यः पानीयं यश्च याचते।।
रणे हत्वातुरान्व्यास स नरो ब्रह्महा भवेत् ।।३६।।
व्याधितं दुर्बलं बालं स्त्र्यनाथौ कृपणं ध्रुवम्।।
धनुर्भग्नं छिन्नगुणं हत्वा वै ब्रह्महा भवेत् ।।३७।।
एवं विचार्य्य सद्धीमान्भवेत्प्रीत्याः रणप्रियः।।
सजन्मनः फलं प्राप्य परत्रेह प्रमोदते।।३८।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां रणफलवर्णनं नामैकविंशोऽध्यायः ।।२१।।

व्यास उवाच ।।
विधिं तात वदेदानीं जीव जन्मविधानतः ।।
गर्भे स्थितिं च तस्यापि वैराग्यार्थं मुनीश्वर ।। १ ।।
सनत्कुमार उवाच।।
शृणु व्यास समासेन शास्त्रसारमशेषतः ।।
वदिष्यामि सुवैराग्यं मुमुक्षोर्भवबंधकृत्।।२।।
पाकपात्रस्य मध्ये तु पृथगन्नं पृथग्जलम्।।
अग्नेरूर्ध्वं जलं स्थाप्यं तदन्नं च जलोपरि।।३।।
जलस्याधस्स चाग्निर्हि स्थितोऽग्निं धमते शनैः ।।
वायुनाधम्यमानोऽग्निरत्युष्णं कुरुते जलम् ।।४।।
तदन्नमुष्णतोयेन समन्तात्पच्यते पुनः।।
द्विधा भवति तत्पक्वं पृथक्किट्टं पृथग्रसः।।५।।
मलैर्द्वादशभिः किट्टं भिन्नं देहाद्बहिर्भवेत्।।
रसस्तु देहे सरति स पुष्टस्तेन जायते।।६।।
कर्णाक्षिनासिका जिह्वा दन्ताः शिश्नो गुदं नखाः ।।
मलाश्रयः कफः स्वेदो विण्मूत्रं द्वादश स्मृताः ।। ७ ।।
हृत्पद्मे प्रतिबद्धाश्च सर्वनाड्यस्समंततः ।।
ज्ञेया रसप्रवाहिन्यस्तत्प्रकारं ब्रुवे मुने ।। ८ ।।
तासां मुखेषु तं सूक्ष्मं प्राणस्स्थापयेत् रसम् ।।
रसेन तेन नाडीस्ताः प्राणं पूरयते पुनः ।।९।।
पुनः प्रयांति संपूर्णास्ताश्च देहं समंततः ।।
ततस्स नाडीमध्यस्थश्शरीरेणात्मना रसः ।।5.22.१०।।
पच्यते पच्यमानाच्च भवेत्पाकद्वयं पुनः ।।
त्वक् तया वेष्ट्यते पूर्वं रुधिरं च प्रजायते।।११।।
रक्ताल्लोमानि मांसं च केशाः स्नायुश्च मांसतः।।
स्नायुतश्च तथास्थीनि नखा मज्जास्थिसंभवाः।।१२।।
मज्जाकारणवैकल्यं शुक्रं हि प्रसवात्मकम्।।
इति द्वादशधान्नस्य परिणामः प्रकीर्तिताः।।१३।।
शुक्रोऽन्नाज्जायते शुक्राद्दिव्यदेहस्य संभवः।।
ऋतुकाले यदा शुक्रं निर्दोषं योनिसंस्थितम्।।१४।।
तद्वा तद्वायुसंस्पृष्टं स्त्रीरक्तेनैकतां व्रजेत् ।।
विसर्गकाले शुक्रस्य जीवः कारणसंयुतः ।।१५।।
संवृतः प्रविशेद्योनिं कर्मभिस्स्वैर्नियोजितः ।।

तच्छुक्ररक्तमेकस्थमेकाहात्कलिलं भवेत् ।।३१।

पंचरात्रेण कलिलं बुद्बुदाकारतां व्रजेत् ।।

बुद्बुदस्सप्तरात्रेण मांसपेशी भवेत्पुनः।।१७।।

ग्रीवा शिरश्च स्कंधौ च पृष्ठवंशस्तथोदरम्।।

पाणिपादन्तथा पार्श्वे कटिर्गात्रं तथैव च।।१८।।

द्विमासाभ्यन्तरेणैव क्रमशस्संभवेदिह।।

त्रिभिर्मासैः प्रजायंते सर्वे ह्यंकुरसंधयः।।१९।।

मासैश्चतुर्भिरंगुल्यः प्रजायंते यथाक्रमम्।।

मुखं नासा च कर्णौ मासैः पंचभिरेव च।।5.22.२०।।

दन्तपंक्तिस्तथा गुह्यं जायंते च नखाः पुनः।।

कर्णयोस्तु भवेच्छिद्रं षण्मासाभ्यंतरेण तु ।।२१।।

पायुर्मेहमुपस्थं च नाभिश्चाभ्युपजायते।।

संधयो ये च गात्रेषु मासैर्जायंति सप्तभिः ।।२२।।

अंगप्रत्यंगसंपूर्णः परिपक्वस्स तिष्ठति ।।

उदरे मातुराच्छन्नो जरायौ मुनि सत्तम ।। २३ ।।

मातुराहारचौर्य्येण षड्विधेन रसेन तु ।।

नाभिनालनिबद्धेन वर्द्धते स दिनेदिने ।। २४ ।।

ततस्मृतिं लभेज्जीवस्संपूर्णेऽस्मिञ्शरीरके ।।

सुखं दुःखं विजानाति निद्रास्वप्नं पुराकृतम् ।। २५ ।।

मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः ।।

नानायोनिसहस्राणि मया दृष्टानि जायता ।। २६ ।।

अधुना जातमात्रोऽहं प्राप्तसंस्कार एव च ।।

श्रेयोऽमुना करिष्यामि येन गर्भे न संभवः ।। २७ ।।

गर्भस्थश्चिंतयत्येवमहं गर्भाद्विनिस्सृतः ।।

अन्वेष्यामि शिवज्ञानं संसारविनिवर्तकम् ।।२८।।

एवं स गर्भदुःखेन महता परिपीडितः ।।

जीवः कर्मवशादास्ते मोक्षोपायं विचिंतयन् ।। २९ ।।

यथा गिरिवराक्रांतः कश्चिद्दुःखेन तिष्ठति ।।

तथा जरायुणा देही दुःखं तिष्ठति वेष्टितः ।। 5.22.३० ।।

पतितस्सागरे यद्वद्दुःखमास्ते समाकुलः ।।

गर्भोदकेन सिक्तांगस्सर्वदाकुलितस्तदा ।। ३१ ।।

लोहकुंभे यथा न्यस्तः पच्यते कश्चिदग्निना ।।

गर्भकुंभे तथा क्षिप्तः पच्यते जठराग्निना ।। ३२ ।।

सूचीभिरग्निवर्णाभिनिर्भिन्नस्य निरंतरम् ।।
यद्दुःखं जायते तस्य तत्र संस्थस्य चाधिकम् ।। ३३ ।।
गर्भावासात्परं दुःखं कष्टं नैवास्ति कुत्रचित् ।।
देहिनां दुःखबहुलं सुघोरमतिसंकटम् ।। ३४ ।।
इत्येतत्सुमहद्दुःखं पापिनां परिकीर्तितम् ।।
केवलं धर्मबुदीनां सप्तमासैर्भवस्सदा ।।३५।।
गर्भात्सुदुर्लभं दुःखं योनियंत्रनिपीडनात् ।।
भवेत्पापात्मनां व्यास न हि धर्मयुतात्मनाम् ।।। ३६ ।।
इक्षुवत्पीड्यमानस्य यंत्रेणैव समंततः ।।
शिरसा ताड्यमानस्य पाप मुद्गरकेण च ।।३७।।
यंत्रेण पीडिता यद्वन्निस्सारा स्स्युस्तिलाः क्षणात् ।।
तथा शरीरं निस्सारं योनियंत्रनिपीडनात् ।। ३८ ।।
अस्थिपादतुलास्तंभं स्नायुबन्धेन यंत्रितम्।।
रक्तमांसमृदालिप्तं विण्मूत्रद्रव्यभाजनम् ।। ३९ ।।
केशरोमनखच्छन्नं रोगायतनमातुरम् ।।
वदनैकमहाद्वारं गवाक्षाष्टकभूषितम् ।। 5.22.४० ।।
ओष्ठद्वयकपाटं च तथा जिह्वार्गलान्वितम्।।
भोगतृष्णातुरं मूढं रागद्वेषवशानुगम्।।४१।।
संवर्तितांगप्रत्यंगं जरायुपरिवेष्टितम्।।
संकटेनाविविक्तेन योनिमार्गेण निर्गतम्।।४२।।
विण्मूत्ररक्तसिक्तांगं विकोशिकसमुद्भवम्।।
अस्थिपञ्जरविख्यातमस्मिञ्ज्ञेयं कलेवरम्।।४३।।
शतत्रयं षष्ट्यधिकं पंचपेशीशतानि च।।
सार्द्धाभिस्तिसृभिश्छन्नं समंताद्रोमकोटिभिः ।।४४ ।।
शरीरं स्थूलसूक्ष्माभिर्दृश्याऽदृश्या हि तास्स्मृताः ।।
एतावतीभिर्नाडीभिः कोटिभिस्तत्समंततः।।४५।।
अस्वेदमधुभिर्याभिरंतस्थः स्रवते बहिः।।
द्वात्रिंशद्दशनाः प्रोक्ता विंशतिश्च नखाः स्मृताः ।। ४६ ।।
पित्तस्य कुडवं ज्ञेयं कफस्याथाढकं स्मृतम् ।।
वसायाश्च पलं विंशत्तदर्धं कपिलस्य च ।।४७।।
पंचार्द्धं तु तुला ज्ञेया पलानि दश मेदसः ।।
पलत्रयं महारक्तं मज्जायाश्च चतुर्गुणम् ।। ४८ ।।
शुक्रोर्द्धं कुडवं ज्ञेयं तद्बीजं देहिनां बलम् ।।

मांसस्य चैकपिंडेन पलसाहस्रमुच्यते ।।४९।।
रक्तं पलशतं ज्ञेयं विण्मूत्रं यत्प्रमाणत।।
अंजलयश्च चत्वारश्चत्वारो मुनिसत्तम।।5.22.५०।।
इति देहगृहं ह्येतन्नित्यस्यानित्यमात्मनः ।।
अविशुद्धं विशुद्धस्य कर्मबंधाद्विनिर्मितम् ।। ५१ ।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां देहोत्पत्तिवर्णनं नाम द्वाविंशोऽध्यायः ।। २२ ।।

सनत्कुमार उवाच ।।
शृणु व्यास महाबुद्धे देहस्याशुचितां मुने ।।
महत्त्वं च स्वभावस्य समासात्कथयाम्यहम् ।।१।।
शुक्रशोणितसंयोगाद्देहस्संजायते यतः।।
नित्यं विण्मूत्रसंपूर्णस्तेनायमशुचिस्स्मृतः।।२।।
यथांतर्विष्ठया पूर्णश्शुचिमान्न बहिर्घटः ।।
शोध्यमानो हि देहोऽयं तेनायमशुचिस्ततः ।। ३ ।।
संप्राप्यातिपवित्राणि पंचगव्यहवींषि चा।
अशुचित्वं क्षणाद्यांति किमन्यदशुचिस्ततः ।।४।।
हृद्यान्यप्यन्नपानानि यं प्राप्य सुरभीणि च ।।
अशुचित्वं प्रयांत्याशु किमन्यदशुचिस्ततः ।।५।।
हे जनाः किन्न पश्यंति यन्निर्याति दिनेदिने ।।
स्वदेहात्कश्मलं पूतिस्तदाधारः कथं शुचिः ।। ६ ।।
देहस्संशोध्यमानोऽपि पंचगव्यकुशांबुभिः ।।
घृष्यमाण इवांगारो निर्मलत्वं न गच्छति ।। ७ ।।
स्रोतांसि यस्य सततं प्रभवंति गिरेरिव ।।
कफमूत्रपुरीषाद्यैस्स देहश्शुध्यते कथम् ।।८।।
सर्वाशुचिनिधानस्य शरीरस्य न विद्यते ।।
शुचिरेकः प्रदेशोऽपि विण्मूत्रस्य दृतेरिव ।। ९ ।।
सृष्ट्वात्मदेहस्रोतांसि मृत्तोयैः शोध्यते करः ।।
तथाप्यशुचिभांडस्य न विभ्रश्यति किं करः ।। 5.23.१० ।।
कायस्सुगंधधूपाद्यैर्य न्नेनापि सुसंस्कृतः ।।
न जहाति स्वभावं स श्वपुच्छमिव नामितम्।।११।।
यथा जात्यैव कृष्णोर्थः शुक्लस्स्यान्न ह्युपायतः।।
संशोद्ध्यमानापि तथा भवेन्मूर्तिर्न निर्मला ।। १२ ।।
जिघ्रन्नपि स्वदुर्गंधं पश्यन्नपि स्वकं मलम् ।।
न विरज्येत लोकोऽयं पीडयन्नपि नासिकाम् ।।१३।।
अहो मोहस्य माहात्म्यं येनेदं छादितं जगत् ।।
शीघ्रं पश्यन्स्वकं दोषं कायस्य न विरज्यते ।।१४।।
स्वदेहस्य विगंधेन न विरज्येत यो नरः ।।
विरागकारणं तस्य किमेतदुपदिश्यते ।। १५ ।।
सर्वस्यैव जगन्मध्ये देह एवाशुचिर्भवेत् ।।
तन्मलावयवस्पर्शाच्छुचिरप्यशुचिर्भवेत् ।। १६ ।।

गंधलेपापनोदार्थं शौचं देहस्य कीर्तितम् ।।
द्वयस्यापगमाच्छुद्धिश्शुद्धस्पर्शाद्विशुध्यति ।।१७।।
गंगातोयेन सर्वेण मृद्भारैः पर्वतोपमैः ।।
आमृत्योराचरेच्छौचं भावदुष्टो न शुध्यति ।। १८ ।।
तीर्थस्नानैस्तपोभिर्वा दुष्टात्मा नैव शुध्यति ।।
श्वदृतिः क्षालिता तीर्थे किं शुद्धिमधिगच्छति ।। १९ ।।
अंतर्भावप्रदुष्टस्य विशतोऽपि हुताशनम् ।।
न स्वर्गो नापवर्गश्च देहनिर्दहनं परम् ।।5.23.२०।।
सर्वेण गांगेन जलेन सम्यङ् मृत्पर्वतेनाप्यथ भावदुष्टः ।।
आजन्मनः स्नानपरो मनुष्यो न शुध्यतीत्येव वयं वदामः ।। २१ ।।
प्रज्वाल्य वह्निं घृततैलसिक्तं प्रदक्षिणावर्तशिखं महांतम् ।।
प्रविश्य दग्धस्त्वपि भावदुष्टो न धर्ममाप्नोति फलं न चान्यत ।। २२ ।।
गंगादितीर्थेषु वसंति मत्स्या देवालये पक्षिगणाश्च नित्यम् ।।
भावोज्झितास्ते न फलं लभंते तीर्थावगाहाच्च तथैव दानात् ।। २३ ।।
भावशुद्धिः परं शौचं प्रमाणे सर्वकर्मसु ।।
अन्यथाऽऽलिंग्यते कांता भावेन दुहितान्यथा ।। २४ ।।
मनसो भिद्यते वृत्तिरभिन्नेष्वपि वस्तुषु ।।
अन्यथैव सुतं नारी चिन्तयत्यन्यथा पतिम् ।। २५ ।।
पश्यध्वमस्य भावस्य महाभाग्यमशेषतः ।।
परिष्वक्तोपि यन्नार्य्या भावहीनं न कामयेत् ।। २६ ।।
नाद्याद्विविधमन्नाद्यं भक्ष्याणि सुरभीणि च ।।
यदि चिंतां समाधत्ते चित्ते कामादिषु त्रिषु ।। २७ ।।
गृह्यते तेन भावेन नरो भावाद्विमुच्यते ।।
भावतश्शुचि शुद्धात्मा स्वर्गं मोक्षं च विंदति ।। २८ ।।
भावेनैकात्मशुद्धात्मा दहञ्जुह्वन्स्तुवन्मृतः ।।
ज्ञानावाप्तेरवाप्याशु लोकान्सुबहुयाजिनाम् ।। २९ ।।
ज्ञानामलांभसा पुंसां सद्वैराग्यमृदा पुनः ।।
अविद्यारागविण्मूत्रलेपगंधविशोधनम् ।। 5.23.३० ।।
एवमेतच्छरीरं हि निसर्गादशुचि स्मृतम् ।।
त्वङ्मात्रसारं निःसारं कदलीसारसन्निभम् ।। ३१ ।।
ज्ञात्वैवं दोषवद्देहं यः प्राज्ञश्शिथिलो भवेत् ।।
देह भोगोद्भवाद्भावाच्छमचित्तः प्रसन्नधीः ।। ३२ ।।
सोऽतिक्रामति संसारं जीवन्मुक्तः प्रजायते ।।

संसारं कदलीसारदृढग्राह्यवतिष्ठते ।। ।। ३३ ।।
एवमेतन्महाकष्टं जन्म दुःखं प्रकीर्तितम् ।।
पुंसामज्ञानदोषेण नानाकार्मवशेन च ।। ३४ ।।
श्लोकार्धेन तु वक्ष्यामि यदुक्तं ग्रन्थकोटिभिः ।।
ममेति परमं दुःखं न ममेति परं सुखम् ।। ३५ ।।
बहवोपीह राजानः परं लोक मितो गताः ।।
निर्ममत्वसमेतास्तु बद्धाश्शतसहस्रशः ।।३६।।
गर्भस्थस्य स्मृतिर्यासीत्सा च तस्य प्रणश्यति ।।
संमूर्छितेन दुःखेन योनियन्त्रनिपीडनात् ।।३७।।
बाह्येन वायुना वास्य मोहसङ्गेन देहिनः ।।
स्पृष्टमात्रेण घोरेण ज्वरस्समुपजायते ।।३८।।
तेन ज्वारेण महता सम्मोहश्च प्रजायते ।।
सम्मूढस्य स्मृतिभ्रंशश्शीघ्रं संजायते पुनः ।। ३९ ।।
स्मृतिभ्रंशात्ततस्तस्य स्मृतिर्न्नोऽपूर्वकर्मणः।।
रतिः संजायते तूर्णं जन्तोस्तत्रैव जन्मनि ।। 5.23.४० ।।
रक्तो मूढश्च लोकोऽयं न कार्य्ये सम्प्रवर्तते ।।
न चात्मानं विजानाति न परं न च दैवतम् ।। ४१ ।।
न शृणोति परं श्रेयस्सति कर्णेऽपि सन्मुने ।।
न पश्यति परं श्रेयस्सति चक्षुषि तत्क्षमे ।। ४२ ।।
समे पथि शनैर्गच्छन् स्खलतीव पदेपदे ।।
सत्यां बुद्धौ न जानाति बोध्यमानो बुधैरपि ।। ४३ ।।
संसारे क्लिश्यते तेन गर्भलोभवशानुगः ।।
गर्भस्मृतेन पापेन समुज्झितमतिः पुमान् ।।४४।।
इत्थं महत्परं दिव्यं शास्त्रमुक्तं शिवेन तु ।।
तपसः कथनार्थाय स्वर्गमोक्षप्रसाधनम् ।। ४५ ।।
ये सत्यस्मिच्छिवे ज्ञाने सर्वकामार्थ साधने ।।
न कुर्वन्त्यात्मनः श्रेयस्तदत्र महदद्भुतम् ।।४६।।
अव्यक्तेन्द्रियवृत्तित्वाद्बाल्ये दुःखं महत्पुनः ।।
इच्छन्नपि न शक्नोति वक्तुं कर्त्तुं प्रतिक्रियाम् ।। ४७ ।।
दंतोत्थाने महद्दुःखमल्पेन व्याधिना तथा ।।।
बालरोगैश्च विविधै पीडा बालग्रहैरपि ।। ४८ ।।
क्वचित्क्षुत्तृट्परीतांगः क्वचित्तिष्ठति संरटन् ।।
विण्मूत्रभक्षणाद्यं च मोहाद्बालस्समाचरेत् ।।४९।।

कौमारे कर्णपीडायां मातापित्रोश्च साधनः ।।
अक्षराध्ययनाद्यैश्च नानादुःखं प्रवर्तते ।।5.23.५०।।
बाल्ये दुःखमतीत्यैव पश्यन्नपि विमूढधीः।।
न कुर्वीतात्मनः श्रेयस्तदत्र महदद्भुतम् ।। ५१ ।।
प्रवृत्तेन्द्रियवृत्तित्वात्कामरोगप्रपीडनात्।।
तदप्राप्ते तु सततं कुतस्सौख्यं तु यौवने ।। ५२ ।।
ईर्ष्यया च महद्दुःखं मोहाद्रक्तस्य तस्य च ।।
नेत्रस्य कुपितस्येव त्यागी दुःखाय केवलम् ।। ५३ ।।
न रात्रौ विंदते निद्रां कामाग्निपरिवेदितः ।।
दिवापि च कुतस्सौख्यमर्थोपार्जनचिंतया ।। ५४ ।।
स्त्रीष्वध्यासितचित्तस्य ये पुंसः शुक्रबिन्दवः ।।
ते सुखाय न मन्यन्ते स्वेदजा इव ते तथा ।। ५५ ।।
कृमिभिस्तुद्यमानस्य कुष्ठिनो वानरस्य च ।।
कंडूयनाभितापेन यद्भवेत्स्त्रिषु तद्विदः ।। ५६ ।।
यादृशं मन्यते सौख्यं गंडे पूतिविनिर्गमात् ।।
तादृशं स्त्रीषु मन्तव्यं नाधिकं तासु विद्यते ।। ५७ ।।
विण्मूत्रस्य समुत्सर्गात्सुखं भवति यादृशम्।।
तादृशं स्त्रीषु विज्ञेयं मूढैः कल्पितमन्यथा ।।५८।।
नारीष्ववस्तुभूतासु सर्वदोषाश्रयासु वा।
नाणुमात्रं सुखं तासु कथितं पंचचूडया ।। ५९ ।।
सम्माननावमानाभ्यां वियोगेनेष्टसंगमात् ।।
यौवनं जरया ग्रस्तं क्व सौख्यमनुपद्रवम्।।5.23.६०।।
वलीपलितखालित्यैश्शिथिलिकृतविग्रहम्।।
सर्वक्रियास्वशक्तिं च जरया जर्जरीकृतम्।।६१।।
स्त्रीपुंसयौवनं हृद्यमन्योऽन्यस्य प्रियं पुरा।।
तदेव जरयाग्रस्तमनयोरपि न प्रियम्।।६२।।
अपूर्ववत्स्वमात्मानं जरया परिवर्तितम्।।
यः पश्यन्नपि रज्येत कोऽन्यस्तस्मादचेतनः।।६३।।
जराभिभूतः पुरुषः पुत्रीपुत्रादिबांधवैः।।
आसक्तत्वाद्दुराधर्षैर्भृत्यैश्च परिभूयते।।६४।।
धर्ममर्थं च कामं वा मोक्षं वातिजरातुरः।।
अशक्तस्साधितुं तस्माद्युवा धर्मं समाचरेत्।।६५।।

इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां संसारचिकित्सायां देहा
शुचित्वबाल्याद्यवस्थादुःखवर्णनं नाम त्रयोविंशोऽध्यायः।।२३।।

व्यास उवाच।।
कुत्सितं योषिदर्थं यत्संप्रोक्तं पंचचूडया।।
तन्मे ब्रूहि समासेन यदि तुष्टोऽसि मे मुने।। १ ।।
सनत्कुमार उवाच ।।
स्त्रीणां स्वभावं वक्ष्यामि शृणु विप्र यथातथम् ।।
यस्य श्रवणमात्रेण भवेद्वैराग्यमुत्तमम् ।। २ ।।
स्त्रियो मूलं हि दोषाणां लघुचित्ताः सदा मुने।।
तदासक्तिर्न कर्तव्या मोक्षेप्सुभिरतन्द्रितैः ।। ३ ।।
अत्राप्युदाहरंतीममितिहासं पुरातनम् ।।
नारदस्य च संवादं पुंश्चल्या पंचचूडया ।। ४ ।।
लोकान्परिचरन्धीमान्देवर्षिर्नारदः पुरा ।।
ददर्शाप्सरसं बालां पंचचूडामनुत्तमाम्।।५।।
पप्रच्छाप्सरसं सुभ्रूं नारदो मुनिसत्तमः।।
संशयो हृदि मे कश्चित्तन्मे ब्रूहि सुमध्यमे।।६।।
एवमुक्ता तु सा विप्रं प्रत्युवाच वराप्सरा।।
विषये सति वक्ष्यामि समर्थां मन्यसेऽथ माम् ।। ७ ।।
नारद उवाच ।।
न त्वामविषये भद्रे नियोक्ष्यामि कथंचन ।।
स्त्रीणां स्वभावमिच्छामि त्वत्तः श्रोतुं सुमध्यमे ।।८।।
सनत्कुमार उवाच ।।
एतच्छ्रुत्वा वचस्तस्य देवर्षेरप्सरोत्तमा ।।
प्रत्युवाच मुनीशं तं देवर्षिं मुनिसत्तमम् ।। ९ ।।
पंचचूडोवाच ।।
मुने शृणु न शक्या स्त्री सती वै निंदितुं स्त्रिया ।।
विदितास्ते स्त्रियो याश्च यादृश्यश्च स्वभावतः ।।5.24.१०।।
न मामर्हसि देवर्षे नियोक्तुं प्रश्नमीदृशम् ।।
इत्युक्त्वा साऽभवत्तूष्णीं पंचचूडाप्सरोवरा ।। ११ ।।
अथ देवर्षिवर्यो हि श्रुत्वा तद्वाक्यमुत्तमम् ।।
प्रत्युवाच पुनस्तां वै लोकानां हितकाम्यया ।। १२ ।।
नारद उवाच ।।
मृषावादे भवेद्दोषस्सत्ये दोषो न विद्यते ।।
इति जानीहि सत्यं त्वं वदातस्तत्सुमध्यमे ।। १३ ।।
सनत्कुमार उवाच ।।

इत्युक्ता सा कृतमती रभसा चारुहासिनी ।।
स्त्रीदोषाञ्शाश्वतान्सत्यान्भाषितुं संप्रचक्रमे ।। १४ ।।
पञ्चचूडोवाच ।।
कुलीना नाथवंत्यश्च रूपवंत्यश्च योषितः ।।
मर्यादासु न तिष्ठंति स दोषः स्त्रीषु नारद ।। १५ ।।
न स्त्रीभ्यः किंचिदन्यद्वै पापीयस्तरमस्ति हि ।।
स्त्रियो मूलं हि पापानां तथा त्वमपि वेत्थ ह ।।१६।।
समाज्ञातानर्थवतः प्रतिरूपान् यथेप्सितान् ।।
यतीनन्तरमासाद्य नालं नार्य्यः प्रतीक्षितुम् ।।१७।।
असद्धर्मस्त्वयं स्त्रीणामस्माकं भवति प्रभो।।
पापीयसो नरान् यद्वै लज्जां त्यक्त्वा भजामहे ।। १८ ।।
स्त्रियं च यः प्रार्थयते सन्निकर्षं च गच्छति ।।
ईषच्च कुरुते सेवां तमेवेच्छति योषितः ।। १९ ।।
अनर्थित्वान्मनुष्याणां भयात्पतिजनस्य च ।।
मर्यादायाममर्यादाः स्त्रियस्तिष्ठंति भर्तृषु ।। 5.24.२० ।।
नासां कश्चिदमान्योऽस्ति नासां वयसि निश्चयः ।।
सुरूपं वा कुरूपं वा पुमांसमुपभुंजते ।। २१ ।।
न भयादथ वाक्रोशान्नार्थहेतोः कथंचन ।।
न ज्ञातिकुलसम्बन्धास्त्रियस्तिष्ठंति भर्तृषु ।।२२।।
यौवने वर्तमानानामिष्टाभरणवाससाम् ।।
नारीणां स्वैरवृत्तीनां स्पृहयन्ति कुलस्त्रियः ।।२३।।
या हि शश्वद्बहुमता रक्ष्यन्ते दयिताः स्त्रियः ।।
अपि ताः सम्प्रसज्जन्ते कुब्जान्धजडवामने ।।२४।।
पंगुष्वपि च देवर्षे ये चान्ये कुत्सिता नराः।।
स्त्रीणामगम्यो लोकेषु नास्ति कश्चिन्महामुने ।। २५ ।।
यदि पुंसां गतिर्ब्रह्मन्कथंचिन्नोपपद्यते ।।
अप्यन्योन्यं प्रवर्तन्ते न च तिष्ठन्ति भर्तृषु ।। २६ ।।
अलाभात्पुरुषाणां च भयात्परिजनस्य च ।।
वधबन्धभयाच्चैव ता भग्नाशा हि योषितः ।।२७।।
चलस्वभाव दुश्चेष्टा दुर्ग्राह्या भवतस्तथा।।
प्राज्ञस्य पुरुषस्येह यथा रतिपरिग्रहात् ।।२८।।
नाग्निस्तुष्यति काष्ठानां नापगानां महोदधि ।।
नान्तकस्सर्वभूतानां न पुंसां वामलोचनाः ।। २९ ।।

इदमन्यच्च देवर्षे रहस्यं सर्वयोषिताम् ।।
दृष्ट्वैव पुरुषं सद्यो योनिः प्रक्लिद्यते स्त्रियाः ।।5.24.३०।।
सुस्नातं पुरुषं दृष्ट्वा सुगन्धं मलवर्जितम् ।।
योनिः प्रक्लिद्यते स्त्रीणां दृतेः पात्रादिवोदकम्।।३१।।
कायानामपि दातारं कर्त्तारं मानसांत्वयोः ।।
रक्षितारं न मृष्यंति भर्तारं परमं स्त्रियः ।।३२।।
न कामभोगात्परमान्नालंकारार्थसंचयात् ।।
तथा हितं न मन्यन्ते यथा रतिपरिग्रहात् ।। ३३ ।।
अन्तकश्शमनो मृत्युः पातालं वडवामुखम् ।।
क्षुरधारा विषं सर्पो वह्निरित्येकतः स्त्रियः ।।३४।।
यतश्च भूतानि महांति पंच यतश्च लोको विहितो विधात्रा ।।
यतः पुमांसः प्रमदाश्च निर्मिताः सदैव दोषः प्रमदासु नारद ।। ३५ ।।
सनत्कुमार उवाच।।
इति श्रुत्वा वचस्तस्या नारदस्तुष्टमानसः।।
तथ्यं मत्वा ततस्तद्वै विरक्तोभूद्धि तासु च ।। ३६ ।।
इत्युक्तः स्त्री स्वभावस्ते पंचचूडोक्त आदरात् ।।
वैराग्यकारणं व्यास किमन्यच्छ्रोतुमर्हसि ।। ३७ ।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां स्त्रीस्वभाववर्णनं नाम चतुर्विंशोऽध्यायः ।।२४।।

व्यास उवाच ।।
सनत्कुमार सर्वज्ञ त्वत्सकाशान्मया मुने।।
स्त्रीस्वभावः श्रुतः प्रीत्या कालज्ञानं वदस्व मे ।। १ ।।
सनत्कुमार उवाच ।।
इदमेव पुराऽपृच्छत्पार्वती परमेश्वरम् ।।
श्रुत्वा नानाकथां दिव्यां प्रसन्ना सुप्रणम्य तम् ।। २ ।।
पार्वत्युवाच ।।
भगवंस्त्वत्प्रसादेन ज्ञातं मे सकलं मतम् ।।
यथार्चनं तु ते देव यैर्मंत्रैश्च यथाविधि ।। ।। ३ ।।
अद्यापि संशयस्त्वेकः कालचक्रं प्रति प्रभो ।।
मृत्युचिह्नं यथा देव किं प्रमाणं यथायुषः ।। ४।।
तथा कथय मे नाथ यद्यहं तव वल्लभा ।।
इति पृष्टस्तया देव्या प्रत्युवाच महेश्वरः ।।५।।
।। ईश्वर उवाच ।।
सत्यं ते कथयिष्यामि शास्त्रं सर्वोत्तमं प्रिये ।।
येन शास्त्रेण देवेशि नरैः कालः प्रबुध्यते ।।६।।
अहः पक्षं तथा मासमृतुं चायनवत्सरौ।।
स्थूलसूक्ष्मगतैश्चिह्नैर्बहिरंतर्गतैस्तथा ।। ७ ।।
तत्तेहं सम्प्रवक्ष्यामि शृणु तत्त्वेन सुन्दरि ।।
लोकानामुपकारार्थं वैराग्यार्थमुमेऽधुना ।। ८ ।।
अकस्मात्पांडुरं देहमूर्द्ध्वरागं समंततः ।।
तदा मृत्युं विजानीयात्षण्मासाभ्यन्तरे प्रिये ।।९।।
मुखं कर्णौ तथा चक्षुर्जिह्वास्तम्भो यदा भवेत्।।
तदा मृत्युं विजानीयात्षण्मासाभ्यन्तरे प्रिये।।5.25.१०।।
रौरवानुगतं भद्र ध्वनिं नाकर्णयेद्द्रुतम्।।
षण्मासाभ्यंतरे मृत्युर्ज्ञातव्यः कालवेदिभिः ।।११।।
रविसोमाग्निसंयोगाद्यदोद्योतं न पश्यति ।।
कृष्णं सर्वं समस्तं च षण्मासं जीवितं तथा ।। १२ ।।
वामहस्तो यदा देवि सप्ताहं स्पंदते प्रिये ।।
जीवितं तु तदा तस्य मासमेकं न संशयः ।। १३ ।।
उन्मीलयति गात्राणि तालुकं शुष्यते यदा।।
जीवितं तु तदा तस्य मासमेकं न संशयः ।। १४ ।।
नासा तु स्रवते यस्य त्रिदोषे पक्षजीवितम् ।।

वक्त्रं कंठं च शुष्येत षण्मासांते गतायुषः ।।१५।।
स्थूलजिह्वा भवेद्यस्य द्विजाः क्लिद्यंति भामिनि ।।
षण्मासाज्जायते मृत्युश्चिह्नैस्तैरुपलक्षयेत्।।१६।।
अंबुतैलघृतस्थं तु दर्पणे वरवर्णिनि ।।
न पश्यति यदात्मानं विकृतं पलमेव च ।। १७ ।।
षण्मासायुस्स विज्ञेयः कालचक्रं विजानता ।।
अन्यच्च शृणु देवेशि येन मृत्युर्विबुद्ध्यते।।१८।।
शिरोहीनां यदा छायां स्वकीयामुपलक्षयेत् ।।
अथवा छायया हीनं मासमेकं न जीवति।।१९।।
आंगिकानि मयोक्तानि मृत्युचिह्नानि पार्वति।।
बाह्यस्थानि ब्रुवे भद्रे चिह्नानि शृणु सांप्रतम्।।5.25.२०।।
रश्मिहीनं यदा देवि भवेत्सोमार्कमण्डलम्।।
दृश्यते पाटलाकारं मासार्द्धेन विपद्यते।।२१।।
अरुंधती महायानमिंदुलक्षणवर्जितम्।।
अदृष्टतारको योऽसौ मासमेकं स जीवति।।२२।।
दृष्टे ग्रहे च दिङ्मोहः षण्मासाज्जायते ध्रुवम्।।
उतथ्यं न ध्रुवं पश्येद्यदि वा रविमण्डलम्।।२३।।
रात्रौ धनुर्यदापश्येन्मध्याह्ने चोल्कपातनम्।।
वेष्ट्यते गृध्रकाकैश्च षण्मासायुर्न संशयः।।२४।।
ऋषयस्स्वर्गपंथाश्च दृश्यंते नैव चाम्बरे।।
षण्मासायुर्विजनीयात्पुरुषैः कालवेदिभिः ।।।२५।।
अकस्माद्राहुणा ग्रस्तं सूर्यं वा सोममेव च ।।
दिक्चक्रं भ्रांतवत्पश्येत्षण्मासान्म्रियते स्फुटम् ।।२६।।
नीलाभिर्मक्षिकाभिश्च ह्यकस्माद्वेष्ट्यते पुमान् ।।
मासमेकं हि तस्यायुर्ज्ञातव्यं परमार्थतः ।। ।।२७।।
गृध्रः काकः कपोतश्च शिरश्चाक्रम्य तिष्ठति ।।
शीघ्रं तु म्रियते जंतुर्मासैकेन न संशयः ।। २८ ।।
एवं चारिष्टभेदस्तु बाह्यस्थः समुदाहृतः ।।
मानुषाणां हितार्थाय संक्षेपेण वदाम्यहम् ।। २९ ।।
हस्तयोरुभयोर्देवि यथा कालं विजानते ।।
वामदक्षिणयोर्मध्ये प्रत्यक्षं चेत्युदाहृतम् ।।5.25.३०।।
एवं पक्षौ स्थितौ द्वौ तु समासात्सुरसुंदरि ।।
शुचिर्भूत्वा स्मरन्देवं सुस्नातस्संयतेन्द्रियः ।। ।। ३१ ।।

हस्तौ प्रक्षाल्य दुग्धेनालक्तकेन विमर्दयेत् ।।
गंधैः पुष्पैः करौ कृत्वा मृगयेच्च शुभाशुभम् ।।३२।।
कनिष्ठामादितः कृत्वा यावदंगुष्ठकं प्रिये ।।
पर्वत्रयक्रमेणैव हस्तयोरुभयोरपि ।।३३।।
प्रतिपदादिविन्यस्य तिथिं प्रतिपदादितः ।। ।।
संपुटाकारहस्तौ तु पूर्वदिङ्मुखसंस्थितः ।। ३४ ।।
स्मरेन्नवात्मकं मंत्रं यावदष्टोत्तरं शतम् ।।
निरीक्षयेत्ततो हस्तौ प्रतिपर्वणि यत्नतः ।। ३५ ।।
तस्मिन्पर्वणि सा रेखा दृश्यते भृंगसन्निभा ।।
तत्तिथौ हि मृतिर्ज्ञेया कृष्णे शुक्ले तथा प्रिये ।। ३६ ।।
अधुना नादजं वक्ष्ये संक्षेपात्काललक्षणम् ।।
गमागमं विदित्वा तु कर्म कुर्याञ्छृणु प्रिये ।। ३७ ।।
आत्मविज्ञानं सुश्रोणि चारं ज्ञात्वा तु यत्नतः ।।
क्षणं त्रुटिर्लवं चैव निमेषं काष्ठकालिकम् ।। ३८ ।।
मुहूर्तकं त्वहोरात्रं पक्षमासर्तुवत्सरम् ।।
अब्दं युगं तथा कल्पं महाकल्पं तथैव च ।। ३९ ।।
एवं स हरते कालः परिपाट्या सदाशिवः ।।
वामदक्षिणमध्ये तु पथि त्रयमिदं स्मृतम् ।।5.25.४०।।
दिनानि पंच चारभ्य पंचविंशद्दिनावधि ।।
वामाचारगतौ नादः प्रमाणं कथितं तव ।।४१।।
भूतरंध्रदिशश्चैव ध्वजश्च वरवर्णिनि ।।
वामचारगतौ नादः प्रमाणं कालवेदिनः।।४२।।
ऋतोर्विकारभूताश्च गुणास्तत्रैव भामिनि ।।
प्रमाणं दक्षिणं प्रोक्तं ज्ञातव्यं प्राणवेदिभिः ।। ४३ ।।
भूतसंख्या यदा प्राणान्वहंते च इडादयः ।।
वर्षस्याभ्यंतरे तस्य जीवितं हि न संशयः ।। ४४ ।।
दशघस्रप्रवाहेण ह्यब्दमानं स जीवति ।।
पंचदशप्रवाहेण ह्यब्दमेकं गतायुषम् ।।४५।।
विंशद्दिनप्रवाहेण षण्मासं लक्षयेत्तदा ।।
पंचविंशद्दिनमितं वहते वामनाडिका ।।४६।।
जीवितं तु तदा तस्य त्रिमासं हि गतायुषः ।।
षड्विंशद्दिनमानेन मासद्वयमुदाहृतम् ।।४७ ।।
सप्तविंशद्दिनमितं वहतेत्यतिविश्रमा ।।

मासमेकं समाख्यातं जीवितं वामगोचरे।।४८।।
एतत्प्रमाणं विज्ञेयं वामवायुप्रमाणतः ।।
सव्येतरे दिनान्येव चत्वारश्चानुपूर्वशः ।।४९।।
चतुस्स्थाने स्थिता देवि षोडशैताः प्रकीर्तिताः ।।
तेषां प्रमाणं वक्ष्यामि साम्प्रतं हि यथार्थतः।।|5.25.५०|
षड्दिनान्यादितः कृत्वा संख्यायाश्च यथाविधि ।।
एतदंतर्गते चैव वामरंध्रे प्रकाशितम् ।।५१।।
षड्दिनानि यदा रूढं द्विवर्षं च स जीवति ।।
मासानष्टौ विजानीयाद्दिनान्यष्ट च तानि तु ।। ५२ ।।
प्राणः सप्तदशे चैव विद्धि वर्षं न संशयः ।।
सप्तमासान्विजानीयाद्दिनैः षड्भिर्न संशयः ।।५३।।
अष्टघस्रप्रभेदेन द्विवर्षं हि स जीवति ।।
चतुर्मासा हि विज्ञेयाश्चतुर्विंशद्दिनावधिः।।५४।।
यदा नवदिनं प्राणा वहंत्येव त्रिमासकम्।।
मासद्वयं च द्वे मासे दिना द्वादश कीर्तिताः।।५५।।
पूर्ववत्कथिता ये तु कालं तेषां तु पूर्वकम्।।
अवांतरदिना ये तु तेन मासेन कथ्यते ।। ५६ ।।
एकादश प्रवाहेण वर्षमेकं स जीवति ।।
मासा नव तथा प्रोक्ता दिनान्यष्टमितान्यपि ।।५७।।
द्वादशेन प्रवाहेण वर्षमेकं स जीवति ।।
मासान् सप्त विजानीयात्षड्घस्रांश्चाप्युदाहरेत् ।।५८।।
नाडी यदा च वहति त्रयोदशदिनावधि ।।
सम्वत्सरं भवेत्तस्य चतुर्मासाः प्रकीर्तिताः ।।५९।।
चतुर्विंशद्दिनं शेषं जीवितं च न संशयः ।।
प्राणवाहा यदा वामे चतुर्द्दशदिनानि तु ।। 5.25.६० ।।
सम्वत्सरं भवेत्तस्य मासाः षट् च प्रकीर्तिताः ।।
चतुर्विंशद्दिनान्येव जीवितं च न संशयः ।। ६१ ।।
पंचदशप्रवाहेण नव मासान्स जीवति ।।
चतुर्विंशद्दिनान्येव कथितं कालवेदिभिः ।।६२।।
षोडशाहप्रवाहेण दशमासान्स जीवति ।।
चतुर्विंशद्दिनाधिक्यं कथितं कालवेदिभिः ।। ६३ ।।
सप्तदशप्रवाहेण नवमासैर्गतायुषम् ।।
अष्टादशदिनान्यत्र कथितं साधकेश्वरि ।। ६४ ।।

वामचारं यदा देवि ह्यष्टादशदिनावधिः ।।
जीवितं चाष्टमासं तु घस्रा द्वादश कीर्तिताः ।। ६५ ।।
चतुर्विंशद्दिनान्यत्र निश्चयेनावधारय ।।
प्राणवाहो यदा देवि त्रयोविंशद्दिनावधिः ।। ६६ ।।
चत्वारः कथिता मासाः षड्दिनानि तथोत्तरे ।।
चतुर्विंशप्रवाहेण त्रीन्मासांश्च स जीवति।। ६७ ।।
दिनान्यत्र दशाष्टौ च संहरंत्येव चारतः ।।
अवांतरदिने यस्तु संक्षेपात्ते प्रकीर्तितः ।। ६८ ।।
वामचारः समाख्यातो दक्षिणं शृणु सांप्रतम् ।।
अष्टाविंशप्रवाहेण तिथिमानेन जीवति ।। ६९ ।।
प्रवाहेण दशाहेन तत्संस्थेन विपद्यते ।।
त्रिंशद्घस्रप्रवाहेन पञ्चाहेन विपद्यते।। 5.25.७० ।।
एकत्रिंशद्यदा देवि वहते च निरंतरम् ।।
दिनत्रयं तदा तस्य जीवितं हि न संशयः ।।७१।।
द्वात्रिंशत्प्राणसंख्या च यदा हि वहते रविः ।।
तदा तु जीवितं तस्य द्विदिनं हि न संशयः ।।७२।।
दक्षिणः कथितः प्राणो मध्यस्थं कथयामि ते।।
एकभागगतो वायुप्रवाहो मुखमण्डले।। ७३।।
धावमानप्रवाहेण दिनमेकं स जीवति ।।
चक्रमे तत्परासोर्हि पुराविद्भिरुदाहृतम् ।। ७४ ।।
एतत्ते कथितं देवि कालचक्रं गतायुषः ।।
लोकानां च हितार्थाय किमन्यच्छ्रोतुमिच्छसि ।। ७५ ।।
इति श्रीशिवमहापुराणे पंचम्यामुमासंहितायां कालज्ञानवर्णनं नाम पंचविंशोऽध्यायः।।२५।।

देव्युवाच ।।
कथितं तु त्वया देव कालज्ञानं यथार्थतः ।।
कालस्य वंचनं ब्रूहि यथा तत्त्वेन योगिनः ।। १ ।।
कालस्तु सन्निकृष्टो हि वर्तते सर्वजंतुषु ।।
यथा चास्य न मृत्युश्च वंचते कालमागतम् ।। २ ।।
तथा कथय मे देव प्रीतिं कृत्वा ममोपरि ।।
योगिनां च हिताय त्वं ब्रूहि सर्वसुखप्रद ।। ३ ।।
।। शंकर उवाच ।।
शृणु देवि प्रवक्ष्यामि पृष्टोहं यत्त्वया शिवे ।।
समासेन च सर्वेषां मानुषाणां हितार्थतः ।। ४ ।।
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।।
एतेषां हि समायोगः शरीरं पांचभौतिकम् ।। ५ ।।
आकाशस्तु ततो व्यापी सर्वेषां सर्वगः स्थितः।।
आकाशे तु विलीयंते संभवंति पुनस्ततः ।। ६ ।।
वियोगे तु सदा कस्य स्वं धाम प्रतिपेदिरे ।।
तस्या स्थिरता चास्ति सन्निपातस्य सुंदरि ।। ७ ।।
ज्ञानिनोऽपि तथा तत्र तपोमंत्रबलादपि ।।
ते सर्वे सुविजानंति सर्वमेतन्न संशयः ।।८।।
देव्युवाच ।।
खं तेन यन्नश्यति घोररूपः कालः करालस्त्रिदिवैकनाथः ।।
दग्धस्त्वया त्वं पुनरेव तुष्टः स्तोत्रै स्तुतः स्वां प्रकृतिं स लेभे ।।९।।
त्वया स चोक्तः कथया जनानामदृष्टरूपः प्रचरिष्यसीति ।।
दृष्टस्त्वया तत्र महाप्रभावः प्रभोर्वरात्ते पुनरुत्थितश्च।।5.26.१०।।
तदद्य भोः काल इहास्थि किंचिन्निहन्यते येन वदस्व तन्मे ।।
त्वं योगिवर्यः प्रभुरात्मतंत्रः परोपकारात्ततनुर्महेश ।। ११ ।।
शंकर उवाच ।।
न हन्यते देववरैस्तु दैत्यैस्सयक्षरक्षोरगमानुषैश्च ।।
ये योगिनो ध्यानपरास्सदेहा भवंति ते घ्नंति सुखेन कालम् ।।१२।।
सनत्कुमार उवाच ।।
एतच्छ्रुत्वा त्रिभुवनगुरोः प्राह गौरी विहस्य सत्यं त्वं मे वद कथमसौ हन्यते येन कालः ।।
शम्भुस्तामाह सद्यो हि मकरवदने योगिनो ये क्षिपंति कालव्यालं सकलमनघास्तच्छृणुष्वैकचित्ता ।।
१३ ।।
शङ्कर उवाच ।।

पंचभूतात्मको देहस्सदायुक्तस्तु तद्गुणैः ।।
उत्पाद्यते वरारोहे तद्विलीनो हि पार्थिवः ।। १४ ।।
आकाशाज्जायते वायुर्वायोस्तेजश्च जायते ।।
तेजसोऽम्बु विनिर्द्दिष्टं तस्माद्धि पृथिवी भवेत् ।। १५ ।।
पृथिव्यादीनि भूतानि गच्छंति क्रमशः परम् ।।
धरा पंचगुणा प्रोक्ता ह्यापश्चैव चतुर्गुणाः ।। १६ ।।
त्रिगुणं च तथा तेजो वायुर्द्विगुण एव च ।।
शब्दैकगुणमाकाशं पृथिव्यादिषु कीर्तितम् ।। १७ ।।
शब्दस्स्पर्शश्च रूपं च रसो गन्धश्च पंचमः ।।
विजहाति गुणं स्वं स्वं तदा भूतं विपद्यते ।। १८ ।।
तदा गुणं विगृह्णाति प्रादुर्भूतं तदुच्यते ।।
एवं जानीहि देवेशि पंचभूतानि तत्त्वतः ।। १९ ।।
तस्माद्धि योगिना नित्यं स्वस्वकालेंऽशजा गुणाः ।।
चिंतनीयाः प्रयत्नेन देवि कालजिगीषुणा ।।5.26.२०।।
देव्युवाच ।।
कथं जेजीय्यते कालो योगिभिर्योगवित्प्रभो ।।
ध्यानेन चाथ मन्त्रेण तत्सर्वं कथयस्व मे ।।२१।।
शङ्कर उवाच।।
शृणु देवि प्रवक्ष्यामि योगिनां हितकाम्यया ।।
परज्ञानप्रकथनं न देयं यस्य कस्यचित् ।।२२।।
श्रद्दधानाय दातव्यं भक्तियुक्ताय धीमते ।।
अनास्तिकाय शुद्धाय धर्मनित्याय भामिनि ।।२३।।
सुश्वासेन सुशय्यायां योगं युंजीत योगवित् ।।
दीपं विनांधकारे तु प्रजाः सुप्तेषु धारयेत् ।।२४।।
तर्जन्या पिहितौ कर्णौ पीडयित्वा मुहूर्त्तकम्।।
तस्मात्संश्रूयते शब्दस्तुदन्वह्निसमुद्भवः ।। २५ ।।
सन्ध्यातो भुक्तमेवं हि चावसन्नं क्षणादपि ।।
सर्वरोगान्निहत्याशु ज्वरोपद्रवकान्बहून् ।। २६ ।।
यश्चोपलक्षयेन्नित्यैराकारं घटिकाद्वयम्।।
जित्वा मृत्युं तथा कामं स्वेच्छया पर्य्यटेदिह ।।२७।।
सर्वज्ञस्सर्वदर्शी च सर्वसिद्धिमवाप्नुयात्।।
यथा नदति खेऽब्दो हि प्रावृडद्भिस्सुसंयतः ।।२८।।
तं श्रुत्वा मुच्यते योगी सद्यः संसारबन्धनात्।।

ततस्स योगिभिर्न्नित्यं सूक्ष्मात्सूक्ष्मतरो भवेत्।।२९।।
एष ते कथितो देवि शब्दब्रह्मविधिक्रमः ।।
पलालमिव धान्यार्थी त्यजेद्बन्धमशेषतः।।5.26.३०।।
शब्दब्रह्मत्विदं प्राप्य ये केचिदन्यकांक्षिणः ।।
घ्नंति ते मुष्टिनाकाशं कामयंते क्षुधां तृषाम् ।।३१।।
ज्ञात्वा परमिदं ब्रह्म सुखदं मुक्तिकारणम्।।
अवाह्यमक्षरं चैव सर्वोपाधिविवर्जितम् ।। ३२ ।।
मोहिताः कालपाशेन मृत्युपाशवशंगताः ।।
शब्दब्रह्म न जानंति पापिनस्ते कुबुद्धयः।।३३।।
तावद्भ्रवंति संसारे यावद्धाम न विंदते ।।
विदिते तु परे तत्त्वे मुच्यते जन्मबन्धनात् ।।३४।।
निद्रालस्यं महा विघ्नं जित्वा शत्रुं प्रयत्नतः।।
सुखासने स्थितो नित्यं शब्दब्रह्माभ्यसन्निति ।।३५।।
शतवृद्धः पुमांल्लब्ध्वा यावदायुस्समभ्यसेत् ।।
मृत्युञ्जयवपुस्तम्भ आरोग्यं वायुवर्द्धनम् ।।३६।।
प्रत्ययो दृश्यते वृद्धे किं पुनस्तरुणे जने।।
न चोंकारो न मन्त्रोपि नैव बीजं न चाक्षरम् ।।३७।।
अनाहतमनुच्चार्य्यं शब्दब्रह्म शिवं परम् ।।
ध्यायन्ते देवि सततं सुधिया यत्नतः प्रिये ।। ३८ ।।
तस्माच्छब्दा नव प्रोक्ताः प्राणविद्भिस्तु लक्षिताः ।।
तान्प्रवक्ष्यामि यत्नेन नादसिद्धिमनुक्रमात् ।।३९।।
घोषं १ कांस्यं २ तथा शृंगं ३ घण्टां ४ वीणा ५ दिवंशजान् ६ ।।
दुन्दुभिं ७ शंखशब्दं ८ तु नवमं मेघगर्जितम् ९ ।। 5.26.४० ।।
नव शब्दान्परित्यज्य तुंकारं तु समभ्यसेत् ।।
ध्यायन्नेवं सदा योगी पुण्यैः पापैर्न लिप्यते ।। ४१ ।
न शृणोति यदा शृण्वन्योगाभ्यासेन देविके ।।
म्रियतेभ्यसमानस्तु योगी तिष्ठेद्दिवानिशम् ।। ४२ ।।
तस्मादुत्पद्यते शब्दो मृ त्सप्तभिर्दिनैः ।।
स वै नवविधो देवि तं ब्रवीमि यथार्थतः ।। ।।
प्रथमं नदते घोषमात्मशुद्धिकरं परम् ।।
सर्वव्याधिहरं नादं वश्याकर्षणमुत्तमम् ।। ४४ ।।
द्वितीयं नादते कांस्यस्तम्भयेत्प्राणिनां गतिम् ।।
विषभूतग्रहान्सर्वान्बध्नीयान्नात्र संशयः ।। ४५ ।।

तृतीयं नादते शृंगमभिचारि नियोजयेत् ।।
विद्विड्च्चाटने शत्रोर्मारणे च प्रयोजयेत्।।४६।।
घंटानादं चतुर्थं तु वदते परमेश्वरः ।।
आकर्षस्सर्वदेवानां किं पुनर्मानुषा भुवि।।४७।।
यक्षगन्धर्वकन्याश्च तस्याकृष्टा ददंति हि ।।
यथेप्सितां महासिद्धिं योगिने कामतोऽपि वा ।।४८।।
वीणा तु पंचमो नादः श्रूयते योगिभिस्सदा।।
तस्मादुत्पद्यते देवि दूरादर्शनमेव हि ।। ४९ ।।
ध्यायतो वंशनादं तु सर्वतत्त्वं प्रजायते ।।
दुन्दुभिं ध्यायमानस्तु जरामृत्युविवर्जितः ।।5.26.५०।।
शंखशब्देन देवेशि कामरूपं प्रपद्यते ।।
योगिनो मेघनादेन न विपत्संगमो भवेत् ।।५१।।
यश्चैकमनसा नित्यं तुंकारं ब्रह्मरूपिणम् ।।
किमसाध्यं न तस्यापि यथामति वरानने ।।५२।।
सर्वज्ञस्सर्वदर्शी च कामरूपी व्रजत्यसौ ।।
न विकारैः प्रयुज्येत शिव एव न संशयः ।। ५३ ।।
एतत्ते परमेशानि शब्दब्रह्मस्वरूपकम् ।।
नवधा सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ।। ५४ ।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां कालवंचनवर्णनं नाम षड्विंशोऽध्यायः ।। २६ ।।

देव्युवाच ।।
वायोस्तु पदमाप्नोति योगाकाशसमुद्भवम् ।।
तन्मे सर्वं समाचक्ष्व प्रसन्नस्त्वं यदि प्रभो ।। १ ।।
।। शंकर उवाच ।।
पुरा मे सर्वमाख्यातं योगिनां हितकाम्यया ।।
कालं जिगाय यस्सम्यग्वायोर्लिंगं यथा भवेत् ।। २ ।।
तेन ज्ञात्वा दिनं योगी प्राणायामपरः स्थितः ।।
स जयत्यागतं कालं मासार्द्धेनैव सुंदरि ।।। ३ ।।
हृत्स्थो वायुस्सदा वह्नेर्दीपकस्सोऽनुपावकः ।।
स बाह्याभ्यंतरो व्यापी वायुस्सर्वगतो महान् ।। ४ ।।
ज्ञानविज्ञानमुत्साहः सर्वं वायोः प्रवर्तते ।।
येनेह निर्जितो वायुस्तेन सर्वमिदं जगत् ।। ५ ।।
धारणायां सदा तिष्ठेज्जरामृत्युजिघांसया ।।
योगी योगरतः सम्यग्धारणाध्यानतत्परः ।। ६ ।।
लोहकारो यथा भस्त्रामापूर्य्य मुखतो मुने ।।
साधयेद्वायुना कर्म तद्वद्योगी समभ्यसेत् ।। ७ ।।
देवस्सहस्रके नेत्रपादहस्तसहस्रकः ।।
ग्रंथीन्हि सर्वमावृत्य सोऽग्रे तिष्ठेद्दशांगुलम् ।। ८ ।।
गायत्रीं शिरसा सार्द्धं जपेद्व्याहृतिपूर्विकाम् ।।
त्रिवारमायतप्राणाः प्राणायामस्स उच्यते ।।९।।
गतागता निवर्तंते चन्द्रसूर्यादयो ग्रहाः ।।
अद्यापि न निवर्तंते योगध्यानपरायणाः ।। 5.27.१० ।।
शतमब्दं तपस्तप्त्वा कुशाग्रापः पिबेद्द्विजः ।।
तदाप्नोति फलं देवि विप्राणां धारणैकया ।। ११ ।।
यो द्विजः कल्यमुत्थाय प्राणायामैकमाचरेत् ।।
सर्वं पापं निहंत्याशु ब्रह्मलोकं स गच्छति ।।१२।।
योऽतंद्रितस्सदैकांते प्रणायामपरो भवेत् ।।
जरां मृत्युं विनिर्जित्य वायुगः खेचरीति सः ।। १३ ।।
सिद्धस्य भजते रूपं कांतिं मेधां पराक्रमम् ।।
शौर्यं वायुसमो गत्या सौख्यं श्लाघ्यं परं सुखम् ।। १४ ।।
एतत्कथितमशेषं वायोस्सिद्धिं यदाप्नुते योगी ।।
यत्तेजसोऽपि लभते तत्ते वक्ष्यामि देवेशि ।। १५ ।।
स्थित्वा सुखासने स्वे शेते जनवचनहीने तु ।।

शशिरवियुतया तेजः प्रकाशयन्मध्यमे देशे ।। १६ ।।
वह्निगतं भ्रूमध्ये प्रकाशते यस्त्वतंद्रितो योगी ।।
दीपहीनध्वांत पश्येन्न्यूनमसंशयं लोके ।। १७ ।।
नेत्रे करशाखाभिः किंचित्संपीड्य यत्नतो योगी ।।
तारं पश्यन्ध्यायेन्मुहूर्तमर्द्धं तमेकभावोऽपि ।। १८ ।।
ततस्तु तमसि ध्यायन्पश्यते ज्योतिरैश्वरम्।।
श्वेतं रक्तं तथा पीतं कृष्णमिन्द्रधनुष्प्रभम् ।।१९।।
भ्रुवोर्मध्ये ललाटस्थं बालार्कसमतेजसम्।।
तं विदित्वा तु कामांगी क्रीडते कामरूपधृक् ।। 5.27.२० ।।
कारणप्रशमावेशं परकायप्रवेशनम् ।।
अणिमादिगुणावाप्तिर्मनसा चावलोकनम्।।२१।।
दूरश्रवण विज्ञानमदृश्यं बहुरूपधृक् ।।
सतताभ्यासयोगेन खेचरत्वं प्रजायते ।। २२ ।।
श्रुताध्ययनसंपन्ना नानाशास्त्रविशारदाः।।
ज्ञानिनोऽपि विमुह्यंते पूर्वकर्मवशानुगाः ।। २३ ।।
पश्यंतोऽपि न पश्यंति शृण्वाना बधिरा यथा ।।
यथांधा मानुषा लोके मूढाः पापविमोहिताः ।। २४ ।।
वेदाहमेतं पुरुषं महांतमादित्यवर्णं तमसः परस्तात् ।।
तमेव विदित्वातिमृत्युमेति नान्यः पंथा विद्यते प्रायणायः ।। २५ ।।
एष ते कथितः सम्यक्तेजसो विधिरुत्तमः ।।
कालं जित्वा यथा योगी चामरत्वं प्रपद्यते ।।२६।।
पुनः परतरं वक्ष्ये यथा मृत्युर्न जायते ।।
सावधानतया देवि शृणुष्वैकाग्रमानसा ।। २७ ।।
तुरीया देवि भूतानां योगिनां ध्यानिनां तथा ।।
सुखासने यथास्थानं योगी नियतमानसः ।।२८।।
समुन्नतशरीरोऽपि स बद्ध्वा करसंपुटम् ।।
चञ्च्वाकारेण वक्त्रेण पिबन्वायुं शनैश्शनैः ।।२९।।
प्रस्रवंति क्षणादापस्तालुस्था जीवदायिकाः ।।
ता जिघ्रेद्वायुनादायामृतं तच्छीतलं जलम् ।।३८।।
पिबन्ननुदिनं योगी न मृत्युवशगो भवेत् ।।
दिव्यकायो महातेजाः पिपासा क्षुद्विवर्जितः ।। ३१ ।।
बलेन नागस्तुरगो जवेन दृष्ट्या सुपर्णस्सुश्रुतिस्तु दूरात् ।।
आकुंचिताकुंडलिकृष्णकेशो गंधर्वविद्याधरतुल्यवर्णः ।।३२।।

जीवेन्नरो वर्षशतं सुराणां सुमेधसा वाक्पतिना समत्वम्।।
एवं चरन् खेचरतां प्रयाति यथेष्टचारी सुखितस्सदैव ।। ३३ ।।
पुनरन्यत्प्रवक्ष्णमि विधानं यत्सुरैरपि ।।
गोपितं तु प्रयत्नेन तच्छृणुष्व वरानने ।। ३४ ।।
समाकुंच्याभ्यसेद्योगी रसनां तालुकं प्रति ।।
किंचित्कालांतरेणैव क्रमात्प्राप्नोति लंबिकाम्।।३५।।
ततः प्रस्रवते सा तु संस्पृष्टा शीतलां सुधाम् ।।
पिबन्नेव सदा योगी सोऽमरत्वं हि गच्छति ।। ३६ ।।
रेफाग्रं लंबकाग्रं करतलघटनं शुभ्रपद्मस्य बिन्दोस्तेनाकृष्टा सुधेयं पतति परपदे देवतानंदकारी ।।
सारं संसारतारं कृतकलुषतरं कालतारं सतारं येनेदं प्लावितांगं स भवति न मृतः क्षुत्पिपासाविहीनः।।
३७।।
एभिर्युक्ता चतुर्भिः क्षितिधरतनये योगिभिर्वै धरैषा धैर्य्यान्नित्यं कुतोऽन्तं सकलमपि
जगद्यत्सुखप्रापणाय।।
स्वप्ने देही विधत्ते सकलमपि सदा मानयन्यच्च दुःखं स्वर्गे ह्येवं धरित्र्याः प्रभवति च ततो वा स
किञ्चिच्चतुर्णाम् ।। ३८ ।। तस्मान्मंत्रैस्तपोभिर्व्रतनियमयुतैरौषधैर्योगयुक्ता धात्री रक्ता
मनुष्यैर्नयविनययुतैर्धर्मविद्भिः क्रमेण ।।
भूतानामादि देवो न हि भवति चलः संयुतो वै चतुर्णां तस्मादेवं प्रवक्ष्ये विधिमनुगदितं छायिकं
यच्छिवाख्यम् ।।३९।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां कालवंचनशिवप्राप्तिवर्णनं नाम सप्तविंशोऽध्यायः।।
२७।।

देव्युवाच ।।
देवदेव महादेव कथितं कालवंचनम्।।
शब्दब्रह्मस्वरूपं च योगलक्षणमुत्तमम्।।१।।
कथितं ते समासेनच्छायिकं ज्ञानमुत्तमम्।।
विस्तरेण समाख्याहि योगिनां हितकाम्यया ।। २ ।।
।। शंकर उवाच ।।
शृणु देवि प्रवक्ष्यामिच्छायापुरुषलक्षणम् ।।
यज्ज्ञात्वा पुरुषः सम्यक्सर्वपापैः प्रमुच्यते ।।३।।
सूर्य्यं हि पृष्ठतः कृत्वा सोमं वा वरवर्णिनि ।।
शुक्लाम्बरधरस्स्रग्वी गंधधूपादिवासितः ।।४।।
संस्मरेन्मे महामंत्रं सर्वकामफलप्रदम्।।
नवात्मकं पिंडभूतं स्वां छायां संनिरीक्षयेत् ।। ५ ।।
दृष्ट्वा तां पुनराकाशे श्वेतवर्णस्वरूपिणीम् ।।
स पश्यत्येकभावस्तु शिवं परमकारणम्।।६।।
ब्रह्मप्राप्तिर्भवेत्तस्य कालविद्भिरितीरितम् ।।
ब्रह्महत्यादिकैः पापैर्मुच्यते नात्र संशयः ।।७।।
शिरोहीनं यदा पश्येत्षड्भिर्मासैर्भवेत्क्षयः।।
समस्तं वाङ्मयं तस्य योगिनस्तु यथा तथा।।८।।
शुक्ले धर्मं विजानीयात्कृष्णे पापं विनिर्दिशेत्।।
रक्ते बंधं विजानीयात्पीते विद्विषमादिशेत्।।९।।
विवाहो बंधुनाशस्स्याद्द्वितुंडे चैव क्षुद्भयम् ।।
विकटौ नश्यते भार्य्या विजंघे धनमेव हि ।।5.28.१०।।
पादाभावे विदेशस्स्यादित्येतत्कथितं मया ।।
तद्विचार्य्यं प्रयत्नेन पुरुषेण महेश्वरि ।। ११ ।।
सम्यक्तं पुरुषं दृष्ट्वा संनिवेश्यात्मनात्मनि ।।
जपेन्नवात्मकं मंत्रं हृदयं मे महेश्वरि ।। १२ ।।
वत्सरे विगते मंत्री तन्नास्ति यन्न साधयेत् ।।
अणिमादिगुणानष्टौ खेचरत्वं प्रपद्यते ।।१३।।
पुनरन्यत्प्रवक्ष्यामि शक्तिं ज्ञातुं दुरासदाम् ।।
प्रत्यक्षं दृश्यते लोके ज्ञानिनामग्रतः स्थितम् ।।१४।।
अज्ञेया लिख्यते लोके या सर्पीकृतकुण्डली ।।
सा मात्रा यानसंस्थापि दृश्यते न च पठ्यते ।।१५।।
ब्रह्माण्डमूर्ध्निगा या च स्तुता वेदैस्तु नित्यशः ।।

जननी सर्वविद्यानां गुप्तविद्येति गीयते ।। १६ ।।
खेचरा सा विनिर्दिष्टा सर्वप्राणिषु संस्थिता ।।
दृश्यादृश्याचला नित्या व्यक्ताव्यक्ता सनातनी ।। १७ ।।
अवर्णा वर्णसंयुक्ता प्रोच्यते बिंदुमालिनी ।।
तां पश्यन्सर्वदा योगी कृतकृत्योऽभिजायते ।।१८।।
सर्वतीर्थकृतस्नानाद्ब्रवेद्दानस्य यत्फलम्।।
सर्वयज्ञफलं यच्च मालिन्या दर्शनात्तदा।।१९।।
प्राप्नोत्यत्र न संदेहस्सत्यं वै कथितं मया ।।
सर्वतीर्थेषु यत्स्नात्वा दत्त्वा दानानि सर्वशः ।।5.28.२०।।
सर्वेषां देवि यज्ञानां यत्फलं तल्लभेत्पुमान्।।
किं बहूक्त्या महेशानि सर्वान्कामान्समश्नुते।।२१।।
तस्माज्ज्ञानं यथायोगमभ्यसेत्सततं बुधः।।
अभ्यासाज्जायते सिद्धिर्योगोऽभ्यासात्प्रवर्धते।।२२।।
संवित्तिर्लभ्यतेऽभ्यासादभ्यासान्मोक्षमश्नुते।।
अभ्यासस्सततं कार्यो धीमता मोक्षकारणम्।।२३।।
इत्येतत्कथितं देवि भुक्तिमुक्तिफलप्रदम्।।
किमन्यत्पृच्छयते तत्त्वं वद सत्यं ब्रवीमि ते।।२४।।
सूत उवाच।।
इति श्रुत्वा ब्रह्मपुत्रवचनं परमार्थदम्।।
प्रसन्नोऽभूदति व्यासः पाराशर्य्यो मुनीश्वराः।।२५।।
सनत्कुमारं सर्वज्ञं ब्रह्मपुत्रं कृपानिधिम्।।
व्यासः परमसंतुष्टः प्रणनाम मुहुर्मुहुःष।२६।
ततस्तुष्टाव तं व्यासः कालेयस्स मुनीश्वरः।।
सनत्कुमारं मुनयः सुरविज्ञानसागरम्।।२७।।
व्यास उवाच ।।
कृतार्थोऽहं मुनिश्रेष्ठ ब्रह्मत्वं मे त्वया कृतम् ।।
नमस्तेऽस्तु नमस्तेऽतु धन्यस्त्वं ब्रह्मवित्तमः ।। २८ ।।
सूत उवाच ।।
इति स्तुत्वा स कालेयो ब्रह्मपुत्रं महामुनिम् ।।
तूष्णीं बभूव सुप्रीतः परमानंदनिर्भरः ।।२९।।
ब्रह्मपुत्रस्तमामंत्र्य पूजितस्तेन शौनकः ।।
ययौ स्वधाम सुप्रीतो व्यासोऽपि प्रीतमानसः ।। 5.28.३० ।।
इति मे वर्णितो विप्राः सुखदः परमार्थयुक् ।।

सनत्कुमारकालेयसंवादो ज्ञानवर्द्धनः ।।३१।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां छायापुरुषदर्शनवर्णनं नामाष्टाविंशोऽध्यायः ।।२८।।

शौनक उवाच।।
श्रुतं मे महदाख्यानं यत्त्वया परिकीर्तितम् ।।
सनत्कुमारकालेयसंवादं परमार्थदम् ।।१।।
अतोहं श्रोतुमिच्छामि यथा सर्गस्तु ब्रह्मणः ।।
समुत्पन्नं तु मे ब्रूहि यथा व्यासाच्च ते श्रुतम् ।।२।।
सूत उवाच ।।
मुने शृणु कथां दिव्यां सर्वपापप्रणाशिनीम् ।।
कथ्यमानां मया चित्रां बह्वर्थां श्रुतविस्तराम् ।। ३ ।।
यश्चैनां पाठयेत्तां च शृणुयाद्वाऽप्यभीक्ष्णशः ।।
स्ववंशधारणं कृत्वा स्वर्गलोके महीयते ।। ४ ।।
प्रधानं पुरुषो यत्तन्नित्यं सदसदात्मकम् ।।
प्रधानपुरुषो भूत्वा निर्ममे लोकभावनः ।। ५ ।।
स्रष्टारं सर्वभूतानां नारायणपरायणम् ।।
तं वै विद्धि मुनिश्रेष्ठ ब्रह्माणममितौजसम् ।। ६ ।।
यस्मादकल्पयत्कल्पान्तमग्राश्शुचयो यतः ।।
भवंति मुनिशार्दूल नमस्तस्मै स्वयम्भुवे ।।७।।
तस्मै हिरण्यगर्भाय पुरुषायेश्वराय च ।।
नमस्कृत्य प्रवक्ष्यामि भूयः सर्गमनुत्तमम् ।।८।।
ब्रह्मा स्रष्टा हरिः पाता संहर्ता च महेश्वरः ।।
तस्य सर्गस्य नान्योऽस्ति काले काले तथा गते ।। ९ ।।
सोऽपि स्वयंभूर्भगवान्सिसृक्षुर्विविधाः प्रजाः ।।
अप एव ससर्जादौ तासु वीर्यमवासृजत् ।।5.29.१०।।
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ।। ११ ।।
हिरण्यवर्णमभवत्तदंडमुदकेशयम् ।।
तत्र जज्ञे स्वयं ब्रह्मा स्वयंभूरिति विश्रुतः ।। १२ ।।
हिरण्यगर्भो भगवानुषित्वा परिवत्सरम् ।।
तदंडमकरोद्द्वैधं दिवं भूमिं च निर्ममे ।। १३ ।।
अधोऽथोर्द्ध्वं प्रयुक्तानि भुवनानि चतुर्द्दश ।।
तयोश्शकलयोर्मध्य आकाशममृजत्प्रभुः ।।१४।।
अप्सु पारिप्लवां पृथ्वीं दिशश्च दशधा दिवि ।।
तत्र काले मनो वाचं कामक्रोधावथो रतिम्।।१५।।
मरीचिमत्र्यंगिरसौ पुलस्त्यं पुलहं क्रतुम ।।

वसिष्ठं तु महतेजास्सोऽसृजत्सप्त मानसान्।। १६ ।।
सप्त बह्माण इत्येते पुराणे निश्चयं गताः ।।
ततोऽसृजत्पुनर्ब्रह्मा रुद्रान्क्रोधसमुद्भवान् ।। १७ ।।
सनत्कुमारं च ऋषिं सर्वेषामपि पूर्वजम् ।।
सप्त चैते प्रजायंते पश्चाद्रुद्राश्च सर्वतः ।। १८ ।।
अतस्सनत्कुमारस्तु तेजस्संक्षिप्य तिष्ठति ।।
तेषां सप्तमहावंशा दिव्या देवर्षिपूजिताः ।।१९।।
प्रजायन्ते क्रियावन्तो महर्षिभिरलंकृताः ।।
विद्युतोऽशनि मेघांश्च रोहितेन्द्रधनूंषि च ।।5.29.२०।।
पयांसि च ससर्जादौ पर्जन्यं च ससर्ज ह ।।
ऋचो यजूंषि सामानि निर्ममे यज्ञसिद्धये ।। २१ ।।
पूज्यांस्तैरयजन्देवानित्येवमनुशुश्रुम ।।
मुखाद्देवानजनयत्पितॄंश्चैवाथ वक्षसः ।।
प्रजनाच्च मनुष्यान्वै जघनान्निर्ममेऽसुरान् ।। २२ ।।
उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे ।।
आपवस्य प्रजासर्गं सृजतो हि प्रजापतेः ।।२३।।
सृज्यमानाः प्रजाश्चैव नावर्द्धन्त यदा तदा ।।
द्विधा कृत्वात्मनो देहं स्त्री चैव पुरुषोऽभवत्।। २४ ।।
ससृजेऽथ प्रजास्सर्वा महिम्ना व्याप्य विश्वतः ।।
विराजमसृजद्विष्णुस्स सृष्टः पुरुषो विराट् ।। २५ ।।
द्वितीयं तं मनुं विद्धि मनोरन्तरमेव च ।।
स वैराजः प्रजास्सर्वास्ससर्ज पुरुषः प्रभुः ।। २६ ।।
नारायणविसर्गस्य प्रजास्तस्याप्ययोनिजः ।।
आयुष्मान्कीर्तिमान्धन्यः प्रजावांश्चाभवत्ततः ।।२७।।
इत्येवमादिसर्गस्ते वर्णितो मुनिसत्तम ।।
आदिसर्गं विदित्वैवं यथेष्टां प्राप्नुयाद्गतिम् ।। २८ ।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायामादिसर्गवर्णनं नाम एकोनत्रिंशोऽध्यायः ।।२९।।

सूत उवाच ।।
संसृष्टासु प्रजास्वेव आपवोऽथ प्रजाप्रतिः ।।
लेभे वै पुरुषः पत्नीं शतरूपामयो निजाम्।। १ ।।
आपवस्य महिम्ना तु दिवमावृत्य तिष्ठतः ।।
धर्मेणैव महात्मा स शतरूपाप्यजायत ।। २ ।।
सा तु वर्षशतं तप्त्वा तपः परमदुश्चरम् ।।
भर्तारं दीप्ततपसं पुरुषं प्रत्यपद्यत ।। ३ ।।
स वै स्वायंभुवो जज्ञे पुरुषो मनुरुच्यते ।।
तस्यैकसप्ततियुगं मन्वंतरमिहोच्यते ।। ४ ।।
वैराजात्पुरुषाद्वीरा शतरूपा व्यजायत ।।
प्रियव्रतोत्तानपादौ वीरकायामजायताम् ।।५।।
काम्या नाम महाभागा कर्दमस्य प्रजापतेः ।।
काम्यापुत्रास्त्रयस्त्वासन्सम्राट्साक्षिरविट्प्रभुः ।।६।।
उत्तानपादोऽजनयत्पुत्राञ्छक्रसमान्प्रभुः ।।
ध्रुवं च तनयं दिव्यमात्मानंदसुवर्चसम्।। ७ ।।
धर्मस्य कन्या सुश्रोणी सुनीतिर्नाम विश्रुता ।।
उत्पन्ना चापि धर्म्मेण धुवस्य जननी तथा ।। ८ ।।
ध्रुवो वर्षसहस्राणि त्रीणि दिव्यानि कानने ।।
तपस्तेपे स बालस्तु प्रार्थयन्स्थानमव्ययम् ।। ९ ।।
तस्मै ब्रह्मा ददौ प्रीतस्स्थानमात्मसमं प्रभुः ।।
अचलं चैव पुरतस्सप्तर्षीणां प्रजापतिः ।।5.30.१०।।
तस्मात्पुष्टिश्च धान्यश्च ध्रुवात्पुत्रौ व्यजायताम् ।।
पुष्टिरेवं समुत्थायाः पञ्चपुत्रानकल्मषान् ।।११।।
रिपुं रिपुंजयं विप्रं वृकलं वृषतेजसम् ।।
रिपोरेवं च महिषी चाक्षुषं सर्वतोदिशम् ।।१२।।
अजीजनत्पुष्करिण्यां वरुणं चाक्षुषो मनुः ।।
मनोरजायन्त दश नड्वलायां महौजसः।।१३।।
कन्यायां हि मुनिश्रेष्ठ वैश्यजन्म प्रजायतेः।।
पुरुर्मासः शतद्युम्नस्तपस्वी सत्यवित्कविः ।।१४।।
अग्निष्टोमोऽतिरात्रश्चातिमन्युस्सुयशा दश।।
पूरोरजनयत्पुत्रान्षडाग्नेयी महाप्रभान् ।।१५।।
अङ्गं सुमनसं ख्यातिं सृतिमंगिरसं गयम्।।
अङ्गात्सुनीथा भार्य्या वै वेनमेकमसूयत।।१६।।

अपचारेण वेनस्य कोपस्तेषां महानभूत्।।
हुंकारेणैव तं जघ्नुर्मुनयो धर्मतत्पराः।।१७।।
अथ प्रजार्थमृषयः प्रार्थिताश्च सुनीथया।।
सारस्वतास्तदा तस्य ममंथुर्दक्षिणं करम्।।१८।।
वेनस्य पाणौ मथिते संबभूव ततः पृथुः ।।
स धन्वी कवची जातस्तेजसादित्यसन्निभः ।। १९ ।।
अवतारस्य विष्णोर्हि प्रजापालनहे तवे ।।
धर्मसंरक्षणार्थाय दुष्टानां दंडहेतवे ।।5.30.२०।।
पृथुर्वैन्यस्तदा पृथ्वीमरक्षत्क्षत्रपूर्वजः ।।
राजसूयाभिषिक्तानामाद्यस्स वसुधापतिः ।।२१।।
तस्माच्चैव समुत्पन्नौ निपुणौ सूतमागधौ ।।
तेनेयं गौर्मुनिश्रेष्ठ दुग्धा सर्वहिताय वै ।। २२ ।।
सर्वेषां वृत्तिदश्चाभूद्देवर्षिसुर रक्षसाम् ।।
मनुष्याणां विशेषेण शतयज्ञकरो नृपः ।। २३ ।।
पृथोः पुत्रौ तु जज्ञाते धर्मज्ञौ भुवि पार्थिवौ ।।
विजिताश्वश्च हर्यक्षो महावीरौ सुविश्रुतौ ।।२४।।
शिखंडिनी चाजनयत्पुत्रं प्राचीनबर्हिषम् ।।
प्राचीनाग्राः कुशास्तस्य पृथिवीतलचारिणः।२५।।
समुद्रतनया तेन धर्मतस्सुविवाहिता।।
रेजेऽधिकतरं राजा कृतदारो महाप्रभुः।।२६।।
समुद्रतनयायास्तु दश प्राचीनबर्हिषः।।
बभूवुस्तनया दिव्या बहुयज्ञकरस्य वै ।। २७ ।।
सर्वे प्राचेतसा नाम्ना धनुर्वेदस्य पारगाः ।।
अपृथग्धर्माचरणास्तेऽतप्यंत महत्तपः ।। २८ ।।
दशवर्षसहस्राणि समुद्रसलिलेशयाः ।।
रुद्रगीतं जपंतश्च शिवध्यानपरायणाः ।। २९ ।।
तपश्चरत्सु पृथिव्यामभवंश्च महीरुहाः ।।
अरक्ष्यमाणायां पृथ्व्यां बभूवाथ प्रजाक्षयः ।। 5.30.३० ।।
तान्दृष्ट्वा तु निवृत्तास्ते तपसो लब्धसद्वराः ।।
चुक्रुधुर्मुनिशार्दूल दग्धुकामा स्तपोबलाः ।। ३१ ।।
प्राचेतसा मुखेभ्यस्ते प्रासृजन्नग्निमारुतौ ।।
वृक्षानुन्मूल्य वायुस्तानदहद्धव्यवाहनः ।। ३२ ।।
वृक्षक्षयं ततो दृष्ट्वा किंचिच्छेषेषु शाखिषु ।।

उपगम्याब्रवीदेतान्राजा सोमः प्रतापवान् ।। ३३ ।।
सोम उवाच ।।
कोपं यच्छत राजानस्सर्वे प्राचीनबर्हिषः ।।
अनुभूतानुकन्येयं वृक्षाणां वरवर्णिनी ।। ३४ ।।
भविष्यं जानता सा तु धृता गर्भेण वै मया ।।
भार्य्या वोऽस्तु महाभागास्सोमवंशविवर्द्धिनी ।। ३५ ।।
अस्यामुत्पत्स्यते विद्वान्दक्षो नाम प्रजापतिः ।।
सृष्टिकर्ता महातेजा ब्रह्मपुत्रः पुरातनः।।। ।।३६।।
युष्माकं तेजसार्द्धेन मम चानेन तेजसा ।।
ब्रह्मतेजोमयो भूपः प्रजा संवर्द्धयिष्यति ।। ३७ ।।
ततस्सोमस्य वचनाज्जगृहुस्ते प्रचेतसः ।।
भार्य्यां धर्मेण तां प्रीत्या वृक्षजां वरवर्णिनीम् ।।३८।।
तेभ्यस्तस्यास्तु संजज्ञे दक्षो नाम प्रजापतिः ।।
सोऽपि जज्ञे महातेजास्सोमस्यांशेन वै मुने ।। ३९ ।।
अचरांश्च चरांश्चैव द्विपदोऽथ चतुष्पदः ।।
संसृज्य मनसा दक्षो मैथुनीं सृष्टिमारभत् ।। 5.30.४० ।।
वीरणस्य सुतां नाम्ना वीरणीं स प्रजापतेः ।।
उपयेमे सुविधिना सुधर्मेण पतिव्रताम् ।। ४१ ।।
हर्य्यश्वानयुतं तस्यां सुतान्पुण्यानजीजनत् ।।
ते विरक्ता बभूवुश्च नारदस्योपदेशतः ।। ४२ ।।
तच्छ्रुत्वा स पुनर्दक्षस्सुबलाश्वानजीजनत् ।।
नामतस्तनयांस्तस्यां सहस्रपरिसंख्यया ।।४३।।
तेऽपि भ्रातृपथा यातास्तन्मुनेरुपदेशतः ।।
नागमन्पितृसान्निध्यं विरक्ता भिक्षुमार्गिणः ।।४४।।
तच्छ्रुत्वा शापमाक्रुद्धो मुनये दुस्सहं ददौ ।।
कुत्रचिन्न लभस्वेति संस्थितिं कलहप्रिय ।। ४५ ।।
सांत्वितोऽथ विधात्रा हि स पश्चादसृजत्स्त्रियः ।।
महाज्वालास्वरूपेण गुणैश्चापि मुनीश्वरः ।। ४६ ।।
ददौ स दश धर्माय कश्यपाय त्रयोदश ।।
द्वे चैवं ब्रह्मपुत्राय द्वे चैवाङ्गिरसे तदा ।। ४७ ।।
द्वे कृशाश्वाय विदुषे मुनये मुनिसत्तम ।।
शिष्टास्सोमाय दक्षोऽपि नक्षत्राख्या ददौ प्रभुः ।। ४८ ।।
ताभ्यो दक्षस्य पुत्रीभ्यो जाता देवासुरादयः ।।

बहवस्तनया ख्यातास्तैस्सर्वैः पूरितं जगत् ।।४९।।
ततः प्रभृति विप्रेन्द्र प्रजा मैथुनसंभवाः ।।
संकल्पाद्दर्शनात्स्पर्शात्पूर्वेषां सृष्टिरुच्यते ।।5.30.५०।।
।। शौनक उवाच ।।
अंगुष्ठाद्ब्रह्मणो जज्ञे दक्षश्चोक्तस्त्वया पुरा।।
कथं प्राचेतसत्वं हि पुनर्लेभे महातपाः ।। ५१ ।।
एतं मे संशयं सूत प्रत्याख्यातुं त्वमर्हसि ।।
चित्रमेतत्स सोमस्य कथं श्वशुरतां गतः ।। ५२ ।।
।। सूत उवाच ।।
उत्पत्तिश्च निरोधश्च नित्यं भूतेषु वर्तते ।।
कल्पेकल्पे भवंत्येते सर्वे दक्षादयो मुने ।। ५३ ।।
इमां विसृष्टिं दक्षस्य यो विद्यात्सचराचराम् ।।
प्रजावानायुषा पूर्णस्स्वर्गलोके महीयते ।।५४।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां सर्गवर्णनं नाम त्रिंशोऽध्यायः ।। ३० ।।

शौनक उवाच ।।
देवानां दानवानां च गन्धर्वोरगरक्षसाम् ।।
सृष्टिं तु विस्तरेणेमां सूतपुत्र वदाशु मे ।।१।।
सूत उवाच ।।
यदा न ववृधे सा तु वीरणस्य प्रजापतिः ।।
सुतां सुतपसा युक्तामाह्वयत्सर्गकारणात् ।। २ ।।
स मैथुनेन धर्मेण ससर्ज विविधाः प्रजाः ।।
ताः शृणु त्वं महाप्राज्ञ कथयामि समासतः ।। ३ ।।
तस्यां पुत्रसहस्राणि वीरिण्यां पंच वीर्यवान्।।
आश्रित्य जनयामास दक्ष एव प्रजापतिः ।।४।।
एतान्सृष्टांस्तु तान्दृष्ट्वा नारदः प्राह वै मुनिः ।।
सर्वं स तु समुत्पन्नो नारदः परमेष्ठिनः ।।५।।
श्रुतवान्वा कश्यपाद्वै पुंसां सृष्टिर्भविष्यति ।।
दक्षस्येव दुहितृषु तस्मात्तानब्रवीत्तु सः ।। ६ ।।
अजानतः कथं सृष्टिं बालिशा वै करिष्यथ ।।
दिशं कांचिदजानंतस्तस्माद्विज्ञाय तां भुवम् ।। ७ ।।
इत्युक्ताः प्रययुस्सर्वे आशां विज्ञातुमोजसा ।।
तदंतं न हि संप्राप्य न निवृत्ताः पितुर्गृहम् ।।८।।
तज्ज्ञात्वा जनयामास पुनः पंचशतान्सुतान्।।
तानुवाच पुनस्सोऽपि नारदस्सर्वदर्शनः।। ९ ।।
नारद उवाच ।।
भुवो मानमजानंतः कथं सृष्टिं करिष्यथ ।।
सर्वे हि बालिशाः किं हि सृष्टिकर्तुं समुद्यताः ।। 5.31.१० ।।
सूत उवाच।।
तेऽपि तद्वचनं श्रुत्वा निर्यातास्सर्वतोदिशम् ।।
सुबलाश्वा दक्षसुता हर्यश्वा इव ते पुरा ।। ११ ।।
अनंतं पुष्करं प्राप्य गतास्तेऽपि पराभवम् ।।
अद्यापि न निवर्तंते समुद्रेभ्य इवापगाः ।। १२ ।।
तदाप्रभृति वै भ्राता भ्रातुरन्वेषणे रतः ।।
प्रयातो नश्यति मुने तन्न कार्य्यं विपश्चिता ।।१३।।
तांश्चापि नष्टान्विज्ञाय पुत्रान्दक्षः प्रजापतिः ।।
स च क्रोधा द्ददौ शापं नारदाय महात्मने।।१४।।
कुत्रचिन्न लभस्वेति संस्थितिं कलहप्रिय ।।

तव सान्निध्यतो लोके भवेच्च कलहस्सदा ।। १५ ।।
सांत्वितोऽथ विधात्रा हि स दक्षस्तु प्रजापतिः।।
कन्याः षष्ट्यसृजत्पश्चाद्वीरिण्यामिति नः श्रुतम्।।१६।।
ददौ स दश धर्माय कश्यपाय त्रयोदश ।।
सप्तविंशति सोमाय चतस्रोऽरिष्टनेमिने ।। १७ ।।
द्वे चैवं ब्रह्मपुत्राय द्वे चैवाङ्गिरसे तदा ।।
द्वे कृशाश्वाय विदुषे तासां नामानि मे शृणु ।।१८।।
अरुंधती वसुर्य्यामिर्लम्बा भानुर्मरुत्वती ।।
संकल्पा च मुहूर्ता च संध्या विश्वा च वै मुने ।। १९ ।।
धर्मपत्न्यो मुने त्वेतास्तास्वपत्यानि मे शृणु ।।
विश्वेदेवास्तु विश्वायास्साध्यान्साध्या व्यजायत ।।5.31.२०।।
मरुत्वत्यां मरुत्वंतो वसोस्तु वसवस्तथा ।।
भानोस्तु भानवस्सर्वे मुहूर्तायां मुहूर्तजाः।।२१।।
लम्बायाश्चैव घोषोऽथ नागवीथी च यामिजा ।।
पृथिवी विषमस्तस्यामरुन्धत्यामजायत ।।२२।।
संकल्पायास्तु सत्यात्मा जज्ञे संकल्प एव हि।।
अयादया वसोः पुत्रा अष्टौ ताञ्छृणु शौनक ।। २३ ।
अयो धुवश्च सोमश्च धरश्चैवानिलोऽनलः ।।
प्रत्यूषश्च प्रभासश्च वसवाऽष्टा च नामतः ।। २४ ।।
अयस्य पुत्रो वैतण्डः श्रमः शांतो मुनिस्तथा ।।
ध्रुवस्य पुत्रो भगवान्कालो लोकभावनः ।।२५।।
सोमस्य भगवान्वर्चा वर्चस्वी येन जायते ।।
धरस्य पुत्रो द्रविणो हुतहव्यवहस्तथा ।। २६ ।।
मनोहरायाश्शिशिरः प्राणोऽथ रमणस्तथा ।।
अनिलस्य शिवा भार्य्या यस्याः पुत्राः पुरोजवः ।।२७।।
अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य तु।।
अग्निपुत्रः कुमारस्तु शरस्तम्बे श्रियावृते।।२८।।
तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठतः।।
अपत्यं कृत्तिकानां तु कार्तिकेय इति स्मृतः।।२९।।
प्रत्यूषस्य त्वभूत्पुत्र ऋषिर्नाम्ना तु देवलः।।
द्वौ पुत्रौ देवलस्यापि प्रजावन्तौ मनीषिणौ।।5.31.३०।।
बृहस्पते तु भगिनी वरस्त्री ब्रह्मचारिणी ।।
योगसिद्धा जगत्कृत्स्नं समंताद्व्यचरत्तदा ।।३१।।

प्रभासस्य तु सा भार्य्या वसूनामष्टमस्य च।।
विश्वकर्मा महाभाग तस्य जज्ञे प्रजापतिः।।३२।।
कर्ता शिल्पसहस्राणां त्रिदशानां च वार्द्धकिः।।
भूषणानां च सर्वेषां कर्ता शिल्पवतां वरः ।। ३३ ।।
यस्सर्वासां विमानानि देवतानां चकार ह ।।
मनुष्याश्चोपजीवन्ति यस्य शिल्पं महात्मनः ।। ३४ ।।
मतांतरमाह ।।
रैवतोऽजो भवो भीमो वाम उग्रो वृषाकपिः ।।
अजैकपादहिर्बुध्न्यो बहुरूपो महानिति ।। ३९ ।।
सरूपायां प्रसूतस्य स्त्रियां रुद्रश्च कोटिशः ।।
तत्रैकादशमुख्यास्तु तन्नामानि मुने शृणु ।।३६।।
अजैकपादहिर्बुध्न्यस्त्वष्टा रुद्रश्च वीर्यवान्।।
हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः ।। ३७ ।।
वृषाकपिश्च शम्भुश्च कपर्दी रैवतस्तथा ।।
एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः ।। ३८ ।।
शतं त्वेवं समाख्यातं रुद्राणाममितौजसाम्।।
शृणु कश्यपपत्नीनां नामानि मुनिसत्तम।।३९।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां सर्गवर्णनं नामैकऽत्रिंशोध्यायः ।। ३१ ।।

सूत उवाच ।।
अदितिर्दितिश्च सुरसारिष्टेला दनुरेव च ।।
सुरभिर्विनता चेला ताम्रा क्रोधवशा तथा ।। १ ।।
कद्रूर्मुनिश्च विप्रेन्द्र तास्वपत्यानि मे शृणु ।।
पूर्वमन्वंतरे श्रेष्ठे द्वादशासन्सुरोत्तमाः ।। २ ।।
तुषिता नाम तेऽन्योन्यमूचुर्वैवस्वतेंतरे ।।
उपस्थिते सुयशसश्चाक्षुषस्यांतरे मनोः ।। ३ ।।
हिताय सर्वलोकानां समागम्य परस्परम् ।।
आगच्छतस्तु तानूचुरदितिं च प्रविश्य वै ।।४ ।।
मन्वंतरे प्रसूयामस्सतां श्रेयो भविष्यति ।।
एवमुक्तास्तु ते सर्वे चाक्षुषस्यान्तरे मनोः ।। ५ ।।
मारीचात्कश्यपाज्जातास्तेऽदित्यां दक्षकन्यया।।
तत्र विष्णुश्च शक्रश्च जज्ञाते पुनरेव हि ।। ६ ।।
अर्यमा चैव धाता च त्वष्टा पूषा तथैव च ।।
विवस्वान्सविता चैव मित्रावरुण एव च ।। ७ ।।
अंशो भगश्चातितेजा आदित्या द्वादश स्मृताः ।।
पूर्वमासन्ये तुषितास्सुराः ।।८ ।।
पुरैव तस्यांतरे तु आदित्या द्वादश स्मृताः ।।
इति प्रोक्तानि क्रमशोऽदित्यपत्यानि शौनक ।। ९ ।।
सप्तविंशति याः प्रोक्तास्सोमपत्न्योऽथ सुव्रताः।।
तासामपत्यान्यभवन्दीप्तयोऽमिततेजसः ।।5.32.१०।।
अरिष्टनेमिपत्नीनामपत्यानीह षोडश ।।
बहुपुत्रस्य विदुषश्चतस्रो यास्सुताः स्मृताः ।।११।।
कृशाश्वस्य तु देवर्षे देवप्रहरणाः स्मृताः ।।
भार्म्यायामर्चिषि मुने धूम्रकेशस्तथैव च ।। १२ ।।
स्वधा सती च द्वे पत्न्यौ स्वधा ज्येष्ठा सती परा ।।
स्वधासूत पितॄन्वेदमथर्वाङ्गिरसं सती ।। १३ ।।
एते युगसहस्रांते जायंते पुनरेव हि।।
सर्वदेवनिकायाश्च त्रयस्त्रिंशत्तु कामजाः ।। १४ ।।
यथा सूर्य्यस्य नित्यं हि उदयास्तमयाविह ।।
एवं देवानिकास्ते च संभवंति युगेयुगे।।१५।।
दित्यां बभूवतुः पुत्रौ कश्यपादिति नः श्रुतम्।।
हिरण्यकशिपुश्चैव हिरण्याक्षश्च वीर्यवान् ।।१६।।

सिंहिका ह्यभवत्कन्या विप्रचित्तेः परिग्रहः ।।
हिरण्यकशिपोः पुत्राश्चत्वारः प्रथितौजसः।।१७।।
अनुह्लादश्च ह्लादश्च संह्लादश्चैव वीर्यवान् ।।
प्रह्लादश्चानुजस्तत्र विष्णुभक्तिविचारधीः।।१८।।
अनुह्लादस्य सूर्यायां पुलोमा महिषस्तथा।।
ह्लादस्य धमनिर्भार्यासूत वातापिमिल्वलम्।।१९।।
संह्लादस्य कृतिर्भार्यासूतः पंचजनं ततः ।।
विरोचनस्तु प्राह्लादिर्देव्यास्तस्याभवद्बलिः ।।।5.32.२०।।
बलेः पुत्रशतं त्वासीदशनायां मुनीश्वर।।
बलिरासीन्महाशैवः शिवभक्तिपरायणः ।। २१ ।।
दानशील उदारश्च पुण्यकीर्ति तपाः स्मृतः।।
तत्पुत्रो बाणनामा यत्सोऽषि शैववरस्सुधीः ।।
यस्संतोष्य शिवं सम्यग्गाणपत्यमवाप ह ।। २२ ।।
सा कथा श्रुतपूर्वा ते बाणस्य हि महात्मनः ।।
कृष्णं यस्समरे वीरस्सुप्रसन्नं चकार ह।।२३।।
हिरण्याक्षसुताः पंच पंडितास्तु महाबलाः ।।
कुकुरः शकुनिश्चैव भूतसंतापनस्तथा ।। २४
महानादश्च विक्रांतः कालनाभस्तथैव च ।।
इत्युक्ता दितिपुत्राश्च दनोः पुत्रान्मुने शृणु।।२५।।
अभवन्दनुपुत्राश्च शतं तीव्रपराक्रमाः ।।
अयोमुखश्शंबरश्च कपोलो वामनस्तथा।।२६।।
वैश्वानरः पुलोमा च विद्रावणमहाशिरौ ।।
स्वर्भानुर्वृषपर्वा च विप्रचित्तिश्च वीर्यवान् ।।२७।।
एते सर्वे दनोः पुत्राः कश्यपादनुजज्ञिरे ।।
एषां पुत्राञ्च्छृणु मुने प्रसंगाद्वच्मि तेऽनघ ।। २८ ।।
स्वभार्नोस्तु प्रभा कन्या पुलोम्नस्तु शची सुता ।।
उपदानवी हयशिरा शर्म्मिष्ठा वार्षपर्वणी ।। २९ ।।
पुलोमा पुलोमिका चैव वैश्वानरसुते उभे ।।
बह्वपत्ये महावीर्य्ये मारीचेस्तु परिग्रहः ।।5.32.३०।।
तयोः पुत्रसहस्राणि षष्टिर्दानवनन्दनाः ।।
मरीचिर्जनयामास महता तपसान्वितः ।।३१।।
पौलोमाः कालखंजाश्च दानवानां महाबला ।।
अवध्या देवतानां च हिरण्यपुरवासिनः ।।३२।।

पितामहप्रसादेन ये हताः सव्यसाचिना ।।
सिंहिकायामथोत्पन्ना विप्रचित्तेस्सुतास्तथा ।। ३३ ।।
दैत्यदानवसंयोगाज्जातास्तीव्रपराक्रमाः ।।
सैंहिकेया इति ख्यातास्त्रयोदश महाबलाः ।। ३४ ।।
राहुः शल्यो सुबलिनो बलश्चैव महाबलः ।।
वातापिर्नमुचिश्चैवाथेल्वलः स्वसृपस्तथा ।। ३५ ।।
अजिको नरकश्चैव कालनाभस्तथैव च ।।
शरमाणश्शरकल्पश्च एते वंशविवर्द्धनाः ।। ३६ ।।
एषां पुत्राश्च पौत्राश्च दनुवंशविवर्द्धनाः ।।
बहवश्च समुद्भूता विस्तरत्वान्न वर्णिताः .।।३७।।
संह्लादस्य तु दैतेया निवातकवचाः कुले ।।
उत्पन्ना मरुतस्तस्मिंस्तपसा भावितात्मनः ।।३८।।
षण्मुखाद्या महासत्त्वास्ताम्रायाः परिकीर्तिताः ।।
काकी श्येनी च भासी च सुग्रीवी च शुकी तथा।।३९।।
गृद्धिकाश्वी ह्युलूकी च ताम्रा कन्याः प्रकीर्तिताः ।।
काकी काकानजनयदुलूकी प्रत्युलूककान् ।।5.32.४०।।
श्येनी श्येनांस्तथा भासी भासा न्गृद्धी तु गृध्रकान् ।।
शुकी शुकानजनयत्सुग्रीवी शुभपक्षिणः ।। ४१ ।।
अश्वानुष्ट्रान्गर्दभांश्च ताम्रा च कश्यपप्रिया ।।
जनयामास चेत्येवं ताम्रावंशाः प्रकीर्तिताः ।। ४२ ।।
विनतायाश्च पुत्रौ द्वावरुणो गरुडस्तथा ।।
सुपर्णः पततां श्रेष्ठो नारुणस्स्वेन कर्मणा ।। ४३ ।।
सुरसायास्सहस्रं तु सर्पाणाममितौजसाम् ।।
अनेकशिरसां तेषां खेचराणां महात्मनाम् ।। ४४ ।।
येषां प्रधाना राजानः शेषवासुकितक्षकाः ।।
ऐरावतो महापद्मः कंबलाश्वतरावुभौ ।। ४५ ।।
ऐलापुत्रस्तथा पद्मः कर्कोटकधनंजयौ।।
महानीलमहाकर्णौ धृतराष्ट्रो बलाहकः ।। ४६ ।।
कुहरः पुष्पदन्तश्च दुर्मुखास्सुमुखस्तथा ।।
बहुशः खररोमा च पाणिरित्येवमादयः ।। ४७ ।।
गणाः क्रोधवशायाश्च तस्यास्सर्वे च दंष्ट्रिणः ।।
अंडजाः पक्षिणोऽब्जाश्च वराहयाः पशवो मताः ।। ४८ ।।
अनायुषायाः पुत्राश्च पंचाशच्च महाबलाः ।।

अभवन्बलवृक्षौ च विक्षरोऽथ बृहंस्तथा ।। ४९ ।।
शशांस्तु जनयामास सुररभिर्महिषांस्तथा।।
इला वृक्षाँल्लता वल्लीस्तृणजातीस्तु सर्वशः ।। 5.32.५० ।।
खशा तु यक्षरक्षांसि मुनिरप्सरसस्तथा ।।
अरिष्टासूत सर्पांश्च प्रभावैर्मानवोत्तमान्।।५१।।
एते कश्यपदायादाः कीर्तितास्ते मुनीश्वर ।।
येषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः ।। ५२ ।।
इति श्रीशिवमहापुराणे पञ्चम्या मुमासंहितायां कश्यपवंशवर्णनं नाम द्वात्रिंशोऽध्यायः ।। ३२ ।।

सूत उवाच ।।
एष मन्वन्तरे तात सर्गस्स्वारोचिषे स्मृतः ।।
वैवस्वते तु महति वारुणे वितते क्रतौ ।। १ ।।
जुह्वानस्य ब्रह्मणो वै प्रजासर्ग इहोच्यते ।।
पूर्वं यानथ ब्रह्मर्षीनुत्पन्नान्सप्त मानसान् ।। २ ।।
पुत्रान्वै कल्पयामास स्वयमेव पितामहः ।।
तेषां विरोधो देवानां दानवानां महानृषे ।। ३ ।।
दिति विनष्टपुत्रा तु कश्यपं समुपस्थिता ।।
स कश्यपः प्रसन्नात्मा सम्गयगाराधितस्तया ।।४।।
वरेणच्छंदयामास सा च वव्रे वरं तदा।।
पुत्रमिन्द्रवधार्थाय समर्थममितौजसम् ।। ५ ।।
स तस्यै च वरं प्रादात्प्रार्थितं सुमहातपाः ।।
ब्रह्मचर्य्यादिनियमं प्राह चैव शतं समाः ।। ६ ।।
धारयामास गर्भं तु शुचिस्सा वरवर्णिनी ।।
ब्रह्मचर्य्यादिनियमं दितिर्दध्रे तथैव वै ।। ७ ।।
ततस्त्वाधाय सोऽदित्यां गर्भं तं शंसितव्रतः ।।
जगाम कश्यपस्तप्तुं तपस्संहृष्टमानसः ।। ८ ।।
तस्याश्चैवांतरं प्रेप्सुस्सोऽभवत्पाकशासनः ।।
ऊनवर्षे शते चास्या ददर्शान्तरमेव सः।।९।।
अकृत्वा पादयोः शौचं दितिरर्वाक्शिरास्तदा ।।
निद्रामाहारयामास भाविनोऽर्थस्य गौरवात् ।। 5.33.१० ।।
एतस्मिन्नन्तरे शक्रस्तस्याः कुक्षिं प्रविश्य सः ।
वज्रपाणिस्तु तं गर्भं सप्तधा हि न्यकृन्तत ।। ११ ।।
स पाट्यमानो गर्भोऽथ वज्रेण प्ररुरोद ह ।।
रुदन्तं सप्तधैकैकं मारोदीरिति तान्पुनः ।।
चकर्त वज्रपाणिस्तान्नेव मम्रुस्तथापि ते ।। १२ ।।
ते तमूचुः पात्यमानास्सर्वे प्रांजलयो मुने ।।
नो जिघांससि किं शक्र भ्रातरो मरुतस्तव ।। १३ ।।
इंद्रेण स्वीकृतास्ते हि भ्रातृत्वे सर्व एव च ।।। ।
तत्यजुर्दैत्यभावं ते विप्रर्षे शंकरेच्छया।।१४।।
मरुतो नाम ते देवा बभूवुस्तु महाबलाः।।
खगा एकोनपंचाशत्सहाया वज्रपाणिनः।।१५।।। ।
तेषामेव प्रवृद्धानां हरिः प्रादात्प्रजापतिः ।।

क्रमशस्तानि राज्यानि पृथुपूर्वं शृणुष्व तत् ।। १६ ।।
अरिष्टपुरुषो वीरः कृष्णो जिष्णुः प्रजापतिः ।।
पर्जन्यस्तु धनाध्यक्षस्तस्य सर्वमिदं जगत् ।।१७।।
भूतसर्गमिमं सम्यगवोचं ते महामुने ।।
विभागं शृणु राज्यानां क्रमशस्तं ब्रुवेऽधुना ।। १८ ।।
अभिषिच्याधिराज्ये तु पृथुं वैन्यं पितामहः ।।
ततः क्रमेण राज्यानि व्यादेष्टुमुपचक्रमे ।। १९ ।।
द्विजानां वीरुधां चैव नक्षत्रग्रहयोस्तथा ।।
यज्ञानां तपसां चैव सोमं राज्येऽभ्यषेचयत्।।5.33.२०।।
अपां तु वरुणं राज्ये राज्ञां वैश्रवणं प्रभुम्।।
आदित्यानां तथा विष्णुं वसूनामथ पावकम् ।।२१।।
प्रजापतीनां दक्षं तु मरुतामथ वासवम् ।।
दैत्यानां दानवानां च प्रह्लादममितौजसम् ।।२२।।
वैवस्वतं पितॄणां च यमं राज्येऽभ्यषेचयत् ।।
मातॄणां च व्रतानां च मन्त्राणां च तथा गवाम् ।। २३ ।।
यक्षाणां राक्षसानां च पार्थिवानां तथैव च ।।
सर्वभूतपिशाचानां गिरिशं शूलपाणिनम् ।।२४।।
शैलानां हिमवन्तं च नदीनामथ सागरम् ।।
मृगाणामथ शार्दूलं गोवृषं तु गवामपि ।।२५।।
वनस्पतीनां वृक्षाणां वटं राज्येऽभ्यषेचयत् ।।
इति दत्तं प्रजेशेन राज्यं सर्वत्र वै क्रमात् ।। २६ ।।।
पूर्वस्यां दिशि पुत्रं तु वैराजस्य प्रजापतेः ।।
स्थापयामास सर्वात्मा राज्ये विश्वपतिर्विभुः ।।२७।।
तथैव मुनिशार्दूल कर्दमस्य प्रजापतेः ।।
दक्षिणस्यां तथा पुत्रं सुधन्वानमचीक्लृपत् ।।२८।।
पश्चिमायां दिशि तथा रजसः पुत्रमच्युतम्।।
केतुमन्तं महात्मानं राजानं व्यादिशत्प्रभुः ।। २९ ।।
तथा हिरण्यरोमाणं पर्जन्यस्य प्रजापतेः ।।
उदीच्यां दिशि राजानं दुर्धर्षं सोऽभ्यषेचयत् ।। 5.33.३० ।।
तस्य विस्तारमाख्यातं पृथोर्वैन्यस्य शौनक।।
महर्ध्ये तदधिष्ठानं पुराणे परिकीर्तितम्।।३१।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां सर्गवर्णनं नाम त्रयस्त्रिंशत्तमोध्यायः ।।३३।।

।। शौनक उवाच।।
मन्वंतराणि सर्वाणि विस्तरेणानुकीर्तय ।।
यावंतो मनवश्चैव श्रोतुमिच्छामि तानहम्।।१।।
सूत उवाच।।
स्वायंभुवो मनुश्चैव ततस्स्त्वारोचिषस्तथा।।
उत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ।।२।।
एते च मनवः षट् ते संप्रोक्ता मुनिपुंगव।।
वैवस्वतो मुनिश्रेष्ठ सांप्रतं मनुरुच्यते ।।३।।
सावर्णिश्च मनुश्चैव ततो रौच्यस्तथा परः ।।
तथैव ब्रह्मसावर्णिश्चत्वारो मनवस्तथा ।।४।।
तथैव धर्मसावर्णी रुद्रसावर्णिरेव च ।।
देवसावर्णिराख्यातं इंद्रसावर्णिरेव च।। ५ ।।
अतीता वर्तमानाश्च तथैवानागताश्च ये ।।
कीर्तिता मनवश्चापि मयैवैते यथा श्रुताः।।६।।
मुने चतुर्दशैतानि त्रिकालानुगतानि ते ।।
प्रोक्तानि निर्मितः कल्पो युगसाहस्रपर्य्ययः।।७।।
ऋषींस्तेषां प्रवक्ष्यामि पुत्रान्देवगणांस्तथा।।
शृणु शौनक सुप्रीत्या क्रमशस्तान्यशस्विनः ।।८।।
मरीचिरत्रिर्भगवानङ्गिराः पुलहः क्रतुः ।।
पुलस्त्यश्च वसिष्ठश्च सप्तैते ब्रह्मणस्सुताः ।। ९ ।।
उत्तरस्यां दिशि तथा मुने सप्तर्ष यस्तथा ।।
यामा नाम तथा देवा आसन्स्वायंभुवेंतरे ।। 5.34.१० ।।
आग्नीध्रश्चाग्निबाहुश्च मेधा मेधातिथिर्वसुः ।।
ज्योतिष्मान्धृतिमान्हव्यः सवनश्शुभ्र एव च ।।११।।
स्वायंभुवस्य पुत्रास्ते मनोर्दश महात्मनः ।।
कीर्तिता मुनिशार्दूल तत्रेन्द्रो यज्ञ उच्यते ।।१२।।
प्रथमं कथितं तात दिव्यं मन्वतरं तथा।।
द्वितीयं ते प्रवक्ष्यामि तन्निबोध यथातथम् ।।१३।।
ऊर्जस्तंभः परस्तंभ ऋषभो वसुमां स्तथा ।।
ज्योतिष्मान्द्युतिमांश्चैव रोचिष्मान्सप्तमस्तथा ।। १४ ।।
एते महर्षयो ज्ञेयास्तत्रेन्द्रो रोचनस्तथा ।।
देवाश्च तुषिता नाम स्मृताः स्वारोचिषेंऽतरे ।। १५ ।।
हरिघ्नस्सुकृतिर्ज्योतिरयोमूर्तिरयस्मयः ।।

प्रथितश्च मनस्युश्च नभस्सूर्यस्तथैव च ।। १६ ।।
स्वारोचिषस्य पुत्रास्ते मनोर्दशमहात्मनः।।
कीर्तिता मुनिशार्दूल महावीर्यपराक्रमाः ।।१७।।
द्वितीयमेतत्कथितं मुने मन्वन्तरं मया।।
तृतीयं तव वक्ष्यामि तन्निबोध यथातथम्।।१८।।
वसिष्ठपुत्राः सप्तासन्वासिष्ठा इति विश्रुताः।।
हिरण्यगर्भस्य सुता ऊर्जा नाम महौजसः ।।१९।।
ऋषयोऽत्र समाख्याताः कीर्त्यमानान्निबोध मे।।
औत्तमेया ऋषिश्रेष्ठ दशपुत्रा मनोः स्मृताः।5.34.२०।
इष ऊर्जित ऊर्जश्च मधुर्माधव एव च।।
शुचिश्शुक्रवहश्चैव नभसो नभ एव च ।।२१।।
ऋषभस्तत्र देवाश्च सत्यवेद श्रुतादयः ।।
तत्रेन्द्रस्सत्यजिन्नाम त्रैलोक्याधिपतिर्मुने ।। २२ ।।
तृतीयमेतत्परमं मन्वतरमुदाहृतम् ।।
मन्वतरं चतुर्थं ते कथयामि मुने शृणु ।।२३।।
गार्ग्यः पृथुस्तथा वाग्मी जयो धाता कपीनकः ।।
कपीवान्सप्तऋषयः सत्या देवगणास्तथा ।। २४ ।।
तत्रेंद्रस्त्रिशिखो ज्ञेयो मनुपुत्रान्मुने शृणु ।।
द्यूतिपोतस्सौतपस्यस्तमश्शूलश्च तापनः ।। २५ ।।
तपोरतिरकल्माषो धन्वी खड्गी महानृषिः ।।
तामसस्य स्मृता एते दश पुत्रा महाव्रताः ।।२६।।
तामसस्यांतरं चैव मनो मे कथितं तव ।।
चतुर्थं पञ्चमं तात शृणु मन्वंतरं परम् ।। २७ ।।
देवबाहुर्जयश्चैव मुनिर्वेदशिरास्तथा।।
हिरण्यरोमा पर्जन्य ऊर्ध्वबाहुश्च सोमपाः ।।२८।।
सत्यनेत्ररताश्चान्ये एते सप्तर्षयोऽपरे।।
देवाश्च भूतरजसस्तपःप्रकृतयस्तथा ।।२९।।
तत्रेंद्रो विभुनामा च त्रैलोक्याधिपतिस्तथा ।।
रैवताख्यो मनुस्तत्र ज्ञेयस्तामससोदरः ।। 5.34.३० ।।
अर्जुनः पंक्तिविंध्यो वा दयायास्त नया मुने ।।
महता तपसा युक्ता मेरुपृष्ठे वसंति हि ।। ३१ ।।
रुचेः प्रजापतिः पुत्रो रौच्यो नाम मनुः स्मृतः ।।
भूत्या चोत्पादितो देव्यां भौत्यो नामाभवत्सुतः ।। ३२ ।।

अनागताश्च सप्तैते कल्पेऽस्मिन्मनवस्स्मृताः ।।
अनागताश्च सप्तैव स्मृता दिवि महर्षयः ।। ३३ ।।
रामो व्यासस्तथात्रेयो दीप्तिमान्सु बहुश्रुतः।।
भरद्वाजस्तथा द्रौणिरश्वत्थामा महाद्युतिः।।३४।।
गौतमस्यात्मजश्चैव शरद्वान् गौतमः कृपः ।।
कौशिको गालवश्चैव रुरुः कश्यप एव च ।।३५।।
एते सप्त महात्मानो भविष्या मुनिसत्तमाः ।।
देवाश्चानागतास्तत्र त्रयः प्रोक्तास्स्वयंभुवा ।।३६।।
मरीचेश्चैव पुत्रास्ते कश्यपस्य महात्मनः ।।
तेषां विरोचनसुतो बलिरिंद्रो भविष्यति।।३७।।
विषांङ्गश्चावनीवांश्च सुमंतो धृतिमान्वसुः ।।
सूरिः सुराख्यो विष्णुश्च राजा सुमतिरेव च ।।३८।।
सावर्णेश्च मनोः पुत्रा भविष्या दश शौनक।।
इहाष्टमं हि कथितं नवमं चान्तरं शृणु ।। ३९ ।।
प्रथमं दक्षसावर्णि प्रवक्ष्यामि मनुं शृणु ।।
मेधातिथिश्च पौलस्त्यो वसुः कश्यप एव च ।। 5.34.४० ।।
ज्योतिष्मान्भार्गवश्चैव धृतिमानंगिरास्तथा ।।
सवनश्चैव वासिष्ठ आत्रेयो हव्य एव च ।। ४१ ।।
पुलहस्सप्त इत्येते ऋषयो रौहितेंतरे ।।
देवतानां गणास्तत्र त्रय एव महामुने ।। ४२ ।।
दीक्षापुत्रस्य पुत्रास्ते रोहितस्य प्रजापतेः ।।
धृष्टकेतुर्दीप्तकेतुः पंचहस्तो निराकृतिः ।। ४३ ।।
पृथुश्रवा भूरिद्युम्नो ऋचीको बृहतो गयः ।।
प्रथमस्य तु सावर्णेर्नव पुत्रा महौजस ।। ४४ ।।
दशमे त्वथ पर्याये द्वितीयस्यांतरे मनोः ।।
हविष्मान्पुलहश्चैव प्रकृतिश्चैव भार्गवः ।। ४५ ।।
आयो मुक्तिस्तथात्रेयो वसिष्ठश्चाव्ययस्स्मृतः ।।
पौलस्त्यः प्रयतिश्चैव भामारश्चैव कश्यपः ।।४६।।
अङ्गिरानेनसस्सत्यः सप्तैते परमर्षयः ।।
देवतानां गणाश्चापि द्विषिमंतश्च ते स्मृताः ।। ।। ४७ ।।
तेषामिन्द्रस्स्मृतः शम्भुस्त्वयमेव महेश्वरः ।।
अक्षत्वानुत्तमौजाश्च भूरिषेणश्च वीर्यवान् ।।४८।।
शतानीको निरामित्रो वृषसेनो जयद्रथः ।।

भूरिद्युम्नः सुवर्चार्चिर्दश त्वेते मनोस्सुताः ।। ४९ ।।
एकादशे तु पर्याये तृतीयस्यांतरे मनोः ।।
तस्यापि सप्त ऋषयः कीर्त्यमानान्निबोध मे ।। 5.34.५० ।।
हविष्मान्कश्यपश्चापि वपुष्मांश्चैव वारुणः ।।
अत्रेयोऽथ वसिष्ठश्च ह्यनयस्त्वंगिरास्तथा ।। ५१ ।।
चारुधृष्यश्च पौलस्त्यो निःस्वरोऽग्निस्तु तैजसः ।।
सप्तैते ऋषयः प्रोक्तास्त्रयो देवगणास्स्मृताः।।५२।।
ब्रह्मणस्तु सुतास्ते हि त इमे वैधृताः स्मृताः ।।
सर्वगश्च सुशर्म्मा च देवानीकस्तु क्षेमकः ।। ५३ ।।
दृढेषुः खंडको दर्शः कुहुर्बाहुर्मनोः स्मृताः ।।
सावर्णस्य तु पौत्रा वै तृतीयस्य नव स्मृताः ।। ५४ ।।
चतुर्थस्य तु सावर्णेर्ऋषीन्सप्त निबोध मे ।।
द्युतिर्वसिष्ठपुत्रश्च आत्रेयस्सुतपास्तथा ।। ५५ ।।
अंगिरास्तपसो मूर्तिस्तपस्वी कश्यपस्तथा ।।
तपोधनश्च पौलस्त्यः पुलहश्च तपोरतिः ।। ५६ ।।
भार्गवस्सप्तमस्तेषां विज्ञेय तपसो निधिः ।।
पंच देवगणाः प्रोक्ता मानसा ब्रह्मणस्सुताः ।। ५७ ।।
ऋतधामा तदिन्द्रो हि त्रिलोकी राज्यकृत्सुखी ।।
द्वादशे चैव पर्याये भाव्ये रौच्यांतरे मुने ।। ५८ ।।
अंगिराश्चैव धृतिमान्पौलस्त्यो हव्यवांस्तु यः।।
पौलहस्तत्त्वदर्शी च भार्गवश्च निरुत्सवः ।। ५९ ।।
निष्प्रपंचस्तथात्रेयो निर्देहः कश्यपस्तथा ।।
सुतपाश्चैव वासिष्ठस्सप्तैवैते महर्षयः ।। 5.34.६० ।।
त्रय एव गणाः प्रोक्ता देवतानां स्वयंभुवा ।।
दिवस्पतिस्तमिन्द्रो वै विचित्रश्चित्र एव च ।। ६१ ।।
नयो धर्मो धृतोंध्रश्च सुनेत्रः क्षत्रवृद्धकः ।।
निर्भयस्सुतपा द्रोणो मनो रौच्यस्य ते सुताः ।। ६२ ।।
चतुर्द्दशे तु पर्याये सत्यस्यैवांतरे मनोः ।।
आग्नीध्रः काश्यपश्चैव पौलस्त्यो मागधश्च यः ।। ६३ ।।
भार्गवोऽप्यतिवाह्यश्च शुचिरांगिरसस्तथा ।।
युक्तश्चैव तथात्रेयः पौत्रो वाशिष्ठ एव च ।। ६४ ।।
अजितः पुलहश्चैव ह्यंत्यास्सप्तर्षयश्च ते ।।
पवित्राश्चाक्षुषा देवाः शुचिरिन्द्रो भविष्यति ।। ६५ ।।

एतेषां कल्य उत्थाय कीर्तनात्सुखमेधते ।।
अतीतानागतानां वै महर्षीणां नरैस्सदा ।।६६।।
देवतानां गणाः प्रोक्ताश्शृणु पंच महामुने ।।
तुरंगभीरुर्बुध्नश्च तनुग्रोऽनूग्र एव च ।। ६७ ।।
अतिमानी प्रवीणश्च विष्णुस्संक्रंदनस्तथा ।।
तेजस्वी सबलश्चैव सत्यस्त्वेते मनोस्सुता ।। ६८ ।।
भौमस्यैवाधिकारे वै पूर्वकल्पस्तु पूर्यते ।।
इत्येतेऽनागताऽतीता मनवः कीर्तिता मया ।। ६९ ।।
उक्तास्सनत्कुमारेण व्यासायामिततेजसा ।।
पूर्णे युगसहस्रांते परिपाल्यः स्वधर्मतः ।।5.34.७०।।
प्रजाभिस्तपसा युक्ता ब्रह्मलोकं व्रजंति ते ।।
युगानि सप्रतिस्त्वेकं साग्राण्यंतरमुच्यते ।। ७१ ।।
चतुर्दशैते मनवः कीर्तिता कीर्तिवर्धनाः ।।
मन्वंतरेषु सर्वेषु संहारांते पुनर्भवः ।। ७२ ।।
न शक्यमन्तरं तेषां वक्तुं वर्षशतैरपि ।।
पूर्णे शतसहस्रे तु कल्पो निःशेष उच्यते ।। ७३ ।। ७४ ।।
तत्र सर्वाणि भूतानि दग्धान्यादित्यरश्मिभिः ।।
ब्रह्माणमग्रतः कृत्वा सदादित्यगणैर्मुने ।७५।।
प्रविशंति सुरश्रेष्ठ हरिं नारायणं परम्।।
स्रष्टारं सर्व भूतानां कल्पांतेषु पुनःपुनः ।। ७६ ।।
भूयोपि भगवान् रुद्रस्संहर्ता काल एव हि ।।
कल्पांते तत्प्रवक्ष्यामि मनोर्वैवस्वतस्य वै ।। ७७ ।।
इति ते कथितं सर्वं मन्वंतरसमुद्भवम् ।।
विसर्गं पुण्यमाख्यानं धन्यं कुलविवर्द्धनम् ।। ७८ ।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां सर्वमन्वतरानुकीर्तनं नाम चतुस्त्रिंशोऽध्यायः ।।३४।।

।। सूत उवाच ।।
विवस्वान्कश्यपाज्जज्ञे दाक्षायण्यां महाऋषेः ।।
तस्य भार्याऽभवत्संज्ञा त्वाष्ट्री देवी सुरेणुका ।। १ ।।
मुनेऽसहिष्णुना तेन तेजसा दुस्सहेन च ।।
भर्तृरूपेण नातुष्यद्रूप यौवनशालिनी ।। २ ।।
आदित्यस्य हि तद्रूपमसहिष्णुस्तु तेजसः ।।
दह्यमाना तदोद्वेगमकरोद्वरवर्णिनी ।। ३ ।।
ऋषेऽस्यां त्रीण्यपत्यानि जनयामास भास्करः ।।
संज्ञायां तु मनुः पूर्वं श्राद्धदेवः प्रजापतिः ।। ४ ।।
यमश्च यमुना चैव यमलौ संबभूवतुः ।।
एवं हि त्रीण्यपत्यानि तस्यां जातानि सूर्य्यतः ।। ५ ।।
संवर्तुलं तु तद्रूपं दृष्ट्वा संज्ञा विवस्वतः ।।
असहंती ततश्छायामात्मनस्साऽ सृजच्छुभाम् ।। ६ ।।
मायामयी तु सा संज्ञामवोचद्भक्तितश्शुभे ।।
किं करोमीह कार्य्यं ते कथयस्व शुचिस्मिते ।। ७ ।।
संज्ञोवाच ।।
अहं यास्यामि भद्रं ते ममैव भवनं पितुः ।।
त्वयैतद्भवने सत्यं वस्तव्यं निर्विकारतः ।। ८ ।।
इमौ मे बालकौ साधू कन्या चेयं सुमध्यमा ।।
पालनीयाः सुखेनैव मम चेदिच्छसि प्रियम्।। ९ ।।
छायोवाच ।।
आकेशग्रहणाद्देवि सहिष्येऽहं सुदुष्कृतम् ।।
नाख्यास्यामि मतं तुभ्यं गच्छ देवि यथासुखम् ।। 5.35.१० ।।
सूत उवाच ।।
इत्युक्ता साऽगमद्देवी व्रीडिता सन्निधौ पितुः ।।
पित्रा निर्भर्त्सिता तत्र नियुक्ता सा पुनः पुनः ।।११।।
अगच्छद्वडवा भूत्वाऽऽच्छाद्यरूपं ततस्त्वकम् ।।
कुरुंस्तदोत्तरान्प्राप्य नृणां मध्ये चचार ह ।। १२ ।।
संज्ञां तां तु रविर्मत्वा छायायां सुसुतं तदा ।।
जनयामास सावर्णिं मनुं वै सविता किल ।। १३ ।।
संज्ञाऽनु प्रार्थिता छाया सा स्वपुत्रेऽपि नित्यशः ।।
चकाराभ्यधिकं स्नेहं न तथा पूर्वजे सुते ।। १४ ।।
अनुजश्चाक्षमस्तत्तु यमस्तं नैव चक्षमे ।।

स सरोषस्तु बाल्याच्च भाविनोऽर्थस्य गौरवात् ।। १५ ।।
छायां संतर्जयामास यदा वैवस्वतो यमः ।।
तं शशाप ततः क्रोधाच्छाया तु कलुषीकृता ।। १६ ।।
चरणः पततामेष तवेति भृशरोषितः ।।
यमस्ततः पितुस्सर्वं प्रांजलिः प्रत्यवेदयत् ।। १७ ।।
भृशं शाप भयोद्विग्नस्संज्ञावाक्यैर्विचेष्टितः ।।
मात्रा स्नेहेन सर्वेषु वर्तितव्यं सुतेषु वै ।।१८।।
स्नेहमस्मास्वपाकृत्य कनीयांसं बिभर्ति सा।।
तस्मान्मयोद्यतः पादस्तद्भवान् क्षंतुमर्हति ।।१९।।
शप्तोहमस्मि देवेश जनन्या तपतांवर ।।
तव प्रसादाच्चरणो न पतेन्मम गोपते ।। 5.35.२० ।।
सवितोवाच ।।
असंशयं पुत्र महद्भविष्यत्यत्र कारणम् ।।
येन त्वामाविशत्क्रोधो धर्मज्ञं सत्यवादिनम् ।। २१ ।।
न शक्यते तन्मिथ्या वै कर्त्तुं मातृवचस्तव ।।
कृमयो मांसमादाय गमिष्यंति महीतले ।।२२।।
तद्वाक्यं भविता सत्यं त्वं च त्रातौ भविष्यसि ।।
कुरु तात न संदेहं मनश्चाश्वास्य स्वं प्रभो ।। २३ ।।
सूत उवाच ।।
इत्युक्त्वा तनयं सूर्यो यमसंज्ञं मुनीश्वर ।।
आदित्यश्चाब्रवीत्तान्त्तु छायां क्रोधसमन्वितः ।।२४।।
सूर्य उवाच ।।
हे प्रिये कुमते चंडि किं त्वयाऽऽचरितं किल।।
किं तु मेऽभ्यधिकः स्नेह एतदाख्यातुमर्हसि ।।२५।।
सूत उवाच ।।
सा रवेर्वचनं श्रुत्वा यथा तथ्यं न्यवेदयत् ।।
निर्दग्धा कामरविणा सांत्वयामास वै तदा ।। २६ ।।
छायोवाच।।
तवातितेजसा दग्धा इदं रूपं न शोभते ।।
असहंती च तत्संज्ञा वने वसति शाद्वले ।।२७।।
श्लाघ्या योगबलोपेता योगमासाद्य गोपते ।।
अनुकूलस्तु देवेश संदिश्यात्ममयं मतम् ।। २८ ।।
रूपं निवर्तयाम्यद्य तव कांतं करोम्यहम् ।।

सूत उवाच ।।
तच्छ्रुत्वाऽपगतः क्रोधो मार्तण्डस्य विवस्वतः ।।२९।।
भ्रमिमारोप्य तत्तेजः शातयामास वै मुनिः ।।
ततो विभ्राजितं रूप तेजसा संवृतेन च ।। 5.35.३० ।।
कृतं कांततरं रूपं त्वष्ट्रा तच्छुशुभे तदा ।।
ततोभियोगमास्थाय स्वां भार्य्यां हि ददर्श ह ।।३१।।
अधृष्यां सर्वभूतानां तेजसा नियमेन च ।।
सोऽश्वरूपं समास्थाय गत्वा तां मैथुनेच्छया।।३२।।
मैथुनाय विचेष्टंतीं परपुंसोभिशंकया ।।
मुखतो नासिकायां तु शुक्रं तत् व्यदधान्मुने ।।३३।।
देवौ ततः प्रजायेतामश्विनौ भिषजां वरौ ।।
नासत्यौ तौ च दस्रौ च स्मृतौ द्वावश्विनावपि ।।३४।।
तौ तु कांतेन रूपेण दर्शयामास भास्करः ।।
आत्मानं सा तु तं दृष्ट्वा प्रहृष्टा पतिमादरात् ।। ३५ ।।
पत्या तेन गृहं प्रायात्स्वं सती मुदितानना ।।
मुमुदातेऽथ तौ प्रीत्या दंपतो पूर्वतोधिकम् ।। ३६ ।।
यमस्तु कर्मणा तेन भृशं पीडितमानसः ।।
धर्मेण रंजयामास धर्मराज इमा प्रजाः ।। ३७ ।।
लेभे स कर्मणा तेन धर्मराजो महाद्युतिः ।।
पितृणामाधिपत्यं च लोकपालत्वमेव च ।।३८।।
मनुः प्रजापतिस्त्वासीत्सावर्णिस्स तपोधनः ।।
भाव्यः स कर्मणा तेन मनोस्सावर्णिकेंतरे ।। ३९ ।।
मेरुपृष्ठे तपो घोरमद्यापि चरते प्रभुः ।।
यवीयसी तयोर्या तु यमी कन्या यशस्विनी ।। 5.35.४० ।।
अभवत्सा सरिच्छ्रेष्ठा यमुना लोकपा वनी ।।
मनुरित्युच्यते लोके सावर्णिरिति चोच्यते ।। ४१ ।।
य इदं जन्म देवानां शृणुयाद्धारयेत्तु वा ।।
आपदं प्राप्य मुच्येत प्राप्नुयात्सुमहद्यशः ।।४२।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां मन्वन्तरकीर्तने वैवस्वतवर्णनं नाम पचत्रिंशोऽध्यायः।।
३५।।

सूत उवाच ।।
मनोर्वैवस्वतस्यासन्पुत्रा वै नव तत्समाः ।।
पश्चान्महोन्नता धीराः क्षत्रधर्मपरायणाः।।१।।
इक्ष्वाकुः शिबिनाभागौ धृष्टः शर्यातिरेव च ।।
नरिष्यन्तोऽथ नाभागः करूषश्च प्रियव्रतः।।२।।
अकरोत्पुत्त्रकामस्तु मनुरिष्टिं प्रजापति।।
अनुत्पन्नेषु पुत्रेषु तत्रेष्ट्यां मुनिपुंगवः।।३।।
सा हि दिव्यांबरधरा दिव्याभरणभूषिता।
दिव्यसंहनना चैवमिला जज्ञे हि विश्रुता।।४।।
तामिडेत्येव होवाच मनुर्दण्डधरस्तथा ।।
अनुगच्छत्व मामेति तमिडा प्रत्युवाच ह ।।५।।
इडोवाच ।।
धर्मयुक्तमिदं वाक्यं पुत्रकामं प्रजापतिम् ।।
मित्रावरुणयोरंशैर्जातास्मि वदतां वर ।। ६ ।।
तयोस्सकाशं यास्यामि न मे धर्मे रुचिर्भवेत् ।।
एवमुक्त्वा सती सा तु मित्रावरुणयोस्ततः ।। ७ ।।।
गत्वांतिकं वरारोहा प्रांजलिर्वाक्यमब्रवीत् ।।
अंशैस्तु युवयोर्जाता मनुयज्ञे महामुनी ।।८।।
आगता भवतोरंति ब्रूतं किं करवाणि वाम् ।।
अन्यान्पुत्रान्सृज विभो तैर्वंशस्ते भविष्यति ।।९।।
सूत उवाच।।
तां तथावादिनीं साध्वीमिडां मन्वध्वरोद्भवाम्।।
मित्रावरुणानामानौ मुनी ऊचतुरादरात् ।। 5.36.१० ।।
मित्रावरुणावूचतुः ।।
अनेन तव धर्मज्ञे प्रश्रयेण दमेन च ।।
सत्येन चैव सुश्रोणि प्रीतौ द्वौ वरवर्णिनि ।। ११ ।।
आवयोस्त्वं महाभागे ख्यातिं चैव गमिष्यसि ।।
मनोर्वंशकरः पुत्रस्त्वमेव च भविष्यसि ।।१२।।
सुद्युम्न इति विख्यातस्त्रिषु लोकेषु विश्रुतः ।।
जगत्प्रियो धर्मशीलौ मनुवंशविवर्द्धनः ।।१३।।
सूत उवाच ।।
निवृत्ता सा तु तच्छ्रुत्वा गच्छंती पितुरंतिके ।।
बुधेनांतरमासाद्य मैथुनायोपमंत्रिता ।।१४।।

सोमपुत्रात्ततो जज्ञे तस्यां राजा पुरूरवाः ।।
पुत्रोऽतिसुन्दरः प्राज्ञ उर्वशी पतिरुन्नतः ।।१५।।
जनयित्वा च सा तत्र पुरूरवसमादरात्।।
पुत्रं शिवप्रसादात्तु पुनस्सुद्युम्नतां गतः ।।१६।।
सुद्युम्नस्य तु दायादास्त्रयः परमधार्मिकाः ।।
उत्कलश्च गयश्चापि विनताश्वश्च वीर्यवान् ।।१७।।
उत्कलस्योत्कला विप्रा विनताश्वस्य पश्चिमाः ।।
दिक्पूर्वा मुनि शार्दूल गयस्य तु गया स्मृताः ।। १८ ।।
प्रविष्टे तु मनौ तात दिवाकरतनुं तदा ।।
दशधा तत्र तत्क्षेत्रमकरोत्पृथिवीं मनुः ।।१९।।
इक्ष्वाकुः श्रेष्ठदायादो मध्यदेशमवाप्तवान्।।
वसिष्ठवचनादासीत्प्रतिष्ठानं महात्मनः।।5.36.२०।।
प्रतिष्ठां धर्मराज्यस्य सुद्युम्नोथ ततो ददौ।।
तत्पुरूरवसे प्रादाद्राज्यं प्राप्य महायशाः।।२१।।
मानवो यो मुनिश्रेष्ठाः स्त्रीपुंसोर्लक्षणः प्रभुः ।।
नरिष्यंताच्छकाः पुत्रा नभगस्य सुतो ऽभवत्।।२२।।
अंबरीषस्तु बाह्लेयो बाह्लकं क्षेत्रामाप्तवान् ।।
शर्यातिर्मिथुनं त्वासीदानर्तो नाम विश्रुतः।।२३।।
पुत्रस्सुकन्या कन्या च या पत्नी च्यवनस्य हि ।।
आनर्तस्य हि दायादो रैभ्यो नाम स रैवतः ।। २४ ।।
आनर्तविषये यस्य पुरी नाम कुशस्थली।।
महादिव्या सप्तपुरीमध्ये या सप्तमी मता।।२५।।
तस्य पुत्रशतं त्वासीत्ककुद्मी ज्येष्ठ उत्तमः ।।
तेजस्वी सुबलः पारो धर्मिष्ठो ब्रह्मपालकः।।२६।।
ककुद्मिनस्तु संजाता रेवती नाम कन्यका।।
महालावण्यसंयुक्ता दिव्यलक्ष्मीरिवापरा ।।२७।।
प्रष्टुं कन्यावरं राजा ककुद्मी कन्यया सह ।।
ब्रह्मलोके विधेस्सम्यक्सर्वाधीशो जगाम ह ।।२८।।
आवर्तमाने गांधर्वे स्थितो लब्धक्षणः क्षणम् ।।
शुश्राव तत्र गांधर्वं नर्तने ब्रह्मणोंऽतिके ।। २९ ।।
मुहूर्तभूतं तत्काले गतं बहुयुगं तदा ।।
न किंचिदबुबुधे राजा ककुद्मी मुनयस्स तु ।। 5.36.३० ।।
तदासौ विधिमा नम्य स्वाभिप्रायं कृतांजलिः ।।

न्यवेदयद्विनीतात्मा ब्रह्मणे परमात्मने।।३१।।
तदभिप्रायमाकर्ण्य स प्रहस्य प्रजापतिः ।।
ककुद्मिनं महाराजं समाभाष्य समब्रवीत् ।।३२।।
ब्रह्मोवाच ।।
शृणु राजन्नैभ्यसुत ककुद्मिन्पृथिवपिते।।
मद्वचः प्रीतितस्सत्यं प्रवक्ष्यामि विशेषतः ।। ३३ ।।
कालेन संहृतास्ते वै वरा ये ते कृता हृदि ।।
न तद्गोत्रं हि तत्रास्ति कालस्सर्वस्य भक्षकः ।।३४।।
त्वत्पुर्य्यपि हता पुण्यजनैस्सा राक्षसैर्नृप ।।
अष्टाविंशद्द्वापरेऽद्य कृष्णेन निर्मिता पुनः ।।३५।।
कृता द्वारावती नाम्ना बहुद्वारा मनोरमा ।।
भोजवृष्ण्यंधकैर्गुप्ता वासुदेवपुरोगमैः।।३६।।
तद्गच्छ तत्र प्रीतात्मा वासुदेवाय कन्यकाम् ।।
बलदेवाय देहि त्वमिमां स्वतनयां नृप।।३७।।
सूत उवाच ।।
इत्यादिष्टो नृपोऽयं तं नत्वा तां च पुरीं गतः ।।
गतान्बहून्युगाञ्ज्ञात्वा विस्मितः कन्यया युतः।।३८।।
ततस्तु युवतीं कन्यां तां च स्वां सुविधानतः ।।
कृष्णभ्रात्रे बलायाशु प्रादात्तत्र स रेवतीम् ।। ३९ ।।
ततो जगाम शिखरं मेरोर्दिव्यं महाप्रभुः ।।
शिवमाराधयामास स नृपस्तपसि स्थितः ।। 5.36.४० ।।
ऋषय ऊचुः ।।
तत्र स्थितो बहुयुगं ब्रह्मलोके स रेवतः ।।
युवैवागान्मर्त्यलोकमेतन्नः संशयो महान् ।।४१।।
सूत उवाच ।।
न जरा क्षुत्पिपासा वा विकारास्तत्र संति वै ।।
अपमृत्युर्न केषांचिन्मुनयो ब्रह्मणोंऽतिके ।। ४२ ।।
अतो न राजा संप्राप जरां मृत्युं च सा सुता ।।
स युवैवागतस्तत्र संमंत्र्य तनयावरम् ।।४३।।
गत्वा द्वारावतीं दिव्यां पुरीं कृष्णविनिर्मिताम् ।।
विवाहं कारयामास कन्यायाः स बलेन हि ।।४४।।
तस्य पुत्रशतं त्वासीद्धार्मिकस्य महाप्रभो ।।
कृष्णस्यापि सुता जाता बहुस्त्रीभ्योऽमितास्ततः ।।४५।।

अन्ववायो महांस्तत्र द्वयोरपि महात्मनोः ।।
क्षत्रिया दिक्षु सर्वासु गता हृष्टास्सुधार्मिकाः ।। ४६ ।।
इति प्रोक्तो हि शर्यातेर्वंशोऽन्येषां वदाम्यहम् ।।
मानवानां हि संक्षेपाच्छृणुतादरतो द्विजाः ।। ४७ ।।
नाभागो दिष्टपुत्रोऽभूत्स तु ब्राह्मणतां गतः ।।
स्वक्षत्रवंशं संस्थाप्य ब्रह्मकर्मभिरावृतः।।४८।।
धृष्टाद्धार्ष्टमभूत्क्षत्रं ब्रह्मभूयं गतं क्षितौ ।।
करूषस्य तु कारूषाः क्षत्रिया युद्धदुर्मदाः ।।४९।।
नृगो यो मनुपुत्रस्तु महादाता विशेषतः ।।
नानावसूनां सुप्रीत्या विप्रेभ्यश्च गवां तथा ।।5.36.५०।।
गोदातव्यत्ययाद्यस्तु स्वकुबुद्ध्या स्वपापतः ।।
कृकलासत्वमापन्नः श्रीकृष्णेन समुद्धृतः ।।५१।।
तस्येकोभूत्सुतः श्रेष्ठः प्रयातिर्धर्मवित्तथा ।।
इति श्रुतं मया व्यासात्तत्प्रोक्तं हि समासतः ।।५२।
वृषघ्नस्तु मनोः पुत्रो गोपालो गुरुणा कृतः ।।
पालयामास गा यत्तो रात्र्यां वीरासनव्रतः ।। ५३ ।।
स एकदाऽऽगतं गोष्ठे व्याघ्रं गा हिंसितुं बली ।।
श्रुत्वा गोकदनं बुद्धो हंतुं तं खड्गधृग्ययौ ।।५४।।
अजानन्नहनद्बभ्रोश्शिरश्शार्दूलशंकया ।।
निश्चक्राम सभीर्व्याघ्रो दृष्ट्वा तं खड्गिनं प्रभुम् ।। ५५ ।।
मन्यमानो हतं व्याघ्रं स्वस्थानं स जगाम ह ।।
रात्र्यां तस्यां भ्रमापन्नो वर्षवातविनष्टधीः ।।५६।।
व्युष्टायां निशि चोत्थाय प्रगे तत्र गतो हि सः ।।
अद्राक्षीत्स हतां बभ्रुं न व्याघ्रं दुःखितोऽभवत् ।।५७।।
श्रुत्वा तद्वृत्तमाज्ञाय तं शशाप कृतागसम् ।।
अकामतोविचार्य्येति शूद्रो भव न क्षत्रियः ।।५८।।
एवं शप्तस्तु गुरुणा कुलाचार्य्येण कोपतः ।।
निस्सृतश्च पृषध्रस्तु जगाम विपिनं महत् ।। ५९ ।।
निर्विण्णः स तु कष्टेन विरक्तोऽभूत्स योगवान्।।
वनाग्नौ दग्धदेहश्च जगाम परमां गतिम्।।5.36.६०।।
कविः पुत्रो मनोः प्राज्ञश्शिवानुग्रहतोऽभवत् ।।
भुक्त्वा सुखं दिव्यं मुक्तिं प्राप सुदुर्लभाम्।।६१।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां मनुनवपुत्रवंशवर्णनंनाम षट्त्रिंशो ऽध्यायः।।३६।।

सूत उवाच।।
पूर्वतस्तु मनोर्जज्ञे इक्ष्वाकुर्घ्राणतस्सुतः।।
तस्य पुत्रशतं त्वासीदिक्ष्वाकोर्भूरिदक्षिणम्।।१।।
तेषां पुरस्तादभवन्नार्य्यावर्ते नृपा द्विजाः।।
तेषां विकुक्षिर्ज्येष्ठस्तु सोऽयोध्यायां नृपोऽभवत्।।२।।
तत्कर्म शृणु तत्प्रीत्या यज्जातं वंशतो विधेः।
श्राद्धकर्म्मणि चोद्दिष्टो ह्यकृते श्राद्धकर्मणि ।।३।।
भक्षयित्वा शशं शीघ्रं शशादत्वमतो गतः।।
इक्ष्वाकुणा परित्यक्तश्शशादो वनमाविशत ।। ४ ।।
इक्ष्वाकौ संस्थिते राजा वसिष्ठवचनादभूत्।।
शकुनिप्रमुखास्तस्य पुत्राः पञ्चदश स्मृताः।।५।।
उत्तरापथदेशस्य रक्षितारो महीक्षितः ।।
अयोधस्य तु दायादः ककुत्स्थो नाम वीर्य्यवान् ।।६।।
अरिनाभः ककुत्स्थस्य पृथुरेतस्य वै सुतः ।।
विष्टराश्वः पृथोः पुत्रस्तस्मादिंद्रः प्रजापतिः ।।७।।
इंद्रस्य युवनाश्वस्तु श्रावस्तस्य प्रजापतिः।।
जज्ञे श्रावस्तकः प्राज्ञः श्रावस्ती येन निर्मिता।।
श्रावस्तस्य तु दायादो बृहदश्वो महायशाः ।। ८ ।।
युवनाश्वस्सुतस्तस्य कुवलाश्वश्च तत्सुतः ।।
स हि धुंधुवधाद्भूतो धुंधुमारो नृपोत्तमः।।९।।
कुवलाश्वस्य पुत्राणां शतमुत्तमधन्विनाम् ।।
बभूवात्र पिता राज्ये कुवलाश्वं न्ययोजयत् ।। 5.37.१० ।।
पुत्रसंक्रामितश्रीको वनं राजा समाविशत् ।।
तमुत्तंकोऽथ राजर्षि प्रयांतं प्रत्यवारयत् ।। ११ ।।
उत्तंक उवाच।।
भवता रक्षणं कार्यं पृथिव्या धर्मतः शृणु।।
त्वया हि पृथिवी राजन्रक्ष्यमाणा महात्मना ।। १२ ।।
भविष्यति निरुद्विग्ना नारण्यं गंतुमर्हसि ।।
ममाश्रमसमीपे तु हिमेषु मरुधन्वसु ।। १३ ।।
समुद्रवालुकापूर्णो दानवो बलदर्पितः ।।
देवतानामवध्यो हि महाकायो महाबलः ।।१४।।
अंतर्भूभिगतस्तत्र वालुकांतर्हितः स्थितः ।।
राक्षसस्य मधोः पुत्रो धुंधुनामा सुदारुणः ।। १५ ।।

शेते लोकविनाशाय तप आस्थाय दारुणम् ।।
संवत्सरस्य पर्यन्ते स निश्वासं विमुंचति।।१६।।
यदा तदा भूश्चलति सशैलवनकानना।।
सविस्फुलिंगं सांगारं सधूममपि वारुणम्।।१७।।
तेन रायन्न शक्नोमि तस्मिंस्स्थातुं स्व आश्रमे ।।
तं वारय महाबाहो लोकानां हितकाम्यया ।। १८ ।।
लोकास्स्वस्था भवंत्वद्य तस्मिन्विनिहते त्वया ।।
त्वं हि तस्य वधायैव समर्थः पृथवीपते ।।१९।।
विष्णुना च वरो दत्तो महान्पूर्व युगेऽनघ ।।
तेजसा स्वेन ते विष्णुस्तेज आप्याययिष्यति ।। 5.37.२० ।।
पालने हि महाधर्मः प्रजानामिह दृश्यते ।।
न तथा दृश्यतेऽरण्ये मा तेऽभूद्बुद्धिरीदृशी ।।२१।।
ईदृशो नहि राजेन्द्र क्वचिद्धर्मः प्रविद्यते ।।
प्रजानां पालने यादृक् पुरा राजर्षिभिः कृतः ।।२२।।
स एवमुक्तो राजर्षिरुत्तंकेन महात्मना ।।
कुवलाश्वः सुतं प्रादात्तस्मै धुन्धुनिवारणे ।। २३ ।।
भगवन्न्यस्तशस्त्रोहमयं तु तनयो मम ।।
भविष्यति द्विजश्रेष्ठ धुन्धुमारो न संशयः ।। २४ ।।
इत्युक्त्वा पुत्रमादिश्य ययौ स तपसे नृपः ।।
कुवलाश्वश्च सोत्तङ्को ययौ धुन्धुविनिग्रहे ।।२५।।
तमाविशत्तदा विष्णुर्भगवांस्तेजसा प्रभुः ।।
उत्तंकस्य नियोगाद्वै लोकानां हितकाम्यया ।। २६ ।।
तस्मिन्प्रयाते दुर्द्धर्षे दिवि शब्दो महानभूत् ।।
एष श्रीमान्नृपसुतो धुन्धुमारो भविष्यति ।। २७ ।।
दिव्यैर्माल्यैश्च तं देवास्समंतात्समवारयन् ।।
प्रशंसां चक्रिरे तस्य जय जीवेति वादिनः ।।२८।।
स गत्वा जयतां श्रेष्ठस्तनयैस्सह पार्थिवः ।।
समुद्रं खनयामास वालुकार्णवमध्यतः ।।२९।।
नारायणस्य विप्रर्षेस्तेजसाप्यायितस्तु सः।।
बभूव सुमहातेजा भूयो बलसमन्वितः।।5.37.३०।।
तस्य पुत्रैः खनद्भिस्तु वालुकांतर्गतस्तु सः।।
धुन्धुरासादितो ब्रह्मन्दिशमाश्रित्य पश्चि माम् ।। ३१ ।।
मुखजेनाग्निना क्रोधाल्लोकान्संवर्तयन्निव ।।

वारि सुस्राव वेगेन विधोः कधिरिवोदये।। ३२ ।।
ततोऽनलैरभिहतं दग्धं पुत्रशतं हि तत् ।।
त्रय एवावशिष्टाश्च तेषु मध्ये मुनीश्वर ।।३३।।
ततस्स राजा विप्रेन्द्र राक्षसं तं महाबलम् ।।
आससाद महातेजा धुन्धुं विप्रविनाशनम् ।।३४।।
तस्य वारिमयं वेगमापीय स नराधिपः ।।
वह्निबाणेन वह्निं तु शमयामास वारिणा ।।३५।।
तं निहत्य महाकायं बलेनोदकराक्षसम्।।
उत्तंकस्येक्षयामास कृतं कर्म नराधिपः ।।३६।।
उत्तंकस्तु वरं प्रादात्तस्मै राज्ञे महामुने।।
अददच्चाक्षयं वित्तं शत्रुभिश्चापराजयम् ।।३७।।
धर्मे मतिं च सततं स्वर्गे वासं तथाक्षयम् ।।
पुत्राणां चाक्षयं लोकं रक्षसा ये तु संहताः।।३८।।
तस्य पुत्रास्त्रयशिष्टाः दृढाश्वः श्रेष्ठ उच्यते ।।
हंसाश्वकपिलाश्वौ च कुमारौ तत्कनीयसौ।।३९।।
धौंधुमारिर्दृढाश्वो यो हर्य्यश्वस्तस्य चात्मजः ।।
हर्यश्वस्य निकुंभोभूत्पुत्रो धर्मरतस्सदा ।।5.37.४०।।
संहताश्वो निकुंभस्य पुत्रो रणविशारदः।।
अक्षाश्वश्च कृताश्वश्च संहताश्वसुतोऽभवत।।४१।।
तस्य हैमवती कन्या सतां मान्या वृषद्वती।।
विख्याता त्रिषु लोकेषु पुत्रस्तस्याः प्रसेनजित् ।। ४२ ।।
लेभे प्रसेनजिद्भार्यां गौरीं नाम पतिव्रताम् ।।
अभिशप्ता तु सा भर्त्रा नदी सा बाहुदा कृता ।। ४३ ।।
तस्य पुत्रो महानासीद्युवनाश्वो महीपतिः ।।
मांधाता युवनाश्वस्य त्रिषु लोकेषु विश्रुतः ।। ४४ ।।
तस्य चैत्ररथी भार्या शशबिंदुसुता ऽभवत् ।।
पतिव्रता च ज्येष्ठा च भ्रातॄणामयुतं च सः ।। ४५ ।।
तस्यामुत्पादयामास मान्धाता द्वौ सुतौ तदा ।।
पुरुकुत्सं च धर्मज्ञं मुचुकुंदं च धार्मिकम् ।। ४६ ।।
पुरुकुत्ससुतस्त्वासीद्विद्वांस्त्रय्यारुणिः कविः ।।
तस्य सत्यव्रतो नाम कुमारोऽभून्महाबली ।। ४७ ।।
पाणिग्रहणमंत्राणां विघ्नं चक्रे महात्मभिः ।।
येन भार्य्या हृता पूर्वं कृतोद्वाहः परस्य वै ।। ४८ ।।

बलात्कामाच्च मोहाच्च संहर्षाच्च यदोत्कटात् ।।
जहार कन्यां कामाच्च कस्यचित्पुरवासिनः ।। ४९ ।।
अधर्मसंगिनं तं तु राजा त्रय्यारुणिस्त्यजन् ।।
अपध्वंसेति बहुशोऽवदत्क्रोधसमन्वितः ।। 5.37.५० ।।
पितरं सोऽब्रवीन्मुक्तः क्व गच्छामीति वै तदा ।।
वस श्वपाकनिकटे राजा प्राहेति तं तदा ।। ५१ ।।
स हि सत्यव्रतस्तेन श्वपाकवसथांतिके ।।
पित्रा त्यक्तोऽवसद्वीरो धर्मपालेन भूभुजा ।। ५२ ।।
ततस्त्रय्यारुणी राजा विरक्तः पुत्रकर्मणा ।।
स शंकरतपः कर्त्तुं सर्वं त्यक्त्वा वनं ययौ ।।५३।।
ततस्तस्य स्व विषये नावर्षत्पाकशासनः ।।
समा द्वादश विप्रर्षे तेनाधर्मेण वै तदा ।।५४।।
दारां तस्य तु विषये विश्वामित्रो महातपाः ।।
संत्यज्य सागरानूपे चचार विपुलं तपः ।।५५।।
तस्य पत्नी गले बद्ध्वा मध्यमं पुत्रमौरसम्।।
शेषस्य भरणार्थाय व्यक्रीणाद्गोशतेन च।।५६।।
तां तु दृष्ट्वा गले बद्धं विक्रीणंती स्वमात्मजम् ।।
महर्षिपुत्रं धर्म्मात्मा मोचयामास तं तदा ।। ५७ ।।
सत्यव्रतो महाबाहुर्भरणं तस्य चाकरोत् ।।
विश्वामित्रस्य तुष्ट्यर्थमनुक्रोशार्थमेव च ।।५७८।।
तदारभ्य स पुत्रस्तु विश्वामित्रस्य वै मुनेः ।।
अभवद्गालवो नाम गलबंधान्महातपाः ।।५९।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां मनुवंशवर्णनंनाम सप्तत्रिंशोऽध्यायः ।।३७।।

सूत उवाच ।।
सत्यव्रतस्तु तद्भक्त्या कृपया च प्रतिज्ञया ।।
विश्वामित्रकलत्रं च पोषयामास वै तदा ।।१।।
हत्वा मृगान्वराहांश्च महिषांश्च वनेचरान् ।।
विश्वामित्राश्रमाभ्याशे तन्मांसं चाक्षिपन्मुने ।। २ ।।
तीर्थं गां चैव रात्रं च तथैवांतःपुरं मुनिः ।।
याज्योपाध्यायसंयोगाद्वसिष्ठः पर्य्यरक्षत ।।३।।
सत्यव्रतस्य वाक्याद्वा भाविनोर्थस्य वै बलात्।।
वसिष्ठोऽभ्यधिकं मन्युं धारयामास नित्यशः।।४।।
पित्रा तु तं तदा राष्ट्रात्परित्यक्तं स्वमात्मजम् ।।
न वारयामास मुनिर्वसिष्ठः कारणेन च ।।५।।
पाणिग्रहणमंत्राणां निष्ठा स्यात्सप्तमे पदे।।
न च सत्यव्रतस्थस्य तमुपांशुमबुद्ध्यत।।६।।
तस्मिन्स परितोषाय पितुरासीन्महात्मनः।।
कुलस्य निष्कृतिं विप्र कृतवान्वै भवेदिति।।७।।
न तं वसिष्ठो भगवान्पित्रा त्यक्तं न्यवारयत् ।।
अभिषेक्ष्याम्यहं पुत्रमस्यां नैवाब्रवीन्मुनिः ।।८।।
स तु द्वादश वर्षाणि दीक्षां तामुद्वहद्बली ।।
अविद्यामाने मांसे तु वसिष्ठस्य महात्मनः ।। ९ ।।
सर्वकामदुहां दोग्ध्रीं ददर्श स नृपात्मजः ।।
तां वै क्रोधाच्च लोभाच्च श्रमाद्वै च क्षुधान्वितः ।।5.38.१०।।
दाशधर्मगतो राजा तां जघान स वै मुने ।।
स तं मांसं स्वयं चैव विश्वामित्रस्य चात्मजम् ।। ११ ।।
भोजयामास तच्छ्रुत्वा वसिष्ठो ह्यस्य चुक्रुधे ।।
उवाच च मुनिश्रेष्ठस्तं तदा क्रोधसंयुतः ।।१२।।
वसिष्ठ उवाच ।।
पातयेयमहं क्रूरं तव शंकुमयोमयम् ।।
यदि ते द्वाविमौ शंकू नश्येतां वै कृतौ पुरा ।।१३।।
पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च ।।
अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः ।।१४।।
त्रिशंकुरिति होवाच त्रिशंकुरिति स स्मृतः ।।
विश्वामित्रस्तु दाराणामागतो भरणे कृते ।। १५ ।।
तेन तस्मै वरं प्रादान्मुनिः प्रीतस्त्रिशंकवे।।

छन्द्यमानो वरेणाथ वरं वव्रे नृपात्मजः।।१६।।
अनावृष्टिभये चास्मिञ्जाते द्वादशवार्षिके ।।
अभिषिच्य पितृ राज्ये याजयामास तं मुनिः ।।१७।।
मिषतां देवतानां च वसिष्ठस्य च कौशिकः ।।
सशरीरं तदा तं तु दिवमारोह यत्प्रभुः ।।१८।।
तस्य सत्यरथा नाम भार्या केकयवंशजा ।।
कुमारं जनयामास हरिश्चन्द्रमकल्मषम् ।।१९।।
स वै राजा हरिश्चन्द्रो त्रैशंकव इति स्मृतः ।।
आहर्ता राजसूयस्य सम्राडिति ह विश्रुतः ।। 5.38.२० ।।
हरिश्चन्द्रस्य हि सुतो रोहितो नाम विश्रुतः ।।
रोहितस्य वृकः पुत्रो वृकाद्बाहुस्तु जज्ञिवान्।।२१।।
हैहयास्तालजंघाश्च निरस्यंति स्म तं नृपम्।।
नात्मार्थे धार्मिको विप्रः स हि धर्मपरोऽभवत ।।२२।।
सगरं ससुतं बाहुर्जज्ञे सह गरेण वै ।।
और्वस्याश्रममासाद्य भार्गवेणाभिरक्षितः ।।२३।।
आग्नेयमस्त्रं लब्ध्वा च भार्गवात्सगरो नृपः।।
जिगाय पृथिवीं हत्वा तालजंघान्सहैहयान।।२४।।
शकान्बहूदकांश्चैव पारदांतगणान्खशान्।।
सुधर्मं स्थापयामास शशास वृषतः क्षितिम् ।।२५।।
शौनक उवाच ।।
स वै गरेण सहितः कथं जातस्तु क्षत्रियात् ।।
जितवानेतदाचक्ष्व विस्तरेण हि सूतज ।। २६ ।।
सूत उवाच।।
पारीक्षितेन संपृष्टो वैशंपायन एव च ।।
यदाचष्ट स्म तद्वक्ष्ये शृणुष्वैकमना मुने ।। २७ ।।
।। पारीक्षितो उवाच ।।
कथं स सगरो राजा गरेण सहितो मुने ।।
जातस्स जघ्निवान्भूयानेतदाख्यातुमर्हसि ।। २८ ।।
वैशम्पायन उवाच ।।
बाहोर्व्यसनिनस्तात हृतं राज्यमभूत्किल ।।
हैहयैस्तालजंघैश्च शकैस्सार्द्धं विशांपते ।। २९ ।।
यवनाः पारदाश्चैव काम्बोजाः पाह्नवास्तथा ।।
बहूदकाश्च पंचैव गणाः प्रोक्ताश्च रक्षसाम्।5.38.३०।

एते पंच गणा राजन्हैहयार्थेषु रक्षसाम्।।
कृत्वा पराक्रमान् बाहो राज्यं तेभ्यो ददुर्बलात्।।३१।।
हृतराज्यस्ततो विप्राः स वै बाहुर्वनं ययौ ।।
पत्न्या चानुगतो दुःखी स वै प्राणानवासृजत् ।। ३२ ।।
पत्नी या यादवी तस्य सगर्भा पृष्ठतो गता ।।
सपत्न्या च गरस्तस्यै दत्तः पूर्वं सुतेर्ष्यया ।। ३३ ।।
सा तु भर्तुश्चितां कृत्वा ज्वलनं चावरोहत ।।
और्वस्तां भार्गवो राजन्कारुण्यात्समवारयत् ।। ३४ ।।
तस्याश्रमे स्थिता राज्ञी गर्भरक्षणहेतवे ।।
सिषेवे मुनिवर्यं तं स्मरन्ती शंकरं हृदा ।। ३५ ।।
एकदा खलु तद्गर्भो गरेणैव सह च्युतः ।।
सुमुहूर्त्ते सुलग्ने च पंचोच्चग्रहसंयुते ।। ३६ ।।
तस्मिँल्लग्ने च बलिनि सर्वथा मुनिसत्तम ।।
व्यजायत महाबाहुस्सगरो नाम पार्थिवः ।।३७।।
और्वस्तु जातकर्मादि तस्य कृत्वा महात्मनः ।।
अध्याप्य वेदशास्त्राणि ततोऽस्त्रं प्रत्यपादयत् ।। ३८ ।।
आग्नेयं तं महाभागो ह्यमरैरपि दुस्सहम् ।।
जग्राह विधिना प्रीत्या सगरोसौ नृपोत्तमः ।। ३९ ।।
स तेनास्त्रबलेनैव बलेन च समन्वितः ।।
हैहयान्विजघानाशु संक्रुद्धोऽस्त्रबलेन च ।। 5.38.४० ।।
आजहार च लोकेषु कीर्तिं कीर्तिमतां वरः ।।
धर्मं संस्थापयामास सगरोऽसौ महीतले ।।४१।।
ततश्शकास्सयवनाः काम्बोजाः पाह्नवास्तथा ।।
हन्यमानास्तदा ते तु वसिष्ठं शरणं ययुः।।४२।।
वसिष्ठो वंचनां कृत्वा समयेन महाद्युतिः।।
सगरं वारयामास तेषां दत्त्वाभयं नृपम्।।४३।।
सगरस्स्वां प्रतिज्ञां तु गुरोर्वाक्यं निशम्य च।।
धर्मं जघान तेषां वै केशान्यत्वं चकार ह ।। ४४ ।।
अर्द्धं शकानां शिरसो मुंडं कृत्वा व्यसर्जयत् ।।
यवनानां शिरस्सर्वं कांबोजानां तथैव च ।। ४५ ।।
पारदा मुंडकेशाश्च पाह्नवाश्श्मश्रुधारिणः ।।
निस्स्वाध्यायवषट्काराः कृतास्तेन महात्मना ।।४६।।
जिता च सकला पृथ्वी धर्मतस्तेन भूभुजा ।।

सर्वे ते क्षत्रियास्तात धर्महीनाः कृताः पुराः ।।४७।।
स धर्मविजयी राजा विजित्वेमां वसुंधराम्।।
अश्वं संस्कारयामास वाजिमेधाय पार्थिवः।।४८।।
तस्य चास्यतेस्सोऽश्वस्समुद्रे पूर्वदक्षिणे ।।
गतः षष्टिसहस्रैस्तु तत्पुत्रैरन्वितो मुने ।। ४९ ।।
देवराजेन शक्रेण सोऽश्वो हि स्वार्थसाधिना ।।
वेलासमीपेऽपहृतो भूमिं चैव प्रवेशितः ।।5.38.५०।।
महाराजोऽथ सगरस्तद्धयान्वेषणाय च।।
स तं देशं तदा पुत्रैः खानयामास सर्वतः ।।५१।।
आसेदुस्ते ततस्तत्र खन्यमाने महार्णवे ।।
तमादिपुरुषं देवं कपिलं विश्वरूपिणम्।।५२।।
तस्य चक्षुस्समुत्थेन वह्निना प्रतिबुध्यतः ।।
दग्धाः षष्टिसहस्राणि चत्वारस्त्ववशेषिताः।।५३।।
हर्षकेतुस्सुकेतुश्च तथा धर्मरथोपरः।।
शूरः पंचजनश्चैव तस्य वंशकरा नृपाः।।५४।।
प्रादाच्च तस्मै भगवान् हरिः पंचवरान्स्वयम्।।
वंशं मेधां च कीर्तिञ्च समुद्रं तनयं धनम् ।।५५।।
सागरत्वं च लेभे स कर्मणा तस्य तेन वै।।
तं चाश्वमेधिकं सोऽश्वं समुद्रादुपलब्धवान्।।५६।।
आजहाराश्वमेधानां शतं स तु महायशाः ।।
ईजे शंभुविभूतीश्च देवतास्तत्र सुव्रताः ।। ५७ ।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां सत्यव्रतादिसगरपर्यंत वंशवर्णनं नामाष्टत्रिंशोऽध्यायः ।। ३८ ।।

शौनक उवाच ।।
सगरस्यात्मजा वीराः कथं जाता महाबलाः ।।
विक्रांताः षष्टिसाहस्रा विधना केन वा वद ।।१।।
सूत उवाच।।
द्वे पत्न्यो सगरस्यास्तां तपसा दग्धकिल्विषे।।
और्वस्तयोर्वरं प्रादात्तोषितो मुनिसत्तमः ।। २ ।।
षष्टिपुत्रसहस्राणि एका वव्रे तरस्विनाम्।।
एकं वंशकरं त्वेका यथेष्टं वरशालिनी।।३।।
तत्रैवागत्य तां लब्ध्वा पुत्राञ्शूरान्बहूंस्तदा ।।
सा चैव सुषुवे तुम्बं बीजपूर्वं पृथक्कृतम् ।। ४ ।।
ते सर्वे हि स्वधात्रीभिर्ववृधुश्च यथाक्रमम् ।।
घृतपूर्णेषु कुम्भेषु कुमाराः प्रीतिवर्द्धनाः ।। ५ ।।
कपिलाग्निप्रदग्धानां तेषां तत्र महात्मनाम् ।।
एकः पंचजनो नाम पुत्रो राजा बभूव ह ।। ६ ।।
ततः पंचजनस्यासीदंशुमान्नाम वीर्यवान् ।।
दिलीपस्तनयस्तस्य पुत्रो यस्य भगीरथः ।। ७ ।।
यस्तु गंगा सरिच्छ्रेष्ठामवातारयतः प्रभु ।।
समुद्रमानयच्चेमां दुहितृत्वमकल्पयत्।।८।।
भगीरथसुतो राजा श्रुतसेनः इति श्रुतः।।
नाभागस्तु सुतस्तस्य पुत्रः परमधार्मिकः।।९।।
अंबरीषस्तु नाभागिस्सिंधुद्वीपस्ततोऽभवत्।।
अयुताजित्तु दायादस्सिंधुद्वीपस्य वीर्यवान्।।5.39.१०।।
आयुताजित्सुतस्त्वासीदृतुपर्णो महायशाः ।।
दिव्याक्षहृदयज्ञोऽसौ राजा नलसखोऽभवत् ।।११।।
ऋतुपर्णसुतस्त्वासीदनुपर्णो महाद्युतिः ।।
तस्य कल्माषपादो वै नाम्ना मित्रसहस्तथा ।। १२ ।।
कल्माषपादस्य सुतस्सर्वकर्मेति विश्रुतः ।।
अनरण्यस्तु पुत्रोऽभूद्विश्रुतस्सर्वशर्मणः ।।१३।।
अनरण्यसुतो राजा विद्वान्मुंडिद्रुहोऽभवत्।।
निषधस्तस्य तनयो रतिः खट्वाङ्ग इत्यपि।।११४।।
येन स्वर्गादिहागत्य मुहूर्तं प्राप्य जीवितम् ।।
त्रयोऽपि संचिता लोका बुद्ध्या सत्येन चानघ।।१५।।
दीर्घबाहुस्सुतस्तस्य रघुस्तस्याभवत्सुतः ।।

अजस्तस्य तु पुत्रोऽभूत्तस्माद्दशरथोऽभवत् ।। १६ ।।
रामो दशरथाज्जज्ञे धर्मात्मा यो महायशाः ।।
स विष्ण्वंशो महाशैवः पौलस्त्यो येन घातितः ।।१७।।
तच्चरितं च बहुधा पुराणेषु प्रवर्णितम् ।।
रामायणे प्रसिद्धं हि नातः प्रोक्तं तु विस्तरात् ।। १८ ।।
रामस्य तनयो जज्ञे कुश इत्यपि विश्रुतः ।।
अतिथिस्तु कुशाज्जज्ञे निषधस्तस्य चात्मजः ।।१९।।
निषधस्य नलः पुत्रो नभाः पुत्रो नलस्य तु ।।
नभसः पुंडरीकश्च क्षेमधन्वा ततस्मृतः ।। 5.39.२० ।।
क्षेमधन्वसुतस्त्वासीद्देवानीकः प्रतापवान् ।।
आसीदहीनगुर्नाम देवानीकात्मजः प्रभुः ।।२१।।
अहीनगोस्तु दायादस्सहस्वान्नाम वीर्यवान् ।।
वीरसेनात्मजस्तस्य यश्चैक्ष्वाकुकुलोद्भवः।।२२।।
वीरसेनस्य दायादः पारियात्रो बभूव ह।।
ततो बलाख्यस्तनयस्स्थलस्तस्मादभूत्सुतः ।।२३।।
अर्कांशसंभवस्तस्मात्पुत्रो यक्षः प्रतापवान्।।
तत्सुतस्त्वगुणस्त्वासीत्तस्माद्विधृतिरात्मजः ।। २४ ।।
हिरण्यनाभस्तत्पुत्रो योगाचार्य्यो बभूव ह।।
स शिष्यो जैमिनिमुनेर्ह्यात्मविद्याविशारदः।।२५।।
कौशिल्यो याज्ञवल्क्योथ योगमध्यात्म्यसंज्ञकम्।।
यतोऽध्यगान्नृपवराद्धृदयग्रंथिभेदनम्।।२६।।
तत्सुतो पुष्पनामा हि ध्रुवसंज्ञस्तदात्मजः।।
अग्निवर्णस्सुतस्तस्य शीघ्रनामा सुतस्ततः ।।२७।।
मरुन्नामा सुतस्तस्य योगसिद्धो बभूव ह।।
असावास्तेऽद्यापि प्रभुः कलापग्रामसंज्ञके ।। २८ ।।
तद्वासिभिश्च मुनिभिः कलेरंते स एव हि ।।
पुनर्भावयिता नष्टं सूर्यवंशं विशेषतः ।। २९ ।।
पृथुश्रुतश्च तत्पुत्रस्संधिस्तस्य सुतः स्मृतः ।।
अमर्षणस्सुतस्तस्य मरुत्वांस्तत्सुतोऽभवत् ।।5.39.३०।।
विश्वसाह्वस्सुतस्तस्य तत्सुतोऽ भूत्प्रसेनजित् ।।
तक्षकस्तस्य तनयस्तत्सुतो हि बृहद्बलः ।। ३१ ।।
एत इक्ष्वाकुवंशीया अतीताः संप्रकीर्तिताः ।।
शृणु तानागतान्भूतांस्तद्वंश्यान्धर्मवित्तमान् ।।३२।।

बृहद्बलस्य तनयो भविता हि बृहद्रणः ।।
बृहद्रणसुतस्तस्योरुक्रियो हि भविष्यति ।। ३३ ।।
वत्सवृद्धस्सुतस्तस्य प्रतिव्योमसुतस्ततः ।।
भानुस्तत्तनयो भावी दिवाको वाहिनीपतिः ।।३४।।
सहदेवस्सुतस्तस्य महावीरो भवि ष्यति ।।
तत्सुतो बृहदश्वो हि भानुमांस्तत्सुतो बली ।। ३५ ।।
सुतो भानुमतो भावी प्रतीकाश्वश्च वीर्यवान् ।।
सुप्रतीकस्सुतस्तस्य भविष्यति नृपोत्तमः ।। ३६ ।।
मरुदेवस्सुतस्तस्य सुनक्षत्रो भविष्यति ।।
तत्सुतः पुष्करस्तस्यांतरिक्षस्तत्सुतो द्विजाः ।। ३७ ।।
सुतपास्तत्सुतो वीरो मित्रचित्तस्य चात्मजः ।।
बृहद्भाजस्सुतस्तस्य बर्हिनामा तदात्मजः ।। ३८ ।।
कृतंजयस्सुतस्तस्य तत्सुतो हि रणंजयः ।।
संजयस्तु मयस्तस्य तस्य शाक्यो हि चात्मजः ।। ३९ ।।
शुद्धोदस्तनयस्तस्य लांगलस्तु तदात्मजः ।।
तस्य प्रसेनजित्पुत्रस्तत्सुतः शूद्रकाह्वयः ।।5.39.४०।।
रुणको भविता तस्य सुरथस्तत्सुतः स्मृतः ।।
सुमित्रस्तत्सुतो भावी वंशनिष्ठांत एव हि ।।४१।।
सुमित्रांतोन्वयोऽयं वै इक्ष्वाकूणां भविष्यति ।।
राज्ञां वैचित्रवीर्य्याणां धर्म्मिष्ठानां सुकर्म्मणाम्।।४२।।
सुमित्रं प्राप्य राजानं तद्वंशश्शुभः कलौ ।।
संस्थां प्राप्स्यति तद्ब्राह्मे वर्द्धिष्यति पुनः कृते ।। ४३ ।।
एतद्वैवस्वते वंशे राजानो भूरिदक्षिणाः ।।
इक्ष्वाकुवंशप्रभवाः प्राधान्येन प्रकीर्तिताः ।।४४।।
पुण्येयं परमा सृष्टिरादित्यस्य विवस्वतः।।
श्राद्धदेवस्य देवस्य प्रजानां पुष्टिदस्य च ।।४५।।
पठञ्छृण्वन्निमां सृष्टिमादित्यस्य च मानवः ।।
प्रजावानेति सायुज्यमिह भुक्त्वा सुखं परम् ।। ४६ ।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां वैवस्वतवंशोद्भवराजवर्णनं नामैकोनचत्वारिंशोऽध्यायः ।।३९।।

व्यास उवाच ।।
इत्याकर्ण्य श्राद्धदेवः सूर्यान्वयमनुत्तमम् ।।
पर्य्यपृच्छन्मुनिश्रेष्ठश्शौनकस्सूतमादरात् ।। १ ।।
शौनक उवाच ।।
सूतसूत चिरंजीव व्यासशिष्य नमोस्तु ते ।।
श्राविता परमा दिव्या कथा परमपावनी ।। २ ।।
त्वया प्रोक्तः श्राद्धदेवस्सूर्य्यः सद्वंशवर्द्धनः ।।
संशयस्तत्र मे जातस्तं ब्रवीमि त्वदग्रतः ।। ३ ।।
कुतो वै श्राद्धदेवत्वमादित्यस्य विवस्वतः ।।
श्रोतुमिच्छामि तत्प्रीत्या छिंधि मे संशयं त्विमम् ।। ४ ।।
श्राद्धस्यापि च माहात्म्यं तत्फलं च वद प्रभो ।।
प्रीताश्च पितरो येन श्रेयसा योजयंति तम् ।। ५ ।।
एतच्च श्रोतुमिच्छामि पितॄणां सर्गमुत्तमम् ।।
कथय त्वं विशेषेण कृपां कुरु महामते ।।६।।
सूत उवाच ।।
वच्मि तत्तेऽखिलं प्रीत्या पितृसर्गं तु शौनक ।।
मार्कण्डेयेन कथितं भीष्माय परिपृच्छते ।। ७ ।।
गीतं सनत्कुमारेण मार्कण्डेय धीमते ।।
तत्तेऽहं संप्रवक्ष्यामि सर्वकामफलपदम् ।। ८ ।।
युधिष्ठिरेण संपृष्टो भीष्मो धर्मभृतां वरः।।
शरशय्यास्थितः प्रोचे तच्छृणुष्व वदामि ते ।।९।।
युधिष्ठिर उवाच ।।
पुष्टिकामेन पुंसां वै कथं पुष्टिरवाप्यते ।।
एतच्छ्रोतुं समिच्छामि किं कुर्वाणो न सीदति ।। 5.40.१० ।।
।। सूत उवाच ।।
युधिष्ठिरेण संपृष्टं प्रश्नं श्रुत्वा स धर्मवित् ।।
भीष्मः प्रोवाच सुप्रीत्या सर्वेषां शृण्वतां वचः ।। ११ ।।
भीष्म उवाच ।।
ये कुर्वंति नराश्श्राद्धान्यपि प्रीत्या युधिष्ठिर ।।
श्राद्धैः प्रीणाति तत्सर्वं पितॄणां हि प्रसादतः ।। १२ ।।
श्राद्धानि चैव कुर्वन्ति फलकामास्सदा नरा ।।
अभिसंधाय पितरं पितुश्च पितरं तथा ।। १३ ।।
पितुः पितामहश्चैव त्रिषु पिंडेषु नित्यदा ।।

पितरो धर्मकामस्य प्रजाकामस्य च प्रजाम् ।। १४ ।।
पुष्टिकामस्य पुष्टिं च प्रयच्छन्ति युधिष्ठिर।।१५।।
युधिष्ठिर उवाच।।
वर्तंते पितरः स्वर्गे केषांचिन्नरके पुनः।।
प्राणिनां नियतं चापि कर्मजं फलमुच्यते ।।१६।।
तानि श्राद्धानि दत्तानि कथं गच्छन्ति वै पितॄन् ।।
कथं शक्तास्तमाहर्तुं नरकस्था फलं पुनः ।।१७।।
देवा अपि पितॄन्स्वर्गे यजंत इति मे श्रुतम् ।।
एतदिच्छाम्यहं श्रोतुं विस्तरेण ब्रवीहि मे ।।१८।।
भीष्म उवाच ।।
अत्र ते कीर्तयिष्यामि यथा श्रुतमरिन्दम ।।
पित्रा मम पुरा गीतं लोकान्तरगतेन वै ।।१९।।
श्राद्धकाले मम पितुर्मया पिंडस्समुद्यतः ।।
मत्पिता मम हस्तेन भित्त्वा भूमिमयाचत ।।5.40.२०।।
नैष कल्पविधिर्दृष्ट इति निश्चित्य चाप्यहम् ।।
कुशेष्वेव ततः पिंडं दत्तवानविचारयन् ।।२१।।
ततः पिता मे संतुष्टो वाचा मधुरया तदा ।।
उवाच भारतश्रेष्ठ प्रीयमाणो मयानघ ।।२२।।
त्वया दायादवानस्मि धर्मज्ञेन विपश्चिता ।।
तारितोहं तु जिज्ञासा कृता मे पुरुषोत्तम ।।२३।।
प्रमाणं यद्धि कुरुते धर्माचारेण पार्थिवः ।।
प्रजास्तदनु वर्तंते प्रमाणाचरितं सदा ।। २४ ।।
शृणु त्वं भारतश्रेष्ठ वेदधर्मांश्च शाश्वतान् ।।
प्रमाणं वेदधर्मस्य पुत्र निर्वर्त्तितं त्वया ।। २५ ।।
तस्मात्तवाहं सुप्रीतः प्रीत्या वरमनुत्तमम् ।।
ददामि त्वं प्रतीक्षस्व त्रिषु लोकेषु दुर्लभम् ।।२६।।
न ते प्रभविता मृत्युर्यावज्जीवितुमिच्छसि ।।
त्वत्तोभ्यनुज्ञां संप्राप्य मृत्युः प्रभविता पुनः ।।२७।।
किं वा ते प्रार्थितं भूयो ददामि वरमुत्तमम् ।।
तद् ब्रूहि भरतश्रेष्ठ यत्ते मनसि वर्तते ।।२८।।
इत्युक्तवति तस्मिंस्तु अभिवाद्य कृताञ्जलिः ।।
अवोचं कृतकृत्योऽहं प्रसन्ने त्वयि मानद।।
प्रश्नं पृच्छामि वै कंचिद्वाच्यस्स भवता स्वयम् ।।२९।।

स मामुवाच तद् ब्रूहि यदीच्छसि ददामि ते ।।
इत्युक्तेथ मया तत्र पृष्टः प्रोवाच तन्नृपः।।5.40.३०।।
शंतनुरुवाच ।।
शृणु तात प्रवक्ष्यामि प्रश्नं तेऽहं यथार्थतः ।।
पितृकल्पं च निखिलं मार्कण्डेयेन मे श्रुतम् ।।३१।।
यत्त्वं पृच्छसि मां तात तदेवाहं महामुनिम् ।।
मार्कण्डेयमपृच्छं हि स मां प्रोवाच धर्मवित् ।। ३२ ।।
मार्कण्डेय उवाच ।।
शृणु राजन्मया दृष्टं कदाचित्पश्यता दिवम् ।।
विमानं महादायांतमन्तरेण गिरेस्तदा ।।३३।।
तस्मिन्विमाने पर्यक्षं ज्वलितांगारवर्चसम् ।।
महातेजः प्रज्वलंतं निर्विशेषं मनोहरम् ।। ३४ ।।
अपश्यं चैव तत्राहं शयानं दीप्ततेजसम् ।।
अंगुष्ठमात्रं पुरुषमग्नावग्निमिवाहितम् ।।३५ ।।
सोऽहं तस्मै नमः कृत्वा प्रणम्य शिरसा प्रभुम् ।।
अपृच्छं चैव तमहं विद्यामस्त्वां कथं विभो ।। ३६ ।।
मामुवाच धर्मात्मा तेन तद्विद्यते तपः ।।
येन त्वं बुध्यसे मां हि मुने वै ब्रह्मणस्सुतम् ।।३७।।
सनत्कुमारमिति मां विद्धि किं करवाणि ते ।।
ये त्वन्ये ब्रह्मणः पुत्राः कनीयांसस्तु ते मम ।।३८।।
भ्रातरस्सप्त दुर्धर्षा येषां वंशाः प्रतिष्ठिताः ।।
वयं तु यतिधर्माणस्संयम्यात्मानमात्मनि।। ।। ३९ ।।
यथोत्पन्नस्तथैवाहं कुमार इति विश्रुतः ।।
तस्मात्सनत्कुमारं मे नामैतत्कथितं मुने ।। 5.40.४० ।।
यद्भक्त्या ते तपश्चीर्णं मम दर्शनकांक्षया ।।
एष दृष्टोऽस्मि भद्रं ते कं कामं करवाणि ते ।।४१।।
इत्युक्तवन्तं तं चाहं प्रावोचं त्वं शृणु प्रभो ।।
पितृणामादिसर्गं च कथयस्व यथातथम् ।।४२।।
इत्युक्तस्स तु मां प्राह शृणु सर्वं यथातथम् ।।
वच्मि ते तत्त्वतस्तात पितृसर्गं शुभावहम् ।।४३।।
सनत्कुमार उवाच ।।
देवान्पुरासृजद्ब्रह्मा मां यक्षध्वं स चाह तान् ।।
तमुत्सृज्य तमात्मानमयजंस्ते फलार्थिनः ।।४४।।

ते शप्ता ब्रह्मणा मूढा नष्टसंज्ञा भविष्यथ ।।
तस्मात्किंचिदजानंतो नष्टसंज्ञाः पितामहम् ।।४५।।
प्रोचुस्तं प्रणतास्सर्वे कुरुष्वानुग्रहं हि नः ।।
इत्युक्तस्तानुवाचेदं प्रायश्चित्तार्थमेव हि।।४६।।
पुत्रान्स्वान्परिपृच्छध्वं ततो ज्ञानमवाप्स्यथ।।
इत्युक्ता नष्टसंज्ञास्ते पुत्रान्पप्रच्छुरोजसा ।। ४७ ।।
प्रायश्चित्तार्थमेवाधिलब्धसंज्ञा दिवौकसः।।
गम्यतां पुत्रका एवं पुत्रैरुक्ताश्च तेऽनघ।।४८।।
अभिशप्तास्तु ते देवाः पुत्रकामेन वेधसम्।।
पप्रच्छुरुक्ताः पुत्रैस्ते गतास्ते पुत्रका इति ।।४९।।
ततस्तानब्रवीद्देवो देवान्ब्रह्मा ससंशयान् ।।
शृणुध्वं निर्जरास्सर्वे यूयं न ब्रह्मवादिनः ।।5.40.५०।।
तस्माद्यदुक्तं युष्माकं पुत्रैस्तैर्ज्ञानिसत्तमैः ।।
मंतव्यं संशयं त्यक्त्वा तथा न च तदन्यथा ।।५१।।
देवाश्च पितरश्चैव यजध्वं त्रिदिवौकसः ।।
परस्परं महाप्रीत्या सर्वकामफलप्रदा।।५२।।
सनत्कुमार उवाच ।।
ततस्ते छिन्नसंदेहाः प्रीतिमंतः परस्परम् ।।
बभूवुर्मुनिशार्दूल ब्रह्मवाक्यात्सुखप्रदाः ।। ५३ ।।
ततो देवा हि प्रोचुस्तान्यदुक्ताः पुत्रका वयम्।।
तस्माद्भवंतः पितरो भविष्यथ न संशयः ।।५४।।
पितृश्राद्धे क्रियां कश्चित्करिष्यति न संशयः ।।
श्राद्धैराप्यायितस्सोमो लोकानाप्याययिष्यति ।।५५।।
समुद्रं पर्वतवनं जंगमाजंगमैर्वृतम्।।
श्राद्धानि पुष्टिकामैश्च ये करिष्यंति मानवाः।।५६।।
तेभ्यः पुष्टिप्रदाश्चैव पितरः प्रीणितास्सदा ।।
श्राद्धे ये च प्रदास्यंति त्रीन्पिंडान्नामगोत्रतः ।। ५७ ।।
सर्वत्र वर्तमानास्ते पितरः प्रपितामहाः ।।
भावयिष्यंति सततं श्राद्धदानेन तर्पिताः ।। ५८ ।।
इति तद्वचनं सत्यं भवत्वथ दिवौकसः ।।
पुत्राश्च पितरश्चैव वयं सर्वे परस्परम् ।।५९।।
एवं ते पितरो देवा धर्मतः पुत्रतां गताः ।।
अन्योन्यं पितरो वै ते प्रथिताः क्षितिमण्डले।।5.40.६०।।

इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां श्राद्धकल्पे पितृप्रभाववर्णनंनाम चत्वारिंशोऽध्यायः ।।
४०।।

सनत्कुमार उवाच।।
सप्त ते तपतां श्रेष्ठ स्वर्गे पितृगणास्स्मृताः ।।
चत्वारो मूर्त्तिमंतो वै त्रयश्चैव ह्यमूर्तयः ।।१।।
तान्यजंते देवगणा आद्या विप्रादयस्तथा।।
आप्याययंति ते पूर्वं सोमं योगबलेन वै ।।२।।
तस्माच्छ्राद्धानि देयानि योगिनां तु विशेषतः।।
सर्वेषां राजतं पात्रमथ वा रजतान्वितम्।।३।।
दत्तं स्वधां पुरोधाय श्राद्धे प्रीणाति वै पितॄन्।।
वह्नेराप्यायनं कृत्वा सोमस्य तु यमस्य वै।।४।।
उदगायनमप्यग्नावग्न्यभावेऽप्सु वा पुनः ।।
पितॄन्प्रीणाति यो भक्त्या पितरः प्रीणयंति तम् ।।५।।
यच्छंति पितरः पुष्टिं प्रजाश्च विपुलास्तथा ।।
स्वर्गमारोग्यवृद्धिं च यदन्यदपि चेप्सितम् ।। ६ ।।
देवकार्यादपि मुने पितृकार्य्यं विशिष्यते ।।
पितृभक्तोऽसि विप्रर्षे तेन त्वमजरामरः ।। ७ ।।
न योगेन गतिस्सा तु पितृभक्तस्य या मुने ।।
पितृभक्तिर्विशेषेण तस्मात्कार्या महामुने ।। ८ ।।
मार्कण्डेय उवाच ।।
एवमुक्त्वाऽऽशु देवेशो देवानामपि दुर्लभम्।।
चक्षुर्दत्त्वा सविज्ञानं जगाम यौगिकीं गतिम् ।। ९ ।।
शृणु भीष्म पुरा भूयो भारद्वाजात्मजा द्विजाः ।।
योगधर्ममनुप्राप्य भ्रष्टा दुश्चरितेन वै ।। 5.41.१० ।।
वाग्दुष्टः क्रोधनो हिंस्रः पिशुनः कविरेव च ।।
स्वसृषः पितृवर्ती च नामभिः कर्मभिस्तथा ।। ११ ।।
कौशिकस्य सुतास्तात शिष्या गर्गस्य चाभवन् ।।
पितर्युपरते सर्वे प्रवसंतस्तदाभवन् ।।१२।।
विनियोगाद्गुरोस्तस्य गां दोग्ध्रीं समकालयन् ।।
समानवत्सां कपिलां सर्वेऽन्यायागतास्तदा ।। ।। १३ ।।
तेषां पथि क्षुधार्तानां बाल्यान्मोहाच्च भारत ।।
क्रूरा बुद्धिस्समुत्पन्ना तां गां तै हिंसितुं तदा ।। १४ ।।।
तां कविसस्वसृपश्चैव याचेते नैति वै तदा ।।
न चाशक्यास्तु ताभ्यां वा तदा वारयितुं निजाः ।। १५ ।।
पितृवर्ती तु यस्तेषां नित्यं श्राद्धाह्निको द्विजः ।।

स सर्वानब्रवीत्कोपात्पितृभक्तिसमन्वितः ।।१६।।
यद्यशक्यं प्रकर्तव्यं पितॄनुद्दिश्य साध्यताम् ।।
प्रकुर्वंतो हि श्राद्धं तु सर्व एव समाहिताः।।१७।।
एवमेषा च गौर्धर्मं प्राप्स्यते नात्र संशयः ।।
पितॄनभ्यर्च्य धर्मेण नाधर्मो नो भविष्यति ।।१८।।
एवमुक्ताश्च ते सर्वे प्रोक्षयित्वा च गां तदा ।।
पितृभ्यः कल्पयित्वा तु ह्युपायुंजत भारत ।।१९।।
उपयुज्य च गां सर्वे गुरोस्तस्य न्यवेदयन् ।।
शार्दूलेन हता धेनुर्वत्सा वै गृह्यतामिति ।।5.41.२०।।
आर्तवत्स तु तं वत्सं प्रतिजग्राह वै द्विजः।।
मिथ्योपचारतः पापमभूत्तेषां च गोघ्नताम् ।।२१।।
ततः कालेन कियता कालधर्ममुपागताः।।
ते सप्त भ्रातरस्तात बभूवुस्स्वायुषःक्षये।।२२।।
ते वै क्रूरतया हैंस्त्र्यात्स्वानार्य्यत्वाद्गुरोस्तथा ।।
उग्रहिंसाविहाराश्च जातास्सप्त सहोदराः ।। २३ ।।
लुब्धकस्य सुतास्तावद्बलवंतो मनस्विनः ।।
जाता व्याधा दशार्णेषु सप्त धर्मविचक्षणाः ।।२४।।
स्वधर्मनिरतास्सर्वे मृगा मोहविवर्जिताः ।।
आसन्नुद्वेगसंविग्ना रम्ये कालंजरे गिरौ ।। २५ ।।
तमेवार्थमनुध्याय ज्ञानं मरणसंभवम् ।।
आसन्वनचराः क्षांता निर्द्वंद्वा निष्परिग्रहाः ।। २६ ।।
ते सर्वे शुभकर्माणस्सद्धर्माणो वनेचराः ।।
विधर्माचरणैर्हीना जातिस्मरणसिद्धयः ।।२७।।
पूर्वजातिषु यो धर्मः श्रुतो गुरुकुलेषु वै ।।
तथैव चास्थिता बुद्धौ संसारेऽप्य निवर्तने ।।२८।।
गिरिमध्ये जहुः प्राणाँल्लब्धाहारास्तपस्विनः ।।
तेषां तु पतितानां च यानि स्थानानि भारत ।। २९ ।।
तथैवाद्यापि दृश्यंते गिरौ कालञ्जरे नृप ।।
कर्मणा तेन ते जाताः शुभाशुभविवर्जकाः ।।5.41.३०।।
शुभाऽशुभतरां योनिं चक्रवाकत्वमागताः ।।
शुभे देशे शरद्वीपे सप्तैवासञ्जलौकसः ।। ३१ ।।
त्यक्त्वा सहचरीधर्मं मुनयो धर्मधारिणः ।।
निस्संगा निर्ममाश्शांता निर्द्वंद्वा निष्परिग्रहाः ।। ३२ ।।

निवृत्तिनिर्वृताश्चैव शकुना नामतः स्मृताः ।।
ते ब्रह्मचारिणस्सर्वे शकुना धर्मधारिणः ।।३३।।
जातिस्मरास्सुसंवृद्धास्सप्तैव ब्रह्मचारिणः।।
स्थिता एकत्र सद्धर्मा विकाररहितास्सदा।।३४।।
विप्रयोनौ तु यन्मोहान्मिथ्यापचरितं गुरौ।।
तिर्य्यग्योनौ तथा जन्म श्राद्धाज्ज्ञानं च लेभिरे।।३५।।
तथा तु पितृकार्य्यार्थं कृतं श्राद्धं व्यवस्थितैः।।
तदा ज्ञानं च जातिं च क्रमात्प्राप्तं गुणोत्तरम्।।३६।।
पूर्वजादिषु यद्ब्रह्म श्रुतं गुरुकुलेषु वै ।।
तथैव संस्थितज्ञानं तस्माज्ज्ञानं समभ्यसेत् ।। ३७ ।।
सुमनाश्च सुवाक्छुद्धः पञ्चमश्छिद्रदर्शकः ।।
स्वतंत्रश्च सुयज्ञश्च कुलीना नामतः स्मृताः ।।३८।।
तेषां तत्र विहंगानां चरतां धर्मचारिणाम् ।।
सुवृत्तमभवत्तत्र तच्छृणुष्व महामुने।।३९।।
नीपानामीश्वरो राजा प्रभावेण समन्वितः।।
श्रीमानन्तःपुरवृतो वनं तत्राविवेश ह ।। 5.41.४० ।।
स्वतंत्रश्चक्रवाकस्सस्पृहयामास तं नृपम्।।
दृष्ट्वा यांतं सुखोपेतं राज्यशोभासमन्वितम् ।।४१।।
यद्यस्ति सुकृतं किंचित्तपो वा नियमोऽपि वा।।
खिन्नोहमुपवासेन तपसा निश्चलेन च ।। ४२ ।।
तस्य सर्वस्य पूर्णेन फलेनापि कृतेन हि ।।
सर्वसौभाग्यपात्रश्च भवेयमहमीदृशः ।।४३।।।
मार्कण्डेय उवाच ।।
ततस्तु चक्रवाकौ द्वावासतुस्सहचारिणौ।।
आवां वै सचिवौ स्याव तव प्रियहितैषिणौ ।।४४।।
तथेत्युक्त्वा तु तस्यासीत्तदा योगात्मनो गतिः ।।
एवं तौ चक्रवाकौ च स्ववाक्यं प्रत्यभाषताम् ।। ४५ ।।
यस्मात्कर्मब्रुवाणस्त्वं योगधर्ममवाप्य तम्।।
एवं वरं प्रार्थयसे तस्माद्वाक्यं निबोध मे।।४६।।
राजा त्वं भविता तात कांपिल्ये नगरोत्तमे।।
एतौ ते सचिवौ स्यातां व्यभिचारप्रधर्षितौ।।४७।।
न तानूचुस्त्रयो राज्यं चतुरस्सहचारिणः।।
सप्रसादं पुनश्चक्रे तन्मध्ये सुमनाब्रवीत्।।४८।।

अंतर्वो भविता शापः पुनर्योगमवाप्स्यथ।।
सर्वसत्त्वः सुयज्ञश्च स्वतंत्रोऽयं भविष्यति।।४९।।
पितृप्रसादाद्युष्माभिस्संप्राप्तं सुकृतं भवेत्।।
गां प्रोक्षयित्वा धर्मेण पितृभ्यश्चोपकल्पिताः।।5.41.५०।।
अस्माकं ज्ञानसंयोगस्सर्वेषां योगसाधनम्।।
इदं च कार्यं संरब्धं श्लोकमेकमुदाहृतम्।।५१।।
पुरुषान्तरितं श्रुत्वा ततो योगमवाप्स्यथ।।
इत्युक्त्वा स तु मौनोभूद्विहंगस्सुमना बुधः।।५२।।
मार्कण्डेय उवाच।।
लोकानां स्वस्तये तात शन्तनुप्रवरात्मज।।
इत्युक्तं तच्चरित्रं मे किं भूयश्श्रोतुमिच्छसि।।५३।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां पितृसर्गवर्णनं सप्तव्याधगति
वर्णनंनामैकचत्वारिंशोऽध्यायः ।।४१।।

।। भीष्म उवाच।।
मार्कण्डेय महाप्राज्ञ पितृभक्तिभृतां वर ।।
किं जातं तु ततो ब्रूहि कृपया मुनिसत्तम ।। १ ।।
मार्कण्डेय उवाच ।।
ते धर्मयोगनिरतास्सप्त मानसचारिणः ।।
वाय्वंबुभक्षास्सततं शरीरमुपशोषयन् ।। २ ।।
स राजांतःपुरवृतो नन्दने मघवा इव ।।
क्रीडित्वा सुचिरं तत्र सभार्य्यस्स्वपुरं ययौ ।। ३ ।।
अनूहो नाम तस्यासीत्पुत्रः परमधार्मिकः।।
तं वैभ्राजः सुतं राज्ये स्थापयित्वा वनं ययौ।।४।।
तपः कर्तुं समारेभे यत्र ते सहचारिणः।।
स वै तत्र निराहारो वायुभक्षो महातपाः ।।५।।
ततो विभ्राजितं तेन विभ्राजं नाम तद्वनम्।।
बभूव सुप्रसिद्धं हि योगसिद्धिप्रदायकम् ।।६।।
तत्रैव ते हि शकुनाश्चत्वारो योगधर्मिणः ।।
योगभ्रष्टास्त्रयश्चैव देहत्यागकृतोऽभवन् ।। ७ ।।
कांपिल्ये नगरे ते तु ब्रह्मदत्तपुरोगमाः ।।
जातास्सप्तमहात्मानस्सर्वे विगतकल्मषाः ।।।५ ।।
स्मृतिमंतोऽत्र चत्वारस्त्रयस्तु परिमोहिताः ।।
स्वतन्त्रस्याह्वयो जातो ब्रह्मदत्तो महौजसः।।९।।
छिद्रदर्शी सुनेत्रस्तु वेदवेदांगपारगौ ।।
जातौ श्रोत्रियदायादौ पूर्वजातिसहाषितौ।। 5.42.१०।।
पंचालो बह्वृचस्त्वासीदाचार्यत्वं चकार ह।।
द्विवेदः पुंडरीकश्च छंदोगोऽध्वर्युरेव च ।।११।।
ततो राजा सुतं दृष्ट्वा ब्रह्मदत्तमकल्मषम् ।।
अभिषिच्य स्वराज्ये तु परां गतिमवाप्तवान्।।१२।।
पंचालः पुण्डरीकस्तु पुत्रौ संस्थाप्य मन्दिरे ।।
विविशतुर्वनं तत्र गतौ परमिकां गतिम्।।१३।।
ब्रह्मदत्तस्य भार्य्या तु सन्नितिर्मांम भारत ।।
सा त्वेकभावसंयुक्ता रेमे भर्त्रा सहैव तु ।।१४।।
शेषास्तु चक्रवाका वै कांपिल्ये सहचारिणः ।।
जाताः श्रोत्रियदायादा दरिद्रस्य कुले नृप ।। १५ ।।
धृतिमान्सुमहात्मा च तत्त्वदर्शी निरुत्सुकः ।।

वेदाध्ययन सम्पन्नाश्चत्वारश्छिद्रदर्शिनः ।।१६।।
ते योगनिरतास्सिद्धाः प्रस्थितास्सर्व एव हि।।
आमंत्र्य च मिथः शंभोः पदाम्भोजं प्रणम्य तु।।१७।।
शूरा ये सम्प्रपद्यन्ते अपुनर्भवकांक्षिणः ।।
पापम्प्रणाशयन्त्वद्य तच्छम्भोः परमम्पदम्।।१८।।
शारीरे मानसे चैव पापे वाग्जे महामुने ।।
कृते सम्यगिदम्भक्त्या पठेच्छ्रद्धासमन्वितः।।१९।।
मुच्यते सर्वपापेभ्यश्शिवनामानुकीर्तनात् ।।
उच्चार्यमाण एतस्मिन्देवदेवस्य तस्य वै ।।5.42.२० ।।
विलयं पापमायाति ह्यामभाण्डमिवाम्भसि ।।
तस्मात्तत्संचिते पापे समनंतरमेव च ।।२१।।
जप्तव्यमेतत्पापस्य प्रशमाय महामुने ।।
नरैः श्रद्धालुभिर्भूयस्सर्वकामफलाप्तये ।। २२ ।।
पुष्ट्यर्थमिममध्यायं पठेदेनं शृणोति वा ।।
मुच्यते सर्वपापेभ्यो मोक्षं याति न संशयः ।। २३ ।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां पितृकल्पे पितृभाववर्णनं नाम द्विचत्वारिंशोऽध्यायः ।। ४२ ।।

शौनक उवाच ।।
आचार्य्यपूजनं ब्रूहि सूत व्यासगुरोऽधुना ।।
ग्रन्थस्य श्रवणान्ते हि किं कर्तव्यं तदप्यहो ।। १ ।।
सूत उवाच ।।
पूजयेद्विधिवद्भक्त्याचार्य्यं श्रुत्वा कथां पराम् ।।
ग्रन्थान्ते विधिवद्दद्यादाचार्य्याय प्रसन्नधीः ।।२।।
ततो वक्तारमानम्य संपूज्य च यथाविधि ।।
भूषणैर्हस्तकर्णानां वस्त्रैस्सौम्यादिभिस्सुधीः ।।३।।
शिवपूजासमाप्तौ तु दद्याद्धेनुं सवत्सिकाम् ।।
कृत्वासनं सुवर्णस्य पलमानस्य साम्बरम् ।। ४ ।।
तत्रास्थाप्य शुभं ग्रंथं लिखितं ललिताक्षरैः ।।
आचार्याय सुधीर्दद्यान्मुक्तः स्याद्भवबन्धनैः ।। ५ ।।
ग्रामो गजो हयश्चापि यथाशक्त्यपराणि च ।।
मुने सर्वाणि देयानि वाचकाय महात्मने ।। ६ ।।
विधानसहितं सम्यक्छ्रुतं हि सफलं स्मृतम् ।।
पुराणं शौनकमुने सत्यमेवोदितं मया ।। ७ ।।
तस्माद्विधानदुक्तं तु शृणुयाद्भक्तितो मुने ।।
पुराणं निगमार्थाढ्यं पुण्यदं हृदयं श्रुतेः ।। ८ ।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितातायां व्यासपूजनप्रकारो नाम त्रिचत्वारिंशोऽध्यायः ।।४३।।

मुनय ऊचुः ।।
व्यासोत्पत्तिं महाबुद्धे ब्रूहि सूत दयानिधे ।।
कृपया परया स्वामिन्कृतार्थान्निष्कुरु प्रभो ।। १ ।।
व्यासस्य जननी प्रोक्ता नाम्ना सत्यवती शुभा ।।
विवाहिता तु सा देवी राज्ञा शन्तनुना किल ।। २ ।।
तस्यां जातो महायोगी कथं व्यासः पराशरात् ।।
सन्देहोऽत्र महाञ्जातस्तं भवाञ्छेत्तुमर्हति ।। ३ ।।
सूत उवाच ।।
एकदा तीर्थयात्रायां व्रजन्योगी पराशरः ।।
यदृच्छया गतो रम्यं यमुनायास्तटं शुभम् ।। ४ ।।
निषादमाह धर्मात्मा कुर्वन्तं भोजनन्तदा ।।
नयस्व यमुनापारं जलयानेन मामरम् ।। ५ ।।
इत्युक्तो मुनिना तेन निषादस्स्वसुतां जगौ ।।
मत्स्यगन्धाममुं बाले पारं नावा नय द्रुतम् ।। ६ ।।
तापसोऽयं महाभागे दृश्यन्तीगर्भसंभवः ।।
तितीर्षुरस्ति मर्धाब्धिश्चतुराम्नायपारगः।।७।।
इति विज्ञापिता पित्रा मत्स्यगन्धा महामुनिम्।।
संवाहयति नौकायामासीनं सूर्य्यरोचिषम् ।। ८ ।।
कालयोगान्महायोगी तस्यां कामातुरोऽभवत् ।।
दृष्ट्वा योऽप्सरसां रूपं न कदापि विमोहितः ।। ९ ।।
ग्रहीतुकामः स मुनिर्दाशकन्यां मनोहराम् ।।
दक्षिणेन करेणैतामस्पृशद्दक्षिणे करे।।5.44.१०।।
तमुवाच विशालाक्षीं वचनं स्मितपूर्वकम् ।।
किमिदं क्रियये कर्म वाचंयम विगर्हितम् ।।११।।
वसिष्ठस्य कुले रम्ये त्वं जातोऽसि महामते ।।
निषादजा त्वहम्ब्रह्मन्कथं संगो घटेत नौ ।। १२ ।।
दुर्लभं मानुषं जन्म ब्राह्मणत्वं विशेषतः ।।
तत्रापि तापसत्वं च दुर्लभं मुनिसत्तम ।। १३ ।।
विद्यया वपुषा वाचा कुलशीलेन चान्वितः ।।
कामबाणवशं यातो महदाश्चर्यमत्र हि ।। १४ ।।
प्रवृत्तमप्यसत्कर्म कर्तुमेनं न कोऽपि ह ।।
भुवि वारयितुं शक्तः शापभीत्यास्य योगिनः ।। १५ ।।
इति संचिन्त्य हृदये निजगाद महामुनिम् ।।

तावद्धैर्यं कुरु स्वामिन्यावत्त्वां पारयामि न।।१६।।
सूत उवाच ।।
इति श्रुत्वा वचस्तस्या योगिराजः पराशरः ।।
तत्याज पाणिं तरसा सिन्धोः पारं गतः पुनः ।। १७ ।।
पुनर्जग्राह तां बालां मुनिं कामप्रपीडितः ।।
कंपमाना तु सा बाला तमुवाच दयानिधिम् ।। १८ ।।
दुर्गन्धाहं मुनिश्रेष्ठ कृष्णवर्णा निषादजा ।।
भवांस्तु परमोदारविचारो योगिसत्तमः ।। १९ ।।
नावयोर्घटते सङ्गो काचकांचनयोरिव ।।
तुल्यजात्याकृतिकयोः संगः सौख्यप्रदो भवेत् ।। 5.44.२० ।।
इत्युक्तेन तया तेन क्षणमात्रेण कामिनी ।।
कृता योजनगंधा तु रम्यरूपा मनोरमा ।। २१ ।।
पुनर्जग्राह तां बालां स मुनिः कामपीडितः ।।
ग्रहीतुकामं तं दृष्ट्वा पुनः प्रोवाच वासवी ।। २२ ।।
रात्रौ व्यवायः कर्तव्यो न दिवेति श्रुतिर्जगौ।।
दिवासंगे महान्दोषो निन्दा चापि दुरासदा ।। २३ ।।
तस्मात्तावत्प्रतीक्षस्व यावद्भवति यामिनी ।।
पश्यन्ति मानवाश्चात्र पिता मे च तटे स्थितः ।। २४ ।।
तयोक्तमिदमाकर्ण्य वचनं मुनिपुंगवः ।।
नीहारं कल्पयामास सद्यः पुण्यबलेन वै ।। २५ ।।
नीहारे च समुत्पन्ने तमसा रात्रिसंनिभे ।।
व्यवायचकिता बाला पुनः प्रोवाच तम्मुनिम् ।। २६ ।।
योगिन्नमोघवीर्य्यस्त्वं भुक्त्वा गन्तासि मां यदि ।।
सगर्भा स्यां तदा स्वामिन्का गतिर्मे भवेदिति ।। २७ ।।
कन्याव्रतं महाबुद्धे मम नष्टं भविष्यति ।।
हसिष्यति तदा लोकाः पितरं किं ब्रवीम्यहम् ।।२८।।
।। पराशर उवाच ।।
रम बाले मया सार्द्धं स्वच्छन्दं कामजै रसैः।।
स्वीयाभिलाषमाख्याहि पूरयाम्यधुना प्रिये ।। २९ ।।
मदाज्ञासत्यकरणान्नाम्ना सत्यवती भव ।।
वन्दनीया तथाशेषैर्योगिभिस्त्रिदशैरपि ।। 5.44.३० ।।
सत्यवत्युवाच ।।
जानते न पिता माता न वान्ये भुवि मानवाः ।।

कन्याधर्मो न मे हन्याद्यदि स्वीकुरु मान्तदा ।।३१।।
पुत्रश्च त्वत्समो नाथ भवेदद्भुतशक्तिमान् ।।
सौगन्ध्यं सर्वदांगे मे तारुण्यं च नवंनवम् ।। ३२ ।।
पराशर उवाच ।।
शृणु प्रिये तवाभीष्टं सर्वं पूर्णं भविष्यति ।।
विष्णवंशसंभवः पुत्रो भविता ते महायशाः ।। ३३ ।।
किंचिद्वै कारणं विद्धि यतोऽहं कामपीडितः।।
दृष्ट्वा चाप्सरसारूपं नामुह्यन्मे नमः क्वचित् ।।३४।।
मीनगन्धां समालक्ष्य त्वां मोहवशगोऽभवम् ।।
न बाले भालपट्टस्थो ब्रह्मलेखोऽन्यथा भवेत्।।३५।।
पुराणकर्ता पुत्रस्ते वेदशाखाविभागकृत्।।
भविष्यति वरारोहे ख्यातकीर्तिर्जगत्त्रये।।३६।।
इत्युक्त्वा तां सुरम्याङ्गीं भुक्त्वा योगविशारदः ।।
वव्राज शीघ्रं यमुनाजले स्नात्वा महामुने ।। ३७ ।।
सापि गर्भं दधाराशु द्वादशात्मसमप्रभम् ।।
असूत सूर्य्यजाद्वीपे कामदेवमिवात्मजम् ।। ३८ ।।
वामे कमण्डलुं बिभ्रद्दक्षिणे दण्डमुत्तमम् ।।
पिशंगीभिर्जटाभिश्च राजितो महसां चयः।।३९।।
जातमात्रस्तु तेजस्वी मातरं प्रत्यभाषत ।।
गच्छ मातर्यथाकामं गच्छाम्यहमतः परम् ।।5.44.४०।।
मातर्यदा भवेत्कार्यं तव किंचिद्धृदीप्सितम्।।
संस्मृतश्चागमिष्यामि त्वदिच्छापूर्तिहेतवे ।।४१।।
इत्युक्त्वा मातृचरणावभिवाद्य तपोनिधिः ।।
जगाम च तपः कर्त्तुं तीर्थं पापविशोधनम् ।। ४२ ।।
सापि पित्रन्तिकं याता पुत्रस्नेहाकुला सती ।।
स्मरन्ती चरितं सूनोर्वर्णयन्ती स्वभाग्यकम् ।। ४३ ।।
द्वीपे जातो यतो बालस्तेन द्वैपायनोऽभवत् ।।
वेदशाखाविभजनाद्वेदव्यासः प्रकीर्तितः ।। ४४ ।।
तीर्थराजं प्रथमतो धर्मकामार्थ मोक्षदम् ।।
नैमिषं च कुरुक्षेत्रं गङ्गाद्वारमवन्तिकाम् ।। ४५ ।।
अयोध्यां मथुरां चैव द्वारकाममरावतीम् ।।
सरस्वतीं सिंधुसङ्गं गंगा सागरसंगमम् ।।४६।।
काञ्चीं च त्र्यम्बकं चापि सप्तगोदावरीतटम्।।

कालञ्जरं प्रभासं च तथा बदरिकाश्रमम् ।। ४७ ।।
महालयन्तथोंकारक्षेत्रं वै पुरुषोत्तमम् ।।
गोकर्णं भृगुकच्छं च भृगुतुंगं च पुष्करम् ।। ४८ ।।
श्रीपर्वतादितीर्थानि धारातीर्थं तथैव च ।।
गत्वावगाह्य विधिना चचार परमन्तपः।।४९।।
एवन्तीर्थान्यनेकानि नानादेशस्थितानि ह।।
पर्य्यटन्कालिकासूनुः प्रापद्वाराणसीम्पुरीम्।5.44.५०।।
यत्र विश्वेश्वरः साक्षादन्नपूर्णा महेश्वरी ।।
भक्तानाममृतन्दातुं विराजेते कृपानिधी ।। ५१ ।।
प्राप्य वाराणसीतीर्थं दृष्ट्वाथ मणिकर्णिकाम् ।।
कोटिजन्मार्जितं पापं तत्याज स मुनीश्वरः ।। ५२ ।।
दृष्ट्वा लिंगानि सर्वाणि विश्वेशप्रमुखानि च ।।
स्नात्वा सर्वेषु कुण्डेषु वापीकूपसरस्सु च ।। ५३ ।।
नत्वा विनायकान्सर्वान्गौरीः सर्वाः प्रणम्य च ।।
सम्पूज्य कालराजं च भैरवं पापभक्षणम् ।।९४।।
दण्डनायकमुख्यांश्च गणान्स्तुत्वा प्रयत्नतः ।।
आदिकेशवमुख्यांश्च केशवान्परितोष्य च ।। ५५ ।।
लोलार्कमुख्यसूर्यांश्च प्रणम्य च पुनःपुनः ।।
कृत्वा पिण्डप्रदानानि सर्वतीर्थेष्वतन्द्रितः ।। ५६ ।।
स्थापयामास पुण्यात्मा लिंगं व्यासेश्वराभिधम् ।।
यद्दर्शनाद्भवेद्विप्र नरो विद्यासु वाक्पतिः ।।५७।।
लिंगान्यभ्यर्च्य विश्वेशप्रमुखानि सुभक्तितः ।।
असकृच्चिन्तयामास किं लिगं क्षिप्रसिद्धिदम् ।।५८।।
यमाराध्य महादेवं विद्याः सर्वा लभेमहि ।।
पुराणकर्तृताशक्तिर्ममास्तु यदनुग्रहात् ।।५९।।
श्रीदमोंकारनाथं वा कृत्तिवासेश्वरं किमु ।।
केदारेशन्तु कामेशं चन्द्रेशं वा त्रिलोचनम् ।।5.44.६०।।
कालेशं वृद्धकालेशं कालशेश्वरमेव वा।।
ज्येष्ठेशं जम्बुकेशं वा जैगीषव्येश्वरन्तु वा ।। ६१ ।।
दशाश्वमेधमीशानं द्रुमिचण्डेशमेव वा ।।
दृक्केशं गरुडेशं वा गोकर्णेशं गणेश्वरम् ।।६२।।
प्रसन्नवदनेशं वा धर्म्मेशं तारकेश्वरम् ।।
नन्दिकेशं निवासेशं पत्रीशं प्रीतिकेश्वरम् ।।६३।।

पर्वतेशं पशुपतिं हाटकेश्वरमेव वा ।।
बृहस्पतीश्वरं वाथ तिलभाण्डेशमेव वा ।।६४।।
भारभूतेश्वरं किं वा महालक्ष्मीश्वरं तु वा ।।
मरुतेशन्तु मोक्षेशं गंगेशं नर्मदेश्वरम् ।।६५।।
कृष्णेशं परमेशानं रत्नेश्वरमथापि वा ।।
यामुनेशं लांगलीशं श्रीमद्विश्वेश्वरं विभुम् ।।६६।।
अविमुक्तेश्वरं वाथ विशालाक्षीशमेव वा ।।
व्याघ्रेश्वरं वराहेशं विद्येश्वरमथापि वा ।। ६७ ।।
वरुणेशं विधीशं वा हरिकेशेश्वरन्तु वा ।।
भवानीशं कपर्द्दीशं कन्दुकेश मजेश्वरम् ।। ६८ ।।
विश्वकर्मेश्वरं वाथ वीरेश्वरमथापि वा ।।
नादेशं कपिलेशं च भुवनेश्वरमेव वा ।।६९।।
बाष्कुलीशं महादेवं सिद्धीश्वरमथापि वा ।।
विश्वेदेवेश्वरं वीरभद्रेशं भैरवेश्वरम् ।। 5.44.७० ।।
अमृतेशं सतीशं वा पार्वतीश्वरमेव वा ।।
सिद्धेश्वरं मतंगेशं भूतीश्वरमथापि वा ।।७१।।
आषाढीशं प्रकामेशं कोटिरुद्रेश्वरन्तथा ।।
मदालसेश्वरं चैव तिलपर्णेश्वरं किमु।। ७२ ।।
किं वा हिरण्यगर्भेशं किं वा श्रीमध्यमेश्वरम् ।।
इत्यादिकोटिलिंगानां मध्येऽहं किमुपाश्रये ।।७३।।
इति चिन्तातुरो व्यासः शिवभक्तिरतात्मवान्।।
क्षणं विचारयामास ध्यानसुस्थिरचेतसा ।। ७४ ।।
आज्ञातं विस्मृतं तावन्निष्पन्नो मे मनोरथः ।।
सिद्धैः संपूजितं लिंगं धर्म्मकामार्थमोक्षदम् ।। ७५ ।।
दर्शनात्स्पर्शनाद्यस्य चेतो निर्मलतामियात् ।।
उद्घाटितं सदैवास्ति द्वारं स्वर्गस्य यत्र हि ।। ७६ ।।
अविमुक्ते महाक्षेत्रे सिद्धक्षेत्रे हि तत्परम् ।।
यत्रास्ते परमं लिंगं मध्यमेश्वरसंज्ञकम् ।। ७७ ।।
न मध्यमेश्वरादन्यल्लिंगं काश्यां हि विद्यते ।।
यद्दर्शनार्थमायान्ति देवाः पर्वणिपर्वणि ।।७८।।
अतः सेव्यो महादेवो मध्यमेश्वरसंज्ञकः ।।
अस्याराधनतो विप्रा बहवः सिद्धिमागताः ।।७९।।
यः प्रधानतया काश्या मध्ये तिष्ठति शङ्करः ।।

स्वपुरीजन सौख्यार्थमतोऽसौ मध्यमेश्वरः।।5.44.८०।।
तुम्बुरुर्नाम गंधर्वो देवर्षिर्नारदस्तथा।।
अमुमाराध्य संपन्नो गानविद्याविशारदौ।।८१।।
अमुमेव समाराध्य विष्णुर्मोक्षप्रदोऽभवत्।।
ब्रह्मा विष्णुश्च रुद्रश्च स्रष्टृपालकहारकाः ।।८२।।
धनाधीशः कुबेरोऽपि वामदेवो हि शैवराट्।।
खट्वांगो नाम भूपालोऽनपत्योऽपत्यवानभूत्।।८३।।
अप्सराश्चन्द्रभामाख्या नृत्यन्ती निजभावतः ।।
सदेहा कोकिलालापा लिंगमध्ये लयं गता ।।८४।।
श्रीकरो गोपिकासूनुः सेविता मध्यमेश्वरम् ।।
गाणपत्यं समालेभे शिवस्य करुणात्मनः ।।८५।।
भार्गवो गीष्पतिश्चोभौ देवौ दैत्यसुरार्चितौ।।
विद्यापारंगमौ जातौ प्रसादान्मध्यमेशितुः ।। ८६ ।।
अहमप्यत्र संपूज्य मध्यमेश्वरमीश्वरम् ।।
पुराणकर्तृताशक्तिं प्राप्स्यामि तरसा ध्रुवम् ।। ८७ ।।
इति कृत्वा मतिं धीरो व्यासः सत्यवतीसुतः ।।
भागीरथ्यम्भसि स्नात्वा जग्राह नियमं व्रती ।।८८।।
क्वचित्पर्णाशनो भूत्त्वा फलशाकाशनः क्वचित् ।।
वातभुग्जलभुक्क्वापि क्वचिन्निरशनव्रती ।। ८९ ।।
इत्यादि नियमैर्योगी त्रिकालं मध्यमेश्वरम् ।।
पूजयामास धर्म्मात्मा नानावृक्षोद्भवैः फलैः ।।5.44.९०।।
इत्थं बहुतिथे काले व्यतीते कालिकासुतः ।।
स्नात्वा त्रिपथगातोये यावदायाति स प्रगे ।। ९१ ।।
मध्यमेश्वरमीशानं भक्ताभीष्टवरप्रदम् ।।
तावद्ददर्श पुण्यात्मा मध्येलिंगं महेश्वरम् ।। ९२ ।।
उमाभूषितवामांगं व्याघ्रचर्म्मोत्तरीयकम्।।
जटाजूटचलद्गंगातरंगैश्चारुविग्रहम्।।९३।।
लसच्छारदबालेन्दुचन्द्रिकाचन्दितालकम् ।।
भस्मोद्धूलितसर्वाङ्गं कर्पूरार्जुनविग्रहम् ।। ९४ ।।
कर्णान्तायतनेत्रं च विद्रुमारुणदच्छदम् ।।
पंचवर्षाकृति बालं बालकोचितभूषणम् ।।९५।।
दधानं कोटिकन्दर्प्पदर्पहानि तनुद्युतिम् ।।
नग्नं प्रहसितास्याब्जं गायन्तं साम लीलया ।। ९६ ।।

करुणापारपाथोधिं भक्तवत्सलनामकम् ।।
आशुतोषमुमाकान्तं प्रसादसुमुखं हरम् ।। ९७ ।।
समालोक्य स्तुतिं चक्रे प्रेमगद्गया गिरा ।।
योगीनामप्यगम्यन्तं दीनबन्धुं चिदात्मकम् ।। ९८ ।।
वेदव्यास उवाच ।।
देवदेव महाभाग शरणागतवत्सल।।
वाङ्मनः कर्मदुष्पाप योगिनामप्यगोचर ।।९९।।
महिमानं न ते वेदा विदामासुरुमापते ।।
त्वमेव जगतः कर्ता धर्ता हर्ता तथैव च ।।5.44.१००।।
त्वमाद्यः सर्वदेवानां सच्चिदानंद ईश्वरः ।।
नामगोत्रे न वा ते स्तः सर्वज्ञोऽसि सदाशिव।।१०१।।
त्वमेव परमं ब्रह्म मायापाशनिवर्तकः।।
गुणत्रयैर्न लिप्तस्त्वं पद्मपत्रमिवांभसा।।१०२।।
न ते जन्म न वा शीलं न देशो न कुलं च ते।।
इत्थं भूतोपीश्वरत्वं त्रिलोक्याः काममावहे।।१०३।।
न च ब्रह्मा न लक्ष्मीशो न च सेन्द्रा दिवौकसः।।
न योगीन्द्रा विदुस्तत्त्वं यस्य तं त्वामुपास्महे।।१०४।।
त्वत्तः सर्वं त्वं हि सर्वं गौरीशस्त्वं पुरान्तकः।।
त्वं बालस्त्वं युवा वृद्धस्तं त्वां हृदि युनज्म्यहम् ।। ।।१०५।।
नमस्तस्मै महेशाय भक्तध्येयाय शम्भवे ।।
पुराणपुरुषायाद्धा शंकराय परात्मने ।। १०६ ।।
इति स्तुत्वा क्षितौ यावद्दण्डवन्निपपात सः।।
तावत्स बालो हृष्टात्मा वेदव्यासमभाषत।।१०७।।
वरं वृणीष्व भो योगिन्यस्ते मनसि वर्तते ।।
नादेयं विद्यते किंचिद्भक्ताधीनो यतोऽस्म्यहम्।।१०८।।
तत उत्थाय हृष्टात्मा मुनिर्व्यासो महातपाः ।।
प्रत्यब्रवीत्किमज्ञातं सर्वज्ञस्य तव प्रभो ।। १०९ ।।
सर्वान्तरात्मा भगवाञ्छर्वः सर्वप्रदो भवान् ।।
याञ्चां प्रतिनियुङ्क्ते मां किमीशो दैन्यकारिणीम् ।। 5.44.११० ।।
इति श्रुत्वा वचस्तस्य व्यासस्यामलचेतसः ।।
शुचि स्मित्वा महादेवो बालरूपधरोऽब्रवीत् ।। १११ ।।
बाल उवाच ।।
त्वया ब्रह्मविदां श्रेष्ठ योऽभिलाषः कृतो हृदि ।।

अचिरेणैव कालेन स भविष्यत्यसंशयः ।। ११२ ।।
कण्ठे स्थित्वा तव ब्रह्मन्ननन्तर्याम्यहमीश्वरः ।।
सेतिहासपुराणानि सम्यङ्निर्यापयाम्यहम् ।। ११३ ।।
अभिलाषाष्टकं पुण्यं स्तोत्रमेतत्त्वयेरितम्।।
वर्षं त्रिकालं पठनात्कामदं शम्भुसद्मनि ।। ११४ ।।
एतत्स्तोत्रस्य पठनं विद्याबुद्धिविवर्द्धनम् ।।
सर्वसंपत्करं प्रोक्तं धर्मदं मोक्षदं नृणाम् ।। ११५ ।।
प्रातरुत्थाय सुस्नातो लिंगमभ्यर्च्य शांकरम् ।।
वर्षं पठन्निदं स्तोत्रं मूर्खोऽपि स्याद्बृहस्पतिः ।। ११६ ।।।
स्त्रिया वा पुरुषेणापि नियमाल्लिंगसन्निधौ ।।
वर्षं जप्तमिदं स्तोत्रं बुद्धिं विद्याञ्च वर्द्धयेत् ।।११७।।
इत्युक्त्वा स महादेवो बालो लिंगे न्यलीयत ।।
व्यासोऽपि मुंचन्नश्रूणि शिवप्रेमाकुलोऽभवत्।।११८।।
एवं लब्धवरो व्यासो महेशान्मध्यमेश्वरात।।
अष्टादश पुराणानि प्रणिनाय स्वलीलया ।। ११९ ।।
ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा ।।
भविष्यं नारदीयं च मार्कंडेयमतः परम् ।। 5.44.१२०।।
आग्नेयं ब्रह्मवैवर्त लिंगं वाराहमेव च ।।
वामनाख्यं ततः कौर्मं मात्स्यं गारुडमेव च ।।१२१।।
स्कान्दं तथैव ब्रह्माण्डाख्यं पुराणं च कीर्तितम् ।।
यशस्यं पुण्यदं नृणां श्रोतृणां शांकरं यश ।।१२२।।
सूत उवाच ।।
अष्टादशपुराणानाम्पूर्वं नामोदितन्त्वया ।।
कुरु निर्वचनं तेषामिदानीं वेदवित्तम।।१२३।।
व्यास उवाच ।।
अयमेव कृतः प्रश्नस्तण्डिना ब्रह्मयोनिना।।
नन्दिकेश्वरमुद्दिश्य स यदाह ब्रवीमि तत्।।१२४।।
नन्दिकेश्वर उवाच।।
यत्र वक्ता स्वयन्तण्डे ब्रह्मा साक्षाच्चतुर्मुखः।।
तस्माद्ब्राह्मं समाख्यातं पुराणं प्रथमं मुने।१२५।
पद्मकल्पस्य माहात्म्यन्तत्र यस्यामुदाहृतम् ।।
तस्मात्पाद्मं समाख्यातं पुराणं च द्वितीयकम् ।।१२६।।
पराशरकृतं यत्तु पुराणं विष्णुबोधकम् ।।

तदेव व्यासकथितं पुत्रपित्रोरभेदतः ।। १२७ ।।
यत्र पूर्वोत्तरे खण्डे शिवस्य चरितं बहु ।।
शैवमेतत्पुराणं हि पुराणज्ञा वदन्ति च ।। १२८ ।।
भगवत्याश्च दुर्गायाश्चरितं यत्र विद्यते ।।
तत्तु भागवतं प्रोक्तं ननु देवीपुराणकम् ।।१२९।।
नारदोक्तं पुराणन्तु नारदीयं प्रचक्षते ।।
यत्र वक्ताऽभवत्तण्डे मार्कण्डेयो महामुनिः ।। 5.44.१३० ।।
मार्कण्डेयपुराणं हि तदाख्यातं च सप्तमम् ।।
अग्नियोगात्तदाग्नेयं भविष्योक्तेर्भविष्यकम् ।। १३१ ।।
विवर्तनाद्ब्रह्मणस्तु ब्रह्मवैवर्तमुच्यते ।।
लिंगस्य चरितोक्तत्वात्पुराणं लिंगमुच्यते ।। १३२ ।।
वराहस्य च वाराहं पुराणं द्वादशं मुने ।।
यत्र स्कन्दः स्वयं श्रोता वक्ता साक्षान्महेश्वरः ।। १३३ ।।
तत्तु स्कान्दं समाख्यातं वामनस्य तु वामनम् ।।
कौर्मं कूर्मस्य चरितं मात्स्यं मत्स्येन कीर्तितम् ।। १३४ ।।
गरुडस्तु स्वयं वक्ता यत्तद्गारुडसंज्ञकम् ।।
ब्रह्माण्डचरितोक्तत्वाद्ब्रह्माण्डं परिकीर्तितम् ।। १३५ ।।
सूत उवाच ।।
अयमेव मयाऽकारि प्रश्नो व्यासाय धीमते ।।
ततः सर्वपुराणानां मया निर्वचनं श्रुतम् ।। १३६ ।।
एवं व्याससमुत्पन्नः सत्यवत्यां पराशरात् ।।
पुराणसंहिताश्चक्रे महाभारतमुत्तमम् ।। १३७ ।।
पराशरेण संयोगः पुनः शन्तनुना यथा ।।
सत्यवत्या इव ब्रह्मन्नः संशयितुमर्हसि ।। १३८ ।।
सकारणेयमुत्पत्तिः कथिताश्चर्य्यकारिणी ।।
महतां चरिते चैव गुणा ग्राह्या विचक्षणैः ।। १३९ ।।
इदं रहस्यं परमं यः शृणोति पठत्यपि ।।
स सर्वपापनिर्मुक्त ऋषिलोके महीयते।।5.44.१४०।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां व्यासोत्पत्तिवर्णनं नाम चतुश्चत्वारिंशोऽध्यायः ।। ४४।।

मुनय ऊचुः ।।
श्रुत्वा शंभोः कथा रम्या नानाख्यानसमन्विता।।
नानावतार संयुक्ता भुक्तिमुक्तिप्रदा नृणाम् ।।१।।
इदानीं श्रोतुमिच्छामस्त्वत्तो ब्रह्मविदां वर।।
चरित्रं जगदंबाया भगवत्या मनोहरम्।।२।।
परब्रह्म महेशस्य शक्तिराद्या सनातनी ।।
उमा या समभिख्याता त्रैलोक्यजननी परा ।।३।।
सती हेमवती तस्या अवतारद्वयं श्रुतम्।।
अपरानवतारांस्त्वं ब्रूहि सूत् महामते ।।४।।
को विरज्येत मतिमान् गुणश्रवणकर्मणि ।।
श्रीमातुर्ज्ञानिनो यानि न त्यजन्ति कदाचन।५।।।
सूत उवाच ।।
धन्या यूयं महात्मानः कृतकृत्याः स्थ सर्वदा ।।
यत्पृच्छथ पराम्बाया उमायाश्चरितं महत् ।।६।।
शृण्वतां पृच्छतां चैव तथा वाचयतां च तत् ।।
पादाम्बुजरजांस्येव तीर्थानि मुनयो विदुः ।।७।।
ते धन्या कृतकृत्याः स्युर्धन्या तेषां प्रसूः कुलम् ।।
येषां चित्तं भवेल्लीनं श्रीदेव्यां परसंविदि ।। ८ ।।
ये न स्तुवन्ति देवेशीं सर्वकारणकारणाम् ।।
मायागुणैर्मोहितास्स्युर्हतभाग्या न संशयः ।। ९ ।।
न भजन्ति महादेवीं करुणारससागराम् ।।
अन्धकूपे पतन्त्येते घोरे संसाररूपिणि ।।5.45.१०।।
गंगां विहाय तृप्त्यर्थं मरुवारि यथा व्रजेत् ।।
विहाय देवीं तद्भिन्नं तथा देवान्तरं व्रजेत्।।११।।
यस्याः स्मरणमात्रेण पुरुषार्थचतुष्टयम्।।
अनायासेन लभते कस्त्यजेत्तां नरोत्तमः ।। १२ ।।
एतत्पृष्टः पुरा मेधास्सुरथेन महात्मना ।।
यदुक्तं मेधसा पूर्वं तच्छृणुष्व वदामि ते ।। १३ ।।
स्वारोचिषेन्तरे पूर्वं विरथो नाम पार्थिवः ।।
सुरथस्तस्य पुत्रोऽभून्महाबलपराक्रमः ।। १४ ।।
दानशौण्डः सत्यवादी स्वधर्म्मे कुशलः कृती ।।
देवीभक्तो दयासिन्धुः प्रजानां परिपालकः ।। १५ ।।
पृथिवीं शासतस्तस्य पाकशासनतेजसः ।।

बभूबुर्नव ये भूपाः पृथ्वीग्रहणतत्पराः।।१६।।
कोलानाम्नीं राजधानीं रुरुधुस्तस्य भूपतेः ।।
तैस्समन्तुमुलं युद्धं समपद्यत दारुणम्।।१७।।
युद्धे स निर्जितो भूपः प्रबलैस्तैर्द्विषद्गणैः ।।
उज्जासितच्च कोलाया ह्रत्वा राज्यमशेषतः।।१८।।
स राजा स्वपुरीमेत्याकरोद्राज्यं स्वमंत्रिभिः ।।
तत्रापि च महःपक्षैर्विपक्षैस्स पराजितः।।१९।।
दैवाच्छत्रुत्वमापन्नै रमात्यप्रमुखैर्गणैः ।।
कोशस्थितं च यद्वित्तं तत्सर्वं चात्मसात्कृतम् ।।5.45.२०।।
ततस्स निर्गतो राजा नगरान्मृगया छलात् ।।
असहायोऽश्वमारुह्य जगाम गहनं वनम् ।। २१ ।।
इतस्ततस्तत्र गच्छन्राजा मुनिवराश्रमम् ।।
ददर्श कुसुमारामभ्राजितं सर्वतोदिशम् ।।२२।।
वेदध्वनिसमाकीर्णं शान्तजन्तुसमाश्रितम् ।।
शिष्यैः प्रशिष्यैस्तच्छिष्यैस्समन्तात्परिवेष्टितम् ।।२३।।
व्याघ्रादयो महावीर्या अल्पवीर्यान्महामते ।।
तदाश्रमे न बाधन्ते द्विजवर्य्यप्रभावतः ।।२४।।
उवास तत्र नृपतिर्महाकारुणिको बुधः ।।
सत्कृतो मुनिनाथेन सुवचो भोजनासनैः ।। २५ ।।
एकदा स महाराजश्चिंतामाप दुरत्ययाम् ।।
अहो मे हीनभाग्यस्य दुर्बुद्धेर्हीनतेजसः ।। २६ ।।
ह्रतं राज्यमशेषेण शत्रुवर्गैर्मदोद्धतैः ।।
मत्पूर्वै रक्षितं राज्यं शत्रुभिर्भुज्यतेऽधुना ।। २७ ।।
मादृशश्चैत्रवंशेस्मिन्न कोप्यासीन्महीपतिः ।।
किं करोमि क्व गच्छामि कथं राज्यं लभेमहि ।। २८ ।।
अमात्या मंत्रिणश्चैव मामका ये सनातनाः ।।
न जाने कं च नृपतिं समासाद्याधुनासते ।। २९ ।।
विनाश्य राज्यमधुना न जाने कां गतिं गताः ।।
रणभूमिमहोत्साहा अरिवर्गनिकर्तनाः ।। 5.45.३० ।।
मामका ये महाशूरा नृपमन्यं भजन्ति ते ।।
पर्वताभा गजा अश्वा वातवद्वेगगामिनः ।।३१।।
पूर्वपूर्वार्जितः कोशः पाल्यते तैर्नवाधुना ।।
एवं मोहवशं यातो राजा परमधार्मिकः ।। ३२ ।।

एतस्मिन्नंतरे तत्र वैश्यः कश्चित्समागतः।।
राजा पप्रच्छ कस्त्वं भोः किमर्थमिह चागतः।।३३।।
दुर्मना लक्ष्यसे कस्मादेतन्मे ब्रूहि साम्प्रतम् ।।
इत्याकर्ण्य वचो रम्यं नरपालेन भाषितम् ।। ३४ ।।
दृग्भ्यां विमुंचन्नश्रूणि समाधिर्वैश्यपुंगवः ।।
प्रत्युवाच महीपालं प्रणयावनतो गिरम् ।। ३५ ।।
।। वैश्य उवाच ।।
समाधिर्नाम वैश्योहं धनिवंशसमुद्भवः ।।
पुत्रदारादिभिस्त्यक्तो धनलोभान्महीपते ।। ३६ ।।
स वनमभ्यागतो राजन्दुःखितः स्वेन कर्मणा ।।
सोहं पुत्रप्रपौत्राणां कलत्राणां तथैव च ।। ३७ ।।
भ्रातॄणां भ्रातृपुत्राणां परेषां सुहृदां तथा ।।
न वेद्मि कुशलं सम्यक्करुणासागर प्रभो ।।३८।।
राजोवाच ।।
निष्कासितो यैः पुत्राद्यैर्दुर्वृत्तैर्धनगर्धिभिः ।।
तेषु किं भवता प्रीतिः क्रियते मूर्खजन्तुवत्।।३९।।
वैश्य उवाच ।।
सम्यगुक्तं त्वया राजन्वचः सारार्थबृंहितम् ।।
तथापि स्नेहपाशेन मोह्यतेऽतीव मे मनः।।5.45.४०।।
एवं मोहाकुलौ वैश्यपार्थिवौ मुनिसत्तम ।।
जग्मतुर्मुनिवर्यस्य मेधसः सन्निधिन्तदा ।।४१।।
स वैश्यराजसहितो नरराजः प्रतापवान् ।।
प्रणनाम महावीरः शिरसा योगिनां वरम् ।।४२।।
बद्ध्वाञ्जलिमिमां वाचमुवाच नृपतिर्मुनिम् ।।
भगवन्नावयोर्मोहं छेत्तुमर्हसि साम्प्रतम् ।। ४३ ।।
अहं राजश्रिया त्यक्तो गहनं वनमाश्रितः ।।
तथापि हृतराज्यस्य तोषो नैवाभिजायते ।। ४४ ।।।
अयं च वैश्यस्स्वजनैर्दाराद्यैर्निष्कृतो गृहात् ।।
तथाप्येतस्य ममता न निवृत्तिं समश्नुते ।। ४५ ।।
किमत्र कारणं ब्रूहि ज्ञानिनोरपि नो मनः ।।
मोहेन व्याकुलं जातं महत्येषां हि मूर्खता ।। ४६ ।।
ऋषि उवाच ।।
महामाया जगद्धात्री शक्तिरूपा सनातनी ।।

सा मोहयति सर्वेषां समाकृष्य मनांसि वै।।४७।।
ब्रह्मादयस्सुरास्सर्वे यन्मायामोहिताः प्रभो ।।
न जानन्ति परन्तत्त्वं मनुष्याणां च का कथा ।। ४८ ।।
सा सृजत्यखिलं विश्वं सैव पालयतीति च ।।
सैव संहरते काले त्रिगुणा परमेश्वरी ।।४९।।
यस्योपरि प्रसन्ना सा वरदा कामरूपिणी।।
स एव मोहमत्येति नान्यथा नृपसत्तम ।।5.45.५०।।
राजोवाच ।।
का सा देवी महामाया या च मोहयतेऽखिलान्।।
कथं जाता च सा देवी कृपया वद मे मुने ।। ५१ ।।
ऋषिरुवाच ।।
जगत्येकार्णवे जाते शेषमास्तीर्य योगराट् ।।
योगनिद्रामुपाश्रित्य यदा सुष्वाप केशवः ।। ५२ ।।
तदा द्वावसुरौ जातौ विष्णौ कर्णमलेन वै ।।
मधुकैटभनामानौ विख्यातौ पृथिवीतले ।। ५३ ।।
प्रलयार्कप्रभौ घोरौ महाकायौ महाहनू ।।
दंष्ट्राकरालवदनौ भक्षयन्तौ जगन्ति वा।।५४।।
तौ दृष्ट्वा भगवन्नाभिपङ्कजे कमलासनम् ।।
हननायोद्यतावास्तां कस्त्वं भोरिति वादिनौ ।।५५।।
समालोक्यं तु तौ दैत्यौ सुरज्येष्ठो जनार्दनम् ।।
शयानं च पयोम्भोधौ तुष्टाव परमेश्वरीम् ।।५६।।
ब्रह्मोवाच।।
रक्षरक्ष महामाये शरणागतवत्सले।।
एताभ्यां घोररूपाभ्यां दैत्याभ्यां जगदम्बिके।।५७।।
प्रणमामि महामायां योगनिद्रामुमां सतीम् ।।
कालरात्रिं महारात्रिं मोहरात्रिं परात्पराम् ५८।।
त्रिदेवजननीं नित्यां भक्ताभीष्टफलप्रदाम् ।।
पालिनीं सर्वदेवानां करुणावरुणालयम् ।। ५९ ।।
त्वत्प्रभावादहं ब्रह्मा माधवो गिरिजापतिः ।।
सृजत्यवति संसारं काले संहरतीति च ।।5.45.६०।।
त्वं स्वाहा त्वं स्वधा त्वं ह्रीस्त्वं बुद्धिर्विमला मता ।।
तुष्टिः पुष्टिस्त्वमेवाम्ब शान्तिः क्षान्तिः क्षुधा दया ।।६१।।
विष्णु माया त्वमेवाम्ब त्वमेव चेतना मता।।

त्वं शक्तिः परमा प्रोक्ता लज्जा तृष्णा त्वमेव च ।।६२।।
भ्रान्तिस्त्वं स्मृतिरूपा त्वं मातृरूपेण संस्थिता ।।
त्वं लक्ष्मीर्भवने पुंसां पुण्याक्षरप्रवर्तिनाम् ।।६३।।
त्वं जातिस्त्वं मता वृत्तिर्व्याप्तिरूपा त्वमेव हि।।
त्वमेव चित्तिरूपेण व्याप्य कृत्स्नं प्रतिष्ठिता ।। ६४ ।।
सा त्वमेतौ दुराधर्षावसुरौ मोहयाम्बिके ।
प्रबोधय जगद्योने नारायणमजं विभुम् ।। ६५ ।।
ऋषिरुवाच ।। ।।
ब्रह्मणा प्रार्थिता सेयं मधुकैटभनाशने ।।
महाविद्याजगद्धात्री सर्वविद्याधिदेवता ।।६६।।
द्वादश्यां फाल्गुनस्यैव शुक्लायां समभून्नृप ।।
महाकालीति विख्याता शक्तिस्त्रैलोक्यमोहिनी ।।६७।।
ततोऽभवद्वियद्वाणी मा भैषीः कमलासन।।
कण्टकं नाशयाम्यद्य हत्वाजौ मधुकैटभौ ।।६८।।
इत्युक्त्वा सा महामाया नेत्रवक्त्रादितो हरेः।।
निर्गम्य दर्शने तस्थौ ब्रह्मणोऽव्यक्तजन्मनः ।। ६९ ।।
उत्तस्थौ च हृषीकेशो देवदेवो जनार्दनः ।।
स ददर्श पुरो दैत्यो मधुकैटभसंज्ञकौ ।।5.45.७०।।
ताभ्यां प्रववृत्ते युद्धं विष्णोरतुलतेजसः ।।
पञ्चवर्षसहस्राणि बाहुयुद्धमभूत्तदा ।।७१।।
महामायाप्रभावेण मोहितो दानवोत्तमौ ।।
जजल्पतू रमाकान्तं गृहाण वरमीप्सितम् । ७२ ।।
नारायण उवाच ।।
मयि प्रसन्नौ यदि वां दीयतामेष मे वरः ।।
मम वध्यावुभौ नान्यं युवाभ्यां प्रार्थये वरम् ।। ७३ ।।
ऋथिरुवाच ।।
एकार्णवां महीं दृष्ट्वा प्रोचतुः केशवं वचः ।।
आवां जहि न यत्रासौ धरणी पयसाऽ ऽप्लुता ।। ७४ ।।
तथास्तु प्रोच्य भगवांश्चक्रमुत्थाप्य सूज्ज्वलम् ।।
चिच्छेद शिरसी कृत्वा स्वकीयजघने तयोः।।७५।।
एवन्ते कथितो राजन्कालिकायास्समुद्भवः ।।
महालक्ष्म्यास्तथोत्पत्तिं निशामय महामते ।। ७६ ।।
निर्विकारादि साकारा निराकारापि देव्युमा ।।

देवानां तापनाशार्थं प्रादुरासीद्युगेयुगे ।। ७५ ।।
यदिच्छावैभवं सर्वं तस्या देहग्रहः स्मृतः ।।
लीलया सापि भक्तानां गुणवर्णनहेतवे ।। ७८ ।। ।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां मधुकैटभवधे महाकालिकावतारवर्णनं नाम पंचचत्वारिंशोऽध्यायः ।। ४५ ।।

ऋषिरुवाच ।।
आसीद्रंभासुरो नाम दैत्यवंशशिरोमणिः ।।
तस्माज्जातो महातेजा महिषो नाम दानवः ।। १ ।।
स संग्रामे सुरान्सर्वान्निर्जित्य दनुजाधिपः ।।
चकार राज्यं स्वर्लोके महेन्द्रासनसंस्थितः ।।२।।
पराजितास्ततो देवा ब्रह्माणं शरणं ययुः ।।
ब्रह्मापि तान्समादाय ययौ यत्र वृषाकपी ।।३।।
तत्र गत्वा सुरास्सर्वे नत्वा शंकरकेशवौ ।।
स्ववृत्तं कथायामासुर्यथावदनुपूर्वशः ।। ४ ।।
भगवन्तौ वयं सर्वे महिषेण दुरात्मना ।।
उज्जासिताश्च स्वर्लोकान्निर्जित्य समरांगणे।। ५ ।।
भ्रमामो मर्त्यलोकेऽस्मिन्न लभेमहि शं क्वचित् ।।
कां कां न दुर्दशां नीता देवा इन्द्रपुरोगमाः ।। ६ ।।
सूर्याचन्द्रमसौ पाशी कुबेरो यम एव च ।।
इन्द्राग्निवातगन्धर्वा विद्याधरसुचारणाः ।। ७ ।।
एतेषामपरेषां च विधेयं कर्म सोसुरः ।।
स्वयं करोति पापात्मा दैत्यपक्ष भयंकर ।। ८ ।।
तस्माच्छरणमापन्नान्देवान्नस्त्रातुमर्हथः ।।
वधोपायं च तस्याशु चिन्तयेथां युवां प्रभू ।। ९ ।।
इति देववचः श्रुत्वा दामोदरसतीश्वरौ ।।
चक्रतुः परमं कोपं रोषाघूर्णितलोचनौ ।। 5.46.१० ।।
ततोतिकोपपूर्णस्य विष्णोश्शंभोश्च वक्त्रतः ।।
तथान्येषां च देवानां शरीरान्निर्गतं महः ।। ११ ।।
अतीव महसः पुंजं ज्वलन्तं दशदिक्षु च ।।
अपश्यंस्त्रिदशास्सर्वे दुर्गा ध्यानपरायणाः ।। १२ ।।
सर्वदेवशरीरोत्थं तेजस्तदतिभीषणम् ।।
संघीभूयाभवन्नारी साक्षान्महिषमर्दिनी ।।१३।।
शंभुतेजस उत्पन्नं मुखमस्याः सुभास्वरम् ।।
याम्येन बाला अभवन्वैष्णवेन च बाहवः ।।१४।।
चन्द्रमस्तेजसा तस्याः स्तनयुग्मं व्यजायत।।
मध्यमे न्द्रेण जंघोरू वारुणेन बभूवतुः ।। १५ ।।
भूतेजसा नितंबोभूद्ब्राह्मेण चरणद्वयम् ।।
आर्केण चरणांगुल्यः करांगुल्यश्च वासवात्।।१६।।

कुबेरतेजसा नासा रदनाश्च प्रजापतेः ।।
पावकीयेन नयनत्रयं सान्ध्येन भ्रूद्वयम् ।।१७।।
आनिलेन श्रवोद्वन्द्वं तथान्येषां स्वरोकसाम् ।।
तेजसां संभवः पद्मालया सा परमेश्वरी ।। १८।।
ततो निखिलदेवानां तेजोराशिसमुद्भवाम् ।।
तामालोक्य सुरास्सर्वे परं हर्षं प्रपेदिरे ।।१९।।
निरायुधां च तां दृष्ट्वा ब्रह्माद्यास्त्रिदिवेश्वराः ।।
सायुधान्तां शिवां कर्तुं मनः सन्दधिरे सुराः ।। 5.46.२० ।।
ततः शूलं महेशानो महेशान्यै समर्पयत ।।
चक्रं च कृष्णो भगवाञ्च्छंखं पाशं च पाशभृत ।। २१ ।।
शक्तिं हुताशनोऽयच्छन्मारुतश्चापमेव च ।।।।।
बाणपूर्णेषुधी चैव वज्रघण्टे शचीपतिः ।। २२ ।।
यमो ददौ कालदण्डमक्षमालां प्रजापतिः ।।
ब्रह्मा कमण्डलुं प्रादाद्रोमरश्मीन्दिवाकरः ।।२३।।
कालः खड्गन्ददौ तस्यै फलकं च समुज्वलम् ।।
क्षीराब्धी रुचिरं हारमजरे च तथाम्बरे ।। २४ ।।
चूडामणिं कुण्डले च कटकानि तथैव च ।।
अर्द्धचन्द्रं च केयूरान्नूपुरौ च मनोहरो।।२५।।
ग्रैवेयकमंगुलीषु समस्तास्वंगुलीयकम्।।
विश्वकर्मा च परशुं ददौ तस्यै मनोहरम् ।। २६ ।।
अस्त्राण्यनेकानि तथाभेद्यं चैव तनुच्छदम् ।।
सुरम्यसरसां मालां पङ्कजं चाम्बुधिर्ददौ ।। २७ ।।
ददौ सिंहं च हिमवान्रत्नानि विविधानि च ।।
सुरया पूरितं पात्रं कुबेरोऽस्यै समर्पयत् ।। २८ ।।
शेषश्च भोगिनां नेता विचित्रर चनाञ्चितम् ।।
ददौ तस्यै नागहारं नानास्त्रमणिगुंफितम् ।। २९ ।।
एतैश्चान्यैस्सुरैर्देवी भूषणैरायुधैस्तथा ।।
सत्कृतोच्चैर्ननादासौ साट्टहासं पुनःपुनः ।।5.46.३०।।
तस्या भीषणनादेन पूरिता च नभःस्थली ।।
प्रतिशब्दो महानासीच्चुक्षुभे भुवनत्रयम् ।।३१।।
चेलुः समुद्राश्चत्वारो वसुधा च चचाल ह ।।
जयशब्दस्ततो देवैरकारि महिषार्दितैः ।।३२।।
ततोऽम्बिकां परां शक्तिं महालक्ष्मीस्वरूपिणीम् ।।

तुष्टुवुस्ते सुरास्सर्वे भक्तिगद्गदया गिरा ।। ३३ ।।
लोकं संक्षुब्धमालोक्य देवतापरिपन्थिनः ।।
सन्नद्धसैनिकास्ते च समुत्तस्थुरुदायुधाः ।। ३४ ।।
महिषोऽपि च तं शब्दमभ्यधावद्रुषान्वितः ।।
स ददर्श ततो देवीं व्याप्तलोकत्रयां रुचा ।। ३५ ।।।
एतस्मिन्ननन्तरे तत्र महिषासुरपालिताः ।।
समाजग्मुर्महावीराः कोटिशो धृतहेतयः।।३६।।
चिक्षुरश्चामरोदग्रौ करालोद्धतबाष्कलाः ।।
ताम्रोग्रास्योग्रवीर्याश्च बिडालोऽन्धक एव च ।। ३७ ।।
दुर्धरो दुर्मुखश्चैव त्रिनेत्रश्च महाहनुः ।।
एते चान्ये च बहवः शूरा युद्धविशा रदाः ।। ३८ ।।
युयुधुः समरे देव्या सह शस्त्रास्त्रपारगाः ।।
इत्थं कालो व्यतीयाय युध्यतोर्भीषणस्तयोः ।।३९।।
अरिवर्गकरक्षिप्ता नानाशस्त्रास्त्रराशयः ।।
महामायाप्रभावेण विफला अभवन् क्षणात् ।। 5.46.४० ।।
ततो जघान सा देवी चिक्षुरप्रमुखानरीन् ।।
सगणान्गदया बाणैः शूलशक्तिपरश्वधैः ।।४१।।
एवं स्वीयेषु सैन्येषु हतेषु महिषासुरः ।।
देवीनिःश्वाससंभूतान्भावयामास तान्गणान् ।। ४२ ।।
अताडयत्सरैः काश्चित्काश्चिच्छृङ्गद्वयेन च ।।
लांगूलेन च तुण्डेन भिनत्ति स्म मुहुर्मुहुः ।। ४३ ।।
इत्थं देवीगणा न्हत्वाभ्यधावत्सोऽसुराधिपः ।।
सिंहं मारयितुन्देव्यास्ततोऽसौ कुपिताऽभवत् ।।४४।।
कोपात्सोपि महावीर्यः खुरकुट्टितभूतलः ।।
शृङ्गाभ्यां शैलमुत्पाट्य चिक्षेप प्रणनाद च ।। ४५ ।।
वेगेन विष्वग् भ्रमता प्रक्षिप्ता गुरवोऽद्रयः ।।
आकाशतो महीमध्ये निपेतुर्नृपसत्तम ।। ४६ ।।
शृंगभिन्नाः पयोवाहाः खण्डं खण्डमयासिषुः ।।
लांगूलेनाहतश्चाब्धिर्विष्वगुद्वेलमस्पदत् ।। ४७ ।।
एवं क्रुद्धं समालोक्य महिषासुरमम्बिका ।।
विदधे तद्वधोपायं देवानामभयंकरी ।। ४८ ।।
ततः पाशं समुत्थाय क्षिप्त्वा तस्योपरी श्वरी ।।
बबन्ध महिषं सोऽपि रूपन्तत्याज माहिषम् ।। ४९ ।।

ततः सिंहो बभूवाशु मायावी तच्छिरोम्बिका ।।
यावद्धिनत्ति तावत्स खड्गपाणिर्बभूव ह ।।5.46.५०।।
सचर्म्मासिकरं तं च देवी बाणैरताडयत् ।।
ततो गजवपुर्भूत्वा सिंहं चिच्छेद शुण्डया ।। ५१ ।।
ततोऽस्य च करं देवी चकर्त स्वमहासिना ।।
अधारि च पुना रूपं स्वकीयं तेन रक्षसा ।। ५२ ।।
तदैव क्षोभयामास त्रैलोक्यं सचराचरम् ।।
ततः क्रुद्धा महामाया चण्डिका मानविक्रमा।।५३।।
पपौ पुनःपुनः पानं जहासोद्भ्रान्तलोचना ।।
जगर्ज चासुरः सोऽपि बलवीर्यमदो द्धतः ।।५४।।
तस्या उपरि चिक्षेप शैलानुत्पाट्य सोऽसुरः ।।
सा च बाणावलीघातैश्चूर्णयामास सत्वरम् ।। ५५ ।।
वारुणीमद्रसं जातमुखरागाऽऽकुलेन्द्रिया ।।
प्रोवाच परमेशानी मेघगंभीरया गिरा ।। ५६ ।।
।। देव्युवाच ।।
रे मूढ रे हतप्रज्ञ व्यर्थं किं कुरुषे हठम् ।।
न मदग्रेऽसुराः केपि स्थास्नवो जगतीत्रये ।। ५७ ।।
ऋषि रुवाच ।।
एकमाभाष्य कूर्दित्वा देवी सर्वकलामयी ।।
पदाक्रम्यासुरं कण्ठे शूलेनोग्रेण साऽभिनत् ।। ५८ ।।
ततस्तच्चरणाक्रान्तस्स स्वकीयमुखात्ततः ।।
अर्द्धनिष्क्रान्त एवासीद्देव्या वीर्येण संवृतः ।। ५९ ।।
अर्द्धनिष्क्रान्त एवासौ युध्यमानो महाधमः ।।
महासिना शिरो भित्त्वा न्यपाति धरणीतले ।। 5.46.६० ।।
हाहाशब्दं समुच्चार्य्यावाङ्मुखास्तद्गणास्ततः ।।
पलायन्त रणाद्भीतास्त्राहित्राहीति वादिनः ।। ६१ ।।
तुष्टुवुश्च तदा देवीमिन्द्राद्याः सकलाः सुराः ।।
गन्धर्वा गीतमुच्चेरुर्ननृतुर्नर्तकीजनाः ।। ६२ ।।
एवन्ते कथितो राजन्महालक्ष्म्याः समुद्भवः ।।
सरस्वत्यास्तथोत्पत्तिं शृणु सुस्थेन चेतसा ।। ६३ ।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां महिषासुरवधोपाख्याने महालक्ष्म्यवतारवर्णनं नाम षट्चत्वारिंशोऽध्यायः ।। ४६ ।।

।। ऋषिरुवाच ।।
आसीच्छुम्भासुरो दैत्यो निशुंभश्च प्रतापवान् ।।
त्रैलोक्यमोजसा क्रान्तं भ्रातृभ्यां सचराचरम् ।। १ ।।
ताभ्याम्प्रपीडिता देवा हिमवन्तं समाययुः ।।
जननीं सर्वभूतानां कामदात्रीं ववन्दिरे ।। २ ।।
देवा ऊचुः ।।
जय दुर्गे महेशानि जयात्मीयजनप्रिये ।।
त्रैलोक्यत्राणकारिण्यै शिवायै ते नमोनमः ।।३।।
नमो मुक्तिप्रदायिन्यै पराम्बायै नमोनमः ।।
नमः समस्तसंसारोत्पत्तिस्थित्यन्तकारिके ।। ४ ।।
कालिकारूपसंपन्नो नमस्काराकृते नमः ।।
छिन्नमस्तास्वरूपायै श्रीविद्यायै नमोस्तु ते ।। ५ ।।
भुवनेशि नमस्तुभ्यं नमस्ते भैरवाकृते ।।
नमोस्तु बगलामुख्यै धूमावत्यै नमोनमः ।।६।।
नमस्त्रिपुरसुन्दर्य्यै मातङ्गयै ते नमोनमः ।।
अजितायै नमस्तुभ्यं विजयायै नमोनमः ।। ७ ।।
जयायै मंगलायै ते विलासिन्यै नमोनमः ।।
दोग्ध्रीरूपे नमस्तुभ्यं नमो घोराकृतेऽस्तु ते ।। ८ ।।
मनोऽपराजिताकारे नित्याकारे नमोनमः ।।
शरणागतपालिन्यै रुद्राण्यै ते नमोनमः ।। ९ ।।
नमो वेदान्तवेद्यायै नमस्ते परमात्मने ।।
अनन्तकोटिब्रह्माण्डनायिकायै नमोनमः ।। 5.47.१० ।।
इति देवैः स्तुता गौरी प्रसन्ना वरदा शिवा ।।
प्रोवाच त्रिदशान्सर्वान्युष्माभिः स्तूयतेऽत्र का ।। ११ ।।
ततो गौरीतनोरेका प्रादुरासीत्कुमारिका।।
सोवाच मिषतां तेषां शिवशक्तिं परादरात्।।१२।।
स्तोत्रं मे क्रियते मातः समस्तैः स्वर्गवासिभिः।।
निशुंभशुंभदैत्याभ्यां प्रबलाभ्यां प्रपीडितैः।।१३।।
शरीरकोशाद्यत्तस्या निर्गता तेन कौशिकी।।
नाम्ना सा गीयते साक्षाच्छुंभासुरनिबर्हिणी।।१४।।
चैवोग्रतारिका प्रोक्ता महोग्रतारिकापि च।।
प्रादुर्भूता यतः सा वै मातंगीत्युच्यते भुवि।।१५।।
बभाषे निखिलान्देवान्यूयं तिष्ठत निर्भयाः।।

कार्यं वः साधयिष्यामि स्वतन्त्राहं विनाश्रयम् ।।१६।।
इत्युक्त्वा सा तदा देवी तरसान्तर्हिताऽभवत्।।
चाण्डमुण्डौ तु तान्देवीमद्राष्टां सेवकौ तयोः।।१७।।
दृष्ट्वा मनोहरं तस्या रूपं नेत्रसुखावहम्।।
पेततुस्तौ धरामध्ये नष्टसंज्ञौ विमोहितौ।।१८।।
गत्वा व्याजह्रतुः सर्वं राज्ञे वृत्तान्तमादितः ।।
दृष्टा काचिन्मया पूर्वा नारी राजन्मनोरमा ।।१९।।
हिमवच्छिखरे रम्ये संस्थिता सिंहवाहिनी।।
समन्ताद्देवकन्याभिः सेविता बद्धपाणिभिः।।5.47.२०।।
कुरुते पादसंवाहं काचित्संस्कुरुते कचान्।।
पाणिसंवाहनं काचित्काचिन्नेत्राञ्जनं न्यधात्।।२१।।
काचिद् गृहीत्वा हस्तेनादर्शं दर्शयते मुखम्।।
नागवल्लीं ददात्येका लवंगैलादिसंयुताम्।।२२।।
पतद्ग्रहं करे कृत्वा स्थिता काचित्सखी पुरः।।
भूषयत्यखिलांगानि काचिद्भूषाम्बरादिभिः।।२३।।
कदलीस्तंभजंघोरुः कीरनासाऽहिदौर्लता।।
रणन्मञ्जीरचरणा रम्यमेखलया युता।२४।
लसत्कस्तूरिकामोदमुक्ताहारचलस्तनी।।
ग्रैवेयकलसद्ग्रीवा ललन्तीदाममण्डिता।२५।
अर्द्धचन्द्रधरा देवी मणिकुण्डलधारिणी।।
रम्यवेणिर्विशालाक्षी लोचनत्रयभूषिता ।। २६ ।।
साक्षरा मालिकोपेता पणिराजितकंकणा ।।
स्वर्णोर्मिकांगुलिर्भ्राजत्पारिहार्य्यलसत्करा ।। २७ ।।
शुभवस्त्रावृता गौरी पद्मासनविराजिता ।।
काश्मीरबिन्दुतिलका चन्द्रालंकृतमस्तका।।२८।।
तडिद्द्युतिर्महामूल्याम्बर चोलोन्नमत्कुचा ।।
भुजैरष्टाभिरुत्तुंगैर्धारयन्ती वरायुधान् ।।२९।।
तादृशी नासुरी नागी न गन्धर्वी न दानवी ।।
विद्यते त्रिषु लोकेषु यादृशी सा मनोरमा ।। 5.47.३० ।।
तस्मात्संभोगयोग्यत्वं तस्यास्त्वय्येव शोभते ।।
नारीरत्नं यतः सा वै पुंरत्नं च भवान्प्रभो ।।३१।।
इत्युक्तं चण्डमुण्डाभ्यां निशम्य स महासुरः ।।
दूतं सुग्रीवनामानं प्रेषयामास तां प्रति ।। ३२ ।।

गच्छ दूत तुषाराद्रौ तत्रास्ते कापि सुन्दरी ।।
सा नेतव्या प्रयत्नेन कथयित्वा वचो मम ।। ३३ ।।
इति विज्ञापितस्तेन सुग्रीवो दानवोत्तमः ।।
गत्वा हिमाचलं प्राह जगदम्बां महेश्वरीम् ।। ३४ ।।
दूत उवाच ।।
देवि शुंभासुरो दैत्यो निशुंभस्तस्य चानुजः ।।
विख्यातस्त्रिषु लोकेषु महा बलपराक्रमः ।।३५।।
चारोहं प्रेषितस्तेन सन्निधिन्ते समागमम् ।।
स यज्जगौ सुरेशानि तत्समाकर्णयाधुना ।।३६।।
इन्द्रादीन्समरे जित्वा तेषां रत्नान्यपाहरम् ।।
देवभागं स्वयं भुञ्जे यागे दत्तं सुरादिभिः ।। ३७ ।।
स्त्रीरत्नं त्वामहं मन्ये सर्वरत्नोपरि स्थितम् ।।
सा त्वं ममानुजं मां वा भजतात्कामजै रसैः ।। ३८ ।।
इति दूतोक्तमाकर्ण्य वचनं शुंभभाषितम् ।।
जगाद सा महामाया भूतेशप्राणवल्लभा ।। ३९ ।।
।। देव्युवाच ।।
सत्यं वदसि भो दूत नानृतं किंचिदुच्यते ।।
परन्त्वेका कृता पूर्वं प्रतिज्ञा तान्निबोध मे ।। 5.47.४० ।।
यो मे दर्पं विधुनुते यो मां जयति संगरे ।।
उत्सहे तमहं कर्तुं पतिं नान्यमिति ध्रुवम् ।। ४१ ।।
स त्वं कथय शुंभाय निशुंभाय वचो मम ।।
यथा युक्तं भवेदेवं विदधातु तथाऽत्र सः ।। ४२ ।।
इत्थं देवीवचः श्रुत्वा सुग्रीवो नाम दानवः ।।
राज्ञे विज्ञापयामास गत्वा तत्र सविस्तरम्।।४३।।
अथ दूतोक्तमाकर्ण्य शुंभो भैरवशासनः ।।
धूम्राक्षं प्राह सक्रोधः सेनान्यं बलिनां वरम् ।।४४।।
हे धूम्राक्ष तुषाराद्रौ वर्तते कापि सुन्दरी ।।
तामानय द्रुतं गत्वा यथा यास्यति सात्र वै ।। ४५ ।।
तस्या आनयने भीतिर्न कार्य्याऽसुरसत्तम ।।
युद्धं कार्यं प्रयत्नेन यदि सा योद्धुमिच्छति ।। ४६ ।।
एवं विज्ञापितो दैत्यो धूम्रलोचनसंज्ञकः ।।
गत्वा हिमाचलं प्राह भुवनेशीमुमांशजाम्।।४७।।
भर्तुर्ममान्तिकं गच्छ नोचेत्त्वां घातयाम्यहम् ।।

पुष्ट्याऽसुराणां सहितः सहस्राणां नितंबिनि ।।४८।।
देव्युवाच ।।
दैत्यराट्प्रेषितो वीर हंसि चेत्किं करोमि ते ।।
परन्त्वसाध्यं गमनं मन्ये संग्राममन्तरा ।।४९।।
इत्युक्तस्तामन्वधावद्दानवो धूम्रलोचनः।।
हुंकारोच्चारणेनैव तन्ददाह महेश्वरी।।5.47.५०।।
ततः प्रभृति सा देवी धूमावत्युच्यते भुवि।।
आराधिता स्वभक्तानां शत्रुवर्गनिकर्तिनी ।।५१।।
धूम्राक्षे निहते देव्या वाहनेनातिकोपिना ।।
चर्वितास्तद्गणास्सर्वेऽपलायन्तावशेषिताः ।।५२।।
इत्थं देव्या हतं दैत्यं श्रुत्वा शुंभः प्रतापवान् ।।
चकार बहुलं कोपं सन्दष्टोष्ठपुटद्वयः ।। ५३ ।।
चण्डं मुंडं रक्तबीजं प्रैषयत्क्रमतोऽ सुरान् ।।
तेपि चाज्ञापिता दैत्या ययुर्यत्राम्बिका स्थिता ।।५४।।
सिंहारूढा भगवतीमणिमादिभिराश्रिताम्।।
भासयंती दिशो भासा दृष्ट्वोचुर्द्दानवर्षभाः ।। ५५ ।।
हे देवि तरसा मूलं याहि शुंभनिशुंभयोः ।।
अन्यथा घातयिष्यामः सगणां त्वां सवाहनाम् ।।५६।।
वृणीष्व तं पतिं वामे लोकपालादिभिः स्तुतम् ।।
प्रपत्स्यसे महानंदं देवानामपि दुर्लभम् ।।५७।।
इत्युक्तमाकलय्याम्बा स्मयित्वा परमेश्वरी ।।
उदाजहार सा देवी सूनृतं रसवद्वचः ।।५८।।
देव्युवाच ।।
अद्वितीयो महेशानः परब्रह्म सदाशिवः ।।
यत्तत्त्वन्न विदुर्वेदा विष्ण्वादीनां च का कथा ।। ५९ ।।
तस्याहं प्रकृतिः सक्ष्मा कथमन्यं पतिम्वृणे ।।
सिंही कामातुरा नैव जम्बुकं वृणुते क्वचित् ।।।। 5.47.६० ।।
करेणुर्गर्दभं नैव द्वीपिनी शशकं न वा ।।
मृषा वदत भो दैत्यो मृत्युव्यालनियंत्रिताः ।।६१ ।।
यूयं प्रयात पातालं युध्यध्वं शक्तिरस्ति चेत् ।।
इति क्रोधकरं वाक्यं श्रुत्वोचुस्ते परस्परम् ।। ६२ ।।
अबलां मनसि ज्ञात्वा न हन्मो भवतीं वयम् ।।
अथो स्थिरैहि पञ्चास्ये युद्धेच्छा मानसेऽस्ति चेत् ।। ६३ ।।

तेषामेवं विवदतां कलहः समवर्द्धत।।
ववृषु समरे बाणा उभयोर्द्दलयोश्शिताः ।।६४।।
एवं तैः समरं कृत्वा लीलया परमेश्वरी।।
जघान चण्डमुण्डाभ्यां रक्तबीजं महासुरम्।।६५।।
द्वेषबुद्धिं विधायापि त्रिदशस्थितयोऽप्यमी ।।
अन्तेऽप्रापन्परं लोकं यँल्लोकं यान्ति तज्जनाः ।। ६६ ।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां धूम्रलोचन चण्डमुण्डरक्तबीजवधो नाम सप्तचत्वारिंशोऽध्यायः।।४७।।

राजोवाच ।।
धूम्राक्षं चण्डमुण्डं च रक्तबीजासुरन्तथा।।
भगवन्निहतन्देव्या श्रुत्वा शुम्भः सुरार्दनः ।।१।।
किमकार्षीत्ततो ब्रह्मन्नेतन्मे ब्रूहि साम्प्रतम् ।।
शुश्रूषवे जगद्योनेश्चरित्रं पापनाशनम् ।।२।।
ऋषिरुवाच ।।
हतानेमान्दैत्यवरान्महासुरो निशम्य राजन्महनीयविक्रमः ।।
अजिज्ञपत्स्वीयगणान्दुरासदान्रणाभिधोच्चारणज्जातसंमदान् ।।३।।
बलान्वितास्संमिलिता ममाज्ञया जयाशया कालकवंशसंभवाः ।।
सकालकेयासुरमौर्य्यदौर्हृदास्तथा परेप्याशु प्रयाणयन्तु ते।।४।।
निशुंभशुंभौ दितिजान्निदेश्य तान्रथाधिरूढौ निरयां बभूवतुः ।।
बलान्यनूखुर्बलिनोस्तयोर्धराद्विनाशवन्तः शलभा इवोत्थिताः।।५।।
प्रसादयामास मृदंगमर्दलं सभेरिकाडिण्डिमझर्झरानकम् ।।
रणस्थले संजहृषू रणप्रिया असुप्रियाः संगरतः पराययुः ।। ६ ।।
भटाश्च ते युद्धपटावृतास्तदा रणस्थलीं मापुरपापविग्रहाः ।।
गृहीतशस्त्रास्त्रचया जिगीषया परस्परं विग्रहयन्त उल्बणम्।।७।।
गजाधिरूढास्तुरगाधिरोहिणो रथाधिरूढाश्च तथापरेऽसुराः ।।
अलक्षयन्तः स्वपराञ्जनान्मुदाऽसुरेशसंगे समरेऽभिरेभिरे ।। ८ ।।
ध्वनिः शतघ्नी जनितो मुहुर्मुहुर्बभूव तेन त्रिदशाः समेजिताः ।।
महान्धकारः समपद्यताम्बरे विलोक्यते नो रथमण्डलं रवेः ।।९।।
पदातयो निर्व वजुर्हि कोटिशः प्रभूतमाना विजयाभिलाषिणः ।।
रथाश्वगा वारणगा अथापरेऽसुरा निरीयुः कति कोटिशो मुदा ।। 5.48.१० ।।
अशुक्ल शैला एव मत्तवारणा अतानिषुश्चीत्कृतिशब्दमाहवे ।।
क्रमेलकाश्चापि गलद्गलध्वनिं वितन्वते क्षुद्रमहीधरोपमाः।।११।।
हयाश्च ह्रेषन्त उदग्रभूमिजा विशालकण्ठाभरणा गतेर्विदः।।
पदानि दन्तावलमूर्ध्नि बिभ्रतः सुडिड्यिरे व्योमपथा यथाऽवयः।।१२।।
समीक्ष्य शत्रोर्बलमित्थमापतच्चकार सज्यं धनुरम्बिका तदा।।
ननाद घण्टां रिपुसाददायिनी जगर्ज सिंहोऽपि सटां विधूनयन् ।।१३।।
ततो निशुंभस्तुहिनाचलस्थितां विलोक्य रम्याभरणायुधां शिवाम् ।।
गिरं बभाषे रसनिर्भरां परां विलासनीभावविचक्षणो यथा ।।१४।।
भवादृशीनां रमणीयविग्रहे दुनोति कीर्णं खलु मालतीदलम् ।।
कथं करालाहवमातनोष्यसे महेशि तेनैव मनोज्ञवर्ष्मणा ।। १५ ।।
इतीरयित्वा वचनं महासुरो बभूव मौनी तमुवाच चंडिका ।।

वृथा किमात्थासुर मूढ संगरं कुरुष्व नागालयमन्यथा व्रज ।।१६।।
ततोतिरुष्टः समरे महारथश्चकार बाणावलिवृष्टिमद्भुताम् ।।
घनाघनाः संववृषुर्यथोदकं रणस्थले प्रावृडिवागता तदा ।। १७ ।।
शरैश्शितैश्शूलपरश्वधायुधैः सभिन्दिपालैः परिघैश्शरासनैः ।।
भुशुण्डिकाप्रासक्षुरप्रसंज्ञकैर्महासिभिः संयुयुधे मदोद्धतैः ।।१८।।
विवभ्रमुस्तत्समरे महागजा विभिन्नकुंभाअसिताद्रिसन्निभाः।।
चलद्बलाकाधवला विकेतवो विसेतवः शुंभनिशुंभकेतवः।।१९।।
विभिन्नदेहा दितिजा झषोपमा विकन्धरा वाजिगणा भयंकराः ।।
परासवः कालिकया कृता रणे मृगारिणा चाशिषतापरेऽसुरा।।5.48.२०।।
विसुस्रुवू रक्तवहास्तदन्तरे सरिच्च यास्तत्र विपुप्लुवे हतैः ।।
कचा भटानां जलनीलिकोपमास्तदुत्तरीयं सितफेनसंनिभम् ।। २१ ।।
तुरंगसादी तुरगाधिरोहिणं गजस्थितानभ्यपतन्गजारुहः ।।
रथी रथेशं खलु पत्तिरङ्घ्रिगान्समप्रतिद्वन्द्विकलिर्महानभूत् ।।२२।।
ततो निशुंभो हृदये व्यचिन्तयत्करालकालोयमुपागतोऽधुना ।।
भवेद्दरिद्रोऽपि महाधनो महाधनो दरिद्रो विपरीतकालतः ।।२३।।
जडो भवेत्स्फीतमतिर्महामतिर्जडो नृशंसो बहुमन्तु संस्तुतः ।।
पराजयं याति रणे महाबला जयंति संग्राममुखे च दुर्बलाः ।।२४।।
जयोऽजयो वा परमेश्वरेच्छया भवत्यनायासत एव देहिनाम् ।।
न कालमुल्लंघ्य शशाक जीवितुं महेश्वरः पद्मजनी रमापतिः।।२५।।
उपेत्य संग्राममुखं पलायनं न साधुवीरा हृदयेऽनुमन्वते।।
परंतु युद्धे कथमेतया जयो विनाशितं मे सकलं बलं यथा।।२६।।
इयं हि नूनं सुरकर्म साधितुं समागता दैत्यबलं च बाधितुम् ।।
पुराणमूर्तिः प्रकृतिः परा शिवा न लौकिकीयं वनिता कदापि वा ।। २७ ।।
वधोऽपि नारीविहितोऽयशस्करः प्रगीयते युद्धरसं लिलिक्षुभिः ।।
तथाप्यकृत्वा समरं कथं मुखं प्रदर्शयामोऽसुरराजसन्निधौ।।२८।।।
विचारयित्वेति महारथो रथं महान्तमध्यास्य नियन्तृचोदितम्।।
ययौ द्रुतं यत्र महेश्वरांगना सुरांगनाप्रार्थितयौवनोद्गमा।।२९।।
अवोचदेनां स महेशि किं भवेदेभिर्हतैर्वेतनजीविभिर्भटैः।।
तवास्ति कांक्षा यदि योद्धुमावयोस्तदा रणः स्याद्धृतयुद्धसत्पटैः।।5.48.३०।।
उवाच कालीं प्रति कौशिकी तदा समीक्ष्यतामेष दुराग्रहोऽनयोः ।।
करोति कालो विपदागमे मतिं विभिन्नवृत्तिं सदसत्प्रवर्तकः ।।३१ ।।
ततो निशुंभोऽभिजघान चण्डिकां शरैस्सहस्रैश्च तथैव कालिकाम् ।।
बिभेद बाणानसुरप्रचोदितान्सहस्रखण्डं स्वशरोत्करैः शिवा।। ।। ३२ ।।

ततः समुत्थाय कृपाणमुज्ज्वलं स चर्म्म कण्ठीरवमूर्ध्न्यताडयत् ।।
बिभेद तं चापि महासिनाम्बिका यथा कुठारेण तरुं तरुश्छिदः ।। ३३ ।।
स भिन्नखड्गो निचखान मार्गणं पराम्बिका वक्षसि सोऽपि चिच्छिदे ।।
पुनस्त्रिशूलं हृदयेऽक्षिपत्तदप्यचूर्ण यन्मुष्टिनिपातनेन सा ।। ३४ ।।
गदां समादाय पुनर्महारथोऽभ्यधावदम्बां मरणोन्मुखोऽसुरः।।
अचूर्णयत्तामपि शूलधारया पुनस्त्रि शूलं विददार सोऽन्यया ।। ३५ ।।
ततोम्बिका भीमभुजंगमोपमैस्सुरद्विषां शोणितचूषणोचितैः ।।
निशुम्भमात्मीयशिलीमुखै श्शितैर्निहत्य भूमीमनयद्विषोक्षितैः ।। ३६ ।।
निपातितेऽमानबलेऽसुरप्रभुः कनीयसि भ्रातरि रोषपूरितः ।।
रथस्थितो बाहुभिरष्ट भिर्वृतो जगाम यत्र प्रमदा महेशितुः ।। ३७ ।।
अवादयच्छंखमरिन्दमं तदा धनुस्स्वनं चापि चकार दुःसहम् ।।
ननाद सिंहोऽपि सटां विधूनयन्बभूव नादत्रयनादितन्नभः।।३८।।
ततोऽट्टहासं जगदम्बिका करोद्वितत्रसुस्तेन सुरारयोऽखिलाः।।
जयेति शब्दं जगदुस्तदा सुरा यदाम्बिकोवाच रणे स्थिरो भव ।। ३५।।
दैत्यराजो महतीं ज्वलच्छिखां मुमोच शक्तिं निहता च सोल्कया।।
बिभेद शुंभप्रहिताञ्छराच्छिवा शिवेरितान्सोपि सहस्रधा शरान् ।। 5.48.४० ।।
त्रिशूलमुत्क्षिप्य जघान चण्डिका महासुरं तं स पपात मूर्च्छितः ।।
विभिन्नपक्षो हरिणा यथा नगः प्रकंपयन् द्यां वसुधां स वारिधिम् ।। ४१ ।।
ततो मृषित्वा त्रिशिखोद्भवां व्यथां विधाय बाहूनयुतं महाबलः ।।
स कालिकां सिंहयुतां महेश्वरीं जघान चक्रैरमरक्षयंकरैः।।४२।।
तदस्तचक्राणि विभिद्य लीलया त्रिशूलमुद्गूर्य्य जघान सासुरम् ।।
शिवा जगत्पावनपाणिपङ्कजादुपात्तमृत्यू परमं पदं गतौ।।४३।।
हते तस्मिन्महावीर्य्ये निशुंभे भीमविक्रमे।।
शुंभे च सकला दैत्या विविशुर्बलिसद्मनि ।। ४४ ।।
भक्षिता अपरे कालीसिंहाद्यैरमरद्विषः ।।
पलायितास्तथान्ये च दशदिक्षु भयाकुलाः ।। ४५ ।।
बभूवुर्मार्गवाहिन्यस्सरितः स्वच्छपाथसः ।।
ववुर्वाताः सुखस्पर्शा निर्मलत्वं ययौ नभः।।४६।।
पुनर्यागः समारेभे देवैर्ब्रह्मर्षिभिस्तथा ।।
सुखिनश्चाभवन्सर्वे महेन्द्राद्या दिवौकसः ।। ४७ ।।
पवित्रं परमं पुण्यमुमायाश्चरितं प्रभो ।।
दैत्यराजवधोपेतं श्रद्धया यः समभ्य सेत् ।। ४८ ।।
स भुक्त्वेहाखिलान्भोगांस्त्रिदशैरपि दुर्लभान् ।।

परत्रोमालयं गच्छेन्महामायाप्रसादतः ।। ४९ ।।

।। ऋषिरुवाच ।।

एवन्देवी समुत्पन्ना शुंभासुरनिबर्हिणी ।।

प्रोक्ता सरस्वती साक्षादुमांशाविर्भवा नृप ।।5.48.५०।।

इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहि तायां निशुंभशुंभवधोपाख्याने सरस्वतीप्रादुर्भाववर्णनंनामाष्टश्चत्वारिंशोऽध्यायः ।।४८।।

मुनय ऊचुः ।।
उमाया भुवनेशान्यास्सूत सर्वार्थवित्तम ।।
अवतारं समाचक्ष्व यतो जाता सरस्वती ।।१।।
या गीयते परब्रह्ममूलप्रकृतिरीश्वरी ।।
निराकारापि साकारा नित्या नन्दमथी सती ।।२।।
सूत उवाच ।।
तापसाः शृणुत प्रेम्णा चरित्रं परमं महत् ।।
यस्य विज्ञानमात्रेण नरो याति परां गतिम् ।। ३ ।।
देवदानवयोर्युद्धमेकदासीत्परस्परम् ।।
महामायाप्रभावेणामराणां विजयोऽभवत्।।४।।
ततोऽवलिप्ता अमरास्स्वप्रशंसां वितेनिरे।।
वयं धन्या वयं धन्या किं करिष्यंति नोऽसुराः ।।५।।
ये प्रभावं समालोक्यास्माकं परमदुःसहम् ।।
भीता नागालयं याता यातयातेति वादिनः ।। ६ ।।
अहो बलमहो तेजो दैत्यवंशक्षयंकरम् ।।
अहो भाग्यं सुमनसामेवं सर्वेऽभ्यवर्णयन् ।। ७ ।।
तत आविरभूत्तेजः कूटरूपन्तदैव हि ।।
अदृष्टपूर्वं तद्दृष्ट्वा विस्मिता अभवन्सुराः ।।८।।
किमिदं किमिदं चेति रुद्धकण्ठास्समब्रुवन ।।
अजानन्तः परं श्यामानु भावं मानभञ्जनम् ।।९।।
तत आज्ञापयद्देवान्देवानामधिनायकः ।।
यात यूयं परीक्षध्वं याथातथ्येन किन्विति ।।5.49.१०।।
सुरेन्द्रप्रेरितो वायुर्महसः सन्निधिं गतः ।।
कस्त्वं भोरिति सम्बोध्यावोचदेनं च तन्महः ।। ११ ।।
इति पृष्टस्तदा वायुर्महसातिगरीयसा ।।
वायुरस्मि जगत्प्राणस्साभिमानोऽब्रवीदिदम् ।। १२ ।।
जंगमाजंगमं सर्वमोतप्रोतमिदं जगत् ।।
मय्येव निखिलाधारे चालयाम्यखिलं जगत् ।। ।। १३ ।।
तदोवाच महातेजः शक्तोऽसि यदि चालने ।।
धृतमेतत्तृणं वायो चालयस्व निजेच्छया ।। १४ ।।।
ततः सर्वप्रयत्नेनाकरोद्यत्नं सदागतिः ।।
न चचाल यदा स्थानात्तदासौ लज्जितोऽभवत ।।१५।।
तूष्णीं भूत्वा ततो वायुर्जगामेन्द्रं सभां प्रति ।।

कथयामास तद् वृत्तं स्वकीयाभिभवान्वितम् ।।१६।।
सर्वेशत्वं वयं सर्वे मृषैवात्मनि मन्महे ।।
न पारयामहे किंचिद्वि धातुं क्षुद्रवस्त्वपि ।। १७ ।।
ततश्च प्रेषयामास मरुत्वान्सकलान्सुरान् ।।
न शेकुस्ते यदा ज्ञातुं तदेन्द्रः स्वयमभ्यगात् ।। १८ ।।
मघवन्तमथायान्तं दृष्ट्वा तेजोतिदुःसहम्।।
बभूवान्तर्हितं सद्यो विस्मितोऽभूच्च वासवः।।१९।।
चरित्रमीदृशं यस्य तमेव शरणं श्रये ।।
इति संचिन्तयामास सहस्राक्षः पुनःपुनः ।। 5.49.२० ।।
एतस्मिन्नंतरे तत्र निर्व्याजकरुणातनुः ।।
तेषामनुग्रहं कर्तुं हर्तुं गर्वं शिवांगना। ।। २१ ।।
चैत्रशुक्लनवम्यां तु मध्याह्नस्थे दिवाकरे ।।
प्रादुरासीदुमा देवी सच्चिदानन्दरूपिणी ।। २२ ।।
महोमध्ये विराजन्ती भासयन्ती दिशो रुचा ।।
बोधयन्ती सुरान्सर्वान्ब्रह्मैवाहमिति स्फुटम् ।। २३ ।।
चतुर्भिर्दधती हस्तैर्वरपाशांकुशाभयान् ।।
श्रुतिभिस्सेविता रम्या नवयौवनगर्विता ।।२४।।
रक्ताम्बरपरीधाना रक्तमाल्यानुलेपना ।।
कोटिकंदर्प्पसंकाशा चन्द्रकोटिसमप्रभा। ।। २५ ।।
व्याजहार महामाया सर्वान्तर्य्यामिरूपिणी ।।
साक्षिणी सर्वभूतानां परब्रह्मस्वरूपिणी ।। २६ ।।
उमोवाच ।।
न ब्रह्मा न सुरारातिर्न पुरारातिरीश्वरः ।।
मदग्रे गर्वितुं किंचित्का कथान्यसुपर्वणाम् ।। २७ ।।
परं ब्रह्म परं ज्योतिः प्रणवद्वन्द्वरूपिणी ।।
अहमेवास्मि सकलं मदन्यो नास्ति कश्चन ।। २८ ।।
निराकारापि साकारा सर्वतत्त्वस्वरूपिणी ।।
अप्रतर्क्यगुणा नित्या कार्यकारणरूपिणी ।। २९ ।।
कदाचिद्दयिताकारा कदाचित्पुरुषाकृतिः ।।
कदाचिदुभयाकारा सर्वाकाराहमीश्वरी ।। 5.49.३० ।।
विरञ्चिः सृष्टिकर्ताहं जगत्पाताहमच्युतः ।।
रुद्रः संहारकर्ताहं सर्वविश्वविमोहिनी ।। ३१ ।।
कालिका कमलावाणी मुखास्सर्वा हि शक्तयः ।।

मदंशादेव संजातास्तथेमास्सकलाः कलाः ।। ३२ ।।
मत्प्रभावाज्जितास्सर्वे युष्माभिर्द्दितिनन्दनाः ।।
तामविज्ञाय मां यूयं वृथा सर्वेशमानिनः ।। ३३ ।।
यथा दारुमयीं योषां नर्तयत्यैन्द्रजालिकः ।।
तथैव सर्वभूतानि नर्तयाम्यहमीश्वरी ।। ३४ ।।
मद्भयाद्वाति पवनः सर्वं दहति हव्यभुक्।।
लोकपालाः प्रकुर्वंति स्वस्वकर्माण्यनारतम् ।।३५।।
कदाचिद्देववर्गाणां कदाचिद्दितिजन्म नाम् ।।
करोमि विजयं सम्यक्स्वतन्त्रा निजलीलया ।। ३६ ।।
अविनाशि परं धाम मायातीतं परात्परम् ।।
श्रुतयो वर्णयन्ते यत्त द्रूपन्तु ममैव हि।।३७।।
सगुणं निर्गुणं चेति मद्रूपं द्विविधं मतम् ।।
मायाशबलितं चैकं द्वितीयन्तदनाश्रितम् ।। ३८ ।।
एवं विज्ञाय मां देवास्स्वं स्वं गर्वं विहाय च ।।
भजत प्रणयोपेताः प्रकृतिं मां सनातनीम् ।।३९।।
इति देव्या वचः श्रुत्वा करुणागर्भितं सुराः ।।
तुष्टुवुः परमेशानीं भक्तिसंनतकन्धराः ।। 5.49.४० ।।
क्षमस्व जगदीशानि प्रसीद परमेश्वरि ।।
मैवं भूयात्कदाचिन्नो गर्वो मातर्द्दयां कुरु ।।४१।।
ततःप्रभृति ते दैवा हित्वा गर्वं समाहिताः।।
उमामाराधयामासुर्यथापूर्वं यथाविधि।।४२।।
इति वः कथितो विप्रा उमाप्रादुर्भवो मया ।।
यस्य श्रवणमात्रेण परमं पदमश्नुते।।४३।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायामुमाप्रादुर्भाववर्णनं नामैकोनपञ्चाशत्तमोऽध्यायः ।। ४९ ।।

मुनय ऊचुः ।।
श्रोतुकामा वयं सर्वे दुर्गाचरितमन्वहम् ।।
अपरं च महाप्राज्ञ तत्त्वं वर्णय नोऽद्भुतम् ।।१।।
शृण्वतान्त्वन्मुखाम्भोजात्कथा नाना सुधोपमाः ।।
न तृप्यति मनोऽस्माकं सूत सर्वार्थवित्तम ।। २ ।।
।। सूत उवाच ।।
दुर्गमः प्रथितो नाम्ना रुरुपुत्रो महाबलः ।।
ब्रह्मणो वरदानेन चतस्रोऽलभत श्रुतीः ।। ३ ।।
देवाजेयबलं चापि संप्राप्य जगतीतले ।।
करोति स्म बहूत्पातान्दिवि देवाश्चकम्पिरे ।।४।।
सर्वा नष्टेषु वेदेषु क्रिया नष्टा बभूव ह ।।
ब्राह्मणाश्च दुराचारा बभूबुस्ससुरास्तदा ।। ५ ।।
न दानं न तपोऽत्युग्रं न यागो हवनं न हि ।।
अनावृष्टिस्ततो जाता पृथिव्यां शतवार्षिकी ।।६।।
हाहाकारो महानासीत्त्रिषु लोकेषु दुःखिताः ।।
अभवंश्च जनास्सर्वे क्षुत्तृड्भ्यां पीडिता भृशम् ।। ७ ।।
सरितः सागराश्चैव वापीकूपसरांसि च ।।
निर्जला अभवन्सर्वे संशुष्का वृक्षवीरुधः ।। ८ ।।
ततो दृष्ट्वा मदाद्दुःखं प्रजानां दीनचेतसाम् ।।
त्रिदशाश्शरणं याता योगमायां महेश्वरीम् ।। ९ ।।
देवा ऊचुः ।।
रक्षरक्ष महामाये स्वकीयास्सकलाः प्रजाः ।।
कोपं संहर नूनन्त्वं लोका नंक्ष्यंति वान्यथा ।। 5.50.१० ।।
कथा शुंभोहतो दैत्यो निशुंभश्च महाबलः ।।
धूम्राक्षश्चण्डमुण्डौ च रक्तबीजो महाबलः ।। ११ ।।
स मधुः कैटभो दैत्यो महिषासुर एव च ।।
तथैवामुं कृपासिन्धो दीनबन्धो जहि द्रुतम् ।। १२ ।।
अपराधो भवत्येव बालकानां पदे पदे ।।
सहते को जनो लोके केवलं मातरं विना ।। १३ ।।
यदायदाभवद्दुःख देवानां ब्रह्मणान्तथा ।।
तदातदावतीर्याशु कुरुषे सुखिनो जनान् ।। १४ ।।
इति विक्लवितन्तेषां समाकर्ण्य कृपामयी ।।
अनन्ताक्षमयं रूपन्दर्शयामास साम्प्रतम् ।। १५ ।।

धनुर्बाणौ तथा पद्म नानामूलफलानि च ।।
चतुर्भिर्दधती हस्तैः प्रसन्नमुखपङ्कजा।।१६।।
ततो दृष्ट्वा प्रजास्तप्ताः करुणापूरितेक्षणा।।
रुरोद नव घस्राणि नव रात्रीस्समाकुला ।। १७ ।।
मोचयामास दृष्टिभ्यो वारिधाराः सहस्रशः ।।
ताभिः प्रतर्प्पिता लोका औषध्यः सकला अपि ।। १८ ।।
अगाधतोयास्सरितो बभूवुः सागरा अपि ।।
रुरुहुर्धरणीपृष्ठे शाकमूलफलानि च ।। १९ ।।
विततार करस्थानि सुमनोभ्यः फलानि च ।।
गोभ्यस्तृणानि रम्याणि तथान्येभ्यो यथार्हतः ।।5.50.२०।।
सन्तुष्टा अभवन्सर्वे सदैव द्विजमानुषाः ।।
ततो जगाद सा देवी किमन्यत्करवाणि वः ।।२१।।
समेत्योचुस्तदा देवा भवत्या तोषिता जनाः ।।
वेदान्देहि कृपां कृत्वा दुर्गमेण समाहृताम् ।।२२।।
तथास्त्विति प्रभाष्याह यातयात निजालयम् ।।
वितरिष्यामि वो वेदानचिरेणैव कालतः ।।२३।।
ततः प्रमुदिता देवास्स्वं स्वं धाम समाययुः ।।
सुप्रणम्य जगद्योनिं फुल्लेन्दीवरलोचनाम् ।। २४ ।।
ततः कोलाहलो जातो दिवि भूम्यन्तरिक्षके ।।
तच्छ्रुत्वा रौरवः सद्यो न्यरुणत्सर्वतः पुरीम् ।।२५।।
ततस्तेजोमयं चक्रं विधाय परितः शिवा ।।
रक्षणार्थं देवतानां स्वयं तस्माद्बहिर्गता ।। २६ ।।
ततः समभवयुद्धं देव्या दैत्यस्य चोभयोः ।।
ववृषुः समरे बाणान्निशितान्कंकटच्छिदः ।। २७ ।।
एतस्मिन्नंतरे तस्याः शरीराद्रम्यमूर्त्तयः ।।
काली तारा च्छिन्नमस्ता श्रीविद्या भुवनेश्वरी ।। २८ ।।
भैरवी बगला धूम्र श्रीमत्त्रिपुरसुदरी ।।
मातंगी च महाविद्या निर्गता दश सायुधाः।।२९।।
असंख्यातास्ततो जाता मातरो दिव्यमूर्त्तयः ।।
चन्द्रलेखाधरास्सर्वास्सर्वा विद्युतत्समप्रभाः ।।5.50.३०।।
ततो मातृगणैर्युद्धं प्रावर्तत भयंकरम् ।।
रौरवीयं हतन्ताभिर्दलमक्षौहिणीशतम् ।। ३१ ।।
जघान सा तदा दैत्यं दुर्गमं शूलधारया ।।

पपात धरणीपृष्ठे खातमूलद्रुमो यथा ।। ३२ ।।
इत्थं हत्वा तदा दैत्यं दुर्गमासुरनाम कम् ।।
आदाय चतुरो वेदान्ददौ देवेभ्य ईश्वरी ।।३३।।
देवा ऊचुः ।।
अस्मदर्थं त्वया रूपमनन्ताक्षिमयं धृतम् ।।
मुनयः कीर्तयिष्यन्ति शताक्षीन्त्वामतोऽम्बिके ।। ३४ ।।
आत्मदेहसमुद्भूतैः शाकैर्लोका मृता यतः ।।
शाकंभरीति विख्यातन्तत्ते नाम भविष्यति ।। ३५ ।।
दुर्गमाख्यो महादैत्यो हतो यस्मात्ततः शिवे ।।
दुर्गां भगवतीं भद्रां व्याहरिष्यंति मानवाः ।। ३६ ।।
योगनिद्रे नमस्तुभ्यं नमस्तेऽस्तु महाबले ।।
नमो ज्ञानप्रदे तुभ्यं विश्वमात्रे नमो नमः ।। ३७ ।।
तत्त्वमस्यादिवाक्यैर्या बोध्यते परमेश्वरी ।।
अनन्तकोटिब्रह्माण्डनायिकायै नमो नमः ।। ३८ ।।
वाङ्मनःकायदुष्प्रापां सूर्यचन्द्राग्निलोचनाम् ।।
स्तोतुं न शक्नुमो मातस्त्व त्प्रभावाबुधा वयम् ।। ३९ ।।
मादृशानमरान्दृष्ट्वा कः कुर्यादीदृशीन्दयाम् ।।
वर्जयित्वा सुरेशानीं शताक्षी मातरं विना ।। 5.50.४० ।।
त्रिलोकी नाभिभूयेत बाधाभिश्च निरन्तरम् ।।
एवं कार्यस्त्वया यत्नोऽस्माकं वैरिविनाशनम् ।। ४१ ।।
देव्युवाच ।। ।।
वत्सान्दृष्ट्वा यथा गावो व्यग्रा धावन्ति सत्वरम् ।।
तथैव भवतो दृष्ट्वा धावामि व्याकुला सती ।। ४२ ।।
मम युष्मानपश्यन्त्या पश्यन्त्या बालकानिव ।।
अपि प्राणान्प्रयच्छन्त्याः क्षण एको युगायते ।।४३।।
कापि चिन्ता न कर्त्तव्या युष्माभिर्भ क्तिशालिभिः ।।
भवत्यां मयि तिष्ठन्त्यां संहरन्त्यां निजापदः ।।४४।।
यथा पूर्वं हता दैत्या हनिष्यामि तथाऽसुरान्।।
संशयो नात्र कर्त्तव्यस्सत्यंसत्यं ब्रवीम्यहम् ।। ४५ ।।
यदा शुंभो निशुंभश्चापरौ दैत्यौ भविष्यतः ।।
तदाहं नन्दभार्यायां यशोदायां यशोमयी ।। ४६ ।।
योनिजं रूपमास्थाय जनिष्ये गोपगोकुले ।।
हनिष्याम्यसुरौ तन्मां व्याहरिष्यन्ति नन्दजाम् ।। ४७ ।।

भ्रामरं रूपमास्थाय वधिष्याम्यरुणं यतः ।।
भ्रामरीति च मां लोके कीर्तयिष्यन्ति मानवाः ।। ४८ ।।
कृत्वा भीमं पुना रूपं रक्षांस्यत्स्याम्यहं यदा ।।
भीमा देवीति विख्यातं तन्मे नाम भविष्यति ।। ४९ ।।
यदायदाऽसुरोत्थैव बाधा भुवि भविष्यति ।।
तदातदावतीर्याहं शं करिष्याम्यसंशयम् ।। 5.50.५० ।।
या शताक्षी स्मृता देवी सैव शाकंभरी मता ।।
सैव प्रकीर्तिता दुर्गा व्यक्तिरेकैव त्रिष्वपि ।। ५१ ।।
न शताक्षीसमा काचिद्दयालुर्भुवि देवता ।।
दृष्ट्वाऽरुदत्प्रजास्तप्ता या नवाहं महेश्वरी ।।५२।।
इति श्रीशिवमहापुराणे पञ्चम्यामुमासंहितायां शताक्ष्याद्यवतारवर्णनं नाम पंचाशत्तमोऽध्यायः ।।
५०।।

मुनय ऊचुः ।।
व्यासशिष्य महाभाग सूत पौराणिकोत्तम ।।
अपरं श्रोतुमिच्छामः किमप्याख्यानमीशितुः।।१।।
उमाया जगदम्बायाः क्रियायोगमनुत्तमम् ।।
प्रोक्तं सनत्कुमारेण व्यासाय च महात्मने ।। २ ।।
सूत उवाच ।।
धन्या यूयं महात्मानो देवीभक्तिदृढव्रताः ।।
पराशक्तेः परं गुप्तं रहस्यं शृणुतादरात् ।। ३ ।।
व्यास उवाच ।।
सनत्कुमार सर्वज्ञ ब्रह्मपुत्र महामते ।।
उमायाश्श्रोतुमिच्छामि क्रियायोगं महाद्भुतम् ।। ४ ।।
कीदृक्च लक्षणं तस्य किं कृते च फलं भवेत् ।।
प्रियं यच्च पराम्बायास्तदशेषं वदस्व मे ।। ५ ।।
सनत्कुमार उवाच ।।
द्वैपायन यदेतत्त्वं रहस्यं परिपृच्छसि ।।
तच्छृणुष्व महाबुद्धे सर्वं मे वर्णयिष्यतः ।। ६ ।।
ज्ञानयोगः क्रियायोगो भक्तियोगस्तथैव च ।।
त्रयो मार्गास्समाख्याताः श्रीमातुर्मुक्तिमुक्तिदा ।। ७ ।।
ज्ञानयोगस्तु संयोगश्चित्तस्यैवात्मना तु यः ।।
यस्तु बाह्यार्थसंयोगः क्रियायोगः स उच्यते ।। ८ ।।
भक्तियोगो मतो देव्या आत्मनश्चैक्यभावनम् ।।
त्रयाणामपि योगानां क्रियायोगस्स उच्यते ।। ९ ।।
कर्मणा जायते भक्तिर्भक्त्या ज्ञानं प्रजायते ।।
ज्ञानात्प्रजायते मुक्तिरिति शास्त्रेषु निश्चयः।।5.51.१०।।
प्रधानं कारणं योगो विमुक्तेर्मुनिसत्तम ।।
क्रियायोगस्तु योगस्य परमन्ध्येयसाधनम् ।।१ १।।
मायान्तु प्रकृतिं विद्यान्मायावि ब्रह्म शाश्वतम् ।।
अभिन्नं तद्वपुर्ज्ञात्वा मुच्यते भवबन्धनात् ।। १२ ।।
यस्तु देव्यालयं कुर्यात्पाषाणन्दारवन्तथा ।।
मृन्मयं वाथ कालेय तस्य पुण्यफलं शृणु ।।
अहन्यहनियोगेन जयतो यन्महाफलम्।। ।।१३।।
प्राप्नोति तत्फलन्देव्या यः कारयति मन्दिरम्।।
सहस्रकुलमागामि व्यतीतं च सहस्रकम् ।।

तारयति धर्मात्मा श्रीमातुर्धाम कारयन् ।।१४।।
कोटिजन्मकृतं पापं स्वल्पं वा यदि वा बहु ।।
श्रीमातुर्मन्दिरारम्भक्षणादेव प्रणश्यति ।। १५ ।।
नदीषु च यथा गंगा शोणः सर्वनदेषु च ।।
क्षमायां च यथा पृथ्वी गांभीर्ये च यथोदधिः ।।१६।।
ग्रहाणां च समस्तानां यथा सूर्यो विशिष्यते।।।
तथा सर्वेषु देवेषु श्रीपराम्बा विशिष्यते ।। १७ ।।
सर्वदेवेषु सा मुख्या यस्तस्याः कारयेद्गृहम् ।।
प्रतिष्ठां समवाप्नोति स च जन्म निजन्मनि ।। १८ ।।
वाराणस्यां कुरुक्षेत्रे प्रयागे पुष्करे तथा ।।
गंगासमुद्रतीरे च नैमिषेऽमरकण्टके ।। १९ ।।
श्रीपर्वते महापुण्ये गोकर्णे ज्ञानपर्वते ।।
मथुरायामयोध्यायां द्वारावत्यां तथैव च ।। 5.51.२० ।।
इत्यादि पुण्यदेशेषु यत्र कुत्र स्थलेऽपि वा ।।
कारयन्मातुरावासं मुक्तो भवति बन्धनात् ।। २१ ।।
इष्टकानां तु विन्यासो यावद्वर्षाणि तिष्ठति ।।
तावद्वर्षसहस्राणि मणिद्वीपे महीयते ।। २२ ।।
प्रतिमाः कारयेद्यस्तु सर्वलक्षणलक्षिताः ।।
स उमायाः परं लोकं निर्भयो व्रजति ध्रुवम् ।। २३ ।।
देवीमूर्तिं प्रतिष्ठाप्य शुभर्तुं ग्रहतारके ।।
कृतकृत्यो भवेन्मर्त्यो योगमायाप्रसादतः ।। २४ ।।
ये भविष्यन्ति येऽतीता आकल्पात्पुरुषाः कुले ।।
तांस्तांस्तारयते देव्या मूर्तिं संस्थाप्य शोभनाम् ।। २५ ।।
त्रिलोकीस्थापनात्पुण्यं यद्भवेन्मुनिपुंगव ।।
तत्कोटिगुणितं पुण्यं श्रीदेवीस्थापनाद्भवेत् ।।२६।।
मध्ये देवीं स्थापयित्वा पञ्चायतनदेवताः ।।
चतुर्द्दिक्षु स्थापयेद्यस्तस्य पुण्यं न गण्यते ।।२७।।
विष्णोर्नाम्नां कोटिजपाद्ग्रहणेचन्द्रसूर्ययोः ।।
यत्फलं लभ्यते तस्माच्छतकोटिगुणोत्तरम् ।।२८।।
शिवनाम्नो जपादेव तस्मात्कोटि गुणोत्तरम् ।।
श्रीदेवीनामजापात्तु ततः कोटिगुणोत्तरम् ।।२९।।
देव्याः प्रासादकरणात्पुण्यन्तु समवाप्यते ।।
स्थापिता येन सा देवी जगन्माता त्रयीमयी ।।5.51.३०।।

न तस्य दुर्लभं किंचिच्छ्रीमातुः करुणावशात् ।।
वर्द्धते पुत्रपौत्राद्या नश्यत्यखिलकश्मलम् ।।३१।।
मनसा ये चिकीर्षंति मूर्तिस्थापनमुत्तमम् ।।
तेत्युमायाः परं लोकं प्रयान्ति मुनिदुर्लभम् ।।३२।।
क्रियमाणन्तु यः प्रेक्ष्य चेतसा ह्यनुचिन्तयेत् ।।
कारयिष्याम्यहं यर्हि संपन्मे संभविष्यति ।।३३।।
एवन्तस्य कुलं सद्यो याति स्वर्गं न संशयः ।।
महामायाप्रभावेण दुर्लभं किं जगत्त्रये ।।३४।।
श्रीपराम्बाजगद्योनिं केवलं ये समाश्रिताः ।।
ते मनुष्या न मन्तव्यास्साक्षाद्देवीगणाश्च ते ।।३५।।
ये व्रजन्तः स्वपन्तश्च तिष्ठन्तो वाप्यहर्निशम् ।।
उमेति द्व्यक्षरं नाम ब्रुवते ते शिवागणाः ।।३६।।
नित्ये नैमित्तिके देवीं ये यजन्ति परां शिवाम्।।
पुष्पैर्धूपैस्तथादीपैस्ते प्रयास्यन्त्युमालयम् ।।३७।।
ये देवीमण्डपं नित्यं गोमयेन मृदाथवा ।।
उपलिंपन्ति मार्जन्ति ते प्रयास्यन्त्युमालयम् ।।३८।।
यैर्देव्या मन्दिरं रम्यं निर्मापि तमनुत्तमम् ।।
तत्कुलीनाञ्जनान्माता ह्याशिषः संप्रयच्छति ।।३९।।
मदीयाः शतवर्षाणि जीवन्तु प्रेमभाग्जनाः।।
नापदामयनानीत्थं श्रीमाता वक्त्यहर्निशम्।।5.51.४०।।
येन मूर्तिर्म्महादेब्या उमायाः कारिता शुभा।।
नरायुतन्तत्कुलजं मणिद्वीपे महीयते।।४१।।
स्थापयित्वा महामायामूर्तिं सम्यक्प्रपूज्य च।।
यंयं प्रार्थयते कामं तंतं प्राप्नोति साधकः ।।४२।।
यः स्नापयति श्रीमातुः स्थापितां मूर्तिमुत्तमाम् ।।
घृतेन मधुनाक्तेन तत्फलं गणयेत्तु कः।।४३।।
चन्दनागुरुकर्पूर मांसीमुस्तादियुग्जलैः ।।
एकवर्णगवां क्षीरैः स्नापयेत्परमेश्वरीम्।।४४।।
धूपेनाष्टादशांगेन दद्यादाहुतिमुत्तमाम् ।।
नीराजनं चरेद्देव्या स्साज्यकर्पूरवर्तिभिः ।। ४५ ।।
कृष्णाष्टम्यां नवम्यां वामायां वा पंचदिक्तिथौ ।।
पूजयेज्जगतां धात्रीं गंधपुष्पैर्विशेषतः ।। ४६ ।।
संपठञ्जननीसूक्तं श्रीसूक्तमथ वा पठन्।।

देवीसूक्तमथो वापि मूकमन्त्रमथापि वा ।।४७।।
विष्णुक्रान्तां च तुलसीं वर्जयित्वाखिलं सुमम् ।।
देवीप्रीतिकरं ज्ञेयं कमलन्तु विशेषतः ।।४८।।
अर्पयेत्स्वर्णपुष्पं यो देव्यै राजतमेव वा ।।
स याति परमं धाम सिद्धकोटि भिरन्वितम् ।।४९।।
पूजनान्ते सदा कार्यं दासैरेनः क्षमापनम्।।
प्रसीद परमेशानि जगदानन्ददायिनि।।5.51.५०।।
इति वाक्यैस्स्तुवन्मन्त्री देवीभक्तिपरायणः ।।
ध्यायेत्कण्ठीरवारूढां वरदाभयपाणिकाम् ।।५१।।
इत्थं ध्यात्वा महेशानीं भक्ताभीष्टफलप्रदाम् ।।
नानाफलानि पक्वानि नैवेद्यत्वे प्रकल्पयेत् ।।५२।।
नैवेद्यं भक्षयेद्यस्तु शंभुशक्तेः परात्मनः ।।
स निर्भूयाखिलं पङ्कं निर्मलो मानवो भवेत् ।।५३।।
चैत्रशुक्लतृतीयायां यो भवानीव्रतं चरेत् ।।
भववन्धननिर्मुक्तः प्राप्नुयात्परमं पदम् ।। ५४ ।।
अस्यामेव तृतीयायां कुर्याद्दोलोत्सवं बुधः ।।
पूजयेज्जगतां धात्रीमुमां शंकरसंयुताम्।।५५।।
कुसुमैः कुंकुमैर्वस्त्रैः कर्पूरागुरुचन्दनैः ।।
धूपैर्द्दीपैस्सनैवेद्यैः स्रग्गन्धैरपरैरपि।। ।। ५६ ।।
आन्दोलयेत्ततो देवीं महामायां महेश्वरीम् ।।
श्रीगौरीं शिवसंयुक्तां सर्वकल्याणकारिणीम् ।। ५७ ।।
प्रत्यब्दं कुरुते योस्यां बतमान्दोलनं तथा ।।
नियमेन शिवा तस्मै सर्वमिष्टं प्रयच्छति ।। ५८ ।।
माधवस्य सिते पक्षे तृतीया याऽक्षयाभिधा।।
तस्यां यो जगदम्बाया व्रतं कुर्यादतन्द्रितः।।५९।।
मल्लिकामालतीचंपाजपाबन्धूकपंकजैः।।
कुसुमैः पूजयेद्गौरीं शंकरेण समन्विताम् ।। ।।। 5.51.६० ।।
कोटिजन्मकृतं पापं मनोवाक्कायसम्भवम् ।।
निर्धूय चतुरो वर्गानक्षयानिह सोऽश्नुते ।। ६१ ।।
ज्येष्ठे शुक्लतृतीयायां व्रतं कृत्वा महेश्वरीम् ।।
योऽर्चयेत्परमप्रीत्या तस्यासाध्यं न किंचन ।। ६२ ।।
आषाढशुक्लपक्षीयतृतीयायां रथोत्सवम ।।
देव्याः प्रियतमं कुर्याद्यथावित्तानुसारतः ।। ६३ ।।

रथं पृथ्वीं विजानीयाद्रथांगे चन्द्रभास्करौ ।।
वेदानश्वान्विजानीयात्सारथिं पद्मसं भवम् ।। ६४ ।।
नानामणिगणाकीर्णं पुष्पमालाविराजितम् ।।
एवं रथं कल्पयित्वा तस्मिन्त्संस्थापयेच्छिवाम् ।। ६५ ।।
लोकसंरक्षणार्थाय लोकं द्रष्टुं पराम्बिका ।।
रथमध्ये संस्थितेति भावयेन्मतिमान्नरः ।।६६।।
रथे प्रचलिते मन्दं जयशब्दमुदीरयेत्।।
पाहि देवि जनानस्मान्प्रपन्नान्दीनवत्सले ।। ६७ ।।
इति वाक्यैस्तोषयेच्च नानावादित्रनिस्वनैः ।।
सीमान्ते तु रथं नीत्वा तत्र संपूजये द्रथे ।। ६८ ।।
नानास्तोत्रैस्ततः स्तुत्वाप्यानयेत्तां स्ववेश्मनि ।।
प्रणिपातशतं कृत्वा प्रार्थयेज्जगदम्बिकाम् ।। ६९ ।।
एवं यः कुरुते विद्वान्पूजाव्रतरथोत्सवम् ।।
इह भुक्त्वाखिलान्भोगान्सोन्ते देवीपदं व्रजेत् ।। 5.51.७० ।।
शुक्लायान्तु तृतीयायामेवं श्रावणभाद्रयोः।।
यो व्रतं कुरुतेऽम्बायाः पूजनं च यथाविधि ।। ७१ ।।
मोदते पुत्रपौत्राद्यैर्धनाद्यैरिह सन्ततम् ।।
सोऽन्ते गच्छेदुमालोकं सर्वलोकोपरि स्थितम्।। ७२ ।।
आश्विने धवले पक्षे नवरात्रव्रतं चरेत् ।।
यत्कृते सकलाः कामास्सिद्ध्यन्त्येव न संशयः ।। ७३ ।।
नवरात्रव्रतस्यास्य प्रभावं वक्तुमीश्वरः ।।
चतुरास्यो न पंचास्यो न षडास्यो न कोऽपरः ।।७४।।
नवरात्रव्रतं कृत्वा भूपालो विरथात्मजः।।
हृतं राज्यं निजं लेभे सुरथो मुनिसत्तमाः ।। ७५ ।।
ध्रुवसंधिसुतो धीमानयोध्याधिपतिर्नृपः ।।
सुदर्शनो हृतं राज्यं प्रापदस्य प्रभावतः।।।।७६।।
व्रतराजमिमं कृत्वा समाराध्य महेश्वरीम्।।
संसारबन्धनान्मुक्तः समाधिर्मुक्तिभागभूत्।।७७।।
तृतीयायां च पञ्चम्यां सप्तम्याम ष्टमीतिथौ ।।
नवम्यां वा चतुर्दश्यां यो देवी पूजयेन्नरः ।।७८।।
आश्विनस्य सिते पक्षे व्रतं कृत्वा विधानतः ।।
तस्य सर्वं मनोभीष्टं पूरयत्यनिशं शिवा ।।७९।।
यः कार्त्तिकस्य मार्गस्य पौषस्य तपसस्तथा ।।

तपस्यस्य सिते पक्षे तृतीयायां व्रतं चरेत्।।5.51.८०।।
लोहितैः करवीराद्यैः पुष्पैर्धूपैस्सुगन्धितैः ।।
पूजयेन्मङ्गलान्देवीं स सर्वं मंगलं लभेत्।।८१।।
सौभाग्याय सदा स्त्रीभिः कार्य्यमेतन्महाव्रतम्।।
विद्याधनसुताप्त्यर्थं विधेयं पुरुषैरपि ।। ८२ ।।
उमामहेश्वरादीनि व्रतान्यन्यानि यान्यपि ।।
देवीप्रियाणि कार्याणि स्वभक्त्यैवं मुमुक्षुभिः।।८३।।
संहितेयं महापुण्या शिवभक्तिविवर्द्धिनी।।
नानाख्यानसमायुक्ता भुक्तिमुक्तिप्रदा शिवा।।८४।।
य एनां शृणुयाद्भक्त्या श्रावयेद्वा समाहितः ।।
पठेद्वा पाठयेद्वापि स याति परमां गतिम् ।।८५।।
यस्य गेहे स्थिता चेयं लिखिता ललिताक्षरैः ।।
संपूजिता च विधिवत्सर्वान्कामान्स आप्नुयात् ।।८६।।
भूतप्रेतपिशाचादिदुष्टेभ्यो न भयं क्वचित।।
पुत्रपौत्रादिसम्पत्तिं लभत्येव न संशयः।।। ।। ८७ ।।
तस्मादियं महापुण्या रम्योमासंहिता सदा ।।
श्रोतव्या पठितव्या च शिवभक्तिमभीप्सुभिः ।। ८८ ।। ।।
इति श्रीशिव महापुराणे पञ्चम्यामुमासंहितायां क्रियायोगनिरूपणं नामैकपञ्चाशत्तमोऽध्यायः ।। ५१ ।।

।। समाप्तेयं पञ्चम्युमासंहिता ।।।

श्रीगणेशाय नमः

ॐ नमः शिवाय।।

अथ षष्ठी कैलाससंहिता प्रारभ्यते ।।

नमः शिवाय साम्बाय सगणाय ससूनवे।।

प्रधानपुरुषेशाय सर्गस्थितत्यन्तहेतवे ।। १ ।।

ऋषय ऊचुः ।।

श्रुतोमासंहिता रम्या नानाख्यानसमन्विता ।।

कैलाससंहिताम्ब्रूहि शिवतत्त्वविवर्द्धिनीम्।।२ ।।

व्यास उवाच ।। ।।

शृणुत प्रीतितो वत्साः कैलासाख्यां हि संहिताम् ।।

शिवतत्त्वपरान्दिव्यां वक्ष्ये वः स्नेहतः पराम्।।३।।

हिमवच्छिखरे पूर्व्वं तपस्यन्तो महौजसः ।।

वाराणसीङ्गन्तुकामा मुनयः कृतसम्विदः ।। ४ ।।

निर्गत्य तस्मात्सम्प्राप्य गिरेः काशीं समाहिताः ।।

स्नातव्यमेवेति तदा ददृशुर्मणिकर्णिकाम्।।५।।

तत्र स्नात्वा सुसन्तप्य देवादीनथ जाह्नवीम् ।।

दृष्ट्वा स्नात्वा मुनीशास्ते विश्वेशं त्रिदशेश्वरम् ।। ६ ।।

नमस्कृत्याथ सम्पूज्य भक्त्या परमयान्विताः ।।

शतरुद्रादिभिः स्तुत्वा स्तुतिभिर्व्वेदपारगाः ।।७।।

आत्मानं मेनिरे सर्वे कृतार्था वयमित्युत ।।

शिवप्रीत्या सुपूर्णार्थाश्शिवभक्तिरतास्सदा।।८।।

तस्मिन्नवसरे सूतं पञ्चक्रोशदिदृक्षया ।।

गत्वा समागतं वीक्ष्य मुदा ते तं ववन्दिरे।।।।।

सोपि विश्वेश्वरं साक्षाद्देवदेवमुमापतिम् ।।

नमस्कृत्याथ तैस्साकम्मुक्तिमण्डपमाविशत् ।।6.1.१०।।

तत्रासीनम्महात्मानं सूतम्पौराणिकोत्तमम् ।।

अर्घ्यादिभिस्तदा सर्व्वे मुनयस्समुपाचरन् ।।११।।

ततः सूतः प्रसन्नात्मा मुनीनालोक्य सुव्रतान् ।।

पप्रच्छ कुशलान्तेपि प्रोचुः कुशलमात्मनः।।१२।।

ते तु संहृष्टहृदयं ज्ञात्वा तं वै मुनीश्वराः ।।

प्रणवार्थावगत्यर्थमूचुः प्रास्ताविकं वचः ।।१३।।

मुनय ऊचुः ।।

व्यासशिष्य महाभाग सूत पौराणिकोत्तम।।

धन्यस्त्वं शिवभक्तो हि सर्वविज्ञान सागरः ।।१४।।

भवन्तमेव भगवान्व्यासस्सर्वजगद्गुरुः ।।

अभिषिच्य पुराणानां गुरुत्वे समयोजयत्।।१५।।

तस्मात्पौराणिकी विद्या भवतो हृदि संस्थिता।।

पुराणानि च सर्वाणि वेदार्थम्प्रवदन्ति हि ।।१६।।

वेदाः प्रणवसम्भूताः प्रणवार्थो महेश्वरः।।

अतो महेश्वरस्थानं त्वयि धिष्ण्यम्प्रतिष्ठितम् ।।१७।।

त्वन्मुखाब्जपरिस्यन्दन्मकरंदे मनोहरम् ।।

प्रणवार्थामृतं पीत्वा भविष्यामो गतज्वराः ।। १८ ।।

विशेषतो गुरुस्त्वं हि नान्योऽस्माकं महामते।।

परं भावं महेशस्य परया कृपया वद।।१९।।

इति तेषां वचः श्रुत्वा सूतो व्यासप्रियस्सुधीः।।

गणेशं षण्मुखं साक्षान्महेशानं महेश्वरीम् ।।6.1.२०।।

शिलादतनयं देवं नन्दीशं सुयशापतिम् ।।

सनत्कुमारं व्यासं च प्रणिपत्येदमब्रवीत्।।२१।।

सूत उवाच।।

साधुसाधु महाभागा मुनयः क्षीणकल्मषाः।।

मतिर्दृढतरा जाता दुर्लभा सापि दुष्कृताम्।।२२।।

पाराशर्येण गुरुणा नैमिषारण्यवासिनाम्।।

मुनीनामुपदिष्टं यद्वक्ष्ये तन्मुनिपुंगवाः।।२३।।

यस्य श्रवणमात्रेण शिवभक्तिर्भवेन्नृणाम्।।

सावधाना भवन्तोद्य शृण्वन्तु परया मुदा।।२४।।

स्वारोचिषेन्तरे पूर्वं तपस्यंतो दृढव्रताः।।

ऋषयो नैमिषारण्ये सर्वसिद्धनिषेविते।।२५।।

दीर्घसत्रं वितन्वन्तो रुद्रमध्वरनायकम् ।।

प्रीणयन्तः परं भावमैश्वर्य्यं ज्ञातुमिच्छवः।।२६।।

निवसन्ति स्म ते सर्वे व्यासदर्शनकांक्षिणः ।।

शिवभक्तिरता नित्यं भस्मरुद्राक्षधारिणः ।। २७ ।।

तेषां भावं समालोक्य भगवान्बादरायणः ।।

प्रादुर्बभूव सर्वात्मा पराशरतपःफलम् ।। २८ ।।

तं दृष्ट्वा मुनयस्सर्वे प्रहृष्टवदनेक्षणाः ।।

अभ्युत्थानादिभिस्सर्वैरुपचारैरुपाचरन् ।। २९ ।।

सत्कृत्य प्रददुस्तस्मै सौवर्णं विष्टरं शुभम् ।।

सुखोपविष्टः स तदा तस्मिन्सौवर्णविष्टरे ।।

प्राह गंभीरया वाचा पाराशर्य्यो महामुनिः ।। 6.1.३० ।।

व्यास उवाच ।।

कुशलं किं नु युष्माकम्प्रब्रूतास्मिन्महामखे ।।

अर्चितं किं नु युष्माभिस्सम्यगध्वरनायकः ।।३१।।

किमर्थमत्र युष्माभिरध्वरे परमेश्वरः।।

स्वर्चितो भक्तिभावेन साम्बस्संसारमोचकः ।।३२।।

युष्मत्प्रवृत्तिर्मे भाति शुश्रूषा पूर्वमेव हि ।।

परभावे महेशस्य मुक्तिहेतोश्शिवस्य च ।। ३३ ।।

एवमुक्ता मुनीन्द्रेण व्यासेनामिततेजसा ।।

मुनयो नैमिषारण्यवासिनः परमौजसः ।। ३४ ।।

प्रणिपत्य महात्मानं पाराशशर्य्यं महामुनिम् ।।

शिवानुरागसंहृष्टमानसं च तमब्रुवन् ।।३५।।

मुनय ऊचुः ।। ।।

भगवन्मुनिशार्दूल साक्षान्नारायणांशज।।

कृपानिधे महाप्राज्ञ सर्वविद्याधिप प्रभो ।। ३६ ।।

त्वं हि सर्वजगद्धर्तुर्महा देवस्य वेधसः ।।

साम्बस्य सगणस्यास्य प्रसादानां निधिस्स्वयम् ।। ३७ ।।

त्वत्पादाब्जरसास्वादमधुपायितमानसाः ।।
कृतार्था वयमद्यैव भवत्पादाब्जदर्शनात् ।। ३८ ।।
त्वदीयचरणाम्भोजदर्शनं खलु पापिनाम् ।।
दुर्लभं लब्धमस्माभिस्त्वस्मात्सुकृतिनो वयम् ।। ३९ ।।
अस्मिन्देशे महाभाग नैमिषारण्यसंज्ञके ।।
दीर्घसत्रान्वितास्सर्वे प्रणवार्थप्रकाशकाः ।। 6.1.४० ।।
श्रोतव्यः परमेशान इति कृत्वा विनिश्चिताः ।।
परस्परं चिन्तयन्तः परं भावं महेशितु ।। ४१ ।।
अज्ञातवन्त एवैते वयं तस्माद्भवान्प्रभो ।।
छेत्तुमर्हति तान्सर्वान्संशयानल्पचेतसाम् ।। ४२ ।।
त्वदन्यः संशयस्यास्यच्छेत्ता न हि जगत्त्रये ।।
तस्मादपारगंभीरव्यामोहाब्धौ निमज्जतः ।।४३।।
तारयस्व शिवज्ञानपोतेनास्मान्दयानिधे।।
शिवसद्भक्तितत्त्वार्थं ज्ञातुं श्रद्धालवो वयम् ।। ४४ ।।
एवमभ्यर्थितस्त मुनिभिर्वेदपारगैः ।।
सर्ववेदार्थविन्मुख्यः शुकतातो महामुनिः ।।
वेदान्तसारसर्वस्वं प्रणवं परमेश्वरम् ।। ४५ ।।
ध्यात्वा हृत्कर्णिकामध्ये साम्बं संसारमोचकम् ।।
प्रहृष्टमानसो भूत्वा व्याजहार महामुनि ।। ४६ ।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां व्यासशौनकादिसंवादो नाम प्रथमोऽध्यायः। । १ ।।

व्यास उवाच ।।
साधु पृष्टमिदं विप्रा भवद्भिर्भाग्यवत्तमैः ।।
दुर्लभं हि शिवज्ञानं प्रणवार्थप्रकाशकम् ।। १ ।।
येषां प्रसन्नो भगवान्साक्षाच्छूलवरायुधः ।।
तेषामेव शिवज्ञानं प्रणवार्थप्रकाशकम ।। २ ।।
जायते न हि सन्देहो नेतरेषामिति श्रुतिः ।।।
शिवभक्तिविहीनानामिति तत्त्वार्थनिश्चयः ।। ३ ।।
दीर्घसत्रेण युष्माभिर्भगवानम्बिकापतिः ।।
उपासित इतीदं मे दृष्टमद्य विनिश्चितम् ।।४।।
तस्माद्वक्ष्यामि युष्माकमितिहासम्पुरातनम् ।।
उमामहेशसम्वादरूपमद्भुतमास्तिकाः ।।५।।
पुराखिलजगन्माता सती दाक्षायणी तनुम् ।।
शिवनिन्दाप्रसङ्गेन त्यक्त्वा च जनकाध्वरे ।।६।।
ततः प्रभावात्सा देवी सुताऽभूद्धिमवद्गिरेः ।।
शिवार्थमतपत्सा वै नारदस्योपदेशतः ।।७।।
तस्मिन्भूधरवर्य्ये तु स्वयंवरविधानतः।।
देवेशे च कृतोद्वाहे पार्वती सुखमाप सा ।।८।।
तथैकस्मिन्महादेवी समये पतिना सह ।।
सूपविष्टा महाशैले गौरी देवमभाषत।।९।।
महादेव्युवाच ।।
भगवन्परमेशान पञ्चकृत्यविधायक ।।
सर्वज्ञ भक्तिसुलभ परमामृतविग्रह ।। 6.2.१० ।।
दाक्षायणीन्तनुं त्यक्त्वा तव निन्दाप्रसंगतः ।।
आसमद्य महेशान पुत्री हिमवतो गिरेः।।।
कृपया परमेशान मंत्रदीक्षाविधानतः ।।
मां विशुद्धात्मतत्त्वस्थां कुरु नित्यं महेश्वर ।।१२।।
इति सम्प्राथितो देव्या देवः शीतांशु भूषणः ।।
प्रत्युवाच ततो देवीं प्रहृष्टेनान्तरात्मना ।।१३।।
महादेव उवाच ।।
धन्या त्वं देवदेवशि यदि जातेदृशी मतिः ।।
कैलास शिखरं गत्वा करिष्ये त्वां च तादृशीम् ।। १४ ।।
ततो हिमवतो गत्वा कैलासम्भूधरेश्वरम्।।
जगौ दीक्षाविधानेन प्रणवादीन्मनून् क्रमात् ।। १५ ।।

उक्त्वा मंत्रांश्च तान्देवीं कृत्वा शुद्धात्मनि स्थिताम् ।।
सार्द्धं देव्या महादेवो देवोद्यानं गतोऽभवत् ।। १६ ।।
ततः सुमालिनीमुख्यैर्देव्याः प्रियसखीजनैः।।
समाहृतैः प्रफुल्लैस्तैः पुष्पैः कल्पतरूद्भवैः।।१७।।
अलंकृत्य महादेवीं स्वांकमारोप्य शंकरः।।
प्रहृष्टवदनस्तस्थौ विलोक्य च तदाननम् ।। १८ ।।
ततः प्रियकथा जाताः पार्वतीपरमेशयोः ।।
हिताय सर्वलोकानां साक्षाच्छ्रुत्यर्थं सम्मिता ।।१९।।
तदा सर्वजगन्माता भर्तुरंकं समाश्रिता ।।
विलोक्य वदनं भर्तुरिदमाहः तपोधनाः ।।6.2.२० ।।
।। श्रीदेव्युवाच ।।
उपदिष्टास्त्वया देव मंत्रास्सप्रणवा मताः ।।
तत्रादौ श्रोतुमिच्छामि प्रणवार्थं विनिश्चितम् ।।२३।।
कथम्प्रणव उत्पन्नः कथं प्रणव उच्यते ।।
मात्राः कति समाख्याताः कथं वेदादिरुच्यते ।।२२।।
देवताः कति च प्रोक्ताः कथं वेदादिभावना।।
क्रियाः कतिविधाः प्रोक्ता व्याप्यव्यापकता कथम्।।२३।।
ब्रह्माणि पंच मंत्रेऽस्मिन्कथं तिष्ठंत्यनुक्रमात्।।
कलाः कति समाख्याताः प्रपंचात्मकता कथम् ।।।२४।।
वाच्यवाचकसम्बन्धस्थानानि च कथं शिव ।।
कोऽत्राधिकारी विज्ञेयो विषयः क उदाहृतः ।।२५।।
सम्बन्धः कोत्र विज्ञेयः किंप्रयोजनमुच्यते ।।
उपासकस्तु किंरूपः किं वा स्थानमुपासनम् ।।२६।।
उपास्यं वस्तु किंरूपं किं वा फलमुपासितुः ।।
अनुष्ठान विधिः कोवा पूजास्थानं च किं प्रभो ।। २७ ।।
पूजायां मण्डलं किं वा किं वा ऋष्यादिकं हर ।।
न्यासजातविधिः को वा को वा पूजाविधिक्रमः ।। २८ ।।
एतत्सर्वं महेशान समाचक्ष्व विशेषतः ।।
श्रोतुमिच्छामि तत्त्वेन यद्यस्ति मयि ते कृपा ।। २९ ।।
इति देव्या समापृष्टो भगवानिन्दुभूषणः ।।
सम्प्रशस्य महेशानीं वक्तुं समुपचक्रमे ।। 6.2.३० ।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलास संहितायां देवीदेवसंवादे देवीकृतप्रश्नवर्णनं नाम द्वितीयोऽध्यायः ।। २ ।।

।। ईश्वर उवाच ।।
शृणु देवि प्रवक्ष्यामि यन्मां त्वम्परि पृच्छसि ।।
तस्य श्रवणमात्रेण जीवस्साक्षाच्छिवो भवेत् ।। १ ।।
प्रणवार्थपरिज्ञानमेव ज्ञानं मदात्मकम् ।।
बीजन्तत्सर्वविद्यानां मंत्र म्प्रणवनामकम् ।। २ ।।
अतिसूक्ष्मं महार्थं च ज्ञेयं तद्वटबीजवत् ।।
वेदादि वेदसारं च मद्रूपं च विशेषतः ।। ३ ।।
देवो गुणत्रयातीतः सर्वज्ञः सर्वकृत्प्रभुः ।।
ओमित्येकाक्षरे मंत्रे स्थितोहं सर्वगश्शिवः ।।४।।
यदस्ति वस्तु तत्सर्वं गुणप्राधान्ययोगतः ।।
समस्तं व्यस्त मपि च प्रणवार्थं प्रचक्षते।।५।।
सर्वार्थसाधकं तस्मादेकं ब्रह्मैतदक्षरम् ।।
तेनोमिति जगत्कृस्नं कुरुते प्रथमं शिवः।।६।।
शिवो वा प्रणवो ह्येष प्रणवो वा शिवः स्मृतः ।।
वाच्यवाचकयोर्भेदो नात्यंतं विद्यते यतः ।।७।।
तस्मादेकाक्षरं देवं मां च ब्रह्मर्षयो विदुः ।।
वाच्यवाचकयोरैक्यं मन्यमाना विपश्चितः ।। ८ ।।
अतस्तदेव जानीयात्प्रणवं सर्वकारणम् ।।
निर्विकारी मुमुक्षुर्मां निर्गुणं परमेश्वरम्।।९।।
एनमेव हि देवेशि सर्वमंत्रशिरोमणिम् ।।
काश्यामहं प्रदास्यामि जीवानां मुक्तिहेतवे ।। 6.3.१० ।।
तत्रादौ सम्प्रवक्ष्यामि प्रणवोद्धारम म्बिके ।।
यस्य विज्ञानमात्रेण सिद्धिश्च परमा भवेत् ।।११।।
निवृत्तिमुद्धरेत्पूर्वमिन्धनं च ततः परम् ।।
कालं समुद्धरेत्पश्चाद्दंडमी श्वरमेव च ।। १२ ।।
वर्णपंचकरूपोयमेवं प्रणव उद्धृतः ।।
त्रिमात्रबिन्दुनादात्मा मुक्तिदो जपतां सदा ।। १३ ।।
ब्रह्मादिस्थावरान्तानां सर्वेषां प्राणिनां खलु ।।
प्राणः प्रणव एवायं तस्मात्प्रणव ईरितः ।। १४ ।।
आद्यम्वर्णमकारं च उकारमुत्तरे ततः ।।
मकारं मध्यतश्चैव नादांतं तस्य चोमिति ।। १५ ।।
जलवद्वर्णमाद्यन्तु दक्षिणे चोत्तरे तथा ।।
मध्ये मकारं शुचिवदोंकारे मुनिसत्तम ।। ।। १६ ।।

अकारश्चाप्युकारोयं मकाराश्च त्रयं क्रमात् ।।
तिस्रो मात्रास्समाख्याता अर्द्धमात्रा ततः परम् ।। १७ ।।
अर्द्धमात्रा महेशानि बिन्दुनादस्वरूपिणी ।।
वर्णनीया न वै चाद्धा ज्ञेया ज्ञानिभिरेव सा ।। १८ ।।
ईशानस्सर्वविद्यानामित्यद्याश्श्रुतयः प्रिये ।।
मत्त एव भवन्तीति वेदास्सत्यम्वदन्ति हि।।१९।।
तस्माद्वेदादिरेवाहं प्रणवो मम वाचकः।।
वाचकत्वान्ममैषोऽपि वेदादिरिति कथ्यते ।।6.3.२०।।
अकारस्तु महद्बीजं रजस्स्रष्टा चतुर्मुखः।।
उकारः प्रकृतिर्योनिस्सत्त्वं पालयिता हरिः।।२१।।
मकारः पुरुषो बीजी तमस्संहारको हरः ।।
बिन्दुर्महेश्वरो देवस्तिरो भाव उदाहृतः ।।२२।।
नादस्सदाशिवः प्रोक्तस्सर्वानुग्रहकारकः।।
नादमूर्द्धनि संचिन्त्य परात्परतरः शिवः ।।२३।।
स सर्वज्ञः सर्वकर्त्ता सर्वेशो निर्मलोऽव्ययः ।।
अनिर्देश्यः परब्रह्म साक्षात्सदसतः परः।।२४।।
अकारादिषु वर्णेषु व्यापकं चोत्तरोत्तरम् ।।
व्याप्यन्त्वधस्तनं वर्णमेवं सर्वत्र भावयेत् ।।२९।।
सद्यादीशानपर्य्यंतान्यकारादिषु पंचसु ।।
स्थितानि पंच ब्रह्माणि तानि मन्मूर्त्तयः क्रमात् ।।२६।।
अष्टौ कलास्समाख्याता अकारे सद्यजाश्शिवे ।।
उकारे वामरूपिण्यस्त्रयोदश समीरिताः ।।२७।।
अष्टावघोररूपिण्यो मकारे संस्थिताः कलाः ।।
बिन्दौ चतस्रस्संभूताः कलाः पुरुषगोचराः ।। २८ ।।
नादे पंच समाख्याताः कला ईशानसंभवाः ।।
षड्विधैक्यानुसंधानात्प्रपंचात्मकतोच्यते ।।२९।।
मन्त्रो यन्त्रं देवता च प्रपंचो गुरुरेव च ।।
शिष्यश्च षट्पदार्था नामेषामर्थं शृणु प्रिये ।। 6.3.३० ।।
पंचवर्णसमष्टिः स्यान्मन्त्रः पूर्वमुदाहतः ।।
स एव यंत्रतां प्राप्तो वक्ष्ये तन्मण्डलक्रमम् ।। ३१ ।।
यन्त्रं तु देवतारूपं देवता विश्वरूपिणी ।।
विश्वरूपो गुरुः प्रोक्तश्शिष्यो गुरुवपुस्त्वतः ।। ३२ ।।
ओमितीदं सर्वमिति सर्वं ब्रह्मेति च श्रुतेः ।।

वाच्यवाचकसम्बन्धोप्ययमेवार्थ ईरितः ।।३३।।
आधारो मणिपूरश्च हृदयं तु ततः परम् ।।
विशुद्धिराज्ञा च ततः शक्तिः शान्तिरिति क्रमात् ।।३४।।
स्थानान्येतानि देवेशि शान्त्यतीतं परात्परम् ।।
अधिकारी भवेद्यस्य वैराग्यं जायते दृढम् ।। ३५ ।।
विषयः स्यामहं देवि जीवब्रह्मैक्यभावनात् ।।
सम्बन्धं शृणु देवेशि विषयः सम्यगीरितः ।।३६।।
जीवात्मनोर्मया सार्द्धमैक्यस्य प्रणवस्य च ।।
वाच्यवाचकभावोत्र सम्वन्धस्समुदीरितः।।३७।।
व्रतादिनिरतः शान्तस्तपस्वी विजितेन्द्रियः ।।
शौचाचारसमायुक्तो भूदेवो वेदनिष्ठितः ।।३८।।
विषयेषु विरक्तः सन्नैहिकामुष्मिकेषु च ।।
देवानां ब्राह्मणोऽपीह लोकजेषु शिवव्रती ।। ३९ ।।
सर्वशास्त्रार्थ तत्त्वज्ञं वेदान्तज्ञानपारगम् ।।
आचार्य्यमुपसंगम्य यतिं मतिमतां वरम् ।। 6.3.४० ।।
दीर्घदण्डप्रणामाद्यैस्तोषयेद्यत्नतस्सुधीः ।।
शान्त्यादिगुणसंयुक्तः शिष्यस्सौशील्यवान्वरः ।।४१।।
यो गुरुः स शिवः प्रोक्तो यश्शिवस्स गुरुः स्मृतः ।।
इति निश्चित्य मनसा स्वविचारं निवेदयेत् ।।४२।।
लब्धानुज्ञस्तु गुरुणा द्वादशाहं पयोवती ।।
समुद्रतीरे नद्यां च पर्वते वा शिवालये ।। ४३ ।।
शुक्लपक्षे तु पंचम्यामेकादश्यां तथापि वा ।।
प्रातः स्नात्वा तु शुद्धात्मा कृतनित्य क्रियस्सुधीः ।।४४।।
गुरुमाहूय विधिना नान्दीश्राद्धं विधाय च ।।
क्षौरं च कारयित्वाथ कक्षोपस्थविवर्जितम् ।।४५।।
केशश्मश्रुनखानां वै स्नात्वा नियतमानसः ।।
सक्तुं प्राश्याथ सायाह्ने स्नात्वा सन्ध्यामुपास्य च ।। ४६ ।।
सायमौपासनं कृत्वा गुरुणा सहितो द्विजः ।।
शास्त्रोक्तदक्षिणान्दत्त्वा शिवाय गुरुरूपिणे ।। ४७ ।।
होमद्रव्याणि संपाद्य स्वसूत्रोक्तविधानतः ।।
अग्निमाधाय विधिवल्लौकिकादिविभेदतः ।।४८।।
आहिताग्निस्तु यः कुर्यात्प्राजापत्ये ष्टिनाहिते ।।
श्रौते वैश्वानरे सम्यक् सर्ववेदसदक्षिणम् ।। ४९ ।।

अथाग्निमात्मन्यारोप्य ब्राह्मणः प्रव्रजेद्गृहात् ।।
श्रपयित्वा चरुं तस्मिन्समिदन्नाज्यभेदतः ।।6.3.५०।।
पौरुषेणैव सूक्तेन हुत्वा प्रत्यृचमात्मवान् ।।
हुत्वा च सौविष्टकृतीं स्वसूत्रोक्तविधानतः ।। ५१ ।।
हुत्वोपरिष्टात्तन्त्रं च तेनाग्नेरुत्तरे बुधः ।।
स्थित्वासने जपेन्मौनी चैलाजिनकुशोत्तरे ।।
यावद्ब्राह्ममुहूर्त्तं तु गायत्रीं दृढमानसः ।।५२।।
ततः स्नात्वा यथा पूर्वं श्रपयित्वा चरुं ततः ।।
पौरुषं सूक्तमारभ्य विरजान्तं हुनेद्बुधः ।। ५३ ।।
वामदेवमतेनापि शौनकादिमतेन वा ।।
तत्र मुख्यं वामदेव्यं गर्भयुक्तो यतो मुनिः ।।५४।।
होमशेषं समाप्याथ हुनेत् ।।
ततोग्निमात्मन्यारोप्य प्रातस्सन्ध्यमुपास्य च ।। ५५ ।।
सवितर्युदिते पश्चात्सावित्रीं प्राविशेत्क्रमात् ।।
एषणानां त्रयं त्यक्त्वा प्रेषमुच्चार्य च क्रमात् ।।५६ ।।
शिखोपवीते संत्यज्य कटिसूत्रादिकं ततः ।।
विसृज्य प्राङ्मुखो गच्छेदुत्तराशामुखोपि वा ।। ५७ ।।
गृह्णीयाद्दण्डकौपीनाद्युचितं लोकवर्तने ।।
विरक्तश्चेन गृह्णीयाल्लोकवृत्तिविचारणे ।। ५८ ।।
गुरोः समीपं गत्वाथ दण्डवत्प्रणमेत्त्रयम् ।।
समुत्थाय ततस्तिष्ठेद्गुरुपादसमीपतः ।। ५९ ।।
ततो गुरुः समादाय विरजानलजं शितम् ।।
भस्म तेनैव तं शिष्यं समुद्धृत्य यथाविधि ।। 6.3.६० ।।
अग्निरित्यादिभिर्मन्त्रैस्त्रिपुण्ड्रं धारयेत्ततः ।।
हृत्पंकजे समासीनं मां त्वया सह चिन्तयेत् ।। ६१ ।।
हस्तं निधाय शिरसि शिष्यस्य प्रीतमानसः ।।
ऋष्यादिसहितं तस्य दक्षकर्णे समुच्चरेत् ।। ६२।।
प्रणवं त्रिःप्रकारं तु ततस्तस्यार्थमादिशेत् ।।
षड्विधार्थं परिज्ञानसहितं गुरुसत्तमः ।।६३।।
द्विषट्प्रकारं स गुरुं प्रणम्य भुवि दण्डवत् ।।
तदधीनो भवेन्नित्यं वेदान्तं सम्यगभ्यसेत् ।।६४।।
मामेव चिंतयेन्नित्यं परमात्मानमात्मनि।।
विशुद्धे निर्विकारे वै ब्रह्मसाक्षिणमव्ययम् ।।६५।।

शमादिधर्मनिरतो वेदान्तज्ञानपारगः ।।
अत्राधिकारी स प्रोक्तो यतिर्विगतमत्सरः ।।६६।।
हृत्पुण्डरीकं विरजं विशोकं विशदम्परम् ।।
अष्टपत्रं केशराढ्यं कर्णिकोपरि शो भितम् ।।६७।।
आधारशक्तिमारभ्य त्रितत्वांतमयं पदम् ।।
विचिन्त्य मध्यतस्तस्य दहरं व्योम भावयेत् ।। ६८
ओमित्येकाक्षरं ब्रह्म व्याहरन्मां त्वया सह ।।
चिंतयेन्मध्यतस्तस्य नित्यमुद्युक्तमानसः ।। ६९ ।।
एवंविधोपासकस्य मल्लोकगतिमेव च ।।
मत्तो विज्ञानमासाद्य मत्सायुज्यफलं प्रिये ।। 6.3.७० ।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां संन्यासपद्धतिवर्णनं नाम तृतीयोऽध्यायः।।

ईश्वर उवाच ।।
अतः परं प्रवक्ष्यामि संन्यासाह्निककर्म च ।।
तव स्नेहान्महादेवि संप्रदायानुरोधतः ।।१।।
ब्राह्मे मुहूर्त्ते उत्थाय शिरसि श्वेतपंकजे ।।
सहस्रारे समासीनं गुरुं संचिंतयेद्यतिः ।। २ ।।
शुद्धस्फटिकसंकाशं द्विनेत्रं वरदाभये ।।
दधानं शिवसद्भावमेवात्मनि मनोहरम् ।।३।।
भावोपनीतैः संपूज्य गन्धादिभिरनुक्रमात् ।।
बद्धांजलिपुटो भूत्वा नमस्कुर्याद्गुरुं ततः ।।४।।
प्रातःप्रभृति सायान्ते सायादिप्रातरं ततः ।।
यत्करोमि महादेव तदस्तु तव पूजनम् ।।५।।
प्रतिविज्ञाप्य गुरवे लब्धानुज्ञस्ततो गुरोः ।।
निरुद्धप्राण आसीनो विजितात्मा जितेन्द्रियः ।।६।।
मूलादिब्रह्मरंध्रांतं षट्चक्रं परिचिंतयेत् ।।
विद्युत्कोटिसमप्रख्यं सर्वतेजोमयं परम् ।।७।।
तन्मध्ये चिंतयेन्मां च सच्चिदानन्दविग्रहम् ।।
निर्गुणं परमं ब्रह्म सदाशिवमनामयम् ।। ८ ।।
सोहमस्मीति मतिमान्म दैक्यमनुभूय च ।।
बहिर्निर्गत्य च ततो दूरं गच्छेद्यथासुखम् ।। ९ ।।
वस्त्रेणाच्छाद्य मतिमाञ्छिरो नासिकया सह।।
विशोध्य देहं वि धिवत्तृणमाधाय भूतले ।।6.4.१०।।
गृहीतशिश्न उत्थाय ततो गच्छेज्जलाशयम् ।।
उद्धृत्य वार्यथान्यायं शौचं कुर्यादतन्द्रितः ।। ११ ।।
हस्तौ पादौ च संशोध्य द्विराचम्योमिति स्मरन् ।।
उत्तराभिमुखो मौनी दन्तधावनमाचरेत्।।१२।।
तृणपर्णैः सदा कुर्यादमामेकादशी विना ।।
अपां द्वादशगण्डूषैर्मुखं संशोधयेत्ततः ।। १३ ।।
द्विराचम्य मृदा तोयैः कटिशौचं विधाय च ।।
अरुणोदयकाले तु स्नानं कुर्यान्मृदा सह ।। १४ ।।
गुरुं संस्मृत्य मां चैव स्नानसंध्याद्यमाचरेत् ।।
विस्तारभयतो नोक्तमत्र द्रष्टव्यमन्यतः ।। १५ ।।
आबध्य शंखमुद्रां च प्रणवेनाभिषेचयेत् ।।
शिरसि द्वादशावृत्त्या तदर्धं वा तदर्धकम् ।। १६ ।।

तीरमागत्य कौपीनं प्रक्षाल्याचम्य च द्विधा ।।
प्रोक्षयेत्प्रणवेनैव वस्त्रमंगोपमार्जनम् ।। १७ ।।
मुखम्प्रथमतो मृज्य शिर आरभ्य सर्वतः ।।
तेनैव मार्जयेद्देहं स्थित्वा च गुरुसन्निधौ ।। १८ ।।
आबध्याद्वामतः शुद्धं कौपीनं च सडोरकम् ।।
ततः संधारयेद्भस्म तद्विधिः प्रोच्यतेऽद्रिजे ।।१९।।
द्विराचम्य समादाय भस्म सद्यादिमंत्रतः ।।
अग्निरित्यादिभिर्मंत्रैरभिमंत्र्य स्पृशेत्तनुम् ।।6.4.२०।।
आपोवेत्यभिमंत्र्याथ जलं तेनैव सेचयेत् ।।
ओमापोज्योतिरित्युक्त्वा मानस्तोकेति मंत्रतः।।२१।।
समद्य कमलद्वन्द्वं कुर्या केकं तु पंचधा।।
शिरोवदनहृद्गुह्यपादेषु परमेश्वरि।।२२।।
ईशानादिसमारभ्य सद्यान्तं पंचभिः क्रमात्।।
उद्धूल्य कवलं पश्चात्प्रणवेनाभिषेचयेत्।२३।
सर्वांगं च ततो हस्तौ प्रक्षाल्यान्यत्समाहरेत्
समर्च्य पूर्वत्तत्तु त्रिपुण्ड्रांस्तेन धारयेत्।।२४।।
त्रियायुषैस्त्र्यम्बकैश्च प्रणवेन शिवेन च।।
शिरस्यथ ललाटे च वक्षसि स्कन्ध एव च।।२९।।
नाभौ बाह्वौः संधिषु च पृष्ठ चैव यथाक्रमम् ।।
प्रक्षाल्य हस्तौ च ततो द्विराचम्य यथाविधि ।।२६।।
पंचीकरणमुच्चार्य भावयेत्स्वगुरुं बुधः ।।
वक्ष्यमाणप्रकारेण प्राणायामान्षडाचरेत् ।। २७ ।।
दक्षहस्तेन संगृह्य जलं वामेन पाणिना ।।
समाच्छाद्य द्विषड्वारं प्रणवे नाभिमंत्रयेत् ।। २८ ।।
एवं त्रिवारं संप्रोक्ष्य शिरसि त्रिः पिबेत्ततः ।।
समाहितेन मनसा ध्यायन्नोंकारमीश्वरम्।। २९ ।।
सौरमण्डलमध्यस्थं सर्वतेजोमयं परम् ।।
अष्टबाहुं चतुर्वक्त्रमर्द्धनारीकमद्भुतम् ।।6.4.३०।।
सर्वाश्चर्य्यगुणोपेतं सर्वालंकारशोभितम् ।।
एवं ध्यात्वाथ विधिवद्दद्यादर्घ्यत्रयं ततः ।। ३१ ।।
अष्टोत्तरशतं जप्त्वा द्विषड्वारं तु तर्पयेत् ।।
पुनराचम्य विधिवत्प्राणायामत्रयं चरेत् ।। ३२ ।।
पूजासदनमागच्छेन्मनसा संस्मरञ्च्छिवम्।।

द्वारमासाद्य प्रक्षाल्य पादौ मौनी द्विराचमेत्।।३३।।
प्रविशेद्विधिना तत्र दक्षपादपुरस्स रम्।।
मण्डपान्तस्सुधीस्तत्र मण्डलं रचयेत्क्रमात् ।।३४।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां संन्यासाचारवर्णनंनाम चतुर्थोऽध्यायः ।। ४ ।।

ईश्वर उवाच ।।
परीक्ष्य विधिवद्भूमिं गंधवर्णरसादिभिः ।।
मनोभिलषिते तत्र वितानविततताम्बरे ।। १ ।।
सुप्रलिप्ते महीपृष्ठे दर्पणोदरसन्निभे ।।
अरत्नियुग्ममानेन चतुरस्रं प्रकल्पयेत् ।। २ ।।
तालपत्रं समादाय तत्समायामविस्तरम्।।
तस्मिन्भागान्प्रकुर्वीत त्रयोदशसमां कलाम्।।३।।
तत्पत्रं तत्र निक्षिप्य पश्चिमाभिमुखः स्थितः ।।
तत्पूर्वभागे सुदृढं सूत्रमादाय रंजितम् ।। ४ ।।
प्राक्प्रत्यग्दक्षिणोदक् च चतुर्दिशि निपातयेत् ।।
सूत्राणि देवदेवेशि नवषष्ट्युत्तरं शतम् ।। ५ ।।
कोष्ठानि स्युस्ततस्तस्य मध्यकोष्ठं तु कर्णिका।।
कोष्ठाष्टकं बहिस्तस्य दलाष्टकमिहोच्यते।।६।।
दलानि श्वेतवर्णानि दलाष्टकमिहोच्यते ।। ।।
दलानि श्वेतवर्णात्रि समग्राणि प्रकल्पयेत् ।।
पीतरूपां कर्णिकां च कृत्वा रक्तं च वृत्तकम् ।।७।।
वनभिद्दलदक्षं तु समारभ्य सुरेश्वरि ।।
रक्तकृष्णाः क्रमेणैव दलसन्धीन्विचित्रयेत्।।८।।
कर्णिकायां लिखेद्यंत्रं प्रणवार्थप्रकाशकम् ।।
अधः पीठं समालिख्य श्रीकण्ठं च तदूर्ध्वतः ।। ९ ।।
तदुपर्य्यमरेशं च महाकालं च मध्यतः ।।
तन्मस्तकस्थं दण्डं च तत ईश्वरमालिखेत् ।। 6.5.१० ।।
श्यामेन पीठं पीतेन श्रीकण्ठं च विचित्रयेत् ।।
अमरेशं महाकालं रक्तं कृष्णं च तौ क्रमात् ।। ११ ।।
कुर्यात्सुधूम्रं दण्डं च धवलं चेश्वरं बुधः ।।
एवं यंत्रं समालिख्य रक्तं सद्येन वेष्टयेत् ।।१२।।
तदुत्थेनैव नादेन विद्यादीशानमीश्वरि ।।
तद्वासपंक्तीर्गृहणीयादाग्नेयादिक्रमेण वै ।। १३ ।।
कोष्ठानि कोणभागेषु चत्वार्येतानि सुन्दरि ।।
शुक्लेनापूर्य्य वर्णादि चतुष्कं रक्तधातुभिः ।।१४।।
आपूर्य्य तानि चत्वारि द्वाराणि परिकल्पयेत् ।।
ततस्तत्पार्श्वयोर्द्वंद्वं पीतेनैव प्रपूरयेत् ।। १५ ।।
आग्नेयकोष्ठमध्ये तु पीताभे चतुरस्रके ।।

अष्टपत्रं लिखेत्पद्मं रक्ताभं पीतकर्णिकम् ।। १६ ।।
हकारं विलिखेन्मध्ये विन्दुयुक्तं समाहितः ।।
पद्मस्य नैर्ऋते कोष्ठे चतुरस्रन्तदा लिखेत्।।१७।।
पद्ममष्टदलं रक्तं पीतकिंजल्ककर्णिकम् ।।।
शवर्गस्य तृतीयन्तु षष्ठस्वरसमन्वितम् ।।१८।।
चतुर्दशस्वरोपेतं बिन्दुनादविभूषितम् ।।
एतद्बीजवरं भद्रे पद्ममध्ये समालिखेत्।। ।। १९ ।।
पद्मस्येशानकोष्ठे तु तथा पद्मं समालिखेत् ।।
कवर्गस्य तृतीयं तु पंचमस्वरसंयुतम् ।। 6.5.२० ।।
विलिखेन्मध्यतस्तस्य बिन्दुकण्ठे स्वलंकृतम् ।।
तद्बाह्यपंक्तित्रितये पूर्वादिपरितः क्रमात् ।। २१ ।।
कोष्ठानि पंच गृह्णीयाद्गिरिराजसुते शिवे ।।
मध्ये तु कर्णिकां कुर्यात्पीतां रक्तं च वृत्तकम्।।२२।।
दलानि रक्तवर्णानि कल्पयेत्कल्पवित्तमः।।
दलबाह्ये तु कृष्णेन रंध्राणि परिपूरयेत्।।२३।।
आग्नेयादीनि चत्वारि शुक्लेनैव प्रपूरयेत्।।
पूर्वे षड्बिन्दुसहितं षट्कोणं कृष्णमालिखेत्।।२४।।
रक्तवर्णं दक्षिणतस्त्रिकोणं चोत्तरे ततः।।
श्वेताभमर्द्धचन्द्रं च पीतवर्णं च पश्चिमे ।।२५।।
चतुरस्रं क्रमात्तेषु लिखेद्बीजचतुष्टयम्।।
पूर्वे बिन्दुं समालिख्य शुभ्रं कृष्णं तु दक्षिणे ।।२६।।
उकारमुत्तरे रक्तं मकारं पश्चिमे ततः।।
अकारं पीतमेवं तु कृत्वा वर्णचतुष्टयम्।।२७।।
सर्वोर्द्ध्वपंक्त्यधः पंक्तौ समारभ्य च सुन्दरि।।
पीतं श्वेतं च रक्तं च कृष्णं चेति चतुष्टयम् ।।२८।।
तदधो धवलं श्यामं पीतं रक्तं चतुष्टयम् ।।
अधस्त्रिकोणके रक्तं शुक्लं पीतं वरानने ।।२९।।
एवन्दक्षिणमारभ्य कुर्यात्सोमान्तमीश्वरि।।
तद्बाह्यपंक्तौ पूर्वादिमध्यमान्तं विचित्रयेत् ।।6.5.३०।।
पीतं रक्तं च कृष्णं च श्यामं श्वेतं च पीतकम् ।।
आग्रेय्यादि समारभ्य रक्तं श्यामं सितं प्रिये ।। ३१ ।।
रक्तं कृष्णं च रक्तं च षट्कमेव प्रकीर्तितम् ।।
दक्षिणाद्यं महेशानि पूर्वावधि समीरितम् ।। ३२ ।।

नैर्ऋताद्यन्तु विज्ञेयमाग्नेयावधि चेश्वरि ।।
वारुणं तु समारभ्य दक्षिणावधि चेरितम।।३३।।
वायव्याद्यं महादेवि नैर्ऋतावधि चेरितम् ।।
सोमार्थं परमेशानि वारुणावधि चेरितम् ।।३४।।
ईशानाद्यं तु विज्ञेयं वायव्यावधि चाम्बिके ।।
इत्युक्तो मण्डलविधिर्मया तुभ्यं च पार्वति ।।३५।।
एवं मण्डलमालिख्य नियतात्मा यतिस्स्वतः ।।
सौरपूजां प्रकुर्वीत स हि तद्वस्तुतत्परः ।। ३६ ।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां संन्यासमण्डलविधिवर्णनं नाम पंचमोऽध्यायः ।। ५ ।।

।।ईश्वर उवाच ।।
दक्षिणे मंडलस्याथ वैयाघ्रं चर्मशोभनम्।।
आस्तीर्य्य शुद्धतोयेन प्रोक्षयेदस्त्रमंत्रतः ।।१।।
प्रणवं पूर्वमुद्धृत्य पश्चादाधार मुद्धरेत् ।।
तत्पश्चाच्छक्तिकमलं चतुर्थ्यंतं नमोन्तकम् ।।२।।
मनुमेवं समुच्चार्य स्थित्वा तस्मिन्नुदङ्मुखः ।।
प्राणानायम्य विधिवत्प्र णवोच्चारपूर्वकम् ।।३।।
अग्निरित्यादिभिर्मंत्रैर्भस्म संधारयेत्ततः ।।
शिरसि श्रीगुरुं नत्वा मण्डलं रचयेत्पुनः ।।४।।
त्रिकोणवृत्तं बाह्ये तु चतुरस्रात्मकं क्रमात् ।।
अभ्यर्च्योमिति साधारं स्थाप्य शंखं समर्चयेत् ।।५।।
आपूर्य शुद्धतोयेन प्रणवेन सुगंधिना।।
अभ्यर्च्य गंधपुष्पाद्यैः प्रणवेन च सप्तधा ।। ६ ।।
अभिमंत्र्य ततस्तस्मिन्धेनुमुद्रां प्रदर्शयेत ।।
शंखमुद्रां च तेनैव प्रोक्षयेदस्त्रमंत्रतः ।। ७ ।।
आत्मानं गंधपुष्पादिपूजोपकरणानि च ।।
प्राणायामत्रयं कृत्वा ऋष्यादिकमथाचरेत् ।। ८ ।।
अस्य श्रीसौरमंत्रस्य देवभाग ऋषिस्ततः ।।
छन्दो गायत्रमित्युक्तं देवस्सूर्यो महेश्वरः ।।९।।
देवता स्यात्षडंगानि ह्रामित्यादीनि विन्यसेत् ।।
ततस्संप्रोक्षयेत्पद्ममस्त्रेणाग्नेरगोचरम् ।।6.6.१०।।
तस्मिन्समर्चयेद्विद्वान् प्रभूतां विमलामपि ।।
सारां चाथ समाराध्य पूर्वादिपरतः क्रमात् ।। ११ ।।
अथ कालाग्निरुद्रं च शक्तिमाधारसंज्ञिताम् ।।
अनन्तं पृथिवीं चैव रत्नद्वीपं तथैव च ।। १२ ।।
संकल्पवृक्षोद्यानं च गृहं मणिमयं ततः।।
रक्तपीठं च संपूज्य पादेषु प्रागुपक्रमात् ।।१३।।
धर्मं ज्ञानं च वैराग्यमैश्वर्यं च चतुष्टयम्।।
अधर्माद्यग्निकोणादिकोणेषु च समर्चयेत् ।। १४ ।।
मायाधश्छदनं पश्चाद्विद्योर्ध्वच्छदनं ततः ।।
सत्त्वं रजस्तमश्चैव समभ्यर्च्य यथाक्रमम् ।।१५।।
पूर्वादिदिक्षु मध्ये च दीप्तां सूक्ष्मां जयामपि ।।
भद्रां विभूतिं विमलाममोघां वैद्युतामपि।।१६।।

सर्वतोमुखसंज्ञां च कन्दनालं तथैव च ।।
सुषिरं च ततस्तं तु कंटकांस्तदनंतरम् ।। १७ ।।
मूलच्छदनकिंजल्कप्रकाशसकलात्मनः ।।
पंचग्रंथिकर्णिकां च दलानि तदनंतरम् ।। १८ ।।
केशरान्ब्रह्मविष्णू च रुद्रमात्मानमेव च ।।
अन्तरात्मानमपि च ज्ञानात्मपरमात्मनि ।। १९ ।।
सम्पूज्य पश्चात्सौराख्यं योगपीठं समर्चयेत् ।।
पीठोपरि समाकल्प्य मूर्त्तिं मूलेन मूलवित् ।।6.6.२०।।
निरुद्धप्राण आसीनो मूलेनैव स्वमूलतः ।।
शक्तिमुत्थाप्य तत्तेजः प्रभावात्पिंगलाध्वना ।। २१ ।।
पुष्पांजलौ निर्गमय्य मण्डलस्थस्य भास्वतः ।।
सिन्दूरारुणदेहस्य वामार्द्धदयितस्य च ।। २२ ।।
अक्षस्रक्पाशखट्वांगकपालांकुशपंकजम् ।।
शंखं चक्रं दधानस्य चतुर्वक्त्रस्य लोचनैः ।। २३ ।।
राजितस्य द्वादशभिस्तस्य हृत्पंकजोदरे ।।
प्रणवं पूर्वमुद्धृत्य ह्रांह्रींसस्तदनन्तरम् ।।२४।।
प्रकाशशक्तिसहितं मार्तण्डं च ततः परम् ।।
आवाहयामि नम इत्यावाहया वाहनाख्यया ।।२५।।
मुद्रया स्थापनाद्याश्च मुद्रास्संदर्शयेत्ततः ।।
विन्यस्यांगानि ह्रां ह्रीं ह्रूमंतेन मनुना ततः ।।२६।।
पंचोपचारान्संकल्प्य मूलेनाभ्यर्चयेत्त्रिधा ।।
केशरेषु च पद्मस्य षडंगानि महेश्वरि ।।२७।।
वह्नीशरक्षोवायूनां परितः क्रमतः सुधीः ।।
द्वितीयावरणे पूज्याश्चतस्रो मूर्तयः क्रमात् ।। २८ ।।
पूर्वाद्युत्तरपर्यंतं दलमूलेषु पार्वति ।।
आदित्यो भास्करो भानू रविश्चेत्यनुपूर्वशः ।। २९ ।।
अर्को ब्रह्मा तथा रुद्रो विष्णुश्चेति पुनः प्रिये ।।
ईशानादिषु संपूज्यास्तृतीयावरणे पुनः ।।6.6.३०।।
सोमं कुजं बुधं जीवं कविं मंदं तम स्तमः ।।
समंततो यजेदेतान्पूर्वादिदलमध्यतः ।।३१।।
अथवा द्वादशादित्यान्द्वितीयावरणे यजेत ।।
तृतीयावरणे चैव राशीर्द्वादश पूजयेत् ।।३२।।
सप्तसागरगंगाश्च बहिरस्य समंततः ।।

ऋषीन्देवांश्च गंधर्वान्पन्नगानप्सरोगणान् ।।३३।।
ग्रामण्यश्च तथा यक्षान्यातुधानांस्तथा हयान् ।।
सप्तच्छन्दोमयांश्चैव वालखिल्यांश्च पूजयेत् ।। ३४ ।।
एवं त्र्यावरणं देवं समभ्यर्च्य दिवाकरम् ।।
विरच्य मंडलं पश्चाच्चतुरस्रं समाहितः ।। ३५ ।।
स्थाप्य साधारकं ताम्रपात्रं प्रस्थोदविस्तृतम् ।।
पूरयित्वा जलैः शुद्धैर्वासितैः कुसुमादिभिः ।।३६।।
अभ्यर्च्य गंधपुष्पाद्यैर्जानुभ्यामवनीं गतः ।।
अर्घ्यपात्रं समादाय भूमध्यान्तं समुद्धरेत् ।।३७।।
ततो ब्रूयादिमं मंत्रं सावित्रं सर्वसिद्धिदम् ।।
शृणु तच्च महादेवि भक्तिमुक्तिप्रदं सदा ।।३८।।
सिन्दूरवर्णाय सुमण्डलाय नमोऽस्तु वज्राभरणाय तुभ्यम् ।।
पद्माभनेत्राय सुपंकजाय ब्रह्मेन्द्रनारायणकारणाय ।। ३९ ।।
सरक्तचूर्णं ससुवर्णतोयं स्रक्कुंकुमाढ्यं सकुशं सपुष्पम् ।।
प्रदत्तमादाय सहेमपात्रं प्रशस्तमर्घ्यं भगवन्प्रसीद ।। 6.6.४० ।।
एवमुक्त्वा ततो दत्त्वा तदर्थं सूर्यमूर्तये ।।
नमस्कुर्यादिमं मंत्रं पठित्वा सुसमाहितः ।।४१।।
नमश्शिवाय साम्बाय सगणायादिहेतवे ।।
रुद्राय विष्णवे तुभ्यं ब्रह्मणे च त्रिमूर्तये ।। ४२ ।।
एवमुक्त्वा नमस्कृत्य स्वासने समवस्थितः ।।
ऋष्यादिकं पुनः कृत्वा करं संशोध्य वारिणा ।। ४३ ।।
पुनश्च भस्म संधार्य पूर्वोक्तेनैव वर्त्मना ।।
न्यासजातम्प्रकुर्वीत शिवभावविवृद्ध्धये ।। ४४ ।।
पंचोपचारैस्संपूज्य शिरसा श्रीगुरुम्बुधः ।।
प्रणवं श्रीचतुर्थ्यंतं नमोंतं प्रणमेत्ततः ।। ४५ ।।
पंचात्मकं बिन्दुयुतं पंचमस्वरसंयुतम् ।।
तदेव बिन्दुसहितं पंचमस्वरवर्जितम् ।। ४६ ।।
पंचमस्वरसंयुक्तं मंत्रीशं च सबिन्दुकम् ।।
उद्धृत्य बिन्दुसहितं संवर्तकमथोद्धरेत् ।।४७।।
एतैरेव क्रमाद्बीजैरुद्धृतैः प्रणमेद्बुधः ।।
भुजयोरूरुयुग्मे च गुरुं गणपतिन्तथा।।४८।।
दुर्गां च क्षेत्रपालं च बद्धांजलिपुटः स्थितः ।।
ओमस्त्राय फडित्युक्त्वा करौ संशोध्य षट् क्रमात् ।। ४९ ।।

अपसर्प्पन्त्विति प्रोच्य प्रणवं तदनंतरम् ।।
अस्त्राय फडिति प्रोच्य पार्ष्णिघातत्रयेण तु ।।6.6.५०।।
उद्धृत्य विघ्नान्भूयिष्ठान्कर तालत्रयेण तु ।।
अन्तरिक्षगता न्दृष्ट्वा विलोक्य दिवि संस्थितान् ।। ५१ ।।
निरुद्धप्राण आसीनो हंसमंत्रमनुस्मरन् ।।
हृदिस्थं जीवचैतन्यं ब्रह्मनाड्या समान येत् ।। ५२ ।।
द्वादशांतस्स्थविशदे सहस्रारमहाम्बुजे ।।
चिच्चन्द्रमण्डलान्तस्थं चिद्रूपं परमेश्वरम् ।। ५३ ।।
शोषदाहप्लवान्कुर्याद्रेचकादि क्रमेण तु ।।
सषोडशचतुष्षष्टिद्वात्रिंशद्गणनायुतैः ।। ५४ ।।
वाय्वग्निसलिलाद्यैस्तैस्स्तवेदाद्यैरनुक्रमात् ।।
प्राणानायम्य मूलस्थां कुण्डलीं ब्रह्मरंध्रगाम् ।। ५५ ।।
आनीय द्वादशांतस्थसहस्राराम्बुजोदरे ।।
चिच्चन्द्रमण्डलोद्भूतपरमामृतधारया ।। ५६ ।।
संसिक्तायां तनौ भूयश्शुद्धदेहस्सुभावनः ।।
सोहमित्यवतीर्याथ स्वात्मानं हृदयाम्बुजे ।। ५७ ।।
आत्मन्यावेश्य चात्मानममृतं सृतिधारया ।।
प्राणप्रतिष्ठां विधिवत्कुर्यादत्र समाहितः ।। ५८ ।।
एकाग्रमानसो योगी विमृश्यात्तां च मातृकाम् ।।
पुटितां प्रणवेनाथ न्यसेद्बाह्ये च मातृकाम् ।। ५९ ।।
पुनश्च संयतप्राणः कुर्याद्दृष्ट्यादिकं बुधः ।।
शंकरं संस्मरंश्चित्ते संन्यसेच्च विमत्सरः ।। 6.6.६० ।।
प्रणवस्य ऋषिर्ब्रह्मा देवि गायत्रमीरितम् ।।
छन्दोत्र देवताहं वै परमात्मा सदाशिवः ।। ६१ ।।
अकारो बीजमाख्यातमुकारः शक्तिरुच्यते ।।
मकारः कीलकं प्रोक्तं मोक्षार्थे विनियुज्यते ।।६२।।
अंगुष्ठद्वयमारभ्य तलांतं परिमार्जयेत् ।।
ओमित्युक्त्वाथ देवेशि करन्यासं समारभेत् ।।६३।।
दक्षहस्तस्थितांगुष्ठं समारभ्य यथाक्रमम् ।।
वामहस्तकनिष्ठांतं विन्यसेत्पूर्ववत्क्रमात् ।। ६४ ।।
अकारमप्युकारं च मकारं बिन्दुसंयुतम् ।।
नमोन्तं प्रोच्य सर्वत्र हृदयादौ न्यसेदथ ।। ६५ ।।
अकारं पूर्वमुद्धृत्य ब्रह्मात्मानमथाचरेत् ।।

ङेंतं नमोंतं हृदये विनियुज्यात्तथा पुनः।।६६।।
उकारं विष्णुसहितं शिरोदेशे प्रविन्यसेत्।।
मकारं रुद्रसहितं शिखायान्तु प्रविन्यसेत् ।। ६७ ।।
एवमुक्त्वा मुनिर्मंत्री कवचं नेत्रमस्तके ।।
विन्यसेद्देवदेवेशि सावधानेन चेतसा ।। ६८ ।।
अंगवक्त्रकलाभेदात्पंच ब्रह्माणि विन्यसेत् ।।
शिरोवदनहृदगुह्यपादेष्वेतानि विन्यसेत् ।।६९।।
ईशान्यस्य कलाः पंच पंचस्वेतेषु च क्रमात् ।।
ततश्चतुर्षु वक्त्रेषु पुरुषस्य कला अपि ।।6.6.७०।।
चतस्रः प्रणिधातव्याः पूर्वादिक्रमयोगतः ।।
हृत्कंठांसेषु नाभौ च कुक्षौ पृष्ठे च वक्षसि ।।७१।।
अघोरस्य कलाश्चाष्टौ पूजनीया यथाक्रमम् ।।
पश्चात्त्रयोदशकलाः पायुमेढ्रोरुजानुषु।।७२।।
जंघास्फिक्ककटिपाश्र्वेषु वामदेवस्य भावयेत्।।
सद्यस्यापि कला चाष्टौ नेत्रेषु च यथाक्रमम्।।७३।।
कीर्तितास्ताः कलाश्चैव पादयोरपि हस्तयोः।।
प्राणे शिरसि बाह्वोश्च कल्पयेत्कल्पवित्तमः ।।७४।।
अष्टत्रिंशत्कलान्यासमेवं कृत्वा तु सर्वशः ।।
पश्चात्प्रणवविद्धीमान्प्रणवन्यासमाचरेत्।।
बाहुद्वये कूर्परयोस्तथा च मणिबन्धयोः।।
पार्श्वतोदरजंघेषु पादयोः पृष्ठतस्तथा।।७६।।
इत्थं प्रणवविन्यासं कृत्वा न्यासविचक्षणः।।
हंसन्यासं प्रकुर्वीत परमात्मविबोधिनि ।। ७७ ।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां संन्यासपद्धतौ न्यासवर्णनं नाम षष्ठोऽध्यायः ।। ६ ।।

ईश्वर उवाच ।।
स्ववामे चतुरस्रं तु मण्डलं परिकल्पयेत्।।
ओमित्यभ्यर्च्य तस्मिंस्तु शंखमस्त्रोपशोभितम्।।१।।
स्थाप्य साधारकं तं तु प्रणवेनार्चयेत्ततः ।।
आपूर्य्य शुद्धतोयेन चन्दनादिसुगंधिना ।। २ ।।
अभ्यर्च्य गन्धपुष्पाद्यैः प्रणवेन च सप्तधा ।
अभिमंत्र्य ततस्तस्मिन्धेनुमुद्रां प्रदर्शयेत् ।। ३ ।।
शंखमुद्रां च पुरतश्चतुरस्रं प्रकल्पयेत् ।।
तदन्तरेर्द्धचन्द्रं च त्रिकोणं च तदन्तरे ।। ४ ।।
षट्कोणं वृत्तमेवेदं मण्डलं परिकल्पयेत् ।।
अभ्यर्च्य गंधपुष्पाद्यैः प्रणवेनाथ मध्यतः ।।५।।
साधारमर्घ्यपात्रं च स्थाप्य गंधादिनार्चयेत् ।।
आपूर्य्य शुद्धतोयेन तस्मिन्पात्रे विनिःक्षिपेत् ।। ६ ।।
कुशाग्राण्यक्षताश्चैव यवव्रीहितिलानपि ।।
आज्यसिद्धार्थ पुष्पाणि भसितं च वरानने ।। ७ ।।
सद्योजातादिभिर्मंत्रैः षडंगैः प्रणवेन च ।।
अभ्यर्च्य गंधपुष्पाद्यैरभिमंत्र्य च वर्मणा ।। ८ ।।
अवगुंण्ठ्यास्त्रमंत्रेण संरक्षार्थं प्रदर्शयेत् ।।
धेनुमुद्रां च तेनैव प्रोक्षयेदस्त्रमंत्रतः ।।९।।
स्वात्मानं गंधपुष्पादिपूजोपकरणान्यपि ।।
पद्मस्येशानदिक्पद्मं प्रणवोच्चारपूर्वकम् ।। 6.7.१० ।।
गुर्वासनाय नम इत्यासनं परिकल्पयेत् ।।
गुरोर्मूर्तिं च तत्रैव कल्प येदुपदेशतः ।। ११ ।।
प्रणवं गुं गुरुभ्योन्ते नमः प्रोच्यापि देशिकम् ।।
समावाह्य ततो ध्यायेद्दक्षिणाभिमुखं स्थितम् ।। १२ ।।
सुप्रसन्नमुखं सौम्यं शुद्धस्फटिकनिर्मलम् ।।
वरदाभयहस्तं च द्विनेत्रं शिवविग्रहम् ।। १३ ।।
एवं ध्यात्वा यजेद्गन्धपुष्पादिभिरनुक्रमात् ।।
पद्मस्य नैर्ऋते पद्मे गणपत्यासनोपरि ।।१४।।
मूर्तिम्प्रकल्प्य तत्रैव गणानां त्वेति मंत्रतः ।।
समावाह्य ततो देवं ध्यायेदेका ग्रमानसः ।। १५ ।।
रक्तवर्णं महाकायं सर्वाभरणभूषितम् ।।
पाशांकुशेष्टदशनान्दधानङ्करपङ्कजैः ।। १६ ।।

गजाननम्प्रभुं सर्वविघ्नौघघ्नमुपासितुः ।।
एवन्ध्यात्वा यजेद्गन्धपुष्पाद्यैरुपचारकैः ।। १७ ।।
कदलीनारिकेलाम्रफललड्डुकपूर्वकम् ।।
नैवेद्यं च समर्प्याथ नमस्कुर्याद्गजाननम् ।।१८।।
पद्मस्य वायुदिक्पद्मे संकल्प्य स्कान्दमासनम् ।।
स्कन्दमूर्तिम्प्रकल्प्याथ स्कन्दमावाहयेद्बुधः।।१९।।
उच्चार्य्य स्कन्दगायत्रीं ध्यायेदथ कुमारकम्।।
उद्यदादित्यसंकाशं मयूरवरवाहनम्।।6.7.२०।।
चतुर्भुजमुदाराङ्गं मुकुटादिविभूषितम्।।
वरदाभयहस्तं च शक्तिकुक्कुटधारिणम्।।२१।।
एवन्ध्यात्वाऽथ गंधाद्यैरुपचारैरनुक्रमात्।।
संपूज्य पूर्वद्वारस्य दक्षशाखामुपाश्रितम्।।२२।।
अन्तःपुराधिपं साक्षान्नन्दिनं सम्यगर्चयेत् ।।
चामीकराचलप्रख्यं सर्वाभरणभूषितम् ।।२३।।
बालेन्दुमुकुटं सौम्यं त्रिनेत्रं च चतुर्भुजम् ।।
दीप्तशूलमृगीटंकहेमवेत्रधरं विभुम् ।।२४।।
चन्द्रबिम्बाभवदनं हरिवक्त्रमथापि वा ।।
उत्तरस्यान्तथा तस्य भार्यां च मरुतां सुताम् ।।२५।।
सुयशां सुव्रतामम्बापादमण्डनतत्पराम् ।।
संपूज्य विधिवद्गन्धपुष्पाद्यैरुपचारकैः ।।२६।।
ततस्संप्रोक्षयेत्पद्मं सास्त्रशं खोदबिन्दुभिः ।।
कल्पयेदासनं पश्चादाधारादि यथाक्रमात् ।। २७ ।।
आधारशक्तिं कल्याणीं श्यामां ध्यायेदधो भुवि ।।
तस्याः पुरस्तादुत्कंठमनन्तं कुंडलाकृतिम् ।। २८ ।।
धवलं पंचफणिनं लेलिहानमिवाम्बरम् ।।
तस्योपर्यासनं भद्रं कंठीरवचतुष्पदम् ।। २९ ।।
धर्मो ज्ञानं च वैराग्यमैश्वर्यं च पदानि वै ।।
आग्नेयादिश्वेतपीतरक्तश्यामानि वर्णतः ।। 6.7.३० ।।
अधर्मादीनि पूर्वादीन्युत्तरां तान्यनुक्रमात् ।।
राजावर्तमणिप्रख्यान्यस्य गात्राणि भावयेत् ।।३१।।
अधोर्द्ध्वच्छदनं पश्चात्कंदं नालं च कण्टकान् ।।
दलादिकं कर्णिकाञ्च विभाव्य क्रमशोऽर्चयेत् ।। ३२ ।।
दलेषु सिद्धयश्चाष्टौ केसरेषु च शक्तिकाः ।।

रुद्रा वामादयस्त्वष्टौ पूर्वादिपरितः क्रमात् ।। ३३ ।।
कर्णिकायां च वैराग्यं बीजेषु नव शक्तयः ।।
वामाद्या एव पूर्वादि तदन्तश्च मनोन्मनी ।। ३४ ।।
कन्दे शिवात्मको धर्मो नाले ज्ञानं शिवाश्रयम् ।।
कर्णिकोपरि वाह्नेयं मंडलं सौरमैन्दवम् ।।३५।।
आत्मविद्या शिवाख्यं च तत्त्वत्रयमतः परम् ।।
सर्वासनोपरि सुखं विचित्रकुसुमोज्ज्वलम् ।। ३६ ।।
परव्योमावकाशाख्यं विद्ययातीव भास्वरम् ।।
परिकल्प्यासनं मूर्त्तेः पुष्पविन्यास पूर्वकम् ।।३७।।
आधारशक्तिमारभ्य शुद्धविद्यासनावधि ।।
ॐकारादिचतुर्थ्यंतं नाममन्त्रं नमोन्तकम् ।। ३८ ।।
उच्चार्य पूजयेद्विद्वान्सर्वत्रैवं विधिक्रमः ।।
अङ्गवक्त्रकलाभेदात्पंचब्रह्माणि पूर्ववत् ।। ३९ ।।
विन्यसेत्क्रमशो मूर्त्तौ तत्तन्मुद्राविचक्षणः ।।
आवाहयेत्ततो देवं पुष्पाञ्जलिपुटस्थितः ।। 6.7.४० ।।
सद्योजातम्प्रपद्यामीत्यारभ्योमन्तमुच्चरन् ।।
आधारोत्थितनादं तु द्वादशग्रन्धिभेदतः ।।४१।।
ब्रह्मरन्धांतमुच्चार्य ध्यायेदोंकारगोचरम् ।।
शुद्धस्फटिकसंकाशं देवं निष्कलमक्षरम् ।।४२।।
कारणं सर्वलोकानां सर्वलोकमयं परम् ।।
अन्तर्बहिः स्थितं व्याप्य ह्यणोरल्पं महत्तमम् ।। ४३ ।।
भक्तानामप्रयत्नेन दृश्यमीश्वरमव्ययम् ।।
ब्रह्मेन्द्रविष्णुरुद्राद्यैरपि देवैरगोचरम् ।। ४४ ।।
वेदसारञ्च विद्वद्भिरगोचरमिति श्रुतम् ।।
आविर्मध्यान्तरहितं भेषजं भवरोगिणाम् ।। ४५ ।।
समाहितेन मनसा ध्यात्वैवं परमेश्वरम् ।।
आवाहनं स्थापनं च सन्निरोधं निरीक्षणम् ।।४६।।
नमस्कारं च कुर्वीत बध्वा मुद्राः पृथक्पृथक्।।
ध्यायेत्सदाशिवं साक्षाद्देवं सकलनिष्कलम्।।४७।।
शुद्धस्फटिकसंकाशं प्रसन्नं शीतलद्युतिम्।।
विद्युद्वलयसंकाशं जटामुकुटभूषितम् ।।४८।। ।
शार्दूलचर्मवसनं किंचित्स्मितमुखाम्बुजम्।।
रक्तपद्मदलप्रख्यपाणिपादतलाधरम्।।४९।।

सर्वलक्षणसम्पन्नं सर्वाभरणभूषितम्।।
दिव्या युधकरैर्युक्तं दिव्यगन्धानुलेपनम्।।6.7.५०।।
पञ्चवक्त्रन्दशभुजञ्चन्द्रखण्डशिखामणिम् ।।
अस्य पूर्वमुखं सौम्यं बालार्कसदृशप्रभम्।।५१।। ।।
त्रिलोचनारविन्दाढ्यं बालेन्दुकृतशेखरम्।।
दक्षिणं नीलजीमूतसमानरुचिरप्रभम्।।५२।।
भ्रुकुटीकुटिलं घोरं रक्तवृत्तत्रिलोचनम्।।
दंष्ट्रा करालं दुष्प्रेक्ष्यं स्फुरिताधरपल्लवम्।।५३।।
उत्तरं विद्रुमप्रख्यं नीलालकविभूषितम्।।
सद्विलासन्त्रिनयनं चन्द्रार्द्धकृतशेखरम्।।५४।। ।
पश्चिमम्पूर्णचन्द्राभं लोचनत्रितयोज्ज्वलम्।।
चन्द्रलेखाधरं सौम्यं मन्दस्मितमनोहरम्।।५५।।
पञ्चमं स्फटिकप्रख्यमिन्दुरेखासमुज्ज्वलम्।।
अतीवसौम्यमुत्फुल्ललोचनत्रितयोज्ज्वलम्।।५६।।
दक्षिणे शूलपरशुवज्रखड्गानलोज्ज्वलम् ।। ५७ ।।
पूर्व्वे पिनाकनाराचघण्टा पाशांकुशोज्ज्वलम्।।
निवृत्त्याजानुपर्य्यंतमानाभि च प्रतिष्ठया।।५८।।
आकण्ठं विद्यया तद्वदाललाटं तु शान्तया।।
तदूर्ध्वं शान्त्यतीताख्यकलया परया तथा ।। ५९ ।।
पञ्चाध्वव्यापिनं तस्मात्कलापञ्चकविग्रहम् ।।
ईशानमुकुटं देवम्पुरुषाख्यम्पुरातनम् ।। 6.7.६० ।।
अघोरहृदयं तद्वद्वामगुह्यं महेश्वरम् ।।
सद्योजातं च तन्मूर्तिमष्टत्रिंशत्कलामयम् ।। ६१ ।।
मातृकामयमीशानम्पञ्चब्रह्ममयन्तथा।।
ॐकाराख्यमयं चैव हंसन्यासमयन्तथा ।। ६२ ।।
पञ्चाक्षरमयन्देवं षडक्षरमयन्तथा ।।
अङ्गषट्कमयञ्चैव जातिषट्कसमन्वितम्।।६३।।
एवन्ध्यात्वाथ मद्वामभागे त्वां च मनोन्मनीम्।।
गौरी मिमाय मन्त्रेण प्रणवाद्येन भक्तितः ।।६४।।
आवाह्य पूर्ववत्कुर्यान्नमस्कारांतमी श्वरि ।।
ध्यायेत्ततस्त्वां देवेशि समाहितमना मुनिः ।। ६५ ।।
प्रफुल्लोत्पलपत्राभां विस्तीर्णायतलोचनाम् ।।
पूर्णचन्द्राभवदनान्नील कुंचितमूर्द्धजाम् ।। ६६ ।।

नीलोत्पलदलप्रख्याञ्चन्द्रार्धकृतशेखराम् ।।
अतिवृत्तघनोत्तुंगस्निग्धपीनपयोधराम्।।६७।।
तनुमध्याम्पृथुश्रोणीम्पीतसूक्ष्मतराम्बराम् ।।
सर्वाभरणसम्पन्नां ललाटतिलकोज्ज्वलाम् ।। ६८ ।।
विचित्रपुष्पसंकीर्णकेशपाशोपशोभिताम्।।
सर्वतोऽनुगुणाकारां किंचिल्लज्जानताननाम् ।। ६९ ।।
हेमारविन्दं विलसद्दधानां दक्षिणे करे ।।
चण्डवच्चामरं हस्तं न्यस्यासीनां सुखासने ।। 6.7.७० ।।
एवम्मान्त्वां च देवेशि ध्यात्वा नियतमानसः ।।
स्नापयेच्छंखतोयेन प्रणवप्रोक्षणक्रमात् ।। ७१ ।।
भवे भवे नातिभव इति पाद्यम्प्रकल्पयेत् ।।
वामाय नम इत्युक्त्वा दद्यादाचमनीयकम्।।७२।।
ज्येष्ठाय नम इत्युक्त्वा शुभ्रवस्त्रम्प्रकल्पयेत्।।
श्रेष्ठाय नम इत्युक्त्वा दद्याद्यज्ञोपवीतकम् ।। ७३ ।।
रुद्राय नम इत्युक्त्वा पुनराचमनीयकम् ।।
कालाय नम इत्युक्त्वा गन्धन्दद्यात्सुसंस्कृतम् ।। ७४ ।।
कलाविकरणाय नमोऽक्षतं च परिकल्पयेत् ।।
बलविकरणाय नम इति पुष्पाणि दापयेत् ।। ७५ ।।
बलाय नम इत्युक्त्वा धूपन्दद्यात्प्र यत्नतः ।।
बलप्रमथनायेति सुदीपं चैव दापयेत् ।। ७६ ।।
ब्रह्मभिश्च षडंगैश्च ततो मातृकया सह ।।
प्रणवेन शिवेनैव शक्तियुक्तेन च क्रमात् ।। ७७ ।।
मुद्राः प्रदर्शयेन्मह्यन्तुभ्यञ्च वरवर्णिनि ।।
मयि प्रकल्पयेत्पूर्वमुपचारांस्ततस्त्वयि ।। ७८ ।।
यदा त्वयि प्रकुर्वीत स्त्रीलिंगं योजयेत्तदा ।।
इयानेव हि भेदोऽस्ति नान्यः पार्वति कश्चन ।। ७९ ।।
एवन्ध्यानम्पूजनं च कृत्वा सम्यग्विधानतः ।।
ममावरणपूजां च प्रारभेत विचक्षणः ।।6.7.८०।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाशसंहितायां शिवध्यानपूजनवर्णनं नाम सप्तमोऽध्यायः ।। ७ ।।

ईश्वर उवाच ।।
अत्रास्ति च महादेवि खल्वावरणपंचकम् ।।
पंचावरणपूजान्तु प्रारभेत यथाक्रमम् ।।१।।
प्रथमम्पूजितौ यत्र तत्रैव क्रमशस्सुधीः ।।
गन्धाद्यैरर्चयेत्पूर्वं देवौ हेरंबषण्मुखौ ।। २ ।।
पंच ब्रह्माणि परितो वृत्ते सम्पूजयेत्क्रमात् ।।
ईशानदेशे पूर्वे च दक्षिणे चोत्तरे तथा ।। ३ ।।
पश्चिमे च ततस्तस्मिन्षडंगानि समर्चयेत ।।
आग्नेये च तथैशाने नैर्ऋते वायुदेशके ।। ४ ।।
मध्ये नेत्रन्तद्वदस्त्रम्पूर्वादिपरितः क्रमात् ।।
प्रथमावरणम्प्रोक्तं द्वितीयावरणं शृणु ।। ५ ।।
अनन्तम्पूर्वदिक्पत्रे सूक्ष्मन्दक्षिणतस्तथा ।।
शिवोत्तमं पश्चिमत एकनेत्रन्तथोत्तरे ।। ६ ।।
एकरुद्रन्तथैशाने त्रिमूर्तिं वह्निदिग्दले ।।
श्रीकण्ठं नैर्ऋते वायौ शिखण्डीशं समर्चयेत् ।। ७ ।।
द्वितीयावरणे चैव पूज्यास्ते चक्रवर्तिनः ।।
पूर्वद्वारस्य मध्ये तु वृषेशानम्प्रपूजयेत् ।। ८ ।।
तद्दक्षिणे नन्दिनञ्च महाकालन्तदुत्तरे ।।
भृंगीशन्दक्षिणद्वारपश्चिमे सम्प्रपूजयेत् ।।९।।
तत्पूर्वकोष्ठे गन्धाद्यैस्सम्प्रपूज्य विनायकम् ।।
पश्चिमोत्तरकोष्ठे च वृषभन्दक्षिणे गुहम् ।। 6.8.१० ।।
उत्तरद्वारपूर्वे तु प्रदक्षिणविधानतः ।।
नामाष्टकविधानेन पूजयेदुच्यते हि तत् ।। ११ ।।
भवं शर्वं तथेशानं रुद्रम्पशुपतिम्पुनः ।।
उग्रम्भीमम्महादेवन्तृतीयावरणन्त्विदम् ।। १२ ।।
यो वेदादौ स्वर इति समावाह्य महेश्वरम् ।।
पूजयेत्पूर्वदिग्भागे कमले कर्णिकोपरि ।। १३ ।।
ईश्वरम्पूर्वदिक्पत्रे विश्वेशन्दक्षिणे ततः ।।
सौम्ये तु परमेशानं सर्वेशम्प श्चिमे यजेत् ।। १४ ।।
दक्षिणे तु यजेद्रुद्रमावोराजानमित्यृचा ।।
आवाह्य गन्धपुष्पाद्यैः कर्णिकायान्दलेषु च ।। १५ ।।
शिवः पूर्वे दक्षिणतो हर उत्तरतो मृडः ।।
भवः पश्चिमदिक्पत्रे पूज्या एते यथाक्रमम् ।। १६ ।।

उत्तरे विष्णुमावाह्य गन्धपुष्पादिभिर्यजेत् ।।
प्रतद्विष्णुरिति प्रोच्य कर्णिकायान्दलेषु च ।।१७।।
वासुदेवम्पूर्वभागे दक्षिणे चानिरुद्धकम् ।।
सौम्ये संकर्षणञ्चैव प्रद्युम्नम्पश्चिमे यजेत् ।। १८ ।।
ब्रह्माणम्पश्चिमे पद्मे समावाह्य समर्चयेत् ।।
हिरण्यगर्भः समवर्तत इति मंत्रेण मंत्रवित् ।। १९ ।।
हिरण्यगर्भं पूर्वस्यां विराजन्दक्षिणे ततः ।।
उत्तरे पुष्करञ्चैव कालम्पश्चिमतो यजेत् ।। 6.8.२० ।।
सर्वोर्द्ध्वपंक्तौ पूर्वादिप्रदक्षिणविधानतः।।
तत्तत्स्थानेषु संपूज्य लोकपालाननुक्रमात् ।। २१ ।।
रान्तंपान्तं तथा ज्ञान्तं लान्तं लान्तमपूर्वकम् ।।
षान्तं सान्तञ्च वेदाद्यं श्रीबीजञ्च दशक्रमात् ।। २२ ।।
बीजानि लोकपालानामेतैरेतान्समर्चयेत् ।।
नैर्ऋते चोत्तरे तद्वदीशानस्य च दक्षिणे ।। २३ ।।
ब्रह्म विष्णू च विधिना पूजयेदुपचारकैः ।।
बाह्यरेखासु देवेशम्पञ्चमावरणे यजेत् ।। २४ ।।
श्रीमत्त्रिशूलमीशाने वज्रं माहेन्द्रदिङ्मुखे ।।
परशुं वह्निदिग्भागे याम्ये सायकमर्चयेत् ।। २५ ।।
नैर्ऋते तु यजेत्खड्गम्पाशं वरुणगोचरे ।।
अंकुशं मारुते भागे पिनाकं चोत्तरे यजेत् ।।२६।।
पश्चिमाभिमुखं रौद्रं क्षेत्रपालं समर्चयेत् ।।
यथाविधि विधानज्ञशिवप्रीत्यर्थमेव च ।। २७ ।।
कृताञ्जलिपुटास्सर्वे चिन्त्याः स्मितमुखाम्बुजाः ।।
सादरं प्रेक्षमाणाश्च देवं देवीञ्च सर्वदा ।।२८।।
इत्थमावरणाभ्यर्चां कृत्वा विक्षेपशान्तये ।।
पुनरभ्यर्च्य देवेशम्प्रणवं च शिवं वदेत्।।२९।।
एवमभ्यर्च्य विधिवद्गन्धाद्यैरुपचारकैः।।
उपचर्य्य ततो दद्यान्नैवेद्यं विधिसाधितम्।।6.8.३०।।
पुनराचमनीयं च दद्यादर्घ्यं यथा पुरा ।।
ततो निवेद्य पानीयन्ताम्बूलं चोपदेशतः ।।३१ ।।
नीराजनादिकं कृत्वा पूजाशेषं समापयेत् ।।
ध्यात्वा देवं च देवीञ्च मनुमष्टोत्तरं जपेत् ।।३२।।
तत उत्थाय रचितपुष्पाञ्जलिपुटः स्थितः।।

जपेद्ध्यात्वा महादेवं यो देवानामिति क्रमात् ।। ३३ ।।
यो वेदादौ स्वरः प्रोक्त इत्यंतम्परमेश्वरि ।।
पुष्पाञ्जलिन्ततो दत्त्वा त्रिः प्रदक्षिणमाचरेत् ।। ३४ ।।
साष्टांगम्प्रणमेत्तं स भक्त्या परमयान्वितः ।।
पुनः प्रदक्षिणां कृत्वा प्रणमेत्पुनरेकधा ।। ३५ ।।
स्थित्वासने समभ्यर्च्य देवं नामाष्टकेन च ।।
साधु वासाधु वा कर्म यद्यदाचरितं मया ।।३६।।
तत्सर्वं भगवञ्छम्भो भवदाराधनम्परम् ।।
इति शंखोदकेनैव सपुष्पेण समर्पयेत् ।। ३७ ।।
पूज्यं पुनस्समभ्यर्च्य सार्थं नामाष्टकं जपेत् ।।
तदेव शृणु देवेशि संब्रुवे तव भक्तितः ।। ३८ ।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायामावरणपूजावर्णनं नामाष्टमोऽध्यायः ।।८।।

ईश्वर उवाच ।।
शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः ।।
संसारवैद्यस्सर्वज्ञः परमात्मेति मुख्यतः ।। १ ।।
नामाष्टकमिदं नित्यं शिवस्य प्रतिपादकम् ।।
आद्यन्तपञ्चकन्तत्र शान्त्यतीताद्यनुक्रमात् ।।२।।
संज्ञा सहाशिवादीनां पञ्चोपाधिपरिग्रहात् ।।
उपाधिविनिवृत्तौ तु यथास्वं विनि वर्तते ।। ३ ।।
पदमेव हितं नित्यमनित्याः पदिनः स्मृताः ।।
पदानां परिवृत्ति स्यान्मुच्यंते पदिनो यतः ।। ४ ।।
परिवृत्त्यन्तरे त्वेवं भूयस्तस्याप्युपाधिना ।।
आत्मान्तराभिधानं स्यात्पादाद्यं नामपंचकम् ।।५।।
अन्यत्तु त्रितयं नाम्नामुपादानादिभेदतः।।
त्रिविधोपाधिरचनाच्छिव एव तु वर्तते ।। ६ ।।
अनादिमलसंश्लेषप्रागभावात्स्वभावतः ।।
अत्यन्तपरिशुद्धात्मेत्यतोऽयं शिव उच्यते ।।७।।
अथवाऽशेषकल्याणगुणैकघन ईश्वरः ।।
शिव इत्युच्यते सद्भिश्शिवतत्त्वार्थवेदिभिः ।।८।।
त्रयोविंशतितत्वेभ्यः पराप्रकृतिरुच्यते।।
प्रकृतेस्तु परम्प्राहुः पुरुषम्पञ्चविंशकम्।।९।।
यद्वेदादौ स्वरम्प्राहुर्वाच्यवाचकभावतः ।।
वेदैकवेद्यं याथात्म्याद्वेदान्ते च प्रतिष्ठितम् ।। ।। 6.9.१० ।।
स एव प्रकृतौ लीनो भोक्ता यः प्रकृतेर्यतः ।।
तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः ।।११।।
तदधीनप्रवृत्तित्वात्प्रकृतेः पुरुषस्य च ।।
अथवा त्रिगुणन्तत्त्वं मायेयमिदमव्ययम् ।। १२ ।।
मायान्तु प्रकृतिम्विद्यान्मायिनन्तु महेश्वरम्।।
मायाविमोचकोऽनन्तोमहेश्वरसमन्वयात्।।१३।।
रु दुःखं दुःखहेतुर्वा तद्द्रावयति यः प्रभुः।।
रुद्र इत्युच्यते तस्माच्छिवः परमकारणम्।।१४।।
शिवतत्त्वादिभूम्यन्तं शरीरादि घटादि च।।
व्याप्याधितिष्ठति शिवस्तमाद्विष्णुरुदाहृतः।।१५।।
जगतः पितृभूतानां शिवो मूर्त्यात्मनामपि ।।।
पितृभावेन सर्वेषां पितामह उदीरितः ।।१६।।

निदानज्ञो यथा वैद्यो रोगस्य निवर्तकः।।
उपायैर्भेषजैस्तद्वल्लयभोगाधिकारकः।।१७।।
संसारस्येश्वरो नित्यं स्थूलस्य विनिवर्तकः ।।
संसार वैद्य इत्युक्तस्सर्वतत्त्वार्थवेदिभिः।।१८।।
दशार्द्धज्ञानसिद्ध्यर्थमिन्द्रियेषु च सत्स्वपि ।।
त्रिकालभाविनो भावान्स्थूलान्सूक्ष्मानशेषतः ।।१९।।
अणवो नैव जानन्ति मायार्णवमलावृताः ।।
असत्स्वपि च सर्वेषु सिद्धसर्वार्थवेदिषु ।। 6.9.२० ।।
यद्यथावस्थितं वस्तु तत्तथैव सदाशिवः ।।
अयत्नेनैव जानाति तस्मात्सर्वज्ञ उच्यते ।।२१।।
सर्वात्मा परमैरेभिर्गुणैर्नित्यसमन्वयात्।।
स्वस्मात्परात्मविरहात्परमात्मा शिवस्स्वयम् ।।२२।।
इति स्तुत्वा महादेवं प्रणवात्मानमव्ययम्।।
दत्त्वा पराङ्मुखाद्यञ्च पश्चादीशानमस्तके।।२३।।
पुनरर्च्य देवेशम्प्रणवेन समाहितः।।
हस्तेन बद्धाञ्जलिना पूजापुष्पम्प्रगृह्य च।।२४।।
उन्मनान्तं शिवं नीत्वा वामनासापुटाध्वना।।
देवोमुद्वास्य च ततो दक्षनासापुटाध्वना ।।२५।।
शिव एवाहमस्मीति तदैक्यमनुभूय च।।
सर्वावरणदेवांश्च पुनरुद्वासयेद्धृदि।।२६।।
विद्यापूजां गुरोःपूजां कृत्वा पश्चाद्यथाक्रमम्।।
शंखार्घपात्रमंत्रांश्च हृदये विन्यसेत्क्रमात्।।२७।।
निर्माल्यञ्च समर्प्याऽथ चण्डेशायेशगोचरे ।।
पुनश्च संयतप्राण ऋष्यादिकमथोच्चरेत् ।। २८ ।।
कैलासप्रस्तरो नाम मण्डलम्परिभाषितम् ।।
अर्चयेन्नित्यमेवैतत्पक्षे वा मासिमासि वा ।।२९।।
षण्मासे वत्सरे वापि चातुर्मास्यादिपर्वणि ।।
अवश्यञ्च समभ्यर्चेन्नित्यं मल्लिङ्गमास्तिकः ।।6.9.३०।।
तस्मिन्क्रमे महादेवि विशेषः कोऽपि कथ्यते ।।
उपदेशदिने लिंगम्पूजितं गुरुणा सह ।।३१।।
गृह्णीयादर्चयिष्यामि शिवमाप्राणसंक्षयम्।।
एवन्त्रिवारमुच्चार्य्य शपथं गुरुसन्निधौ ।।३२।।
ततस्समर्चयेन्नित्यम्पूर्वोक्तविधिना प्रिये।।

अर्घं समर्पयेल्लिंगमूर्द्धन्यर्घ्योदकेन च।।३३।।
प्रणवेन समभ्यर्च्य धूपदीपौ समर्पयेत् ।।
ऐशान्यां चण्डमाराध्य निर्माल्यञ्च निवेदयेत् ।।३४।।
प्रक्षाल्य ल्लिंगम्वेदीञ्च वस्त्रपूतैर्जलैस्ततः ।।
निःक्षिप्य पुष्पं शिरसि लिंगस्य प्रणवेन तु ।।३५।।
आधारशक्तिमारभ्य शुद्धविद्यासनावधि ।।
विभाव्य सर्वं मनसा स्थापयेत्परमेश्वरम् ।। ३६ ।।
पञ्चगव्यादिभिर्द्रव्यैर्यथाविभवसम्भृतैः ।।
केवलैर्वा जलैश्शुद्धैस्सुरभि द्रव्यवासितैः ।। ३७ ।।
पावमानेन रुद्रेण नीलेन त्वरितेन च ।।
ऋग्भिश्च सामभिर्वापि ब्रह्मभिश्चैव पञ्चभिः ।। ३८ ।।
स्नापयेद्देवदेवेशं प्रणवेन शिवेन च ।।
विशेषार्घ्योदकेनापि प्रणवेनाभिषेचयेत् ।।३९।।
विशोध्य वाससा पुष्पं लिंगमूर्द्धनि विन्यसेत्।।
पीठे लिंगं समारोप्य सूर्याद्यर्चां समाचरेत् ।।6.9.४०।।
आधारशक्त्यनन्तौ द्वौ पीठाधस्तात्समर्चयेत् ।।
सिंहासनन्तदूर्ध्वन्तु समभ्यर्च्य यथाक्रमम् ।। ४१
अथोर्ध्वच्छदनम्पीठपादे स्कन्दं समर्चयेत् ।।
लिंगे मूर्तिं समाकल्प्य मान्त्वया सह पूजयेत् ।। ४२ ।।
सम्यग् भक्त्या विधानेन यतिर्मद्ध्यानतत्परः ।।
एवम्मया ते कथितमतिगुह्यमिदम्प्रिये ।। ४३ ।।
गोपनीयं प्रयत्नेन न देयं यस्य कस्य चित् ।।
मम भक्ताय दातव्यं यतये वीतरागिणे ।। ४४ ।।
गुरुभक्ताय शान्ताय मदर्थे योगभागिने ।।
ममाज्ञामतिलंघ्यैतद्यो ददाति विमूढधीः ।।४५।।
स नारकी मम द्रोही भविष्यति न संशयः ।।
मद्भक्तदानाद्देवेशि मत्प्रियश्च भवेद्ध्रुवम् ।।
इह भुक्त्वाखिलान्भोगान्मत्सान्निध्यमवाप्नुयात् ।। ४६ ।।
व्यास उवाच ।।
एतच्छ्रुत्वा महादेवी महादेवेन भाषितम् ।।
स्तुत्वा तु विविधैः स्तोत्रैर्देवम्वेदार्थगर्वितैः ।।४७।।
श्रीमत्पादाब्जयोः पत्युः प्रणवं परमेश्वरी ।।
अतिप्रहृष्टहृदया मुमोद मुनिसत्तमाः ।।४८।।

अतिगुह्यमिदम्विप्राः प्रणवार्थप्रकाशकम् ।।
शिवज्ञानपरं ह्येतद्भवतामार्तिनाशनम् ।। ४९ ।।
सूत उवाच ।।
इत्युक्त्वा मुनिशार्दूलः पराशर्य्यो महातपाः ।।
पूजितः परया भक्त्या मुनिभिर्वेदवादिभिः ।।6.9.५०।।
कैलासाद्रिमनुसृत्य ययौ तस्मात्तपोवनात् ।।
तेऽपि प्रहृष्टहृदयास्सत्रान्ते परमेश्वरम्।।५१।।
सम्पूज्य परया भक्त्या सोमं सोमार्द्धशेखरम् ।।
यमादियोगनिरताश्शिवध्यानपराभवन् ।।५२।।
गुहाय कथितं ह्येतद्देव्या तेनापि नन्दिने ।।
सनत्कुमारमुनये प्रोवाच भगवान् हि सः ।।५३।।
तस्माल्लब्धं मद्गुरुणा व्यासेनामिततेजसा ।।
तस्माल्लब्धमिदम्पुण्यम्मयापि मुनिपुंगवाः ।।५४।।
मया वश्श्रावितं ह्येतद्गुह्याद्गुह्यतरम्परम् ।।
ज्ञात्वा शिवप्रियान्भक्त्या भवतो गिरिशप्रियम् ।। ५५ ।।
भवद्भिरपि दातव्यमेतद्गुह्यं शिवप्रियम् ।।
यतिभ्यश्शान्तचित्तेभ्यो भक्तेभ्यश्शिवपादयोः ।। ५६ ।।
एतदुक्त्वा महाभागस्सूतः पौराणिकोत्तमः ।।
तीर्थयात्राप्रसंगेन चचार पृथिवीमिमाम् ।।५७।।
एतद्रहस्यम्परमं लब्ध्वा सूतान्मुनीश्वराः ।।
काश्यामेव समासीना मुक्ताश्शिवपदं ययुः ।।५८।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां प्रणवार्थपद्धतिवर्णनं नाम नवमोऽध्यायः ।।९।। ।।

व्यास उवाच ।।
गतेऽथ सूते मुनयस्सुविस्मिता विचिन्त्य चान्योन्यमिदन्तु विस्मृतम् ।।
यद्वामदेवस्य मतन्मुनीश्वर प्रत्यूचितन्तत्खलु नष्टमद्य नः ।। १ ।।
कदानुभूयान्मुनिवर्यदर्शनम्भावाब्धिदुःखौघहरम्परं हि तत् ।।
महेश्वराराधनपुण्यतोऽधुना मुनीश्वरस्सत्वरमाविरस्तु नः।।२।।
इति चिन्तासमाविष्टा मुनयो मुनिपुंगवम्।।
व्यासं संपूज्य हृत्पद्मे तस्थुस्तद्दशर्नोत्सुकाः।।३।।
सम्वत्सरान्ते स पुनः काशीम्प्राप महामुनिः ।।
शिवभक्तिरतो ज्ञानी पुराणार्थप्रकाशकः ।।४।।
तन्दृष्ट्वा सूतमायान्तम्मुनयो हृष्टचेतसः ।।
अभ्युत्थानासनार्घ्यादिपूजया समपूजयन् ।।५।।
सोपि तान्मुनिशार्दूलानभिनन्द्य स्मितोदरम् ।।
प्रीत्या स्नात्वा जाह्नवीये जले परमपावने ।। ६ ।।
ऋषीन्संतर्प्य च सुरान्पितॄंश्च तिलतण्डुलैः ।।
तीरमागत्य सम्प्रोक्ष्य वाससी परिधाय च ।। ७ ।।
द्विराचम्य समादाय भस्म सद्यादिमंत्रतः ।।
उद्धूलनादिक्रमतो विधार्य्याऽथ मुनीश्वरः ।।८।।
रुद्राक्षमालाभरणः कृतनित्यक्रियस्सुधी ।।
यथोक्तांगेषु विधिना त्रिपुण्ड्रं रचति स्म ह ।।९।।
विश्वेश्वरमुमाकान्तं ससुतं सगणाधिपम् ।।
पूजयामास सद्भक्त्या ह्यस्तौ न्नत्वा मुहुर्मुहुः ।। 6.10.१० ।।
कालभैरवनाथं च संपूज्याथ विधानतः ।।
प्रदक्षिणीकृत्य पुनस्त्रेधा नत्वा च पंचधा ।।११।।
पुनः प्रदक्षिणी कृत्य प्रणम्य भुवि दण्डवत् ।।
तुष्टाव परया स्तुत्या संस्मरंस्तत्पदाम्बुजम् ।। १२ ।।
श्रीमत्पंचाक्षरीम्विद्यामष्टोत्तरसहस्रकम्।।
संजप्य पुरतः स्थित्वा क्षमापय्य महेश्वरम् ।।१३।।
चण्डेशं सम्प्रपूज्याऽथ मुक्तिमण्डपमध्यतः ।।
निर्द्दिष्टमासनं भेजे मुनिभिर्वेदपारगैः ।। १४ ।।
एवं स्थितेषु सर्वेषु नमस्कृत्य समंत्रकम् ।।
अथ प्राह मुनीन्द्राणां भाववृद्धिकरम्वच ।।१५ ।।
सूत कृतः ।।
धन्या यूयं महाप्राज्ञा मुनयश्शंसितव्रताः ।।

भवदर्थमिह प्राप्तोऽहन्तद्वृत्तमिदं शृणु ।।१६।।
यदाहमुपदिश्याथ भवतः प्रणवार्थकम्।।
गतस्तीर्थाटनार्थाय तद्वृत्तान्तम्ब्रवीमि वः ।। १७ ।।
इतो निर्गत्य सम्प्राप्य तीरं दक्षपयोनिधेः ।।
स्नात्वा सम्पूज्य विधिवद्देवीं कन्यामयीं शिवाम् ।।
पुनरागत्य विप्रेन्द्रास्सुवर्णमुखरीतटम् ।। १८ ।।
श्रीकालहस्तिशैलाख्यनगरे परमाद्भुते ।।
सुवर्णमुखरीतोये स्नात्वा देवानृषीनपि ।। १९ ।।
सन्तर्प्य विधिवद्भक्त्या समुदं गिरिशं स्मरन् ।।
समर्च्य कालहस्तीशं चन्द्रकांतसमप्रभम् ।। 6.10.२० ।।
पश्चिमाभिमुखम्पंचशिरसम्परमाद्भुतम् ।।
सकृद्दर्शनमात्रेण सर्वाघक्षयकारणम् ।। २१ ।।
सर्वसिद्धिप्रदम्भुक्तिमुक्तिदन्त्रिगुणेश्वरम् ।।
ततश्च परया भक्त्या तस्य दक्षिणगां शिवाम् ।। २२ ।।
ज्ञानप्रसूनकलिकां समर्च्य हि जगत्प्रसूम् ।।
श्रीमत्पंचाक्षरीं विद्यामष्टोत्तरसहस्रकम् ।। २३ ।।
जप्त्वा प्रदक्षिणीकृत्य स्तुत्वा नत्वा मुहुर्मुहुः ।।२४।।
ततः प्रदक्षिणीकृत्य गिरिम्प्रत्यहमादरात् ।।
आमोदतीव मनसि प्रत्यहन्नियमास्थितः।।२५।।
अनयञ्चतुरो मासानेवन्तत्र मुनीश्वराः ।।
ज्ञानप्रसूनकलिका महादेव्याः प्रसादतः ।। २६ ।।
एकदा तु समास्तीर्य चैलाजिनकुशोत्तरम् ।।
आसनम्परमन्तस्मिन्स्थित्वा रुद्धेन्द्रियो मुनि ।। २७ ।।
समाधिमास्थाय सदा परमानंदचिद्घनः ।।
परिपूर्णश्शिवोस्मीति निर्व्यग्रहृदयोऽभवम् ।। २८ ।।
एतस्मिन्नेव समये सद्गुरुः करुणानिधिः ।।
नीलजीमूतसङ्काशो विद्युत्पिङ्गजटाधरः ।। २९ ।।
प्रांशुः कमण्डलूद्दण्डकृष्णाजिनधरस्स्वयम् ।।
भस्मावदातसर्वाङ्गस्सर्वलक्षणलक्षितः ।।6.10.३०।।
त्रिपुण्ड्रविलसद्भालो रुद्राक्षालङ्कृताकृतिः ।।
पद्मपत्रारुणायामविस्तीर्णनयनद्वयः ।।३१।।
प्रादुर्भूय हृदम्भोजे तदानीमेव सत्वरम् ।।
विमोहितस्तदैवासमेतदद्भुतमास्तिकाः ।।३२।।

तत उन्मील्य नयने विलापं कृतवानहम् ।।
आसीन्ममाश्रुपातश्च गिरिनिर्झरसन्निभः ।। ३३ ।।
एतस्मिन्नेव समये श्रुता वागशरीरिणी ।।
व्योम्नो महाद्भुता विप्रास्तामेव शृणुतादरात् ।। ३४ ।।
सूतपुत्र महाभाग गच्छ वाराणसीम्पुरीम् ।।
तत्रासन्मुनयः पूर्वमुपदिष्टास्त्वयाऽधुना ।। ३५ ।।
त्वदुपागमकल्याणं कांक्षंते विवशा भृशम् ।।
तिष्ठन्ति ते निराहारा इत्युक्त्वा विरराम सा ।। ३६ ।।
तत उत्थाय तरसा देवन्देवीञ्च भक्तितः ।।
प्रदक्षिणीकृत्य पुनः प्रणम्य भुवि दण्डवत् ।। ३७ ।।
द्विषड्वारं गुरोराज्ञां विज्ञाय शिवयोरथ ।।
क्षेत्रान्निर्गत्य तरसा चत्वारिंशद्दिनान्तरे ।। ३८ ।।
आगतोऽस्मि मुनिश्रेष्ठा अनुगृह्णन्तु मामिह ।।
मया किमद्य वक्तव्यं भवन्तस्तदब्रुवन्तु मे ।। ३९ ।।
इति सूतवचश्श्रुत्वा ऋषयो हृष्टमानसाः ।।
अवोचन्मुनिशार्दूलं व्यासन्नत्वा मुहुर्मुहुः ।। 6.10.४० ।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां सूतोपदेशो नाम दशमोऽध्यायः ।।१०।।

ऋषय ऊचुः ।।
सूत सूत महाभागस्त्वमस्मद्गुरुरुत्तमः ।।
अतस्त्वां परिपृच्छामो भवतोऽनुग्रहो यदि ।। १ ।।
श्रद्धालुषु च शिष्येषु त्वादृशा गुरवस्सदा ।।
स्निग्धभावा इतीदं नो दर्शितम्भवताधुना ।।२।।
विरजाहोमसमये वामदेवमतम्पुरा ।।
सूचितम्भवतास्माभिर्न श्रुतं विस्तरान्मुने ।। ३ ।।
तदिदानीं श्रोतुकामाः श्रद्धया परमादरात् ।।
वयं सर्व्वे कृपासिंधो प्रीत्या तद्वक्तुमर्हसि ।।४।।
इति तेषां वचः श्रुत्वा सूतो हृष्टतनूरुहः ।।
नमस्कृत्य महादेवं गुरोः परतरं गुरुम् ।।५।।
महादेवीं त्रिजननीं गुरुं व्यासश्च भक्तितः ।।
प्राह गम्भीरया वाचा मुनीनाह्लादयन्निदम् ।। ६ ।।
सूत उवाच ।।
स्वस्त्यस्तु मुनयस्सर्वे सुखिन स्सन्तु सर्व्वदा ।।
शिवभक्ता स्थिरात्मानश्शिवे भक्तिप्रवर्तकाः ।।७।।
तदतीव विचित्रं हि श्रुतं गुरुमुखाम्बुजात् ।।
इतः पूर्वम्मया नोक्तं गुह्यप्राकट्यशंकया ।। ८ ।।
यूयं खलु महाभागाश्शिवभक्ता दृढव्रताः ।।
इति निश्चित्य युष्माकं वक्ष्यामि श्रूयताम्मुदा ।।९।।
पुरा रथन्तरे कल्पे वामदेवो महामुनिः ।।
गर्भमुक्तश्शिवज्ञानविदां गुरुतमस्स्वयम्।।6.11.१०।।
वेदागमपुराणादिसर्व्वशास्त्रार्थवत्त्ववित्।।
देवासुरमनुष्यादिजीवानां जन्मकर्म्मवित्।।११।।
भस्मावदातसर्व्वांगो जटामण्डलमंडितः ।।
निराश्रयो निःस्पृहश्च निर्द्वन्द्वो निरहंकृतिः ।।१२।।
दिगंबरो महाज्ञानी महेश्वर इवापरः ।।
शिष्यभूतैर्मुनीन्द्रैश्च तादृशैः परिवारितः ।।१३।।
पर्य्यटन्पृथिवीमेतां स्वपाद स्पर्शपुण्यतः ।।
पवित्रयन्परे धाम्नि निमग्नहृदयोन्वहम् ।। १४ ।।
कुमारशिखरम्मेरोर्द्दक्षिणं प्राविशन्मुदा।।
यत्रास्ते भगवानीशतन यश्शिखिवाहनः ।।१५।।
ज्ञानशक्तिधरो वीरस्सर्वासुरविमर्दनः ।।

गजावल्लीसमायुक्तस्सर्व्वैर्देवैर्नमस्कृतः ।।१६।।
तत्र स्कन्दसरो नाम सरस्सागरसन्निभम् ।।
शिशिरस्वादुपानीयं स्वच्छागाधबहूदकम् ।।१७।।
सर्व्वाश्चर्य्यगुणोपेतं विद्यते स्वामिसन्निधौ ।।
तत्र स्नात्वा वामदेवस्सहशिष्यैर्महामुनिः ।।१८।।
कुमारं शिखरासीनं मुनिवृन्दनिषेवितम्।।
उद्यदादित्यसंकाशं मयूरवरवाहनम्।।१९।।
चतुर्भुजमुदारांगं मुकुटादिविभूषितम्।।
शक्तिरत्नद्वयोपास्यं शक्तिकुक्कुटधारिणम्।।6.11.२०।।
वरदाभयहस्तञ्च दृष्ट्वा स्कन्दं मुनीश्वरः।।
सम्पूज्य परया भक्त्या स्तोतुं समुपचक्रमे ।।२१।।
।। वामदेव उवाच ।।
ॐ नमः प्रणवार्थाय प्रणवार्थविधायिने ।।
प्रणवाक्षरबीजाय प्रण वाय नमोनमः ।।२२।।
वेदान्तार्थस्वरूपाय वेदान्तार्थविधायिने ।।
वेदान्तार्थविदे नित्यं विदिताय नमोनमः ।।२३।।
नमो गुहाय भूतानां गुहासु निहिताय च ।।
गुह्याय गुह्यरूपाय गुह्यागमविदे नमः ।।२४।।
अणोरणीयसे तुभ्यं महतोपि महीयसे ।।
नमः परावरज्ञाय परमात्मस्वरूपिणे ।। २५ ।।
स्कन्दाय स्कन्दरूपाय मिहिरारुणेतेजसे ।।
नमो मन्दारमालोद्यन्मुकुटादिभृते सदा ।। २६ ।।
शिवशिष्याय पुत्राय शिवस्य शिवदायिने ।।
शिवप्रियाय शिवयोरानन्दनिधये नम ।।२७।।
गांगेयाय नमस्तुभ्यं कार्तिकेयाय धीमते ।।
उमापुत्राय महते शरकाननशायिने।।२८।।
षडक्षरशरीराय षड्विधार्थविधायिने ।।
षडध्वातीतरूपाय षण्मुखाय नमोनमः ।। ।।२९।।
द्वादशायतनेत्राय द्वादशोद्यतबाहवे ।।
द्वादशायुधधाराय द्वादशात्मन्नमोस्तु ते ।।6.11.३०।।
चतुर्भुजाय शान्ताय शक्तिकुक्कुट धारिणे ।।
वरदाय विहस्ताय नमोऽसुरविदारिणे ।। ३१ ।।
गजावल्लीकुचालिप्तकुंकुमांकितवक्षसे ।।

नमो गजाननानन्दमहि मानंदितात्मने ।।३२ ।।
ब्रह्मादिदेवमुनिकिन्नरगीयमानगाथाविशेषशुचिचिंतितकीर्त्तिधाम्ने ।।
वृन्दारकामलकिरीटविभूषणस्रक्पूज्याभिरामपदपंकज ते नमोस्तु ।। ३३ ।।
इति स्कन्दस्तवन्दिव्यं वामदेवेन भाषितम् ।।
यः पठेच्छृणुयाद्वापि स याति परमां गतिम् ।। ३४ ।।
महाप्रज्ञाकरं ह्येतच्छिवभक्तिविवर्द्धनम् ।।
आयुरारोग्यधनकृत्सर्व्वकामप्रदं सदा ।। ३५ ।।
इति स्तुत्वा वामदेवो देवं सेनापतिं प्रभुम् ।।
प्रदक्षिणात्रयं कृत्वा प्रणम्य भुवि दण्डवत् ।। ३६ ।।
साष्टांगं च पुनः कृत्वा प्रदक्षिणनमस्कृतम् ।।
अभवत्पार्श्वतस्तस्य विनयावनतो द्विजाः ।। ३७ ।।
वामदेवकृतं स्तोत्रम्परमार्थविजृम्भितम् ।।
श्रुत्वाभवत्प्रसन्नो हि महे श्वरसुतः प्रभुः ।।३८।।
तमुवाच महासेनः प्रीतोस्मि तव पूजया ।।
भक्त्या स्तुत्या च भद्रन्ते किमद्यकरवाण्यहम् ।।३९।।
मुने त्वं योगिनान्मुख्यः परिपूर्णश्च निस्पृहः ।।
भवादृशां हि लोकेस्मिप्रार्थनीयं न विद्यते ।।6.11.४०।।
तथापि धर्म्मरक्षायै लोकानुग्रहकांक्षया।।
त्वादृशा साधवस्सन्तो विचरन्ति महीतले।।४१।।
श्रोतव्यमस्ति चेद्ब्रह्मन्वक्तुमर्हसि साम्प्रतम्।।
तदिदानीमहं वक्ष्ये लोकानुग्रहहे तवे।।४२।।
इति स्कन्दवचः श्रुत्वा वामदेवो महामुनिः।।
प्रश्रयावनतः प्राह मेघगम्भीरया गिरा ।।४३।।
वामदेव उवाच ।।।
भगवन्परमेशस्त्वं परापरविभूतिदः ।।
सर्व्वज्ञसर्वकर्त्ता च सर्व्वशक्तिधरः प्रभुः ।।४४।।
जीवा वयं तु ते वक्तुं सन्निधौ परमेशितुः ।।
तथाप्यनुग्रहो यन्ते यत्त्वं वदसि मां प्रति ।। ४५ ।।
कृतार्थोहं महाप्राज्ञ विज्ञानकणमात्रतः ।।
प्रेरितः परिपृच्छामि क्षन्तव्योतिक्रमो मम ।। ४६ ।।
प्रणवो हि परः साक्षात्परमेश्वरवाचकः ।।
वाच्यः पशुपतिर्देवः पशूनां पाशमोचकः ।। ४७ ।।
वाचकेन समाहूतः पशून्मोचयते क्षणात् ।।

तस्माद्वाचकतासिद्धिः प्रणवेन शिवम्प्रति ।। ४८ ।।
ॐ मितीदं सर्वमिति श्रुतिराह सनातनी ।।
ओमिति ब्रह्म सर्व्वं हि ब्रह्मेति च समब्रवीत् ।।४९।।
देवसेनापते तुभ्यन्देवानाम्पतये नमः ।।
नमो यतीनाम्पतये परिपूर्णाय ते नमः ।। 6.11.५० ।।
एवं स्थिते जगत्यस्मिञ्छिवादन्यन्न विद्यते ।।
सर्व्वरूपधरः स्वामी शिवो व्यापी महेश्वरः ।। ५१ ।।
समष्टिव्यष्टिभावेन प्रणवार्थः श्रुतो मया ।।
न जातुचिन्महासेन संप्राप्तस्त्वादृशो गुरुः।।५२।।
अतः कृत्वानुकंपां वै तमर्थं वक्तुमर्हसि।।
उपदेशविधानेन सदाचारक्रमेण च।।५३।।
स्वाम्येकः सर्ब्वजन्तूनां पाशच्छेदकरो गुरुः ।।
अतस्त्वत्कृपया सोऽर्थः श्रोतव्यो हि मया गुरो ।।५४।।
इति स मुनिना पृष्टः स्कन्दः प्रणम्य सदाशिवं प्रणववपुषं साष्टत्रिंशत्कलावरलक्षितम्।।
सहितमुमया शश्वत्पार्श्वे मुनिप्रवरान्वितं गदितुमुपचक्राम श्रेयः श्रुतिष्वपि गोपितम् ।। ५५ ।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां वामदेवब्रह्मवर्णनन्नामैकादशोऽयाय ।। ११ ।।

श्रीब्रह्मण्य उवाच ।।
साधुसाधु महाभाग वामदेव मुनीश्वर।।
त्वमतीव शिवे भक्तश्शिवज्ञानवतांवरः।।१।।
त्वया त्वविदितं किंचिन्ना स्ति लोकेषु कुत्रचित्।।
तथापि तव वक्ष्यामि लोकानुग्रहकारिणः।।२।।
लोकेस्मिन्पशवस्सर्व्वे नानाशास्त्रविमोहिताः ।।
वञ्चिताः परमेशस्य माययातिविचित्रया ।।३।।
न जानति परं साक्षात्प्रणवार्थम्महेश्वरम् ।।
सगुणन्निर्गुणं ब्रह्म त्रिदेवजनकम्परम् ।।४।।
दक्षिणम्बाहुमुद्धृत्य शपथम्प्रब्रवीमि ते ।।
सत्यं सत्यं पुनस्सत्यं सत्यं सत्यं पुनः पुनः ।।५।।
प्रणवार्थश्शिवः साक्षात्प्राधान्येन प्रकीर्त्तितः ।।।
श्रुतिषु स्मृतिशास्त्रेषु पुराणेष्वागमेषु च ।।६।।
यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह ।।
आनन्दं यस्य वे विद्वान्न बिभेति कुतश्च न ।। ७ ।।
यस्माज्जगदिदं सर्वं विधिविष्णिवन्द्रपूर्वकम् ।।
सह भूतेन्द्रियग्रामैः प्रथमं सम्प्रसूयते ।। ८ ।।
न सम्प्रसूयते यो वै कुतश्चन कदाचन ।।
यस्मिन्न भासते विद्युन्न न सूर्यो न चन्द्रमाः ।। ९ ।।
यस्य भासो विभातीदञ्जगत्सर्वं समन्ततः ।।
सर्व्वैश्वर्य्येण सम्पन्नो नाम्ना सर्व्वेश्वरस्स्वयम्।।6.12.१०।।
यो वै मुमुक्षुभिर्ध्येयः शम्भुराकाशमध्यगः ।।
सर्वव्यापी प्रकाशात्मा भासरूपो हि चिन्मयः ।।११।।।
यस्य पुंसः परा शक्तिर्भावगम्या मनोहरा ।।
निर्गुणा स्वगुणैरेव निगूढा निष्कला शिवा ।। १२ ।।
तदीयन्त्रिविधंरूपं स्थूलं सूक्ष्मं परन्ततः ।।
ध्येयं मुमुक्षुभिर्नित्यं क्रमतो योगिभिर्मुने ।।१३।।
निष्कलस्सर्व्वदेवानामादिदेवस्सनातनः ।।
ज्ञानक्रियास्वभावो यः पर मात्मेति गीयते ।। १४।।
तस्य देवाधिदेवस्य मूर्त्तिस्साक्षात्सदाशिवः ।।
पञ्चमंत्रतनुर्देवः कलापञ्चकविग्रहः ।। १५ ।।
शुद्धस्फटिकसंकाशः प्रसन्नः शीतलद्युतिः ।।
पंचवक्त्रो दशभुजस्त्रिपंचनयनः प्रभुः ।। १६।।

ईशानमुकुटोपेतः पुरुषास्यः पुरातनः ।।
अघोरहृदयो वामदेवगुह्यप्रदेशवान् ।। १७।।
सद्यपादश्च तन्मूर्त्तिः साक्षात्सकलनिष्कलः ।।
सर्व्वज्ञत्वादिषट्शक्तिषडंगीकृतविग्रहः ।।१८।।
शब्दादिशक्तिस्फुरितहृत्पंकजविराजितः ।।
स्वशक्त्या वामभागे तु मनोन्मन्या विभूषितः ।।१९।।
मन्त्रादिषड्विधार्थानामर्थोपन्याससार्गतः ।।
समष्टिव्यष्टिभावार्थं वक्ष्यामि प्रणवात्मकम् ।।6.12.२०।।
उपदेशक्रमो ह्यादौ वक्तव्यश्श्रूयतामयम्।।
चातुर्व्वर्ण्यं हि लोकेस्मिन्प्रसिद्धम्मानुषे मुने ।। २१ ।।
त्रैवर्णिकानामेवात्र श्रुत्याचारसमन्वयः ।।
शुश्रूषामात्रसारा हि शूद्राः श्रुतिबहिष्कृताः ।। २२ ।
त्रैवर्णिकानां सर्व्वेषां स्वस्वाश्रमरतात्मनाम् ।।
श्रुतिस्मृत्युदितो धर्मोऽनुष्ठेयो नापरः क्वचित् ।। २३ ।।
श्रुतिस्मृत्युदितं कर्म्म कुर्व्व न्सिद्धिमवाप्स्यति ।।
इत्युक्तम्परमेशेन वेदमार्गप्रदर्शिना ।। २४ ।।
वर्णाश्रमाचारपुण्यैरभ्यर्च्य परमेश्वरम् ।।
तत्सायुज्यं गतास्सर्वे बहवो मुनिसत्तमाः ।। २५ ।।
ब्रह्मचर्येण मुनयो देवा यज्ञक्रियाध्वना ।।
पितरः प्रजया तृप्ता इति हि श्रुतिरब्रवीत् ।।२६।।
एवं ऋणत्रयान्मुक्तो वानप्रस्थाश्रमं गतः ।।
शीतोष्णसुखदुःखादिसहिष्णुर्विजितेन्द्रियः ।।२७।।
तपस्वी विजिताहारो यमाय योगम भ्यसेत् ।।
यथा दृढतरा बुद्धिरविचाल्या भवेत्तथा ।। २८ ।।
एवं क्रमेण शुद्धात्मा सर्व्वकर्म्माणि विन्यसेत् ।।
सन्यस्य सर्व्वकर्म्माणि ज्ञानपूजापरो भवेत् ।। २९ ।।
सा हि साक्षाच्छिवैक्येन जीवन्मुक्तिफलप्रदा ।।
सर्व्वोत्तमा हि विज्ञेया निर्विकारा यतात्म नाम् ।। 6.12.३० ।।
तत्प्रकारमहं वक्ष्ये लोकानुग्रहकाम्यया ।।
तव स्तेहान्महाप्राज्ञ सावधानतया शृणु ।। ३१ ।।
सर्व्वशास्त्रार्थतत्त्वज्ञं वेदांतज्ञानपारगम् ।।
आचार्य्यमुपगच्छेत्स यतिर्म्मतिमतां वरम् ।।३२।।
तत्समीपमुपव्रज्य यथाविधि विचक्षणः ।।

दीर्घदण्डप्रणामाद्यैस्तोषयेद्यत्नतस्सुधीः।।३३।।
यो गुरुस्स शिवः प्रोक्तो यश्शिवस्स गुरुस्स्मृतः ।।
इति निश्चित्य मनसा स्वविचारन्निवेदयेत्।।३४।।
लब्धानुज्ञस्तु गुरुणा द्वादशाहं पयोव्रती।।
शुक्लपक्षे चतुर्थ्यां वा दशम्यां वा विधानतः ।।३५।।
प्रातः स्नात्वा विशुद्धात्मा कृतनित्य क्रियस्सुधीः ।।
गुरुमाहूय विधिना नांदीश्राद्धं समारभेत् ।।३६।।
विश्वेदेवाः सत्यवसुसंज्ञावंतः प्रकीर्त्तिताः ।।
देवश्राद्धे ब्रह्मविष्णु महेशाः कथितास्त्रयः ।।३७।।
ऋषिश्राद्धे तु सम्प्रोक्ता देवक्षेत्रमनुष्यजाः ।।
देवश्राद्धे तु वसुरुद्रादित्यास्सम्प्रकीर्त्तिताः ।। ३८ ।।
चत्वारो मानुषश्राद्धे सनकाद्या मुनीश्वराः ।।
भूतश्राद्धे पंच महाभूतानि च ततः परम्।।३९।।
चक्षुरादीन्द्रियग्रामो भूतग्रामश्चतुर्विधः।। ।
पितृश्राद्धे पिता तस्य पिता तस्य पिता त्रयः ।।6.12.४०।।
मातृश्राद्धे मातृपितामह्यौ च प्रपितामही ।।
आत्मश्राद्धे तु चत्वार आत्मा पितृपितामहौ ।। ४१ ।।
प्रपितामहनामा च सपत्नीकाः प्रकीर्त्तिताः ।।
मातामहात्मकश्राद्धे त्रयो मातामहादयः ।। ४२ ।।
प्रतिश्राद्धं ब्राह्मणानां युग्मं कृत्वोपकल्पितान् ।।
आहूय पादौ प्रक्षाल्य स्वयमाचम्य यत्नतः ।।४३।।
समस्तसंपत्समवाप्तिहेतवः समुत्थितापत्कुलधूमकेतवः ।।
अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपादरेणवः ।।४४।।
आपद्घनध्वान्तसहस्रभानवः समीहिता र्थार्पणकामधेनवः ।।
समस्ततीर्थांबुपवित्रमूर्त्तयो रक्षंतु मां ब्राह्मणपादपांसवः ।।४५।।
इति जप्त्वा नमस्कृत्य साष्टांगं भुवि दण्डवत् ।।
स्थित्वा तु प्राङ्मुखः शम्भोः पादाब्जयुगलं स्मरन् ।।४६।।
सपवित्रकरश्शुद्ध उपवीती दृढासनः ।।
प्राणायामत्रयं कुर्य्या च्छ्रुत्वातिथ्यादिकं पुनः ।।४७।।
मत्संन्यासांगभूतं यद्विश्वेदेवादिकं तथा ।।
श्राद्धमष्टविधं मातामहगतं पार्वणेन वै ।।४८।।
विधानेन करिष्यामि युष्मदाज्ञापुरस्सरम् ।।
एवं विधाय संकल्पं दर्भानुत्तरतस्त्यजेत् ।।४९।।

उपस्पृश्याप उत्थाय वरणक्रममारभेत्।।
पवित्रपाणिः संस्पृश्य पाणी ब्राह्मणयोर्वदेत् ।।6.12.५०।।
विश्वेदेवार्थ इत्यादि भवद्भ्यां क्षण इत्यपि ।।५१।।
प्रसादनीय इत्यन्तं सर्व्व त्रैवं विधिक्रमः ।।
एवं समाप्य वरणं मण्डलानि प्रकल्पयेत् ।। ५२ ।।
उदगारभ्य दश च कृत्वाभ्यर्चनमक्षतैः ।।
तेषु क्रमेण संस्थाप्य ब्राह्मणान्पादयोः पुनः ।। ५३ ।।
विश्वेदेवादिनामानि ससंवबोधनमुच्चरेत् ।।
इदं वः पाद्यमिति सकुशपुष्पाक्षतोदकैः ।। ५४ ।।
पाद्यं दत्त्वा स्वयमपि क्षालितांघ्रिरुदङ्मुखः ।।
आचम्य युग्मक्लृप्तांस्तानासनेषूपवेश्य च ।। ५५ ।।
विश्वेदेवस्वरूपस्य ब्राह्मणस्येदमासनम् ।।
इति दर्भासनं दत्त्वा दर्भपाणिस्स्वयं स्थितः ।। ५६ ।।
अस्मिन्नान्दीमुखश्राद्धे विश्वेदेवार्थ इत्यपि ।।
भवद्भ्यां क्षण इत्युक्त्वा क्रियतामिति संवदेत् ।। ५७ ।।
प्राप्नुतामिति सम्प्रोच्य भवन्ताविति संवदेत् ।।
वदेतां प्राप्नुयावेति तौ च ब्राह्मणपुंगवौ ।। ५८ ।।
संपूर्णमस्तु संकल्पसिद्धिरस्त्विति तान्प्रति ।।
भवन्तोऽनुगृह्णंत्विति प्रार्थयेद्द्विजपुंगवान् ।। ५९ ।।
ततश्शुद्धकदल्यादिपात्रेषु क्षालितेषु च ।।
अन्नादिभोज्यद्रव्याणि दत्त्वा दर्भैः पृथक्पृथक् ।। 6.12.६० ।।
परिस्तीर्य्य स्वयं तत्र परिषिच्योदकेन च।।
हस्ताभ्यामवलंब्याथ पात्रं प्रत्येकमादरात्।।६१।।
पृथिवी ते पात्रमित्यादि कृत्वा तत्र व्यवस्थितान्।।
देवादींश्च चतुर्थ्यन्ताननूद्याक्षतसंयुतान् ।। ६२ ।।
उदग्गृहीत्वा स्वाहेति देवार्थेऽन्नं यजेत्पुनः ।।
न ममेति वदेदन्ते सर्वत्रायं विधिक्रमः ।।६३।।
यत्पादपद्मस्मरणाद्यस्य नामजपादपि ।।
न्यूनं कर्म भवेत्पूर्णन्तं वन्दे साम्बमीश्वरम् ।। ६४ ।।
इति जप्त्वा ततो ब्रूयान्मया कृत मिदं पुनः ।।
नान्दीमुखश्राद्धमिति यथोक्तं च वदेत्ततः ।। ६५ ।।
अस्त्विति ब्रूतेति च तान्प्रसाद्य द्विजपुंगवान् ।।
विसृज्य स्वकरस्थोदं प्रणम्य भुवि दण्डवत् ।।६६।।

उत्थाय च ततो ब्रूयादमृतम्भवतु द्विजान् ।।
प्रार्थयेच्च परं प्रीत्या कृतांजलिरुदारधीः।।६७।।
श्रीरुद्रं चमकं सूक्तं पौरुषं च यथाविधि ।।
चित्ते सदाशिवन्ध्यात्वा जपेद्ब्रह्माणि पञ्च च ।। ६८ ।।
भोजनान्ते रुद्रसूक्तं क्षमा पय्य द्विजान्मुनः ।।
तन्मन्त्रेण ततो दद्यादुत्तरापोशणं पुरः ।। ६९।।
प्रक्षालितांघ्रिराचम्य पिण्डस्थानं व्रजेत्ततः ।।
आसीनः प्राङ्मुखो मौनी प्राणायामत्रयं चरेत्।। 6.12.७० ।।
नान्दीमुखोक्तश्राद्धांगं करिष्ये पिण्डदानकम् ।।
इति संकल्प्य दक्षादिसमारभ्योदकान्ति कम् ।। ७१ ।।
नव रेखाः समालिख्य प्रागग्रान्द्वादश क्रमात्।।
संस्तीर्य्य दर्भान्दक्षादिदेवादिस्थानपञ्चकम् ।। ७२ ।।
तूष्णीं दद्यात्साक्षतोदं त्रिषु स्थानेषु च क्रमात्।।
स्थानेष्वन्येषु मातृषु मार्ज्जयन्तास्ततः परम् ।।७३।।
अत्रेति पितरः पश्चात्साक्षतोदं समर्च्य च ।।
दद्यात्ततः क्रमेणैव देवादिस्थानपञ्चके ।। ७४ ।।
तत्तद्देवादिनामानि चतुर्थ्यन्तान्युदीर्य्य च।।
पिण्डत्रयं ततो दद्यात्प्रत्येकं स्थानपञ्चके ।। ७५ ।।
स्वगृह्योक्तेन मार्गेण दद्यात्पिण्डान्पृथक्पृथक् ।।
दद्यादिदं साक्षतं च पितृसाङ्गुण्यहेतवे ।। ७६ ।।
ध्यायेत्सदाशिवं देवं हृदयाम्भोजमध्यतः ।।
तत्पादपद्मस्मरणादिति श्लोकं पठन्पुनः ।। ७७ ।।
नमस्कृत्य ब्राह्मणेभ्यो दक्षिणां च स्वश क्तितः ।।
दत्त्वा क्षमापय्य च तान्विसृज्य च ततः क्रमात् ।। ७८ ।।
पिण्डानुत्सृज्य गोग्रासं दद्यान्नोचेज्जले क्षिपेत् ।।
पुण्याहवाचनं त्वां भुंजीत स्वजनैस्सह ।।७९।।
अन्येद्युः प्रातरुत्थाय कृतनित्यक्रियस्सुधीः ।।
उपोष्य क्षौरकर्मादि कक्षोपस्थविवर्जितम् ।। 6.12.८० ।।
केशश्मश्रुनखानेव कर्म्मावधि विसृज्य च।।
समाष्टकेशान्विधिवत्कारयित्वा विधानतः।।८१।।
स्नात्वा धौतपटश्शुद्धो द्विराचम्याथ वाग्यतः ।।
भस्म संधार्य्य विधिना कृत्वा पुण्याहवाचनम्।।८२।।
तेन संप्रोक्ष्य संप्राप्य शुद्धदेहस्वभावतः ।।

होमद्रव्यार्थमाचार्य्य दक्षिणार्थं विहाय च ।। ८३ ।।
द्रव्यजातं महेशाय द्विजेभ्यश्च विशेषतः ।।
भक्तेभ्यश्च प्रदायाथ शिवाय गुरुरूपिणे ।।८४।।
वस्त्रादि दक्षिणां दत्त्वा प्रणम्य भुवि दण्डवत् ।।
दोरकौपीनवसनं दण्डाच्च क्षालितम्भुवि ।। ८५ ।।
आदाय होमद्रव्याणि समिधादीनि च क्रमात्।।
समुद्रतीरे नद्यां वा पर्व्वते वा शिवालये ।।८६।।
अरण्ये चापी गोष्ठे वा विचार्य्य स्थानमुत्तमम् ।।
स्थित्वाचम्य ततः पूर्व्वं कृत्वा मानसमञ्जरीम् ।।८७।।
ब्राह्ममोंकारसहितं नमो ब्रह्मण इत्यपि ।।
जपित्वा त्रिस्ततो ब्रूयादग्निमीळे पुरोहितम् ।।८८।।
अथ महाव्रतमिति अग्निर्वै देवा नामतः ।।
तथैतस्य समाम्नायमिषेत्वोर्ज्जे त्वा वेति तत् ।।८९।।
अग्न आयाहि वीतये शन्नो देवीरभिष्टये।।
पश्चात्प्रोच्य मयरसतजभनलगैः सह।।6.12.९०।।
सम्मितं च ततः पञ्चसंवत्सरमयं ततः ।।
समाम्नायस्समाम्नातः अथ शिक्षां वदेत्पुनः ।।
प्रवक्ष्यामीत्युदीर्याथ वृद्धिरादैच्च सम्वदेत् ।। ९१ ।।
अथातो धर्मजिज्ञासेत्युच्चार्य पुनरंजसा ।।
अथातो ब्रह्मजिज्ञासा वेदादीनपि संजपेत् ।। ९२ ।।
ब्रह्माणमिन्द्रं सूर्य्यञ्च सोमं चैव प्रजापतिम् ।।
आत्मानमन्तरात्मानं ज्ञानात्मानमतः परम् ।। ९३ ।।
परमात्मानमपि च प्रणवाद्यं नमोंतकम् ।।
चतुर्थ्यन्तं जपित्वाऽथ सक्तुमुष्टिं प्रगृह्य च ।। ९४ ।।
प्राश्याथ प्रणवेनैव द्विराचम्याथ संस्पृशेत् ।।
नाभिं मन्त्रान्वक्ष्यमाणन्प्रणवाद्यान्नमोन्तकान् ।। ९५ ।।
आत्मानमन्तरात्मानं ज्ञानात्मानं पुरं पुनः ।।
आत्मानं च समुच्चार्य प्रजापतिमतः परम् ।। ९६ ।।
स्वाहांतान्प्रजपेत्पश्चात्पयोदधिघृतं पृथक् ।।
त्रिवारं प्रणवेनैव प्राश्याचम्य द्विधा पुनः ।। ।। ९७ ।।
प्रागास्य उपविश्याथ दृढचित्तः स्थिरासनः ।।
यथोक्तविधिना सम्यक्प्राणायामत्रयञ्चरेत् ।। ९८ ।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां संन्यासविधिवर्णनं नाम द्वादशोऽध्यायः ।। १२ ।।

।। सुब्रह्मण्य उवाच ।।
अथ मध्याह्नसमये स्नात्वा नियतमानसः ।।
गन्धपुष्पाक्षतादीनि पूजाद्रव्याण्युपाहरेत।।१।।
नैर्ऋत्ये पूजयेद्देवं विघ्नेशं देवपूजितम्।।
गणानां त्वेति मन्त्रेणावाहयेत्सुविधानतः ।।२।।
रक्तवर्णं महाकायं सर्व्वाभरणभूषितम्।।
पाशांकुशाक्षाभीष्टञ्च दधानं करपंकजैः ।। ३ ।।
एवमावाह्य सन्ध्याय शंभुपुत्रं गजाननम्।।
अभ्यर्च्य पायसापूपनालिकेरगुडादिभिः ।।४।।
नैवेद्यमुत्तमं दद्यात्ताम्बूलादिमथापरम्।।
परितोष्य नमस्कृत्य निर्विघ्नम्प्रार्थयेत्ततः ।। ५ ।।
औपासनाग्नौ कर्त्तव्यं स्वगृह्योक्तविधानतः ।।
आज्यभागान्तमाग्नेयं मखतन्त्रमतः परम् ।। ६ ।।
भूः स्वाहेति त्र्यृचा पूर्णाहुतिं हुत्वा समाप्य च।।
गायत्रीं प्रजपेद्यावदपराह्णमतंद्रितः ।।७।।
अथ सायन्तनीं सन्ध्यामुपास्य स्नानपूर्वकम् ।। ।
सायमौपासनं हुत्वा मौनी विज्ञापयेद्गुरुम् ।। ८ ।।
श्रपयित्वा चरुन्तस्मिन्समिदन्नाज्यभेदतः ।।
जुहुयाद्रौद्रसूक्तेन सद्योजातादि पञ्चभिः ।। ९ ।।
ब्रह्मभिश्च महादेवं सांबं वह्नौ विभावयेत् ।।
गौरीर्मिमाय मन्त्रेण हुत्वा गौरीमनुस्मरन् ।। 6.13.१०।।
ततोऽग्नये स्विष्टकृते स्वाहेति जुहुयात्सकृत्।।
हुत्वोपरिष्टात्तन्त्रन्तु ततोऽग्नेरुत्तरे बुधः ।।११।।
स्थित्वासने जपेन्मौनी चैलाजिनकुशोत्तरे ।।
आब्राह्मं च मुहूर्ते तु गायत्री दृढमानसः ।। १२ ।।
ततः स्नात्वा त्वशक्तश्चेद्भस्मना वा विधानतः ।।
श्रपयित्वा चरुं तस्मिन्नग्नावे वाभिधारितम् ।। १३ ।।
उदगुद्वास्य बर्हिष्यासाद्याज्येन चरुं ततः ।।
अभिघार्य्य व्याहृतीश्च रौद्रसूक्तञ्च पञ्च च ।। १४ ।।
जपेद्ब्रह्माणि सन्धार्य्य चित्तं शिवपदांबुजे ।।
प्रजापतिमथेन्द्रञ्च विश्वेदेवास्ततः परम् ।।१५।
ब्रह्माणं सचतुर्थ्यन्तं स्वाहांतान्प्रणवा दिकान् ।।
संजप्य वाचयित्वाऽथ पुण्याहं च ततः परम् ।। १६ ।।

परस्तात्तंत्रमग्नये स्वाहेत्यग्निमुखावधि ।।
निर्वर्त्य पश्चात्प्राणाय स्वाहेत्यारभ्य पञ्चभिः ।।१७।।
साज्येन चरुणा पश्चादग्निं स्विष्टकृतं हुनेत् ।।
पुनश्च प्रजपेत्सूक्तं रौद्रं ब्रह्माणि पञ्च च ।।१८।।
महेशादिचतुर्व्यूहमन्त्रांश्च प्रजपेत्पुनः ।।
हुत्वोपरिष्टात्तन्त्रन्तु स्वशाखोक्तेन वर्त्मना ।।१९।।
तत्तद्देवान्समुद्दिश्य सांगं कुर्य्याद्विचक्षणः।।
एवमग्निमुखाद्यं यत्कर्मतन्त्रम्प्रवर्त्तितम् ।।6.13.२०।।
अतः परं प्रजुहुयाद्विरजाहोममात्मनः ।।
षड्विंशतत्त्वरूपेस्मिन्देहे लीनस्य शुद्धये ।।२१।।
तत्त्वान्येतानि मद्देहे शुध्यन्तामित्यनुस्मरन् ।।
तत्रात्मतत्त्वशुद्ध्यर्थं मन्त्रैरारुणकेतुकैः ।।२२।।
पठ्यमानैः पृथिव्यादिपुरुषांतं क्रमान्मुने ।।
साज्येन चरुणा मौनी शिवपादाम्बुजं स्मरन् ।।२३।।
पृथिव्यादि च शब्दादि वागाद्यं पञ्चकं पुनः ।।
श्रोत्राद्यञ्च शिरः पार्श्वपृष्ठोदरचतुष्टयम् ।।२४।।
जंघां च योजयेत्पश्चात्त्वगाद्यं धातुसप्तकम् ।।
प्राणाद्यं पञ्चकं पश्चादन्नाद्यं कोशपञ्चकम्।।२५।।।
मनाश्चित्तं च बुद्धिश्चाहंकृतिः ख्यातिरेव च ।।
संकल्पन्तु गुणाः पश्चात्प्रकृतिः पुरुषस्ततः ।।२६।।
पुरुषस्य तु भोक्तृत्वं प्रतिपन्नस्य भोजने ।।
अन्तरंगतया तत्त्वपंचकं परिकीर्तितम् ।। २७ ।।
नियतिः कालरागश्च विद्या च तदनन्तरम् ।।
कला च पंचकमिदं मयोत्पन्नम्मुनीश्वर ।।२८।।
मायान्तु प्रकृतिं विद्यादिति माया श्रुतीरिता ।।
तज्जान्येतानि तत्त्वानि श्रुत्युक्तानि न संशयः ।।२९।।।
कालस्वभावो नियतिरिति च श्रुतितब्रवीत् ।।
एतत्पञ्चकमेवास्य पञ्चकञ्चक्रमुच्यते ।। 6.13.३० ।।
अजानन्पञ्चतत्त्वानि विद्वानपि च। मूढधीः ।।
निपत्याधस्तात्प्रकृतेरुपरिष्टात्पुमानयम् ।। ३१ ।।
काकाक्षिन्यायमाश्रित्य वर्त्तते पार्श्वतोन्वहम् ।।
विद्यातत्त्वमिदं प्रोक्तं शुद्धविद्यामहेश्वरौ ।। ३२ ।।
सदाशिवश्च शक्तिश्च शिवश्चेदं तु पञ्चकम् ।।

शिव तत्त्वमिदम्ब्रह्मन्प्रज्ञानब्रह्मवाग्यतः ।। ३३।।।
पृथिव्यादिशिवांतं यत्तत्त्वजातं मुनीश्वर ।।
स्वकारणलयद्वारा शुद्धिरस्य विधीयताम् ।। ३४ ।।
एकादशानां मन्त्राणाम्परस्मैपद पूर्वकम् ।।
शिवज्योतिश्चतुर्थ्यन्तमिदम्पदमथोच्चरेत् ।। ३५ ।।
न ममेति वदेत्पश्चादुद्देशत्याग ईरितः ।।
अतः परं विविद्यैति कपोतकायेति मन्त्रयोः ।। ३६ ।।
व्यापकाय पदस्यान्ते परमात्मन इत्यपि ।।
शिवज्योतिश्चतुर्थ्यन्तं विश्वभूतपदम्पुनः ।।३७।।
घसनोत्सुकशब्दञ्च चतुर्थ्यंतमथो वदेत् ।।
परस्मैपदमुच्चार्य्य देवाय पदमुच्चरेत्।।३८।।
उत्तिष्ठस्वेति मन्त्रस्य विश्वरूपाय शब्दतः ।।
पुरुषाय पदम्ब्रूयादोस्वाहेत्यस्य संवदेत् ।।३९।।
लोकत्रयपदस्यान्ते व्यापिने परमात्मने।।
शिवायेदं न मम च पदम्ब्रूयादतः परम् ।।6.13.४०।।।
स्व शाखोक्तप्रकारेण पुरस्तात्तन्त्रकर्म्म च ।।
निर्वर्त्य सर्पिषा मिश्रं चरुम्प्राश्य पुरोधसे ।। ४१ ।।
प्रदद्याद्दक्षिणान्तस्मै हेमादिपरिबृंहिताम् ।।
ब्रह्माणमुद्वास्य ततः प्रातरौपासनं हुनेत् ।। ४२ ।।
सं मां सिञ्चन्तु मरुत इति मन्त्रञ्जपेन्नरः ।।
याते अग्न इत्यनेन मन्त्रेणाग्नौ प्रताप्य च ।। ४३ ।।
हस्तमग्नौ समारोप्य स्वात्मन्यद्वैतधामनि ।।
प्राभातिकीं ततः सन्ध्यामुपास्यादित्यमप्यथ ।। ४४ ।।
उपस्थाय प्रविश्याप्सु नाभिदघ्नं प्रवेशयन् ।।
तन्मन्त्रान्प्रजपेत्प्रीत्या निश्चलात्मा समुत्सुकः ।।४५।।
आहिताग्निस्तु यः कुर्य्यात्प्राजापत्येष्टिमाहिते ।।
श्रौते वैश्वानरे सम्यक्सर्ववेदसदक्षिणाम् ।।४६।।
अथाग्निमात्मन्यारोप्य ब्राह्मणः प्रव्रजेद्गृहात्।।
सावित्रीप्रथमं पादं सावित्रीमित्युदीर्य च।।४७।।
प्रवेशयामि शब्दान्ते भूरोमिति च संवदेत् ।।
द्वितीयम्पादमुच्चार्य्य सावित्रीमिति पूर्ववत् ।। ४८ ।।
प्रवेशयामि शब्दान्ते भुवरोमिति संवदेत्।।
तृतीयम्पादमुच्चार्य्य सावित्रीमित्यतः परम् ।।४९।।

प्रवेशयामि शब्दान्ते सुवरोमित्युदीरयेत्।।
त्रिपादमुच्चरेत्पूर्वं सावित्रीमित्यतः परम् ।।6.13.५०।।
प्रवेशयामि शब्दान्ते भूर्भुवस्सुवरोमिति ।।
उदीरयेत्परम्प्रीत्या निश्चलात्मा मुनीश्वर ।।५१।।
इयम्भगवती साक्षाच्छंकरार्द्धशरीरिणी ।।
पंचवक्त्रा दशभुजा विपञ्चनयनोज्ज्वला ।।५२।।
नवरत्नकिरीटोद्यच्चन्द्र लेखावतंसिनी ।।
शुद्धस्फटिकसंकाशा दयायुधधरा शुभा ।।५३।।
हारकेयूरकटककिंकिणीनूपुरादिभिः ।।
भूषितावयवा दिव्यवसना रत्नभूषणा ।। ५४ ।।
विष्णुना विधिना देवऋषिगंधर्व्वनायकैः ।।
मानवैश्च सदा सेव्या सर्व्वात्मव्यापिनी शिवा ।। ५५ ।।
सदाशिवस्य देवस्य धर्मपत्नी मनोहरा ।।
जगदम्बा त्रिजननी त्रिगुणा निर्गुणाप्यजा ।। ५६ ।।
इत्येवं संविचार्य्याथ गायत्रीं प्रजपेत्सुधीः ।।
आदिदेवीं च त्रिपदां ब्राह्मणत्वादिदामजाम् ।।५७।।
यो ह्यन्यथा जपेत्पापो गायत्री शिवरूपिणीम्।।
स पच्यते महाघोरे नरके कल्पसंख्यया ।। ५८ ।।
सा व्याहृतिभ्यः संजाता तास्वेव विलयं गता।।
ताश्च प्रणवसम्भूताः प्रणवे विलयं गता ।।५९।।
प्रणवस्सर्ववेदादिः प्रणवः शिववाचकः ।।
मन्त्राधिराजराजश्च महाबीजं मनुः परः ।। 6.13.६० ।।
शिवो वा प्रणवो ह्येष प्रणवो वा शिवः स्मृतः ।।
वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते यतः ।। ६१ ।।
एनमेव महामन्त्रञ्जीवानाञ्च तनुत्यजाम् ।।
काश्यां संश्राव्य मरणे दत्ते मुक्तिं परां शिवः ।। ६२ ।।
तस्मादेकाक्षरन्देवं शिवं परमकारणम् ।।
उपासते यतिश्रेष्ठा हृदयाम्भोजमध्यगम् ।। ६३ ।।
मुमुक्षवोऽपरे धीरा विरक्ता लौकिका नराः।।
विषयान्मनसा ज्ञात्वोपासते परमं शिवम् ।।६४।।
एवं विलाप्य गायत्रीं प्रणवे शिववाचके ।।
अहं वृक्षस्य रेरिवेत्यनुवाकं जपेत्पुनः ।। ६५ ।।
यश्छन्दसामृषभ इत्यनुवाकमुपक्रमात् ।।

गोपायांतं जपन्पश्चादुत्थितोहमितीरयेत् ।।६६।।
वदेज्जयेत्त्रिधा मन्दमध्योच्छ्रायक्रमान्मुने।।
प्रणवम्पूर्व्वमुद्धत्य सृष्टिस्थितिलयक्रमात्।।६७।।
तेषामथ क्रमाद्ब्रूयाद्भूस्संन्यस्तम्भुवस्तथा ।।
संन्यस्तं सुवरित्युक्त्वा संन्यस्तं पदमुच्चरम् ।।६८।।
सर्वमंत्राद्यः प्रदेशे मयेति च पदं वदेत् ।।
प्रणवं पूर्वमुद्धृत्य समष्टिं व्याहृतीर्वदेत् ।।६९।।
समस्तमित्यतो ब्रूयान्मयेति च समब्रवीत् ।।
सदाशिवं हृदि ध्यात्वा मंदादीति ततो मुने।।6.13.७०।।
प्रैषमंत्रांस्तु जप्त्वैवं सावधानेन चेतसा ।।
अभयं सर्वभूतेभ्यो मत्तः स्वाहेति संजपन् ।। ७१ ।।
प्राच्यां दिश्यप उद्धृत्य प्रक्षिपेदजलिं ततः ।।
शिखां यज्ञोपवीतं च यत्रोत्पाट्य च पाणिना ।।७२।।
गृहीत्वा प्रणवं भूश्च समुद्रं गच्छ सम्वदेत् ।।
वह्निजायां समुच्चार्य्य सोदकाञ्जलिना ततः ।। ७३ ।।
अप्सु हूयादथ प्रेषैरभिमंत्र्य त्रिधा त्वपः ।
प्राश्य तीरे समागत्य भूमौ वस्त्रादिकं त्यजेत् ।। ७४ ।।
उदङ्मुखः प्राङ्मुखो वा गच्छेस्सप्तपदाधिकम् ।।
किञ्चिद्दूरमथाचार्यस्तिष्ठ तिष्ठेति संवदेत् ।।७५।।
लोकस्य व्यवहारार्थं कौपीनं दण्डमेव च ।।
भगवन्स्वीकुरुष्वेति दद्यात्स्वेनैव पाणिना ।। ७६ ।।
दत्त्वा सुदोरं कौपीनं काषायवसनं ततः ।।
आच्छाद्याचम्य च द्वेधा त शिष्यमिति संवदेत्।। ७७ ।।
इन्द्रस्य वज्रोऽसि तत इति मन्त्रमुदाहरेत् ।।
सम्प्रार्थ्य दण्डं गृह्णीयात्सखाय इति संजपन् ।। ७८ ।।
अथ गत्वा गुरोः पार्श्वं शिवपादांबुजं स्मरन् ।।
प्रणमेद्दण्डवद्भूमौ त्रिवारं संयतात्मवान् ।। ७९ ।।
पुनरुत्थाय च शनैः प्रेम्णा पश्यन्गुरुं निजम् ।।
कृताञ्जलिपुटस्तिष्ठेद्गुरुपाद समीपतः ।। 6.13.८० ।।
कर्म्मारम्भात्पूर्वमेव गृहीत्वा गोमयं शुभम् ।।
स्थूलामलकमात्रेण कृत्वा पिण्डान्विशोषयेत।।८१।।
सौरैस्तु किरणैरेव होमारम्भाग्निमध्यगान्।।
निक्षिप्य होमसम्पूर्त्तौ भस्म संगृह्य गोपयेत् ।।८२।।

ततो गुरुस्समादाय विरजानलजं सितम् ।।
भस्म तेनैव तं शिष्यमग्निरित्यादिभिः क्रमात् ।।८३।।
मंत्रैरंगानि संस्पृश्य मूर्द्धादिचरणान्ततः ।।
ईशानाद्यैः पञ्चमंत्रै शिर आरभ्य सर्वतः ।। ८४ ।।
समुद्धृत्य विधानेन त्रिपुण्ड्रं धारयेत्ततः।।
त्रियायुषैस्त्र्यम्बकैश्च मूर्ध्नं आरभ्य च क्रमात्।।८५।।
ततस्सद्भक्तियुक्तेन चेतसा शिष्यसत्तमः।।
हृत्पंकजे समासीनं ध्यायेच्छिवमुमासखम्।।८६।।
हस्तं निधाय शिरसि शिष्यस्य स गुरुर्वदेत् ।।
त्रिवारं प्रणवं दक्षकर्णे ऋष्यादिसंयुतम् ।।८७।।
ततः कृत्वा च करुणां प्रणवस्यार्थ मादिशेत् ।।
षड्विधार्त्थपरि ज्ञानसहितं गुरुसत्तमः।।८८।।
द्विषट्प्रकारं स गुरुं प्रणमेद्भुवि दण्डवत्।।
तदधीनो भवेन्नित्यं नान्यत्कर्म्म समाचरेत् ।।८९।।
तदाज्ञया ततः शिष्यो वेदान्तार्थानुसारतः ।।
शिवज्ञानपरो भूयात्सगुणागुणभेदतः ।।6.13.९०।।
ततस्तेनैव शिष्येण श्रवणाद्यंगपूर्व्वकम् ।।
प्रभातिकाद्यनुष्ठानं जपान्ते कारयेद्गुरुः ।। ९१ ।।
पूजां च मण्डले तस्मिन्कैलासप्रस्तराह्वये ।।
शिवोदितेन मार्गेण शिष्यस्तत्रैव पूजयेत् ।।९२।।
देवन्नित्यमशक्तश्चेत्पूजितुं गुरुणा शुभम् ।।
स्फाटिकं पीठिकोपेतं गृह्णीयाल्लिंगमैश्वरम् ।।९३।।
वरं प्राणपरित्यागश्छेदनं शिरसोऽपि मे ।।
न त्वनभ्यर्च्य भुञ्जीयां भगवन्तं त्रिलोचनम् ।। ९४ ।।
एवन्त्रिवारमुच्चार्य्य शपथं गुरुसन्निधौ ।
कुर्य्याद्दृढमनाश्शिष्यः शिवभक्तिसमुद्वहन्।।९५।।
तत एव महादेवं नित्यमुद्युक्तमानसः।।
पूजयेत्परया भक्त्या पञ्चावरणमार्गतः ।।९६।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां त्रयोदशोऽध्यायः ।। १३ ।।

वामदेव उवाच ।।
भगवन्षण्मुखाशेष विज्ञानामृतवारिधे ।।
विश्वामरेश्वरसुत प्रणतार्त्तिप्रभञ्जन ।।१।।
षड्विधार्त्थपरिज्ञानमिष्टदं किमुदाहृतम् ।।
के तत्र षड्विधा अर्थाः परिज्ञानञ्च किं प्रभो ।।२।।
प्रतिपाद्यश्च कस्तस्य परिज्ञाने च किं फलम् ।।
एतत्सर्वं समाचक्ष्व यद्यत्पृष्टं मया गुह ।। ३ ।।
एतमर्त्थमविज्ञाय पशुशास्त्रविमोहितः।।
अद्याप्यहम्महासेन भ्रान्तश्च शिवमायया।।४।।
अहं शिवपदद्वंद्वज्ञानामृतरसायनम्।।
पीत्त्वा विगतसम्मोहो भविष्यामि यथा तथा ।। ५ ।।
कृपामृतार्द्रया दृष्ट्या विलोक्य सुचिरं मयि ।।
कर्त्तव्योऽनुग्रहः श्रीमत्पादाब्जशरणागते ।। ६ ।।
इति श्रुत्वा मुनीन्द्रोक्तं ज्ञानशक्तिधरो विभुः ।।
प्राहान्यदर्शनमहासंत्रासजनकं वचः ।।७।।
सुब्रह्मण्य उवाच ।।
श्रूयताम्मुनिशार्दूल त्वया यत्पृष्टमादरात्।।
समष्टिव्यष्टिभावेन परिज्ञानम्महेशितुः ।।८।।
प्रणवार्त्थपरिज्ञानरूपं तद्विस्तरादहम् ।।
वदामि षड्विधार्थैक्य परिज्ञानेन सुव्रत ।। ९ ।।
प्रथमो मंत्ररूपः स्याद्द्वितीयो मंत्रभावितः ।।
देवतार्त्थस्तृतीयोऽर्थः प्रपञ्चार्थस्ततः परम्।।6.14.१०।।
चतुर्थः पञ्चमार्थस्स्याद्गुरुरूपप्रदर्शकः।
षष्ठश्शिष्यात्मरूपोऽर्थः षड्विधार्थाः प्रकीर्त्तिताः ।।११।।
तत्र मन्त्रस्वरूपन्ते वदामि मुनिसत्तम।।
येन विज्ञातमात्रेण महाज्ञानी भवेन्नरः ।। १२।।
आद्यस्स्वरः पंचमश्च पञ्चमान्तस्ततः परः ।।
बिन्दुनादौ च पञ्चार्णाः प्रोक्ता वेदैर्न चान्यथा ।।१३।।
एतत्समष्टिरूपो हि वेदादिस्समुदाहृतः ।।
नादस्सर्व्वसमष्टिः स्याद्बिंद्वाढ्यं यच्चतुष्टयम् ।। १४ ।।
व्यष्टिरूपेण संसिद्धं प्रणवे शिववाचके ।।
यंत्ररूपं शृणु प्राज्ञ शिवलिंगं तदेव हि ।। १५ ।।
सर्व्वाधस्ताल्लिखेत्पीठं तदूर्ध्वम्प्रथमं स्वरम् ।।

उवर्णं च तदूर्द्ध्वं स्थम्पवर्गान्तं तदूर्ध्वगम् ।।१६।।
तन्मस्तकस्थं बिंदुं च तदूर्द्ध्वं नादमालिखेत् ।।
यंत्रे संपूर्णतां याति सर्वकामः प्रसिध्यति ।।१७।।
एतं यंत्रं समालिख्य प्रणवे नव वेष्टयेत् ।।
तदुत्थेनैव नादेन विद्यन्नादावसानकम् ।। १८ ।।
देवतार्त्थम्प्रवक्ष्यामि गूढं सर्व्वत्र यन्मुने ।।
तव स्नेहाद्वामदेव यथा शंकरभाषितम् ।। १९ ।।
सद्योजातम्प्रपद्यामीत्युपक्रम्य सदाशिवोम् ।।
इति प्राह श्रुतिस्तारं ब्रह्मपंचकवाचकम् ।। 6.14.२० ।।
विज्ञेया ब्रह्मरूपिण्यस्सूक्ष्माः पंचैव देवताः ।।
एता एव शिवस्यापि मूर्तित्वे नोपबृंहिताः ।। २१ ।।
शिवस्य वाचको मन्त्रश्शिवमूर्त्तेश्च वाचकः ।।
मूर्त्तिमूर्तिमतोर्भेदो नात्यन्तं विद्यते यतः ।।२२ ।।
ईशानमुकुटोपेत इत्यारभ्य पुरोदितः ।।
शिवस्य विग्रहः पञ्चवक्त्राणि शृणु सांप्रतम्।। २३ ।।
पंचमादि समारभ्य सद्योजाताद्यनुक्रमात् ।।
उर्द्ध्वांतमीशानांतं च मुखपंचकमीरितम् ।। २४ ।।
ईशानस्यैव देवस्य चतुर्व्यूहपदे स्थितम् ।।
पुरुषाद्यं च सद्यांतं ब्रह्मरूपं चतुष्टयम् ।। २५ ।।
पंच ब्रह्मसमष्टिस्स्यादीशानं ब्रह्म विश्रुतम् ।।
पुरुषाद्यं तु तद्व्यष्टिस्सद्योजातान्तिकं मुने ।। २६ ।।
अनुग्रहमयं चक्रमिदं पंचार्त्थकारणम् ।।
परब्रह्मात्मकं सूक्ष्मं निर्विकारमनामयम् ।। २७ ।।
अनुग्रहोऽपि द्विविधस्तिरोभावादिगोचरः ।।
प्रभुश्चान्यस्तु जीवानां परावरविमुक्तिदः ।। २८ ।।
एतत्सदाशिवस्यैव कृत्यद्वयमुदाहृतम् ।।
अनुग्रहेऽपि सृष्ट्यादिकृत्यानां पंचकं विभोः ।।२९।।
मुने तत्रापि सद्याद्या देवताः परिकीर्त्तिताः ।।
परब्रह्मस्वरूपास्ताः पंच कल्याणदास्सदा ।। 6.14.३० ।।
अनुग्रहमयं चक्रं शांत्यतीतकलामयम् ।।
सदाशिवाधिष्ठितं च परमं पदमुच्यते ।।३१।।
एतदेव पदं प्राप्यं यतीनां भवितात्मनाम् ।।
सदाशिवोपासकानां प्रणवासक्तचेतसाम् ।। ३२ ।।

एतदेव पदं प्राप्य तेन साकं मुनीश्वराः ।।
भुक्त्वा सुविपुलान्भोगान्देवेन ब्रह्मरूपिणा ।। ३३ ।।
महाप्रलयसंभूतौ शिवसाम्यं भजंति हि ।।
न पतंति पुनः क्वापि संसाराब्धौ जनाश्च ते ।। ३४ ।।
ते ब्रह्मलोक इति च श्रुतिराह सनातनी ।।
ऐश्वर्य्यं तु शिवस्यापि समष्टिरिदमेव हि ।। ३५ ।।
सर्वैश्वर्येण सम्पन्न इत्याहाथर्व्वणी शिखा ।।
सर्वैश्वर्य्यप्रदातृत्वमस्यैव प्रवदन्ति हि ।। ३६ ।।
चमकस्य पदान्नान्य दधिकं विद्यते पदम् ।।
ब्रह्मपंचकविस्तारप्रपंचः खलु दृश्यते ।।३७।।
ब्रह्मभ्य एवं संजाता निवृत्त्याद्याः कला मताः ।।
सूक्ष्मभूतस्वरूपिण्यः कारणत्वेन विश्रुताः ।। ३८ ।।
स्थूलरूपस्वरूपस्य प्रपंचस्यास्य सुव्रत ।।
पंचधावस्थितं यत्तद्ब्रह्मपंचकमिष्यते ।। ३९ ।।
पुरुषः श्रोत्रवाण्यौ च शब्दकाशौ च पंचकम् ।।
व्याप्तमीशानरूपेण ब्रह्मणा मुनिसत्तम ।। 6.14.४० ।।
प्रकृतिस्त्वक्च पाणिश्च स्पर्शो वायुश्च पंचकम् ।।
व्याप्तं पुरुषरूपेण ब्रह्मणैव मुनीश्वर ।। ४१ ।।
अहंकारस्तथा चक्षुः पादो रूपं च पावकः ।।
अघोरब्रह्मणा व्याप्तमेतत्पंचकमंचितम् ।।४२।।
बुद्धिश्च रसना पायू रस आपश्च पंचकम् ।।
ब्रह्मणा वामदेवेन व्याप्तं भवति नित्यशः ।।४३।।
मनो नासा तथोपस्थो गन्धो भूमिश्च पंचकम्।।
सद्येन ब्रह्मणा व्याप्तं पंचब्रह्ममयं जगत् ।।४४।।
यंत्ररूपेणोपदिष्टः प्रणवश्शिववाचकः।।
समष्टिः पंचवर्णानां बिंद्वाद्यं यच्चतुष्टयम् ।।४५।।
शिवोपदिष्टमार्गेण यंत्ररूपं विभावयेत्।।
प्रणवम्परमं मन्त्राधिराजं शिवरूपिणम्।।४६।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां शिवरूपप्रणववर्णनं नाम चतुर्द्दशोध्यायः ।। १४ ।।

ईश्वर उवाच ।।
ततः परं प्रवक्ष्यामि सृष्टिपद्धतिमुत्तमाम् ।।
सदाशिवान्महेशादिचतुष्कस्य वरानने।।१।।
सदाशिवस्समष्टिस्स्यादाकाशधिपतिः प्रभुः ।।
अस्यैव व्यष्टितापन्नम्महेशादिचतुष्टयम् ।।२।।
सदाशिवसहस्रांशान्महेशस्य समुद्भवः ।।
पुरुषाननरूपत्वाद्वायोरधिपतिश्च सः ।।३।।
मायाशक्तियुतो वामे सकलश्च क्रियाधिकः ।।
अस्यैव व्यष्टिरूपं स्यादीश्वरादिचतुष्टयम् ।।४।।
ईशो विश्वेश्वरः पश्चात्परमेशस्ततः परम् ।।
सर्वेश्वर इतीदन्तु तिरोधाचक्रमुत्तमम् ।।५।।
तिरोभावो द्विधा भिन्न एको रुद्रादिगोचरः ।।
अन्यश्च देहभावेन पशुवर्गस्य सन्ततेः ।।६।।
भोगानुरंजनपरः कर्मसाम्यक्षणावधि ।।
कर्मसाम्ये स एकः स्यादनुग्रहमयो विभुः ।।७।।
तत्र सर्वेश्वरा यास्ते देवताः परिकीर्त्तिताः ।।
परब्रह्मात्मकाः साक्षान्निर्विकल्पा निरामयाः ।।८।।
तिरोभावात्मकं चक्रं भवेच्छान्तिकलामयम् ।।
महेश्वराधिष्ठितं च पदमेतदनुत्तमम् ।।९।।
एतदेव पदं प्राप्यं महेशपदसेविनाम् ।।
माहेश्वराणां सालोक्यक्रमादेव विमुक्तिदम्।।6.15.१०।।
महेश्वरसहस्रांशाद्रुद्रमूर्तिरजायत ।।
अघोरवदनाकारस्तेजस्तत्त्वाधिपश्च सः ।।११।।
गौरीशक्तियुतो वामे सर्व्वसंहारकृत्प्रभुः ।।
अस्यैव व्यष्टिरूपं स्याच्छिवाद्यथ चतुष्टयम् ।। १२ ।।
शिवो हरो मृडभवौ विदितं चक्रमद्भुतम् ।।
संहाराख्यं महादिव्यं परमं हि मुनीश्वर ।। १३ ।।
स संहारस्त्रिधा प्रोक्तो बुधैर्नित्यादिभेदतः ।।
नित्यो जीवसुषुप्त्याख्यो विधेर्नैमित्तिकः स्मृतः ।। १४ ।।
विलयस्तस्य तु महानिति वेदनिदर्शितः ।।
जीवानां जन्मदुःखादिशांतानामुषितात्मनाम् ।। १५ ।।
विश्रांत्यर्थं मुनिश्रेष्ठ कर्मणां पाकहेतवे।।
संहारः कल्पितस्त्रेधा रुद्रेणामिततेजसा ।।१६।।

रुद्रस्यैव तु कृत्यानां त्रयमेतदुदाहृतम् ।।
संहृतवपि सृष्ट्यादिकृत्यानां पञ्चकं विभोः ।।१७।।
मुने तत्र भवाद्यास्ते देवताः परिकीर्त्तिताः ।।
परब्रह्मस्वरूपाश्च लोकानुग्रहकारकाः ।। १८ ।।
संहाराख्यमिदं चक्रं विद्यारूपकलामयम् ।।
अधिष्ठितं च रुद्रेण पदमेतन्निरामयम् ।।१९।।
एतदेव पदं प्राप्यं रुद्राराधनकांक्षिणाम् ।।
रुद्राणां तद्धि सालोक्यक्रमात्सायुज्यदम्मुने ।।6.15.२०।।
रुद्रमूर्त्तेस्सहस्रांशाद्विष्णोश्चैवाभवज्जनिः ।।
स वामदेवचक्रात्मा वारितत्त्वैकनायकः ।।२१।।
रमाशक्तियुतो वामे सर्व्वरक्षाकरो महान्।।
चतुर्भुजोऽरविंदाक्षः श्यामश्शंखादिचिह्नभृत् ।।२२।।
अस्यैव वासुदेवादिचतुष्कं व्यष्टितां गतम् ।।
उपासनरतानां वै वैष्णवानां विमुक्तिदम् ।।२३।।
वासुदेवोऽनिरुद्धश्च ततस्संकर्षणः परः ।।
प्रद्युम्नश्चेति विख्यातं स्थितिचक्रमनुत्तमम् ।। २४ ।।
स्थितिस्सृष्टस्य जगतस्तत्कर्त्रा सह पालनम् ।।
आरब्धकर्मभोगान्तं जीवानां फलभोगिनाम् ।। २५ ।।
विष्णोरेवेदमाख्यातं कृत्यं रक्षाविधायिनः।।
स्थितावपि तु सृष्ट्यादि कृत्यानां पंचकं विभोः ।।२६।।
तत्र प्रद्युम्नमुख्यास्ते देवताः परिकीर्तिताः ।।
निर्विकल्पा निरातंका मुक्तानंदकरास्सदा ।।२७।।
स्थितिचक्रमिदं ब्रह्मन्प्रतिष्ठारूपमुत्तमम् ।।
जनार्दनाधिष्ठितं च परमं पदमुच्यते ।। २८ ।।
एवदेव पदं प्राप्यं विष्णुपादाब्जसेविनाम् ।।
वैष्णवानां चक्रमिदं सालोक्यादिपदप्रदम् ।।२९।।
विष्णोरेव सहस्रांशात्संबभूव पितामहः ।।
सद्योजातमुखात्मा यः पृथिवीतत्त्वनायकः ।।6.15.३०।।
वाग्देवीसहितो वामे सृष्टिकर्त्ता जगत्प्रभुः ।।
चतुर्मुखो रक्तवर्णो रजोरूपस्वरूपवान् ।।३१।।
हिण्यगर्भाद्यस्यैव व्यष्टिरूपं चतुष्टयम् ।।
हिरण्यगर्भोथ विराट् पुरुषः काल एव च।।३२।।
सृष्टि चक्रमिदं ब्रह्म पुत्रादिऋषिसेवितम्।।

सर्व्वकामार्थदं ब्रह्मन्परिवारसुखप्रदम्।।३३।।
सृष्टिस्तु संहृतस्यास्य जीवस्य प्रकृतौ बहिः।।
आनीय कर्मभोगार्थ साधनांगफलैस्सह ।।३४।।
संयोजनमितीदं तु कृत्यं पैतामहं विदुः ।।
जगत्सृष्टिक्रियाविज्ञा यावद्व्यूहं सुखावहम् ।।३५।।
जगत्सृष्टावपि मुने कृत्यानां च पंचकं विभोः ।।
अस्ति कालोदयस्तत्र देवताः परिकीर्त्तिताः।।३६।।
निवृत्तिरूपमाख्यातं सृष्टिचक्रमिदं बुधैः ।।
पितामहाधिष्ठितं च पदमेतद्धि शोभनम् ।।३७।।
एतदेव प्रदं प्राप्यं ब्रह्मार्पितधियां नृणाम् ।।
पैतामहानामेतद्धि सालोक्या दिविमुक्तिदम् ।।३८।।
अस्मिन्नपि चतुष्के तु चक्राणां प्रणवो भवेत् ।।
महेशादिक्रमादेव गौण्या वृत्त्या स वाचकः ।।३९।।
इदं खलु जगच्चक्रं श्रुतिविश्रुतवैभवम् ।।
पञ्चारं चक्रमिति ह स्तौति श्रुतिरिदम्मुने।।6.15.४०।।
एकमेव जगच्चक्रं शम्भोश्शक्तिविजृंभितम् ।।
सृष्ट्यादिपंचांवयवं पंचारमिति कथ्यते ।।४१।।
अलातचक्रभ्रमिवदविच्छिन्नलयोदयम् ।।
परितो वर्तते यस्मात्तस्माच्चक्रमितीरितम्।।४२।।
सृष्ट्यादिपृथुसृष्टित्वात्पृथुत्वेनोपदृश्यते ।।
हिरण्मयस्य देवस्य शम्भोरमिततेजसः ।। ४३ ।।
शक्तिकार्यमिदं चक्रं हिरण्यज्योतिराश्रितम् ।।
सलिलेनावृतमिदं सलिलं वह्निनावृतम् ।।४४।।
आवृतो वायुना वह्निराकाशेनावृतं महत् ।।
भूतादिना तथाकाशो भूतादिर्महतावृतः ।। ४५ ।।
अव्यक्तेनावृतस्तद्वन्महानित्येवमास्तिकैः ।।
ब्रह्माण्डमिति संप्रोक्तमाचार्य्यैर्मुनिसत्तम ।। ४६ ।।
उक्तानि सप्तावरणान्यस्य विश्वस्य गुप्तये ।।
चक्राद्दशगुणाधिक्यं सलिलस्य विधीयते ।। ४७ ।।
उपर्युपरि चान्योन्यमेवं दशगुणाधिकम् ।।
ब्रह्माण्डमिति विज्ञेयं तद्द्विजैर्मुनिनायक ।।४८।।
इममर्थमुरीकृत्य चक्रसामीप्यवर्त्तनात्।।
सलिलस्य च तन्मध्ये इति प्राह श्रुतिस्स्वयम्।।४९।।

अनुग्रहतिरोभावसंहृतिस्थितिसृष्टिभिः ।।
करोत्यविरतं लीलामेकश्शक्तियुतश्शिवः।।6.15.५०।।
बहुनेह किमुक्तेन मुने सारं वदामि ते।।
शिव एवेदमखिलं शक्तिमानिति निश्चितम्।।५१।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायामुपासनामूर्त्तिवर्णनं नाम पंचदशोऽध्यायः ।।१५।।

सूत उवाच ।।
श्रुत्वोपदिष्टं गुरुणा वेदार्थं मुनिपुंगवः ।।
परमात्मनि संदिग्धं परिपप्रच्छ सादरम् ।।१।।
वामदेव उवाच ।।
ज्ञानशक्तिधर स्वामिन्परमानन्दविग्रह ।।
प्रणवार्थामृतं पीतं श्रीमुखब्जात्परिस्रुतम् ।।२।।
दृढप्रज्ञश्च जातोऽस्मि संदेहो विगतो मम ।।
किंचिदन्यन्महासेन पृच्छामि त्वां शृणु प्रभो ।।३।।
सदाशिवादिकीटांतरूपस्य जगतः स्थितिः।।
स्त्रीपुंरूपेण सर्वत्र दृश्यते न हि संशयः ।। ४ ।।
एवं रूपस्य जगतः कारणं यत्सनातनम् ।।
स्त्रीरूपं तत्किमाहोस्वित्पुरुषो वा नपुंसकम् ।। ५ ।।
उत मिश्रं किमन्यद्वा न जातस्तत्र निर्णयः ।।
बहुधा विवदन्तीह विद्वांसश्शास्त्रमोहिताः ।। ६ ।।
जगत्सृष्टिविधायिन्यः श्रुतयो जगता सह ।।
विष्णुब्रह्मादयो देवाः सिद्धाश्च न विदन्ति हि ।।७।।
यथैक्यभावं गच्छेयुरेतदन्यच्च वेदय ।।
जानामीति करोमीति व्यवहारः प्रदृश्यते ।। ८ ।।
स हि सर्वात्मसंसिद्धो विवादो नात्र कस्यचित् ।।
सर्वदेहेन्द्रियमनोबुध्यहंकारसंभवः ।।९।।
आहोस्वि दात्मनोरूपं महानत्रापि संशयः ।।
द्वयमेतद्धि सर्व्वेषां विवादास्पदमद्भुतम् ।। 6.16.१० ।।
उत्पाट्याज्ञानसंभूतं संशयाख्यं विषद्रुमम्।।
शिवाद्वैतमहाकल्पवृक्षभूमिर्यथाभवेत् ।। ११ ।।
चित्तं मम यथा देव बोध्योऽस्मि कृपया तव ।।
कृपातस्तव देवेश दृढज्ञानी भवा म्यहम् ।। १२ ।।
सूत उवाच ।।
श्रुत्वैवं मुनिना पृष्टं वचो वेदान्तनिर्वृतम् ।।
रहस्यं प्रभुराहेदं किंचित्प्रहसिताननः ।।९३।।
सुब्रह्मण्य उवाच ।।
एतदेव मुने गुह्यं शिवेन परिभाषितम् ।।
अम्बायाः शृण्वतो देव्या वामदेव ममापि हि ।। १४ ।।
तस्याः स्तन्यं तदा पीत्वा संतृप्तोऽस्मि मुहुर्मुहुः।।

श्रुतवान्निश्चलं तद्वै निश्चितं मे विचारितम्।।१५।।
तत्ते वदामि दयया वामदेव महामुने।।
महद्गुह्यं च परमं सुत त्वं शृणु सांप्रतम् ।।१६।।
कर्मास्ति तत्त्वादारभ्य शास्त्रवादस्सुविस्तरः ।।
यथाविवेकं श्रोतव्यो ज्ञानिना ज्ञानदो मुने।।१७।।
त्वयोपदिष्टा ये शिष्यास्तत्र को वा भवत्समः ।।
कपिलादिषु शास्त्रेषु भ्रमंत्यद्यापि तेऽधमाः ।।१८।।
ते शप्ता मुनिभिः षड्भिश्शिवनिन्दा पराः पुरा।।
न श्रोतव्या हि तद्वार्त्ता तेऽन्यथावादिनो यतः।।१९।।
अनुमानप्रयोगस्याप्यवकाशो न विद्यते।।
पंचावयवयुक्तस्य स तु धूमस्य दर्शनात् ।। 6.16.२० ।।
पर्व्वतस्याग्निमद्भावं वदंत्यत्रापि सुव्रत।
प्रत्यक्षस्य प्रपंचस्य दर्शनालंबनं त्वतः ।। २१ ।।
ज्ञातव्यः परमेशानः परमात्मा न संशयः ।।
स्त्रीपुंरूपमयं विश्वं प्रत्यक्षेणैव दृश्यते ।। २२ ।।
षट्कोशरूपः पिण्डो हि तत्र चाद्यत्रयम्भवेत् ।।
मात्रंशजं पुनश्चान्यत्पित्रंशजमिति श्रुतिः ।। २३ ।।
एवं सर्वशरीरेषु स्त्रीपुंभावविदो जनाः ।।
परमात्मन्यपि मुने स्त्रीपुंभावं विदुर्बुधा।।२४।।
सच्चिदानदरूपत्वं वदति ब्रह्मणः श्रुतिः ।।
असन्निवर्त्तकः शब्दः सदात्मेति निगद्यते ।। २५ ।।
निवर्त्तनं जगत्त्वस्य चिच्छब्देन विधीयते ।।
त्रिलिंगवर्त्ती सच्छब्दः पुरुषोत्र विधीयताम् ।। २५ ।।
प्रकाशवाची स भवेत्सत्प्रकाश इति स्फुटम् ।।
ज्ञानशब्दस्य पर्य्यायश्चिच्छब्दः स्त्रीत्वमागतः ।। २७ ।।
प्रकाशश्चिच्च मिथुनं जगत्कारणतां गतम् ।।
सच्चिदात्मन्यपि तथा जगत्कारणतां गतम् ।। २८ ।।
एकत्रैव शिवश्शक्तिरिति भावो विधीयते ।।
तैलवर्त्त्यादिमालिन्यात्प्रकाशस्यापि वर्त्तते ।। २९ ।।
मालिन्यमशिवत्वं च चिताग्न्यादिषु दृश्यते ।।
एवं विवर्त्तकत्वेन शिवत्वं श्रुतिचोदितम् ।। 6.16.३० ।।
जीवाश्रितायाश्चिच्छक्तेर्दौर्बल्यं विद्यते सदा ।।
तन्निवृत्यर्थमेवात्र शक्तित्वं सार्वकालिकम् ।। ३१ ।।

बलवाञ्छक्तिमांश्चेति व्यवहारः प्रदृश्यते ।।
लोके वेदे च ससतं वामदेव महामुने ।।३२।।
एवं शिवत्वं शक्तित्वं परमात्मनि दर्शितम् ।।
शिवशक्त्योस्तु संयोगादानंदस्सततोदितः ।।३३।।
अतो मुने तमुद्दिश्य मुनयः क्षीणकल्मषाः ।।
शिवे मनस्समाधाय प्राप्ताश्शिवमनामयम् ।। ३४ ।।
सर्वात्मत्वं तयोरेवं ब्रह्मेत्युपनिषत्सु च ।।
गीयते ब्रह्मशब्देन बृंहिधात्वर्थगोचरम् ।। ३५ ।।
बृंहणत्वं बृहत्त्वं च शंभ्वाख्यविग्रहे ।।
पंचब्रह्ममये विश्वप्रतीतिर्ब्रह्म शब्दिता ।। ३६ ।।
प्रतिलोमात्मके हंसे वक्ष्यामि प्रणवोद्भवम् ।।
तव स्नेहाद्वामदेव सावधानतया शृणु ।।३७।।
व्यंजनस्य सकारस्य हकारस्य च वर्जनात् ।।
ओमित्येव भवेत्स्थूलो वाचकः परमात्मनः ।। ३८ ।।
महामन्त्रस्स विज्ञेयो मुनिभिस्तत्त्वदर्शिभिः ।।
तत्र सूक्ष्मो महामन्त्रस्तदुद्धारं वदामि ते ।। ३९ ।।
आद्ये त्रिपंचरूपे च स्वरे षोडशके त्रिषु ।।
महामन्त्रो भवेदादौ स सकारो भवेद्यदा ।।6.16.४०।।
हंसस्य प्रतिलोमः स्यात्सकारार्थश्शिवः स्मृतः ।।
शक्त्यात्मको महामन्त्रवाच्यः स्यादिति निर्णयः ।।४१।।
गुरूपदेश काले तु सोहंशक्त्यात्मकश्शिवः ।।
इति जीवपरो भूयान्महामन्त्रस्तदा पशुः ।।४२।।
शक्त्यात्मकश्शिवांशश्च शिवैक्याच्छिवसाम्यभाक् ।।
प्रज्ञानं ब्रह्मवाक्ये तु प्रज्ञानार्थः प्रदृश्यते ।।४३।।
प्रज्ञानशब्दश्चैतन्यपर्य्यायस्स्यान्न संशयः ।।
चैतन्यमात्मेति मुने शिवसूत्रं प्रवर्त्तितम् ।। ४४ ।।
चैतन्यमिति विश्वस्य सर्वज्ञानक्रियात्मकम् ।।
स्वातन्त्र्यं तत्स्वभावो यः स आत्मा परिकीर्त्तितः ।। ४५ ।।
इत्यादिशिवसूत्राणां वार्तिकं कथितं मया।।
ज्ञानं बंध इतीदं तु द्वितीयं सूत्रमीशितुः ।।४६।।
ज्ञानमित्यात्मनस्तस्य किंचिज्ज्ञानक्रियात्मकम्।।
इत्याहाद्यपदेनेशः पशुवर्गस्य लक्षणम्।।४७।।
एतद्द्वयं पराशक्तेः प्रथमं स्पंदतां गतम्।।

एतामेव परां शक्तिं श्वेताश्वतरशाखिनः ।।४८।।
स्वाभाविकी ज्ञानबलक्रिया चेत्यस्तुवन्मुदा।।
ज्ञानक्रियेच्छारूपं हि शंभोर्दृष्टित्रयं विदुः।।४९।।
एतन्मनोमध्यगं सदिन्द्रियज्ञानगोचरम् ।।
अनुप्रविश्य जानाति करोति च पशुः सदा।।6.16.५० ।।
तस्मादात्मन एवेदं रूपमित्येव निश्चितम् ।।
प्रपंचार्थं प्रवक्ष्यामि प्रणवैक्यप्रदर्शनम् ।।५१।।
ॐमितीदं सर्वमिति श्रुतिराह सनातनी ।।
तस्माद्वेतीत्युपक्रम्य जगत्सृष्टिः प्रकीर्तिता ।।५२।।
तस्याः श्रुतेस्तु तात्पर्यं वक्ष्यामि श्रूयतामिदम् ।।
तव स्नेहाद्वामदेव विवेकार्थविजृंभितम् ।।५३।।
शिवशक्तिसमायोगः परमात्मेति निश्चितम्।।
पराशक्तेस्तु संजाता चिच्छक्तिस्तु तदुद्भवा ।। ५४ ।।
आनन्दशक्तिस्तज्जास्यादिच्छाशक्तिस्तदुद्भवा ।।
ज्ञानशक्तिस्ततो जाता क्रियाश क्तिस्तु पंचमी ।।
एताभ्य एव संजाता निवृत्त्याद्याः कला मुने।।५५।।
चिदानन्दसमुत्पन्नौ नादबिन्दू प्रकीर्त्तितौ।।
इच्छाशक्तेर्मकारस्तु ज्ञानशक्तेस्तु पंचमः ।। ५६ ।।
स्वरः क्रियाशक्तिजातो ह्यकारस्तु मुनीश्वर ।।
इत्युक्ता प्रणवोत्पत्तिः पंचब्रह्मोद्भवं शृणु ।। ५७ ।
शिवादीशान उत्पन्नस्ततस्तत्पुरुषोद्भवः ।।
ततोऽघोरस्ततो वामस्सद्योजातोद्भवस्ततः ।।५८।।
एतस्मान्मातृकादष्टत्रिंशन्मातृसमुद्भ वः।।
ईशानाच्छान्त्यतीताख्या कला जाताथ पूरुषात्।।
उत्पद्यते शान्तिकला विद्याऽघोरसमुद्भवा ।।५९।।
प्रतिष्ठा च निवृत्तिश्च वाम सद्योद्भवे मते ।।
ईशाच्चिच्छक्तिमुखतो विभोर्मिथुनपञ्चकम्।।6.16.६०।।
अनुग्रहादिकृत्यानां हेतुः पञ्चकमिष्यते ।।
तद्विद्भिर्मुनिभिः प्राज्ञैर्वरतत्त्वप्रदर्शिभिः ।। ६१ ।।
वाच्यवाचकसम्बन्धान्मिथुनत्वमुपेयुषि ।।
कलावर्णस्वरूपेऽस्मिन्पञ्चके भूतपञ्चकम् ।।६२।।
वियदादि क्रमादासीदुत्पन्नम्मुनिपुङ्गव ।।
आद्यं मिथुनमारभ्य पञ्चमं यन्मयं विदुः ।। ६३ ।।

शब्दैकगुण आकाशः शब्दस्पर्शगुणो मरुत्।।
शब्दस्पर्शरूपगुणप्रधानो वह्निरुच्यते ।। ६४ ।।
शब्दस्पर्शरूपरसगुणकं सलिलं स्मृतम्।।
शब्द्स्पर्शरूपरसगन्धाढ्या पृथिवी स्मृता ।। ६५ ।।
व्यापकत्वञ्च भूतानामिदमेव प्रकीर्तितम् ।।
व्याप्यत्वं वैपरीत्येन गन्धादिक्रमतो भवेत् ।।६६।।
भूतपञ्चकरूपोऽयम्प्रपञ्चः परिकीर्त्यते।।
विराट् सर्वसमष्ट्यात्मा ब्रह्माण्डमिति च स्फुटम्।।६७।।
पृथिवीतत्त्वमारभ्य शिवतत्त्वावधि क्रमात्।।
निलीय तत्त्वसंदोहे जीव एव विलीयते।।६८।।
संशक्तिकः पुनस्सृष्टौ शक्तिद्वारा विनिर्गतः।।
स्थूलप्रपञ्चरूपेण तिष्ठत्याप्रलयं सुखम्।।६९।।
निजेच्छया जगत्सृष्टमुद्युक्तस्य महेशितुः।।
प्रथमो यः परिस्पन्दश्शिव तत्त्वन्तदुच्यते।।6.16.७०।।
एषैवेच्छाशक्तितत्वं सर्वकृत्यानुवर्तनात् ।।
ज्ञानक्रियाशक्तियुग्मे ज्ञानाधिक्ये सदाशिवः ।।७१।।
महेश्वरं क्रियोद्रेके तत्त्वं विद्धि मुनीश्वर।।
ज्ञानक्रियाशक्तिसाम्यं शुद्धविद्यात्मकं मतम्।।७२।।
स्वाङ्गरूपेषु भावेषु मायातत्त्वविभेदधीः।।
शिवो यदा निजं रूपं परमैश्वर्य्यपूर्वकम्।।७३।।
निगृह्य माययाशेषपदार्थग्राहको भवेत्।।
तदा पुरुष इत्याख्या तत्सृष्ट्वेत्यभवच्छ्रुतिः।।७४।।
अयमेव हि संसारी मायया मोहितः पशुः।।
शिवज्ञानविहीनो हि नानाकर्मविमूढधीः।।७५।।
शिवादभिन्नं न जगदात्मानं भिन्नमित्यपि ।।
जानतोऽस्य पशोरेव मोहो भवति न प्रभो।।७६।।
यथैन्द्रजालिकस्यापि योगिनो न भवेद्भ्रमः ।।
गुरुणा ज्ञापितैश्वर्यश्शिवो भवति चिद्घनः ।।७७।।
सर्वकर्तृत्वरूपा च सर्वजत्वस्वरूपिणी ।।
पूर्णत्वरूपान्नित्यत्वव्यापकत्व स्वरूपिणी ।।७८।।
शिवस्य शक्तयः पञ्च संकुचदूपभास्कराः।।७९।।
अपि संकोचरूपेण विभांत्य इति नित्यशः ।।
पशोः कलाख्य विद्येति रागकालौ नियत्यपि ।।

तत्त्वपञ्चकरूपेण भवत्यत्र कलेति सा ।।6.16.८०।।
किंचित्कर्तृत्त्वहेतुस्स्यात्किंचित्तत्त्वैकसाधनम् ।।
सा तु विद्या भवेद्रागो विषयेष्वनुरंजकः।।८१।।
कालो हि भावभावानां भासानां भासनात्मकः ।।
क्रमावच्छेदको भूत्वा भूतादिरिति कथ्यते ।।।८२।।
इदन्तु मम कर्तव्यमिदन्नेति नियामिका ।।
नियतिस्स्याद्विभोश्शक्तिस्तदाक्षेपात्पतेत्पशुः ।।८३।।
एतत्पंचकमेवास्य स्वरूपा वारकत्वतः ।।
पञ्चकञ्चुकमाख्यातमन्तरंगं च साधनम् ।।८४।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां शिवतत्त्ववर्णनन्नाम षोडशोऽध्यायः ।।१६।।

वामदेव उवाच ।।
नियत्यधस्तात्प्रकृतेरुपरिस्थः पुमानिति ।।
पूर्वत्र भवता प्रोक्तमिदानीं कथमन्यथा।।१।।
मायया संकुचद्रूपस्तदधस्तादिति प्रभो ।।
इति मे संशयं नाथ छेत्तुमर्हसि तत्त्वतः ।। २ ।।
श्रीसुब्रह्मण्य उवाच ।।
अद्वैतशैववादोऽयं द्वैतन्न सहते क्वचित् ।।
द्वैतं च नश्वरं ब्रह्माद्वैतम्परमनश्वरम् ।। ३ ।।
सर्वज्ञस्सर्वकर्ता च शिवस्सर्वेश्वरोऽगुणः ।।
त्रिदेवजनको ब्रह्मा सच्चिदानन्दविग्रहः ।। ४ ।।
स एव शंकरो देवस्स्वेच्छया च स्वमायया ।।
संकुचद्रूप इव सन्पुरुषस्संबभूव ह ।।५।।
कलादि पञ्चकेनैव भोक्तृत्वेन प्रकल्पितः ।।
प्रकृतिस्थः पुमानेष भुङ्क्ते प्रकृतिजान्गुणान् ।। ६ ।।
इति स्थानद्वयान्तस्थः पुरुषो न विरोधकः ।।
संकुचन्निजरूपाणां ज्ञानादीनां समष्टिमान् ।। ७ ।।
सत्त्वादिगुणसाध्यं च बुध्यादित्रितयात्मकम्।।
चित्तम्प्रकृतितत्त्वं तदासीत्सत्त्वादिकारणात् ।। ८ ।।
सात्त्विकादिविभेदेन गुणाः प्रकृतिसम्भवाः ।।
गुणेभ्यो बुद्धिरुत्पन्ना वस्तुनिश्चयकारिणी ।। ९ ।।
ततो महानहङ्कारस्ततो बुद्धीन्द्रियाणि च ।।
जातानि मनसो रूपं स्यात्संकल्पविकल्पकम् ।। 6.17.१० ।।
बुद्धीन्द्रियाणि श्रोत्रं त्वक् चक्षुर्जिह्वा च नासिका ।।
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च गोचरः ।। ११ ।।
बुद्धीन्द्रियाणां कथितः श्रोत्रादिक्रमतस्ततः ।।
वैकारिकादहंकारात्तन्मात्राण्यभवन्क्रमात् ।।१२।।
तानि प्रोक्तानि सूक्ष्माणि मुनिभि स्तत्त्वदर्शिभिः ।।
कर्मेन्द्रियाणि ज्ञेयानि स्वकार्य्यसहितानि च ।।१३।।
विप्रर्षे वाक्करौ पादौ पायूपस्थौ च तत्क्रियाः ।।
वचनादानगमनविसर्ग्गानन्दसंज्ञिताः।।१४।।
भूतादिकादहंकारात्तन्मात्राण्यभवन्क्रमात्।।
तानि सूक्ष्माणि रूपाणी शब्दादीनामिति स्थितिः।। ।। १५ ।।
तेभ्यश्चाकाशवाय्वग्निजलभूमिजनिः क्रमात् ।।

विज्ञेया मुनिशार्दूल पञ्चभूतमितीष्यते ।।१६।।
अवकाशप्रदानं च वाहकत्वञ्च पावनम् ।।
संरम्भो धारन्तेषां व्यापाराः परिकीर्तिताः ।। १७ ।।
वामदेव उवाच ।।
भूतसृष्टिः पुरा प्रोक्ता कलादिभ्यः कथम्पुनः ।।
अन्यथा प्रोच्यते स्कन्द संदेहोऽत्र महान्मम ।। १८ ।।
आत्मतत्त्वमकारस्स्याद्विद्या स्यादुस्ततः परम् ।।
शिवतत्त्वम्मकारस्स्याद्वामदेवेति चिंत्यताम् ।।१९।।
बिन्दुनादौ तु विज्ञेयौ सर्वतत्त्वार्थकावुभौ।।
तत्रत्या देवतायाश्च ता मुने शृणु साम्प्रतम्।।6.17.२०।।
ब्रह्मा विष्णुश्च रुद्रश्च महेश्वरसदाशिवौ ।।
ते हि साक्षाच्छिवस्यैव मूर्तयः श्रुतिविश्रुताः ।।२१।।
इत्युक्तम्भवता पूर्वमिदानीमुच्यतेऽन्यथा ।।
तन्मात्रेभ्यो भवन्तीति सन्देहोऽत्र महान्मम ।।२२।।
कृत्वा तत्करुणां स्कन्द संशयं छेत्तुमर्हसि ।।
इत्याकर्ण्य मुनेर्वाक्यं कुमारः प्रत्यभाषत ।।२३।।
श्रीसुब्रह्मण्य उवाच ।।
तस्माद्वेति समारभ्य भूतसृष्टिक्रमे मुने ।।
ताञ्छृणुष्व महाप्राज्ञ सावधानतया द रात् ।।२४।।
जातानि पञ्च भूतानि कलाभ्य इति निश्चितम्।।
स्थूलप्रपञ्चरूपाणि तानि भूतपतेर्वपुः ।।२५।।
शिवतत्त्वादि पृथ्व्यन्तं तत्त्वानामुदयक्रमे।।
तन्मात्रेभ्यो भवन्तीति वक्तव्यानि क्रमान्मुने।।२६।।
तन्मात्राणां कलानामप्यैक्यं स्याद्भूतकारणम्।।
अविरुद्धत्व मेवात्र विद्धि ब्रह्माविदांवर ।। २७ ।।
स्थूलसूक्ष्मात्मके विश्वे चन्द्रसूर्य्यादयो ग्रहाः ।।
सनक्षत्राश्च संजातास्तथान्ये ज्योतिषां गणाः ।।२८।।
ब्रह्मविष्णुमहेशादिदेवता भूतजातयः ।।
इन्द्रादयोऽपि दिक्पाला देवाश्च पितरोऽसुराः ।।२९।।
राक्षसा मानुषाश्चान्ये जंगमत्वविभागिनः ।।
पशवः पक्षिणः कीटाः पन्नगादि प्रभेदिनः ।। 6.17.३० ।।
तरुगुल्मलतौषध्यः पर्वताश्चाष्ट विश्रुताः ।।
गंगाद्यास्सरितस्सप्त सागराश्च महर्द्धयः ।। ३१ ।।

यत्किंचिद्वस्तुजातन्तत्सर्वमत्र प्रतिष्ठितम् ।।
विचारणीयं सद्बुध्या न बहिर्मुनिसत्तम ।।३२।।
स्त्रीपुंरूपमिदं विश्वं शिवशक्त्यात्मकं बुधैः ।।
भवादृशैरुपास्यं स्याच्छिवज्ञानविशारदैः ।। ३३ ।।
सर्वं ब्रह्मेत्युपासीत सर्वं वै रुद्र इत्यपि।।
श्रुतिराह मुने तस्मात्प्रपञ्चात्मा सदाशिवः ।।३४।।
अष्टत्रिंशत्कलान्याससामर्थ्याद्वैतभावना।।
सदाशिवोऽहमेवेति भावि तात्मा गुरुः शिवः।।३५।।
एवं विचारी सच्छिष्यो गुरुस्स्यात्स शिवस्स्वयम्।।
प्रपञ्चदेवतायंत्रमंत्रात्मा न हि संशयः ।। ३६ ।।
आचार्य्य रूपया विप्र संछिन्नाखिलबन्धनः ।।
शिशुः शिवपदासक्तो गुर्वात्मा भवति धुवम् ।। ३७ ।।
यदस्ति वस्तु तत्सर्वं गुण प्राधान्ययोगतः ।।
समस्तं व्यस्तमपि च प्रणवार्थम्प्रचक्षते ।। ३८ ।।
रागादिदोषरहितं वेदसारः शिवो दिशः।।
तुभ्यम्मे कथितम्प्रीत्याऽद्वैतज्ञानं शिवप्रियम् ।। ३९ ।।
यो ह्यन्यथैतन्मनुते मद्वचो मदगर्वितः ।।
देवो वा मानवस्सिद्धो गन्धर्वो मनुजोऽपि वा ।। 6.17.४० ।।
दुरात्मनस्तस्य शिरश्छिंद्यां समतयाद्ध्रुवम् ।।
सच्छक्त्या रिपुकालाग्निकल्पया न हि संशयः ।। ४१ ।।
भवानेव मुने साक्षाच्छिवाद्वैतविदांवरः।।
शिवज्ञानोपदेशे हि शिवाचारप्रदर्शकः ।।४२।।
यद्देहभस्मसम्पर्कात्संछिन्नाघव्रजोऽशुचिः।।
महापिशाचः सम्प्राप्य त्वत्कृपातस्सतां गतिम्।।४३।।
शिवयोगीति संख्यातत्रिलोक विभवो भवान्।।
भवत्कटाक्षसम्पर्कात्पशु पशुपतिर्भवेत्।।४४।।
तव तस्य मयि प्रेक्षा लोकाशिक्षार्थमादरात् ।।
लोकोपकारकरणे विचरन्तीह साधवः ।। ४५ ।।
इदं रहस्यम्परमं प्रतिष्ठितमतस्त्वयि ।।
त्वमपि श्रद्धया भक्त्या प्रणवेष्वेव सादरम् ।। ४६ ।।
उपविश्य च तान्सर्वान्संयोज्य परमेश्वरे ।।
शिवाचारं ग्राहयस्व भूतिरुद्राक्षमिश्रितम् ।। ४७ ।।
त्वं शिवो हि शिवाचारी सम्प्राप्ताद्वैतभावतः ।।

विचरँलोकरक्षायै सुखमक्षयमाप्नुहि ।। ४८ ।।
।। सूत उवाच ।।
श्रुत्वेदमद्भुतमतं हि षडाननोक्तं वेदान्तनिष्ठितमृषिस्तु विनम्रमूर्त्तिः ।।
भूत्वा प्रणम्य बहुशो भुवि दण्डवत्तत्पादारविन्दविहरन्मधुपत्वमाप ।। ४९ ।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां शिवाद्वैतज्ञानकथनादि सृष्टिकथनं नाम सप्तदशोऽध्यायः ।।१७।।

।। शौनक उवाच ।।
श्रुत्वा वेदान्तसारं तद्रहस्यम्परमाद्भुतम् ।।
किम्पृष्टवान्वामदेवो महेश्वरसुतं तदा ।।१।।
धन्यो योगी वामदेवः शिवज्ञानरतस्सदा ।।
यत्स्सम्बन्धात्कथोत्पन्ना दिव्या परमपावनी ।। २ ।।
इति श्रुत्वा मुनीनान्तद्वचनम्प्रेमगर्भितम् ।।
सूतः प्राह प्रसन्नस्ताञ्छिवासक्तमना बुधः ।। ३ ।।
सूत उवाच ।।
धन्या यूयं महादेवभक्ता लोकोपकारकाः ।।
शृणुध्वम्मुनयस्सर्वे संवादं च तयोः पुनः ।। ४ ।।
श्रुत्वा महेशतनयवचनं द्वैतनाशकम् ।।
अद्वैतज्ञानजनकं सन्तुष्टोऽभून्महान्मुनिः ।।५।।
नत्वा स्तुत्वा च विविधं कार्तिकेयं शिवात्मजम् ।।
पुनः पप्रच्छ तत्त्वं हि विनयेन महामुनिः ।। ६ ।।
वामदेव उवाच ।।
भगवन्सर्वतत्त्वज्ञ षण्मुखामृतवारिधे ।।
गुरुत्वं कथमेतेषां यतीनाम्भावितात्मनाम् ।। ७ ।।
जीवानां भोगमोक्षादिसिद्धिस्सिध्यति यद्वशात् ।।
पारम्पर्य्यं विना नैषा मुपदेशाधिकारिता ।। ८ ।।
एवं च क्षौरकर्मांगं स्नानञ्च कथमीदृशम् ।।
इति विज्ञापय स्वामिन्संशयं छेत्तुमर्हसि ।। ९ ।।
इति श्रुत्वा कार्तिकेयो वामदेववचः स्मरन्।।
शिवं शिवां च मनसा व्याचष्टुमुपचक्रमे ।। 6.18.१०।। ।।
श्रीसुब्रह्मण्य उवाच ।
योगपट्टम्प्रवक्ष्यामि गुरुत्वं येन जायते ।।
तव स्नेहाद्वामदेव महद्गोप्यं विमुक्तिदम्।।११।।
वैशाखे श्रावणेमासि तथाश्वयुजि कार्तिके ।।
मार्गशीर्षे च माघे वा शुक्लपक्षे शुभे दिने।। १२ ।।
पंचम्यां पौर्णमास्यां वा कृतप्राभातिकक्रियः ।।
लब्धानुज्ञस्तु गुरुणा स्नात्वा नियतमानसः ।।१३।।।
पर्य्यंकशौचं कृत्वा तद्वाससांगं प्रमृज्य च ।।
द्विगुणं दोरमाबध्य वाससी परिधाय च ।।१४।।
क्षालितांघ्रिर्द्विराचम्य भस्म सद्यादिम न्त्रतः ।।

धारयेद्धि समादाय समुद्धूलनमार्गतः ।।१५।।
गृहीतहस्तो गुरुणा सानुकूलेन वै मुने ।।
सच्छिष्यः साञ्जलिस्स्वाभ्यां हस्ताभ्याम्प्राङ्मुखो यथा ।।१६।।
तथोपवेष्टितस्तिष्ठेन्मंडपे समलंकृते।।
गुर्वासनवरे शुद्धे चैलाजिनकुशोत्तरे।।१७।।
अथ देशिक आदाय शंखं साधारमस्त्रतः ।।
विशोध्य तस्य पुरतः स्थापयेत्सानुकूलतः ।। १८ ।।
साधारं शङ्खमपि च सम्पूज्य कुसुमादिभिः।।
निःक्षिपेद स्त्रवर्मभ्यां शोधितं तत्र सज्जलम् ।। १९ ।।
आपूर्य पूर्ववत्पूज्य षडंगोक्तक्रमेण च ।।
प्रणवेन पुनस्तद्वै सप्तधैवाभिमन्त्रयेत् ।। 6.18.२० ।।
अभ्यर्च्य गन्धपुष्पाद्यैर्धूपदीपौ प्रदर्श्य च।।
संरक्षास्त्रेण तं शंखं वर्मणाथावगुण्ठयेत् ।।२१।।
धेनुशंखाख्यमुद्रे च दर्शयेदथ देशिकः।।
पुनस्स्वपुरतश्शंखं दक्षिणे देश उत्तमे ।। २२ ।।
पूज्यार्घ्योक्तविधानेन सुन्दरम्मण्डलं शुभम् ।।
कुर्य्यात्सम्पूजयेत्तञ्च सुगन्धकुसुमा दिभिः ।।२३।।
साधारं शोधितं शुद्धं घटन्तन्तुपरिष्कृतम् ।।
धूपितं स्थापितं शुद्धवासितोदप्रपूरितम् ।। २४ ।।
पञ्चत्वक्पञ्चपत्रैश्च मृत्तिकाभिश्च पञ्चभिः।।
मिलितं च सुगन्धेन लेपयेत्तम्मुनीश्वर ।।२५।।
वस्त्राम्रदलदूर्वाग्रनारिकेलसुमैस्ततः।।
तं घटं वस्तुभिश्चान्यैस्संकुर्यात्समलंकृतम् ।। २६ ।।
विन्यसेत्पञ्चरत्नानि घटे तत्र मुनीश्वर ।।
हिरण्यञ्चापि तेषां वाभावे भक्त्या प्रविन्यसेत् । २७।
नीलाख्यरत्नं च तथा रत्ने माणिक्यहेमनी ।।
प्रवालगोमेदके च पञ्चरत्नमिदं स्मृतम् ।।२८।।
नृम्लस्कमिति सम्प्रोच्य ग्लूमित्यन्ते ऽथ देशिकः ।।
सम्यग्विधानतः प्रीत्या सानुकूलः समर्चयेत् ।। २९ ।।
आधारशक्तिमारभ्य यजनोक्तविधानतः ।।
पञ्चावरणमार्गेण देवमावाह्य पूजयेत् ।। 6.18.३० ।।
निवेद्य पायसान्नञ्च तांबूलादि यथा पुरा ।।
नामाष्टकार्चनान्तं च कृत्वा तमभिमन्त्रयेत् ।। ३१ ।।

प्रणवाष्टोत्तरशतं ब्रह्मभिः पञ्चभिः क्रमात् ।।
सद्यादीशान्तमप्यस्त्रं रक्षितं वर्मणा पुनः ।। ३२ ।।
अवगुंठ्य प्रदर्श्याथ धूपदीपौ च भक्तितः ।।
धेनुयोन्याख्यमुद्रे च सम्यक्तत्र प्रदर्शयेत् ।। २३ ।।
ततश्च देशिकस्तस्य दर्भैराच्छाद्य मस्तके ।।
मण्डलस्थेशदिग्भागे चतुरस्रं प्रकल्पयेत् ।। ३४ ।।
तदुपर्य्यासनं रम्यं कल्पयित्वा विधानतः ।।
तत्र संस्थापयेच्छिष्यं शिशुं सानुकूलतः ।। ३५ ।।
ततः कुम्भं समुत्थाय स्वस्तिवाचनपूर्वकम् ।।
अभिषिंचेद्गुरुः शिष्यं प्रादक्षिण्येन मस्तके ।। ३६ ।।
प्रणवं पूर्वमुच्चार्य्य सप्तधा ब्रह्मभि स्ततः ।।
पञ्चभिश्चाभिषेकान्ते शंखोदेनाभिवेष्टयेत् ।।३७।।
चारुदीपं प्रदर्श्याथ वाससा परिमृज्य च ।।
नूतनं दोरकौपीनं वाससी परिधापयेत् ।। ३८ ।।
क्षालितांघ्रिर्द्विराचम्य धृतभस्मगुरुश्शिशुम् ।।
हस्ताभ्यामवलंब्याथ हस्तौ मंडपमध्यतः ।। ३९।।
तदंगेषु समालिप्य तद्भस्म विधिना गुरुः ।।
आसने संप्रवेश्याथ कल्पिते स्थापयेत्सुखम्।।6.18.४०।।
पूर्वाभिमुखमात्मीयतत्त्वज्ञानाभिलाषिणम्।।
स्वसनस्थो गुरुर्ब्रूयादमलात्मा भवेति तम् ।।४१।।
गुरुश्च परिपूर्णोऽस्मि शिव इत्यचलस्थितिः।।
समाधिमाचरेत्सम्यङ्मुहूर्त्तं गूढमानसः ।। ४२ ।।
पश्चादुन्मील्य नयने सानुकूलेन चेतसा ।।
सांजलिं संस्थितं शुद्धं पश्येच्छिष्यमनाकुलः ।। ४३ ।।
स्वहस्तम्भसितालिप्तं विन्यस्य शिशुमस्तके ।।
दक्षश्रुतावुपदिशेद्धंसस्सोहमिति स्फुटम् ।। ४४ ।।
तत्राद्याहंपदस्यार्थः शक्तयात्मा स शिवस्स्वयम् ।।
स एवाहं शिवोस्मीति स्वात्मानं संविभावय।।४५।।
य इत्यणोरर्थतत्त्वमुपदिश्य ततो वदेत्।।
अवांतराणां वाक्यानामर्थतात्पर्यमादरात् ।। ४६ ।।
वाक्यानि वच्मि ते ब्रह्मन्सावधानमतिश्शृणु ।।
तानि धारय चित्ते हि स ब्रूयादिति संस्फुटम् ।।४७।।

इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां संन्यासपद्धतौ शिष्यकरणविधिर्नामाष्टादशोऽध्यायः ||१८||

सुब्रह्मण्य उवाच ।।

*अथ महावाक्यानि*

(१) प्रज्ञानं ब्रह्म

( २) अहं ब्रह्मास्मि

(३) तत्त्वमसि

( ४) अयात्मा ब्रह्म

(५) ईशावास्यमिदं सर्वम्

(६) प्राणोऽस्मि

(७) प्रज्ञानात्मा

(८) यदेवेह तदमुत्र यदमुत्र तदन्विह

( ९) अन्यदेव तद्विदितादथो अविदितादपि

( १०) एष न आत्मान्तर्याम्यमृतः

(११) स यश्चायम्पुरुषो यश्चासावा दित्ये स एकः

(१२) अहमस्मि परं ब्रह्म परं परपरात्परम्

(१३) वेदशास्त्रगुरुत्वात्तु स्वयमानंदलक्षणम् (१४)

सर्वभूतस्थितं ब्रह्म तदेवाहं न संशयः

(१५) तत्त्वतस्य प्राणोहमस्मि पृथिव्याः प्राणोहमस्मि (१६)

अपां च प्राणोहमस्मि तेजसश्च प्राणोहमस्मि (१७)

वायोश्च प्राणोहमस्मि आकाशस्य प्राणोहमस्मि ( १८)

त्रिगुणस्य प्राणोहमस्मि (१९)

सर्वोऽहं सर्वात्मकोऽहं संसारी यद्भूतं यच्च भव्यं यद्वर्तमानं सर्वात्मकत्वाददद्वितीयोहम् (२०)

सर्वं खल्विदं ब्रह्म ( २१)

सर्वोऽहं विमुक्तोऽहम् ( २२)

योऽसौ सोहं हंसस्सोहमस्मि ।।

*इत्येवं सर्वत्र सदा ध्यायेदिति* ।।

**अथ महावाक्यानामर्थमाह ।।**

प्रज्ञानं ब्रह्मवाक्यार्थः पूर्वमेव प्रबोधितः ।।

अहंपदस्यार्थभूतः शक्त्यात्मा परमेश्वरः ।। १ ।।

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ।।

हकारो व्योमरूपः स्याच्छक्त्यात्मा संप्रकीर्तितः ।।२।।

शिवशक्त्योस्तु संयोगादानन्दः सततोदितः ।।

ब्रह्मेति शिवशक्त्योस्तु सर्वात्मत्वमिति स्फुटम् ।। ३ ।।

पूर्वमेवोपदिष्टं तत्सोहमस्मीति भावयेत् ।।

तत्त्वमित्यत्र तदिति सशब्दार्थः प्रबोधितः।।४।।
अन्यथा सोऽहमित्यत्र विपरीतार्थभावना ।।
अहंशब्दस्तु पुरुषस्तदिति स्यान्नपुंसकम्।।
एवमन्योन्यवैरुध्यादन्वयो नभवेत्तयोः ।। ५ ।।
स्त्रीपुंरूपस्य जगतः कारणं चान्यथा भवेत् ।।
स तत्त्वमसि इत्येवमुपदेशार्थभावना ।। ६ ।।
अयमात्मेति वाक्ये च पुंरूपं पदयुग्मकम् ।।
ईशेन रक्षणीयत्वादीशावस्यमिदं जगत् ।। ७ ।।
प्रज्ञानात्मा यदेवेह तदमुत्रेति चिन्तयेत् ।।
यः स एवेति विद्वद्भिस्सिद्धान्तिभिरिहोच्यते ।। ८ ।।
उपरिस्थितवाक्ये च योऽमुत्र स इह स्थितः ।।
इति पूर्ववदेवार्थः पुरुषो विदुषां मतः ।। ९ ।।
अन्यदेव तद्विदितादथो ।। अविदितादपि ।।
अस्मिन्वाक्ये फलस्यापि वैपरीत्यविभावना ।। 6.19.१० ।।
यथास्यात्तद्वदेवात्र वक्ष्यामि श्रूयतां मुने ।।
अयथाविदिताच्छब्दो पूर्ववद्विदितादिति ।। ११ ।।
प्रवृत्तिस्स्यात्तद्विदितात्तथैवाविदितात्परम् ।।
अन्यदेव हि संसिद्ध्यै न भवेदिति निश्चितम् ।। १२ ।।
एष त आत्मांतर्यामी योऽमृतश्च शिवस्स्वयम् ।।
यश्चायम्पुरुषे शंभुर्यश्चादित्ये व्यवस्थितः ।। १३ ।।
स चाऽसौ सेति पार्थक्यं नैकं सर्वं स ईरितः ।।
सोपाधिद्वयमस्यार्थ उपचारात्तथोच्यते ।। १४ ।।
तं शम्भुनाथं श्रुतयो वदन्ति हि हिरण्मयम् ।।
हिरण्य बाहव इति सर्वांगस्यो पलक्षलम् ।। १५ ।।
अन्यथा तत्पतित्वं तु न भवेदिति यत्नतः ।।
य एषोन्तरिति शंभुश्छान्दोग्ये श्रूयते शिवः ।। १६ ।।
हिरण्यश्मश्रुवांस्तद्वद्धिरण्यमयकेशवान् ।।
नखमारभ्य केशाग्रा सर्वत्रापि हिरण्मयः ।।१७।।
अहमस्मि परं ब्रह्म परापरपरात्परम् ।।
इति वाक्यस्य तात्पर्यं वदामि श्रूयतामिदम् ।। १८ ।।
अहंपदस्यार्थभूतः शक्त्यात्मा शिवईरितः ।।
स एवास्मीति वाक्यार्थ योजना भवति ध्रुवम् ।। १९ ।।
सर्वोत्कृष्टश्च सर्वात्मा परब्रह्म स ईरितः ।।

परश्चाथापरश्चेति परात्परमिति त्रिधा ।। 6.19.२० ।।
रुद्रो ब्रह्मा च विष्णुश्च प्रोक्ताः श्रुत्यैव नान्यथा ।।
तेभ्यश्च परमो देवः परशब्देन बोधितः ।।२१।।
वेदशास्त्र गुरूणां च वाक्याभ्या सवशाच्छिशोः ।।
पूर्णानन्दमयश्शंभुः प्रादुर्भूतो भवेद्धृदि ।। २२ ।।
सर्वभूतस्थितश्शम्भुस्स एवाहं न संशयः ।।
तत्त्वजातस्य सर्वस्य प्राणोस्म्यहमहं शिवः ।। २३ ।।
इत्युक्त्वा पुनरप्याह शिवस्तत्त्वत्रयस्य च ।।
प्राणोस्मीत्यत्र पृथ्व्यादिगुणान्तग्रहणान्मुने ।। २४ ।।
आत्मतत्त्वानि सर्वाणि गृहीतानीति भावय ।।
पुनश्च सर्वग्रहणं विद्यातत्त्वशिवात्मनोः ।। २५ ।।
तत्त्वयोश्चास्म्यहं प्राणास्सर्वस्सर्वात्मको ह्यहम् ।।
जीवस्य चान्तर्यामित्वाज्जीवोऽहं तस्य सर्वदा ।। २६ ।।
यद्भूतं यच्च भव्यं यद्भविप्यत्सर्वमेव च ।।
मन्मयत्वादहं सर्वः सर्वो वै रुद्र इत्यपि ।।२७।।
श्रुतिराह मुने सा हि साक्षाच्छिवमुखोद्गता ।।
सर्वात्मा परमैरेभिर्गुणैर्नित्यसमन्वयात् ।। २८ ।।
स्वस्मात्परात्मविरहाददि्वतीयोऽहमेव हि ।।
सर्वं खल्विदं ब्रह्मेति वाक्यार्थः पूर्व्वमीरितः ।। २९ ।।
पूर्णोऽहं भावरूपत्वान्नित्यमुक्तोऽहमेव हि ।।
पशवो मत्प्रसादेन मुक्ता मद्भावमाश्रिताः ।। 6.19.३० ।।
योऽसौ सर्वात्मकश्शम्भुस्सोऽहं स शिवोऽस्म्यहम् ।।
इति वै सर्ववाक्यार्थो वामदेव शिवोदितः ।।३१।।
इतीशश्रुतिवाक्याभ्यामुपदिष्टार्थमादरात् ।।
साक्षाच्छिवैक्यदं पुंसां शिशोगुरुरुपादिशेत् ।।३२।।
आदाय शंखं साधारमस्त्रमन्त्रेण भस्मना ।।
शोध्य तत्पुरतस्स्थाप्य चतुरस्रे समर्चिते ।।३३।।
ओमित्यभ्यर्च्य गन्धाद्यैरस्त्रं वस्त्रोपशोभितम् ।।
वासितं जलमापूर्य सम्पूज्योमिति मन्त्रतः ।। ३४ ।।
सप्तधैवाभिमंत्र्याथ प्रणवेन पुनश्च तम् ।।
यस्त्वन्तरं किंचिदस्ति कुरुते त्यतिभीतिभाक् ।। ३५ ।।
इत्याह श्रुतिसत्तत्त्वं दृढात्मा गतभीर्भव ।।
इत्याभाष्य स्वयं शिष्यं देवं ध्यायन्समर्चयेत् ।। ३६ ।।

शिष्यासनं सम्प्रपूज्य षडुत्थापनमार्गतः ।।
शिवासनं च संकल्प्य शिवमूर्तिं प्रकल्पयेत् ।। ३७ ।।
पञ्च ब्रह्माणि विन्यस्य शिरः पादावसानकम् ।।
मुण्डवत्क्रकलाभेदैः प्रणवस्य कला अपि ।। ३८ ।।
अष्टत्रिंशन्मंत्ररूपा श्शिष्यदेहेऽथ मस्तके ।।
समावाह्य शिवं मुद्राः स्थापनीयाः प्रदर्शयेत् ।।३९।।
ततश्चाङ्गानि विन्यस्य सर्वज्ञानीत्यनुक्रमात्।।
कल्पयेदुपचारांश्च षोडशासनपूर्वकान् ।। 6.19.४० ।।
पायसान्नञ्च नैवेद्यं समर्प्यो मग्निजायया ।।
गण्डूषाचमनार्घ्यादि धूपदीपादिकं क्रमात् ।। ४१ ।।
नामाष्टकेन सम्पूज्य ब्राह्मणैर्वेदपारगैः ।।
जपेद्ब्रह्मविदाप्नोति भृगुर्वै वारुणिस्ततः ।। ४२ ।।
यो देवानामुपक्रम्यः यः परः स महेश्वरः ।।
इत्यंतं तस्य पुरतः कह्लारादिविर्निताम् ।। ४३ ।।
आदाय मालामुत्थाय श्रीविरूपाक्ष निर्मिते ।।
शास्त्रे पंचाशिके रूपे सिद्धिस्कन्धं जपेच्छनैः ।। ४४ ।।
ख्यातिः पूर्णोहमित्यंतं सानुकूलेन चेतसा ।।
देशिकस्तस्य शिष्यस्य कण्ठदेशे समर्पयेत् ।। ४५ ।।
तिलकं वन्दनेनाथ सर्वाङ्गालेपनं पुनः ।।
स्वसम्प्रदायानुगुणं कारयेच्च यथाविधि ।। ४६ ।।
ततश्च देशिकः प्रीत्या नामश्रीपादसंज्ञितम् ।।
छत्रञ्च पादुकां दद्याद्दूर्वाकल्पविकल्पनम् ।। ४।
व्याख्यातत्वञ्च कर्म्मादिगुर्वासनपरिग्रहम् ।।
अनुगृह्य गुरुस्तस्मै शिष्याय शिवरूपिणे ।। ४८ ।।
शिवोहमस्मीति सदा समाधिस्थो भवेति तम् ।।
सम्प्रोच्याथ स्वयं तस्मै नमस्कारं समाचरेत् ।। ४९ ।।
सम्प्रदायानुगुण्येन नमस्कुर्युस्तथापरे ।।
शिष्यस्तदा समुत्थाय नमस्कुर्याद्गुरुन्तथा ।।
गुरोरपि गुरुं तस्य शिष्यांश्च स्वगुरोरपि ।। 6.19.५० ।।
एवं कृतनमस्कारं शिष्यन्दद्याद्गुरुः स्वयम् ।।
सुशीलं यतवाचं तं विनयावनतं स्थितम् ।। ५१ ।।
अद्यप्रभृति लोकानामनुग्रहपरो भव ।।
परीक्ष्य वत्सरं शिष्यमंगीकुरु विधानतः ।। ५२।।

रागादिदोषान्संत्यज्य शिवध्यानपरो भव ।।
सत्सम्प्रदायसंसिद्धैस्संगं कुरु न चेतरैः ।।५३।।
अनभ्यर्च्य शिवं जातुमा भुंक्ष्वाप्राण संक्षयम् ।।
गुरुभक्तिं समास्थाय सुखी भव सुखी भव ।। ५४ ।।
इति क्रमाद्गुरुवरो दयालुर्ज्ञानसागरः ।।
सानुकूलेन चित्तेन समं शिष्यं समाचरेत् ।। ५५ ।।
तव स्नेहान्मयायं वै वामदेव मुनीश्वर।।
योगपट्टप्रकारस्ते प्रोक्तो गुह्यतरोऽपि हि ।।५६।।
इत्युक्त्वा षण्मुखस्तस्मै क्षौरस्नानविधिक्रमम्।।
वक्तुमारभत प्रीत्या यतीनां कृपया शुभम्।।५७।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां योगपट्टविधिवर्णनंनामैकोनविंशोऽध्यायः।।१९।।

सुब्रह्मण्य उवाच ।।
क्षौरस्नानविधिं वक्ष्ये वामदेव महामुने ।।
यस्य सद्यो विधानेन शुद्धिस्स्याद्यतिनः परा ।। १ ।।
योगपट्टप्रकारस्य विधिम्प्राप्य मुनीश्वर।।
स शिष्यस्स्याद्व्रती पूर्णः क्षौरकर्म्मोद्यतो भवेत्।।२।।
गुरुं नत्वा विशेषेण लब्धानुज्ञस्ततो गुरोः।।
शिरस्संक्षाल्य चाचम्य सवासाः क्षौरमाचरेत्।।३।।
क्षालयेद्वसनं पश्चान्मृदम्भोभिः क्षुरादिकम्।।
तद्धस्तौ च मृदालिप्य क्षालयेति मृदं ददेत् ।। ४ ।।
स्थापितम्प्रोक्षितन्तोयैश्शिवं शिवमितीरयन् ।।
स्वनेत्रे पिहिते चैवानामांगुष्ठाभिमंत्रिते ।। ५ ।।
अस्त्रेणोन्मील्य संदृश्य क्षुरा दिक्षौ रसाधनम् ।।
अभिमन्त्र्य द्वादशाथ प्रोक्षयेदस्त्रमंत्रतः ।। ६ ।।
क्षुरं गृहीत्वा तारेण दक्षभागे निकृन्तयेत् ।।
केशांश्च कांश्चि दग्रेषु वप्त्वा सर्वं च वापयेत् ।। ७ ।।
पृथिव्यां पर्णमादाय विक्षिपेन्न भुवः स्थले ।।
श्मश्रूणि हस्तपादस्थनखानि च निकृंतयेत् ।। ८ ।।
बिल्वाश्वत्थतुलस्यादिस्थाने संगृह्य मृतिकाम् ।।
द्विषट्वारं निमज्याप्सु तीरं गत्वोपविश्य च ।। ९ ।।
शुद्धे देशे तु संस्थाप्य मृदं त्रेधा विभज्य च ।।
एवम्पुनस्त्रिधा कृत्वा प्रोक्ष्यास्त्रेणाभिमन्त्रयेत् ।। 6.20.१० ।।
तत्रैकां मृदमादाय दापयित्वान्यपाणिना ।।
करौ द्वादशधा लिप्य प्रत्येकं केन क्षालयेत् ।। ११ ।।
पुनरेकाम्पादयोश्च मुखे चान्यां करे क्रमात् ।।
संलिप्याक्षाल्य चाम्भोभिः पुनश्च जलमाविशेत् ।।१२।।
अन्यां मृदम्भागयित्वा शिरसि द्वादश क्रमात् ।।
आलिप्य मृदमास्यान्तनिमज्य च पुनः पुनः ।। १३ ।।
तीरं गत्वा तु गंडूषान्षोडशाचमनं द्विधा ।।
प्राणानायम्य च पुनः प्रणवं द्व्यष्टसंख्यया ।। १४ ।।।
मृदमन्यां पुनस्त्रेधा विभज्य च तदेकया ।।
कटिशौचं पादशौचं विधायाचम्य च द्विधा ।।१५।।
प्रणवेनाथ षोडश प्राणानायम्य वाग्यतः ।।
पुनरन्यां स्वोरुदेशे त्रिधा विन्यस्य चोमिति ।। १६ ।।

प्रोक्ष्याभिमंत्रयेत्सप्त स्वपाण्योस्तलमेकधा ।।
त्रिधालिप्याथ सम्पश्येत्सूर्य्यमूर्तिं च पावनीम् ।। १७ ।।
स्वकक्षयोः समालिप्य व्यत्यस्ताभ्यामथान्यया ।।
पाणिभ्याञ्च मृदा शिष्यस्सुमतिर्द्दढमानसः ।। १८ ।।
गृहीत्वान्यां मृदं शुद्धां तथासौ गुरुभक्तिमान् ।।
शिर आरभ्य पादान्तं विलिप्यादित्यदृष्टया ।। १९ ।।
समुत्थाय ततोऽसौ वै दण्डमादाय भूतले ।।
स्वगुरुं मन्त्रदम्भक्त्या संस्मरेज्ज्ञाननिष्ठया ।। 6.20.२० ।।
ततस्साम्बं महेशानं शंकरं चन्द्रशेखरम्।।
संस्मरेद्भक्तितश्शिष्य सर्वेश्वर्यपतिं शिवम् ।। २१ ।।
त्रिवारम्प्रणमेत्प्रीत्या साष्टांगं च गुरु शिवम् ।।
पञ्चाङ्गेनैकवारञ्च समुत्थाय च वन्दयेत् ।। २२ ।।
तीर्थं प्रविश्य तन्मध्ये निमज्योन्मज्य ताम्मृदम् ।।
स्कन्धे संस्थाप्य पूर्वोक्तप्रकारेण विलेपयेत् ।। २३ ।।
तत्रावशिष्टं संगृह्य जलमध्ये प्रविश्य च ।।
विलोड्य सम्यक् तां तत्र सर्वांगेषु विलिप्य च ।। २४ ।
त्रिवारमोमिति प्रोच्य शिवपादाम्बुजं स्मरन् ।।
संसाराम्बुधिसंतारं सदा यद्विधितो हि सः ।। २५ ।।
अभिषिच्योमिति जलं विरजाभस्मलोलितम् ।।
अंगोपमार्ज्जनं कृत्वा सुस्नायाद्भस्मना ततः ।। २६ ।।
त्रिपुंड्रं च विधायाथ यथोक्तविधिना शुभम् ।।
यथोक्तांगेषु सर्वेषु सावधान तया मुने ।। २७ ।।
ततश्शुद्धमना भूत्वा कुर्य्यान्मध्यंदिनक्रियाः ।।
महेश्वरं नमस्कृत्य गुरूंस्तीर्थादिकानि च ।। २८ ।।
सम्पूजयेन्महेशानं भक्त्या परमया मुने ।।
साम्बिकं ज्ञानदातारं पातारं त्रिभवस्य वै ।। २९ ।।
ततोसौ दृढचेतस्को यतिः स्ववृषसंस्थितः।।
भिक्षार्थम्प्रव्रजेच्छुद्धो विप्रवर्गेषु साधुषु।।6.20.३०।।
ततस्तत्र च शुद्धात्मा पञ्चधा परिकल्पितम्।।
भैक्ष्यं यथोचितं कुर्य्याद्दूषितान्नं विवर्ज्जयेत् ।। ३१ ।।
शौचं स्नानं तथा भिक्षां नित्यमेकान्तसेवनम् ।।
भिक्षौश्चत्वारि कर्म्माणि पञ्चमं नैव विद्यते ।।३२।।
अलाबुं वेणुपात्रं च दारवम्मृण्मयन्तथा ।।

भिक्षोश्चत्त्वारि पात्राणि पञ्चमन्नैव विद्यते ।।३३।।
ताम्बूलं तैजसम्पात्रं रेतस्सेकं सितांबरम् ।।
दिवास्वापो हि नक्तान्नं यतीनां षड्विवर्जिताः ।।३४।।
साक्षरा विपरीताश्च राक्षसास्त इति स्मृताः।।
तस्माद्वै विपरीतं च कर्म्म नैवाचरेद्यतिः।।३५।।
यतिः प्रयत्नतः कुर्य्यात्क्षौरस्नानं च शुद्धये ।।
संस्मरन्मनसा शुद्धं परं ब्रह्म सदाशिवम् ।।३६।।
इत्यैव मुनिशार्द्दूल तव स्नेहान्मयाखिलः ।।
क्षौरस्नानविधिः प्रोक्तः किम्भूयः श्रोतुमिच्छसि ।। ३७ ।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां क्षौरस्नानविधिवर्णनं नाम विंशोऽध्यायः ।।२०।।

वामदेव उवाच ।।

ये मुक्ता यतयस्तेषां दाहकर्म्म न विद्यते ।।

मृते शरीरे खननं तद्देहस्य श्रुतं मया।।१।।

तत्कर्माचक्ष्व सुप्रीत्या कार्तिकेय गुरो मम।।

त्वत्तोन्यो न हि संवक्ता त्रिषु लोकेषु विद्यते ।।२।।

पूर्णाहं भावमाश्रित्य ये मुक्ता देहपंजरात् ।।

ये तूपासनमार्गेण देहमुक्ताः परंगतः ।।३।।

तेषां गतिविशेषञ्च भगवञ्छंकरात्मज ।।

वक्तुमर्हसि सुप्रीत्या मां विचार्य्य स्वशिष्यतः।।४।।

।।सूत उवाच ।।

मुनिविज्ञप्तिमाकर्ण्य शक्तिपुत्रस्सुरारिहा ।।

प्राहात्यन्तरहस्यं तद्भृगुणा श्रुतमीश्वरात् ।।५।।

।। सुब्रह्मण्य उवाच ।।

इदमेव मुने गुह्यं भृगवे शिवयोगिने ।।

उक्तं भगवता साक्षात्सर्वज्ञेन पिनाकिना ।।६।।

वक्ष्ये तदद्य ते ब्रह्मन्न देयं यस्य कस्यचित् ।।

देयं शिष्याय शान्ताय शिवभक्तियुताय वै ।।७।।

समाधिस्थो यतिः कश्चिच्छिवभावेन देहभुक् ।।

अस्ति चेत्स महाधीरः परिपूर्णश्शिवो भवेत् ।। ८ ।।

अधैर्य्यचित्तो यः कश्चित्समाधिं न च विंदति ।।

तदुपायम्प्रवक्ष्यामि सावधानतया शृणु ।। ९ ।।

त्रिपदार्थपरिज्ञानं वेदान्तागमवाक्यजम् ।।

श्रुत्वा गुरोर्मुखाद्योगमभ्यसेत्स यमादिकम् ।।6.21.१०।।

तत्कुर्वन्स यतिस्सम्यक्छिवध्यानपरो भवेत् ।।

नियमेन मुने नित्यं प्रणवासक्तमानसः ।।११।।

देहदौर्बल्यवशतो यद्यधैर्य्यधरो यतिः ।।

अकामश्च शिवं स्मृत्वा स जीर्णां स्वां तनुं त्यजेत् ।।१२।।

सदाशिवानुग्रहतो नंदिना प्रेरिता मुने।।

आतिवाहिकरूपिण्यो(?) देवताः पञ्च विश्रुताः।।१३।।

आत्महन्ताकृतिः काचिज्ज्योत्तिःपुंजवपुष्मती ।।

अह्नोऽभिमानिनी काचिच्छुक्लपक्षाभिमानिनी ।। १४ ।।

उत्तरायणरूपा च पंचानुग्रहतत्परा ।।

धूम्रा तमस्विनी रात्रिः कृष्णपक्षाभिमानिनी ।। १५ ।।

दक्षिणायनरूपेति विश्रुताः पञ्च देवताः ।।
तासां वृत्तिं शृणुष्वाद्य वामदेव महामुने ।। १६ ।।
ताः पंचदेवता जीवान्कर्मानुष्ठान तत्परान् ।।
गृहीत्वा त्रिदिवं यांति तत्पुण्यवशतो मुने ।। १७ ।।
भुक्त्वा भोगान्यथोक्तांश्च ते तत्पुण्यक्षये पुनः ।।
मानुषं लोकमासाद्य भजते जन्मपूर्ववत् ।। १८ ।।
ताः पुनः पंचधा मार्गं विभज्यारभ्य भूतलम् ।।
अग्न्यादिक्रमतां गृह्यं सदाशिवपदं यतिः ।। १९ ।।
निनीय वन्द्यचरणौ देवदेवस्य पृष्ठतः ।।
तिष्ठंत्यनुग्रहाकाराः कर्म्मण्येव प्रयोजिताः ।। 6.21.२० ।।
समागतमभिप्रेक्ष्य देवदेवस्सदा शिवः ।।
विरक्तश्चेन्महामंत्रतात्पर्यमुपदिश्य च ।।२१।।
स्वसाम्यं च वपुर्दत्ते गाणपत्येभिषिच्य च ।।
अनुगृह्णाति सर्वेशश्शंकरः सर्वनायकः ।। २२ ।।
मृगटंकत्रिशूलाग्र्यवरदानविभूषितम् ।।
त्रिनेत्रं चन्द्रशकलं गंगोल्लासिजटाधरम् ।। २३ ।।
अधिष्ठितविमानाग्र्यं सर्वदं सर्वकामदम् ।।
इति शाखाविरक्तश्चेद्रुद्रकन्यासमावृतम् ।। २४ ।।
नृत्यगीतमृदंगादिवाद्यघोषमनोहरम् ।।
दिव्याम्बरस्रगालेप भूषणैरपि भूषितम् ।। २५ ।।
दिव्यामृतघटैः पूर्णं दिव्यांभःपरिपूरितम् ।।
सूर्यकोटिप्रतीकाशं चंद्रकोटिसुशीतलम् ।। २६ ।।
मनोवेगं सर्वगं च विमानमनुगृह्य च ।।
भुक्तभोगस्य तस्यापि भोगकौतूहलक्षये ।। २७ ।।
निपात्य शक्तिं तीव्रतरां प्रकृत्या ह्यति दुर्गमाम् ।।
कान्तारं दग्धुकामान्तान्मलयानलसुप्रभाम् ।।२८।।
अनुगृह्य महामंत्रतात्पर्यम्परमेश्वरः ।।
पूर्णोहं भावनारूपः शंभुर स्मीति निश्चलम् ।।२९।।
अनुगृह्य समाधिश्च स्वदास्यस्पन्दरूपिणीः ।।
रव्यादिकर्म्मसामर्थ्यरूपाः सिद्धीरनर्गलाः ।।6.21.३०।।
आयुः क्षये पद्मयोनेः पुनरावृत्तिवर्जिताम् ।।
मुक्तिं च परमां तस्मै प्रयच्छति जगद्गुरुः ।।३१।।
एतदेव पदं तस्मात्सर्वैश्वर्य्यं समष्टिमत्।।

मुक्तिघंटापथं चेति वेदांतानां विनिश्चयः ।। ३२ ।।
मुमूर्षोस्तस्य मन्दस्य यतेस्सत्सम्प्रदायिनः ।।
यतयः सानुकूलत्वात्तिष्ठेयुः परित स्तदा ।। ३३ ।।
ततस्सर्वे च ते तत्र प्रणवादीन्यनुक्रमात् ।।
उपदिश्य च वाक्यानि तात्पर्यं च समाहिताः ।। ३४ ।।
वर्णयेयुः स्फुटं प्रीत्या शिवं संस्मारयन्सदा ।।
निर्गुणं परमज्योतिः प्रणम्य विलयावधि ।। ३५ ।।
एतेषां सममेवात्र संस्कारक्रम उच्यते ।।
असंस्कृतशरीराणां दौर्गत्यं नैव जायते ।। ३६ ।।
संन्यस्य सर्वकर्म्माणि शिवाश्रयपरा यतः ।।
देहं दूषयतस्तेषां राज्ञो राष्ट्रं च नश्यति ।। ३७ ।।
तद्ग्रामवासिनस्तेऽपि भवेयुर्भृशदुःखिनः ।।
तद्दोषपरिहाराय विधानं चैवमुच्यते ।। ३८ ।।
स तु नम हरिण्याय चेत्यारभ्य विनम्रधीः ।।
नम आमीवत्केभ्यान्तं तत्काले प्रजपेन्मनुम् ।। ३९ ।।
ॐमित्यन्ते जपन्देवयजनम्पूरयेत्ततः ।।
ततश्शान्तिर्भवेत्तस्य दोषस्य हि मुनीश्वर ।। 6.21.४० ।।
पुत्रादयो यथा न्यायं कुर्य्युस्संस्कारमुत्तमम् ।।
वच्मि तत्कृपया विप्र सावधानतया शृणु ।।४१।।
अभ्यर्च्य स्नाप्य शुद्धोदैरभ्यर्च्य कुसुमादिभिः ।।
श्रीरुद्रचमकाभ्यां च रुद्रसूक्तेन च क्रमात् ।।४२।।
शंखं च पुरतः स्थाप्य तज्जलेनाभिषिच्य च ।।
पुष्पं निधाय शिरसि प्रणवेन प्रमार्जयेत् ।।४३।।
कौपीनादीनि संत्यज्य पुनरन्यानि धारयेत् ।।
भस्मनोद्धूलयेत्तस्य सर्वांगं विधिना ततः ।। ४४ ।।
त्रिपुण्ड्रं च विधानेन तिलकं चन्दनेन च ।।
विरच्य पुष्पैर्मालाभिरलंकुर्य्यात्कलेवरम् ।। ४५ ।।
उरः कण्डशिरोबाहुप्रकोष्ठश्रुतिषु क्रमात् ।।
रुद्राक्षमालाभरणैरलंकुर्य्याच्च मंत्रतः ।। ४६ ।।
सुधूपितं समुत्थाप्य शिक्योपरि निधाय च ।।
पंचब्रह्ममये रम्ये रथे संस्थापयेत्तनुम् ।।४७।।
ॐमाद्यैः पंचभिर्ब्रह्ममंत्रैस्सद्यादिभिः क्रमात् ।।
सुगंधकुसुमैर्माल्यैरलंकुर्य्याद्रथं च तम् ।। ४८ ।।

नृत्यवाद्यैर्ब्राह्मणानां वेदघोषैश्च सर्वतः ।।
ग्राममम्प्रदक्षिणीकृत्य गच्छे त्प्रेतं तमुद्वहन् ।। ४९ ।।
ततस्ते यतिनः सर्वे तथा प्राच्यामथापि वा ।।
उदीच्यम्पुण्यदेशे तु पुण्यवृक्षसमीपतः ।।6.21.५०।।
खनित्वा देवयजनं दण्डमात्रप्रमाणतः ।।
प्रणवव्याहृतिभ्यां च प्रोक्ष्य चास्तीर्य्य च क्रमात् ।। ५१ ।।
शमीपत्रश्च कुसुमैरुत्तराग्रं तदूर्ध्वतः।।
आस्तीर्य दर्भांस्तत्पीठं चैलाजिनकुशोत्तरम् ।। ५२ ।।
प्रणवेन ब्रह्मभिश्च पञ्चगव्येन तां तनुम् ।।
प्रोक्ष्याभिषिच्य रौद्रेण सूक्तेन प्रणवेन च ।। ५३ ।।
शंखतोयेनाभिषिच्य मूर्ध्नि पुष्पं विनिःक्षिपेत् ।।
तद्गतस्यानुकूलोऽसौ शिवस्मरणतत्परः ।।५४।।
ॐमित्यथ समुद्धृत्य स्वस्तिवाचनपूर्वकम् ।।
गर्ते योगासने स्थाप्य प्राङ्मुखं स्याद्यथा तथा ।। ५५ ।।
गंधपुष्पैरलंकृत्वा धूपगुग्गुलुना ततः।।
विष्णो हव्यमिति प्रोच्य रक्षस्वेति वदन्ददेत् ।।५६।।
दण्डं दक्षिणहस्ते तु वामे दद्यात्कमण्डलुम् ।।
प्रजापते न त्वदेतान्यन्यो मंत्रेण सोदकम् ।। ५७ ।।
ब्रह्मजज्ञानम्प्रथममितिमंत्रेण मस्तके ।।
स्पृशञ्जप्त्वा रुद्रसूक्तं भ्रुवोर्मध्ये स्पृशञ्जपेत् ।। ५८ ।।
मानो महान्तमित्यादिचतुर्भिर्मस्तकन्ततः ।।
नालिकेरेण निर्भिद्यादवटं पूरयेत्ततः ।। ५९ ।।
पंचभिर्ब्रह्मभिस्स्पृष्ट्वा जपेत्स्थलमनन्यधीः ।।
यो देवानामुपक्रम्य यः परः स महेश्वरः ।। 6.21.६० ।।
इति जप्त्वा महादेवं सांबं संसारभेषजम् ।।
सर्वज्ञमपराधीनं सर्वानुग्रहकारकम् ।। ६१ ।।
एकारत्निसमुत्सेधमरत्निद्वयविस्तृतम् ।।
मृदा पीठं प्रकल्प्याथ गोपये नोपलेपयेत् ।। ६२ ।।
चतुरस्रं च तन्मध्ये गंधाक्षतसमन्वितेः ।।
सुगंधकुसुमैर्बिल्वैस्तुलस्या च समर्चयेत् ।। ६३ ।।
प्रणवेन ततो दयाद्धूपदीपौ पयोहविः ।।
दत्त्वा प्रदक्षिणीकृत्य नमस्कुर्य्याच्च पंचधा ।। ६४ ।।
प्रणवं द्वादशावृत्त्वा संजप्य प्रणमेत्ततः ।।

दिग्विदिक्क्रमतो दद्याद्ब्रह्माद्यम्प्रणवेन च ।। ६५ ।।
एवं दशाहपर्य्यंतं विधिस्ते समुदाहृतः ।।
यतीनां मुनिवर्य्याथैकादशाहविधिं शृणु ।। ६६ ।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां
यतीनान्मरणानन्तरदशाहपर्य्यंतकृत्यवर्णनन्नामैकविंशोऽध्यायः।।२१।।

।। सुब्रह्मण्य उवाच ।।
एकादशेह्नि सम्प्राप्ते यो विधिस्समुदाहृतः ।।
तं वक्ष्ये मुनिशार्दूल यतीनां स्नेहतस्तव ।। १ ।।
सम्मार्ज्य वेदीमालिप्य कृत्वा पुण्याहवाचनम् ।।
प्रोक्ष्य पश्चिममारभ्य पूर्वान्तम्पञ्च च क्रमात्।।२।।
मण्डलान्युत्तराशास्यः कुर्यात्स्वयमवस्थितः।।
प्रादेशमात्रं संकल्प्य चतुरस्रं च मध्यतः ।।३।।
बिन्दुत्रिकोणषट्कोणवृत्ताकाराणि च क्रमात् ।।
शंखं च पुरतस्थाप्य पूजोक्तक्रममार्गतः ।।४।।
प्राणानायम्य संकल्प्य पूजयित्वा सुरेश्वरी ।।
देवताः पञ्च पूर्वोक्ता अतिवाहिकरूपिणीः ।। ५ ।।
संत्यज्योत्तरतो दर्भान् यश्च संस्पृशते ततः ।।
पश्चिमादि समारभ्य षडुत्थासनमार्गतः ।।६।।
मण्डलानि च तेष्वन्तः पुष्पाण्याधाय पीठवत् ।।
ॐ ह्री मित्युक्त्वाग्निरूपान्तामतिवाहिकदेवताम् ।। ७ ।।
आवाहयामि नम इत्यन्तं सर्वत्र भावयेत् ।।
दर्शयेत्स्थापनाद्यास्तु मुद्राः प्रत्येकमादरात् ।। ८ ।।
ह्रांह्रीमित्यादिना कुर्य्यादासामंगानि च क्रमात् ।।
पाशांकुशाभयाभीष्टपाणिचन्द्रोपलप्रभाः ।। ९ ।।
रक्तांगुलीयकच्छायरञ्जिताखिलदिङ्मुखा ।।
रक्ताम्बरधराः कारपदपंकजशोभिताः ।।6.22.१०।।
त्रिनेत्रोल्लासिवदनपूर्णचन्द्रमनोहराः ।।
माणिक्य मुकुटोद्भासिचन्द्रलेखावतंसिताः।।११।।
कुण्डलामृष्टगण्डाश्च पीनोन्नतपयोधराः ।।
हारकेयूरकटककांचीदाममनोहराः ।।१२।।
तनुमध्याः पृथुश्रोण्यो रक्तदिव्याम्बरावृताः ।।
माणिक्यमयमंजीरसिंजत्पदसरोरुहाः।।
पादांगुलीयकश्रोणीर्मंजुलातिमनोहराः।।१३।।
अनुग्रहेण मूर्तेन शिववत्किं नु साध्यते।।
तस्माच्छक्त्यात्ममूर्तेन सर्वं साध्यं महेशवत् ।।१४।।
सर्वानुग्रहकर्त्रैव स्वीकृताः पंचमूर्तय।।
सर्वकार्य्यकरा दिव्याः परानुग्रहतत्पराः।।१५।।
एवं ध्यात्वा तु ताः सर्वा अनुग्रहपराश्शिवाः ।।

पादयोः पाद्यमेतासां दद्याच्छंखोदबिन्दुभिः ।।१६।।
हस्तेष्वाचमनीयं च मौलिष्वर्घ्यं प्रदापयेत्।।
शंखोद बिन्दुभिस्तासां स्नानकर्म च भावयेत्।।१७।।
रक्ताम्बराणि दिव्यानि सोत्तरीयाणि दापयेत् ।।
मुकुटादीन्यनर्घ्याणि दद्यादाभरणानि च।।१८।।
सुवासितं च श्रीखण्डमक्षतांश्चातिशोभनान्।।
सुरभीणि मनोज्ञानि कुसुमानि च दापयेत् ।।१९।।
धूपं च परमामोदं साज्यवर्ति च दीपकम्।।
सर्वं समर्पयामीति प्रणवं ह्रीमुपक्रमात् ।।6.22.२०।।
नमोऽन्तंचततोदद्यात्पायस्तमधुनाप्लुतम्।।
साज्यशर्करयापूपकदलीगुडपूरितम्।।२१।।
प्रत्येकं कदलीपत्रे भरितं च सुवासितम् ।।
भूर्भुवस्स्वरिति प्रोच्य प्रोक्ष्णादीनि कारयेत ।।२२।।
ॐ ह्रीमिति समुच्चार्य्य नैवेद्यं वह्निजायया ।।
पानीयं नम इत्युक्त्वा परम्प्रेम्णा समर्पयेत् ।।२३।।
तत उद्वासयेत्प्रीत्या पूर्वतो मुनिसत्तम ।।
स्थलं विशोध्य गंडूषाचमनार्घ्याणि दापयेत् ।। २४ ।।
तांबूलं धूप दीपौ च प्रदक्षिणनमस्कृती ।।
विधाय प्रार्थयेदेताश्शिरस्यंजलिमादधत्।।२५।।
श्रीमातरस्सुप्रसन्ना यतिं शिवपदैषिणम्।।
रक्षणीय म्प्रब्रुवन्तु परमेशपदाब्जयोः।।२६।।
इति संप्रार्थ्य तास्सर्वा विसृज्य च यथागतम्।।
तासाम्प्रसादमुद्धृत्य कन्यकाभ्यः प्रदापयेत ।।२७।।
गोभ्यो वा जलमध्ये वा निक्षिपेन्नान्यथा क्वचित् ।।
अत्रैव पार्वणं कुर्य्यान्नैकोद्दिष्टं यतेः क्वचित् ।।२८।।
अत्रायं पार्वणश्राद्धे नियमः प्रोच्यते मया ।।
तं शृणुष्व मुनिश्रेष्ठ येन श्रेयो भवेत्ततः।।२९।।
कर्ता स्नात्वा धृतप्राण उपवीती समाहितः।।
सपवित्रकरस्त्वस्यां पुण्यतिथ्यामिति ब्रुवन् ।।6.22.३०।।
करिष्ये पार्वणं श्राद्धमिति संकल्प्य चोत्तरे ।।
दद्याद्दर्भानुत्तमांश्च ह्यासनार्थं जलं स्पृशेत्।।३१।।
तत्रोपवेशयेद्भक्त्या साभ्यंगं कृतमज्जनान् ।।
आहूय चतुरो विप्राञ्छिवभक्तान्दृढव्रतान् ।। ३२ ।।

विश्वेदेवार्थं भवता प्रसादः क्रियतामिति ।।
आत्मने भवता पश्चादन्तरात्मन इत्यपि ।। ३३ ।।
परमात्मन इत्येवं प्रोच्य प्रार्थ्यं च तान्यतिः ।।
श्रद्धया चरणन्तेषां कुर्य्याद्याथार्थ्यमादरात् ।।३४।।
पादौ प्रक्षाल्य तेषान्तु प्राङ्मुखानुपवेश्य च ।।
गन्धादिभिरलंकृत्य भोजयेच्च शिवा ग्रतः ।।३५।।
गोमयेनोपलिप्यात्र दर्भान्प्रागग्रकल्पितान् ।।
आस्तीर्य्य संयतप्राणः पिण्डानां च प्रदानकम् ।।३६।।
करिष्य इति संकल्प्य मण्डलत्रयमर्च्य च ।।
आत्मानमन्तरात्मानं परमात्मनमप्यतः ।।३७।।
चतुर्थ्यन्तं वदन्पश्चादिमं पिण्डमितीरयन् ।।
ददामीति च सम्प्रोच्य दद्यात्पिण्डान्स्वभक्तितः ।।३८।।
कुशोदकं ततो दद्याद्यथाविधिविधानतः ।।
तत उत्थाप्य वै कुर्य्यात्प्रदक्षिणनमस्कृती ।। ३९ ।।
ततो दत्त्वा ब्राह्मणेभ्यो दक्षिणां च यथाविधि ।।
नारायणबलिं कुर्य्यात्तस्मिन्नेव स्थले दिने ।। 6.22.४० ।।
रक्षार्थमेव सर्वत्र विष्णोः पूजाविधिः स्मृतः ।।
कुर्य्याद्विष्णोर्महापूजां पायसान्नं निवेदयेत्।।४१।।
द्वादशाथ समाहूय ब्राह्मणान्वेदपारगान् ।।
केशवादिभिरभ्यर्च्य गन्धपुष्पाक्षतादिभिः ।।४२।।
उपानच्छत्रवस्त्रादि दत्त्वा तेभ्यो यथाविधि ।।
सन्तोषयेन्महाभक्त्या विविधैर्वच नैश्शुभैः ।।४३।।
आस्तीर्य्य दर्भान्पूर्वाग्रान्भूस्स्वाहा च भुवस्सुवः ।।
प्रणवादि प्रोच्य भूमौ पायसान्नं बलिं हरेत् ।।४४।।
एकादशाह सुविधिर्मया प्रोक्तो मुनीश्वर ।।
द्वादशाहविधिं वक्ष्ये शृणुष्वादरतो द्विज ।।४५।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां यतीनामेकादशाहकृत्यवर्णनन्नाम द्वाविंशोऽध्यायः ।।
२२ ।।

सुब्रह्मण्य उवाच ।।
द्वादशाहे समुत्थाय प्रातः स्नात्वा कृताह्निकः ।।
शिवभक्तान्यतीन्वापि ब्राह्मणान्वा शिवप्रियान् ।। १ ।।
विमन्त्र्य तान्समाहूय मध्याह्न चाप्लुताञ्छुचीन् ।।
विधिवद्भोजयेद्भक्त्या स्वाद्वन्नैर्विविधैश्शुभैः ।।२।।
सन्निधौ परमेशस्य पंचावरणमार्गतः ।।
पूजयेत्तस्य संस्थाप्य प्राणानायम्य वाग्यतः ।।३।।
महासंकल्पमार्गेण संकल्प्यास्मद्गुरोरिह।।
पूजां करिष्य इत्युक्त्वा ततो दर्भानुस्पपृशेत्।।४।।
पादौ प्रक्षाल्य चाचम्य स्वयं कर्ता च वाग्यतः ।।
स्थापयेदासने तान्वै प्राङ्मुखान्भस्मभूषितान् ।।५।।
सदाशिवादिक्रमतो ध्यायेदष्टौ च तत्र तान् ।।
परया सम्भावनयेतरानपि मुने द्विजान् ।।
परमेष्ठिगुरुं ध्यायेत्सांबबुद्ध्या स्वनामतः ।।
गुरुश्च परमन्तस्मात्परापरगुरुं ततः ।।६।।
इदमासनमित्युक्त्वा चासनानि प्रकल्पयेत् ।।
प्रणवादिद्वितीयांते स्वस्य नाम समुच्चरन् ।। ।। ७ ।।
आवाहयामि नम इत्यावाह्यार्घोदकेन तु ।।
पाद्यमाचमनं चार्घ्यं वस्त्रगन्धाक्षतानपि ।। ८ ।।
दत्त्वा पुष्पैरलंकृत्य प्रणवाद्यष्टनामभिः ।।
सचतुर्थौंनमोऽन्तैश्च सुगन्धकुसुमैस्ततः ।। ९ ।
धूपदीपौ हि दत्त्वा च सकलाराधनं कृतम् ।।
सम्पूर्णमस्त्विवति प्रोच्य नमस्कुर्यात्समुत्थितः ।। 6.23.१० ।।
पात्राणि कदलीपत्राण्यास्तीर्याद्भिविशोध्य च ।।
शुद्धान्नपायसापूपसूपव्यञ्जनपूर्वकम् ।। ११ ।।
दत्त्वा पदार्थान्कदलीनालिकेरगुडान्वितान् ।।
पात्रासनानि च पृथग्ददद्यात्सम्प्रोच्य च क्रमात् ।। १२ ।।
परिषिच्य च सम्प्रोक्ष्य विष्णोर्हव्यमिति ब्रुवन् ।।
रक्षस्वेति करस्पर्शं कारयित्वा समुत्थितः ।। १३ ।।
आपोशनं समर्प्याथ प्रार्थयेत्तानिदम्प्रति ।।
सदाशिवादयः प्रीता वरदाश्च भवन्तु मे ।। १४ ।।
ये देवा इति च ततो जप्त्वेदं साक्षतं त्यजेत् ।।
नमस्कृत्य समुत्थाय सर्वत्रामृतमस्त्विवति।।१५।।

उक्त्वा प्रसाद्य च जपन्गणानांत्वेत्युप क्रमात् ।।
वेदादीन् रुद्रचमकौ रुद्रसूक्तं च पंच च ।। १६ ।।
ब्रह्माणि भोजनान्ते तु यावन्मन्त्रांश्च साक्षतान् ।।
दत्त्वोत्तरापोशनं च हस्तांघ्रिमुखशोधनम् ।। १७ ।।
कृत्वा चान्तान्स्वासनेषु स्थापयित्वा यथासुखम्।।
शुद्धोदकम्प्रदायाथ कर्प्पूरादि यथोदितम्।।१८।।
मुखवासं दक्षिणां च पादुकासनपत्रकम् ।।
व्यजनं फलकान्दण्डं वैणवं च प्रदाय तान् ।। १९ ।।
प्रदक्षिणनमस्कारैस्संतोष्याशिषमा वहेत ।।
पुनः प्रणम्य सम्प्रार्थ्य गुरुभक्तिमचंचलाम् ।। 6.23.२० ।।
सदाशिवादयः प्रीता गच्छन्तु च यथासुखम् ।।
इत्युद्वास्य द्वारदेशावधि सम्यगनुव्रजन्।।२१।।
निरुद्धस्तः परावृत्य द्वास्थैर्विप्रैश्च बन्धुभिः ।।
दीनानाथैश्च सहितो भुक्त्वा तिष्ठेद्यथासुखम् ।।२२।।
विकृतं न भवेत्क्वापि सत्यं सत्यं पुनः पुनः ।।
प्रत्यब्दमेव कुर्वाणो गुर्वाराधनमुत्तमम् ।।
इह भुक्त्वा महाभोगाञ्छिवलोकमवाप्नुयात्।।२३।।
।। सूत उवाच ।।।।
एवं कृतानुग्रहमात्मशिष्यं श्रीवामदेवं मुनिवर्य्यमुक्त्वा ।।
प्रसन्नधीर्ज्ञानिवरो महात्मा कृत्वा परानुग्रहमाशु देवः ।। २४ ।।
यन्नैमिषारण्यमुनीश्वराणां प्रोक्तं पुरा व्यासमुनीश्वरेण ।।
तस्मादसावादिगुरुर्भवांस्तु द्वितीय आर्य्यो भुवने प्रसिद्धः ।। २५ ।।
श्रुत्वा मुनीन्द्रो भवतो मुखाज्जात्सनत्कुमारः शिवभक्तिपूर्णः ।।
व्यासाय वक्ता स च शैववर्य्यश्शुकाय वक्ता भविता च पूर्णः ।। २६ ।।
प्रत्येकं मुनिशार्दूलं शिष्यवर्गचतुष्टयम् ।।
वेदाध्ययनसंवृत्तं धर्मस्थापनपूर्वकम् ।। २७ ।।
वैशम्पायन एव स्यात्पैलो जैमिनिरेव च ।।
सुमन्तुश्चेति चत्वारो व्यासशिष्या महौजसः ।। २८ ।।
अगस्त्यश्च पुलस्त्यश्च पुलहः क्रतुरेव च ।।
तव शिष्या महात्मानो वामदेव महामुने ।। २९ ।।
सनकश्च सनन्दश्च सनातनमुनिस्ततः ।।
सनत्सुजात इत्येते योगिवर्याः शिवप्रियाः ।।6.23.३० ।।
सनत्कुमारशिष्यास्ते सर्ववेदार्थवित्तमाः ।।

गुरुश्च परमश्चैव परात्परगुरुस्ततः ।।
परमेष्ठिगुरुश्चैते पूज्यास्स्युश्शुकयोगिनः ।। ३१ ।।
इदं प्रणवविज्ञानं स्थितं वर्गचतुष्टये ।।
सर्वोत्कृष्टनिदानं च काश्यां सन्मुक्तिकारणम् ।। ३२ ।।
एतन्मण्डलमद्भुतं परशिवाधिष्ठान रूपं सदावेदान्तार्थविचारपूर्णमतिभिः पूज्यं यतीन्द्रैः परम् ।।
वेदादिप्रविभागकल्पितमहाकाशादिनाप्यावृतन्त्वत्संतोषकरं तथास्तु जगतां श्रेयस्करं श्रीप्रदम् ।। ३३ ।।
इदं रहस्यम्परमं शिवोदितं वेदान्तसिद्धातविनिश्चितम्परम्।।
मत्तश्श्रुतं यद्भवता ततो मुने भवन्मतम्प्राज्ञतमा वदंति ।। ३४ ।।
तस्मादनेनैव पथा गतश्शिवं शिवोहमस्मीति शिवो भवेद्यतिः ।।
पितामहादिप्रविभागमुक्तये नद्यो यथासिन्धुमिमाः प्रयान्ति ।। ३५ ।।
श्रीसूत उवाच ।।
एवम्मुनीश्वरायैतदुपदिश्य सुरेश्वरः ।।
संस्मृत्य चरणाम्भोजे पित्रो स्सर्व्वसुरार्चिते ।। ३६ ।।
कैलासशिखरम्प्राप कुमारश्शिखरावृतम् ।।
राजितम्परमाश्चर्य्यदिव्यज्ञानप्रदो गुरुः ।।३७।।
वामदेवोऽपि सच्छिष्यैस्संवृतश्शिखिवाहनम् ।।
सम्प्रणम्य जगामाशु कैलासम्परमाद्भुतम् ।। ३८ ।।
गत्वा कैलासशिखरम्प्राप्येशनिकटम्मुनिः।।
ददर्श मोक्षदम्मायानाशञ्चरणमीशयोः।।३९।।
भक्त्या चार्पितसर्वांगो विस्मृत्य स्वकलेवरम् ।।
पपात सन्निधौ भूयो भूयो नत्वा समु त्थितः ।।6.23.४०।।
ततो बहुविधैः स्तोत्रैर्वेदागमरसोत्कटैः ।।
तुष्टाव परमेशानं सांबिकं ससुतं मुनिः ।।४१।।
निधाय चरणत्म्भोजन्देव देव्योस्स्वमूर्द्धनि ।।
पूर्णानुग्रहमासाद्य तत्रैव न्यवसत्सुखम्।।४२।।।
भवन्तोऽपि विदित्वैवम्प्रणवार्थम्महेश्वरम्।।
वेदगुह्यं च सर्वस्वन्तार कम्ब्रह्म मुक्तिदम् ।।४३।।
अत्रैव सुखमासीनाः श्रीविश्वेश्वरपादयोः ।।
सायुज्यरूपामतुलाम्भजध्वम्मुक्तिमुत्तमाम्।।४४।।
अहं गुरुपदाम्भोजसेवायै बादराश्रमम् ।।
गमिष्ये भवताम्भूयस्सत्सम्भाषणमस्तु मे ।। ४५ ।।
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां

द्वादशाहकृत्यवर्णनपूर्व्वकव्यासादिशिष्यवर्गकथनन्नाम त्रयोविंशोऽध्यायः ।। २३ ।।

इति कैलाससंहिता षष्ठी समाप्तिमगमत् ।।

।। ॐ नमश्शिवाय ।।

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः ०१

https://sa.wikisource.org/s/hye

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | पूर्व भागः

अध्याय १

व्यास उवाच

नमश्शिवाय सोमाय सगणाय ससूनवे ॥ ७.१,१.१

प्रधानपुरुषेशाय सर्गस्थित्यंतहेतवे ॥ ७.१,१.१

शक्तिरप्रतिमा यस्य ह्यैश्वर्यं चापि सर्वगम् ॥ ७.१,१.२

स्वामित्वं च विभुत्वं च स्वभावं संप्रचक्षते ॥ ७.१,१.२

तमजं विश्वकर्माणं शाश्वतं शिवमव्ययम् ॥ ७.१,१.३

महादेवं महात्मानं व्रजामि शरणं शिवम् ॥ ७.१,१.३

धर्मक्षेत्रे महातीर्थे गंगाकालिंदिसंगमे ॥ ७.१,१.४

प्रयागे नैमिषारण्ये ब्रह्मलोकस्य वर्त्मनि ॥ ७.१,१.४

मुनयश्शंसितात्मानः सत्यव्रतपरायणाः ॥ ७.१,१.५

महौजसो महाभागा महासत्रं वितेनिरे ॥ ७.१,१.५

तत्र सत्रं समाकर्ण्य तेषामक्लिष्टकर्मणाम् ॥ ७.१,१.६

साक्षात्सत्यवतीसूनोर्वेदव्यासस्य धीमतः ॥ ७.१,१.६

शिष्यो महात्मा मेधावी त्रिषु लोकेषु विश्रुतः ॥ ७.१,१.७

पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषवित् ॥ ७.१,१.७

उत्तरोत्तरवक्ता च ब्रुवतो ऽपि बृहस्पतेः ॥ ७.१,१.८

मधुरः श्रवणानां च मनोज्ञपदपर्वणाम् ॥ ७.१,१.८

कथानां निपुणो वक्ता कालविन्नयवित्कविः ॥ ७.१,१.९

आजगाम स तं देशं सूतः पौराणिकोत्तमः ॥ ७.१,१.९

तं दृष्ट्वा सूतमायांतं मुनयो हृष्टमानसाः ॥ ७.१,१.१०

तस्मै साम च पूजां च यथावत्प्रत्यपादयन् ॥ ७.१,१.१०

प्रतिगृह्य सतां पूजां मुनिभिः प्रतिपादिताम् ॥ ७.१,१.११

उद्दिष्टमानसं भेजे नियुक्तो युक्तमात्मनः ॥ ७.१,१.११

ततस्तत्संगमादेव मुनीनां भावितात्मनाम् ॥ ७.१,१.१२

सोत्कंठमभवच्चितं श्रोतुं पौराणिकीं कथाम् ॥ ७.१,१.१२

तदा तमनुकूलाभिर्वाग्भिः पूज्य १ महर्षयः ॥ ७.१,१.१३

अतीवाभिमुखं कृत्वा वचनं चेदमब्रुवन् ॥ ७.१,१.१३

ऋषय ऊचुः

रोमहर्षण सर्वज्ञ भवान्नो भाग्यगौरवात् ॥ ७.१,१.१४

संप्राप्तोद्य महाभाग शैवराज महामते ॥ ७.१,१.१४

पुराणविद्यामखिलां व्यासात्प्रत्यक्षमीयिवान् ॥ ७.१,१.१५

तस्मादाश्चर्यभूतानां कथानां त्वं हि भाजनम् ॥ ७.१,१.१५

रत्नानामुरुसाराणां रत्नाकर इवार्णवः ॥ ७.१,१.१६

यच्च भूतं यच्च भव्यं यच्चान्यद्वस्तु वर्तते ॥ ७.१,१.१६

न तवाविदितं किञ्चित्त्रिषु लोकेषु विद्यते ॥ ७.१,१.१७

त्वमदृष्टवशादस्मद्दर्शनार्थमिहागतः ॥ ७.१,१.१७

अकुर्वन्किमपि श्रेयो न वृथा गन्तुमर्हसि ॥ ७.१,१.१७

तस्माच्छ्राव्यतरं पुण्यं सत्कथाज्ञानसंहितम् ॥ ७.१,१.१८

वेदांतसारसर्वस्वं पुराणं श्रावयाशु नः ॥ ७.१,१.१८

एवमभ्यर्थितस्सूतो मुनिभिर्वेदवादिभिः ॥ ७.१,१.१९

श्लक्ष्णां च न्यायसंयुक्तां प्रत्युवाच शुभां गिरम् ॥ ७.१,१.१९

सूत उवाच

पूजितो ऽनुगृहीतश्च भवद्भिरिति चोदितः ॥ ७.१,१.२०

कस्मात्सम्यङ्न विब्रूयां पुराणमृषिपूजितम् ॥ ७.१,१.२०

अभिवंद्य महादेवं देवीं स्कंदं विनायकम् ॥ ७.१,१.२१

नंदिनं च तथा व्यासं साक्षात्सत्यवतीसुतम् ॥ ७.१,१.२१

वक्ष्यामि परमं पुण्यं पुराणं वेदसंमितम् ॥ ७.१,१.२२

शिवज्ञानार्णवं साक्षाद्भक्तिमुक्तिफलप्रदम् ॥ ७.१,१.२२

शब्दार्थन्यायसंयुक्तै रागमार्थैर्विभूषितम् ॥ ७.१,१.२३

श्वेतकल्पप्रसंगेन वायुना कथितं पुरा ॥ ७.१,१.२३

विद्यास्थानानि सर्वाणि पुराणानुक्रमं तथा ॥ ७.१,१.२४
तत्पुराणस्य चोत्पत्तिं ब्रुवतो मे निबोधत ॥ ७.१,१.२४
अंगानि वेदाश्चत्वारो मीमांसान्यायविस्तरः ॥ ७.१,१.२५
पुराणं धर्मशास्त्रं च विद्याश्चेताश्चतुर्दश ॥ ७.१,१.२५
आयुर्वेदो धनुर्वेदो गांधर्वश्चेत्यनुक्रमात् ॥ ७.१,१.२६
अर्थशास्त्रं परं तस्माद्विद्या ह्यष्टादश स्मृताः ॥ ७.१,१.२६
अष्टादशानां विद्यानामेतासां भिन्नवर्त्मनाम् ॥ ७.१,१.२७
आदिकर्ता कविस्साक्षाच्छूलपाणिरिति श्रुतिः ॥ ७.१,१.२७
स हि सर्वजगन्नाथः सिसृक्षुरखिलं जगत् ॥ ७.१,१.२८
ब्रह्माणं विदधे साक्षात्पुत्रमग्रे सनातनम् ॥ ७.१,१.२८
तस्मै प्रथमपुत्राय ब्रह्मणे विश्वयोनये ॥ ७.१,१.२९
विद्याश्चेमा ददौ पूर्वं विश्वसृष्ट्यर्थमीश्वरः ॥ ७.१,१.२९
पालनाय हरिं देवं रक्षाशक्तिं ददौ ततः ॥ ७.१,१.३०
मध्यमं तनयं विष्णुं पातारं ब्रह्मणोऽपि हि ॥ ७.१,१.३०
लब्धविद्येन विधिना प्रजासृष्टिं वितन्वता ॥ ७.१,१.३१
प्रथमं सर्वशास्त्राणां पुराणं ब्रह्मणा स्मृतम् ॥ ७.१,१.३१
अनंतरं तु वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥ ७.१,१.३२
प्रवृत्तिस्सर्वशास्त्राणां तन्मुखादभवत्ततः ॥ ७.१,१.३२
यदास्य विस्तरं शक्ता नाधिगंतुं प्रजा भुवि ॥ ७.१,१.३३
तदा विद्यासमासार्थं विश्वेश्वरनियोगतः ॥ ७.१,१.३३
द्वापरांतेषु विश्वात्मा विष्णुर्विश्वंभरः प्रभुः ॥ ७.१,१.३४
व्यासनाम्ना चरत्यस्मिन्नवतीर्य महीतले ॥ ७.१,१.३४
एवं व्यस्ताश्च वेदाश्च द्वापरेद्वापरे द्विजाः ॥ ७.१,१.३५
निर्मितानि पुराणानि अन्यानि च ततः परम् ॥ ७.१,१.३५
स पुनर्द्वापरे चास्मिन्कृष्णद्वैपायनाख्यया ॥ ७.१,१.३६
अरण्यामिव हव्याशी सत्यवत्यामजायत ॥ ७.१,१.३६
संक्षिप्य स पुनर्वेदांश्चतुर्धा कृतवान्मुनिः ॥ ७.१,१.३७
व्यस्तवेदतया लोके वेदव्यास इति श्रुतः ॥ ७.१,१.३७

पुराणानाञ्च संक्षिप्तं चतुर्लक्षप्रमाणतः ॥ ७.१,१.३८
अद्यापि देवलोके तच्छतकोटिप्रविस्तरम् ॥ ७.१,१.३८
यो विद्याच्चतुरो वेदान् सांगोपणिषदान्द्विजः ॥ ७.१,१.३९
न चेत्पुराणं संविद्यान्नैव स स्याद्विचक्षणः ॥ ७.१,१.३९
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥ ७.१,१.४०
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥ ७.१,१.४०
सर्गश्च प्रतिसर्गश्च वंशो मन्वंतराणि च ॥ ७.१,१.४१
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥ ७.१,१.४१
दशधा चाष्टधा चैतत्पुराणमुपदिश्यते ॥ ७.१,१.४२
बृहत्सूक्ष्मप्रभेदेन मुनिभिस्तत्त्ववित्तमैः ॥ ७.१,१.४२
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ॥ ७.१,१.४३
भविष्यं नारदीयं च मार्कंडेयमतः परम् ॥ ७.१,१.४३
आग्नेयं ब्रह्मवैवर्तं लैंगं वाराहमेव च ॥ ७.१,१.४४
स्कान्दं च वामनं चैव कौर्म्यं मात्स्यं च गारुडम् ॥ ७.१,१.४४
ब्रह्मांडं चेति पुण्यो ऽयं पुराणानामनुक्रमः ॥ ७.१,१.४५
तत्र शैवं तुरीयं यच्छार्वं सर्वार्थसाधकम् ॥ ७.१,१.४५
ग्रंथो लक्षप्रमाणं तद्व्यस्तं द्वादशसंहितम् ॥ ७.१,१.४६
निर्मितं तच्छिवेनैव तत्र धर्मः प्रतिष्ठितः ॥ ७.१,१.४६
तदुक्तेनैव धर्मेण शैवास्त्रैवर्णिका नराः ॥ ७.१,१.४७
तस्माद्विमुकुतिमन्विच्छञ्छिवमेव समाश्रयेत् ॥ ७.१,१.४७
तमाश्रित्यैव देवानामपि मुक्तिर्न चान्यथा ॥ ७.१,१.४८
यदिदं शैवमाख्यातं पुराणं वेदसंमितम् ॥ ७.१,१.४९
तस्य भेदान्समासेन ब्रुवतो मे निबोधत ॥ ७.१,१.४९
विद्येश्वरं तथा रौद्रं वैनायकमनुत्तमम् ॥ ७.१,१.५०
औमं मातृपुराणं च रुद्रैकादशकं तथा ॥ ७.१,१.५०
कैलासं शतरुद्रं च शतरुद्राख्यमेव च ॥ ७.१,१.५१
सहस्रकोटिरुद्राख्यं वायवीयं ततःपरम् ॥ ७.१,१.५१
धर्मसंज्ञं पुराणं चेत्येवं द्वादश संहिताः ॥ ७.१,१.५२

विद्येशं दशसाहस्रमुदितं ग्रंथसंख्यया ॥ ७.१,१.५२

रौद्रं वैनायकं चौमं मातृकाख्यं ततः परम् ॥ ७.१,१.५३

प्रत्येकमष्टसाहस्रं त्रयोदशसहस्रकम् ॥ ७.१,१.५३

रौद्रकादशकाख्यं यत्कैलासं षट्सहस्रकम् ॥ ७.१,१.५४

शतरुद्रं त्रिसाहस्रं कोटिरुद्रं ततः परम् ॥ ७.१,१.५४

सहस्रैर्नवभिर्युक्तं सर्वार्थज्ञानसंयुतम् ॥ ७.१,१.५५

सहस्रकोटिरुद्राख्यमेकादशसहस्रकम् ॥ ७.१,१.५५

चतुस्सहस्रसंख्येयं वायवीयमनुत्तमम् ॥ ७.१,१.५६

धर्मसंज्ञं पुराणं यत्तद्द्वादशसहस्रकम् ॥ ७.१,१.५६

तदेवं लक्षमुद्दिष्टं शैवं शाखाविभेदतः ॥ ७.१,१.५७

पुराणं वेदसारं तद्भुक्तिमुक्तिफलप्रदम् ॥ ७.१,१.५७

व्यासेन तत्तु संक्षिप्तं चतुर्विंशत्सहस्रकम् ॥ ७.१,१.५८

शैवन्तत्र पुराणं वै चतुर्थं सप्तसंहितम् ॥ ७.१,१.५८

विद्येश्वराख्या तत्राद्या द्वितीया रुद्रसंहिता ॥ ७.१,१.५९

तृतीया शतरुद्राख्या कोटिरुद्रा चतुर्थिका ॥ ७.१,१.५९

पञ्चमी कथिता चोमा षष्ठी कैलाससंहिता ॥ ७.१,१.६०

सप्तमी वायवीयाख्या सप्तैवं संहिता इह ॥ ७.१,१.६०

विद्येश्वरं द्विसाहस्रं रौद्रं पञ्चशतायुतम् ॥ ७.१,१.६१

त्रिंशत्तथा द्विसाहस्रं सार्धैकशतमीरितम् ॥ ७.१,१.६१

शतरुद्रन्तथा कोटिरुद्रं व्योमयुगाधिकम् ॥ ७.१,१.६२

द्विसाहस्रं च द्विशतं तथोमं भूसहस्रकम् ॥ ७.१,१.६२

चत्वारिंशत्साष्टशतं कैलासं भूसहस्रकम् ॥ ७.१,१.६३

चत्वारिंशच्च द्विशतं वायवीयमतः परम् ॥ ७.१,१.६३

चतुस्साहस्रसंख्याकमेवं संख्याविभेदतः ॥ ७.१,१.६४

श्रुतम्परमपुण्यन्तु पुराणं शिवसंज्ञकम् ॥ ७.१,१.६४

चतुःसाहस्रकं यत्तु वायवीयमुदीरितम् ॥ ७.१,१.६५

तदिदं वर्तयिष्यामि भागद्वयसमन्वितम् ॥ ७.१,१.६५

नावेदविदुषे वाच्यमिदं शास्त्रमनुत्तमम् ॥ ७.१,१.६६

न चैवाश्रद्दधानाय नापुराणविदे तथा ॥ ७.१,१.६६

परीक्षिताय शिष्याय धार्मिकायानसूयवे ॥ ७.१,१.६७

प्रदेयं शिवभक्ताय शिवधर्मानुसारिणे ॥ ७.१,१.६७

पुराणसंहिता यस्य प्रसादान्मयि वर्तते ॥ ७.१,१.६८

नमो भगवते तस्मै व्यासायामिततेजसे ॥ ७.१,१.६८

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे विद्यावतारकथनं नाम प्रथमो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः ०२

https://sa.wikisource.org/s/hyf



अध्याय २

सूत उवाच

पुरा कालेन महता कल्पेतीते पुनःपुनः ॥ ७.१,२.१

अस्मिन्नुपस्थिते कल्पे प्रवृत्ते सृष्टिकर्मणि ॥ ७.१,२.१

प्रतिष्ठितायां वार्तायां प्रबुद्धासु प्रजासु च ॥ ७.१,२.२

मुनीनां षट्कुलीयानां ब्रुवतामितरेतरम् ॥ ७.१,२.२

इदं परमिदं नेति विवादस्सुमहानभूत् ॥ ७.१,२.३

परस्य दुर्निरूपत्वान्न जातस्तत्र निश्चयः ॥ ७.१,२.३

ते ऽभिजग्मुर्विधातारं द्रष्टुं ब्रह्माणमव्ययम् ॥ ७.१,२.४

यत्रास्ते भगवान् ब्रह्मा स्तूयमानस्सुरासुरैः ॥ ७.१,२.४

मेरुशृंगे शुभे रम्ये देवदानवसंकुले ॥ ७.१,२.५

सिद्धचारणसंवादे यक्षगंधर्वसेविते ॥ ७.१,२.५

विहंगसंघसंघुष्टे मणिविद्रुमभूषिते ॥ ७.१,२.६

निकुंजकंदरदरीगृहानिर्झरशोभिते ॥ ७.१,२.६

तत्र ब्रह्मवनं नाम नानामृगसमाकुलम् ॥ ७.१,२.७

दशयोजनविस्तीर्णं शतयोजनमायतम् ॥ ७.१,२.७

सुरसामलपानीयपूर्णरम्यसरोवरम् ॥ ७.१,२.८

मत्तभ्रमरसंछन्नरम्यपुष्पितपादपम् ॥ ७.१,२.८

तरुणादित्यसंकाशं तत्र चारु महत्पुरम् ॥ ७.१,२.९

दुर्धर्षबलदृप्तानां दैत्यदानवरक्षसाम् ॥ ७.१,२.९

तप्तजांबूनदमयं प्रांशुप्राकारतोरणम् ॥ ७.१,२.१०

निर्व्यूहवलभीकूटप्रतोलीशतमंडितम् ॥ ७.१,२.१०

महार्हमणिचित्राभिर्लेलिहानमिवांबरम् ॥ ७.१,२.११

महाभवनकोटीभिरनेकाभिरलंकृतम् ॥ ७.१,२.११
तस्मिन्निवसति ब्रह्मा सभ्यैः सार्धं प्रजापतिः ॥ ७.१,२.१२
तत्र गत्वा महात्मानं साक्षाल्लोकपितामहम् ॥ ७.१,२.१२
ददृशुर्मुनयो देवा देवर्षिगणसेवितम् ॥ ७.१,२.१३
शुद्धचामीकरप्रख्यं सर्वाभरणभूषितम् ॥ ७.१,२.१३
प्रसन्नवदनं सौम्यं पद्मपत्रायतेक्षणम् ॥ ७.१,२.१४
दिव्यकांतिसमायुक्तं दिव्यगंधानुलेपनम् ॥ ७.१,२.१४
दिव्यशुक्लांबरधरं दिव्यमालाविभूषितम् ॥ ७.१,२.१५
सुरासुरेन्द्रयोगींद्रवंद्यमानपदांबुजम् ॥ ७.१,२.१५
सर्वलक्षणयुक्तांग्या लब्धचामरहस्तया ॥ ७.१,२.१६
भ्राजमानं सरस्वत्या प्रभयेव दिवाकरम् ॥ ७.१,२.१६
तं दृष्ट्वा मुनयस्सर्वे प्रसन्नवदनेक्षणाः ॥ ७.१,२.१७
शिरस्यंजलिमाधाय तुष्टुवुस्सुरपुंगवम् ॥ ७.१,२.१७
मुनय ऊचुः
नमस्त्रिमूर्तये तुभ्यं सर्गस्थित्यंतहेतवे ॥ ७.१,२.१८
पुरुषाय पुराणाय ब्रह्मणे परमात्मने ॥ ७.१,२.१८
नमः प्रधानदेहाय प्रधानक्षोभकारिणे ॥ ७.१,२.१९
त्रयोविंशतिभेदेन विकृतायाविकारिणे ॥ ७.१,२.१९
नमो ब्रह्माण्डदेहाय ब्रह्मांडोदरवर्तिने ॥ ७.१,२.२०
तत्र संसिद्धकार्याय संसिद्धकरणाय च ॥ ७.१,२.२०
नमोस्तु सर्वलोकाय सर्वलोकविधायिने ॥ ७.१,२.२१
सर्वात्मदेहसंयोग वियोगविधिहेतवे ॥ ७.१,२.२१
त्वयैव निखिलं सृष्टं संहृतं पालितं जगत् ॥ ७.१,२.२२
तथापि मायया नाथ न विद्मस्त्वां पितामह ॥ ७.१,२.२२
सूत उवाच
एवं ब्रह्मा महाभागैर्महर्षिभिरभिष्टुतः ॥ ७.१,२.२३
प्राह गंभीरया वाचा मुनीन् प्रह्लादयन्निव ॥ ७.१,२.२३
ब्रह्मोवाच

ऋषयो हे महाभागा महासत्त्वा महौजसः ॥ ७.१,२.२४

किमर्थं सहितास्सर्वे यूयमत्र समागताः ॥ ७.१,२.२४

तमेवंवादिनं देवं ब्रह्माणं ब्रह्मवित्तमाः ॥ ७.१,२.२५

वाग्भिर्विनयगर्भाभिस्सर्वे प्रांजलयो ऽब्रुवन् ॥ ७.१,२.२५

मुनय ऊचुः

भगवन्नंधकारेण महता वयमावृताः ॥ ७.१,२.२६

खिन्ना विवदमानाश्च न पश्यामो ऽत्र यत्परम् ॥ ७.१,२.२६

त्वं हि सर्वजगद्धाता सर्वकारणकारणम् ॥ ७.१,२.२७

त्वया ह्यविदितं नाथ नेह किंचन विद्यते ॥ ७.१,२.२७

कः पुमान् सर्वसत्त्वेभ्यः पुराणः पुरुषः परः ॥ ७.१,२.२८

विशुद्धः परिपूर्णश्च शाश्वतः परमेश्वरः ॥ ७.१,२.२८

केनैव चित्रकृत्येन प्रथमं सृज्यते जगत् ॥ ७.१,२.२९

तत्त्वं वद महाप्राज्ञ स्वसंदेहापनुत्तये ॥ ७.१,२.२९

एवं पृष्टस्तदा ब्रह्मा विस्मयस्मेरवीक्षणः ॥ ७.१,२.३०

देवानां दानवानां च मुनीनामपि सन्निधौ ॥ ७.१,२.३०

उत्थाय सुचिरं ध्यात्वा रुद्र इत्युद्धरन् गिरिम् ॥ ७.१,२.३१

आनंदक्लिन्नसर्वांगः कृतांजलिरभाषत ॥ ७.१,२.३१

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे मुनिप्रस्ताववर्णनं नाम द्वितीयो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः ०३

https://sa.wikisource.org/s/hyg



अध्यायः ३

ब्रह्मोवाच

यतो वाचो निवर्तंते अप्राप्य मनसा सह ॥ ७.१,३.१

आनंदं यस्य वै विद्वान्न बिभेति कुतश्चन ॥ ७.१,३.१

यस्मात्सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रपूर्वकम् ॥ ७.१,३.२

सह भूतेन्द्रियैः सर्वैः प्रथमं संप्रसूयते ॥ ७.१,३.२

कारणानां च यो धाता ध्याता परमकारणम् ॥ ७.१,३.३

न संप्रसूयते ऽन्यस्मात्कुतश्चन कदाचन ॥ ७.१,३.३

सर्वैश्वर्येण संपन्नो नाम्ना सर्वेश्वरः स्वयम् ॥ ७.१,३.४

सर्वैर्मुमुक्षुभिर्ध्येयश्शंभुराकाशमध्यगः ॥ ७.१,३.४

यो ऽग्रे मां विदधे पुत्रं ज्ञानं च प्रहिणोति मे ॥ ७.१,३.५

तत्प्रसादान्मयालब्धं प्राजापत्यमिदं पदम् ॥ ७.१,३.५

ईशो वृक्ष इव स्तब्धो य एको दिवि तिष्ठति ॥ ७.१,३.६

येनेदमखिलं पूर्णं पुरुषेण महात्मना ॥ ७.१,३.६

एको बहूनां जंतूनां निष्क्रियाणां च सक्रियः ॥ ७.१,३.७

य एको बहुधा बीजं करोति स महेश्वरः ॥ ७.१,३.७

जीवैरेभिरिमांल्लोकान्सर्वानीशो य ईशते १ ॥ ७.१,३.८

य एको भागवान्रुद्रो न द्वितीयो ऽस्ति कश्चन ॥ ७.१,३.८

सदा जनानां हृदये संनिविष्टो ऽपि यः परैः ॥ ७.१,३.९

अलक्ष्यो लक्षयन्विश्वमधितिष्ठति सर्वदा ॥ ७.१,३.९

यस्तु कालात्प्रमुक्तानि कारणान्यखिलान्यपि ॥ ७.१,३.१०

अनन्तशक्तिरेवैको भगवानधितिष्ठति ॥ ७.१,३.१०

न यस्य दिवसो रात्रिर्न समानो न चाधिकः ॥ ७.१,३.११

स्वभाविकी पराशक्तिर्नित्या ज्ञानक्रिये अपि ॥ ७.१,३.११
यदिदं क्षरमव्यक्तं यदप्यमृतमक्षरम् ॥ ७.१,३.१२
तावुभावक्षरात्मानावेको देवः स्वयं हरः ॥ ७.१,३.१२
ईशते तदभिध्यानाद्योजनासत्त्वभावनः ॥ ७.१,३.१३
भूयो ह्यस्य पशोरन्ते विश्वमाया निवर्तते ॥ ७.१,३.१३
यस्मिन्न भासते विद्युन्न सूर्यो न च चन्द्रमाः ॥ ७.१,३.१४
यस्य भासा विभातीदमित्येषा शाश्वती श्रुतिः ॥ ७.१,३.१४
एको देवो महादेवो विज्ञेयस्तु महेश्वरः ॥ ७.१,३.१५
न तस्य परमं किंचित्पदं समधिगम्यते ॥ ७.१,३.१५
अयमादिरनाद्यन्तस्स्वभावादेव निर्मलः ॥ ७.१,३.१६
स्वतन्त्रः परिपूर्णश्च स्वेच्छाधीनश्चराचरः ॥ ७.१,३.१६
अप्राकृतवपुः श्रीमांल्लक्ष्यलक्षणवर्जितः ॥ ७.१,३.१७
अयं मुक्तो मोचकश्च ह्यकालः कालचोदकः ॥ ७.१,३.१७
सर्वोपरिकृतावासस्सर्वावासश्च सर्ववित् ॥ ७.१,३.१८
षड्विधाध्वमयस्यास्य सर्वस्य जगतः पतिः ॥ ७.१,३.१८
उत्तरोत्तरभूतानामुत्तरश्च निरुत्तरः ॥ ७.१,३.१९
अनन्तानन्तसन्दोहमकरंदमधुव्रतः ॥ ७.१,३.१९
अखंडजगदंडानां पिंडीकरणपंडितः ॥ ७.१,३.२०
औदार्यवीर्यगांभीर्यमाधुर्यमकरालयः ॥ ७.१,३.२०
नैवास्य सदृशं वस्तु नाधिकं चापि किंचन ॥ ७.१,३.२१
अतुलः सर्वभूतानां राजराजश्च तिष्ठति ॥ ७.१,३.२१
अनेन चित्रकृत्येन प्रथमं सृज्यते जगत् ॥ ७.१,३.२२
अंतकाले पुनश्चेदं तस्मिन्प्रलयमेष्यते ॥ ७.१,३.२२
अस्य भूतानि वश्यानि अयं सर्वनियोजकः ॥ ७.१,३.२३
अयं तु परया भक्त्या दृश्यते नान्यथा क्वचित् ॥ ७.१,३.२३
व्रतानि सर्वदानानि तपांसि नियमास्तथा ॥ ७.१,३.२४
कथितानि पुरा सद्भिर्भावार्थं नात्र संशयः ॥ ७.१,३.२४
हरिश्चाहं च रुद्रश्च तथान्ये च सुरासुराः ॥ ७.१,३.२५

तपोभिरुग्रैरद्यापि तस्य दर्शनकांक्षिणः ॥ ७.१,३.२५
अदृश्यः पतितैर्मूढैर्दुर्जनैरपि कुत्सितैः ॥ ७.१,३.२६
भक्तैरन्तर्बहिश्चापि पूज्यः संभाष्य एव च ॥ ७.१,३.२६
तदिदं त्रिविधं रूपं स्थूलं सूक्ष्मं ततः परम् ॥ ७.१,३.२७
अस्मदाद्यमरैर्दृश्यं स्थूलं सूक्ष्मं तु योगिभिः ॥ ७.१,३.२७
ततः परं तु यन्नित्यं ज्ञानमानंदमव्ययम् ॥ ७.१,३.२८
तन्निष्ठैस्तत्परैर्भक्तैर्दृश्यं तद्व्रतमाश्रितैः ॥ ७.१,३.२८
बहुनात्र किमुक्तेन गुह्याद्गुह्यतरं परम् ॥ ७.१,३.२९
शिवे भक्तिर्न सन्देहस्तया युक्तो विमुच्यते ॥ ७.१,३.२९
प्रसादादेव सा भक्तिः प्रसादो भक्तिसंभवः ॥ ७.१,३.३०
यथा चांकुरतो बीजं बीजतो वा यथांकुरः ॥ ७.१,३.३०
प्रसादपूर्विका एव पशोस्सर्वत्र सिद्धयः ॥ ७.१,३.३१
स एव साधनैरन्ते सर्वैरपि च साध्यते ॥ ७.१,३.३१
प्रसादसाधनं धर्मस्स च वेदेन दर्शितः ॥ ७.१,३.३२
तदभ्यासवशात्साम्यं पूर्वयोः पुण्यपापयोः ॥ ७.१,३.३२
साम्यात्प्रसादसंपर्को धर्मस्यातिशयस्ततः ॥ ७.१,३.३३
धर्मातिशयमासाद्य पशोः पापपरिक्षयः ॥ ७.१,३.३३
एवं प्रक्षीणपापस्य बहुभिर्जन्मभिः क्रमात् ॥ ७.१,३.३४
सांबे सर्वेश्वरे भक्तिर्ज्ञानपूर्वा प्रजायते ॥ ७.१,३.३४
भावानुगुणमीशस्य प्रसादो व्यतिरिच्यते ॥ ७.१,३.३५
प्रसादात्कर्मसंत्यागः फलतो न स्वरूपतः ॥ ७.१,३.३५
तस्मात्कर्मफलत्यागाच्छिवधर्मान्वयः शुभः ॥ ७.१,३.३६
स च गुर्वनपेक्षश्च तदपेक्ष इति द्विधा ॥ ७.१,३.३६
तत्रानपेक्षात्सापेक्षो मुख्यः शतगुणाधिकः ॥ ७.१,३.३७
शिवधर्मान्वयस्यास्य शिवज्ञानसमन्वयः ॥ ७.१,३.३७
ज्ञनान्वयवशात्पुंसः संसारे दोषदर्शनम् ॥ ७.१,३.३८
ततो विषयवैराग्यं वैराग्याद्भावसाधनम् ॥ ७.१,३.३८
भावसिद्ध्युपपन्नस्य ध्याने निष्ठा न कर्मणि ॥ ७.१,३.३९

ज्ञानध्यानाभियुक्तस्य पुंसो योगः प्रवर्तते ॥ ७.१,३.३९

योगेन तु परा भक्तिः प्रसादस्तदनंतरम् ॥ ७.१,३.४०

प्रसादान्मुच्यते जंतुर्मुक्तः शिवसमो भवेत् ॥ ७.१,३.४०

अनुग्रहप्रकारस्य क्रमो ऽयमविवक्षितः ॥ ७.१,३.४१

यादृशी योग्यता पुंसस्तस्य तादृगनुग्रहः ॥ ७.१,३.४१

गर्भस्थो मुच्यते कश्चिज्जायमानस्तथापरः ॥ ७.१,३.४२

बालो वा तरुणो वाथ वृद्धो वा मुच्यते परः ॥ ७.१,३.४२

तिर्यग्योनिगतः कश्चिन्मुच्यते नारको ऽपरः ॥ ७.१,३.४३

अपरस्तु पदं प्राप्तो मुच्यते स्वपदक्षये ॥ ७.१,३.४३

कश्चित्क्षीणपदो भूत्वा पुनरावर्त्य मुच्यते ॥ ७.१,३.४४

कश्चिदध्वगतस्तस्मिन् स्थित्वास्थित्वा विमुच्यते ॥ ७.१,३.४४

तस्मान्नैकप्रकारेण नराणां मुक्तिरिष्यते ॥ ७.१,३.४५

ज्ञानभावानुरूपेण प्रसादेनैव निर्वृतिः ॥ ७.१,३.४५

तस्मादस्य प्रसादार्थं वाङ्मनोदोषवर्जिताः ॥ ७.१,३.४६

ध्यायंतश्शिवमेवैकं सदारतनयाग्नयः ॥ ७.१,३.४६

तन्निष्ठास्तत्परास्सर्वे तद्युक्तास्तदुपाश्रयाः ॥ ७.१,३.४७

सर्वक्रियाः प्रकुर्वाणास्तमेव मनसागताः ॥ ७.१,३.४७

दीर्घसूत्रसमारब्धं दिव्यवर्षसहस्रकम् ॥ ७.१,३.४८

सत्रांते मंत्रयोगेन वायुस्तत्र गमिष्यति ॥ ७.१,३.४८

स एव भवतः श्रेयः सोपायं कथयिष्यति ॥ ७.१,३.४९

ततो वाराणसी पुण्या पुरी परमशोभना ॥ ७.१,३.४९

गंतव्या यत्र विश्वेशो देव्या सह पिनाकधृक् ॥ ७.१,३.५०

सदा विहरति श्रीमान् भक्तानुग्रहकारणात् ॥ ७.१,३.५०

तत्राश्चर्यं महद्दृष्ट्वा मत्समीपं गमिष्यथ ॥ ७.१,३.५१

ततो वः कथयिष्यामि मोक्षोपाय द्विजोत्तमाः ॥ ७.१,३.५१

येनैकजन्मना मुक्तिर्युष्मत्करतले स्थिता ॥ ७.१,३.५२

अनेकजन्मसंसारबंधनिर्मोक्षकारिणी ॥ ७.१,३.५२

एतन्मनोमयं चक्रं मया सृष्टं विसृज्यते ॥ ७.१,३.५३

यत्रास्य शीर्यते नेमिः स देशस्तपसश्शुभः ॥ ७.१,३.५३

इत्युक्त्वा सूर्यसंकाशं चक्रं दृष्ट्वा मनोमयम् ॥ ७.१,३.५४

प्रणिपत्य महादेवं विससर्ज पितामहः ॥ ७.१,३.५४

ते ऽपि हृष्टतरा विप्राः प्रणम्य जगतां प्रभुम् ॥ ७.१,३.५५

प्रययुस्तस्य चक्रस्य यत्र नेमिरशीर्यत ॥ ७.१,३.५५

चक्रं तदपि संक्षिप्तं श्लक्ष्णं चारुशिलातले ॥ ७.१,३.५६

विमलस्वादुपानीये निजपात वने क्वचित् ॥ ७.१,३.५६

तद्वनं तेन विख्यातं नैमिषं मुनिपूजितम् ॥ ७.१,३.५७

अनेकयक्षगंधर्वविद्याधरसमाकुलम् ॥ ७.१,३.५७

अष्टादश समुद्रस्य द्वीपानश्नन्पुरूरवाः ॥ ७.१,३.५८

विलासवशमुर्वश्या यातो दैवेन चोदितः ॥ ७.१,३.५८

अक्रमेण हरन्मोहाद्यज्ञवाटं हिरण्मयम् ॥ ७.१,३.५९

मुनिभिर्यत्र संक्रुद्धैः कुशवज्रैर्निपातितः ॥ ७.१,३.५९

विश्वं सिसृक्षमाणा वै यत्र विश्वसृजः पुरा ॥ ७.१,३.६०

सत्रमारेभिरे दिव्यं ब्रह्मज्ञा गार्हपत्यगाः ॥ ७.१,३.६०

ऋषिभिर्यत्र विद्वद्भिः शब्दार्थन्यायकोविदैः ॥ ७.१,३.६१

शक्तिप्रज्ञाक्रियायोगैर्विधिरासीदनुष्ठितः ॥ ७.१,३.६१

यत्र वेदविदो नित्यं वेदवादबहिष्कृतान् ॥ ७.१,३.६२

वादजल्पबलैर्घ्नंति वचोभिरतिवादिनः ॥ ७.१,३.६२

स्फटिकमयमहीभृत्पादजाभ्यश्शिलाभ्यः प्रसरदमृतकल्पस्स्वच्छपानीयरम्यम् ॥ ७.१,३.६३

अतिरसफलवृक्षप्रायमव्यालसत्त्वं तपस उचितमासीन्नैमिषं तन्मुनीनाम् ॥ ७.१,३.६३

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे नैमिषोपाख्यानं नाम तृतीयो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः ०४

https://sa.wikisource.org/s/hyh



सूत उवाच

तस्मिन्देशे महाभागा मुनयश्शंसितव्रताः ॥ ७.१,४.१

अर्चयंतो महादेवं सत्रमारेभिरे तदा ॥ ७.१,४.१

तच्च सत्रं प्रववृते सर्वाश्चर्यं महर्षिणाम् १ ॥ ७.१,४.२

विश्वं सिसृक्षमाणानां पुरा विश्वसृजामिव ॥ ७.१,४.२

अथ काले गते सत्रे समाप्ते भूरिदक्षिणे ॥ ७.१,४.३

पितामहनियोगेन वायुस्तत्रागमत्स्वयम् ॥ ७.१,४.३

शिष्यस्स्वयंभुवो देवस्सर्वप्रत्यक्षदृग्वशी ॥ ७.१,४.४

आज्ञायां मरुतो यस्य संस्थितास्सप्तसप्तकाः ॥ ७.१,४.४

प्रेरयञ्छश्वदंगानि प्राणाद्याभिः स्ववृत्तिभिः ॥ ७.१,४.५

सर्वभूतशरीराणां कुरुते यश्च धारणम् ॥ ७.१,४.५

अणिमादिभिरष्टाभिरैश्वर्यैश्च समन्वितः ॥ ७.१,४.६

तिर्यक्कालादिभिर्मेध्यैर्भुवनानि बिभर्ति यः ॥ ७.१,४.६

आकाशयोनिर्द्विगुणः स्पर्शशब्दसमन्वयात् ॥ ७.१,४.७

तेजसां प्रकृतिश्चेति यमाहुस्तत्त्वचिंतकाः ॥ ७.१,४.७

तमाश्रमगतं दृष्ट्वा मुनयो दीर्घसत्रिणः ॥ ७.१,४.८

पितामहवचः स्मृत्वा प्रहर्षमतुलं ययुः ॥ ७.१,४.८

अभ्युत्थाय ततस्सर्वे प्रणम्यांबरसंभवम् ॥ ७.१,४.९

चामीकरमयं तस्मै विष्टरं समकल्पयन् ॥ ७.१,४.९

सोपि तत्र समासीनो मुनिभिस्सम्यगर्चितः ॥ ७.१,४.१०

प्रतिनंद्य च तान् सर्वान् पप्रच्छ कुशलं ततः ॥ ७.१,४.१०

वायुरुवाच

अत्र वः कुशलं विप्राः कच्चिद्वृत्ते महाक्रतौ ॥ ७.१,४.११

कच्चिद्यज्ञहनो दैत्या न बाधेरन्सुरद्विषः ॥ ७.१,४.११

प्रायश्चित्तं दुरिष्टं वा न कच्चित्समजायत ॥ ७.१,४.१२
स्तोत्रशस्त्रगृहैर्देवान् पित्ःन् पित्र्यैश्च कर्मभिः ॥ ७.१,४.१२
कच्चिदभ्यर्च्य युष्माभिर्विधिरासीत्स्वनुष्ठितः ॥ ७.१,४.१३
निवृत्ते च महासत्रे पश्चात्किं वश्चिकीर्षितम् ॥ ७.१,४.१३
इत्युक्ता मुनयः सर्वे वायुना शिवभाविना ॥ ७.१,४.१४
प्रहृष्टमनसः पूताः प्रत्यूचुर्विनयान्विताः ॥ ७.१,४.१४
मुनय ऊचुः
अद्य नः कुशलं सर्वमद्य साधु भवेत्तपः ॥ ७.१,४.१५
अस्मच्छ्रेयोभिवृद्ध्यर्थं भवानत्रागतो यतः ॥ ७.१,४.१५
शृणु चेदं पुरावृत्तं तमसाक्रांतमानसैः ॥ ७.१,४.१६
उपासितः पुरास्माभिर्विज्ञानार्थं प्रजापतिः ॥ ७.१,४.१६
सोप्यस्माननुगृह्याह शरण्यश्शरणागतान् ॥ ७.१,४.१७
सर्वस्मादधिको रुद्रो विप्राः परमकारणम् ॥ ७.१,४.१७
तमप्रतर्क्यं याथात्म्यं भक्तिमानेव पश्यति ॥ ७.१,४.१८
भक्तिश्चास्य प्रसादेन प्रसादादेव निर्वृतिः ॥ ७.१,४.१८
तस्मादस्य प्रसादार्थं नैमिषे सत्रयोगतः ॥ ७.१,४.१९
यजध्वं दीर्घसत्रेण रुद्रं परमकारणम् ॥ ७.१,४.१९
तत्प्रसादेन सत्रांते वायुस्तत्रागमिष्यति ॥ ७.१,४.२०
तन्मुखाज्ज्ञानलाभो वस्तत्र श्रेयो भविष्यति ॥ ७.१,४.२०
इत्यादिश्य वयं सर्वे प्रेषिता परमेष्ठिना ॥ ७.१,४.२१
अस्मिन्देशे महाभाग तवागमनकांक्षिणः ॥ ७.१,४.२१
दीर्घसत्रं समासीना दिव्यवर्षसहस्रकम् ॥ ७.१,४.२२
अतस्तवागमादन्यत्प्रार्थ्यं नो नास्ति किंचन ॥ ७.१,४.२२
इत्याकर्ण्य पुरावृत्तमृषीणां दीर्घसत्रिणाम् ॥ ७.१,४.२३
वायुः प्रीतमना भूत्वा तत्रासीन्मुनिसंवृतः ॥ ७.१,४.२३
ततस्तैर्मुनिभिः पृष्टस्तेषां भावविवृद्धये ॥ ७.१,४.२४
सर्गादि शार्वमैश्वर्यं समासाद वदद्विभुः ॥ ७.१,४.२४

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे वायुसमागमो नाम चतुर्थो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः ०५

https://sa.wikisource.org/s/hyi
< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | पूर्व भागः

सूत उवाच

तत्र पूर्वं महाभागा नैमिषारण्यवासिनः ॥ ७.१,५.१

प्रणिपत्य यथान्यायं पप्रच्छुः पवनं प्रभुम् ॥ ७.१,५.१

नैमिषीया ऊचुः

भवान् कथमनुप्राप्तो ज्ञानमीश्वरगोचरम् ॥ ७.१,५.२

कथं च शिवभावस्ते ब्रह्मणोऽव्यक्तजन्मनः ॥ ७.१,५.२

वायुरुवाच

एकोनविंशतिः कल्पो विज्ञेयः श्वेतलोहितः ॥ ७.१,५.३

तस्मिन्कल्पे चतुर्वक्त्रस्स्रष्टुकामोऽतपत्तपः ॥ ७.१,५.३

तपसा तेन तीव्रेण तुष्टस्तस्य पिता स्वयम् ॥ ७.१,५.४

दिव्यं कौमारमास्थाय रूपं रूपवतां वरः ॥ ७.१,५.४

श्वेतो नाम मुनिर्भूत्वा दिव्यां वाचमुदीरयन् ॥ ७.१,५.५

दर्शनं प्रददौ तस्मै देवदेवो महेश्वरः ॥ ७.१,५.५

तं दृष्ट्वा पितरं ब्रह्मा ब्रह्मणोऽधिपतिं पतिम् ॥ ७.१,५.६

प्रणम्य परमज्ञानं गायत्र्या सह लब्धवान् ॥ ७.१,५.६

ततस्स लब्धविज्ञानो विश्वकर्मा चतुर्मुखः ॥ ७.१,५.७

असृजत्सर्वभूतानि स्थावराणि चराणि च ॥ ७.१,५.७

यतश्श्रुत्वामृतं लब्धं ब्रह्मणा परमेश्वरात् ॥ ७.१,५.८

ततस्तद्वदनादेव मया लब्धं तपोबलात् ॥ ७.१,५.८

मुनय ऊचुः

किं तज्ज्ञानं त्वया लब्धं तथ्यात्तथ्यंतरं शुभम् ॥ ७.१,५.९

यत्र कृत्वा परां निष्ठां पुरुषस्सुखमृच्छति ॥ ७.१,५.९

वयुरुवाच

पशुपाशपतिज्ञानं यल्लब्धं तु मया पुरा ॥ ७.१,५.१०

तत्र निष्ठा परा कार्या पुरुषेण सुखार्थिना ॥ ७.१,५.१०

अज्ञानप्रभवं दुःखं ज्ञानेनैव निवर्तते ॥ ७.१,५.११

ज्ञानं वस्तुपरिच्छेदो वस्तु च द्विविधं स्मृतम् ॥ ७.१,५.११

अजडं च जडं चैव नियंतृ च तयोरपि ॥ ७.१,५.१२

पशुः पाशः पतिश्चेति कथ्यते तत्त्रयं क्रमात् ॥ ७.१,५.१२

अक्षरं च क्षरं चैव क्षराक्षरपरं तथा ॥ ७.१,५.१३

तदेतत्त्रितयं भूम्ना कथ्यते तत्त्ववेदिभिः ॥ ७.१,५.१३

अक्षरं पशुरित्युक्तः क्षरं पाश उदाहृतः ॥ ७.१,५.१४

क्षराक्षरपरं यत्तत्पतिरित्यभिधीयते ॥ ७.१,५.१४

मुनय ऊचुः

किं तदक्षरमित्युक्तं किं च क्षरमुदाहृतम् ॥ ७.१,५.१५

तयोश्च परमं किं वा तदेतद्ब्रूहि मारुत ॥ ७.१,५.१५

वायुरुवाच

प्रकृतिः क्षरमित्युक्तं पुरुषो ऽक्षर उच्यते ॥ ७.१,५.१६

ताविमौ प्रेरयत्यन्यस्स परा परमेश्वरः ॥ ७.१,५.१६

मुनय ऊचुः

कैषा प्रकृतिरित्युक्ता क एष पुरुषो मतः ॥ ७.१,५.१७

अनयोः केन सम्बन्धः कोयं प्रेरक ईश्वरः ॥ ७.१,५.१७

वायुरुवाच

माया प्रकृतिरुद्दिष्टा पुरुषो मायया वृतः ॥ ७.१,५.१८

संबन्धो मूलकर्मभ्यां शिवः प्रेरक ईश्वरः ॥ ७.१,५.१८

मुनय ऊचुः

केयं माया समा ख्याता किंरूपो मायया वृतः ॥ ७.१,५.१९

मूलं कीदृक्कुतो वास्य किं शिवत्वं कुतश्शिवः ॥ ७.१,५.१९

वायुरुवाच

माया माहेश्वरी शक्तिश्चिद्रूपो मायया वृतः ॥ ७.१,५.२०

मलश्चिच्छादको नैजो विशुद्धिश्शिवता स्वतः ॥ ७.१,५.२०

मुनय ऊचुः

आवृणोति कथं माया व्यापिनं केन हेतुना ॥ ७.१,५.२१
किमर्थं चावृतिः पुंसः केन वा विनिवर्तते ॥ ७.१,५.२१
वायुरुवाच
आवृतिर्व्यपिनो ऽपि स्याद्व्यापि यस्मात्कलाद्यपि ॥ ७.१,५.२२
हेतुः कर्मैव भोगार्थं निवर्तेत मलक्षयात् ॥ ७.१,५.२२
मुनय ऊचुः
कलादि कथ्यते किं तत्कर्म वा किमुदाहृतम् ॥ ७.१,५.२३
तत्किमादि किमन्तं वा किं फलं वा किमाश्रयम् ॥ ७.१,५.२३
कस्य भोगेन किं भोग्यं किं वा तद्भोगसाधनम् ॥ ७.१,५.२४
मलक्षयस्य को हेतुः कीदृक्क्षीणमलः पुमान् ॥ ७.१,५.२४
वायुरुवाच
कला विद्या च रागश्च कालो नियतिरेव च ॥ ७.१,५.२५
कलादयस्समाख्याता यो भोक्ता पुरुषो भवेत् ॥ ७.१,५.२५
पुण्यपापात्मकं कर्म सुखदुःखफलं तु यत् ॥ ७.१,५.२६
अनादिमलभोगान्तमज्ञानात्मसमाश्रयम् ॥ ७.१,५.२६
भोगः कर्मविनाशाय भोगमव्यक्तमुच्यते ॥ ७.१,५.२७
बाह्यांतःकरणद्वारं शरीरं भोगसाधनम् ॥ ७.१,५.२७
भावातिशयलब्धेन प्रसादेन मलक्षयः ॥ ७.१,५.२८
क्षीणे चात्ममले तस्मिन् पुमाञ्छिवसमो भवेत् ॥ ७.१,५.२८
मुनय ऊचुः
कलादिपञ्चतत्त्वानां किं कर्म पृथगुच्यते ॥ ७.१,५.२९
भोक्तेति पुरुषश्चेति येनात्मा व्यपदिश्यते ॥ ७.१,५.२९
किमात्मकं तदव्यक्तं केनाकारेण भुज्यते ॥ ७.१,५.३०
किं तस्य शरणं भुक्तौ शरीरं च किमुच्यते ॥ ७.१,५.३०
वायुरुवाच
दिक्क्रियाव्यंजका विद्या कालो रागः प्रवर्तकः ॥ ७.१,५.३१
कालो ऽवच्छेदकस्तत्र नियतिस्तु नियामिका ॥ ७.१,५.३१
अव्यक्तं कारणं यत्तत्त्रिगुणं प्रभवाप्ययम् ॥ ७.१,५.३२

प्रधानं प्रकृतिश्चेति यदाहुस्तत्त्वचिंतकाः ॥ ७.१,५.३२

कलातस्तदभिव्यक्तमनभिव्यक्तलक्षणम् ॥ ७.१,५.३३

सुखदुःखविमोहात्मा भुज्यते गुणवांस्त्रिधा ॥ ७.१,५.३३

सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ॥ ७.१,५.३४

प्रकृतौ सूक्ष्मरूपेण तिले तैलमिव स्थिताः ॥ ७.१,५.३४

सुखं च सुखहेतुश्च समासात्सात्त्विकं स्मृतम् ॥ ७.१,५.३५

राजसं तद्विपर्यासात्स्तंभमोहौ तु तामसौ ॥ ७.१,५.३५

सात्त्विक्यूर्ध्वगतिः प्रोक्ता तामसी स्यादधोगतिः ॥ ७.१,५.३६

मध्यमा तु गतिर्या सा राजसी परिपठ्यते ॥ ७.१,५.३६

तन्मात्रापञ्चकं चैव भूतपञ्चकमेव च ॥ ७.१,५.३७

ज्ञानेंद्रियाणि पञ्चैक्यं पञ्च कर्मेन्द्रियाणि च ॥ ७.१,५.३७

प्रधानबुद्ध्यहंकारमनांसि च चतुष्टयम् ॥ ७.१,५.३८

समासादेवमव्यक्तं सविकारमुदाहृतम् ॥ ७.१,५.३८

तत्कारणदशापन्नमव्यक्तमिति कथ्यते ॥ ७.१,५.३९

व्यक्तं कार्यदशापन्नं शरीरादिघटादिवत् ॥ ७.१,५.३९

यथा घटादिकं कार्यं मृदादेर्नातिभिद्यते ॥ ७.१,५.४०

शरीरादि तथा व्यक्तमव्यक्तान्नातिभिद्यते ॥ ७.१,५.४०

तस्मादव्यक्तमेवैक्यकारणं करणानि च ॥ ७.१,५.४१

शरीरं च तदाधारं तद्भोग्यं चापि नेतरत् ॥ ७.१,५.४१

मुनय ऊचुः

बुद्धीन्द्रियशरीरेभ्यो व्यतिरेकस्य कस्यचित् ॥ ७.१,५.४२

आत्मशब्दाभिधेयस्य वस्तुतो ऽपि कुतः स्थितिः ॥ ७.१,५.४२

वायुरुवाच

बुद्धीन्द्रियशरीरेभ्यो व्यतिरेको विभोर्ध्रुवम् ॥ ७.१,५.४३

अस्त्येव कश्चिदात्मेति हेतुस्तत्र सुदुर्गमः ॥ ७.१,५.४३

बुद्धीन्द्रियशरीराणां नात्मता सद्भिरिष्यते ॥ ७.१,५.४४

स्मृतेरनियतज्ञानादयावद्देहवेदनात् ॥ ७.१,५.४४

अतः स्मर्तानुभूतानामशेषज्ञेयगोचरः ॥ ७.१,५.४५

अन्तर्यामीति वेदेषु वेदांतेषु च गीयते ॥ ७.१,५.४५

सर्वं तत्र स सर्वत्र व्याप्य तिष्ठति शाश्वतः ॥ ७.१,५.४६

तथापि क्वापि केनापि व्यक्तमेष न दृश्यते ॥ ७.१,५.४६

नैवायं चक्षुषा ग्राह्यो नापरैरिन्द्रियैरपि ॥ ७.१,५.४७

मनसैव प्रदीप्तेन महानात्मावसीयते १ ॥ ७.१,५.४७

न च स्त्री न पुमानेष नैव चापि नपुंसकः ॥ ७.१,५.४८

नैवोर्ध्वं नापि तिर्यक्नाधस्तान्न कुतश्चन ॥ ७.१,५.४८

अशरीरं शरीरेषु चलेषु स्थाणुमव्ययम् ॥ ७.१,५.४९

सदा पश्यति तं धीरो नरः प्रत्यवमर्शनात् ॥ ७.१,५.४९

किमत्र बहुनोक्तेन पुरुषो देहतः पृथक् ॥ ७.१,५.५०

अपृथग्ये तु पश्यंति ह्यसम्यक्तेषु दर्शनम् ॥ ७.१,५.५०

यच्छरीरमिदं प्रोक्तं पुरुषस्य ततः परम् ॥ ७.१,५.५१

अशुद्धमवशं दुःखमध्रुवं न च विद्यते ॥ ७.१,५.५१

विपदां वीजभूतेन पुरुषस्तेन संयुतः ॥ ७.१,५.५२

सुखी दुःखी च मूढश्च भवति स्वेन कर्मणा ॥ ७.१,५.५२

अद्भिराप्लवितं क्षेत्रं जनयत्यंकुरं यथा ॥ ७.१,५.५३

आज्ञानात्प्लावितं कर्म देहं जनयते तथा ॥ ७.१,५.५३

अत्यंतमसुखावासास्स्मृताश्चैकांतमृत्यवः ॥ ७.१,५.५४

अनागता अतीताश्च तनवो ऽस्य सहस्रशः ॥ ७.१,५.५४

आगत्यागत्य शीर्णेषु शरीरेषु शरीरिणः ॥ ७.१,५.५५

अत्यंतवसतिः क्वापि न केनापि च लभ्यते ॥ ७.१,५.५५

छादितश्च वियुक्तश्च शरीरैरेषु लक्ष्यते ॥ ७.१,५.५६

चंद्रबिंबवदाकाशे तरलैरभ्रसंचयैः ॥ ७.१,५.५६

अनेकदेहभेदेन भिन्ना वृत्तिरिहात्मनः ॥ ७.१,५.५७

अष्टापदपरिक्षेपे ह्यक्षमुद्रेव लक्ष्यते ॥ ७.१,५.५७

नैवास्य भविता कश्चिन्नासौ भवति कस्यचित् ॥ ७.१,५.५८

पथि संगम एवायं दारैः पुत्रैश्च बंधुभिः ॥ ७.१,५.५८

यथा काष्ठं च काष्ठं च समेयातां महोदधौ ॥ ७.१,५.५९

समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ ७.१,५.५९

स पश्यति शरीरं तच्छरीरं तन्न पश्यति ॥ ७.१,५.६०

तौ पश्यति परः कश्चित्तावुभौ तं न पश्यतः ॥ ७.१,५.६०

ब्रह्माद्याः स्थावरांतश्च पशवः परिकीर्तिताः ॥ ७.१,५.६१

पशूनामेव सर्वेषां प्रोक्तमेतन्निदर्शनम् ॥ ७.१,५.६१

स एष बध्यते पाशैः सुखदुःखाशनः पशुः ॥ ७.१,५.६२

लीलासाधनभूतो य ईश्वरस्येति सूरयः ॥ ७.१,५.६२

अज्ञो जंतुरनीशो ऽयमात्मनस्सुखदुःखयोः ॥ ७.१,५.६३

ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ॥ ७.१,५.६३

सूत उवाच

इत्याकर्ण्यानिलवचो मुनयः प्रीतमानसाः ॥ ७.१,५.६४

प्रोचुः प्रणम्य तं वायुं शैवागमविचक्षणम् ॥ ७.१,५.६४

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे शिवतत्त्वज्ञानवर्णनं नाम पञ्चमो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः ०६

https://sa.wikisource.org/s/hyj



मुनय ऊचुः

यो ऽयं पशुरिति प्रोक्तो यश्च पाश उदाहृतः ॥ ७.१,६.१

अभ्यां विलक्षणः कश्चित्कोयमस्ति तयोः पतिः ॥ ७.१,६.१

वायुरुवाच

अस्ति कश्चिदपर्यंतरमणीयगुणाश्रयः ॥ ७.१,६.२

पतिर्विश्वस्य निर्माता पशुपाशविमोचनः ॥ ७.१,६.२

अभावे तस्य विश्वस्य सृष्टिरेषा कथं भवेत् ॥ ७.१,६.३

अचेतनत्वादज्ञानादनयोः पशुपाशयोः ॥ ७.१,६.३

प्रधानपरमाण्वादि यावत्किंचिदचेतनम् ॥ ७.१,६.४

तत्कर्तृकं स्वयं दृष्टं बुद्धिमत्कारणं विना ॥ ७.१,६.४

जगच्च कर्तृसापेक्षं कार्यं सावयवं यतः ॥ ७.१,६.५

तस्मात्कार्यस्य कर्तृत्वं पत्युर्न पशुपाशयोः ॥ ७.१,६.५

पशोरपि च कर्तृत्वं पत्युः प्रेरणपूर्वकम् ॥ ७.१,६.६

अयथाकरणज्ञानमंधस्य गमनं यथा ॥ ७.१,६.६

आत्मानं च पृथङ्मत्वा प्रेरितारं ततः पृथक् ॥ ७.१,६.७

असौ जुष्टस्ततस्तेन ह्यमृतत्वाय कल्पते ॥ ७.१,६.७

पशोः पाशस्य पत्युश्च तत्त्वतो ऽस्ति पदं परम् ॥ ७.१,६.८

ब्रह्मवित्तद्विदित्वैव योनिमुक्तो भविष्यति ॥ ७.१,६.८

संयुक्तमेतद्द्वितयं क्षरमक्षरमेव च ॥ ७.१,६.९

व्यक्ताव्यक्तं बिभर्तीशो विश्वं विश्वविमोचकः ॥ ७.१,६.९

भोक्ता भोग्यं प्रेरयिता मंतव्यं त्रिविधं स्मृतम् ॥ ७.१,६.१०

नातः परं विजानद्भिर्वेदितव्यं हि किंचनः ॥ ७.१,६.१०

तिलेषु वा यथा तैलं दध्नि वा सर्पिरर्पितम् ॥ ७.१,६.११

यथापः स्रोतसि व्याप्ता यथारण्यां हुताशनः ॥ ७.१,६.११

एवमेव महात्मानमात्मन्यात्मविलक्षणम् ॥ ७.१,६.१२
सत्येन तपसा चैव नित्ययुक्तो ऽनुपश्यति ॥ ७.१,६.१२
य एको जालवानीश ईशानीभिस्स्वशक्तिभिः ॥ ७.१,६.१३
सर्वांल्लोकानिमान् कृत्वा एक एव स ईशते १ ॥ ७.१,६.१३
एक एव तदा रुद्रो न द्वितीयो ऽस्ति कश्चन ॥ ७.१,६.१४
संसृज्य विश्वभुवनं गोप्ता ते संचुकोच यः ॥ ७.१,६.१४
विश्वतश्चक्षुरेवायमुतायं विश्वतोमुखः ॥ ७.१,६.१५
तथैव विश्वतोबाहुविश्वतः पादसंयुतः ॥ ७.१,६.१५
द्यावाभूमी च जनयन् देव एको महेश्वरः ॥ ७.१,६.१६
स एव सर्वदेवानां प्रभवश्चोद्भवस्तथा ॥ ७.१,६.१६
हिरण्यगर्भं देवानां प्रथमं जनयेदयम् ॥ ७.१,६.१७
विश्वस्मादधिको रुद्रो महर्षिरिति हि श्रुतिः ॥ ७.१,६.१७
वेदाहमेतं पुरुषं महांतममृतं ध्रुवम् ॥ ७.१,६.१८
आदित्यवर्णं तमसः परस्तात्संस्थितं प्रभुम् ॥ ७.१,६.१८
अस्मान्नास्ति परं किंचिदपरं परमात्मनः ॥ ७.१,६.१९
नाणीयो ऽस्ति न च ज्यायस्तेन पूर्णमिदं जगत् ॥ ७.१,६.१९
सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ॥ ७.१,६.२०
सर्वव्यापी च भगवांस्तस्मात्सर्वगतश्शिवः ॥ ७.१,६.२०
सर्वतः पाणिपादो ऽयं सर्वतो ऽक्षिशिरोमुखः ॥ ७.१,६.२१
सर्वतः श्रुतिमांल्लोके सर्वमावृत्य तिष्ठति ॥ ७.१,६.२१
सर्वेन्द्रियगुणाभासस्सर्वेन्द्रियविवर्जितः ॥ ७.१,६.२२
सर्वस्य प्रभुरीशानः सर्वस्य शरणं सुहृत् ॥ ७.१,६.२२
अचक्षुरपि यः पश्यत्यकर्णो ऽपि शृणोति यः ॥ ७.१,६.२३
सर्वं वेत्ति न वेत्तास्य तमाहुः पुरुषं परम् ॥ ७.१,६.२३
अणोरणीयान्महतो महीयानयमव्ययः ॥ ७.१,६.२४
गुहायां निहितश्चापि जंतोरस्य महेश्वरः ॥ ७.१,६.२४
तमक्रतुं क्रतुप्रायं महिमातिशयान्वितम् ॥ ७.१,६.२५
धातुः प्रसादादीशानं वीतशोकः प्रपश्यति ॥ ७.१,६.२५

वेदाहमेनमजरं पुराणं सर्वगं विभुम् ॥ ७.१,६.२६
निरोधं जन्मनो यस्य वदंति ब्रह्मवादिनः ॥ ७.१,६.२६
एको ऽपि त्रीनिमांल्लोकान् बहुधा शक्तियोगतः ॥ ७.१,६.२७
विदधाति विचेत्यंते १ विश्वमादौ महेश्वरः ॥ ७.१,६.२७
विश्वधात्रीत्यजाख्या च शैवी चित्रा कृतिः परा ॥ ७.१,६.२८
तामजां लोहितां शुक्लां कृष्णामेकां त्वजः प्रजाम् ॥ ७.१,६.२८
जनित्रीमनुशेते ऽन्योजुषमाणस्स्वरूपिणीम् ॥ ७.१,६.२९
तामेवाजामजो ऽन्यस्तु भक्तभोगा जहाति च ॥ ७.१,६.२९
द्वौ सुपर्णौ च सयुजौ समानं वृक्षमास्थितौ ॥ ७.१,६.३०
एको ऽत्ति पिप्पलं स्वादु परो ऽनश्नन् प्रपश्यति ॥ ७.१,६.३०
वृक्षेस्मिन् पुरुषो मग्नो गुह्यमानश्च शोचति ॥ ७.१,६.३१
जुष्टमन्यं यदा पश्येदीशं परमकारणम् ॥ ७.१,६.३१
तदास्य महिमानं च वीतशोकस्सुखी भवेत् ॥ ७.१,६.३२
छंदांसि यज्ञाः ऋतवो यद्भूतं भव्यमेव च ॥ ७.१,६.३२
मायी विश्वं सृजत्यस्मिन्निविष्टो मायया परः ॥ ७.१,६.३३
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥ ७.१,६.३३
तस्यास्त्ववयवैरेव व्याप्तं सर्वमिदं जगत् ॥ ७.१,६.३४
सूक्ष्मातिसूक्ष्ममीशानं कललस्यापि मध्यतः ॥ ७.१,६.३४
स्रष्टारमपि विश्वस्य वेष्टितारं च तस्य तु ॥ ७.१,६.३५
शिवमेवेश्वरं ज्ञात्वा शांतिमत्यंतमृच्छति ॥ ७.१,६.३५
स एव कालो गोप्ता च विश्वस्याधिपतिः प्रभुः ॥ ७.१,६.३६
तं विश्वाधिपतिं ज्ञात्वा मृत्युपाशात्प्रमुच्यते ॥ ७.१,६.३६
घृतात्परं मंडमिव सूक्ष्मं ज्ञात्वा स्थितं प्रभुम् ॥ ७.१,६.३७
सर्वभूतेषु गूढं च सर्वपापैः प्रमुच्यते ॥ ७.१,६.३७
एष एव परो देवो विश्वकर्मा महेश्वरः ॥ ७.१,६.३८
हृदये संनिविष्टं तं ज्ञात्वैवामृतमश्नुते ॥ ७.१,६.३८
यदा समस्तं न दिवा न रात्रिर्न सदप्यसत् ॥ ७.१,६.३९
केवलश्शिव एवैको यतः प्रज्ञा पुरातनी ॥ ७.१,६.३९

नैनमूर्ध्वं न तिर्यक्च न मध्यं पर्यजिग्रहत् ॥ ७.१,६.४०
न तस्य प्रतिमा चास्ति यस्य नाम महद्यशः ॥ ७.१,६.४०
अजातमिममेवैके बुद्धा जन्मनि भीरवः ॥ ७.१,६.४१
रुद्रस्यास्य प्रपद्यंते रक्षार्थं दक्षिणं सुखम् ॥ ७.१,६.४१
द्वे अक्षरे ब्रह्मपरे त्वनंते समुदाहृते ॥ ७.१,६.४२
विद्याविद्ये समाख्याते निहिते यत्र गूढवत् ॥ ७.१,६.४२
क्षरं त्वविद्या ह्यमृतं विद्येति परिगीयते ॥ ७.१,६.४३
ते उभे ईशते यस्तु सो ऽन्यः खलु महेश्वरः ॥ ७.१,६.४३
एकैकं बहुधा जालं विकुर्वन्नेकवच्च यः ॥ ७.१,६.४४
सर्वाधिपत्यं कुरुते सृष्ट्वा सर्वान् प्रतापवान् ॥ ७.१,६.४४
दिश ऊर्ध्वमधस्तिर्यक्भासयन् भ्राजते स्वयम् ॥ ७.१,६.४५
यो निःस्वभावादप्येको वरेण्यस्त्वधितिष्ठति ॥ ७.१,६.४५
स्वभाववाचकान् सर्वान् वाच्यांश्च परिणामयन् ॥ ७.१,६.४६
गुणांश्च भोग्यभोक्तृत्वे तद्विश्वमधितिष्ठति ॥ ७.१,६.४६
ते वै गुह्योपणिषदि गूढं ब्रह्म परात्परम् ॥ ७.१,६.४७
ब्रह्मयोनिं जगत्पूर्वं विदुर्देवा महर्षयः ॥ ७.१,६.४७
भावग्राह्यमनीहाख्यं भावाभावकरं शिवम् ॥ ७.१,६.४८
कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम् ॥ ७.१,६.४८
स्वभावमेके मन्यंते कालमेके विमोहिताः ॥ ७.१,६.४९
देवस्य महिमा ह्येष येनेदं भ्राम्यते जगत् ॥ ७.१,६.४९
येनेदमावृतं नित्यं कालकालात्मना यतः ॥ ७.१,६.५०
तेनेरितमिदं कर्म भूतैः सह विवर्तते ॥ ७.१,६.५०
तत्कर्म भूयशः कृत्वा विनिवृत्य च भूयशः ॥ ७.१,६.५१
तत्त्वस्य सह तत्त्वेन योगं चापि समेत्य वै ॥ ७.१,६.५१
अष्टाभिश्च त्रिभिश्चैवं द्वाभ्यां चैकेन वा पुनः ॥ ७.१,६.५२
कालेनात्मगुणैश्चापि कृत्स्नमेव जगत्स्वयम् ॥ ७.१,६.५२
गुणैरारभ्य कर्माणि स्वभावादीनि योजयेत् ॥ ७.१,६.५३
तेषामभावे नाशः स्यात्कृतस्यापि च कर्मणः ॥ ७.१,६.५३

कर्मक्षये पुनश्चान्यत्ततो याति स तत्त्वतः ॥ ७.१,६.५४

स एवादिस्स्वयं योगनिमित्तं भोक्तृभोगयोः ॥ ७.१,६.५४

परस्त्रिकालादकलस्स एव परमेश्वरः ॥ ७.१,६.५५

सर्ववित्त्रिगुणाधीशो ब्रह्मसाक्षात्परात्परः ॥ ७.१,६.५५

तं विश्वरूपमभवं भवमीड्यं प्रजापतिम् ॥ ७.१,६.५६

देवदेवं जगत्पूज्यं स्वचित्तस्थमुपास्महे ॥ ७.१,६.५६

कालादिभिः परो यस्मात्प्रपञ्चः परिवर्तते ॥ ७.१,६.५७

धर्मावहं पापनुदं भोगेशं विश्वधाम च ॥ ७.१,६.५७

तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ॥ ७.१,६.५८

पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेश्वरेश्वरम् ॥ ७.१,६.५८

न तस्य विद्येत कार्यं कारणं च न विद्यते ॥ ७.१,६.५९

न तत्समो ऽधिकश्चापि क्वचिज्जगति दृश्यते ॥ ७.१,६.५९

परास्य विविधा शक्तिः श्रुतौ स्वाभाविकी श्रुता ॥ ७.१,६.६०

ज्ञानं बलं क्रिया चैव याभ्यो विश्वमिदं कृतम् ॥ ७.१,६.६०

तस्यास्ति पतिः कश्चिन्नैव लिंगं न चेशिता ॥ ७.१,६.६१

कारणं कारणानां च स तेषामधिपाधिपः ॥ ७.१,६.६१

न चास्य जनिता कश्चिन्न च जन्म कुतश्चन ॥ ७.१,६.६२

न जन्महेतवस्तद्वन्मलमायादिसंज्ञकाः ॥ ७.१,६.६२

स एकस्सर्वभूतेषु गूढो व्याप्तश्च विश्वतः ॥ ७.१,६.६३

सर्वभूतांतरात्मा च धर्माध्यक्षस्स कथ्यते ॥ ७.१,६.६३

सर्वभूताधिवासश्च साक्षी चेता च निर्गुणः ॥ ७.१,६.६४

एको वशी निष्क्रियाणां बहूनां विवशात्मनाम् ॥ ७.१,६.६४

नित्यानामप्यसौ नित्यश्चेतनानां च चेतनः ॥ ७.१,६.६५

एको बहूनां चाकामः कामानीशः प्रयच्छति ॥ ७.१,६.६५

सांख्ययोगाधिगम्यं यत्कारणं जगतां पतिम् ॥ ७.१,६.६६

ज्ञात्वा देवं पशुः पाशैस्सर्वैरेव विमुच्यते ॥ ७.१,६.६६

विश्वकृद्विश्ववित्स्वात्मयोनिज्ञः कालकृद्गुणी ॥ ७.१,६.६७

प्रधानः क्षेत्रज्ञपतिर्गुणेशः पाशमोचकः ॥ ७.१,६.६७

ब्रह्माणं विदधे पूर्वं वेदांश्चोपादिशत्स्वयम् ॥ ७.१,६.६८

यो देवस्तमहं बुद्ध्वा स्वात्मबुद्धिप्रसादतः ॥ ७.१,६.६८

मुमुक्षुरस्मात्संसारात्प्रपद्ये शरणं शिवम् ॥ ७.१,६.६९

निष्फलं निष्क्रियं शांतं निरवद्यं निरंजनम् ॥ ७.१,६.६९

अमृतस्य परं सेतुं दग्धेंधनमिवानिलम् ॥ ७.१,६.७०

यदा चर्मवदाकाशं वेष्टयिष्यंति मानवाः ॥ ७.१,६.७०

तदा शिवमविज्ञाय दुःखस्यांतो भविष्यति ॥ ७.१,६.७१

तपःप्रभावाद्देवस्य प्रसादाच्च महर्षयः ॥ ७.१,६.७२

अत्याश्रमोचितज्ञानं पवित्रं पापनाशनम् ॥ ७.१,६.७२

वेदांते परमं गुह्यं पुराकल्पप्रचोदितम् ॥ ७.१,६.७३

ब्रह्मणो वदनाल्लब्धं मयेदं भाग्यगौरवात् ॥ ७.१,६.७३

नाप्रशांताय दातव्यमेतज्ज्ञानमनुत्तमम् ॥ ७.१,६.७४

न पुत्रायाशुवृत्ताय नाशिष्याय च सर्वथा ॥ ७.१,६.७४

यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ ॥ ७.१,६.७५

तस्यैते कथिताह्यर्थाः प्रकाशंते महात्मनः ॥ ७.१,६.७५

अतश्च संक्षेपमिदं शृणुध्वं शिवः परस्तात्प्रकृतेश्च पुंसः ॥ ७.१,६.७६

स सर्गकाले च करोति सर्वं संहारकाले पुनराददाति ॥ ७.१,६.७६

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे शिवतत्त्ववर्णनं नाम षष्ठो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः ०७

https://sa.wikisource.org/s/hyk
< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | पूर्व भागः

मुनय ऊचुः

कालादुत्पद्यते सर्वं कालदेव विपद्यते ॥ ७.१,७.१

न कालनिरपेक्षं हि क्वचित्किंचन विद्यते ॥ ७.१,७.१

यदास्यांतर्गतं विश्वं शश्वत्संसारमण्डलम् ॥ ७.१,७.२

सर्गसंहृतिमुद्राभ्यां चक्रवत्परिवर्तते ॥ ७.१,७.२

ब्रह्मा हरिश्च रुद्रश्च तथान्ये च सुरासुराः ॥ ७.१,७.३

यत्कृतां नियतिं प्राप्य प्रभवो नातिवर्तितुम् ॥ ७.१,७.३

भूतभव्यभविष्याद्यैर्विभज्य जरयन् प्रजाः ॥ ७.१,७.४

अतिप्रभुरिति स्वैरं वर्तते ऽतिभयंकरः ॥ ७.१,७.४

क एष भगवान् कालः कस्य वा वशवर्त्ययम् ॥ ७.१,७.५

क एवास्य वशे न स्यात्कथयैतद्विचक्षण ॥ ७.१,७.५

वायुरुवाच

कालकाष्ठानिमेषादिकलाकलितविग्रहम् ॥ ७.१,७.६

कालात्मेति समाख्यातं तेजो माहेश्वरं परम् ॥ ७.१,७.६

यदलंघ्यमशेषस्य स्थावरस्य चरस्य च ॥ ७.१,७.७

नियोगरूपमीशस्य बलं विश्वनियामकम् ॥ ७.१,७.७

तस्यांशांशमयी मुक्तिः कालात्मनि महात्मनि ॥ ७.१,७.८

ततो निष्क्रम्य संक्रांता विसृष्टाग्रेरिवायसी ॥ ७.१,७.८

तस्मात्कालवशे विश्वं न स विश्ववशे स्थितः ॥ ७.१,७.९

शिवस्य तु वशे कालो न कालस्य वशे शिवः ॥ ७.१,७.९

यतो ऽप्रतिहतं शार्वं तेजः काले प्रतिष्ठितम् ॥ ७.१,७.१०

महती तेन कालस्य मर्यादा हि दुरत्यया ॥ ७.१,७.१०

कालं प्रज्ञाविशेषेण को ऽतिवर्तितुमर्हति ॥ ७.१,७.११

कालेन तु कृतं कर्म न कश्चिदतिवर्तते ॥ ७.१,७.११

एकच्छत्रां महीं कृत्स्नां ये पराक्रम्य शासति ॥ ७.१,७.१२

ते ऽपि नैवातिवर्तंते कालवेलामिवाब्धयः ॥ ७.१,७.१२

ये निगृह्येंद्रियग्रामं जयंति सकलं जगत् ॥ ७.१,७.१३

न जयंत्यपि ते कालं कालो जयति तानपि ॥ ७.१,७.१३

आयुर्वेदविदो वैद्यास्त्वनुष्ठितरसायनाः ॥ ७.१,७.१४

न मृत्युमतिवर्तंते कालो हि दुरतिक्रमः ॥ ७.१,७.१४

श्रिया रूपेण शीलेन बलेन च कुलेन च ॥ ७.१,७.१५

अन्यच्चिंतयते जंतुः कालो ऽन्यत्कुरुते बलात् ॥ ७.१,७.१५

अप्रियैश्च प्रियैश्चैव ह्यचिंतितगमागमैः ॥ ७.१,७.१६

संयोजयति भूतानि वियोजयति चेश्वरः ॥ ७.१,७.१६

यदैव दुःखितः कश्चित्तदैव सुखितः परः ॥ ७.१,७.१७

दुर्विज्ञेयस्वभावस्य कालास्याहो विचित्रता ॥ ७.१,७.१७

यो युवा स भवेद्वृद्धो यो बलीयान्स दुर्बलः ॥ ७.१,७.१८

यः श्रीमान्सो ऽपि निःश्रीकः कालश्चित्रगतिर्द्विजा ॥ ७.१,७.१८

नाभिजात्यं न वै शीलं न बलं न च नैपुणम् ॥ ७.१,७.१९

भवेत्कार्याय पर्याप्तं कालश्च ह्यनिरोधकः ॥ ७.१,७.१९

ये सनाथाश्च दातारो गीतवाद्यैरुपस्थिताः ॥ ७.१,७.२०

ये चानाथाः परान्नादाः कालस्तेषु समक्रियः ॥ ७.१,७.२०

फलंत्यकाले न रसायनानि सम्यक्प्रयुक्तान्यपि चौषधानि ॥ ७.१,७.२१

तान्येव कालेन समाहृतानि सिद्धिं प्रयांत्याशु सुखं दिशंति ॥ ७.१,७.२१

नाकालतो ऽयं म्रियते जायते वा नाकालतः पुष्टिमग्र्यामुपैति ॥ ७.१,७.२२

नाकालतः सुखितं दुःखितं वा नाकालिकं वस्तु समस्ति किंचित् ॥ ७.१,७.२२

कालेन शीतः प्रतिवाति वातःकालेन वृष्टिर्जलदानुपैति ॥ ७.१,७.२३

कालेन चोष्मा प्रशमं प्रयाति कालेन सर्वं सफलत्वमेति ॥ ७.१,७.२३

कालश्च सर्वस्य भवस्य हेतुः कालेन सस्यानि भवंति नित्यम् ॥ ७.१,७.२४

कालेन सस्यानि लयं प्रयांति कालेन संजीवति जीवलोकः ॥ ७.१,७.२४

इत्थं कालात्मनस्तत्त्वं यो विजानाति तत्त्वतः ॥ ७.१,७.२५

कालात्मानमतिक्रम्य कालातीतं स पश्यति ॥ ७.१,७.२५

न यस्य कालो न च बंधमुक्ती न यः पुमान्न प्रकृतिर्न विश्वम् ॥ ७.१,७.२६

विचित्ररूपाय शिवाय तस्मै नमःपरस्मै परमेश्वराय ॥ ७.१,७.२६

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे कालमहिमवर्णनं नाम सप्तमो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः ०८

https://sa.wikisource.org/s/hyl

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | पूर्व भागः

ऋषय ऊचुः

केन मानेन कालेस्मिन्नायुस्संख्या प्रकल्प्यते ॥ ७.१,८.१

संख्यारूपस्य कालस्य कः पुनः परमो ऽवधिः ॥ ७.१,८.१

वायुरुवाच

आयुषो ऽत्र निमेषाख्यमाद्यमानं प्रचक्षते ॥ ७.१,८.२

संख्यारूपस्य कालस्य शांत्वतीतकलावधि ॥ ७.१,८.२

अक्षिपक्ष्मपरिक्षेपो निमेषः परिकल्पितः ॥ ७.१,८.३

तादृशानां निमेषाणां काष्ठा दश च पञ्च च ॥ ७.१,८.३

काष्ठांस्त्रिंशत्कला नाम कलांस्त्रिंशन्मुहूर्तकः ॥ ७.१,८.४

मुहूर्तानामपि त्रिंशदहोरात्रं प्रचक्षते ॥ ७.१,८.४

त्रिंशत्संख्यैरहोरात्रैर्मासः पक्षद्वयात्मकः ॥ ७.१,८.५

ज्ञेयं पित्र्यमहोरात्रं मासः कृष्णसितात्मकः ॥ ७.१,८.६

मासैस्तैरयनं षड्भिर्वर्षं द्वे चायनं मतम् ॥ ७.१,८.७

लौकिकेनैव मानेन अब्दो यो मानुषः स्मृतः ॥ ७.१,८.७

एतद्दिव्यमहोरात्रमिति शास्त्रस्य निश्चयः ॥ ७.१,८.८

दक्षिणं चायनं रात्रिस्तथोदगयनं दिनम् ॥ ७.१,८.८

मासस्त्रिंशदहोरात्रैर्दिव्यो मानुषवत्स्मृतः ॥ ७.१,८.९

संवत्सरो ऽपि देवानां मासैर्द्वादशभिस्तथा ॥ ७.१,८.९

त्रीणि वर्षशतान्येव षष्टिवर्षयुतान्यपि ॥ ७.१,८.१०

दिव्यस्संवत्सरो ज्ञेयो मानुषेण प्रकीर्तितः ॥ ७.१,८.१०

दिव्येनैव प्रमाणेन युगसंख्या प्रवर्तते ॥ ७.१,८.११

चत्वारि भारते वर्षे युगानि कवयो विदुः ॥ ७.१,८.११

पूर्वं कृतयुगं नाम ततस्त्रेता विधीयते ॥ ७.१,८.१२

द्वापरं च कलिश्चैव युगान्येतानि कृत्स्नशः ॥ ७.१,८.१२

चत्वारि तु सहस्राणि वर्षाणां तत्कृतं युगम् ॥ ७.१,८.१३
तस्य तावच्छतीसंध्या संध्यांशश्च तथाविधः ॥ ७.१,८.१३
इतरेषु ससंध्येषु ससंध्यांशेषु च त्रिषु ॥ ७.१,८.१४
एकापायेन वर्तंते सहस्राणि शतानि च ॥ ७.१,८.१४
एतद्द्वादशसाहस्रं साधिकं च चतुर्युगम् ॥ ७.१,८.१५
चतुर्युगसहस्रं यत्संकल्प इति कथ्यते ॥ ७.१,८.१५
चतुर्युगैकसप्तत्या मनोरंतरमुच्यते ॥ ७.१,८.१६
कल्पे चतुर्दशैकस्मिन्मनूनां परिवृत्तयः ॥ ७.१,८.१६
एतेन क्रमयोगेन कल्पमन्वंतराणि च ॥ ७.१,८.१७
सप्रजानि व्यतीतानि शतशो ऽथ सहस्रशः ॥ ७.१,८.१७
अज्ञेयत्वाच्च सर्वेषामसंख्येयतया पुनः ॥ ७.१,८.१८
शक्यो नैवानुपूर्व्याद्वै तेषां वक्तुं सुविस्तरः ॥ ७.१,८.१८
कल्पो नाम दिवा प्रोक्तो ब्रह्मणो ऽव्यक्तजन्मनः ॥ ७.१,८.१९
कल्पानां वै सहस्रं च ब्राह्मं वर्षमिहोच्यते ॥ ७.१,८.१९
वर्षाणामष्टसाहस्रं यच्च तद्ब्रह्मणो युगम् ॥ ७.१,८.२०
सवनं युगसाहस्रं ब्रह्मणः पद्मजन्मनः ॥ ७.१,८.२०
सवनानां सहस्रं च त्रिगुणं त्रिवृतं तथा ॥ ७.१,८.२१
कल्प्यते सकलः कालो ब्रह्मणः परमेष्ठिनः ॥ ७.१,८.२१
तस्य वै दिवसे यांति चतुर्दश पुरंदराः ॥ ७.१,८.२२
शतानि मासे चत्वारि विंशत्या सहितानि च ॥ ७.१,८.२२
अब्दे पञ्च सहस्राणि चत्वारिंशद्युतानि च ॥ ७.१,८.२३
चत्वारिंशत्सहस्राणि पञ्च लक्षाणि चायुषि ॥ ७.१,८.२३
ब्रह्मा विष्णोर्दिने चैको विष्णू रुद्रदिने तथा ॥ ७.१,८.२४
ईश्वरस्य दिने रुद्रस्सदाख्यस्य तथेश्वरः ॥ ७.१,८.२४
साक्षाच्छिवस्य तत्संख्यस्तथा सो ऽपि सदाशिवः ॥ ७.१,८.२५
चत्वारिंशत्सहस्राणि पञ्चलक्षाणि चायुषि ॥ ७.१,८.२५
तस्मिन्साक्षाच्छिवेनैष कालात्मा सम्प्रवर्तते ॥ ७.१,८.२६*१
यत्तत्सृष्टेस्समाख्यातं कालान्तरमिह द्विजाः ॥ ७.१,८.२६*१

एतत्कालान्तरं ज्ञेयमहर्वै पारमेश्वरम् ॥ ७.१,८.२६*२

रात्रिश्च तावती ज्ञेया परमेशस्य कृत्स्नशः ॥ ७.१,८.२६*२

अहस्तस्य तु या सृष्टी रात्रिश्च प्रलयः स्मृतः ॥ ७.१,८.२७

अहर्न विद्यते तस्य न रात्रिरिति धारयेत् ॥ ७.१,८.२७

एषोपचारः क्रियते लोकानां हितकाम्यया ॥ ७.१,८.२८

प्रजाः प्रजानां पतयो मूर्तयश्च सुरासुराः ॥ ७.१,८.२८

इन्द्रियाणीन्द्रियार्थाश्च महाभूतानि पञ्च च ॥ ७.१,८.२९

तन्मात्राण्यथ भूतादिर्बुद्धिश्च सह दैवतः ॥ ७.१,८.२९

अहस्तिष्ठंति सर्वाणि पारमेशस्य धीमतः ॥ ७.१,८.३०

अहरंते प्रलीयन्ते रात्र्यन्ते विश्वसंभवः ॥ ७.१,८.३०

यो विश्वात्मा कर्मकालस्वभावाद्यर्थे शक्तिर्यस्य नोल्लंघनीया ॥ ७.१,८.३१

यस्यैवाज्ञाधीनमेतत्समस्तं नमस्तस्मै महते शंकराय ॥ ७.१,८.३१

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वभागे कालप्रभावे त्रिदेवायुर्वर्णनं नामाष्टमो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः ०९

https://sa.wikisource.org/s/hym

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | पूर्व भागः

मुनय ऊचुः

कथं जगदिदं कृत्स्नं विधाय च निधाय च ॥ ७.१,९.१

आज्ञया परमां क्रीडां करोति परमेश्वरः ॥ ७.१,९.१

किं तत्प्रथमसंभूतं केनेदमखिलं ततम् ॥ ७.१,९.२

केना वा पुनरेवेदं ग्रस्यते पृथुकुक्षिणा ॥ ७.१,९.२

वायुरुवाच

शक्तिः प्रथमसम्भूता शांत्यतीतपदोत्तरा ॥ ७.१,९.३

ततो माया ततो ऽव्यक्तं शिवाच्छक्तिमतः प्रभोः ॥ ७.१,९.३

शान्त्यतीतपदं शक्तेस्ततः शान्तिपदक्रमात् ॥ ७.१,९.४

ततो विद्यापदं तस्मात्प्रतिष्ठापदसंभवः ॥ ७.१,९.४

निवृत्तिपदमुत्पन्नं प्रतिष्ठापदतः क्रमात् ॥ ७.१,९.५

एवमुक्ता समासेन सृष्टिरीश्वरचोदिता ॥ ७.१,९.५

आनुलोम्यात्तथैतेषां प्रतिलोम्येन संहृतिः ॥ ७.१,९.६

अस्मात्पञ्चपदोद्दिष्टात्परस्स्रष्टा समिष्यते ॥ ७.१,९.६

कलाभिः पञ्चभिर्व्याप्तं तस्माद्विश्वमिदं जगत् ॥ ७.१,९.७

अव्यक्तं कारणं यत्तदात्मना समनुष्ठितम् ॥ ७.१,९.७

महदादिविशेषांतं सृजतीत्यपि संमतम् ॥ ७.१,९.८

किं तु तत्रापि कर्तृत्वं नाव्यक्तस्य न चात्मनः ॥ ७.१,९.८

अचेतनत्वात्प्रकृतेरज्ञत्वात्पुरुषस्य च ॥ ७.१,९.९

प्रधानपरमाण्वादि यावत्किञ्चिदचेतनम् ॥ ७.१,९.९

तत्कर्तृकं स्वयं दृष्टं बुद्धिमत्कारणं विना ॥ ७.१,९.१०

जगच्च कर्तृसापेक्षं कार्यं सावयवं यतः ॥ ७.१,९.१०

तस्माच्छक्तस्स्वतन्त्रो यः सर्वशक्तिश्च सर्ववित् ॥ ७.१,९.११

अनादिनिधनश्चायं महदैश्वर्यसंयुतः ॥ ७.१,९.११

स एव जगतः कर्ता महादेवो महेश्वराः ॥ ७.१,९.१२

पाता हर्ता च सर्वस्य ततः पृथगनन्वयः ॥ ७.१,९.१२

परिणामः प्रधानस्य प्रवृत्तिः पुरुषस्य च ॥ ७.१,९.१३

सर्वं सत्यव्रतस्यैव शासनेन प्रवर्तते ॥ ७.१,९.१३

इतीयं शाश्वती निष्ठा सतां मनसि वर्तते ॥ ७.१,९.१४

न चैनं पक्षमाश्रित्य वर्तते स्वल्पचेतनः ॥ ७.१,९.१४

यावदादिसमारंभो यावद्यः प्रलयो महान् ॥ ७.१,९.१५

तावदप्येति सकलं ब्रह्मणः शारदां शतम् ॥ ७.१,९.१५

परमित्यायुषो नाम ब्रह्मणोऽव्यक्तजन्मनः ॥ ७.१,९.१६

तत्पराख्यं तदर्धं च परार्धमभिधीयते ॥ ७.१,९.१६

परार्धद्वयकालांते प्रलये समुपस्थिते ॥ ७.१,९.१७

अव्यक्तमात्मनः कार्यमादायात्मनि तिष्ठति ॥ ७.१,९.१७

आत्मन्यवस्थिते ऽव्यक्ते विकारे प्रतिसंहृते ॥ ७.१,९.१८

साधर्म्येणाधितिष्ठेते प्रधानपुरुषावुभौ ॥ ७.१,९.१८

तमः सत्त्वगुणावेतौ समत्वेन व्यवस्थितौ ॥ ७.१,९.१९

अनुद्रिक्तावनन्तौ तावोतप्रोतौ परस्परम् ॥ ७.१,९.१९

गुणसाम्ये तदा तस्मिन्नविभागे तमोदये ॥ ७.१,९.२०

शांतवातैकनीरे च न प्राज्ञायत किंचन ॥ ७.१,९.२०

अप्रज्ञाते जगत्यस्मिन्नेक एव महेश्वरः ॥ ७.१,९.२१

उपास्य रजनीं कृत्स्नां परां माहेश्वरीं ततः ॥ ७.१,९.२१

प्रभातायां तु शर्वर्यां प्रधानपुरुषावुभौ ॥ ७.१,९.२२

प्रविश्य क्षोभयामास मायायोगान्महेश्वरः ॥ ७.१,९.२२

ततः पुनरशेषाणां भूतानां प्रभवाप्ययात् ॥ ७.१,९.२३

अव्यक्तादभवत्सृष्टिराज्ञया परमेष्ठिनः ॥ ७.१,९.२३

विश्वोत्तरोत्तरविचित्रमनोरथस्य यस्यैकशक्तिशकले सकलस्समाप्तः ॥ ७.१,९.२४

आत्मानमध्वपतिमध्वविदो वदंति तस्मै नमः सकललोकविलक्षणाय ॥ ७.१,९.२४

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वभागे सृष्टिपालनप्रलयकर्तृत्ववर्णनं नाम नवमोऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः १०



वायुरुवाच

पुरुषाधिष्ठितात्पूर्वमव्यक्तादीश्वराज्ञया ॥ ७.१,१०.१

बुद्ध्यादयो विशेषांता विकाराश्चाभवन् क्रमात् ॥ ७.१,१०.१

ततस्तेभ्यो विकारेभ्यो रुद्रो विष्णुः पितामहः ॥ ७.१,१०.२

कारणत्वेन सर्वेषां त्रयो देवाः प्रजज्ञिरे ॥ ७.१,१०.२

सर्वतो भुवनव्याप्तिशक्तिमव्याहतां क्वचित् ॥ ७.१,१०.३

ज्ञानमप्रतिमं शश्वदैश्वर्यं चाणिमादिकम् ॥ ७.१,१०.३

सृष्टिस्थितिलयाख्येषु कर्मसु त्रिषु हेतुताम् ॥ ७.१,१०.४

प्रभुत्वेन सहैतेषां प्रसीदति महेश्वरः ॥ ७.१,१०.४

कल्पान्तरे पुनस्तेषामस्पर्धा बुद्धिमोहिनाम् ॥ ७.१,१०.५

सर्गरक्षालयाचारं प्रत्येकं प्रददौ च सः ॥ ७.१,१०.५

एते परस्परोत्पन्ना धारयन्ति परस्परम् ॥ ७.१,१०.६

परस्परेण वर्धंते परस्परमनुव्रताः ॥ ७.१,१०.६

क्वचिद्ब्रह्मा क्वचिद्विष्णुः क्वचिद्रुद्रः प्रशस्यते ॥ ७.१,१०.७

नानेन तेषामाधिक्यमैश्वर्यं चातिरिच्यते ॥ ७.१,१०.७

मूर्खा निंदंति तान्वाग्भिः संरंभाभिनिवेशिनः ॥ ७.१,१०.८

यातुधाना भवंत्येव पिशाचाश्च न संशयः ॥ ७.१,१०.८

देवो गुणत्रयातीतश्चतुर्व्यूहो महेश्वरः ॥ ७.१,१०.९

सकलस्सकलाधारशक्तेरुत्पत्तिकारणम् ॥ ७.१,१०.९

सोयमात्मा त्रयस्यास्य प्रकृतेः पुरुषस्य च ॥ ७.१,१०.१०

लीलाकृतजगत्सृष्टिरीश्वरत्वे व्यवस्थितः ॥ ७.१,१०.१०

यस्सर्वस्मात्परो नित्यो निष्कलः परमेश्वरः ॥ ७.१,१०.११

स एव च तदाधारस्तदात्मा तदधिष्ठितः ॥ ७.१,१०.११

तस्मान्महेश्वरश्चैव प्रकृतिः पुरुषस्तथा ॥ ७.१,१०.१२

सदाशिवभवो विष्णुर्ब्रह्मा सर्वशिवात्मकम् ॥ ७.१,१०.१२
प्रधानात्प्रथमं जज्ञे वृद्धिः ख्यातिर्मतिर्महान् ॥ ७.१,१०.१३
महत्तत्त्वस्य संक्षोभादहंकारस्त्रिधा ऽभवत् ॥ ७.१,१०.१३
अहंकारश्च भूतानि तन्मात्रानींद्रियाणि च ॥ ७.१,१०.१४
वैकारिकादहंकारात्सत्त्वोद्रिक्तात्तु सात्त्विकः ॥ ७.१,१०.१४
वैकारिकः स सर्गस्तु युगपत्संप्रवर्तते ॥ ७.१,१०.१५
बुद्धीन्द्रियाणि पञ्चैव पञ्चकर्मेंद्रियाणि च ॥ ७.१,१०.१५
एकादशं मनस्तत्र स्वगुणेनोभयात्मकम् ॥ ७.१,१०.१६
तमोयुक्तादहंकाराद्भूततन्मात्रसंभवः ॥ ७.१,१०.१६
भूतानामादिभूतत्वाद्भूतादिः कथ्यते तु सः ॥ ७.१,१०.१७
भूतादेश्शब्दमात्रं स्यात्तत्र चाकाशसंभवः ॥ ७.१,१०.१७
आकाशात्स्पर्श उत्पन्नः स्पर्शाद्वायुसमुद्भवः ॥ ७.१,१०.१८
वायो रूपं ततस्तेजस्तेजसो रससंभवः ॥ ७.१,१०.१८
रसादापस्समुत्पन्नास्तेभ्यो गन्धसमुद्भवः ॥ ७.१,१०.१९
गन्धाच्च पृथिवी जाता भूतेभ्योन्यच्चराचरम् ॥ ७.१,१०.१९
पुरुषाधिष्ठितत्वाच्च अव्यक्तानुग्रहेण च ॥ ७.१,१०.२०
महदादिविशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥ ७.१,१०.२०
तत्र कार्यं च करणं संसिद्धं ब्रह्मणो यदा ॥ ७.१,१०.२१
तदंडे सुप्रवृद्धो ऽभूत्क्षेत्रज्ञो ब्रह्मसंज्ञितः ॥ ७.१,१०.२१
स वै शरीरी प्रथमः स वै पुरुष उच्यते ॥ ७.१,१०.२२
आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत ॥ ७.१,१०.२२
तस्येश्वरस्य प्रतिमा ज्ञानवैराग्यलक्षणा ॥ ७.१,१०.२३
धर्मैश्वर्यकरी बुद्धिर्ब्राह्मी यज्ञे ऽभिमानिनः ॥ ७.१,१०.२३
अव्यक्ताज्जायते तस्य मनसा यद्यदीप्सितम् ॥ ७.१,१०.२४
वशी विकृत्वात्त्रैगुण्यात्सापेक्षत्वात्स्वभावतः ॥ ७.१,१०.२४
त्रिधा विभज्य चात्मानं त्रैलोक्ये संप्रवर्तते ॥ ७.१,१०.२५
सृजते ग्रसते चैव वीक्षते च त्रिभिस्स्वयम् ॥ ७.१,१०.२५
चतुर्मुखस्तु ब्रह्मत्वे कालत्वे चांतकस्स्मृतः ॥ ७.१,१०.२६

सहस्रमूर्धा पुरुषस्तिस्रोवस्थास्स्वयंभुवः ॥ ७.१,१०.२६
सत्त्वं रजश्च ब्रह्मा च कालत्वे च तमो रजः ॥ ७.१,१०.२७
विष्णुत्वे केवलं सत्त्वं गुणवृद्धिस्त्रिधा विभौ ॥ ७.१,१०.२७
ब्रह्मत्वे सृजते लोकान् कालत्वे संक्षिपत्यपि ॥ ७.१,१०.२८
पुरुषत्वे ऽत्युदासीनः कर्म च त्रिविधं विभोः ॥ ७.१,१०.२८
एवं त्रिधा विभिन्नत्वाद्ब्रह्मा त्रिगुण उच्यते ॥ ७.१,१०.२९
चतुर्धा प्रविभक्तत्वाच्चातुर्व्यूहः प्रकीर्तितः ॥ ७.१,१०.२९
आदित्वादादिदेवो ऽसावजातत्वादजः स्मृतः ॥ ७.१,१०.३०
पाति यस्मात्प्रजाः सर्वाः प्रजापतिरिति स्मृतः ॥ ७.१,१०.३०
हिरण्मयस्तु यो मेरुस्तस्योल्बं सुमहात्मनः ॥ ७.१,१०.३१
गर्भोदकं समुद्राश्च जरायुश्चाऽपि पर्वताः ॥ ७.१,१०.३१
तस्मिन्नंडे त्विमे लोका अंतर्विश्वमिदं जगत् ॥ ७.१,१०.३२
चंद्रादित्यौ सनक्षत्रौ सग्रहौ सह वायुना ॥ ७.१,१०.३२
अद्भिर्दशगुणाभिस्तु बाह्यतोण्डं समावृतम् ॥ ७.१,१०.३३
आपो दशगुणेनैव तेजसा बहिरावृताः ॥ ७.१,१०.३३
तेजो दशगुणेनैव वायुना बहिरावृतम् ॥ ७.१,१०.३४
आकाशेनावृतो वायुः खं च भूतादिनावृतम् ॥ ७.१,१०.३४
भूतादिर्महता तद्वदव्यक्तेनावृतो महान् ॥ ७.१,१०.३५
एतैरावरणैरण्डं सप्तभिर्बहिरावृतम् ॥ ७.१,१०.३५
एतदावृत्य चान्योन्यमष्टौ प्रकृतयः स्थिताः ॥ ७.१,१०.३६
सृष्टिपालनविध्वंसकर्मकर्त्र्यो द्विजोत्तमाः ॥ ७.१,१०.३६
एवं परस्परोत्पन्ना धारयंति परस्परम् ॥ ७.१,१०.३७
आधाराधेयभावेन विकारास्तु विकारिषु ॥ ७.१,१०.३७
कूर्मोंगानि यथा पूर्वं प्रसार्य विनियच्छति ॥ ७.१,१०.३८
विकारांश्च तथा ऽव्यक्तं सृष्ट्वा भूयो नियच्छति ॥ ७.१,१०.३८
अव्यक्तप्रभवं सर्वमानुलोम्येन जायते ॥ ७.१,१०.३९
प्राप्ते प्रलयकाले तु प्रतिलोम्येनुलीयते ॥ ७.१,१०.३९
गुणाः कालवशादेव भवंति विषमाः समाः ॥ ७.१,१०.४०

गुणसाम्ये लयो ज्ञेयो वैषम्ये सृष्टिरुच्यते ॥ ७.१,१०.४०

तदिदं ब्रह्मणो योनिरेतदंडं घनं महत् ॥ ७.१,१०.४१

ब्रह्मणः क्षेत्रमुद्दिष्टं ब्रह्मा क्षेत्रज्ञ उच्यते ॥ ७.१,१०.४१

इतीदृशानामण्डानां कोट्यो ज्ञेयाः सहस्रशः ॥ ७.१,१०.४२

सर्वगत्वात्प्रधानस्य तिर्यगूर्ध्वमधः स्थिताः ॥ ७.१,१०.४२

तत्र तत्र चतुर्वक्त्रा ब्रह्माणो हरयो भवाः ॥ ७.१,१०.४३

सृष्टा प्रधानेन तथा लब्ध्वा शंभोस्तु सन्निधिम् ॥ ७.१,१०.४३

महेश्वरः परोव्यक्तादंडमव्यक्तसंभवम् ॥ ७.१,१०.४४

अण्डाज्जज्ञे विभुर्ब्रह्मा लोकास्तेन कृतास्त्विमे ॥ ७.१,१०.४४

अबुद्धिपूर्वः कथितो मयैष प्रधानसर्गः प्रथमः प्रवृतः ॥ ७.१,१०.४५

आत्यंतिकश्च प्रलयोन्तकाले लीलाकृतः केवलमीश्वरस्य ॥ ७.१,१०.४५

यत्तत्स्मृतं कारणमप्रमेयं ब्रह्मा प्रधानं प्रकृतेः प्रसूतिः ॥ ७.१,१०.४६

अनादिमध्यान्तमनन्तवीर्यं शुक्लं सुरक्तं पुरुषेण युक्तम् ॥ ७.१,१०.४६

उत्पादकत्वाद्रजसोतिरेकाल्लोकस्य संतानविवृद्धिहेतून् ॥ ७.१,१०.४७

अष्टौ विकारानपि चादिकाले सृष्ट्वा समश्नाति तथांतकाले ॥ ७.१,१०.४७

प्रकृत्यवस्थापितकारणानां या च स्थितिर्या च पुनः प्रवृत्तिः ॥ ७.१,१०.४८

तत्सर्वमप्राकृतवैभवस्य संकल्पमात्रेण महेश्वरस्य ॥ ७.१,१०.४८

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां ब्रह्मांडस्थितिवर्णनं नाम दशमो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः ११

https://sa.wikisource.org/s/hyo
< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | पूर्व भागः

मुनय ऊचुः

मन्वंतराणि सर्वाणि कल्पभेदांश्च सर्वशः ॥ ७.१,११.१

तेष्वेवांतरसर्गं च प्रतिसर्गं च नो वद ॥ ७.१,११.१

वायुरुवाच

कालसंख्याविवृत्तस्य परार्धो ब्रह्मणस्स्मृतः ॥ ७.१,११.२

तावांश्चैवास्य कालोन्यस्तस्यांते प्रतिसृज्यते ॥ ७.१,११.२

दिवसे दिवसे तस्य ब्रह्मणः पूर्वजन्मनः ॥ ७.१,११.३

चतुर्दशमहाभागा मनूनां परिवृत्तयः ॥ ७.१,११.३

अनादित्वादनंतत्वादज्ञेयत्वाच्च कृत्स्नशः ॥ ७.१,११.४

मन्वंतराणि कल्पाश्च न शक्या वचनात्पृथक् ॥ ७.१,११.४

उक्तेष्वपि च सर्वेषु शृण्वतां वो वचो मम ॥ ७.१,११.५

किमिहास्ति फलं तस्मान्न पृथक्वक्तुमुत्सहे ॥ ७.१,११.५

य एव खलु कल्पेषु कल्पः संप्रति वर्तते ॥ ७.१,११.६

तत्र संक्षिप्य वर्तंते सृष्टयः प्रतिसृष्टयः ॥ ७.१,११.६

यस्त्वयं वर्तते कल्पो वाराहो नाम नामतः ॥ ७.१,११.७

अस्मिन्नपि द्विजश्रेष्ठा मनवस्तु चतुर्दश ॥ ७.१,११.७

स्वायंभुवादयस्सप्त सप्त सावर्णिकादयः ॥ ७.१,११.८

तेषु वैवस्वतो नाम सप्तमो वर्तते मनुः ॥ ७.१,११.८

मन्वंतरेषु सर्वेषु सर्गसंहारवृत्तयः ॥ ७.१,११.९

प्रायः समाभवंतीति तर्कः कार्यो विजानता ॥ ७.१,११.९

पूर्वकल्पे परावृत्ते प्रवृत्ते कालमारुते ॥ ७.१,११.१०

समुन्मूलितमूलेषु वृक्षेषु च वनेषु च ॥ ७.१,११.१०

जगंति तृणवक्त्रीणि देवे दहति पावके ॥ ७.१,११.११

वृष्ट्या भुवि निषिक्तायां विवेलेष्वर्णवेषु च ॥ ७.१,११.११

दिक्षु सर्वासु मग्नासु वारिपूरे महीयसि ॥ ७.१,११.१२
तदद्भिश्चटुलाक्षेपैस्तरंगभुजमण्डलैः ॥ ७.१,११.१२
प्रारब्धचण्डनृत्येषु ततः प्रलयवारिषु ॥ ७.१,११.१३
ब्रह्मा नारायणो भूत्वा सुष्वाप सलिले सुखम् ॥ ७.१,११.१३
इमं चोदाहरन्मंत्रं श्लोकं नारायणं प्रति ॥ ७.१,११.१४
तं शृणुध्वं मुनिश्रेष्ठास्तदर्थं चाक्षराश्रयम् ॥ ७.१,११.१४
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥ ७.१,११.१५
अयनं तस्य ता यस्मात्तेन नारायणः स्मृतः ॥ ७.१,११.१५
शिवयोगमयीं निद्रां कुर्वन्तं त्रिदशेश्वरम् ॥ ७.१,११.१६
बद्धांजलि पुटास्सिद्धा जनलोकनिवासिनः ॥ ७.१,११.१६
स्तोत्रैः प्रबोधयामासुः प्रभातसमये सुराः ॥ ७.१,११.१७
यथा सृष्ट्यादिसमये ईश्वरं श्रुतयः पुरा ॥ ७.१,११.१७
ततः प्रबुद्ध उत्थाय शयनात्तोयमध्यगात् ॥ ७.१,११.१८
उदैक्षत दिशः सर्वा योगनिद्रालसेक्षणः ॥ ७.१,११.१८
नापश्यत्स तदा किंचित्स्वात्मनो व्यतिरेकि यत् ॥ ७.१,११.१९
सविस्मय इवासीनः परां चिंतामुपागमत् ॥ ७.१,११.१९
क्व सा भगवती या तु मनोज्ञा महती मही ॥ ७.१,११.२०
नानाविधमहाशैलनदीनगरकानना ॥ ७.१,११.२०
एवं संचिंतयन्ब्रह्मा बुबुधे नैव भूस्थितिम् ॥ ७.१,११.२१
तदा सस्मार पितरं भगवंतं त्रिलोचनम् ॥ ७.१,११.२१
स्मरणाद्देवदेवस्य भवस्यामिततेजसः ॥ ७.१,११.२२
ज्ञातवान्सलिले मग्नां धरणीं धरणीपतिः ॥ ७.१,११.२२
ततो भूमेस्समुद्धारं कर्तुकामः प्रजापतिः ॥ ७.१,११.२३
जलक्रीडोचितं दिव्यं वाराहं रूपमस्मरत् ॥ ७.१,११.२३
महापर्वतवर्ष्माणं महाजलदनिःस्वनम् ॥ ७.१,११.२४
नीलमेघप्रतीकाशं दीप्तशब्दं भयानकम् ॥ ७.१,११.२४
पीनवृत्तघनस्कंधपीनोन्नतकटीतटम् ॥ ७.१,११.२५
ह्रस्ववृत्तोरुजंघाग्रं सुतीक्ष्णपुरमण्डलम् ॥ ७.१,११.२५

पद्मरागमणिप्रख्यं वृत्तभीषणलोचनम् ॥ ७.१,११.२६

वृत्तदीर्घमहागात्रं स्तब्धकर्णस्थलोज्ज्वलम् ॥ ७.१,११.२६

उदीर्णोच्छ्वासनिश्वासघूर्णितप्रलयार्णवम् ॥ ७.१,११.२७

विस्फुरत्सुसटाच्छन्नकपोलस्कंधबंधुरम् ॥ ७.१,११.२७

मणिभिर्भूषणैश्चित्रैर्महारत्नैःपरिष्कृतम् ॥ ७.१,११.२८

विराजमानं विद्युद्भिर्मेघसंघमिवोन्नतम् ॥ ७.१,११.२८

आस्थाय विपुलं रूपं वाराहममितं विधिः ॥ ७.१,११.२९

पृथिव्युद्धरणार्थाय प्रविवेश रसातलम् ॥ ७.१,११.२९

स तदा शुशुभे ऽतीव सूकरो गिरिसंनिभः ॥ ७.१,११.३०

लिंगाकृतेर्महेशस्य पादमूलं गतो यथा ॥ ७.१,११.३०

ततस्स सलिले मग्नां पृथिवीं पृथिवींधरः ॥ ७.१,११.३१

उद्धृत्यालिंग्य दंष्ट्राभ्यामुन्ममज्ज रसातलात् ॥ ७.१,११.३१

तं दृष्ट्वा मुनयस्सिद्धा जनलोकनिवासिनः ॥ ७.१,११.३२

मुमुदुर्ननृतुर्मूर्ध्नि तस्य पुष्पैरवाकिरन् ॥ ७.१,११.३२

वपुर्महावराहस्य शुशुभे पुष्पसंवृतम् ॥ ७.१,११.३३

पतद्भिरिव खद्योतैः प्राशुरंजनपर्वतः ॥ ७.१,११.३३

ततः संस्थानमानीय वराहो महतीं महीम् ॥ ७.१,११.३४

स्वमेव रूपमास्थाय स्थापयामास वै विभुः ॥ ७.१,११.३४

पृथिवीं च समीकृत्य पृथिव्यां स्थापयन्गिरीन् ॥ ७.१,११.३५

भूराद्यांश्चतुरो लोकान् कल्पयामास पूर्ववत् ॥ ७.१,११.३५

इति सह महतीं महीं महीध्रैः प्रलयमहाजलधेरधःस्थमध्यात् ॥ ७.१,११.३६

उपरि च विनिवेश्य विश्वकर्मा चरमचरं च जगत्ससर्ज भूयः ॥ ७.१,११.३६

इति श्रीशिवमहापुराणे सप्तम्यां वा पू सृष्ट्यादिवर्णनं नामैकादशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः १२



वायुरुवाच

सर्गं चिंतयतस्तस्य तदा वै बुद्धिपूर्वकम् ॥

प्रध्यानकाले मोहस्तु प्रादुर्भूतस्तमोमयः ॥ १

तमोमोहो महामोहस्तामिस्रश्चान्धसंज्ञितः ॥

अविद्या पञ्चमी चैषा प्रादुर्भूता महात्मनः ॥ २

पञ्चधा ऽवस्थितः सर्गो ध्यायतस्त्वभिमानिनः ॥

सर्वतस्तमसातीव बीजकुम्भवदावृतः ॥ ३

बहिरन्तश्चाप्रकाशः स्तब्धो निःसंज्ञ एव च ॥

तस्मात्तेषां वृता बुद्धिर्मुखानि करणानि च ॥ ४

तस्मात्ते संवृतात्मानो नगा मुख्याः प्रकीर्तिताः ॥

तं दृष्ट्वाऽसाधकं ब्रह्मा प्रथमं सर्गमीदृशम् ॥ ५

अप्रसन्नमना भूत्वा द्वितीयं सो ऽभ्यमन्यत ॥

तस्याभिधायतः सर्गं तिर्यक्स्रोतो ऽभ्यवर्तत ॥ ६

अन्तःप्रकाशास्तिर्यंच आवृताश्च बहिः पुनः ॥

पश्चात्मानस्ततो जाता उत्पथग्राहिणश्च ते ॥ ७

तमप्यसाधकं ज्ञात्वा सर्गमन्यममन्यत ॥

तदोर्ध्वस्रोतसो वृत्तो देवसर्गस्तु सात्त्विकः ॥ ८

ते सुखप्रीतिबहुला बहिरन्तश्च नावृताः ॥

प्रकाशा बहिरन्तश्चस्वभावादेव संज्ञिताः ॥ ९

ततो ऽभिध्यायतोव्यक्तादर्वाक्स्रोतस्तु साधकः ॥

मनुष्यनामा सञ्जातः सर्गो दुःखसमुत्कटः ॥ १०

प्रकाशाबहिरन्तस्ते तमोद्रिक्ता रजो ऽधिकाः ॥

पञ्चमोनुग्रहः सर्गश्चतुर्धा संव्यवस्थितः ॥ ११

विपर्ययेण शक्त्या च तुष्ट्यासिद्ध्या तथैव च ॥

ते ऽपरिग्राहिणः सर्वे संविभागरताः पुनः ॥ १२
खादनाश्चाप्यशीलाश्च भूताद्याः परिकीर्तिताः ॥
प्रथमो महतः सर्गो ब्रह्मणः परमेष्ठिनः ॥ १३
तन्मात्राणां द्वितीयस्तु भूतसर्गः स उच्यते ॥
वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकः स्मृतः ॥ १४
इत्येष प्रकृतेः सर्गः सम्भृतो ऽबुद्धिपूर्वकः ॥ १५
मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ॥
तिर्यक्स्रोतस्तु यः प्रोक्तस्तिर्यग्योनिः स पञ्चमः ॥
तदूर्ध्वस्रोतसः षष्ठो देवसर्गस्तु स स्मृतः ॥ १६
ततो ऽर्वाक्स्रोतसां सर्गः सप्तमः स तु मानुषः ॥
अष्टमो ऽनुग्रहः सर्गः कौमारो नवमः स्मृतः ॥ १७
प्राकृताश्च त्रयः पूर्वे सर्गास्ते ऽबुद्धिपूर्वकाः ॥
बुद्धिपूर्वं प्रवर्तन्ते मुख्याद्याः पञ्च वैकृताः ॥ १८
अग्रे ससर्ज वै ब्रह्मा मानसानात्मनः समान् ॥
सनन्दं सनकञ्चैव विद्वांसञ्च सनातनम् ॥ १९
ऋभुं सनत्कुमारञ्च पूर्वमेव प्रजापतिः ॥
सर्वे ते योगिनो ज्ञेया वीतरागा विमत्सराः ॥ २०
ईश्वरासक्तमनसो न चक्रुः सृष्टये मतिम् ॥
तेषु सृष्ट्यनपेक्षेषु गतेषु सनकादिषु ॥ २१
स्रष्टुकामः पुनर्ब्रह्मा तताप परमं तपः ॥
तस्यैवं तप्यमानस्य न किंचित्समवर्तत ॥ २२
ततो दीर्घेण कालेन दुःखात्क्रोधो व्यजायत ॥
क्रोधाविष्टस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः ॥ २३
ततस्तेभ्यो ऽश्रुबिन्दुभ्यो भूताः प्रेतास्तदाभवन् ॥
सर्वांस्तानश्रुजान्दृष्ट्वा ब्रह्मात्मानमनिंदत ॥ २४
तस्य तीव्रा ऽभवन्मूर्छा क्रोधामर्षसमुद्भवा ॥
मूर्छितस्तु जहौ प्राणान्क्रोधाविष्टः प्रजापतिः ॥ २५
ततः प्राणेश्वरो रुद्रो भगवान्नीललोहितः ॥

प्रसादमतुलं कर्तुं प्रादुरासीत्प्रभोर्मुखात् ॥ २६
दशधा चैकधा चक्रे स्वात्मानं प्रभुरीश्वरः ॥
ते तेनोक्ता महात्मानो दशधा चैकधा कृताः ॥ २७
यूयं सृष्टा मया वत्सा लोकानुग्रहकारणात् ॥
तस्मात्सर्वस्य लोकस्य स्थापनाय हिताय च ॥ २८
प्रजासन्तानहेतोश्च प्रयतध्वमतन्द्रिताः ॥
एवमुक्ताश्च रुरुदुर्दुद्रुवुश्च समन्ततः ॥ २९
रोदनाद्द्रावणाच्चैव ते रुद्रा नामतः स्मृताः ॥
ये रुद्रास्ते खलु प्राणा ये प्राणास्ते महात्मकाः ॥ ३०
ततो मृतस्य देवस्य ब्रह्मणः परमेष्ठिनः ॥
घृणी ददौ पुनः प्राणान्ब्रह्मपुत्रो महेश्वरः ॥ ३१
प्रहृष्टवदनो रुद्रः प्राणप्रत्यागमाद्विभोः ॥
अभ्यभाषत विश्वेशो ब्रह्माणं परमं वचः ॥ ३२
माभैर्माभैर्महाभाग विरिंच जगतां गुरो ॥
मया ते प्राणिताः प्राणाः सुखमुत्तिष्ठ सुव्रत ॥ ३३
स्वप्नानुभूतमिव तच्छ्रुत्वा वाक्यं मनोहरम् ॥
हरं निरीक्ष्य शनकैर्नेत्रैः फुल्लाम्बुजप्रभैः ॥ ३४
तथा प्रत्यागतप्राणः स्निग्धगम्भीरया गिरा ॥
उवाच वचनं ब्रह्मा तमुद्दिश्य कृताञ्जलिः ॥ ३५
त्वं हि दर्शनमात्रेण चानन्दयसि मे मनः ॥
को भवान् विश्वमूर्त्या वा स्थित एकादशात्मकः ॥ ३६
तस्य तद्वचनं श्रुत्वा व्याजहार महेश्वरः ॥
स्पृशन् काराभ्यां ब्रह्माणं सुसुखाभ्यां सुरेश्वरः ॥ ३७
मां विद्धि परमात्मानं तव पुत्रत्वमागतम् ॥
एते चैकादश रुद्रास्त्वां सुरक्षितुमागताः ॥ ३८
तस्मात्तीव्रामिमाम्मूर्छां विधूय मदनुग्रहात् ॥
प्रबुद्धस्व यथापूर्वं प्रजा वै स्रष्टुमर्हसि ॥ ३९
एवं भगवता प्रोक्तो ब्रह्मा प्रीतमना ह्यभूत् ॥

नानाष्टकेन विश्वात्मा तुष्टाव परमेश्वरम् ॥ ४०

ब्रह्मोवाच

नमस्ते भगवन् रुद्र भास्करामिततेजसे ॥

नमो भवाय देवाय रसायाम्बुमयात्मने ॥ ४१

शर्वाय क्षितिरूपाय नन्दीसुरभये नमः ॥ ४१

ईशाय वसवे तुभ्यं नमस्स्पर्शमयात्मने ॥

पशूनां पतये चैव पावकायातितेजसे ॥

भीमाय व्योमरूपाय शब्दमात्राय ते नमः ॥ ४२

उग्रायोग्रस्वरूपाय यजमानात्मने नमः ॥

महादेवाय सोमाय नमोस्त्वमृतमूर्तये ॥ ४३

एवं स्तुत्वा महादेवं ब्रह्मा लोकपितामहः ॥

प्रार्थयामास विश्वेशं गिरा प्रणतिपूर्वया ॥ ४४

भगवन् भूतभव्येश मम पुत्र महेश्वर ॥

सृष्टिहेतोस्त्वमुत्पन्नो ममांगे ऽनंगनाशनः ॥ ४५

तस्मान्महति कार्येस्मिन् व्यापृतस्य जगत्प्रभो ॥

सहायं कुरु सर्वत्र स्रष्टुमर्हसि स प्रजाः ॥ ४६

तेनैषां पावितो देवो रुद्रस्त्रिपुरमर्दनः ॥

बाढमित्येव तां वाणीं प्रतिजग्राह शंकरः ॥ ४७

ततस्स भगवान् ब्रह्मा हृष्टं तमभिनंद्य च ॥

स्रष्टुं तेनाभ्यनुज्ञातस्तथान्याश्चासृजत्प्रजाः ॥ ४८

मरीचिभृग्वंगिरसः पुलस्त्यं पुलहं क्रतुम् ॥

दक्षमत्रिं वसिष्ठं च सो ऽसृजन्मनसैव च ॥ ४९

पुरस्तादसृजद्ब्रह्मा धर्मं संकल्पमेव च ॥ ४९

इत्येते ब्रह्मणः पुत्रा द्वादशादौ प्रकीर्तिताः ॥

सह रुद्रेण संभूताः पुराणा गृहमेधिनः ॥ ५०

तेषां द्वादश वंशाः स्युर्दिव्या देवगणान्विताः ॥

प्रजावन्तः क्रियावन्तो महर्षिभिरलंकृताः ॥ ५१

अथ देवासुरपित्ःन्मनुष्यांश्च चतुष्टयम् ॥

सह रुद्रेण सिसृक्षुरंभस्येतानि वै विधिः ॥ ५२
स सृष्ट्यर्थं समाधाय ब्रह्मात्मानमयूयुजत् ॥
मुखादजनयद्देवान् पितॄंश्चैवोपपक्षतः ॥ ५३
जघनादसुरान् सर्वान् प्रजनादपि मानुषान् ॥
अवस्करे क्षुधाविष्टा राक्षसास्तस्य जज्ञिरे ॥ ५४
पुत्रास्तमोरजःप्राया बलिनस्ते निशाचराः ॥
सर्पा यक्षास्तथा भूता गंधर्वाः संप्रजज्ञिरे ॥ ५५
वयांसि पक्षतः सृष्टाः पक्षिणो वक्षसो ऽसृजत् ॥
मुखतोजांस्तथा पार्श्वादुरगांश्च विनिर्ममे ॥ ५६
पद्भ्यां चाश्वान्समातंगान् शरभान् गवयान्मृगान् ॥
उष्ट्रानश्वतरांश्चैव न्यंकूनन्याश्च जातयः १ ॥ ५७
औषध्यः फलमूलानि रोमभ्यस्तस्य जज्ञिरे ॥
गायत्रीं च ऋचं चैव त्रिवृत्साम रथंतरम् ॥ ५८
अग्निष्टोमं च यज्ञानां निर्ममे प्रथमान्मुखात् ॥
यजूंषि त्रैष्टुभं छंदःस्तोमं पञ्चदशं तथा ॥ ५९
बृहत्साम तथोक्थं च दक्षिणादसृजन्मुखात् ॥
सामानि जगतीछंदः स्तोमं सप्तदशं तथा ॥ ६०
वैरूप्यमतिरात्रं च पश्चिमादसृजन्मुखात् ॥
एकविंशमथर्वाणमाप्तोर्यामाणमेव च ॥ ६१
अनुष्टुभं स वैराजमुत्तरादसृजन्मुखात् ॥
उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे ॥ ६२
यक्षाः पिशाचा गंधर्वास्तथैवाप्सरसां गणाः ॥
नरकिन्नररक्षांसि वयःपशुमृगोरगाः ॥ ६३
अव्ययं चैव यदिदं स्थाणुस्थावरजंगमम् ॥
तेषां वै यानि कर्माणि प्राक्सृष्टानि प्रपेदिरे ॥ ६४
तान्येव ते प्रपद्यंते सृज्यमानाः पुनः पुनः ॥
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते ॥ ६५
तद्भाविताः प्रपद्यंते तस्मात्तत्तस्य रोचते ॥

महाभूतेषु नानात्वमिंद्रियार्थेषु मुक्तिषु ॥ ६६
विनियोगं च भूतानां धातैव व्यदधत्स्वयम् ॥
नाम रूपं च भूतानां प्राकृतानां प्रपञ्चनम् ॥ ६७
वेदशब्देभ्य एवादौ निर्ममे ऽसौ पितामहः ॥
आर्षाणि चैव नामानि याश्च वेदेषु वृत्तयः ॥ ६८
शर्वर्यंते प्रसूतानां तान्येवैभ्यो ददावजः ॥
यथर्तावृतुलिंगानि नानारूपाणि पर्यये ॥ ६९
दृश्यंते तानि तान्येव तथा भावा युगादिषु ॥
इत्येष करणोद्भूतो लोकसर्गस्स्वयंभुवः ॥ ७०
महदाद्योविशेषांतो विकारः प्रकृतेः स्वयम् ॥
चंद्रसूर्यप्रभाजुष्टो ग्रहनक्षत्रमंडितः ॥ ७१
नदीभिश्च समुद्रैश्च पर्वतैश्च स मंडितः ॥
परैश्च विविधैरम्यैस्स्फीतैर्जनपदैस्तथा ॥ ७२
तस्मिन् ब्रह्मवने ऽव्यक्तो ब्रह्मा चरति सर्ववित् ॥
अव्यक्तबीजप्रभव ईश्वरानुग्रहे स्थितः ॥ ७३
बुद्धिस्कंधमहाशाख इन्द्रियांतरकोटरः ॥
महाभूतप्रमाणश्च विशेषामलपल्लवः ॥ ७४
धर्माधर्मसुपुष्पाढ्यः सुखदुःखफलोदयः ॥
आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः ॥ ७५
द्यां मूर्धानं तस्य विप्रा वदंति खं वै नाभिं चंद्रसूर्यौ च नेत्रे ॥
दिशः श्रोत्रे चरणौ च क्षितिं च सो ऽचिन्त्यात्मा सर्वभूतप्रणेता ॥ ७६
वक्त्रात्तस्य ब्रह्मणास्संप्रसूतास्तद्वक्षसः क्षत्रियाः पूर्वभागात् ॥
वैश्या उरुभ्यां तस्य पद्भ्यां च शूद्राः सर्वे वर्णा गात्रतः संप्रसूताः ॥ ७७

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे सृष्टिवर्णनं नाम द्वादशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः १३

https://sa.wikisource.org/s/hyq
< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | पूर्व भागः

ऋषय ऊचुः

भवता कथिता सृष्टिर्भवस्य परमात्मनः ॥ ७.१,१३.१

चतुर्मुखमुखात्तस्य संशयो नः प्रजायते ॥ ७.१,१३.१

देवश्रेष्ठो विरूपाक्षो दीप्तश्शूलधरो हरः ॥ ७.१,१३.२

कालात्मा भगवान् रुद्रः कपर्दी नीललोहितः ॥ ७.१,१३.२

सब्रह्मकमिमं लोकं सविष्णुमपि पावकम् ॥ ७.१,१३.३

यः संहरति संक्रुद्धो युगांते समुपस्थिते ॥ ७.१,१३.३

यस्य ब्रह्मा च विष्णुश्च प्रणामं कुरुतो भयात् ॥ ७.१,१३.४

लोकसंकोचकस्यास्य यस्य तौ वशवर्तिनौ ॥ ७.१,१३.४

यो ऽयं देवः स्वकादंगाद्ब्रह्मविष्णू पुरासृजत् ॥ ७.१,१३.५

स एव हि तयोर्नित्यं योगक्षेमकरः प्रभुः ॥ ७.१,१३.५

स कथं भगवान् रुद्र आदिदेवः पुरातनः ॥ ७.१,१३.६

पुत्रत्वमगमच्छंभुर्ब्रह्मणो ऽव्यक्तजन्मनः ॥ ७.१,१३.६

प्रजापतिश्च विष्णुश्च रुद्रस्यैतौ परस्परम् ॥ ७.१,१३.७

सृष्टौ परस्परस्यांगादिति प्रागपि शुश्रुम ॥ ७.१,१३.७

कथं पुनरशेषाणां भूतानां हेतुभूतयोः ॥ ७.१,१३.८

गुणप्रधानभावेन प्रादुर्भावः परस्परात् ॥ ७.१,१३.८

नापृष्टं भवता किंचिन्नाश्रुतं च कथंचन ॥ ७.१,१३.९

भगवच्छिष्यभूतेन भवता सकलं स्मृतम् ॥ ७.१,१३.९

तत्त्वं वद यथा ब्रह्मा मुनीनामवदद्विभुः ॥ ७.१,१३.१०

वयं श्रद्धालवस्तात श्रोतुमीश्वरसद्यशः ॥ ७.१,१३.१०

वायुरुवाच

स्थाने पृष्टमिदं विप्रा भवद्भिः प्रश्नकोविदैः ॥ ७.१,१३.११

इदमेव पुरा पृष्टो मम प्राह पितामहः ॥ ७.१,१३.११

तदहं सम्प्रवक्ष्यामि यथा रुद्रसमुद्भवः ॥ ७.१,१३.१२
यथा च पुनरुत्पत्तिर्ब्रह्मविष्ण्वोः परस्परम् ॥ ७.१,१३.१२
त्रयस्ते कारणात्मानो जतास्साक्षान्महेश्वरात् ॥ ७.१,१३.१३
चराचरस्य विश्वस्य सर्गस्थित्यंतहेतवः ॥ ७.१,१३.१३
परमैश्वर्यसंयुक्ताः परमेश्वरभाविताः ॥ ७.१,१३.१४
तच्छक्त्याधिष्ठिता नित्यं तत्कार्यकरणक्षमाः ॥ ७.१,१३.१४
पित्रा नियमिताः पूर्वं त्रयोपि त्रिषु कर्मसु ॥ ७.१,१३.१५
ब्रह्मा सर्गे हरिस्त्राणे रुद्रः संहरणे तथा ॥ ७.१,१३.१५
तथाप्यन्योन्यमात्सर्यादन्योन्यातिशयाशिनः ॥ ७.१,१३.१६
तपसा तोषयित्वा स्वं पितरं परमेश्वरम् ॥ ७.१,१३.१६
लब्ध्वा सर्वात्मना तस्य प्रसादात्परमेष्ठिनः ॥ ७.१,१३.१७
ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरे ऽसृजत् ॥ ७.१,१३.१७
कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः ॥ ७.१,१३.१८
विष्णुश्च भगवान्रुद्रं ब्रह्माणमसृजत्पुनः ॥ ७.१,१३.१८
नारायणं पुनर्ब्रह्मा ब्रह्माणमसृजत्पुनः ॥ ७.१,१३.१९
एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः ॥ ७.१,१३.१९
परस्परेण जायंते परस्परहितैषिणः ॥ ७.१,१३.२०
तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः ॥ ७.१,१३.२०
प्रभावः कथ्यते तेषां परस्परसमुद्भवात् ॥ ७.१,१३.२१
शृणु तेषां कथां चित्रां पुण्यां पापप्रमोचिनीम् ॥ ७.१,१३.२१
कल्पे तत्पुरुषे वृत्तां ब्रह्मणः परमेष्ठिनः ॥ ७.१,१३.२२
पुरा नारायणो नाम कल्पे वै मेघवाहने ॥ ७.१,१३.२२
दिव्यं वर्षसहस्रं तु मेघो भूत्वावहद्धराम् ॥ ७.१,१३.२३
तस्य भावं समालक्ष्य विष्णोर्विश्वजगद्गुरुः ॥ ७.१,१३.२३
सर्वस्सर्वात्मभावेन प्रददौ शक्तिमव्ययाम् ॥ ७.१,१३.२४
शक्तिं लब्ध्वा तु सर्वात्मा शिवात्सर्वेश्वरात्तदा ॥ ७.१,१३.२४
ससर्ज भगावन् विष्णुर्विश्वं विश्वसृजा सह ॥ ७.१,१३.२५
विष्णोस्तद्वैभवं दृष्ट्वा सृष्टस्तेन पितामहः ॥ ७.१,१३.२५

ईर्ष्यया परया ग्रस्तः प्रहसन्निदमब्रवीत् ॥ ७.१,१३.२६
गच्छ विष्णो मया ज्ञातं तव सर्गस्य कारणम् ॥ ७.१,१३.२६
आवयोरधिकश्चास्ति स रुद्रो नात्र संशयः ॥ ७.१,१३.२६
तस्य देवाधिदेवस्य प्रसादात्परमेष्ठिनः ॥ ७.१,१३.२७
स्रष्टा त्वं भगवानाद्यः पालकः परमार्थतः ॥ ७.१,१३.२७
अहं च तपसाराध्य रुद्रं त्रिदशनायकम् ॥ ७.१,१३.२८
त्वया सह जगत्सर्वं स्रक्ष्याम्यत्र न संशयः ॥ ७.१,१३.२८
एवं विष्णुमुपालभ्य भगवानब्जसम्भवः ॥ ७.१,१३.२९
एवं विज्ञापयामास तपसा प्राप्य शंकरम् ॥ ७.१,१३.२९
भगवन् देवदेवेश विश्वेश्वर महेश्वर ॥ ७.१,१३.३०
तव वामांगजो विष्णुर्दक्षिणांगभवो ह्यहम् ॥ ७.१,१३.३०
मया सह जगत्सर्वं तथाप्यसृजदच्युतः ॥ ७.१,१३.३१
स मत्सरादुपालब्धस्त्वदाश्रयबलान्मया ॥ ७.१,१३.३१
मद्भावान्नाधिकस्तेति भावस्त्वयि महेश्वरे ॥ ७.१,१३.३२
त्वत्त एव समुत्पत्तिरावयोस्सदृशी यतः ॥ ७.१,१३.३२
तस्य भक्त्या यथापूर्वं प्रसादं कृतवानसि ॥ ७.१,१३.३३
तथा ममापि तत्सर्वं दातुमर्हसि शंकर ॥ ७.१,१३.३३
इति विज्ञापितस्तेन भगवान् भगनेत्रहा ॥ ७.१,१३.३४
न्यायेन वै ददौ सर्वं तस्यापि स घृणानिधिः ॥ ७.१,१३.३४
लब्ध्वैवमीश्वरादेव ब्रह्मा सर्वात्मतां क्षणात् ॥ ७.१,१३.३५
त्वरमाणोथ संगम्य ददर्श पुरुषोत्तमम् ॥ ७.१,१३.३५
क्षीरार्णवालये शुभ्रे विमाने सूर्यसंनिभे ॥ ७.१,१३.३६
हेमरत्नान्विते दिव्ये मनसा तेन निर्मिते ॥ ७.१,१३.३६
अनंतभोगशय्यायां शयानं पंकजेक्षणम् ॥ ७.१,१३.३७
चतुर्भुजमुदारांगं सर्वाभरणभूषितम् ॥ ७.१,१३.३७
शंखचक्रधरं सौम्यं चन्द्रबिंबसमाननम् ॥ ७.१,१३.३८
श्रीवत्सवक्षसं देवं प्रसन्नमधुरस्मितम् ॥ ७.१,१३.३८
धरामृदुकरांभोजस्पर्शरक्तपदांबुजम् ॥ ७.१,१३.३९

क्षीरार्णवामृतमिव शयानं योगनिद्रया ॥ ७.१,१३.३९

तमसा कालरुद्राख्यं रजसा कनकांडजम् ॥ ७.१,१३.४०

सत्त्वेन सर्वगं विष्णुं निर्गुणत्वे महेश्वरम् ॥ ७.१,१३.४०

तं दृष्ट्वा पुरुषं ब्रह्मा प्रगल्भमिदमब्रवीत् ॥ ७.१,१३.४१

ग्रसामि त्वामहं विष्णो त्वमात्मानं यथा पुरा ॥ ७.१,१३.४१

तस्य तद्वचनं श्रुत्वा प्रतिबुद्ध्य पितामहम् ॥ ७.१,१३.४२

उदैक्षत महाबाहुस्स्मितमीषच्चकार च ॥ ७.१,१३.४२

तस्मिन्नवसरे विष्णुर्ग्रस्तस्तेन महात्मना ॥ ७.१,१३.४३

सृष्टश्च ब्रह्मणा सद्यो भ्रुवोर्मध्यादयत्नतः ॥ ७.१,१३.४३

तस्मिन्नवसरे साक्षाद्भगवानिन्दुभूषणः ॥ ७.१,१३.४४

शक्तिं तयोरपि द्रष्टुमरूपो रूपमास्थितः ॥ ७.१,१३.४४

प्रसादमतुलं कर्तुं पुरा दत्तवरस्तयोः ॥ ७.१,१३.४५

आगच्छत्तत्र यत्रेमौ ब्रह्मनारायणौ स्थितौ ॥ ७.१,१३.४५

अथ तुष्टुवतुर्देवं प्रीतौ भीतौ च कौतुकात् ॥ ७.१,१३.४६

प्रणेमतुश्च बहुशो बहुमानेन दूरतः ॥ ७.१,१३.४६

भवोपि भगवानेतावनुगृह्य पिनाकधृक् ॥ ७.१,१३.४७

सादरं पश्यतोरेव तयोरंतरधीयत ॥ ७.१,१३.४७

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे ब्रह्मविष्णुसृष्टिकथनं नाम त्रयोदशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः १४

https://sa.wikisource.org/s/hyr



वायुरुवाच

प्रतिकल्पं प्रवक्ष्यामि रुद्राविर्भावकारणम् ॥ ७.१,१४.१

यतो विच्छिन्नसंताना ब्रह्मसृष्टिः प्रवर्तते ॥ ७.१,१४.१

कल्पेकल्पे प्रजाः सृष्ट्वा ब्रह्मा ब्रह्मांडसंभवः ॥ ७.१,१४.२

अवृद्धिहेतोर्भूतानां मुमोह भृशदुःखितः ॥ ७.१,१४.२

तस्य दुःखप्रशांत्यर्थं प्रजानां च विवृद्धये ॥ ७.१,१४.३

तत्तत्कल्पेषु कालात्मा रुद्रो रुद्रगणाधिपः ॥ ७.१,१४.३

निर्दिष्टः पममेशेन महेशो नीललोहितः ॥ ७.१,१४.४

पुत्रो भूत्वानुगृह्णाति ब्रह्माणं ब्रह्मणोनुजः ॥ ७.१,१४.४

स एव भगवानीशस्तेजोराशिरनामयः ॥ ७.१,१४.५

अनादिनिधनोधाता भूतसंकोचको विभुः ॥ ७.१,१४.५

परमैश्वर्यसंयुक्तः परमेश्वरभावितः ॥ ७.१,१४.६

तच्छक्त्याधिष्ठितश्शश्वत्तच्चिह्नैरपि चिह्नितः ॥ ७.१,१४.६

तन्नामनामा तद्रूपस्तत्कार्यकरणक्षमः ॥ ७.१,१४.७

तत्तुल्यव्यवहारश्च तदाज्ञापरिपालकः ॥ ७.१,१४.७

सहस्रादित्यसंकाशश्चन्द्रावयवभूषणः ॥ ७.१,१४.८

भुजंगहारकेयूरवलयो मुंजमेखलः ॥ ७.१,१४.८

जलंधरविरिंचेन्द्रकपालशकलोज्ज्वलः ॥ ७.१,१४.९

गङ्गातुंगतरंगार्धपिंगलाननमूर्धजः ॥ ७.१,१४.९

भग्नदंष्ट्रांकुराक्रान्तप्रान्तकान्तधराधरः ॥ ७.१,१४.१०

सव्यश्रवणपार्श्वांतमंडलीकृतकुण्डलः ॥ ७.१,१४.१०

महावृषभनिर्याणो महाजलदनिःस्वनः ॥ ७.१,१४.११

महानलसमप्रख्यो महाबलपराक्रमः ॥ ७.१,१४.११

एवं घोरमहारूपो ब्रह्मपुत्रीं महेश्वरः ॥ ७.१,१४.१२

विज्ञानं ब्रह्मणे दत्त्वा सर्गे सहकरोति च ॥ ७.१,१४.१२

तस्माद्रुद्रप्रसादेन प्रतिकल्पं प्रजापतेः ॥ ७.१,१४.१३

प्रवाहरूपतो नित्या प्रजासृष्टिः प्रवर्तते ॥ ७.१,१४.१३

कदाचित्प्रार्थितः स्रष्टुं ब्रह्मणा नीललोहितः ॥ ७.१,१४.१४

स्वात्मना सदृशान् सर्वान् ससर्ज मनसा विभुः ॥ ७.१,१४.१४

कपर्दिनो निरातंकान्नीलग्रीवांस्त्रिलोचनान् ॥ ७.१,१४.१५

जरामरणनिर्मुक्तान् दीप्तशूलवरायुधान् ॥ ७.१,१४.१५

तैस्तु संच्छादितं सर्वं चतुर्दशविधं जगत् ॥ ७.१,१४.१६

तान्दृष्टा विविधान्रुद्रान् रुद्रमाह पितामहः ॥ ७.१,१४.१६

नमस्ते देवदेवेश मास्राक्षीरीदृशीः प्रजाः ॥ ७.१,१४.१७

अन्याः सृज त्वं भद्रं ते प्रजा मृत्युसमन्विताः ॥ ७.१,१४.१७

इत्युक्तः प्रहसन्प्राह ब्रह्माणं परमेश्वरः ॥ ७.१,१४.१८

नास्ति मे तादृशस्सर्गस्सृज त्वमशुभाः प्रजाः ॥ ७.१,१४.१८

ये त्विमे मनसा सृष्टा महात्मानो महाबलाः ॥ ७.१,१४.१९

चरिष्यंति मया सार्धं सर्व एव हि याज्ञिकाः ॥ ७.१,१४.१९

इत्युक्त्वा विश्वकर्माणं विश्वभूतेश्वरो हरः ॥ ७.१,१४.२०

सह रुद्रैः प्रजासर्गान्निवृत्तात्मा व्यतिष्ठत ॥ ७.१,१४.२०

ततः प्रभृति देवो ऽसौ न प्रसूते प्रजाः शुभाः ॥ ७.१,१४.२१

ऊर्ध्वरेताः स्थितः स्थाणुर्यावदाभूतसंप्लवम् ॥ ७.१,१४.२१

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे रुद्राविर्भाववर्णनं नाम चतुर्दशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः १५

https://sa.wikisource.org/s/hys

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | पूर्व भागः

वायुरुवाच

यदा पुनः प्रजाः सृष्टा न व्यवर्धन्त वेधसः ॥ ७.१,१५.१

तदा मैथुनजां सृष्टिं ब्रह्मा कर्तुममन्यत ॥ ७.१,१५.१

न निर्गतं पुरा यस्मान्नारीणां कुलमीश्वरात् ॥ ७.१,१५.२

तेन मैथुनजां सृष्टिं न शशाक पितामहः ॥ ७.१,१५.२

ततस्स विदधे बुद्धिमर्थनिश्चयगामिनीम् ॥ ७.१,१५.३

प्रजानमेव वृद्ध्यर्थं प्रष्टव्यः परमेश्वर ॥ ७.१,१५.३

प्रसादेन विना तस्य न वर्धेरन्निमाः प्रजाः ॥ ७.१,१५.४

एवं संचिन्त्य विश्वात्मा तपः कर्तुं प्रचक्रमे ॥ ७.१,१५.४

तदाद्या परमा शक्तिरनंता लोकभाविनी ॥ ७.१,१५.५

आद्या सूक्ष्मतरा शुद्धा भावगम्या मनोहरा ॥ ७.१,१५.५

निर्गुणा निष्प्रपञ्चा च निष्कला निरुपप्लवा ॥ ७.१,१५.६

निरंतरतरा नित्या नित्यमीश्वरपार्श्वगा ॥ ७.१,१५.६

तया परमया शक्त्या भगवंतं त्रियम्बकम् ॥ ७.१,१५.७

संचिन्त्य हृदये ब्रह्मा तताप परमं तपः ॥ ७.१,१५.७

तीव्रेण तपसा तस्य युक्तस्य परमेष्ठिनः ॥ ७.१,१५.८

अचिरेणैव कालेन पिता संप्रतुतोष ह ॥ ७.१,१५.८

ततः केनचिदंशेन मूर्तिमाविश्य कामपि ॥ ७.१,१५.९

अर्धनारीश्वरो भूत्वा ययौ देवस्स्वयं हरः ॥ ७.१,१५.९

तं दृष्ट्वा परमं देवं तमसः परमव्ययम् ॥ ७.१,१५.१०

अद्वितीयमनिर्देश्यमदृश्यमकृतात्मभिः ॥ ७.१,१५.१०

सर्वलोकविधातारं सर्वलोकेश्वरेश्वरम् ॥ ७.१,१५.११

सर्वलोकविधायिन्या शक्त्या परमया युतम् ॥ ७.१,१५.११

अप्रतर्क्यमनाभासममेयमजरं ध्रुवम् ॥ ७.१,१५.१२

अचलं निर्गुणं शांतमनंतमहिमास्पदम् ॥ ७.१,१५.१२
सर्वगं सर्वदं सर्वसदसद्व्यक्तिवर्जितम् ॥ ७.१,१५.१३
सर्वोपमाननिर्मुक्तं शरण्यं शाश्वतं शिवम् ॥ ७.१,१५.१३
प्रणम्य दंडवद्ब्रह्मा समुत्थाय कृतांजलिः ॥ ७.१,१५.१४
श्रद्धाविनयसंपन्नैः श्राव्यैः संस्करसंयुतैः ॥ ७.१,१५.१४
यथार्थयुक्तसर्वार्थैर्वेदार्थपरिबृंहितैः ॥ ७.१,१५.१५
तुष्टाव देवं देवीं च सूक्तैः सूक्ष्मार्थगोचरैः ॥ ७.१,१५.१५
ब्रह्मोवाच
जय देव महादेव जयेश्वर महेश्वर ॥ ७.१,१५.१६
जय सर्वगुण श्रेष्ठ जय सर्वसुराधिप ॥ ७.१,१५.१६
जय प्रकृति कल्याणि जय प्रकृतिनायिके ॥ ७.१,१५.१७
जय प्रकृतिदूरे त्वं जय प्रकृतिसुन्दरि ॥ ७.१,१५.१७
जयामोघमहामाय जयामोघ मनोरथ ॥ ७.१,१५.१८
जयामोघमहालील जयामोघमहाबल ॥ ७.१,१५.१८
जय विश्वजगन्मातर्जय विश्वजगन्मये ॥ ७.१,१५.१९
जय विश्वजगद्धात्रि जय विश्वजगत्सखि ॥ ७.१,१५.१९
जय शाश्वतिकैश्वर्ये जय शाश्वतिकालय ॥ ७.१,१५.२०
जय शाश्वतिकाकार जय शाश्वतिकानुग ॥ ७.१,१५.२०
जयात्मत्रयनिर्मात्रि जयात्मत्रयपालिनि ॥ ७.१,१५.२१
जयात्मत्रयसंहर्त्रि जयात्मत्रयनायिके ॥ ७.१,१५.२१
जयावलोकनायत्तजगत्कारणबृंहण ॥ ७.१,१५.२२
जयोपेक्षाकटाक्षोत्थहुतभुग्भुक्तभौतिक ॥ ७.१,१५.२२
जय देवाद्यविज्ञेये स्वात्मसूक्ष्मदृशोज्ज्वले ॥ ७.१,१५.२३
जय स्थूलात्मशक्त्येशेजय व्याप्तचराचरे ॥ ७.१,१५.२३
जय नामैकविन्यस्तविश्वतत्त्वसमुच्चय ॥ ७.१,१५.२४
जयासुरशिरोनिष्ठश्रेष्ठानुगकदंबक ॥ ७.१,१५.२४
जयोपाश्रितसंरक्षासंविधानपटीयसि ॥ ७.१,१५.२५
जयोन्मूलितसंसारविषवृक्षांकुरोद्गमे ॥ ७.१,१५.२५

जय प्रादेशिकैश्वर्यवीर्यशौर्यविजृंभण ॥ ७.१,१५.२६
जय विश्वबहिर्भूत निरस्तपरवैभव ॥ ७.१,१५.२६
जय प्रणीतपञ्चार्थप्रयोगपरमामृत ॥ ७.१,१५.२७
जय पञ्चार्थविज्ञानसुधास्तोत्रस्वरूपिणि ॥ ७.१,१५.२७
जयति घोरसंसारमहारोगभिषग्वर ॥ ७.१,१५.२८
जयानादिमलाज्ञानतमःपटलचंद्रिके ॥ ७.१,१५.२८
जय त्रिपुरकालाग्ने जय त्रिपुरभैरवि ॥ ७.१,१५.२९
जय त्रिगुणनिर्मुक्ते जय त्रिगुणमर्दिनि ॥ ७.१,१५.२९
जय प्रथमसर्वज्ञ जय सर्वप्रबोधिक ॥ ७.१,१५.३०
जय प्रचुरदिव्यांग जय प्रार्थितदायिनि ॥ ७.१,१५.३०
क्व देव ते परं धाम क्व च तुच्छं च नो वचः ॥ ७.१,१५.३१
तथापि भगवन् भक्त्या प्रलपंतं क्षमस्व माम् ॥ ७.१,१५.३१
विज्ञाप्यैवंविधैः सूक्तैर्विश्वकर्मा चतुर्मुखः ॥ ७.१,१५.३२
नमश्चकार रुद्राय रद्राण्यै च मुहुर्मुहुः ॥ ७.१,१५.३२
इदं स्तोत्रवरं पुण्यं ब्रह्मणा समुदीरितम् ॥ ७.१,१५.३३
अर्धनारीश्वरं नाम शिवयोर्हर्षवर्धनम् ॥ ७.१,१५.३३
य इदं कीर्तयेद्भक्त्या यस्य कस्यापि शिक्षया ॥ ७.१,१५.३४
स तत्फलमवाप्नोति शिवयोः प्रीतिकारणात् ॥ ७.१,१५.३४
सकलभुवनभूतभावनाभ्यां जननविनाशविहीनविग्रहाभ्याम् ॥ ७.१,१५.३५
नरवरयुवतीवपुर्धराभ्यां सततमहं प्रणतोस्मि शंकराभ्याम् ॥ ७.१,१५.३५

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पू शिवशिवास्तुतिवर्णनं नाम पञ्चदशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः १६



वायुरुवाच

अथ देवो महादेवो महाजलदनादया ॥ १

वाचा मधुरगंभीरशिवदश्लक्ष्णवर्णया ॥ १

अर्थसंपन्नपदया राजलक्षणयुक्तया ॥ २

अशेषविषयारंभरक्षाविमलदक्षया ॥ २

मनोहरतरोदारमधुरस्मितपूर्वया ॥ ३

संबभाषे सुसंपीतो विश्वकर्माणमीश्वरः ॥ ३

ईश्वर उवाच

वत्स वत्स महाभाग मम पुत्र पितामह ॥ ४

ज्ञातमेव मया सर्वं तव वाक्यस्य गौरवम् ॥ ४

प्रजानामेव बृद्ध्यर्थं तपस्तप्तं त्वयाधुना ॥ ५

तपसा ऽनेन तुष्टोस्मि ददामि च तवेप्सितम् ॥ ५

इत्युक्त्वा परमोदारं स्वभावमधुरं वचः ॥ ६

ससर्ज वपुषो भागाद्देवीं देववरो हरः ॥ ६

यामाहुर्ब्रह्मविद्वांसो देवीं दिव्यगुणान्विताम् ॥ ७

परस्य परमां शक्तिं भवस्य परमात्मनः ॥ ७

यस्यां न खलु विद्यंते जन्म मृत्युजरादयः ॥ ८

या भवानी भवस्यांगात्समाविरभवत्किल ॥ ८

यस्या वाचो निवर्तन्ते मनसा चेंद्रियैः सह ॥ ९

सा भर्तुर्वपुषो भागाज्जातेव समदृश्यत ॥ ९

या सा जगदिदं कृत्स्नं महिम्ना व्याप्य तिष्ठति ॥ १०

शरीरिणीव स देवी विचित्रं समलक्ष्यत ॥ १०

सर्वं जगदिदं चैषा संमोहयति मायया ॥ ११

ईश्वरात्सैव जाताभूदजाता परमार्थतः ॥ ११

न यस्या परमो भावः सुराणामपि गोचरः ॥ १२
विश्वामरेश्वरी चैव विभक्ता भर्तुरंगतः ॥ १२
तां दृष्ट्वा परमेशानीं सर्वलोकमहेश्वरीम् ॥ १३
सर्वज्ञां सर्वगां सूक्ष्मां सदसद्व्यक्तिवर्जिताम् ॥ १३
परमां निखिलं भासा भासयन्तीमिदं जगत् ॥ १४
प्रणिपत्य महादेवीं प्रार्थयामास वै विराट् ॥ १४
ब्रह्मोवाच
देवि देवेन सृष्टो ऽहमादौ सर्वजगन्मयि ॥ १५
प्रजासर्गे नियुक्तश्च सृजामि सकलं जगत् ॥ १५
मनसा निर्मिताः सर्वे देवि देवादयो मया ॥ १६
न वृद्धिमुपगच्छन्ति सृज्यमानाः पुनः पुनः ॥ १६
मिथुनप्रभवामेव कृत्वा सृष्टिमतः परम् ॥ १७
संवर्धयितुमिच्छामि सर्वा एव मम प्रजाः ॥ १७
न निर्गतं पुरा त्वत्तो नारीणां कुलमव्ययम् ॥ १८
तेन नारीकुलं स्रष्टुं शक्तिर्मम न विद्यते ॥ १८
सर्वासामेव शक्तीनां त्वत्तः खलु समुद्भवः ॥ १९
तस्मात्सर्वत्र सर्वेषां सर्वशक्तिप्रदायिनीम् ॥ १९
त्वामेव वरदां मायां प्रार्थयामि सुरेश्वरीम् ॥ २०
चराचरविवृद्ध्यर्थमंशेनैकेन सर्वगे ॥ २०
दक्षस्य मम पुत्रस्य पुत्री भव भवार्दिनि ॥ २१
एवं सा याचिता देवी ब्रह्मणा ब्रह्मयोनिना ॥ २१
शक्तिमेकां भ्रुवोर्मध्यात्ससर्जात्मसमप्रभाम् ॥ २२
तामाह प्रहसन्प्रेक्ष्य देवदेववरो हरः ॥ २२
ब्रह्माणं तपसाराध्य कुरु तस्य यथेप्सितम् ॥ २३
तामाज्ञां परमेशस्य शिरसा प्रतिगृह्य सा ॥ २३
ब्रह्मणो वचनाद्देवी दक्षस्य दुहिताभवत् ॥ २४
दत्त्वैवमतुलां शक्तिं ब्रह्मणे ब्रह्मरूपिणीम् ॥ २४
विवेश देहं देवस्य देवश्चांतरधीयत ॥ २५

तदा प्रभृति लोके ऽस्मिन् स्त्रियां भोगः प्रतिष्ठितः ॥ २५

प्रजासृष्टिश्च विप्रेंद्रा मैथुनेन प्रवर्तते ॥ २६

ब्रह्मापि प्राप सानन्दं सन्तोषं मुनिपुंगवाः ॥ २६

एतद्वस्सर्वमाख्यातं देव्याः शक्तिसमुद्भवम् ॥ २७

पुण्यवृद्धिकरं श्राव्यं भूतसर्गानुपंगतः ॥ २७

य इदं कीर्तयेन्नित्यं देव्याः शक्तिसमुद्भवम् ॥ २८

पुण्यं सर्वमवाप्नोति पुत्रांश्च लभते शुभान् ॥ २८

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे देवीशक्त्युद्भवो नाम षोडशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः १७

https://sa.wikisource.org/s/hyu
< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | पूर्व भागः

अध्याय १७

वायुरुवाच

एवं लब्ध्वा परां शक्तिमीश्वरादेव शाश्वतीम् ॥
मैथुनप्रभवां सृष्टिं कर्तृकामः प्रजापतिः ॥ १
स्वयमप्यद्भुतो नारी चार्धेन पुरुषो ऽभवत् ॥
यार्धेन नारी सा तस्माच्छतरूपा व्यजायत ॥ २
विराजमसृजद्ब्रह्मा सो ऽर्धेन पुरुषो ऽभवत् ॥
स वै स्वायंभुवः पूर्वं पुरुषो मनुरुच्यते ॥ ३
सा देवी शतरूपा तु तपः कृत्वा सुदुश्चरम् ॥
भर्तारं दीप्तयशसं मनुमेवान्वपद्यत ॥ ४
तस्मात्तु शतरूपा सा पुत्रद्वयमसूयत ॥
प्रियव्रतोत्तानपादौ पुत्रौ पुत्रवतां वरौ ॥ ५
कन्ये द्वे च महाभागे याभ्यां जातास्त्विमाः प्रजाः ॥
आकूतिरेका विज्ञेया प्रसूतिरपरा स्मृता ॥ ६
स्वायंभुवः प्रसूतिं च ददौ दक्षाय तां प्रभुः ॥
रुचेः प्रजापतिश्चैव चाकूतिं समपादयत् ॥ ७
आकूत्यां मिथुनं जज्ञे मानसस्य रुचेः शुभम् ॥
यज्ञश्च दक्षिणा चैव याभ्यां संवर्तितं जगत् ॥ ८
स्वायंभुवसुतायां तु प्रसूत्यां लोकमातरः १ ॥
चतस्रो विंशतिः कन्या दक्षस्त्वजनयत्प्रभुः ॥ ९
श्रद्धा लक्ष्मीर्धृतिः पुष्टिस्तुष्टिर्मेधा क्रिया तथा ॥
बुद्धिर्लज्जा वपुः शांतिस्सिद्धिः कीर्तिस्त्रयोदशी ॥ १०
पत्न्यर्थं प्रतिजग्राह धर्मो दाक्षायणीः प्रभुः ॥
ताभ्यः शिष्टा यवीयस्य एकादश सुलोचनाः ॥ ११
ख्यातिः सत्यर्थसंभूतिः स्मृतिः प्रीतिः क्षमा तथा ॥
सन्नतिश्चानसूया च ऊर्जा स्वाहा स्वधा तथा ॥ १२
भृगुश्शर्वो मरीचिश्च अंगिराः पुलहः क्रतुः ॥

पुलस्त्यो ऽत्रिर्विशिष्ठश्च पावकः पितरस्तथा ॥ १३
ख्यात्याद्या जगृहुः कन्यामुनयो मुनिसत्तमाः ॥
कामाद्यास्तु यशोंता ये ते त्रयोदश सूनवः ॥ १४
धर्मस्य जज्ञिरे तास्तु श्रद्धाद्यास्सुसुखोत्तराः ॥
दुःखोत्तराश्च हिंसायामधर्मस्य च संततौ ॥ १५
निकृत्यादय उत्पन्नाःपुत्राश्च धर्मलक्षणाः ॥
नैषां भार्याश्च पुत्रा वा सर्वे त्वनियमाः स्मृताः ॥ १६
स एष तामसस्सर्गो जज्ञे धर्मनियामकः ॥
या सा दक्षस्य दुहिता रुद्रस्य दयिता सती ॥ १७
भर्तृनिन्दाप्रसंगेन त्यक्त्वा दाक्षायिणीं तनुम् ॥
दक्षं च दक्षभार्यां च विनिंद्य सह बन्धुभिः ॥ १८
सा मेनायामाविरभूत्पुत्री हिमवतो गिरेः ॥
रुद्रस्तु तां सतीं दृष्ट्वा रुद्रांस्त्वात्मसमप्रभान् ॥ १९
यथासृजदसंख्यातांस्तथा कथितमेव च ॥
भृगोः ख्यात्यां समुत्पन्ना लक्ष्मीर्नारायणप्रिया ॥ २०
देवौ धातृविधातारौ मन्वंतरविधारिणौ ॥
तयोर्वै पुत्रपौत्राद्याश्शतशो ऽथ सहस्रशः ॥ २१
स्वायंभुवे ऽंतरे नीताः सर्वे ते भार्गवा मताः ॥
मरीचेरपि संभूतिः पौर्णमासमसूयत ॥ २२
कन्याचतुष्टयं चैव महीयांसस्तदन्वयाः ॥
येषां वंशे समुत्पन्नो बहुपुत्रस्य कश्यपः ॥ २३
स्मृतिश्चांगिरसः पत्नी जनयामास वै सुतौ ॥
आग्नीध्रं शरभञ्चैव तथा कन्याचतुष्टयम् ॥ २४
तदीयाः पुत्रपौत्राश्च येतीतास्ते सहस्रशः ॥
प्रीत्यां पुलस्त्यभार्यायां दन्तोग्निरभवत्सुतः ॥
पूर्वजन्मनि योगस्त्यस्स्मृतः स्वायंभुवे ऽंतरे ॥ २५
तत्संततीया बहवः पौलस्त्या इति विश्रुताः ॥
क्षमा तु सुषुवे पुत्रान्पुलहस्य प्रजापतेः ॥ २६
कर्दमश्च सुरिश्चैव सहिष्णुश्चेति ते त्रयः ॥
त्रेताग्निवर्चसस्सर्वे येषां वंशः प्रतिष्ठितः ॥ २७
क्रतोः क्रतुसमान्भार्या सन्नतिस्सुषुवे सुतान् ॥
नैषां भार्याश्च पुत्राश्च सर्वे ते ह्यूर्ध्वरेतसः ॥ २८
षष्टिस्तानि सहस्राणि वालखिल्या इति स्मृताः ॥

अनूरोरग्रतो यांति परिवार्य दिवाकरम् ॥ २९
अत्रेर्भार्यानुसूया च पञ्चात्रेयानसूयत ॥
कन्यकां च श्रुतिं नाम माता शंखपदस्य च ॥ ३०
सत्यनेत्रश्च हव्यश्च आपोमूर्तिश्शनैश्चरः ॥
सोमश्च पञ्चमस्त्वेते पञ्चात्रेयाः प्रकीर्तिताः ॥ ३१
तेषां पुत्राश्च पौत्राश्च ह्यात्रेयाणां महात्मनाम् ॥
स्वायंभुवे ऽंतरे ऽतीताः शतशो ऽथ सहस्रशः ॥ ३२
ऊर्जायां तु वसिष्ठस्य पुत्रा वै सप्त जज्ञिरे ॥
ज्यायसी च स्वसा तेषां पुंडरीका सुमध्यमा ॥ ३३
रजो गात्रोर्ध्वबाहू च सवनश्चानयश्च यः ॥
सुतपाश्शुक्र इत्येते सप्त सप्तर्षयः स्मृताः ॥ ३४
गोत्राणि नामभिस्तेषां वासिष्ठानां महात्मनाम् ॥
स्वायंभुवे ऽंतरे ऽतीतान्यर्बुदानि शतानि च ॥ ३५
इत्येष ऋषिसर्गस्तु सानुबंधः प्रकीर्तितः ॥
समासाद्विस्तराद्वक्तुमशक्यो ऽयमिति द्विजाः ॥ ३६
यो ऽसौ रुद्रात्मको बह्निर्ब्रह्मणो मानसस्सुतः ॥
स्वाहा तस्य प्रिया लेभे पुत्रांस्त्रीनमितौजसः ॥ ३७
पावकः पवमानश्च शुचिरित्येष ते त्रयः ॥
निर्मंथ्यः पवमानस्स्याद्वैद्युतः पावकस्स्मृतः ॥ ३८
सूर्ये तपति यश्चासौ शुचिः सौर उदाहृतः ॥
हव्यवाहः कव्यवाहः सहरक्षा इति त्रयः ॥ ३९
त्रयाणां क्रमशः पुत्रा देवपितृसुराश्च ते ॥
एतेषां पुत्रपौत्राश्च चत्वारिंशन्नवैव ते ॥ ४०
काम्यनैमित्तिकाजस्रकर्मसु त्रिषु संस्थिताः ॥
सर्वे तपस्विनो ज्ञेयाः सर्वे व्रतभृतस्तथा ॥ ४१
सर्वे रुद्रात्मकश्चैव सर्वे रुद्रपरायणाः ॥
तस्मादग्निमुखे यत्तद्धुतं स्यादेव केनचित् ॥ ४२
तत्सर्वं रुद्रमुद्दिश्य दत्तं स्यान्नात्र संशयः ॥
इत्येवं निश्चयोग्नीनामनुक्रांतो यथातथम् ॥ ४३
नातिविस्तरतो विप्राः पितॄन्वक्ष्याम्यतः परम् ॥
यस्मात्षड्ऋतवस्तेषां स्थानं स्थानाभिमानिनाम् ॥ ४४
ऋतवः पितरस्तस्मादित्येषा वैदिकी श्रुतिः ॥
युष्माद्दतुषु सर्वे हि जायंते स्थास्नुजंगमा ॥ ४५

तस्मादेते पितर आर्तवा इति च श्रुतम् ॥
एवं पितॄणामेतेषामृतुकालाभिमानिनाम् ॥ ४६
आत्मैश्वर्या महात्मानस्तिष्ठंतीहाब्भ्रसंगमात् ॥
आग्निष्वात्ता बर्हिषदः पितरो द्विविधाः स्मृताः ॥ ४७
अयज्वानश्च यज्वानः क्रमात्ते मृहमेधिनः ॥
स्वधासूत पितृभ्यश्च द्वे कन्ये लोकविश्रुते ॥ ४८
मेनां च धरणीं चैव याभ्यां विश्वमिदं धृतम् ॥
अग्निष्वात्तसुता मेना धरणी बर्हिषत्सुता ॥ ४९
मेना हिमवतः पत्नी मैनाकं क्रौंचमेव च ॥
गौरीं गंगां च सुषुवे भवांगाश्लेषपावनीम् ॥ ५०
मेरोस्तु धरणी पत्नी दिव्यौषधिसमन्वितम् ॥
मंदरं सुषुवे पुत्रं चित्रिसुन्दरकन्धरम् ॥ ५१
स एव मंदरः श्रीमान्मेरुपुत्रस्तपोबलात् ॥
साक्षाच्छ्रीकंठनाथस्य शिवस्यावसथं गतः ॥ ५२
सासूता धरणी भूयस्त्रिंशत्कन्याश्च विश्रुताः ॥
वेलां च नियतिं चैव तृतीयामपि चायतिम् ॥ ५३
आयतिर्नियतिश्चैव पत्न्यौ द्वे भृगुपुत्रयोः ॥
स्वायंभुवे ऽतरे पूर्वं कथितस्ते तदन्वयः ॥ ५४
सुषुवे सागराद्वेला कन्यामेकामनिंदिताम् ॥
सवर्णां नाम सामुद्रीं पत्नीं प्राचीनबर्हिषः ॥ ५५
सामुद्री सुषुवे पुत्रान्दश प्राचीनबर्हिषः ॥
सर्वे प्राचेतसा नाम धनुर्वेदस्य पारगाः ॥ ५६
येषां स्वायंभुवे दक्षः पुत्रत्वमगमत्पुरा ॥
त्रियम्बकस्य शापेन चाक्षुषस्यांतरे मनोः ॥ ५७
इत्येते ब्रह्मपुत्राणां धर्मादीनाम्महात्मनाम् ॥
नातिसंक्षेपतो विप्रा नाति विस्तरतः क्रमात् ॥ ५८
वर्णिता वै मया वंशा दिव्या देवगणान्विताः ॥
क्रियावंतः प्रजावंतो महर्धिभिरलंकृताः ॥ ५९
प्रजानां संनिवेशो ऽयं प्रजापतिसमुद्भवः ॥
न हि शक्यः प्रसंख्यातुं वर्षकोटिशतैरपि ॥ ६०
राज्ञामपि च यो वंशो द्विधा सो ऽपि प्रवर्तते ॥
सूर्यवंशस्सोमवंश इति पुण्यतमः क्षितौ ॥ ६१
इक्ष्वाकुरम्बरीषश्च ययातिर्नाहुषादयः ॥

पुण्यश्लोकाः श्रुता ये ऽत्र ते पि तद्वंशसंभवाः ॥ ६२
अन्ये च राजऋषयो नानावीर्यसमन्विता ॥
किं तैः फलमनुत्क्रांतैरुक्तपूर्वैः पुरातनैः ॥ ६३
किं चेश्वरकथा वृत्ता यत्र तत्रान्यकीर्तनम् ॥
न सद्भिः संमतं मत्वा नोत्सहे बहुभाषितुम् ॥ ६४
प्रसंगादीश्वरस्यैव प्रभावद्योतनादपि ॥
सर्गादयो ऽपि कथिता इत्यत्र तत्प्रविस्तरैः ॥ ६५

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे सृष्टिकथनं नाम सप्तदशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः १८

https://sa.wikisource.org/s/hyv

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | पूर्व भागः

ऋषय ऊचुः

देवी दक्षस्य तनया त्यक्त्वा दाक्षायणी तनुम् ॥ ७.१,१८.१

कथं हिमवतः पुत्री मेनायामभवत्पुरा ॥ ७.१,१८.१

कथं च निन्दितो रुद्रो दक्षेण च महात्मना ॥ ७.१,१८.२

निमित्तमपि किं तत्र येन स्यान्निंदितो भवः ॥ ७.१,१८.२

उत्पन्नश्च कथं दक्षो अभिशापाद्भवस्य तु ॥ ७.१,१८.३

चाक्षुषस्यांतरे पूर्वं मनोः प्रब्रूहि मारुत ॥ ७.१,१८.३

वायुरुवाव

शृण्वंतु कथयिष्यामि दक्षस्य लघुचेतसः ॥ ७.१,१८.४

वृत्तं पापात्प्रमादाच्च विश्वामरविदूषणम् ॥ ७.१,१८.४

पुरा सुरासुराः सर्वे सिद्धाश्च परमर्षयः ॥ ७.१,१८.५

कदाचिद्द्रष्टुमीशानं हिमवच्छिखरं ययुः ॥ ७.१,१८.५

तदा देवश्च देवी च दिव्यासनगतावुभौ ॥ ७.१,१८.६

दर्शनं ददतुस्तेषां देवादीनां द्विजोत्तमाः ॥ ७.१,१८.६

तदानीमेव दक्षो ऽपि गतस्तत्र सहामरैः ॥ ७.१,१८.७

जामातरं हरं द्रष्टुं द्रष्टुं चात्मसुतां सतीम् ॥ ७.१,१८.७

तदात्मगौरवाद्देवो देव्या दक्षे समागते ॥ ७.१,१८.८

देवादिभ्यो विशेषेण न कदाचिदभूत्स्मृतिः ॥ ७.१,१८.८

तस्य तस्याः परं भावमज्ञातुश्चापि केवलम् ॥ ७.१,१८.९

पुत्रीत्येवं विमूढस्य तस्यां वैरमजायत ॥ ७.१,१८.९

ततस्तेनैव वैरेण विधिना च प्रचोदितः ॥ ७.१,१८.१०

नाजुवाह भवं दक्षो दीक्षितस्तामपि द्विषन् ॥ ७.१,१८.१०

अन्याञ्१ आमातरस्सर्वानाहूय स यथाक्रमम् ॥ ७.१,१८.११

शतशः पुष्कलामर्चाञ्चकार च पृथक्पृथक् ॥ ७.१,१८.११

तथा तान्संगताञ्छ्रुत्वा नारदस्य मुखात्तदा ॥ ७.१,१८.१२
ययौ रुद्राय रुद्राणी विज्ञाप्य भवनं पितुः ॥ ७.१,१८.१२
अथ संनिहितं दिव्यं विमानं विश्वतोमुखम् ॥ ७.१,१८.१३
लक्षणाढ्यं सुखारोहमतिमात्रमनोहरम् ॥ ७.१,१८.१३
तप्तजांबूनदप्रख्यं चित्ररत्नपरिष्कृतम् ॥ ७.१,१८.१४
मुक्तामयवितानाग्र्यं स्रग्दामसमलंकृतम् ॥ ७.१,१८.१४
तप्तकंचननिर्व्यूहं रत्नस्तंभशतावृतम् ॥ ७.१,१८.१५
वज्रकल्पितसोपानं विद्रुमस्तंभतोरणम् ॥ ७.१,१८.१५
पुष्पपट्टपरिस्तीर्णं चित्ररत्नमहासनम् ॥ ७.१,१८.१६
वज्रजालकिरच्छिद्रमच्छिद्रमणिकुट्टिमम् ॥ ७.१,१८.१६
मणिदंडमनोज्ञेन महावृषभलक्ष्मणा ॥ ७.१,१८.१७
अलंकृतपुरोभागमब्भ्रशुब्भ्रेण केतुना ॥ ७.१,१८.१७
रत्नकंचुकगुप्तांगैश्चित्रवेत्रकपाणिभिः ॥ ७.१,१८.१८
अधिष्ठितमहाद्वारमप्रधृष्यैर्गुणेश्वरैः ॥ ७.१,१८.१८
मृदंगतालगीतादिवेणुवीणाविशारदैः ॥ ७.१,१८.१९
विदग्धवेषभाषैश्च बहुभिः स्त्रीजनैर्वृतम् ॥ ७.१,१८.१९
आरुरोह महादेवी सह प्रियसखीजनैः ॥ ७.१,१८.२०
चामारव्यञ्जनं तस्या वज्रदंडमनोहरे ॥ ७.१,१८.२०
गृहीत्वा रुद्रकन्ये द्वे विवीजतुरुभे शुभे ॥ ७.१,१८.२१
तदाचामरयोर्मध्ये देव्या वदनमाबभौ ॥ ७.१,१८.२१
अन्योन्यं युध्यतोर्मध्ये हंसयोरिव पंकजम् ॥ ७.१,१८.२२
छत्रं शशिनिभं तस्याश्चूडोपरि सुमालिनी ॥ ७.१,१८.२२
धृतमुक्तापरिक्षिप्तं बभार प्रेमनिर्भरा ॥ ७.१,१८.२३
तच्छत्रमुज्ज्वलं देव्या रुरुचे वदनोपरि ॥ ७.१,१८.२३
उपर्यमृतभांडस्य मंडलं शशिनो यथा ॥ ७.१,१८.२४
अथ चाग्रे समासीना सुस्मितास्या शुभावती ॥ ७.१,१८.२४
अक्षद्यूतविनोदेन रमयामास वै सतीम् ॥ ७.१,१८.२५
सुयशाः पादुके देव्याश्शुभे रत्नपरिष्कृते ॥ ७.१,१८.२५

स्तनयोरंतरे कृत्वा तदा देवीमसेवतः ॥ ७.१,१८.२६
अन्या कांचनचार्वंगी दीप्तं जग्राह दर्पणम् ॥ ७.१,१८.२६
अपरा तालवृन्तं च परा तांबूलपेटिकाम् ॥ ७.१,१८.२७
काचित्क्रीडाशुकं चारु करे ऽकुरुत भामिनी ॥ ७.१,१८.२७
काचित्तु सुमनोज्ञानि पुष्पाणि सुरभीणि च ॥ ७.१,१८.२८
काचिदाभरणाधारं बभार कमलेक्षणा ॥ ७.१,१८.२८
काचिच्च पुनरालेपं सुप्रसूतं शुभांजनम् ॥ ७.१,१८.२९
अन्याश्च सदृशास्तास्ता यथास्वमुचितक्रियाः ॥ ७.१,१८.२९
आवृत्या तां महादेवीमसेवंत समंततः ॥ ७.१,१८.३०
अतीव शुशुभे तासामंतरे परमेश्वरी ॥ ७.१,१८.३०
तारापरिषदो मध्ये चंद्रलेखेव शारदी ॥ ७.१,१८.३१
ततः शंखसमुत्थस्य नादस्य समनंतरम् ॥ ७.१,१८.३१
प्रास्थानिको महानादः पटहः समताड्यत ॥ ७.१,१८.३२
ततो मधुरवाद्यानि सह तालोद्यतैस्स्वनैः ॥ ७.१,१८.३२
अनाहतानि सन्नेदुः काहलानां शतानि च ॥ ७.१,१८.३३
सायुधानां गणेशानां महेशसमतेजसाम् ॥ ७.१,१८.३३
सहस्राणि शतान्यष्टौ तदानीं पुरतो ययुः ॥ ७.१,१८.३४
तेषां मध्ये वृषारूढो गजारूढो यथा गुरुः ॥ ७.१,१८.३४
जगाम गणपः श्रीमान् सोमनंदीश्वरार्चितः ॥ ७.१,१८.३५
देवदुंदुभयो नेदुर्दिवि दिव्यसुखा घनाः ॥ ७.१,१८.३५
ननृतुर्मुनयस्सर्वे मुमुदुः सिद्धयोगिनः ॥ ७.१,१८.३६
ससृजुः पुष्पवृष्टिं च वितानोपरि वारिदाः ॥ ७.१,१८.३६
तदा देवगणैश्चान्यैः पथि सर्वत्र संगता ॥ ७.१,१८.३७
क्षणादिव पितुर्गेहं प्रविवेश महेश्वरी ॥ ७.१,१८.३७
तां दृष्ट्वा कुपितो दक्षश्चात्मनः क्षयकारणात् ॥ ७.१,१८.३८
तस्या यवीयसीभ्यो ऽपि चक्रे पूजाम सत्कृताम् ॥ ७.१,१८.३८
तदा शशिमुखी देवी पितरं सदसि स्थितम् ॥ ७.१,१८.३९
अंबिका युक्तमव्यग्रमुवाचाकृपणं वचः ॥ ७.१,१८.३९

देव्युवाच

ब्रह्मादयः पिशाचांता यस्याज्ञावशवर्तिनः ॥ ७.१,१८.४०

स देवस्सांप्रतं तात विधिना नार्चितः किल ॥ ७.१,१८.४०

तदास्तां मम ज्यायस्याः पुत्र्याः पूजां किमीदृशीम् ॥ ७.१,१८.४१

असत्कृतामवज्ञाय कृतवानसि गर्हितम् ॥ ७.१,१८.४१

एवमुक्तो ऽब्रवीदेनां दक्षः क्रोधादमर्षितः ॥ ७.१,१८.४२

त्वत्तः श्रेष्ठा विशिष्टाश्च पूज्या बालाः सुता मम ॥ ७.१,१८.४२

तासां तु ये च भर्तारस्ते मे बहुमता मुदा ॥ ७.१,१८.४३

गुनैश्चाप्यधिकास्सर्वैर्भर्तुस्ते त्र्यंबकादपि ॥ ७.१,१८.४३

स्तब्धात्मा तामसश्शर्वस्त्वमिमं समुपाश्रिता ॥ ७.१,१८.४४

तेन त्वामवमन्ये ऽहं प्रतिकूलो हि मे भवः ॥ ७.१,१८.४४

तथोक्ता पितरं दक्षं क्रुद्धा देवी तमब्रवीत् ॥ ७.१,१८.४५

शृण्वतामेव सर्वेषां ये यज्ञसदसि स्थिताः ॥ ७.१,१८.४५

अकस्मान्मम भर्तारमजाताशेषदूषणम् ॥ ७.१,१८.४६

वाचा दूषयसे दक्ष साक्षाल्लोकमहेश्वरम् ॥ ७.१,१८.४६

विद्याचौरो गुरुद्रोही वेदेश्वरविदूषकः ॥ ७.१,१८.४७

त एते बहुपाप्मानस्सर्वे दंड्या इति श्रुतिः ॥ ७.१,१८.४७

तस्मादत्युत्कटस्यास्य पापस्य सदृशो भृशम् ॥ ७.१,१८.४८

सहसा दारुणो दंडस्तव दैवाद्भविष्यति ॥ ७.१,१८.४८

त्वया न पूजितो यस्माद्देवदेवस्त्रियंबकः ॥ ७.१,१८.४९

तस्मात्तव कुलं दुष्टं नष्टमित्यवधारय ॥ ७.१,१८.४९

इत्युक्त्वा पितरं रुष्टा सती संत्यक्तसाध्वसा ॥ ७.१,१८.५०

तदीयां च तनुं त्यक्त्वा हिमवंतं ययौ गिरिम् ॥ ७.१,१८.५०

स पर्वतपरः श्रीमांल्लब्धपुण्यफलोदयः ॥ ७.१,१८.५१

तदर्थमेव कृतवान् सुचिरं दुश्चरं तपः ॥ ७.१,१८.५१

तस्मात्तमनुगृह्णाति भूधरेश्वरमीश्वरी ॥ ७.१,१८.५२

स्वेच्छया पितरं चक्रे स्वात्मनो योगमायया ॥ ७.१,१८.५२

यदा गता सती दक्षं विनिंद्य भयविह्वला ॥ ७.१,१८.५३

तदा तिरोहिता मंत्रा विहतश्च ततो ऽध्वरः ॥ ७.१,१८.५३

तदुपश्रुत्य गमनं देव्यास्त्रिपुरुमर्दनः ॥ ७.१,१८.५४

दक्षाय च ऋषिभ्यश्च चुकोप च शशाप तान् ॥ ७.१,१८.५४

यस्मादवमता दक्षमत्कृते ऽनागसा सती ॥ ७.१,१८.५५

पूजिताश्चेतराः सर्वाः स्वसुता भर्तृभिः सह ॥ ७.१,१८.५५

वैवस्वते ऽंतरे तस्मात्तव जामातरस्त्वमी ॥ ७.१,१८.५६

उत्पत्स्यंते समं सर्वे ब्रह्मयज्ञेष्वयोनिजाः ॥ ७.१,१८.५६

भविता मानुषो राजा चाक्षुषस्य त्वमन्वये ॥ ७.१,१८.५७

प्राचीनबर्हिषः पौत्रः पुत्रश्चापि प्रचेतसः ॥ ७.१,१८.५७

अहं तत्रापि ते विघ्नमाचरिष्यामि दुर्मते ॥ ७.१,१८.५८

धर्मार्थकामयुक्तेषु कर्मस्वपि पुनः पुनः ॥ ७.१,१८.५८

तेनैवं व्याहृतो दक्षो रुद्रेणामिततेजसा ॥ ७.१,१८.५९

स्वायंभुवीं तनुं त्यक्त्वा पपात भुवि दुःखितः ॥ ७.१,१८.५९

ततः प्राचेतसो दक्षो जज्ञे वै चाक्षुषे ऽन्तरे ॥ ७.१,१८.६०

प्राचीनबर्हिषः पौत्रः पुत्रश्चैव प्रचेतसाम् ॥ ७.१,१८.६०

भृग्वादयो ऽपि जाता वै मनोर्वैवस्वतस्य तु ॥ ७.१,१८.६१

अंतरे ब्रह्मणो यज्ञे वारुणीं बिभ्रतस्तनुम् ॥ ७.१,१८.६१

तदा दक्षस्य धर्मार्थं यज्ञे तस्य दुरात्मनः ॥ ७.१,१८.६२

महेशः कृतवान्विघ्नं मना ववस्वते सति ॥ ७.१,१८.६२

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे सतीदेहत्यागो नामाष्टादशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः १९



ऋषय ऊचुः

कथं दक्षस्य धर्मार्थं प्रवृत्तस्य दुरात्मनः ॥ ७.१,१९.१

महेशः कृतवान् विघ्नमेतदिच्छाम वेदितुम् ॥ ७.१,१९.१

वायुरुवाच

विश्वस्य जगतो मातुरपि देव्यास्तपोबलात् ॥ ७.१,१९.२

पितृभावमुपागम्य मुदिते हिमवद्गिरौ ॥ ७.१,१९.२

देवे ऽपि तत्कृतोद्वाहे हिमवच्छिखरालये ॥ ७.१,१९.३

संकीडति तया सार्धं काले बहुतरे गते ॥ ७.१,१९.३

वैवस्वते ऽंतरे प्राप्ते दक्षः प्राचेतसः स्वयम् ॥ ७.१,१९.४

अश्वमेधेन यज्ञेन यक्ष्यमाणो ऽन्वपद्यत ॥ ७.१,१९.४

ततो हिमवतः पृष्ठे दक्षो वै यज्ञमाहरत् ॥ ७.१,१९.५

गंगाद्वारे शुभे देशे ऋषिसिद्धनिषेविते ॥ ७.१,१९.५

तस्य तस्मिन्मखेदेवाः सर्वे शक्र पुरोगमाः ॥ ७.१,१९.६

गमनाय समागम्य बुद्धिमापेदिरे तदा ॥ ७.१,१९.६

आदित्या वसवो रुद्रास्साध्यास्सह मरुद्गणैः ॥ ७.१,१९.७

ऊष्मपाः सोमपाश्चैव आज्यपा धूमपास्तथा ॥ ७.१,१९.७

अश्विनौ पितरश्चैव तथा चान्ये महर्षयः ॥ ७.१,१९.८

विष्णुना सहिताः सर्वे स्वागता यज्ञभागिनः ॥ ७.१,१९.८

दृष्ट्वा देवकुलं सर्वमीश्वरेण विनागतम् ॥ ७.१,१९.९

दधीचो मन्युनाविष्टो दक्षमेवमभाषत ॥ ७.१,१९.९

दधीच उवाच

अप्रपूज्ये चैव पूजा पूज्यानां चाप्य पूजने ॥ ७.१,१९.१०

नरः पापमवाप्नोति महद्वै नात्र संशयः ॥ ७.१,१९.१०

असतां संमतिर्यत्र सतामवमतिस्तथा ॥ ७.१,१९.११

दंडो देवकृतस्तत्र सद्यः पतति दारुणः ॥ ७.१,१९.११

एवमुक्त्वा तु विप्रर्षिः पुनर्दक्षमभाषत ॥ ७.१,१९.१२

पूज्यं तु पशुभर्तारं कस्मान्नार्चयसे प्रभुम् ॥ ७.१,१९.१२

दक्ष उवाच

संति मे बहवो रुद्राः शूलहस्ताः कपर्दिनः ॥ ७.१,१९.१३

एकादशावस्थिता ये नान्यं वेद्मि महेश्वरम् ॥ ७.१,१९.१३

दधीच उवाच

किमेभिरमरैरन्यैः पूजितैरध्वरे फलम् ॥ ७.१,१९.१४

राजा चेदध्वरस्यास्य न रुद्रः पूज्यते त्वया ॥ ७.१,१९.१४

ब्रह्मविष्णुमहेशानां स्रष्टा यः प्रभुरव्ययः ॥ ७.१,१९.१५

ब्रह्मादयः पिशाचांता यस्य कैंकर्यवादिनः ॥ ७.१,१९.१५

प्रकृतीनां परश्चैव पुरुषस्य च यः परः ॥ ७.१,१९.१६

चिंत्यते योगविद्वद्भि ऋषिभिस्तत्त्वदर्शिभिः ॥ ७.१,१९.१६

अक्षरं परमं ब्रह्म ह्यसच्च सदसच्च यत् ॥ ७.१,१९.१७

अनादिमध्यनिधनमप्रतर्क्यं सनातनम् ॥ ७.१,१९.१७

यः स्रष्टा चैव संहर्ता भर्ता चैव महेश्वरः ॥ ७.१,१९.१८

तस्मादन्यं न पश्यामि शंकरात्मानमध्वरे ॥ ७.१,१९.१८

दक्ष उवाच

एतन्मखेशस्य सुवर्णपात्रे हविः समस्तं विधिमंत्रपूतम् ॥ ७.१,१९.१९

विष्णोर्नयाम्यप्रतिमस्य भागं प्रभोर्विभज्यावहनीयमद्य ॥ ७.१,१९.१९

दधीच उवाच

यस्मान्नाराधितो रुद्रस्सर्वदेवेश्वरेश्वरः ॥ ७.१,१९.२०

तस्माद्दक्ष तवाशेषो यज्ञो ऽयं न भविष्यति ॥ ७.१,१९.२०

इत्युक्त्वा वचनं क्रुद्धो दधीचो मुनिसत्तमः ॥ ७.१,१९.२१

निर्गम्य च ततो देशाज्जगाम स्वकमाश्रमम् ॥ ७.१,१९.२१

निर्गते ऽपि मुनौ तस्मिन्देवा दक्षं न तत्यजुः ॥ ७.१,१९.२२

अवश्यमनुभावित्वादनर्थस्य तु भाविनः ॥ ७.१,१९.२२

एतस्मिन्नेव काले तु ज्ञात्वैतत्सर्वमीश्वरात् ॥ ७.१,१९.२३

दग्धुं दक्षाध्वरं विप्रा देवी देवमचोदयत् ॥ ७.१,१९.२३
देव्या संचोदितो देवो दक्षाध्वरजिघांसया ॥ ७.१,१९.२४
ससर्ज सहसा वीरं वीरभद्रं गणेश्वरम् ॥ ७.१,१९.२४
सहस्रवदनं देवं सहस्रकमलेक्षणम् ॥ ७.१,१९.२५
सहस्रमुद्गरधरं सहस्रशरपाणिकम् ॥ ७.१,१९.२५
शूलटंकगदाहस्तं दीप्तकार्मुकधारिणम् ॥ ७.१,१९.२६
चक्रवज्रधरं घोरं चंद्रार्धकृतशेखरम् ॥ ७.१,१९.२६
कुलिशोद्योतितकरं तडिज्ज्वलितमूर्धजम् ॥ ७.१,१९.२७
दंष्ट्राकरालं बिभ्राणं महावक्त्रं महोदरम् ॥ ७.१,१९.२७
विद्युज्जिह्वं प्रलंबोष्ठं मेघसागरनिःस्वनम् ॥ ७.१,१९.२८
वसानं चर्म वैयाघ्रं महद्रुधिरनिस्रवम् ॥ ७.१,१९.२८
गण्डद्वितयसंसृष्टमण्डलीकृतकुण्डलम् ॥ ७.१,१९.२९
वरामरशिरोमालावलीकलितशेखरम् ॥ ७.१,१९.२९
रणन्नूपुरकेयूरमहाकनकभूषितम् ॥ ७.१,१९.३०
रत्नसंचयसंदीप्तं तारहारावृतोरसम् ॥ ७.१,१९.३०
महाशरभशार्दूलसिंहैः सदृशविक्रमम् ॥ ७.१,१९.३१
प्रशस्तमत्तमातंगसमानगमनालसम् ॥ ७.१,१९.३१
शंखचामरकुंदेन्दुमृणालसदृशप्रभम् ॥ ७.१,१९.३२
सतुषारमिवाद्रीन्द्रं साक्षाज्जंगमतां गतम् ॥ ७.१,१९.३२
ज्वालामालापरिक्षिप्तं दीप्तमौक्तिकभूषणम् ॥ ७.१,१९.३३
तेजसा चैव दीव्यंतं युगांत इव पावकम् ॥ ७.१,१९.३३
स जानुभ्यां महीं गत्वा प्रणतः प्रांजलिस्ततः ॥ ७.१,१९.३४
पार्श्वतो देवदेवस्य पर्यतिष्ठद्गणेश्वरः ॥ ७.१,१९.३४
मन्युना चासृजद्भद्रां भद्रकालीं महेश्वरीम् ॥ ७.१,१९.३५
आत्मनः कर्मसाक्षित्वे तेन गंतुं सहैव तु ॥ ७.१,१९.३५
तं दृष्ट्वावस्थितं वीरभद्रं कालाग्निसन्निभम् ॥ ७.१,१९.३६
भद्रया सहितं प्राह भद्रमस्त्विति शंकरः ॥ ७.१,१९.३६
स च विज्ञापयामास सह देव्या महेश्वरम् ॥ ७.१,१९.३७

आज्ञापय महादेव किं कार्यं करवाण्यहम् ॥ ७.१,१९.३७

ततस्त्रिपुरहा प्राह हैमवत्याः प्रियेच्छया ॥ ७.१,१९.३८

वीरभद्रं महाबाहुं वाचा विपुलनादया ॥ ७.१,१९.३८

देवदेव उवाच

प्राचेतसस्य दक्षस्य यज्ञं सद्यो विनाशय ॥ ७.१,१९.३९

भद्रकाल्या सहासि त्वमेतत्कृत्यं गणेश्वर ॥ ७.१,१९.३९

अहमप्यनया सार्धं रैभ्याश्रमसपीपतः ॥ ७.१,१९.४०

स्थित्वा वीक्षे गणेशान विक्रमं तव दुःसहम् ॥ ७.१,१९.४०

वृक्षा कनखले ये तु गंगाद्वारसमीपगाः ॥ ७.१,१९.४१

सुवर्णशृंगस्य गिरेर्मेरुमंदरसंनिभाः ॥ ७.१,१९.४१

तस्मिन्प्रदेशे दक्षस्य युज्ञः संप्रति वर्तते ॥ ७.१,१९.४२

सहसा तस्य यज्ञस्य विघातं कुरु मा चिरम् ॥ ७.१,१९.४२

इत्युक्ते सति देवेन देवी हिमगिरीन्द्रजा ॥ ७.१,१९.४३

भद्रं भद्रं च संप्रेक्ष्य वत्सं धेनुरिवौरसम् ॥ ७.१,१९.४३

आलिंग्य च समाघ्राय मूर्ध्नि षड्वदनं यथा ॥ ७.१,१९.४४

सस्मिता वचनं प्राह मधुरं मधुरं स्वयम् ॥ ७.१,१९.४४

देव्युवाच

वत्स भद्र महाभाग महाबलपराक्रम ॥ ७.१,१९.४५

मत्प्रियार्थं त्वमुत्पन्नो मम मन्युं प्रमार्जक ॥ ७.१,१९.४५

यज्ञेश्वरमनाहूय यज्ञकर्मरतो ऽभवत् ॥ ७.१,१९.४६

दक्षं वैरेण तं तस्माद्भिंधि यज्ञं गणेश्वर ॥ ७.१,१९.४६

यज्ञलक्ष्मीमलक्ष्मीं त्वं भद्र कृत्वा ममाज्ञया ॥ ७.१,१९.४७

यजमानं च तं हत्वा वत्स हिंसय भद्रया ॥ ७.१,१९.४७

अशेषामिव तामाज्ञां शिवयोश्चित्रकृत्ययोः ॥ ७.१,१९.४८

मूर्ध्नि कृत्वा नमस्कृत्य भद्रो गंतुं प्रचक्रमे ॥ ७.१,१९.४८

अथैष भगवान्क्रुद्धः प्रेतावासकृतालयः ॥ ७.१,१९.४९

वीरभद्रो महादेवो देव्या मन्युप्रमार्जकः ॥ ७.१,१९.४९

ससर्ज रोमकूपेभ्यो रोमजाख्यान्गणेश्वरान् ॥ ७.१,१९.५०

दक्षिणाद्भुजदेशात्तु शतकोटिगविश्वरान् ॥ ७.१,१९.५०

पादात्तथोरुदेशाच्च पृष्ठात्पार्श्वान्मुखाद्गलात् ॥ ७.१,१९.५१

गुह्याद्गुल्फाच्छिरोमध्यात्कंठादास्यात्तथोदरात् ॥ ७.१,१९.५१

तदा गणेश्वरैर्भद्रैर्भद्रतुल्यपराक्रमैः ॥ ७.१,१९.५२

संछादितमभूत्सर्वं साकाशविवरं जगत् ॥ ७.१,१९.५२

सर्वे सहस्रहस्तास्ते सहस्रायुधपाणयः ॥ ७.१,१९.५३

रुद्रस्यानुचरास्सर्वे सर्वे रुद्रसमप्रभाः ॥ ७.१,१९.५३

शूलशक्तिगदाहस्ताष्टंकोपलशिलाधराः ॥ ७.१,१९.५४

कालाग्निरुद्रसदृशास्त्रिनेत्राश्च जटाधराः ॥ ७.१,१९.५४

निपेतुर्भृशमाकाशे शतशस्सिंहवाहनाः ॥ ७.१,१९.५५

विनेदुश्च महानादाञ्जलदा इव भद्रजाः ॥ ७.१,१९.५५

तैर्भद्रैर्भगवान्भद्रस्तथा परिवृतो बभौ ॥ ७.१,१९.५६

कालानलशतैर्युक्तो यथांते कालभैरवः ॥ ७.१,१९.५६

तेषां मध्ये समारुह्य वृषेंद्रं वृषभध्वजः ॥ ७.१,१९.५७

जगाम भगवान्भद्रश्शुभमभ्रं यथा भवः ॥ ७.१,१९.५७

तस्मिन्वृषभमारूढे भद्रे तु भसितप्रभः ॥ ७.१,१९.५८

बभार मौक्तिकं छत्रं गृहीतसितचामरः ॥ ७.१,१९.५८

स तदा शुशुभे पार्श्वे भद्रस्य भसितप्रभः ॥ ७.१,१९.५९

भगवानिव शैलेन्द्रः पार्श्वे विश्वजगद्गुरोः ॥ ७.१,१९.५९

सो ऽपि तेन बभौ भद्रः श्वेतचामरपाणिना ॥ ७.१,१९.६०

बालसोमेन सौम्येन यथा शूलवरायुधः ॥ ७.१,१९.६०

दध्मौ शंखं सितं भद्रं भद्रस्य पुरतः शुभम् ॥ ७.१,१९.६१

भानुकंपो महातेजा हेमरत्नैरलंकृतः ॥ ७.१,१९.६१

देवदुंदुभयो नेदुर्दिव्यसंकुलनिःस्वनाः ॥ ७.१,१९.६२

ववृषुश्शतशो मूर्ध्नि पुष्पवर्षं बलाहकाः ॥ ७.१,१९.६२

फुल्लानां मधुगर्भाणां पुष्पाणां गंधबंधवः ॥ ७.१,१९.६३

मार्गानुकूलसंवाहा वबुश्च पथि मारुताः ॥ ७.१,१९.६३

ततो गणेश्वराः सर्वे मत्ता युद्धबलोद्धताः ॥ ७.१,१९.६४

ननृतुर्मुमुदुर्१ एदुर्जहसुर्जगदुर्जगुः ॥ ७.१,१९.६४

तदा भद्रगणांतःस्थो बभौ भद्रः स भद्रया ॥ ७.१,१९.६५

यथा रुद्रगणांतः स्थस्त्र्यम्बकोंबिकया सह ॥ ७.१,१९.६५

तत्क्षणादेव दक्षस्य यज्ञवाटं रण्मयम् ॥ ७.१,१९.६६

प्रविवेश महाबाहुर्वीरभद्रो महानुगः ॥ ७.१,१९.६६

ततस्तु दक्षप्रतिपादितस्य क्रतुप्रधानस्य गणप्रधानः ॥ ७.१,१९.६७

प्रयोगभूमिं प्रविवेश भद्रो रुद्रो यथांते भुवनं दिधक्षुः ॥ ७.१,१९.६७

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे वीरभद्रोत्पत्तिवर्णनं नामैकोनविंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः २०

https://sa.wikisource.org/s/hyx

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | पूर्व भागः

वायुरुवाच

ततो विष्णुप्रधानानां सुराणाममितौजसाम् ॥ ७.१,२०.१

ददर्श च महत्सत्रं चित्रध्वजपरिच्छदम् ॥ ७.१,२०.१

सुदर्भऋतुसंस्तीर्णं सुसमिद्धहुताशनम् ॥ ७.१,२०.२

कांचनैर्यज्ञभांडैश्च भ्राजिष्णुभिरलंकृतम् ॥ ७.१,२०.२

ऋषिभिर्यज्ञपटुभिर्यथावत्कर्मकर्तृभिः ॥ ७.१,२०.३

विधिना वेददृष्टेन स्वनुष्ठितबहुक्रमम् ॥ ७.१,२०.३

देवांगनासहस्राढ्यमप्सरोगणसेवितम् ॥ ७.१,२०.४

वेणुवीणारवैर्जुष्टं वेदघोषैश्च बृंहितम् ॥ ७.१,२०.४

दृष्ट्वा दक्षाध्वरे वीरो वीरभद्रः प्रतापवान् ॥ ७.१,२०.५

सिंहनादं तदा चक्रे गंभीरो जलदो यथा ॥ ७.१,२०.५

ततः किलकिलाशब्द आकाशं पूरयन्निव ॥ ७.१,२०.६

गणेश्वरैः कृतो जज्ञे महान्न्यक्कृतसागरः ॥ ७.१,२०.६

तेन शब्देन महताः ग्रस्ता सर्वेदिवौकसः ॥ ७.१,२०.७

दुद्रुवुः परितो भीताः स्रस्तवस्त्रविभूषणाः ॥ ७.१,२०.७

किंस्विद्भग्नो महामेरुः किंस्वित्संदीर्यते मही ॥ ७.१,२०.८

किमिदं किमिदं वेति जजल्पुस्त्रिदशा भृशम् ॥ ७.१,२०.८

मृगेन्द्राणां यथा नादं गजेंद्रा गहने वने ॥ ७.१,२०.९

श्रुत्वा तथाविधं केचित्तत्यजुर्जीवितं भयात् ॥ ७.१,२०.९

पर्वताश्च व्यशीर्यंत चकम्पे च वसुंधरा ॥ ७.१,२०.१०

मरुतश्च व्यघूर्णंत चुक्षुभे मकरालयः ॥ ७.१,२०.१०

अग्नयो नैव दीप्यंते न च दीप्यति भास्करः ॥ ७.१,२०.११

ग्रहाश्च न प्रकाशंते नक्षत्राणि च तारकाः ॥ ७.१,२०.११

एतस्मिन्नेव काले तु यज्ञवाटं तदुज्ज्वलम् ॥ ७.१,२०.१२

संप्राप भगवान्भद्रो भद्रैश्च सह भद्रया ॥ ७.१,२०.१२
तं दृष्ट्वा भीतभीतो ऽपि दक्षो दृढ इव स्थितः ॥ ७.१,२०.१३
क्रुद्धवद्वचनं प्राह को भवान् किमिहेच्छसि ॥ ७.१,२०.१३
तस्य तद्वचनं श्रुत्वा दक्षस्य च दुरात्मनः ॥ ७.१,२०.१४
वीरभद्रो महातेजा मेघसंभीरनिस्स्वनः ॥ ७.१,२०.१४
स्मयन्निव तमालोक्य दक्षं देवाश्च ऋत्विजः ॥ ७.१,२०.१५
अर्थगर्भमसंभ्रान्तमवोचदुचितं वचः ॥ ७.१,२०.१५
वीरभद्र उवाच
वयं ह्यनुचराः सर्वे शर्वस्यामिततेजसः ॥ ७.१,२०.१६
भागाभिलिप्सया प्राप्ता भागो नस्संप्रदीयताम् ॥ ७.१,२०.१६
अथ चेदध्वरे ऽस्माकं न भागः परिकल्पितः ॥ ७.१,२०.१७
कथ्यतां कारणं तत्र युध्यतां वा मयामरैः ॥ ७.१,२०.१७
इत्युक्तास्ते गणेंद्रेण देवा दक्षपुरोगमाः ॥ ७.१,२०.१८
ऊचुर्मन्त्राः प्रमाणं नो न वयं प्रभवस्त्विवति ॥ ७.१,२०.१८
मन्त्रा ऊचुस्सुरा यूयं मोहोपहतचेतसः ॥ ७.१,२०.१९
येन प्रथमभागार्हं न यजध्वं महेश्वरम् ॥ ७.१,२०.१९
मंत्रोक्ता अपि ते देवाः सर्वे संमूढचेतसः ॥ ७.१,२०.२०
भद्राय न ददुर्भागं तत्प्रहाणमभीप्सवः ॥ ७.१,२०.२०
यदा तथ्यं च पथ्यं च स्ववाक्यं तद्वृथा ऽभवत् ॥ ७.१,२०.२१
तदा ततो ययुर्मंदा ब्रह्मलोकं सनातनम् ॥ ७.१,२०.२१
अथोवाच गणाध्यक्षो देवान्विष्णुपुरोगमान् ॥ ७.१,२०.२२
मन्त्राः प्रमाणं न कृता युष्माभिर्बलगर्वितैः ॥ ७.१,२०.२२
यस्मादस्मिन्मखे देवैरित्थं वयमसत्कृताः ॥ ७.१,२०.२३
तस्माद्वो जीवितैस्सार्धमपनेष्यामि गर्वितम् ॥ ७.१,२०.२३
इत्युक्त्वा भगवान् क्रुद्धो व्यदहन्नेत्रवह्निना ॥ ७.१,२०.२४
यक्षवाटं महाकूटं यथातिस्रः पुरो हरः ॥ ७.१,२०.२४
ततो गणेश्वरास्सर्वे पर्वतोदग्रविग्रहाः ॥ ७.१,२०.२५
यूपानुत्पाट्य होत्ःणां कंठेष्वाबध्य रज्जुभिः ॥ ७.१,२०.२५

यज्ञपात्राणि चित्राणि भित्त्वा संचूर्ण्य वारिणि ॥ ७.१,२०.२६
गृहीत्वा चैव यज्ञांगं गंगास्रोतसि चिक्षिपुः ॥ ७.१,२०.२६
तत्र दिव्यान्नपानानां राशयः पर्वतोपमाः ॥ ७.१,२०.२७
क्षीरनद्यो ऽमृतस्रावाः सुस्निग्धदधिकर्दमाः ॥ ७.१,२०.२७
उच्चावचानि मांसानि भक्ष्याणि सुरभीणि च ॥ ७.१,२०.२८
रसवन्ति च पानानि लेह्यचोष्याणि तानि वै ॥ ७.१,२०.२८
वीरास्तद्भुजते वक्त्रैर्विलुंपंति क्षिपंति च ॥ ७.१,२०.२९
वज्रैश्चक्रैर्महाशूलैश्शक्तिभिः पाशपट्टिशैः ॥ ७.१,२०.२९
मुसलैरसिभिष्टंकैर्भिंधिपालैः परश्वधैः ॥ ७.१,२०.३०
उद्धतांस्त्रिदशान्सर्वाँल्लोकपालपुरस्सरान् ॥ ७.१,२०.३०
बिभिदुर्बलिनो वीरा वीरभद्रांगसंभवाः ॥ ७.१,२०.३१
छिंधि भिंधि क्षिप क्षिप्रं मार्यतां दार्यतामिति ॥ ७.१,२०.३१
हरस्व प्रहरस्वेति पाटयोत्पाटयेति च ॥ ७.१,२०.३२
संरंभप्रभवाः क्रूराश्शब्दाः श्रवणशंकवः ॥ ७.१,२०.३२
यत्रतत्र गणेशानां जज्ञिरे समरोचिताः ॥ ७.१,२०.३३
विवृत्तनयनाः केचिद्दष्टदंष्ट्रोष्ठतालवः ॥ ७.१,२०.३३
आश्रमस्थान्समाकृष्य मारयन्ति तपोधनात् ॥ ७.१,२०.३४
स्रुवानपहरन्तश्च क्षिपन्तोग्निं जलेषु च ॥ ७.१,२०.३४
कलशानपि भिन्दंतश्छिंदंतो मणिवेदिकाः ॥ ७.१,२०.३५
गायंतश्च नदन्तश्च हसन्तश्च मुहुर्मुहुः ॥ ७.१,२०.३५
रक्तासवं पिबन्तश्च ननृतुर्गणपुंगवाः ॥ ७.१,२०.३६
निर्मथ्य सेंद्रानमरान् गणेन्द्रान्वृषेन्द्रनागेन्द्रमृगेन्द्रसाराः ॥ ७.१,२०.३६
चक्रुर्बहून्यप्रतिमभावाः सहर्षरोमाणि विचेष्टितानि ॥ ७.१,२०.३७
नन्दंति केचित्प्रहरन्ति केचिद्धावन्ति केचित्प्रलपन्ति केचित् ॥ ७.१,२०.३७
नृत्यन्ति केचिद्विहसन्ति केचिद्वल्गन्ति केचित्प्रमथा बलेन ॥ ७.१,२०.३८
केचिज्जिघृक्षंति घनान्स तोयान्केचिद्ग्रहीतुं रविमुत्पतंति ॥ ७.१,२०.३९
केचित्प्रसर्तुं पवनेन सार्धमिच्छंति भीमाः प्रमथा वियत्स्थाः ॥ ७.१,२०.३९
आक्षिप्य केचिच्च वरायुधानि महा भुजंगानिव वैनतेयाः ॥ ७.१,२०.४०

भ्रमंति देवानपि विद्रवंतः खमंडले पर्वतकूटकल्पाः ॥ ७.१,२०.४०

उत्पाट्य चोत्पाट्यगृहाणि केचित्सजालवातायनवेदिकानि ॥ ७.१,२०.४१

विक्षिप्य विक्षिप्य जलस्य मध्ये कालांबुदाभाः प्रमथा निनेदुः ॥ ७.१,२०.४१

उद्वर्तितद्वारकपाटकुड्यं विध्वस्तशालावलभीगवाक्षम् ॥ ७.१,२०.४२

अहो बताभज्यत यज्ञवाटमनाथवद्वाक्यमिवायथार्थम् ॥ ७.१,२०.४२

हा नाथ तातेति पितुः सुतेति भ्रतर्ममाम्बेति च मातुलेति ॥ ७.१,२०.४३

उत्पाट्यमानेषु गृहेषु नार्यो ह्यानाथशब्दान्बहुशः प्रचक्रुः ॥ ७.१,२०.४३

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे यज्ञविध्वंसनो नाम विंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः २१



वायुरुवाच

ततस्त्रिदशमुख्यास्ते विष्णुशक्रपुरोगमाः ॥ ७.१,२१.१

सर्वे भयपरित्रस्तादुद्रुवुर्भयविह्वलाः ॥ ७.१,२१.१

निजैरदूषितैरंगैर्दृष्ट्वा देवानुपद्रुतान् ॥ ७.१,२१.२

दंड्यानदंडितान्मत्वा चुकोप गणपुंगवः ॥ ७.१,२१.२

ततस्त्रिशूलमादाय शर्वशक्तिनिबर्हणम् ॥ ७.१,२१.३

ऊर्ध्वदृष्टिर्महाबाहुर्मुखाज्ज्वालाः समुत्सृजन् ॥ ७.१,२१.३

अमरानपि दुद्राव द्विरदानिव केसरी ॥ ७.१,२१.४

तानभिद्रवतस्तस्य गमनं सुमनोहरम् ॥ ७.१,२१.४

वाराणस्येव मत्तस्य जगाम प्रेक्षणीयताम् ॥ ७.१,२१.५

ततस्तत्क्षोभयामास महत्सुरबलं बली ॥ ७.१,२१.५

महासरोवरं यद्वन्मत्तो वारणयूथपः ॥ ७.१,२१.६

विकुर्वन्बहुधावर्णान्नीलपांडुरलोहितान् ॥ ७.१,२१.६

विभ्रद्व्याघ्राजिनं वासो हेमप्रवरतारकम् ॥ ७.१,२१.७

छिन्दन्भिन्दन्नुद १ लिन्दन्दारयन्प्रमथन्नपि ॥ ७.१,२१.७

व्यचरद्देवसंघेषु भद्रो ऽग्निरिव कक्षगः ॥ ७.१,२१.८

तत्र तत्र महावेगाच्चरंतं शूलधारिणम् ॥ ७.१,२१.८

तमेकं त्रिदशाः सर्वे सहस्रमिव मेनिरे ॥ ७.१,२१.९

भद्रकाली च संक्रुद्धा युद्धवृद्धमदोद्धता ॥ ७.१,२१.९

मुक्तज्वालेन शूलेन निर्बिभेद रणे सुरान् ॥ ७.१,२१.१०

स तया रुरुचे भद्रो रुद्रकोपसमुद्भवः ॥ ७.१,२१.१०

प्रभयेव युगांताग्निश्चलया धूमधूम्रया ॥ ७.१,२१.११

भद्रकाली तदायुद्धे विद्रुतत्रिदशाबभौ ॥ ७.१,२१.११

कल्पे शेषानलज्वालादग्धाविश्वजगद्यथा ॥ ७.१,२१.१२

तदा सवाजिनं सूर्यं रुद्रान्रुद्रगणाग्रणीः ॥ ७.१,२१.१२
भद्रो मूर्ध्नि जघानाशु वामपादेन लीलया ॥ ७.१,२१.१३
असिभिः पावकं भद्रः पट्टिशैस्तु यमं यमी ॥ ७.१,२१.१३
रुद्रान्दृढेन शूलेन मुद्गरैर्वरुणं दृढैः ॥ ७.१,२१.१४
परिघैर्निरृतिं वायुं टंकैष्टंकधरः स्वयम् ॥ ७.१,२१.१४
निर्बिभेद रणे वीरो लीलयैव गणेश्वरः ॥ ७.१,२१.१५
सर्वान्देवगणान्सद्यो मुनीञ्छंभोर्विरोधिनः ॥ ७.१,२१.१५
ततो देवः सरस्वत्या नासिकाग्रं सुशोभनम् ॥ ७.१,२१.१६
चिच्छेद करजाग्रेण देवमातुस्तथैव च ॥ ७.१,२१.१६
चिच्छेद च कुठारेण बाहुदंडं विभावसोः ॥ ७.१,२१.१७
अग्रतो द्व्यंगुलां जिह्वां मातुर्देव्या लुलाव च ॥ ७.१,२१.१७
स्वाहादेव्यास्तथा देवो दक्षिणं नासिकापुटम् ॥ ७.१,२१.१८
चकर्त करजाग्रेण वामं च स्तनचूचुकम् ॥ ७.१,२१.१८
भगस्य विपुले नेत्रे शतपत्रसमप्रभे ॥ ७.१,२१.१९
प्रसह्योत्पाटयामास भद्रः परमवेगवान् ॥ ७.१,२१.१९
पूष्णो दशनरेखां च दीप्तां मुक्तावलीमिव ॥ ७.१,२१.२०
जघान धनुषः कोट्या स तेनास्पष्टवागभूत् ॥ ७.१,२१.२०
ततश्चंद्रमसं देवः पादांगुष्ठेन लीलया ॥ ७.१,२१.२१
क्षणं कृमिवदाक्रम्य घर्षयामास भूतले ॥ ७.१,२१.२१
शिरश्चिच्छेद दक्षस्य भद्रः परमकोपतः ॥ ७.१,२१.२२
क्रोशंत्यामेव वैरिण्यां भद्रकाल्यै ददौ च तत् ॥ ७.१,२१.२२
तत्प्रहृष्टा समादाय शिरस्तालफलोपमम् ॥ ७.१,२१.२३
सा देवी कंडुकक्रीडां चकार समरांगणे ॥ ७.१,२१.२३
ततो दक्षस्य यज्ञस्त्री कुशीला भर्तृभिर्यथा ॥ ७.१,२१.२४
पादाभ्यां चैव हस्ताभ्यां हन्यते स्म गणेश्वरैः ॥ ७.१,२१.२४
अरिष्टनेमिने सोमं धर्मं चैव प्रजापतिम् ॥ ७.१,२१.२५
बहुपुत्रं चांगिरसं कृशाश्वं कश्यपं तथा ॥ ७.१,२१.२५
गले प्रगृह्य बलिनो गणपाः सिंहविक्रमाः ॥ ७.१,२१.२६

भर्त्सयंतो भृशं वाग्भिर्निर्जघ्नुर्मूर्ध्नि मुष्टिभिः ॥ ७.१,२१.२६

धर्षिता भूतवेतालैर्दारास्सुतपरिग्रहाः ॥ ७.१,२१.२७

यथा कलियुगे जारैर्बलेन कुलयोषितः ॥ ७.१,२१.२७

तच्च विध्वस्तकलशं भग्नयूपं गतोत्सवम् ॥ ७.१,२१.२८

प्रदीपितमहाशालं प्रभिन्नद्वारतोरणम् ॥ ७.१,२१.२८

उत्पाटितसुरानीकं हन्यमानं तपोधनम् ॥ ७.१,२१.२९

प्रशान्तब्रह्मनिर्घोषं प्रक्षीणजनसंचयम् ॥ ७.१,२१.२९

क्रन्दमानातुरस्त्रीकं हताशेषपरिच्छदम् ॥ ७.१,२१.३०

शून्यारण्यनिभं जज्ञे यज्ञवाटं तदार्दितम् ॥ ७.१,२१.३०

शूलवेगप्ररुग्णाश्च भिन्नबाहूरुवक्षसः ॥ ७.१,२१.३१

विनिकृत्तोत्तमांगाश्च पेतुरुर्व्यां सुरोत्तमाः ॥ ७.१,२१.३१

हतेषु तेषु देवेषु पतितेषुः सहस्रशः ॥ ७.१,२१.३२

प्रविवेश गणेशानः क्षणादाहवनीयकम् ॥ ७.१,२१.३२

प्रविष्टमथ तं दृष्ट्वा भद्रं कालाग्निसंनिभम् ॥ ७.१,२१.३३

दुद्राव मरणाद्भीतो यज्ञो मृगवपुर्धरः ॥ ७.१,२१.३३

स विस्फार्य महच्चापं दृढज्याघोषणभीषणम् ॥ ७.१,२१.३४

भद्रस्तमभिदुद्राव विक्षिपन्नेव सायकान् ॥ ७.१,२१.३४

आकर्णपूर्णमाकृष्टं धनुरम्बुदसंनिभम् ॥ ७.१,२१.३५

नादयामास च ज्यां द्यां खं च भूमिं च सर्वशः ॥ ७.१,२१.३५

तमुपश्रित्य सन्नादं हतो ऽस्मीत्येव विह्वलम् ॥ ७.१,२१.३६

शरणार्धेन वक्रेण स वीरो ऽध्वरपूरुषम् ॥ ७.१,२१.३६

महाभयस्खलत्पादं वेपन्तं विगतत्विषम् ॥ ७.१,२१.३७

मृगरूपेण धावन्तं विशिरस्कं तदाकरोत् ॥ ७.१,२१.३७

तमीदृशमवज्ञातं दृष्ट्वा वै सूर्यसंभवम् ॥ ७.१,२१.३८

विष्णुः परमसंक्रुद्धो युद्धायाभवदुद्यतः ॥ ७.१,२१.३८

तमुवाह महावेगात्स्कन्धेन नतसंधिना ॥ ७.१,२१.३९

सर्वेषां वयसां राजा गरुडः पन्नगाशनः ॥ ७.१,२१.३९

देवाश्च हतशिष्टा ये देवराजपुरोगमाः ॥ ७.१,२१.४०

प्रचक्रुस्तस्य साहाय्यं प्राणांस्त्यक्तुमिवोद्यताः ॥ ७.१,२१.४०

विष्णुना सहितान्देवान्मृगेन्द्रः क्रोष्टुकानिव ॥ ७.१,२१.४१

दृष्ट्वा जहास भूतेन्द्रो मृगेन्द्र इव विव्यथः ॥ ७.१,२१.४१

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे देवदंडवर्णनं नामैकविंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः २२

https://sa.wikisource.org/s/hyz
< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | पूर्व भागः

तस्मिन्नवसरे व्योम्नि समाविरभवद्रथः ॥ ७.१,२२.१

सहस्रसूर्यसंकाशश्चारुचीरवृषध्वजः ॥ ७.१,२२.१

अश्वरत्नद्वयोदारो रथचक्रचतुष्टयः ॥ ७.१,२२.२

सञ्चितानेकदिव्यास्त्रशस्त्ररत्नपरिष्कृतः ॥ ७.१,२२.२

तस्यापि रथवर्यस्य स्यात्स एव हि सारथिः ॥ ७.१,२२.३

यथा च त्रैपुरे युद्धे पूर्वं शार्वरथे स्थितः ॥ ७.१,२२.३

स तं रथवरं ब्रह्मा शासनादेव शूलिनः ॥ ७.१,२२.४

हरेस्समीपमानीय कृताञ्जलिरभाषत ॥ ७.१,२२.४

भगवन्भद्र भद्रांग भगवानिन्दुभूषणः ॥ ७.१,२२.५

आज्ञापयति वीरस्त्वां रथमारोढुमव्ययः ॥ ७.१,२२.५

रेभ्याश्रमसमीपस्थस्त्र्यंबको ऽंबिकया सह ॥ ७.१,२२.६

सम्पश्यते महाबाहो दुस्सहं ते पराक्रमम् ॥ ७.१,२२.६

तस्य तद्वचनं श्रुत्वा स वीरो गणकुञ्जरः ॥ ७.१,२२.७

आरुरोह रथं दिव्यमनुगृह्य पितामहम् ॥ ७.१,२२.७

तथा रथवरे तस्मिन्स्थिते ब्रह्मणि सारथौ ॥ ७.१,२२.८

भद्रस्य ववृधे लक्ष्मी रुद्रस्येव पुरद्विषः ॥ ७.१,२२.८

ततः शंखवरं दीप्तं पूर्णचंद्रसमप्रभम् ॥ ७.१,२२.९

प्रदध्मौ वदने कृत्वा भानुकंपो महाबलः ॥ ७.१,२२.९

तस्य शंखस्य तं नादं भिन्नसारससन्निभम् ॥ ७.१,२२.१०

श्रुत्वा भयेन देवानां जज्वाल जठरानलः ॥ ७.१,२२.१०

यक्षविद्याधराहीन्द्रैः सिद्धैर्युद्धदिदृक्षुभिः ॥ ७.१,२२.११

क्षणेन निबडीभूताः साकाशविवरा दिशाः ॥ ७.१,२२.११

ततः शार्ङ्गेण चापाङ्कात्स नारायणनीरदः ॥ ७.१,२२.१२

महता बाणवर्षेण तुतोद गणगोवृषम् ॥ ७.१,२२.१२

तं दृष्ट्वा विष्णुमायांतं शतधा बाणवर्षिणम् ॥ ७.१,२२.१३
स चाददे धनुर्जैत्रं भद्रो बाणसहस्रमुक् ॥ ७.१,२२.१३
समादाय च तद्दिव्यं धनुस्समरभैरवम् ॥ ७.१,२२.१४
शनैर्विस्फारयामास मेरुं धनुरिवेश्वरः ॥ ७.१,२२.१४
तस्य विस्फार्यमाणस्य धनुषो ऽभून्महास्वनः ॥ ७.१,२२.१५
तेन स्वनेन महता पृथिवीं समकंपयत् ॥ ७.१,२२.१५
ततः शरवरं घोरं दीप्तमाशीविषोपमम् ॥ ७.१,२२.१६
जग्राह गणपः श्रीमान्स्वयमुग्रपराक्रमः ॥ ७.१,२२.१६
बाणोद्धारे भुजो ह्यस्य तूणीवदनसंगतः ॥ ७.१,२२.१७
प्रत्यदृश्यत वल्मीकं विवेक्षुरिव पन्नगः ॥ ७.१,२२.१७
समुद्धृतः करे तस्य तत्क्षणं रुरुचे शरेः ॥ ७.१,२२.१८
महाभुजंगसंदष्टो यथा बालभुजङ्गमः ॥ ७.१,२२.१८
शरेण घनतीव्रेण भद्रो रुद्रपराक्रमः ॥ ७.१,२२.१९
विव्याध कुपितो गाढं ललाटे विष्णुमव्ययम् ॥ ७.१,२२.१९
ललाटे ऽभिहितो विष्णुः पूर्वमेवावमानितः ॥ ७.१,२२.२०
चुकोप गणपेंद्राय मृगेंद्रायेव गोवृषः ॥ ७.१,२२.२०
ततस्त्वशनिकल्पेन क्रूरास्येन महेषुणा ॥ ७.१,२२.२१
विव्याध गणराजस्य भुजे भुजगसन्निभे ॥ ७.१,२२.२१
सो ऽपि तस्य भुजे भूयः सूर्यायुतसमप्रभम् ॥ ७.१,२२.२२
विससर्ज शरं वेगाद्वीरभद्रो महाबलः ॥ ७.१,२२.२२
स च विष्णुः पुनर्भद्रं भद्रो विष्णुं तथा पुनः ॥ ७.१,२२.२३
स च तं स च तं विप्राश्शरैस्तावनुजघ्नतुः ॥ ७.१,२२.२३
तयोः परस्परं वेगाच्छरानाशु विमुंचतोः ॥ ७.१,२२.२४
द्वयोस्समभवद्युद्धं तुमुलं रोमहर्षणम् ॥ ७.१,२२.२४
तद्दृष्ट्वा तुमुलं युद्धं तयोरेव परस्परम् ॥ ७.१,२२.२५
हाहाकारो महानासीदाकाशे खेचरेरितः ॥ ७.१,२२.२५
ततस्त्वनलतुंडेन शरेणादित्यवर्चसा ॥ ७.१,२२.२६
विव्याध सुदृढं भद्रो विष्णोर्महति वक्षसि ॥ ७.१,२२.२६

स तु तीव्रप्रपातेन शरेण दृढमाहतः ॥ ७.१,२२.२७
महतीं रुजमासाद्य निपपात विमोहितः ॥ ७.१,२२.२७
पुनः क्षणादिवोत्थाय लब्धसंज्ञस्तदा हरिः ॥ ७.१,२२.२८
सर्वाण्यपि च दिव्यास्त्राण्यथैनं प्रत्यवासृजत् ॥ ७.१,२२.२८
स च विष्णुर्धनुर्मुक्तान्सर्वाञ्छर्वचमूपतिः ॥ ७.१,२२.२९
सहसा वारयामास घोरैः प्रतिशरैः शरान् ॥ ७.१,२२.२९
ततो विष्णुस्स्वनामांकं बाणमव्याहतं क्वचित् ॥ ७.१,२२.३०
ससर्ज क्रोधरक्ता क्षस्तमुद्दिश्य गणेश्वरम् ॥ ७.१,२२.३०
तं बाणं बाणवर्येण भद्रो भद्राह्वयेण तु ॥ ७.१,२२.३०
अप्राप्तमेव भगवाञ्चिच्छेद शतधा पथि ॥ ७.१,२२.३१
अथैकेनेषुणा शार्ङ्गं द्वाभ्यां पक्षौ गरुत्मतः ॥ ७.१,२२.३१
निमेषादेव चिच्छेद तदद्भुतमिवाभवत् ॥ ७.१,२२.३२
ततो योगबलाद्विष्णुर्देहाद्देवान्सुदारुणान् ॥ ७.१,२२.३२
शंखचक्रगदाहस्तान् विससर्ज सहस्रशः ॥ ७.१,२२.३३
सर्वांस्तान्क्षणमात्रेण त्रैपुरानिव शंकरः ॥ ७.१,२२.३३
निर्ददाह महाबाहुर्नेत्रसृष्टेन वह्निना ॥ ७.१,२२.३४
ततः क्रुद्धतरो विष्णुश्चक्रमुद्यम्य सत्वरः ॥ ७.१,२२.३४
तस्मिन्वीरो समुत्स्रष्टुं तदानीमुद्यतो ऽभवत् ॥ ७.१,२२.३५
तं दृष्ट्वा चक्रमुद्यम्य पुरतः समुपस्थितम् ॥ ७.१,२२.३५
स्मयन्निव गणेशानो व्यष्टंभयदयत्नतः ॥ ७.१,२२.३६
स्तंभितांगस्तु तच्चक्रं घोरमप्रतिमं क्वचित् ॥ ७.१,२२.३६
इच्छन्नपि समुत्स्रष्टुं न विष्णुरभवत्क्षमः ॥ ७.१,२२.३७
श्वसन्निवैकमुद्धृत्य बाहुं चक्रसमन्वितम् ॥ ७.१,२२.३७
अतिष्ठदलसो भूत्वा पाषाण इव निश्चलः ॥ ७.१,२२.३८
विशरीरो यथाजीवो विशृङ्गो वा यथा वृषः ॥ ७.१,२२.३८
विदंष्ट्रश्च यथा सिंहस्तथा विष्णुरवस्थितः ॥ ७.१,२२.३९
तं दृष्ट्वा दुर्दशापन्नं विष्णुमिंद्रादयः सुराः ॥ ७.१,२२.३९
समुन्नद्धा गणेन्द्रेण मृगेंद्रेणेव गोवृषाः ॥ ७.१,२२.३९

प्रगृहीतायुधा यौद्धुंक्रुद्धाः समुपतस्थिरे ॥ ७.१,२२.४०
तान्दृष्ट्वा समरे भद्रःक्षुद्रानिव हरिर्मृगान् ॥ ७.१,२२.४०
साक्षाद्रुद्रतनुर्वीरो वरवीरगणावृतः ॥ ७.१,२२.४१
अट्टहासेन घोरेण व्यष्टं भयदनिंदितः ॥ ७.१,२२.४१
तथा शतमखस्यापि सवज्रो दक्षिणः करः ॥ ७.१,२२.४२
सिसृक्षोरेव उद्वज्रश्चित्रीकृत इवाभवत् ॥ ७.१,२२.४२
अन्येषामपि सर्वेषां सरक्ता अपि बाहवः ॥ ७.१,२२.४३
अलसानामिवारंभास्तादृशाः प्रतियांत्युत ॥ ७.१,२२.४३
एवं भगवता तेन व्याहताशेषवैभवात् ॥ ७.१,२२.४४
अमराः समरे तस्य पुरतः स्थातुमक्षमाः ॥ ७.१,२२.४४
स्तब्धैरवयवैरेव दुद्रुवुर्भयविह्वलाः ॥ ७.१,२२.४५
स्थितिं च चक्रिरे युद्धे वीरतेजोभयाकुलाः ॥ ७.१,२२.४५
विद्रुतांस्त्रिदशान्वीरान्वीरभद्रो महाभुजः ॥ ७.१,२२.४६
विव्याध निशितैर्बाणैर्मघो वर्षैरिवाचलान् ॥ ७.१,२२.४६
बहवस्तस्य वीरस्य बाहवः परिघोपमाः ॥ ७.१,२२.४७
शस्त्रैश्चकाशिरे दीप्तैः साग्निज्वाला इवोरगाः ॥ ७.१,२२.४७
अस्त्रशस्त्राण्यनेकानिसवीरो विसृजन्बभौ ॥ ७.१,२२.४८
विसृजन्सर्वभूतानि यथादौ विश्वसंभवः ॥ ७.१,२२.४८
यथा रश्मिभिरादित्यः प्रच्छादयति मेदिनीम् ॥ ७.१,२२.४९
तथा वीरः क्षणादेव शरैः प्राच्छादयद्दिशः ॥ ७.१,२२.४९
खमंडले गणेन्द्रस्य शराः कनकभूषिताः ॥ ७.१,२२.५०
उत्पतंतस्तडिद्रूपैरुपमानपदं ययुः ॥ ७.१,२२.५०
महांतस्ते सुरगणान्मंडूकानिवडुंडुभाः ॥ ७.१,२२.५१
प्राणैर्वियोजयामासुः पपुश्च रुधिरासवम् ॥ ७.१,२२.५१
निकृत्तबाहवः केचित्केचिल्लूनवराननाः ॥ ७.१,२२.५२
पार्श्वे विदारिताः केचिन्निपेतुरमरा भुवि ॥ ७.१,२२.५२
विशिखोन्मथितैर्गात्रैर्बहुभिश्छिन्नसन्धिभिः ॥ ७.१,२२.५३
विवृत्तनयनाः केचिन्निपेतुर्भूतले मृताः ॥ ७.१,२२.५३

गां प्रवेष्टुमिवेच्छंतः खं गंतुमिव लिप्सवः ॥ ७.१,२२.५३
अलब्धात्मनिरोधानां व्यलीयंतः परस्परम् ॥ ७.१,२२.५४
भूमौ केचित्प्रविविशुः पर्वतानां गुहाः परे ॥ ७.१,२२.५४
अपरे जग्मुराकाशं परे च विविशुर्जलम् ॥ ७.१,२२.५५
तथा संछिन्नसर्वांगैस्स वीरस्त्रिदशैर्बभौ ॥ ७.१,२२.५५
परिग्रस्तप्रजावर्गो भगवानिव भैरवः ॥ ७.१,२२.५६
दग्धत्रिपुरसंव्यूहस्त्रिपुरारिर्यथाभवत् ॥ ७.१,२२.५६
एवं देवबलं सर्वं दीनं बीभत्सदर्शनम् ॥ ७.१,२२.५७
गणेश्वरसमुत्पन्नं कृपणं वपुराददे ॥ ७.१,२२.५७
तदा त्रिदशवीराणामसृक्सलिलवाहिनी ॥ ७.१,२२.५८
प्रावर्तत नदी घोरा प्राणिनां भयशंसिनी ॥ ७.१,२२.५८
रुधिरेण परिक्लिन्ना यज्ञभूमिस्तदा बभौ ॥ ७.१,२२.५९
रक्तार्द्रवसना श्यामा हतशुंभेव कैशिकी ॥ ७.१,२२.५९
तस्मिन्महति संवृत्ते समरे भृशदारुणे ॥ ७.१,२२.६०
भयेनेव परित्रस्ता प्रचचाल वसुन्धरा ॥ ७.१,२२.६०
महोर्मिकलिलावर्तश्चुक्षुभे च महोदधिः ॥ ७.१,२२.६१
पेतुश्चोल्का महोत्पाताः शाखाश्च मुमुचुर्द्रुमाः ॥ ७.१,२२.६१
अप्रसन्ना दिशः सर्वाः पवनश्चाशिवो ववौ ॥ ७.१,२२.६२
अहो विधिविपर्यासस्त्वश्वमेधोयमध्वरः ॥ ७.१,२२.६२
यजमानस्स्वयं दक्षौ ब्रह्मपुत्रप्रजापतिः ॥ ७.१,२२.६२
धर्मादयस्सदस्याश्च रक्षिता गरुडध्वजः ॥ ७.१,२२.६३
भागांश्च प्रतिगृह्णंति साक्षादिंद्रादयः सुराः ॥ ७.१,२२.६३
तथापि यजमानस्य यज्ञस्य च सहर्त्विजः ॥ ७.१,२२.६४
सद्य एव शिरश्छेदस्साधु संपद्यते फलम् ॥ ७.१,२२.६४
तस्मान्नावेदनिर्दिष्टं न चेश्वरबहिष्कृतम् ॥ ७.१,२२.६५
नासत्परिगृहीतं च कर्म कुर्यात्कदाचन ॥ ७.१,२२. ६५
कृत्वापि सुमहत्पुण्यमिष्ट्वा यज्ञशतैरपि ॥ ७.१,२२.६६
न तत्फलमवाप्नोति भक्तिहीनो महेश्वरे ॥ ७.१,२२.६६

कृत्वापि सुमहत्पापं भक्त्या यजति यश्शिवम् ॥ ७.१,२२.६७

मुच्यते पातकैः सर्वैर्नात्र कार्या विचारणा ॥ ७.१,२२.६७

बहुनात्र किमुक्तेन वृथा दानं वृथा तपः ॥ ७.१,२२.६८

वृथा यज्ञो वृथा होमः शिवनिन्दारतस्य तु ॥ ७.१,२२.६८

ततः सनारायणकास्सरुद्राः सलोकपालास्समरे सुरौघाः ॥ ७.१,२२.६९

गणेंद्रचापच्युतबाणविद्धाः प्रदुद्रुवुर्गाढरुजाभिभूताः ॥ ७.१,२२.६९

चेलुः क्वचित्केचन शीर्णकेशाः सेदुः क्वचित्केचन दीर्घगात्राः ॥ ७.१,२२.७०

पेतुः क्वचित्केचन भिन्नवक्त्रा नेशुः क्वचित्केचन देववीराः ॥ ७.१,२२.७०

केचिच्च तत्र त्रिदशा विपन्ना विस्रस्तवस्त्राभरणास्त्रशस्त्राः ॥ ७.१,२२.७१

निपेतुरुद्भासितदीनमुद्रा मदं च दर्पं च बलं च हित्वा ॥ ७.१,२२.७१

सस्मुत्पथप्रस्थितमप्रधृष्यो विक्षिप्य दक्षाध्वरमक्षतास्त्रैः ॥ ७.१,२२.७२

बभौ गणेशस्स गणेश्वराणां मध्ये स्थितः सिंह इवर्षभाणाम् ॥ ७.१,२२.७२

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे दक्षयज्ञविध्वंसवर्णनं नाम द्वाविंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः २३



अध्याय २३

वायुरुवाच

इति सञ्छिन्नभिन्नांगा देवा विष्णुपुरोगमाः ॥ ७.१,२३.१
क्षणात्कष्टां दशामेत्य त्रेसुः स्तोकावशेषिता ॥ ७.१,२३.१
त्रस्तांस्तान्समरे वीरान् देवानन्यांश्च वै गणाः ॥ ७.१,२३.२
प्रमथाः परमक्रुद्धा वीरभद्रप्रणोदिताः ॥ ७.१,२३.२
प्रगृह्य च तथा दोषं निगडैरायसैर्दृढैः ॥ ७.१,२३.३
बबन्धुः पाणिपादेषु कंधरेषूदरेषु च ॥ ७.१,२३.३
तस्मिन्नवसरे ब्रह्मा भद्रमद्रीन्द्रजानुतम् ॥ ७.१,२३.४
सारथ्याल्लब्धवात्सल्यः प्रार्थयन् प्रणतो ऽब्रवीत् ॥ ७.१,२३.४
अलं क्रोधेन भगवन्नष्टाश्चैते दिवौकसः ॥ ७.१,२३.५
प्रसीद क्षम्यतां सर्वं रोमजैस्सह सुव्रत ॥ ७.१,२३.५
एवं विज्ञापितस्तेन ब्रह्मणा परमेष्ठिना ॥ ७.१,२३.६
शमं जगाम संप्रीतो गणपस्तस्य गौरवात् ॥ ७.१,२३.६
देवाश्च लब्धावसरा देवदेवस्य मंत्रिणः ॥ ७.१,२३.७
धारयन्तो ऽञ्जलीन्मूर्ध्नि तुष्टुवुर्विविधैः स्तवैः ॥ ७.१,२३.७

देवा ऊचुः

नमः शिवाय शान्ताय यज्ञहन्त्रे त्रिशूलिने ॥ ७.१,२३. ८
रुद्रभद्राय रुद्राणां पतये रुद्रभूतये ॥ ७.१,२३.८
कालाग्निरुद्ररूपाय कालकामांगहारिणे ॥ ७.१,२३.९
देवतानां शिरोहन्त्रे दक्षस्य च दुरात्मनः ॥ ७.१,२३.९
संसर्गादस्य पापस्य दक्षस्याक्लिष्टकर्मणः ॥ ७.१,२३.१०
शासिताः समरे वीर त्वया वयमनिन्दिता ॥ ७.१,२३.१०
दग्धाश्चामी वयं सर्वे त्वत्तो भीताश्च भो प्रभो ॥ ७.१,२३.११
त्वमेव गतिरस्माकं त्राहि नश्शरणागतान् ॥ ७.१,२३.११

वायुरुवाच

तुष्टस्त्वेवं स्तुतो देवान् विसृज्य निगडात्प्रभुः ॥ ७.१,२३.१२
आनयद्देवदेवस्य समीपममरानिह ॥ ७.१,२३.१२

देवोपि तत्र भगवानन्तरिक्षे स्थितः प्रभुः ॥ ७.१,२३.१३
सगणः सर्वगः शर्वस्सर्वलोकमहेश्वरः ॥ ७.१,२३.१३
तं दृष्ट्वा परमेशानं देवा विष्णुपुरोगमाः ॥ ७.१,२३.१४
प्रीता अपि च भीताश्च नमश्चक्रुर्महेश्वरम् ॥ ७.१,२३.१४
दृष्ट्वा तानमरान्भीतान्प्रणतार्तिहरो हरः ॥ ७.१,२३.१५
इदमाह महादेवः प्रहसन् प्रेक्ष्य पार्वतीम् ॥ ७.१,२३.१५
महादेव उवाच
माभैष्ट त्रिदशास्सर्वे यूयं वै मामिकाः प्रजाः ॥ ७.१,२३.१६
अनुग्रहार्थमेवेह धृतो दंडः कृपालुना ॥ ७.१,२३.१६
भवतां निर्जराणां हि क्षान्तो ऽस्माभिर्व्यतिक्रमः ॥ ७.१,२३.१७
क्रुद्धेष्वस्मासु युष्माकं न स्थितिर्न च जीवितम् ॥ ७.१,२३.१७
वायुरुवाच
इत्युक्तास्त्रिदशास्सर्वे शर्वेणामिततेजसा ॥ ७.१,२३.१८
सद्यो विगतसन्देहा ननृतुर्विबुधा मुदा ॥ ७.१,२३.१८
प्रसन्नमनसो भूत्वानन्दविह्वलमानसाः ॥ ७.१,२३.१९
स्तुतिमारेभिरे कर्तुं शंकरस्य दिवौकसः ॥ ७.१,२३.१९
देवा ऊचुः
त्वमेव देवाखिललोककर्ता पाता च हर्ता परमेश्वरो ऽसि ॥ ७.१,२३.२०
कविष्णुरुद्राख्यस्वरूपभेदै रजस्तमस्सत्त्वधृतात्ममूर्ते ॥ ७.१,२३.२०
सर्वमूर्ते नमस्ते ऽस्तु विश्वभावन पावन ॥ ७.१,२३.२१
अमूर्ते भक्तहेतोर्हि गृहीताकृतिसौख्यद ॥ ७.१,२३.२१
चंद्रो ऽगदो हि देवेश कृपातस्तव शंकर ॥ ७.१,२३.२२
निमज्जनान्मृतः प्राप सुखं मिहिरजाजलिः ॥ ७.१,२३.२२
सीमन्तिनी हतधवा तव पूजनतः प्रभो ॥ ७.१,२३.२३
सौभाग्यमतुलं प्राप सोमवारव्रतात्सुतान् ॥ ७.१,२३.२३
श्रीकराय ददौ देवः स्वीयं पदमनुत्तमम् ॥ ७.१,२३.२४
सुदर्शनमरक्षस्त्वं नृपमंडलभीतितः ॥ ७.१,२३.२४
मेदुरं तारयामास सदारं च घृणानिधिः ॥ ७.१,२३.२५
शारदां विधवां चक्रे सधवां क्रियया भवान् ॥ ७.१,२३.२५
भद्रायुषो विपत्तिं च विच्छिद्य त्वमदाः सुखम् ॥ ७.१,२३.२६
सौमिनी भवबन्धाद्वै मुक्ता ऽभूत्तव सेवनात् ॥ ७.१,२३.२६
विष्णुरुवाच
त्वं शंभो कहरीशाश्च रजस्सत्त्वतमोगुणैः ॥ ७.१,२३.२७

कर्ता पाता तथा हर्ता जनानुग्रहकांक्षया ॥ ७.१,२३.२७
सर्वगर्वापहारी च सर्वतेजोविलासकः ॥ ७.१,२३.२८
सर्वविद्यादिगूढश्च सर्वानुग्रहकारकः ॥ ७.१,२३.२८
त्वत्तः सर्वं च त्वं सर्वं त्वयि सर्वं गिरीश्वर ॥ ७.१,२३.२९
त्राहि त्राहि पुनस्त्राहि कृपां कुरु ममोपरि ॥ ७.१,२३.२९
अथास्मिन्नन्तरे ब्रह्मा प्रणिपत्य कृतांजलिः ॥ ७.१,२३.३०
एवं त्ववसरं प्राप्य व्यज्ञापयत शूलिने ॥ ७.१,२३.३०
ब्रह्मोवाच
जय देव महादेव प्रणतार्तिविभंजन ॥ ७.१,२३.३१
ईदृशेष्वपराधेषु को ऽन्यस्त्वत्तः प्रसीदति ॥ ७.१,२३.३१
लब्धमानो भविष्यंति ये पुरा निहिता मृधे ॥ ७.१,२३.३२
प्रत्यापत्तिर्न कस्य स्यात्प्रसन्ने परमेश्वरे ॥ ७.१,२३.३२
यदिदं देवदेवानां कृतमन्तुषु दूषणम् ॥ ७.१,२३.३३
तदिदं भूषणं मन्येत अंगीकारगौरवात् ॥ ७.१,२३.३३
इति विज्ञाप्यमानस्तु ब्रह्मणा परमेष्ठिना ॥ ७.१,२३.३४
विलोक्य वदनं देव्या देवदेवस्स्मयन्निव ॥ ७.१,२३.३४
पुत्रभूतस्य वात्सल्याद्ब्रह्मणः पद्मजन्मनः ॥ ७.१,२३.३५
देवादीनां यथापूर्वमंगानि प्रददौ प्रभुः ॥ ७.१,२३.३५
प्रथमाद्यैश्च या देव्यो दंडिता देवमातरः ॥ ७.१,२३.३६
तासामपि यथापूर्वाण्यंगानि गिरिशो ददौ ॥ ७.१,२३.३६
दक्षस्य भगवानेव स्वयं ब्रह्मा पितामहः ॥ ७.१,२३.३७
तत्पापानुगुणं चक्रे जरच्छागमुखं मुखम् ॥ ७.१,२३.३७
सो ऽपि संज्ञां ततो लब्ध्वा स दृष्ट्वा जीवितः सुधी ॥ ७.१,२३.३८
भीतः कृताञ्जलिः शंभुं तुष्टाव प्रलपन्बहु ॥ ७.१,२३.३८
दक्ष उवाच
जय देव जगन्नाथ लोकानुग्रहकारक ॥ ७.१,२३.३९
कृपां कुरु महेशानापराधं मे क्षमस्व ह ॥ ७.१,२३.३९
कर्ता भर्ता च हर्ता च त्वमेव जगतां प्रभो ॥ ७.१,२३.४०
मया ज्ञातं विशेषेण विष्ण्वादिसकलेश्वरः ॥ ७.१,२३.४०
त्वयैव विततं सर्वं व्याप्तं सृष्टं न नाशितम् ॥ ७.१,२३.४१
न हि त्वदधिकाः केचिदीशास्ते ऽच्युतकादयः ॥ ७.१,२३.४१
वायुरुवाच
तं तथा व्याकुलं भीतं प्रलपंतं कृतागसम् ॥ ७.१,२३.४२

स्मयन्निवावदत्प्रेक्ष्य मा भैरिति १ घृणानिधिः ॥ ७.१,२३.४२
तथोक्त्वा ब्रह्मणस्तस्य पितुः प्रियचिकीर्षया ॥ ७.१,२३.४३
गाणपत्यं ददौ तस्मै दक्षायाक्षयमीश्वरः ॥ ७.१,२३.४३
ततो ब्रह्मादयो देवा अभिवंद्य कृत २ ंजलिः ॥ ७.१,२३.४४
तुष्टुवुः प्रश्रया वाचा शंकरं गिरिजाधिपम् ॥ ७.१,२३.४४
ब्रह्मादय ऊचुः
जय शंकर देवेश दीनानाथ महाप्रभो ॥ ७.१,२३.४५
कृपां कुरु महेशानापराधं नो क्षमस्व वै ॥ ७.१,२३.४५
मखपाल मखाधीश मखविध्वंसकारक ॥ ७.१,२३.४६
कृपां कुरु मशानापराधं नः क्षमस्व वै ॥ ७.१,२३.४६
देवदेव परेशान भक्तप्राणप्रपोषक ॥ ७.१,२३.४७
दुष्टदण्डप्रद स्वामिन्कृपां कुरु नमो ऽस्तु ते ॥ ७.१,२३.४७
त्वं प्रभो गर्वहर्ता वै दुष्टानां त्वामजानताम् ॥ ७.१,२३.४८
रक्षको हि विशेषेण सतां त्वत्सक्तचेतसाम् ॥ ७.१,२३.४८
अद्भुतं चरितं ते हि निश्चितं कृपया तव ॥ ७.१,२३.४९
सर्वापराधः क्षंतव्यो विभवो दीनवत्सलाः ॥ ७.१,२३.४९
वायुरुवाच
इति स्तुतो महादेवो ब्रह्माद्यैरमरैः प्रभुः ॥ ७.१,२३.५०
स भक्तवत्सलस्स्वामी तुतोष करुणोदधिः ॥ ७.१,२३.५०
चकारानुग्रहं तेषां ब्रह्मादीनां दिवौकसाम् ॥ ७.१,२३.५१
ददौ नरांश्च सुप्रीत्या शंकरो दीनवत्सलः ॥ ७.१,२३.५१
स च ततस्त्रिदशाञ्छरणागतान् परमकारुणिकः परमेश्वरः ॥ ७.१,२३.५२
अनुगतस्मितलक्षणया गिरा शमितसर्वभयः समभाषत ॥ ७.१,२३.५२
शिव उवाच
यदिदमाग इहाचरितं सुरैर्विधिनियोगवशादिव यन्त्रितैः ॥ ७.१,२३.५३
शरणमेव गतानवलोक्य वस्तदखिलं किल विस्मृतमेव नः ॥ ७.१,२३.५३
तदिह यूयमपि प्रकृतं मनस्यविगणय्य विमर्दमपत्रपाः ॥ ७.१,२३.५४
हरिविरिंचिसुरेन्द्रमुखास्सुखं व्रजत देवपुरं प्रति संप्रति ॥ ७.१,२३.५४
इति सुरानभिधाय सुरेश्वरो निकृतदक्षकृतक्रतुरक्रतुः ॥ ७.१,२३.५५
सगिरिजानुचरस्सपरिच्छदः स्थित इवाम्बरतोन्तरधाद्धरः ॥ ७.१,२३.५५
अथ सुरा अपि ते विगतव्यथाः कथितभद्रसुभद्रपराक्रमाः ॥ ७.१,२३.५६
सपदि खेन सुखेन यथासुखं ययुरनेकमुखाः मघवन्मुखाः ॥ ७.१,२३.५६

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे गिरिशानुनयो नाम त्रयोविंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः २४



ऋषय ऊचुः

अन्तर्धानगतो देव्या सह सानुचरो हरः ॥ ७.१,२४.१

क्व यातः कुत्र वासः किं कृत्वा विरराम ह ॥ ७.१,२४.१

वायुरुवाच

महीधरवरः श्रीमान्मंदरश्चित्रकंदरः ॥ ७.१,२४.२

दयितो देवदेवस्य निवासस्तपसो ऽभवत् ॥ ७.१,२४.२

तपो महत्कृतं तेन वोढुं स्वशिरसा शिवौ ॥ ७.१,२४.३

चिरेण लब्धं तत्पादपंकजस्पर्शजं सुखम् ॥ ७.१,२४.३

तस्य शैलस्य सौन्दर्यं सहस्रवदनैरपि ॥ ७.१,२४.४

न शक्यं विस्तराद्वक्तुं वर्षकोटिशतैरपि ॥ ७.१,२४.४

शक्यमप्यस्य सौन्दर्यं न वर्णयितुमुत्सहे ॥ ७.१,२४.५

पर्वतान्तरसौन्दर्यं साधारणविधारणात् ॥ ७.१,२४.५

इदन्तु शक्यते वक्तुमस्मिन्पर्वतसुन्दरे ॥ ७.१,२४.६

ऋद्ध्या कयापि सौन्दर्यमीश्वरावासयोग्यता ॥ ७.१,२४.६

अत एव हि देवेन देव्याः प्रियचिकीर्षया ॥ ७.१,२४.७

अतीव रमणीयोयं गिरिरन्तःपुरीकृतः ॥ ७.१,२४.७

मेखलाभूमयस्तस्य विमलोपलपादपाः ॥ ७.१,२४.८

शिवयोर्नित्यसान्निध्यान्न्यक्कुर्वंत्यखिलंजगत् ॥ ७.१,२४.८

पितृभ्यां जगतो नित्यं स्नानपानोपयोगतः ॥ ७.१,२४.९

अवाप्तपुण्यसंस्कारः प्रसरद्भिरितस्ततः ॥ ७.१,२४.९

लघुशीतलसंस्पर्शैरच्छाच्छैर्निर्झराम्बुभिः ॥ ७.१,२४.१०

अधिराज्येन चाद्रीणामद्रीरेषो ऽभिषिच्यते ॥ ७.१,२४.१०

निशासु शिखरप्रान्तवर्तिना स शिलोच्चयः ॥ ७.१,२४.११

चंद्रेणाचल साम्राज्यच्छत्रेणेव विराजते ॥ ७.१,२४.११

स शैलश्चंचलीभूतैर्बालैश्चामरयोषिताम् ॥ ७.१,२४.१२
सर्वपर्वतसाम्राज्यचामरैरिव वीज्यते ॥ ७.१,२४.१२
प्रातरभ्युदिते भानौ भूधरो रत्नभूषितः ॥ ७.१,२४.१३
दर्पणे देहसौभाग्यं द्रष्टुकाम इव स्थितः ॥ ७.१,२४.१३
कूजद्विहंगवाचालैर्वातोद्धूतलताभुजैः ॥ ७.१,२४.१४
विमुक्तपुष्पैः सततं व्यालम्बिमृदुपल्लवैः ॥ ७.१,२४.१४
लताप्रतानजटिलैस्तरुभिस्तपसैरिव ॥ ७.१,२४.१५
जयाशिषा सहाभ्यर्च्य निषेव्यत इवाद्रिराट् ॥ ७.१,२४.१५
अधोमुखैरूर्ध्वमुखैश्शृंगैस्तिर्यङ्मुखैस्तथा ॥ ७.१,२४.१६
प्रपतन्निव पाताले भूपृष्ठादुत्पतन्निव ॥ ७.१,२४.१६
परीतः सर्वतो दिक्षु भ्रमन्निव विहायसि ॥ ७.१,२४.१७
पश्यन्निव जगत्सर्वं नृत्यन्निव निरन्तरम् ॥ ७.१,२४.१७
गुहामुखैः प्रतिदिनं व्यात्तास्यो विपुलोदरैः ॥ ७.१,२४.१८
अजीर्णलावण्यतया जृंभमाण इवाचलः ॥ ७.१,२४.१८
ग्रसन्निव जगत्सर्वं पिबन्निव पयोनिधिम् ॥ ७.१,२४.१९
वमन्निव तमोन्तस्थं माद्यन्निव खमम्बुदैः ॥ ७.१,२४.१९
निवास भूमयस्तास्ता दर्पणप्रतिमोदराः ॥ ७.१,२४.२०
तिरस्कृतातपास्स्निग्धाश्रमच्छायामहीरुहाः ॥ ७.१,२४.२०
सरित्सरस्तडागादिसंपर्कशिशिरानिलाः ॥ ७.१,२४.२१
तत्र तत्र निषण्णाभ्यां शिवाभ्यां सफलीकृताः ॥ ७.१,२४.२१
तमिमं सर्वतः श्रेष्ठं स्मृत्वा साम्बस्त्रियम्बकः ॥ ७.१,२४.२२
रैभ्याश्रमसमीपस्थश्चान्तर्धानं गतो ययौ ॥ ७.१,२४.२२
तत्रोद्यानमनुप्राप्य देव्या सह महेश्वरः ॥ ७.१,२४.२३
रराम रमणीयासु देव्यान्तःपुरभूमिषु ॥ ७.१,२४.२३
तथा गतेषु कालेषु प्रवृद्धासु प्रजासु च ॥ ७.१,२४.२४
दैत्यौ शुंभनिशुंभाख्यौ भ्रातरौ संबभूवतुः ॥ ७.१,२४.२४
ताभ्यां तपो बलाद्दत्तं ब्रह्मणा परमेष्ठिना ॥ ७.१,२४.२५
अवध्यत्वं जगत्यस्मिन्पुरुषैरखिलैरपि ॥ ७.१,२४.२५

अयोनिजा तु या कन्या ह्यंबिकांशसमुद्भवा ॥ ७.१,२४.२६

अजातपुंस्पर्शरतिरविलंघ्यपराक्रमा ॥ ७.१,२४.२६

तया तु नौ वधः संख्ये तस्यां कामाभिभूतयोः ॥ ७.१,२४.२७

इति चाभ्यर्थितो ब्रह्मा ताभ्याम्प्राह तथास्त्विवति ॥ ७.१,२४.२७

ततः प्रभृति शक्रादीन्विजित्य समरे सुरान् ॥ ७.१,२४.२८

निःस्वाध्यायवषट्कारं जगच्चक्रतुरक्रमात् ॥ ७.१,२४.२८

तयोर्वधाय देवेशं ब्रह्माभ्यर्थितवान्पुनः ॥ ७.१,२४.२९

विनिंद्यापि रहस्यं वां क्रोधयित्वा यथा तथा ॥ ७.१,२४.२९

तद्वर्णकोशजां शक्तिमकामां कन्यकात्मिकाम् ॥ ७.१,२४.३०

निशुम्भशुंभयोर्हंत्रीं सुरेभ्यो दातुमर्हसि ॥ ७.१,२४.३०

एवमभ्यर्थितो धात्रा भगवान्नीललोहितः ॥ ७.१,२४.३१

कालीत्याह रहस्यं वां निन्दयन्निव सस्मितः ॥ ७.१,२४.३१

ततः क्रुद्धा तदा देवी सुवर्णा वर्णकारणात् ॥ ७.१,२४.३२

स्मयन्ती चाह भर्तारमसमाधेयया गिरा ॥ ७.१,२४.३२

देव्युवाच

ईदृशो मम वर्णेस्मिन्न रतिर्भवतो ऽस्ति चेत् ॥ ७.१,२४.३३

एवावन्तं चिरं कालं कथमेषा नियम्यते ॥ ७.१,२४.३३

अरत्या वर्तमानो ऽपि कथं च रमसे मया ॥ ७.१,२४.३४

न ह्यशक्यं जगत्यस्मिन्नीश्वरस्य जगत्प्रभोः ॥ ७.१,२४.३४

स्वात्मारामस्य भवतो रतिर्न सुखसाधनम् ॥ ७.१,२४.३५

इति हेतोः स्मरो यस्मात्प्रसभं भस्मसात्कृतः ॥ ७.१,२४.३५

या च नाभिमता भर्तुरपि सर्वांगसुन्दरी ॥ ७.१,२४.३६

सा वृथैव हि जायेत सर्वैरपि गुणान्तरैः ॥ ७.१,२४.३६

भर्तुर्भोगैकशेषो हि सर्ग एवैष योषिताम् ॥ ७.१,२४.३७

तथासत्यन्यथाभूता नारी कुत्रोपयुज्यते ॥ ७.१,२४.३७

तस्माद्वर्णमिमं त्यक्त्वा त्वया रहसि निन्दितम् ॥ ७.१,२४.३८

वर्णान्तरं भजिष्ये वा न भजिष्यामि वा स्वयम् ॥ ७.१,२४.३८

इत्युक्त्वोत्थाय शयनाद्देवी साचष्ट गद्गदम् ॥ ७.१,२४.३९

ययाचे ऽनुमतिं भर्तुस्तपसे कृतनिश्चया ॥ ७.१,२४.३९
तथा प्रणयभंगेन भीतो भूतपतिः स्वयम् ॥ ७.१,२४.४०
पादयोः प्रणमन्नेव भवानीं प्रत्यभाषत ॥ ७.१,२४.४०
ईश्वर उवाच
अजानती च क्रीडोक्तिं प्रिये किं कुपितासि मे ॥ ७.१,२४.४१
रतिः कुतो वा जायेत त्वत्तश्चेदरतिर्मम ॥ ७.१,२४.४१
माता त्वमस्य जगतः पिताहमधिपस्तथा ॥ ७.१,२४.४२
कथं तदुत्पपद्येत त्वत्तो नाभिरतिर्मम ॥ ७.१,२४.४२
आवयोरभिकामो ऽपि किमसौ कामकारितः ॥ ७.१,२४.४३
यतः कामसमुत्पत्तिः प्रागेव जगदुद्भवः ॥ ७.१,२४.४३
पृथग्जनानां रतये कामात्मा कल्पितो मया ॥ ७.१,२४.४४
ततः कथमुपालब्धः कामदाहादहं त्वया ॥ ७.१,२४.४४
मां वै त्रिदशसामान्यं मन्यमानो मनोभवः ॥ ७.१,२४.४५
मनाक्परिभवं कुर्वन्मया वै भस्मसात्कृतः ॥ ७.१,२४.४५
विहारोप्यावयोरस्य जगतस्त्राणकारणात् ॥ ७.१,२४.४६
ततस्तदर्थं त्वय्यद्य क्रीडोक्तिं कृतवाहनम् ॥ ७.१,२४.४६
स चायमचिरादर्थस्तवैवाविष्करिष्यते ॥ ७.१,२४.४७
क्रोधस्य जनकं वाक्यं हृदि कृत्वेदमब्रवीत् ॥ ७.१,२४.४७
देव्युवाच
श्रुतपूर्वं हि भगवंस्तव चाटु वचो मया ॥ ७.१,२४.४८
येनैवमतिधीराहमपि प्रागभिवंचिता ॥ ७.१,२४.४८
प्राणानप्यप्रिया भर्तुर्नारी या न परित्यजेत् ॥ ७.१,२४.४९
कुलांगना शुभा सद्भिः कुत्सितैव हि गम्यते ॥ ७.१,२४.४९
भूयसी च तवाप्रीतिरगौरमिति मे वपुः ॥ ७.१,२४.५०
क्रीडोक्तिरपि कालीति घटते कथमन्यथा ॥ ७.१,२४.५०
सद्भिर्विगर्हितं तस्मात्तव कार्ष्ण्यमसंमतम् ॥ ७.१,२४.५१
अनुत्सृज्य तपोयोगात्स्थातुमेवेह नोत्सहे ॥ ७.१,२४.५१
शिव उवाच

स यद्येवंविधतापस्ते तपसा किं प्रयोजनम् ॥ ७.१,२४.५२

ममेच्छया स्वेच्छया वा वर्णान्तरवती भव ॥ ७.१,२४.५२

देव्युवाच

नेच्छामि भवतो वर्णं स्वयं वा कर्तुमन्यथा ॥ ७.१,२४.५३

ब्रह्माणं तपसाराध्य क्षिप्रं गौरी भवाम्यहम् ॥ ७.१,२४.५३

ईश्वर उवाच

मत्प्रसादात्पुरा ब्रह्मा ब्रह्मत्वं प्राप्तवान्पुरा ॥ ७.१,२४.५४

तमाहूय महादेवि तपसा किं करिष्यसि ॥ ७.१,२४.५४

देव्युवाच

त्वत्तो लब्धपदा एव सर्वे ब्रह्मादयः सुराः ॥ ७.१,२४.५५

तथाप्याराध्य तपसा ब्रह्माणं त्वन्नियोगतः ॥ ७.१,२४.५५

पुरा किल सती नाम्ना दक्षस्य दुहिता ऽभवम् ॥ ७.१,२४.५६

जगतां पतिमेवं त्वां पतिं प्राप्तवती तथा ॥ ७.१,२४.५६

एवमद्यापि तपसा तोषयित्वा द्विजं विधिम् ॥ ७.१,२४.५७

गौरी भवितुमिच्छामि को दोषः कथ्यतामिह ॥ ७.१,२४.५७

एवमुक्तो महादेव्या वामदेवः स्मयन्निव ॥ ७.१,२४.५८

न तां निर्बंधयामास देवकार्यचिकीर्षया ॥ ७.१,२४.५८

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे शिवमन्दरगिरिनिवासक्रीडोक्तवर्णनं नाम चतुर्विंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः २५



वायुरुवाच
ततः प्रदक्षिणीकृत्य पतिमम्बा पतिव्रता ॥ ७.१,२५.१
नियम्य च वियोगार्तिं जगाम हिमवद्गिरिम् ॥ ७.१,२५.१
तपःकृतवती पूर्वं देशे यस्मिन्सखीजनैः ॥ ७.१,२५.२
तमेव देशमवृनोत्तपसे प्रणयात्पुनः ॥ ७.१,२५.२
ततः स्वपितरं दृष्ट्वा मातरं च तयोर्गृहे ॥ ७.१,२५.३
प्रणम्य वृत्तं विज्ञाप्य ताभ्यां चानुमता सती ॥ ७.१,२५.३
पुनस्तपोवनं गत्वा भूषणानि विसृज्य च ॥ ७.१,२५.४
स्नात्वा तपस्विनो वेषं कृत्वा परमपावनम् ॥ ७.१,२५.४
संकल्प्य च महातीव्रं तपः परमदुश्चरम् ॥ ७.१,२५.५
सदा मनसि सन्धाय भर्तुश्चरणपंकजम् ॥ ७.१,२५.५
तमेव क्षणिके लिंगे ध्यात्वा बाह्यविधानतः ॥ ७.१,२५.६
त्रिसन्ध्यमभ्यर्चयन्ती वन्यैः पुष्पैः फलादिभिः ॥ ७.१,२५.६
स एव ब्रह्मणो मूर्तिमास्थाय तपसः फलम् ॥ ७.१,२५.७
प्रदास्यति ममेत्येवं नित्यं कृत्वा ऽकरोत्तपः ॥ ७.१,२५.७
तथा तपश्चरन्तीं तां काले बहुतिथे गते ॥ ७.१,२५.८
दृष्टः कश्चिन्महाव्याघ्रो दुष्टभावादुपागमत् ॥ ७.१,२५.८
तथैवोपगतस्यापि तस्यातीवदुरात्मनः ॥ ७.१,२५.९
गात्रं चित्रार्पितमिव स्तब्धं तस्यास्सकाशतः ॥ ७.१,२५.९
तं दृष्ट्वापि तथा व्याघ्रं दुष्टभावादुपागतम् ॥ ७.१,२५.१०
न पृथग्जनवद्देवी स्वभावेन विविच्यते ॥ ७.१,२५.१०
स तु विष्टब्धसर्वांगो बुभुक्षापरिपीडितः ॥ ७.१,२५.११
ममामिषं ततो नान्यदिति मत्वा निरन्तरम् ॥ ७.१,२५.११
निरीक्ष्यमाणः सततं देवीमेव तदा ऽनिशम् ॥ ७.१,२५.१२
अतिष्ठदग्रतस्तस्या उपासनमिवाचरत् ॥ ७.१,२५.१२
देव्याश्च हृदये नित्यं ममैवायमुपासकः ॥ ७.१,२५.१३
त्राता च दुष्टसत्त्वेभ्य इति प्रववृते कृपा ॥ ७.१,२५.१३
तस्या एव कृपा योगात्सद्योनष्टमलत्रयः ॥ ७.१,२५.१४

बभूव सहसा व्याघ्रो देवीं च बुबुधे तदा ॥ ७.१,२५.१४
न्यवर्तत बुभुक्षा च तस्यांगस्तम्भनं तथा ॥ ७.१,२५.१५
दौरात्म्यं जन्मसिद्धं च तृप्तिश्च समजायत ॥ ७.१,२५.१५
तदा परमभावेन ज्ञात्वा कार्तार्थ्यमात्मनः ॥ ७.१,२५.१६
सद्योपासक एवैष सिषेवे परमेश्वरीम् ॥ ७.१,२५.१६
दुष्टानामपि सत्त्वानां तथान्येषान्दुरात्मनाम् ॥ ७.१,२५.१७
स एव द्रावको भूत्वा विचचार तपोवने ॥ ७.१,२५.१७
तपश्च ववृधे देव्यास्तीव्रं तीव्रतरात्मकम् ॥ ७.१,२५.१८
देवाश्च दैत्यनिर्बन्धाद्ब्रह्माणं शरणं गताः ॥ ७.१,२५.१८
चक्रुर्निवेदनं देवाः स्वदुःखस्यारिपीडनात् ॥ ७.१,२५.१९
यथा च ददतुः शुम्भनिशुम्भौ वरसम्मदात् ॥ ७.१,२५.१९
सो ऽपि श्रुत्वा विधिर्दुःखं सुराणां कृपयान्वितः ॥ ७.१,२५.२०
आसीद्दैत्यवधायैव स्मृत्वा हेत्वाश्रयां कथाम् ॥ ७.१,२५.२०
सामरः प्रार्थितो ब्रह्मा ययौ देव्यास्तपोवनम् ॥ ७.१,२५.२१
संस्मरन्मनसा देवदुःखमोक्षं स्वयत्नतः ॥ ७.१,२५.२१
ददर्श च सुरश्रेष्ठः श्रेष्ठे तपसि निष्ठिताम् ॥ ७.१,२५.२२
प्रतिष्ठामिव विश्वस्य भवानीं परमेश्वरीम् ॥ ७.१,२५.२२
ननाम चास्य जगतो मातरं स्वस्य वै हरेः ॥ ७.१,२५.२३
रुद्रस्य च पितुर्भार्यामार्यामद्रीश्वरात्मजाम् ॥ ७.१,२५.२३
ब्रह्माणमागतं दृष्ट्वा देवी देवगणैः सह ॥ ७.१,२५.२४
अर्घ्यं तदर्हं दत्त्वा ऽस्मै स्वागताद्यैरुपाचरत् ॥ ७.१,२५.२४
तां च प्रत्युपचारोक्तिं पुरस्कृत्याभिनंद्य च ॥ ७.१,२५.२५
पप्रच्छ तपसो हेतुमजानन्निव पद्मजः ॥ ७.१,२५.२५
ब्रह्मोवाच
तीव्रेण तपसानेन देव्या किमिह साध्यते ॥ ७.१,२५.२६
तपःफलानां सर्वेषां त्वदधीना हि सिद्धयः ॥ ७.१,२५.२६
यश्चैव जगतां भर्ता तमेव परमेश्वरम् ॥ ७.१,२५.२७
भर्तारमात्मना प्राप्य प्राप्तञ्च तपसः फलम् ॥ ७.१,२५.२७
अथवा सर्वमेवैतत्क्रीडाविलसितं तव ॥ ७.१,२५.२८
इदन्तु चित्रं देवस्य विरहं सहसे कथम् ॥ ७.१,२५.२८
देव्युवाच
सर्गादौ भवतो देवादुत्पत्तिः श्रूयते यदा ॥ ७.१,२५.२९
तदा प्रजानां प्रथमस्त्वं मे प्रथमजः सुतः ॥ ७.१,२५.२९

यदा पुनः प्रजावृद्ध्यै ललाटाद्भवतो भवः ॥ ७.१,२५.३०
उत्पन्नो ऽभूत्तदा त्वं मे गुरुः श्वशुरभावतः ॥ ७.१,२५.३०
यदा भवद्गिरीन्द्रस्ते पुत्रो मम पिता स्वयम् ॥ ७.१,२५.३१
तदा पितामहस्त्वं मे जातो लोकपितामह ॥ ७.१,२५.३१
तदीदृशस्य भवतो लोकयात्राविधायिनः ॥ ७.१,२५.३२
वृत्तवन्तःपुरे भर्ता कथयिष्ये कथं पुनः ॥ ७.१,२५.३२
किमत्र बहुना देहे यश्चायं मम कालिमा ॥ ७.१,२५.३३
त्यक्त्वा सत्त्वविधानेन गौरी भवितुमुत्सहे ॥ ७.१,२५.३३
५३०

ब्रह्मोवाच
एतावता किमर्थेन तीव्रं देवि तपः कृतम् ॥ ७.१,२५.३४
स्वेच्छैव किमपर्याप्ता क्रीडेयं हि तवेदृशी ॥ ७.१,२५.३४
क्रीडा ऽपि च जगन्मातस्तव लोकहिताय वै ॥ ७.१,२५.३५
अतो ममेष्टमनया फलं किमपि साध्यताम् ॥ ७.१,२५.३५
निशुंभशुंभनामानौ दैत्यौ दत्तवरौ मया ॥ ७.१,२५.३६
दृप्तौ देवान्प्रबाधेते त्वत्तो लब्धस्तयोर्वधः ॥ ७.१,२५.३६
अलं विलंबनेनात्र त्वं क्षणेन स्थिरा भव ॥ ७.१,२५.३७
शक्तिर्विसृज्यमाना ऽद्य तयोर्मृत्युर्भविष्यति ॥ ७.१,२५.३७
ब्राह्मणाभ्यर्थिता चैव देवी गिरिवरात्मजा ॥ ७.१,२५.३८
त्वक्कोशं सहसोत्सृज्य गौरी सा समजायत ॥ ७.१,२५.३८
सा त्वक्कोशात्मनोत्सृष्टा कौशिकी नाम नामतः ॥ ७.१,२५.३९
काली कालाम्बुदप्रख्या कन्यका समपद्यत ॥ ७.१,२५.३९
सा तु मायात्मिका शक्तिर्योगनिद्रा च वैष्णवी ॥ ७.१,२५.४०
शंखचक्रत्रिशूलादिसायुधाष्टमहाभुजा ॥ ७.१,२५.४०
सौम्या घोरा च मिश्रा च त्रिनेत्रा चन्द्रशेखरा ॥ ७.१,२५.४१
अजातपुंस्पर्शरतिरधृष्या चातिसुन्दरी ॥ ७.१,२५.४१
दत्ता च ब्रह्मणे देव्या शक्तिरेषा सनातनी ॥ ७.१,२५.४२
निशुंभस्य च शुंभस्य निहंत्री दैत्यसिंहयोः ॥ ७.१,२५.४२
ब्रह्मणापि प्रहृष्टेन तस्यै परमशक्तये ॥ ७.१,२५.४३
प्रबलः केसरी दत्तो वाहनत्वे समागतः ॥ ७.१,२५.४३
विन्ध्ये च वसतिं तस्याः पूजामासवपूर्वकैः ॥ ७.१,२५.४४
मांसैर्मत्स्यैरपूपैश्च निर्वर्त्यासौ समादिशत् ॥ ७.१,२५.४४

सा चैव संमता शक्तिर्ब्रह्मणो विश्वकर्मणः ॥ ७.१,२५.४५
प्रणम्य मातरं गौरीं ब्रह्माणं चानुपूर्वशः ॥ ७.१,२५.४५
शक्तिभिश्चापि तुल्याभिः स्वात्मजाभिरनेकशः ॥ ७.१,२५.४६
परीता प्रययौ विन्ध्यं दैत्येन्द्रौ हन्तुमुद्यता ॥ ७.१,२५.४६
निहतौ च तया तत्र समरे दैत्यपुंगवौ ॥ ७.१,२५.४७
तद्बाणैः कामबाणैश्च च्छिन्नभिन्नांगमानसौ ॥ ७.१,२५.४७
तद्युद्धविस्तरश्चात्र न कृतो ऽन्यत्र वर्णनात् ॥ ७.१,२५.४८
ऊहनीयं परस्माच्च प्रस्तुतं वर्णयामि वः ॥ ७.१,२५.४८

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे देवीगौरत्वभवनं नाम पञ्चविंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः २६



वायुरुवाच

उत्पाद्य कौशिकीं गौरी ब्रह्मणे प्रतिपाद्य ताम् ॥ ७.१,२६.१

तस्य प्रत्युपकाराय पितामहमथाब्रवीत् ॥ ७.१,२६.१

देव्युवाच

दृष्टः किमेष भवता शार्दूलो मदुपाश्रयः ॥ ७.१,२६.२

अनेन दुष्टसत्त्वेभ्यो रक्षितं मत्तपोवनम् ॥ ७.१,२६.२

मय्यर्पितमना एष भजते मामनन्यधीः ॥ ७.१,२६.३

अस्य संरक्षणादन्यत्प्रियं मम न विद्यते ॥ ७.१,२६.३

भवितव्यमनेनातो ममान्तःपुरचारिणा ॥ ७.१,२६.४

गणेश्वरपदं चास्मै प्रीत्या दास्यति शंकरः ॥ ७.१,२६.४

एनमग्रेसरं कृत्वा सखीभिर्गन्तुमुत्सहे ॥ ७.१,२६.५

प्रदीयतामनुज्ञा मे प्रजानां पतिना १ त्वया ॥ ७.१,२६.५

इत्युक्तः प्रहसन्ब्रह्मा देवीम्मुग्धामिव स्मयन् ॥ ७.१,२६.६

तस्य तीव्रैः पुरावृत्तैर्दौरात्म्यं समवर्णयत्१ ॥ ७.१,२६.६

ब्रह्मोवाच

पशौ देवि मृगाः क्रूराः क्व च ते ऽनुग्रहः शुभः ॥ ७.१,२६.७

आशीविषमुखे साक्षादमृतं किं निषिच्यते ॥ ७.१,२६.७

व्याघ्रमात्रेण सन्नेष दुष्टः को ऽपि निशाचरः ॥ ७.१,२६.८

अनेन भक्षिता गावो ब्राह्मणाश्च तपोधनाः ॥ ७.१,२६.८

तर्पयंस्तान्यथाकामं कामरूपी चरत्यसौ ॥ ७.१,२६.९

अवश्यं खलु भोक्तव्यं फलं पापस्य कर्मणः ॥ ७.१,२६.९

अतः किं कृपया कृत्यमीदृशेषु दुरात्मसु ॥ ७.१,२६.१०

अनेन देव्याः किं कृत्यं प्रकृत्या कलुषात्मना ॥ ७.१,२६.१०

देव्युवाच

यदुक्तं भवता सर्वं तथ्यमस्त्वयमीदृशः ॥ ७.१,२६.११

तथापि मां प्रपन्नो ऽभून्न त्याज्यो मामुपाश्रितः ॥ ७.१,२६.११

ब्रह्मोवाच

अस्य भक्तिमविज्ञाय प्राग्वृत्तं ते निवेदितम् ॥ ७.१,२६.१२

भक्तिश्चेदस्य किं पापैर्न ते भक्तः प्रणश्यति ॥ ७.१,२६.१२
पुण्यकर्मापि किं कुर्यात्त्वदीयाज्ञानपेक्षया ॥ ७.१,२६.१३
अजा प्रज्ञा पुराणी च त्वमेव परमेश्वरी ॥ ७.१,२६.१३
त्वदधीना हि सर्वेषां बंधमोक्षव्यवस्थितिः ॥ ७.१,२६.१४
त्वदृते परमा शक्तिः संसिद्धिः कस्य कर्मणा ॥ ७.१,२६.१४
त्वमेव विविधा शक्तिः भवानामथ वा स्वयम् ॥ ७.१,२६.१५
अशक्तः कर्मकरणे कर्ता वा किं करिष्यति ॥ ७.१,२६.१५
विष्णोश्च मम चान्येषां देवदानवरक्षसाम् ॥ ७.१,२६.१६
तत्तदैश्वर्यसम्प्राप्त्यै तवैवाज्ञा हि कारणम् ॥ ७.१,२६.१६
अतीताः खल्वसंख्याता ब्रह्माणो हरयो भवाः ॥ ७.१,२६.१७
अनागतास्त्वसंख्यातास्त्वदाज्ञानुविधायिनः ॥ ७.१,२६.१७
त्वामनाराध्य देवेशि पुरुषार्थचतुष्टयम् ॥ ७.१,२६.१८
लब्धुं न शक्यमस्माभिरपि सर्वैः सुरोत्तमैः ॥ ७.१,२६.१८
व्यत्यासो ऽपि भवेत्सद्यो ब्रह्मत्वस्थावरत्वयोः ॥ ७.१,२६.१९
सुकृतं दुष्कृतं चापि त्वयेव स्थापितं यतः ॥ ७.१,२६.१९
त्वं हि सर्वजगद्भर्तुश्शिवस्य परमात्मनः ॥ ७.१,२६.२०
अनादिमध्यनिधना शक्तिराद्या सनातनी ॥ ७.१,२६.२०
समस्तलोकयात्रार्थं मूर्तिमाविश्य कामपि ॥ ७.१,२६.२१
क्रीडसे २ विविधैर्भावैः कस्त्वां जानाति तत्त्वतः ॥ ७.१,२६.२१
अतो दुष्कृतकर्मापि व्याघ्रो ऽयं त्वदनुग्रहात् ॥ ७.१,२६.२२
प्राप्नोतु परमां सिद्धिमत्र कः प्रतिबन्धकः ॥ ७.१,२६.२२
इत्यात्मनः परं भावं स्मारयित्वानुरूपतः ॥ ७.१,२६.२३
ब्रह्मणाभ्यर्थिता गौरी तपसो ऽपि न्यवर्तत ॥ ७.१,२६.२३
ततो देवीमनुज्ञाप्य ब्रह्मण्यन्तर्हिते सति ॥ ७.१,२६.२४
देवीं च मातरं दृष्ट्वा मेनां हिमवता सह ॥ ७.१,२६.२४
प्रणम्याश्वास्य बहुधा पितरौ विरहासहौ ॥ ७.१,२६.२५
तपः प्रणयिनो देवी तपोवनमहीरुहान् ॥ ७.१,२६.२५
विप्रयोगशुचेवाग्रे पुष्पबाष्पं विमुंचतः ॥ ७.१,२६.२६
तत्तुच्छाखासमारूढविहगो दीरितै रुतैः ॥ ७.१,२६.२६
व्याकुलं बहुधा दीनं विलापमिव कुर्वतः ॥ ७.१,२६.२७
सखीभ्यः कथयंत्येवं सत्त्वरा भर्तृदर्शने ॥ ७.१,२६.२७
पुरस्कृत्य च तं व्याघ्रं स्नेहात्पुत्रमिवौरसम् ॥ ७.१,२६.२८
देहस्य प्रभया चैव दीपयन्ती दिशो दश ॥ ७.१,२६.२८

प्रययौ मंदरं गौरी यत्र भर्ता महेश्वरः ॥ ७.१,२६.२९
सर्वेषां जगतां धाता कर्ता पाता विनाशकृत् ॥ ७.१,२६.२९

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे व्याघ्रगतिवर्णनं नाम षड्विंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः २७

https://sa.wikisource.org/s/hrd



ऋषय ऊचुः

कृत्वा गौरं वपुर्दिव्यं देवी गिरिवरात्मजा ॥ ७.१,२७.१

कथं ददर्श भर्तारं प्रविष्टा मन्दितं सती ॥ ७.१,२७.१

प्रवेशसमये तस्या भवनद्वारगोचरैः ॥ ७.१,२७.२

गणेशैः किं कृतं देवस्तान्दृष्ट्वा किन्तदा ऽकरोत् ॥ ७.१,२७.२

वायुरुवाच

प्रवक्तुमंजसा ऽशक्यः तादृशः परमो रसः ॥ ७.१,२७.३

येन प्रणयगर्भेण भावो भाववतां हृतः ॥ ७.१,२७.३

द्वास्थैस्ससंभ्रमैरेव देवो देव्यागमोत्सुकः ॥ ७.१,२७.४

शंकमाना प्रविष्टान्तस्तञ्च सा समपश्यत ॥ ७.१,२७.४

तैस्तैः प्रणयभावैश्च भवनान्तरवर्तिभिः ॥ ७.१,२७.५

गणेन्द्रैर्वन्दिता वाचा प्रणनाम त्रियम्बकम् ॥ ७.१,२७.५

प्रणम्य नोत्थिता यावत्तावत्तां परमेश्वरः ॥ ७.१,२७.६

प्रगृह्य दोर्भ्यामाश्लिष्य परितः परया मुदा ॥ ७.१,२७.६

स्वांके धर्तुं प्रवृत्तो ऽपि सा पर्यंके न्यषीदत ॥ ७.१,२७.७

पर्यंकतो बलाद्देवीं सोङ्कमारोप्य सुस्मिताम् ॥ ७.१,२७.७

सस्मितो विवृतैर्नेत्रैस्तद्वक्त्रं प्रपिबन्निव ॥ ७.१,२७.८

तया संभाषणायेशः पूर्वभाषितमब्रवीत् ॥ ७.१,२७.८

देवदेव उवाच

सा दशा च व्यतीता किं तव सर्वांगसुन्दरि ॥ ७.१,२७.९

यस्यामनुनयोपायः को ऽपि कोपान्न लभ्यते ॥ ७.१,२७.९

स्वेच्छयापि न कालीति नान्यवर्णवतीति च ॥ ७.१,२७.१०

त्वत्स्वभावाहृतं चित्तं सुभ्रु चिंतावहं मम ॥ ७.१,२७.१०

विस्मृतः परमो भावः कथं स्वेच्छांगयोगतः ॥ ७.१,२७.११

न सम्भवन्ति ये तत्र चित्तकालुष्यहेतवः ॥ ७.१,२७.११

पृथग्जनवदन्योन्यं विप्रियस्यापि कारणम् ॥ ७.१,२७.१२

आवयोरपि यद्यस्ति नास्त्येवैतच्चराचरम् ॥ ७.१,२७.१२

अहमग्निशिरोनिष्ठस्त्वं सोमशिरसि स्थिता ॥ ७.१,२७.१३

अग्नीषोमात्मकं विश्वमावाभ्यां समधिष्ठितम् ॥ ७.१,२७.१३
जगद्धिताय चरतोः स्वेच्छाधृतशरीरयोः ॥ ७.१,२७.१४
आवयोर्विप्रयोगे हि स्यान्निरालम्बनं जगत् ॥ ७.१,२७.१४
अस्ति हेत्वन्तरं चात्र शास्त्रयुक्तिविनिश्चितम् ॥ ७.१,२७.१५
वागर्थमिव मे वैतज्जगत्स्थावरजंगमम् ॥ ७.१,२७.१५
त्वं हि वागमृतं साक्षादहमर्थामृतं परम् ॥ ७.१,२७.१६
द्वयमप्यमृतं कस्माद्वियुक्तमुपपद्यते ॥ ७.१,२७.१६
विद्याप्रत्यायिका त्वं मे वेद्यो ऽहं प्रत्ययात्तव ॥ ७.१,२७.१७
विद्यावेद्यात्मनोरेव विश्लेषः कथमावयोः ॥ ७.१,२७.१७
न कर्मणा सृजामीदं जगत्प्रतिसृजामि च ॥ ७.१,२७.१८
सर्वस्याज्ञैकलभ्यत्वादाज्ञात्वं हि गरीयसी ॥ ७.१,२७.१८
आज्ञैकसारमैश्वर्यं यस्मात्स्वातंत्र्यलक्षणम् ॥ ७.१,२७.१९
आज्ञया विप्रयुक्तस्य चैश्वर्यं मम कीदृशम् ॥ ७.१,२७.१९
न कदाचिदवस्थानमावयोर्विप्रयुक्तयोः ॥ ७.१,२७.२०
देवानां कार्यमुद्दिश्य लीलोक्तिं कृतवानहम् ॥ ७.१,२७.२०
त्वयाप्यविदितं नास्ति कथं कुपितवत्यसि ॥ ७.१,२७.२१
ततस्त्रिलोकरक्षार्थे कोपो मय्यपि ते कृतः ॥ ७.१,२७.२१
यदनर्थाय भूतानां न तदस्ति खलु त्वयि ॥ ७.१,२७.२२
इति प्रियंवदे साक्षादीश्वरे परमेश्वरे ॥ ७.१,२७.२२
शृंगारभावसाराणां जन्मभूमिरकृत्रिमा ॥ ७.१,२७.२३
स्वभर्त्रा ललितन्तथ्यमुक्तं मत्वा स्मितोत्तरम् ॥ ७.१,२७.२३
लज्जया न किमप्यूचे कौशिकी वर्णनात्परम् ॥ ७.१,२७.२४
तदेव वर्णयाम्यद्य शृणु देव्याश्च वर्णनम् ॥ ७.१,२७.२४
देव्युवाच
किं देवेन न सा दृष्टा या सृष्टा कौशिकी मया ॥ ७.१,२७.२५
तादृशी कन्यका लोके न भूता न भविष्यति ॥ ७.१,२७.२५
तस्या वीर्यं बलं विन्ध्यनिलयं विजयं तथा ॥ ७.१,२७.२६
शुंभस्य च निशुंभस्य मारणे च रणे तयोः ॥ ७.१,२७.२६
प्रत्यक्षफलदानं च लोकाय भजते सदा ॥ ७.१,२७.२७
लोकानां रक्षणं शश्वद्ब्रह्मा विज्ञापयिष्यति ॥ ७.१,२७.२७
इति संभाषमाणाया देव्या एवाज्ञया तदा ॥ ७.१,२७.२८
व्याघ्रः सख्या समानीय पुरो ऽवस्थापितस्तदा ॥ ७.१,२७.२८
तं प्रेक्ष्याह पुनर्देवी देवानीतमुपायतम् ॥ ७.१,२७.२९

व्याघ्रं पश्य न चानेन सदृशो मदुपासकः ॥ ७.१,२७.२९
अनेन दुष्टसंघेभ्यो रक्षितं मत्तपोवनम् ॥ ७.१,२७.३०
अतीव मम भक्तश्च विश्रब्धश्च स्वरक्षणात् ॥ ७.१,२७.३०
स्वदेशं च परित्यज्य प्रसादार्थं समागतः ॥ ७.१,२७.३१
यदि प्रीतिरभून्मत्तः परां प्रीतिं करोषि मे ॥ ७.१,२७.३१
नित्यमन्तःपुरद्वारि नियोगान्नन्दिनः स्वयम् ॥ ७.१,२७.३२
रक्षिभिस्सह तच्चिह्नैर्वर्ततामयमीश्वर ॥ ७.१,२७.३२
वायुरुवाच
मधुरं प्रणयोदर्कं श्रुत्वा देव्याः शुभं वचः ॥ ७.१,२७.३३
प्रीतो ऽस्मीत्याह तं देवस्स चादृश्यत तत्क्षणात् ॥ ७.१,२७.३३
बिभ्रद्वेत्रलतां हैमीं रत्नचित्रं च कंचुकम् ॥ ७.१,२७.३४
छुरिकामुरगप्रख्यां गणेशो रक्षवेषधृक् ॥ ७.१,२७.३४
यस्मात्सोमो महादेवो नन्दी चानेन नन्दितः ॥ ७.१,२७.३५
सोमनन्दीति विख्यातस्तस्मादेष समाख्यया ॥ ७.१,२७.३५
इत्थं देव्याः प्रियं कृत्वा देवश्चर्धेन्दुभूषणः ॥ ७.१,२७.३६
भूषयामास तन्दिव्यैर्भूषणै रत्नभूषितैः ॥ ७.१,२७.३६
ततस्स गौरीं गिरिशो गिरीन्द्रजां सगौरवां सर्वमनोहरां हरः ॥ ७.१,२७.३७
पर्यंकमारोप्य वरांगभूषणैर्विभूषयामास शशांकभूषणः ॥ ७.१,२७.३७

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे सप्तविंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः २८

https://sa.wikisource.org/s/hz3
< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | पूर्व भागः

ऋषय ऊचुः

देवीं समादधानेन देवेनेदं किमीरितम् ॥ ७.१,२८.१

अग्निषोमात्मकं विश्वं वागर्थात्मकमित्यपि ॥ ७.१,२८.१

आज्ञैकसारमैश्वर्यमाज्ञा त्वमिति चोदितम् ॥ ७.१,२८.२

तदिदं श्रोतुमिच्छामो यथावदनुपूर्वशः ॥ ७.१,२८.२

वायुरुवाच

अग्निरित्युच्यते रौद्री घोरा या तैजसी तनुः ॥ ७.१,२८.३

सोमः शाक्तो ऽमृतमयः शक्तेः शान्तिकरी तनुः ॥ ७.१,२८.३

अमृतं यत्प्रतिष्ठा सा तेजो विद्या कला स्वयम् ॥ ७.१,२८.४

भूतसूक्ष्मेषु सर्वेषु त एव रसतेजसी ॥ ७.१,२८.४

द्विविधा तेजसो वृत्तिसूर्यात्मा चानलात्मिका ॥ ७.१,२८.५

तथैव रसवृत्तिश्च सोमात्मा च जलात्मिका ॥ ७.१,२८.५

विद्युदादिमयन्तेजो मधुरादिमयो रसः ॥ ७.१,२८.६

तेजोरसविभेदैस्तु धृतमेतच्चराचरम् ॥ ७.१,२८.६

अग्नेरमृतनिष्पत्तिरमृतेनाग्निरेधते ॥ ७.१,२८.७

अत एव हि विक्रान्तमग्नीषोमं जगद्धितम् ॥ ७.१,२८.७

हविषे सस्यसम्पत्तिर्वृष्टिः सस्याभिवृद्धये ॥ ७.१,२८.८

वृष्टेरेव हविस्तस्मादग्नीषोमधृतं जगत् ॥ ७.१,२८.८

अग्निरूर्ध्वं ज्वलत्येष यावत्सौम्यं परामृतम् ॥ ७.१,२८.९

यावदग्न्यास्पदं सौम्यममृतं च स्रवत्यधः ॥ ७.१,२८.९

अत एव हि कालाग्निरधस्ताच्छक्तिरूर्ध्वतः ॥ ७.१,२८.१०

यावदादहनं चोर्ध्वमधश्चाप्लावनं भवेत् ॥ ७.१,२८.१०

आधारशक्त्यैव धृतः कालाग्निरयमूर्ध्वगः ॥ ७.१,२८.११

तथैव निम्नगः सोमश्शिवशक्तिपदास्पदः ॥ ७.१,२८.११

शिवश्चोर्ध्वमधश्शक्तिरूर्ध्वं शक्तिरधः शिवः ॥ ७.१,२८.१२

तदित्थं शिवशक्तिभ्यान्नाव्याप्तमिह किञ्चन ॥ ७.१,२८.१२

असकृच्चाग्निना दग्धं जगद्यद्भस्मसात्कृतम् ॥ ७.१,२८.१३

अग्नेर्वीर्यमिदं चाहुस्तद्वीर्यं भस्म यत्ततः ॥ ७.१,२८.१३

यश्चेत्थं भस्मसद्भावं ज्ञात्वा स्नाति च भस्मना ॥ ७.१,२८.१४

अग्निरित्यादिभिर्मन्त्रैर्बद्धः पाशात्प्रमुच्यते ॥ ७.१,२८.१४

अग्नेर्वीर्यं तु यद्भस्म सोमेनाप्लावितम्पुनः ॥ ७.१,२८.१५

अयोगयुक्त्या प्रकृतेरधिकाराय कल्पते ॥ ७.१,२८.१५

योगयुक्त्या तु तद्भस्म प्लाव्यमानं समन्ततः ॥ ७.१,२८.१६

शाक्तेनामृतवर्षेण चाधिकारान्निवर्तयेत् ॥ ७.१,२८.१६

अतो मृत्युंजयायेत्थममृतप्लावनं सदा ॥ ७.१,२८.१७

शिवशक्त्यमृतस्पर्शे लब्धं येन कुतो मृतिः ॥ ७.१,२८.१७

यो वेद दहनं गुह्यं प्लावनं च यथोदितम् ॥ ७.१,२८.१८

अग्नीषोमपदं हित्वा न स भूयो ऽभिजायते ॥ ७.१,२८.१८

शिवाग्निना तनुं दग्ध्वा शक्तिसौम्या मृतेन यः ॥ ७.१,२८.१९

प्लावयेद्योगमार्गेण सो ऽमृतत्वाय कल्पते ॥ ७.१,२८.१९

हृदि कृत्वेममर्थं वै देवेन समुदाहृतम् ॥ ७.१,२८.२०

अग्नीषोमात्मकं विश्वं जगदित्यनुरूपतः ॥ ७.१,२८.२०

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे भस्मतत्त्ववर्णनं नामाष्टाविंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः २९



वायुरुवाच

निवेदयामि जगतो वागर्थात्म्यं कृतं यथा ॥ १

षडध्ववेदनं सम्यक्समासान्न तु विस्तरात् ॥ १

नास्ति कश्चिदशब्दार्थो नापि शब्दो निरर्थकः ॥ २

ततो हि समये शब्दस्सर्वस्सर्वार्थबोधकः ॥ २

प्रकृतेः परिणामो ऽयं द्विधा शब्दार्थभावना ॥ ३

तामाहुः प्राकृतीं मूर्तिं शिवयोः परमात्मनोः ॥ ३

शब्दात्मिका विभूतिर्या सा त्रिधा कथ्यते बुधैः ॥ ४

स्थूला सूक्ष्मा परा चेति स्थूला या श्रुतिगोचरा ॥ ४

सूक्ष्मा चिन्तामयी प्रोक्ता चिंतया रहिता परा ॥ ५

या शक्तिः सा परा शक्तिश्शिवतत्त्वसमाश्रया ॥ ५

ज्ञानशक्तिसमायोगादिच्छोपोद्बलिका तथा ॥ ६

सर्वशक्तिसमष्ट्यात्मा शक्तितत्त्वसमाख्यया ॥ ६

समस्तकार्यजातस्य मूलप्रकृतितां गता ॥ ७

सैव कुण्डलिनी माया शुद्धाध्वपरमा सती ॥ ७

सा विभागस्वरूपैव षडध्वात्मा विजृंभते ॥ ८

तत्र शब्दास्त्रयो ऽध्वानस्त्रयश्चार्थाः समीरिताः ॥ ८

सर्वेषामपि वै पुंसां नैजशुद्ध्यनुरूपतः ॥ ९

लयभोगाधिकारास्स्युस्सर्वतत्त्वविभागतः ॥ ९

कलाभिस्तानि तत्त्वानि व्याप्तान्येव यथातथम् ॥ १०

परस्याः प्रकृतेरादौ पञ्चधा परिणामतः ॥ १०

कलाश्च ता निवृत्त्याद्याः पर्याप्ता इति निश्चयः ॥ ११

मंत्राध्वा च पदाध्वा च वर्णाध्वा चेति शब्दतः ॥ ११

भुवनाध्वा च तत्त्वाध्वा कलाध्वा चार्थतः क्रमात् ॥ १२

अत्रान्योन्यं च सर्वेषां व्याप्यव्यापकतोच्यते ॥ १२

मंत्राः सर्वैः पदैर्व्याप्ता वाक्यभावात्पदानि च ॥ १३

वर्णैर्वर्णसमूहं हि पदमाहुर्विपश्चितः ॥ १३

वर्णास्तु भुवनैर्व्याप्तास्तेषां तेषूपलंभनात् ॥ १४

भुवनान्यपि तत्त्वौघैरुत्पत्त्यांतर्बहिष्क्रमात् ॥ १४

व्याप्तानि कारणैस्तत्त्वैरारब्धत्वादनेकशः ॥ १५

अंतरादुत्थितानीह भुवनानि तु कानिचित् ॥ १५

पौराणिकानि चान्यानि विज्ञेयानि शिवागमे ॥ १६

सांख्ययोगप्रसिद्धानि तत्त्वान्यपि च कानिचित् ॥ १६

शिवशास्त्रप्रसिद्धानि ततोन्यान्यपि कृत्स्नशः ॥ १७

कलाभिस्तानि तत्त्वानि व्याप्तान्येव यथातथम् ॥ १७

परस्याः प्रकृतेरादौ पञ्चधा परिणामतः ॥ १८

कलाश्च ता निवृत्त्याद्या व्याप्ताः पञ्च यथोत्तरम् ॥ १८

व्यापिकातः परा शक्तिरविभक्ता षडध्वनाम् ॥ १९

परप्रकृतिभावस्य तत्सत्त्वाच्छिवतत्त्वतः ॥ १९

शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवम् ॥ २०

व्याप्तमेकेन तेनैव मृदा कुंभादिकं यथा ॥ २०

शैवं तत्परमं धाम यत्प्राप्यं षड्भिरध्वभिः ॥ २१

व्यापिका ऽव्यापिका शक्तिः पञ्चतत्त्वविशोधनात् ॥ २१

निवृत्त्या रुद्रपर्यन्तं स्थितिरण्डस्य शोध्यते ॥ २२

प्रतिष्ठया तदूर्ध्वं तु यावदव्यक्तगोचरम् ॥ २२

तदूर्ध्वं विद्यया मध्ये यावद्विश्वेश्वरावधि ॥ २३

शान्त्या तदूर्ध्वं मध्वान्ते विशुद्धिः शान्त्यतीतया ॥ २३

यामाहुः परमं व्योम परप्रकृतियोगतः ॥ २४

एतानि पञ्चतत्त्वानि यैर्व्याप्तमखिलं जगत् ॥ २४

तत्रैव सर्वमेवेदं द्रष्टव्यं खलु साधकैः ॥ २५

अध्वव्याप्तिमविज्ञाय शुद्धिं यः कर्तुमिच्छति ॥ २५

स विप्रलम्भकः शुद्धेर्नालम्प्रापयितुं फलम् ॥ २६

वृथा परिश्रमस्तस्य निरयायैव केवलम् ॥ २६
शक्तिपातसमायोगादृते तत्त्वानि तत्त्वतः ॥ २७
तद्व्याप्तिस्तद्विवृद्धिश्च ज्ञातुमेवं न शक्यते ॥ २७
शक्तिराज्ञा परा शैवी चिद्रूपा मरमेश्वरी ॥ २८
शिवो ऽधितिष्ठत्यखिलं यया कारणभूतया ॥ २८
नात्मनो नैव मायैषा न विकारो विचारतः ॥ २९
न बंधो नापि मुक्तिश्च बंधमुक्तिविधायिनी ॥ २९
सर्वैश्वर्यपराकाष्ठा शिवस्य व्यभिचारिणी ॥ ३०
समानधर्मिणी तस्य तैस्तैर्भावैर्विशेषतः ॥ ३०
स तयैव गृही सापि तेनैव गृहिणी सदा ॥ ३१
तयोरपत्यं यत्कार्यं परप्रकृतिजं जगत् ॥ ३१
स कर्ता कारणं सेति तयोर्भेदो व्यवस्थितः ॥ ३२
एक एव शिवः साक्षाद्द्विधा ऽसौ समवस्थितः ॥ ३२
स्त्रीपुंसभावेन तयोर्भेद इत्यपि केचन ॥ ३३
अपरे तु परा शक्तिः शिवस्य समवायिनी ॥ ३३
प्रभेव भानोश्चिद्रूपा भिन्नैवेति व्यवस्थितः ॥ ३४
तस्माच्छिवः परो हेतुस्तस्याज्ञा परमेश्वरी ॥ ३४
तयैव प्रेरिता शैवी मूलप्रकृतिरव्यया ॥ ३५
महामाया च माया च प्रकृतिस्त्रिगुणेति च ॥ ३५
त्रिविधा कार्यवेधेन सा प्रसूते षडध्वनः ॥ ३६
स वागर्थमयश्चाध्वा षड्विधो निखिलं जगत् ॥ ३६
अस्यैव विस्तरं प्राहुः शास्त्रजातमशेषतः ॥ ३७

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे वागर्थकतत्त्ववर्णनं नामैकोनत्रिंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः ३०

https://sa.wikisource.org/s/hz5
< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | पूर्व भागः

ऋषय ऊचुः

चरितानि विचित्राणि गुह्याणि गहनानि च ॥ ७.१,३०.१

दुर्विज्ञेयानि देवैश्च मोहयंति मनांसि नः ॥ ७.१,३०.१

शिवयोस्तत्त्वसम्बन्धे न दोष उपलभ्यते ॥ ७.१,३०.२

चरितैः प्राकृतो भावस्तयोरपि विभाव्यते ॥ ७.१,३०.२

ब्रह्मादयो ऽपि लोकानां सृष्टिस्थित्यन्तहेतवः ॥ ७.१,३०.३

निग्रहानुग्रहौ प्राप्य शिवस्य वशवर्तिनः ॥ ७.१,३०.३

शिवः पुनर्न कस्यापि निग्रहानुग्रहास्पदम् ॥ ७.१,३०.४

अतो ऽनायत्तमैश्वर्यं तस्यैवेति विनिश्चितम् ॥ ७.१,३०.४

यद्येवमीदृशैश्वर्यं तत्तु स्वातन्त्र्यलक्षणम् ॥ ७.१,३०.५

स्वभावसिद्धं चैतस्य मूर्तिमत्तास्पदं भवेत् ॥ ७.१,३०.५

न मूर्तिश्च स्वतंत्रस्य घटते मूलहेतुना ॥ ७.१,३०.६

मूर्तेरपि च कार्यत्वात्तत्सिद्धिः स्यादहैतुकी ॥ ७.१,३०.६

सर्वत्र परमो भावो ऽपरमश्चान्य उच्यते ॥ ७.१,३०.७

परमापरमौ भावौ कथमेकत्र संगतौ ॥ ७.१,३०.७

निष्फलो हि स्वभावो ऽस्य परमः परमात्मनः ॥ ७.१,३०.८

स एव सकलः कस्मात्स्वभावो ह्यविपर्ययः ॥ ७.१,३०.८

स्वभावो विपरीतश्चेत्स्वतंत्रः स्वेच्छया यदि ॥ ७.१,३०.९

न करोति किमीशानो नित्यानित्यविपर्ययम् ॥ ७.१,३०.९

मूर्तात्मा सकलः कश्चित्स चान्यो निष्फलः शिवः ॥ ७.१,३०.१०

शिवेनाधिष्ठितश्चेति सर्वत्र लघु कथ्यते ॥ ७.१,३०.१०

मूर्त्यात्मैव तदा मूर्तिः शिवस्यास्य भवेदिति ॥ ७.१,३०.११

तस्य मूर्तौ मूर्तिमतोः पारतंत्र्यं हि निश्चितम् ॥ ७.१,३०.११

अन्यथा निरपेक्षेण मूर्तिः स्वीक्रियते कथम् ॥ ७.१,३०.१२

मूर्तिस्वीकरणं तस्मान्मूर्तौ साध्यफलेप्सया ॥ ७.१,३०.१२
न हि स्वेच्छाशरीरत्वं स्वातंत्र्यायोपपद्यते ॥ ७.१,३०.१३
स्वेच्छैव तादृशी पुंसां यस्मात्कर्मानुसारिणी ॥ ७.१,३०.१३
स्वीकर्तुं स्वेच्छया देहं हातुं च प्रभवन्त्युत ॥ ७.१,३०.१४
ब्रह्मादयः पिशाचांताः किं ते कर्मातिवर्तिनः ॥ ७.१,३०.१४
इच्छया देहनिर्माणमिन्द्रजालोपमं विदुः ॥ ७.१,३०.१५
अणिमादिगुणैश्वर्यवशीकारानतिक्रमात् ॥ ७.१,३०.१५
विश्वरूपं दधद्विष्णुर्दधीचेन महर्षिणा ॥ ७.१,३०.१६
युध्यता समुपालब्धस्तद्रूपं दधता स्वयम् ॥ ७.१,३०.१६
सर्वस्मादधिकस्यापि शिवस्य परमात्मनः ॥ ७.१,३०.१७
शरीरवत्तयान्यात्मसाधर्म्यं प्रतिभाति नः ॥ ७.१,३०.१७
सर्वानुग्राहकं प्राहुश्शिवं परमकारणम् ॥ ७.१,३०.१८
स निर्गृह्णाति देवानां सर्वानुग्राहकः कथम् ॥ ७.१,३०.१८
चिच्छेद बहुशो देवो ब्रह्मणः पञ्चमं शिरः ॥ ७.१,३०.१९
शिवनिन्दां प्रकुर्वंतं पुत्रेति कुमतेर्हठात् ॥ ७.१,३०.१९
विष्णोरपि नृसिंहस्य रभसा शरभाकृतिः ॥ ७.१,३०.२०
बिभेद पद्भ्यामाक्रम्य हृदयं नखरैः खरैः ॥ ७.१,३०.२०
देवस्त्रीषु च देवेषु दक्षस्याध्वरकारणात् ॥ ७.१,३०.२१
वीरेण वीरभद्रेण न हि कश्चिददण्डितः ॥ ७.१,३०.२१
पुरत्रयं च सस्त्रीकं सदैत्यं सह बालकैः ॥ ७.१,३०.२२
क्षणेनैकेन देवेन नेत्राग्नेरिंधनीकृतम् ॥ ७.१,३०.२२
प्रजानां रतिहेतुश्च कामो रतिपतिस्स्वयम् ॥ ७.१,३०.२३
क्रोशतामेव देवानां हुतो नेत्रहुताशने ॥ ७.१,३०.२३
गावश्च कश्चिद्दुग्धौघं स्रवन्त्यो मूर्ध्नि खेचराः ॥ ७.१,३०.२४
सरुषा प्रेक्ष्य देवेन तत्क्षणे भस्मसात्कृतः ॥ ७.१,३०.२४
जलंधरासुरो दीर्णश्चक्रीकृत्य जलं पदा ॥ ७.१,३०.२५
बद्ध्वानंतेन यो विष्णुं चिक्षेप शतयोजनम् ॥ ७.१,३०.२५
तमेव जलसंधायी शूलेनैव जघान सः ॥ ७.१,३०.२६

तच्चक्रं तपसा लब्ध्वा लब्धवीर्यो हरिस्सदा ॥ ७.१,३०.२६
जिघांसतां सुरारीणां कुलं निर्घृणचेतसाम् ॥ ७.१,३०.२७
त्रिशूलेनान्धकस्योरः शिखिनैवोपतापितम् ॥ ७.१,३०.२७
कण्ठात्कालांगनां सृष्ट्वा दारको ऽपि निपातितः ॥ ७.१,३०.२८
कौशिकीं जनयित्वा तु गौर्यास्त्वक्कोशगोचराम् ॥ ७.१,३०.२८
शुंभस्सह निशुंभेन प्रापितो मरणं रणे ॥ ७.१,३०.२९
श्रुतं च महदाख्यानं स्कान्दे स्कन्दसमाश्रयम् ॥ ७.१,३०.२९
वधार्थे तारकाख्यस्य दैत्येन्द्रस्येन्द्रविद्विषः ॥ ७.१,३०.३०
ब्रह्मणाभ्यर्थितो देवो मन्दरान्तःपुरं गतः ॥ ७.१,३०.३०
विहृत्य सुचिरं देव्या विहारा ऽतिप्रसङ्गतः ॥ ७.१,३०.३१
रसां रसातलं नीतामिव कृत्वाभिधां ततः ॥ ७.१,३०.३१
देवीं च वंचयंस्तस्यां स्ववीर्यमतिदुर्वहम् ॥ ७.१,३०.३२
अविसृज्य विसृज्याग्नौ हविः पूतमिवामृतम् ॥ ७.१,३०.३२
गंगादिष्वपि निक्षिप्य वह्निद्वारा तदंशतः ॥ ७.१,३०.३३
तत्समाहृत्य शनकैस्तोकंस्तोकमितस्ततः ॥ ७.१,३०.३३
स्वाहया कृत्तिकारूपात्स्वभर्त्रा रममाणया ॥ ७.१,३०.३४
सुवर्णीभूतया न्यस्तं मेरौ शरवणे क्वचित् ॥ ७.१,३०.३४
संदीपयित्वा कालेन तस्य भासा दिशो दश ॥ ७.१,३०.३५
रञ्जयित्वा गिरीन्सर्वान्कांचनीकृत्य मेरुणा ॥ ७.१,३०.३५
ततश्चिरेण कालेन संजाते तत्र तेजसि ॥ ७.१,३०.३६
कुमारे सुकुमारांगे कुमाराणां निदर्शने ॥ ७.१,३०.३६
तच्छैशवं स्वरूपं च तस्य दृष्ट्वा मनोहरम् ॥ ७.१,३०.३७
सह देवसुरैर्लोकैर्विस्मिते च विमोहिते ॥ ७.१,३०.३७
देवो ऽपि स्वयमायातः पुत्रदर्शनलालसः ॥ ७.१,३०.३८
सह देव्यांकमारोप्य ततो ऽस्य स्मेरमाननम् ॥ ७.१,३०.३८
पीतामृतमिव स्नेहविवशेनान्तरात्मना ॥ ७.१,३०.३९
देवेष्वपि च पश्यत्सु वीतरागैस्तपस्विभिः ॥ ७.१,३०.३९
स्वस्य वक्षःस्थले स्वैरं नर्तयित्वा कुमारकम् ॥ ७.१,३०.४०

अनुभूय च तत्क्रीडां संभाव्य च परस्परम् ॥ ७.१,३०.४०
स्तन्यमाज्ञापयन्देव्याः पाययित्वामृतोपमम् ॥ ७.१,३०.४१
तवावतारो जगतां हितायेत्यनुशास्य च ॥ ७.१,३०.४१
स्वयन्देवश्च देवी च न तृप्तिमुपजग्मतुः ॥ ७.१,३०.४२
ततः शक्रेण संधाय बिभ्यता तारकासुरात् ॥ ७.१,३०.४२
कारयित्वाभिषेकं च सेनापत्ये दिवौकसाम् ॥ ७.१,३०.४३
पुत्रमन्तरतः कृत्वा देवेन त्रिपुरद्विषा ॥ ७.१,३०.४३
स्वयमंतर्हितेनैव स्कन्दमिन्द्रादिरक्षितम् ॥ ७.१,३०.४४
तच्छक्त्या क्रौञ्चभेदिन्या युधि कालाग्निकल्पया ॥ ७.१,३०.४४
छेदितं तारकस्यापि शिरश्शक्रभिया सह ॥ ७.१,३०.४५
स्तुतिं चक्रुर्विशेषेण हरिधातृमुखाः सुराः ॥ ७.१,३०.४५
तथा रक्षोधिपः साक्षाद्रावणो बलगर्वितः ॥ ७.१,३०.४६
उद्धरन्स्वभुजैर्दीर्घैः कैलासं गिरिमात्मनः ॥ ७.१,३०.४६
तदागो ऽसहमानस्य देवदेवस्य शूलिनः ॥ ७.१,३०.४७
पदांगुष्ठपरिस्पन्दान्ममज्ज मृदितो भुवि ॥ ७.१,३०.४७
बटोः केनचिदर्थेन स्वाश्रितस्य गतायुषः ॥ ७.१,३०.४८
त्वरयागत्य देवेन पादांतं गमितोन्तकः ॥ ७.१,३०.४८
स्ववाहनमविज्ञाय वृषेन्द्रं वडवानलः ॥ ७.१,३०.४९
सगलग्रहमानीतस्ततो ऽस्त्येकोदकं जगत् ॥ ७.१,३०.४९
अलोकविदितैस्तैस्तैर्वृत्तैरानन्दसुन्दरैः ॥ ७.१,३०.५०
अंगहारस्वसेनेदमसकृच्चालितं जगत् ॥ ७.१,३०.५०
शान्त एव सदा सर्वमनुगृह्णाति चेच्छिवः ॥ ७.१,३०.५१
सर्वाणि पूरयेदेव कथं शक्तेन मोचयेत् ॥ ७.१,३०.५१
अनादिकर्म वैचित्र्यमपि नात्र नियामकम् ॥ ७.१,३०.५२
कारणं खलु कर्मापि भवेदीश्वरकारितम् ॥ ७.१,३०.५२
किमत्र बहुनोक्तेन नास्तिक्यं हेतुकारकम् ॥ ७.१,३०.५३
यथा ह्याशु निवर्तेत तथा कथय मारुत ॥ ७.१,३०.५३

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे शिवतत्त्वप्रश्नो नाम त्रिंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः ३१

https://sa.wikisource.org/s/hz6

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | पूर्व भागः

वायुरुवाच

स्थने संशयितं विप्रा भवद्भिर्हेतुचोदितैः ॥ ७.१,३१.१

जिज्ञासा हि न नास्तिक्यं साधयेत्साधुबुद्धिषु ॥ ७.१,३१.१

प्रमणमत्र वक्ष्यामि सताम्मोहनिवर्तकम् ॥ ७.१,३१.२

असतां त्वन्यथाभावः प्रसादेन विना प्रभोः ॥ ७.१,३१.२

शिवस्य परिपूर्णस्य परानुग्रहमन्तरा ॥ ७.१,३१.३

न किंचिदपि कर्तव्यमिति साधु विनिश्चितम् ॥ ७.१,३१.३

स्वभाव एव पर्याप्तः परानुग्रहकर्मणि ॥ ७.१,३१.४

अन्यथा निस्स्वभवेन न किमप्यनुगृह्यते ॥ ७.१,३१.४

परं सर्वमनुग्राह्यं पशुपाशात्मकं जगत् ॥ ७.१,३१.५

परस्यानुग्रहार्थं तु पत्युराज्ञासमन्वयः ॥ ७.१,३१.५

पतिराज्ञापकः सर्वमनुगृह्णाति सर्वदा ॥ ७.१,३१.६

तदर्थमर्थस्वीकारे परतंत्रः कथं शिवः ॥ ७.१,३१.६

अनुग्राह्यनपेक्षो ऽस्ति न हि कश्चिदनुग्रहः ॥ ७.१,३१.७

अतः स्वातन्त्र्यशब्दार्थाननपेक्षत्वलक्षणः ॥ ७.१,३१.७

एतत्पुनरनुग्राह्यं परतंत्रं तदिष्यते ॥ ७.१,३१.८

अनुग्रहादृते तस्य भुक्तिमुक्त्योरनन्वयात् ॥ ७.१,३१.८

मूर्तात्मनो ऽप्यनुग्राह्या शिवाज्ञाननिवर्तनात् ॥ ७.१,३१.९

अज्ञानाधिष्ठितं शम्भोर्न किंचिदिह विद्यते ॥ ७.१,३१.९

येनोपलभ्यते ऽस्माभिस्सकलेनापि निष्कलः ॥ ७.१,३१.१०

स मूर्त्यात्मा शिवः शैवमूर्तिरित्युपचर्यते ॥ ७.१,३१.१०

न ह्यसौ निष्कलः साक्षाच्छिवः परमकारणम् ॥ ७.१,३१.११

साकारेणानुभावेन केनाप्यनुपलक्षितः ॥ ७.१,३१.११

प्रमाणगम्यतामात्रं तत्स्वभावोपपादकम् ॥ ७.१,३१.१२

न तावतात्रोपेक्षाधीरुपलक्षणमंतरा ॥ ७.१,३१.१२

आत्मोपमोल्वणं साक्षान्मूर्तिरेव हि काचन ॥ ७.१,३१.१३

शिवस्य मूर्तिर्मूर्त्यात्मा परस्तस्योपलक्षणम् ॥ ७.१,३१.१३

यथा काष्ठेष्वनारूढो न वह्निरुपलभ्यते ॥ ७.१,३१.१४

एवं शिवो ऽपि मूर्त्यात्मन्यनारूढ इति स्थितिः ॥ ७.१,३१.१४

यथाग्निमानयेत्युक्ते ज्वलत्काष्ठादृते स्वयम् ॥ ७.१,३१.१५

नाग्निरानीयते तद्वत्पूज्यो मूर्त्यात्मना शिवः ॥ ७.१,३१.१५

अत एव हि पूजादौ मूर्त्यात्मपरिकल्पनम् ॥ ७.१,३१.१६

मूर्त्यात्मनि कृतं साक्षाच्छिव एव कृतं यतः ॥ ७.१,३१.१६

लिंगादावपि तत्कृत्यमर्चायां च विशेषतः ॥ ७.१,३१.१७

तत्तन्मूर्त्यात्मभावेन शिवो ऽस्माभिरुपास्यते ॥ ७.१,३१.१७

यथानुगृह्यते सो ऽपि मूर्त्यात्मा पारमेष्ठिना ॥ ७.१,३१.१८

तथा मूर्त्यात्मनिष्ठेन शिवेन पशवो वयम् ॥ ७.१,३१.१८

लोकानुग्रहणायैव शिवेन परमेष्ठिना ॥ ७.१,३१.१९

सदाशिवादयस्सर्वे मूर्त्यात्मनो ऽप्यधिष्ठिताः ॥ ७.१,३१.१९

आत्मनामेव भोगाय मोक्षाय च विशेषतः ॥ ७.१,३१.२०

तत्त्वातत्त्वस्वरूपेषु मूर्त्यात्मसु शिवान्वयः ॥ ७.१,३१.२०

भोगः कर्मविपाकात्मा सुखदुःखात्मको मतः ॥ ७.१,३१.२१

न च कर्म शिवो ऽस्तीति तस्य भोगः किमात्मकः ॥ ७.१,३१.२१

सर्वं शिवो ऽनुगृह्णाति न निगृह्णाति किंचन ॥ ७.१,३१.२२

निगृह्णतां तु ये दोषाश्शिवे तेषामसंभवात् ॥ ७.१,३१.२२

ये पुनर्निग्रहाः केचिद्ब्रह्मादिषु निदर्शिताः ॥ ७.१,३१.२३

ते ऽपि लोकहितायैव कृताः श्रीकण्ठमूर्तिना ॥ ७.१,३१.२३

ब्रह्माण्डस्याधिपत्यं हि श्रीकण्ठस्य न संशयः ॥ ७.१,३१.२४

श्रीकण्ठाख्यां शिवो मूर्तिं क्रीडतीमधितिष्ठति ॥ ७.१,३१.२४

सदोषा एव देवाद्या निगृहीता यथोदितम् ॥ ७.१,३१.२५

ततस्तेपि विपाप्मानः प्रजाश्चापि गतज्वराः ॥ ७.१,३१.२५

निग्रहो ऽपि स्वरूपेण विदुषां न जुगुप्सितः ॥ ७.१,३१.२६

अत एव हि दण्ड्येषु दण्डो राज्ञां प्रशस्यते ॥ ७.१,३१.२६
यत्सिद्धिरीश्वरत्वेन कार्यवर्गस्य कृत्स्नशः ॥ ७.१,३१.२७
न स चेदीशतां कुर्याज्जगतः कथमीश्वरः ॥ ७.१,३१.२७
ईशेच्छा च विधातृत्वं विधेराज्ञापनं परम् ॥ ७.१,३१.२८
आज्ञावश्यमिदं कुर्यान्न कुर्यादिति शासनम् ॥ ७.१,३१.२८
तच्छासनानुवर्तित्वं साधुभावस्य लक्षणम् ॥ ७.१,३१.२९
विपरीतसमाधोः स्यान्न सर्वं तत्तु दृश्यते ॥ ७.१,३१.२९
साधु संरक्षणीयं चेद्विनिवर्त्यमसाधु यत् ॥ ७.१,३१.३०
निवर्तते च सामादेरंते दण्डो हि साधनम् ॥ ७.१,३१.३०
हितार्थलक्षणं चेदं दण्डान्तमनुशासनम् ॥ ७.१,३१.३१
अतो यद्विपरीतं तदहितं संप्रचक्षते ॥ ७.१,३१.३१
हिते सदा निषण्णानामीश्वरस्य निदर्शनम् ॥ ७.१,३१.३२
स कथं दुष्यते सद्भिरसतामेव निग्रहात् ॥ ७.१,३१.३२
अयुक्तकारिणो लोके गर्हणीयाविवेकिता ॥ ७.१,३१.३३
यदुद्वेजयते लोकन्तदयुक्तं प्रचक्षते ॥ ७.१,३१.३३
सर्वो ऽपि निग्रहो लोके न च विद्वेषपूर्वकः ॥ ७.१,३१.३४
न हि द्वेष्टि पिता पुत्रं यो निगृह्याति शिक्षयेत् ॥ ७.१,३१.३४
माध्यस्थेनापि निग्राह्यान्यो निगृह्णाति मार्गतः ॥ ७.१,३१.३५
तस्याप्यवश्यं यत्किंचिन्नैर्घृण्यमनुवर्तते ॥ ७.१,३१.३५
अन्यथा न हिनस्त्येव सदोषानप्यसौ परान् ॥ ७.१,३१.३६
हिनस्ति चायमप्यज्ञान्परं माध्यस्थ्यमाचरन् ॥ ७.१,३१.३६
तस्माद्दुःखात्मिकां हिंसां कुर्वाणो यः सनिर्घृणः ॥ ७.१,३१.३७
इति निर्बंधयंत्येके नियमो नेति चापरे ॥ ७.१,३१.३७
निदानज्ञस्य भिषजो रुग्णो हिंसां प्रयुंजतः ॥ ७.१,३१.३८
न किंचिदपि नैर्घृण्यं घृणैवात्र प्रयोजिका ॥ ७.१,३१.३८
घृणापि न गुणायैव हिंस्रेषु प्रतियोगिषु ॥ ७.१,३१.३९
तादृशेषु घृणी भ्रान्त्या घृणान्तरितनिर्घृणः ॥ ७.१,३१.३९
उपेक्षापीह दोषाह रक्ष्येषु प्रतियोगिषु ॥ ७.१,३१.४०

शक्तौ सत्यामुपेक्षातो रक्ष्यस्सद्यो विपद्यते ॥ ७.१,३१.४०
सर्पस्या"स्यगतम्पश्यन्यस्तु रक्ष्यमुपेक्षते ॥ ७.१,३१.४१
दोषाभासान्समुत्प्रेक्ष्य फलतः सो ऽपि निर्घृणः ॥ ७.१,३१.४१
तस्माद्घृणा गुणायैव सर्वथेति न संमतम् ॥ ७.१,३१.४२
संमतं प्राप्तकामित्वं सर्वं त्वन्यदसम्मतम् ॥ ७.१,३१.४२
मूर्त्यात्मस्वपि रागाद्या दोषाः सन्त्येव वस्तुतः ॥ ७.१,३१.४३
तथापि तेषामेवैते न शिवस्य तु सर्वथा ॥ ७.१,३१.४३
अग्नावपि समाविष्टं ताम्रं खलु सकालिकम् ॥ ७.१,३१.४३
इति नाग्निरसौ दुष्येत्ताम्रसंसर्गकारणात् ॥ ७.१,३१.४४
नाग्नेरशुचिसंसर्गादशुचित्वमपेक्षते ॥ ७.१,३१.४४
अशुचेस्त्वग्निसंयोगाच्छुचित्वमपि जायते ॥ ७.१,३१.४५
एवं शोध्यात्मसंसर्गान्न ह्यशुद्धः शिवो भवेत् ॥ ७.१,३१.४५
शिवसंसर्गतस्त्वेष शोध्यात्मैव हि शुध्यति ॥ ७.१,३१.४६
अयस्यग्नौ समाविष्टे दाहो ऽग्नेरेव नायसः ॥ ७.१,३१.४६
मूर्तात्मन्येवमैश्वर्यमीश्वरस्यैव नात्मनाम् ॥ ७.१,३१.४७
न हि काष्ठं ज्वलत्यूर्ध्वमग्निरेव ज्वलत्यसौ ॥ ७.१,३१.४७
काष्ठस्यांगारता नाग्नेरेवमत्रापि योज्यताम् ॥ ७.१,३१.४८
अत एव जगत्यस्मिन्काष्ठपाषाणमृत्स्वपि ॥ ७.१,३१.४८
शिवावेशवशादेव शिवत्वमुपचर्यते ॥ ७.१,३१.४९
मैत्र्यादयो गुणा गौणास्तस्मात्ते भिन्नवृत्तयः ॥ ७.१,३१.४९
तैर्गुणैरुपरक्तानां दोषाय च गुणाय च ॥ ७.१,३१.५०
यत्तु गौणमगौणं च तत्सर्वमनुगृह्णतः ॥ ७.१,३१.५०
न गुणाय न दोषाय शिवस्य गुणवृत्तयः ॥ ७.१,३१.५०
न चानुग्रहशब्दार्थं गौणमाहुर्विपश्चितः ॥ ७.१,३१.५१
संसारमोचनं किं तु शैवमाज्ञामयं हितम् ॥ ७.१,३१.५१
हितं तदाज्ञाकरणं यद्धितं तदनुग्रहः ॥ ७.१,३१.५२
सर्वं हिते नियुञ्जावः सर्वानुग्रहकारकः ॥ ७.१,३१.५२
यस्तूपकारशब्दार्थस्तमप्याहुरनुग्रहम् ॥ ७.१,३१.५३

तस्यापि हितरूपत्वाच्छिवः सर्वोपकारकः ॥ ७.१,३१.५३
हिते सदा नियुक्तं तु सर्वं चिदचिदात्मकम् ॥ ७.१,३१.५४
स्वभावप्रतिबन्धं तत्समं न लभते हितम् ॥ ७.१,३१.५४
यथा विकासयत्येव रविः पद्मानि भानुभिः ॥ ७.१,३१.५५
समं न विकसन्त्येव स्वस्वभावानुरोधतः ॥ ७.१,३१.५५
स्वभावो ऽपि हि भावानां भाविनो ऽर्थस्य कारणम् ॥ ७.१,३१.५६
न हि स्वभावो नश्यन्तमर्थं कर्तृषु साधयेत् ॥ ७.१,३१.५६
सुवर्णमेव नांगारं द्रावयत्यग्निसंगमः ॥ ७.१,३१.५७
एवं पक्वमलानेव मोचयेन्न शिवपरान् ॥ ७.१,३१.५७
यद्यथा भवितुं योग्यं तत्तथा न भवेत्स्वयम् ॥ ७.१,३१.५८
विना भावनया कर्ता स्वतन्त्रस्सन्ततो भवेत् ॥ ७.१,३१.५८
स्वभावविमलो यद्वत्सर्वानुग्राहकश्शिवः ॥ ७.१,३१.५९
स्वभावमलिनास्तद्वदात्मनो जीवसंज्ञिताः ॥ ७.१,३१.५९
अन्यथा संसरन्त्येते नियमान्न शिवः कथम् ॥ ७.१,३१.६०
कर्ममायानुबन्धोस्य संसारः कथ्यते बुधैः ॥ ७.१,३१.६०
अनुबन्धो ऽयमस्यैव न शिवस्येति हेतुमान् ॥ ७.१,३१.६१
स हेतुरात्मनामेव निजो नागन्तुको मलः ॥ ७.१,३१.६१
आगन्तुकत्वे कस्यापि भाव्यं केनापि हेतुना ॥ ७.१,३१.६२
यो ऽयं हेतुरसावेकस्त्वविचित्रस्वभावतः ॥ ७.१,३१.६२
आत्मतायाः समत्वे ऽपि बद्धा मुक्ताः परे यतः ॥ ७.१,३१.६३
बद्धेष्वेव पुनः केचिल्लयभोगाधिकारतः ॥ ७.१,३१.६३
ज्ञानैश्वर्यादिवैषम्यं भजन्ते सोत्तराधराः ॥ ७.१,३१.६४
केचिन्मूर्त्यात्मतां यान्ति केचिदासन्नगोचराः ॥ ७.१,३१.६४
मूर्त्यात्मसु शिवाः केचिदध्वनां मूर्धसु स्थिताः ॥ ७.१,३१.६५
मध्ये महेश्वरा रुद्रास्त्ववर्वाचीनपदे स्थिताः ॥ ७.१,३१.६५
आसन्ने ऽपि च मायायाः परस्मात्कारणात्त्रयम् ॥ ७.१,३१.६६
तत्राप्यात्मा स्थितो ऽधस्तादन्तरात्मा च मध्यतः ॥ ७.१,३१.६६
परस्तात्परमात्मेति ब्रह्मविष्णुमहेश्वराः ॥ ७.१,३१.६७

वर्तन्ते वसवः केचित्परमात्मपदाश्रयाः ॥ ७.१,३१.६७

अन्तरात्मपदे केचित्केचिदात्मपदे तथा ॥ ७.१,३१.६८

शान्त्यतीतपदे शैवाः शान्ते माहेश्वरे ततः ॥ ७.१,३१.६८

विद्यायान्तु यथा रौद्राः प्रतिष्ठायां तु वैष्णवाः ॥ ७.१,३१.६९

निवृत्तौ च तथात्मानो ब्रह्मा ब्रह्मांगयोनयः ॥ ७.१,३१.६९

देवयोन्यष्टकं मुख्यं मानुष्यमथ मध्यमम् ॥ ७.१,३१.७०

पक्ष्यादयो ऽधमाः पञ्चयोनयस्ताश्चतुर्दश ॥ ७.१,३१.७०

उत्तराधरभावो ऽपि ज्ञेयस्संसारिणो मलः ॥ ७.१,३१.७१

यथामभावो मुक्तस्य पूर्वं पश्चात्तु पक्वता ॥ ७.१,३१.७१

मलो ऽप्यामश्च पक्वश्च भवेत्संसारकारणम् ॥ ७.१,३१.७२

आमे त्वधरता पुंसां पक्वे तूत्तरता क्रमात् ॥ ७.१,३१.७२

पश्चात्मानस्त्रिधाभिन्ना एकद्वित्रिमलाः क्रमात् ॥ ७.१,३१.७३

अत्रोत्तरा एकमला द्विमला मध्यमा मताः ॥ ७.१,३१.७३

त्रिमलास्त्वधमा ज्ञेया यथोत्तरमधिष्ठिताः ॥ ७.१,३१.७३

त्रिमलानधितिष्ठंति द्विमलैकमलाः क्रमात् ॥ ७.१,३१.७४

इत्थमौपाधिको भेदो विश्वस्य परिकल्पितः ॥ ७.१,३१.७४

एकद्वित्रिमलान्सर्वाञ्छिव एको ऽधितिष्ठति ॥ ७.१,३१.७५

अशिवात्मकमप्येतच्छिवेनाधिष्ठितं यथा ॥ ७.१,३१.७५

अरुद्रात्मकमित्येवं रुद्रैर्जगदधिष्ठितम् ॥ ७.१,३१.७६

अण्डान्ता हि महाभूमिश्शतरुद्राद्यधिष्ठिता ॥ ७.१,३१.७६

मायान्तमन्तरिक्षं तु ह्यमरेशादिभिः क्रमात् ॥ ७.१,३१.७७

अंगुष्ठमात्रपर्यन्तैस्समंतात्संततं ततम् ॥ ७.१,३१.७७

महामायावसाना द्यौर्वाय्वाद्यैर्भुवनाधिपैः ॥ ७.१,३१.७८

अनाश्रितान्तैरध्वान्तर्वर्तिभिस्समधिष्ठिताः ॥ ७.१,३१.७८

ते हि साक्षाद्दिविषदस्त्वन्तरिक्षसदस्तथा ॥ ७.१,३१.७९

पृथिवीपद इत्येवं देवा देवव्रतैः स्तुता ॥ ७.१,३१.७९

एवन्त्रिभिर्मलैरामैः पक्वैरेव पृथक्पृथक् ॥ ७.१,३१.८०

निदानभूतैस्संसाररोगः पुंसां प्रवर्तते ॥ ७.१,३१.८०

अस्य रोगस्य भैषज्यं ज्ञानमेव न चापरम् ॥ ७.१,३१.८१
भिषगाज्ञापकः शम्भुश्शिवः परमकारणम् ॥ ७.१,३१.८१
अदुःखेना ऽपि शक्तो ऽसौ पशून्मोचयितुं शिवः ॥ ७.१,३१.८२
कथं दुःखं करोतीति नात्र कार्या विचारणा ॥ ७.१,३१.८२
दुःखमेव हि सर्वो ऽपि संसार इति निश्चितम् ॥ ७.१,३१.८३
कथं दुःखमदुःखं स्यात्स्वभावो ह्यविपर्ययः ॥ ७.१,३१.८३
न हि रोगी ह्यरोगी स्याद्भिषग्भैषज्यकारणात् ॥ ७.१,३१.८४
रोगार्तं तु भिषग्रोगाद्भैषजैस्सुखमुद्धरेत् ॥ ७.१,३१.८४
एवं स्वभावमलिनान्स्वभावाद्दुःखिनः पशून् ॥ ७.१,३१.८५
स्वाज्ञौषधविधानेन दुःखान्मोचयते शिवः ॥ ७.१,३१.८५
न भिषक्कारणं रोगे शिवः संसारकारणम् ॥ ७.१,३१.८६
इत्येतदपि वैषम्यं न दोषायास्य कल्पते ॥ ७.१,३१.८६
दुःखे स्वभावसंसिद्धे कथन्तत्कारणं शिवः ॥ ७.१,३१.८७
स्वाभाविको मलः पुंसां स हि संसारयत्यमून् ॥ ७.१,३१.८७
संसारकारणं यत्तु मलं मायाद्यचेतनम् ॥ ७.१,३१.८८
तत्स्वयं न प्रवर्तेत शिवसान्निध्यमन्तरा ॥ ७.१,३१.८८
यथा मणिरयस्कांतस्सान्निध्यादुपकारकः ॥ ७.१,३१.८९
अयसश्चलतस्तद्वच्छिवो ऽप्यस्येति सूरयः ॥ ७.१,३१.८९
न निवर्तयितुं शक्यं सान्निध्यं सदकारणम् ॥ ७.१,३१.९०
अधिष्ठाता ततो नित्यमज्ञातो जगतश्शिवः ॥ ७.१,३१.९०
न शिवेन विना किंचित्प्रवृत्तमिह विद्यते ॥ ७.१,३१.९१
तत्प्रेरितमिदं सर्वं तथापि न स मुह्यति ॥ ७.१,३१.९१
शक्तिराज्ञात्मिका तस्य नियन्त्री विश्वतोमुखी ॥ ७.१,३१.९२
तया ततमिदं शश्वत्तथापि स न दुष्यति ॥ ७.१,३१.९२
अनिदं प्रथमं सर्वमीशितव्यं स ईश्वरः ॥ ७.१,३१.९३
ईशनाच्च तदीयाज्ञा तथापि स न दुष्यति ॥ ७.१,३१.९३
यो ऽन्यथा मन्यते मोहात्स विनष्यति दुर्मतिः ॥ ७.१,३१.९४
तच्छक्तिवैभवादेव तथापि स न दुष्यति ॥ ७.१,३१.९४

एतस्मिन्नंतरे व्योम्नः श्रुताः वागरीरिणी ॥ ७.१,३१.९५

सत्यमोममृतं सौम्यमित्याविरभवत्स्फुटम् ॥ ७.१,३१.९५

ततो हृष्टतराः सर्वे विनष्टाशेषसंशयाः ॥ ७.१,३१.९६

मुनयो विस्मयाविष्टाः प्रेणेमुः पवनं प्रभुम् ॥ ७.१,३१.९६

तथा विगतसन्देहान्कृत्वापि पवनो मुनीन् ॥ ७.१,३१.९७

नैते प्रतिष्ठितज्ञाना इति मत्वैवमब्रवीत् ॥ ७.१,३१.९७

वायुरुवाच्व

परोक्षमपरोक्षं च द्विविधं ज्ञानमिष्यते ॥ ७.१,३१.९८

परोक्षमस्थिरं प्राहुरपरोक्षं तु सुस्थिरम् ॥ ७.१,३१.९८

हेतूपदेशगम्यं यत्तत्परोक्षं प्रचक्षते ॥ ७.१,३१.९९

अपरोक्षं पुनः श्रेष्ठादनुष्ठानाद्भविष्यति ॥ ७.१,३१.९९

नापरोक्षादृते मोक्ष इति कृत्वा विनिश्चयम् ॥ ७.१,३१.१००

श्रेष्ठानुष्ठानसिद्ध्यर्थं प्रयतध्वमतन्द्रिताः ॥ ७.१,३१.१००

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे ज्ञानोपदेशो नामैकत्रिंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः ३२

https://sa.wikisource.org/s/hz7
< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | पूर्व भागः

ऋषय ऊचुः

किं तच्छ्रेष्टमनुष्ठानं मोक्षो येनपरोक्षितः ॥ ७.१,३२.१

तत्तस्य साधनं चाद्य वक्तुमर्हसि मारुत ॥ ७.१,३२.१

वायुरुवाच

शैवो हि परमो धर्मः श्रेष्ठानुष्ठानशब्दितः ॥ ७.१,३२.२

यत्रापरोक्षो लक्ष्येत साक्षान्मोक्षप्रदः शिवः ॥ ७.१,३२.२

स तु पञ्चविधो ज्ञेयः पञ्चभिः पर्वभिः क्रमात् ॥ ७.१,३२.३

क्रियातपोजपध्यानज्ञानात्मभिरनुत्तरैः ॥ ७.१,३२.३

तैरेव सोत्तरैस्सिद्धो धर्मस्तु परमो मतः ॥ ७.१,३२.४

परोक्षमपरोक्षं च ज्ञानं यत्र च मोक्षदम् ॥ ७.१,३२.४

परमो ऽपरमश्चोभौ धर्मौ हि श्रुतिचोदितौ ॥ ७.१,३२.५

धर्मशब्दाभिधेयेर्थे प्रमाणं श्रुतिरेव नः ॥ ७.१,३२.५

परमो योगपर्यन्तो धर्मः श्रुतिशिरोगतः ॥ ७.१,३२.६

धर्मस्त्वपरमस्तद्वदधः श्रुतिमुखोत्थितः ॥ ७.१,३२.६

अपश्वात्माधिकारत्वाद्यो धरमः परमो मतः ॥ ७.१,३२.७

साधारणस्ततो ऽन्यस्तु सर्वेषामधिकारतः ॥ ७.१,३२.७

स चायं परमो धर्मः परधर्मस्य साधनम् ॥ ७.१,३२.८

धर्मशास्त्रादिभिस्सम्यक्सांग एवोपबृंहितः ॥ ७.१,३२.८

शैवो यः परमो धर्मः श्रेष्ठानुष्ठानशब्दितः ॥ ७.१,३२.९

इतिहासपुराणाभ्यां कथंचिदुपबृंहितः ॥ ७.१,३२.९

शैवागमैस्तु संपन्नः सहांगोपांगविस्तरः ॥ ७.१,३२.१०

तत्संस्काराधिकारैश्च सम्यगेवोपबृंहितः ॥ ७.१,३२.१०

शैवागमो हि द्विविधः श्रौतो ऽश्रौतश्च संस्कृतः ॥ ७.१,३२.११

श्रुतिसारमयः श्रौतस्स्वतंत्र इतरो मतः ॥ ७.१,३२.११

स्वतंत्रो दशधा पूर्वं तथाष्टादशधा पुनः ॥ ७.१,३२.१२

कामिकादिसमाख्याभिस्सिद्धः सिद्धान्तसंज्ञितः ॥ ७.१,३२.१२

श्रुतिसारमयो यस्तु शतकोटिप्रविस्तरः ॥ ७.१,३२.१३

परं पाशुपतं यत्र व्रतं ज्ञानं च कथ्यते ॥ ७.१,३२.१३

युगावर्तेषु शिष्येत योगाचार्यस्वरूपिणा ॥ ७.१,३२.१४

तत्रतत्रावतीर्णेन शिवेनैव प्रवर्त्यते ॥ ७.१,३२.१४

संक्षिप्यास्य प्रवक्तारश्चत्वारः परमर्षय ॥ ७.१,३२.१५

रुरुर्दधीचो ऽगस्त्यश्च उपमन्युर्महायशाः ॥ ७.१,३२.१५

ते च पाशुपता ज्ञेयास्संहितानां प्रवर्तकाः ॥ ७.१,३२.१६

तत्संततीया गुरवः शतशो ऽथ सहस्रशः ॥ ७.१,३२.१६

तत्रोक्तः परमो धर्मश्चर्याद्यात्मा चतुर्विधः ॥ ७.१,३२.१७

तेषु पाशुपतो योगः शिवं प्रत्यक्षयेद्दृढम् ॥ ७.१,३२.१७

तस्माच्छ्रेष्ठमनुष्ठानं योगः पाशुपतो मतः ॥ ७.१,३२.१८

तत्राप्युपायको युक्तो ब्रह्मणा स तु कथ्यते ॥ ७.१,३२.१८

नामाष्टकमयो योगश्शिवेन परिकल्पितः ॥ ७.१,३२.१९

तेन योगेन सहसा शैवी प्रज्ञा प्रजायते ॥ ७.१,३२.१९

प्रज्ञया परमं ज्ञानमचिराल्लभते स्थिरम् ॥ ७.१,३२.२०

प्रसीदति शिवस्तस्य यस्य ज्ञानं प्रतिष्ठितम् ॥ ७.१,३२.२०

प्रसादात्परमो योगो यः शिवं चापरोक्षयेत् ॥ ७.१,३२.२१

शिवापरोक्षात्संसारकारणेन वियुज्यते ॥ ७.१,३२.२१

ततः स्यान्मुक्तसंसारो मुक्तः शिवसमो भवेत् ॥ ७.१,३२.२२

ब्रह्मप्रोक्त इत्युपायः स एव पृथगुच्यते ॥ ७.१,३२.२२

शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः ॥ ७.१,३२.२३

संसारवैद्यः सर्वज्ञः परमात्मेति मुख्यतः ॥ ७.१,३२.२३

नामाष्टकमिदं मुख्यं शिवस्य प्रतिपादकम् ॥ ७.१,३२.२४

आद्यन्तु पञ्चकं ज्ञेयं शान्त्यतीताद्यनुक्रमात् ॥ ७.१,३२.२४

संज्ञा सदाशिवादीनां पञ्चोपाधिपरिग्रहात् ॥ ७.१,३२.२५

उपाधिविनिवृत्तौ तु यथास्वं विनिवर्तते ॥ ७.१,३२.२५

पदमेव हि तन्नित्यमनित्याः पदिनः स्मृताः ॥ ७.१,३२.२६

पदानां प्रतिकृतौ तु मुच्यन्ते पदिनो यतः ॥ ७.१,३२.२६

परिवृत्त्यन्तरे भूयस्तत्पदप्राप्तिरुच्यते ॥ ७.१,३२.२७

आत्मान्तराभिधानं स्याद्यदाद्यं नाम पञ्चकम् ॥ ७.१,३२.२७

अन्यत्तु त्रितयं नाम्नामुपादानादियोगतः ॥ ७.१,३२.२८

त्रिविधोपाधिवचनाच्छिव एवानुवर्तते ॥ ७.१,३२.२८

अनादिमलसंश्लेषः प्रागभावात्स्वभावतः ॥ ७.१,३२.२९

अत्यंतं परिशुद्धात्मेत्यतो ऽयं शिव उच्यते ॥ ७.१,३२.२९

अथवाशेषकल्याणगुणैकधन ईश्वरः ॥ ७.१,३२.३०

शिव इत्युच्यते सद्भिश्शिवतत्त्वार्थवादिभिः ॥ ७.१,३२.३०

त्रयोविंशतितत्त्वेभ्यः प्रकृतिर्हि परा मता ॥ ७.१,३२.३१

प्रकृतेस्तु परं प्राहुः पुरुषं पञ्चविंशकम् ॥ ७.१,३२.३१

यं वेदादौ स्वरं प्राहुर्वाच्यवाचकभावतः ॥ ७.१,३२.३२

वेदैकवेद्ययाथात्म्याद्वेदान्ते च प्रतिष्ठितः ॥ ७.१,३२.३२

तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः ॥ ७.१,३२.३३

तदधीनप्रवृत्तित्वात्प्रकृतेः पुरुषस्य च ॥ ७.१,३२.३३

अथवा त्रिगुणं तत्त्वमुपेयमिदमव्ययम् ॥ ७.१,३२.३४

मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥ ७.१,३२.३४

मायाविक्षोभको ऽनंतो महेश्वरसमन्वयात् ॥ ७.१,३२.३५

कालात्मा परमात्मादिः स्थूलः सूक्ष्मः प्रकीर्तितः ॥ ७.१,३२.३५

रुद्दुःखं दुःखहेतुर्वा तद्द्रावयति नः प्रभुः ॥ ७.१,३२.३६

रुद्र इत्युच्यते सद्भिः शिवः परमकारणम् ॥ ७.१,३२.३६

तत्त्वादिभूतपर्यन्तं शरीरादिष्वतन्द्रितः ॥ ७.१,३२.३७

व्याप्याधितिष्ठति शिवस्ततो रुद्र इतस्ततः ॥ ७.१,३२.३७

जगतः पितृभूतानां शिवो मूर्त्यात्मनामपि ॥ ७.१,३२.३८

पितृभावेन सर्वेषां पितामह उदीरितः ॥ ७.१,३२.३८

निदानज्ञो यथा वैद्यो रोगस्य विनिवर्तकः ॥ ७.१,३२.३९

उपायैर्भेषजैस्तद्वल्लयभोगाधिकारतः ॥ ७.१,३२.३९

संसारस्येश्वरो नित्यं समूलस्य निवर्तकः ॥ ७.१,३२.४०

संसारवैद्य इत्युक्तः सर्वतत्त्वार्थवेदिभिः ॥ ७.१,३२.४०

दशार्थज्ञानसिद्ध्यर्थमिन्द्रियेष्वेषु सत्स्वपि ॥ ७.१,३२.४१

त्रिकालभाविनो भावान्स्थूलान्सूक्ष्मानशेषतः ॥ ७.१,३२.४१

अणवो नैव जानन्ति माययैव मलावृताः ॥ ७.१,३२.४२

असत्स्वपि च सर्वेषु सर्वार्थज्ञानहेतुषु ॥ ७.१,३२.४२

यद्यथावस्थितं वस्तु तत्तथैव सदाशिवः ॥ ७.१,३२.४३

अयत्नेनैव जानाति तस्मात्सर्वज्ञ उच्यते ॥ ७.१,३२.४३

सर्वात्मा परमैरेभिर्गुणैर्नित्यसमन्वयात् ॥ ७.१,३२.४४

स्वस्मात्परात्मविरहात्परमात्मा शिवः स्वयम् ॥ ७.१,३२.४४

नामाष्टकमिदं चैव लब्ध्वाचार्यप्रसादतः ॥ ७.१,३२.४५

निवृत्त्यादिकलाग्रन्थिं शिवाद्यैः पञ्चनामभिः ॥ ७.१,३२.४५

यथास्वं क्रमशश्छित्वा शोधयित्वा यथागुणम् ॥ ७.१,३२.४६

गुणितैरेव सोद्घातैरनिरुद्धैरथापि वा ॥ ७.१,३२.४६

हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रसमन्विताम् ॥ ७.१,३२.४७

छित्त्वा पर्यष्टकाकारं स्वात्मानं च सुषुम्णया ॥ ७.१,३२.४७

द्वादशांतःस्थितस्येन्दोर्नीत्वोपरि शिवौजसि ॥ ७.१,३२.४८

संहृत्यं वदनं पश्चाद्यथासंस्करणं लयात् ॥ ७.१,३२.४८

शाक्तेनामृतवर्षेण संसिक्तायां तनौ पुनः ॥ ७.१,३२.४९

अवतार्य स्वमात्मानममृतात्माकृतिं हृदि ॥ ७.१,३२.४९

द्वादशांतःस्थितस्येन्दोः परस्ताच्छ्वेतपंकजे ॥ ७.१,३२.५०

समासीनं महादेवं शंकरम्भक्तवत्सलम् ॥ ७.१,३२.५०

अर्धनारीश्वरं देवं निर्मलं मधुराकृतिम् ॥ ७.१,३२.५१

शुद्धस्फटिकसंकाशं प्रसन्नं शीतलद्युतिम् ॥ ७.१,३२.५१

ध्यात्वा हि मानसे देवं स्वस्थचित्तो ऽथ मानवः ॥ ७.१,३२.५२

शिवनामाष्टकेनैव भावपुष्पैस्समर्चयेत् ॥ ७.१,३२.५२

अभ्यर्चनान्ते तु पुनः प्राणानायम्य मानवः ॥ ७.१,३२.५३

सम्यक्चित्तं समाधाय शार्वं नामाष्टकं जपेत् ॥ ७.१,३२.५३

नाभौ चाष्टाहुतीर्हुत्वा पूर्णाहुत्या नमस्ततः ॥ ७.१,३२.५४

अष्टपुष्पप्रदानेन कृत्वाभ्यर्चनमंतिमम् ॥ ७.१,३२.५४

निवेदयेत्स्वमात्मानं चुलुकोदकवर्त्मना ॥ ७.१,३२.५५

एवं कृत्वा चिरादेव ज्ञानं पाशुपतं शुभम् ॥ ७.१,३२.५५

लभते तत्प्रतिष्ठां च वृत्तं चानुत्तमं तथा ॥ ७.१,३२.५६

योगं च परमं लब्ध्वा मुच्यते नात्र संशयः ॥ ७.१,३२.५६

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे श्रेष्ठानुष्ठानवर्णनं नाम द्वात्रिंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः ३३

https://sa.wikisource.org/s/hz8

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | पूर्व भागः

ऋषय ऊचुः

भगवञ्छ्रोतुमिच्छामो व्रतं पाशुपतं परम् ॥ ७.१,३३.१

ब्रह्मादयो ऽपि यत्कृत्वा सर्वे पाशुपताः स्मृताः ॥ ७.१,३३.१

वायुरुवाच

रहस्यं वः प्रवक्ष्यामि सर्वपापनिकृन्तनम् ॥ ७.१,३३.२

व्रतं पाशुपतं श्रौतमथर्वशिरसि श्रुतम् ॥ ७.१,३३.२

कालश्चैत्री पौर्णमासी देशः शिवपरिग्रहः ॥ ७.१,३३.३

क्षेत्रारामाद्यरण्यं वा प्रशस्तश्शुभलक्षणः ॥ ७.१,३३.३

तत्र पूर्वं त्रयोदश्यां सुस्नातः सुकृताह्निकः ॥ ७.१,३३.४

अनुज्ञाप्य स्वमाचार्यं संपूज्य प्रणिपत्य च ॥ ७.१,३३.४

पूजां वैशेषिकीं कृत्वा शुक्लांबरधरः स्वयम् ॥ ७.१,३३.५

शुक्लयज्ञोपवीती च शुक्लमाल्यानुलेपनः ॥ ७.१,३३.५

दर्भासने समासीनो दर्भमुष्टिं प्रगृह्य च ॥ ७.१,३३.६

प्राणायामत्रयं कृत्वा प्राङ्मुखो वाप्युदङ्मुखः ॥ ७.१,३३.६

ध्यात्वा देवं च देवीं च तद्विज्ञापनवर्त्मना ॥ ७.१,३३.६

व्रतमेतत्करोमीति भवेत्संकल्प्य दीक्षितः ॥ ७.१,३३.७

यावच्छरीरपातं वा द्वादशाब्दमथापि वा ॥ ७.१,३३.७

तदर्धं वा तदर्धं वा मासद्वादशकं तु वा ॥ ७.१,३३.८

तदर्धं वा तदर्धं वा मासमेकमथापि वा ॥ ७.१,३३.८

दिनद्वादशकं वा ऽथ दिनषट्कमथापि वा ॥ ७.१,३३.९

तदर्धं दिनमेकं वा व्रतसंकल्पनावधि ॥ ७.१,३३.९

अग्निमाधाय विधिवद्विरजाहोमकारणात् ॥ ७.१,३३.१०

हुत्वाज्येन समिद्भिश्च चरुणा च यथाक्रमम् ॥ ७.१,३३.१०

पूर्णामापूर्य तां भूयस्तत्त्वानां शुद्धिमुद्दिशन् ॥ ७.१,३३.११

जुहुयान्मूलमन्त्रेण तैरेव समिदादिभिः ॥ ७.१,३३.११
तत्त्वान्येतानि मद्देहे शुद्ध्यंताम् १ त्यनुस्मरन् ॥ ७.१,३३.१२
पञ्चभूतानि तन्मात्राः पञ्चकर्मेन्द्रियाणि च ॥ ७.१,३३.१२
ज्ञानकर्मविभेदेन पञ्चकर्मविभागशः ॥ ७.१,३३.१३
त्वगादिधातवस्सप्त पञ्च प्राणादिवायवः ॥ ७.१,३३.१३
मनोबुद्धिरहं ख्यातिर्गुणाः प्रकृतिपूरुषौ ॥ ७.१,३३.१४
रागो विद्याकले चैव नियतिः काल एव च ॥ ७.१,३३.१४
माया च शुद्धिविद्या च महेश्वरसदाशिवौ ॥ ७.१,३३.१५
शक्तिश्च शिवतत्त्वं च तत्त्वानि क्रमशो विदुः ॥ ७.१,३३.१५
मन्त्रैस्तु विरजैर्हुत्वा होतासौ विरजा भवेत् ॥ ७.१,३३.१६
शिवानुग्रहमासाद्य ज्ञानवान्स हि जायते ॥ ७.१,३३.१६
अथ गोमयमादाय पिण्डीकृत्याभिमंत्र्य च ॥ ७.१,३३.१७
विन्यस्याग्नौ च सम्प्रोक्ष्य दिने तस्मिन्हविष्यभुक् ॥ ७.१,३३.१७
प्रभाते तु चतुर्दश्यां कृत्वा सर्वं पुरोदितम् ॥ ७.१,३३.१८
दिने तस्मिन्निराहारः कालं शेषं समापयेत् ॥ ७.१,३३.१८
प्रातः पर्वणि चाप्येवं कृत्वा होमा वसानतः ॥ ७.१,३३.१९
उपसंहृत्य रुद्राग्निं गृह्णीयाद्भस्म यत्नतः ॥ ७.१,३३.१९
ततश्च जटिलो मुण्डी शिखैकजट एव वा ॥ ७.१,३३.२०
भूत्वा स्नात्वा ततो वीतलज्जश्चेत्स्याद्दिगम्बरः ॥ ७.१,३३.२०
अपि काषायवसनश्चर्मचीराम्बरो ऽथ वा ॥ ७.१,३३.२१
एकाम्बरो वल्कली वा भवेद्दण्डी च मेखली ॥ ७.१,३३.२१
प्रक्षाल्य चरणौ पश्चाद्द्विराचम्यात्मनस्तनुम् ॥ ७.१,३३.२२
संकुलीकृत्य तद्भस्म विरजानलसंभवम् ॥ ७.१,३३.२२
अग्निरित्यादिभिर्मंत्रैः षड्भिराथर्वणैः क्रमात् ॥ ७.१,३३.२३
विभृज्यांगानि मूर्धादिचरणांतानि तैस्स्पृशेत् ॥ ७.१,३३.२३
ततस्तेन क्रमेणैव समुद्धृत्य च भस्मना ॥ ७.१,३३.२४
सर्वांगोद्धूलनं कुर्यात्प्रणवेन शिवेन वा ॥ ७.१,३३.२४
ततस्त्रिपुण्ड्रं रचयेत्त्रियायुषसमाह्वयम् ॥ ७.१,३३.२५

शिवभावं समागम्य शिवयोगमथाचरेत् ॥ ७.१,३३.२५
कुर्यात्स्त्रिसन्ध्यमप्येवमेतत्पाशुपतं व्रतम् ॥ ७.१,३३.२६
भुक्तिमुक्तिप्रदं चैतत्पशुत्वं विनिवर्तयेत् ॥ ७.१,३३.२६
तत्पशुत्वं परित्यज्य कृत्वा पाशुपतं व्रतम् ॥ ७.१,३३.२७
पूजनीयो महादेवो लिंगमूर्तिस्सनातनः ॥ ७.१,३३.२७
पद्ममष्टदलं हैमं नवरत्नैरलंकृतम् ॥ ७.१,३३.२८
कर्णिकाकेशरोपेतमासनं परिकल्पयेत् ॥ ७.१,३३.२८
विभवे तदभावे तु रक्तं सितमथापि वा ॥ ७.१,३३.२९
पद्मं तस्याप्यभावे तु केवलं भावनामयम् ॥ ७.१,३३.२९
तत्पद्मकर्णिकामध्ये कृत्वा लिंगं कनीयसम् ॥ ७.१,३३.३०
स्फीटिकं पीठिकोपेतं पूजयेद्विधिवत्क्रमात् ॥ ७.१,३३.३०
प्रतिष्ठाप्य विधानेन तल्लिंगं कृतशोधनम् ॥ ७.१,३३.३१
परिकल्प्यासनं मूर्तिं पञ्चवक्त्रप्रकारतः ॥ ७.१,३३.३१
पञ्चगव्यादिभिः पूर्णैर्यथाविभवसंभृतैः ॥ ७.१,३३.३२
स्नापयेत्कलशैः पूर्णैरष्टापदसमुद्भवैः ॥ ७.१,३३.३२
गंधद्रव्यैस्सकर्पूरैश्चन्दनाद्यैस्सकुंकुमैः ॥ ७.१,३३.३३
सवेदिकं समालिप्य लिंगं भूषणभूषितम् ॥ ७.१,३३.३३
बिल्वपत्रैश्च पद्मैश्च रक्तैः श्वेतैस्तथोत्पलैः ॥ ७.१,३३.३४
नीलोत्पलैस्तथान्यैश्च पुष्पैस्तैस्तैस्सुगंधिभिः ॥ ७.१,३३.३४
पुण्यैः प्रशस्तैः पत्रैश्च चित्रैर्दूर्वाक्षतादिभिः ॥ ७.१,३३.३५
समभ्यर्च्य यथालाभं महापूजाविधानतः ॥ ७.१,३३.३५
धूपं दीपं तथा चापि नैवेद्यं च समादिशेत् ॥ ७.१,३३.३६
निवेदयित्वा विभवे कल्याणं च समाचरेत् ॥ ७.१,३३.३६
इष्टानि च विशिष्टानि न्यायेनोपार्जितानि च ॥ ७.१,३३.३७
सर्वद्रव्याणि देयानि व्रते तस्मिन्विशेषतः ॥ ७.१,३३.३७
श्रीपत्रोत्पलपद्मानां संख्या साहस्रिकी मता ॥ ७.१,३३.३८
प्रत्येकमपरा संख्या शतमष्टोत्तरं द्विजाः ॥ ७.१,३३.३८
तत्रापि च विशेषेण न त्यजेद्बिल्वपत्रकम् ॥ ७.१,३३.३९

हैममेकं परं प्राहुः पद्मं पद्मसहस्रकात् ॥ ७.१,३३.३९
नीलोत्पलादिष्वप्येतत्समानं बिल्बपत्रकैः ॥ ७.१,३३.४०
पुष्पान्तरे न नियमो यथालाभं निवेदयेत् ॥ ७.१,३३.४०
अष्टाङ्गमर्घ्यमुत्कृष्टं धूपालेपौ विशेषतः ॥ ७.१,३३.४१
चन्दनं वामदेवाख्ये हरितालं च पौरुषे ॥ ७.१,३३.४१
ईशाने भसितं केचिदालेपनमितीदृशाम् ॥ ७.१,३३.४२
न धूपमिति मन्यन्ते धूपान्तरविधानतः ॥ ७.१,३३.४२
सितागुरुमघोराख्ये मुखे कृष्णागुरुं पुनः ॥ ७.१,३३.४२
पौरुषे गुग्गुलं सव्ये सौम्ये सौगंधिकं मुखे ॥ ७.१,३३.४३
ईशाने ऽपि ह्युशीरादि देयाद्धूपं विशेषतः ॥ ७.१,३३.४३
शर्करामधुकर्पूरकपिलाघृतसंयुतम् ॥ ७.१,३३.४४
चंदनागुरुकाष्ठाद्यं सामान्यं संप्रचक्षते ॥ ७.१,३३.४४
कर्पूरवर्तिराज्याढ्या देया दीपावलिस्ततः ॥ ७.१,३३.४५
अर्घ्यमाचमनं देयं प्रतिवक्त्रमतः परम् ॥ ७.१,३३.४५
प्रथमावरणे पूज्यो क्रमाद्धेरम्बषण्मुखौ ॥ ७.१,३३.४६
ब्रह्मांगानि ततश्चैव प्रथमावरणेर्चिते ॥ ७.१,३३.४६
द्वितीयावरणे पूज्या विघ्नेशाश्चक्रवर्तिनः ॥ ७.१,३३.४७
तृतीयावरणे पूज्या भवाद्या अष्टमूर्तयः ॥ ७.१,३३.४७
महादेवादयस्तत्र तथैकादशमूर्तयः ॥ ७.१,३३.४८
चतुर्थावरणे पूज्याः सर्व एव गणेश्वराः ॥ ७.१,३३.४८
बहिरेव तु पद्मस्य पञ्चमावरणे क्रमात् ॥ ७.१,३३.४९
दशदिक्पतयः पूज्याः सास्त्राः सानुचरास्तथा ॥ ७.१,३३.४९
ब्रह्मणो मानसाः पुत्राः सर्वे ऽपि ज्योतिषां गणाः ॥ ७.१,३३.५०
सर्वा देव्यश्च देवाश्च सर्वे सर्वे च खेचराः ॥ ७.१,३३.५०
पातालवासिनश्चान्ये सर्वे मुनिगणा अपि ॥ ७.१,३३.५१
योगिनो हि सखास्सर्वे पतंगा मातरस्तथा ॥ ७.१,३३.५१
क्षेत्रपालाश्च सगणाः सर्वं चैतच्चराचरम् ॥ ७.१,३३.५२
पूजनीयं शिवप्रीत्या मत्वा शंभुविभूतिमत् ॥ ७.१,३३.५२

अथावरणपूजांते संपूज्य परमेश्वरम् ॥ ७.१,३३.५३
साज्यं सव्यं जनं हृद्यं हविर्भक्त्या निवेदयेत् ॥ ७.१,३३.५३
मुखवासादिकं दत्त्वा ताम्बूलं सोपदंशकम् ॥ ७.१,३३.५४
अलंकृत्य च भूयो ऽपि नानापुष्पविभूषणैः ॥ ७.१,३३.५४
नीराजनांते विस्तीर्य पूजाशेषं समापयेत् ॥ ७.१,३३.५५
चषकं सोपकारं च शयनं च समर्पयेत् ॥ ७.१,३३.५५
चन्द्रसंकाशहारं च शयनीयं समर्पयेत् ॥ ७.१,३३.५६
आद्यं नृपोचितं हृद्यं तत्सर्वमनुरूपतः ॥ ७.१,३३.५६
कृत्वा च कारयित्वा च हित्वा च प्रतिपूजनम् ॥ ७.१,३३.५७
स्तोत्रं व्यपोहनं जप्त्वा विद्यां पञ्चाक्षरीं जपेत् ॥ ७.१,३३.५७
प्रदक्षिणां प्रणामं च कृत्वात्मानं समर्पयेत् ॥ ७.१,३३.५८
ततः पुरस्ताद्देवस्य गुरुविप्रौ च पूजयेत् ॥ ७.१,३३.५८
दत्त्वार्घ्यमष्टौ पुष्पाणि देवमुद्वास्य लिंगतः ॥ ७.१,३३.५९
अग्नेश्चाग्निं सुसंयम्य ह्युद्वास्य च तमप्युत ॥ ७.१,३३.५९
प्रत्यहं च जनस्त्वेवं कुर्यात्सेवां पुरोदिताम् ॥ ७.१,३३.६०
ततस्तत्साम्बुजं लिंगं सर्वोपकरणान्वितम् ॥ ७.१,३३.६०
समर्पयेत्स्वगुरवे स्थापयेद्वा शिवालये ॥ ७.१,३३.६१
संपूज्य च गुरून्विप्रान्व्रतिनश्च विशेषतः ॥ ७.१,३३.६१
भक्तान्द्विजांश्च शक्तश्चेद्दीनानाथांश्च तोषयेत् ॥ ७.१,३३.६२
स्वयं चानशने शक्तः फलमूलाशने ऽथ वा ॥ ७.१,३३.६२
पयोव्रतो वा भिक्षाशी भवेदेकाशनस्तथा ॥ ७.१,३३.६३
नक्तं युक्ताशनो नित्यं भूशय्यानिरतः शुचिः ॥ ७.१,३३.६३
भस्मशायी तृणेशायी चीराजिनधृतो ऽथवा ॥ ७.१,३३.६४
ब्रह्मचर्यव्रतो नित्यं व्रतमेतत्समाचरेत् ॥ ७.१,३३.६४
अर्कवारे तथार्द्रायां पञ्चदश्यां च पक्षयोः ॥ ७.१,३३.६५
अष्टम्यां च चतुर्दश्यां शक्तस्तूपवसेदपि ॥ ७.१,३३.६५
पाखण्डिपतितोदक्यास्सूतकान्त्यजपूर्वकान् ॥ ७.१,३३.६६
वर्जयेत्सर्वयत्नेन मनसा कर्मणा गिरा ॥ ७.१,३३.६६

क्षमदानदयासत्याहिंसाशीलः सदा भवेत् ॥ ७.१,३३.६७

संतुष्टश्च प्रशान्तश्च जपध्यानरतस्तथा ॥ ७.१,३३.६७

कुर्यात्त्रिषवणस्नानं भस्मस्नानमथापि वा ॥ ७.१,३३.६८

पूजां वैशेषिकीं चैव मनसा वचसा गिरा ॥ ७.१,३३.६८

बहुनात्र किमुक्तेन नाचरेदशिवं व्रती ॥ ७.१,३३.६९

प्रमादात्तु तथाचारे निरूप्य गुरुलाघवे ॥ ७.१,३३.६९

उचितां निष्कृतिं कुर्यात्पूजाहोमजपादिभिः ॥ ७.१,३३.७०

आसमाप्तेर्व्रतस्यैवमाचरेन्न प्रमादतः ॥ ७.१,३३.७०

गोदानं च वृषोत्सर्गं कुर्यात्पूजां च संपदा ॥ ७.१,३३.७१

भक्तश्च शिवप्रीत्यर्थं सर्वकामविवर्जितः ॥ ७.१,३३.७१

सामान्यमेतत्कथितं व्रतस्यास्य समासतः ॥ ७.१,३३.७२

प्रतिमासं विशेषं च प्रवदामि यथाश्रुतम् ॥ ७.१,३३.७२

वैशाखे वज्रलिंगं तु ज्येष्ठे मारकतं शुभम् ॥ ७.१,३३.७३

आषाढे मौक्तिकं विद्याच्छ्रावणे नीलनिर्मितम् ॥ ७.१,३३.७३

मासे भाद्रपदे चैव पद्मरागमयं परम् ॥ ७.१,३३.७४

आश्विने मासि विद्याद्वै लिंगं गोमेदकं वरम् ॥ ७.१,३३.७४

कार्तिक्यां वैद्रुमं लिंगं वैदूर्यं मार्गशीर्षके ॥ ७.१,३३.७५

पुष्परागमयं पौषे माघे द्युमणिजन्तथा ॥ ७.१,३३.७५

फाल्गुणे चन्द्रकान्तोत्थं चैत्रे तद्व्यत्ययो ऽथवा ॥ ७.१,३३.७६

सर्वमासेषु रत्नानामलाभे हैममेव वा ॥ ७.१,३३.७६

हैमाभावे राजतं वा ताम्रजं शैलजन्तथा ॥ ७.१,३३.७७

मृन्मयं वा यथालाभं जातुषं चान्यदेव वा ॥ ७.१,३३.७७

सर्वगंधमयं वाथ लिंगं कुर्याद्यथारुचि ॥ ७.१,३३.७८

व्रतावसानसमये समाचरितनित्यकः ॥ ७.१,३३.७८

कृत्वा वैशेषिकीं पूजां हुत्वा चैव यथा पुरा ॥ ७.१,३३.७९

संपूज्य च तथाचार्यं व्रतिनश्च विशेषतः ॥ ७.१,३३.७९

देशिकेनाप्यनुज्ञातः प्राङ्मुखो वाप्युदङ्मुखः ॥ ७.१,३३.८०

दर्भासनो दर्भपाणिः प्राणापानौ नियम्य च ॥ ७.१,३३.८०

जपित्वा शक्तितो मूलं ध्यात्वा साम्बं त्रियम्बकम् ॥ ७.१,३३.८१
अनुज्ञाप्य यथापूर्वं नमस्कृत्य कृताञ्जलिः ॥ ७.१,३३.८१
समुत्सृजामि भगवन्व्रतमेतत्त्वदाज्ञया ॥ ७.१,३३.८२
इत्युक्त्वा लिंगमूलस्थान्दर्भानुत्तरतस्त्यजेत् ॥ ७.१,३३.८२
ततो दण्डजटाचीरमेखला अपि चोत्सृजेत् ॥ ७.१,३३.८३
पुनराचम्य विधिवत्पञ्चाक्षरमुदीरयेत् ॥ ७.१,३३.८३
यः कृत्वात्यंतिकीं दीक्षामादेहान्तमनाकुलः ॥ ७.१,३३.८४
व्रतमेतत्प्रकुर्वीत स तु वै नैष्ठिकः स्मृतः ॥ ७.१,३३.८४
सो ऽत्याश्रमी च विज्ञेयो महापाशुपतस्तथा ॥ ७.१,३३.८५
स एव तपतां श्रेष्ठ स एव च महाव्रती ॥ ७.१,३३.८५
न तेन सदृशः कश्चित्कृतकृत्यो मुमुक्षुषु ॥ ७.१,३३.८६
यो यतिर्नैष्ठिको जातस्तमाहुर्नैष्ठिकोत्तमम् ॥ ७.१,३३.८६
यो ऽन्वहं द्वादशाहं वा व्रतमेतत्समाचरेत् ॥ ७.१,३३.८७
सो ऽपि नैष्ठिकतुल्यः स्यात्तीव्रव्रतसमन्वयात् ॥ ७.१,३३.८७
घृताक्तो यश्चरेदेतद्व्रतं व्रतपरायणः ॥ ७.१,३३.८८
द्वित्रैकदिवसं वापि स च कश्चन नैष्ठिकः ॥ ७.१,३३.८८
कृत्यमित्येव निष्कामो यश्चरेद्व्रतमुत्तमम् ॥ ७.१,३३.८९
शिवार्पितात्मा सततं न तेन सदृशः क्वचित् ॥ ७.१,३३.८९
भस्मच्छन्नो द्विजो विद्वान्महापातकसंभवैः ॥ ७.१,३३.९०
पापैस्सुदारुणैस्सद्यो मुच्यते नात्र संशयः ॥ ७.१,३३.९०
रुद्राग्निर्यत्परं वीर्यन्तद्भस्म परिकीर्तितम् ॥ ७.१,३३.९१
तस्मात्सर्वेषु कालेषु वीर्यवान्भस्मसंयुतः ॥ ७.१,३३.९१
भस्मनिष्ठस्य नश्यन्ति देषा भस्माग्निसंगमात् ॥ ७.१,३३.९२
भस्मस्नानविशुद्धात्मा भस्मनिष्ठ इति स्मृतः ॥ ७.१,३३.९२
भस्मना दिग्धसर्वांगो भस्मदीप्तत्रिपुंड्रकः ॥ ७.१,३३.९३
भस्मस्नायी च पुरुषो भस्मनिष्ठ इति स्मृतः ॥ ७.१,३३.९३
भूतप्रेतपिशाचाश्च रोगाश्चातीव दुस्सहाः ॥ ७.१,३३.९४
भस्मनिष्ठस्य सान्निध्याद्विद्रवंति न संशयः ॥ ७.१,३३.९४

भासनाद्भासितं प्रोक्तं भस्म कल्मषभक्षणात् ॥ ७.१,३३.९५

भूतिभूतिकरी चैव रक्षा रक्षाकरी परम् ॥ ७.१,३३.९५

किमन्यदिह वक्तव्यं भस्ममाहात्म्यकारणम् ॥ ७.१,३३.९६

व्रती च भस्मना स्नातस्स्वयं देवो महेश्वरः ॥ ७.१,३३.९६

परमास्त्रं च शैवानां भस्मैतत्पारमेश्वरम् ॥ ७.१,३३.९७

धौम्याग्रजस्य तपसि व्यापदो यन्निवारिताः ॥ ७.१,३३.९७

तस्मात्सर्वप्रयत्नेन कृत्वा पाशुपतव्रतम् ॥ ७.१,३३.९८

धनवद्भस्म संगृह्य भस्मस्नानरतो भवेत् ॥ ७.१,३३.९८

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे पशुपतिव्रतविधानवर्णनं नाम त्रयस्त्रिंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः ३४

https://sa.wikisource.org/s/hz9

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | पूर्व भागः

ऋषय ऊचुः

धौम्याग्रजेन शिशुना क्षीरार्थं हि तपः कृतम् ॥ ७.१,३४.१

तस्मात्क्षीरार्णवो दत्तस्तस्मै देवेन शूलिना ॥ ७.१,३४.१

स कथं शिशुको लेभे शिवशास्त्रप्रवक्तृताम् ॥ ७.१,३४.२

कथं वा शिवसद्भावं ज्ञात्वा तपसि निष्ठितः ॥ ७.१,३४.२

कथं च लब्धविज्ञानस्तपश्चरणपर्वणि ॥ ७.१,३४.३

रुद्राग्नेर्यत्परं वीर्यं लभे भस्म स्वरक्षकम् ॥ ७.१,३४.३

वायुरुवाच

न ह्येष शिशुकः कश्चित्प्राकृतः कृतवांस्तपः ॥ ७.१,३४.४

मुनिवर्यस्य तनयो व्याघ्रपादस्य धीमतः ॥ ७.१,३४.४

जन्मान्तरेण संसिद्धः केनापि खलु हेतुना ॥ ७.१,३४.५

स्वपदप्रच्युतो दिष्ट्या प्राप्तो मुनिकुमारताम् ॥ ७.१,३४.५

महादेवप्रसादस्य भाग्यापन्नस्य भाविनः ॥ ७.१,३४.६

दुग्धाभिलाषप्रभवद्वारतामगमत्तपः ॥ ७.१,३४.६

अतः सर्वगणेशत्वं कुमारत्वं च शाश्वतम् ॥ ७.१,३४.७

सह दुग्धाब्धिना तस्मै प्रददौ शंकरः स्वयम् ॥ ७.१,३४.७

तस्य ज्ञानागमोप्यस्य प्रसादादेव शांकरात् ॥ ७.१,३४.८

कौमारं हि परं साक्षाज्ज्ञानं शक्तिमयं विदुः ॥ ७.१,३४.८

शिवशास्त्रप्रवक्तृत्वमपि तस्य हि तत्कृतम् ॥ ७.१,३४.९

कुमारो मुनितो लब्धज्ञानाब्धिरिव नन्दनः ॥ ७.१,३४.९

दृष्टं तु कारणं तस्य शिवज्ञानसमन्वये ॥ ७.१,३४.१०

स्वमातृवचनं साक्षाच्छोकजं क्षीरकारणात् ॥ ७.१,३४.१०

कदाचित्क्षीरमत्यल्पं पीतवान्मातुलाश्रमे ॥ ७.१,३४.११

ईर्षयया मातुलसुतं संतृप्तक्षीरमुत्तमम् ॥ ७.१,३४.११

पीत्वा स्थितं यथाकामं दृष्ट्वा वै मातुलात्मजम् ॥ ७.१,३४.१२
उपमन्युर्व्याघ्रपादिः प्रीत्या प्रोवाच मातरम् ॥ ७.१,३४.१२
उपमन्युरुवाच
मातर्मातर्महाभागे मम देहि तपस्विनि ॥ ७.१,३४.१३
गव्यं क्षीरमतिस्वादु नाल्पमुष्णं पिबाम्यहम् ॥ ७.१,३४.१३
वायुरुवाच
तच्छ्रुत्वा पुत्रवचनं तन्माता च तपस्विनी ॥ ७.१,३४.१४
व्याघ्रपादस्य महिषी दुःखमापत्तदा च सा ॥ ७.१,३४.१४
उपलाल्याथ सुप्रीत्या पुत्रमालिंग्य सादरम् ॥ ७.१,३४.१५
दुःखिता विललापाथ स्मृत्वा नैर्धन्यमात्मनः ॥ ७.१,३४.१५
स्मृत्वास्मृत्वा पुनः क्षीरमुपमन्युस्स बालकः ॥ ७.१,३४.१६
देहि देहीति तामाह रुद्रन्भूयो महाद्युतिः ॥ ७.१,३४.१६
तद्धठं सा परिज्ञाय द्विजपत्नी तपस्विनी ॥ ७.१,३४.१७
शान्तये तद्धठस्याथ शुभोपायमरीरचत् ॥ ७.१,३४.१७
उञ्छवृत्त्यार्जितान्बीजान्स्वयं दृष्ट्वा च सा तदा ॥ ७.१,३४.१८
बीजपिष्टमथालोड्य तोयेन कलभाषिणी ॥ ७.१,३४.१८
एह्येहि मम पुत्रेति सामपूर्वं ततस्सुतम् ॥ ७.१,३४.१९
आलिंग्यादाय दुःखार्ता प्रददौ कृत्रिमं पयः ॥ ७.१,३४.१९
पीत्वा च कृत्रिमं क्षीरं मात्रां दत्तं स बालकः ॥ ७.१,३४.२०
नैतत्क्षीरमिति प्राह मातरं चातिविह्वलः ॥ ७.१,३४.२०
दुःखिता सा तदा प्राह संप्रेक्ष्याघ्राय मूर्धनि ॥ ७.१,३४.२१
समार्ज्य नेत्र पुत्रस्य कराभ्यां कमलायते ॥ ७.१,३४.२१
जनन्युवाच
तटिनी रत्नपूर्णास्तास्स्वर्गपातालगोचराः ॥ ७.१,३४.२२
भाग्यहीना न पश्यन्ति भक्तिहीनाश्च ये शिवे ॥ ७.१,३४.२२
राज्यं स्वर्गं च मोक्षं च भोजनं क्षीरसंभवम् ॥ ७.१,३४.२३
न लभन्ते प्रियाण्येषां न तुष्यति यदा शिवः ॥ ७.१,३४.२३
भवप्रसादजं सर्वं नान्यद्देवप्रसादजम् ॥ ७.१,३४.२४

अन्यदेवेषु निरता दुःखार्ता विभ्रमन्ति च ॥ ७.१,३४.२४
क्षीरं तत्र कुतो ऽस्माकं वने निवसतां सदा ॥ ७.१,३४.२५
क्व दुग्धसाधनं वत्स क्व वयं वनवासिनः ॥ ७.१,३४.२५
कृत्स्नाभावेन दारिद्र्यान्मया ते भाग्यहीनया ॥ ७.१,३४.२६
मिथ्यादुग्धमिदं दत्तम्पिष्टमालोड्य वारिणा ॥ ७.१,३४.२६
त्वं मातुलगृहे स्वल्पं पीत्वा स्वादु पयः शृतम् ॥ ७.१,३४.२७
ज्ञात्वा स्वादु त्वया पीतं तज्जातीयमनुस्मरन् ॥ ७.१,३४.२७
दत्तं न पय इत्युक्त्वा रुदन् दुःखीकरोषि माम् ॥ ७.१,३४.२८
प्रसादेन विना शंभो पयस्तव न विद्यते ॥ ७.१,३४.२८
पादपंकजयोस्तस्य साम्बस्य सगणस्य च ॥ ७.१,३४.२९
भक्त्या समर्पितं यत्तत्कारणं सर्वसम्पदाम् ॥ ७.१,३४.२९
अधुना वसुदोस्माभिर्महादेवो न पूजितः ॥ ७.१,३४.३०
सकामानां यथाकामं यथोक्तफलदायकः ॥ ७.१,३४.३०
धनान्युद्दिश्य नास्माभिरितः प्रागर्चितः शिवः ॥ ७.१,३४.३१
अतो दरिद्रास्संजाता वयं तस्मान्न ते पयः ॥ ७.१,३४.३१
पूर्वजन्मनि यद्दत्तं शिवमुद्दिश्य वै सुतः ॥ ७.१,३४.३२
तदेव लभ्यते नान्यद्विष्णुमुद्दिश्य वा प्रभुम् ॥ ७.१,३४.३२
वायुरुवाच
इति मातृवचः श्रुत्वा तथ्यं शोकादिसूचकम् ॥ ७.१,३४.३३
बालो ऽप्यनुतपन्नंतः प्रगल्भमिदमब्रवीत् ॥ ७.१,३४.३३
उपमन्युरुवाच
शोकेनालमितो मातः सांबो यद्यस्ति शंकरः ॥ ७.१,३४.३४
त्यज शोकं महाभागे सर्वं भद्रं भविष्यति ॥ ७.१,३४.३४
शृणु मातर्वचो मेद्य महादेवो ऽस्ति चेत्क्वचित् ॥ ७.१,३४.३५
चिराद्वा ह्यचिराद्वापि क्षीरोदं साधयाम्यहम् ॥ ७.१,३४.३५
वायुरुवाच
इति श्रुत्वा वचस्तस्य बालकस्य महामतेः ॥ ७.१,३४.३६
प्रत्युवाच तदा माता सुप्रसन्ना मनस्विनी ॥ ७.१,३४.३६

मातोवाच

शुभं विचारितं तात त्वया मत्प्रीतिवर्धनम् ॥ ७.१,३४.३७

विलंबं मा कथास्त्वं हि भज सांबं सदाशिवम् ॥ ७.१,३४.३७

सर्वस्मादधिको ऽस्त्येव शिवः परमकारणम् ॥ ७.१,३४.३८

तत्कृतं हि जगत्सर्वं ब्रह्माद्यास्तस्य किंकराः ॥ ७.१,३४.३८

तत्प्रसादकृतैश्वर्या दासास्तस्य वयं प्रभोः ॥ ७.१,३४.३९

तं विनान्यं न जानीमश्शंकरं लोकशंकरम् ॥ ७.१,३४.३९

अन्यान्देवान्परित्यज्य कर्मणा मनसा गिरा ॥ ७.१,३४.४०

तमेव सांबं सगणं भज भावपुरस्सरम् ॥ ७.१,३४.४०

तस्य देवाधिदेवस्य शिवस्य वरदायिनः ॥ ७.१,३४.४१

साक्षान्नमश्शिवायेति मंत्रो ऽयं वाचकः स्मृतः ॥ ७.१,३४.४१

सप्तकोटिमहामंत्राः सर्वे सप्रणवाः परे ॥ ७.१,३४.४२

तस्मिन्नेव विलीयंते पुनस्तस्माद्विनिर्गताः ॥ ७.१,३४.४२

सप्रसादाश्च ते मंत्राः स्वाधिकाराद्यपेक्षया ॥ ७.१,३४.४३

सर्वाधिकारस्त्वेको ऽयं मंत्र एवेश्वराज्ञया ॥ ७.१,३४.४३

यथा निकृष्टानुत्कृष्टान्सर्वानप्यात्मनः शिवः ॥ ७.१,३४.४४

क्षमते रक्षितुं तद्वन्मंत्रो ऽयमपि सर्वदा ॥ ७.१,३४.४४

प्रबलश्च तथा ह्येष मंत्रो मन्त्रान्तरादपि ॥ ७.१,३४.४५

सर्वरक्षाक्षमो ऽप्येष नापरः कश्चिदिष्यते ॥ ७.१,३४.४५

तस्मान्मन्त्रान्तरांस्त्यक्त्वा पञ्चाक्षरपरो भव ॥ ७.१,३४.४६

तस्मिञ्जिह्वांतरगते न किंचिदिह दुर्लभम् ॥ ७.१,३४.४६

अघोरास्त्रं च शैवानां रक्षाहेतुरनुत्तमम् ॥ ७.१,३४.४७

तच्च तत्प्रभवं मत्वा तत्परो भव नान्यथा ॥ ७.१,३४.४७

भस्मेदन्तु मया लब्धं पितुरेव तवोत्तमम् ॥ ७.१,३४.४८

विरजानलसंसिद्धं महाव्यापन्निवारणम् ॥ ७.१,३४.४८

मंत्रं च ते मया दत्तं गृहाण मदनुज्ञया ॥ ७.१,३४.४९

अनेनैवाशु जप्तेन रक्षा तव भविष्यति ॥ ७.१,३४.४९

वायुरुवाच

एवं मात्रा समादिश्य शिवमस्त्वित्युदीर्य च ॥ ७.१,३४.५०

विसृष्टस्तद्वचो मूर्ध्नि कुर्वन्नेव तदा मुनिः ॥ ७.१,३४.५०

तां प्रणम्यैवमुक्त्वा च तपः कर्तुं प्रचक्रमे ॥ ७.१,३४.५१

तमाह च तदा माता शुभं कुर्वंतु ते सुराः ॥ ७.१,३४.५१

अनुज्ञातस्तया तत्र तपस्तेपे स दुश्चरम् ॥ ७.१,३४.५२

हिमवत्पर्वतं प्राप्य वायुभक्षः समाहितः ॥ ७.१,३४.५२

अष्टेष्टकाभिः प्रसादं कृत्वा लिंगं च मृन्मयम् ॥ ७.१,३४.५३

तत्रावाह्य महादेवं सांबं सगणमव्ययम् ॥ ७.१,३४.५३

भक्त्या पञ्चाक्षरेणैव पुत्रैः पुष्पैर्वनोद्भवैः ॥ ७.१,३४.५४

समभ्यर्च्य चिरं कालं चचार परमं तपः ॥ ७.१,३४.५४

ततस्तपश्चरत्तं तं बालमेकाकिनं कृशम् ॥ ७.१,३४.५५

उपमन्युं द्विजवरं शिवसंसक्तमानसम् ॥ ७.१,३४.५५

पुरा मरीचिना शप्ताः केचिन्मुनिपिशाचकाः ॥ ७.१,३४.५६

संपीड्य राक्षसैर्भावैस्तपसोविघ्नमाचरन् ॥ ७.१,३४.५६

स च तैः पीड्यमानो ऽपि तपः कुर्वन्कथञ्चन ॥ ७.१,३४.५७

सदा नमः शिवायेति क्रोशति स्मार्तनादवत् ॥ ७.१,३४.५७

तन्नादश्रवणादेव तपसो विघ्नकारिणः ॥ ७.१,३४.५८

ते तं बालं समुत्सृज्य मुनयस्समुपाचरन् ॥ ७.१,३४.५८

तपसा तस्य विप्रस्य चोपमन्योर्महात्मनः ॥ ७.१,३४.५९

चराचरं च मुनयः प्रदीपितमभूज्जगत् ॥ ७.१,३४.५९

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे उपमन्युतपोवर्णनं नाम चतुस्त्रिंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/पूर्व भागः/अध्यायः ३५

https://sa.wikisource.org/s/hza
< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | पूर्व भागः

वायुरुवाच

अथ सर्वे प्रदीप्तांगा वैकुण्ठं प्रययुर्द्रुतम् ॥ ७.१,३५.१

प्रणम्याहुश्च तत्सर्वं हरये देवसत्तमाः ॥ ७.१,३५.१

श्रुत्वा तेषां तदा वाक्यं भगवान्पुरुषोत्तमः ॥ ७.१,३५.२

किमिदन्त्विति संचिन्त्य ज्ञात्वा तत्कारणं च सः ॥ ७.१,३५.२

जगाम मन्दरं तूर्णं महेश्वरदिदृक्षया ॥ ७.१,३५.३

दृष्ट्वा देवं प्रणम्यैवं प्रोवाच सुकृतांजलिः ॥ ७.१,३५.३

विष्णुरुवाच

भगवन्ब्राह्मणः कश्चिदुपमन्युरिति श्रुतः ॥ ७.१,३५.४

क्षीरार्थमदहत्सर्वं तपसा तन्निवारय ॥ ७.१,३५.४

वायुरुवाच

इति श्रुत्वा वचो विष्णोः प्राह देवो महेश्वरः ॥ ७.१,३५.५

शिशुं निवारयिष्यामि तत्त्वं गच्छ स्वमाश्रमम् ॥ ७.१,३५.५

तच्छ्रुत्वा शंभुवचनं स विष्णुर्देववल्लभः ॥ ७.१,३५.६

जगामाश्वास्य तान्सर्वान्स्वलोकममरादिकान् ॥ ७.१,३५.६

एतस्मिन्नंतरे देवः पिनाकी परमेश्वरः ॥ ७.१,३५.७

शक्रस्य रूपमास्थाय गन्तुं चक्रे मतिं ततः ॥ ७.१,३५.७

अथ जगाम मुनेस्तु तपोवनं गजवरेण सितेन सदाशिवः ॥ ७.१,३५.८

सह सुरासुरसिद्धमहोरगैरमरराजतनुं स्वयमास्थितः ॥ ७.१,३५.८

स वारणश्चारु तदा विभुं तं निवीज्य वालव्यजनेन दिव्यम् ॥ ७.१,३५.९

दधार शच्या सहितं सुरेंद्रं करेण वामेन शितातपत्रम् ॥ ७.१,३५.९

रराज भगवान्सोमः शक्ररूपी सदाशिवः ॥ ७.१,३५.१०

तेनातपत्रेण यथा चन्द्रबिंबेन मन्दरः ॥ ७.१,३५.१०

आस्थायैवं हि शक्रस्य स्वरूपं परमेश्वरः ॥ ७.१,३५.११

जगामानुग्रहं कर्तुमुपमन्योस्तदाश्रमम् ॥ ७.१,३५.११
तं दृष्ट्वा परमेशानं शक्ररूपधरं शिवम् ॥ ७.१,३५.१२
प्रणम्य शिरसा प्राह महामुनिवरः स्वयम् ॥ ७.१,३५.१२
उपमन्युरुवाच
पावितश्चाश्रमस्सो ऽयं मम देवेश्वर स्वयम् ॥ ७.१,३५.१३
प्राप्तो यत्त्वं जगन्नाथ भगवन्देवसत्तम ॥ ७.१,३५.१३
वायुरुवाच
एवमुक्त्वा स्थितं प्रेक्ष्य कृतांजलिपुटं द्विजम् ॥ ७.१,३५.१४
प्राह गंभीरया वाचा शक्ररूपधरो हरः ॥ ७.१,३५.१४
शक्र उवाच
तुष्टो ऽस्मि ते वरं ब्रूहि तपसानेन सुव्रत ॥ ७.१,३५.१५
ददामि चेप्सितान्सर्वान्धौम्याग्रज महामुने ॥ ७.१,३५.१५
वायुरुवाच
एवमुक्तस्तदा तेन शक्रेण मुनिपुंगवः ॥ ७.१,३५.१६
वारयामि शिवे भक्तिमित्युवाच कृताञ्जलिः ॥ ७.१,३५.१६
तन्निशम्य हरिः १ प्राह मां न जानासि लेखपम् ॥ ७.१,३५.१७
त्रैलोक्याधिपतिं शक्रं सर्वदेवनमस्कृतम् ॥ ७.१,३५.१७
मद्भक्तो भव विप्रर्षे मामेवार्चय सर्वदा ॥ ७.१,३५.१८
ददामि सर्वं भद्रं ते त्यज रुद्रं च निर्गुणम् ॥ ७.१,३५.१८
रुद्रेण निर्गुणेनापि किं ते कार्यं भविष्यति ॥ ७.१,३५.१९
देवपङ्क्तिबहिर्भूतो यः पिशाचत्वमागतः ॥ ७.१,३५.१९
वायुरुवाच
तच्छ्रुत्वा प्राह स मुनिर्जपन्पञ्चाक्षरं मनुम् ॥ ७.१,३५.२०
मन्यमानो धर्मविघ्नं प्राह तं कर्तुमागतम् ॥ ७.१,३५.२०
उपमन्युरुवाच
त्वयैवं कथितं सर्वं भवनिंदारतेन वै ॥ ७.१,३५.२१
प्रसंगादेव देवस्य निर्गुणत्वं महात्मनः ॥ ७.१,३५.२१
त्वं न जानामि वै रुद्रं सर्वदेवेश्वरेश्वरम् ॥ ७.१,३५.२२

ब्रह्मविष्णुमहेशानां जनक प्रकृतेः परम् ॥ ७.१,३५.२२
सदसद्व्यक्तमव्यक्तं यमाहुर्ब्रह्मवादिनः ॥ ७.१,३५.२३
नित्यमेकमनेकं च वरं तस्माद्वृणोम्यहम् ॥ ७.१,३५.२३
हेतुवादविनिर्मुक्तं सांख्ययोगार्थदम्परम् ॥ ७.१,३५.२४
उपासते यं तत्त्वज्ञा वरं तस्माद्वृणोम्यहम् ॥ ७.१,३५.२४
नास्ति शंभोः परं तत्त्वं सर्वकारणकारणात् ॥ ७.१,३५.२५
ब्रह्मविष्ण्वादिदेवानां स्रष्टुर्गुणपराद्विभोः ॥ ७.१,३५.२५
बहुनात्र किमुक्तेन मयाद्यानुमितं महत् ॥ ७.१,३५.२६
भवांतरे कृतं पापं श्रुता निन्दा भवस्य चेत् ॥ ७.१,३५.२६
श्रुत्वा निंदां भवस्याथ तत्क्षणादेव सन्त्यजेत् ॥ ७.१,३५.२७
स्वदेहं तन्निहत्याशु शिवलोकं स गच्छति ॥ ७.१,३५.२७
आस्तां तावन्ममेच्छेयं क्षीरं प्रति सुराधम ॥ ७.१,३५.२८
निहत्य त्वां शिवास्त्रेण त्यजाम्येतं कलेवरम् ॥ ७.१,३५.२८
वायुरुवाच
एवमुक्त्वोपमन्युस्तं मर्तुं व्यवसितस्स्वयम् ॥ ७.१,३५.२९
क्षीरे वाञ्छामपि त्यक्त्वा निहन्तुं शक्रमुद्यतः ॥ ७.१,३५.२९
भस्मादाय तदा घोरमघोरास्त्राभिमंत्रितम् ॥ ७.१,३५.३०
विसृज्य शक्रमुद्दिश्य ननाद स मुनिस्तदा ॥ ७.१,३५.३०
स्मृत्वा शंभुपदद्वंद्वं स्वदेहं दुग्धुमुद्यतः ॥ ७.१,३५.३१
आग्नेयीं धारणां बिभ्रदुपमन्युरवस्थितः ॥ ७.१,३५.३१
एवं व्यवसिते विप्रे भगवान्भगनेत्रहा ॥ ७.१,३५.३२
वारयामास सौम्येन धारणां तस्य योगिनः ॥ ७.१,३५.३२
तद्विसृष्टमघोरास्त्रं नंदीश्वरनियोगतः ॥ ७.१,३५.३३
जगृहे मध्यतः क्षिप्तं नन्दी शंकरवल्लभः ॥ ७.१,३५.३३
स्वं रूपमेव भगवानास्थाय परमेश्वरः ॥ ७.१,३५.३४
दर्शयामास शिप्राय बालेन्दुकृतशेखरम् ॥ ७.१,३५.३४
क्षीरार्णवसहस्रं च पीयूषार्णवमेव वा ॥ ७.१,३५.३५
दध्यादेरर्णवांश्चैव घृतोदार्णवमेव च ॥ ७.१,३५.३५

फलार्णवं च बालस्य भक्ष्य भोज्यार्णवं तथा ॥ ७.१,३५.३६
अपूपानां गिरिं चैव दर्शयामास स प्रभुः ॥ ७.१,३५.३६
एवं स ददृशे देवो देव्या सार्धं वृषोपरि ॥ ७.१,३५.३७
गणेश्वरैस्त्रिशूलाद्यैर्दिव्यास्त्रैरपि संवृतः ॥ ७.१,३५.३७
दिवि दुंदुभयो नेदुः पुष्पवृष्टिः पपात च ॥ ७.१,३५.३८
विष्णुब्रह्मेन्द्रप्रमुखैर्देवैश्छन्ना दिशो दश ॥ ७.१,३५.३८
अथोपमन्युरानन्दसमुद्रोर्मिभिरावृतः ॥ ७.१,३५.३९
पपात दण्डवद्भूमौ भक्तिनम्रेण चेतसा ॥ ७.१,३५.३९
एतस्मिन्समये तत्र सस्मितो भगवान्भवः ॥ ७.१,३५.४०
एह्येहीति तमाहूय मूर्ध्न्याघ्राय ददौ वरान् ॥ ७.१,३५.४०
शिव उवाच
भक्ष्यभोज्यान्यथाकामं बान्धवैर्भुङ्क्ष्व सर्वदा ॥ ७.१,३५.४१
सुखी भव सदा दुःखान्निर्मुक्ता भक्तिमान्मम ॥ ७.१,३५.४१
उपमन्यो महाभाग तवाम्बैषा हि पार्वती ॥ ७.१,३५.४२
मया पुत्रीकृतो ह्यद्य दत्तः क्षीरोदकार्णवः ॥ ७.१,३५.४२
मधुनश्चार्णवश्चैव दध्यन्नार्णव एव च ॥ ७.१,३५.४३
आज्यौदनार्णवश्चैव फलाद्यर्णव एव च ॥ ७.१,३५.४३
अपूपगिरयश्चैव भक्ष्यभोज्यार्णवस्तथा ॥ ७.१,३५.४४
एते दत्ता मया ते हि त्वं गृह्णीष्व महामुने ॥ ७.१,३५.४४
पिता तव महादेवो माता वै जगदम्बिका ॥ ७.१,३५.४५
अमरत्वं मया दत्तं गाणपत्यं च शाश्वतम् ॥ ७.१,३५.४५
वरान्वरय सुप्रीत्या मनो ऽभिलषितान्परान् ॥ ७.१,३५.४६
प्रसन्नो ऽहं प्रदास्यामि नात्र कार्या विचारणा ॥ ७.१,३५.४६
वायुरुवाच
एवमुक्त्वा महादेवः कराभ्यामुपगृह्य तम् ॥ ७.१,३५.४७
मूर्ध्न्याघ्राय सुतस्ते ऽयमिति देव्यै न्यवेदयत् ॥ ७.१,३५.४७
देवी च गुहवत्प्रीत्या मूर्ध्नि तस्य कराम्बुजम् ॥ ७.१,३५.४८
विन्यस्य प्रददौ तस्मै कुमारपदमव्ययम् ॥ ७.१,३५.४८

क्षीराब्धिरपि साकारः क्षीरं स्वादु करे दधत् ॥ ७.१,३५.४९
उपस्थाय ददौ पिण्डीभूतं क्षीरमनश्वरम् ॥ ७.१,३५.४९
योगैश्वर्यं सदा तुष्टिं ब्रह्मविद्यामनश्वराम् ॥ ७.१,३५.५०
समृद्धिं परमान्तस्मै ददौ संतुष्टमानसः ॥ ७.१,३५.५०
अथ शंभुः प्रसन्नात्मा दृष्ट्वा तस्य तपोमहः ॥ ७.१,३५.५१
पुनर्ददौ वरं दिव्यं मुनये ह्युपमन्यवे ॥ ७.१,३५.५१
व्रतं पाशुपतं ज्ञानं व्रतयोगं च तत्त्वतः ॥ ७.१,३५.५२
ददौ तस्मै प्रवक्तृत्वपाटवं सुचिरं परम् ॥ ७.१,३५.५२
सो ऽपि लब्ध्वा वरान्दिव्यान्कुमारत्वं च सर्वदा ॥ ७.१,३५.५३
तस्माच्छिवाच्च तस्याश्च शिवाया मुदितो ऽभवत् ॥ ७.१,३५.५३
ततः प्रसन्नचेतस्कः सुप्रणम्य कृतांजलिः ॥ ७.१,३५.५४
ययाचे स वरं विप्रो देवदेवान्महेश्वरात् ॥ ७.१,३५.५४
उपमन्युरुवाच
प्रसीद देवदेवेश प्रसीद परमेश्वर ॥ ७.१,३५.५५
स्वभक्तिन्देहि परमान्दिव्यामव्यभिचारिणीम् ॥ ७.१,३५.५५
श्रद्धान्देहि महादेव द्वसम्बन्धिषु मे सदा ॥ ७.१,३५.५६
स्वदास्यं परमं स्नेहं सान्निध्यं चैव सर्वदा ॥ ७.१,३५.५६
एवमुक्त्वा प्रसन्नात्माहर्षगद्गदया गिरा ॥ ७.१,३५.५७
सतुष्टाव महादेवमुपमन्युर्द्विजोत्तमः ॥ ७.१,३५.५७
उपमन्युरुवाच
देवदेव महादेव शरणागतवत्सल ॥ ७.१,३५.५८
प्रसीद करुणासिंधो साम्ब शंकर सर्वदा ॥ ७.१,३५.५८
वायुरुवाच
एवमुक्तो महादेवः सर्वेषां च वरप्रदः ॥ ७.१,३५.५९
प्रत्युवाच प्रसन्नात्मोपमन्युं मुनिसत्तमम् ॥ ७.१,३५.५९
शिव उवाच
वत्सोपमन्यो तुष्टो ऽस्मि सर्वं दत्तं मया हि ते ॥ ७.१,३५.६०
दृढभक्तो ऽसि विप्रर्षे मया विज्ञासितो ह्यसि ॥ ७.१,३५.६०

अजरश्चामरश्चैव भव त्वन्दुःखवर्जितः ॥ ७.१,३५.६१

यशस्वी तेजसा युक्तो दिव्यज्ञानसमन्वितः ॥ ७.१,३५.६१

अक्षया बान्धवाश्चैव कुलं गोत्रं च ते सदा ॥ ७.१,३५.६२

भविष्यति द्विजश्रेष्ठ मयि भक्तिश्च शाश्वती ॥ ७.१,३५.६२

सान्निध्यं चाश्रमे नित्यं करिष्यामि द्विजोत्तम ॥ ७.१,३५.६३

उपकंठं मम त्वं वै सानन्दं विहरिष्यसि ॥ ७.१,३५.६३

एवमुक्त्वा स भगवान्सूर्यकोटिसमप्रभः ॥ ७.१,३५.६४

ईशानस्स वरान्दत्त्वा तत्रैवान्तर्दधे हरः ॥ ७.१,३५.६४

उपमन्युः प्रसन्नात्मा प्राप्य तस्माद्वराद्वरान् ॥ ७.१,३५.६५

जगाम जननीस्थानं सुखं प्रापाधिकं च सः ॥ ७.१,३५.६५

इति श्रीशिवमहापुराणे वैयासिक्यां चतुर्विंशतिसाहस्र्यां संहितायां तदन्तर्गतायां सप्तम्यां वायवीयसंहितायां पूर्वखण्डे उपमन्युचरितवर्णनं नाम पञ्चत्रिंशो ऽध्यायः

समाप्तो ऽयं सप्तम्या वायवीयसंहितायाः पूर्वखण्डः ॥

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ०१

https://sa.wikisource.org/s/hzb



ओं

नमस्समस्तसंसारचक्रभ्रमणहेतवे ॥ ७.२,१.१

गौरीकुचतटद्वन्द्वकुंकुमांकितवक्षसे ॥ ७.२,१.१

सूत उवाच

उक्त्वा भगवतो लब्धप्रसादादुपमन्युना ॥ ७.२,१.२

नियमादुत्थितो वायुर्मध्ये प्राप्ते दिवाकरे ॥ ७.२,१.२

ऋषयश्चापि ते सर्वे नैमिषारण्यवासिनः ॥ ७.२,१.३

अथायमर्थः प्रष्टव्य इति कृत्वा विनिश्चयम् ॥ ७.२,१.३

कृत्वा यथा स्वकं कृत्यं प्रत्यहं ते यथा पुरा ॥ ७.२,१.४

भगवंतमुपायांतं समीक्ष्य समुपाविशन् ॥ ७.२,१.४

अथासौ नियमस्यांते भगवानम्बरोद्भवः ॥ ७.२,१.५

मध्ये मुनिसभायास्तु भेजे क्लृप्तं वरासनम् ॥ ७.२,१.५

सुखासनोपविष्टश्च वायुर्लोकनमस्कृतः ॥ ७.२,१.६

श्रीमद्विभूतिमीशस्य हृदि कृत्वेदमब्रवीत् ॥ ७.२,१.६

तं प्रपद्ये महादेवं सर्वज्ञमपराजितम् ॥ ७.२,१.७

विभूतिस्सकलं यस्य चराचरमिदं जगत् ॥ ७.२,१.७

इत्याकर्ण्य शुभां वाणीमृषयः क्षीणकल्मषाः ॥ ७.२,१.८

विभूतिविस्तरं श्रोतुमूचुस्ते परमं वचः ॥ ७.२,१.८

ऋषय ऊचुः

उक्तं भगवता वृत्तमुपमन्योर्महात्मनः ॥ ७.२,१.९

क्षीरार्थेनापि तपसा यत्प्राप्तं परमेश्वरात् ॥ ७.२,१.९

दृष्टो ऽसौ वासुदेवेन कृष्णेनाक्लिष्टकर्मणा ॥ ७.२,१.१०

धौम्याग्रजस्ततस्तेन कृत्वा पाशुपतं व्रतम् ॥ ७.२,१.१०

प्राप्तं च परमं ज्ञानमिति प्रागेव शुश्रुम ॥ ७.२,१.११

कथं स लब्धवान् कृष्णो ज्ञानं पाशुपतं परम् ॥ ७.२,१.११

वायुरुवाच

स्वेच्छया ह्यवतीर्णोपि वासुदेवस्सनातनः ॥ ७.२,१.१२

निंदयन्निव मानुष्यं देहशुद्धिं चकार सः ॥ ७.२,१.१२

पुत्रार्थं हि तपस्तप्तुं गतस्तस्य महामुनेः ॥ ७.२,१.१३

आश्रमं मुनिभिर्दृष्टं दृष्टवांस्तत्र वै मुनिम् ॥ ७.२,१.१३

भस्मावदातसर्वांगं त्रिपुंड्रांकितमस्तकम् ॥ ७.२,१.१४

रुद्राक्षमालाभरणं जटामंडलमंडितम् ॥ ७.२,१.१४

तच्छिष्यभूतैर्मुनिभिश्शास्त्रैर्वेदमिवावृतम् ॥ ७.२,१.१५

शिवध्यानरतं शांतमुपमन्युं महाद्युतिम् ॥ ७.२,१.१५

नमश्चकार तं दृष्ट्वा हृष्टसर्वतनूरुहः ॥ ७.२,१.१६

बहुमानेन कृष्णो ऽसौ त्रिः कृत्वा तु प्रदक्षिणाम् ॥ ७.२,१.१६

स्तुतिं चकार सुप्रीत्या नतस्कंधः कृताञ्जलिः ॥ ७.२,१.१६

तस्यावलोकनादेव मुनेः कृष्णस्य धीमतः ॥ ७.२,१.१७

नष्टमासीन्मलं सर्वं मायाजं कार्ममेव च ॥ ७.२,१.१७

तपःक्षीणमलं कृष्णमुपमन्युर्यथाविधिः ॥ ७.२,१.१८

भस्मनोद्धूल्य तं मन्त्रैरग्निरित्यादिभिः क्रमात् ॥ ७.२,१.१८

अथ पाशुपतं साक्षाद्व्रतं द्वादशमासिकम् ॥ ७.२,१.१९

कारयित्वा मुनिस्तस्मै प्रददौ ज्ञानमुत्तमम् ॥ ७.२,१.१९

तदाप्रभृति तं कृष्णं मुनयश्शंसितव्रताः ॥ ७.२,१.२०

दिव्याः पाशुपताः सर्वे परिवृत्योपतस्थिरे ॥ ७.२,१.२०

ततो गुरुनियोगाद्वै कृष्णः परमशक्तिमान् ॥ ७.२,१.२१

तपश्चकार पुत्रार्थं सांबमुद्दिश्य शंकरम् ॥ ७.२,१.२१

तपसो तेन वर्षांते दृष्टो ऽसौ परमेश्वरः ॥ ७.२,१.२२

श्रिया परमया युक्तस्सांबश्च सगणश्शिवः ॥ ७.२,१.२२

वरार्थमाविर्भूतस्य हरस्य सुभगाकृतेः ॥ ७.२,१.२३

स्तुतिं चकार नत्वासौ कृष्णः सम्यक्कृतांजलिः ॥ ७.२,१.२३

सांबं समगणव्यग्रो लब्धवान्पुत्रमात्मनः ॥ ७.२,१.२४

तपसा तुष्टचित्तेन दत्तं विष्णोश्शिवेन वै ॥ ७.२,१.२४

यस्मात्सांबो महादेवः प्रददौ पुत्रमात्मनः ॥ ७.२,१.२५

तस्माज्जांबवतीसूनुं सांबं चक्रे स नामतः ॥ ७.२,१.२५

तदेतत्कथितं सर्वं कृष्णस्यामितकर्मणः ॥ ७.२,१.२६

महर्षेर्ज्ञानलाभश्च पुत्रलाभश्च शंकरात् ॥ ७.२,१.२६

य इदं कीर्तयेन्नित्यं शृणुयाच्छ्रावयेत्तथा ॥ ७.२,१.२७

स विष्णोर्ज्ञानमासाद्य तेनैव सह मोदते ॥ ७.२,१.२७

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे कृष्णपुत्रप्राप्तिवर्णनं नम प्रथमो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ०२

https://sa.wikisource.org/s/hzc
< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | उत्तर भागः

ऋषय ऊचुः

किं तत्पाशुपतं ज्ञानं कथं पशुपतिश्शिवः ॥ ७.२,२.१

कथं धौम्याग्रजः पृष्टः कृष्णेनाक्लिष्टकर्मणा ॥ ७.२,२.१

एतत्सर्वं समाचक्ष्व वायो शंकरविग्रह ॥ ७.२,२.२

तत्समो न हि वक्तास्ति त्रैलोक्येष्वपरः प्रभुः ॥ ७.२,२.२

सूत उवाच

इत्याकर्ण्य वचस्तेषां महर्षीणां प्रभंजनः ॥ ७.२,२.३

संस्मृत्य शिवमीशानं प्रवक्तुमुपचक्रमे ॥ ७.२,२.३

वायुरुवाच

पुरा साक्षान्महेशेन श्रीकंठाख्येन मन्दरे ॥ ७.२,२.४

देव्यै देवेन कथितं ज्ञानं पाशुपतं परम् ॥ ७.२,२.४

तदेव पृष्टं कृष्णेन विष्णुना विश्वयोनिना ॥ ७.२,२.५

पशुत्वं च सुरादीनां पतित्वं च शिवस्य च ॥ ७.२,२.५

यथोपदिष्टं कृष्णाय मुनिना ह्युपमन्युना ॥ ७.२,२.६

तथा समासतो वक्ष्ये तच्छृणुध्वमतंद्रिताः ॥ ७.२,२.६

पुरोपमन्युमासीनं विष्णुःकृष्णवपुर्धरः ॥ ७.२,२.७

प्रणिपत्य यथान्यायमिदं वचनमब्रवीत् ॥ ७.२,२.७

श्रीकृष्ण उवाच

भगवञ्छ्रोतुमिच्छामि देव्यै देवेन भाषितम् ॥ ७.२,२.८

दिव्यं पाशुपतं ज्ञानं विभूतिं वास्य कृत्स्नशः ॥ ७.२,२.८

कथं पशुपतिर्देवः पशवः के प्रकीर्तिताः ॥ ७.२,२.९

कैः पाशैस्ते निबध्यंते विमुच्यंते च ते कथम् ॥ ७.२,२.९

इति संचोदितः श्रीमानुपमन्युर्महात्मना ॥ ७.२,२.१०

प्रणम्य देवं देवीं च प्राह पुष्टो यथा तथा ॥ ७.२,२.१०

उपमन्युरुवाच

ब्रह्माद्याः स्थावरांताश्च देवदेवस्य शूलिनः ॥ ७.२,२.११

पशवः परिकीर्त्यंते संसारवशवर्तिनः ॥ ७.२,२.११

तेषां पतित्वाद्देवेशः शिवः पशुपतिः स्मृतः ॥ ७.२,२.१२

मलमायादिभिः पाशैः स बध्नाति पशून्पतिः ॥ ७.२,२.१२

स एव मोचकस्तेषां भक्त्या सम्यगुपासितः ॥ ७.२,२.१३

चतुर्विंशतितत्त्वानि मायाकर्मगुणा अमी ॥ ७.२,२.१३

विषया इति कथ्यन्ते पाशा जीवनिबन्धनाः ॥ ७.२,२.१४

ब्रह्मादिस्तम्बपर्यंतान् पशून्बद्ध्वा महेश्वरः ॥ ७.२,२.१४

पाशैरेतैः पतिर्देवः कार्यं कारयति स्वकम् ॥ ७.२,२.१५

तस्याज्ञया महेशस्य प्रकृतिः पुरुषोचिताम् ॥ ७.२,२.१५

बुद्धिं प्रसूते सा बुद्धिरहंकारमहंकृतिः ॥ ७.२,२.१६

इन्द्रियाणि दशैकं च तन्मात्रापञ्चकं तथा ॥ ७.२,२.१६

शासनाद्देवदेवस्य शिवस्य शिवदायिनः ॥ ७.२,२.१७

तन्मात्राण्यपि तस्यैव शासनेन महीयसा ॥ ७.२,२.१७

महाभूतान्यशेषाणि भावयंत्यनुपूर्वशः ॥ ७.२,२.१८

ब्रह्मादीनां तृणान्तानां देहिनां देहसंगतिम् ॥ ७.२,२.१८

महाभूतान्यशेषाणि जनयंति शिवाज्ञया ॥ ७.२,२.१९

अध्यवस्यति वै बुद्धिरहंकारोभिमन्यते ॥ ७.२,२.१९

चित्तं चेतयते चापि मनः संकल्पयत्यपि ॥ ७.२,२.२०

श्रोत्रादीनि च गृह्णन्ति शब्दादीन्विषयान् पृथक् ॥ ७.२,२.२०

स्वानेव नान्यान्देवस्य दिव्येनाज्ञाबलेन वै ॥ ७.२,२.२१

वागादीन्यपि यान्यासंस्तानि कर्मेन्द्रियाणि च ॥ ७.२,२.२१

यथा स्वं कर्म कुर्वन्ति नान्यत्किंचिच्छिवाज्ञया ॥ ७.२,२.२२

शब्दादयोपि गृह्यंते क्रियन्ते वचनादयः ॥ ७.२,२.२२

अविलंघ्या हि सर्वेषामाज्ञा शंभोर्गरीयसी ॥ ७.२,२.२३

अवकाशमशेषाणां भूतानां संप्रयच्छति ॥ ७.२,२.२३

आकाशः परमेशस्य शासनादेव सर्वगः ॥ ७.२,२.२४

प्राणाद्यैश्च तथा नामभेदैरंतर्बहिर्जगत् ॥ ७.२,२.२४
बिभर्ति सर्वं शर्वस्य शासनेन प्रभञ्जनः ॥ ७.२,२.२५
हव्यं वहति देवानां कव्यं कव्याशिनामपि ॥ ७.२,२.२५
पाकाद्यं च करोत्यग्निः परमेश्वरशासनात् ॥ ७.२,२.२६
संजीवनाद्यं सर्वस्य कुर्वत्यापस्तदाज्ञया ॥ ७.२,२.२६
विश्वम्भरा जगन्नित्यं धत्ते विश्वेश्वराज्ञया ॥ ७.२,२.२७
देवान्पात्यसुरान् हंति त्रिलोकमभिरक्षति ॥ ७.२,२.२७
आज्ञया तस्य देवेन्द्रः सर्वैर्देवैरलंघ्यया ॥ ७.२,२.२८
आधिपत्यमपां नित्यं कुरुते वरुणस्सदा ॥ ७.२,२.२८
पाशैर्बध्नाति च यथा दंड्यांस्तस्यैव शासनात् ॥ ७.२,२.२९
ददाति नित्यं यक्षेन्द्रो द्रविणं द्रविणेश्वरः ॥ ७.२,२.२९
पुण्यानुरूपं भूतेभ्यः पुरुषस्यानुशासनात् ॥ ७.२,२.३०
करोति संपदः शश्वज्ज्ञानं चापि सुमेधसाम् ॥ ७.२,२.३०
निग्रहं चाप्यसाधूनामीशानश्शिवशासनात् ॥ ७.२,२.३१
धत्ते तु धरणीं मूर्ध्ना शेषः शिवनियोगतः ॥ ७.२,२.३१
यामाहुस्तामसीं रौद्रीं मूर्तिमंतकरीं हरेः ॥ ७.२,२.३२
सृजत्यशेषमीशस्य शासनाच्चतुराननः ॥ ७.२,२.३२
अन्याभिर्मूर्तिभिः स्वाभिः पाति चांते निहन्ति च ॥ ७.२,२.३३
विष्णुः पालयते विश्वं कालकालस्य शासनात् ॥ ७.२,२.३३
सृजते त्रसते चापि स्वकाभिस्तनुभिस्त्रिभिः ॥ ७.२,२.३४
हरत्यंते जगत्सर्वं हरस्तस्यैव शासनात् ॥ ७.२,२.३४
सृजत्यपि च विश्वात्मा त्रिधा भिन्नस्तु रक्षति ॥ ७.२,२.३५
कालः करोति सकलं कालस्संहरति प्रजाः ॥ ७.२,२.३५
कालः पालयते विश्वं कालकालस्य शासनात् ॥ ७.२,२.३६
त्रिभिरंशैर्जगद्बिभ्रत्तेजोभिर्वृष्टिमादिशन् ॥ ७.२,२.३६
दिवि वर्षत्यसौ भानुर्देवदेवस्य शासनात् ॥ ७.२,२.३७
पुष्णात्योषधिजातानि भूतान्याह्लादयत्यपि ॥ ७.२,२.३७
देवैश्च पीयते चंद्रश्चन्द्रभूषणशासनात् ॥ ७.२,२.३८

आदित्या वसवो रुद्रा अश्विनौ मरुतस्तथा ॥ ७.२,२.३८
खेचरा ऋषयस्सिद्धा भोगिनो मनुजा मृगाः ॥ ७.२,२.३९
पशवः पक्षिणश्चैव कीटाद्याः स्थावराणि च ॥ ७.२,२.३९
नद्यस्समुद्रा गिरयः काननानि सरांसि च ॥ ७.२,२.४०
वेदाः सांगाश्च शास्त्राणि मंत्रस्तोममखादयः ॥ ७.२,२.४०
कालाग्न्यादिशिवांतानि भुवनानि सहाधिपैः ॥ ७.२,२.४१
ब्रह्मांडान्यप्यसंख्यानि तेषामावरणानि च ॥ ७.२,२.४१
वर्तमानान्यतीतानि भविष्यन्त्यपि कृत्स्नशः ॥ ७.२,२.४२
दिशश्च विदिशश्चैव कालभेदाः कलादयः ॥ ७.२,२.४२
यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयते ऽपि वा ॥ ७.२,२.४३
तत्सर्वं शंकरस्याज्ञा बलेन समधिष्ठितम् ॥ ७.२,२.४३
आज्ञाबलात्तस्य धरा स्थितेह धराधरा वारिधराः समुद्राः ॥ ७.२,२.४४
ज्योतिर्गणाः शक्रमुखाश्च देवाः स्थिरं चिरं वा चिदचिद्यदस्ति ॥ ७.२,२.४४
उपमन्युरुवाच
अत्याश्चर्यमिदं कृष्ण शंभोरमितकर्मणः ॥ ७.२,२.४५
आज्ञाकृतं शृणुष्वैतच्छ्रुतं श्रुतिमुखे मया ॥ ७.२,२.४५
पुरा किल सुराः सेंद्रा विवदंतः परस्परम् ॥ ७.२,२.४६
असुरान्समरे जित्वा जेताहमहमित्युत ॥ ७.२,२.४६
तदा महेश्वरस्तेषां मध्यतो वरवेषधृक् ॥ ७.२,२.४७
स्वलक्षणैर्विहीनांगः स्वयं यक्ष इवाभवत् ॥ ७.२,२.४७
स तानाह सुरानेकं तृणमादाय भूतले ॥ ७.२,२.४८
य एतद्विकृतं कर्तुं क्षमते स तु दैत्यजित् ॥ ७.२,२.४८
यक्षस्य वचनं श्रुत्वा वज्रपाणिः शचीपतिः ॥ ७.२,२.४९
किंचित्क्रुद्धो विहस्यैनं तृणमादातुमुद्यतः ॥ ७.२,२.४९
न तत्तृणमुपदातुं मनसापि च शक्यते ॥ ७.२,२.५०
यथा तथापि तच्छेत्तुं वज्रं वज्रधरो ऽसृजत् ॥ ७.२,२.५०
तद्वज्रं निजवज्रेण संसृष्टमिव सर्वतः ॥ ७.२,२.५१
तृणेनाभिहतं तेन तिर्यगग्रं पपात ह ॥ ७.२,२.५१

ततश्चान्ये सुसंरब्धा लोकपाला महाबलाः ॥ ७.२,२.५२
ससृजुस्तृणमुद्दिश्य स्वायुधानि सहस्रशः ॥ ७.२,२.५२
प्रजज्ज्वाल महावह्निः प्रचंडः पवनो ववौ ॥ ७.२,२.५३
प्रवृद्धो ऽपांपतिर्यद्वत्प्रलये समुपस्थिते ॥ ७.२,२.५३
एवं देवैस्समारब्धं तृणमुद्दिश्य यत्नतः ॥ ७.२,२.५४
व्यर्थमासीदहो कृष्ण यक्षस्यात्मबलेन वै ॥ ७.२,२.५४
तदाह यक्षं देवेंद्रः को भवानित्यमर्षितः ॥ ७.२,२.५५
ततस्स पश्यतामेव तेषामंतरधादथ ॥ ७.२,२.५५
तदंतरे हैमवती देवी दिव्यविभूषणा ॥ ७.२,२.५६
आविरासीन्नभोरंगे शोभमाना शुचिस्मिता ॥ ७.२,२.५६
तां दृष्ट्वा विस्मयाविष्टा देवाः शक्रपुरोगमाः ॥ ७.२,२.५७
प्रणम्य यक्षं पप्रच्छुः को ऽसौ यक्षो विलक्षणः ॥ ७.२,२.५७
सा ऽब्रवीत्सस्मितं देवी स युष्माकमगोचरः ॥ ७.२,२.५८
तेनेदं भ्रम्यते चक्रं संसाराख्यं चराचरम् ॥ ७.२,२.५८
तेनादौ क्रियते विश्वं तेन संह्रियते पुनः ॥ ७.२,२.५९
न तन्नियन्ता कश्चित्स्यात्तेन सर्वं नियम्यते ॥ ७.२,२.५९
इत्युक्त्वा सा महादेवी तत्रैवांतरधत्त वै ॥ ७.२,२.६०
देवाश्च विस्मिताः सर्वे तां प्रणम्य दिवं ययुः ॥ ७.२,२.६०

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखंडे द्वितीयो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ०३



उपमन्युरुवाच

शृणु कृष्ण महेशस्य शिवस्य परमात्मनः ॥

मूर्त्यात्मभिस्ततं कृत्स्नं जगदेतच्चराचरम् ॥ १

स शिवस्सर्वमेवेदं स्वकीयाभिश्च मूर्तिभिः ॥

अधितिष्ठत्यमेयात्मा ह्येतत्सर्वमनुस्मृतम् ॥ २

ब्रह्मा विष्णुस्तथा रुद्रो महेशानस्सदाशिवः ॥

मूर्तयस्तस्य विज्ञेया याभिर्विश्वमिदं ततम् ॥ ३

अथान्याश्चापि तनवः पञ्च ब्रह्मसमाह्वयाः ॥

तनूभिस्ताभिराव्याप्तमिह किंचिन्न विद्यते ॥ ४

ईशानः पुरुषो ऽघोरो वामः सद्यस्तथैव च ॥

ब्रह्माण्येतानि देवस्य मूर्तयः पञ्च विश्रुताः ॥ ५

ईशानाख्या तु या तस्य मूर्तिराद्या गरीयसी ॥

भोक्तारं प्रकृतेः साक्षात्क्षेत्रज्ञमधितिष्ठति ॥ ६

स्थाणोस्तत्पुरुषाख्या या मूर्तिर्मूर्तिमतः प्रभोः ॥

गुणाश्रयात्मकं भोग्यमव्यक्तमधितिष्ठति ॥ ७

धर्माद्यष्टांगसंयुक्तं बुद्धितत्त्वं पिनाकिनः ॥

अधितिष्ठत्यघोराख्या मूर्तिरत्यंतपूजिता ॥ ८

वामदेवाह्वयां मूर्तिं महादेवस्य वेधसः ॥

अहंकृतेरधिष्ठात्रीमाहुरागमवेदिनः ॥ ९

सद्यो जाताह्वयां मूर्तिं शम्भोरमितवर्चसः ॥

मानसः समधिष्ठात्रीं मतिमंतः प्रचक्षते ॥ १०

श्रोत्रस्य वाचः शब्दस्य विभोर्व्योम्नस्तथैव च ॥

ईश्वरीमीश्वरस्येमामीशाख्यां हि विदुर्बुधाः ॥ ११

त्वक्पाणिस्पर्शवायूनामीश्वरीं मूर्तिमैश्वरीम् ॥

पुरुषाख्यं विदुस्सर्वे पुराणार्थविशारदाः ॥ १२
चक्षुषश्चरणस्यापि रूपस्याग्नेस्तथैव च ॥
अघोराख्यामधिष्ठात्रीं मूर्तिमाहुर्मनीषिणः ॥ १३
रसनायाश्च पायोश्च रसस्यापां तथैव च ॥
ईश्वरीं वामदेवाख्यां मूर्तिं तन्निरतां विदुः ॥ १४
घ्राणस्य चैवोपस्थस्य गंधस्य च भुवस्तथा ॥
सद्यो जाताह्वयां मूर्तिमीश्वरीं संप्रचक्षते ॥ १५
मूर्तयः पञ्च देवस्य वंदनीयाः प्रयत्नतः ॥
श्रेयोर्थिभिर्नरैर्नित्यं श्रेयसामेकहेतवः ॥ १६
तस्य देवादिदेवस्य मूर्त्यष्टकमयं जगत् ॥
तस्मिन्व्याप्य स्थितं विश्वं सूत्रे मणिगणा इव ॥ १७
शर्वो भवस्तथा रुद्र उग्रो भीमः पशोः पतिः १ ॥
ईशानश्च महादेवो मूर्तयश्चाष्ट विश्रुताः ॥ १८
भूम्यंभोग्निमरुद्व्योमक्षेत्रज्ञार्कनिशाकराः ॥
अधिष्ठिता महेशस्य शर्वाद्यैरष्टमूर्तिभिः ॥ १९
चराचरात्मकं विश्वं धत्ते विश्वंभरात्मिका ॥
शार्वीर्शिवाह्वया मूर्तिरिति शास्त्रस्य निश्चयः ॥ २०
संजीवनं समस्तस्य जगतस्सलिलात्मिका ॥
भावीति गीयते मूर्तिभवस्य परमात्मनः ॥ २१
बहिरंतर्गता विश्वं व्याप्य तेजोमयी शुभा ॥
रौद्री रुद्राव्यया मूर्तिरास्थिता घोररूपिणी ॥ २२
स्पंदयत्यनिलात्मदं बिभर्ति स्पंदते स्वयम् ॥
औग्रीति कथ्यते सद्भिर्मूर्तिरुग्रस्य वेधसः ॥ २३
सर्वावकाशदा सर्वव्यापिका गगनात्मिका ॥
मूर्तिर्भीमस्य भीमाख्या भूतवृंदस्य भेदिका ॥ २४
सर्वात्मनामधिष्ठात्री सर्वक्षेत्रनिवासिनी ॥
मूर्तिः पशुपतेर्ज्ञेया पशुपाशनिकृंतनी ॥ २५
दीपयंती जगत्सर्वं दिवाकरसमाह्वया ॥

ईशानाख्यमहेशस्य मूर्तिर्दिवि विसर्पति ॥ २६

आप्यcraftयति यो विश्वममृतांशुर्निशाकरः ॥

महादेवस्य सा मूर्तिर्महादेवसमाह्वया ॥ २७

आत्मा तस्याष्टमी मूर्तिः शिवस्य परमात्मनः ॥

व्यापिकेतरमूर्तीनां विश्वं तस्माच्छिवात्मकम् ॥ २८

वृक्षस्य मूलसेकेन शाखाः पुष्यंति वै यथा ॥

शिवस्य पूजया तद्वत्पुष्यत्यस्य वपुर्जगत् ॥ २९

सर्वाभयप्रदानं च सर्वानुग्रहणं तथा ॥

सर्वोपकारकरणं शिवस्याराधनं विदुः ॥ ३०

यथेह पुत्रपौत्रादेः प्रीत्या प्रीतो भवेत्पिता ॥

तथा सर्वस्य संप्रीत्या प्रीतो भवति शंकरः ॥ ३१

देहिनो यस्य कस्यापि क्रियते यदि निग्रहः ॥

अनिष्टमष्टमूर्तेस्तत्कृतमेव न संशयः ॥ ३२

अष्टमूर्त्यात्मना विश्वमधिष्ठाय स्थितं शिवम् ॥

भजस्व सर्वभावेन रुद्रः परमकारणम् ॥ ३३

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे तृतीयो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ०४

https://sa.wikisource.org/s/hxk

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | उत्तर भागः

कृष्ण उवाच

भगवन्परमेशस्य शर्वस्यामिततेजसः ॥ ७.२,४.१

मूर्तिभिर्विश्वमेवेदं यथा व्याप्तं तथा श्रुतम् ॥ ७.२,४.१

अथैतज्ज्ञातुमिच्छामि याथात्म्यं पमेशयोः ॥ ७.२,४.२

स्त्रीपुंभावात्मकं चेदं ताभ्यां कथमधिष्ठितम् ॥ ७.२,४.२

उपमन्युरुवाच

श्रीमद्विभूतिं शिवयोर्याथात्म्यं च समासतः ॥ ७.२,४.३

वक्ष्ये तद्विस्तराद्वक्तुं भवेनापि न शक्यते ॥ ७.२,४.३

शक्तिः साक्षान्महादेवी महादेवश्च शक्तिमान् ॥ ७.२,४.४

तयोर्विभूतिलेशो वै सर्वमेतच्चराचरम् ॥ ७.२,४.४

वस्तु किंचिदचिद्रूपं किंचिद्वस्तु चिदात्मकम् ॥ ७.२,४.५

द्वयं शुद्धमशुद्धं च परं चापरमेव च ॥ ७.२,४.५

यत्संसरति चिच्चक्रमचिच्चक्रसमन्वितम् ॥ ७.२,४.६

तदेवाशुद्धमपरमितरं तु परं शुभम् ॥ ७.२,४.६

अपरं च परं चैव द्वयं चिदचिदात्मकम् ॥ ७.२,४.७

शिवस्य च शिवायाश्च स्वाम्यं चैतत्स्वभावतः ॥ ७.२,४.७

शिवयोर्वै वशे विश्वं न विश्वस्य वशे शिवौ ॥ ७.२,४.८

ईशितव्यमिदं यस्मात्तस्माद्विश्वेश्वरौ शिवौ ॥ ७.२,४.८

यथा शिवस्तथा देवी यथा देवी तथा शिवः ॥ ७.२,४.९

नानयोरंतरं विद्याच्चंद्रचन्द्रिकयोरिव ॥ ७.२,४.९

चंद्रो न खलु भात्येष यथा चंद्रिकया विना ॥ ७.२,४.१०

न भाति विद्यमानो ऽपि तथा शक्त्या विना शिवः ॥ ७.२,४.१०

प्रभया हि विनायद्वद्भानुरेष न विद्यते ॥ ७.२,४.११

प्रभा च भानुना तेन सुतरां तदुपाश्रया ॥ ७.२,४.११

एवं परस्परापेक्षा शक्तिशक्तिमतोः स्थिता ॥ ७.२,४.१२

न शिवेन विना शक्तिर्न शक्त्या च विना शिवः ॥ ७.२,४.१२

शक्तौयया शिवो नित्यं भक्तौ मुक्तौ च देहिनाम् ॥ ७.२,४.१३

आद्या सैका परा शक्तिश्चिन्मयी शिवसंश्रया ॥ ७.२,४.१३

यामाहुरखिलेशस्य तैस्तैरनुगुणैर्गुणैः ॥ ७.२,४.१४
समानधर्मिणीमेव शिवस्य परमात्मनः ॥ ७.२,४.१४
सैका परा च चिद्रूपा शक्तिः प्रसवधर्मिणी ॥ ७.२,४.१५
विभज्य बहुधा विश्वं विदधाति शिवेच्छया ॥ ७.२,४.१५
सा मूलप्रकृतिर्माया त्रिगुणा च त्रिधा स्मृता ॥ ७.२,४.१६
शिवया च विपर्यस्तं यया ततमिदं जगत् ॥ ७.२,४.१६
एकधा च द्विधा चैव तथा शतसहस्रधा ॥ ७.२,४.१७
शक्तयः खलु भिद्यंते बहुधा व्यवहारतः ॥ ७.२,४.१७
शिवेच्छया पराशक्तिः शिवतत्त्वैकतां गता ॥ ७.२,४.१८
ततः परिस्फुरत्यादौ सर्गे तैलं तिलादिव ॥ ७.२,४.१८
ततः क्रियाख्यया शक्त्या शक्तौ शक्तिमदुत्थया ॥ ७.२,४.१९
तस्यां विक्षोभ्यमाणायामादौ नादः समुद्बभौ ॥ ७.२,४.१९
नादाद्विनिःसृतो बिंदुर्बिंदोदेवस्सदाशिवः ॥ ७.२,४.२०
तस्मान्महेश्वरो जातः शुद्धविद्या महेश्वरात् ॥ ७.२,४.२०
सा वाचामीश्वरी शक्तिर्वागीशाख्या हि शूलिनः ॥ ७.२,४.२१
या सा वर्णस्वरूपेण मातृकेपि विजृम्भते ॥ ७.२,४.२१
अथानंतसमावेशान्माया कालमवासृजत् ॥ ७.२,४.२२
नियतिञ्च कलां विद्यां कलातोरागपूरुषौ ॥ ७.२,४.२२
मायातः पुनरेवाभूदव्यक्तं त्रिगुणात्मकम् ॥ ७.२,४.२३
त्रिगुणाच्च ततो व्यक्ताद्विभक्ताः स्युस्त्रयो गुणाः ॥ ७.२,४.२३
सत्त्वं रजस्तमश्चेति यैर्व्याप्तमखिलं जगत् ॥ ७.२,४.२४
गुणेभ्यः क्षोभ्यमाणेभ्यो गुणेशाख्यास्त्रिमूर्तयः ॥ ७.२,४.२४
अभवन्महदादीनि तत्त्वानि च यथाक्रमम् ॥ ७.२,४.२५
तेभ्यस्स्युरण्डपिण्डानि त्वसंख्यानि शिवाज्ञया ॥ ७.२,४.२५
अधिष्ठितान्यनन्ताद्यैर्विद्येशैश्चक्रवर्तिभिः ॥ ७.२,४.२५
शरीरांतरभेदेन शक्तेर्भेदाः प्रकीर्तिताः ॥ ७.२,४.२६
नानारूपास्तु विज्ञेयाः स्थूलसूक्ष्मविभेदतः ॥ ७.२,४.२६
रुद्रस्य रौद्री सा शक्तिर्विष्णोर्वै वैष्णवी मता ॥ ७.२,४.२७
ब्रह्माणी ब्रह्मणः प्रोक्ता चेन्द्रस्यैंद्रीति कथ्यते ॥ ७.२,४.२७
किमत्र बहुनोक्तेन यद्विश्वमिति कीर्तितम् ॥ ७.२,४.२८
शक्त्यात्मनैव तद्व्याप्तं यथा देहे ऽंतरात्मना ॥ ७.२,४.२८
तस्माच्छक्तिमयं सर्वं जगत्स्थावरजंगमम् ॥ ७.२,४.२९
कला या परमा शक्तिः कथिता परमात्मनः ॥ ७.२,४.२९

एवमेषा परा शक्तिरीश्वरेच्छानुयायिनी ॥ ७.२,४.३०
स्थिरं चरं च यद्विश्वं सृजतीति विनिश्चयः ॥ ७.२,४.३०
ज्ञानक्रिया चिकीर्षाभिस्तिसृभिस्स्वात्मशक्तिभिः ॥ ७.२,४.३१
शक्तिमानीश्वरः शश्वद्विश्वं व्याप्याधितिष्ठति ॥ ७.२,४.३१
इदमित्थमिदं नेत्थं भवेदित्येवमात्मिका ॥ ७.२,४.३२
इच्छाशक्तिर्महेशस्य नित्या कार्यनियामिका ॥ ७.२,४.३२
ज्ञानशक्तिस्तु तत्कार्यं करणं कारणं तथा ॥ ७.२,४.३३
प्रयोजनं च तत्त्वेन बुद्धिरूपाध्यवस्यति ॥ ७.२,४.३३
यथेप्सितं क्रियाशक्तिर्यथाध्यवसितं जगत् ॥ ७.२,४.३४
कल्पयत्यखिलं कार्यं क्षणात्संकल्परूपिणी ॥ ७.२,४.३४
यथा शक्तित्रयोत्थानं शक्तिप्रसवधर्मिणी ॥ ७.२,४.३५
शक्त्या परमया नुन्ना प्रसूते सकलं जगत् ॥ ७.२,४.३५
एवं शक्तिसमायोगाच्छक्तिमानुच्यते शिवः ॥ ७.२,४.३६
शक्तिशक्तिमदुत्थं तु शाक्तं शैवमिदं जगत् ॥ ७.२,४.३६
यथा न जायते पुत्रः पितरं मातरं विना ॥ ७.२,४.३७
तथा भवं भवानीं च विना नैतच्चराचरम् ॥ ७.२,४.३७
स्त्रीपुंसप्रभवं विश्वं स्त्रीपुंसात्मकमेव च ॥ ७.२,४.३७
स्त्रीपुंसयोर्विभूतिश्च स्त्रीपुंसाभ्यामधिष्ठितम् ॥ ७.२,४.३८
परमात्मा शिवः प्रोक्तश्शिवा सा च प्रकीर्तिता ॥ ७.२,४.३८
शिवस्सदाशिवः प्रोक्तः शिवा सा च मनोन्मनी ॥ ७.२,४.३९
शिवो महेश्वरो ज्ञेयः शिवा मायेति कथ्यते ॥ ७.२,४.३९
पुरुषः परमेशानः प्रकृतिः परमेश्वरी ॥ ७.२,४.४०
रुद्रो महेश्वरस्साक्षाद्रुद्राणी रुद्रवल्लभा ॥ ७.२,४.४०
विष्णुर्विश्वेश्वरो देवो लक्ष्मीर्विश्वेश्वरप्रिया ॥ ७.२,४.४१
ब्रह्मा शिवो यदा स्रष्टा ब्रह्माणी ब्रह्मणः प्रिया ॥ ७.२,४.४१
भास्करो भगवाञ्छंभुः प्रभा भगवती शिवा ॥ ७.२,४.४२
महेंद्रो मन्मथारातिः शची शैलेन्द्रकन्यका ॥ ७.२,४.४२
जातवेदा महादेवः स्वाहा शर्वार्धदेहिनी ॥ ७.२,४.४३
यमस्त्रियंबको देवस्तत्प्रिया गिरिकन्यका ॥ ७.२,४.४३
निरृतिर्भगवानीशो नैरृती नगनंदनी ॥ ७.२,४.४४
वरुणो भगवान्रुद्रो वारुणी भूधरात्मजा ॥ ७.२,४.४४
बालेंदुशेखरो वायुः शिवा शिवमनोहरा ॥ ७.२,४.४५
यक्षो यज्ञशिरोहर्ता ऋद्धिर्हिमगिरीन्द्रजा ॥ ७.२,४.४५

चंद्रार्धशेखरश्चंद्रो रोहिणी रुद्रवल्लभा ॥ ७.२,४.४६
ईशानः परमेशानस्तदार्या परमेश्वरी ॥ ७.२,४.४६
अनंतवलयो ऽनंतो ह्यनंतानंतवल्लभा ॥ ७.२,४.४७
कालाग्निरुद्रः कालारिः काली कालांतकप्रिया ॥ ७.२,४.४७
पुरुषाख्यो मनुश्शंभुः शतरूपा शिवप्रिया ॥ ७.२,४.४८
दक्षस्साक्षान्महादेवः प्रसूतिः परमेश्वरी ॥ ७.२,४.४८
रुचिर्भवो भवानी च बुधैराकूतिरुच्यते ॥ ७.२,४.४९
भृगुर्भगाक्षिहा देवः ख्यातिस्त्रिनयनप्रिया ॥ ७.२,४.४९
मरीचिभगवान्रुद्रः संभूतिश्शर्ववल्लभा ॥ ७.२,४.५०
गंगाधरो ऽंगिरा ज्ञेयः स्मृतिः साक्षादुमा स्मृता ॥ ७.२,४.५०
पुलस्त्यः शशभृन्मौलिः प्रीतिः कांता पिनाकिनः ॥ ७.२,४.५१
पुलहस्त्रिपुरध्वंसी तत्प्रिया तु शिवप्रिया ॥ ७.२,४.५१
क्रतुध्वंसी क्रतुः प्रोक्तः संनतिर्दयिता विभोः ॥ ७.२,४.५२
त्रिनेत्रो ऽत्रिरुमा साक्षादनसूया स्मृता बुधैः ॥ ७.२,४.५२
कश्यपः कालहा देवो देवमाता महेश्वरी ॥ ७.२,४.५३
वसिष्ठो मन्मथारातिर्देवी साक्षादरुंधती ॥ ७.२,४.५३
शंकरः पुरुषास्सर्वे स्त्रियस्सर्वा महेश्वरी ॥ ७.२,४.५४
सर्वे स्त्रीपुरुषास्तस्मात्तयोरेव विभूतयः ॥ ७.२,४.५४
विषयी भगवानीशो विषयः परमेश्वरी ॥ ७.२,४.५५
श्राव्यं सर्वमुमारूपं श्रोता शूलवरायुधः ॥ ७.२,४.५५
प्रष्टव्यं वस्तुजातं तु धत्ते शंकरवल्लभा ॥ ७.२,४.५६
प्रष्टा स एव विश्वात्मा बालचन्द्रावतंसकः ॥ ७.२,४.५६
द्रष्टव्यं वस्तुरूपं तु बिभर्ति वक्तवल्लभा ॥ ७.२,४.५७
द्रष्टा विश्वेश्वरो देवः शशिखंडशिखामणिः ॥ ७.२,४.५७
रसजातं महादेवी देवो रसयिता शिवः ॥ ७.२,४.५८
प्रेयजातं च गिरिजा प्रेयांश्चैव गराशनः ॥ ७.२,४.५८
मंतव्यवस्तुतां धत्ते सदा देवी महेश्वरी ॥ ७.२,४.५९
मंता स एव विश्वात्मा महादेवो महेश्वरः ॥ ७.२,४.५९
बोद्धव्यवस्तुरूपं तु बिभर्ति भववल्लभा ॥ ७.२,४.६०
देवस्स एव भगवान्बोद्धा मुग्धेन्दुशेखरः ॥ ७.२,४.६०
प्राणः पिनाकी सर्वेषां प्राणिनां भगवान्प्रभुः ॥ ७.२,४.६१
प्राणस्थितिस्तु सर्वेषामंबिका चांबुरूपिणी ॥ ७.२,४.६१
बिभर्ति क्षेत्रतां देवी त्रिपुरांतकवल्लभा ॥ ७.२,४.६२

क्षेत्रज्ञत्वं तदा धत्ते भगवानंतकांतकः ॥ ७.२,४.६२
अहः शूलायुधो देवः शूलपाणिप्रिया निशा ॥ ७.२,४.६३
आकाशः शंकरो देवः पृथिवी शंकरप्रिया ॥ ७.२,४.६३
समुद्रो भगवानीशो वेला शैलेन्द्रकन्यका ॥ ७.२,४.६४
वृक्षो वृषध्वजो देवो लता विश्वेश्वरप्रिया ॥ ७.२,४.६४
पुंल्लिंगमखिलं धत्ते भगवान्पुरशासनः ॥ ७.२,४.६५
स्त्रिलिंगं चाखिलं धत्ते देवी देवमनोरमा ॥ ७.२,४.६५
शब्दजालमशेषं तु धत्ते सर्वस्य वल्लभा ॥ ७.२,४.६६
अर्थस्वरूपमखिलं धत्ते मुग्धेन्दुशेखरः ॥ ७.२,४.६६
यस्य यस्य पदार्थस्य या या शक्तिरुदाहृता ॥ ७.२,४.६७
सा सा विश्वेश्वरी देवी स स सर्वो महेश्वरः ॥ ७.२,४.६७
यत्परं यत्पवित्रं च यत्पुण्यं यच्च मंगलम् ॥ ७.२,४.६८
तत्तदाह महाभागास्तयोस्तेजोविजृंभितम् ॥ ७.२,४.६८
यथा दीपस्य दीप्तस्य शिखा दीपयते गृहम् ॥ ७.२,४.६९
तथा तेजस्तयोरेतद्व्याप्य दीपयते जगत् ॥ ७.२,४.६९
तृणादिशिवमूर्त्यंतं विश्वख्यातिशयक्रमः ॥ ७.२,४.७०
सन्निकर्षक्रमवशात्तयोरिति परा श्रुतिः ॥ ७.२,४.७०
सर्वाकारात्मकावेतौ सर्वश्रेयोविधायिनौ ॥ ७.२,४.७१
पूजनीयौ नमस्कार्यौ चिंतनीयौ च सर्वदा ॥ ७.२,४.७१
यथाप्रज्ञमिदं कृष्ण याथात्म्यं परमेशयोः ॥ ७.२,४.७२
कथितं हि मया ते ऽद्य न तु तावदियत्तया ॥ ७.२,४.७२
तत्कथं शक्यते वक्तुं याथात्म्यं परमेशयोः ॥ ७.२,४.७३
महतामपि सर्वेषां मनसो ऽपि बहिर्गतम् ॥ ७.२,४.७३
अंतर्गतमनन्यानामीश्वरार्पितचेतसाम् ॥ ७.२,४.७४
अन्येषां बुद्ध्यनारूढमारूढं च यथैव तत् ॥ ७.२,४.७४
येयमुक्ता विभूतिर्वै प्राकृती सा परा मता ॥ ७.२,४.७५
अप्राकृतां परामन्यां गुह्यां गुह्यविदो विदुः ॥ ७.२,४.७५
यतो वाचो निवर्तंते मनसा चेन्द्रियैस्सह ॥ ७.२,४.७६
अप्राकृती परा चैषा विभूतिः पारमेश्वरी ॥ ७.२,४.७६
सैवेह परमं धाम सैवेह परमा गतिः ॥ ७.२,४.७७
सैवेह परमा काष्ठा विभूतिः परमेष्ठिनः ॥ ७.२,४.७७
तां प्राप्तुं प्रयतंते ऽत्र जितश्वासा जितेंद्रियाः ॥ ७.२,४.७८
गर्भकारा गृहद्वारं निश्छिद्रं घटितुं यथा ॥ ७.२,४.७८

संसाराशीविषालीढमृतसंजीवनौषधम् ॥ ७.२,४.७९
विभूतिं शिवयोर्विद्वान्न बिभेति कुतश्चन ॥ ७.२,४.७९
यः परामपरां चैव विभूतिं वेत्ति तत्त्वतः ॥ ७.२,४.८०
सो ऽपरो भूतिमुल्लंघ्य परां भूतिं समश्नुते ॥ ७.२,४.८०
एतत्ते कथितं कृष्ण याथात्म्यं परमात्मनोः ॥ ७.२,४.८१
रहस्यमपि योग्यो ऽसि भर्गभक्तो भवानिति ॥ ७.२,४.८१
नाशिष्येभ्यो ऽप्यशैवेभ्यो नाभक्तेभ्यः कदाचन ॥ ७.२,४.८२
व्याहरेदीशयोर्भूतिमिति वेदानुशासनम् ॥ ७.२,४.८२
तस्मात्त्वमतिकल्याणपरेभ्यः कथयेन्न हि ॥ ७.२,४.८३
त्वादृशेभ्यो ऽनुरूपेभ्यः कथयैतन्न चान्यथा ॥ ७.२,४.८३
विभूतिमेतां शिवयोर्योग्येभ्यो यः प्रदापयेत् ॥ ७.२,४.८४
संसारसागरान्मुक्तः शिवसायुज्यमाप्नुयात् ॥ ७.२,४.८४
कीर्तनादस्य नश्यंति महान्त्यः पापकोटयः ॥ ७.२,४.८५
त्रिश्चतुर्धासमभ्यस्तैर्विनश्यंति ततो ऽधिकाः ॥ ७.२,४.८५
नश्यंत्यनिष्टरिपवो वर्धन्ते सुहृदस्तथा ॥ ७.२,४.८६
विद्या च वर्धते शैवी मतिस्सत्ये प्रवर्तते ॥ ७.२,४.८६
भक्तिः पराः शिवे साम्बे सानुगे सपरिच्छिदे ॥ ७.२,४.८७
यद्यदिष्टतमं चान्यत्तत्तदाप्नोत्यसंशयम् ॥ ७.२,४.८७
अन्तःशुचिः शिवे भक्तो विस्रब्धः कीर्तयेद्यदि ॥ ७.२,४.८८
प्रबलैः कर्मभिः पूर्वैः फलं चेत्प्रतिबध्यते ॥ ७.२,४.८८
पुनः पुनः समभ्यस्येत्तस्य नास्तीह दुर्लभम् ॥ ७.२,४.८८

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे गौरीशंकरविभूतियोगो नाम चतुर्थो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ०५

https://sa.wikisource.org/s/hzd



उपमन्युरुवाच

विग्रहं देवदेवस्य विश्वमेतच्चराचरम् ॥ ७.२,५.१

तदेवं न विजानंति पशवः पाशगौरवात् ॥ ७.२,५.१

तमेकमेव बहुधा वदंति यदुनंदन ॥ ७.२,५.२

अजानन्तः परं भावमविकल्पं महर्षयः ॥ ७.२,५.२

अपरं ब्रह्मरूपं च परं ब्रह्मात्मकं तथा ॥ ७.२,५.३

केचिदाहुर्महादेवमनादिनिधनं परम् ॥ ७.२,५.३

भूतेंद्रियांतःकरणप्रधानविषयात्मकम् ॥ ७.२,५.४

अपरं ब्रह्म निर्दिष्टं परं ब्रह्म चिदात्मकम् ॥ ७.२,५.४

बृहत्त्वाद्बृहणत्वाद्वा ब्रह्म चेत्यभिधीयते ॥ ७.२,५.५

उभे ते ब्रह्मणो रूपे ब्रह्मणो ऽधिपतेः प्रभोः ॥ ७.२,५.५

विद्या ऽविद्यास्वरूपीति कैश्चिदीशो निगद्यते ॥ ७.२,५.५

विद्यां तु चेतनां प्राहुस्तथाविद्यामचेतनाम् ॥ ७.२,५.६

विद्या ऽविद्यात्मकं चैव विश्वं विश्वगुरोर्विभोः ॥ ७.२,५.६

रूपमेव न संदेहो विश्वं तस्य वशे यतः ॥ ७.२,५.७

भ्रांतिर्विद्या परा चेति शार्वं रूपं परं विदुः ॥ ७.२,५.७

अयथाबुद्धिरर्थेषु बहुधा भ्रांतिरुच्यते ॥ ७.२,५.८

यथार्थाकारसंवित्तिर्विद्येति परिकीर्त्यते ॥ ७.२,५.८

विकल्परहितं तत्त्वं परमित्यभिधीयते ॥ ७.२,५.९

वैपरीत्यादसच्छब्दः कथ्यते वेदवादिभिः ॥ ७.२,५.९

तयोः पतित्वात्तु शिवः सदसत्पतिरुच्यते ॥ ७.२,५.१०

क्षराक्षरात्मकं प्राहुः क्षराक्षरपरं परे ॥ ७.२,५.१०

क्षरस्सर्वाणि भूतानि कूटस्थो ऽक्षर उच्यते ॥ ७.२,५.११

उभे ते परमेशस्य रूपे तस्य वशे यतः ॥ ७.२,५.११

तयोः परः शिवः शांतः क्षराक्षरापरस्स्मृतः ॥ ७.२,५.१२

समष्टिव्यष्टिरूपं च समष्टिव्यष्टिकारणम् ॥ ७.२,५.१२

वदंति मुनयः केचिच्छिवं परमकारणम् ॥ ७.२,५.१३

समष्टिमाहुरव्यक्तं व्यष्टिं व्यक्तं तथैव च ॥ ७.२,५.१३

ते रूपे परमेशस्य तदिच्छायाः प्रवर्तनात् ॥ ७.२,५.१४

तयोः कारणभावेन शिवं परमकारणम् ॥ ७.२,५.१४

कारणार्थविदः प्राहुः समष्टिव्यष्टिकारणम् ॥ ७.२,५.१५

जातिव्यक्तिस्वरूपीति कथ्यते कैश्चिदीश्वरः ॥ ७.२,५.१५

या पिंडेप्यनुवर्तेत सा जातिरिति कथ्यते ॥ ७.२,५.१६

व्यक्तिर्व्यावृत्तिरूपं तं पिण्डजातेः समाश्रयम् ॥ ७.२,५.१६

जातयो व्यक्तयश्चैव तदाज्ञापरिपालिताः ॥ ७.२,५.१७

यतस्ततो महादेवो जातिव्यक्तिवपुः स्मृतः ॥ ७.२,५.१७

प्रधानपुरुषव्यक्तकालात्मा कथ्यते शिवः ॥ ७.२,५.१८

प्रधानं प्रकृतिं प्राहुःक्षेत्रज्ञं पुरुषं तथा ॥ ७.२,५.१८

त्रयोविंशतितत्त्वानि व्यक्तमाहुर्मनीषिणः ॥ ७.२,५.१९

कालः कार्यप्रपञ्चस्य परिणामैककारणम् ॥ ७.२,५.१९

एषामीशो ऽधिपो धाता प्रवर्तकनिवर्तकः ॥ ७.२,५.२०

आविर्भावतिरोभावहेतुरेकः स्वराडजः ॥ ७.२,५.२०

तस्मात्प्रधानपुरुषव्यक्तकालस्वरूपवान् ॥ ७.२,५.२१

हेतुर्नेताधिपस्तेषां धाता चोक्ता महेश्वरः ॥ ७.२,५.२१

विराड्ढिरण्यगर्भात्मा कैश्चिदीशो निगद्यते ॥ ७.२,५.२२

हिरण्यगर्भो लोकानां हेतुर्विश्वात्मको विराट् ॥ ७.२,५.२२

अंतर्यामी परश्चेति कथ्यते कविभिश्शिवः ॥ ७.२,५.२३

प्राज्ञस्तैजसविश्वात्मेत्यपरे संप्रचक्षते ॥ ७.२,५.२३

तुरीयमपरे प्राहुः सौम्यमेव परे विदुः ॥ ७.२,५.२४

माता मानं च मेयं च मतिं चाहुरथापरे ॥ ७.२,५.२४

कर्ता क्रिया च कार्यं च करणं कारणं परे ॥ ७.२,५.२५

जाग्रत्स्वप्नसुषुप्त्यात्मेत्यपरे संप्रचक्षते ॥ ७.२,५.२५

तुरीयमपरे प्राहुस्तुर्यातीतमितीतरे ॥ ७.२,५.२६

तमाहुर्विगुणं केचिद्गुणवन्तं परे विदुः ॥ ७.२,५.२६

केचित्संसारिणं प्राहुस्तमसंसारिणं परे ॥ ७.२,५.२७

स्वतंत्रमपरे प्राहुरस्वतंत्रं परे विदुः ॥ ७.२,५.२७

घोरमित्यपरे प्राहुः सौम्यमेव परे विदुः ॥ ७.२,५.२८

रागवंतं परे प्राहुर्वीतरागं तथा परे ॥ ७.२,५.२८

निष्क्रियं च परे प्राहुः सक्रियं चेतरे जनाः ॥ ७.२,५.२९

निरिंद्रियं परे प्राहुः सेंद्रियं च तथापरे ॥ ७.२,५.२९

ध्रुवमित्यपरे प्राहुस्तमध्रुवामितीरते ॥ ७.२,५.३०

अरूपं केचिदाहुर्वै रूपवंतं परे विदुः ॥ ७.२,५.३०

अदृश्यमपरे प्राहुर्दृश्यमित्यपरे विदुः ॥ ७.२,५.३१

वाच्यमित्यपरे प्राहुरवाच्यमिति चापरे ॥ ७.२,५.३१

शब्दात्मकं परे प्राहुश्शब्दातीतमथापरे ॥ ७.२,५.३१

केचिच्चिन्तामयं प्राहुश्चिन्तया रहितं परे ॥ ७.२,५.३२

ज्ञानात्मकं परे प्राहुर्विज्ञानमिति चापरे ॥ ७.२,५.३२

केचिज्ज्ञेयमिति प्राहुरज्ञेयमिति केचन ॥ ७.२,५.३३

परमेके तमेवाहुरपरं च तथा परे ॥ ७.२,५.३३

एवं विकल्प्यमानं तु याथात्म्यं परमेष्ठिनः ॥ ७.२,५.३४

नाध्यवस्यंति मुनयो नानाप्रत्ययकारणात् ॥ ७.२,५.३४

ये पुनस्सर्वभावेन प्रपन्नाः परमेश्वरम् ॥ ७.२,५.३५

ते हि जानंत्ययत्नेन शिवं परमकारणम् ॥ ७.२,५.३५

यावत्पशुर्नैव पश्यत्यनीशं १ पुराणं भुवनस्येशितारम् ॥ ७.२,५.३६

तावद्दुःखे वर्तते बद्धपाशः संसारे ऽस्मिञ्चक्रनेमिक्रमेण ॥ ७.२,५.३६

यदा २ पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ॥ ७.२,५.३७

तदाविद्वान्पुण्यपापे विधूय निरंजनः परममुपैति साम्यम् ॥ ७.२,५.३७

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे पशुपतित्वज्ञानयोगो नाम पञ्चमो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ०६

https://sa.wikisource.org/s/hze

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | उत्तर भागः

उपमन्युरुवाच

नशिवस्याणवो बंधः कार्यो मायेय एव वा ॥ ७.२,६.१

प्राकृतो वाथ बोद्धा वा ह्यहंकारात्मकस्तथा ॥ ७.२,६.१

नैवास्य मानसो बंधो न चैत्तो नेंद्रियात्मकः ॥ ७.२,६.२

न च तन्मात्रबंधो ऽपि भूतबंधो न कश्चन ॥ ७.२,६.२

न च कालः कला चैव न विद्या नियतिस्तथा ॥ ७.२,६.३

न रागो न च विद्वेषः शंभोरमिततेजसः ॥ ७.२,६.३

न चास्त्यभिनिवेशो ऽस्य कुशला ऽकुशलान्यपि ॥ ७.२,६.४

कर्माणि तद्विपाकश्च सुखदुःखे च तत्फले ॥ ७.२,६.४

आशयैर्नापि संबन्धः संस्कारैः कर्मणामपि ॥ ७.२,६.५

भोगैश्च भोगसंस्कारैः कालत्रितयगोचरैः ॥ ७.२,६.५

न तस्य कारणं कर्ता नादिरंतस्तथांतरम् ॥ ७.२,६.६

न कर्म करणं वापि नाकार्यं कार्यमेव च ॥ ७.२,६.६

नास्य बंधुरबंधुर्वा नियंता प्रेरको ऽपि वा ॥ ७.२,६.७

न पतिर्न गुरुस्त्राता नाधिको न समस्तथा ॥ ७.२,६.७

न जन्ममरणे तस्य न कांक्षितमकांक्षितम् ॥ ७.२,६.८

न विधिर्न निषेधश्च न मुक्तिर्न च बन्धनम् ॥ ७.२,६.८

नास्ति यद्यदकल्याणं तत्तदस्य कदाचन ॥ ७.२,६.९

कल्याणं सकलं चास्ति परमात्मा शिवो यतः ॥ ७.२,६.९

स शिवस्सर्वमेवेदमधिष्ठाय स्वशक्तिभिः ॥ ७.२,६.१०

अप्रच्युतस्स्वतो भावः स्थितः स्थाणुरतः स्मृतः ॥ ७.२,६.१०

शिवेनाधिष्ठितं यस्माज्जगत्स्थावरजंगमम् ॥ ७.२,६.११

सर्वरूपः स्मृतश्शर्वस्तथा ज्ञात्वा न मुह्यति ॥ ७.२,६.११

शर्वो रुद्रो नमस्तस्मै पुरुषः सत्परो महान् ॥ ७.२,६.१२

हिरण्यबाहुर्भगवान्हिरण्यपतिरीश्वरः ॥ ७.२,६.१२

अंबिकापतिरीशानः पिनाकी वृषवाहनः ॥ ७.२,६.१३

एको रुद्रः परं ब्रह्म पुरुषः कृष्णपिंगलः ॥ ७.२,६.१३

बालाग्रमात्रो हृन्मध्ये विचिंत्यो दहरांतरे ॥ ७.२,६.१४

हिरण्यकेशः पद्माक्षो ह्यरुणस्ताम्र एव च ॥ ७.२,६.१४

यो ऽवसर्पत्य सौ देवो नीलग्रीवो हिरण्मयः ॥ ७.२,६.१५

सौम्यो घोरस्तथा मिश्रश्चाक्षारश्चामृतो ऽव्ययः ॥ ७.२,६.१५

स पुंविशेषः परमो भगवानन्तकांतकः ॥ ७.२,६.१६

चेतनचेतनोन्मुक्तः प्रपञ्चाच्च परात्परः ॥ ७.२,६.१६

शिवेनातिशयत्वेन ज्ञानैश्वर्ये विलोकिते ॥ ७.२,६.१७

लोकेशातिशयत्वेन स्थितं प्राहुर्मनीषिणः ॥ ७.२,६.१७

प्रतिसर्गप्रसूतानां ब्रह्मणां शास्त्रविस्तरम् ॥ ७.२,६.१८

उपदेष्टा स एवादौ कालावच्छेदवर्तिनाम् ॥ ७.२,६.१८

कालावच्छेदयुक्तानां गुरूणामप्यसौ गुरुः ॥ ७.२,६.१९

सर्वेषामेव सर्वेशः कालावच्छेदवर्जितः ॥ ७.२,६.१९

शुद्धा स्वाभाविकी तस्य शक्तिस्सर्वातिशायिनी ॥ ७.२,६.२०

ज्ञानमप्रतिमं नित्यं वपुरत्यन्तनिर्मितम् ॥ ७.२,६.२०

ऐश्वर्यमप्रतिद्वंद्वं सुखमात्यन्तिकं बलम् ॥ ७.२,६.२१

तेजःप्रभावो वीर्यं च क्षमा कारुण्यमेव च ॥ ७.२,६.२१

परिपूर्णस्य सर्गाद्यैर्नात्मनो ऽस्ति प्रयोजनम् ॥ ७.२,६.२२

परानुग्रह एवास्य फलं सर्वस्य कर्मणः ॥ ७.२,६.२२

प्रणवो वाचकस्तस्य शिवस्य परमात्मनः ॥ ७.२,६.२३

शिवरुद्रादिशब्दानां प्रणवो हि परस्स्मृतः ॥ ७.२,६.२३

शंभो प्रणववाच्यस्य भवनात्तज्जपादपि ॥ ७.२,६.२४

या सिद्धिस्सा परा प्राप्या भवत्येव न संशयः ॥ ७.२,६.२४

तस्मादेकाक्षरं देवमाहुरागमपारगाः ॥ ७.२,६.२५

वाच्यवाचकयोरैक्यं मन्यमाना मनस्विनः ॥ ७.२,६.२५

अस्य मात्राः समाख्याताश्चतस्रो वेदमूर्धनि ॥ ७.२,६.२६

अकारश्चाप्युकारश्च मकारो नाद इत्यपि ॥ ७.२,६.२६

अकारं बह्वृचं प्राहुरुकारो यजुरुच्यते ॥ ७.२,६.२७

मकारः सामनादोस्य श्रुतिराथर्वणी स्मृताः ॥ ७.२,६.२७

अकारश्च महाबीजं रजः स्रष्टा चतुर्मुखः ॥ ७.२,६.२८

उकारः प्रकृतिर्योनिः सत्त्वं पालयिता हरिः ॥ ७.२,६.२८

मकारः पुरुषो बीजं तमः संहारको हरः ॥ ७.२,६.२९

नादः परः पुमानीशो निर्गुणो निष्क्रियः शिवः ॥ ७.२,६.२९

सर्वं तिसृभिरेवेदं मात्राभिर्निखिलं त्रिधा ॥ ७.२,६.३०

अभिधाय शिवात्मानं बोधयत्यर्धमात्रया ॥ ७.२,६.३०

यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायो ऽस्ति किंचित् ॥ ७.२,६.३१

वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ ७.२,६.३१

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवतत्त्ववर्णनं नाम षष्ठो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ०७

https://sa.wikisource.org/s/hzf



उपमन्युरुवाच

शक्तिस्स्वाभविकी तस्य विद्या विश्वविलक्षणा ॥ ७.२,७.१

एकानेकस्य रूपेण भाति भानोरिव प्रभा ॥ ७.२,७.१

अनंताः शक्तयो यस्या इच्छाज्ञानक्रियादयः ॥ ७.२,७.२

मायाद्याश्चाभवन्वह्नेर्विस्फुलिंगा यथा तथा ॥ ७.२,७.२

सदाशिवेश्वराद्या हि विद्या ऽविद्येश्वरादयः ॥ ७.२,७.३

अभवन्पुरुषाश्चास्याः प्रकृतिश्च परात्परा ॥ ७.२,७.३

महदादिविशेषांतास्त्वजाद्याश्चापि मूर्तयः ॥ ७.२,७.४

यच्चान्यदस्ति तत्सर्वं तस्याः कार्यं न संशयः ॥ ७.२,७.४

सा शक्तिस्सर्वगा सूक्ष्मा प्रबोधानंदरूपिणी ॥ ७.२,७.५

शक्तिमानुच्यते देवश्शिवश्शीतांशुभूषणः ॥ ७.२,७.५

वेद्यश्शिवश्शिवा विद्या प्रज्ञा चैव श्रुतिः स्मृतिः ॥ ७.२,७.६

धृतिरेषा स्थितिर्निष्ठा ज्ञानेच्छाकर्मशक्तयः ॥ ७.२,७.६

आज्ञा चैव परं ब्रह्म द्वे विद्ये च परापरे ॥ ७.२,७.७

शुद्धविद्या शुद्धकला सर्वं शक्तिकृतं यतः ॥ ७.२,७.७

माया च प्रकृतिर्जीवो विकारो विकृतिस्तथा ॥ ७.२,७.८

असच्च सच्च यत्किंचित्तया सर्वमिदं ततम् ॥ ७.२,७.८

सा देवी मायया सर्वं ब्रह्मांडं सचराचरम् ॥ ७.२,७.९

मोहयत्यप्रयत्नेन मोचयत्यपि लीलया ॥ ७.२,७.९

अनया सह सर्वेशः सप्तविंशप्रकारया ॥ ७.२,७.१०

विश्वं व्याप्य स्थितस्तस्मान्मुक्तिरत्र प्रवर्तते ॥ ७.२,७.१०

मुमुक्षवः पुरा केचिन्मुनयो ब्रह्मवादिनः ॥ ७.२,७.११

संशयाविष्टमनसो विस्मृशंति यथातथम् ॥ ७.२,७.११

किं कारणं कुतो जाता जीवामः केन वा वयम् ॥ ७.२,७.१२

कुत्रास्माकं संप्रतिष्ठा केन वाधिष्ठिता वयम् ॥ ७.२,७.१२

केन वर्तामहे शश्वत्सुखेष्वन्येषु चानिशम् ॥ ७.२,७.१३

अविलंघ्या च विश्वस्य व्यवस्था केन वा कृता ॥ ७.२,७.१३

कालस्य भावो नियतिर्यदृच्छा नात्र युज्यते ॥ ७.२,७.१४

भूतानि योनिः पुरुषो योगी चैषां परो ऽथ वा ॥ ७.२,७.१४

अचेतनत्वात्कालादेश्चेतनत्वेपि चात्मनः ॥ ७.२,७.१५

सुखदुःखानि भूतत्वादनीशत्वाद्विचार्यते ॥ ७.२,७.१५

तद्ध्यानयोगानुगतां प्रपश्यञ्छक्तिमैश्वरीम् ॥ ७.२,७.१६

पाशविच्छेदिकां साक्षान्निगूढां स्वगुणैर्भृशम् ॥ ७.२,७.१६

तया विच्छिन्नपाशास्ते सर्वकारणकारणम् ॥ ७.२,७.१७

शक्तिमंतं महादेवमपश्यन्दिव्यचक्षुषा ॥ ७.२,७.१७

यः कारणान्यशेषाणि कालात्मसहितानि च ॥ ७.२,७.१८

अप्रमेयो ऽनया शक्त्या सकलं यो ऽधितिष्ठति ॥ ७.२,७.१८

ततः प्रसादयोगेन योगेन परमेण च ॥ ७.२,७.१९

दृष्टेन भक्तियोगेन दिव्यः गतिमवाप्नुयुः ॥ ७.२,७.१९

तस्मात्सह तथा शक्त्या हृदि पश्यंति ये शिवम् ॥ ७.२,७.२०

तेषां शाश्वतिकी शांतिर्नेतरेषामिति श्रुतिः ॥ ७.२,७.२०

न हि शक्तिमतश्शक्त्या विप्रयोगो ऽस्ति जातुचित् ॥ ७.२,७.२१

तस्माच्छक्तेः शक्तिमतस्तादात्म्यान्निर्वृतिर्द्वयोः ॥ ७.२,७.२१

क्रमो विवक्षितो नूनं विमुक्तौ ज्ञानकर्मणोः ॥ ७.२,७.२२

प्रसादे सति सा मूर्तिर्यस्मात्करतले स्थिता ॥ ७.२,७.२२

देवो वा दानवो वापि पशुर्वा विहगो ऽपि वा ॥ ७.२,७.२३

कीरो वाथ कृमिर्वापि मुच्यते तत्प्रसादतः ॥ ७.२,७.२३

गर्भस्थो जायमानो वा बालो वा तरुणो.पि वा ॥ ७.२,७.२४

वृद्धो वा म्रियमाणो वा स्वर्गस्थो वाथ नारकी ॥ ७.२,७.२४

पतितो वापि धर्मात्मा पंडितो मूढ एव वा ॥ ७.२,७.२५

प्रसादे तत्क्षणादेव मुच्यते नात्र संशयः ॥ ७.२,७.२५

अयोग्यानां च कारुण्याद्भक्तानां परमेश्वरः ॥ ७.२,७.२६

प्रसीदति न संदेहो विगृह्य विविधान्मलान् ॥ ७.२,७.२६

प्रसदादेव सा भक्तिः प्रसादो भक्तिसंभवः ॥ ७.२,७.२७

अवस्थाभेदमुत्प्रेक्ष्य विद्वांस्तत्र न मुह्यति ॥ ७.२,७.२७

प्रसादपूर्विका येयं भुक्तिमुक्तिविधायिनी ॥ ७.२,७.२८

नैव सा शक्यते प्राप्तुं नरैरेकेन जन्मना ॥ ७.२,७.२८

अनेकजन्मसिद्धानां श्रौतस्मार्तानुवर्तिनाम् ॥ ७.२,७.२९

विरक्तानां प्रबुद्धानां प्रसीदति महेश्वरः ॥ ७.२,७.२९

प्रसन्ने सति देवेश पशौ तस्मिन्प्रवर्तते ॥ ७.२,७.३०

अस्ति नाथो ममेत्यल्पा भक्तिर्बुद्धिपुरस्सरा ॥ ७.२,७.३०

तपसा विविधैश्शैवैर्धर्मैस्संयुज्यते नरः ॥ ७.२,७.३१

तत्र योगे तदभ्यासस्ततो भक्तिः परा भवेत् ॥ ७.२,७.३१

परया च तया भक्त्या प्रसादो लभ्यते परः ॥ ७.२,७.३२

प्रसादात्सर्वपाशेभ्यो मुक्तिर्मुक्तस्य निर्वृतिः ॥ ७.२,७.३२

अल्पभावो ऽपि यो मर्त्यस्सो ऽपि जन्मत्रयात्परम् ॥ ७.२,७.३३

नयोनियंत्रपीडायै भवेन्नैवात्र संशयः ॥ ७.२,७.३३

सांगा ऽनंगा च या सेवा सा भक्तिरिति कथ्यते ॥ ७.२,७.३४

सा पुनर्भिद्यते त्रेधा मनोवाक्कायसाधनैः ॥ ७.२,७.३४

शिवरूपादिचिंता या सा सेवा मानसी स्मृता ॥ ७.२,७.३५

जपादिर्वाचिकी सेवा कर्मपूजादि कायिकी ॥ ७.२,७.३५

सेयं त्रिसाधना सेवा शिवधर्मश्च कथ्यते ॥ ७.२,७.३६

स तु पञ्चविधः प्रोक्तः शिवेन परमात्मना ॥ ७.२,७.३६

तपः कर्म जपो ध्यानं ज्ञानं चेति समासतः ॥ ७.२,७.३७

कर्मलिङ्गार्चनाद्यं च तपश्चान्द्रायणादिकम् ॥ ७.२,७.३७

जपस्त्रिधा शिवाभ्यासश्चिन्ता ध्यानं शिवस्य तु ॥ ७.२,७.३८

शिवागमोक्तं यज्ज्ञानं तदत्र ज्ञानमुच्यते ॥ ७.२,७.३८

श्रीकंठेन शिवेनोक्तं शिवायै च शिवागमः ॥ ७.२,७.३९

शिवाश्रितानां कारुण्याच्छ्रेयसामेकसाधनम् ॥ ७.२,७.३९

तस्माद्विवर्धयेद्भक्तिं शिवे परमकारणे ॥ ७.२,७.४०

त्यजेच्च विषयासंगं श्रेयो ऽर्थी मतिमान्नरः ॥ ७.२,७.४०

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवतत्त्वकथनं नाम सप्तमो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ०८

https://sa.wikisource.org/s/hzg
< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | उत्तर भागः

कृष्ण उवाच

भगवञ्छ्रोतुमिच्छामि शिवेन परिभाषितम् ॥ ७.२,८.१

वेदसारे शिवज्ञानं स्वाश्रितानां विमुक्तये ॥ ७.२,८.१

अभक्तानामबुद्धीनामयुक्तानामगोचरम् ॥ ७.२,८.२

अर्थैर्दशर्धैः संयुक्तं गूढमप्राज्ञनिंदितम् ॥ ७.२,८.२

वर्णाश्रमकृतैर्धर्मैर्विपरीतं क्वचित्समम् ॥ ७.२,८.३

वेदात्षडंगादुद्धृत्य सांख्याद्योगाच्च कृत्स्नशः ॥ ७.२,८.३

शतकोटिप्रमाणेन विस्तीर्णं ग्रंथसंख्यया ॥ ७.२,८.४

कथितं परमेशेन तत्र पूजा कथं प्रभोः ॥ ७.२,८.४

कस्याधिकारः पूजादौ ज्ञानयोगादयः कथम् ॥ ७.२,८.५

तत्सर्वं विस्तरादेव वक्तुमर्हसि सुव्रत ॥ ७.२,८.५

उपमन्युरुवाच

शैवं संक्षिप्य वेदोक्तं शिवेन परिभाषितम् ॥ ७.२,८.६

स्तुतिनिंदादिरहितं सद्यः प्रत्ययकारणम् ॥ ७.२,८.६

गुरुप्रसादजं दिव्यमनायासेन मुक्तिदम् ॥ ७.२,८.७

कथयिष्ये समासेन तस्य शक्यो न विस्तरः ॥ ७.२,८.७

सिसृक्षया पुराव्यक्ताच्छिवः स्थाणुर्महेश्वरः ॥ ७.२,८.८

सत्कार्यकारणोपेतस्स्वयमाविरभूत्प्रभुः ॥ ७.२,८.८

जनयामास च तदा ऋषिर्विश्वाधिकः प्रभुः ॥ ७.२,८.९

देवानां प्रथमं देवं ब्रह्माणं ब्रह्मणस्पतिम् ॥ ७.२,८.९

ब्रह्मापि पितरं देवं जायमानं न्यवैक्षत ॥ ७.२,८.१०

तं जायमानं जनको देवः प्रापश्यदाज्ञया ॥ ७.२,८.१०

दृष्टो रुद्रेण देवो ऽसावसृजद्विश्वमीश्वरः ॥ ७.२,८.११

वर्णाश्रमव्यवस्थां च चकार स पृथक्पृथक् ॥ ७.२,८.११

सोमं ससर्ज यज्ञार्थे सोमाद्द्यौस्समजायत ॥ ७.२,८.१२
धरा च वह्निः सूर्यश्च यज्ञो विष्णुश्शचीपतिः ॥ ७.२,८.१२
ते चान्ये च सुरा रुद्रं रुद्राध्यायेन तुष्टुवुः ॥ ७.२,८.१३
प्रसन्नवदनस्तस्थौ देवानामग्रतः प्रभुः ॥ ७.२,८.१३
अपहृत्य स्वलीलार्थं तेषां ज्ञानं महेश्वरः ॥ ७.२,८.१४
तमपृच्छंस्ततो देवाः को भवानिति मोहिताः ॥ ७.२,८.१४
सो ऽब्रवीद्भगवान्रुद्रो ह्यहमेकः पुरातनः ॥ ७.२,८.१५
आसं प्रथममेवाहं वर्तामि १ च सुरोत्तमाः ॥ ७.२,८.१५
भविष्यामि च मत्तोन्यो व्यतिरिक्तो न कश्चन ॥ ७.२,८.१६
अहमेव जगत्सर्वं तर्पयामि स्वतेजसा ॥ ७.२,८.१६
मत्तो ऽधिकः समो नास्ति मां यो वेद स मुच्यते ॥ ७.२,८.१७
इत्युक्त्वा भगवान्रुद्रस्तत्रैवांतरधत्त स ॥ ७.२,८.१७
अपश्यंतस्तमीशानं स्तुवंतश्चैव सामभिः ॥ ७.२,८.१७
व्रतं पाशुपतं कृत्वा त्वथर्वशिरसि स्थितम् ॥ ७.२,८.१८
भस्मसंछन्नसर्वांगा बभूवुरमरास्तदा ॥ ७.२,८.१८
अथ तेषां प्रसादार्थं पशूनां पतिरीश्वरः ॥ ७.२,८.१९
सगणश्चोमया सार्धं सान्निध्यमकरोत्प्रभुः ॥ ७.२,८.२०
यं विनिद्रा जितश्वासा योगिनो दग्धकिल्बिषाः ॥ ७.२,८.२०
हृदि पश्यंति तं देवं ददृशुर्देवपुंगवाः ॥ ७.२,८.२१
यामाहुः परमां शक्तिमीश्वरेच्छानुवर्तिनीम् ॥ ७.२,८.२१
तामपश्यन्महेशस्य वामतो वामलोचनाम् ॥ ७.२,८.२२
ये विनिर्धूतसंसाराः प्राप्ताः शैवं परं पदम् ॥ ७.२,८.२२
नित्यसिद्धाश्च ये वान्यं ते च दृष्टा गणेश्वराः ॥ ७.२,८.२३
अथ तं तुष्टुवुर्देवा देव्या सह महेश्वरम् ॥ ७.२,८.२३
स्तोत्रैर्माहेश्वरैर्दिव्यैः श्रोतैः पौराणिकैरपि ॥ ७.२,८.२४
देवो ऽपि देवानालोक्य घृणया वृषभध्वजः ॥ ७.२,८.२४
तुष्टो ऽस्मीत्याह सुप्रीतस्स्वभावमधुरां गिरम् ॥ ७.२,८.२५
अथ सुप्रीतमनसं प्रणिपत्य वृषध्वजम् ॥ ७.२,८.२५

अर्थमहत्तमं देवाः पप्रच्छुरिममादरात् ॥ ७.२,८.२५

देवा ऊचुः

भगवन्केन मार्गेण पूजनीयो ऽसि भूतले ॥ ७.२,८.२६

कस्याधिकारः पूजायां वक्तुमर्हसि तत्त्वतः ॥ ७.२,८.२६

ततः सस्मितमालोक्य देवीं देववरोहरः ॥ ७.२,८.२७

स्वरूपं दर्शयामास घोरं सूर्यात्मकं परम् ॥ ७.२,८.२७

सर्वैश्वर्यगुणोपेतं सर्वतेजोमयं परम् ॥ ७.२,८.२८

शक्तिभिर्मूर्तिभिश्चांगैर्ग्रहैर्देवैश्च संवृतम् ॥ ७.२,८.२८

अष्टबाहुं चतुर्वक्त्रमर्धनारीकमद्भुतम् ॥ ७.२,८.२९

दृष्ट्वैवमद्भुताकारं देवा विष्णुपुरोगमाः ॥ ७.२,८.२९

बुद्ध्वा दिवाकरं देवं देवीं चैव निशाकरम् ॥ ७.२,८.३०

पञ्चभूतानि शेषाणि तन्मयं च चराचरम् ॥ ७.२,८.३०

एवमुक्त्वा नमश्चक्रुस्तस्मै चार्घ्यं प्रदाय वै ॥ ७.२,८३१

सिंदूरवर्णाय सुमण्डलाय सुवर्णवर्णाभरणाय तुभ्यम् ॥ ७.२,८.३२

पद्माभनेत्राय सपंकजाय ब्रह्मेन्द्रनारायणकारणाय ॥ ७.२,८.३२

सुरत्नपूर्णं ससुवर्णतोयं सुकुंकुमाद्यं सकुशं सपुष्पम् ॥ ७.२,८.३३

प्रदत्तमादाय सहेमपात्रं प्रशस्तमर्घ्यं भगवन्प्रसीद ॥ ७.२,८.३३

नमश्शिवाय शांताय सगणायादिहेतवे ॥ ७.२,८.३४

रुद्राय विष्णवे तुभ्यं ब्रह्मणे सूर्यमूर्तये ॥ ७.२,८.३४

यश्शिवं मण्डले सौरे संपूज्यैव समाहितः ॥ ७.२,८.३५

प्रातर्मध्याह्नसायाह्ने प्रदद्यादर्घ्यमुत्तमम् ॥ ७.२,८.३५

प्रणमेद्वा पठेदेताञ्छलोकाञ्छ्रुतिमुखानिमान् ॥ ७.२,८.३६

न तस्य दुर्ल्लभं किंचिद्भक्तश्चेन्मुच्यते दृढम् ॥ ७.२,८.३६

तस्मादभ्यर्चयेनित्यं शिवमादित्यरूपिणम् ॥ ७.२,८.३७

धर्मकामार्थमुक्त्यर्थं मनसा कर्मणा गिरा ॥ ७.२,८.३७

अथ देवान्समालोक्य मण्डलस्थो महेश्वरः ॥ ७.२,८.३८

सर्वागमोत्तरं दत्त्वा शास्त्रमंतरधाद्धरः ॥ ७.२,८.३८

तत्र पूजाधिकारो ऽयं ब्रह्मक्षत्रविशामिति ॥ ७.२,८.३९

ज्ञात्वा प्रणम्य देवेशं देवा जग्मुर्यथागतम् ॥ ७.२,८.३९

अथ कालेन महता तस्मिञ्छास्त्रे तिरोहिते ॥ ७.२,८.४०

भर्तारं परिपप्रच्छ तदंकस्था महेश्वरी ॥ ७.२,८.४०

तया स चोदितो देवो देव्या चन्द्रविभूषणः ॥ ७.२,८.४१

अवदत्करमुद्धृत्य शास्त्रं सर्वागमोत्तरम् ॥ ७.२,८.४१

प्रवर्तितं च तल्लोके नियोगात्परमेष्ठिनः ॥ ७.२,८.४२

मयागस्त्येन गुरुणा दधीचेन महर्षिणा ॥ ७.२,८.४२

स्वयमप्यवतीर्योर्व्यां युगावर्तेषु शूलधृक् ॥ ७.२,८.४३

स्वाश्रितानां विमुक्त्यर्थं कुरुते ज्ञानसंततिम् ॥ ७.२,८.४३

ऋभुस्सत्यो भार्गवश्च ह्यंगिराः सविता द्विजाः ॥ ७.२,८.४४

मृत्युः शतक्रतुर्धीमान्वसिष्ठो मुनिपुंगवः ॥ ७.२,८.४४

सारस्वतस्त्रिधामा च त्रिवृतो मुनिपुंगवः ॥ ७.२,८.४५

शततेजास्स्वयं धर्मो नारायण इति श्रुतः ॥ ७.२,८.४५

स्वरक्षश्चारुणिर्धीमांस्तथा चैव कृतंजयः ॥ ७.२,८.४६

कृतंजयो भरद्वाजो गौतमः कविरुत्तमः ॥ ७.२,८.४६

वाचःस्रवा मुनिस्साक्षात्तथा सूक्ष्मायणिः शुचिः ॥ ७.२,८.४७

तृणबिंदुर्मुनिः कृष्णः शक्तिः शाक्तेय उत्तरः ॥ ७.२,८.४७

जातूकर्ण्यो हरिस्साक्षात्कृष्णद्वैपायनो मुनिः ॥ ७.२,८.४८

व्यासावताराञ्छृण्वंतु कल्पयोगेश्वरान्क्रमात् ॥ ७.२,८.४८

लैंगे व्यासावतारा हि द्वापरां तेषु सुव्रताः ॥ ७.२,८.४९

योगाचार्यावताराश्च तथा शिष्येषु शूलिनः ॥ ७.२,८.४९

तत्र तत्र विभोः शिष्याश्चत्वारः स्युर्महौजसः ॥ ७.२,८.५०

शिष्यास्तेषां प्रशिष्याश्च शतशो ऽथ सहस्रशः ॥ ७.२,८.५०

तेषां संभावनाल्लोके शैवाज्ञाकरणादिभिः ॥ ७.२,८.५१

भाग्यवंतो विमुच्यंते भक्त्या चात्यंतभाविताः ॥ ७.२,८.५१

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवतत्त्वज्ञाने व्यासावतारवर्णनं नामाष्टमो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ०९

https://sa.wikisource.org/s/hzh



कृष्ण उवाच

युगावर्तेषु सर्वेषु योगाचार्यच्छलेन तु ॥ ७.२,९.१

अवतारान्हि शर्वस्य शिष्यांश्च भगवन्वद ॥ ७.२,९.१

उपमन्युरुवाच

श्वेतः सुतारो मदनः सुहोत्रः कङ्क एव च ॥ ७.२,९.२

लौगाक्षिश्च महामायो जैगीषव्यस्तथैव च ॥ ७.२,९.२

दधिवाहश्च ऋषभो मुनिरुग्रो ऽत्रिरेव च ॥ ७.२,९.३

सुपालको गौतमश्च तथा वेदशिरा मुनिः ॥ ७.२,९.३

गोकर्णश्च गुहावासी शिखण्डी चापरः स्मृतः ॥ ७.२,९.४

जटामाली चाट्टहासो दारुको लांगुली तथा ॥ ७.२,९.४

महाकालश्च शूली च डंडी मुण्डीश एव च ॥ ७.२,९.५

सविष्णुस्सोमशर्मा च लकुलीश्वर एव च ॥ ७.२,९.५

एते वाराह कल्पे ऽस्मिन्सप्तमस्यांतरो मनोः ॥ ७.२,९.६

अष्टाविंशतिसंख्याता योगाचार्या युगक्रमात् ॥ ७.२,९.६

शिष्याः प्रत्येकमेतेषां चत्वारश्शांतचेतसः ॥ ७.२,९.७

श्वेतादयश्च रुष्यांतांस्तान्ब्रवीमि यथाक्रमम् ॥ ७.२,९.७

श्वेतश्श्वेतशिखश्चैव श्वेताश्वः श्वेतलोहितः ॥ ७.२,९.८

दुन्दुभिश्शतरूपश्च ऋचीकः केतुमांस्तथा ॥ ७.२,९.८

विकोशश्च विकेशश्च विपाशः पाशनाशनः ॥ ७.२,९.९

सुमुखो दुर्मुखश्चैव दुर्गमो दुरतिक्रमः ॥ ७.२,९.९

सनत्कुमारस्सनकः सनंदश्च सनातनः ॥ ७.२,९.१०

सुधामा विरजाश्चैव शंखश्चांडज एव च ॥ ७.२,९.१०

सारस्वतश्च मेघश्च मेघवाहस्सुवाहकः ॥ ७.२,९.११

कपिलश्चासुरिः पञ्चशिखो बाष्कल एव च ॥ ७.२,९.११

पराशराश्च गर्गश्च भार्गवश्चांगिरास्तथा ॥ ७.२,९.१२
बलबन्धुर्निरामित्राः केतुशृंगस्तपोधनः ॥ ७.२,९.१२
लंबोदरश्च लंबश्च लम्बात्मा लंबकेशकः ॥ ७.२,९.१३
सर्वज्ञस्समबुद्धिश्च साध्यसिद्धिस्तथैव च ॥ ७.२,९.१३
सुधामा कश्यपश्चैव वसिष्ठो विरजास्तथा ॥ ७.२,९.१४
अत्रिरुग्रो गुरुश्रेष्ठः श्रवनोथ श्रविष्टकः ॥ ७.२,९.१४
कुणिश्च कुणिबाहुश्च कुशरीरः कुनेत्रकः ॥ ७.२,९.१५
काश्यपो ह्युशनाश्चैव च्यवनश्च बृहस्पतिः ॥ ७.२,९.१५
उतथ्यो वामदेवश्च महाकालो महा ऽनिलः ॥ ७.२,९.१६
वाचःश्रवाः सुवीरश्च श्यावकश्च यतीश्वरः ॥ ७.२,९.१६
हिरण्यनाभः कौशल्यो लोकाक्षिः कुथुमिस्तथा ॥ ७.२,९.१७
सुमन्तुर्जैमिनिश्चैव कुबन्धः कुशकन्धरः ॥ ७.२,९.१७
प्लक्षो दार्भायणिश्चैव केतुमान्गौतमस्तथा ॥ ७.२,९.१८
भल्लवी मधुपिंगश्च श्वेतकेतुस्तथैव च ॥ ७.२,९.१८
उशिजो बृहदश्वश्च देवलः कविरेव च ॥ ७.२,९.१९
शालिहोत्रः सुवेषश्च युवनाश्वः शरद्वसुः ॥ ७.२,९.१९
अक्षपादः कणादश्च उलूको वत्स एव च ॥ ७.२,९.२०
कुलिकश्चैव गर्गश्च मित्रको रुष्य एव च ॥ ७.२,९.२०
एते शिष्या महेशस्य योगाचार्यस्वरूपिणः ॥ ७.२,९.२१
संख्या च शतमेतेषां सह द्वादशसंख्यया ॥ ७.२,९.२१
सर्वे पाशुपताः सिद्धा भस्मोद्धूलितविग्रहाः ॥ ७.२,९.२२
सर्वशास्त्रार्थतत्त्वज्ञा वेदवेदांगपारगाः ॥ ७.२,९.२२
शिवाश्रमरतास्सर्वे शिवज्ञानपरायणाः ॥ ७.२,९.२३
सर्वे संगविनिर्मुक्ताः शिवैकासक्तचेतसः ॥ ७.२,९.२३
सर्वद्वंद्वसहा धीराः सर्वभूतहिते रताः ॥ ७.२,९.२४
ऋजवो मृदवः स्वस्था जितक्रोधा जितेंद्रियाः ॥ ७.२,९.२४
रुद्राक्षमालाभरणास्त्रिपुंड्रांकितमस्तकाः ॥ ७.२,९.२५
शिखाजटास्सर्वजटा अजटा मुंडशीर्षकाः ॥ ७.२,९.२५

फलमूलाशनप्रायाः प्राणायामपरायणाः ॥ ७.२,९.२६

शिवाभिमानसंपन्नाः शिवध्यानैकतत्पराः ॥ ७.२,९.२६

समुन्मथितसंसारविषवृक्षांकुरोद्गमाः ॥ ७.२,९.२७

प्रयातुमेव सन्नद्धाः परं शिवपुरं प्रति ॥ ७.२,९.२७

सदेशिकानिमान्मत्वा नित्यं यश्शिवमर्चयेत् ॥ ७.२,९.२८

स याति शिवसायुज्यं नात्र कार्या विचारणा ॥ ७.२,९.२८

इति श्रीशिवमहापु सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवस्य योगावतारवर्णनं नाम नवमो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः १०

https://sa.wikisource.org/s/hzi



कृष्ण उवाच

भगवन्सर्वयोगींद्र गणेश्वर मुनीश्वर ॥

षडाननसमप्रख्य सर्वज्ञाननिधे गुरो ॥ १

प्रायस्त्वमवतीर्योर्व्यां पाशविच्छित्तये नृणाम् ॥

महर्षिवपुरास्थाय स्थितो ऽसि परमेश्वर ॥ २

अन्यथा हि जगत्यस्मिन् देवो वा दानवो ऽपि वा ॥

त्वत्तोन्यः परमं भावं को जानीयाच्छिवात्मकम् ॥ ३

तस्मात्तव मुखोद्गीर्णं साक्षादिव पिनाकिनः ॥

शिवज्ञानामृतं पीत्वा न मे तृप्तमभून्मनः ॥ ४

साक्षात्सर्वजगत्कर्तुर्भर्तुरंकं समाश्रिता ॥

भगवन्किन्नु पप्रच्छ भर्तारं परमेश्वरी ॥ ५

उपमन्युरुवाच

स्थाने पृष्टं त्वया कृष्ण तद्वक्ष्यामि यथातथम् ॥

भवभक्तस्य युक्तस्य तव कल्याणचेतसः ॥ ६

महीधरवरे दिव्ये मंदरे चारुकंदरे ॥

देव्या सह महादेवो दिव्यो ध्यानगतो ऽभवत् ॥ ७

तदा देव्याः प्रियसखी सुस्मितास्या शुभावती ॥

फुल्लान्यतिमनोज्ञानि पुष्पाणि समुदाहरत् ॥ ८

ततः स्वमंकमारोप्य देवीं देववरोरहः ॥

अलंकृत्य च तैः पुष्पैरास्ते हृष्टतरः स्वयम् ॥ ९

अथांतःपुरचारिण्यो देव्यो दिव्यविभूषणाः ॥

अंतरंगा गणेन्द्राश्च सर्वलोकमहेश्वरीम् ॥ १०

भर्तारं परिपूर्णं च सर्वलोकमहेश्वरम् ॥

चामरासक्तहस्ताश्च देवीं देवं सिषेविरे ॥ ११

ततः प्रियाः कथा वृत्ता विनोदाय महेशयोः ॥
त्राणाय च नृणां लोके ये शिवं शरणं गताः ॥ १२
तदावसरमालोक्य सर्वलोकमहेश्वरी ॥
भर्तारं परिपप्रच्छ सर्वलोकमहेश्वरम् ॥ १३
देव्युवाच
केन वश्यो महादेवो मर्त्यानां मंदचेतसाम् ॥
आत्मतत्त्वाद्यशक्तानामात्मनामकृतात्मनाम् ॥ १४
ईश्वर उवाच
न कर्मणा न तपसा न जपैर्नासनादिभिः ॥
न ज्ञानेन न चान्येन वश्यो ऽहं श्रद्धया विना ॥ १५
श्रद्धा मय्यस्ति चेत्पुंसां येन केनापि हेतुना ॥
वश्यः स्पृश्यश्च दृश्यश्च पूज्यस्संभाष्य एव च ॥ १६
साध्या तस्मान्मयि शद्धा मां वशीकर्तुमिच्छता ॥
श्रद्धा हेतुस्स्वधर्मस्य रक्षणं वर्णिनामिह ॥ १७
स्ववर्णाश्रमधर्मेण वर्तते यस्तु मानवः ॥
तस्यैव भवति श्रद्धा मयि नान्यस्य कस्यचित् ॥ १८
आम्नायसिद्धमखिलं धर्ममाश्रमिणामिह ॥
ब्रह्मणा कथितं पूर्वं ममैवाज्ञापुरस्सरम् ॥ १९
स तु पैतामहो धर्मो बहुवित्तक्रियान्वितः ॥
नात्यन्त फलभूयिष्ठः क्लेशाया ससमन्वितः ॥ २०
तेन धर्मेण महतां श्रद्धां प्राप्य सुदुर्ल्लभाम् ॥ २०
वर्णिनो ये प्रपद्यंते मामनन्यसमाश्रयाः ॥
तेषां सुखेन मार्गेण धर्मकामार्थमुक्तयः ॥ २१
वर्णाश्रमसमाचारो मया भूयः प्रकल्पितः ॥
तस्मिन्भक्तिमतामेव मदीयानां तु वर्णिनाम् ॥ २२
अधिकारो न चान्येषामित्याज्ञा नैष्ठिकी मम ॥ २३
तदाज्ञप्तेन मार्गेण वर्णिनो मदुपाश्रयाः ॥
मलमायादिपाशेभ्यो विमुक्ता मत्प्रसादतः ॥ २४

परं मदीयमासाद्य पुनरावृत्तिदुर्लभम् ॥
परमं मम साधर्म्यं प्राप्य निर्वृतिमाययुः ॥ २४
तस्माल्लब्ध्वाप्यलब्ध्वा वा वर्णधर्मं मयेरितम् ॥
आश्रित्य मम भक्तश्चेत्स्वात्मनात्मानमुद्धरेत् ॥ २५
अलब्धलाभ एवैष कोटिकोटिगुणाधिकः ॥
तस्मान्मे मुखतो लब्धं वर्णधर्मं समाचरेत् ॥ २६
ममावतारा हि शुभे योगाचार्यच्छलेन तु ॥
सर्वांतरेषु सन्त्यार्ये संततिश्च सहस्रशः ॥ २७
अयुक्तानामबुद्धीनामभक्तानां सुरेश्वरि ॥
दुर्लभं संततिज्ञानं ततो यत्नात्समाश्रयेत् ॥ २८
सा हानिस्तन्महच्छिद्रं स मोहस्सांधमूकता ॥
यदन्यत्र श्रमं कुर्यान्मोक्षमार्गबहिष्कृतः ॥ २९
ज्ञानं क्रिया च चर्या च योगश्चेति सुरेश्वरि ॥
चतुष्पादः समाख्यातो मम धर्मस्सनातनः ॥ ३०
पशुपाशपतिज्ञानं ज्ञानमित्यभिधीयते ॥
षडध्वशुद्धिर्विधिना गुर्वधीना क्रियोच्यते ॥ ३१
वर्णाश्रमप्रयुक्तस्य मयैव विहितस्य च ॥
ममार्चनादिधर्मस्य चर्या चर्येति कथ्यते ॥ ३२
मदुक्तेनैव मार्गेण मय्यवस्थितचेतसः ॥
वृत्त्यंतरनिरोधो यो योग इत्यभिधीयते ॥ ३३
अश्वमेधगणाच्छ्रेष्ठं देवि चित्तप्रसाधनम् ॥
मुक्तिदं च तथा ह्येतद्दुष्प्राप्यं विषयैषिणाम् ॥ ३४
विजितेंद्रियवर्गस्य यमेन नियमेन च ॥
पूर्वपापहरो योगो विरक्तस्यैव कथ्यते ॥ ३५
वैराग्याज्जायते ज्ञानं ज्ञानाद्योगः प्रवर्तते ॥३६
योगज्ञः पतितो वापि मुच्यते नात्र संशयः ॥
दया कार्याथ सततमहिंसा ज्ञानसंग्रहः ॥ ३७
सत्यमस्तेयमास्तिक्यं श्रद्धा चेंद्रियनिग्रहः ॥ ३८

अध्यापनं चाध्ययनं यजनं याजनं तथा ॥
ध्यानमीश्वरभावश्च सततं ज्ञानशीलता ॥
य एवं वर्तते विप्रो ज्ञानयोगस्य सिद्धये ॥ ३९
अचिरादेव विज्ञानं लब्ध्वा योगं च विंदति ॥
दग्ध्वा देहमिमं ज्ञानी क्षणाज्ज्ञानाग्निना प्रिये ॥ ४०
प्रसादान्मम योगज्ञः कर्मबंधं प्रहास्यति ॥
पुण्यःपुण्यात्मकं कर्ममुक्तेस्तत्प्रतिबंधकम् ॥ ४१
तस्मान्नियोगतो योगी पुण्यापुण्यं विवर्जयेत् ॥ ४१
फलकामनया कर्मकरणात्प्रतिबध्यते ॥
न कर्ममात्रकरणात्तस्मात्कर्मफलं त्यजेत् ॥ ४२
प्रथमं कर्मयज्ञेन बहिः सम्पूज्य मां प्रिये ॥
ज्ञानयोगरतो भूत्वा पश्चाद्योगं समभ्यसेत् ॥ ४३
विदिते मम याथात्म्ये कर्मयज्ञेन देहिनः ॥
न यजंति हि मां युक्ताः समलोष्टाश्मकांचनाः ॥ ४४
नित्ययुक्तो मुनिः श्रेष्ठो मद्भक्तश्च समाहितः ॥
ज्ञानयोगरतो योगी मम सायुज्यमाप्नुयात् ॥ ४५
अथाविरक्तचित्ता ये वर्णिनो मदुपाश्रिताः ॥
ज्ञानचर्याक्रियास्वेव ते ऽधिकुर्युस्तदर्हकाः ॥ ४६
द्विधा मत्पूजनं ज्ञेयं बाह्यमाभ्यंतरं तथा ॥
वाङ्मनःकायभेदाच्च त्रिधा मद्भजनं विदुः ॥ ४७
तपः कर्म जपो ध्यानं ज्ञानं वेत्यनुपूर्वशः ॥
पञ्चधा कथ्यते सद्भिस्तदेव भजनं पुनः ॥ ४८
अन्यात्मविदितं बाह्यमस्मदभ्यर्चनादिकम् ॥
तदेव तु स्वसंवेद्यमाभ्यंतरमुदाहृतम् ॥ ४९
मनोमत्प्रवणं चित्तं न मनोमात्रमुच्यते ॥
मन्नामनिरता वाणी वाङ्मता खलु नेतरा ॥ ५०
लिंगैर्मच्छासनादिष्टैस्त्रिपुंड्रादिभिरंकितः ॥
ममोपचारनिरतः कायः कायो न चेतरः ॥ ५१

मदर्चाकर्म विज्ञेयं बाह्ये यागादिनोच्यते ॥
मदर्थे देहसंशोषस्तपः कृच्छ्रादि नो मतम् ॥ ५२
जपः पञ्चाक्षराभ्यासः प्रणवाभ्यास एव च ॥
रुद्राध्यायादिकाभ्यासो न वेदाध्ययनादिकम् ॥ ५३
ध्यानम्मद्रूपचिंताद्यं नात्माद्यर्थसमाधयः ॥
ममागमार्थविज्ञानं ज्ञानं नान्यार्थवेदनम् ॥ ५४
बाह्ये वाभ्यंतरे वाथ यत्र स्यान्मनसो रतिः ॥
प्राग्वासनावशाद्देवि तत्त्वनिष्ठां समाचरेत् ॥ ५५
बाह्यादाभ्यंतरं श्रेष्ठं भवेच्छतगुणाधिकम् ॥
असंकरत्वाद्दोषाणां दृष्टानामप्यसम्भवात् ॥ ५६
शौचमाभ्यंतरं विद्यान्न बाह्यं शौचमुच्यते ॥
अंतः शौचविमुक्तात्मा शुचिरप्यशुचिर्यतः ॥ ५७
बाह्यमाभ्यंर्तरं चैव भजनं भवपूर्वकम् ॥
न भावरहितं देवि विप्रलंभैककारणम् ॥ ५८
कृतकृत्यस्य पूतस्य मम किं क्रियते नरैः ॥
बहिर्वाभ्यंतरं वाथ मया भावो हि गृह्यते ॥ ५९
भावैकात्मा क्रिया देवि मम धर्मस्सनातनः ॥
मनसा कर्मणा वाचा ह्यनपेक्ष्य फलं क्वचित् ॥ ६०
फलोद्देशेन देवेशि लघुर्मम समाश्रयः ॥
फलार्थी तदभावे मां परित्यक्तुं क्षमो यतः ॥ ६१
फलार्थिनो ऽपि यस्यैव मयि चित्तं प्रतिष्ठितम् ॥
भावानुरूपफलदस्तस्याप्यहमनिन्दिते ॥ ६२
फलानपेक्षया येषां मनो मत्प्रवणं भवेत् ॥
प्रार्थयेयुः फलं पश्चाद्भक्तास्ते ऽपि मम प्रियाः ॥ ६३
प्राक्संस्कारवशादेव ये विचिंत्य फलाफले ॥
विवशा मां प्रपद्यंते मम प्रियतमा मताः ॥ ६४
मल्लाभान्न परो लाभस्तेषामस्ति यथातथम् ॥
ममापि लाभस्तल्लाभान्नापरः परमेश्वरि ॥ ६५

मदनुग्रहतस्तेषां भावो मयि समर्पितः ॥
फलं परमनिर्वाणं प्रयच्छति बलादिव ॥ ६६
महात्मनामनन्यानां मयि संन्यस्तचेतसाम् ॥
अष्टधा लक्षणं प्राहुर्मम धर्माधिकारिणाम् ॥ ६७
मद्भक्तजनवात्सल्यं पूजायां चानुमोदनम् ॥
स्वयमभ्यर्चनं चैव मदर्थे चांगचेष्टितम् ॥ ६८
मत्कथाश्रवणे भक्तिः स्वरनेत्रांगविक्रियाः ॥
ममानुस्मरणं नित्यं यश्च मामुपजीवति ॥ ६९
एवमष्टविधं चिह्नं यस्मिन्म्लेच्छे ऽपि वर्तते ॥
स विप्रेन्द्रो मुनिः श्रीमान्स यतिस्स च पंडितः ॥ ७०
न मे प्रियश्चतुर्वेदी मद्भक्तो श्वपचो ऽपि यः ॥
तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम् ॥ ७१
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ॥
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ७२

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवभक्तिवर्णनं नाम दशमो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ११

https://sa.wikisource.org/s/hzj



ईश्वर उवाच

अथ वक्ष्यामि देवेशि भक्तानामधिकारिणाम् ॥ ७.२,११.१

विदुषां द्विजमुख्यानां वर्णधर्मसमासतः ॥ ७.२,११.१

त्रिः स्नानं चाग्निकार्यं च लिंगार्चनमनुक्रमम् ॥ ७.२,११.२

दानमीश्वरभावश्च दया सर्वत्र सर्वदा ॥ ७.२,११.२

सत्यं संतोषमास्तिक्यमहिंसा सर्वजंतुषु ॥ ७.२,११.३

ह्रीश्रद्धाध्ययनं योगस्सदाध्यापनमेव च ॥ ७.२,११.३

व्याख्यानं ब्रह्मचर्यं च श्रवणं च तपः क्षमा ॥ ७.२,११.४

शौचं शिखोपवीतं च उष्णीषं चोत्तरीयकम् ॥ ७.२,११.४

निषिद्धासेवनं चैव भस्मरुद्राक्षधारणम् ॥ ७.२,११.५

पर्वण्यभ्यर्चनं देवि चतुर्दश्यां विशेषतः ॥ ७.२,११.५

पानं च ब्रह्मकूर्चस्य मासि मासि यथाविधि ॥ ७.२,११.६

अभ्यर्चनं विशेषेण तेनैव स्नाप्य मां प्रिये ॥ ७.२,११.६

सर्वक्रियान्न सन्त्यागः श्रद्धान्नस्य च वर्जनम् ॥ ७.२,११.७

तथा पर्युषितान्नस्य यावकस्य विशेषतः ॥ ७.२,११.७

मद्यस्य मद्यगन्धस्य नैवेद्यस्य च वर्जनम् ॥ ७.२,११.८

सामान्यं सर्ववर्णानां ब्राह्मणानां विशेषतः ॥ ७.२,११.८

क्षमा शांतिश्च सन्तोषस्सत्यमस्तेयमेव च ॥ ७.२,११.९

ब्रह्मचर्यं मम ज्ञानं वैराग्यं भस्मसेवनम् ॥ ७.२,११.९

सर्वसंगनिवृत्तिश्च दशैतानि विशेषतः ॥ ७.२,११.१०

लिंगानि योगिनां भूयो दिवा भिक्षाशनं तथा ॥ ७.२,११.१०

वानप्रस्थाश्रमस्थानां समानमिदमिष्यते ॥ ७.२,११.११

रात्रौ न भोजनं कार्यं सर्वेषां ब्रह्मचारिणाम् ॥ ७.२,११.११

अध्यापनं याजनं च क्षत्रियस्याप्रतिग्रहः ॥ ७.२,११.१२

वैश्यस्य च विशेषेण मया नात्र विधीयते ॥ ७.२,११.१२
रक्षणं सर्ववर्णानां युद्धे शत्रुवधस्तथा ॥ ७.२,११.१३
दुष्टपक्षिमृगाणां च दुष्टानां शातनं नृणाम् ॥ ७.२,११.१३
अविश्वासश्च सर्वत्र विश्वासो मम योगिषु ॥ ७.२,११.१४
स्त्रीसंसर्गश्च कालेषु चमूरक्षणमेव च ॥ ७.२,११.१४
सदा संचारितैश्चारैर्लोकवृत्तांतवेदनम् ॥ ७.२,११.१५
सदास्त्रधारणं चैव भस्मकंचुकधारणम् ॥ ७.२,११.१५
राज्ञां ममाश्रमस्थानामेष धर्मस्य संग्रहः ॥ ७.२,११.१६
गोरक्षणं च वाणिज्यं कृषिर्वैश्यस्य कथ्यते ॥ ७.२,११.१६
शुश्रूषेतरवर्णानां धर्मः शूद्रस्य कथ्यते ॥ ७.२,११.१७
उद्यानकरणं चैव मम क्षेत्रसमाश्रयः ॥ ७.२,११.१७
धर्मपत्न्यास्तु गमनं गृहस्थस्य विधीयते ॥ ७.२,११.१८
ब्रह्मचर्यं वनस्थानां यतीनां ब्रह्मचारिणाम् ॥ ७.२,११.१८
स्त्रीणां तु भर्तृशुश्रूषा धर्मो नान्यस्सनातनः ॥ ७.२,११.१९
ममार्चनं च कल्याणि नियोगो भर्तुरस्ति चेत् ॥ ७.२,११.१९
या नारी भर्तृशुश्रूषां विहाय व्रततत्परा ॥ ७.२,११.२०
सा नारी नरकं याति नात्र कार्या विचारणा ॥ ७.२,११.२०
अथ भर्तृविहीनाया वक्ष्ये धर्मं सनातनम् ॥ ७.२,११.२१
व्रतं दानं तपः शौचं भूशय्यानक्तभोजनम् ॥ ७.२,११.२१
ब्रह्मचर्यं सदा स्नानं भस्मना सलिलेन वा ॥ ७.२,११.२२
शांतिर्मौनं क्षमा नित्यं संविभागो यथाविधि ॥ ७.२,११.२२
अष्टाभ्यां च चतुर्दश्यां पौर्णमास्यां विशेषतः ॥ ७.२,११.२३
एकादश्यां च विधिवदुपवासोममार्चनम् ॥ ७.२,११.२३
इति संक्षेपतः प्रोक्तो मयाश्रमनिषेविणाम् ॥ ७.२,११.२४
ब्रह्मक्षत्रविशां देवि यतीनां ब्रह्मचारिणाम् ॥ ७.२,११.२४
तथैव वानप्रस्थानां गृहस्थानां च सुन्दरि ॥ ७.२,११.२५
शूद्राणामथ नारीणां धर्म एष सनातनः ॥ ७.२,११.२५
ध्येयस्त्वयाहं देवेशि सदा जाप्यः षडक्षरः ॥ ७.२,११.२६

वेदोक्तमखिलं धर्ममिति धर्मार्थसंग्रहः ॥ ७.२,११.२६
अथ ये मानवा लोके स्वेच्छया धृतविग्रहाः ॥ ७.२,११.२७
भावातिशयसंपन्नाः पूर्वसंस्कारसंयुताः ॥ ७.२,११.२७
विरक्ता वानुरक्ता वा स्त्र्यादीनां विषयेष्वपि ॥ ७.२,११.२८
पापैर्न ते विलिंपंते १ पद्मपत्रमिवांभसा ॥ ७.२,११.२८
तेषां ममात्मविज्ञानं विशुद्धानां विवेकिनाम् ॥ ७.२,११.२९
मत्प्रसादाद्विशुद्धानां दुःखमाश्रमरक्षणात् ॥ ७.२,११.२९
नास्ति कृत्यमकृत्यं च समाधिर्वा परायणम् ॥ ७.२,११.३०
न विधिर्न निषेधश्च तेषां मम यथा तथा ॥ ७.२,११.३०
तथेह परिपूर्णस्य साध्यं मम न विद्यते ॥ ७.२,११.३१
तथैव कृतकृत्यानां तेषामपि न संशयः ॥ ७.२,११.३१
मद्भक्तानां हितार्थाय मानुषं भावमाश्रिताः ॥ ७.२,११.३२
रुद्रलोकात्परिभ्रष्टास्ते रुद्रा नात्र संशयः ॥ ७.२,११.३२
ममानुशासनं यद्वद्ब्रह्मादीनां प्रवर्तकम् ॥ ७.२,११.३३
तथा नराणामन्येषां तन्नियोगः प्रवर्तकः ॥ ७.२,११.३३
ममाज्ञाधारभावेन सद्भावातिशयेन च ॥ ७.२,११.३४
तदालोकनमात्रेण सर्वपापक्षयो भवेत् ॥ ७.२,११.३४
प्रत्ययाश्च प्रवर्तंते प्रशस्तफलसूचकाः ॥ ७.२,११.३५
मयि भाववतां पुंसां प्रागदृष्टार्थगोचराः ॥ ७.२,११.३५
कंपस्वेदो ऽश्रुपातश्च कण्ठे च स्वरविक्रिया ॥ ७.२,११.३६
आनंदाद्युपलब्धिश्च भवेदाकस्मिकी मुहुः ॥ ७.२,११.३६
स तैर्व्यस्तैस्समस्तैर्वा लिंगैरव्यभिचारिभिः ॥ ७.२,११.३७
मंदमध्योत्तमैर्भावैर्विज्ञेयास्ते नरोत्तमाः ॥ ७.२,११.३७
यथायोग्निसमावेशान्नायो भवति केवलम् ॥ ७.२,११.३८
स तथैव मम सान्निध्यान्न ते केवलमानुषाः ॥ ७.२,११.३८
हस्तपादादिसाधर्म्याद्रुद्रान्मर्त्यवपुर्धरान् ॥ ७.२,११.३९
प्राकृतानिव मन्वानो नावजानीत पंडितः ॥ ७.२,११.३९
अवज्ञानं कृतं तेषु नरैर्व्यामूढचेतनैः ॥ ७.२,११.४०

आयुः श्रियं कुलं शीलं हित्वा निरयमावहेत् ॥ ७.२,११.४०
ब्रह्मविष्णुसुरेशानामपि तूलायते पदम् ॥ ७.२,११.४१
मत्तोन्यदनपेक्षाणामुद्धृतानां महात्मनाम् ॥ ७.२,११.४१
अशुद्धं बौद्धमैश्वर्यं प्राकृतं पौरुषं तथा ॥ ७.२,११.४२
गुणेशानामतस्त्याज्यं गुणातीतपदैषिणाम् ॥ ७.२,११.४२
अथ किं बहुनोक्तेन श्रेयः प्राप्त्यैकसाधनम् ॥ ७.२,११.४३
मयि चित्तसमासंगो येन केनापि हेतुना ॥ ७.२,११.४३
उपमन्युरुवाच
इत्थं श्रीकण्ठनाथेन शिवेन परमात्मना ॥ ७.२,११.४४
हिताय जगतामुक्तो ज्ञानसारार्थसंग्रहः ॥ ७.२,११.४४
विज्ञानसंग्रहस्यास्य वेदशास्त्राणि कृत्स्नशः ॥ ७.२,११.४५
सेतिहासपुराणानि विद्या व्याख्यानविस्तरः ॥ ७.२,११.४५
ज्ञानं ज्ञेयमनुष्ठेयमधिकारो ऽथ साधनम् ॥ ७.२,११.४६
साध्यं चेति षडर्थानां संग्रहत्वेष संग्रहः ॥ ७.२,११.४६
गुरोरधिकृतं ज्ञानं ज्ञेयं पाशः पशुः पतिः ॥ ७.२,११.४७
लिंगार्चनाद्यनुष्ठेयं भक्तस्त्वधिकृतो ऽपि यः ॥ ७.२,११.४७
साधनं शिवमंत्राद्यं साध्यं शिवसमानता ॥ ७.२,११.४८
षडर्थसंग्रहस्यास्य ज्ञानात्सर्वज्ञतोच्यते ॥ ७.२,११.४८
प्रथमं कर्म यज्ञादेर्भक्त्या वित्तानुसारतः ॥ ७.२,११.४९
बाह्येभ्यर्च्य शिवं पश्चादंतर्यागरतो भवेत् ॥ ७.२,११.४९
रतिरभ्यंतरे यस्य न बाह्ये पुण्यगौरवात् ॥ ७.२,११.५०
न कर्म करणीयं हि बहिस्तस्य महात्मनाः ॥ ७.२,११.५०
ज्ञानामृतेन तृप्तस्य भक्त्या शैवशिवात्मनः ॥ ७.२,११.५१
नांतर्न च बहिः कृष्ण कृत्यमस्ति कदाचन ॥ ७.२,११.५१
तस्मात्क्रमेण संत्यज्य बाह्यमाभ्यंतरं तथा ॥ ७.२,११.५२
ज्ञानेन ज्ञेयमालोक्याज्ञानं चापि परित्यजेत् ॥ ७.२,११.५२
नैकाग्रं चेच्छिवे चित्तं किं कृतेनापि कर्मणा ॥ ७.२,११.५३
एकाग्रमेव चेच्चित्तं किं कृतेनापि कर्मणा ॥ ७.२,११.५३

तस्मात्कर्माण्यकृत्वा वा कृत्वा वांतर्बहिःक्रमात् ॥ ७.२,११.५४

येन केनाप्युपायेन शिवे चित्तं निवेशयेत् ॥ ७.२,११.५४

शिवे निविष्टचित्तानां प्रतिष्ठितधियां सताम् ॥ ७.२,११.५५

परत्रेह च सर्वत्र निर्वृतिः परमा भवेत् ॥ ७.२,११.५५

इहोन्नमः शिवायेति मंत्रेणानेन सिद्धयः ॥ ७.२,११.५६

स तस्मादधिगंतव्यः परावरविभूतये ॥ ७.२,११.५६

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखंडे शिवज्ञानवर्णनं नामैकादशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः १२

https://sa.wikisource.org/s/hzk



श्रीकृष्ण उवाच

महर्षिवर सर्वज्ञ सर्वज्ञानमहोदधे ॥ ७.२,१२.१

पञ्चाक्षरस्य माहात्म्यं श्रोतुमिच्छामि तत्त्वतः ॥ ७.२,१२.१

उपमन्युरुवाच

पञ्चाक्षरस्य माहात्म्यं वर्षकोटिशतैरपि ॥ ७.२,१२.२

अशक्यं विस्तराद्वक्तुं तस्मात्संक्षेपतः शृणु ॥ ७.२,१२.२

वेदे शिवागमे चायमुभयत्र षडक्षरेः ॥ ७.२,१२.३

सर्वेषां शिवभक्तानामशेषार्थसाधकः ॥ ७.२,१२.३

तदल्पाक्षरमर्थाढ्यं वेदसारं विमुक्तिदम् ॥ ७.२,१२.४

आज्ञासिद्धमसंदिग्धं वाक्यमेतच्छिवात्मकम् ॥ ७.२,१२.४

नानासिद्धियुतं दिव्यं लोकचित्तानुरंजकम् ॥ ७.२,१२.५

सुनिश्चितार्थं गंभीरं वाक्यं तत्पारमेश्वरम् ॥ ७.२,१२.५

मन्त्रं सुखमुकोच्चार्यमशेषार्थप्रसिद्धये ॥ ७.२,१२.६

प्राहोन्नमः शिवायेति सर्वज्ञस्सर्वदेहिनाम् ॥ ७.२,१२.६

तद्बीजं सर्वविद्यानां मंत्रमाद्यं षडक्षरम् ॥ ७.२,१२.७

अतिसूक्ष्मं महार्थं च ज्ञेयं तद्वटबीजवत् ॥ ७.२,१२.७

देवो गुणत्रयातीतः सर्वज्ञः सर्वकृत्प्रभुः ॥ ७.२,१२.८

ओमित्येकाक्षरे मन्त्रे स्थितः सर्वगतः शिवः ॥ ७.२,१२.८

इशानाद्यानि सूक्ष्माणि ब्रह्माण्येकाक्षराणि तु ॥ ७.२,१२.९

मंत्रे नमश्शिवायेति संस्थितानि यथाक्रमम् ॥ ७.२,१२.९

मंत्रे षडक्षरे सूक्ष्मे पञ्चब्रह्मतनुः शिवः ॥ ७.२,१२.९

वाच्यवाचकभावेन स्थितः साक्षात्स्वभावतः ॥ ७.२,१२.१०

वाच्यश्शिवोप्रमेयत्वान्मंत्रस्तद्वाचकस्स्मृतः ॥ ७.२,१२.१०

वाच्यवाचकभावो ऽयमनादिसंस्थितस्तयोः ॥ ७.२,१२.११

यथा ऽनादिप्रवृत्तोयं घोरसंसारसागरः ॥ ७.२,१२.११
शिवो ऽपि हि तथानादिसंसारान्मोचकः स्थितः ॥ ७.२,१२.१२
व्याधीनां भेषजं यद्वत्प्रतिपक्षः स्वभावतः ॥ ७.२,१२.१२
तद्वत्संसारदोषाणां प्रतिपक्षः शिवस्स्मृतः ॥ ७.२,१२.१३
असत्यस्मिन् जगन्नाथे तमोभूतमिदं भवेत् ॥ ७.२,१२.१३
अचेतनत्वात्प्रकृतेरज्ञत्वात्पुरषस्य च ॥ ७.२,१२.१४
प्रधानपरमाण्वादि यावत्किंचिदचेतनम् ॥ ७.२,१२.१४
न तत्कर्तृ स्वयं दृष्टं बुद्धिमत्कारणं विना ॥ ७.२,१२.१५
धर्माधर्मोपदेशश्च बंधमोक्षौ विचारणात् ॥ ७.२,१२.१५
न सर्वज्ञं विना पुंसामादिसर्गः प्रसिद्ध्यति ॥ ७.२,१२.१६
वैद्यं विना निरानंदाः क्लिश्यंते रोगिणो यथा ॥ ७.२,१२.१६
तस्मादनादिः सर्वज्ञः परिपूर्णस्सदाशिवः ॥ ७.२,१२.१७
अस्ति नाथः परित्राता पुंसां संसारसागरात् ॥ ७.२,१२.१७
आदिमध्यांतनिर्मुक्तस्स्वभावविमलः प्रभुः ॥ ७.२,१२.१८
सर्वज्ञः परिपूर्णश्च शिवो ज्ञेयश्शिवागमे ॥ ७.२,१२.१८
तस्याभिधानमन्त्रो ऽयमभिधेयश्च स स्मृतः ॥ ७.२,१२.१९
अभिधानाभिधेयत्वान्मंत्रस्सिद्धः परश्शिवः ॥ ७.२,१२.१९
एतावत्तु शिवज्ञानमेतावत्परमं पदम् ॥ ७.२,१२.२०
यदोंनमश्शिवायेति शिववाक्यं षडक्षरम् ॥ ७.२,१२.२०
विधिवाक्यमिदं शैवं नार्थवादं शिवात्मकम् ॥ ७.२,१२.२१
यस्सर्वज्ञस्सुसंपूर्णः स्वभावविमलः शिवः ॥ ७.२,१२.२१
लोकानुग्रहकर्ता च स मृषार्थं कथं वदेत् ॥ ७.२,१२.२२
यद्यथावस्थितं वस्तु गुणदोषैः स्वभावतः ॥ ७.२,१२.२२
यावत्फलं च तत्पूर्णं सर्वज्ञस्तु यथा वदेत् ॥ ७.२,१२.२३
रागाज्ञानादिभिर्दोषैर्ग्रस्तत्वादनृतं वदेत् ॥ ७.२,१२.२३
ते चेश्वरे न विद्येते ब्रूयात्स कथमन्यथा ॥ ७.२,१२.२४
अज्ञाताशेषदोषेण सर्वज्ञेय शिवेन यत् ॥ ७.२,१२.२४
प्रणीतममलं वाक्यं तत्प्रमाणं न संशयः ॥ ७.२,१२.२४

तस्मादीश्वरवाक्यानि श्रद्धेयानि विपश्चिता ॥ ७.२,१२.२५
यथार्थपुण्यपापेषु तदश्रद्धो व्रजत्यधः ॥ ७.२,१२.२५
स्वर्गापवर्गसिद्ध्यर्थं भाषितं यत्सुशोभनम् ॥ ७.२,१२.२६
वाक्यं मुनिवरैः शांतैस्तद्विज्ञेयं सुभाषितम् ॥ ७.२,१२.२६
रागद्वेषानृतक्रोधकामतृष्णानुसारि यत् ॥ ७.२,१२.२७
वाक्यं निरयहेतुत्वात्तद्दुर्भाषितमुच्यते ॥ ७.२,१२.२७
संस्कृतेनापि किं तेन मृदुना ललितेन वा ॥ ७.२,१२.२८
अविद्यारागवाक्येन संसारक्लेशहेतुना ॥ ७.२,१२.२८
यच्छ्रुत्वा जायते श्रेयो रागादीनां च संशयः ॥ ७.२,१२.२९
विरूपमपि तद्वाक्यं विज्ञेयमिति शोभनम् ॥ ७.२,१२.२९
बहुत्वेपि हि मंत्राणां सर्वज्ञेन शिवेन यः ॥ ७.२,१२.३०
प्रणीतो विमलो मन्त्रो न तेन सदृशः क्वचित् ॥ ७.२,१२.३०
सांगानि वेदशास्त्राणि संस्थितानि षडक्षरे ॥ ७.२,१२.३१
न तेन सदृशस्तस्मान्मन्त्रो ऽप्यस्त्यपरः क्वचित् ॥ ७.२,१२.३१
सप्तकोटिमहामन्त्रैरुपमन्त्रैरनेकधा ॥ ७.२,१२.३२
मन्त्रः षडक्षरो भिन्नस्सूत्रं वृत्यात्मना यथा ॥ ७.२,१२.३२
शिवज्ञानानि यावंति विद्यास्थानापि यानि च ॥ ७.२,१२.३३
षडक्षरस्य सूत्रस्य तानि भाष्यं समासतः ॥ ७.२,१२.३३
किं तस्य बहुभिर्मंत्रैश्शास्त्रैर्वा बहुविस्तरैः ॥ ७.२,१२.३४
यस्योन्नमः शिवायेति मन्त्रो ऽयं हृदि संस्थितः ॥ ७.२,१२.३४
तेनाधीतं श्रुतं तेन कृतं सर्वमनुष्ठितम् ॥ ७.२,१२.३५
येनोन्नमश्शिवायेति मंत्राभ्यासः स्थिरीकृतः ॥ ७.२,१२.३५
नमस्कारादिसंयुक्तं शिवायेत्यक्षरत्रयम् ॥ ७.२,१२.३६
जिह्वाग्रे वर्तते यस्य सफलं तस्य जीवितम् ॥ ७.२,१२.३६
अंत्यजो वाधमो वापि मूर्खो वा पंडितो ऽपि वा ॥ ७.२,१२.३७
पञ्चाक्षरजपे निष्ठो मुच्यते पापपंजरात् ॥ ७.२,१२.३७

इत्युक्तं परमेशेन देव्या पृष्टेन शूलिना ॥ ७.२,१२.३८
हिताय सर्वमर्त्यानां द्विजानां तु विशेषतः ॥ ७.२,१२.३८

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे पञ्चाक्षरमाहात्म्यवर्णनं नाम द्वादशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः १३

https://sa.wikisource.org/s/hzl

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | उत्तर भागः

देव्युवाच

कलौ कलुषिते काले दुर्जये दुरतिक्रमे ॥ ७.२,१३.१

अपुण्यतमसाच्छन्ने लोके धर्मपराङ्मुखे ॥ ७.२,१३.१

क्षीणे वर्णाश्रमाचारे संकटे समुपस्थिते ॥ ७.२,१३.२

सर्वाधिकारे संदिग्धे निश्चिते वापि पर्यये ॥ ७.२,१३.२

तदोपदेशे विहते गुरुशिष्यक्रमे गते ॥ ७.२,१३.३

केनोपायेन मुच्यंते भक्तास्तव महेश्वर ॥ ७.२,१३.३

ईश्वर उवाच

आश्रित्य परमां विद्यां हृद्यां पञ्चाक्षरीं मम ॥ ७.२,१३.४

भक्त्या च भावितात्मानो मुच्यंते कलिजा नराः ॥ ७.२,१३.४

मनोवाक्कायजैर्दोषैर्वक्तुं स्मर्तुमगोचरैः ॥ ७.२,१३.५

दूषितानां कृतघ्नानां निंदकानां छलात्मनाम् ॥ ७.२,१३.५

लुब्धानां वक्रमनसामपि मत्प्रवणात्मनाम् ॥ ७.२,१३.६

मम पञ्चाक्षरी विद्या संसारभयतारिणी ॥ ७.२,१३.६

मयैवमसकृद्देवि प्रतिज्ञातं धरातले ॥ ७.२,१३.७

पतितो ऽपि विमुच्येत मद्भक्तो विद्ययानया ॥ ७.२,१३.७

देव्युवाच

कर्मायोग्यो भवेन्मर्त्यः पतितो यदि सर्वथा ॥ ७.२,१३.८

कर्मायोगेन यत्कर्म कृतं च नरकाय हि ॥ ७.२,१३.८

ततः कथं विमुच्येत पतितो विद्यया ऽनया ॥ ७.२,१३.८

ईश्वर उवाच

तथ्यमेतत्त्वया प्रोक्तं तथा हि शृणु सुन्दरि ॥ ७.२,१३.९

रहस्यमिति मत्वैतद्गोपितं यन्मया पुरा ॥ ७.२,१३.९

समंत्रकं मां पतितः पूजयेद्यदि मोहितः ॥ ७.२,१३.१०

नारकी स्यान्न सन्देहो मम पञ्चाक्षरं विना ॥ ७.२,१३.१०

अब्भक्षा वायुभक्षाश्च ये चान्ये व्रतकर्शिताः ॥ ७.२,१३.११

तेषामेतैर्व्रतैर्नास्ति मम लोकसमागमः ॥ ७.२,१३.११

भक्त्या पञ्चाक्षरेणैव यो हि मां सकृदर्चयेत् ॥ ७.२,१३.१२

सो ऽपि गच्छेन्मम स्थानं मन्त्रस्यास्यैव गौरवात् ॥ ७.२,१३.१२

तस्मात्तपांसि यज्ञाश्च व्रतानि नियमास्तथा ॥ ७.२,१३.१३

पञ्चाक्षरार्चनस्यैते कोट्यंशेनापि नो समः ॥ ७.२,१३.१३

बद्धो वाप्यथ मुक्तो वा पाशात्पञ्चाक्षरेण यः ॥ ७.२,१३.१४

पूजयेन्मां स मुच्येत नात्र कार्या विचारणा ॥ ७.२,१३.१४

अरुद्रो वा सरुद्रो वा सकृत्पञ्चाक्षरेण यः ॥ ७.२,१३.१५

पूजयेत्पतितो वापि मूढो वा मुच्यते नरः ॥ ७.२,१३.१५

षडक्षरेण वा देवि तथा पञ्चाक्षरेण वा ॥ ७.२,१३.१६

स ब्रह्मांगेन मां भक्त्या पूजयेद्यदि मुच्यते ॥ ७.२,१३.१६

पतितो ऽपतितो वापि मन्त्रेणानेन पूजयेत् ॥ ७.२,१३.१७

मम भक्तो जितक्रोधो सलब्धो ऽलब्ध एव वा ॥ ७.२,१३.१७

अलब्धालब्ध एवेह कोटिकोटिगुणाधिकः ॥ ७.२,१३.१८

तस्माल्लब्ध्वैव मां देवि मन्त्रेणानेन पूजयेत् ॥ ७.२,१३.१८

लब्ध्वा संपूजयेद्यस्तु मैत्र्यादिगुणसंयुतः ॥ ७.२,१३.१९

ब्रह्मचर्यरतो भक्त्या मत्सादृश्यमवाप्नुयात् ॥ ७.२,१३.१९

किमत्र बहुनोक्तेन भक्तास्सर्वेधिकारिणः ॥ ७.२,१३.२०

मम पञ्चाक्षरे मंत्रे तस्माच्छ्रेष्ठतरो हि सः ॥ ७.२,१३.२०

पञ्चाक्षरप्रभावेण लोकवेदमहर्षयः ॥ ७.२,१३.२१

तिष्ठंति शाश्वता धर्मा देवास्सर्वमिदं जगत् ॥ ७.२,१३.२१

प्रलये समनुप्राप्ते नष्टे स्थावरजंगमे ॥ ७.२,१३.२२

सर्वं प्रकृतिमापन्नं तत्र संलयमेष्यति ॥ ७.२,१३.२२

एको ऽहं संस्थितो देवि न द्वितीयो ऽस्ति कुत्रचित् ॥ ७.२,१३.२३

तदा वेदाश्च शास्त्राणि सर्वे पञ्चाक्षरे स्थिताः ॥ ७.२,१३.२३

ते नाशं नैव संप्राप्ता मच्छक्त्या ह्यनुपालिताः ॥ ७.२,१३.२४

ततस्सृष्टिरभून्मत्तः प्रकृत्यात्मप्रभेदतः ॥ ७.२,१३.२४
गुणमूर्त्यात्मनां चैव ततोवांतरसंहृतिः ॥ ७.२,१३.२५
तदा नारायणश्शेते देवो मायामयीं तनुम् ॥ ७.२,१३.२५
आस्थाय भोगिपर्यंकशयने तोयमध्यगः ॥ ७.२,१३.२६
तन्नाभिपंकजाज्जातः पञ्चवक्त्रः पितामहः ॥ ७.२,१३.२६
सिसृक्षमाणो लोकांस्त्रीन्न सक्तो ह्यसहायवान् ॥ ७.२,१३.२७
मुनीन्दश ससर्जादौ मानसानमितौजसः ॥ ७.२,१३.२७
तेषां सिद्धिविवृद्ध्यर्थं मां प्रोवाच पितामहः ॥ ७.२,१३.२८
मत्पुत्राणां महादेव शक्तिं देहि महेश्वर ॥ ७.२,१३.२८
इत्येवं प्रार्थितस्तेन पञ्चवक्त्रधरो ह्यहम् ॥ ७.२,१३.२९
पञ्चाक्षराणि क्रमशः प्रोक्तवान्पद्मयोनये ॥ ७.२,१३.२९
स पञ्चवदनैस्तानि गृह्णंल्लोकपितामहः ॥ ७.२,१३.३०
वाच्यवाचकभावेन ज्ञातवान्मां महेश्वरम् ॥ ७.२,१३.३०
ज्ञात्वा प्रयोगं विविधं सिद्धमंत्रः प्रजापतिः ॥ ७.२,१३.३१
पुत्रेभ्यः प्रददौ मंत्रं मंत्रार्थं च यथातथम् ॥ ७.२,१३.३१
ते च लब्ध्वा मंत्ररत्नं साक्षाल्लोकपितामहात् ॥ ७.२,१३.३२
तदाज्ञप्तेन मार्गेण मदाराधनकांक्षिणः ॥ ७.२,१३.३२
मेरोस्तु शिखरे रम्ये मुंजवान्नाम पर्वतः ॥ ७.२,१३.३३
मत्प्रियः सततं श्रीमान्मद्भक्तै रक्षितस्सदा ॥ ७.२,१३.३३
तस्याभ्याशे तपस्तीव्रं लोकं स्रष्टुं समुत्सुकाः ॥ ७.२,१३.३४
दिव्यं वर्षसहस्रं तु वायुभक्षास्समाचरन् ॥ ७.२,१३.३४
तेषां भक्तिमहं दृष्ट्वा सद्यः प्रत्यक्षतामियाम् ॥ ७.२,१३.३५
ऋषिं छंदश्च कीलं च बीजशक्तिं च दैवतम् ॥ ७.२,१३.३५
न्यासं षडंगं दिग्बंधं विनियोगमशेषतः ॥ ७.२,१३.३६
प्रोक्तवानहमार्याणां जगत्सृष्टिविवृद्धये ॥ ७.२,१३.३६
ततस्ते मंत्रमाहात्म्यादृषयस्तपसेधिताः ॥ ७.२,१३.३७
सृष्टिं वितन्वते सम्यक्सदेवासुरमानुषीम् ॥ ७.२,१३.३७
अस्याः परमविद्यायास्स्वरूपमधुनोच्यते ॥ ७.२,१३.३८

आदौ नमः प्रयोक्तव्यं शिवाय तु ततः परम् ॥ ७.२,१३.३८
सैषा पञ्चाक्षरी विद्या सर्वश्रुतिशिरोगता ॥ ७.२,१३.३९
सर्वजातस्य सर्वस्य बीजभूता सनातनी ॥ ७.२,१३.३९
प्रथमं मन्मुखोद्गीर्णा सा ममैवास्ति वाचिका ॥ ७.२,१३.४०
तप्तचामीकरप्रख्या पीनोन्नतपयोधरा ॥ ७.२,१३.४०
चतुर्भुजा त्रिनयना बालेंदुकृतशेखरा ॥ ७.२,१३.४१
पद्मोत्पलकरा सौम्या वरदाभयपाणिका ॥ ७.२,१३.४१
सर्वलक्षणसंपन्ना सर्वाभरणभूषिता ॥ ७.२,१३.४२
सितपद्मासनासीना नीलकुंचितमूर्धजा ॥ ७.२,१३.४२
अस्याः पञ्चविधा वर्णाः प्रस्फुरद्रश्मिमंडलाः ॥ ७.२,१३.४३
पीतः कृष्णस्तथा धूम्रः स्वर्णाभो रक्त एव च ॥ ७.२,१३.४३
पृथक्प्रयोज्या यद्येते बिंदुनादविभूषिताः ॥ ७.२,१३.४४
अर्धचन्द्रनिभो बिंदुर्नादो दीपशिखाकृतिः ॥ ७.२,१३.४४
बीजं द्वितीयं बीजेषु मंत्रस्यास्य वरानने ॥ ७.२,१३.४५
दीर्घपूर्वं तुरीयस्य पञ्चमं शक्तिमादिशेत् ॥ ७.२,१३.४५
वामदेवो नाम ऋषिः पंक्तिश्छन्द उदाहृतम् ॥ ७.२,१३.४६
देवता शिव एवाहं मन्त्रस्यास्य वरानने ॥ ७.२,१३.४६
गौतमो ऽत्रिर्वरारोहे विश्वामित्रस्तथांगिराः ॥ ७.२,१३.४७
भरद्वाजश्च वर्णानां क्रमशश्चर्षयः स्मृताः ॥ ७.२,१३.४७
गायत्र्यनुष्टुप्त्रिष्टुप्च छंदांसि बृहती विराट् ॥ ७.२,१३.४८
इन्द्रो रुद्रो हरिर्ब्रह्मा स्कंदस्तेषां च देवताः ॥ ७.२,१३.४८
मम पञ्चमुखान्याहुः स्थाने तेषां वरानने ॥ ७.२,१३.४९
पूर्वादेश्चोर्ध्वपर्यंतं नकारादि यथाक्रमम् ॥ ७.२,१३.४९
अदात्तः प्रथमो वर्णश्चतुर्थश्च द्वितीयकः ॥ ७.२,१३.५०
पञ्चमः स्वरितश्चैव तृतीयो निहतः स्मृतः ॥ ७.२,१३.५०
मूलविद्या शिवं शैवं सूत्रं पञ्चाक्षरं तथा ॥ ७.२,१३.५१
नामान्यस्य विजानीयाच्छैवं मे हृदयं महत् ॥ ७.२,१३.५१
नकारश्शिर उच्येत मकारस्तु शिखोच्यते ॥ ७.२,१३.५२

शिकारः कवचं तद्वद्वकारो नेत्रमुच्यते ॥ ७.२,१३.५२

यकारो ऽस्त्रं नमस्स्वाहा वषठुंवौषडित्यपि ॥ ७.२,१३.५३

फडित्यपि च वर्णानामन्ते ऽङ्गत्वं यदा तदा ॥ ७.२,१३.५३

तत्रापि मूलमंत्रो ऽयं किंचिद्भेदसमन्वयात् ॥ ७.२,१३.५४

तत्रापि पञ्चमो वर्णो द्वादशस्वरभूषितः ॥ ७.२,१३.५४

तास्मादनेन मंत्रेण मनोवाक्कायभेदतः ॥ ७.२,१३.५५

आवयोरर्चनं कुर्याज्जपहोमादिकं तथा ॥ ७.२,१३.५५

यथाप्रज्ञं यथाकालं यथाशास्त्रं यथामति ॥ ७.२,१३.५६

यथाशक्ति यथासंपद्यथायोगं यथारति ॥ ७.२,१३.५६

यदा कदापि वा भक्त्या यत्र कुत्रापि वा कृता ॥ ७.२,१३.५७

येन केनापि वा देवि पूजा मुक्तिं नयिष्यते ॥ ७.२,१३.५७

मय्यासक्तेन मनसा यत्कृतं मम सुन्दरि ॥ ७.२,१३.५८

मत्प्रियं च शिवं चैव क्रमेणाप्यक्रमेण वा ॥ ७.२,१३.५८

तथापि मम भक्ता ये नात्यंतविवशाः पुनः ॥ ७.२,१३.५९

तेषां सर्वेषु शास्त्रेषु मयेव नियमः कृतः ॥ ७.२,१३.५९

तत्रादौ संप्रवक्ष्यामि मन्त्रसंग्रहणं शुभम् ॥ ७.२,१३.६०

यं विना निष्फलं जाप्यं येन वा सफलं भवेत् ॥ ७.२,१३.६०

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे पञ्चाक्षरमाहात्म्यवर्णनं नाम त्रयोदशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः १४



ईश्वर उवाच

आज्ञाहीनं क्रियाहीनं श्रद्धाहीनं वरानने ॥

आज्ञार्थं दक्षिणाहीनं सदा जप्तं च निष्फलम् ॥ १

आज्ञासिद्धं क्रियासिद्धं श्रद्धासिद्धं ममात्मकम् ॥

एवं चेद्दक्षिणायुक्तं मंत्रसिद्धिर्महत्फलम् ॥ २

उपगम्य गुरुं विप्रमाचार्यं तत्त्ववेदिनम् ॥

जापितं सद्गुणोपेतं ध्यानयोगपरायणम् ॥ ३

तोषयेत्तं प्रयत्नेन भावशुद्धिसमन्वितः ॥

वाचा च मनसा चैव कायेन द्रविणेन च ॥ ४

आचार्यं पूजयेद्विप्रः सर्वदातिप्रयत्नतः ॥

हस्त्यश्वरथरत्नानि क्षेत्राणि च गृहाणि च ॥ ५

भूषणानि च वासांसि धान्यानि च धनानि च ॥

एतानि गुरवे दद्याद्भक्त्या च विभवे सति ॥ ६

वित्तशाठ्यं न कुर्वीत यदीच्छेत्सिद्धिमात्मनः ॥

पश्चान्निवेद्य स्वात्मानं गुरवे सपरिच्छदम् ॥ ७

एवं संपूज्य विधिवद्यथाशक्तित्ववंचयन् ॥

आददीत गुरोर्मंत्रं ज्ञानं चैव क्रमेण तु ॥ ८

एवं तुष्टो गुरुः शिष्यं पूजकं वत्सरोषितम् ॥

शुश्रूषुमनहंकारं स्नातं शुचिमुपोषितम् ॥ ९

स्नापयित्वा विशुद्ध्यर्थं पूर्णकुंभघृतेन वै ॥

जलेन मन्त्रशुद्धेन पुण्यद्रव्ययुतेन च ॥ १०

अलंकृत्य सुवेषं च गंधस्रग्वस्त्रभूषणैः ॥

पुण्याहं वाचयित्वा च ब्राह्मणानभिपूज्य च ॥ ११

समुद्रतीरे नद्यां च गोष्ठे देवालये ऽपि वा ॥

शुचौ देशे गृहे वापि काले सिद्धिकरे तिथौ ॥ १२
नक्षत्रे शुभयोगे च सर्वदोषविवर्जिते ॥
अनुगृह्य ततो दद्याज्ज्ञानं मम यथाविधि ॥ १३
स्वरेणोच्चारयेत्सम्यगेकांते ऽतिप्रसन्नधीः ॥
उच्चार्योच्चारयित्वा तमावयोर्मंत्रमुत्तमम् ॥ १४
शिवं चास्तु शुभं चास्तु शोभनो ऽस्तु प्रियो ऽस्त्विति ॥
एवं दद्याद्गुरुर्मंत्रमाज्ञां चैव ततः परम् ॥ १५
एवं लब्ध्वा गुरोर्मंत्रमाज्ञां चैव समाहितः ॥
संकल्प्य च जपेन्नित्यं पुरश्चरणपूर्वकम् ॥ १६
यावज्जीवं जपेन्नित्यमष्टोत्तरसहस्रकम् ॥
अनन्यस्तत्परो भूत्वा स याति परमां गतिम् ॥ १७
जपेदक्षरलक्षं वै चतुर्गुणितमादरात् ॥
नक्ताशी संयमी यस्स पौरश्चरणिकः स्मृतः ॥ १८
यः पुरश्चरणं कृत्वा नित्यजापी भवेत्पुनः ॥
तस्य नास्ति समो लोके स सिद्धः सिद्धदो भवेत् ॥ १९
स्नानं कृत्वा शुचौ देशे बद्ध्वा रुचिरमानसम् ॥
त्वया मां हृदि संचिंत्य संचिंत्य स्वगुरुं ततः ॥ २०
उदङ्मुखः प्राङ्मुखो वा मौनी चैकाग्रमानसः ॥
विशोध्य पञ्चतत्त्वानि दहनप्लावनादिभिः ॥ २१
मन्त्रन्यासादिकं कृत्वा सफलीकृतविग्रहः ॥
आवयोर्विग्रहौ ध्यायन्प्राणापानौ नियम्य च ॥ २२
विद्यास्थानं स्वकं रूपमृषिञ्छन्दो ऽधिदैवतम् ॥
बीजं शक्तिं तथा वाक्यं स्मृत्वा पञ्चाक्षरीं जपेत् ॥ २३
उत्तमं मानसं जाप्यमुपांशुं चैवमध्यमम् ॥
अधमं वाचिकं प्राहुरागमार्थविशारदाः ॥ २४
उत्तमं रुद्रदैवत्यं मध्यमं विष्णुदैवतम् ॥
अधमं ब्रह्मदैवत्यमित्याहुरनुपूर्वशः ॥ २५
यदुच्चनीचस्वरितैःस्पष्टास्पष्टपदाक्षरैः ॥

मंत्रमुच्चारयेद्वाचा वाचिको ऽयं जपस्स्मृतः ॥ २६
जिह्वामात्रपरिस्पंदादीषदुच्चारितो ऽपि वा ॥
अपरैरश्रुतः किंचिच्छ्रुतो वोपांशुरुच्यते ॥ २७
धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम् ॥
शब्दार्थचिंतनं भूयः कथ्यते मानसो जपः ॥ २८
वाचिकस्त्वेक एव स्यादुपांशुः शतमुच्यते ॥
साहस्रं मानसः प्रोक्तः सगर्भस्तु शताधिकः ॥ २९
प्राणायामसमायुक्तस्सगर्भो जप उच्यते ॥
आद्यंतयोरगर्भो ऽपि प्राणायामः प्रशस्यते ॥ ३०
चत्वारिंशत्समावृत्तीः प्राणानायम्य संस्मरेत् ॥
मंत्रं मंत्रार्थविद्धीमानशक्तः शक्तितो जपेत् ॥ ३१
पञ्चकं त्रिकमेकं वा प्राणायामं समाचरेत् ॥
अगर्भं वा सगर्भं वा सगर्भस्तत्र शस्यते ॥ ३२
सगर्भादपि साहस्रं सध्यानो जप उच्यते ॥
एषु पञ्चविधेष्वेकः कर्तव्यः शक्तितो जपः ॥ ३३
अङ्गुल्या जपसंख्यानमेकमेवमुदाहृतम् ॥
रेखयाष्टगुणं विद्यात्पुत्रजीवैर्दशाधिकम् ॥ ३४
शतं स्याच्छंखमणिभिः प्रवालैस्तु सहस्रकम् ॥
स्फटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते ॥ ३५
पद्माक्षैर्दशलक्षन्तु सौवर्णैः कोटिरुच्यते ॥
कुशग्रंथ्या च रुद्राक्षैरनंतगुणितं भवेत् ॥ ३६
त्रिंशदक्षैः कृता माला धनदा जपकर्मणि ॥
सप्तविंशतिसंख्यातैरक्षैः पुष्टिप्रदा भवेत् ॥ ३७
पञ्चविंशतिसंख्यातैः कृता मुक्तिं प्रयच्छति ॥
अक्षैस्तु पञ्चदशभिरभिचारफलप्रदा ॥ ३८
अंगुष्ठं मोक्षदं विद्यात्तर्जनीं शत्रुनाशिनीम् ॥
मध्यमां धनदां शांतिं करोत्येषा ह्यनामिका ॥ ३९
अष्टोत्तरशतं माला तत्र स्यादुत्तमोत्तमा ॥

शतसंख्योत्तमा माला पञ्चाशद्भिस्तु मध्यमा ॥ ४०

चतुः पञ्चाशदक्षैस्तु हृच्छ्रेष्ठा हि प्रकीर्तिता ॥

इत्येवं मालया कुर्याज्जपं कस्मै न दर्शयेत् ॥ ४१

कनिष्ठा क्षरिणी प्रोक्ता जपकर्मणि शोभना ॥

अंगुष्ठेन जपेज्जप्यमन्यैरंगुलिभिस्सह ॥ ४२

अंगुष्ठेन विना जप्यं कृतं तदफलं यतः ॥

गृहे जपं समं विद्याद्गोष्ठे शतगुणं विदुः ॥ ४३

पुण्यारण्ये तथारामे सहस्रगुणमुच्यते ॥

अयुतं पर्वते पुण्ये नद्यां लक्षमुदाहृतम् ॥ ४४

कोटिं देवालये प्राहुरनन्तं मम सन्निधौ ॥

सूर्यस्याग्नेर्गुरोरिंदोर्दीपस्य च जलस्य च ॥ ४५

विप्राणां च गवां चैव सन्निधौ शस्यते जपः ॥

तत्पूर्वाभिमुखं वश्यं दक्षिणं चाभिचारिकम् ॥ ४६

पश्चिमं धनदं विद्यादौत्तरं शातिदं भवेत् ॥

सूर्याग्निविप्रदेवानां गुरूणामपि सन्निधौ ॥ ४७

अन्येषां च प्रसक्तानां मन्त्रं न विमुखो जपेत् ॥

उष्णीषी कुंचुकी नम्रो मुक्तकेशो गलावृतः ॥ ४८

अपवित्रकरो ऽशुद्धो विलपन्न जपेत्क्वचित् ॥

क्रोधं मदं क्षुतं त्रीणि निष्ठीवनविजृंभणे ॥ ४९

दर्शनं च श्वनीचानां वर्जयेज्जपकर्मणि ॥

आचमेत्संभवे तेषां स्मरेद्वा मां त्वया सह ॥ ५०

ज्योतींषि च प्रपश्येद्वा कुर्याद्वा प्राणसंयमम् ॥

अनासनः शयाने वा गच्छन्नुत्थित एव वा ॥ ५१

रथ्यायामशिवे स्थाने न जपेत्तिमिरान्तरे ॥

प्रसार्य न जपेत्पादौ कुक्कुटासन एव वा ॥ ५२

यानशय्याधिरूढो वा चिंताव्याकुलितो ऽथ वा ॥

शक्तश्चेत्सर्वमेवैतदशक्तः शक्तितो जपेत् ॥ ५३

किमत्र बहुनोक्तेन समासेन वचः शृणु ॥

सदाचारो जपञ्छुद्धं ध्यायन्भद्रं समश्नुते ॥ ५४
आचारः परमो धर्म आचारः परमं धनं ॥
आचारः परमा विद्या आचारः परमा गतिः ॥ ५५
आचारहीनः पुरुषो लोके भवति निंदितः ॥
परत्र च सुखी न स्यात्तस्मादाचारवान्भवेत् ॥ ५६
यस्य यद्विहितं कर्म वेदे शास्त्रे च वैदिकैः ॥
तस्य तेन समाचारः सदाचारो न चेतरः ॥ ५७
सद्भिराचरितत्वाच्च सदाचारः स उच्यते ॥
सदाचारस्य तस्याहुरास्तिक्यं मूलकारणम् ॥ ५८
आस्तिकश्चेत्प्रमादाद्यैः सदाचारादविच्युतः ॥
न दुष्यति नरो नित्यं तस्मादास्तिकतां व्रजेत् ॥ ५९
यथेहास्ति सुखं दुःखं सुकृतैर्दुष्कृतैरपि ॥
तथा परत्र चास्तीति मतिरास्तिक्यमुच्यते ॥ ६०
रहस्यमन्यद्वक्ष्यामि गोपनीयमिदं प्रिये ॥
न वाच्यं यस्य कस्यापि नास्तिकस्याथ वा पशोः ॥ ६१
सदाचारविहीनस्य पतितस्यान्त्यजस्य च ॥
पञ्चाक्षरात्परं नास्ति परित्राणं कलौ युगे ॥ ६२
गच्छतस्तिष्ठतो वापि स्वेच्छया कर्म कुर्वतः ॥
अशुचेर्वा शुचेर्वापि मन्त्रो ऽयन्न च निष्फलः ॥ ६३
अनाचारवतां पुंसामविशुद्धषडध्वनाम् ॥
अनादिष्टो ऽपि गुरुणा मन्त्रो ऽयं न च निष्फलः ॥ ६४
अन्त्यजस्यापि मूर्खस्य मूढस्य पतितस्य च ॥
निर्मर्यादस्य नीचस्य मंत्रो ऽयं न च निष्फलः ॥ ६५
सर्वावस्थां गतस्यापि मयि भक्तिमतः परम् ॥
सिध्यत्येव न संदेहो नापरस्य तु कस्यचित् ॥ ६६
न लग्नतिथिनक्षत्रवारयोगादयः प्रिये ॥
अस्यात्यंतमवेक्ष्याः स्युर्नैष सप्तस्सदोदितः ॥ ६७
न कदाचिन्न कस्यापि रिपुरेष महामनुः ॥

सुसिद्धो वापि सिद्धो वा साध्यो वापि भविष्यति ॥ ६८
सिद्धेन गुरुणादिष्टस्सुसिद्ध इति कथ्यते ॥
असिद्धेनापि वा दत्तस्सिद्धसाध्यस्तु केवलः ॥ ६९
असाधितस्साधितो वा सिध्यत्वेन न संशयः ॥
श्रद्धातिशययुक्तस्य मयि मंत्रे तथा गुरौ ॥ ७०
तस्मान्मंत्रान्तरांस्त्यक्त्वा सापायान् १ धिकारतः ॥
आश्रमेत्परमां विद्यां साक्षात्पञ्चाक्षरीं बुधः ॥ ७१
मंत्रान्तरेषु सिद्धेषु मंत्र एष न सिध्यति ॥
सिद्धे त्वस्मिन्महामंत्रे ते च सिद्धा भवंत्युत ॥ ७२
यथा देवेष्वलब्धो ऽस्मि लब्धेष्वपि महेश्वरि ॥
मयि लब्धे तु ते लब्धा मंत्रेष्वेषु समो विधिः ॥ ७३
ये दोषास्सर्वमंत्राणां न ते ऽस्मिन्संभवंत्यपि ॥
अस्य मंत्रस्य जात्यादीननपेक्ष्य प्रवर्तनात् ॥ ७४
तथापि नैव क्षुद्रेषु फलेषु प्रति योगिषु ॥
सहसा विनियुंजीत तस्मादेष महाबलः ॥ ७५
उपमन्युरुवाच
एवं साक्षान्महादेव्यै महादेवेन शूलिना ॥
हिता य जगतामुक्तः पञ्चाक्षरविधिर्यथा ॥ ७६
य इदं कीर्तयेद्भक्त्या शृणुयाद्वा समाहितः ॥
सर्वपापविनिर्मुक्तः प्रयाति परमां गतिम् ॥ ७७

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखंडे पञ्चाक्षरमहिमवर्णनं नाम चतुर्दशोध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः १५

https://sa.wikisource.org/s/fwo



श्रीकृष्ण उवाच

भगवान्मंत्रमाहात्म्यं भवता कथितं प्रभो ॥ १

तत्प्रयोगविधानं च साक्षाच्छ्रुतिसमं यथा ॥ १

इदानीं श्रोतुमिच्छामि शिवसंस्कारमुत्तमम् ॥ २

मंत्रसंग्रहणे किंचित्सूचितन्न तु विस्मृतम् ॥ २

उपमन्युरुवाच

हन्त ते कथयिष्यामि सर्वपापविशोधनम् ॥ ३

संस्कारं परमं पुण्यं शिवेन पतिभाषितम् ॥ ३

सम्यक्कृताधिकारः स्यात्पूजादिषु नरो यतः ॥ ४

संस्कारः कथ्यते तेन षडध्वपरिशोधनम् ॥ ४

दीयते येन विज्ञानं क्षीयते पाशबंधनम् ॥ ५

तस्मात्संस्कार एवायं दीक्षेत्यपि च कथ्यते ॥ ५

शांभवी चैव शाक्ती च मांत्री चैव शिवागमे ॥ ६

दीक्षोपदिश्यते त्रेधा शिवेन परमात्मना ॥ ६

गुरोरालोकमात्रेण स्पर्शात्संभाषणादपि ॥ ७

सद्यस्संज्ञा भवेज्जंतोः पाशोपक्षयकारिणी ॥ ७

सा दीक्षा शांभवी प्रोक्ता सा पुनर्भिद्यते द्विधा ॥ ८

तीव्रा तीव्रतरा चेति पाशो पक्षयभेदतः ॥ ८

यया स्यान्निर्वृतिः सद्यस्सैव तीव्रतरा मता ॥ ९

तीव्रा तु जीवतोत्यंतं पुंसः पापविशोधिका ॥ ९

शक्ती ज्ञानवती दीक्षा शिष्यदेहं प्रविश्य तु ॥ १०

गुरुणा योगमार्गेण क्रियते ज्ञानचक्षुषा ॥ १०

मांत्री क्रियावती दीक्षा कुंडमंडलपूर्विका ॥ ११

मंदमंदतरोद्देशात्कर्तव्या गुरुणा बहिः ॥ ११

शक्तिपातानुसारेण शिष्यो ऽनुग्रहमर्हति ॥ १२

शैवधर्मानुसारस्य तन्मूलत्वात्समासतः ॥ १२

यत्र शक्तिर्न पतिता तत्र शुद्धिर्न जायते ॥ १३

न विद्या न शिवाचारो न मुक्तिर्न च सिद्धयः ॥ १३

तस्माल्लिंगानि संवीक्ष्य शक्तिपातस्य भूयसः ॥ १४

ज्ञानेन क्रियया वाथ गुरुश्शिष्यं विशोधयेत् ॥ १४

यो ऽन्यथा कुरुते मोहात्स विनश्यति दुर्मतिः ॥ १५

तस्मात्सर्वप्रकारेण गुरुः शिष्यं परीक्षयेत् ॥ १५

लक्षणं शक्तिपातस्य प्रबोधानंदसंभवः ॥ १६

सा यस्मात्परमा शक्तिः प्रबोधानंदरूपिणी ॥ १६

आनंदबोधयोर्लिंगमंतःकरणविक्रियाः ॥ १७

यथा स्यात्कंपरोमांचस्वरनेत्रांगविक्रियाः ॥ १७

शिष्योपि लक्षणैरेभिः कुर्याद्गुरुपरीक्षणम् ॥ १८

तत्संपर्कैः शिवार्चादौ संगतैर्वाथ तद्गतैः ॥ १८

शिष्यस्तु शिक्षणीयत्वाद्गुरोर्गौरवकारणात् ॥ १९

तस्मात्सर्वप्रयत्नेन गुरोर्गौरवमाचरेत् ॥ १९

यो गुरुस्स शिवः प्रोक्तो यः शिवः स गुरुः स्मृतः ॥ २०

गुरुर्वा शिव एवाथ विद्याकारेण संस्थितः ॥ २०

यथा शिवस्तथा विद्या यथा विद्या तथा गुरुः ॥ २१

शिवविद्या गुरूणां च पूजया सदृशं फलम् ॥ २१

सर्वदेवात्मकश्चासौ सर्वमंत्रमयो गुरुः ॥ २२

तस्मात्सर्वप्रयत्नेन यस्याज्ञां शिरसा वहेत् ॥ २२

श्रेयो ऽर्थी यदि गुर्वाज्ञां मनसापि न लंघयेत् ॥ २३

गुर्वाज्ञापालको यस्माज्ज्ञानसंपत्तिमश्नुते ॥ २३

गच्छंस्तिष्ठन्स्वपन्भुंजन्नान्यत्कर्म समाचरेत् ॥ २४

समक्षं यदि कुर्वीत सर्वं चानुज्ञया गुरोः ॥ २४

गुरोर्गृहे समक्षं वा न यथेष्टासनो भवेत् ॥ २५

गुरुर्देवो यतः साक्षात्तद्गृहं देवमन्दिरम् ॥ २५

पापिनां च यथा संगात्तत्पापात्पतितो भवेत् ॥ २६
यथेह वह्निसंपर्कान्मलं त्यजति कांचनम् ॥ २६
तथैव गुरुसंपर्कात्पापं त्यजति मानवः ॥ २७
यथा वह्निसमीपस्थो घृतकुम्भो विलीयते ॥ २७
तथा पापं विलीयेत ह्याचार्यस्य समीपतः ॥ २८
यथा प्रज्वलितो वह्निः शुष्कमार्द्रं च निर्दहेत् ॥ २८
तथायमपि संतुष्टो गुरुः पापं क्षणाद्दहेत् ॥ २९
मनसा कर्मणा वाचा गुरोः क्रोधं न कारयेत् ॥ २९
तस्य क्रोधेन दह्यंते ह्यायुःश्रीज्ञानसत्क्रियाः ॥ ३०
तत्क्रोधकारिणो ये स्युस्तेषां यज्ञाश्च निष्फलाः ॥ ३०
यमश्च नियमाश्चैव नात्र कार्या विचारणा ॥ ३१
गुरोर्विरुद्धं यद्वाक्यं न वदेज्जातुचिन्नरः ॥ ३१
वदेद्यदि महामोहाद्रौरवं नरकं व्रजेत् ॥ ३२
मनसा कर्मणा वाचा गुरुमुद्दिश्य यत्नतः ॥ ३२
श्रेयोर्थी चेन्नरो धीमान्न मिथ्याचारमाचरेत् ॥ ३३
गुरोर्हितं प्रियं कुर्यादादिष्टो वा न वा सदा ॥ ३३
असमक्षं समक्षं वा तस्य कार्यं समाचरेत् ॥ ३४
इत्थमाचारवान्भक्तो नित्यमुद्युक्तमानसः ॥ ३४
गुरुप्रियकरः शिष्यः शैवधर्मांस्ततो ऽर्हति ॥ ३५
गुरुश्चेद्गुणवान्प्राज्ञः परमानंदभासकः ॥ ३५
तत्त्वविच्छिवसंसक्तो मुक्तिदो न तु चापरः ॥ ३६
संवित्संजननं तत्त्वं परमानंदसंभवम् ॥ ३६
तत्तत्त्वं विदितं येन स एवानंददर्शकः ॥ ३७
न पुनर्नाममात्रेण संविदारहितस्तु यः ॥ ३७
अन्योन्यं तारयेन्नौका किं शिला तारयेच्छिलाम् ॥ ३८
एतस्या नाममात्रेण मुक्तिर्वै नाममात्रिका ॥ ३८
यैः पुनर्विदितं तत्त्वं ते मुक्ता मोचयन्त्यपि ॥ ३९
तत्त्वहीने कुतो बोधः कुतो ह्यात्मपरिग्रहः ॥ ३९

परिग्रहविनिर्मुक्तः पशुरित्यभिधीयते ॥ ४०
पशुभिः प्रेरितश्चापि पशुत्वं नातिवर्तते ॥ ४०
तस्मात्तत्त्वविदेवेह मुक्तो मोचक इष्यते ॥ ४१
सर्वलक्षणसंयुक्तः सर्वशास्त्रविदप्ययम् ॥ ४१
सर्वोपायविधिज्ञो ऽपि तत्त्वहीनस्तु निष्फलः ॥ ४२
यस्यानुभवपर्यंता बुद्धिस्तत्त्वे प्रवर्तते ॥ ४२
तस्यावलोकनाद्यैश्च परानन्दो ऽभिजायते ॥ ४३
तस्माद्यस्यैव संपर्कात्प्रबोधानंदसंभवः ॥ ४३
गुरुं तमेव वृणुयान्नापरं मतिमान्नरः ॥ ४४
स शिष्यैर्विनयाचारचतुरैरुचितो गुरुः ॥ ४४
यावद्विज्ञायते तावत्सेवनीयो मुमुक्षुभिः ॥ ४५
ज्ञाते तस्मिन्स्थिरा भक्तिर्यावत्तत्त्वं समाश्रयेत् ॥ ४५
न तु तत्त्वं त्यजेज्जातु नोपेक्षेत कथंचन ॥ ४६
यत्रानंदः प्रबोधो वा नाल्पमप्युपलभ्यते ॥ ४६
वत्सरादपि शिष्येण सो ऽन्यं गुरुमुपाश्रयेत् ॥ ४७
गुरुमन्यं प्रपन्ने ऽपि नावमन्येत पौर्विकम् ॥ ४७
गुरोर्भ्रातॄंस्तथा पुत्रान्बोधकान्प्रेरकानपि ॥ ४७
तत्रादावुपसंगम्य ब्राह्मणं वेदपारगम् ॥ ४८
गुरुमाराधयेत्प्राज्ञं शुभगं प्रियदर्शनम् ॥ ४८
सर्वाभयप्रदातारं करुणाक्रांतमानसम् ॥ ४९
तोषयेत्तं प्रयत्नेन मनसा कर्मणा गिरा ॥ ४९
तावदाराधयेच्छिष्यः प्रसन्नोसौ भवेद्यथा ॥ ५०
तस्मिन्प्रसन्ने शिष्यस्य सद्यः पापक्षयो भवेत् ॥ ५०
तस्माद्धनानि रत्नानि क्षेत्राणि च गृहाणि च ॥ ५१
भूषणानि च वासांसि यानशय्यासनानि च ॥ ५१
एतानि गुरवे दद्याद्भक्त्या वित्तानुसारतः ॥ ५२
वित्तशाठ्यं न कुर्वीत यदीच्छेत्परमां गतिम् ॥ ५२
स एव जनको माता भर्ता बन्धुर्धनं सुखम् ॥ ५३

सखा मित्रं च यत्तस्मात्सर्वं तस्मै निवेदयेत् ॥ ५३

निवेद्य पश्चात्स्वात्मानं सान्वयं सपरिग्रहम् ॥ ५४

समर्प्य सोदकं तस्मै नित्यं तद्वशगो भवेत् ॥ ५४

यदा शिवाय स्वात्मानं दत्तवान् देशिकात्मने ॥ ५५

तदा शैवो भवेद्देही न ततो ऽस्ति पुनर्भवः ॥ ५५

गुरुश्च स्वाश्रितं शिष्यं वर्षमेकं परीक्षयेत् ॥ ५६

ब्राह्मणं क्षत्रियं वैश्यं द्विवर्षं च त्रिवर्षकम् ॥ ५६

प्राणद्रव्यप्रदानाद्यैरादेशैश्च समासमैः ॥ ५७

उत्तमांश्चाधमे कृत्वा नीचानुत्तमकर्मणि ॥ ५७

आक्रुष्टास्ताडिता वापि ये विषादं न यान्त्यपि ॥ ५८

ते योग्याः संयताः शुद्धाः शिवसंस्कारकर्मणि ॥ ५८

अहिंसका दयावंतो नित्यमुद्युक्तचेतसः ॥ ५९

अमानिनो बुद्धिमंतस्त्यक्तस्पर्धाः प्रियंवदाः ॥ ५९

ऋजवो मृदवः स्वच्छा विनीताः स्थिरचेतसः ॥ ६०

शौचाचारसमायुक्ताः शिवभक्ता द्विजातयः ॥ ६०

एवं वृत्तसमोपेता वाङ्मनःकायकर्मभिः ॥ ६१

शोध्या बोध्या यथान्यायमिति शास्त्रेषु निश्चयः ॥ ६१

नाधिकारः स्वतो नार्याः शिवसंस्कारकर्मणि ॥ ६२

नियोगाद्भर्तुरस्त्येव भक्तियुक्ता यदीश्वरे ॥ ६२

तथैव भर्तृहीनाया पुत्रादेरभ्यनुज्ञया ॥ ६३

अधिकारो भवत्येव कन्यायाः पितुराज्ञया ॥ ६३

शूद्राणां मर्त्यजातीनां पतितानां विशेषतः ॥ ६३

तथा संकरजातीनां नाध्वशुद्धिर्विधीयते ॥ ६४

तैप्यकृत्रिमभावश्चेच्छिवे परमकारणे ॥ ६४

पादोदकप्रदानाद्यैः कुर्युः पापविशोधनम् ॥ ६५

अत्रानुलोमजाता ये युक्ता एव द्विजातिषु ॥ ६५

तेषामध्वविशुद्ध्यादि कुर्यान्मातृकुलोचितम् ॥ ६६

या तु कन्या स्वपित्राद्यैश्शिवधर्मे नियोजिता ॥ ६६

सा भक्ताय प्रदातव्या नापराय विरोधिने ॥ ६७
दत्ता चेत्प्रतिकूलाय प्रमादाद्बोधयेत्पतिम् ॥ ६७
अशक्ता तं परित्यज्य मनसा धर्ममाचरेत् ॥ ६८
यथा मुनिवरं त्यक्त्वा पतिमत्रिं पतिव्रता ॥ ६८
कृतकृत्या ऽभवत्पूर्वं तपसाराध्य शङ्करम् ॥ ६९
यथा नारायणं देवं तपसाराध्य पांडवान् ॥ ६९
पतींल्लब्धवती धर्मे गुरुभिर्न नियोजिता ॥ ७०
अस्वातन्त्र्यकृतो दोषो नेहास्ति परमार्थतः ॥ ७०
शिवधर्मे नियुक्तायाश्शिवशासनगौरवात् ॥ ७१
बहुनात्र किमुक्तेन यो ऽपि को ऽपि शिवाश्रयः ॥ ७१
संस्कार्यो गुर्वधीनश्चेत्संस्क्रिया न प्रभिद्यते ॥ ७२
गुरोरालोकनादेव स्पर्शात्संभाषणादपि ॥ ७२
यस्य संजायते प्रज्ञा तस्य नास्ति पराजयः ॥ ७३
मनसा यस्तु संस्कारः क्रियते योगवर्त्मना ॥ ७३
स नेह कथितो गुह्यो गुरुवक्त्रैकगोचरः ॥ ७४
क्रियावान्यस्तु संस्कारः कुंडमंडपपूर्वकः ॥ ७४
स वक्ष्यते समासेन तस्य शक्यो न विस्तरः ॥ ७४

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे दीक्षाविधाने गुरुमाहात्म्यं नाम पञ्चदशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः १६

https://sa.wikisource.org/s/fwx

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | उत्तर भागः

उपमन्युरुवाच

पुण्ये ऽहनि शुचौ देशे बहुदोषविवर्जिते ॥ ७.२,१६.१

देशिकः प्रथमं कुर्यात्संस्कारं समयाह्वयम् ॥ ७.२,१६.१

परीक्ष्य भूमिं विधिवद्गंधवर्णरसादिभिः ॥ ७.२,१६.२

शिल्पिशास्त्रोक्तमार्गेण मण्डपं तत्र कल्पयेत् ॥ ७.२,१६.२

कृत्वा वेदिं च तन्मध्ये कुण्डानि परिकल्पयेत् ॥ ७.२,१६.३

अष्टदिक्षु तथा दिक्षु तत्रैशान्यां पुनः क्रमात् ॥ ७.२,१६.३

प्रधानकुंडं कुर्वीत यद्वा पश्चिमभागतः ॥ ७.२,१६.४

प्रधानमेकमेवाथ कृत्वा शोभां प्रकल्पयेत् ॥ ७.२,१६.४

वितानध्वजमालाभिर्विविधाभिरनेकशः ॥ ७.२,१६.५

वेदिमध्ये ततः कुर्यान्मंडलं शुभलक्षणम् ॥ ७.२,१६.५

रक्तहेमादिभिश्चूर्णैरीश्वरावाहनोचितम् ॥ ७.२,१६.६

सिंदूरशालिनीवारचूर्णैरेवाथ निर्धनः ॥ ७.२,१६.६

एकहस्तं द्विहस्तं वा सितं वा रक्तमेव वा ॥ ७.२,१६.७

एकहस्तस्य पद्मस्य कर्णिकाष्टांगुला मता ॥ ७.२,१६.७

केसराणि तदर्धानि शेषं चाष्टदलादिकम् ॥ ७.२,१६.८

द्विहस्तस्य तु पद्मस्य द्विगुणं कर्णिकादिकम् ॥ ७.२,१६.८

कृत्वा शोभोपशोभाढ्यमैशान्यां तस्य कल्पयेत् ॥ ७.२,१६.९

एकहस्तं तदर्धं वा पुनर्वेद्यः तु मंडलम् ॥ ७.२,१६.९

व्रीहितंदुलसिद्धार्थतिलपुष्पकुशास्तृते ॥ ७.२,१६.१०

तत्र लक्षणसंयुक्तं शिवकुंभं प्रसाधयेत् ॥ ७.२,१६.१०

सौवर्णं राजतं वापि ताम्रजं मृन्मयं तु वा ॥ ७.२,१६.११

गन्धपुष्पाक्षताकीर्णं कुशदूर्वांकुराचितम् ॥ ७.२,१६.११

सितसूत्रावृतं कंठे नववस्त्रयुगावृतम् ॥ ७.२,१६.१२

शुद्धाम्बुपूर्णमुत्कूर्चं सद्रव्यं सपिधानकम् ॥ ७.२,१६.१२
भृङ्गारं वर्धनीं चापि शंखं च चक्रमेव वा ॥ ७.२,१६.१३
विना सूत्रादिकं सर्वं पद्मपत्रमथापि वा ॥ ७.२,१६.१३
तस्यासनारविंदस्य कल्पयेदुत्तरे दले ॥ ७.२,१६.१४
अग्रतश्चंदनांभोभिरस्त्रराजस्य वर्धनीम् ॥ ७.२,१६.१४
मण्डलस्य ततः प्राच्यां मंत्रकुंभे च पूर्ववत् ॥ ७.२,१६.१५
कृत्वा विधिवदीशस्य महापूजां समाचरेत् ॥ ७.२,१६.१५
अथार्णवस्य तीरे वा नद्यां गोष्ठे ऽपि वा गिरौ ॥ ७.२,१६.१६
देवागरे गृहे वापि देशे ऽन्यस्मिन्मनोहरे ॥ ७.२,१६.१६
कृत्वा पूर्वोदितं सर्वं विना वा मंडपादिकम् ॥ ७.२,१६.१७
मंडलं पूर्ववत्कृत्वा स्थंडिलं च विभावसोः ॥ ७.२,१६.१७
प्रविश्य पूजाभवनं प्रहृष्टवदनो गुरुः ॥ ७.२,१६.१८
सर्वमंगलसंयुक्तः समाचरितनैत्यकः ॥ ७.२,१६.१८
महापूजां महेशस्य कृत्वा मण्डलमध्यतः ॥ ७.२,१६.१९
शिवकुंभे तथा भूयः शिवमावाह्य पूजयेत् ॥ ७.२,१६.१९
पश्चिमाभिमुखं ध्यात्वा यज्ञरक्षकमीश्वरम् ॥ ७.२,१६.२०
अर्चयेदस्त्रवर्धन्यामस्त्रमीशस्य दक्षिणे ॥ ७.२,१६.२०
मन्त्रकुम्भे च विन्यस्य मन्त्रं मन्त्रविशारदः ॥ ७.२,१६.२१
कृत्वा मुद्रादिकं सर्वं मन्त्रयागं समाचरेत् ॥ ७.२,१६.२१
ततश्शिवानले होमं कुर्याद्देशिकसत्तमः ॥ ७.२,१६.२२
प्रधानकुण्डे परितो जुहुयुश्चापरे द्विजाः ॥ ७.२,१६.२२
आचार्यात्पादमर्धं वा होमस्तेषां विधीयते ॥ ७.२,१६.२३
प्रधानकुण्ड एवाथ जुहुयाद्देशिकोत्तमः ॥ ७.२,१६.२३
स्वाध्यायमपरे कुर्युः स्तोत्रं मंगलवाचनम् ॥ ७.२,१६.२४
जपं च विधिवच्चान्ये शिवभक्तिपरायणाः ॥ ७.२,१६.२४
नृत्यं गीतं च वाद्यं च मंगलान्यपराणि च ॥ ७.२,१६.२५
पूजनं च सदस्यानां कृत्वा सम्यग्विधानतः ॥ ७.२,१६.२५
पुण्याहं कारयित्वाथ पुनः संपूज्य शंकरम् ॥ ७.२,१६.२६

प्रार्थयेद्देशिको देवं शिष्यानुग्रहकाम्यया ॥ ७.२,१६.२६

प्रसीद देवदेवेश देहमाविश्य मामकम् ॥ ७.२,१६.२७

विमोचयैनं विश्वेश घृणया च घृणानिधे ॥ ७.२,१६.२७

अथ चैवं करोमीति लब्धानुज्ञस्तु देशिकः ॥ ७.२,१६.२८

आनीयोपोषितं शिष्यं हविष्याशिनमेव वा ॥ ७.२,१६.२८

एकाशनं वा विरतं स्नातं प्रातःकृतक्रियम् ॥ ७.२,१६.२९

जपंतं प्रणवं देवं ध्यायंतं कृतमंगलम् ॥ ७.२,१६.२९

द्वारस्य पश्चिमस्याग्रमण्डले दक्षिणस्य वा ॥ ७.२,१६.३०

दर्भासने समासीनं विधायोदङ्मुखं शिशुम् ॥ ७.२,१६.३०

स्वयं प्राग्वदनस्तिष्ठन्नूर्ध्वकायं कृतांजलिम् ॥ ७.२,१६.३१

संप्रोक्ष्य प्रोक्षणौतोयैर्मूर्धन्यस्त्रेण मुद्रया ॥ ७.२,१६.३१

पुष्पक्षेपेण संताड्य बध्नीयाल्लोचनं गुरुः ॥ ७.२,१६.३२

दुकूलार्धेन वस्त्रेण मंत्रितेन नवेन च ॥ ७.२,१६.३२

ततः प्रवेशयेच्छिष्यं गुरुर्द्वारेण मंडलम् ॥ ७.२,१६.३३

सो ऽपि तेनेरितः शंभोराचरेत्त्रिः प्रदक्षिणम् ॥ ७.२,१६.३३

ततस्सुवर्णसंमिश्रं दत्त्वा पुष्पांजलिं प्रभोः ॥ ७.२,१६.३४

प्राङ्मुखश्चोदङ्मुखो वा प्रणमेद्दंडवत्क्षितो ॥ ७.२,१६.३४

ततस्संप्रोक्ष्य मूलेन शिरस्यस्त्रेण पूर्ववत् ॥ ७.२,१६.३५

संताड्य देशिकस्तस्य मोचयेन्नेत्रबंधनम् ॥ ७.२,१६.३५

स दृष्ट्वा मंडलं भूयः प्रणमेत्साञ्जलिः प्रभुम् ॥ ७.२,१६.३६

अथासीनं शिवाचार्यो मंडलस्य तु दक्षिणे ॥ ७.२,१६.३६

उपवेश्यात्मनस्सव्ये शिष्यं दर्भासने गुरुः ॥ ७.२,१६.३७

आराध्य च महादेवं शिवहस्तं प्रविन्यसेत् ॥ ७.२,१६.३७

शिवतेजोमयं पाणिं शिवमंत्रमुदीरयेत् ॥ ७.२,१६.३८

शिवाभिमानसंपन्नो न्यसेच्छिष्यस्य मस्तके ॥ ७.२,१६.३८

सर्वांगालंबनं चैव कुर्यात्तेनैव देशिकः ॥ ७.२,१६.३९

शिष्यो ऽपि प्रणमेद्भूमौ देशिकाकृतमीश्वरम् ॥ ७.२,१६.३९

ततश्शिवानले देवं समभ्यर्च्य यथाविधि ॥ ७.२,१६.४०

हुताहुतित्रयं शिष्यमुपवेश्य यथा पुरा ॥ ७.२,१६.४०
दर्भाग्रैः संस्पृशंस्तं च विद्ययात्मानमाविशेत् ॥ ७.२,१६.४१
नमस्कृत्य महादेवं नाडीसंधानमाचरेत् ॥ ७.२,१६.४१
शिवशास्त्रोक्तमार्गेण कृत्वा प्राणस्य निर्गमम् ॥ ७.२,१६.४२
शिष्यदेहप्रवेशं च स्मृत्वा मंत्रांस्तु तर्पयेत् ॥ ७.२,१६.४२
संतर्पणाय मूलस्य तेनैवाहुतयो दश ॥ ७.२,१६.४३
देयास्तिस्रस्तथांगानामंगैरेव यथाक्रमम् ॥ ७.२,१६.४३
ततः पूर्णाहुतिं दत्त्वा प्रायश्चित्ताय देशिकः ॥ ७.२,१६.४४
पुनर्दशाहुतीन्कुर्यान्मूलमंत्रेण मंत्रवित् ॥ ७.२,१६.४४
पुनः संपूज्य देवेशं सम्यगाचम्य देशिकः ॥ ७.२,१६.४५
हुत्वा चैव यथान्यायं स्वजात्या वैश्यमुद्धरेत् ॥ ७.२,१६.४५
तस्यैवं जनयेत्क्षात्रमुद्धारं च ततः पुनः ॥ ७.२,१६.४६
कृत्वा तथैव विप्रत्वं जनयेदस्य देशिकः ॥ ७.२,१६.४६
राजन्यं चैवमुद्धृत्य कृत्वा विप्रं पुनस्तयोः ॥ ७.२,१६.४७
रुद्रत्वं जनयेद्विप्रे रुद्रनामैव साधयेत् ॥ ७.२,१६.४७
प्रोक्षणं ताडनं कृत्वा शिशोस्स्वात्मानमात्मनि ॥ ७.२,१६.४८
शिवात्मकमनुस्मृत्य स्फुरंतं विस्फुलिंगवत् ॥ ७.२,१६.४८
नाड्या यथोक्तया वायुं रेचयेन्मंत्रतो गुरुः ॥ ७.२,१६.४९
निर्गम्य प्रविशेन्नाड्या शिष्यस्य हृदयं तथा ॥ ७.२,१६.४९
प्रविश्य तस्य चैतन्यं नीलबिन्दुनिभं स्मरन् ॥ ७.२,१६.५०
स्वतेजसापास्तमलं ज्वलंतमनुचिंतयेत् ॥ ७.२,१६.५०
तमादाय तया नाड्या मंत्री संहारमुद्रया ॥ ७.२,१६.५१
न पूरकेण निवेश्यैनमेकीभावार्थमात्मनः ॥ ७.२,१६.५१
कुंभकेन तथा नाड्या रेचकेन यथा पुरा ॥ ७.२,१६.५२
तस्मादादाय शिष्यस्य हृदये तन्निवेशयेत् ॥ ७.२,१६.५२
तमालभ्य शिवाल्लब्धं तस्मै दत्त्वोपवीतकम् ॥ ७.२,१६.५३
हुत्वा"हुतित्रयं पश्चाद्दद्यात्पूर्णाहुतिं ततः ॥ ७.२,१६.५३
देवस्य दक्षिणे शिष्यमुपवेश्यवरासने ॥ ७.२,१६.५४

कुशपुष्पपरिस्तीर्णे बद्धांजलिरुदङ्मुखम् ॥ ७.२,१६.५४

स्वस्तिकासनमारूढं विधाय प्राङ्मुखः स्वयम् ॥ ७.२,१६.५५

वरासनस्थितो मंत्रैर्महामंगलनिःस्वनैः ॥ ७.२,१६.५५

समादाय घटं पूर्णं पूर्णमेव प्रसादितम् ॥ ७.२,१६.५६

ध्यायमानः शिवं शिष्यमाभिषिंचेत देशिकः ॥ ७.२,१६.५६

अथापनुद्य स्नानांबु परिधाय सितांबरम् ॥ ७.२,१६.५७

आचान्तोलंकृतशिशिष्यः प्रांजलिर्मंडपं व्रजेत् ॥ ७.२,१६.५७

उपवेश्य यथापूर्वं तं गुरुर्दर्भविष्टरे ॥ ७.२,१६.५८

संपूज्य मंडलं देवं करन्यासं समाचरेत् ॥ ७.२,१६.५८

ततस्तु भस्मना देवं ध्यायन्मनसि देशिकः ॥ ७.२,१६.५९

समालभेत पाणिभ्यां शिशुं शिवमुदीरयेत् ॥ ७.२,१६.५९

अथ तस्य शिवाचार्यो दहनप्लावनादिकम् ॥ ७.२,१६.६०

सकलीकरणं कृत्वा मातृकान्यासवर्त्मना ॥ ७.२,१६.६०

ततः शिवासनं ध्यात्वा शिष्यमूर्ध्नि देशिकः ॥ ७.२,१६.६१

तत्रावाह्य यथान्यायमर्चयेन्मनसा शिवम् ॥ ७.२,१६.६१

प्रार्थयेत्प्रांजलिर्देवं नित्यमत्र स्थितो भव ॥ ७.२,१६.६२

इति विज्ञाप्य तं शंभोस्तेजसा भासुरं स्मरेत् ॥ ७.२,१६.६२

संपूज्याथ शिवं शैवीमाज्ञां प्राप्य शिवात्मिकाम् ॥ ७.२,१६.६३

कर्णे शिष्यस्य शनकैश्शिवमन्त्रमुदीरयेत् ॥ ७.२,१६.६३

स तु बद्धांजलिः श्रुत्वा मन्त्रं तद्गतमानसः ॥ ७.२,१६.६४

शनैस्तं व्याहरेच्छिष्यशिवाचार्यस्य शासनात् ॥ ७.२,१६.६४

ततः शाक्तं च संदिश्य मन्त्रं मन्त्रविचक्षणः ॥ ७.२,१६.६५

उच्चारयित्वा च सुखं तस्मै मंगलमादिशेत् ॥ ७.२,१६.६५

ततस्समासान्मन्त्रार्थं वाच्यवाचकयोगतः ॥ ७.२,१६.६६

समदिश्येश्वरं रूपं योगमासनमादिशेत् ॥ ७.२,१६.६६

अथ गुर्वाज्ञया शिष्यः शिवाग्निगुरुसन्निधौ ॥ ७.२,१६.६७

भक्त्यैवमभिसंधाय दीक्षावाक्यमुदीरयेत् ॥ ७.२,१६.६७

वरं प्राणपरित्यागश्छेदनं शिरसो ऽपि वा ॥ ७.२,१६.६८

न त्वनभ्यर्च्य भुंजीय भगवन्तं त्रिलोचनम् ॥ ७.२,१६.६८
स एव दद्यान्नियतो यावन्मोहविपर्ययः ॥ ७.२,१६.६९
तावदाराधयेद्देवं तन्निष्ठस्तत्परायणः ॥ ७.२,१६.६९
ततः स समयो नाम भविष्यति शिवाश्रमे ॥ ७.२,१६.७०
लब्धाधिकारो गुर्वाज्ञापालकस्तद्वशो भवेत् ॥ ७.२,१६.७०
अतः परं न्यस्तकरो भस्मादाय स्वहस्ततः ॥ ७.२,१६.७१
दद्याच्छिष्याय मूलेन रुद्राक्षं चाभिमंत्रितम् ॥ ७.२,१६.७१
प्रतिमा वापि देवस्य गूढदेहमथापि वा ॥ ७.२,१६.७२
पूजाहोमजपध्यानसाधनानि च संभवे ॥ ७.२,१६.७२
सोपि शिष्यः शिवाचार्याल्लब्धानि बहुमानतः ॥ ७.२,१६.७३
आददीताज्ञया तस्य देशिकस्य न चान्यथा ॥ ७.२,१६.७३
आचार्यादाप्तमखिलं शिरस्याधाय भक्तितः ॥ ७.२,१६.७४
रक्षयेत्पूजयेच्छंभुं मठे वा गृह एववा ॥ ७.२,१६.७४
अतः परं शिवाचारमादिशेदस्य देशिकः ॥ ७.२,१६.७५
भक्तिश्रद्धानुसारेण प्रज्ञायाश्चानुसारतः ॥ ७.२,१६.७५
यदुक्तं यत्समाज्ञातं यच्चैवान्यत्प्रकीर्तितम् ॥ ७.२,१६.७६
शिवाचार्येण समये तत्सर्वं शिरसा वहेत् ॥ ७.२,१६.७६
शिवागमस्य ग्रहणं वाचनं श्रवणं तथा ॥ ७.२,१६.७७
देशिकदेशतः कुर्यान्न स्वेच्छातो न चान्यतः ॥ ७.२,१६.७७
इति संक्षेपतः प्रोक्तः संस्कारः समयाह्वयः ॥ ७.२,१६.७८
साक्षाच्छिवपुरप्राप्तौ नृणां परमसाधनम् ॥ ७.२,१६.७८

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखंडे शिष्यसंस्कारवर्णनं नाम षोडशोऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः १७

https://sa.wikisource.org/s/hzn



उपमन्युरुवाच

अतः परं समावेक्ष्य गुरुः शिष्यस्य योग्यताम् ॥ ७.२,१७.१

षडध्वशुद्धिं कुर्वीत सर्वबंधविमुक्तये ॥ ७.२,१७.१

कलां तत्त्वं च भुवनं वर्णं पदमतः परम् ॥ ७.२,१७.२

मंत्रश्चेति समासेन षडध्वा परिपठ्यते ॥ ७.२,१७.२

निवृत्याद्याः कलाः पञ्च कलाध्वा कथ्यते बुधैः ॥ ७.२,१७.३

व्याप्ताः कलाभिरितरे त्वध्वानः पञ्च पञ्चभिः ॥ ७.२,१७.३

शिवतत्त्वादिभूम्यंतं तत्त्वाध्वा समुदाहृतः ॥ ७.२,१७.४

षड्विंशत्संख्ययोपेतः शुद्धाशुद्धोभयात्मकः ॥ ७.२,१७.४

आधाराद्युन्मनांतश्च भुवनाध्वा प्रकीर्तितः ॥ ७.२,१७.५

विना भेदोपभेदाभ्यां षष्टिसंख्यासमन्वितः ॥ ७.२,१७.५

पञ्चाशद्रुद्ररूपास्तु वर्णा वर्णाध्वसंज्ञिताः ॥ ७.२,१७.६

अनेकभेदसंपन्नः पदाध्वा समुदाहृतः ॥ ७.२,१७.६

सर्वोपमंत्रैर्मंत्राध्वा व्याप्तः परमविद्यया ॥ ७.२,१७.७

यथा शिवो न तत्त्वेषु गण्यते तत्त्वनायकः ॥ ७.२,१७.७

मंत्राध्वनि न गण्येत तथासौ मंत्रनायकः ॥ ७.२,१७.८

कलाध्वनो व्यापकत्वं व्याप्यत्वं चेतराध्वनाम् ॥ ७.२,१७.८

न वेत्ति तत्त्वतो यस्य नैवार्हत्यध्वशोधनम् ॥ ७.२,१७.९

षड्विधस्याध्वनो रूपं न येन विदितं भवेत् ॥ ७.२,१७.९

व्याप्यव्यापकता तेन ज्ञातुमेव न शक्यते ॥ ७.२,१७.१०

तस्मादध्वस्वरूपं च व्याप्यव्यापकतां तथा ॥ ७.२,१७.१०

यथावदवगम्यैव कुर्यादध्वविशोधनम् ॥ ७.२,१७.११

कुंडमंडलपर्यंतं तत्र कृत्वा यथा पुरा ॥ ७.२,१७.११

द्विहस्तमानं कुर्वीत प्राच्यां कलशमंडलम् ॥ ७.२,१७.१२

ततः स्नातश्शिवाचार्यः सशिष्यः कृतनैत्यकः ॥ ७.२,१७.१२
प्रविश्य मंडलं शंभोः पूजां पूर्ववदाचरेत् ॥ ७.२,१७.१३
तत्राढकावरैस्सिद्धं तंदुलैः पायसं प्रभोः ॥ ७.२,१७.१३
अर्धं निवेद्य होमार्थं शेषं समुपकल्पयेत् ॥ ७.२,१७.१४
पुरतः कल्पिते वाथ मंडले वर्णिमंडिते ॥ ७.२,१७.१४
स्थापयेत्पञ्चकलशान्दिक्षु मध्ये च देशिकः ॥ ७.२,१७.१५
तेषु ब्रह्माणि मूलार्णैर्बिन्दुनादसमन्वितैः ॥ ७.२,१७.१५
नम आद्यैर्यकरांतैः कल्पयेत्कल्पवित्तमः ॥ ७.२,१७.१६
ईशानं मध्यमे कुंभे पुरुषं पुरतः स्थिते ॥ ७.२,१७.१६
अघोरं दक्षिणे वामे वामं सद्यं च पश्चिमे ॥ ७.२,१७.१७
रक्षां विधाय मुद्रा च बद्ध्वा कुंभाभिमंत्रणम् ॥ ७.२,१७.१७
कृत्वा शिवानलैर्होमं प्रारभेत्यथा पुरा ॥ ७.२,१७.१८
यदर्धं पायसं पूर्वं होमार्थं परिकल्पितम् ॥ ७.२,१७.१८
हुत्वा शिष्यस्य तच्छेषं भोक्तुं समुपकल्पयेत् ॥ ७.२,१७.१९
तर्पणांतं च मंत्राणां कृत्वा कर्म यथा पुरा ॥ ७.२,१७.१९
हुत्वा पूर्णाहुतिं तेषां ततः कुर्यात्प्रदीपनम् ॥ ७.२,१७.२०
ओंकारादनु हुंकारं ततो मूलं फडंतकम् ॥ ७.२,१७.२०
स्वाहांतं दीपने प्राहुरंगानि च यथाक्रमम् ॥ ७.२,१७.२१
तेषामाहुतयस्तिस्रो देया दीपनकर्मणि ॥ ७.२,१७.२१
मंत्रैरेकैकशस्तैस्तु विचिन्त्या दीप्तमूर्तयः ॥ ७.२,१७.२२
त्रिगुणं त्रिगुणी कृत्य द्विजकन्याकृतं सितम् ॥ ७.२,१७.२२
सूत्रं सूत्रेण संमंत्र्य शिखाग्रे बंधयेच्छिशोः ॥ ७.२,१७.२३
चरणांगुष्ठपर्यंतमूर्ध्वकायस्य तिष्ठतः ॥ ७.२,१७.२३
लंबयित्वा तु तत्सूत्रं सुषुम्णां तत्र योजयेत् ॥ ७.२,१७.२४
शांतया मुद्रयादाय मूलमंत्रेण मंत्रवित् ॥ ७.२,१७.२४
हुत्वाहुतित्रयं तस्यास्सान्निध्यमुपकल्पयेत् ॥ ७.२,१७.२५
हृदि संताड्य शिष्यस्य पुष्पक्षेपेण पूर्ववत् ॥ ७.२,१७.२५
चैतन्यं समुपादाय द्वादशांते निवेद्य च ॥ ७.२,१७.२६

सूत्रं सूत्रेण संयोज्य संरक्ष्यास्त्रेण वर्मणा ॥ ७.२,१७.२६

अवगुंठ्याथ तत्सूत्रं शिष्यदेहं विचिंतयेत् ॥ ७.२,१७.२७

मूलत्रयमयं पाशं भोगभोग्यत्वलक्षणम् ॥ ७.२,१७.२७

विषयेन्द्रियदेहादिजनकं तस्य भावयेत् ॥ ७.२,१७.२८

व्योमादिभूतरूपिण्यः शांत्यतीतादयः कलाः ॥ ७.२,१७.२८

सूत्रे स्वनामभिर्योज्यः पूज्यश्चैव नमोयुतैः ॥ ७.२,१७.२९

अथवा बीजभूतैस्तत्कृत्वा पूर्वोदितं क्रमात् ॥ ७.२,१७.२९

ततो मलादेस्तत्त्वादौ व्याप्तिं समलोकयेत् ॥ ७.२,१७.३०

कलाव्याप्तिं मलादौ च हुत्वा संदीपयेत्कलाः ॥ ७.२,१७.३०

शिष्यं शिरसि संताड्य सूत्रं देहे यथाक्रमम् ॥ ७.२,१७.३१

शांत्यतीतपदे सूत्रं लाञ्छयेन्मंत्रमुच्चरन् ॥ ७.२,१७.३१

एवं कृत्वा निवृत्त्यन्तं शांत्यतीतमनुक्रमात् ॥ ७.२,१७.३२

हुत्वाहुतित्रयं पश्चान्मण्डले च शिवं यजेत् ॥ ७.२,१७.३२

देवस्य दक्षिणे शिष्यमुपवेश्योत्तरामुखम् ॥ ७.२,१७.३३

सदर्भे मण्डले दद्याद्धोमशिष्टं चरुं गुरुः ॥ ७.२,१७.३३

शिष्यस्तद्गुरुणा दत्तं सत्कृत्य शिवपूर्वकम् ॥ ७.२,१७.३४

भुक्त्वा पश्चाद्द्विराचम्य शिवमन्त्रमुदीरयेत् ॥ ७.२,१७.३४

अपरे मण्डले दद्यात्पञ्चगव्यं तथा गुरुः ॥ ७.२,१७.३५

सो ऽपि तच्छक्तितः पीत्वा द्विराचम्य शिवं स्मरेत् ॥ ७.२,१७.३५

तृतीये मण्डले शिष्यमुपवेश्य यथा पुरा ॥ ७.२,१७.३६

प्रदद्याद्दंतपवनं यथाशास्त्रोक्तलक्षणम् ॥ ७.२,१७.३६

अग्रेण तस्य मृदुना प्राङ्मुखो वाप्युदङ्मुखः ॥ ७.२,१७.३७

वाचं नियम्य चासीनश्शिष्यो दंतान्विशोधयेत् ॥ ७.२,१७.३७

प्रक्षाल्य दंतपवनं त्यक्त्वाचम्य शिवं स्मरेत् ॥ ७.२,१७.३८

प्रविशेद्देशिकादिष्टः प्रांजलिः शिवमण्डलम् ॥ ७.२,१७.३८

त्यक्तं तद्दन्तपवनं दृश्यते गुरुणा यदि ॥ ७.२,१७.३९

प्रागुदक्पश्चिमे वाग्रे शिवमन्यच्छिवेतरम् ॥ ७.२,१७.३९

अशस्ताशामुखे तस्मिन्गुरुस्तद्दोषशांतये ॥ ७.२,१७.४०

शतमर्धं तदर्धं वाजुहुयान्मूलमन्त्रतः ॥ ७.२,१७.४०

ततः शिष्यं समालभ्य जपित्वा कर्णयोः शिवम् ॥ ७.२,१७.४१

देवस्य दक्षिणे भागे तं शिष्यमधिवासयेत् ॥ ७.२,१७.४१

अहतास्तरणास्तीर्णे स दर्भशयने शुचिः ॥ ७.२,१७.४२

मंत्रिते ऽन्तः शिवं ध्यायञ्शयीत प्राक्छिरा निशि ॥ ७.२,१७.४२

शिखायां बद्धसूत्रस्य शिखया तच्छिखां गुरुः ॥ ७.२,१७.४३

आबध्याहतवस्त्रेण तमाच्छाद्य च वर्मणा ॥ ७.२,१७.४३

रेखात्रयं च परितो भस्मना तिलसर्षपैः ॥ ७.२,१७.४४

कृत्वास्त्रजप्तैस्तद्वाह्ये दिगीशानां बलिं हरेत् ॥ ७.२,१७.४४

शिष्यो ऽपि परतो ऽनश्नन्कृत्वैवमधिवासनम् ॥ ७.२,१७.४५

प्रबुध्योत्थाय गुरवे स्वप्नं दृष्टं निवेदयेत् ॥ ७.२,१७.४५

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवदीक्षाविधानवर्णनं नाम सप्तदशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः १८

https://sa.wikisource.org/s/hzo
< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | उत्तर भागः

उपमन्युरुवाच

ततः स्नानादिकं सर्वं समाप्याचार्यचोदितः ॥ ७.२,१८.१

गच्छेद्बद्धांजलिर्ध्यायञ्छिवमण्डलपार्श्वतः ॥ ७.२,१८.१

अथ पूजां विना सर्वं कृत्वा पूर्वदिने यथा ॥ ७.२,१८.२

नेत्रबंधनपर्यंतं दर्शयेन्मण्डलं गुरुः ॥ ७.२,१८.२

बद्धनेत्रेण शिष्येण पुष्पावकिरणे कृते ॥ ७.२,१८.३

यत्रापतंति पुष्णाणि तस्य नामा ऽस्य संदिशेत् ॥ ७.२,१८.३

तं चोपनीय निर्माल्यमण्डले ऽस्मिन्यथा पुरा ॥ ७.२,१८.४

पूजयेद्देवमीशानं जुहुयाच्च शिवानले ॥ ७.२,१८.४

शिष्येण यदि दुःस्वप्नो दृष्टस्तद्दोषशांतये ॥ ७.२,१८.५

शतमर्धं तदर्धं वा जुहुयान्मूलविद्यया ॥ ७.२,१८.५

ततः सूत्रं शिखाबद्धं लंबयित्वा यथा पुरा ॥ ७.२,१८.६

आधारपूजाप्रभृति यन्निवृत्तिकलाश्रयम् ॥ ७.२,१८.६

वागीश्वरीपूजनांतं कुर्याद्धोमपुरस्सरम् ॥ ७.२,१८.७

अथ प्रणम्य वागीशं निवृत्तेर्व्यापिकां सतीम् ॥ ७.२,१८.७

मण्डले देवमभ्यर्च्य हुत्वा चैवाहुतित्रयम् ॥ ७.२,१८.८

प्रापयेच्च शिशोः प्राप्तिं युगपत्सर्वयोनिषु ॥ ७.२,१८.८

सूत्रदेहे ऽथ शिष्यस्य ताडनप्रोक्षणादिकम् ॥ ७.२,१८.९

कृत्वात्मानं समादाय द्वादशांते निवेद्य च ॥ ७.२,१८.९

ततो ऽप्यादाय मूलेन मुद्रया शास्त्रदृष्टया ॥ ७.२,१८.१०

योजयेन्मनसाचार्यो युगपत्सर्वयोनिषु ॥ ७.२,१८.१०

देवानां जातयश्चाष्टौ तिरश्चां पञ्च जातयः ॥ ७.२,१८.११

जात्यैकया च मानुष्या योनयश्च चतुर्दश ॥ ७.२,१८.११

तासु सर्वासु युगपत्प्रवेशाय शिशोर्धिया ॥ ७.२,१८.१२

वागीशान्यां यथान्यायं शिष्यात्मानं निवेशयेत् ॥ ७.२,१८.१२
गर्भनिष्पत्तये देवं संपूज्य प्रणिपत्य च ॥ ७.२,१८.१३
हुत्वा चैव यथान्यायं निष्पन्नं तदनुस्मरेत् ॥ ७.२,१८.१३
निष्पन्नस्यैवमुत्पत्तिमनुवृत्तिं च कर्मणा ॥ ७.२,१८.१४
आर्जवं भोगनिष्पत्तिः कुर्यात्प्रीतिं परां तथा ॥ ७.२,१८.१४
निष्कृत्यर्थं च जात्यायुर्भोगसंस्कारसिद्धये ॥ ७.२,१८.१५
हुत्वाहुतित्रयं देवं प्रार्थयेद्देशिकोत्तमः ॥ ७.२,१८.१५
भोक्तृत्वविषयासंगमलं तत्कायशोधनम् ॥ ७.२,१८.१६
कृत्वैवमेव शिष्यस्य छिंद्यात्पाशत्रयं ततः ॥ ७.२,१८.१६
निकृत्या परि बद्धस्य पाशस्यात्यंतभेदतः ॥ ७.२,१८.१७
कृत्वा शिष्यस्य चैतन्यं स्वच्छं मन्येत केवलम् ॥ ७.२,१८.१७
हुत्वा पूर्णाहुतिं वह्नौ ब्रह्माणं पूजयेत्ततः ॥ ७.२,१८.१८
हुत्वाहुतित्रयं तस्मै शिवाज्ञामनुसंदिशेत् ॥ ७.२,१८.१८
पितामह त्वया नास्य यातुः शैवं परं पदम् ॥ ७.२,१८.१९
प्रतिबन्धो विधातव्यः शैवाज्ञैषा गरीयसी ॥ ७.२,१८.१९
इत्यादिश्य तमभ्यर्च्य विसृज च विधानतः ॥ ७.२,१८.२०
समभ्यर्च्य महादेवं जुहुयादाहुतित्रयम् ॥ ७.२,१८.२०
निवृत्त्या शुद्धमुद्धृत्य शिष्यात्मानं यथा पुरा ॥ ७.२,१८.२१
निवेश्यात्मनि सूत्रे च वागीशं पूजयेत्ततः ॥ ७.२,१८.२१
हुत्वाहुतित्रयं तस्मै प्रणम्य च विसृज्य ताम् ॥ ७.२,१८.२२
कुर्यान्निवृत्तः संधानं प्रतिष्ठां कलया सह ॥ ७.२,१८.२२
संधाने युगपत्पूजां कृत्वा हुत्वाहुतित्रयम् ॥ ७.२,१८.२३
शिष्यात्मनः प्रतिष्ठायां प्रवेशं त्वथ भावयेत् ॥ ७.२,१८.२३
ततः प्रतिष्ठामावाह्य कृत्वाशेषं पुरोदितम् ॥ ७.२,१८.२४
तद्व्याप्तिं व्यापिकां तस्य वागीशानीं च भावयेत् ॥ ७.२,१८.२४
पूर्णेदुमंडलप्रख्यां कृत्वा शेषं च पूर्ववत् ॥ ७.२,१८.२५
विष्णवे संविशेदाज्ञां शिवस्य परमात्मनः ॥ ७.२,१८.२५
विष्णोर्विसर्जनाद्यं च कृत्वा शेषं च विद्यया ॥ ७.२,१८.२६

प्रतिष्ठामनुसंधाय तस्यां चापि यथा पुरा ॥ ७.२,१८.२६
कृत्वानुचिन्त्य तद्व्याप्तिं वागीशां च यथाक्रमम् ॥ ७.२,१८.२७
दीप्ताग्नौ पूर्णहोमान्तं कृत्वा शेषं च पूर्ववत् ॥ ७.२,१८.२७
नीलरुद्रमुपस्थाप्य तस्मै पूजादिकं तथा ॥ ७.२,१८.२८
कृत्वा कर्म शिवाज्ञां च दद्यात्पूर्वोक्तवर्त्मना ॥ ७.२,१८.२८
तपस्तमपि चोद्वास्य कृत्वा तस्याथ शांतये ॥ ७.२,१८.२९
विद्याकलां समाधाय तद्व्याप्तिं चावलोकयेत् ॥ ७.२,१८.२९
स्वात्मनो व्यापिकां तद्वद्वागीशीं च यथा पुरा ॥ ७.२,१८.३०
बालार्कसदृशाकारां भासयंतीं दिशो दश ॥ ७.२,१८.३०
ततः शेषं यथापूर्वं कृत्वा देवं महेश्वरम् ॥ ७.२,१८.३१
आवाह्याराध्य हुत्वास्मै शिवाज्ञां मनसा दिशेत् ॥ ७.२,१८.३१
महेश्वरं तथोत्सृज्य कृत्वान्यां च कलामिमाम् ॥ ७.२,१८.३२
शांत्यतीतां कलां नीत्वा तद्व्याप्तिमवलोकयेत् ॥ ७.२,१८.३२
स्वात्मनो व्यापिकां तद्वद्वागीशां च विचिंतयेत् ॥ ७.२,१८.३३
नभोमंडलसंकाशां पूर्णांतं चापि पूर्ववत् ॥ ७.२,१८.३३
कृत्वा शेषविधानेन समभ्यर्च्य सदाशिवम् ॥ ७.२,१८.३४
तस्मै समादिशेदाज्ञां शंभोरमितकर्मणः ॥ ७.२,१८.३४
तत्रापि च यथापूर्वं शिवं शिरसि पूर्ववत् ॥ ७.२,१८.३५
समभ्यर्च्य च वागीशं प्रणम्य च विसर्जयेत् ॥ ७.२,१८.३५
ततश्शिवेन सम्प्रोक्ष्य शिष्यं शिरसि पूर्ववत् ॥ ७.२,१८.३६
विलयं शांत्यतीतायाः शक्तितत्त्वे ऽथ चिंतयेत् ॥ ७.२,१८.३६
षडध्वनः परे पारे सर्वाध्वव्यापिनी पराम् ॥ ७.२,१८.३७
कोटिसूर्यप्रतीकाशं शैवीं शक्तिञ्च चिन्तयेत् ॥ ७.२,१८.३७
तदग्रे शिष्यमानीय शुद्धस्फटिकनिर्मलम् ॥ ७.२,१८.३८
प्रक्षाल्य कर्तरीं पश्चाच्छिवशास्त्रोक्तमार्गतः ॥ ७.२,१८.३८
कुर्यात्तस्य शिखाच्छेदं सह सूत्रेण देशिकः ॥ ७.२,१८.३९
ततस्तां गोमये न्यस्य शिवाग्नौ जुहुयाच्छिखाम् ॥ ७.२,१८.३९
वौषडंतेन मूलेन पुनः प्रक्षाल्य कर्तरीम् ॥ ७.२,१८.४०

हस्ते शिष्यस्य चैतन्यं तद्देहे विनिवर्तयेत् ॥ ७.२,१८.४०
ततः स्नातं समाचांतं कृतस्वस्त्ययनं शिशुम् ॥ ७.२,१८.४१
प्रवेश्य मंडलाभ्यासं प्रणिपत्य च दंडवत् ॥ ७.२,१८.४१
पूजां कृत्वा यथान्यायं क्रियावैकल्यशुद्धये ॥ ७.२,१८.४२
वाचकेनैव मंत्रेण जुहुयादाहुतित्रयम् ॥ ७.२,१८.४२
उपांशूच्चारयोगेन जुहुयादाहुतित्रयम् ॥ ७.२,१८.४३
पुनस्संपूज्य देवेशं मन्त्रवैकल्यशुद्धये ॥ ७.२,१८.४३
मानसोच्चारयोगेन जुहुयादाहुतित्रयम् ॥ ७.२,१८.४४
तत्र शंभुं समाराध्य मंडलस्थं सहांबया ॥ ७.२,१८.४४
हुत्वाहुतित्रयं पश्चात्प्रार्थयेत्प्रांजलिर्गुरुः ॥ ७.२,१८.४४
भगवंस्त्वत्प्रसादेन शुद्धिरस्य षडध्वनः ॥ ७.२,१८.४५
कृता तस्मात्परं धाम गमयैनं तवाव्ययम् ॥ ७.२,१८.४५
इति विज्ञाप्य देवाय नाडीसंधानपूर्वकम् ॥ ७.२,१८.४६
पूर्णांतं पूर्ववत्कृत्वा ततो भूतानि शोधयेत् ॥ ७.२,१८.४६
स्थिरास्थिरे ततः शुद्ध्यै शीतोष्णे च ततः पदे ॥ ७.२,१८.४७
ध्यायेद्व्यास्यैकताकारे भूतशोधनकर्मणि ॥ ७.२,१८.४७
भूतानां ग्रंथिविच्छेदं कृत्वा त्यक्त्वा सहाधिपैः ॥ ७.२,१८.४८
भूतानि स्थितयोगेन यो जपेत्परमे शिवे ॥ ७.२,१८.४८
विशोध्यास्य तनुं दग्ध्वा प्लावयित्वा सुधाकणैः ॥ ७.२,१८.४९
स्थाप्यात्मानं ततः कुर्याद्विशुद्धाध्वमयं वपुः ॥ ७.२,१८.४९
तत्रादौ शान्त्यतीतां तु व्यापिकां स्वाध्वनः कलाम् ॥ ७.२,१८.५०
शुद्धामेव शिशोर्मूर्ध्नि न्यसेच्छान्तिमुखे तथा ॥ ७.२,१८.५०
विद्यां गलादिनाभ्यंतं प्रतिष्ठां तदधः क्रमात् ॥ ७.२,१८.५१
जान्वंतं तदधो न्यस्येन्निवृत्तिं चानुचिंतयेत् ॥ ७.२,१८.५१
स्वबीजैस्सूत्रमंत्रं च न्यस्यां गैस्तं शिवात्मकम् ॥ ७.२,१८.५२
बुद्ध्वा तं हृदयांभोजे देवमावाह्य पूजयेत् ॥ ७.२,१८.५२
आशास्य नित्यसांनिध्यं शिवस्वात्म्यं शिशौ गुरुः ॥ ७.२,१८.५३
शिवतेजोमयस्यास्य शिशोरापादयेद्गुणान् ॥ ७.२,१८.५३

अणिमादीन्प्रसीदेति प्रदद्यादाहुतित्रयम् ॥ ७.२,१८.५४
तथैव तु गुणानेव पुनरस्योपपादयेत् ॥ ७.२,१८.५४
सर्वज्ञातां तथा तृप्तिं बोधं चाद्यन्तवर्जितम् ॥ ७.२,१८.५५
अलुप्तशक्तिं स्वातन्त्र्यमनंतां शक्तिमेव च ॥ ७.२,१८.५५
ततो देवमनुज्ञाप्य सद्यादिकलशैस्तु तम् ॥ ७.२,१८.५६
अभिषिंचेत देवेशं ध्यायन्हृदि यथाक्रमम् ॥ ७.२,१८.५६
अथोपवेश्य तं शिष्यं शिवमभ्यर्च्य पूर्ववत् ॥ ७.२,१८.५७
लब्धानुज्ञः शिवाच्छैवीं विद्यामस्मै समादिशेत् ॥ ७.२,१८.५७
ओंकारपूर्विकां तत्र संपुटान्तु नमो ऽंतगाम् ॥ ७.२,१८.५८
शिवशक्तियुताञ्चैव शक्तिविद्यां च तादृशीम् ॥ ७.२,१८.५८
ऋषिं छन्दश्च देवं च शिवतां शिवयोस्तथा ॥ ७.२,१८.५९
पूजां सावरणां शम्भोरासनानि च सन्दिशेत् ॥ ७.२,१८.५९
पुनः संपूज्य देवेशं यन्मया समनुष्ठितम् ॥ ७.२,१८.६०
सुकृतं कुरु तत्सर्वमिति विज्ञापयेच्छिवम् ॥ ७.२,१८.६०
सहशिष्यो गुरुर्देवं दण्डवत्क्षितिमंडले ॥ ७.२,१८.६१
प्रणम्योद्वासयेत्तस्मान्मंडलात्पावकादपि ॥ ७.२,१८.६१
ततः सदसिकाः सर्वे पूज्याः पूजार्हकाः क्रमात् ॥ ७.२,१८.६२
सेव्या वित्तानुसारेण सदस्याश्च सहर्त्विजः ॥ ७.२,१८.६३
वित्तशाठ्यं न कुर्वीत यदीच्छेच्छिवमात्मनः ॥ ७.२,१८.६३

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे षडध्वशुद्ध्यादिकथनं नामाष्टादशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः १९

https://sa.wikisource.org/s/hzp



उपमन्युरुवाच

अतः परं प्रवक्ष्यामि साधकं नाम नामतः ॥ ७.२,१९.१

संस्कारमन्त्रमाहात्म्यं कथने सूचितं मया ॥ ७.२,१९.१

संपूज्य मंडले देवं स्थाप्य कुम्भे च पूर्ववत् ॥ ७.२,१९.२

हुत्वा शिष्यमनुष्णीषं प्रापयेद्भुवि मंडले ॥ ७.२,१९.२

पूर्वांतं पूर्ववत्कृत्वा हुत्वाहुतिशतं तथा ॥ ७.२,१९.३

संतर्प्य मूलमन्त्रेण कलशैर्देशिकोत्तमः ॥ ७.२,१९.३

सन्दीप्य च यथापूर्वं कृत्वा पूर्वोदितं क्रमात् ॥ ७.२,१९.४

अभिषिच्य यथापूर्वं प्रदद्यान्मन्त्रमुत्तमम् ॥ ७.२,१९.४

तत्र विद्योपदेशांतं कृत्वा विस्तरशः क्रमात् ॥ ७.२,१९.५

पुष्पाम्बुना शिशोः पाणौ विद्यां शैवीं समर्पयेत् ॥ ७.२,१९.५

तवैहिकामुष्मिकयोः सर्वसिद्धिफलप्रदः ॥ ७.२,१९.६

भवत्येव महामन्त्रः प्रसादात्परमेष्ठिनः ॥ ७.२,१९.६

इत्युत्वा देवमभ्यर्च्य लब्धानुज्ञः शिवाद्गुरुः ॥ ७.२,१९.७

साधनं शिवयोगं च साधकाय समादिशेत् ॥ ७.२,१९.७

तच्छ्रुत्वा गुरुसंदेशं क्रमशो मंत्रसाधकः ॥ ७.२,१९.८

पुरतो विनियोगस्य मन्त्रसाधनमाचरेत् ॥ ७.२,१९.८

साधनं मूलमन्त्रस्य पुरश्चरणमुच्यते ॥ ७.२,१९.९

पुरतश्चरणीयत्वाद्विनियोगाख्यकर्मणः ॥ ७.२,१९.९

नात्यन्तं करणीयन्तु मुमुक्षोर्मन्त्रसाधनम् ॥ ७.२,१९.१०

कृतन्तु तदिहान्यत्र तास्यापि शुभदं भवेत् ॥ ७.२,१९.१०

शुभे ऽहनि शुभे देशे काले वा दोषवर्जिते ॥ ७.२,१९.११

शुक्लदन्तनखः स्नातः कृतपूर्वाह्णिकक्रियः ॥ ७.२,१९.११

अलंकृत्य यथा लब्धैर्गंधमाल्यविभूषणैः ॥ ७.२,१९.१२

सोष्णीषः सोत्तरासंगः सर्वशुक्लसमाहितः ॥ ७.२,१९.१२
देवालये गृहे ऽन्यस्मिन्देशे वा सुमनोहरे ॥ ७.२,१९.१३
सुखेनाभ्यस्तपूर्वेण त्वासनेन कृतासनः ॥ ७.२,१९.१३
तनुं कृत्वात्मनः शैवीं शिवशास्त्रोक्तवर्त्मना ॥ ७.२,१९.१४
संपूज्य देवदेवेशं नकुलीश्वरमीश्वरम् ॥ ७.२,१९.१४
निवेद्य पायसं तस्मै समप्याराधनं क्रमात् ॥ ७.२,१९.१५
प्रणिपत्य च तं देवं प्राप्तानुज्ञश्च तन्मुखात् ॥ ७.२,१९.१५
कोटिवारं तदर्धं वा तदर्धं वा जपेच्छिवम् ॥ ७.२,१९.१६
लक्षविंशतिकं वापि दशलक्षमथापि वा ॥ ७.२,१९.१६
ततश्च पायसाक्षारलवणैकमिताशनः ॥ ७.२,१९.१७
अहिंसकः क्षमी शांतो दांतश्चैव सदा भवेत् ॥ ७.२,१९.१७
अलाभे पायसस्याश्नन्फलमूलादिकानि वा ॥ ७.२,१९.१८
विहितानि शिवेनैव विशिष्टान्युत्तरोत्तरम् ॥ ७.२,१९.१८
चरुं भक्ष्यमथो सक्तुकणान्यावकमेव च ॥ ७.२,१९.१९
शाकं पयो दधि घृतं मूलं फलमथोदकम् ॥ ७.२,१९.१९
अभिमंत्र्य च मन्त्रेण भक्ष्यभोज्यादिकानि च ॥ ७.२,१९.२०
साधने ऽस्मिन्विशेषेण नित्यं भुञ्जीत वाग्यतः ॥ ७.२,१९.२०
मन्त्राष्टशतपूतेन जलेन शुचिना व्रती ॥ ७.२,१९.२१
स्नायान्नदीनदोत्थेन प्रोक्षयेद्वाथ शक्तितः ॥ ७.२,१९.२१
तर्पयेच्च तथा नित्यं जुहुयाच्च शिवानले ॥ ७.२,१९.२२
सप्तभिः पञ्चभिर्द्रव्यैस्त्रिभिर्वाथ घृतेन वा ॥ ७.२,१९.२२
इत्थं भक्त्या शिवं शैवो यः साधयति साधकः ॥ ७.२,१९.२३
तस्येहामुत्र दुष्प्रापं न किंचिदपि विद्यते ॥ ७.२,१९.२३
अथवा ऽहरहर्मंत्रं जपेदेकाग्रमानसः ॥ ७.२,१९.२४
अनश्नन्नेव साहस्रं विना मन्त्रस्य साधनम् ॥ ७.२,१९.२४
न तस्य दुर्लभं किंचिन्न तस्यास्त्यशुभं क्वचित् ॥ ७.२,१९.२५
इह विद्यां श्रियं सौख्यं लब्ध्वा मुक्तिं च विंदति ॥ ७.२,१९.२५
साधने विनियोगे च नित्ये नैमित्तिके तथा ॥ ७.२,१९.२६

जपेज्जलैर्भस्मना च स्नात्वा मन्त्रेण च क्रमात् ॥ ७.२,१९.२६
शुचिर्बद्धशिखस्सूत्री सपवित्रकरस्तथा ॥ ७.२,१९.२७
धृतत्रिपुंड्ररुद्राक्षो विद्यां पञ्चाक्षरीं जपेत् ॥ ७.२,१९.२७

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखंडे साधकसंस्कारमन्त्रमाहात्म्यं नामैकोनविंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः २०

https://sa.wikisource.org/s/fwy

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | उत्तर भागः

उपमन्युरुवाच

अथैवं संस्कृतं शिष्यं कृतपाशुपतव्रतम् ॥ ७.२,२०.१

आचार्यत्वे ऽभिषिंचेत तद्योगत्वेन चान्यथा ॥ ७.२,२०.१

मण्डलं पूर्ववत्कृत्वा संपूज्य परमेश्वरम् ॥ ७.२,२०.२

स्थापयत्पञ्चकलशान्दिक्षु मध्ये च पूर्ववत् ॥ ७.२,२०.२

निवृत्तिं पुरतो न्यस्य प्रतिष्ठां पश्चिमे घटे ॥ ७.२,२०.३

विद्यां दक्षिणतः शांतिमुत्तरे मध्यतः पराम् ॥ ७.२,२०.३

कृत्वा रक्षादिकं तत्र बद्ध्वा मुद्रां च धैनवीम् ॥ ७.२,२०.४

अभिमंत्र्य घटान्हुत्वा पूर्णांतं च यथा पुरा ॥ ७.२,२०.४

प्रवेश्य मंडले शिष्यमनुष्णीषं च देशिकः ॥ ७.२,२०.५

तर्पणाद्यं तु मंत्राणां कुर्यात्पूर्वावसानकम् ॥ ७.२,२०.५

ततः संपूज्य देवेशमनुज्ञाप्य च पूर्ववत् ॥ ७.२,२०.६

अभिषेकाय तं शिष्यमासनं त्वधिरोहयेत् ॥ ७.२,२०.६

सकलीकृत्य तं पश्चात्कलापञ्चकरूपिणम् ॥ ७.२,२०.७

न्यस्तमंत्रतनुं बद्ध्वा शिवं शिष्यं समर्पयेत् ॥ ७.२,२०.७

ततो निवृत्तिकुंभादिघटानुद्धृत्य वै क्रमात् ॥ ७.२,२०.८

मध्यमान्ताच्छिवेनैव शिष्यं तमभिषेचयत् ॥ ७.२,२०.८

शिवहस्तं समर्प्याथ शिशोः शिरसि देशिकः ॥ ७.२,२०.९

शिवभावसमापन्नः शिवाचार्यं तमादिशेत् ॥ ७.२,२०.९

अथालंकृत्य तं देवमाराध्य शिवमण्डले ॥ ७.२,२०.१०

शतमष्टोत्तरं हुत्वा दद्यात्पूर्णाहुतिं ततः ॥ ७.२,२०.१०

पुनः सम्पूज्य देवेशं प्रणम्य भुवि दंडवत् ॥ ७.२,२०.११

शिरस्यंजलिमाधाय शिवं विज्ञापयेद्गुरुः ॥ ७.२,२०.११

भगवंस्त्वत्प्रसादेन देशिको.यं मया कृतः ॥ ७.२,२०.१२

अनुगृह्य त्वया देव दिव्याज्ञास्मै प्रदीयताम् ॥ ७.२,२०.१२
एवं विज्ञाप्य शिष्येण सह भूयः प्रणम्य च ॥ ७.२,२०.१३
शिवं शिवागमं दिव्यं पूजयेच्छिववद्गुरुः ॥ ७.२,२०.१३
पुनः शिवमनुज्ञाप्य शिवज्ञानस्य पुस्तकम् ॥ ७.२,२०.१४
उभाभ्यामथ पाणिभ्यां दद्याच्छिष्याय देशिकः ॥ ७.२,२०.१४
स ताम्मूर्ध्नि समाधाय विद्यां विद्यासनोपरि ॥ ७.२,२०.१५
अधिरोप्य यथान्यायमभिवंद्य समर्चयेत् ॥ ७.२,२०.१५
अथ तस्मै गुरुर्दद्याद्राजोपकरणान्यपि ॥ ७.२,२०.१६
आचार्यपदवीं प्राप्तो राज्यं चापि यतो ऽर्हति ॥ ७.२,२०.१६
अथानुशासनं कुर्यात्पूर्वैराचरितं यथा ॥ ७.२,२०.१७
यथा च शिवशास्त्रोक्तं यथा लोकेषु पूज्यते ॥ ७.२,२०.१७
शिष्यान्परिक्ष्य यत्नेन शिवशास्त्रोक्तलक्षणैः ॥ ७.२,२०.१८
संस्कृत्य च शिवज्ञानं तेभ्यो दद्याच्च देशिकः ॥ ७.२,२०.१८
एवं सर्वमनायासं शौचं क्षांतिं दयां तथा ॥ ७.२,२०.१९
अस्पृहामप्यसूयां च यत्नेन च विभावयेत् ॥ ७.२,२०.१९
इत्थमादिश्य तं शिष्यं शिवमुद्वास्य मंडलात् ॥ ७.२,२०.२०
शिवकुंभानलादींश्च सदस्यानपि पूजयेत् ॥ ७.२,२०.२०
युगपद्वाथ संस्कारान्कुर्वीत सगणो गुरुः ॥ ७.२,२०.२१
तत्र यत्र द्वयं वापि प्रयोगस्योपदिश्यते ॥ ७.२,२०.२१
तदादावेव कलशान्कल्पयेदध्वशुद्धिवत् ॥ ७.२,२०.२२
कृत्वा समयसंस्कारमभिषेकं विनाखिलम् ॥ ७.२,२०.२२
समभ्यर्च्य शिवं भूयः कृत्वा चाध्वविशोधनम् ॥ ७.२,२०.२३
तस्मिन्परिसमाप्ते तु पुनर्देवं प्रपूजयेत् ॥ ७.२,२०.२३
हुत्वा मंत्रन्तु संतर्प्य संदीप्याशास्य चेश्वरम् ॥ ७.२,२०.२४
समर्प्य मंत्रं शिष्यस्य पाणौ शेषं समापयेत् ॥ ७.२,२०.२४
अथवा मंत्रसंस्कारमनुचिंत्याखिलं क्रमात् ॥ ७.२,२०.२५
अध्वशुद्धिं गुरुः कुर्यादभिषेकावसानिकम् ॥ ७.२,२०.२५
तत्र यः शान्त्यतीतादिकलासु विहितो विधिः ॥ ७.२,२०.२६

स सर्वो ऽपि विधातव्यस्तत्त्वत्रयविशोधने ॥ ७.२,२०.२६

शिवविद्यात्मतत्त्वाख्यं तत्त्वत्रयमुदाहृतम् ॥ ७.२,२०.२७

शक्तौ शिवस्ततो विद्यात्तस्यास्त्वात्मा समुद्बभौ ॥ ७.२,२०.२७

शिवेन शांत्यतीताध्वा व्याप्तस्तदपरः परः ॥ ७.२,२०.२८

विद्यया परिशिष्टो ऽध्वा ह्यात्मना निखिलः क्रमात् ॥ ७.२,२०.२८

दुर्लभं शांभवं मत्वा मंत्रमूलं मनीषिणः ॥ ७.२,२०.२९

शाक्तं शंसीत संस्कारं शिवशास्त्रार्थपारगाः ॥ ७.२,२०.२९

इति ते सर्वमाख्यातं संस्काराख्यस्य कर्मणः ॥ ७.२,२०.३०

चातुर्विध्यमिदं कृष्ण किं भूय श्रोतुमिच्छसि ॥ ७.२,२०.३०

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे विशेषादिसंस्कृतिर्नाम विंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः २१

https://sa.wikisource.org/s/hzq



कृष्ण उवाच

भगवञ्छ्रोतुमिच्छामि शिवाश्रमनिषेविणाम् ॥ ७.२,२१.१

शिवशास्त्रोदितं कर्म नित्यनैमित्तिकं तथा ॥ ७.२,२१.१

उपमन्युरुवाच

प्रातरुत्थाय शयनाद्ध्यात्वा देवं सहाम्बया ॥ ७.२,२१.२

विचार्य कार्यं निर्गच्छेद्गृहादभ्युदिते ऽरुणे ॥ ७.२,२१.२

अबाधे विजने देशे कुर्यादावश्यकं ततः ॥ ७.२,२१.३

कृत्वा शौचं विधानेन दंतधावनमाचरेत् ॥ ७.२,२१.३

अलाभे दंतकाष्ठानामष्टम्यादिदिनेषु च ॥ ७.२,२१.४

अपां द्वादशगण्डूषैः कुर्यादास्यविशोधनम् ॥ ७.२,२१.४

आचम्य विधिवत्पश्चाद्वारुणं स्नानमाचरेत् ॥ ७.२,२१.५

नद्यां वा देवखाते वा ह्रदे वाथ गृहे ऽपि वा ॥ ७.२,२१.५

स्नानद्रव्याणि तत्तीरे स्थापयित्वा बहिर्मलम् ॥ ७.२,२१.६

व्यापोह्य मृदमालिप्य स्नात्वा गोमयमालिपेत् ॥ ७.२,२१.६

स्नात्वा पुनः पुनर्वस्त्रं त्यक्त्वावाथ विशोध्य च ॥ ७.२,२१.७

सुस्नातो नृपवद्भूयः शुद्धं वासो वसीत च ॥ ७.२,२१.७

मलस्नानं सुगंधाद्यैः स्नानं दन्तविशोधनम् ॥ ७.२,२१.८

न कुर्याद्ब्रह्मचारी च तपस्वी विधवा तथा ॥ ७.२,२१.८

सोपवीतश्शिखां बद्धा प्रविश्य च जलांतरम् ॥ ७.२,२१.९

अवगाह्य समाचांतो जले न्यस्येत्त्रिमंडलम् ॥ ७.२,२१.९

सौम्ये मग्नः पुनर्मंत्रं जपेच्छक्त्या शिवं स्मरेत् ॥ ७.२,२१.१०

उत्थायाचम्य तेनैव स्वात्मानमभिषेचयेत् ॥ ७.२,२१.१०

गोशृंगेण सदर्भेण पालाशेन दलेन वा ॥ ७.२,२१.११

पाद्मेन वाथ पाणिभ्यां पञ्चकृत्वस्त्रिरेव वा ॥ ७.२,२१.११

उद्यानादौ गृहे चैव वर्धन्या कलशेन वा ॥ ७.२,२१.१२
अवगाहनकाले ऽद्भिर्मंत्रितैरभिषेचयेत् ॥ ७.२,२१.१२
अथ चेद्वारुणं कर्तुमशक्तः शुद्धवाससा ॥ ७.२,२१.१३
आर्द्रेण शोधयेद्देहमापादतलमस्तकम् ॥ ७.२,२१.१३
आग्नेयं वाथ वा मांत्रं कुर्यात्स्नानं शिवेन वा ॥ ७.२,२१.१४
शिवचिंतापरं स्नानं युक्तस्यात्मीयमुच्यते ॥ ७.२,२१.१४
स्वसूत्रोक्तविधानेन मंत्राचमनपूर्वकम् ॥ ७.२,२१.१५
आचरेद्ब्रह्मयज्ञांतं कृत्वा देवादितर्पणम् ॥ ७.२,२१.१५
मंडलस्थं महादेवं ध्यात्वाभ्यर्च्य यथाविधि ॥ ७.२,२१.१६
दद्यादर्घ्यं ततस्तस्मै शिवायादित्यरूपिणे ॥ ७.२,२१.१६
अथ वैतत्स्वसूत्रोक्तं कृत्वा हस्तौ विशोधयेत् ॥ ७.२,२१.१७
करन्यासं ततः कृत्वा सकलीकृतविग्रहः ॥ ७.२,२१.१७
वामहस्तगतांभोभिर्गंधसिद्धार्थकान्वितैः ॥ ७.२,२१.१८
कुशपुंजेन वाभ्युक्ष्य मूलमंत्रसमन्वितैः ॥ ७.२,२१.१८
आपोहिष्ठादिभिर्मन्त्रैः शेषमाघ्राय वै जलम् ॥ ७.२,२१.१९
वामनासापुटेनैव देवं संभावयेत्सितम् ॥ ७.२,२१.१९
अर्घमादाय देहस्थं सव्यनासापुटेन च ॥ ७.२,२१.२०
कृष्णवर्णेन बाह्यस्थं भावयेच्च शिलागतम् ॥ ७.२,२१.२०
तर्पयेदथ देवेभ्य ऋषिभिश्च विशेषतः ॥ ७.२,२१.२१
भूतेभ्यश्च पितृभ्यश्च दद्यादर्घ्यं यथाविधि ॥ ७.२,२१.२१
रक्तचंदनतोयेन हस्तमात्रेण मंडलम् ॥ ७.२,२१.२२
सुवृत्तं कल्पयेद्भूमौ रक्तचूर्णाद्यलंकृतम् ॥ ७.२,२१.२२
तत्र संपूजयेद्भानुं स्वकीयावरणैः सह ॥ ७.२,२१.२३
स्वखोल्कायेति मंत्रेण सांगतस्सुखसिद्धये ॥ ७.२,२१.२३
पुनश्च मंडलं कृत्वा तदंगैः परिपूज्य च ॥ ७.२,२१.२४
तत्र स्थाप्य हेमपात्रं मागधप्रस्थसंमितम् ॥ ७.२,२१.२४
पूरयेद्गंधतोयेन रक्तचंदनयोगिना ॥ ७.२,२१.२५
रक्तपुष्पैस्तिलैश्चैव कुशाक्षतसमन्वितैः ॥ ७.२,२१.२५

दूर्वापामार्गगव्यैश्च केवलेन जलेन वा ॥ ७.२,२१.२६
जानुभ्यां धरणीं गत्वा नत्वा देवं च मंडले ॥ ७.२,२१.२६
कृत्वा शिरसि तत्पात्रं दद्यादर्घ्यं शिवाय तत् ॥ ७.२,२१.२७
अथवांजलिना तोयं सदर्भं मूलविद्यया ॥ ७.२,२१.२७
उत्क्षिपेदम्बरस्थाय शिवायादित्यमूर्तये ॥ ७.२,२१.२८
कृत्वा पुनः करन्यासं करशोधनपूर्वकम् ॥ ७.२,२१.२८
बुद्ध्वेशानादिसद्यांतं पञ्चब्रह्ममयं शिवम् ॥ ७.२,२१.२९
गृहीत्वा भसितं मन्त्रैर्विमृज्याङ्गानि संस्पृशेत् ॥ ७.२,२१.२९
या दिनांतैश्शिरोवक्त्रहृद्गुह्यचरणान्क्रमात् ॥ ७.२,२१.३०
ततो मूलेन सर्वांगमालभ्य वसनान्तरम् ॥ ७.२,२१.३०
परिधाय द्विराचम्य प्रोक्ष्यैकादशमन्त्रितैः ॥ ७.२,२१.३१
जलैराच्छाद्य वासो ऽयद्द्विराचम्य शिवं स्मरेत् ॥ ७.२,२१.३१
पुनर्न्यस्तकरो मन्त्री त्रिपुंड्रं भस्मना लिखेत् ॥ ७.२,२१.३२
अवक्रमाय तं व्यक्तं ललाटे गन्धवारिणा ॥ ७.२,२१.३२
वृत्तं वा चतुरस्रं वा बिन्दुमर्धेन्दुमेव वा ॥ ७.२,२१.३३
ललाटे यादृशं पुण्ड्रं लिखितं भस्मना पुनः ॥ ७.२,२१.३३
तादृशं भुजयोर्मूर्ध्नि स्तनयोरंतरे लिखेत् ॥ ७.२,२१.३४
सर्वांगोद्धूलनं चैव न समानं त्रिपुण्ड्रकैः ॥ ७.२,२१.३४
तस्मात्त्रिपुण्ड्रमेवैकं लिखेदुद्धूलनं विना ॥ ७.२,२१.३५
रुद्राक्षान्धारयेन्मूर्ध्नि कंठे श्रोते करे तथा ॥ ७.२,२१.३५
सुवर्णवर्णमच्छिन्नं शुभं नान्यैर्धृतं शुभम् ॥ ७.२,२१.३६
विप्रादीनां क्रमाच्छ्रेष्ठं पीतं रक्तमथासितम् ॥ ७.२,२१.३६
तदलाभे यथालाभं धारणीयमदूषितम् ॥ ७.२,२१.३७
तत्रापि नोत्तरं नीचैर्धार्यं नीचमथोत्तरैः ॥ ७.२,२१.३७
नाशुचिर्धारयेदक्षं सदा कालेषु धारयेत् ॥ ७.२,२१.३८
इत्थं त्रिसंध्यमथवा द्विसंध्यं सकृदेव वा ॥ ७.२,२१.३८
कृत्वा स्नानादिकं शक्त्या पूजयेत्परमेश्वरम् ॥ ७.२,२१.३९
प्रजास्थानं समासाद्य बद्ध्वा रुचिरमासनम् ॥ ७.२,२१.३९

ध्यायेद्देवं च देवीं च प्राङ्मुखो वाप्युदङ्मुखः ॥ ७.२,२१.४०

श्वेतादीन्नकुलीशांतांस्तच्छिष्यान्प्रणमेद्गुरुम् ॥ ७.२,२१.४०

पुनर्देवं शिवं नत्वा ततो नामाष्टकं जपेत् ॥ ७.२,२१.४१

शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः ॥ ७.२,२१.४१

संसारवैद्यस्सर्वज्ञः परमात्मेति चाष्टकम् ॥ ७.२,२१.४२

अथवा शिवमेवैकं जपित्वैकादशाधिकम् ॥ ७.२,२१.४२

जिह्वाग्रे तेजसो राशिं ध्यात्वाव्याध्यादिशांतये ॥ ७.२,२१.४३

प्रक्षाल्य चरणौ कृत्वा करौ चंदनचर्चितौ ॥ ७.२,२१.४३

प्रकुर्वीत करन्यासं करशोधनपूर्वकम् ॥ ७.२,२१.४३

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे नित्यनैमित्तिककर्मवर्णनं नामैकविंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः २२

https://sa.wikisource.org/s/hvd
< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | उत्तर भागः

अध्याय २२

उपमन्युरुवाच

न्यासस्तु त्रिविधः प्रोक्तः स्थित्युत्पत्तिलयक्रमात् ॥

स्थितिर्न्यासो गृहस्थानामुत्पत्तिर्ब्रह्मचारिणाम् ॥ १

यतीनां संहृतिन्यासो वनस्थानां तथैव च ॥

स एव भर्तृहीनायाः कुटुंबिन्याः स्थितिर्भवेत् ॥ २

कन्यायाः पुनरुत्पत्तिं वक्ष्ये न्यासस्य लक्षणम् ॥

अंगुष्ठादिकनिष्ठांतं स्थितिन्यास उदाहृतः ॥ ३

दक्षिणांगुष्ठमारभ्य वामांगुष्ठान्तमेव च ॥

उत्पत्तिन्यास आख्यातो विपरीतस्तु संहृतिः ॥ ४

सबिंदुकान्नकारादीन्वर्णान्न्यस्येदनुक्रमात् ॥

अंगुलीषु शिवं न्यस्येत्तलयोरप्यनामयोः ॥ ५

अस्त्रन्यासं ततः कृत्वा दशदिक्ष्वस्त्रमंत्रतः ॥

निवृत्त्यादिकलाः पञ्च पञ्चभूतस्वरूपिणीः ॥ ६

पञ्चभूताधिपैस्सार्धं ततच्चिह्नसमन्विताः ॥

हृत्कण्टतालुभ्रूमध्यब्रह्मरन्ध्रसमाश्रयाः ॥ ७

तद्तद्बीजेन संग्रंथीस्तद्तद्बीजेषु भावयेत् ॥

तासां विशोधनार्थाय विद्यां पञ्चाक्षरीं जपेत् ॥ ८

निरुद्ध्वा प्राणवायुं च गुणसंख्यानुसारतः ॥

भूतग्रंथिं ततश्छिद्यादस्त्रेणैवास्त्रमुद्रया ॥ ९

नाड्या सुषुम्नयात्मानं प्रेरितं प्राणवायुना ॥

निर्गतं ब्रह्मरन्ध्रेण योजयेच्छिवतेजसा ॥ १०

विशोष्य वायुना पश्चाद्देहं कालाग्निना दहेत् ॥

ततश्चोपरिभावेन कलास्संहृत्य वायुना ॥ ११

देहं संहृत्य वै दग्धं कलास्स्पृष्ट्वा सहाब्धिना ॥
प्लावयित्वामृतैर्देहं यथास्थानं निवेशयेत् ॥ १२
अथ संहृत्य वै दग्धः कलासर्गं विनैव तु ॥
अमृतप्लावनं कुर्याद्भस्मीभूतस्य वै ततः ॥ १३
ततो विद्यामये तस्मिन्देहे दीपशिखाकृतिम् ॥
शिवान्निर्गतमात्मानं ब्रह्मरंध्रेण योजयेत् ॥ १४
देहस्यान्तः प्रविष्टं तं ध्यात्वा हृदयपंकजे ॥
पुनश्चामृतवर्षेण सिंचेद्विद्यामयं वपुः ॥ १५
ततः कुर्यात्करन्यासं करशोधनपूर्वकम् ॥
देहन्यासं ततः पश्चान्महत्या मुद्रया चरेत् ॥ १६
अंगन्यासं ततः कृत्वा शिवोक्तेन तु वर्त्मना ॥
वर्णन्यासं ततः कुर्याद्धस्तपादादिसंधिषु ॥ १७
षडंगानि ततो न्यस्य जातिषट्कयुतानि च ॥
दिग्बंधमाचरेत्पश्चादाग्नेयादि यथाक्रमम् ॥ १८
यद्वा मूर्धादिपञ्चांगं न्यासमेव समाचरेत् ॥
तथा षडंगन्यासं च भूतशुद्ध्यादिकं विना ॥ १९
एवं समासरूपेण कृत्वा देहात्मशोधनम् ॥
शिवभावमुपागम्य पूजयेत्परमेश्वरम् ॥ २०
अथ यस्यास्त्यवसरो नास्ति वा मतिविभ्रमः ॥
स विस्तीर्णेन कल्पेन न्यासकर्म समाचरेत् ॥ २१
तत्राद्यो मातृकान्यासो ब्रह्मन्यासस्ततः परः ॥
तृतीयः प्रणवन्यासो हंसन्यासस्तदुत्तरः ॥ २२
पञ्चमः कथ्यते सद्भिर्न्यासः पञ्चाक्षरात्मकः ॥
एतेष्वेकमनेकं वा कुर्यात्पूजादि कर्मसु ॥ २३
अकारं मूर्ध्नि विन्यस्य आकारं च ललाटके ॥
इं ईं च नेत्रयोस्तद्वतुं ऊं श्रवणयोस्तथा ॥ २४
ॠं ः कपोलयोश्चैव ळं ॡं नासापुटद्वये ॥
एमेमोष्ठद्वयोरोमौं दंतपंक्तिद्वयोः क्रमात् ॥ २५

अं जिह्वायामथो तालुन्यः प्रयोज्यो यथाक्रमम् ॥
कवर्गं दक्षिणे हस्ते न्यसेत्पञ्चसु संधिषु ॥ २६
चवर्गं च तथा वामहस्तसंधिषु विन्यसेत् ॥
टवर्गं च तवर्गं च पादयोरुभयोरपि ॥ २७
पफौ तु पार्श्वयोः पृष्ठे नाभौ चापि बभौ ततः ॥
न्यसेन्मकारं हृदये त्वगादिषु यथाक्रमम् ॥ २८
यकरादिसकारांतान्न्यसेत्सप्तसु धातुषु ॥
हंकारं हृदयस्यांतः क्षकारं भ्रूयुगांतरे ॥ २९
एवं वर्णान्प्रविन्यस्य पञ्चाशद्रुद्रवर्त्मना ॥
अंगवक्त्रकलाभेदात्पञ्च ब्रह्माणि विन्यसेत् ॥ ३०
करन्यासाद्यमपि तैः कृत्वा वाथ न वा क्रमात् ॥
शिरोवदनहृद्गुह्यपादेष्वेतानि कल्पयेत् ॥ ३१
ततश्चोर्ध्वादिवक्त्राणि पश्चिमांतानि कल्पयेत् ॥
ईशानस्य कलाः पञ्च पञ्चस्वेतेषु च क्रमात् ॥ ३२
ततश्चतुर्षु वक्त्रेषु पुरुषस्य कला अपि ॥
चतस्रः प्रणिधातव्याः पूर्वादिक्रमयोगतः ॥ ३३
हृत्कंठांसेषु नाभौ च कुक्षौ पृष्ठे च वक्षसि ॥
अघोरस्य कलाश्चाष्टौ पादयोरपि हस्तयोः ॥ ३४
पश्चात्त्रयोःदशकलाः पायुमेढ्रोरुजानुषु ॥
जंघास्फिक्कटिपार्श्वेषु वामदेवस्य भावयेत् ॥ ३५
घ्राणे शिरसि बाह्वोश्च कल्पयेत्कल्पवित्तमः ॥
अष्टत्रिंशत्कलान्यासमेवं कृत्वानुपूर्वशः ॥ ३६
पश्चात्प्रणवविद्धीमान्प्रणवन्यासमाचरेत् ॥
बाहुद्वये कूर्परयोस्तथा च मणिबन्धयोः ॥ ३७
पार्श्वोदरोरुजंघेषु पादयोः पृष्ठतस्तथा ॥
इत्थं प्रणवविन्यासं कृत्वा न्यासविचक्षणः ॥ ३८
हंसन्यासं प्रकुर्वीत शिवशास्त्रे यथोदितम् ॥
बीजं विभज्य हंसस्य नेत्रयोर्घ्राणयोरपि ॥ ३९

विभज्य बाहुनेत्रास्यललाटे घ्राणयोरपि ॥
कक्षयोः स्कन्धयोश्चैव पार्श्वयोस्तनयोस्तथा ॥ ४०
कठ्योः पाण्योर्गुल्फयोश्च यद्वा पञ्चांगवर्त्मना ॥
हंसन्यासमिमं कृत्वा न्यसेत्पञ्चाक्षरीं ततः ॥ ४१
यथा पूर्वोक्तमार्गेण शिवत्वं येन जायते ॥
नाशिवः शिवमभ्यस्येन्नाशिवः शिवमर्चयेत् ॥ ४२
नाशिवस्तु शिवं ध्यायेन्नाशिवम्प्राप्नुयाच्छिवम् ॥
तस्माच्छैवीं तनुं कृत्वा त्यक्त्वा च पशुभावनाम् ॥ ४३
शिवो ऽहमिति संचिन्त्य शैवं कर्म समाचरेत् ॥
कर्मयज्ञस्तपोयज्ञो जपयज्ञस्तदुत्तरः ॥ ४४
ध्यानयज्ञो ज्ञानयज्ञः पञ्च यज्ञाः प्रकीर्तिताः ॥ ४४
कर्मयज्ञरताः केचित्तपोयज्ञरताः परे ॥
जपयज्ञरताश्चान्ये ध्यानयज्ञरतास्तथा ॥ ४५
ज्ञानयज्ञरताश्चान्ये विशिष्टाश्चोत्तरोत्तरम् ॥
क्रमयज्ञो द्विधा प्रोक्तः कामाकामविभेदतः ॥ ४६
कामान्कामी ततो भुक्त्वा कामासक्तः पुनर्भवेत् ॥
अकामे रुद्रभवने भोगान्भुक्त्वा ततश्च्युतः ॥ ४७
तपोयज्ञरतो भूत्वा जायते नात्र संशयः ॥
तपस्वी च पुनस्तस्मिन्भोगान् भुक्त्वा ततश्च्युतः ॥ ४८
जपध्यानरतो भूत्वा जायते भुवि मानवः ॥
जपध्यानरतो मर्त्यस्तद्वैशिष्ट्यवशादिह ॥ ४९
ज्ञानं लब्ध्वाचिरादेव शिवसायुज्यमाप्नुयात् ॥
तस्मान्मुक्तो शिवाज्ञप्तः कर्मयज्ञो ऽपि देहिनाम् ॥ ५०
अकामः कामसंयुक्तो बन्धायैव भविष्यति ॥
तस्मात्पञ्चसु यज्ञेषु ध्यानज्ञानपरो भवेत् ॥ ५१
ध्यानं ज्ञानं च यस्यास्ति तीर्णस्तेन भवार्णवः ॥
हिंसादिदोषनिर्मुक्तो विशुद्धश्चित्तसाधनः ॥ ५२
ध्यानयज्ञः परस्तस्मादपवर्गफलप्रदः ॥

बहिः कर्मकरा यद्वन्नातीव फलभागिनः ॥ ५३
दृष्ट्वा नरेन्द्रभवने तद्वदत्रापि कर्मिणः ॥
ध्यानिनां हि वपुः सूक्ष्मं भवेत्प्रत्यक्षमैश्वरम् ॥ ५४
यथेह कर्मणां स्थूलं मृत्काष्ठाद्यैः प्रकल्पितम् ॥
ध्यानयज्ञरतास्तस्माद्देवान्पाषाणमृण्मयान् ॥ ५५
नात्यंतं प्रतिपद्यंते शिवयाथात्म्यवेदनात् ॥
आत्मस्थं यः शिवं त्यक्त्वा बहिरभ्यर्चयेन्नरः ॥ ५६
हस्तस्थं फलमुत्सृज्य लिहेत्कूर्परमात्मनः ॥
ज्ञानाद्ध्यानं भवेद्ध्यानाज्ज्ञानं भूयः प्रवर्तते ॥ ५७
तदुभाभ्यां भवेन्मुक्तिस्तस्माद्ध्यानरतो भवेत् ॥
द्वादशान्ते तथा मूर्ध्नि ललाटे भ्रूयुगान्तरे ॥ ५८
नासाग्रे वा तथास्ये वा कन्धरे हृदये तथा ॥
नाभौ वा शाश्वतस्थाने श्रद्धाविद्धेन चेतसा ॥ ५९
बहिर्यागोपचारेण देवं देवीं च पूजयेत् ॥
अथवा पूजयेन्नित्यं लिंगे वा कृतकेपि वा ॥ ६०
वह्नौ वा स्थण्डिले वाथ भक्त्या वित्तानुसारतः ॥
अथवांतर्बहिश्चैव पूजयेत्परमेश्वरम् ॥
अंतर्यागरतः पूजां बहिः कुर्वीत वा न वा ॥ ६१

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवशास्त्रोक्तनित्यनैमित्तिककर्मवर्णनं नाम द्वाविंशोऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः २३

https://sa.wikisource.org/s/hzr

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | उत्तर भागः

उपमन्युरुवाच

व्याख्यां पूजाविधानस्य प्रवदामि समासतः ॥ ७.२,२३.१

शिवशास्त्रे शिवेनैव शिवायै कथितस्य तु ॥ ७.२,२३.१

अंगमभ्यंतरं यागमग्निकार्यावसानकम् ॥ ७.२,२३.२

विधाय वा न वा पश्चाद्बहिर्यागं समाचरेत् ॥ ७.२,२३.२

तत्र द्रव्याणि मनसा कल्पयित्वा विशोध्य च ॥ ७.२,२३.३

ध्यात्वा विनायकं देवं पूजयित्वा विधानतः ॥ ७.२,२३.३

दक्षिणे चोत्तरे चैव नंदीशं सुयशं तथा ॥ ७.२,२३.४

आराध्य मनसा सम्यगासनं कल्पयेद्बुधः ॥ ७.२,२३.४

आराधनादिकैर्युक्तस्सिंहयोगासनादिकम् ॥ ७.२,२३.५

पद्मासनं वा विमलं तत्त्वत्रयसमन्वितम् ॥ ७.२,२३.५

तस्योपरि शिवं ध्यायेत्सांबं सर्वमनोहरम् ॥ ७.२,२३.६

सर्वलक्षणसंपन्नं सर्वावयवशोभनम् ॥ ७.२,२३.६

सर्वातिशयसंयुक्तं सर्वाभरणभूषितम् ॥ ७.२,२३.७

रक्तास्यपाणिचरणं कुंदचंद्रस्मिताननम् ॥ ७.२,२३.७

शुद्धस्फटिकसंकाशं फुल्लपद्मत्रिलोचनम् ॥ ७.२,२३.८

चतुर्भुजमुदाराङ्गं चारुचंद्रकलाधरम् ॥ ७.२,२३.८

वरदाभयहस्तं च मृगटंकधरं हरम् ॥ ७.२,२३.९

भुजंगहारवलयं चारुनीलगलांतरम् ॥ ७.२,२३.९

सर्वोपमानरहितं सानुगं सपरिच्छदम् ॥ ७.२,२३.१०

ततः संचिंतयेत्तस्य वामभागे महेश्वरीम् ॥ ७.२,२३.१०

प्रफुल्लोत्पलपत्राभां विस्तीर्णायतलोचनाम् ॥ ७.२,२३.११

पूर्णचंद्राभवदनां नीलकुंचितमूर्धजाम् ॥ ७.२,२३.११

नीलोत्पलदलप्रख्यां चन्द्रार्धकृतशेखराम् ॥ ७.२,२३.१२

अतिवृत्तघनोत्तुंगस्निग्धपीनपयोधराम् ॥ ७.२,२३.१२

तनुमध्यां पृथुश्रोणीं पीतसूक्ष्मवराम्बराम् ॥ ७.२,२३.१३

सर्वाभरणसंपन्नां ललाटतिलकोज्ज्वलाम् ॥ ७.२,२३.१३

विचित्रपुष्पसंकीर्णकेशपाशोपशोभिताम् ॥ ७.२,२३.१४

सर्वतो ऽनुगुणाकारां किंचिल्लज्जानताननाम् ॥ ७.२,२३.१४

हेमारविंदं विलसद्दधानां दक्षिणे करे ॥ ७.२,२३.१५

दंडवच्चापरं हस्ते न्यस्यासीनां महासने ॥ ७.२,२३.१५

पाशविच्छेदिकां साक्षात्सच्चिदानंदरूपिणीम् ॥ ७.२,२३.१६

एवं देवं च देवीं च ध्यात्वासनवरे शुभे ॥ ७.२,२३.१६

सर्वोपचारवद्भक्त्या भावपुष्पैस्समर्चयेत् ॥ ७.२,२३.१७

अथवा परिकल्प्यैवं मूर्तिमन्यतमां विभोः ॥ ७.२,२३.१७

शैवीं सदाशिवाख्यां वा तथा माहेश्वरीं पराम् ॥ ७.२,२३.१८

षड्विंशकाभिधानां वा श्रीकंठाख्यामथापि वा ॥ ७.२,२३.१८

मन्त्रन्यासादिकां चापि कृत्वा स्वस्यां तनौ यथा ॥ ७.२,२३.१९

अस्यां मूर्तौ मूर्तिमंतं शिवं सदसतः परम् ॥ ७.२,२३.१९

ध्यात्वा बाह्यक्रमेणैव पूजां निर्वर्तयेद्धिया ॥ ७.२,२३.२०

समिदाज्यादिभिः पश्चान्नाभौ होमं च भावयेत् ॥ ७.२,२३.२०

भ्रूमध्ये च शिवं ध्यायेच्छुद्धदीपशिखाकृतिम् ॥ ७.२,२३.२१

इत्थमंगे स्वतंत्रे वा योगे ध्यानमये शुभे ॥ ७.२,२३.२१

अग्निकार्यावसानं च सर्वत्रैव समो विधिः ॥ ७.२,२३.२२

अथ चिंतामयं सर्वं समाप्याराधनक्रमम् ॥ ७.२,२३.२२

लिंगे च पूजयेद्देवं स्थंडिले वानले ऽपि वा ॥ ७.२,२३.२३

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे पूजाविधानव्याख्यानवर्णनं नाम त्रयोविंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः २४

https://sa.wikisource.org/s/hzs



उपमन्युरुवाच

प्रोक्षयेन्मूलमंत्रेण पूजास्थानं विशुद्धये ॥ ७.२,२४.१

गन्धचन्दनतोयेन पुष्पं तत्र विनिक्षिपेत् ॥ ७.२,२४.१

अस्त्रेणोत्सार्य वै विघ्नानवगुण्ठ्य च वर्मणा ॥ ७.२,२४.२

अस्त्रं दिक्षु प्रविन्यस्य कल्पयेदर्चनाभुवम् ॥ ७.२,२४.२

तत्र दर्भान्परिस्तीर्य क्षालयेत्प्रोक्षणादिभिः ॥ ७.२,२४.३

संशोध्य सर्वपात्राणि द्रव्यशुद्धिं समाचरेत् ॥ ७.२,२४.३

प्रोक्षणीमर्घ्यपात्रं च पाद्यपात्रमतः परम् ॥ ७.२,२४.४

तथैवाचमनीयस्य पात्रं चेति चतुष्टयम् ॥ ७.२,२४.४

प्रक्षाल्य प्रोक्ष्य वीक्ष्याथ क्षिपेत्तेषु जलं शिवम् ॥ ७.२,२४.५

पुण्यद्रव्याणि सर्वाणि यथालाभं विनिक्षिपेत् ॥ ७.२,२४.५

रत्नानि रजतं हेम गन्धपुष्पाक्षतादयः ॥ ७.२,२४.६

फलपल्लवदर्भांश्च पुण्यद्रव्याण्यनेकधा ॥ ७.२,२४.६

स्नानोदके सुगन्धादि पानीये च विशेषतः ॥ ७.२,२४.७

शीतलानि मनोज्ञानी कुसुमादीनि निक्षिपेत् ॥ ७.२,२४.७

उशीरं चन्दनं चैव पाद्ये तु परिकल्पयेत् ॥ ७.२,२४.८

जातिकंकोलकर्पूरबहुमूलतमालकान् ॥ ७.२,२४.८

क्षिपेदाचमनीये च चूर्णयित्वा विशेषतः ॥ ७.२,२४.९

एलां पात्रेषु सर्वेषु कर्पूरं चन्दनं तथा ॥ ७.२,२४.९

कुशाग्राण्यक्षतांश्चैव यवव्रीहितिलानपि ॥ ७.२,२४.१०

आज्यसिद्धार्थपुष्पाणि भसितञ्चार्घ्यपात्रके ॥ ७.२,२४.१०

कुशपुष्पयवव्रीहिबहुमूलतमालकान् ॥ ७.२,२४.११

प्रक्षिपेत्प्रोक्षणीपात्रे भसितं च यथाक्रमम् ॥ ७.२,२४.११

सर्वत्र मन्त्रं विन्यस्य वर्मणावेष्ट्य बाह्यतः ॥ ७.२,२४.१२

पश्चादस्त्रेण संरक्ष्य धेनुमुद्रां प्रदर्शयेत् ॥ ७.२,२४.१२

पूजाद्रव्याणि सर्वाणि प्रोक्षणीपात्रवारिणा ॥ ७.२,२४.१३

सम्प्रोक्ष्य मूलमंत्रेण शोधयेद्विधिवत्ततः ॥ ७.२,२४.१३

पात्राणां प्रोक्षणीमेकामलाभे सर्वकर्मसु ॥ ७.२,२४.१४

साधयेदर्घ्यमद्भिस्तत्सामान्यं साधकोत्तमः ॥ ७.२,२४.१४

ततो विनायकं देवं भक्ष्यभोज्यादिभिः क्रमात् ॥ ७.२,२४.१५

पूजयित्वा विधानेन द्वारपार्श्वे ऽथ दक्षिणे ॥ ७.२,२४.१५

अन्तःपुराधिपं साक्षान्नन्दिनं सम्यगर्चयेत् ॥ ७.२,२४.१६

चामीकराचलप्रख्यं सर्वाभरणभूषितम् ॥ ७.२,२४.१६

बालेन्दुमुकुटं सौम्यं त्रिनेत्रं च चतुर्भुजम् ॥ ७.२,२४.१७

दीप्तशूलमृगीटंकतिग्मवेत्रधरं प्रभुम् ॥ ७.२,२४.१७

चन्द्रबिम्बाभवदनं हरिवक्त्रमथापि वा ॥ ७.२,२४.१८

उत्तरे द्वारपार्श्वस्य भार्यां च मरुतां सुताम् ॥ ७.२,२४.१८

सुयशां सुव्रतामम्बां पादमण्डनतत्पराम् ॥ ७.२,२४.१९

पूजयित्वा प्रविश्यान्तर्भवनं परमेष्ठिनः ॥ ७.२,२४.१९

संपूज्य लिङ्गं तैर्द्रव्यैर्निर्माल्यमपनोदयेत् ॥ ७.२,२४.२०

प्रक्षाल्य पुष्पं शिरसि न्यसेत्तस्य विशुद्धये ॥ ७.२,२४.२०

पुष्पहस्तो जपेच्छक्त्या मन्त्रं मन्त्रविशुद्धये ॥ ७.२,२४.२१

ऐशान्यां चण्दमाराध्य निर्माल्यं तस्य दापयेत् ॥ ७.२,२४.२१

कल्पयेदासनं पश्चादाधारादि यथाक्रमम् ॥ ७.२,२४.२२

आधारशक्तिं कल्याणीं श्यामां ध्यायेदधो भुवि ॥ ७.२,२४.२२

तस्याः पुरस्तादुत्कंठमनंतं कुण्डलाकृतिम् ॥ ७.२,२४.२३

धवलं पञ्चफणिनं लेलिहानमिवाम्बरम् ॥ ७.२,२४.२३

तस्योपर्यासनं भद्रं कण्ठीरवचतुष्पदम् ॥ ७.२,२४.२४

धर्मो ज्ञानं च वैराग्यमैश्वर्यञ्च पदानि वै ॥ ७.२,२४.२४

आग्नेयादिश्वेतरक्तपीतश्यामानि वर्णतः ॥ ७.२,२४.२५

अधर्मादीनि पूर्वादीन्युत्तरांतान्यनुक्रमात् ॥ ७.२,२४.२५

राजावर्तमणिप्रख्यान्न्यस्य गात्राणि भावयेत् ॥ ७.२,२४.२६

अस्योर्ध्वच्छादनं पद्ममासनं विमलं सितम् ॥ ७.२,२४.२६

अष्टपत्राणि तस्याहुरणिमादिगुणाष्टकम् ॥ ७.२,२४.२७

केसराणि च वामाद्या रुद्रावामादिशक्तिभिः ॥ ७.२,२४.२७

बीजान्यपि च ता एव शक्तयोंतर्मनोन्मनीः ॥ ७.२,२४.२८

कर्णिकापरवैराग्यं नालं ज्ञानं शिवात्मकम् ॥ ७.२,२४.२८

कन्दश्च शिवधर्मात्मा कर्णिकान्ते त्रिमण्डले ॥ ७.२,२४.२९

त्रिमण्डलोपर्यात्मादि तत्त्वत्रितयमासनम् ॥ ७.२,२४.२९

सर्वासनोपरि सुखं विचित्रास्तरणास्तृतम् ॥ ७.२,२४.३०

आसनं कल्पयेद्दिव्यं शुद्धविद्यासमुज्ज्वलम् ॥ ७.२,२४.३०

आवाहनं स्थापनं च सन्निरोधं निरीक्षणम् ॥ ७.२,२४.३१

नमस्कारं च कुर्वीत बध्वा मुद्राः पृथक्पृथक् ॥ ७.२,२४.३१

पाद्यमाचमनं चार्घ्यं गंधं पुष्पं ततः परम् ॥ ७.२,२४.३२

धूपं दीपं च तांबूलं दत्त्वाथ स्वापयेच्छिवौ ॥ ७.२,२४.३२

अथवा परिकल्प्यैवमासनं मूर्तिमेव च ॥ ७.२,२४.३३

सकलीकृत्य मूलेन ब्रह्माभिश्चापरैस्तथा ॥ ७.२,२४.३३

आवाहयेत्ततो देव्या शिवं परमकारणम् ॥ ७.२,२४.३४

शुद्धस्फटिकसंकाशं देवं निश्चलमक्षरम् ॥ ७.२,२४.३४

कारणं सर्वलोकानां सर्वलोकमयं परम् ॥ ७.२,२४.३५

अंतर्बहिःस्थितं व्याप्य ह्यणोरणु महत्तरम् २ ॥ ७.२,२४.३५

भक्तानामप्रयत्नेन दृश्यमीश्वरमव्ययम् ॥ ७.२,२४.३६

ब्रह्मेंद्रविष्णुरुद्राद्यैरपि देवैरगोचरम् ॥ ७.२,२४.३६

देवसारं च विद्वद्भिरगोचरमिति श्रुतम् ॥ ७.२,२४.३७

आदिमध्यान्तरहितं भेषजं भवरोगिणाम् ॥ ७.२,२४.३७

शिवतत्त्वमिति ख्यातं शिवार्थं जगति स्थिरम् ॥ ७.२,२४.३८

पञ्चोपचारवद्भक्त्या पूजयेल्लिंगमुत्तमम् ॥ ७.२,२४.३८

लिंगमूर्तिर्महेशस्य शिवस्य परमात्मनः ॥ ७.२,२४.३९

स्नानकाले प्रकुर्वीत जयशब्दादिमंगलम् ॥ ७.२,२४.३९

पञ्चगव्यघृतक्षीरदधिमध्वादिपूर्वकैः ॥ ७.२,२४.४०

मूलैः फलानां सारैश्च तिलसर्षपसक्तुभिः ॥ ७.२,२४.४०
बीजैर्यवादिभिश्शस्तैश्चूर्णैर्माषादिसंभवैः ॥ ७.२,२४.४१
संस्नाप्यालिप्य पिष्टाद्यैः स्नापयेदुष्णवारिभिः ॥ ७.२,२४.४१
घर्षयेद्बिल्वपत्राद्यैर्लेपगंधापनुत्तये ॥ ७.२,२४.४२
पुनः संस्नाप्य सलिलैश्चक्रवर्त्युपचारतः ॥ ७.२,२४.४२
सुगंधामलकं दद्याद्धरिद्रां च यथाक्रमम् ॥ ७.२,२४.४३
ततः संशोध्य सलिलैर्लिंगं बेरमथापि वा ॥ ७.२,२४.४३
स्नापयेद्गंधतोयेन कुशपुष्पोदकेन च ॥ ७.२,२४.४४
हिरण्यरत्नतोयैश्च मंत्रसिद्धैर्यथाक्रमम् ॥ ७.२,२४.४४
असंभवे तु द्रव्याणां यथासंभवसंभृतैः ॥ ७.२,२४.४५
केवलैर्मंत्रतोयैर्वा स्नापयेच्छ्रद्धया शिवम् ॥ ७.२,२४.४५
कलशेनाथ शंखेन वर्धन्या पाणिना तथा ॥ ७.२,२४.४६
सकुशेन सपुष्पेण स्नापयेन्मंत्रपूर्वकम् ॥ ७.२,२४.४६
पवमानेन रुद्रेण नीलेन त्वरितेन च ॥ ७.२,२४.४७
लिंगसूक्तादिसूक्तैश्च शिरसाथर्वणेन च ॥ ७.२,२४.४७
ऋग्भिश्च सामभिः शैवैर्ब्रह्मभिश्चापि पञ्चभिः ॥ ७.२,२४.४८
स्नापयेद्देवदेवेशं शिवेन प्रणवेन च ॥ ७.२,२४.४८
यथा देवस्य देव्याश्च कुर्यात्स्नानादिकं तथा ॥ ७.२,२४.४९
न तु कश्चिद्विशेषो ऽस्ति तत्र तौ सदृशौ यतः ॥ ७.२,२४.४९
प्रथमं देवमुद्दिश्य कृत्वा स्नानादिकाः क्रियाः ॥ ७.२,२४.५०
देव्यैः प्रश्चात्प्रकुर्वीत देवदेवस्य शासनात् ॥ ७.२,२४.५०
अर्धनारीश्वरे पूज्ये पौर्वापर्यं न विद्यते ॥ ७.२,२४.५१
तत्र तत्रोपचाराणां लिंगे वान्यत्र वा क्वचित् ॥ ७.२,२४.५१
कृत्वा ऽभिषेकं लिंगस्य शुचिना च सुगंधिना ॥ ७.२,२४.५२
संमृज्य वाससा दद्यादंबरं चोपवीतकम् ॥ ७.२,२४.५२
पाद्यमाचमनं चार्घ्यं गंधं पुष्पं च भूषणम् ॥ ७.२,२४.५३
धूपं दीपं च नैवेद्यं पानीयं मुखशोधनम् ॥ ७.२,२४.५३
पुनश्चाचमनीयं च मुखवासं ततः परम् ॥ ७.२,२४.५४

मुकुटं च शुभं भद्रं सर्वरत्नैरलंकृतम् ॥ ७.२,२४.५४
भूषणानि पवित्राणि माल्यानि विविधानि च ॥ ७.२,२४.५५
व्यजने चामरे छत्रं तालवृंतं च दर्पणम् ॥ ७.२,२४.५५
दत्त्वा नीराजनं कुर्यात्सर्वमंगलनिस्वनैः ॥ ७.२,२४.५६
गीतनृत्यादिभिश्चैव जयशब्दसमन्वितः ॥ ७.२,२४.५६
हैमे च राजते ताम्रे पात्रे वा मृन्मये शुभे ॥ ७.२,२४.५७
पद्मकैश्शोभितैः पुष्पैर्बीजैर्दध्यक्षतादिभिः ॥ ७.२,२४.५७
त्रिशूलशंखयुग्माब्जनन्द्यावर्तैः करीषजैः ॥ ७.२,२४.५८
श्रीवत्सस्वस्तिकादर्शवज्रैर्वह्न्यादिचिह्नितैः ॥ ७.२,२४.५८
अष्टौ प्रदीपान्परितो विधायैकं तु मध्यमे ॥ ७.२,२४.५९
तेषु वामादिकाश्चिन्त्याः पूज्याश्च नव शक्तयः ॥ ७.२,२४.५९
कवचेन समाच्छाद्य संरक्ष्यास्त्रेण सर्वतः ॥ ७.२,२४.६०
धेनुमुद्रां च संदर्श्य पाणिभ्यां पात्रमुद्धरेत् ॥ ७.२,२४.६०
अथवारोपयेत्पात्रे पञ्चदीपान्यथाक्रमम् ॥ ७.२,२४.६१
विदिक्ष्वपि च मध्ये च दीपमेकमथापि वा ॥ ७.२,२४.६१
ततस्तत्पात्रमुद्धृत्य लिंगादेरुपरि क्रमात् ॥ ७.२,२४.६२
त्रिः प्रदक्षिणयोगेन भ्रामयेन्मूलविद्यया ॥ ७.२,२४.६२
दद्यादर्घ्यं ततो मूर्ध्नि भसितं च सुगंधितम् ॥ ७.२,२४.६३
कृत्वा पुष्पांजलिं पश्चादुपहारान्निवेदयेत् ॥ ७.२,२४.६३
पानीयं च ततो दद्याद्दत्त्वा वाचमनं पुनः ॥ ७.२,२४.६४
पञ्चसौगंधिकोपेतं ताम्बूलं च निवेदयेत् ॥ ७.२,२४.६४
प्रोक्षयेत्प्रोक्षणीयानि गाननाट्यानि कारयेत् ॥ ७.२,२४.६५
लिंगादौ शिवयोश्चिन्तां कृत्वा शक्त्यजपेच्छिवम् ॥ ७.२,२४.६५
प्रदक्षिणं प्रणामं च स्तवं चात्मसमर्पणम् ॥ ७.२,२४.६६
विज्ञापनं च कार्याणां कुर्याद्विनयपूर्वकम् ॥ ७.२,२४.६६
अर्घ्यं पुष्पांजलिं दत्त्वा बद्ध्वा मुद्रां यथाविधि ॥ ७.२,२४.६७
पश्चात्क्षमापयेद्देवमुद्वास्यात्मनि चिंतयेत् ॥ ७.२,२४.६७
पाद्यादिमुखवासांतमर्घ्याद्यं चातिसंकटे ॥ ७.२,२४.६८

पुष्पविक्षेपमात्रं वा कुर्याद्भावपुरस्सरम् ॥ ७.२,२४.६८

तावतैव परो धर्मो भावने सुकृतो भवेत् ॥ ७.२,२४.६९

असंपूज्य न भुञ्जीत शिवमाप्राणसंचरात् ॥ ७.२,२४.६९

यदि पापस्तु भुंजीत स्वैरं तय्स न निष्कृतिः ॥ ७.२,२४.७०

प्रमादेन तु भुंक्ते चेत्तदुद्गीर्य प्रयत्नतः ॥ ७.२,२४.७०

स्नात्वा द्विगुणमभ्यर्च्य देवं देवीमुपोष्य च ॥ ७.२,२४.७१

शिवस्यायुतमभ्यस्येद्ब्रह्मचर्यपुरस्सरम् ॥ ७.२,२४.७१

परेद्युश्शक्तितो दत्त्वा सुवर्णाद्यं शिवाय च ॥ ७.२,२४.७२

शिवभक्ताय वा कृत्वा महापूजां शुचिर्भवेत् ॥ ७.२,२४.७२

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शास्त्रोक्तशिवपूजनवर्णनं नाम चतुर्विंशोऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः २५

https://sa.wikisource.org/s/hzt

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | उत्तर भागः

उपमन्युरुवाच

अनुक्तं चात्र पूजायाः कमलोपभयादिव ॥ ७.२,२५.१

यत्तदन्यत्प्रवक्ष्यामि समासान्न तु विस्तरात् ॥ ७.२,२५.१

हविर्निवेदनात्पूर्वं दीपदानादनन्तरम् ॥ ७.२,२५.२

कुर्यादावरणाभ्यर्चां प्राप्ते नीराजने ऽथ वा ॥ ७.२,२५.२

तत्रेशानादिसद्यांतं रुद्राद्यस्त्रांतमेव च ॥ ७.२,२५.३

शिवस्य वा शिवायाश्च प्रथमावरणे जपेत् ॥ ७.२,२५.३

ऐशान्यां पूर्वभागे च दक्षिणे चोत्तरे तथा ॥ ७.२,२५.४

पश्चिमे च तथाग्नेय्यामैशान्यां नैरृते तथा ॥ ७.२,२५.४

वायव्यां पुनरैशान्यां चतुर्दिक्षु ततः परम् ॥ ७.२,२५.५

गर्भावरणमाख्यातं मन्त्रसंघातमेव वा ॥ ७.२,२५.५

हृदयाद्यस्त्रपर्यंतमथवापि समर्चयेत् ॥ ७.२,२५.६

तद्बहिः पूर्वतः शक्रं यमं दक्षिणतो यजेत् ॥ ७.२,२५.६

वरुणं वारुणे भागे धनदं चोत्तरे बुधः ॥ ७.२,२५.७

ईशमैशे ऽनलं स्वीये नैरृते निरृतिं यजेत् ॥ ७.२,२५.७

मारुते मारुतं विष्णुं नैरृते विधिमैश्वरे ॥ ७.२,२५.८

बहिःपद्मस्य वज्राद्यान्यब्जांतान्यायुधान्यपि ॥ ७.२,२५.८

प्रसिद्धरूपाण्याशासु लोकेशानां क्रमाद्यजेत् ॥ ७.२,२५.९

देवं देवीं च संप्रेक्ष्य सर्वावरणदेवताः ॥ ७.२,२५.९

बद्धांजलिपुटा ध्येयाः समासीना यथासुखम् ॥ ७.२,२५.१०

सर्वावरणदेवानां स्वाभिधानैर्नमोयुतैः ॥ ७.२,२५.१०

पुष्पैः संपूजनं कुर्यान्नत्वा सर्वान्यथाक्रमम् ॥ ७.२,२५.११

गर्भावरणमेवापि यजेत्स्वावरणेन वा ॥ ७.२,२५.११

योगे ध्याने जपे होमे वाह्ये वाभ्यंतरे ऽपि वा ॥ ७.२,२५.१२

हविश्च षड्विधं देयं शुद्धं मुद्गान्नमेव च ॥ ७.२,२५.१२

पायसं दधिसंमिश्रं गौडं च मधुनाप्लुतम् ॥ ७.२,२५.१३

एतेष्वेकमनेकं वा नानाव्यंजनसंयुतम् ॥ ७.२,२५.१३

गुडखंडन्वितं दद्यान्मथितं दधि चोत्तमम् ॥ ७.२,२५.१४

भक्ष्याण्यपूपमुख्यानि स्वादुमंति फलानि च ॥ ७.२,२५.१४

रक्तचन्दनपुष्पाढ्यं पानीयं चातिशीतलम् ॥ ७.२,२५.१५

मृदु एलारसाक्तं च खण्डं पूगफलस्य च ॥ ७.२,२५.१५

दलानि नागवल्ल्याश्च युक्तानि खदिरादिभिः ॥ ७.२,२५.१६

गौराणि स्वर्णवर्णानि विहितानि शिवानि च ॥ ७.२,२५.१६

शैलमेव सितं चूर्णं नातिरूक्षं न दूषितम् ॥ ७.२,२५.१६

कर्पूरं चाथ कंकोलं जात्यादि च नवं शुभम् ॥ ७.२,२५.१७

आलेपनं चन्दनं स्यान्मूलकाष्ठंरजोमयम् ॥ ७.२,२५.१७

कस्तूरिका कुंकुमं च रसो मृगमदात्मकः ॥ ७.२,२५.१८

पुष्पाणि सुरभीण्येव पवित्राणि शुभानि च ॥ ७.२,२५.१८

निर्गंधान्युग्रगंधानि दूषितान्युषितानि च ॥ ७.२,२५.१९

स्वयमेव विशीर्णानि न देयानि शिवार्चने ॥ ७.२,२५.१९

वासांसि च मृदून्येव तपनीयमयानि च ॥ ७.२,२५.२०

विद्युद्वलयकल्पानि भूषणानि विशेषतः ॥ ७.२,२५.२०

सर्वाण्येतानि कर्पूरनिर्यासागुरुचन्दनैः ॥ ७.२,२५.२१

आधूपितानि पुष्पौघैर्वासितानि समंततः ॥ ७.२,२५.२१

चन्दनागुरुकर्पूरकाष्ठगुग्गुलुचूर्णिकैः ॥ ७.२,२५.२२

घृतेन मधुना चैव सिद्धो धूपः प्रशस्यते ॥ ७.२,२५.२२

कपिलासम्भवेनैव घृतेनातिसुगन्धिना ॥ ७.२,२५.२३

नित्यं प्रदीपिता दीपाः शस्ताः कर्पूरसंयुताः ॥ ७.२,२५.२३

पञ्चगव्यं च मधुरं पयो दधि घृतं तथा ॥ ७.२,२५.२४

कपिलासम्भवं शम्भोरिष्टं स्नाने च पानके ॥ ७.२,२५.२४

आसनानि च भद्राणि गजदंतमयानि च ॥ ७.२,२५.२५

सुवर्णरत्नयुक्तानि चित्राण्यास्तरणानि च ॥ ७.२,२५.२५

मृदूपधानयुक्तानि सूक्ष्मतूलमयानि च ॥ ७.२,२५.२६
उच्चावचानि रम्याणि शयनानि सुखानि च ॥ ७.२,२५.२६
नद्यस्समुद्रगामिन्या नटाद्वाम्भः समाहृतम् ॥ ७.२,२५.२७
शीतञ्च वस्त्रपूतं तद्विशिष्टं स्नानपानयोः ॥ ७.२,२५.२७
छत्रं शशिनिभं चारु मुक्तादामविराजितम् ॥ ७.२,२५.२८
नवरत्नचितं दिव्यं हेमदण्डमनोहरम् ॥ ७.२,२५.२८
चामरे च सिते सूक्ष्मे चामीकरपरिष्कृते ॥ ७.२,२५.२९
राजहंसद्वयाकारे रत्नदंडोपशोभिते ॥ ७.२,२५.२९
दर्पणं चापि सुस्निग्धं दिव्यगन्धानुलेपनम् ॥ ७.२,२५.३०
समंताद्रत्नसञ्छन्नं स्रग्वैरैश्चापि भूषितम् ॥ ७.२,२५.३०
गम्भीरनिनदः शंखो हंसकुंदेन्दुसन्निभः ॥ ७.२,२५.३१
आस्वपृष्ठादिदेशेषु रत्नचामीकराचितः ॥ ७.२,२५.३१
काहलानि च रम्याणि नानानादकराणि च ॥ ७.२,२५.३२
सुवर्णनिर्मितान्येव मौक्तिकालंकृतानि च ॥ ७.२,२५.३२
भेरीमृदंगमुरजतिमिच्छपटहादयः ॥ ७.२,२५.३३
समुद्रकल्पसन्नादाः कल्पनीयाः प्रयत्नतः ॥ ७.२,२५.३३
भांडान्यपि च रम्याणि पत्राण्यपि च कृत्स्नशः ॥ ७.२,२५.३४
तदाधाराणि १ सर्वाणि सौवर्णान्येव साधयेत् ॥ ७.२,२५.३४
आलयं च महेशस्य शिवस्य परमात्मनः ॥ ७.२,२५.३५
राजावसथवत्कल्प्यं शिल्पशास्त्रोक्तलक्षणम् ॥ ७.२,२५.३५
उच्चप्राकारसंभिन्नं भूधराकारगोपुरम् ॥ ७.२,२५.३६
अनेकरत्नसंच्छन्नं हेमद्वारकपाटकम् ॥ ७.२,२५.३६
तप्तजांबूनदमयं रत्नस्तम्भशतावृतम् ॥ ७.२,२५.३७
मुक्तादामवितानाढ्यं विद्रुमद्वारतोरणम् ॥ ७.२,२५.३७
चामीकरमयैर्दिव्यैर्मुकुटैः कुम्भलक्षणैः ॥ ७.२,२५.३८
अलंकृतशिरोभागमस्त्र २ आजेन चिह्नितम् ॥ ७.२,२५.३८
राजन्यार्हनिवासैश्च राजवीथ्यादिशोभितैः ॥ ७.२,२५.३९
प्रोच्छ्रितप्रांशुशिखरैः प्रासादैश्च समंततः ॥ ७.२,२५.३९

आस्थानस्थानवर्यैश्च स्थितैर्दिक्षु विदिक्षु च ॥ ७.२,२५.४०

अत्यन्तालंकृतप्रांतमंतरावरणैरिव ॥ ७.२,२५.४०

उत्तमस्त्रीसहस्रैश्च नृत्यगेयविशारदैः ॥ ७.२,२५.४१

वेणुवीणाविदग्धैश्च पुरुषैर्बहुभिर्युतम् ॥ ७.२,२५.४१

रक्षितं रक्षिभिर्वीरैर्गजवाजिरथान्वितैः ॥ ७.२,२५.४२

अनेकपुष्पवाटीभिरनेकैश्च सरोवरैः ॥ ७.२,२५.४२

दीर्घिकाभिरनेकाभिर्दिग्विदिक्षु विराजितम् ॥ ७.२,२५.४३

वेदवेदांततत्त्वज्ञैश्शिवशास्त्रपरायणैः ॥ ७.२,२५.४३

शिवाश्रमरतैर्भक्तैः शिवशास्त्रोक्तलक्षणैः ॥ ७.२,२५.४४

शांतैः स्मितमुखैः स्फीतैः सदाचारपरायणैः ॥ ७.२,२५.४४

शैवैर्माहेश्वरैश्चैव श्रीमद्भिस्सेवितद्विजैः ॥ ७.२,२५.४५

एवमंतर्बहिर्वाथयथाशक्तिविनिर्मितैः ॥ ७.२,२५.४५

स्थाने शिलामये दांते दारवे चेष्टकामये ॥ ७.२,२५.४६

केवलं मृन्मये वापि पुण्यारण्ये ऽथ वा गिरौ ॥ ७.२,२५.४६

नद्यां देवालये ऽन्यत्र देशे वाथ गृहे शुभे ॥ ७.२,२५.४७

आढ्यो वाथ दरिद्रो वा स्वकां शक्तिमवंचयन् ॥ ७.२,२५.४७

द्रव्यैर्न्यायार्जितैरेव भक्त्या देवं समर्चयेत् ॥ ७.२,२५.४७

अथान्यायार्जितैश्चापि भक्त्या चेच्छिवमर्चयेत् ॥ ७.२,२५.४८

न तस्य प्रत्यवायो ऽस्ति भाववश्यो यतः प्रभुः ॥ ७.२,२५.४८

न्यायार्जितैरपि द्रव्यैरभक्त्या पूजयेद्यदि ॥ ७.२,२५.४९

न तत्फलमवाप्नोति भक्तिरेवात्र कारणम् ॥ ७.२,२५.४९

भक्त्या वित्तानुसारेण शिवमुद्दिश्य यत्कृतम् ॥ ७.२,२५.५०

अल्पे महति वा तुल्यं फलमाढ्यदरिद्रयोः ॥ ७.२,२५.५०

भक्त्या प्रचोदितः कुर्यादल्पवित्तोपि मानवः ॥ ७.२,२५.५१

महाविभवसारोपि न कुर्याद्भक्तिवर्जितः ॥ ७.२,२५.५१

सर्वस्वमपि यो दद्याच्छिवे भक्तिविवर्जितः ॥ ७.२,२५.५२

न तेन फलभाक्स स्याद्भक्तिरेवात्र कारणम् ॥ ७.२,२५.५२

न तत्तपोभिरत्युग्रैर्न च सर्वैर्महामखैः ॥ ७.२,२५.५३

गच्छेच्छिवपुरं दिव्यं मुक्त्वा भक्तिं शिवात्मकम् ॥ ७.२,२५.५३

गुह्याद्गुह्यतरं कृष्ण सर्वत्र परमेश्वरे ॥ ७.२,२५.५४

शिवे भक्तिर्न संदेहस्तया भक्तो विमुच्यते ॥ ७.२,२५.५४

शिवमंत्रजपो ध्यानं होमो यज्ञस्तपःश्रुतम् ॥ ७.२,२५.५५

दानमध्ययनं सर्वे भावार्थं नात्र संशयः ॥ ७.२,२५.५५

भावहीनो नरस्सर्वं कृत्वापि न विमुच्यते ॥ ७.२,२५.५६

भावयुक्तः पुनस्सर्वमकृत्वापि विमुच्यते ॥ ७.२,२५.५६

चांद्रायणसहस्रैश्च प्राजापत्यशतैस्तथा ॥ ७.२,२५.५७

मासोपवासैश्चान्यैश्च शिवभक्तस्य किं पुनः ॥ ७.२,२५.५७

अभक्ता मानवाश्चास्मिंल्लोके गिरिगुहासु च ॥ ७.२,२५.५८

तपंति चाल्पभोगार्थं भक्तो भावेन मुच्यते ॥ ७.२,२५.५८

सात्त्विकं मुक्तिदं कर्म सत्त्वे वै योगिनः स्थिताः ॥ ७.२,२५.५९

राजसं सिद्धिदं कुर्युः कर्मिणो रजसावृताः ॥ ७.२,२५.५९

असुरा राक्षसाश्चैव तमोगुणसमन्विताः ॥ ७.२,२५.६०

ऐहिकार्थं यजन्तीशं नराश्चान्ये ऽपि तादृशाः ॥ ७.२,२५.६०

तामसं राजसं वापि सात्त्विकं भावमेव च ॥ ७.२,२५.६१

आश्रित्य भक्त्या पूजाद्यं कुर्वन्भद्रं समश्नुते ॥ ७.२,२५.६१

यतः पापार्णवात्त्रातुं भक्तिर्नौरिव निर्मिता ॥ ७.२,२५.६२

तस्माद्भक्त्युपपन्नस्य रजसा तमसा च किम् ॥ ७.२,२५.६२

अन्त्यजो वाधमो वापि मूर्खो वा पतितो ऽपि वा ॥ ७.२,२५.६३

शिवं प्रपन्नश्चेत्कृष्ण पूज्यस्सर्वसुरासुरैः ॥ ७.२,२५.६३

तस्मात्सर्वप्रयत्नेन भक्त्यैव शिवमर्चयेत् ॥ ७.२,२५.६४

अभुक्तानां क्वचिदपि फलं नास्ति यतस्ततः ॥ ७.२,२५.६४

वक्ष्याम्यतिरहस्यं ते शृणु कृष्ण वचो मम ॥ ७.२,२५.६५

वेदैश्शास्त्रैर्वेदविद्भिर्विचार्य सुविनिश्चितम् ॥ ७.२,२५.६५

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवशास्त्रोक्तपूजनवर्णनं नाम पञ्चविंशोऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः २६



उपमन्युरुवाच

ब्रह्मघ्नो वा सुरापो वा स्तेयीवा गुरुतल्पगः ॥ ७.२,२६.१

मातृहा पितृहा वापि वीरहा भ्रूणहापि वा ॥ ७.२,२६.१

संपूज्यामन्त्रकं भक्त्या शिवं परमकारणम् ॥ ७.२,२६.२

तैस्तैः पापैः प्रमुच्येत वर्षैर्द्वादशभिः क्रमात् ॥ ७.२,२६.२

तस्मात्सर्वप्रयत्नेन पतितो ऽपि यजेच्छिवम् ॥ ७.२,२६.३

भक्तश्चेन्नापरः कश्चिद्भिक्षाहारो जितेंद्रियः ॥ ७.२,२६.३

कृत्वापि सुमहत्पापं भक्त्या पञ्चाक्षरेण तु ॥ ७.२,२६.४

पूजयेद्यदि देवेशं तस्मात्पापात्प्रमुच्यते ॥ ७.२,२६.४

अब्भक्षा वायुभक्षाश्च ये चान्ये व्रतकर्शिताः ॥ ७.२,२६.५

तेषामेतैर्व्रतैर्नास्ति शिवलोकसमागमः ॥ ७.२,२६.५

भक्त्या पञ्चाक्षरेणैव यः शिवं सकृदर्चयेत् ॥ ७.२,२६.६

सोपि गच्छेच्छिवस्थानं शिवमन्त्रस्य गौरवात् ॥ ७.२,२६.६

तस्मात्तपांसि यज्ञांश्च सर्वे सर्वस्वदक्षिणाः ॥ ७.२,२६.७

शिवमूर्त्यर्चनस्यैते कोट्यंशेनापि नो समाः ॥ ७.२,२६.७

बद्धो वाप्यथ मुक्तो वा पश्चात्पञ्चाक्षरेण चेत् ॥ ७.२,२६.८

पूजयन्मुच्यते भक्तो नात्र कार्या विचारणा ॥ ७.२,२६.८

अरुद्रो वा सरुद्रो वा सूक्तेन शिवमर्चयेत् ॥ ७.२,२६.९

यः सकृत्पतितो वापिमूढो वा मुच्यते नरः ॥ ७.२,२६.९

षडक्षरेण वा देवं सूक्तमन्त्रेण पूजयेत् ॥ ७.२,२६.१०

शिवभक्तो जितक्रोधो ह्यलब्धो लब्ध एव च ॥ ७.२,२६.१०

अलब्धाल्लब्ध एवात्र विशिष्टो नात्र संशयः ॥ ७.२,२६.११

स ब्रह्मांगेन वा तेन सहंसेन विमुच्यते ॥ ७.२,२६.११

तस्मान्नित्यं शिवं भक्त्या सूक्तमन्त्रेण पूजयेत् ॥ ७.२,२६.१२

एककालं द्विकालं वा त्रिकालं नित्यमेव वा ॥ ७.२,२६.१२
ये ऽर्चयंति महादेवं विज्ञेयास्ते महेश्वराः ॥ ७.२,२६.१३
ज्ञानेनात्मसहायेन नार्चितो भगवाञ्छिवः ॥ ७.२,२६.१३
स चिरं संसरत्यस्मिन्संसारे दुःखसागरे ॥ ७.२,२६.१४
दुर्ल्लभं प्राप्य मानुष्यं मूढो नार्चयते शिवम् ॥ ७.२,२६.१४
निष्फलं तस्य तज्जन्म मोक्षाय न भवेद्यतः ॥ ७.२,२६.१५
दुर्ल्लभं प्राप्य मानुष्यं ये ऽर्चयन्ति पिनाकिनम् ॥ ७.२,२६.१५
तेषां हि सफलं जन्म कृतार्थास्ते नरोत्तमाः ॥ ७.२,२६.१६
भवभक्तिपरा ये च भवप्रणतचेतसः ॥ ७.२,२६.१६
भवसंस्मरणोद्युक्ता न ते दुःखस्य भागिनः ॥ ७.२,२६.१७
भवनानि मनोज्ञानि विभ्रमाभरणाः स्त्रियः ॥ ७.२,२६.१७
धनं चातृप्तिपर्यन्तं शिवपूजाविधेः फलम् ॥ ७.२,२६.१८
ये वाञ्छन्ति महाभोगान्राज्यं च त्रिदशालये ॥ ७.२,२६.१८
ते वाञ्छन्ति सदाकालं हरस्य चरणाम्बुजम् ॥ ७.२,२६.१९
सौभाग्यं कान्तिमद्रूपं सत्त्वं त्यागार्द्रभावता ॥ ७.२,२६.१९
शौर्यं वै जगति ख्यातिश्शिवमर्चयतो भवेत् ॥ ७.२,२६.२०
तस्मात्सर्वं परित्यज्य शिवैकाहितमानसः ॥ ७.२,२६.२०
शिवपूजाविधिं कुर्याद्यदीच्छेच्छिवमात्मनः ॥ ७.२,२६.२१
त्वरितं जीवितं याति त्वरितं याति यौवनम् ॥ ७.२,२६.२१
त्वरितं व्याधिरभ्येति तस्मात्पूज्यः पिनाकधृक् ॥ ७.२,२६.२२
यावन्नायाति मरणं यावन्नाक्रमते जरा ॥ ७.२,२६.२२
यावन्नेन्द्रियवैकल्यं तावत्पूजय शंकरम् ॥ ७.२,२६.२३
न शिवार्चनतुल्यो ऽस्ति धर्मो ऽन्यो भुवनत्रये ॥ ७.२,२६.२३
इति विज्ञाय यत्नेन पूजनीयस्सदाशिवः ॥ ७.२,२६.२४
द्वारयागं जवनिकां परिवारबलिक्रियाम् ॥ ७.२,२६.२४
नित्योत्सवं च कुर्वीत प्रसादे यदि पूजयेत् ॥ ७.२,२६.२५
हविर्निवेदनादूर्ध्वं स्वयं चानुचरो ऽपि वा ॥ ७.२,२६.२५
प्रसादपरिवारेभ्यो बलिं दद्याद्यथाक्रमम् ॥ ७.२,२६.२६

निर्गम्य सह वादित्रैस्तदाशाभिमुखः स्थितः ॥ ७.२,२६.२६

पुष्पं धूपं च दीपञ्च दद्यादन्नं जलैः सह ॥ ७.२,२६.२७

ततो दद्यान्महापीठे तिष्ठन्बलिमुदङ्मुखः ॥ ७.२,२६.२७

ततो निवेदितं देवे यत्तदन्नादिकं पुरा ॥ ७.२,२६.२८

तत्सर्वं सावशेषं वा चण्डाय विनिवेदयेत् ॥ ७.२,२६.२८

हुत्वा च विधिवत्पश्चात्पूजाशेषं समापयेत् ॥ ७.२,२६.२९

कृत्वा प्रयोगं विधिवद्यावन्मन्त्रं जपं ततः ॥ ७.२,२६.२९

नित्योत्सवं प्रकुर्वीत यथोक्तं शिवशासने ॥ ७.२,२६.३०

विपुले तैजसे पात्रे रक्तपद्मोपशोभिते ॥ ७.२,२६.३०

अस्त्रं पाशुपतं दिव्यं तत्रावाह्य समर्चयेत् ॥ ७.२,२६.३१

शिवस्यारोप्यः तत्पात्रं द्विजस्यालंकृतस्य च ॥ ७.२,२६.३१

न्यस्तास्त्रवपुषा तेन दीप्तयष्टिधरस्य च ॥ ७.२,२६.३२

प्रासादपरिवारेभ्यो बहिर्मंगलनिःस्वनैः ॥ ७.२,२६.३२

नृत्यगेयादिभिश्चैव सह दीपध्वजादिभिः ॥ ७.२,२६.३३

प्रदक्षिणत्रयं कृत्वा न द्रुतं चाविलम्बितम् ॥ ७.२,२६.३३

महापीठं समावृत्य त्रिःप्रदक्षिणयोगतः ॥ ७.२,२६.३४

पुनः प्रविष्टो द्वारस्थो यजमानः कृताञ्जलिः ॥ ७.२,२६.३४

आदायाभ्यंतरं नीत्वा ह्यस्त्रमुद्वासयेत्ततः ॥ ७.२,२६.३४

प्रदक्षिणादिकं कृत्वा यथापूर्वोदितं क्रमात् ॥ ७.२,२६.३५

आदाय चाष्टपुष्पाणि पूजामथ समापयेत् ॥ ७.२,२६.३५

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे सांगोपांगपूजाविधानवर्णनं नाम षड्विंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः २७

https://sa.wikisource.org/s/hzv
< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | उत्तर भागः

उपमन्युरुवाच

अथाग्निकार्यं वक्ष्यामि कुण्डे वा स्थंडिले ऽपि वा ॥ ७.२,२७.१

वेद्यां वा ह्यायसे पात्रे मृन्मये वा नवे शुभे ॥ ७.२,२७.१

आधायाग्निं विधानेन संस्कृत्य च ततः परम् ॥ ७.२,२७.२

तत्राराध्य महादेवं होमकर्म समाचरेत् ॥ ७.२,२७.२

कुण्डं द्विहस्तमानं वा हस्तमात्रमथापि वा ॥ ७.२,२७.३

वृत्तं वा चतुरस्रं वा कुर्याद्वेदिं च मण्डलम् ॥ ७.२,२७.३

कुण्डं विस्तारवन्निम्नं तन्मध्ये ऽष्टदलाम्बुजम् ॥ ७.२,२७.४

चतुरंगुलमुत्सेधं तस्य द्व्यंगुलमेव वा ॥ ७.२,२७.४

वितस्तिद्विगुणोन्नत्या नाभिमन्तः प्रचक्षते ॥ ७.२,२७.५

मध्यं च मध्यमांगुल्या मध्यमोत्तमपर्वणोः ॥ ७.२,२७.५

अंगुलैः कथ्यते सद्भिश्चतुर्विंशतिभिः करः ॥ ७.२,२७.६

मेखलानां त्रयं वापि द्वयमेकमथापि वा ॥ ७.२,२७.६

यथाशोभं प्रकुर्वीत श्लक्ष्णमिष्टं मृदा स्थिरम् ॥ ७.२,२७.७

अश्वत्थपत्रवद्योनिं गजाधारवदेव वा ॥ ७.२,२७.७

मेखलामध्यतः कुर्यात्पश्चिमे दक्षिणे ऽपि वा ॥ ७.२,२७.८

शोभनामग्नितः किंचिन्निम्नामुन्मीलिकां शनैः ॥ ७.२,२७.८

अग्रेण कुण्डाभिमुखीं किंचिदुत्सृज्य मेखलाम् ॥ ७.२,२७.९

नोत्सेधनियमो वेद्याः सा मार्दी वाथ सैकती ॥ ७.२,२७.९

मंडलं गोशकृत्तोयैर्मानं पात्रस्य नोदितम् ॥ ७.२,२७.१०

कुण्डं च मृन्मयं वेदिमालिपेद्गोमयांबुना ॥ ७.२,२७.१०

प्रक्षाल्य तापयेत्पात्रं प्रोक्षयेदन्यदंभसा ॥ ७.२,२७.११

स्वसूत्रोक्तप्रकारेण कुण्डादौ विल्लिखेत्ततः ॥ ७.२,२७.११

संप्रोक्ष्य कल्पयेद्दर्भैः पुष्पैर्वा वह्निविष्टरम् ॥ ७.२,२७.१२

अर्चनार्थं च होमार्थं सर्वद्रव्याणि साधयेत् ॥ ७.२,२७.१२

प्रक्षाल्यक्षालनीयानि प्रोक्षण्या प्रोक्ष्य शोधयेत् ॥ ७.२,२७.१३

मणिजं काष्ठजं वाथ श्रोत्रियागारसम्भवम् ॥ ७.२,२७.१३

अन्यं वाभ्यर्हितं वह्निं ततः साधारमानयेत् ॥ ७.२,२७.१४

त्रिः प्रदक्षिणमावृत्य कुण्डादेरुपरि क्रमात् ॥ ७.२,२७.१४

वह्निबीजं समुच्चार्य त्वादधीताग्निमासने ॥ ७.२,२७.१५

योनिमार्गेण वा तद्वदात्मनः संमुखेन वा ॥ ७.२,२७.१५

नियोगः प्रदेश सर्वं कुंडं कुर्याद्विचक्षणः ॥ ७.२,२७.१६

स्वनाभ्यंतःस्थितं वह्निं तद्रंध्राद्विस्फुलिंगवद् ॥ ७.२,२७.१६

निर्गम्य पावके बाह्ये लीनं बिंबाकृति स्मरेत् ॥ ७.२,२७.१७

आज्यसंस्कारपर्यंतमन्वाधानपुरस्सरम् ॥ ७.२,२७.१७

स्वसूत्रोक्तक्रमात्कुर्यान्मूलमन्त्रेण मन्त्रवित् ॥ ७.२,२७.१८

शिवमूर्तिं समभ्यर्च्य ततो दक्षिणपार्श्वतः ॥ ७.२,२७.१८

न्यस्य मन्त्रं घृते मुद्रां दर्शयेद्धेनुसंज्ञिताम् ॥ ७.२,२७.१९

स्रुक्स्रुवौ तैजसौ ग्राह्यौ न कांस्यायससैसकौ ॥ ७.२,२७.१९

यज्ञदारुमयौ वापि स्मार्तौ वा शिल्पसम्मतौ ॥ ७.२,२७.२०

पर्णे वा ब्रह्मवृक्षादेरच्छिद्रे मध्य उत्थिते ॥ ७.२,२७.२०

संसृज्य दर्भैस्तौ वह्नौ संताप्य प्रोक्षयेत्पुनः ॥ ७.२,२७.२१

पारार्षच्र्यस्वसूत्रोक्तक्रमेण शिवपूर्वकैः ॥ ७.२,२७.२१

जुहुयादष्टभिर्बीजैरग्निसंस्कारसिद्धये ॥ ७.२,२७.२२

भ्रुंस्तुंब्रुश्रुं क्रमेणैव पुंड्रंद्रमित्यतः परम् ॥ ७.२,२७.२२

बीजानि सप्त सप्तानां जिह्वानामनुपूर्वशः ॥ ७.२,२७.२३

त्रिशिखा मध्यमा जिह्वा बहुरूपसमाह्वया ॥ ७.२,२७.२३

रक्ताग्नेयी नैरृती च कृष्णान्या सुप्रभा मता ॥ ७.२,२७.२४

अतिरिक्ता मरुज्जिह्वा स्वनामानुगुणप्रभा ॥ ७.२,२७.२४

स्वबीजानन्तरं वाच्या स्वाहांतञ्च यथाक्रमम् ॥ ७.२,२७.२५

जिह्वामंत्रैस्तु तैर्हुत्वाज्यं जिह्वास्त्वेकैकश क्रमात् ॥ ७.२,२७.२५

रं वह्नयेति स्वाहेति मध्ये हुत्वाहुतित्रयम् ॥ ७.२,२७.२६

सर्पिषा वा समिद्भिर्वा परिषेचनमाचरेत् ॥ ७.२,२७.२६

एवं कृते शिवाग्निः स्यात्स्मरेत्तत्र शिवासनम् ॥ ७.२,२७.२७

तत्रावाह्य यजेद्देवमर्धनारीश्वरं शिवम् ॥ ७.२,२७.२७

दीपान्तं परिषिच्याथ समिद्धोमं समाचरेत् ॥ ७.२,२७.२७

ताः पालाश्यः परा वापि याज्ञिया द्वादशांगुलाः ॥ ७.२,२७.२८

अवक्रा न स्वयं शुष्कास्सत्वचो निर्व्रणाः समाः ॥ ७.२,२७.२८

दशांगुला वा विहिताः कनिष्ठांगुलिसंमिताः ॥ ७.२,२७.२९

प्रादेशमात्रा वालाभे होतव्याः सकला अपि ॥ ७.२,२७.२९

दूर्वापत्रसमाकारां चतुरंगुलमायताम् ॥ ७.२,२७.३०

दद्यादाज्याहुतिं पश्चादन्नमक्षप्रमाणतः ॥ ७.२,२७.३०

लाजांस्तथा सर्षपांश्च यवांश्चैव तिलांस्तथा ॥ ७.२,२७.३१

सर्पिषाक्तानि भक्ष्याणि लेह्यचोष्याणि सम्भवे ॥ ७.२,२७.३१

दशैवाहुतयस्तत्र पञ्च वा त्रितयं च वा ॥ ७.२,२७.३२

होतव्याः शक्तितो दद्यादेकमेवाथ वाहुतिम् ॥ ७.२,२७.३२

श्रुवेणाज्यं समित्याद्यास्रुचाशेषात्करेण वा ॥ ७.२,२७.३३

तत्र दिव्येन होतव्यं तीर्थेनार्षेण वा तथा ॥ ७.२,२७.३३

द्रव्येणैकेन वा ऽलाभे जुहुयाच्छ्रद्धया पुनः ॥ ७.२,२७.३४

प्रायश्चित्ताय जुहुयान्मंत्रयित्वाहुतित्रयम् ॥ ७.२,२७.३४

ततो होमविशिष्टेन घृतेनापूर्य वै स्रुचम् ॥ ७.२,२७.३५

निधाय पुष्पं तस्याग्रे श्रुवेणाधोमुखेन ताम् ॥ ७.२,२७.३५

सदर्भेन समाच्छाद्य मूलेनांजलिनोत्थितः ॥ ७.२,२७.३६

वौषडंतेन जुहुयाद्धारां तु यवसंमिताम् ॥ ७.२,२७.३६

इत्थं पूर्णाहुतिं कृत्वा परिषिंचेच्च पूर्ववत् ॥ ७.२,२७.३७

तत उद्वास्य देवेशं गोपयेत्तु हुताशनम् ॥ ७.२,२७.३७

तमप्युद्वास्य वा नाभौ यजेत्संधाय नित्यशः ॥ ७.२,२७.३८

अथवा वह्निमानीय शिवशास्त्रोक्तवर्त्मना ॥ ७.२,२७.३८

वागीशीगर्भसंभूतं संस्कृत्य विधिवद्यजेत् ॥ ७.२,२७.३९

अन्वाधानं पुनः कृत्वा परिधीन् परिधाय च ॥ ७.२,२७.३९

पात्राणि द्वन्द्वरूपेण निक्षिप्येष्ट्वा शिवं ततः ॥ ७.२,२७.४०
संशोध्य प्रोक्षणीपात्रं प्रोक्ष्यतानि तदंभसा ॥ ७.२,२७.४०
प्रणीतापात्रमैशान्यां विन्यस्या पूरितं जलैः ॥ ७.२,२७.४१
आज्यसंस्कारपर्यंतं कृत्वा संशोध्य स्रक्स्रुवौ ॥ ७.२,२७.४१
गर्भाधानं पुंसवनं सीमन्तोन्नयनं ततः ॥ ७.२,२७.४२
कृत्वा पृथक्पृथग्घुत्वा जातमग्निं विचिन्तयेत् ॥ ७.२,२७.४२
त्रिपादं सप्तहस्तं च चतुःशृंगं द्विशीर्षकम् ॥ ७.२,२७.४३
मधुपिंगं त्रिनयनं सकपर्देन्दुशेखरम् ॥ ७.२,२७.४३
रक्तं रक्ताम्बरालेपं माल्यभूषणभूषितम् ॥ ७.२,२७.४४
सर्वलक्षणसंपन्नं सोपवीतं त्रिमेखलम् ॥ ७.२,२७.४४
शक्तिमन्तं स्रुक्स्रुवौ च दधानं दक्षिणे करे ॥ ७.२,२७.४५
तोमरं तालवृंतं च घृतपात्रं तथेतरैः ॥ ७.२,२७.४५
जातं ध्यात्वैवमाकारं जातकर्म समाचरेत् ॥ ७.२,२७.४६
नालापनयनं कृत्वा ततः संशोध्य सूतकम् ॥ ७.२,२७.४६
शिवाग्निरुचिनामास्य कृत्वाहुतिपुरस्सरम् ॥ ७.२,२७.४७
पित्रोर्विसर्जनं कृत्वा चौलोपनयनादिकम् ॥ ७.२,२७.४७
अप्तोर्यामावसानान्तं कृत्वा संस्कारमस्य तु ॥ ७.२,२७.४८
आज्यधारादिहोमं च कृत्वा स्विष्टकृतं ततः ॥ ७.२,२७.४८
रमित्यनेन बीजेन परिषिंचेत्ततः परम् ॥ ७.२,२७.४९
ब्रह्मविष्णुशिवेशानां लोकेशानां तथैव च ॥ ७.२,२७.४९
तदस्त्राणां च परितः कृत्वा पूजां यथाक्रमम् ॥ ७.२,२७.५०
धूपदीपादिसिद्ध्यर्थं वह्निमुद्धृत्य कृत्यवित् ॥ ७.२,२७.५०
साधयित्वाज्यपूर्वाणि द्रव्याणि पुनरेव च ॥ ७.२,२७.५१
कल्पयित्वासनं वह्नौ तत्रावाह्य यथापुरा ॥ ७.२,२७.५१
संपूज्य देवं देवीं च ततः पूर्णांतमाचरेत् ॥ ७.२,२७.५२
अथ वा स्वाश्रमोक्तं तु वह्निकर्म शिवार्पणम् ॥ ७.२,२७.५२
बुद्ध्वा शिवाश्रमी कुर्यान्न च तत्रापरो विधिः ॥ ७.२,२७.५३
शिवाग्नेर्भस्मसंग्राह्यमग्निहोत्रोद्भवं तु वा ॥ ७.२,२७.५३

वैवाहोग्निभवं वापि पक्वं शुचि सुगंधि च ॥ ७.२,२७.५४
कपिलायाः शकृच्छ्रस्तं गृहीतं गगने पतत् ॥ ७.२,२७.५४
न क्लिन्नं नातिकठिनं न दुर्गन्धं न शोषितम् ॥ ७.२,२७.५५
उपर्यधः परित्यज्य गृह्णीयात्पतितं यदि ॥ ७.२,२७.५५
पिंडीकृत्य शिवाग्न्यादौ तत्क्षिपेन्मूलमंत्रतः ॥ ७.२,२७.५६
अपक्वमतिपाक्वं च संत्यज्य भसितं सितम् ॥ ७.२,२७.५६
आदाय वा समालोड्य भस्माधारे विनिक्षिपेत् ॥ ७.२,२७.५७
तैजसं दारवं वापि मृन्मयं शैलमेव च ॥ ७.२,२७.५७
अन्यद्वा शोभनं शुद्धं भस्माधारं प्रकल्पयेत् ॥ ७.२,२७.५८
समे देशे शुभे शुद्धे धनवद्भस्म निक्षिपेत् ॥ ७.२,२७.५८
न चायुक्तकरे दद्यान्नैवाशुचितले क्षिपेत् ॥ ७.२,२७.५९
न संस्पृशेच्च नीचांगैर्नोपेक्षेत न लंघयेत् ॥ ७.२,२७.५९
तस्माद्भसितमादाय विनियुंजीत मन्त्रतः ॥ ७.२,२७.६०
कालेषूक्तेषु नान्यत्र नायोग्येभ्यः प्रदापयेत् ॥ ७.२,२७.६०
भस्मसंग्रहणं कुर्याद्देवे ऽनुद्वासिते सति ॥ ७.२,२७.६१
उद्वासने कृते यस्माच्चण्डभस्म प्रजापते ॥ ७.२,२७.६१
अग्निकार्ये कृते पश्चाच्छिवशास्त्रोक्तमार्गतः ॥ ७.२,२७.६२
स्वसूत्रोक्तप्रकाराद्वा बलिकर्म समाचरेत् ॥ ७.२,२७.६२
अथ विद्यासनं न्यस्य सुप्रलिप्ते तु मण्डले ॥ ७.२,२७.६३
विद्याकोशं प्रतिष्ठाप्य यजेत्पुष्पादिभिः क्रमात् ॥ ७.२,२७.६३
विद्यायाः पुरतः कृत्वा गुरोरपि च मण्डलम् ॥ ७.२,२७.६४
तत्रासनवरं कृत्वा पुष्पाद्यै गुरुमर्चयेत् ॥ ७.२,२७.६४
ततोनुपूजयेत्पूज्यान् भोजयेच्च बुभुक्षितान् ॥ ७.२,२७.६५
ततस्स्वयं च भुंजीत शुद्धमन्नं यथासुखम् ॥ ७.२,२७.६५
निवेदितं च वा देवे तच्छेषं चात्मशुद्धये ॥ ७.२,२७.६६
श्रद्दधानो न लोभेन न चण्डाय समर्पितम् ॥ ७.२,२७.६६
गन्धमाल्यादि यच्चान्यत्तत्राप्येष समो विधिः ॥ ७.२,२७.६७
न तु तत्र शिवोस्मीति बुद्धिं कुर्याद्विचक्षणः ॥ ७.२,२७.६७

भुक्त्वाचम्य शिवं ध्यात्वा हृदये मूलमुच्चरेत् ॥ ७.२,२७.६८

कालशेषं नयेद्योग्यैः शिवशास्त्रकथादिभिः ॥ ७.२,२७.६८

रात्रौ व्यतीते पूर्वांशे कृत्वा पूजां मनोहराम् ॥ ७.२,२७.६९

शिवयोः शयनं त्वेकं कल्पयेदतिशोभनम् ॥ ७.२,२७.६९

भक्ष्यभोज्यांबरालेपपुष्पमालादिकं तथा ॥ ७.२,२७.७०

मनसा कर्मणा वापि कृत्वा सर्वं मनोहरम् ॥ ७.२,२७.७०

ततो देवस्य देव्याश्च पादमूले शुचिस्स्वपेत् ॥ ७.२,२७.७१

गृहस्थो भार्यया सार्धं तदन्ये ऽपि तु केवलाः ॥ ७.२,२७.७१

प्रत्यूषसमयं बुद्ध्वा मात्रामाद्यामुदीरयेत् ॥ ७.२,२७.७२

प्रणम्य मनसां देवं सांबं सगणमव्ययम् ॥ ७.२,२७.७२

देशकालोचितं कृत्वा शौचाद्यमपि शक्तितः ॥ ७.२,२७.७३

शंखादिनिनदैर्दिव्यैर्देवं देवीं च बोधयेत् ॥ ७.२,२७.७३

ततस्तत्समयोन्निद्रैः पुष्पैरतिसुगंधिभिः ॥ ७.२,२७.७४

निर्वर्त्य शिवयोः पूजां प्रारभेत पुरोदितम् ॥ ७.२,२७.७४

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे अग्निकार्यवर्णनं नाम सप्तविंशोऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः २८

https://sa.wikisource.org/s/hzw

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | उत्तर भागः

उपमन्युरुवाच

अतः परं प्रवक्ष्यामि शिवाश्रमनिषेविणाम् ॥ ७.२,२८.१

शिवशास्त्रोक्तमार्गेण नैमित्तिकविधिक्रमम् ॥ ७.२,२८.१

सर्वेष्वपि च मासेषु पक्षयोरुभयोरपि ॥ ७.२,२८.२

अष्टाभ्यां च चतुर्दश्यां तथा पर्वाणि च क्रमात् ॥ ७.२,२८.२

अयने विषुवे चैव ग्रहणेषु विशेषतः ॥ ७.२,२८.३

कर्तव्या महती पूजा ह्यधिका वापि शक्तितः ॥ ७.२,२८.३

मासिमासि यथान्यायं ब्रह्मकूर्चं प्रसाध्य तु ॥ ७.२,२८.४

स्नापयित्वा शिवं तेन पिबेच्छेषमुपोषितः ॥ ७.२,२८.४

ब्रह्महत्यादिदोषाणामतीव महतामपि ॥ ७.२,२८.५

निष्कृतिर्ब्रह्मकूर्चस्य पानान्नान्या विशिष्यते ॥ ७.२,२८.५

पौषे पुष्यनक्षत्रे कुर्यान्नीराजनं विभोः ॥ ७.२,२८.६

माघे मघाख्ये नक्षत्रे प्रदद्याद्घृतकंबलम् ॥ ७.२,२८.६

फाल्गुने चोत्तरान्ते वै प्रारभेत महोत्सवम् ॥ ७.२,२८.७

चैत्रे चित्रापौर्णमास्यां दोलां कुर्याद्यथाविधि ॥ ७.२,२८.७

वैशाख्यां तु विशाखायां कुर्यात्पुष्पमहालयम् ॥ ७.२,२८.८

ज्येष्ठे मूलाख्यनक्षत्रे शीतकुम्भं प्रदापयेत् ॥ ७.२,२८.८

आषाढे चोत्तराषाढे पवित्रारोपणं तथा ॥ ७.२,२८.९

श्रावणे प्राकृतान्यापि मण्डलानि प्रकल्पयेत् ॥ ७.२,२८.९

श्रविष्ठाख्ये तु नक्षत्रे प्रौष्ठपद्यां ततः परम् ॥ ७.२,२८.१०

प्रोक्षयेच्च जलक्रीडां पूर्वाषाढाश्रये दिने ॥ ७.२,२८.१०

आश्वयुज्यां ततो दद्यात्पायसं च नवोदनम् ॥ ७.२,२८.११

अग्निकार्यं च तेनैव कुर्याच्छतभिषग्दिने ॥ ७.२,२८.११

कार्तिक्यां कृतिकायोगे दद्याद्दीपसहस्रकम् ॥ ७.२,२८.१२

मार्गशीर्षे तथार्द्रायां घृतेन स्नापयेच्छिवम् ॥ ७.२,२८.१२
अशक्तस्तेषु कालेषु कुर्यादुत्सवमेव वा ॥ ७.२,२८.१३
आस्थानं वा महापूजामधिकं वा समर्चनम् ॥ ७.२,२८.१३
आवृत्ते ऽपि च कल्याणे प्रशस्तेष्वपि कर्मसु ॥ ७.२,२८.१४
दौर्मनस्ये दुराचारे दुःस्वप्ने दुष्टदर्शने ॥ ७.२,२८.१४
उत्पाते वाशुभेन्यस्मिन्रोगे वा प्रबले ऽथ वा ॥ ७.२,२८.१५
स्नानपूजाजपध्यानहोमदानादिकाः क्रियः ॥ ७.२,२८.१५
निर्मितानुगुणाः कार्याः पुरश्चरणपूर्विकाः ॥ ७.२,२८.१६
शिवानले च विहते पुनस्सन्धानमाचरेत् ॥ ७.२,२८.१६
य एवं शर्वधर्मिष्ठो वर्तते नित्यमुद्यतः ॥ ७.२,२८.१७
तस्यैकजन्मना मुक्तिं प्रयच्छति महेश्वरः ॥ ७.२,२८.१७
एतद्यथोत्तरं कुर्यान्नित्यनैमित्तिकेषु यः ॥ ७.२,२८.१८
दिव्यं श्रीकंठनाथस्य स्थानमाद्यं स गच्छति ॥ ७.२,२८.१८
तत्र भुक्त्वा महाभोगान्कल्पकोटिशतन्नरः ॥ ७.२,२८.१९
कालांतरेच्युतस्तस्मादौमं कौमारमेव च ॥ ७.२,२८.१९
संप्राप्य वैष्णवं ब्राह्मं रुद्रलोकं विशेषतः ॥ ७.२,२८.२०
तत्रोषित्वा चिरं कालं भुक्त्वा भोगान्यथोदितान् ॥ ७.२,२८.२०
पुनश्चोर्ध्वं गतस्तस्मादतीत्य स्थानपञ्चकम् ॥ ७.२,२८.२१
श्रीकण्ठाज्ज्ञानमासाद्य तस्माच्छैवपुरं व्रजेत् ॥ ७.२,२८.२१
अर्धचर्यारतश्चापि द्विरावृत्त्यैवमेव तु ॥ ७.२,२८.२२
पश्चाज्ज्ञानं समासाद्य शिवसायुज्यमाप्नुयात् ॥ ७.२,२८.२२
अर्धार्धचरितो यस्तु देही देहक्षयात्परम् ॥ ७.२,२८.२३
अंडांतं वोर्ध्वमव्यक्तमतीत्य भुवनद्वयम् ॥ ७.२,२८.२३
संप्राप्य पौरुषं रौद्रस्थानमद्रीन्द्रजापतेः ॥ ७.२,२८.२४
अनेकयुगसाहस्रं भुक्त्वा भोगाननेकधा ॥ ७.२,२८.२४
पुण्यक्षये क्षितिं प्राप्य कुले महति जायते ॥ ७.२,२८.२५
तत्रापि पूर्वसंस्कारवशेन स महाद्युतिः ॥ ७.२,२८.२५
पशुधर्मान्परित्यज्य शिवधर्मरतो भवेत् ॥ ७.२,२८.२६

तद्धर्मगौरवादेव ध्यात्वा शिवपुरं व्रजेत् ॥ ७.२,२८.२६
भोगांश्च विविधान्भुक्त्वा विद्येश्वरपदं व्रजेत् ॥ ७.२,२८.२७
तत्र विद्येश्वरैस्सार्धं भुक्त्वा भोगान्बहून्क्रमात् ॥ ७.२,२८.२७
अण्डस्यांतर्बहिर्वाथ सकृदावर्तते पुनः ॥ ७.२,२८.२८
ततो लब्ध्वा शिवज्ञानं परां भक्तिमवाप्य च ॥ ७.२,२८.२८
शिवसाधर्म्यमासाद्य न भूयो विनिवर्तते ॥ ७.२,२८.२९
यश्चातीव शिवे भक्तो विषयासक्तचित्तवत् ॥ ७.२,२८.२९
शिवदर्मानसो कुर्वन्नकुर्वन्वापि मुच्यते ॥ ७.२,२८.३०
एकावृत्तो द्विरावृत्तस्त्रिरावृत्तो निवर्तकः ॥ ७.२,२८.३०
न पुनश्चक्रवर्ती स्याच्छिवधर्माधिकारवान् ॥ ७.२,२८.३१
तस्माच्चिच्छवाश्रितो भूत्वा येन केनापि हेतुना ॥ ७.२,२८.३१
शिवधर्मे मतिं कुर्याच्छ्रेयसे चेत्कृतोद्यमः ॥ ७.२,२८.३२
नात्र निर्बंधयिष्यामो वयं केचन केनचित् ॥ ७.२,२८.३२
निर्बन्धेभ्यो ऽतिवादेभ्यः प्रकृत्यैतन्न रोचते ॥ ७.२,२८.३३
रोचते वा परेभ्यस्तु पुण्यसंस्कारगौरवात् ॥ ७.२,२८.३३
संसारकारणं येषां न प्ररोढुमलं भवेत् ॥ ७.२,२८.३४
प्रकृत्यनुगुणं तस्माद्विमृश्यैतदशेषतः ॥ ७.२,२८.३४
शिवधर्मे ऽधिकुर्वीत यदीच्छेच्छिवमात्मनः ॥ ७.२,२८.३५

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे नित्यनैमित्तिकविधिवर्णनं नामाष्टाविंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः २९

https://sa.wikisource.org/s/hzx

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | उत्तर भागः

श्रीकृष्ण उवाच

भगवंस्त्वन्मुखादेव श्रुतं श्रुतिसमं मया ॥ ७.२,२९.१

स्वाश्रितानां शिवप्रोक्तं नित्यनैमित्तिकं तथा ॥ ७.२,२९.१

इदानीं श्रोतुमिच्छामि शिवधर्माधिकारिणाम् ॥ ७.२,२९.२

काम्यमप्यस्ति चेत्कर्म वक्तुमर्हसि साम्प्रतम् ॥ ७.२,२९.२

उपमन्युरुवाच

अस्त्यैहिकफलं किञ्चिदामुष्मिकफलं तथा ॥ ७.२,२९.३

ऐहिकामुष्मिकञ्चापि तच्च पञ्चविधं पुनः ॥ ७.२,२९.३

किंचित्क्रियामयं कर्म किंचित्कर्म तपो मयम् ॥ ७.२,२९.४

जपध्यानमयं किंचित्किंचित्सर्वमयं तथा ॥ ७.२,२९.५

क्रियामयं तथा भिन्नं होमदानार्चनक्रमात् ॥ ७.२,२९.५

सर्वशक्तिमतामेव नान्येषां सफलं भवेत् ॥ ७.२,२९.६

शक्तिश्चाज्ञा मदेशस्य शिवस्य परमात्मनः ॥ ७.२,२९.६

तस्मात्काम्यानि कर्माणि कुर्यादाज्ञाधरोद्विजः ॥ ७.२,२९.७

अथ वक्ष्यामि काम्यं हि चेहामुत्र फलप्रदम् ॥ ७.२,२९.७

शैवैर्माहेश्वरैश्चैव कार्यमंतर्बहिः क्रमात् ॥ ७.२,२९.८

शिवो महेश्वरश्चेति नात्यंतमिह भिद्यते ॥ ७.२,२९.८

यथा तथा न भिद्यंते शैवा माहेश्वरा अपि ॥ ७.२,२९.९

शिवाश्रिता हि ते शैवा ज्ञानयज्ञरता नराः ॥ ७.२,२९.९

माहेश्वरास्समाख्याता कर्मयज्ञरता भुवि ॥ ७.२,२९.१०

तस्मादाभ्यन्तरे कुर्युः शैवा माहेश्वरा वहिः ॥ ७.२,२९.१०

न तु प्रयोगो भिद्येत वक्ष्यमाणस्य कर्मणः ॥ ७.२,२९.११

परीक्ष्य भूमिं विधिवद्गंधवर्णरसादिभिः ॥ ७.२,२९.११

मनोभिलषिते तत्र वितानविततांबरे ॥ ७.२,२९.१२

सुप्रलिप्ते महीपृष्ठे दर्पणोदरसंनिभे ॥ ७.२,२९.१२
प्राचीमुत्पादयेत्पूर्वं शास्त्रदृष्टेन वर्त्मना ॥ ७.२,२९.१३
एकहस्तं द्विहस्तं वा मण्डलं परिकल्पयेत् ॥ ७.२,२९.१३
आलिखेद्विमलं पद्ममष्टपत्रं सकर्णिकम् ॥ ७.२,२९.१४
रत्नहेमादिभिश्चूर्णैर्यथासंभवसंभृतैः ॥ ७.२,२९.१४
पञ्चावरणसंयुक्तं बहुशोभासमन्वितम् ॥ ७.२,२९.१५
दलेषु सिद्धयः कल्प्याः केसरेषु सशक्तिकाः ॥ ७.२,२९.१५
रुद्रा वामादयस्त्वष्टौ पूर्वादिदलतः क्रमात् ॥ ७.२,२९.१६
कर्णिकायां च वैराग्यं बीजेषु नव शक्तयः ॥ ७.२,२९.१६
स्कन्दे शिवात्मको धर्मो नाले ज्ञानं शिवाश्रयम् ॥ ७.२,२९.१७
कर्णिकोपरि चाग्नेयं मंडलं सौरमैन्दवम् ॥ ७.२,२९.१७
शिवविद्यात्मतत्त्वाख्यं तत्त्वत्रयमतः परम् ॥ ७.२,२९.१८
सर्वासनोपरि सुखं विचित्रकुसुमान्वितम् ॥ ७.२,२९.१८
पञ्चावरणसंयुक्तं पूजयेदंबया सह ॥ ७.२,२९.१९
शुद्धस्फटिकसंकाशं प्रसन्नं शीतलद्युतिम् ॥ ७.२,२९.१९
विद्युद्वलयसंकाशजटामुकुटभूषितम् ॥ ७.२,२९.२०
शार्दूलचर्मवसनं किञ्चित्स्मितमुखांबुजम् ॥ ७.२,२९.२०
रक्तपद्मदलप्रख्यपादपाणितलाधरम् ॥ ७.२,२९.२१
सर्वलक्षणसंपन्नं सर्वाभरणभूषितम् ॥ ७.२,२९.२१
दिव्यायुधवरैर्युक्तं दिव्यगंधानुलेपनम् ॥ ७.२,२९.२२
पञ्चवक्त्रं दशभुजं चन्द्रखण्डशिखामणिम् ॥ ७.२,२९.२२
अस्य पूर्वमुखं सौम्यं बालार्कसदृशप्रभम् ॥ ७.२,२९.२३
त्रिलोचनारविंदाढ्यं कृतबालेंदुशेखरम् ॥ ७.२,२९.२३
दक्षिणं नीलजीमूतसमानरुचिरप्रभम् ॥ ७.२,२९.२४
भ्रुकुटीकुटिलं घोरं रक्तवृत्तेक्षणत्रयम् ॥ ७.२,२९.२४
दंष्ट्राकरालं दुर्धर्षं स्फुरिताधरपल्लवम् ॥ ७.२,२९.२५
उत्तरं विद्रुमप्रख्यं नीलालकविभूषितम् ॥ ७.२,२९.२५
सविलासं त्रिनयनं चन्द्राभरणशेखरम् ॥ ७.२,२९.२६

पश्चिमं पूर्णचन्द्राभं लोचनत्रितयोज्ज्वलम् ॥ ७.२,२९.२६
चन्द्ररेखाधरं सौम्यं मंदस्मितमनोहरम् ॥ ७.२,२९.२७
पञ्चमं स्फटिकप्रख्यमिंदुरेखासमुज्ज्वलम् ॥ ७.२,२९.२७
अतीव सौम्यमुत्फुल्ललोचनत्रितयोज्ज्वलम् ॥ ७.२,२९.२८
दक्षिणे शूलपरशुवज्रखड्गानलोज्ज्वलम् ॥ ७.२,२९.२८
सव्ये च नागनाराचघण्टापाशांकुशोज्ज्वलम् ॥ ७.२,२९.२९
निवृत्त्याजानुसंबद्धमानाभेश्च प्रतिष्ठया ॥ ७.२,२९.२९
आकंठं विद्यया तद्वदाललाटं तु शांतया ॥ ७.२,२९.३०
तदूर्ध्वं शांत्यतीताख्यकलया परया तथा ॥ ७.२,२९.३०
पञ्चाध्वव्यापिनं साक्षात्कलापञ्चकविग्रहम् ॥ ७.२,२९.३१
ईशानमुकुटं देवं पुरुषाख्यं पुरातनम् ॥ ७.२,२९.३१
अघोरहृदयं तद्वद्वामगुह्यं महेश्वरम् ॥ ७.२,२९.३२
सद्यपादं च तन्मूर्तिमष्टत्रिंशत्कलामयम् ॥ ७.२,२९.३२
मातृकामयमीशानं पञ्चब्रह्ममयं तथा ॥ ७.२,२९.३३
ओंकाराख्यमयं चैव हंसशक्त्या समन्वितम् ॥ ७.२,२९.३३
तथेच्छात्मिकया शक्त्या समारूढांकमंडलम् ॥ ७.२,२९.३४
ज्ञानाख्यया दक्षिणतो वामतश्च क्रियाख्यया ॥ ७.२,२९.३४
तत्त्वत्रयमयं साक्षाद्विद्यामूर्तिं सदाशिवम् ॥ ७.२,२९.३५
मूर्तिमूलेन संकल्प्य सकलीकृत्य च क्रमात् ॥ ७.२,२९.३५
संपूज्य च यथान्यायमर्घान्तं मूलविद्यया ॥ ७.२,२९.३६
मूर्तिमन्तं शिवं साक्षाच्छक्त्या परमया सह ॥ ७.२,२९.३६
तत्रावाह्य महादेवं सदसद्व्यक्तिवर्जितम् ॥ ७.२,२९.३७
पञ्चोपकरणं कृत्वा पूजयेत्परमेश्वरम् ॥ ७.२,२९.३७
ब्रह्मभिश्च षडङ्गैश्च ततो मातृकया सह ॥ ७.२,२९.३८
प्रणवेन शिवेनैव शक्तियुक्तेन च क्रमात् ॥ ७.२,२९.३८
शांतेन वा तथान्यैश्च वेदमन्त्रैश्च कृत्स्नशः ॥ ७.२,२९.३९
पूजयेत्परमं देवं केवलेन शिवेन वा ॥ ७.२,२९.३९

पाद्यादिमुखवासांतं कृत्वा प्रस्थापनं विना ॥ ७.२,२९.४०
पञ्चावरणपूजां तु ह्यारभेत यथाक्रमम् ॥ ७.२,२९.४०

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे काम्यकर्मवर्णनं नामैकोनत्रिंशत्तमोऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ३०

https://sa.wikisource.org/s/hzy


तत्रादौ शिवयोः पार्श्वे दक्षिणे वामतः क्रमात् ॥ ७.२,३०.१

गंधाद्यैरर्चयेत्पूर्वं देवौ हेरंबषण्मुखौ ॥ ७.२,३०.१

ततो ब्रह्माणि परित ईशानादि यथाक्रमम् ॥ ७.२,३०.२

सशक्तिकानि सद्यांतं प्रथमावरणे यजेत् ॥ ७.२,३०.२

षडंगान्यपि तत्रैव हृदयादीन्यनुक्रमात् ॥ ७.२,३०.३

शिवस्य च शिवायाश्च वाह्नेयादि समर्चयेत् ॥ ७.२,३०.३

तत्र वामादिकान्रुद्रानष्टौ वामादिशक्तिभिः ॥ ७.२,३०.४

अर्चयेद्वा न वा पश्चात्पूर्वादिपरितः क्रमात् ॥ ७.२,३०.४

प्रथमावरणं प्रोक्तं मया ते यदुनंदन ॥ ७.२,३०.५

द्वितीयावरणं प्रीत्या प्रोच्यते श्रद्धया शृणु ॥ ७.२,३०.५

अनंतं पूर्वादिक्पत्रे तच्छक्तिं तस्य वामतः ॥ ७.२,३०.६

सूक्ष्मं दक्षिणदिक्पत्रे सह शक्त्या समर्चयेत् ॥ ७.२,३०.६

ततः पश्चिमदिक्पत्रे सह शक्त्या शिवोत्तमम् ॥ ७.२,३०.७

तथैवोत्तरदिक्पत्रे चैकनेत्रं समर्चयेत् ॥ ७.२,३०.७

एकरुद्रं च तच्छक्तिं पश्चादीशदले ऽर्चयेत् ॥ ७.२,३०.८

त्रिमूर्तिं तस्य शक्तिं च पूजयेदग्निदिग्दले ॥ ७.२,३०.८

श्रीकण्ठं नैरृते पत्रे तच्छक्तिं तस्य वामतः ॥ ७.२,३०.९

तथैव मारुते पत्रे शिखंडीशं समर्चयेत् ॥ ७.२,३०.९

द्वितीयावरणे चेज्यास्सर्वतश्चक्रवर्तिनः ॥ ७.२,३०.१०

तृतीयावरणे पूज्याः शक्तिभिश्चाष्टमूर्तयः ॥ ७.२,३०.१०

अष्टसु क्रमशो दिक्षु पूर्वादिपरितः क्रमात् ॥ ७.२,३०.११

भवः शर्वस्तथेशानो रुद्रः पशुपतिस्ततः ॥ ७.२,३०.११

उग्रो भीमो महादेव इत्यष्टौ मूर्तयः क्रमात् ॥ ७.२,३०.१२

अनंतरं ततश्चैव महादेवादयः क्रमात् ॥ ७.२,३०.१२

शक्तिभिस्सह संपूज्यास्तत्रैकादशमूर्तयः ॥ ७.२,३०.१२
महादेवः शिवो रुद्रः शंकरो नीललोहितः ॥ ७.२,३०.१३
ईशानो विजयो भीमो देवदेवो भवोद्भवः ॥ ७.२,३०.१३
कपर्दीशश्च कथ्यंते तथैकादशशक्तयः ॥ ७.२,३०.१४
तत्राष्टौ प्रथमं पूज्याः वाह्नेयादि यथाक्रमम् ॥ ७.२,३०.१४
देवदेवः पूर्वपत्रे ईशानं चाग्निगोचरे ॥ ७.२,३०.१५
भवोद्भवस्तयोर्मध्ये कपालीशस्ततः परम् ॥ ७.२,३०.१५
तस्मिन्नावरणे भूयो वृषेन्द्रं पुरतो यजेत् ॥ ७.२,३०.१६
नंदिनं दक्षिणे तस्य महाकालं तथोत्तरे ॥ ७.२,३०.१६
शास्तारं वह्निदिक्पत्रे मातॄर्दक्षिणदिग्दले ॥ ७.२,३०.१७
गजास्यं नैरृते पत्रे षण्मुखं वारुणे पुनः ॥ ७.२,३०.१७
ज्येष्ठां वायुदले गौरीमुत्तरे चंडमैश्वरे ॥ ७.२,३०.१८
शास्तृनन्दीशयोर्मध्ये मुनीन्द्रं वृषभं यजेत् ॥ ७.२,३०.१८
महाकालस्योत्तरतः पिंगलं तु समर्चयेत् ॥ ७.२,३०.१९
शास्तृमातृसमूहस्य मध्ये भृंगीश्वरं ततः ॥ ७.२,३०.१९
मातृविघ्नेशमध्ये तु वीरभद्रं समर्चयेत् ॥ ७.२,३०.२०
स्कन्दविघ्नेशयोर्मध्ये यजेद्देवीं सरस्वतीम् ॥ ७.२,३०.२०
ज्येष्ठाकुमारयोर्मध्ये श्रियं शिवपदार्चिताम् ॥ ७.२,३०.२१
ज्येष्ठागणाम्बयोर्मध्ये महामोटीं समर्चयेत् ॥ ७.२,३०.२१
गणाम्बाचण्डयोर्मध्ये देवीं दुर्गां प्रपूजयेत् ॥ ७.२,३०.२२
अत्रैवावरणे भूयः शिवानुचरसंहतिम् ॥ ७.२,३०.२२
रुद्रप्रथमभूताख्यां विविधां च सशक्तिकाम् ॥ ७.२,३०.२३
शिवायाश्च सखीवर्गं जपेद्ध्यात्वा समाहितः ॥ ७.२,३०.२३
एवं तृतीयावरणे वितते पूजिते सति ॥ ७.२,३०.२४
चतुर्थावरणं ध्यात्वा बहिस्तस्य समर्चयेत् ॥ ७.२,३०.२४
भानुः पूर्वदले पूज्यो दक्षिणे चतुराननः ॥ ७.२,३०.२५
रुद्रो वरुणदिक्पत्रे विष्णुरुत्तरदिग्दले ॥ ७.२,३०.२५
चतुर्णामपि देवानां पृथगावरणान्यथ ॥ ७.२,३०.२६

तस्यांगानि षडेवादौ दीप्ताद्याभिश्च शक्तिभिः ॥ ७.२,३०.२६
दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला क्रमात् ॥ ७.२,३०.२७
अमोघा विद्युता चैव पूर्वादि परितः स्थिताः ॥ ७.२,३०.२७
द्वितीयावरणे पूज्याश्चतस्रो मूर्तयः क्रमात् ॥ ७.२,३०.२८
पूर्वाद्युत्तरपर्यंताः शक्तयश्च ततः परम् ॥ ७.२,३०.२८
आदित्यो भास्करो भानू रविश्चेत्यनुपूर्वशः ॥ ७.२,३०.२९
अर्को ब्रह्मा तथा रुद्रो विष्णुश्चैते विवस्वतः ॥ ७.२,३०.२९
विस्तारा पूर्वदिग्भागे सुतरां दक्षिणे स्थिताः ॥ ७.२,३०.३०
बोधनी पश्चिमे भागे आप्यायिन्युत्तरे पुनः ॥ ७.२,३०.३०
उषां प्रभां तथा प्राज्ञां सन्ध्यामपि ततः परम् ॥ ७.२,३०.३१
ऐशानादिषु विन्यस्य द्वितीयावरणे यजेत् ॥ ७.२,३०.३१
सोममंगारकं चैव बुधं बुद्धिमतां वरम् ॥ ७.२,३०.३२
बृहस्पतिं बृहद्बुद्धिं भार्गवं तेजसां निधिम् ॥ ७.२,३०.३२
शनैश्चरं तथा राहुं केतुं धूम्रं भयंकरम् ॥ ७.२,३०.३३
समंततो यजेदेतांस्तृतीयावरणे क्रमात् ॥ ७.२,३०.३३
अथवा द्वादशादित्या द्वितीयावरणे यजेत् ॥ ७.२,३०.३४
तृतीयावरणे चैव राशीन्द्वादश पूजयेत् ॥ ७.२,३०.३४
सप्तसप्त गणांश्चैव बहिस्तस्य समंततः ॥ ७.२,३०.३५
ऋषीन्देवांश्च गंधर्वान्पन्नगानप्सरोगणान् ॥ ७.२,३०.३५
ग्रामण्यश्च तथा यक्षान्यातुधानांस्तथा हयान् ॥ ७.२,३०.३६
सप्तच्छंदोमयांश्चैव वालखिल्यांश्च पूजयेत् ॥ ७.२,३०.३६
एवं तृतीयावरणे समभ्यर्च्य दिवाकरम् ॥ ७.२,३०.३७
ब्रह्माणमर्चयेत्पश्चात्त्रिभिरावरणैः सहः ॥ ७.२,३०.३७
हिरण्यगर्भं पूर्वस्यां विराजं दक्षिणे ततः ॥ ७.२,३०.३८
कालं पश्चिमदिग्भागे पुरुषं चोत्तरे यजेत् ॥ ७.२,३०.३८
हिरण्यगर्भः प्रथमो ब्रह्मा कमलसन्निभः ॥ ७.२,३०.३९
कालो जात्यंजनप्रख्यः पुरुषः स्फटिकोपमः ॥ ७.२,३०.३९
त्रिगुणो राजसश्चैव तामसः सात्त्विकस्तथा ॥ ७.२,३०.४०

चत्वार एते क्रमशः प्रथमावरणे स्थिताः ॥ ७.२,३०.४०
द्वितीयावरणे पूज्याः पूर्वादिपरितः क्रमात् ॥ ७.२,३०.४१
सनत्कुमारः सनकः सनंदश्च सनातनः ॥ ७.२,३०.४१
तृतीयावरणे पश्चादर्चयेच्च प्रजापतीन् ॥ ७.२,३०.४२
अष्टौ पूर्वांश्च पूर्वादौ त्रीन्प्राक्पश्चादनुक्रमात् ॥ ७.२,३०.४२
दक्षो रुचिर्भृगुश्चैव मरीचिश्च तथांगिराः ॥ ७.२,३०.४३
पुलस्त्यः पुलहश्चैव क्रतुरत्रिश्च कश्यपः ॥ ७.२,३०.४३
वसिष्ठश्चेति विख्याताः प्रजानां पतयस्त्विमे ॥ ७.२,३०.४४
तेषां भार्याश्च तैस्सार्धं पूजनीया यथाक्रमम् ॥ ७.२,३०.४४
प्रसूतिश्च तथा"कूतिः ख्यातिः सम्भूतिरेव च ॥ ७.२,३०.४५
धृतिः स्मृतिः क्षमा चैव सन्नतिश्चानसूयका ॥ ७.२,३०.४५
देवमातारुन्धती च सर्वाः खलु पतिव्रताः ॥ ७.२,३०.४६
शिवार्चनरतो नित्यं श्रीमत्यः प्रियदर्शनाः ॥ ७.२,३०.४६
प्रथमावरणे वेदांश्चतुरो वा प्रपूजयेत् ॥ ७.२,३०.४७
इतिहासपुराणानि द्वितीयावरणे पुनः ॥ ७.२,३०.४७
तृतीयावरणे पश्चाद्धर्मशास्त्रपुरस्सराः ॥ ७.२,३०.४८
वैदिक्यो निखिला विद्याः पूज्या एव समंततः ॥ ७.२,३०.४८
पूर्वादिपुरतो वेदास्तदन्ये तु यथारुचि ॥ ७.२,३०.४९
अष्टधा वा चतुर्धा वा कृत्वा पूजां समंततः ॥ ७.२,३०.४९
एवं ब्रह्माणमभ्यर्च्य त्रिभिरावरणैर्युतम् ॥ ७.२,३०.५०
दक्षिणे पश्चिमे पश्चाद्रुद्रं सावरणं यजेत् ॥ ७.२,३०.५०
तस्य ब्रह्मषडंगानि प्रथमावरणं स्मृतम् ॥ ७.२,३०.५१
द्वितीयावरणे चैव विद्येश्वरमयं तथा ॥ ७.२,३०.५१
तृतीयावरणे भेदो विद्यते स तु कथ्यते ॥ ७.२,३०.५२
चतस्रो मूर्तयस्तस्य पूज्याः पूर्वादितः क्रमात् ॥ ७.२,३०.५२
त्रिगुणास्सकलो देवः पुरस्ताच्छिवसंज्ञकः ॥ ७.२,३०.५३
राजसो दक्षिणे ब्रह्मा सृष्टिकृत्पूज्यते भवः ॥ ७.२,३०.५३
तामसः पश्चिमे चाग्निः पूज्यस्संहारको हरः ॥ ७.२,३०.५४

सात्त्विकस्सुखकृत्सौम्ये विष्णुर्विश्वपतिर्मृडः ॥ ७.२,३०.५४
एवं पश्चिमदिग्भागे शम्भोः षड्विंशकं शिवम् ॥ ७.२,३०.५५
समभ्यर्च्योत्तरे पार्श्वे ततो वैकुंठमर्चयेत् ॥ ७.२,३०.५५
वासुदेवं पुरस्कृत्वा प्रथमावरणे यजेत् ॥ ७.२,३०.५६
अनिरुद्धं दक्षिणतः प्रद्युम्नं पश्चिमे ततः ॥ ७.२,३०.५६
सौम्ये संकर्षणं पश्चाद्व्यत्यस्तौ वा यजेदिमौ ॥ ७.२,३०.५७
प्रथमावरणं प्रोक्तं द्वितीयावरणं शुभम् ॥ ७.२,३०.५७
मत्स्यः कूर्मो वराहश्च नरसिंहोथ वामनः ॥ ७.२,३०.५८
रामश्चान्यतमः कृष्णो भवानश्वमुखोपि च ॥ ७.२,३०.५८
तृतीयावरणे चक्रः पूर्वभागे समर्चयेत् ॥ ७.२,३०.५९
नारायणाख्यां याम्येस्त्रं क्वचिदव्याहतं यजेत् ॥ ७.२,३०.५९
पश्चिमे पांचजन्यं च शार्ङ्गंधनुरथोत्तरे ॥ ७.२,३०.६०
एवं त्र्यावरणैः साक्षाद्विश्वाख्यां परमं हरिम् ॥ ७.२,३०.६०
महाविष्णुं सदाविष्णुं मूर्तीकृत्य समर्चयेत् ॥ ७.२,३०.६१
इत्थं विष्णोश्चतुर्व्यूहक्रमान्मूर्तिचतुष्टयम् ॥ ७.२,३०.६१
पूजयित्वा च तच्छक्तीश्चतस्रः पुजयेत्क्रमात् ॥ ७.२,३०.६१
प्रभामाग्नेयदिग्भागे नैरृते तु सरस्वतीम् ॥ ७.२,३०.६२
गणांबिका च वायव्ये लक्ष्मीं रौद्रे समर्चयेत् ॥ ७.२,३०.६२
एवं भान्वादिमूर्तीनां तच्छक्तीनामनंतरम् ॥ ७.२,३०.६३
पूजां विधाय लोकेशांस्तत्रैवावरणे यजेत् ॥ ७.२,३०.६३
इन्द्रमग्निं यमं चैव निरृतिं वरुणं तथा ॥ ७.२,३०.६४
वायुं सोमं कुबेरं च पश्चादीशानमर्चयेत् ॥ ७.२,३०.६४
एवं चतुर्थावरणं पूजयित्वा विधानतः ॥ ७.२,३०.६५
आयुधानि महेशस्य पश्चाद्बाह्यं समर्चयेत् ॥ ७.२,३०.६५
श्रीमन्त्रिशूलमैशाने वज्रं माहेन्द्रदिङ्मुखे ॥ ७.२,३०.६६
परशुं वह्निदिग्भागे याम्ये सायकमर्चयेत् ॥ ७.२,३०.६६
नैरृते तु यजेत्खड्गं पाशं वारुणगोचरे ॥ ७.२,३०.६७
अंकुशं मारुते भागे पिनाकं चोत्तरे यजेत् ॥ ७.२,३०.६७

पश्चिमाभिमुखं रौद्रं क्षेत्रपालं समर्चयेत् ॥ ७.२,३०.६८
पञ्चमावरणं चैव सम्पूज्यानन्तरं बहिः ॥ ७.२,३०.६८
सर्वावरणदेवानां बहिर्वा पञ्चमे ऽथवा ॥ ७.२,३०.६९
पञ्चमे मातृभिस्सार्धं महोक्ष पुरतो यजेत् ॥ ७.२,३०.६९
ततः समंततः पूज्यास्सर्वा वै देवयोनयः ॥ ७.२,३०.७०
खेचरा ऋषयस्सिद्धा दैत्या यक्षाश्च राक्षसाः ॥ ७.२,३०.७०
अनंताद्याश्च नागेंद्रा नागैस्तत्तत्कुलोद्भवैः ॥ ७.२,३०.७१
डाकिनीभूतवेतालप्रेतभैरवनायकाः ॥ ७.२,३०.७१
पातालवासिनश्चान्ये नानायोनिसमुद्भवाः ॥ ७.२,३०.७२
नद्यस्समुद्रा गिरयः काननानि सरांसि च ॥ ७.२,३०.७२
पशवः पक्षिणो वृक्षाः कीटाद्याः क्षुद्रयोनयः ॥ ७.२,३०.७३
नराश्च विविधाकारा मृगाश्च क्षुद्रयोनयः ॥ ७.२,३०.७३
भुवनान्यन्तरण्डस्य ततो ब्रह्माण्डकोटयः ॥ ७.२,३०.७४
बहिरंडान्यसंख्यानि भुवनानि सहाधिपैः ॥ ७.२,३०.७४
ब्रह्मांडाधारका रुद्रा दशदिक्षु व्यवस्थिताः ॥ ७.२,३०.७५
यद्गौड यच्च मामेयं यद्वा शाक्तं ततः परम् ॥ ७.२,३०.७५
यत्किञ्चिदस्ति शब्दस्य वाच्यं चिदचिदात्मकम् ॥ ७.२,३०.७६
तत्सर्वं शिवयोः पार्श्वे बुद्ध्वा सामान्यतो यजेत् ॥ ७.२,३०.७६
कृतांजलिपुटाः सर्वे ऽचिंत्याः स्मितमुखास्तथा ॥ ७.२,३०.७७
प्रीत्या संप्रेक्षमाणाश्च देवं देवीं च सर्वदा ॥ ७.२,३०.७७
इत्थमावरणाभ्यर्चां कृत्वाविक्षेपशांतये ॥ ७.२,३०.७८
पुनरभ्यर्च्य देवेशं पक्त्वाक्षरमुदीरयेत् ॥ ७.२,३०.७८
निवेदयेत्ततः पश्चाच्छिवयोरमृतोपमम् ॥ ७.२,३०.७९
सुव्यञ्जनसमायुक्तं शुद्धं चारु महाचरुम् ॥ ७.२,३०.७९
द्वात्रिंशदाढकैर्मुख्यमधमं त्वाढकावरम् ॥ ७.२,३०.८०
साधयित्वा यथासंपच्छ्रद्धया विनिवेदयेत् ॥ ७.२,३०.८०
ततो निवेद्य पानीयं तांबूलं चोपदंशकैः ॥ ७.२,३०.८१
नीराजनादिकं कृत्वा पूजाशेषं समापयेत् ॥ ७.२,३०.८१

भोगोपयोग्यद्रव्याणि विशिष्टान्येव साधयेत् ॥ ७.२,३०.८२
वित्तशाठ्यं न कुर्वीत भक्तिमान्विभवे सति ॥ ७.२,३०.८२
शठस्योपेक्षकस्यापि व्यंग्यं चैवानुतिष्ठतः ॥ ७.२,३०.८३
न फलंत्येव कर्माणि काम्यानीति सतां कथा ॥ ७.२,३०.८३
तस्मात्सम्यगुपेक्षां च त्यक्त्वा सर्वांगयोगतः ॥ ७.२,३०.८४
कुर्यात्काम्यानि कर्माणि फलसिद्धिं यदीच्छति ॥ ७.२,३०.८४
इत्थं पूजां समाप्याथ देवं देवीं प्रणम्य च ॥ ७.२,३०.८५
भक्त्या मनस्समाधाय पश्चात्स्तोत्रमुदीरयेत् ॥ ७.२,३०.८५
ततः स्तोत्रमुपास्यान्ते त्वष्टोत्तरशतावराम् ॥ ७.२,३०.८६
जपेत्पञ्चाक्षरीं विद्यां सहस्रोत्तरमुत्सुकः ॥ ७.२,३०.८६
विद्यापूजां गुरोः पूजां कृत्वा पश्चाद्यथाक्रमम् ॥ ७.२,३०.८७
यथोदयं यथाश्राद्धं सदस्यानपि पूजयेत् ॥ ७.२,३०.८७
ततः उद्वास्य देवेशं सर्वैरावरणैः सह ॥ ७.२,३०.८८
मण्डलं गुरवे दद्याद्यागोपकरणैस्सह ॥ ७.२,३०.८८
शिवाश्रितेभ्यो वा दद्यात्सर्वमेवानुपूर्वशः ॥ ७.२,३०.८९
अथवा तच्छिवायैव शिवक्षेत्रे समर्पयेत् ॥ ७.२,३०.८९
शिवाग्नौ वा यजेद्देवं होमद्रव्यैश्च सप्तभिः ॥ ७.२,३०.९०
समभ्यर्च्य यथान्यायं सर्वावरणदेवताः ॥ ७.२,३०.९०
एष योगेश्वरो नाम त्रिषु लोकेषु विश्रुतः ॥ ७.२,३०.९१
न तस्मादधिकः कश्चिद्यागो ऽस्ति भुवने क्वचित् ॥ ७.२,३०.९१
न तदस्ति जगत्यस्मिन्नसध्यं यदनेन तु ॥ ७.२,३०.९२
ऐहिकं वा फलं किंचिदामुष्मिकफलं तु वा ॥ ७.२,३०.९२
इदमस्य फलं नेदमिति नैव नियम्यते ॥ ७.२,३०.९३
श्रेयोरूपस्य कृत्स्नस्य तदिदं श्रेष्टसाधनम् ॥ ७.२,३०.९३
इदं न शक्यते वक्तुं पुरुषेण यदर्च्यते ॥ ७.२,३०.९४
चिंतामणेरिवैतस्मात्तत्तेन प्राप्यते फलम् ॥ ७.२,३०.९४
तथापि क्षुद्रमुद्दिश्य फलं नैतत्प्रयोजयेत् ॥ ७.२,३०.९५
लघ्वर्थी महतो यस्मात्स्वयं लघुतरो भवेत् ॥ ७.२,३०.९५

महद्वा फलमल्पं वा कृतं चेत्कर्म सिध्यति ॥ ७.२,३०.९६
महादेवं समुद्दिश्य कृतं कर्म प्रयुज्यताम् ॥ ७.२,३०.९६
तस्मादनन्यलभ्येषु शत्रुमृत्युंजयादिषु ॥ ७.२,३०.९७
फलेषु दृष्टादृष्टेषु कुर्यादेतद्विचक्षणः ॥ ७.२,३०.९७
महत्स्वपि च पातेषु महारागभयादिषु ॥ ७.२,३०.९८
दुर्भिक्षादिषु शांत्यर्थं शांतिं कुर्यादनेन तु ॥ ७.२,३०.९८
बहुना किं प्रलापेन महाव्यापन्निवारकम् ॥ ७.२,३०.९९
आत्मीयमस्त्रं शैवानामिदमाह महेश्वरः ॥ ७.२,३०.९९
तस्मादितः परं नास्ति परित्राणमिहात्मनः ॥ ७.२,३०.१००
इति मत्वा प्रयुंजानः कर्मेदं शुभमश्नुते ॥ ७.२,३०.१००
स्तोत्रमात्रं शुचिर्भूत्वा यः पठेत्सुसमाहितः ॥ ७.२,३०.१०१
सोप्यभीष्टतमादर्थादष्टांशफलमाप्नुयात् ॥ ७.२,३०.१०१
अर्थं तस्यानुसन्धाय पर्वण्यनशनः पठेत् ॥ ७.२,३०.१०२
अष्टाभ्यां वा चतुर्दश्यां फलमर्धं समाप्नुयात् ॥ ७.२,३०.१०२
यस्त्वर्थमनुसंधाय पर्वादिषु तथा व्रती ॥ ७.२,३०.१०३
मासमेकं जपेत्स्तोत्रं स कृत्स्नं फलमाप्नुयात् ॥ ७.२,३०.१०३

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शैवानां काम्यकवर्णनं नाम त्रिंशोऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ३१

https://sa.wikisource.org/s/i01

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | उत्तर भागः

उपमन्युरुवाच

स्तोत्रं वक्ष्यामि ते कृष्ण पञ्चावरणमार्गतः ॥ ७.२,३१.१

योगेश्वरमिदं पुण्यं कर्म येन समाप्यते ॥ ७.२,३१.१

जय जय जगदेकनाथ शंभो प्रकृतिमनोहर नित्यचित्स्वभाव ॥ ७.२,३१.२

अतिगतकलुषप्रपञ्चवाचामपि मनसां पदवीमतीततत्त्वम् ॥ ७.२,३१.२

स्वभावनिर्मलाभोग जय सुन्दरचेष्टित ॥ ७.२,३१.३

स्वात्मतुल्यमहाशक्ते जय शुद्धगुणार्णव ॥ ७.२,३१.३

अनन्तकांतिसंपन्न जयासदृशविग्रह ॥ ७.२,३१.४

अतर्क्यमहिमाधार जयानाकुलमंगल ॥ ७.२,३१.४

निरंजन निराधार जय निष्कारणोदय ॥ ७.२,३१.५

निरन्तरपरानन्द जय निर्वृतिकारण ॥ ७.२,३१.५

जयातिपरमैश्वर्य जयातिकरुणास्पद ॥ ७.२,३१.६

जय स्वतंत्रसर्वस्व जयासदृशवैभव ॥ ७.२,३१.६

जयावृतमहाविश्व जयानावृत केनचित् ॥ ७.२,३१.७

जयोत्तर समस्तस्य जयात्यन्तनिरुत्तर ॥ ७.२,३१.७

जयाद्भुत जयाक्षुद्र जयाक्षत जयाव्यय ॥ ७.२,३१.८

जयामेय जयामाय जयाभाव जयामल ॥ ७.२,३१.८

महाभुज महासार महागुण महाकथ ॥ ७.२,३१.९

महाबल महामाय महारस महारथ ॥ ७.२,३१.९

नमः परमदेवाय नमः परमहेतवे ॥ ७.२,३१.१०

नमश्शिवाय शांताय नमश्शिवतराय ते ॥ ७.२,३१.१०

त्वदधीनमिदं कृत्स्नं जगद्धि ससुरासुरम् ॥ ७.२,३१.११

अतस्त्वद्विहितामाज्ञां क्षमते को ऽतिवर्तितुम् ॥ ७.२,३१.१२

अयं पुनर्जनो नित्यं भवदेकसमाश्रयः ॥ ७.२,३१.१३

भवानतो ऽनुगृह्यास्मै प्रार्थितं संप्रयच्छतु ॥ ७.२,३१.१३
जयांबिके जगन्मातर्जय सर्वजगन्मयि ॥ ७.२,३१.१४
जयानवधिकैश्वर्ये जयानुपमविग्रहे ॥ ७.२,३१.१४
जय वाङ्मनसातीते जयाचिद्ध्वांतभंजिके ॥ ७.२,३१.१५
जय जन्मजराहीने जय कालोत्तरोत्तरे ॥ ७.२,३१.१५
जयानेकविधानस्थे जय विश्वेश्वरप्रिये ॥ ७.२,३१.१६
जय विश्वसुराराध्ये जय विश्वविजृंभिणि ॥ ७.२,३१.१६
जय मंगलदिव्यांगि जय मंगलदीपिके ॥ ७.२,३१.१७
जय मंगलचारित्रे जय मंगलदायिनि ॥ ७.२,३१.१७
नमः परमकल्याणगुणसंचयमूर्तये ॥ ७.२,३१.१८
त्वत्तः खलु समुत्पन्नं जगत्त्वय्येव लीयते ॥ ७.२,३१.१८
त्वद्विनातः फलं दातुमीश्वरोपि न शक्नुयात् ॥ ७.२,३१.१९
जन्मप्रभृति देवेशि जनोयं त्वदुपाश्रितः ॥ ७.२,३१.१९
अतो ऽस्य तव भक्तस्य निर्वर्तय मनोरथम् ॥ ७.२,३१.२०
पञ्चवक्त्रो दशभुजः शुद्धस्फटिकसन्निभः ॥ ७.२,३१.२०
वर्णब्रह्मकलादेहो देवस्सकलनिष्कलः ॥ ७.२,३१.२१
शिवभक्तिसमारूढः शांत्यतीतस्सदाशिवः ॥ ७.२,३१.२१
भक्त्या मयार्चितो मह्यं प्रार्थितं शं प्रयच्छतु ॥ ७.२,३१.२१
सदाशिवांकमारूढा शक्तिरिच्छा शिवाह्वया ॥ ७.२,३१.२२
जननी सर्वलोकानां प्रयच्छतु मनोरथम् ॥ ७.२,३१.२२
शिवयोर्दयिता पुत्रौ देवौ हेरंबषण्मुखौ ॥ ७.२,३१.२३
शिवानुभावौ सर्वज्ञौ शिवज्ञानामृताशिनौ ॥ ७.२,३१.२३
तृप्तौ परस्परं स्निग्धौ शिवाभ्यां नित्यसत्कृतौ ॥ ७.२,३१.२४
सत्कृतौ च सदा देवौ ब्रह्माद्यैस्त्रिदशैरपि ॥ ७.२,३१.२४
सर्वलोकपरित्राणं कर्तुमभ्युदितौ सदा ॥ ७.२,३१.२५
स्वेच्छावतारं कुर्वंतौ स्वांशभेदैरनेकशः ॥ ७.२,३१.२५
ताविमौ शिवयोः पार्श्वे नित्यमित्थं मयार्चितौ ॥ ७.२,३१.२६
तयोराज्ञां पुरस्कृत्य प्रार्थितं मे प्रयच्छताम् ॥ ७.२,३१.२६

शुद्धस्फटिकसंकाशमीशानाख्यं सदाशिवम् ॥ ७.२,३१.२७
मूर्धाभिमानिनी मूर्तिः शिवस्य परमात्मनः ॥ ७.२,३१.२७
शिवार्चनरतं शांतं शांत्यतीतं मखास्थितम् ॥ ७.२,३१.२८
पञ्चाक्षरांतिमं बीजं कलाभिः पञ्चभिर्युतम् ॥ ७.२,३१.२८
प्रथमावरणे पूर्वं शक्त्या सह समर्चितम् ॥ ७.२,३१.२९
पवित्रं परमं ब्रह्म प्रार्थितं मे प्रयच्छतु ॥ ७.२,३१.२९
बालसूर्यप्रतीकाशं पुरुषाख्यं पुरातनम् ॥ ७.२,३१.३०
पूर्ववक्त्राभिमानं च शिवस्य परमेष्ठिनः ॥ ७.२,३१.३०
शांत्यात्मकं मरुत्संस्थं शम्भोः पादार्चने रतम् ॥ ७.२,३१.३१
प्रथमं शिवबीजेषु कलासु च चतुष्कलम् ॥ ७.२,३१.३१
पूर्वभागे मया भक्त्या शक्त्या सह समर्चितम् ॥ ७.२,३१.३२
पवित्रं परमं ब्रह्म प्रार्थितं मे प्रयच्छतु ॥ ७.२,३१.३२
अञ्जनादिप्रतीकाशमघोरं घोरविग्रहम् ॥ ७.२,३१.३३
देवस्य दक्षिणं वक्त्रं देवदेवपदार्चकम् ॥ ७.२,३१.३३
विद्यापादं समारूढं वह्निमण्डलमध्यगम् ॥ ७.२,३१.३४
द्वितीयं शिवबीजेषु कलास्वष्टकलान्वितम् ॥ ७.२,३१.३४
शंभोर्दक्षिणदिग्भागे शक्त्या सह समर्चितम् ॥ ७.२,३१.३५
पवित्रं मध्यमं ब्रह्म प्रार्थितं मे प्रयच्छतु ॥ ७.२,३१.३५
कुंकुमक्षोदसंकाशं वामाख्यं वरवेषधृक् ॥ ७.२,३१.३६
वक्त्रमुत्तरमीशस्य प्रतिष्ठायां प्रतिष्ठितम् ॥ ७.२,३१.३६
वारिमंडलमध्यस्थं महादेवार्चने रतम् ॥ ७.२,३१.३७
तुरीयं शिवबीजेषु त्रयोदशकलान्वितम् ॥ ७.२,३१.३७
देवस्योत्तरदिग्भागे शक्त्या सह समर्चितम् ॥ ७.२,३१.३८
पवित्रं परमं ब्रह्म प्रार्थितं मे प्रयच्छतु ॥ ७.२,३१.३८
शंखकुंदेंदुधवलं संध्याख्यं सौम्यलक्षणम् ॥ ७.२,३१.३९
शिवस्य पश्चिमं वक्त्रं शिवपादार्चने रतम् ॥ ७.२,३१.३९
निवृत्तिपदनिष्ठं च पृथिव्यां समवस्थितम् ॥ ७.२,३१.४०
तृतीयं शिवबीजेषु कलाभिश्चाष्टभिर्युतम् ॥ ७.२,३१.४०

देवस्य पश्चिमे भागे शक्त्या सह समर्चितम् ॥ ७.२,३१.४१
पवित्रं परमं ब्रह्म प्रार्थितं मे प्रयच्छतु ॥ ७.२,३१.४१
शिवस्य तु शिवायाश्च हृन्मूर्तिशिवभाविते ॥ ७.२,३१.४२
तयोराज्ञां पुरस्कृत्य ते मे कामं प्रयच्छताम् ॥ ७.२,३१.४२
शिवस्य च शिवायाश्च शिखामूर्तिशिवाश्रिते ॥ ७.२,३१.४३
सत्कृत्य शिवयोराज्ञां ते मे कामं प्रयच्छताम् ॥ ७.२,३१.४३
शिवस्य च शिवायाश्च वर्मणा शिवभाविते ॥ ७.२,३१.४४
सत्कृत्य शिवयोराज्ञां ते मे कामं प्रयच्छताम् ॥ ७.२,३१.४४
शिवस्य च शिवायाश्च नेत्रमूर्तिशिवाश्रिते ॥ ७.२,३१.४५
सत्कृत्य शिवयोराज्ञां ते मे कामं प्रयच्छताम् ॥ ७.२,३१.४५
अस्त्रमूर्ती च शिवयोर्नित्यमर्चनतत्परे ॥ ७.२,३१.४६
सत्कृत्य शिवयोराज्ञां ते मे कामं प्रयच्छताम् ॥ ७.२,३१.४६
वामौ ज्येष्ठस्तथा रुद्रः कालो विकरणस्तथा ॥ ७.२,३१.४७
बलो विकरणश्चैव बलप्रमथनः परः ॥ ७.२,३१.४७
सर्वभूतस्य दमनस्तादृशाश्चाष्टशक्तयः ॥ ७.२,३१.४८
प्रार्थितं मे प्रयच्छंतु शिवयोरेव शासनात् ॥ ७.२,३१.४८
अथानंतश्च सूक्ष्मश्च शिवश्चाप्येकनेत्रकः ॥ ७.२,३१.४९
एक रुद्राख्यमर्तिश्च श्रीकण्ठश्च शिखंडकः ॥ ७.२,३१.४९
तथाष्टौ शक्तयस्तेषां द्वितीयावरणे ऽर्चिताः ॥ ७.२,३१.५०
ते मे कामं प्रयच्छंतु शिवयोरेव शासनात् ॥ ७.२,३१.५०
भवाद्या मूर्तयश्चाष्टौ तासामपि च शक्तयः ॥ ७.२,३१.५१
महादेवादयश्चान्ये तथैकादशमूर्तयः ॥ ७.२,३१.५१
शक्तिभिस्सहितास्सर्वे तृतीयावरणे स्थिताः ॥ ७.२,३१.५२
सत्कृत्य शिवयोराज्ञां दिशंतु फलमीप्सितम् ॥ ७.२,३१.५२
वृक्षराजो महातेजा महामेघसमस्वनः ॥ ७.२,३१.५३
मेरुमंदरकैलासहिमाद्रिशिखरोपमः ॥ ७.२,३१.५३
सिताभ्रशिखराकारः ककुदा परिशोभितः ॥ ७.२,३१.५४
महाभोगींद्रकल्पेन वालेन च विराजितः ॥ ७.२,३१.५४

रक्तास्यशृंगचरणौ रक्तप्रायविलोचनः ॥ ७.२,३१.५५
पीवरोन्नतसर्वांगस्सुचारुगमनोज्ज्वलः ॥ ७.२,३१.५५
प्रशस्तलक्षणः श्रीमान्प्रज्वलन्मणिभूषणः ॥ ७.२,३१.५६
शिवप्रियः शिवासक्तः शिवयोर्ध्वजवाहनः ॥ ७.२,३१.५६
तथा तच्चरणन्यासपावितापरविग्रहः ॥ ७.२,३१.५७
गोराजपुरुषः श्रीमाञ्छ्रीमच्छूलवरायुधः ॥ ७.२,३१.५७
तयोराज्ञां पुरस्कृत्य स मे कामं प्रयच्छतु ॥ ७.२,३१.५७
नन्दीश्वरो महातेजा नगेन्द्रतनयात्मजः ॥ ७.२,३१.५८
सनारायणकैर्देवैर्नित्यमभ्यर्च्य वंदितः ॥ ७.२,३१.५८
शर्वस्यांतःपुरद्वारि सार्धं परिजनैः स्थितः ॥ ७.२,३१.५९
सर्वेश्वरसमप्रख्यस्सर्वासुरविमर्दनः ॥ ७.२,३१.५९
सर्वेषां शिवधर्माणामध्यक्षत्वे ऽभिषेचितः ॥ ७.२,३१.६०
शिवप्रियशिवासक्तश्श्रीमच्छूलवरायुधः ॥ ७.२,३१.६०
शिवाश्रितेषु संसक्तस्त्वनुरक्तश्च तैरपि ॥ ७.२,३१.६१
सत्कृत्य शिवयोराज्ञां स मे कामं प्रयच्छतु ॥ ७.२,३१.६१
महाकालो महाबाहुर्महादेव इवापरः ॥ ७.२,३१.६२
महादेवाश्रितानां १ तु नित्यमेवाभिरक्षतु ॥ ७.२,३१.६२
शिवप्रियः शिवासक्तश्शिवयोरर्चकस्सदा ॥ ७.२,३१.६३
सत्कृत्य शिवयोराज्ञां स मे दिशतु कांक्षितम् ॥ ७.२,३१.६३
सर्वशास्त्रार्थतत्त्वज्ञः शास्ता विष्नोः परा तनुः ॥ ७.२,३१.६४
महामोहात्मतनयो मधुमांसासवप्रियः ॥ ७.२,३१.६४
तयोराज्ञां पुरस्कृत्य स मे कामं प्रयच्छतु ॥ ७.२,३१.६४
ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा ॥ ७.२,३१.६५
वाराही चैव माहेंद्री चामुंडा चंडविक्रमा ॥ ७.२,३१.६५
एता वै मातरः सप्त सर्वलोकस्य मातरः ॥ ७.२,३१.६६
प्रार्थितं मे प्रयच्छंतु परमेश्वरशासनात् ॥ ७.२,३१.६६
मत्तमातंगवदनो गंगोमाशंकरात्मजः ॥ ७.२,३१.६७
आकाशदेहो दिग्बाहुस्सोमसूर्याग्निलोचनः ॥ ७.२,३१.६७

ऐरावतादिभिर्दिव्यैर्दिग्गजैर्नित्यमर्चितः ॥ ७.२,३१.६८
शिवज्ञानमदोद्भिन्नस्त्रिदशानामविघ्नकृत् ॥ ७.२,३१.६८
विघ्नकृच्चासुरादीनां विघ्नेशः शिवभावितः ॥ ७.२,३१.६९
सत्कृत्य शिवयोराज्ञां स मे दिशतु कांक्षितम् ॥ ७.२,३१.६९
षण्मुखश्शिवसम्भूतः शक्तिवज्रधरः प्रभुः ॥ ७.२,३१.७०
अग्नेश्च तनयो देवो ह्यपर्णातनयः पुनः ॥ ७.२,३१.७०
गंगायाश्च गणांबायाः कृत्तिकानां तथैव च ॥ ७.२,३१.७१
विशाखेन च शाखेन नैगमेयेन चावृतः ॥ ७.२,३१.७१
इंद्रजिच्चंद्रसेनानीस्तारकासुरजित्तथा ॥ ७.२,३१.७२
शैलानां मेरुमुख्यानां वेधकश्च स्वतेजसा ॥ ७.२,३१.७२
तप्तचामीकरप्रख्यः शतपत्रदलेक्षणः ॥ ७.२,३१.७३
कुमारस्सुकुमाराणां रूपोदाहरणं महत् ॥ ७.२,३१.७३
शिवप्रियः शिवासक्तः शिवपदार्चकस्सदा ॥ ७.२,३१.७४
सत्कृत्य शिवयोराज्ञां स मे दिशतु कांक्षितम् ॥ ७.२,३१.७४
ज्येष्ठा वरिष्ठा वरदा शिवयोर्यजनेरता ॥ ७.२,३१.७५
तयोराज्ञां पुरस्कृत्य सा मे दिशतु कांक्षितम् ॥ ७.२,३१.७५
त्रैलोक्यवंदिता साक्षादुल्काकारा गणांबिका ॥ ७.२,३१.७६
जगत्सृष्टिविवृद्ध्यर्थं ब्रह्मणा ऽभ्यर्थिता शिवात् ॥ ७.२,३१.७६
शिवायाः प्रविभक्ताया भ्रुवोरन्तरनिस्सृताः ॥ ७.२,३१.७७
दक्षायणी सती मेना तथा हैमवती ह्युमा ॥ ७.२,३१.७७
कौशिक्याश्चैव जननी भद्रकाल्यास्तथैव च ॥ ७.२,३१.७८
अपर्णायाश्च जननी पाटलायास्तथैव च ॥ ७.२,३१.७८
शिवार्चनरता नित्यं रुद्राणी रुद्रवल्लभा ॥ ७.२,३१.७९
सत्कृट्य शिवयोराज्ञां सा मे दिशतु कांक्षितम् ॥ ७.२,३१.७९
चंडः सर्वगणेशानः शंभोर्वदनसंभवः ॥ ७.२,३१.८०
सत्कृत्य शिवयोराज्ञां स मे दिशतु कांक्षितम् ॥ ७.२,३१.८०
पिंगलो गणपः श्रीमाञ्छिवासक्तः शिवप्रियः ॥ ७.२,३१.८१
आज्ञया शिवयोरेव स मे कामं प्रयच्छतु ॥ ७.२,३१.८१

भृंगीशो नाम गणपः शिवराधनतत्परः ॥ ७.२,३१.८२
सम्बन्धसामान्यविवक्षया कर्मणि षष्ठी
प्रयच्छतु स मे कामं पत्युराज्ञा पुरःसरम् ॥ ७.२,३१.८२
वीरभद्रो महातेजा हिमकुंदेंदुसन्निभः ॥ ७.२,३१.८३
भद्रकालीप्रियो नित्यं मात्ःणां चाभिरक्षिता ॥ ७.२,३१.८३
यज्ञस्य च शिरोहर्ता दक्षस्य च दुरात्मनः ॥ ७.२,३१.८४
उपेंद्रेंद्रयमादीनां देवानामंगतक्षकः ॥ ७.२,३१.८४
शिवस्यानुचरः श्रीमाञ्छिवशासनपालकः ॥ ७.२,३१.८५
शिवयोः शासनादेव स मे दिशतु कांक्षितम् ॥ ७.२,३१.८५
सरस्वती महेशस्य वाक्सरोजसमुद्भवा ॥ ७.२,३१.८६
शिवयोः पूजने सक्ता स मे दिशतु कांक्षितम् ॥ ७.२,३१.८६
विष्णोर्वक्षःस्थिता लक्ष्मीः शिवयोः पूजने रता ॥ ७.२,३१.८७
शिवयोः शासनादेव सा मे दिशतु कांक्षितम् ॥ ७.२,३१.८७
महामोटी महादेव्याः पादपूजापरायणा ॥ ७.२,३१.८८
तस्या एव नियोगेन सा मे दिशतु कांक्षितम् ॥ ७.२,३१.८८
कौशिकी सिंहमारूढा पार्वत्याः परमा सुता ॥ ७.२,३१.८९
विष्णोर्निद्रामहामाया महामहिषमर्दिनी ॥ ७.२,३१.८९
निशंभशुंभसंहत्री मधुमांसासवप्रिया ॥ ७.२,३१.९०
सत्कृत्य शासनं मातुस्सा मे दिशतु कांक्षितम् ॥ ७.२,३१.९०
रुद्रा रुद्रसमप्रख्याः प्रथमाः प्रथितौजसः ॥ ७.२,३१.९१
भूताख्याश्च महावीर्या महादेवसमप्रभाः ॥ ७.२,३१.९१
नित्यमुक्ता निरुपमा निर्द्वन्द्वा निरुपप्लवाः ॥ ७.२,३१.९२
सशक्तयस्सानुचरास्सर्वलोकनमस्कृताः ॥ ७.२,३१.९२
सर्वेषामेव लोकानां सृष्टिसंहरणक्षमाः ॥ ७.२,३१.९३
परस्परानुरक्ताश्च परस्परमनुव्रताः ॥ ७.२,३१.९३
परस्परमतिस्निग्धाः परस्परनमस्कृताः ॥ ७.२,३१.९४
शिवप्रियतमा नित्यं शिवलक्षणलक्षिताः ॥ ७.२,३१.९४
सौम्याधारास्तथा मिश्राश्चांतरालद्वयात्मिकाः ॥ ७.२,३१.९५

विरूपाश्च सुरूपाश्च नानारूपधरास्तथा ॥ ७.२,३१.९५
सत्कृत्य शिवयोराज्ञां ते मे कामं दिशंतु वै ॥ ७.२,३१.९६
देव्या प्रियसखीवर्गो देवीलक्षणलक्षितः ॥ ७.२,३१.९६
सहितो रुद्रकन्याभिः शक्तिभिश्चाप्यनेकशः ॥ ७.२,३१.९७
तृतीयावरणे शंभोर्भक्त्या नित्यं समर्चितः ॥ ७.२,३१.९७
सत्कृत्य शिवयोराज्ञां स मे दिशतु मंगलम् ॥ ७.२,३१.९८
दिवाकरो महेशस्य मूर्तिर्दीप्तिसुमंडलः ॥ ७.२,३१.९८
निर्गुणो गुणसंकीर्णस्तथैव गुणकेवलः ॥ ७.२,३१.९९
अविकारात्मकश्चाद्य एकस्सामान्यविक्रियः ॥ ७.२,३१.९९
असाधारणकर्मा च सृष्टिस्थितिलयक्रमात् ॥ ७.२,३१.१००
एवं त्रिधा चतुर्धा च विभक्ताः पञ्चधा पुनः ॥ ७.२,३१.१००
चतुर्थावरणे शंभोः पूजितश्चानुगैः सह ॥ ७.२,३१.१०१
शिवप्रियः शिवासक्तः शिवपादार्चने रतः ॥ ७.२,३१.१०१
सत्कृत्य शिवयोराज्ञां स मे दिशतु मंगलम् ॥ ७.२,३१.१०२
दिवाकरषडंगानि दीप्ताद्याश्चाष्टशक्तयः ॥ ७.२,३१.१०२
आदित्यो भास्करो भानू रविश्चेत्यनुपूर्वशः ॥ ७.२,३१.१०३
अर्को ब्रह्मा तथा रुद्रो विष्णुश्चादित्यमूर्तयः ॥ ७.२,३१.१०३
विस्तरासुतराबोधिन्याप्यायिन्यपराः पुनः ॥ ७.२,३१.१०४
उषा प्रभा तथा प्राज्ञा संध्या चेत्यपि शक्तयः ॥ ७.२,३१.१०४
सोमादिकेतुपर्यंता ग्रहाश्च शिवभाविताः ॥ ७.२,३१.१०५
शिवयोराज्ञयानुन्ना मंगलं प्रदिशंतु मे ॥ ७.२,३१.१०५
अथवा द्वादशादित्यास्तथा द्वादश शक्तयः ॥ ७.२,३१.१०६
ऋषयो देवगंधर्वाः पन्नगाप्सरसां गणाः ॥ ७.२,३१.१०६
ग्रामण्यश्च तथा यक्षा राक्षसाश्चासुरास्तथा ॥ ७.२,३१.१०७
सप्तसप्तगणाश्चैते सप्तच्छंदोमया हयाः ॥ ७.२,३१.१०७
वालखिल्या दयश्चैव सर्वे शिवपदार्चकाः ॥ ७.२,३१.१०८
सत्कृत्यशिवयोराज्ञां मंगलं प्रदिशंतु मे ॥ ७.२,३१.१०८
ब्रह्माथ देवदेवस्य मूर्तिर्भूमण्डलाधिपः ॥ ७.२,३१.१०९

चतुःषष्टिगुणैश्वर्यो बुद्धितत्त्वे प्रतिष्ठितः ॥ ७.२,३१.१०९

निर्गुणो गुणसंकीर्णस्तथैव गुणकेवलः ॥ ७.२,३१.११०

अविकारात्मको देवस्ततस्साधारणः पुरः ॥ ७.२,३१.११०

असाधारणकर्मा च सृष्टिस्थितिलयक्रमात् ॥ ७.२,३१.१११

भुवं त्रिधा चतुर्धा च विभक्तः पञ्चधा पुनः ॥ ७.२,३१.१११

चतुर्थावरणे शंभो पूजितश्च सहानुगैः ॥ ७.२,३१.११२

शिवप्रियः शिवासक्तश्शिवपादार्चने रतः ॥ ७.२,३१.११२

सत्कृत्य शिवयोराज्ञां स मे दिशतु मंगलम् ॥ ७.२,३१.११३

हिरण्यगर्भो लोकेशो विराट्कालश्च पूरुषः ॥ ७.२,३१.११३

सनत्कुमारः सनकः सनंदश्च सनातनः ॥ ७.२,३१.११४

प्रजानां पतयश्चैव दक्षाद्या ब्रह्मसूनवः ॥ ७.२,३१.११४

एकादश सपत्नीका धर्मस्संकल्प एव च ॥ ७.२,३१.११५

शिवार्चनरताश्चैते शिवभक्तिपरायणाः ॥ ७.२,३१.११५

शिवाज्ञावशगास्सर्वे दिशंतु मम मंगलम् ॥ ७.२,३१.११६

चत्वारश्च तथा वेदास्सेतिहासपुराणकाः ॥ ७.२,३१.११६

धर्मशास्त्राणि विद्याभिर्वैदिकीभिस्समन्विताः ॥ ७.२,३१.११७

परस्परविरुद्धार्थाः शिवप्रकृतिपादकाः ॥ ७.२,३१.११७

सत्कृत्य शिवयोराज्ञां मंगलं प्रदिशंतु मे ॥ ७.२,३१.११८

अथ रुद्रो महादेवः शंभोर्मूर्तिर्गरीयसी ॥ ७.२,३१.११८

वाह्नेयमण्डलाधीशः पौरुषैश्वर्यवान्प्रभुः ॥ ७.२,३१.११९

शिवाभिमानसंपन्नो निर्गुणस्त्रिगुणात्मकः ॥ ७.२,३१.११९

केवलं सात्त्विकश्चापि राजसश्चैव तामसः ॥ ७.२,३१.१२०

अविकाररतः पूर्वं ततस्तु समविक्रियः ॥ ७.२,३१.१२०

असाधारणकर्मा च सृष्ट्यादिकरणात्पृथक् ॥ ७.२,३१.१२१

ब्रह्मणोपि शिरश्छेत्ता जनकस्तस्य तत्सुतः ॥ ७.२,३१.१२१

जनकस्तनयश्चापि विष्णोरपि नियामकः ॥ ७.२,३१.१२२

बोधकश्च तयोर्नित्यमनुग्रहकरः प्रभुः ॥ ७.२,३१.१२२

अंडस्यांतर्बहिर्वर्ती रुद्रो लोकद्वयाधिपः ॥ ७.२,३१.१२३

शिवप्रियः शिवासक्तः शिवपादार्चने रतः ॥ ७.२,३१.१२३
शिवस्याज्ञां पुरस्कृत्य स मे दिशतु मंगलम् ॥ ७.२,३१.१२४
तस्य ब्रह्म षडंगानि विद्येशांतं तथाष्टकम् ॥ ७.२,३१.१२४
चत्वारो मूर्तिभेदाश्च शिवपूर्वाः शिवार्चकाः ॥ ७.२,३१.१२५
शिवो भवो हरश्चैव मृडश्चैव तथापरः ॥ ७.२,३१.१२५
शिवस्याज्ञां पुरस्कृत्य मंगलं प्रदिशंतु मे ॥ ७.२,३१.१२५
अथ विष्णुर्महेशस्य शिवस्यैव परा तनुः ॥ ७.२,३१.१२६
वारितत्त्वाधिपः साक्षादव्यक्तपदसंस्थितः ॥ ७.२,३१.१२६
निर्गुणस्सत्त्वबहुलस्तथैव गुणकेवलः ॥ ७.२,३१.१२७
अविकाराभिमानी च त्रिसाधारणविक्रियः ॥ ७.२,३१.१२७
असाधारणकर्मा च सृष्ट्यादिकरणात्पृथक् ॥ ७.२,३१.१२८
दक्षिणांगभवेनापि स्पर्धमानः स्वयंभुवा ॥ ७.२,३१.१२८
आद्येन ब्रह्मणा साक्षात्सृष्टः स्रष्टा च तस्य तु ॥ ७.२,३१.१२९
अंडस्यांतर्बहिर्वर्ती विष्णुर्लोकद्वयाधिपः ॥ ७.२,३१.१२९
असुरांतकरश्चक्री शक्रस्यापि तथानुजः ॥ ७.२,३१.१३०
प्रादुर्भूतश्च दशधा भृगुशापच्छलादिह ॥ ७.२,३१.१३०
भूभारनिग्रहार्थाय स्वेच्छयावातरक्षितौ ॥ ७.२,३१.१३१
अप्रमेयबलो मायी मायया मोहयञ्जगत् ॥ ७.२,३१.१३१
मूर्तिं कृत्वा महाविष्णुं सदाशिष्णुमथापि वा ॥ ७.२,३१.१३२
वैष्णवैः पूजितो नित्यं मूर्तित्रयमयासने ॥ ७.२,३१.१३२
शिवप्रियः शिवासक्तः शिवपादार्चने रतः ॥ ७.२,३१.१३३
शिवस्याज्ञां पुरस्कृत्य स मे दिशतु मंगलम् ॥ ७.२,३१.१३३
वासुदेवो ऽनिरुद्धश्च प्रद्युम्नश्च ततः परः ॥ ७.२,३१.१३४
संकर्षणस्समाख्याताश्चतस्रो मूर्तयो हरेः ॥ ७.२,३१.१३४
मत्स्यः कूर्मो वराहश्च नारसिंहो ऽथ वामनः ॥ ७.२,३१.१३५
रामत्रयं तथा कृष्णो विष्णुस्तुरगवक्त्रकः ॥ ७.२,३१.१३५
चक्रं नारायणस्यास्त्रं पांचजन्यं च शार्ङ्गकम् ॥ ७.२,३१.१३६
सत्कृत्य शिवयोराज्ञां मंगलं प्रदिशंतु मे ॥ ७.२,३१.१३६

प्रभा सरस्वती गौरी लक्ष्मीश्च शिवभाविता ॥ ७.२,३१.१३७
शिवयोः शासनादेता मंगलं प्रदिशंतु मे ॥ ७.२,३१.१३७
इन्द्रो ऽग्निश्च यमश्चैव निरृतिर्वरुणस्तथा ॥ ७.२,३१.१३८
वायुः सोमः कुबेरश्च तथेशानस्त्रिशूलधृक् ॥ ७.२,३१.१३८
सर्वे शिवार्चनरताः शिवसद्भावभाविताः ॥ ७.२,३१.१३९
सत्कृत्य शिवयोराज्ञां मंगलं प्रदिशंतु मे ॥ ७.२,३१.१३९
त्रिशूलमथ वज्रं च तथा परशुसायकौ ॥ ७.२,३१.१४०
खड्गपाशांकुशाश्चैव पिनाकश्चायुधोत्तमः ॥ ७.२,३१.१४०
दिव्यायुधानि देवस्य देव्याश्चैतानि नित्यशः ॥ ७.२,३१.१४१
सत्कृत्य शिवयोराज्ञां रक्षां कुर्वंतु मे सदा ॥ ७.२,३१.१४१
वृषरूपधरो देवः सौरभेयो महाबलः ॥ ७.२,३१.१४२
वडवाख्यानलस्पर्धी पञ्चगोमातृभिर्वृतः ॥ ७.२,३१.१४२
वाहनत्वमनुप्राप्तस्तपसा परमेशयोः ॥ ७.२,३१.१४३
तयोराज्ञां पुरस्कृत्य स मे कामं प्रयच्छतु ॥ ७.२,३१.१४३
नंदा सुनंदा सुरभिः सुशीला सुमनास्तथा ॥ ७.२,३१.१४४
पञ्चगोमातरस्त्वेताश्शिवलोके व्यवस्थिताः ॥ ७.२,३१.१४४
शिवभक्तिपरा नित्यं शिवार्चनपरायणाः ॥ ७.२,३१.१४५
शिवयोः शासनादेव दिशंतु मम वांछितम् ॥ ७.२,३१.१४५
क्षेत्रपालो महातेजा नील जीमूतसन्निभः ॥ ७.२,३१.१४६
दंष्ट्राकरालवदनः स्फुरद्रक्ताधरोज्ज्वलः ॥ ७.२,३१.१४६
रक्तोर्ध्वमूर्धजः श्रीमान्भ्रुकुटीकुटिलेक्षणः ॥ ७.२,३१.१४७
रक्तवृत्तत्रिनयनः शशिपन्नगभूषणः ॥ ७.२,३१.१४७
नग्नस्त्रिशूलपाशासिकपालोद्यतपाणिकः ॥ ७.२,३१.१४८
भैरवो भैरवैः सिद्धैर्योगिनीभिश्च संवृतः ॥ ७.२,३१.१४८
क्षेत्रेक्षेत्रे समासीनः स्थितो यो रक्षकस्सताम् ॥ ७.२,३१.१४९
शिवप्रणामपरमः शिवसद्भावभावितः ॥ ७.२,३१.१४९
शिवश्रितान्विशेषेण रक्षन्पुत्रानिवौरसान् ॥ ७.२,३१.१५०
सत्कृत्य शिवयोराज्ञां स मे दिशतु मङ्गलम् ॥ ७.२,३१.१५०

तालजङ्घादयस्तस्य प्रथमावरणेर्चिताः ॥ ७.२,३१.१५१
सत्कृत्य शिवयोराज्ञां चत्वारः समवन्तु माम् ॥ ७.२,३१.१५१
भैरवाद्याश्च ये चान्ये समंतात्तस्य वेष्टिताः ॥ ७.२,३१.१५२
ते ऽपि मामनुगृह्णंतु शिवशासनगौरवात् ॥ ७.२,३१.१५२
नारदाद्याश्च मुनयो दिव्या देवैश्च पूजिताः ॥ ७.२,३१.१५३
साध्या मागाश्च ये देवा जनलोकनिवासिनः ॥ ७.२,३१.१५३
विनिवृत्ताधिकाराश्च महर्लोकनिवासिनः ॥ ७.२,३१.१५४
सप्तर्षयस्तथान्ये वै वैमानिकगुणैस्सह ॥ ७.२,३१.१५४
सर्वे शिवार्चनरताः शिवाज्ञावशवर्तिनः ॥ ७.२,३१.१५५
शिवयोराज्ञया मह्यं दिशंतु मम कांक्षितम् १ ॥ ७.२,३१.१५५
गंधर्वाद्याः पिशाचांताश्चतस्रो देवयोनयः ॥ ७.२,३१.१५६
सिद्धा विद्याधराद्याश्च ये ऽपि चान्ये नभश्चराः ॥ ७.२,३१.१५६
असुरा राक्षसाश्चैव पातालतलवासिनः ॥ ७.२,३१.१५७
अनंताद्याश्च नागेन्द्रा वैनतेयादयो द्विजाः ॥ ७.२,३१.१५७
कूष्मांडाः प्रेतवेताला ग्रहा भूतगणाः परे ॥ ७.२,३१.१५८
डाकिन्यश्चापि योगिन्यः शाकिन्यश्चापि तादृशाः ॥ ७.२,३१.१५८
क्षेत्रारामगृहादीनि तीर्थान्यायतनानि च ॥ ७.२,३१.१५९
द्वीपाः समुद्रा नद्यश्च नदाश्चान्ये सरांसि च ॥ ७.२,३१.१५९
गिरयश्च सुमेर्वाद्याः कननानि समंततः ॥ ७.२,३१.१६०
पशवः पक्षिणो वृक्षाः कृमिकीटादयो मृगाः ॥ ७.२,३१.१६०
भुवनान्यपि सर्वाणि भुवनानामधीश्वरः ॥ ७.२,३१.१६१
अण्डान्यावरणैस्सार्धं मासाश्च दश दिग्गजाः ॥ ७.२,३१.१६१
वर्णाः पदानि मंत्राश्च तत्त्वान्यपि सहाधिपैः ॥ ७.२,३१.१६२
ब्रह्मांडधारका रुद्रा रुद्राश्चान्ये सशक्तिकाः ॥ ७.२,३१.१६२
यच्च किंचिज्जगत्यस्मिन्दृष्टं चानुमितं श्रुतम् ॥ ७.२,३१.१६३
सर्वे कामं प्रयच्छन्तु शिवयोरेव शासनात् ॥ ७.२,३१.१६३
अथ विद्या परा शैवी पशुपाशविमोचिनी ॥ ७.२,३१.१६४
पञ्चार्थसंज्ञिता दिव्या पशुविद्याबहिष्कृता ॥ ७.२,३१.१६४

शास्त्रं च शिवधर्माख्यं धर्माख्यं च तदुत्तरम् ॥ ७.२,३१.१६५
शैवाख्यं शिवधर्माख्यं पुराणं श्रुतिसंमितम् ॥ ७.२,३१.१६५
शैवागमाश्च ये चान्ये कामिकाद्याश्चतुर्विधाः ॥ ७.२,३१.१६६
शिवाभ्यामविशेषेण सत्कृत्येह समर्चिताः ॥ ७.२,३१.१६६
ताभ्यामेव समाज्ञाता ममाभिप्रेतसिद्धये ॥ ७.२,३१.१६७
कर्मेदमनुमन्यंतां सफलं साध्वनुष्ठितम् ॥ ७.२,३१.१६७
श्वेताद्या नकुलीशांताः सशिष्याश्चापि देशिकाः ॥ ७.२,३१.१६८
तत्संततीया गुरवो विशेषाद्गुरवो मम ॥ ७.२,३१.१६८
शैवा माहेश्वराश्चैव ज्ञानकर्मपरायणाः ॥ ७.२,३१.१६९
कर्मेदमनुमन्यंतां सफलं साध्वनुष्ठितम् ॥ ७.२,३१.१६९
लौकिका ब्राह्मणास्सर्वे क्षत्रियाश्च विशः क्रमात् ॥ ७.२,३१.१७०
वेदवेदांगतत्त्वज्ञाः सर्वशास्त्रविशारदाः ॥ ७.२,३१.१७०
सांख्या वैशेषिकाश्चैव यौगा नैयायिका नराः ॥ ७.२,३१.१७१
सौरा ब्रह्मास्तथा रौद्रा वैष्णवाश्चापरे नराः ॥ ७.२,३१.१७१
शिष्टाः सर्वे विशिष्टा च शिवशासनयंत्रिताः ॥ ७.२,३१.१७२
कर्मेदमनुमन्यंतां ममाभिप्रेतसाधकम् ॥ ७.२,३१.१७२
शैवाः सिद्धांतमार्गस्थाः शैवाः पाशुपतास्तथा ॥ ७.२,३१.१७३
शैवा महाव्रतधराः शैवाः कापालिकाः परे ॥ ७.२,३१.१७३
शिवाज्ञापालकाः पूज्या ममापि शिवशासनात् ॥ ७.२,३१.१७४
सर्वे ममानुगृह्णंतु शंसंतु सफलक्रियाम् ॥ ७.२,३१.१७४
दक्षिणज्ञाननिष्ठाश्च दक्षिणोत्तरमार्गगाः ॥ ७.२,३१.१७५
अविरोधेन वर्तंतां मंत्रश्रेयो ऽर्थिनो मम ॥ ७.२,३१.१७५
नास्तिकाश्च शठाश्चैव कृतघ्नाश्चैव तामसाः ॥ ७.२,३१.१७६
पाषंडाश्चातिपापाश्च वर्तंतां दूरतो मम ॥ ७.२,३१.१७६
बहुभिः किं स्तुतैरत्र ये ऽपि के ऽपिचिदास्तिकाः ॥ ७.२,३१.१७७
सर्वे मामनुगृह्णंतु संतः शंसंतु मंगलम् ॥ ७.२,३१.१७७
नमश्शिवाय सांबाय ससुतायादिहेतवे ॥ ७.२,३१.१७८
पञ्चावरणरूपेण प्रपञ्चेनावृताय ते ॥ ७.२,३१.१७८

इत्युक्त्वा दंडवद्भूमौ प्रणिपत्य शिवं शिवाम् ॥ ७.२,३१.१७९
जपेत्पञ्चाक्षरीं विद्यामष्टोत्तरशतावराम् ॥ ७.२,३१.१७९
तथैव शक्तिविद्यां च जपित्वा तत्समर्पणम् ॥ ७.२,३१.१८०
कृत्वा तं क्षमयित्वेशं पूजाशेषं समापयेत् ॥ ७.२,३१.१८०
एतत्पुण्यतमं स्तोत्रं शिवयोर्हृदयंगमम् ॥ ७.२,३१.१८१
सर्वाभीष्टप्रदं साक्षाद्भुक्तिमुक्त्यैकसाधनम् ॥ ७.२,३१.१८१
य इदं कीर्तयेन्नित्यं शृणुयाद्वा समाहितः ॥ ७.२,३१.१८२
स विधूयाशु पापानि शिवसायुज्यमाप्नुयात् ॥ ७.२,३१.१८२
गोघ्नश्चैव कृतघ्नश्च वीरहा भ्रूणहापि वा ॥ ७.२,३१.१८३
शरणागतघाती च मित्रविश्रंभघातकः ॥ ७.२,३१.१८३
दुष्टपापसमाचारो मातृहा पितृहापि वा ॥ ७.२,३१.१८४
स्तवेनानेन जप्तेन तत्तत्पापात्प्रमुच्यते ॥ ७.२,३१.१८४
दुःस्वप्नादिमहानर्थसूचकेषु भयेषु च ॥ ७.२,३१.१८५
यदि संकीर्तयेदेतन्न ततो नार्थभाग्भवेत् ॥ ७.२,३१.१८५
आयुरारोग्यमैश्वर्यं यच्चान्यदपि वाञ्छितम् ॥ ७.२,३१.१८६
स्तोत्रस्यास्य जपे तिष्ठंस्तत्सर्वं लभते नरः ॥ ७.२,३१.१८६
असंपूज्य शिवस्तोत्रं जपात्फलमुदाहृतम् ॥ ७.२,३१.१८७
संपूज्य च जपे तस्य फलं वक्तुं न शक्यते ॥ ७.२,३१.१८७
आस्तामियं फलावाप्तिरस्मिन्संकीर्तिते सति ॥ ७.२,३१.१८८
सार्धमंबिकया देवः श्रुत्यैवं दिवि तिष्ठति ॥ ७.२,३१.१८८
तस्मान्नभसि संपूज्य देवं देवं सहोमया ॥ ७.२,३१.१८९
कृतांजलिपुटस्तिष्ठंस्तोत्रमेतदुदीरयेत् ॥ ७.२,३१.१८९

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवमहास्तोत्रवर्णनं नामैकत्रिंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ३२

https://sa.wikisource.org/s/i02

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | उत्तर भागः

उपमन्युरुवाच

एतत्ते कथितं कृष्ण कर्मेहामुत्र सिद्धिदम् ॥ ७.२,३२.१

क्रियातपोजपध्यानसमुच्चयमयं परम् ॥ ७.२,३२.१

अथ वक्ष्यामि शैवानामिहैव फलदं नृणाम् ॥ ७.२,३२.२

पूजाहोमजपध्यानतपोदानमयं महत् ॥ ७.२,३२.२

तत्र संसाधयेत्पूर्वं मन्त्रं मन्त्रार्थवित्तमः ॥ ७.२,३२.३

दृष्टसिद्धिकरं कर्म नान्यथा फलदं यतः ॥ ७.२,३२.३

सिद्धमन्त्रो ऽप्यदृष्टेन प्रबलेन तु केनचित् ॥ ७.२,३२.४

प्रतिबन्धफलं कर्म न कुर्यात्सहसा बुधः ॥ ७.२,३२.४

तस्य तु प्रतिबन्धस्य कर्तुं शक्येह निष्कृतिः ॥ ७.२,३२.५

परीक्ष्य शकुनाद्यैस्तदादौ निष्कृतिमाचरेत् ॥ ७.२,३२.५

यो ऽन्यथा कुरुते मोहात्कर्मैहिकफलं नरः ॥ ७.२,३२.६

न तेन फलभाक्स स्यात्प्राप्नुयाच्चोपहास्यताम् ॥ ७.२,३२.६

अबिस्रब्धो न कुर्वीत कर्म दृष्टफलं क्वचित् ॥ ७.२,३२.७

स खल्वश्रद्धधानः स्यान्नाश्रद्धः फलमृच्छति ॥ ७.२,३२.७

नापराधोस्ति देवस्य कर्मण्यपि तु निष्फले ॥ ७.२,३२.८

यथोक्तकारिणां पुंसामिहैव फलदर्शनात् ॥ ७.२,३२.८

साधकः सिद्धमंत्रश्च निरस्तप्रतिबंधकः ॥ ७.२,३२.९

विश्वस्तः श्रद्धधानश्च कुर्वन्नाप्नोति तत्फलम् ॥ ७.२,३२.९

अथवा तत्फलावाप्त्यै ब्रह्मचर्यरतो भवेत् ॥ ७.२,३२.१०

रात्रौ हविष्यमश्नीयात्पायसं वा फलानि वा ॥ ७.२,३२.१०

हिंसादि यन्निषिद्धं स्यान्न कुर्यान्मनसापि तत् ॥ ७.२,३२.११

सदा भस्मानुलिप्तां गस्सुवेषश्च शुचिर्भवेत् ॥ ७.२,३२.११

इत्थमाचारवान्भूत्वा स्वानुकूले शुभे ऽहनि ॥ ७.२,३२.१२

पूर्वोक्तलक्षणे देशे पुष्पदामाद्यलंकृते ॥ ७.२,३२.१२
आलिप्य शकृता १ भूमिं हस्तमानावरां यथा ॥ ७.२,३२.१३
विलिखेत्कमले भद्रे दीप्यमानं स्वतेजसा ॥ ७.२,३२.१३
तप्तजांबूनदमयमष्टपत्रं सकेसरम् ॥ ७.२,३२.१४
मध्ये कर्णिकया युक्तं सर्वरत्नैरलंकृतम् ॥ ७.२,३२.१४
स्वाकारसदृशेनैव नालेन च समन्वितम् ॥ ७.२,३२.१५
तादृशे स्वर्णनिर्माणे कंदे सम्यग्विधानतः ॥ ७.२,३२.१५
तत्राणिमादिकं सर्वं संकल्प्य मनसा पुनः ॥ ७.२,३२.१६
रत्नजं वाथ सौवर्णं स्फटिकं वा सलक्षणम् ॥ ७.२,३२.१६
लिङ्गं सवेदिकं चैव स्थापयित्वा विधानतः ॥ ७.२,३२.१६
तत्रावाह्य यजेद्देवं सांबं सगणमव्ययम् ॥ ७.२,३२.१७
तत्र माहेश्वरी कल्प्या मूर्तिर्मूर्तिमतः प्रभोः ॥ ७.२,३२.१७
चतुर्भुजा चतुर्वक्त्रा सर्वाभरणभूषिता ॥ ७.२,३२.१८
शार्दूलचर्मवसना किंचिद्विहसितानना ॥ ७.२,३२.१८
वरदाभयहस्ता च मृगटंकधरा तथा ॥ ७.२,३२.१९
अथ वाष्टभुजा चिंत्या चिंतकस्य यथारुचि ॥ ७.२,३२.१९
तदा त्रिशूलपरशुखड्गवज्राणि दक्षिणे ॥ ७.२,३२.२०
वामे पाशांकुशौ तद्वत्खेटं नागं च बिभ्रती ॥ ७.२,३२.२०
बालार्कसदृशप्रख्या प्रतिवक्त्रं त्रिलोचना ॥ ७.२,३२.२१
तस्याः पूर्वमुखं सौम्यं स्वाकारसदृशप्रभम् ॥ ७.२,३२.२१
दक्षिणं नीलजीमूतसदृशं घोरदर्शनम् ॥ ७.२,३२.२२
उत्तरं विद्रुमप्रख्यं नीलालकविभूषितम् ॥ ७.२,३२.२२
पश्चिमं पूर्णचंद्राभं सौम्यमिंदुकलाधरम् ॥ ७.२,३२.२३
तदंकमंडलारूढा शक्तिर्माहेश्वरी परा ॥ ७.२,३२.२३
महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा ॥ ७.२,३२.२४
मूर्तिं कृत्वैवमाकारां सकलीकृत्य च क्रमात् ॥ ७.२,३२.२४
मूर्तिमंतमथावाह्य यजेत्परमकारणम् ॥ ७.२,३२.२५
स्नानार्थे कल्पयेत्तत्र पञ्चगव्यं तु कापिलम् ॥ ७.२,३२.२५

पञ्चामृतं च पूर्णानि बीजानि च विशेषतः ॥ ७.२,३२.२६
पुरस्तान्मण्डलं कृत्वा रत्नचूर्णाद्यलंकृतम् ॥ ७.२,३२.२६
कर्णिकायां प्रविन्यस्येदीशानकलशं पुनः ॥ ७.२,३२.२७
सद्यादिकलशान्पश्चात्परितस्तस्य कल्पयेत् ॥ ७.२,३२.२७
ततो विद्येशकलशानष्टौ पूर्वादिवत्क्रमात् ॥ ७.२,३२.२८
तीर्थाम्बुपूरितान्कृत्वा सूत्रेणावेष्ट्य पूर्ववत् ॥ ७.२,३२.२८
पुण्यद्रव्याणि निक्षिप्य समन्त्रं सविधानकम् ॥ ७.२,३२.२९
दुकूलाद्येन वस्त्रेण समाच्छाद्य समंततः ॥ ७.२,३२.२९
सर्वत्र मंत्रं विन्यस्य तत्तन्मंत्रपुरस्सरम् ॥ ७.२,३२.३०
स्नानकाले तु संप्राप्ते सर्वमङ्गलनिस्वनैः ॥ ७.२,३२.३०
पञ्चगव्यादिभिश्चैव स्नापयेत्परमेश्वरम् ॥ ७.२,३२.३१
ततः कुशोदकाद्यानि स्वर्णरत्नोदकान्यपि ॥ ७.२,३२.३१
गंधपुष्पादिसिद्धानि मन्त्रसिद्धानि च क्रमात् ॥ ७.२,३२.३२
उद्धृत्योद्धृत्य मन्त्रेण तैस्तैस्स्नाप्य महेश्वरम् ॥ ७.२,३२.३२
गंधं पुष्पादिदीपांश्च पूजाकर्म समाचरेत् ॥ ७.२,३२.३३
पलावरः स्यादालेप एकादशपलोत्तरः ॥ ७.२,३२.३३
सुवर्णरत्नपुष्पाणि शुभानि सुरभीणि च ॥ ७.२,३२.३४
नीलोत्पलाद्युत्पलानि बिल्वपत्राण्यनेकशः ॥ ७.२,३२.३४
कमलानि च रक्तानि श्वेतान्यपि च शंभवे ॥ ७.२,३२.३५
कृष्णागुरूद्भवो धूपः सकर्पूराज्यगुग्गुलः ॥ ७.२,३२.३५
कपिलाघृतसंसिद्धा दीपाः कर्पूरवर्तिजाः ॥ ७.२,३२.३६
पञ्चब्रह्मषडंगानि पूज्यान्यावरणानि च ॥ ७.२,३२.३६
नैवेद्यः पयसा सिद्धः स गुडाज्यो महाचरुः ॥ ७.२,३२.३७
पाटलोत्पलपद्माद्यैः पानीयं च सुगन्धितम् ॥ ७.२,३२.३७
पञ्चसौगंधिकोपेतं तांबूलं च सुसंस्कृतम् ॥ ७.२,३२.३८
सुवर्णरत्नसिद्धानि भूषणानि विशेषतः ॥ ७.२,३२.३८
वासांसि च विचित्राणि सूक्ष्माणि च नवानि च ॥ ७.२,३२.३९
दर्शनीयानि देयानि गानवाद्यादिभिस्सह ॥ ७.२,३२.३९

जपश्च मूलमंत्रस्य लक्षः परमसंख्यया ॥ ७.२,३२.४०
एकावरा त्र्युत्तरा च पूजा फलवशादिह ॥ ७.२,३२.४०
दशसंख्यावरो होमः प्रतिद्रव्यं शतोत्तरः ॥ ७.२,३२.४१
घोररूपश्शिवश्चिंत्यो मारणोच्चाटनादिषु ॥ ७.२,३२.४१
शिवलिंगे शिवाग्नौ च ह्यन्यासु प्रतिमासु च ॥ ७.२,३२.४२
चिंत्यस्सौम्यतनुश्शंभुः कार्ये शांतिकपौष्टिके ॥ ७.२,३२.४२
आयसौ स्रुक्स्रुवौ कार्यौ मारणादिषु कर्मसु ॥ ७.२,३२.४३
तदन्यत्र तु सौवर्णौ शांतिकाद्येषु कृत्स्नशः ॥ ७.२,३२.४३
दूर्वया घृतगोक्षीरमिश्रया मधुना तथा ॥ ७.२,३२.४४
चरुणा सघृतेनैव केवलं पयसापि वा ॥ ७.२,३२.४४
जुहुयान्मृत्युविजये तिलै रोगोपशांतये ॥ ७.२,३२.४५
घृतेन पयसा चैव कमलैर्वाथ केवलैः ॥ ७.२,३२.४५
समृद्धिकामो जुहुयान्महादारिद्र्यशांतये ॥ ७.२,३२.४६
जातीपुष्पेण वश्यार्थी जुहुयात्सघृतेन तु ॥ ७.२,३२.४६
घृतेन करवीरैश्च कुर्यादाकर्षणं द्विजः ॥ ७.२,३२.४७
तैलेनोच्चाटनं कुर्यात्स्तंभनं मधुना पुनः ॥ ७.२,३२.४७
स्तंभनं सर्षपेणापि लशुनेन तु पातनम् ॥ ७.२,३२.४८
ताडनं रुधिरेण स्यात्खरस्योष्ट्रस्य चोभयोः ॥ ७.२,३२.४८
मारणोच्चाटने कुर्याद्रोहिबीजैस्तिलान्वितैः ॥ ७.२,३२.४९
विद्वेषणं च तैलेन कुर्याल्लांगलकस्य तु ॥ ७.२,३२.४९
बंधनं रोहिबीजेन सेनास्तंभनमेव च ॥ ७.२,३२.५०
रक्तसर्षपसंमिश्रैर्होमद्रव्यैरशेषतः ॥ ७.२,३२.५०
हस्तयंत्रोद्भवैस्तैलैर्जुहुयादाभिचारिके ॥ ७.२,३२.५१
कटुकीतुषसंयुक्तैः कार्पासास्थिभिरेव च ॥ ७.२,३२.५१
सर्षपैस्तैलसंमिश्रैर्जुहुयादाभिचारिके ॥ ७.२,३२.५२
ज्वरोपशांतिदं क्षीरं सौभाग्यफलदं तथा ॥ ७.२,३२.५२
सर्वसिद्धिकरो होमः क्षौद्राज्यदधिभिर्युतैः ॥ ७.२,३२.५३
क्षीरेण तंदुलैश्चैव चरुणा केवलेन वा ॥ ७.२,३२.५३

शांतिकं पौष्टिकं वापि सप्तभिः समिदादिभिः ॥ ७.२,३२.५४
द्रव्यैर्विशेषतो होमे वश्यमाकर्षणं तथा ॥ ७.२,३२.५४
वश्यमाकर्षणं चैव श्रीपदं च विशेषतः ॥ ७.२,३२.५५
बिल्वपत्रैस्तु हवनं शत्रोर्विजयदं तथा ॥ ७.२,३२.५५
समिधः शांतिकार्येषु पालाशखदिरादिकाः ॥ ७.२,३२.५६
करवीरार्कजाः क्रौर्ये कण्टकिन्यश्च विग्रहे ॥ ७.२,३२.५६
प्रशांतः शांतिकं कुर्यात्पौष्टिकं च विशेषतः ॥ ७.२,३२.५७
निर्घृणः क्रुद्धचित्तस्तु प्रकुर्यादाभिचारिकम् ॥ ७.२,३२.५७
अतीवदुरवस्थायां प्रतीकारांतरं न चेत् ॥ ७.२,३२.५८
आततायिनमुद्दिश्य प्रकुर्यादाभिचारिकम् ॥ ७.२,३२.५८
स्वराष्ट्रपतिमुद्दिश्य न कुर्यादाभिचारिकम् ॥ ७.२,३२.५९
यद्यास्तिकस्सुधर्मिष्ठो मान्यो वा यो ऽपि कोपि वा ॥ ७.२,३२.५९
तमुद्दिश्यापि नो कुर्यादाततायिनमप्युत ॥ ७.२,३२.६०
मनसा कर्मणा वाचा यो ऽपि कोपि शिवाश्रितः ॥ ७.२,३२.६०
स्वराष्ट्रपतिमुद्दिश्य शिवा श्रितमथापि वा ॥ ७.२,३२.६१
कृत्वाभिचारिकं कर्म सद्यो विनिपतेन्नरः ॥ ७.२,३२.६१
स्वराष्ट्रपालकं तस्माच्छिवभक्तं च कञ्चन ॥ ७.२,३२.६२
न हिंस्यादभिचाराद्यैर्यदीच्छेत्सुखमात्मनः ॥ ७.२,३२.६२
अन्यं कमपि चोद्दिश्य कृत्वा वै मारणादिकम् ॥ ७.२,३२.६३
पश्चात्तापेन संयुक्तः प्रायश्चित्तं समाचरेत् ॥ ७.२,३२.६३
बाणलिंगे ऽपि वा कुर्यान्निर्धनो धनवानपि ॥ ७.२,३२.६४
स्वयंभूते ऽथ वा लिंगे आर्षके वैदिके ऽपि वा ॥ ७.२,३२.६४
अभावे हेमरत्नानामशक्तौ च तदर्जने ॥ ७.२,३२.६५
मनसैवाचरेदेतद्द्रव्यैर्वा प्रतिरूपकैः ॥ ७.२,३२.६५
क्वचिदंशे तु यः शक्तस्त्वशक्तः क्वचिदंशके ॥ ७.२,३२.६६
सो ऽपि शक्त्यनुसारेण कुर्वंश्चेत्फलमृच्छति ॥ ७.२,३२.६६
कर्मण्यनुष्ठिते ऽप्यस्मिन्फलं यत्र न दृश्यते ॥ ७.२,३२.६७
द्विस्त्रिर्वावर्तयेत्तत्र सर्वथा दृश्यते फलम् ॥ ७.२,३२.६७

पूजोपयुक्तं यद्द्रव्यं हेमरत्नाद्यनुत्तमम् ॥ ७.२,३२.६८
तत्सर्वं गुरवे दद्याद्दक्षिणां च ततः पृथक् ॥ ७.२,३२.६८
स चेन्नेच्छति तत्सर्वं शिवाय विनिवेदयेत् ॥ ७.२,३२.६९
अथवा शिवभक्तेभ्यो नान्येभ्यस्तु प्रदीयते ॥ ७.२,३२.६९
यः स्वयं साधयेच्छक्त्या गुर्वादिनिरपेक्षया ॥ ७.२,३२.७०
सो ऽप्येवमाचरेदत्र न गृह्णीयात्स्वयं पुनः ॥ ७.२,३२.७०
स्वयं गृह्णाति यो लोभात्पूजांगद्रव्यमुत्तमम् ॥ ७.२,३२.७१
कांक्षितं न लभेन्मूढो नात्र कार्या विचारणा ॥ ७.२,३२.७१
अर्चितं यत्तु तल्लिंगं गृह्णीयाद्वा नवा स्वयम् ॥ ७.२,३२.७२
गृह्णीयाद्यदि तन्नित्यं स्वयं वान्यो ऽपि वार्चयेत् ॥ ७.२,३२.७२
यथोक्तमेव कर्मैतदाचरेद्यो ऽनपायतः ॥ ७.२,३२.७३
फलं व्यभिचरेन्नैवमित्यतः किं प्ररोचकम् ॥ ७.२,३२.७३
तथाप्युद्देशतो वक्ष्ये कर्मणः सिद्धिमुत्तमम् ॥ ७.२,३२.७४
अपि शत्रुभिराक्रांतो व्याधिभिर्वाप्यनेकशः ॥ ७.२,३२.७४
मृत्योरास्यगतश्चापि मुच्यते निरपायतः ॥ ७.२,३२.७५
पूजायते ऽतिकृपणो रिक्तो वैश्रवणायते ॥ ७.२,३२.७५
कामायते विरूपो ऽपि वृद्धो ऽपि तरुणायते ॥ ७.२,३२.७६
शत्रुर्मित्रायते सद्यो विरोधी किंकरायते ॥ ७.२,३२.७६
विषायते यदमृतं विषमप्यमृतायते ॥ ७.२,३२.७७
स्थलायते समुद्रो ऽपि स्थलमप्यर्णवायते ॥ ७.२,३२.७७
महीधरायते श्वभ्रं स च श्वभ्रायते गिरिः ॥ ७.२,३२.७८
पद्माकरायते वह्निः सरो वैश्वानरायते ॥ ७.२,३२.७८
वनायते यदुद्यानं तदुद्यानायते वनम् ॥ ७.२,३२.७९
सिंहायते मृगः क्षुद्रः सिंहः क्रीडामृगायते ॥ ७.२,३२.७९
स्त्रियो ऽभिसारिकायन्ते लक्ष्मीः सुचरितायते ॥ ७.२,३२.८०
स्वैरप्रेष्यायते वाणी कीर्तिस्तु गणिकायते ॥ ७.२,३२.८०
स्वैराचारायते मेधा वज्रसूचीयते मनः ॥ ७.२,३२.८१
महावातायते शक्तिर्बलं मत्तगजायते ॥ ७.२,३२.८१

स्तम्भायते समुद्योगैः शत्रुपक्षे स्थिता क्रिया ॥ ७.२,३२.८२

शत्रुपक्षायते ऽरीणां सर्व एव सुहृज्जनः ॥ ७.२,३२.८२

शत्रवः कुणपायन्ते जीवन्तोपि सबांधवाः ॥ ७.२,३२.८३

आपन्नो ऽपि गतारिष्टः स्वयं खल्वमृतायते ॥ ७.२,३२.८३

रसाय नायते नित्यमपथ्यमपि सेवितम् ॥ ७.२,३२.८४

अनिशं क्रियमाणापि रतिस्त्वभिनवायते ॥ ७.२,३२.८४

अनागतादिकं सर्वं करस्थामलकायते ॥ ७.२,३२.८५

यादृच्छिकफलायन्ते सिद्धयो ऽप्यणिमादयः ॥ ७.२,३२.८५

बहुनात्र किमुक्तेन सर्वकामार्थसिद्धिषु ॥ ७.२,३२.८६

अस्मिन्कर्मणि निर्वृत्ते त्वनवाप्यं न विद्यते ॥ ७.२,३२.८६

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे ऐहिकसिद्धिकर्मवर्णनं नाम द्वात्रिंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ३३



उपमन्युरुवाच

अतः परं प्रवक्ष्यामि केवलामुष्मिकं विधिम् ॥ ७.२,३३.१

नैतेन सदृशं किंचित्कर्मास्ति भुवनत्रये ॥ ७.२,३३.१

पुण्यातिशयसंयुक्तः सर्वैर्देवैरनुष्ठितः ॥ ७.२,३३.२

ब्रह्मणा विष्णुना चैव रुद्रेण च विशेषतः ॥ ७.२,३३.२

इंद्रादिलोकपालैश्च सूर्याद्यैर्नवभिर्ग्रहैः ॥ ७.२,३३.३

विश्वामित्रवसिष्ठाद्यैर्ब्रह्मविद्भिर्महर्षिभिः ॥ ७.२,३३.३

श्वेतागस्त्यदधीचाद्यैरस्माभिश्च शिवाश्रितैः ॥ ७.२,३३.४

नंदीश्वरमहाकालभृंगीशाद्यैर्गणेश्वरैः ॥ ७.२,३३.४

पातालवासिभिर्दैत्यैः शेषाद्यैश्च महोरगैः ॥ ७.२,३३.५

सिद्धैर्यक्षैश्च गंधर्वै रक्षोभूतपिशाचकैः ॥ ७.२,३३.५

स्वंस्वं पदमनुप्राप्तं सर्वैरयमनुष्ठितः ॥ ७.२,३३.६

अनेन विधिना सर्वे देवा देवत्वमागताः ॥ ७.२,३३.६

ब्रह्मा ब्रह्मत्वमापन्नो विष्णुर्विष्णुत्वमागतः ॥ ७.२,३३.७

रुद्रो रुद्रत्वमापन्न इंद्रश्चेन्द्रत्वमागतः ॥ ७.२,३३.७

गणेशश्च गणेशत्वमनेन विधिना गतः ॥ ७.२,३३.८

सितचंदनतोयेन लिंगं स्नाप्य शिवं शिवाम् ॥ ७.२,३३.८

श्वेतैर्विकसितैः पद्मैः संपूज्य प्रणिपत्य च ॥ ७.२,३३.८

तत्र पद्मासनं रम्यं कृत्वा लक्षणसंयुतम् ॥ ७.२,३३.९

विभवे सति हेमाद्यै रत्नाद्यैर्वा स्वशक्तितः ॥ ७.२,३३.९

मध्ये केसरजालास्य स्थाप्य लिंगं कनीयसम् ॥ ७.२,३३.१०

अंगुष्ठप्रतिमं रम्यं सर्वगन्धमयं शुभम् ॥ ७.२,३३.१०

दक्षिणे स्थापयित्वा तु बिल्वपत्रैः समर्चयेत् ॥ ७.२,३३.११

अगुरुं दक्षिणे पार्श्वे पश्चिमे तु मनःशिलाम् ॥ ७.२,३३.११

उत्तरे चंदनं दद्याद्धरितालं तु पूर्वतः ॥ ७.२,३३.१२

सुगन्धैः कुसुमै रम्यैर्विचित्रैश्चापि पूजयेत् ॥ ७.२,३३.१२

धूपं कृष्णागुरुं दद्यात्सर्वतश्च सगुग्गुलम् ॥ ७.२,३३.१३

वासांसि चातिसूक्ष्माणि विकाशानि निवेदयेत् ॥ ७.२,३३.१३

पायसं घृतसंमिश्रं घृतदीपांश्च दापयेत् ॥ ७.२,३३.१४

सर्वं निवेद्य मन्त्रेण ततो गच्छेत्प्रदक्षिणाम् ॥ ७.२,३३.१४

प्रणम्य भक्त्या देवेशं स्तुत्वा चान्ते क्षमापयेत् ॥ ७.२,३३.१५

सर्वोपहारसंमिश्रं ततो लिंगं निवेदयेत् ॥ ७.२,३३.१५

शिवाय शिवमन्त्रेण दक्षिणामूर्तिमाश्रितः ॥ ७.२,३३.१६

एवं यो ऽर्चयते नित्यं पञ्चगन्धमयं शुभम् ॥ ७.२,३३.१६

सर्वपापविनिर्मुक्तः शिवलोके महीयते ॥ ७.२,३३.१७

एतद्व्रतोत्तमं गुह्यं शिवलिंगमहाव्रतम् ॥ ७.२,३३.१७

भक्तस्य ते समाख्यातं न देयं यस्य कस्यचित् ॥ ७.२,३३.१८

देयं च शिवभक्तेभ्यः शिवेन कथितं पुरा ॥ ७.२,३३.१८

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे आमुष्मिककर्मविधिवर्णनं नाम त्रयस्त्रिंशोऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ३४

https://sa.wikisource.org/s/i04

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | उत्तर भागः

उपमन्युरुवाच

नित्यनैमित्तिकात्काम्याद्या सिद्धिरिह कीर्तिता ॥ ७.२,३४.१

सा सर्वा लभ्येत सद्यो लिंगबेरप्रतिष्ठया ॥ ७.२,३४.१

सर्वो लिंगमयो लोकस्सर्वं लिंगे प्रतिष्ठितम् ॥ ७.२,३४.२

तस्मात्प्रतिष्ठिते लिंगे भवेत्सर्वं पतिष्ठितम् ॥ ७.२,३४.२

ब्रह्मणा विष्णुना वापि रुद्रेणान्येन केन वा ॥ ७.२,३४.३

लिंगप्रतिष्ठामुत्सृज्य क्रियते स्वपदस्थितिः ॥ ७.२,३४.३

किमन्यदिह वक्तव्यं प्रतिष्ठां प्रति कारणम् ॥ ७.२,३४.४

पर्तिष्ठितं शिवेनापि लिंगं वैश्वेश्वरं यतः ॥ ७.२,३४.४

तस्मात्सर्वप्रयत्नेन परत्रेह च शर्मणे ॥ ७.२,३४.५

स्थापयेत्परमेशस्य लिंगं बेरमथापि वा ॥ ७.२,३४.५

श्रीकृष्ण उवाच

किमिदं लिंगमाख्यातं कथं लिंगी महेश्वरः ॥ ७.२,३४.६

कथं च लिंगभावो ऽस्य कस्मादस्मिञ्छिवो ऽर्च्यते ॥ ७.२,३४.६

उपमन्युरुवाच

अव्यक्तं लिंगमाख्यातं त्रिगुणप्रभवाप्ययम् ॥ ७.२,३४.७

अनाद्यनंतं विश्वस्य यदुपादानकारणम् ॥ ७.२,३४.७

तदेव मूलप्रकृतिर्माया च गगनात्मिका ॥ ७.२,३४.८

तत एव समुत्पन्नं जगदेतच्चराचरम् ॥ ७.२,३४.८

अशुद्धं चैव शुद्धं यच्छुद्धाशुद्धं च तत्त्रिधा ॥ ७.२,३४.९

ततः शिवो महेशश्च रुद्रो विष्णुः पितामहः ॥ ७.२,३४.९

भूतानि चेन्द्रियैर्जाता लीयन्ते ऽत्र शिवाज्ञया ॥ ७.२,३४.१०

अत एव शिवो लिंगो लिंगमाज्ञापयेद्यतः ॥ ७.२,३४.१०

यतो न तदनाज्ञातं कार्याय प्रभवेत्स्वतः ॥ ७.२,३४.११

ततो जातस्य विश्वस्य तत्रैव विलयो यतः ॥ ७.२,३४.११
अनेन लिंगतां तस्य भवेन्नान्येन केनचित् ॥ ७.२,३४.१२
लिंगं च शिवयोर्देहस्ताभ्यां यस्मादधिष्ठितम् ॥ ७.२,३४.१२
अतस्तत्र शिवः साम्बो नित्यमेव समर्चयेत् ॥ ७.२,३४.१३
लिंगवेदी महादेवी लिंगं साक्षान्महेश्वरः ॥ ७.२,३४.१३
तयोः संपूजनादेव स च सा च समर्चितौ ॥ ७.२,३४.१४
न तयोर्लिंगदेहत्वं विद्यते परमार्थतः ॥ ७.२,३४.१४
यतस्त्वेतौ विशुद्धौ तौ देहस्तदुपचारतः ॥ ७.२,३४.१५
तदेव परमा शक्तिः शिवस्य परमात्मनः ॥ ७.२,३४.१५
शक्तिराज्ञां यदादत्ते प्रसूते तच्चराचरम् ॥ ७.२,३४.१६
न तस्य महिमा शक्यो वक्तुं वर्षशतैरपि ॥ ७.२,३४.१६
येनादौ मोहितौ स्यातां ब्रह्मनारायणावपि ॥ ७.२,३४.१७
पुरा त्रिभुवनस्यास्य प्रलये समुपस्थिते ॥ ७.२,३४.१७
वारिशय्यागतो विष्णुः सुष्वापानाकुलः सुखम् ॥ ७.२,३४.१८


यदृच्छया गतस्तत्र ब्रह्मा लोकपितामहः ॥ ७.२,३४.१८
ददर्श पुण्डरीकाक्षं स्वपन्तं तमनाकुलम् ॥ ७.२,३४.१९
मायया मोहितः शम्भोर्विष्णुमाह पितामहः ॥ ७.२,३४.१९
कस्त्वं वदेत्यमर्षेण प्रहृत्योत्थाप्य माधवम् ॥ ७.२,३४.२०
स तु हस्तप्रहारेण तीव्रेणाभिहतः क्षणात् ॥ ७.२,३४.२०
प्रबुद्धोत्थाय शयनाद्ददर्श परमेष्ठिनम् ॥ ७.२,३४.२१
तमाह चांतस्संक्रुद्धः स्वयमक्रुद्धवद्धरिः ॥ ७.२,३४.२१
कुतस्त्वमागतो वत्स कस्मात्त्वं व्याकुलो वद ॥ ७.२,३४.२२
इति विष्णुवचः श्रुत्वा प्रभुत्वगुणसूचकम् ॥ ७.२,३४.२२
रजसा बद्धवैरस्तं ब्रह्मा पुनरभाषत ॥ ७.२,३४.२३
वत्सेति मां कुतो ब्रूषे गुरुः शिष्यमिवात्मनः ॥ ७.२,३४.२३
मां न जानासि किं नाथं प्रपञ्चो यस्य मे कृतिः ॥ ७.२,३४.२४

त्रिधात्मानं विभज्येदं सृष्ट्वाथ परिपाल्यते ॥ ७.२,३४.२४
संहरामि नमे कश्चित्स्रष्टा जगति विद्यते ॥ ७.२,३४.२५
इत्युक्ते सति सो ऽप्याह ब्रह्माणं विष्णुरव्ययः ॥ ७.२,३४.२५
अहमेवादिकर्तास्य हर्ता च परिपालकः ॥ ७.२,३४.२६
भवानपि ममैवांगादवतीर्णः पुराव्ययात् ॥ ७.२,३४.२६
मन्नियोगात्त्वमात्मानं त्रिधा कृत्वा जगत्त्रयम् ॥ ७.२,३४.२७
सृजस्यवसि चांते तत्पुनः प्रतिसृजस्यपि ॥ ७.२,३४.२७
विस्मृतोसि जगन्नाथं नारायणमनामयम् ॥ ७.२,३४.२८
तवापि जनकं साक्षान्मामेवमवमन्यसे ॥ ७.२,३४.२८
तवापराधो नास्त्यत्र भ्रांतोसि मम मायया ॥ ७.२,३४.२९
मत्प्रसादादियं भ्रांतिरपैष्यति तवाचिरात् ॥ ७.२,३४.२९
शृणु सत्यं चतुर्वक्त्र सर्वदेवेश्वरो ह्यहम् ॥ ७.२,३४.३०
कर्ता भर्ता च हर्ता च न मयास्ति समो विभुः ॥ ७.२,३४.३०
एवमेव विवादोभूद्ब्रह्मविष्ण्वोः परस्परम् ॥ ७.२,३४.३१
अभवच्च महायुद्धं भैरवं रोमहर्षणम् ॥ ७.२,३४.३१
मुष्टिभिर्न्निघ्नतोस्तीव्रं रजसा बद्धवैरयोः ॥ ७.२,३४.३२
तयोर्दर्पापहाराय प्रबोधाय च देवयोः ॥ ७.२,३४.३२
मध्ये समाविरभवल्लिंगमैश्वरमद्भुतम् ॥ ७.२,३४.३३
ज्वालामालासहस्राढ्यमप्रमेयमनौपमम् ॥ ७.२,३४.३३
क्षयवृद्धिविनिर्मुक्तमादिमध्यांतवर्जितम् ॥ ७.२,३४.३४
तस्य ज्वालासहस्रेण ब्रह्मविष्णू विमोहितौ ॥ ७.२,३४.३४
विसृज्य युद्धं किं त्वेतदित्यचिंतयतां तदा ॥ ७.२,३४.३५
न तयोस्तस्य याथात्म्यं प्रबुद्धमभवद्यदा ॥ ७.२,३४.३५
तदा समुद्यतौ स्यातां तस्याद्यंतं परीक्षितुम् ॥ ७.२,३४.३६
तत्र हंसाकृतिर्ब्रह्मा विश्वतः पक्षसंयुतः ॥ ७.२,३४.३७
मनोनिलजवो भूत्वा गतस्तूर्ध्वं प्रयत्नतः ॥ ७.२,३४.३७
नारायणोपि विश्वात्मा लीलाञ्जनचयोपमम् ॥ ७.२,३४.३८
वाराहममितं रूपमस्थाय गतवानधः ॥ ७.२,३४.३८

एवं वर्षसहस्रं तु त्वरन् विष्णुरधोगतः ॥ ७.२,३४.३९
नापश्यदल्पमप्यस्य मूलं लिंगस्य सूकरः ॥ ७.२,३४.३९
तावत्कालं गतश्चोर्ध्वं तस्यांतं ज्ञातुमिच्छया ॥ ७.२,३४.४०
श्रांतोत्यंतमदृष्ट्वांतं पापताधः पितामहः ॥ ७.२,३४.४०

५९०

तथैव भगवान् विष्णुः श्रांतः संविग्नलोचनः ॥ ७.२,३४.४१
क्लेशेन महता तूर्णमधस्तादुत्थितो ऽभवत् ॥ ७.२,३४.४१
समागतावथान्योन्यं विस्मयस्मेरवीक्षणौ ॥ ७.२,३४.४२
मायया मोहितौ शंभोः कृत्याकृत्यं न जग्मतुः ॥ ७.२,३४.४२
पृष्ठतः पार्श्वतस्तस्य चाग्रतश्च स्थितावुभौ ॥ ७.२,३४.४३
प्रणिपत्य किमात्मेदमित्यचिंतयतां तदा ॥ ७.२,३४.४३

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे हरिविधिमोहवर्णनं नाम चतुस्त्रिंशोऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ३५

https://sa.wikisource.org/s/i05

< शिवपुराणम् | संहिता ७ (वायवीयसंहिता) | उत्तर भागः

उपमन्युरुवाच

अथाविरभवत्तत्र सनादं शब्दलक्षणम् ॥ ७.२,३५.१

ओमित्येकाक्षरं ब्रह्म ब्रह्मणः प्रतिपादकम् ॥ ७.२,३५.१

तदप्यविदितं तावद्ब्रह्मणा विष्णुना तथा ॥ ७.२,३५.२

रजसा तमसा चित्तं तयोर्यस्मात्तिरस्कृतम् ॥ ७.२,३५.२

तदा विभक्तमभवच्चतुर्धैकं तदक्षरम् ॥ ७.२,३५.३

अ उ मेति त्रिमात्राभिः परस्ताच्चार्धमात्रया ॥ ७.२,३५.३

तत्राकारः श्रितो भागे ज्वलल्लिंगस्य दक्षिणे ॥ ७.२,३५.४

उकारश्चोत्तरे तद्वन्मकारस्तस्य मध्यतः ॥ ७.२,३५.४

अर्धमात्रात्मको नादः श्रूयते लिंगमूर्धनि ॥ ७.२,३५.५

विभक्ते ऽपि तदा तस्मिन्प्रणवे परमाक्षरे ॥ ७.२,३५.५

विभावार्थं च तौ देवौ न किंचिदवजग्मतुः ॥ ७.२,३५.६

वेदात्मना तदाव्यक्तः प्रणवो विकृतिं गतः ॥ ७.२,३५.६

तत्राकारो ऋगभवदुकारो यजुरव्ययः ॥ ७.२,३५.७

मकारस्साम संजातो नादस्त्वाथर्वणी श्रुतिः ॥ ७.२,३५.७

ऋगयं स्थापयामास समासात्त्वर्थमात्मनः ॥ ७.२,३५.८

रजोगुणेषु ब्रह्माणं मूर्तिष्वाद्यं क्रियास्वपि ॥ ७.२,३५.८

सृष्टिं लोकेषु पृथिवीं तत्त्वेष्वात्मानमव्ययम् ॥ ७.२,३५.९

कलाध्वनि निवृत्तिं च सद्यं ब्रह्मसु पञ्चसु ॥ ७.२,३५.९

लिंगभागेष्वधोभागं बीजाख्यं कारणत्रये ॥ ७.२,३५.१०

चतुःषष्टिगुणैश्वर्यं बौद्धं यदणिमादिषु ॥ ७.२,३५.१०

तदित्थमर्थैर्दशभिर्व्याप्तं विश्वमृचा जगत् ॥ ७.२,३५.११

अथोपस्थापयामास स्वार्थं दशविधं यजुः ॥ ७.२,३५.११

सत्त्वं गुणेषु विष्णुं च मूर्तिष्वाद्यं क्रियास्वपि ॥ ७.२,३५.१२

स्थितिं लोकेष्वंतरिक्षं विद्यां तत्त्वेषु च त्रिषु ॥ ७.२,३५.१२
कलाध्वसु प्रतिष्ठां च वामं ब्रह्मसु पञ्चसु ॥ ७.२,३५.१३
मध्यं तु लिंगभागेषु योनिं च त्रिषु हेतुषु ॥ ७.२,३५.१३
प्राकृतं च यथैश्वर्यं तस्माद्विश्वं यजुर्मयम् ॥ ७.२,३५.१४
ततोपस्थापयामास सामार्थं दशधात्मनः ॥ ७.२,३५.१४
तमोगुणेष्वथो रुद्रं मूर्तिष्वाद्यं क्रियासु च ॥ ७.२,३५.१५
संहृतिं त्रिषु लोकेषु तत्त्वेषु शिवमुत्तमम् ॥ ७.२,३५.१५
विद्याकलास्वघोरं च तथा ब्रह्मसु पञ्चसु ॥ ७.२,३५.१६
लिंगभागेषु पीठोर्ध्वं बीजिनं कारणत्रये ॥ ७.२,३५.१६
पौरुषं च तथैश्वर्यमित्थं साम्ना ततं जगत् ॥ ७.२,३५.१७
अथाथर्वाह नैर्गुण्यमर्थं प्रथममात्मनः ॥ ७.२,३५.१७
ततो महेश्वरं साक्षान्मूर्तिष्वपि सदाशिवम् ॥ ७.२,३५.१८
क्रियासु निष्क्रियस्यापि शिवस्य परमात्मनः ॥ ७.२,३५.१८
भूतानुग्रहणं चैव मुच्यंते येन जंतवः ॥ ७.२,३५.१९
लोकेष्वपि यतो वाचो निवृत्ता मनसा सह ॥ ७.२,३५.१९
तदूर्ध्वमुन्मना लोकात्सोमलोकमलौकिकम् ॥ ७.२,३५.२०
सोमस्सहोमया यत्र नित्यं निवसतीश्वरः ॥ ७.२,३५.२०
तदूर्ध्वमुन्मना लोकाद्यं प्राप्तो न निवर्तते ॥ ७.२,३५.२१
शांतिं च शांत्यतीतां च व्यापिकां चै कलास्वपि ॥ ७.२,३५.२१
तत्पूरुषं तथेशानं ब्रह्म ब्रह्मसु पञ्चसु ॥ ७.२,३५.२२
मूर्धानमपि लिंगस्य नादभागेष्वनुत्तमम् ॥ ७.२,३५.२२
यत्रावाह्य समाराध्यः केवलो निष्कलः शिवः ॥ ७.२,३५.२३
तत्तेष्वपि तदा बिंदोर्नादाच्छक्तेस्ततः परात् ॥ ७.२,३५.२३
तत्त्वादपि परं तत्त्वमतत्त्वं परमार्थतः ॥ ७.२,३५.२४
कारणेषु त्रयातीतान्मायाविक्षोभकारणात् ॥ ७.२,३५.२४
अनंताच्छुद्धविद्यायाः परस्ताच्च महेश्वरात् ॥ ७.२,३५.२५
सर्वविद्येश्वराधीशान्न पराच्च सदाशिवात् ॥ ७.२,३५.२५
सर्वमंत्रतनोर्देवाच्छक्तित्रयसमन्वितात् ॥ ७.२,३५.२६

पञ्चवक्त्राद्दशभुजात्साक्षात्सकलनिष्कलात् ॥ ७.२,३५.२६
तस्मादपि पराद्बिंदोरर्धेदोश्च ततः परात् ॥ ७.२,३५.२७
ततः परान्निशाधीशान्नादाख्याच्च ततः परात् ॥ ७.२,३५.२७
ततः परात्सुषुम्नेशाद्ब्रह्मरंध्रेश्वरादपि ॥ ७.२,३५.२८
ततः परस्माच्छक्तेश्च परस्ताच्छिवतत्त्वतः ॥ ७.२,३५.२८
परमं कारणं साक्षात्स्वयं निष्कारणं शिवम् ॥ ७.२,३५.२९
कारणानां च धातारं ध्यातारां ध्येयमव्ययम् ॥ ७.२,३५.२९
परमाकाशमध्यस्थं परमात्मोपरि स्थितं ॥ ७.२,३५.३०
सर्वैश्वर्येण संपन्नं सर्वेश्वरमनीश्वरम् ॥ ७.२,३५.३०
ऐश्वर्याच्चापि मायेयादशुद्धान्मानुषादिकात् ॥ ७.२,३५.३१
अपराच्च परात्याज्यादधिशुद्धाध्वगोचरात् ॥ ७.२,३५.३१
तत्पराच्छुद्धविद्याद्यादुन्मनांतात्परात्परात् ॥ ७.२,३५.३२
परमं परमैश्वर्यमुन्मनाद्यमनादि च ॥ ७.२,३५.३२
अपारमपराधीनं निरस्तातिशयं स्थिरम् ॥ ७.२,३५.३३
इत्थमर्थैर्दशविधैरियमाथर्वणी श्रुतिः ॥ ७.२,३५.३३
यस्माद्गरीयसी तस्माद्विश्वं व्याप्तमथर्वणात् ॥ ७.२,३५.३४
ऋग्वेदः पुनराहेदं जाग्रद्रूपं मयोच्यते ॥ ७.२,३५.३४
येनाहमात्मतत्त्वस्य नित्यमस्म्यभिधायकः ॥ ७.२,३५.३५
यजुर्वेदो ऽवदत्तद्वत्स्वप्नावस्था मयोच्यते ॥ ७.२,३५.३५
भोग्यात्मना परिणता विद्यावेद्या यतो मयि ॥ ७.२,३५.३६
साम चाह सुषुप्त्याख्यमेवं सर्वं मयोच्यते ॥ ७.२,३५.३६
ममार्थेन शिवेनेदं तामसेनाभिधीयते ॥ ७.२,३५.३७
अथर्वाह तुरायाख्यं तुरीयातीतमेव च ॥ ७.२,३५.३७
मयाभिधीयते तस्मादध्वातीतपदोस्म्यहम् ॥ ७.२,३५.३८
अध्वात्मकं तु त्रितयं शिवविद्यात्मसंज्ञितम् ॥ ७.२,३५.३८
तत्त्रैगुण्यं त्रयीसाध्यं संशोध्यं च पदैषिणा ॥ ७.२,३५.३९
अध्वातीतं तुरीयाख्यं निर्वाणं परमं पदम् ॥ ७.२,३५.३९
तदतीतं च नैर्गुण्यादध्वनोस्य विशोधकम् ॥ ७.२,३५.४०

द्वयोः प्रमापको नादो नदांतश्च मदात्मकः ॥ ७.२,३५.४०
तस्मान्ममार्थस्वातंत्र्यात्प्रधानः परमेश्वरः ॥ ७.२,३५.४१
यदस्ति वस्तु तत्सर्वं गुणप्रधान्ययोगतः ॥ ७.२,३५.४१
समस्तं व्यस्तमपि च प्रणवार्थं प्रचक्षते ॥ ७.२,३५.४२
सवार्थवाचकं तस्मादेकं ब्रह्मैतदक्षरम् ॥ ७.२,३५.४२
तेनोमिति जगत्कृत्स्नं कुरुते प्रथमं शिवः ॥ ७.२,३५.४३
शिवो हि प्रणवो ह्येष प्रणवो हि शिवः स्मृतः ॥ ७.२,३५.४३
वाच्यवाचकयोर्भेदो नात्यंतं विद्यते यतः ॥ ७.२,३५.४४
चिंतया रहितो रुद्रो वाचोयन्मनसा सह ॥ ७.२,३५.४४
अप्राप्य तन्निवर्तंते वाच्यस्त्वेकाक्षरेण सः ॥ ७.२,३५.४५
एकाक्षरादकाराख्यादात्मा ब्रह्माभिधीयते ॥ ७.२,३५.४५
एकाक्षरादुकाराख्याद्द्विधा विष्णुरुदीर्यते ॥ ७.२,३५.४६
एकाक्षरान्मकाराख्याच्छिवो रुद्र उदाहृतः ॥ ७.२,३५.४६
दक्षिणांगान्महेशस्य जातो ब्रह्मात्मसंज्ञिकः ॥ ७.२,३५.४७
वामांगादभवद्विष्णुस्ततो विद्येति संज्ञितः ॥ ७.२,३५.४७
हृदयान्नीलरुद्रो भूच्छिवस्य शिवसंज्ञिकः ॥ ७.२,३५.४८
सृष्टेः प्रवर्तको ब्रह्मा स्थितेर्विष्णुर्विमोहकः ॥ ७.२,३५.४८
संहारस्य तथा रुद्रस्तयोर्नित्यं नियामकः ॥ ७.२,३५.४९
तस्मात्त्रयस्ते कथ्यंते जगतः कारणानि च ॥ ७.२,३५.५०
कारणत्रयहेतुश्च शिवः परमकारणम् ॥ ७.२,३५.५०
अर्थमेतमविज्ञाय रजसा बद्धवैरयोः ॥ ७.२,३५.५१
युवयोः प्रतिबोधाय मध्ये लिंगमुपस्थितम् ॥ ७.२,३५.५१
एवमोमिति मां प्राहुर्यदिहोक्तमथर्वणा ॥ ७.२,३५.५२
ऋचो यजूंषि सामानि शाखाश्चान्याः सहस्रशः ॥ ७.२,३५.५२
वेदेष्वेवं स्वयं वक्त्रैर्व्यक्तमित्यवदत्स्वपि ॥ ७.२,३५.५३
स्वप्नानुभूतमिव तत्ताभ्यां नाध्यवसीयते ॥ ७.२,३५.५३
तयोस्तत्र प्रबोधाय तमोपनयनाय च ॥ ७.२,३५.५४
लिंगेपि मुद्रितं सर्वं यथा वेदैरुदाहृतम् ॥ ७.२,३५.५४

तद्दृष्ट्वा मुद्रितं लिंगे प्रसादाल्लिंगिनस्तदा ॥ ७.२,३५.५५

प्रशांतमनसौ देवौ प्रबुद्धौ संबभूवतुः ॥ ७.२,३५.५५

उत्पत्तिं विलयं चैव यथात्म्यं च षडध्वनाम् ॥ ७.२,३५.५६

ततः परतरं धाम धामवंतं च पूरुषम् ॥ ७.२,३५.५६

निरुत्तरतरं ब्रह्म निष्कलं शिवमीश्वरम् ॥ ७.२,३५.५७

पशुपाशमयस्यास्य प्रपञ्चस्य सदा पतिम् ॥ ७.२,३५.५७

अकुतोभयमत्यंतमवृद्धिक्षयमव्ययम् ॥ ७.२,३५.५८

वाह्यमाभ्यंतरं व्याप्तं वाह्याभ्यंतरवर्जितम् ॥ ७.२,३५.५८

निरस्तातिशयं शश्वद्विश्वलोकविलक्षणम् ॥ ७.२,३५.५९

अलक्षणमनिर्देश्यमवाङ्मनसगोचरम् ॥ ७.२,३५.५९

प्रकाशैकरसं शांतं प्रसन्नं सततोदितम् ॥ ७.२,३५.६०

सर्वकल्याणनिलयं शक्त्या तादृशयान्वितम् ॥ ७.२,३५.६०

ज्ञात्वा देवं विरूपाक्षं ब्रह्मनारायणौ तदा ॥ ७.२,३५.६१

रचयित्वांजलिं मूर्ध्नि भीतौ तौ वाचमूचतुः ॥ ७.२,३५.६१

ब्रह्मोवाच

अज्ञो वाहमभिज्ञो वा त्वयादौ देव निर्मितः ॥ ७.२,३५.६२

ईदृशीं भ्रांतिमापन्न इति को ऽत्रापराध्यति ॥ ७.२,३५.६२

आस्तां ममेदमज्ञानं त्वयि सन्निहते प्रभो ॥ ७.२,३५.६३

निर्भयः को ऽभिभाषेत कृत्यं स्वस्य परस्य वा ॥ ७.२,३५.६३

आवयोर्देवदेवस्य विवादो ऽपि हि शोभनः ॥ ७.२,३५.६४

पादप्रणामफलदो नाथस्य भवतो यतः ॥ ७.२,३५.६४

विष्णुरुवाच

स्तोतुं देव न वागस्ति महिम्नः सदृशी तव ॥ ७.२,३५.६५

प्रभोरग्रे विधेयानां तूष्णींभावो व्यतिक्रमः ॥ ७.२,३५.६५

किमत्र संघटेत्कृत्यमित्येवावसरोचितम् ॥ ७.२,३५.६६

अजानन्नपि यत्किंचित्प्रलप्य त्वां नतो ऽस्म्यहम् ॥ ७.२,३५.६६

कारणत्वं त्वया दत्तं विस्मृतं तव मायया ॥ ७.२,३५.६७

मोहितो ऽहंकृतश्चापि पुनरेवास्मि शासितः ॥ ७.२,३५.६७

विज्ञापितैः किं बहुभिर्भीतोस्मि भृशमीश्वर ॥ ७.२,३५.६८

यतो ऽहमपरिच्छेद्यं त्वां परिच्छेत्तुमुद्यतः ॥ ७.२,३५.६८

त्वामुशंति महादेवं भीतानामार्तिनाशनम् ॥ ७.२,३५.६९

अतो व्यतिक्रमं मे ऽद्य क्षंतुमर्हसि शंकर ॥ ७.२,३५.६९

इति विज्ञापितस्ताभ्यामीश्वराभ्यां महेश्वरः ॥ ७.२,३५.७०

प्रीतो ऽनुगृह्य तौ देवौ स्मितपूर्वमभाषत ॥ ७.२,३५.७०

ईश्वर उवाच

वत्सवत्स विधे विष्णो मायया मम मोहितौ ॥ ७.२,३५.७१

युवां प्रभुत्वे ऽहंकृत्य बुद्धवैरो परस्परम् ॥ ७.२,३५.७१

विवादं युद्धपर्यंतं कृत्वा नोपरतौ किल ॥ ७.२,३५.७२

ततश्छिन्ना प्रजासृष्टिर्जगत्कारणभूतयोः ॥ ७.२,३५.७२

अज्ञानमानप्रभवाद्वैमत्याद्युवयोरपि ॥ ७.२,३५.७३

तन्निवर्तयितुं युष्मद्दर्पमोहौ मयैव तु ॥ ७.२,३५.७३

एवं निवारितावद्यलिंगाविर्भावलीलया ॥ ७.२,३५.७४

तस्माद्भूयो विवादं च व्रीडां चोत्सृज्य कृत्स्नशः ॥ ७.२,३५.७४

यथास्वं कर्म कुर्यातां भवंतौ वीतमत्सरौ ॥ ७.२,३५.७५

पुरा ममाज्ञया सार्धं समस्तज्ञानसंहिताः ॥ ७.२,३५.७५

युवाभ्यां हि मया दत्ता कारणत्वप्रसिद्धये ॥ ७.२,३५.७६

मंत्ररत्नं च सूत्राख्यं पञ्चाक्षरमयं परम् ॥ ७.२,३५.७६

मयोपदिष्टं सर्वं तद्युवयोरद्य विस्मृतम् ॥ ७.२,३५.७७

ददामि च पुनः सर्वं यथापूर्वं ममाज्ञया ॥ ७.२,३५.७७

यतो विना युवां तेन न क्षमौ सृष्टिरक्षणे ॥ ७.२,३५.७८

एवमुक्त्वा महादेवो नारायणपितामहौ ॥ ७.२,३५.७८

मंत्रराजं ददौ ताभ्यां ज्ञानसंहितया सह ॥ ७.२,३५.७९

तौ लब्ध्वा महतीं दिव्यामाज्ञां माहेश्वरीं पराम् ॥ ७.२,३५.७९

महार्थं मंत्ररत्नं च तथैव सकलाः कलाः ॥ ७.२,३५.८०

दंडवत्प्रणतिं कृत्वा देवदेवस्य पादयोः ॥ ७.२,३५.८०

अतिष्ठतां वीतभयावानंदास्तिमितौ तदा ॥ ७.२,३५.८१

एतस्मिन्नंतरे चित्रमिंद्रजालवदैश्वरम् ॥ ७.२,३५.८१

लिंगं क्वापि तिरोभूतं न ताभ्यामुपलभ्यते ॥ ७.२,३५.८२

ततो विलप्य हाहेति सद्यःप्रणयभंगतः ॥ ७.२,३५.८२

किमसत्यमिदं वृत्तमिति चोक्त्वा परस्परम् ॥ ७.२,३५.८३

अचिंत्यवैभवं शंभोर्विचिंत्य च गतव्यथौ ॥ ७.२,३५.८३

अभ्युपेत्य परां मैत्रीमालिंग्य च परस्परम् ॥ ७.२,३५.८४

जगद्व्यापारमुद्दिश्य जग्मतुर्देवपुंगवौ ॥ ७.२,३५.८४

ततः प्रभृति शक्राद्याः सर्व एव सुरासुराः ॥ ७.२,३५.८५

ऋषयश्च नरा नागा नार्यश्चापि विधानतः ॥ ७.२,३५.८५

लिंगप्रतिष्ठा कुर्वंति लिंगे तं पूजयंति च ॥ ७.२,३५.८५

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे हरिविधिमोहनिवारणं नाम पञ्चत्रिंशो ऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ३६

https://sa.wikisource.org/s/i06



श्रीकृष्ण उवाच

भगवञ्छ्रोतुमिच्छामि प्रतिष्ठाविधिमुत्तमम् ॥ ७.२,३६.१

लिंगस्यापि च बेरस्य शिवेन विहितं यथा ॥ ७.२,३६.१

उपमन्युरुवाच

अनात्मप्रतिकूले तु दिवसे शुक्लपक्षके ॥ ७.२,३६.२

शिवशास्त्रोक्तमार्गेण कुर्याल्लिंगं प्रमाणवत् ॥ ७.२,३६.२

स्वीकृत्याथ शुभस्थानं भूपरीक्षां विधाय च ॥ ७.२,३६.३

दशोपचारान्कुर्वीत लक्षणोद्धारपूर्वकान् ॥ ७.२,३६.३

तेषां दशोपचाराणां पूर्वं पूज्य १ विनायकम् ॥ ७.२,३६.४

स्थानशुद्ध्यादिकं कृत्वालिंगं स्नानालयं नयेत् ॥ ७.२,३६.४

शलाकया कांचनया २ कुंकुमादिरसाक्तया ॥ ७.२,३६.५

लक्षितं लक्षणं शिल्पशास्त्रेण विलिखेत्ततः ॥ ७.२,३६.५

अष्टमृत्सलिलैर्वाथ पञ्चमृत्सलिलैस्तथा ॥ ७.२,३६.६

लिङ्गं पिंडिकया सार्धं पञ्चगव्यैश्च शोधयेत् ॥ ७.२,३६.६

सवेदिकं समभ्यर्च्य दिव्याद्यं तु जलाशयम् ॥ ७.२,३६.७

नीत्वाधिवासयेत्तत्र लिंगं पिंडिकया सह ॥ ७.२,३६.७

अधिवासालये शुद्धे सर्वशोभासमन्विते ॥ ७.२,३६.८

सतोरणे सावरणे दर्भमालासमावृते ॥ ७.२,३६.८

दिग्गजाष्टकसंपन्ने दिक्पालाष्टघटान्विते ॥ ७.२,३६.९

अष्टमंगलकैर्युक्ते कृतदिक्पालकार्चिते ॥ ७.२,३६.९

तेजसं दारवं वापि कृत्वा पद्मासनांकितम् ॥ ७.२,३६.१०

विन्यसेन्मध्यतस्तत्र विपुलं पीठकालयम् ॥ ७.२,३६.१०

द्वारपालान्समभ्यर्च्य भद्रादींश्चतुरःक्रमात् ॥ ७.२,३६.११

समुद्रश्च विभद्रश्च सुनंदश्च विनंदकः ॥ ७.२,३६.११

स्नापयित्वा समभ्यच्र्य लिंगं वेदिकया सह ॥ ७.२,३६.१२
सकूर्चाभ्यां तु वस्त्राभ्यां समावेष्ट्यं समंततः ॥ ७.२,३६.१२
प्रापय्य शनकैस्तोयं पीठिकोपरि शाययेत् ॥ ७.२,३६.१३
प्राक्शिरस्कमधःसूत्रं पिंडिकां चास्य पश्चिमे ॥ ७.२,३६.१३
सर्वमंगलसंयुक्तं लिंगं तत्राधिवासयेत् ॥ ७.२,३६.१४
पञ्चरात्रं त्रिरात्रं वाप्येकरात्रमथापि वा ॥ ७.२,३६.१४
विसृज्य पूजितं तत्र शोधयित्वा च पूर्ववत् ॥ ७.२,३६.१५
संपूज्योत्सवमार्गेण शयनालयमानयेत् ॥ ७.२,३६.१५
तत्रापि शयनस्थानं कुर्यान्मंडलमध्यतः ॥ ७.२,३६.१६
शुद्धैर्जलैः स्नापयित्वा लिंगमभ्यर्चयेत्क्रमात् ॥ ७.२,३६.१६
ऐशान्यां पद्ममालिख्य शुद्धलिप्ते महीतले ॥ ७.२,३६.१७
शिवकुंभं शोधयित्वा तत्रावाह्य शिवं यजेत् ॥ ७.२,३६.१७
वेदीमध्ये सितं पद्मं परिकल्प्य विधानतः ॥ ७.२,३६.१८
तस्य पश्चिमतश्चापि चंडिकापद्ममालिखेत् ॥ ७.२,३६.१८
क्षौमाद्यैर्वाहतैर्वस्त्रैः पुष्पैर्दर्भैरथापि वा ॥ ७.२,३६.१९
प्रकल्प्य शयनं तस्मिन्हेमपुष्पं विनिक्षिपेत् ॥ ७.२,३६.१९
तत्र लिंगं समानीय सर्वमंगलनिःस्वनैः ॥ ७.२,३६.२०
रक्तेन वस्त्रयुग्मेन सकूर्चेन समंततः ॥ ७.२,३६.२०
सह पिंडिकयावेष्ट्य शाययेच्च यथा पुरा ॥ ७.२,३६.२१
पुरस्तात्पद्ममालिख्य तद्दलेषु यथाक्रमम् ॥ ७.२,३६.२१
विद्येशकलशान्न्यस्येन्मध्ये शैवीं च वर्धनीम् ॥ ७.२,३६.२२
परीत्य पद्मत्रितयं जुहुयुर्द्विजसत्तमाः ॥ ७.२,३६.२२
ते चाष्टमूर्तयः कल्प्याः पूर्वादिपरितः स्थिताः ॥ ७.२,३६.२३
चत्वारश्चाथ वा दिक्षु स्वध्येतारस्सजापकाः ॥ ७.२,३६.२३
जुहुयुस्ते विरंच्याद्याश्चतस्रो मूर्तयः स्मृताः ॥ ७.२,३६.२४
दैशिकः प्रथमं तेषामैशान्यां पश्चिमे ऽथ वा ॥ ७.२,३६.२४
प्रधानहोमं कुर्वीत सप्तद्रव्यैर्यथाक्रमम् ॥ ७.२,३६.२५
आचार्यात्पादमर्धं वा जुहुयुश्चापरे द्विजाः ॥ ७.२,३६.२५

प्रधानमेकमेवात्र जुहुयादथ वा गुरुः ॥ ७.२,३६.२६

पूर्वं पूर्णाहुतिं हुत्वा घृतेनाष्टोत्तरं शतम् ॥ ७.२,३६.२६

मूर्ध्नि मूलेन लिंगस्य शिवहस्तं प्रविन्यसेत् ॥ ७.२,३६.२७

शतमर्धं तदर्धं वा क्रमादद्रव्यैश्च सप्तभिः ॥ ७.२,३६.२७

हुत्वाहुत्वा स्पृशेल्लिंगं वेदिकां च पुनः पुनः ॥ ७.२,३६.२८

पूर्णाहुतिं ततो हुत्वा क्रमाद्दद्याच्च दक्षिणाम् ॥ ७.२,३६.२८

आचार्यात्पादमर्धं वा होत्ःणां स्थपतेरपि ॥ ७.२,३६.२९

तदर्धं देयमन्येभ्यः सदस्येभ्यश्च शक्तितः ॥ ७.२,३६.२९

ततः श्वभ्रे वृषं हैमं कूर्चं वापि निवेश्य च ॥ ७.२,३६.३०

मृदंभसा पञ्चगव्यैः पुनः शुद्धजलेन च ॥ ७.२,३६.३०

शोधितां चंदनालिप्तां श्वभ्रे ब्रह्मशिलां क्षिपेत् ॥ ७.२,३६.३१

करन्यासं ततः कृत्वा नवभिः शक्तिनामभिः ॥ ७.२,३६.३१

हरितालादिधातूंश्च बीजगंधौषधैरपि ॥ ७.२,३६.३२

शिवशास्त्रोक्तविधिना क्षिपेद्ब्रह्मशिलोपरि ॥ ७.२,३६.३२

प्रतिलिंगं तु संस्थाप्य क्षीरं वृक्षसमुद्भवम् ॥ ७.२,३६.३३

स्थितं बुद्ध्वा तदुत्सृज्य लिंगं ब्रह्मशिलोपरि ॥ ७.२,३६.३३

प्रागुदक्प्रवरां किंचित्स्थापयेन्मूलविद्यया ॥ ७.२,३६.३४

पिंडिकां चाथ संयोज्य शाक्तं मूलमनुस्मरन् ॥ ७.२,३६.३४

बन्धनं बंधकद्रव्यैः कृत्वा स्थानं विशोध्य च ॥ ७.२,३६.३५

दत्त्वा चार्घ्यं च पुष्पाणि कुर्युर्यवनिकां पुनः ॥ ७.२,३६.३५

यथायोग्यं निषेकादि लिंगस्य पुरतस्तदा ॥ ७.२,३६.३६

आनीय शयनस्थानात्कलशान्विन्यसेत्क्रमात् ॥ ७.२,३६.३६

महापूजामथारभ्य संपूज्य कलशान्दश ॥ ७.२,३६.३७

शिवमंत्रमनुस्मृत्य शिवकुंभजलांतरे ॥ ७.२,३६.३७

अंगुष्ठानामिकायोगादादाय तमुदीरयेत् ॥ ७.२,३६.३८

न्यसेदीशानभागस्य मध्ये लिंगस्य मंत्रवित् ॥ ७.२,३६.३८

शक्तिं न्यसेत्तथा विद्यां विद्येशांश्च यथाक्रमम् ॥ ७.२,३६.३९

लिङ्गमूले शिवजलैस्ततो लिंगं निषेचयेत् ॥ ७.२,३६.३९

वर्धन्यां पिंडिकालिंगं विद्येशकलशैः पुनः ॥ ७.२,३६.४०
अभिषिच्यासनं पश्चादाधाराद्यं प्रकल्पयेत् ॥ ७.२,३६.४०
कृत्वा पञ्चकलान्यासं दीप्तं लिंगमनुस्मरेत् ॥ ७.२,३६.४१
आवाहयेच्छिवौ साक्षात्प्राञ्जलिः प्रागुदङ्मुखः ॥ ७.२,३६.४१
वृषाधिराजमारुह्य विमानं वा नभस्तलात् ॥ ७.२,३६.४२
अलंकृतं सहायांतं देव्या देवमनुस्मरन् ॥ ७.२,३६.४२
सर्वाभरणशोभाढ्यं सर्वमंगलनिस्वनैः ॥ ७.२,३६.४२
ब्रह्मविष्णुमहेशार्कशक्राद्यैर्देवदानवैः ॥ ७.२,३६.४३
आनंदक्लिन्नसर्वांगैर्विन्यस्तांजलिमस्तकैः ॥ ७.२,३६.४३
स्तुवद्भिरेव नृत्यद्भिर्नामद्भिरभितो वृतम् ॥ ७.२,३६.४४
ततः पञ्चोपचारांश्च कृत्वा पूजां समापयेत् ॥ ७.२,३६.४४
नातः परतरः कश्चिद्विधिः पञ्चोपचारकात् ॥ ७.२,३६.४५
प्रतिष्ठां लिंगवत्कुर्यात्प्रतिमास्वपि सर्वतः ॥ ७.२,३६.४५
लक्षणोद्धारसमये कार्यं नयनमोचनम् ॥ ७.२,३६.४६
जलाधिवासे शयने शाययेत्तान्त्वधोमुखीम् ॥ ७.२,३६.४६
कुम्भोदशायितां मंत्रैर्हृदि तां सन्नियोजयेत् ॥ ७.२,३६.४७
कृतालयां परामाहुः प्रतिष्ठामकृतालयात् ॥ ७.२,३६.४७
शक्तः कृतालयः पश्चात्प्रतिष्ठाविधिमाचरेत् ॥ ७.२,३६.४८
अशक्तश्चेत्प्रतिष्ठाप्य लिंगं बेरमथापि वा ॥ ७.२,३६.४८
शक्तेरनुगुणं पश्चात्प्रकुर्वीत शिवालयम् ॥ ७.२,३६.४९
गृहार्चां च पुनर्वक्ष्ये प्रतिष्ठाविधिमुत्तमम् ॥ ७.२,३६.४९
कृत्वा कनीयसंबेरं लिंगं वा लक्षणान्वितम् ॥ ७.२,३६.५०
अयने चोत्तरे प्राप्ते शुक्लपक्शे शुभे दिने ॥ ७.२,३६.५०
देवीं कृत्वा शुभे देशे तत्राब्जं पूर्ववल्लिखेत् ॥ ७.२,३६.५१
विकीर्य पत्रपुष्पाद्यैर्मध्ये कुंभं निधाय च ॥ ७.२,३६.५१
परितस्तस्य चतुरः कलशान् दिक्षु विन्यसेत् ॥ ७.२,३६.५२
पञ्च ब्रह्माणि तद्बीजैस्तेषु पञ्चसु पञ्चभिः ॥ ७.२,३६.५२
न्यस्य संपूज्य मुद्रादि दर्शयित्वाभिरक्ष्य च ॥ ७.२,३६.५३

विशोध्य लिंगं बेरं वा मृत्तोयाद्यैर्यथा पुरा ॥ ७.२,३६.५३
स्थापयेत्पुष्पसंछन्नमुत्तरस्थे वरासने ॥ ७.२,३६.५४
निधाय पुष्पं शिरसि प्रोक्षयेत्प्रोक्षणीजलैः ॥ ७.२,३६.५४
समभ्यर्च्य पुनः पुष्पैर्जयशब्दादिपूर्वकम् ॥ ७.२,३६.५५
कुम्भैरीशानविद्यांतैः स्नापयेन्मूलविद्यया ॥ ७.२,३६.५५
ततः पञ्चकलान्यासं कृत्वा पूजां च पूर्ववत् ॥ ७.२,३६.५६
नित्यमाराधयेत्तत्र देव्या देवं त्रिलोचनम् ॥ ७.२,३६.५६
एकमेवाथ वा कुंभं मूर्तिमन्त्रसमन्वितम् ॥ ७.२,३६.५७
न्यस्य पद्मांतरे सर्वं शेषं पूर्ववदाचरेत् ॥ ७.२,३६.५७
अत्यंतोपहतं लिंगं विशोध्य स्थापयेत्पुनः ॥ ७.२,३६.५८
संप्रोक्षयेदुपहतमनागुपहतं यजेत् ॥ ७.२,३६.५८
लिंगानि बाणसंज्ञानि स्थापनीयानि वा न वा ॥ ७.२,३६.५९
तानि पूर्वं शिवेनैव संस्कृतानि यतस्ततः ॥ ७.२,३६.५९
शेषाणि स्थापनीयानि यानि दृष्टानि बाणवत् ॥ ७.२,३६.६०
स्वयमुद्भूतलिंगे च दिव्ये चार्षे तथैव च ॥ ७.२,३६.६०
अपीठे पीठमावेश्य कृत्वा संप्रोक्षणं विधिम् ॥ ७.२,३६.६१
यजेत्तत्र शिवं तेषां प्रतिष्ठा न विधीयते ॥ ७.२,३६.६१
दग्धं श्लथं क्षतांगं च क्षिपेल्लिंगं जलाशये ॥ ७.२,३६.६२
संधानयोग्यं संधाय प्रतिष्ठाविधिमाचरेत् ॥ ७.२,३६.६२
बेराद्वा विकलाल्लिंगाद्देवपूजापुरस्सरम् ॥ ७.२,३६.६३
उद्वास्य हृदि संधानं त्यागं वा युक्तमाचरेत् ॥ ७.२,३६.६३
एकाहपूजाविहतौ कुर्यादद्विगुणमर्चनम् ॥ ७.२,३६.६४
द्विरात्रे च महापूजां संप्रोक्षणमतः परम् ॥ ७.२,३६.६४
मासादूर्ध्वमनेकाहं पूजा यदि विहन्यते ॥ ७.२,३६.६५
प्रतिष्ठा प्रोच्यते कैश्चित्कैश्चित्संप्रोक्षणक्रमः ॥ ७.२,३६.६५
संप्रोक्षणे तु लिंगादेर्देवमुद्वास्य पूर्ववत् ॥ ७.२,३६.६६
अष्टपञ्चक्रमेणैव स्नापयित्वा मृदंभसा ॥ ७.२,३६.६६
गवां रसैश्च संस्नाप्य दर्भतोयैर्विशोध्य च ॥ ७.२,३६.६७

प्रोक्षयेत्प्रोक्षणीतोयैर्मूलेनाष्टोत्तरं शतम् ॥ ७.२,३६.६७

सपुष्पं सकुशं पाणिं न्यस्य लिंगस्य मस्तके ॥ ७.२,३६.६८

पञ्चवारं जपेन्मूलमष्टोत्तरशतं ततः ॥ ७.२,३६.६८

ततो मूलेन मूर्धादिपीठांतं संस्पृशेदपि ॥ ७.२,३६.६९

पूजां च महतीं कुर्याद्देवमावाह्य पूर्ववत् ॥ ७.२,३६.६९

अलब्धे स्थापिते लिंगे शिवस्थाने जले ऽथ वा ॥ ७.२,३६.७०

वह्नौ रवौ तथा व्योम्नि भगवंतं शिवं यजेत् ॥ ७.२,३६.७०

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे प्रतिष्ठाविधिवर्णनं नाम षट्त्रिंशोऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ३७



श्रीकृष्ण उवाच

ज्ञाने क्रियायां चर्यायां सारमुद्धृत्य संग्रहात् ॥ ७.२,३७.१

उक्तं भगवता सर्वं श्रुतं श्रुतिसमं मया ॥ ७.२,३७.१

इदानीं श्रोतुमिच्छामि योगं परमदुर्लभम् ॥ ७.२,३७.२

साधिकारं च सांगं च सविधिं सप्रयोजनम् ॥ ७.२,३७.२

यद्यस्ति मरणं पूर्वं योगाद्यनुपमर्दतः ॥ ७.२,३७.३

सद्यः साधयितुं शक्यं येन स्यान्नात्महा नरः ॥ ७.२,३७.३

तच्च तत्कारणं चैव तत्कालकरणानि च ॥ ७.२,३७.४

तद्भेदतारतम्यं च वक्तुमर्हसि तत्त्वतः ॥ ७.२,३७.४

उपमन्युरुवाच

स्थाने पृष्टं त्वया कृष्ण सर्वप्रश्नार्थवेदिना ॥ ७.२,३७.५

ततः क्रमेण तत्सर्वं वक्ष्ये शृणु समाहितः ॥ ७.२,३७.५

निरुद्धवृत्त्यंतरस्यं शिवे चित्तस्य निश्चला ॥ ७.२,३७.६

या वृत्तिः स समासेन योगः स खलु पञ्चधा ॥ ७.२,३७.६

मंत्रयोगःस्पर्शयोगो भावयोगस्तथापरः ॥ ७.२,३७.७

अभावयोगस्सर्वेभ्यो महायोगः परो मतः ॥ ७.२,३७.७

मंत्राभ्यासवशेनैव मंत्रवाच्यार्थगोचरः ॥ ७.२,३७.८

अव्याक्षेपा मनोवृत्तिर्मंत्रयोग उदाहृतः ॥ ७.२,३७.८

प्राणायाममुखा सैव स्पर्शो योगोभिधीयते ॥ ७.२,३७.९

स मंत्रस्पर्शनिर्मुक्तो भावयोगः प्रकीर्तितः ॥ ७.२,३७.९

विलीनावयवं विश्वं रूपं संभाव्यते यतः ॥ ७.२,३७.१०

अभावयोगः संप्रोक्तो ऽनाभासाद्वस्तुनः सतः ॥ ७.२,३७.१०

शिवस्वभाव एवैकश्चिंत्यते निरुपाधिकः ॥ ७.२,३७.११

यथा शैवमनोवृत्तिर्महायोग इहोच्यते ॥ ७.२,३७.११

दृष्टे तथानुश्रविके विरक्तं विषये मनः ॥ ७.२,३७.१२

यस्य तस्याधिकारोस्ति योगे नान्यस्य कस्यचित् ॥ ७.२,३७.१२

विषयद्वयदोषाणां गुणानामीश्वरस्य च ॥ ७.२,३७.१३

दर्शनादेव सततं विरक्तं जायते मनः ॥ ७.२,३७.१३

अष्टांगो वा षडंगो वा सर्वयोगः समासतः ॥ ७.२,३७.१४

यमश्च नियमश्चैव स्वस्तिकाद्यं तथासनम् ॥ ७.२,३७.१४

प्राणायामः प्रत्याहारो धारणा ध्यानमेव च ॥ ७.२,३७.१५

समाधिरिति योगांगान्यष्टावुक्तानि सूरिभिः ॥ ७.२,३७.१५

आसनं प्राणसंरोधः प्रत्याहारोथ धारणा ॥ ७.२,३७.१६

ध्यानं समाधिर्योगस्य षडंगानि समासतः ॥ ७.२,३७.१६

पृथग्लक्षणमेतेषां शिवशास्त्रे समीरितम् ॥ ७.२,३७.१७

शिवागमेषु चान्येषु विशेषात्कामिकादिषु ॥ ७.२,३७.१७

योगशास्त्रेष्वपि तथा पुराणेष्वपि केषु च ॥ ७.२,३७.१८

अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहः ॥ ७.२,३७.१८

यम इत्युच्यते सद्भिः पञ्चावयवयोगतः ॥ ७.२,३७.१८

शौचं तुष्टिस्तपश्चैव जपः प्रणिधिरेव च ॥ ७.२,३७.१९

इति पञ्चप्रभेदस्स्यान्नियमः स्वांशभेदतः ॥ ७.२,३७.१९

स्वस्तिकं पद्ममध्येंदुं वीरं योगं प्रसाधितम् ॥ ७.२,३७.२०

पर्यंकं च यथेष्टं च प्रोक्तमासनमष्टधा ॥ ७.२,३७.२०

प्राणः स्वदेहजो वायुस्तस्यायामो निरोधनम् ॥ ७.२,३७.२१

तद्रोचकं पूरकं च कुंभकं च त्रिधोच्यते ॥ ७.२,३७.२१

नासिकापुटमंगुल्या पीड्यैकमपरेण तु ॥ ७.२,३७.२२

औदरं रेचयेद्वायुं तथायं रेचकः स्मृतः ॥ ७.२,३७.२२

बाह्येन मरुता देहं दृतिवत्परिपूरयेत् ॥ ७.२,३७.२३

नासापुटेनापरेण पूरणात्पूरकं मतम् ॥ ७.२,३७.२३

न मुंचति न गृह्णाति वायुमंतर्बहिः स्थितम् ॥ ७.२,३७.२४

संपूर्णं कुंभवत्तिष्ठेदचलः स तु कुंभक ॥ ७.२,३७.२४

रेचकाद्यं त्रयमिदं न द्रुतं न विलंबितम् ॥ ७.२,३७.२५

तद्यतः क्रमयोगेन त्वभ्यसेद्योगसाधकः ॥ ७.२,३७.२५

रेचकादिषु योभ्यासो नाडीशोधनपूर्वकः ॥ ७.२,३७.२६

स्वेच्छोत्क्रमणपर्यंतः प्रोक्तो योगानुशासने ॥ ७.२,३७.२६

कन्यकादिक्रमवशात्प्राणायामनिरोधनम् ॥ ७.२,३७.२७

तच्चतुर्धोपदिष्टं स्यान्मात्रागुणविभागतः ॥ ७.२,३७.२७

कन्यकस्तु चतुर्धा स्यात्स च द्वादशमात्रकः ॥ ७.२,३७.२८

मध्यमस्तु द्विरुद्घातश्चतुर्विंशतिमात्रकः ॥ ७.२,३७.२८

उत्तमस्तु त्रिरुद्घातः षड्विंशन्मात्रकः परः ॥ ७.२,३७.२९

स्वेदकंपादिजनकः प्राणायामस्तदुत्तरः ॥ ७.२,३७.२९

आनंदोद्भवरोमांचनेत्राश्रूणां विमोचनम् ॥ ७.२,३७.३०

जल्पभ्रमणमूर्छाद्यं जायते योगिनः परम् ॥ ७.२,३७.३०

जानुं प्रदक्षिणीकृत्य न द्रुतं न विलंबितम् ॥ ७.२,३७.३१

अंगुलीस्फोटनं कुर्यात्सा मात्रेति प्रकीर्तिता ॥ ७.२,३७.३१

मात्राक्रमेण विज्ञेयाश्चोद्वातक्रमयोगतः ॥ ७.२,३७.३२

नाडीविशुद्धिपूर्वं तु प्राणायामं समाचरेत् ॥ ७.२,३७.३२

अगर्भश्च सगर्भश्च प्राणायामो द्विधा स्मृतः ॥ ७.२,३७.३३

जपं ध्यानं विनागर्भः सगर्भस्तत्समन्वयात् ॥ ७.२,३७.३३

अगर्भाद्गर्भसंयुक्तः प्राणायामःशताधिकः ॥ ७.२,३७.३४

तस्मात्सगर्भं कुर्वन्ति योगिनः प्राणसंयमम् ॥ ७.२,३७.३४

प्राणस्य विजयादेव जीयंते देह १ आयवः ॥ ७.२,३७.३५ <दश वायव इति पाठान्तरम्>

प्राणो ऽपानः समानश्च ह्युदानो व्यान एव च ॥ ७.२,३७.३५

नागः कूर्मश्च कृकलो देवदत्तो धनंजयः ॥ ७.२,३७.३६

प्रयाणं कुरुते यस्मात्तस्मात्प्राणो ऽभिधीयते ॥ ७.२,३७.३६

अवाङ्नयत्यपानाख्यो यदाहारादि भुज्यते ॥ ७.२,३७.३७

व्यानो व्यानशयत्यंगान्यशेषाणि विवर्धयन् ॥ ७.२,३७.३७

उद्वेजयति मर्माणीत्युदानो वायुरीरितः ॥ ७.२,३७.३८

समं नयति सर्वांगं समानस्तेन गीयते ॥ ७.२,३७.३८

उद्गारे नाग आख्यातः कूर्म उन्मीलने स्थितः ॥ ७.२,३७.३९

कृकलः क्षवथौ ज्ञेयो देवदत्तो विजृंभणे ॥ ७.२,३७.३९
न जहाति मृतं चापि सर्वव्यापी धनंजयः ॥ ७.२,३७.४०
क्रमेणाभ्यस्यमानोयं प्राणायामप्रमाणवान् ॥ ७.२,३७.४०
निर्दहत्यखिलं दोषं कर्तुर्देहं च रक्षति ॥ ७.२,३७.४१
प्राणे तु विजिते सम्यक्तच्चिह्नान्युपलक्षयेत् ॥ ७.२,३७.४१
विण्मूत्रश्लेष्मणां तावदल्पभावः प्रजायते ॥ ७.२,३७.४२
बहुभोजनसामर्थ्यं चिरादुच्छ्वासनं तथा ॥ ७.२,३७.४२
लघुत्वं शीघ्रगामित्वमुत्साहः स्वरसौष्ठवम् ॥ ७.२,३७.४३
सर्वरोगक्षयश्चैव बलं तेजः सुरूपता ॥ ७.२,३७.४३
धृतिर्मेधा युवत्वं च स्थिरता च प्रसन्नता ॥ ७.२,३७.४४
तपांसि पापक्षयता यज्ञदानव्रतादयः ॥ ७.२,३७.४४
प्राणायामस्य तस्यैते कलां नार्हन्ति षोडशीम् ॥ ७.२,३७.४५
इन्द्रियाणि प्रसक्तानि यथास्वं विषयेष्विह ॥ ७.२,३७.४५
आहत्य यन्निगृह्णाति स प्रत्याहार उच्यते ॥ ७.२,३७.४६
नमःपूर्वाणींद्रियाणि स्वर्गं नरकमेव च ॥ ७.२,३७.४६
निगृहीतनिसृष्टानि स्वर्गाय नरकाय च ॥ ७.२,३७.४७
तस्मात्सुखार्थी मतिमाञ्ज्ञानवैराग्यमास्थितः ॥ ७.२,३७.४७
इंद्रियाश्वान्निगृह्याशु स्वात्मनात्मानमुद्धरेत् ॥ ७.२,३७.४८
धारणा नाम चित्तस्य स्थानबन्धस्समासतः ॥ ७.२,३७.४८
स्थानं च शिव एवैको नान्यद्दोषत्रयं यतः ॥ ७.२,३७.४९
कालं कंचावधीकृत्य स्थाने ऽवस्थापितं मनः ॥ ७.२,३७.४९
न तु प्रच्यवते लक्ष्याद्धारणा स्यान्न चान्यथा ॥ ७.२,३७.५०
मनसः प्रथमं स्थैर्यं धारणातः प्रजायते ॥ ७.२,३७.५०
तस्माद्धीरं मनः कुर्याद्धारणाभ्यासयोगतः ॥ ७.२,३७.५१
ध्यै चिंतायां स्मृतो धातुः शिवचिंता मुहुर्मुहुः ॥ ७.२,३७.५१
अव्याक्षिप्तेन मनसा ध्यानं नाम तदुच्यते ॥ ७.२,३७.५२
ध्येयावस्थितचित्तस्य सदृशः प्रत्ययश्च यः ॥ ७.२,३७.५२
प्रत्ययान्तरनिर्मुक्तः प्रवाहो ध्यानमुच्यते ॥ ७.२,३७.५३

सर्वमन्यत्परित्यज्य शिव एव शिवंकरः ॥ ७.२,३७.५३
परो ध्येयो ऽधिदेवेशः समाप्ताथर्वणी श्रुतिः ॥ ७.२,३७.५४
तथा शिवा परा ध्येया सर्वभूतगतौ शिवौ ॥ ७.२,३७.५४
तौ श्रुतौ स्मृतिशास्त्रेभ्यः सर्वगौ सर्वदोदितौ ॥ ७.२,३७.५५
सर्वज्ञौ सततं ध्येयौ नानारूपविभेदतः ॥ ७.२,३७.५५
विमुक्तिः प्रत्ययः पूर्वः प्रत्ययश्चाणिमादिकम् ॥ ७.२,३७.५६
इत्येतद्द्विविधं ज्ञेयं ध्यानस्यास्य प्रयोजनम् ॥ ७.२,३७.५६
ध्याता ध्यानं तथा ध्येयं यच्च ध्यानप्रयोजनम् ॥ ७.२,३७.५७
एतच्चतुष्टयं ज्ञात्वा योगं युञ्जीत योगवित् ॥ ७.२,३७.५७
ज्ञानवैराग्यसंपन्नः श्रद्दधानः क्षमान्वितः ॥ ७.२,३७.५८
निर्ममश्च सदोत्साही ध्यातेत्थं पुरुषः स्मृतः ॥ ७.२,३७.५८
जपाच्छ्रांतः पुनर्ध्यायेद्ध्यानाच्छ्रांतः पुनर्जपेत् ॥ ७.२,३७.५९
जपध्यनाभियुक्तस्य क्षिप्रं योगः प्रसिद्ध्यति ॥ ७.२,३७.५९
धारणा द्वादशायामा ध्यानं द्वादशधारणम् ॥ ७.२,३७.६०
ध्यानद्वादशकं यावत्समाधिरभिधीयते ॥ ७.२,३७.६०
समाधिर्न्नाम योगांगमन्तिमं परिकीर्तितम् ॥ ७.२,३७.६१
समाधिना च सर्वत्र प्रज्ञालोकः प्रवर्तते ॥ ७.२,३७.६१
यदर्थमात्रनिर्भासं स्तिमितो दधिवत्स्थितम् ॥ ७.२,३७.६२
स्वरूपशून्यवद्भानं समाधिरभिधीयते ॥ ७.२,३७.६२
ध्येये मनः समावेश्य पश्येदपि च सुस्थिरम् ॥ ७.२,३७.६३
निर्वाणानलवद्योगी समाधिस्थः प्रगीयते ॥ ७.२,३७.६३
न शृणोति न चाघ्राति न जल्पति न पश्यति ॥ ७.२,३७.६४
न च स्पर्शं विजानाति न संकल्पयते मनः ॥ ७.२,३७.६४
नवाभिमन्यते किंचिद्बध्यते न च काष्टवत् ॥ ७.२,३७.६५
एवं शिवे विलीनात्मा समाधिस्थ इहोच्यते ॥ ७.२,३७.६५
यथा दीपो निवातस्थः स्पन्दते न कदाचन ॥ ७.२,३७.६६
तथा समाधिनिष्ठो ऽपि तस्मान्न विचलेत्सुधीः ॥ ७.२,३७.६६

एवमभ्यसतश्चारं योगिनो योगमुत्तमम् ॥ ७.२,३७.६७

तदन्तराया नश्यंति विघ्नाः सर्वे शनैःशनैः ॥ ७.२,३७.६७

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां वायुनैमिषेयर्षिसंवादे उत्तरखण्डे योगगतिवर्णनं नाम सप्तत्रिंशोऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ३८

https://sa.wikisource.org/s/io8



उपमन्युरुवाच

आलस्यं व्याधयस्तीव्राः प्रमादः स्थानसंशयः ॥ ७.२,३८.१

अनवस्थितचित्तत्वमश्रद्धा भ्रांतिदर्शनम् ॥ ७.२,३८.१

दुःखानि दौर्मनस्यं च विषयेषु च लोलता ॥ ७.२,३८.२

दशैते युञ्जतां पुंसामन्तरायाः प्रकीर्तिताः ॥ ७.२,३८.२

आलस्यमलसत्त्वं तु योगिनां देहचेतनोः ॥ ७.२,३८.३

धातुवैषम्यजा दोषा व्याधयः कर्मदोषजाः ॥ ७.२,३८.३

प्रमादो नाम योगस्य साधना नाम भावना ॥ ७.२,३८.४

इदं वेत्युभयाक्रान्तं विज्ञानं स्थानसंशयः ॥ ७.२,३८.४

अप्रतिष्ठा हि मनसस्त्वनवस्थितिरुच्यते ॥ ७.२,३८.५

अश्रद्धा भावरहिता वृत्तिर्वै योगवर्त्मनि ॥ ७.२,३८.५

विपर्यस्ता मतिर्या सा भ्रांतिरित्यभिधीयते ॥ ७.२,३८.६

दुःखमज्ञानजं पुंसां चित्तस्याध्यात्मिकं विदुः ॥ ७.२,३८.६

आधिभौतिकमंगोत्थं यच्च दुःखं पुरा कृतैः ॥ ७.२,३८.७

आधिदैविकमाख्यातमशन्यस्त्रविषादिकम् ॥ ७.२,३८.७

इच्छाविघातजं मोक्षं दौर्मनस्यं प्रचक्षते ॥ ७.२,३८.८

विषयेषु विचित्रेषु विभ्रमस्तत्र लोलता ॥ ७.२,३८.८

शान्तेष्वेतेषु विघ्नेषु योगासक्तस्य योगिनः ॥ ७.२,३८.९

उपसर्गाः प्रवर्तंते दिव्यास्ते सिद्धिसूचकाः ॥ ७.२,३८.९

प्रतिभा श्रवणं वार्ता दर्शनास्वादवेदनाः ॥ ७.२,३८.१०

उपसर्गाः षडित्येते व्यये योगस्य सिद्धयः ॥ ७.२,३८.१०

सूक्ष्मे व्यवहिते ऽतीते विप्रकृष्टे त्वनागते ॥ ७.२,३८.११

प्रतिभा कथ्यते यो ऽर्थे प्रतिभासो यथातथम् ॥ ७.२,३८.११

श्रवणं सर्वशब्दानां श्रवणे चाप्रयत्नतः ॥ ७.२,३८.१२

वार्त्ता वार्त्तासु विज्ञानं सर्वेषामेव देहिनाम् ॥ ७.२,३८.१२
दर्शनं नाम दिव्यानां दर्शनं चाप्रयत्नतः ॥ ७.२,३८.१३
तथास्वादश्च दिव्येषु रसेष्वास्वाद उच्यते ॥ ७.२,३८.१३
स्पर्शनाधिगमस्तद्वद्वेदना नाम विश्रुता ॥ ७.२,३८.१४
गन्धादीनां च दिव्यानामाब्रह्मभुवनाधिपाः ॥ ७.२,३८.१४
संतिष्ठन्ते च रत्नानि प्रयच्छंति बहूनि च ॥ ७.२,३८.१५
स्वच्छन्दमधुरा वाणी विविधास्यात्प्रवर्तते ॥ ७.२,३८.१५
रसायनानि सर्वाणि दिव्याश्चौषधयस्तथा ॥ ७.२,३८.१६
सिध्यंति प्रणिपत्यैनं दिशंति सुरयोषितः ॥ ७.२,३८.१६
योगसिद्ध्यैकदेशे ऽपि दृष्टे मोक्षे भवेन्मतिः ॥ ७.२,३८.१७
दृष्टमेतन्मया यद्वत्तद्वन्मोक्षो भवेदिति ॥ ७.२,३८.१७
कृशता स्थूलता बाल्यं वार्धक्यं चैव यौवनम् ॥ ७.२,३८.१८
नानाचातिस्वरूपं च चतुर्णां देहधारणम् ॥ ७.२,३८.१८
पार्थिवांशं विना नित्यं सुरभिर्गन्धसंग्रहः ॥ ७.२,३८.१९
एवमष्टगुणं प्राहुः पैशाचं पार्थिवं पदम् ॥ ७.२,३८.१९
जले निवसनं चैव भूम्यामेवं विनिर्गमः ॥ ७.२,३८.२०
इच्छेच्छक्तः स्वयं पातुं समुद्रमपि नातुरः ॥ ७.२,३८.२०
यत्रेच्छति जगत्यस्मिंस्तत्रैव जलदर्शनम् ॥ ७.२,३८.२१
विना कुम्भादिकं पाणौ जलसञ्चयधारणम् ॥ ७.२,३८.२१
यद्वस्तु विरसञ्चापि भोक्तुमिच्छति तत्क्षणात् ॥ ७.२,३८.२२
रसादिकं भवेच्चान्यत्त्रयाणां देहधारणम् ॥ ७.२,३८.२२
निर्व्रणत्वं शरीरस्य पार्थिवैश्च समन्वितम् ॥ ७.२,३८.२३
तदिदं षोडशगुणमाप्यमैश्वर्यमद्भुतम् ॥ ७.२,३८.२३
शरीरादग्निनिर्माणं तत्तापभयवर्जनम् ॥ ७.२,३८.२४
शक्तिर्जगदिदं दग्धुं यदीच्छेदप्रयत्नतः ॥ ७.२,३८.२४
स्थापनं वानलस्या ऽप्सु पाणौ पावकधारणम् ॥ ७.२,३८.२५
दग्धे सर्गे यथापूर्वं मुखे चान्नादिपाचनम् ॥ ७.२,३८.२५
द्वाभ्यां देहविनिर्माणमाप्यैश्वर्यसमन्वितम् ॥ ७.२,३८.२५

एतच्चतुर्विंशतिधा तैजसं परिचक्षते ॥ ७.२,३८.२६
मनोजवत्वं भूतानां क्षणादन्तःप्रवेशनम् ॥ ७.२,३८.२६
पर्वतादिमहाभारधारणञ्चाप्रयत्नतः ॥ ७.२,३८.२७
गुरुत्वञ्च लघुत्वञ्च पाणावनिलधारणम् ॥ ७.२,३८.२७
अंगुल्यग्रनिपाताद्यैर्भूमेरपि च कम्पनम् ॥ ७.२,३८.२८
एकेन देहनिष्पत्तिर्युक्तं भोगैश्च तैजसैः ॥ ७.२,३८.२८
द्वात्रिंशद्गुणमैश्वर्यं मारुतं कवयो विदुः ॥ ७.२,३८.२९
छायाहीनविनिष्पत्तिरिन्द्रियाणामदर्शनम् ॥ ७.२,३८.२९
खेचरत्वं यथाकाममिन्द्रियार्थसमन्वयः ॥ ७.२,३८.३०
आकाशलंघनं चैव स्वदेहे तन्निवेशनम् ॥ ७.२,३८.३०
आकाशपिण्डीकरणमशरीरत्वमेव च ॥ ७.२,३८.३१
अनिलैश्वर्यसंयुक्तं चत्वारिंशद्गुणं महत् ॥ ७.२,३८.३१
ऐन्द्रमैश्वर्यमाख्यातमाम्बरं तत्प्रचक्षते ॥ ७.२,३८.३२
यथाकामोपलब्धिश्च यथाकामविनिर्गमः ॥ ७.२,३८.३२
सर्वस्याभिभवश्चैव सर्वगुह्यार्थदर्शनम् ॥ ७.२,३८.३३
कर्मानुरूपनिर्माणं वशित्वं प्रियदर्शनम् ॥ ७.२,३८.३३
संसारदर्शनं चैव भोगैरैन्द्रैस्समन्वितम् ॥ ७.२,३८.३४
एतच्चांद्रमसैश्वर्यं मानसं गुणतो ऽधिकम् ॥ ७.२,३८.३४
छेदनं ताडनं चैव बंधनं मोचनं तथा ॥ ७.२,३८.३५
ग्रहणं सर्वभूतानां संसारवशवर्तिनाम् ॥ ७.२,३८.३५
प्रसादश्चापि सर्वेषां मृत्युकालजयस्तथा ॥ ७.२,३८.३६
आभिमानिकमैश्वर्यं प्राजापत्यं प्रचक्षते ॥ ७.२,३८.३६
एतच्चान्द्रमसैर्भोगैः षट्पञ्चाशद्गुणं महत् ॥ ७.२,३८.३७
सर्गः संकल्पमात्रेण त्राणं संहरणं तथा ॥ ७.२,३८.३७
स्वाधिकारश्च सर्वेषां भूतचित्तप्रवर्तनम् ॥ ७.२,३८.३८
असादृश्यं च सर्वस्य निर्माणं जगतः पृथक् ॥ ७.२,३८.३८
शुभाशुभस्य करणं प्राजापत्यैश्च संयुतम् ॥ ७.२,३८.३९
चतुष्षष्टिगुणं ब्राह्ममैश्वर्यं च प्रचक्षते ॥ ७.२,३८.३९

बौद्धादस्मात्परं गौणमैश्वर्यं प्राकृतं विदुः ॥ ७.२,३८.४०
वैष्णवं तत्समाख्यातं तस्यैव भुवनस्थितिः ॥ ७.२,३८.४०
ब्रह्मणा तत्पदं सर्वं वक्तुमन्यैर्न शक्यते ॥ ७.२,३८.४०
तत्पौरुषं च गौणं च गणेशं पदमैश्वरम् ॥ ७.२,३८.४१
विष्णुना तत्पदं किंचिज्ज्ञातुमन्यैर्न शक्यते ॥ ७.२,३८.४१
विज्ञानसिद्धयश्चैव सर्वा एवौपसर्गिकाः ॥ ७.२,३८.४२
निरोद्धव्या प्रयत्नेन वराग्येण परेण तु ॥ ७.२,३८.४२
प्रतिभासेष्वशुद्धेषु गुणेष्वासक्तचेतसः ॥ ७.२,३८.४३
न सिध्येत्परमैश्वर्यमभयं सार्वकामिकम् ॥ ७.२,३८.४३
तस्माद्गुणांश्च भोगांश्च देवासुरमहीभृताम् ॥ ७.२,३८.४४
तृणवद्यस्त्यजेत्तस्य योगसिद्धिः परा भवेत् ॥ ७.२,३८.४४
अथवानुग्रहेच्छायां जगतो विचरेन्मुनिः ॥ ७.२,३८.४५
यथाकामंगुणान्भोगान्भुक्त्वा मुक्तिं प्रयास्यति ॥ ७.२,३८.४५
अथ प्रयोगं योगस्य वक्ष्ये शृणु समाहितः ॥ ७.२,३८.४६
शुभे काले शुभे देशे शिवक्षेत्रादिके पुनः ॥ ७.२,३८.४६
विजने जंतुरहिते निःशब्दे बाधवर्जिते ॥ ७.२,३८.४६
सुप्रलिप्ते स्थले सौम्ये गन्धधूपादिवासिते ॥ ७.२,३८.४७
मुक्तपुष्पसमाकीर्णे वितानादि विचित्रिते ॥ ७.२,३८.४७
कुशपुष्पसमित्तोयफलमूलसमन्विते ॥ ७.२,३८.४८
नाग्न्यभ्याशे जलाभ्याशे शुष्कपर्णचये ऽपि वा ॥ ७.२,३८.४८
न दंशमशकाकीर्णे सर्पश्वापदसंकुले ॥ ७.२,३८.४९
न च दुष्टमृगाकीर्णे न भये दुर्जनावृते ॥ ७.२,३८.४९
श्मशाने चैत्यवल्मीके जीर्णागारे चतुष्पथे ॥ ७.२,३८.५०
नदीनदसमुद्राणां तीरे रथ्यांतरे ऽपि वा ॥ ७.२,३८.५०
न जीर्णोद्यानगोष्ठादौ नानिष्टे न च निंदिते ॥ ७.२,३८.५१
नाजीर्णाम्लरसोद्गारे न च विण्मूत्रदूषिते ॥ ७.२,३८.५१
नच्छर्द्यामातिसारे वा नातिभुक्तौ श्रमान्विते ॥ ७.२,३८.५२
न चातिचिंताकुलितो न चातिक्षुत्पिपासितः ॥ ७.२,३८.५२

नापि स्वगुरुकर्मादौ प्रसक्तो योगमाचरेत् ॥ ७.२,३८.५३

युक्ताहारविहारश्च युक्तचेष्टश्च कर्मसु ॥ ७.२,३८.५३

युक्तनिद्राप्रबोधश्च सर्वायासविवर्जितः ॥ ७.२,३८.५४

आसनं मृदुलं रम्यं विपुलं सुसमं शुचि ॥ ७.२,३८.५४

पद्मकस्वस्तिकादीनामभ्यसेदासनेषु च ॥ ७.२,३८.५५

अभिवंद्य स्वगुर्वंतानभिवाद्यानानुक्रमात् ॥ ७.२,३८.५५

ऋजुग्रीवशिरोवक्षा नातिष्ठेच्छिष्टलोचनः ॥ ७.२,३८.५६

किंचिदुन्नामितशिरा दंतैर्दंतान्न संस्पृशेत् ॥ ७.२,३८.५६

दंताग्रसंस्थिता जिह्वामचलां सन्निवेश्य च ॥ ७.२,३८.५७

पार्ष्णिभ्यां वृषणौ रक्षंस्तथा प्रजननं पुनः ॥ ७.२,३८.५७

ऊर्वोरुपरि संस्थाप्य बाहू तिर्यगयत्नतः ॥ ७.२,३८.५८

दक्षिणं करपृष्ठं तु न्यस्य वामतलोपरि ॥ ७.२,३८.५८

उन्नाम्य शनकैः पृष्ठमुरो विष्टभ्य चाग्रतः ॥ ७.२,३८.५९

संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ ७.२,३८.५९

संभृतप्राणसंचारः पाषाण इव निश्चलः ॥ ७.२,३८.६०

स्वदेहायतनस्यांतर्विचिंत्य शिवमंबया ॥ ७.२,३८.६०

हृत्पद्मपीठिकामध्ये ध्यानयज्ञेन पूजयेत् ॥ ७.२,३८.६१

मूले नासाग्रतो नाभौ कंठे वा तालुरंध्रयोः ॥ ७.२,३८.६१

भ्रूमध्ये द्वारदेशे वा ललाटे मूर्ध्नि वा स्मरेत् ॥ ७.२,३८.६२

परिकल्प्य यथान्यायं शिवयोः परमासनम् ॥ ७.२,३८.६२

तत्र सावरणं वापि निरावरणमेव वा ॥ ७.२,३८.६३

द्विदलेषोडशारे वा द्वादशारे यथाविधि ॥ ७.२,३८.६३

दशारे वा षडस्रे वा चतुरस्रे शिवं स्मरेत् ॥ ७.२,३८.६४

भ्रुवोरंतरतः पद्मं द्विदलं तडिदुज्ज्वलम् ॥ ७.२,३८.६४

भ्रूमध्यस्थारविन्दस्य क्रमाद्वै दक्षिणोत्तरे ॥ ७.२,३८.६५

विद्युत्समानवर्णे च पर्णे वर्णावसानके ॥ ७.२,३८.६५

षोडशारस्य पत्राणि स्वराः षोडश तानि वै ॥ ७.२,३८.६६

पूर्वादीनि क्रमादेतत्पद्मं कन्दस्य मूलतः ॥ ७.२,३८.६६

ककारादिटकारांता वर्णाः पर्णान्यनुक्रमात् ॥ ७.२,३८.६७

भानुवर्णस्य पद्मस्य ध्येयं तद्१ हृदयान्तरे ॥ ७.२,३८.६७

गोक्षीरधवलस्योक्ता डादिफान्ता यथाक्रमम् ॥ ७.२,३८.६८

अधो दलस्याम्बुजस्य एतस्य २ च दलानि षट् ॥ ७.२,३८.६८

विधूमांगारवर्णस्य वर्णा वाद्याश्च लान्तिमाः ॥ ७.२,३८.६९

मूलाधारारविंदस्य हेमाभस्य यथाक्रमम् ॥ ७.२,३८.६९

वकारादिसकारान्ता वर्णाः पर्णमयाः स्थिताः ॥ ७.२,३८.६९

एतेष्वथारविंदेषु यत्रैवाभिरतं मनः ॥ ७.२,३८.७०

तत्रैव देवं देवीं च चिंतयेद्धीरया धिया ॥ ७.२,३८.७०

अंगुष्ठमात्रममलं दीप्यमानं समंततः ॥ ७.२,३८.७१

शुद्धदीपशिखाकारं स्वशक्त्या पूर्णमण्डितम् ॥ ७.२,३८.७१

इन्दुरेखासमाकारं तारारूपमथापि वा ॥ ७.२,३८.७२

नीवारशूकस्सदृशं बिससुत्राभमेव वा ॥ ७.२,३८.७२

कदम्बगोलकाकारं तुषारकणिकोपमम् ॥ ७.२,३८.७३

क्षित्यादितत्त्वविजयं ध्याता यद्यपि वाञ्छति ॥ ७.२,३८.७३

तत्तत्तत्त्वाधिपामेव मूर्तिं स्थूलां विचिंतयेत् ॥ ७.२,३८.७४

सदाशिवांता ब्रह्माद्यभवाद्याश्चाष्टमूर्तयः ॥ ७.२,३८.७४

शिवस्य मूर्तयः स्थूलाः शिवशास्त्रे विनिश्चिताः ॥ ७.२,३८.७५

घोरा मिश्रा प्रशान्ताश्च मूर्तयस्ता मुनीश्वरैः ॥ ७.२,३८.७५

फलाभिलाषरहितैश्चिन्त्याश्चिन्ताविशारदैः ॥ ७.२,३८.७६

घोराश्चेच्चिंतिताः कुर्युः पापरोगपरिक्षयम् ॥ ७.२,३८.७६

चिरेण मिश्रे सौम्ये तु न सद्यो न चिरादपि ॥ ७.२,३८.७७

सौम्ये मुक्तिर्विशेषेण शांतिः प्रज्ञा प्रसिध्यति ॥ ७.२,३८.७७

सिध्यंति सिद्धयश्चात्र क्रमशो नात्र संशयः ॥ ७.२,३८.७८

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे योगगतौ विघ्नोत्पत्तिवर्णनं नामाष्टत्रिंशोऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ३९

https://sa.wikisource.org/s/i09



उपमन्युरुवाच

श्रीकंठनाथं स्मरतां सद्यः सर्वार्थसिद्धयः ॥ ७.२,३९.१

प्रसिध्यंतीति मत्वैके तं वै ध्यायंति योगिनः ॥ ७.२,३९.१

स्थित्यर्थं मनसः केचित्स्थूलध्यानं प्रकुर्वते ॥ ७.२,३९.२

स्थूलं तु निश्चलं चेतो भवेत्सूक्ष्मे तु तत्स्थिरम् ॥ ७.२,३९.२

शिवे तु चिंतिते साक्षात्सर्वाः सिध्यन्ति सिद्धयः ॥ ७.२,३९.३

मूर्त्यंतरेषु ध्यातेषु शिवरूपं विचिंतयेत् ॥ ७.२,३९.३

लक्षयेन्मनसः स्थैर्यं तत्तद्ध्यायेत्पुनः पुनः ॥ ७.२,३९.४

ध्यानमादौ सविषयं ततो निर्विषयं जगुः ॥ ७.२,३९.४

तत्र निर्विषयं ध्यानं नास्तीत्येव सतां मतम् ॥ ७.२,३९.५

बुद्धेर्हि सन्ततिः काचिद्ध्यानमित्यभिधीयते ॥ ७.२,३९.५

तेन निर्विषया बुद्धिः केवलेह प्रवर्तते ॥ ७.२,३९.६

तस्मात्सविषयं ध्यानं बालार्ककिरणाश्रयम् ॥ ७.२,३९.६

सूक्ष्माश्रयं निर्विषयं नापरं परमार्थतः ॥ ७.२,३९.७

यद्वा सविषयं ध्यानं तत्साकारसमाश्रयम् ॥ ७.२,३९.७

निराकारात्मसंवित्तिर्ध्यानं निर्विषयं मतम् ॥ ७.२,३९.८

निर्बीजं च सबीजं च तदेव ध्यानमुच्यते ॥ ७.२,३९.८

निराकारश्रयत्वेन साकाराश्रयतस्तथा ॥ ७.२,३९.९

तस्मात्सविषयं ध्यानमादौ कृत्वा सबीजकम् ॥ ७.२,३९.९

अंते निर्विषयं कुर्यान्निर्बीजं सर्वसिद्धये ॥ ७.२,३९.१०

प्राणायामेन सिध्यंति देव्याः शांत्यादयः क्रमात् ॥ ७.२,३९.१०

शांतिः प्रशांतिर्दीप्तिश्च प्रसादश्च ततः परम् ॥ ७.२,३९.११

शमः सर्वापदां चैव शांतिरित्यभिधीयते ॥ ७.२,३९.११

तमसो ऽन्तबहिर्नाशः प्रशान्तिः परिगीयते ॥ ७.२,३९.१२

बहिरन्तःप्रकाशो यो दीप्तिरित्यभिधीयते ॥ ७.२,३९.१२
स्वस्थता या तु सा बुद्धः प्रसादः परिकीर्तितः ॥ ७.२,३९.१३
कारणानि च सर्वाणि सबाह्याभ्यंतराणि च ॥ ७.२,३९.१३
बुद्धेः प्रसादतः क्षिप्रं प्रसन्नानि भवन्त्युत ॥ ७.२,३९.१४
ध्याता ध्यानं तथा ध्येयं यद्वा ध्यानप्रयोजनम् ॥ ७.२,३९.१४
एतच्चतुष्टयं ज्ञात्वा ध्याता ध्यानं समाचरेत् ॥ ७.२,३९.१४
ज्ञानवैराग्यसंपन्नो नित्यमव्यग्रमानसः ॥ ७.२,३९.१५
श्रद्दधानः प्रसन्नात्मा ध्याता सद्भिरुदाहृतः ॥ ७.२,३९.१५
ध्यै चिंतायां स्मृतो धातुः शिवचिंता मुहुर्मुहुः ॥ ७.२,३९.१६
योगाभ्यासस्तथाल्पे ऽपि यथा पापं विनाशयेत् ॥ ७.२,३९.१७
ध्यायतः क्षणमात्रं वा श्रद्धया परमेश्वरम् ॥ ७.२,३९.१७
अव्याक्षिप्तेन मनसा ध्यानमित्यभिधीयते ॥ ७.२,३९.१८
बुद्धिप्रवाहरूपस्य ध्यानस्यास्यावलंबनम् ॥ ७.२,३९.१९
ध्येयमित्युच्यते सद्भिस्तच्च सांबः स्वयं शिवः ॥ ७.२,३९.१९
विमुक्तिप्रत्ययं पूर्णमैश्वर्यं चाणिमादिकम् ॥ ७.२,३९.२०
शिवध्यानस्य पूर्णस्य साक्षादुक्तं प्रयोजनम् ॥ ७.२,३९.२०
यस्मात्सौख्यं च मोक्षं च ध्यानादभयमाप्नुयात् ॥ ७.२,३९.२१
तस्मात्सर्वं परित्यज्य ध्यानयुक्तो भवेन्नरः ॥ ७.२,३९.२१
नास्ति ध्यानं विना ज्ञानं नास्ति ध्यानमयोगिनः ॥ ७.२,३९.२२
ध्यानं ज्ञानं च यस्यास्ति तीर्णस्तेन भवार्णवः ॥ ७.२,३९.२२
ज्ञानं प्रसन्नमेकाग्रमशेषोपाधिवर्जितम् ॥ ७.२,३९.२३
योगाभ्यासेन युक्तस्य योगिनस्त्वेव सिध्यति ॥ ७.२,३९.२३
प्रक्षीणाशेषपापानां ज्ञाने ध्याने भवेन्मतिः ॥ ७.२,३९.२४
पापोपहतबुद्धीनां तद्वार्तापि सुदुर्लभा ॥ ७.२,३९.२४
यथावह्निर्महादीप्तः शुष्कमार्द्रं च निर्दहेत् ॥ ७.२,३९.२५
तथा शुभाशुभं कर्म ध्यानाग्निर्दहते क्षणात् ॥ ७.२,३९.२५
अत्यल्पो ऽपि यथा दीपः सुमहन्नाशयेत्तमः ॥ ७.२,३९.२६
योगाभ्यासस्तथाल्पो ऽपि महापापं विनाशयेत् ॥ ७.२,३९.२६

ध्यायतः क्षणमात्रं वा श्रद्धया परमेश्वरम् ॥ ७.२,३९.२७
यद्भवेत्सुमहच्छ्रेयस्तस्यांतो नैव विद्यते ॥ ७.२,३९.२७
नास्ति ध्यानसमं तीर्थं नास्ति ध्यानसमं तपः ॥ ७.२,३९.२८
नास्ति ध्यानसमो यज्ञस्तस्माद्ध्यानं समाचरेत् ॥ ७.२,३९.२८
तीर्थानि तोयपूर्णानि देवान्पाषाणमृन्मयान् ॥ ७.२,३९.२९
योगिनो न प्रपद्यंते स्वात्मप्रत्ययकारणात् ॥ ७.२,३९.२९
योगिनां च वपुः सूक्ष्मं भवेत्प्रत्यक्षमैश्वरम् ॥ ७.२,३९.३०
यथा स्थूलमयुक्तानां मृत्काष्ठाद्यैः प्रकल्पितम् ॥ ७.२,३९.३०
यथेहांतश्चरा राज्ञः प्रियाः स्युर्न बहिश्चराः ॥ ७.२,३९.३१
तथांतर्ध्याननिरताः प्रियाश्शंभोर्न कर्मिणः ॥ ७.२,३९.३१
बहिस्करा यथा लोके नातीव फलभोगिनः ॥ ७.२,३९.३२
दृष्ट्वा नरेन्द्रभवने तद्वदत्रापि कर्मिणः ॥ ७.२,३९.३२
यद्यंतरा विपद्यंते ज्ञानयोगार्थमुद्यतः ॥ ७.२,३९.३३
योगस्योद्योगमात्रेण रुद्रलोकं गमिष्यति ॥ ७.२,३९.३३
अनुभूय सुखं तत्र स जातो योगिनां कुले ॥ ७.२,३९.३४
ज्ञानयोगं पुनर्लब्ध्वा संसारमतिवर्तते ॥ ७.२,३९.३४
जिज्ञासुरपि योगस्य यां गतिं लभते नरः ॥ ७.२,३९.३५
न तां गतिमवाप्नोति सर्वैरपि महामखैः ॥ ७.२,३९.३५
द्विजानां वेदविदुषां कोटिं संपूज्य यत्फलम् ॥ ७.२,३९.३६
भिक्षामात्रप्रदानेन तत्फलं शिवयोगिने ॥ ७.२,३९.३६
यज्ञाग्निहोत्रदानेन तीर्थहोमेषु यत्फलम् ॥ ७.२,३९.३७
योगिनामन्नदानेन तत्समस्तं फलं लभेत् ॥ ७.२,३९.३७
ये चापवादं कुर्वंति विमूढाश्शिवयोगिनाम् ॥ ७.२,३९.३८
श्रोतृभिस्ते प्रपद्यन्ते नरकेष्वामहीक्षयात् ॥ ७.२,३९.३८
सति श्रोतरि वक्तास्यादपवादस्य योगिनाम् ॥ ७.२,३९.३९
तस्माच्छ्रोता च पापीयान्दण्ड्यस्सुमहतां मतः ॥ ७.२,३९.३९
ये पुनः सततं भक्त्या भजंति शवयोगिनः ॥ ७.२,३९.३९
ते विदंति महाभोगानंते योगं च शांकरम् ॥ ७.२,३९.४०

भोगार्थिभिर्नरैस्तस्मात्संपूज्याः शिवयोगिनः ॥ ७.२,३९.४०

प्रतिश्रयान्नपानाद्यैः शय्याप्रावरणादिभिः ॥ ७.२,३९.४१

योगधर्मः ससारत्वादभेद्यः पापमुद्गरैः ॥ ७.२,३९.४१

वज्रतंदुलवज्ज्ञेयं तथा पापेन योगिनः ॥ ७.२,३९.४२

न लिप्यंते च तापौघैः पद्मपत्रं यथांभसा ॥ ७.२,३९.४२

यस्मिन्देशे वसेन्नित्यं शिवयोगरतो मुनिः ॥ ७.२,३९.४३

सो ऽपि देशो भवेत्पूतः सपूत इति किं पुनः ॥ ७.२,३९.४३

तस्मात्सर्वं परित्यज्य कृत्यमन्यद्विचक्षणः ॥ ७.२,३९.४४

सर्वदुःखप्रहाणाय शिवयोगं समभ्यसेत् ॥ ७.२,३९.४४

सिद्धयोगफलो योगी लोकानां हितकाम्यया ॥ ७.२,३९.४५

भोगान्भुक्त्वा यथाकामं विहरेद्वात्र वर्तताम् ॥ ७.२,३९.४५

अथवा क्षुद्रमित्येव मत्वा वैषयिकं सुखम् ॥ ७.२,३९.४६

त्यक्त्वा विरागयोगेन स्वेच्छया कर्म मुच्यताम् ॥ ७.२,३९.४६

यस्त्वासन्नां मृतिं मर्त्यो दृष्टारिष्टं च भूयसा ॥ ७.२,३९.४७

स योगारम्भनिरतः शिवक्षेत्रं समाश्रयेत् ॥ ७.२,३९.४७

स तत्र निवसन्नेव यदि धीरमना नरः ॥ ७.२,३९.४८

प्राणान्विनापि रोगाद्यैः स्वयमेव परित्यजेत् ॥ ७.२,३९.४८

कृत्वाप्यनशनं चैव हुत्वा चांगं शिवानले ॥ ७.२,३९.४९

क्षिप्त्वा वा शिवतीर्थेषु स्वदेहमवगाहनात् ॥ ७.२,३९.४९

शिवशास्त्रोक्तविधिवत्प्राणान्यस्तु परित्यजेत् ॥ ७.२,३९.५०

सद्य एव विमुच्येत नात्र कार्या विचारणा २ ॥ ७.२,३९.५० <न चासावात्मघातक इति पाठान्तरम्>

रोगाद्यैर्वाथ विवशः शिवक्षेत्रं समाश्रितः ॥ ७.२,३९.५१

म्रियते यदि सोप्येवं मुच्यते नात्र संशयः ॥ ७.२,३९.५१

यथा हि मरणं श्रेष्ठमुशंत्यनशनादिभिः ॥ ७.२,३९.५२

शास्त्रविश्रंभधीरेण मनसा क्रियते यतः ॥ ७.२,३९.५२

शिवनिन्दारतं हत्वा पीडितः स्वयमेव वा ॥ ७.२,३९.५३

यस्त्यजेद्दुस्त्यजान्प्राणान्न स भूयः प्रजायते ॥ ७.२,३९.५३

शिवनिन्दारतं हंतुमशक्तो यः स्वयं मृतः ॥ ७.२,३९.५४

सद्य एव प्रमुच्येत त्रिः सप्तकुलसंयुतः ॥ ७.२,३९.५४
शिवार्थे यस्त्यजेत्प्राणाञ्छिवभक्तार्थमेव वा ॥ ७.२,३९.५५
न तेन सदृशः कश्चिन्मुक्तिमार्गस्थितो नरः ॥ ७.२,३९.५५
तस्माच्छीघ्रतरा मुक्तिस्तस्य संसारमंडलात् ॥ ७.२,३९.५६
एतेष्वन्यतमोपायं कथमप्यवलम्ब्य वा ॥ ७.२,३९.५६
षडध्वशुद्धिं विधिवत्प्राप्तो वा म्रियते यदि ॥ ७.२,३९.५७
पशूनामिव तस्येह न कुर्यादौर्ध्वदैहिकम् ॥ ७.२,३९.५७
नैवाशौचं प्रपद्येत तत्पुत्रादिविशेषतः ॥ ७.२,३९.५८
शिवचारार्थमथवा शिवविद्यार्थमेव वा ॥ ७.२,३९.५८
खनेद्वा भुवि तद्देहं दहेद्वा शुचिनाग्निना ॥ ७.२,३९.५८
क्षिपेद्वाप्सु शिवास्वेव त्यजेद्वा काष्ठलोष्टवत् ॥ ७.२,३९.५९
अथैनमपि चोद्दिश्य कर्म चेत्कर्तुमीप्सितम् ॥ ७.२,३९.५९
कल्याणमेव कुर्वीत शक्त्या भक्तांश्च तर्पयेत् ॥ ७.२,३९.६०
धनं तस्य भजेच्छैवः शैवी चेतस्य सन्ततिः ॥ ७.२,३९.६०
नास्ति चेत्तच्छिवे दद्यान्नदद्यात्पशुसन्ततिः ॥ ७.२,३९. ६०

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शैवयोगवर्णनं नामैकोनचत्वारिंशोऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ४०

https://sa.wikisource.org/s/i0a



श्रीसूत उवाच

इति स विजितमन्योर्यादवेनोपमन्योरधिगतमभिधाय ज्ञानयोगं मुनिभ्यः ॥ ७.२,४०.१

प्रणतिमुपगतेभ्यस्तेभ्य उद्भावितात्मा सपदि वियति वायुः सायमन्तर्हितो ऽभूत् ॥ ७.२,४०.१

ततः प्रभातसमये नैमिषीयास्तपोधनाः ॥ ७.२,४०.२

सत्रान्ते ऽवभृथं कर्तुं सर्व एव समुद्ययुः ॥ ७.२,४०.२

तदा ब्रह्मसमादेशाद्देवी साक्षात्सरस्वती ॥ ७.२,४०.३

प्रसन्ना स्वादुसलिला प्रावर्तत नदीशुभा ॥ ७.२,४०.३

सरस्वतीं नदीं दृष्ट्वा मुनयो हृष्टमानसाः ॥ ७.२,४०.४

समाप्य सत्रं प्रारब्धं चक्रुस्तत्रावगाहनम् ॥ ७.२,४०.४

अथ संतर्प्य देवादींस्तदीयैः सलिलैः शिवैः ॥ ७.२,४०.५

स्मरन्तः पूर्ववृत्तान्तं ययुर्वाराणसीं प्रति ॥ ७.२,४०.५

तदा ते हिमवत्पादात्पंततीं दक्षिणामुखीम् ॥ ७.२,४०.६

दृष्ट्वा भागीरथी तत्र स्नात्वा तत्तीरतो ययुः ॥ ७.२,४०.६

ततो वाराणसीं प्राप्य मुदितास्सर्व एव ते ॥ ७.२,४०.७

तदोत्तरप्रवाहायां गंगायामवगाह्य च ॥ ७.२,४०.७

अविमुक्तेश्वरं लिंगं दृष्ट्वाभ्यर्च्य विधानतः ॥ ७.२,४०.८

प्रयातुमुद्यतास्तत्र ददृशुर्दिवि भास्वरम् ॥ ७.२,४०.८

सूर्यकोटिप्रतीकाशं तेजोदिव्यं महाद्भुतम् ॥ ७.२,४०.९

आत्मप्रभावितानेन व्याप्तसर्वदिगन्तरम् ॥ ७.२,४०.९

अथ पाशुपताः सिद्धाः भस्मसञ्छन्नविग्रहाः ॥ ७.२,४०.१०

मुनयो ऽभ्येत्य शतशो लीनाः स्युस्तत्र तेजसि ॥ ७.२,४०.१०

तथा विलीयमानेषु तपस्विषु महात्मसु ॥ ७.२,४०.११

सद्यस्तिरोदधे तेजस्तदद्भुतमिवाभवत् ॥ ७.२,४०.११

तद्दृष्ट्वा महदाश्चर्यं नैमिषीया महर्षयः ॥ ७.२,४०.१२

किमेतदित्यजानन्तो ययुर्ब्रह्मवनं प्रति ॥ ७.२,४०.१२

प्रागेवैषां तु गमनात्पवनो लोकपावनः ॥ ७.२,४०.१३

दर्शनं नैमिषीयाणां संवादस्तैर्महात्मनः ॥ ७.२,४०.१३

शद्धां बुद्धिं ततस्तेषां सांबे सानुचरे शिवे ॥ ७.२,४०.१४

समाप्तिं चापि सत्रस्य दीर्घपूर्वस्य सत्रिणाम् ॥ ७.२,४०.१४

विज्ञाप्य जगतां धात्रे ब्रह्मणे ब्रह्मयोनये ॥ ७.२,४०.१५

स्वकार्ये तदनुज्ञातो जगाम स्वपुरं प्रति ॥ ७.२,४०.१५

अथ स्थानगतो ब्रह्मा तुम्बुरोर्नारदस्य च ॥ ७.२,४०.१६

परस्पर स्पर्धितयोर्गाने विवदमानयोः ॥ ७.२,४०.१६

तदुद्भावितगानोत्थरसैर्माध्यस्थमाचरन् ॥ ७.२,४०.१७

गन्धर्वैरप्सरोभिश्च सुखमास्ते निषेवितः ॥ ७.२,४०.१७

तदानवसरादेव द्वाःस्थैर्द्वारि निवारिताः ॥ ७.२,४०.१८

मुनयो ब्रह्मभवनाद्बहिः पार्श्वमुपाविशन् ॥ ७.२,४०.१८

अथ तुम्बुरुणा गाने समतां प्राप्य नारदः ॥ ७.२,४०.१९

साहचर्येष्वनुज्ञातो ब्रह्मणा परमेष्ठिना ॥ ७.२,४०.१९

त्यक्त्वा परस्परस्पर्धां मैत्रीं च परमां गतः ॥ ७.२,४०.२०

सह तेनाप्सरोभिश्च गन्धर्वैश्च समावृतः ॥ ७.२,४०.२०

उपवीणयितुं देवं नकुलीश्वरमीश्वरम् ॥ ७.२,४०.२१

भवनान्निर्ययौ धातुर्जलदादंशुमानिव ॥ ७.२,४०.२१

तं दृष्ट्वा षट्कुलीयास्ते नारदं मुनिगोवृषम् ॥ ७.२,४०.२२

प्रणम्यावसरं शंभोः पप्रच्छुः परमादरात् ॥ ७.२,४०.२२

स चावसर एवायमितोंतर्गम्यतामिति ॥ ७.२,४०.२३

वदन्ययावन्यपरस्त्वरया परया युतः ॥ ७.२,४०.२३

ततो द्वारि स्थिता ये वै ब्रह्मणे तान्न्यवेदयन् ॥ ७.२,४०.२४

तेन ते विविशुर्वेश्म पिंडीभूयांडजन्मनः ॥ ७.२,४०.२४

प्रविश्य दूरतो देवं प्रणम्य भुवि दंडवत् ॥ ७.२,४०.२५

समीपे तदनुज्ञाताः परिवृत्योपतस्थिरे ॥ ७.२,४०.२५

तांस्तत्रावस्थितान् पृष्ट्वा कुशलं कमलासनः ॥ ७.२,४०.२६

वृत्तांतं वो मया ज्ञातं वायुरेवाह नो यतः ॥ ७.२,४०.२६
भवद्भिः किं कृतं पश्चान्मारुतेंतर्हिते सति ॥ ७.२,४०.२७
इत्युक्तवति देवेशे मुनयो ऽवभृथात्परम् ॥ ७.२,४०.२७
गंगातीर्थस्य गमनं यात्रां वाराणसीं प्रति ॥ ७.२,४०.२८
दर्शनं तत्र लिंगानां स्थापितानां सुरेश्वरैः ॥ ७.२,४०.२८
अविमुक्तेश्वरस्यापि लिंगस्याभ्यर्चनं सकृत् ॥ ७.२,४०.२९
आकाशे महतस्तस्य तेजोराशेश्च दर्शनम् ॥ ७.२,४०.२९
मुनीनां विलयं तत्र निरोधं तेजसस्ततः ॥ ७.२,४०.३०
याथात्म्यवेदनं तस्य चिंतितस्यापि चात्मभिः ॥ ७.२,४०.३०
सर्वं सविस्तरं तस्मै प्रणम्याहुर्मुहुर्मुहुः ॥ ७.२,४०.३१
मुनिभिः कथितं श्रुत्वा विश्वकर्मा चतुर्मुखः ॥ ७.२,४०.३१
कंपयित्वा शिरः किंचित्प्राह गंभीरया गिरा ॥ ७.२,४०.३२
प्रत्यासीदति युष्माकं सिद्धिरामुष्मिकी परा ॥ ७.२,४०.३२
भवद्भिर्दीर्घसत्रेण चिरमाराधितः प्रभुः ॥ ७.२,४०.३३
प्रसादाभिमुखो भूत इति भुतार्थसूचितम् ॥ ७.२,४०.३३
वाराणस्यां तु युष्माभिर्यद्दृष्टं दिवि दीप्तिमत् ॥ ७.२,४०.३४
तल्लिंगसंज्ञितं साक्षात्तेजो माहेश्वरं परम् ॥ ७.२,४०.३४
तत्र लीनाश्च मुनयः श्रौतपाशुपतव्रताः ॥ ७.२,४०.३५
मुक्ता बभूवुः स्वस्थाश्च नैष्ठिका दग्धकिल्बिषाः ॥ ७.२,४०.३५
प्राप्यानेन यथा मुक्तिरचिराद्भवतामपि ॥ ७.२,४०.३६
स चायमर्थः सूच्येत युष्मद्दृष्टेन तेजसा ॥ ७.२,४०.३६
तत्र वः काल एवैष दैवादुपनतः स्वयम् ॥ ७.२,४०.३७
प्रयात दक्षिणं मेरोः शिखरं देवसेवितम् ॥ ७.२,४०.३७
सनत्कुमारो यत्रास्ते मम पुत्रः परो मुनिः ॥ ७.२,४०.३८
प्रतीक्ष्यागमनं साक्षाद्भूतनाथस्य नंदिनः ॥ ७.२,४०.३८
पुरा सनत्कुमारोपि दृष्ट्वापि परमेश्वरम् ॥ ७.२,४०.३९
अज्ञानात्सर्वयोगीन्द्रमानी विनयदूषितः ॥ ७.२,४०.३९
अभ्युत्थानादिकं युक्तमकुर्वन्नतिनिर्भयः ॥ ७.२,४०.४०

ततो ऽपराधात्क्रुद्धेन महोष्ट्रो नंदिना कृतः ॥ ७.२,४०.४०

अथ कालेन महता तदर्थे शोचता मया ॥ ७.२,४०.४१

उपास्य देवं देवीञ्च नंदिनं चानुनीय वै ॥ ७.२,४०.४१

कथंचिदुष्ट्रता तस्य प्रयत्नेन निवारिता ॥ ७.२,४०.४२

प्रापितो हि यथापूर्वं सनत्पूर्वां कुमारताम् ॥ ७.२,४०.४२

तदाह च महादेवः स्मयन्निव गणाधिपम् ॥ ७.२,४०.४३

अवज्ञाय हि मामेव तथाहंकृतवान्मुनिः ॥ ७.२,४०.४३

अतस्त्वमेव याथात्म्यं ममास्मै कथयानघ ॥ ७.२,४०.४४

ब्रह्मणः पूर्वजः पुत्रो मां मूढ इव संस्मरन् ॥ ७.२,४०.४४

मयैव शिष्यते दत्तो मम ज्ञानप्रवर्तकः ॥ ७.२,४०.४५

धर्माध्यक्षाभिषेकं च तव निर्वर्तयिष्यति ॥ ७.२,४०.४५

स एवं व्याहृतो भूयस्सर्वभूतगणाग्रणीः ॥ ७.२,४०.४६

यत्पराज्ञापनं मूर्ध्ना प्रातः प्रतिगृहीतवान् ॥ ७.२,४०.४६

तथा सनत्कुमारो ऽपि मेरौ मदनुशासनात् ॥ ७.२,४०.४७

प्रसादार्थं गणस्यास्य तपश्चरति दुश्चरम् ॥ ७.२,४०.४७

द्रष्टव्यश्चेति युष्माभिः प्राग्गणेशसमागमात् ॥ ७.२,४०.४८

तत्प्रसादार्थमचिरान्नंदी तत्रागमिष्यति ॥ ७.२,४०.४८

इति सत्वरमादिश्य प्रेषिता विश्वयोगिना ॥ ७.२,४०.४९

कुमारशिखरं मेरोर्दक्षिणं मुनयो ययुः ॥ ७.२,४०.४९

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे नैमिषर्षियात्रावर्णनं नाम चत्वारिंशोऽध्यायः

# शिवपुराणम्/संहिता ७ (वायवीयसंहिता)/उत्तर भागः/अध्यायः ४१

https://sa.wikisource.org/s/i0b



सूत उवाच

तत्र स्कंदसरो नाम सरस्सागरसन्निभम् ॥ ७.२,४१.१

अमृतस्वादुशिशिरस्वच्छा गाधलघूदकम् ॥ ७.२,४१.१

समंततः संघटितं स्फटिको पलसंचयैः ॥ ७.२,४१.२

सर्वर्तुकुसुमैः फुल्लैश्छादिताखिलदिङ्मुखम् ॥ ७.२,४१.२

शैवलैरुत्पलैः पद्मैः कुमुदैस्तारकोपमैः ॥ ७.२,४१.३

तरंगैरभ्रसंकाशैराकाशमिव भूमिगम् ॥ ७.२,४१.३

सुखावतरणारोहैः स्थलैर्नीलशिलामयैः ॥ ७.२,४१.४

सोपानमार्गौ रुचिरैश्शोभमानाष्टदिङ्मुखम् ॥ ७.२,४१.४

तत्रावतीर्णैश्च यथा तत्रोत्तीर्णश्च भूयसा ॥ ७.२,४१.५

स्नातैः सितोपवीतैश्च शुक्लाकौपीनवल्कलैः ॥ ७.२,४१.५

जटाशिखायनैर्मुंडैस्त्रिपुंड्रकृतमंडनैः ॥ ७.२,४१.६

विरागविवशस्मेरमुखैर्मुनिकुमारकैः ॥ ७.२,४१.६

घटैः कमलिनीपत्रपुटैश्च कलशैः शिवैः ॥ ७.२,४१.७

कमण्डलुभिरन्यैश्च तादृशैः करकादिभिः ॥ ७.२,४१.७

आत्मार्थं च परार्थं च देवतार्थं विशेषतः ॥ ७.२,४१.८

आनीयमानसलिलमात्तपुष्पं च नित्यशः ॥ ७.२,४१.८

अंतर्जलशिलारूढैर्नीचानां स्पर्शशंकया ॥ ७.२,४१.९

आचारवद्भिर्मुनिभिः कृतभस्मांगधूसरैः ॥ ७.२,४१.९

इतस्ततो ऽप्सु मज्जद्भिरिष्टशिष्टैः शिलागतैः ॥ ७.२,४१.१०

तिलैश्च साक्षतैः पुष्पैस्त्यक्तदर्भपवित्रकैः ॥ ७.२,४१.१०

देवाद्यमृषिमध्यं च निर्वर्त्य पितृतर्पणम् ॥ ७.२,४१.११

निवेदयेदभिज्ञेभ्यो नित्यस्नानगतान् द्विजान् ॥ ७.२,४१.११

स्थानेस्थाने कृतानेकबलिपुष्पसमीरणैः ॥ ७.२,४१.१२

सौराघ्र्यपूर्वं कुर्वद्भिःस्थंडलेभ्यर्चनादिकम् ॥ ७.२,४१.१२
क्वचिन्निमज्जदुन्मज्जत्प्रस्रस्तगजयूथपम् ॥ ७.२,४१.१३
क्वचिच्च तृषयायातमृगीमृगतुरंगमम् ॥ ७.२,४१.१३
क्वचित्पीतजनोत्तीर्णमयूरवरवारणम् ॥ ७.२,४१.१४
क्वचित्कृततटाघातवृषप्रतिवृषोज्ज्वलम् ॥ ७.२,४१.१४
क्वचित्कारंडवरवैः क्वचित्सारसकूजितैः ॥ ७.२,४१.१५
क्वचिच्च कोकनिनदैः क्वचिद्भ्रमरगीतिभिः ॥ ७.२,४१.१५
स्नानपानादिकरणैः स्वसंपदद्रुमजीविभिः ॥ ७.२,४१.१६
प्रणयात्प्राणिभिस्तैस्तैर्भाषमाणमिवासकृत् ॥ ७.२,४१.१६
कूलशाखिशिखालीनकोकिलाकुलकूजितैः ॥ ७.२,४१.१७
आतपोपहतान्सर्वान्नामंत्रयदिवानिशम् ॥ ७.२,४१.१७
उत्तरे तस्य सरसस्तीरे कल्पतरोरधः ॥ ७.२,४१.१८
वेद्यां वज्रशिलामय्यां मृदुले मृगचर्मणि ॥ ७.२,४१.१८
सनत्कुमारमासीनं शश्वद्बालवपुर्धरम् ॥ ७.२,४१.१९
तत्कालमात्रोपरतं समाधेरचलात्मनः ॥ ७.२,४१.१९
उपास्यमानं मुनिभिर्योगींद्रैरपि पूजितम् ॥ ७.२,४१.२०
ददृशुर्नैमिषेयास्ते प्रणताश्चोपतस्थिरे ॥ ७.२,४१.२०
यावत्पृष्टवते तस्मै प्रोचुः स्वागतकारणम् ॥ ७.२,४१.२१
तुमुलः शुश्रुवे तावद्दिवि दुंदुभिनिस्वनः ॥ ७.२,४१.२१
ददृशे तत्क्षणे तस्मिन्विमानं भानुसन्निभम् ॥ ७.२,४१.२२
गणेश्वरैरसंख्येयैः संवृतं च समंततः ॥ ७.२,४१.२२
अप्सरोगणसंकीर्णं रुद्रकन्याभिरावृतम् ॥ ७.२,४१.२३
मृदंगमुरजोद्घुष्टं वेणुवीणारवान्वितम् ॥ ७.२,४१.२३
चित्ररत्नवितानाढ्यं मुक्तादामविराजितम् ॥ ७.२,४१.२४
मुनिभिस्सिद्धगंधर्वैर्यक्षचारणकिन्नरैः ॥ ७.२,४१.२४
नृत्यद्भिश्चैव गायद्भिर्वादयद्भिश्च संवृतम् ॥ ७.२,४१.२५
वीरगोवृषचिह्नेन विद्रमद्रुमयष्टिना ॥ ७.२,४१.२५
कृतगोपुरसत्कारं केतुना मान्यहेतुना ॥ ७.२,४१.२६

तस्य मध्ये विमानस्य चामरद्वितयांतरे ॥ ७.२,४१.२६
छत्त्रस्य मणिदंडस्य चंद्रस्येव शुचेरधः ॥ ७.२,४१.२७
दिव्यसिंहासनारूढं देव्या सुयशया सह ॥ ७.२,४१.२७
श्रिया च वपुषा चैव त्रिभिश्चापि विलोचनैः ॥ ७.२,४१.२८
प्राकारैरभिकृत्यानां प्रत्यभिज्ञापकं प्रभोः ॥ ७.२,४१.२८
अविलंघ्य जगत्कर्तुराज्ञापनमिवागतम् ॥ ७.२,४१.२९
सर्वानुग्रहणं शंभोः साक्षादिव पुरःस्थितम् ॥ ७.२,४१.२९
शिलादतनयं साक्षाच्छ्रीमच्छूलवरायुधम् ॥ ७.२,४१.३०
विश्वेश्वरगणाध्यक्षं विश्वेश्वरमिवापरम् ॥ ७.२,४१.३०
विश्वस्यापि विधातॄणां निग्रहानुग्रहक्षमम् ॥ ७.२,४१.३१
चतुर्बाहुमुदारांगं चन्द्ररेखाविभूषितम् ॥ ७.२,४१.३१
कंठे नागेन मौलौ च शशांकेनाप्यलंकृतम् ॥ ७.२,४१.३२
सविग्रहमिवैश्वर्यं सामर्थ्यमिव सक्रियम् ॥ ७.२,४१.३२
समाप्तमिव निर्वाणं सर्वज्ञमिव संगतम् ॥ ७.२,४१.३३
दृष्ट्वा प्रहृष्टवदनो ब्रह्मपुत्रः सहर्षिभिः ॥ ७.२,४१.३३
तस्थौ प्राञ्जलिरुत्थाय तस्यात्मानमिवार्पयन् ॥ ७.२,४१.३४
अथ तत्रांतरे तस्मिन्विमाने चावनिं गते ॥ ७.२,४१.३४
प्रणम्य दण्डवद्देवं स्तुत्वा व्यज्ञापयन्मुनीम् ॥ ७.२,४१.३५
षट्कुलीया इमे दीर्घं नैमिषे सत्रमास्थिताः ॥ ७.२,४१.३५
आगता ब्रह्मणादिष्टाः पूर्वमेवाभिकांक्षया ॥ ७.२,४१.३५
श्रुत्वा वाक्यं ब्रह्मपुत्रस्य नंदीछित्त्वा पाशान्दृष्टिपातेन सद्यः ॥ ७.२,४१.३६
शैवं धर्मं चैश्वरं ज्ञानयोगं दत्त्वा भूयो देवपार्श्वं जगाम ॥ ७.२,४१.३६
सनत्कुमारेण च तत्समस्तं व्यासाय साक्षाद्गुरवे ममोक्तम् ॥ ७.२,४१.३७
व्यासेन चोक्तं महितेन मह्यं मया च तद्वः कथितं समासात् ॥ ७.२,४१.३७
नावेदविद्भ्यः कथनीयमेतत्पुराणरत्नं पुरशासनस्य ॥ ७.२,४१.३८
नाभक्तशिष्याय च नास्तिकेभ्यो दत्तं हि मोहान्निरयं ददाति ॥ ७.२,४१.३८
मार्गेण सेवानुगतेन यैस्तद्दत्तं गृहीतं पठितं श्रुतं वा ॥ ७.२,४१.३९
तेभ्यः सुखं धर्ममुखं त्रिवर्गं निर्वाणमंते नियतं ददाति ॥ ७.२,४१.३९

परस्परस्योपकृतं भवद्भिर्मया च पौराणिकमार्गयोगात् ॥ ७.२,४१.४०

अतो गमिष्ये ऽहमवाप्तकामः समस्तमेवास्तु शिवं सदा नः ॥ ७.२,४१.४०

सूते कृताशिषि गते मुनयः सुवृत्ता यागे च पर्यवसिते महति प्रयोगे ॥ ७.२,४१.४१

काले कलौ च विषयैः कलुषायमाणे वाराणसीपरिसरे वसतिं विनेतुः ॥ ७.२,४१.४१

अथ च ते पशुपाशमुमुक्षयाखिलतया कृतपाशुपतव्रताः ॥ ७.२,४१.४२

अधिकृताखिलबोधसमाधयः परमनिर्वृतिमापुरनिंदिताः ॥ ७.२,४१.४२

व्यास उवाच

एतच्छिवपुराणं हि समाप्तं हितमादरात् ॥ ७.२,४१.४३

पठितव्यं प्रयत्नेन श्रोतव्यं च तथैव हि ॥ ७.२,४१.४३

नास्तिकाय न वक्तव्यमश्रद्धाय शठाय च ॥ ७.२,४१.४४

अभक्ताय महेशस्य तथा धर्मध्वजाय च ॥ ७.२,४१.४४

एतच्छ्रुत्या ह्येकवारं भवेत्पापं हि भस्मसात् ॥ ७.२,४१.४५

अभक्तो भक्तिमाप्नोति भक्तो भक्तिसमृद्धिभाक् ॥ ७.२,४१.४५

पुनः श्रुते च सद्भक्तिर्मुक्तिस्स्याच्च श्रुतेः पुनः ॥ ७.२,४१.४६

तस्मात्पुनःपुनश्चैव श्रोतव्यं हि मुमुक्षुभिः ॥ ७.२,४१.४६

पञ्चावृत्तिः प्रकर्तव्या पुराणस्यास्य सद्धिया ॥ ७.२,४१.४७

परं फलं समुद्दिश्य तत्प्राप्नोति न संशयः ॥ ७.२,४१.४७

पुरातनाश्च राजानो विप्रा वैश्याश्च सत्तमाः ॥ ७.२,४१.४८

सप्तकृत्वस्तदावृत्यालभन्त शिवदर्शनम् ॥ ७.२,४१.४८

श्रोष्यत्यथापि यश्चेदं मानवो भक्तितत्परः ॥ ७.२,४१.४९

इह भुक्त्वाखिलान्भोगानंते मुक्तिं लभेच्च सः ॥ ७.२,४१.४९

एतच्छिवपुराणं हि शिवस्यातिप्रियं परम् ॥ ७.२,४१.५०

भुक्तिमुक्तिप्रदं ब्रह्मसंमितं भक्तिवर्धनम् ॥ ७.२,४१.५०

एतच्छिवपुराणस्य वक्तुः श्रोतुश्च सर्वदा ॥ ७.२,४१.५१

सगणस्ससुतस्सांबश्शं करोतु स शंकरः ॥ ७.२,४१.५१

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे व्यासोपदेशश्रीशिवमहापुराणमाहात्म्यवर्णनं नामैकचत्वारिंशोऽध्यायः

